अग्निवेशमहर्षिकृता चरकप्रतिसंस्कृता

# श्रीचरकसंहिता



श्रीमच्चरकचतुराननश्रीचक्रपाणिदत्तप्रणीतया चरकतात्पर्यैत्यपरपर्यायया
आयुर्वेददीपिकाख्यया व्याख्यया समलङ्कृता.

जनस्थाननिवासिना दातारोपाह्वेन केशवसूनुना
वामनशास्त्रिणा वैद्यभूषणेन परिशोधिता.

प्रथमावृत्तिः ।

सा च

मोहमय्याम्

निर्णयसागराख्यमुद्रणालयाधिपतिना पाण्डुरङ्ग जावजी इत्यनेन
स्वीयाऽङ्कनालये मुद्रयित्वा प्रकाशिता.

शकाब्दाः १८४३-ख्रिस्ताब्दाः



मूल्यं ८ रूप्यकाः



विदितमेव तत्रभवतां आयुर्वेदपारावारपारीणानां च पारावारसमुत्तितीर्षूणां छात्राणां यदिदमायुर्वेदस्य
पठनपाठनप्रचारे अतीव श्रेष्ठतममग्निवेशप्रणीतं चरकप्रतिसंस्कृतं तंत्रम् । नानाविधानां विद्यमानानां
आर्यवैद्यकग्रंथानां मध्ये अतीव प्राचीनं तंत्रमिदम् । प्राचीनत्वे सत्यपि अस्य तंत्रस्य अद्यावधि चिकित्सा-
विषये नवीनत्वमिव प्रतिभाति न किमपि परिहीनमत्र विद्यते । कश्चन अमेरिकन् पंडितस्तु चिकित्सा-
शास्त्रे सर्वेषु देशेषु यदि चरकोक्ता चिकित्सा सपदि गृहीता स्यात्तर्हि अनारोग्यध्वंसकानां च स्वास्थ्य-
संरक्षणानामन्येषां तंत्राणां नावश्यकतेति प्रतिज्ञातवान् । तत्सत्यं खलु चरकतंत्रविषये, प्राचीनानां
आयुर्वेदविशारदानां वैद्यवराणामपि "चरकस्तु चिकित्सिते" इति वचनं सुप्रसिद्धम् । यं खलु भरद्वाजा-
त्रेयः स्वबुद्धिबलाद्गृहीतवान् । तस्मान्महर्षेरनुग्रहं ते ते प्रथितबुद्धितपस्सामर्थ्याः अग्निवेशभेडजतुकर्ण-
पराशरहारीतक्षारपाण्यादयः प्रापुः । तेषु सर्वेषु स्वयं ज्योतिस्स्वरूपेषु तंत्रप्रणेतृष्वपि अस्य तंत्रस्य
प्रणेतुरग्निवेशस्यैवायुर्वेदोपदेशे तंत्रकर्मणि च बुद्धेर्विशेष एवासीत् । यस्य तंत्रस्य प्रतिसंस्करणे
भगवान् पतञ्जलिः स्वयमाविर्भूत्वा कृतसंस्करण आत्मानमुत्तीर्णकृत्यं च धन्यं मेने । यस्य तंत्रस्य
अखण्डार्थत्वमेव रक्षितुं पंचनदपुरनिवासी श्रीमान् दृढबलोऽन्येभ्यो बहुभ्यस्तंत्रेभ्यो बलोच्चयं कृत्वा
कतिपयैरध्यायैः पूरणमकरोत् । तदिदमतीव श्रेष्ठतमायुर्वेदस्य साक्षात्स्वरूपमिव विद्यमानं तंत्रं पठनीयं
शोधनीयमनुष्ठेयम् । अस्य पाठावबोधानुष्ठानेषु दुर्ज्ञेयविषयाणां च सौलभ्यमासादयितुं कृतपरिश्रमैर्वङ्ग-
देशीयैः श्रीमच्चरकचतुराननेति सार्थोपाधिकैः पण्डितप्रवरचक्रपाणिमिश्रैश्चरकतात्पर्येति नाम्नी "आयुर्वेद-
दीपिकेत्यपरपर्याया टीकाऽज्ञानतमोनिहन्त्री प्रदीपिकेव विरचिता । तत्र तावच्छ्रीमतश्चरकमहामुनेः
प्रादुर्भूतस्य समधिकद्विसहस्रसमाख्यः कालः समजनि । चरकसंहितासंपूरक "दृढबलश्च प्रायो वर्षाणां
सप्तदशशतीकालप्राचीनश्चेति सम्मतं मतिमताम् । चरकचतुराननः श्रीमच्चक्रपाणिस्तु वङ्गदेशीयः-
"पालनरपतेर्नयनपालस्य सुविख्यातो भिषक् ख्रिस्तीयैकादशशतकमध्यभागे समजनीति निश्चितमेवेति
इतिहासविद्भिः । चरकसंहिताटीकाग्रन्थास्तु—तत्राद्या १ चरकतात्पर्यटीका आयुर्वेददीपिकेत्यपराभिधाना
श्रीमच्चक्रपाणिप्रणीता २ द्वितीया श्रीशिवदासविरचिता ३ तृतीया श्रीकृष्णभिषक्कृता श्रीकृष्णभाष्यमिति
संज्ञिता ४ चतुर्थी श्रीमद्वैद्यवरगङ्गाधरकृता ५ पञ्चमी वैद्यरत्नकविराजश्रीयोगेन्द्रनाथरचिता साम्प्रतं
खण्डशो मुद्राप्यते. एतासु शिवदासकृता टीकाऽप्रसिद्धा । तथाच श्रीगोदावरीपरिसरान्तर्गतपट्टखेटक-
ग्रामनिवासिना कुलीनेन श्रीकृष्णभिषजा कृतं श्रीकृष्णभाष्यमिति वैद्यजीवनटीकायां( अप्रसिद्धायाम् )
टीकाकारेण स्ववंशप्रशस्तिप्रसंगतो वर्णितं नाद्यावधि दृष्टिपथं गतं कस्यापि । वैद्यवरगङ्गाधरकृता टीका
वंगाक्षरैर्मुद्रिता सापि विरलप्रचारा दुर्लभा च । वैद्यरत्नकविराजजोगेन्द्रनाथविरचिता टीका नाद्यापि
संपूर्णा मुद्रिता च । एवं श्रीचरकसंहिताध्ययनाध्यापनप्रसङ्गे एतासु सर्वास्वपि टीकासु एकैवेयं श्रीचरक-
तात्पर्यनाम्नी टीका साम्प्रतं मार्गदर्शिनीति युक्तं वक्तुमिदानीम् । तथाच सर्वेष्वपि टीकाग्रन्थेषु इयमेव
चरकचतुराननेति सार्थोपपदधारिणा चक्रदत्तेन कृतेत्यनेनैवास्याः श्रैष्ठ्यं बहूपयोगित्वं च संगच्छते ।
टीका प्रथममतीतकतिपयाब्दैर्वङ्गदेशस्थैः श्रीकविराजहरिनाथमिश्रैः खण्डशः प्रकाशयितु-

मारब्धा नाद्याप्यवसानभूमिं गता च बहुमूल्यत्वान्न सर्वसुलभा इति श्रीचरकसंहितायाः पठनपाठनसंकटमवलोक्य मयाऽस्याः संपूर्णमुद्रणविषये गतगुणेन्दुनिधिक्ष्माप्रमितख्रिस्ताब्दमारभ्य किमपि यतितम्। प्रथमं तावत् ( १९१३ ) वटोदर-विकानेर-जयपूर-श्रीकाशी-कलिकातादिषु सर्वप्रसिद्धनगरेषु शोधनार्थं गत्वा समवाप्य टीकाग्रंथं समग्रं संशोध्य च स्वबुद्ध्या यथावकाशं निर्णयसागरमुद्रणालयाधिपतिकृपया तेषामेवाधिपत्यत्वेनायं ग्रन्थोद्य सर्वेषां विदुषामुपायनमिवोपयोगार्थं प्रसिद्धिं नीयते । संशोधनार्थं निम्नलिखितपुस्तकानामतीवोपयोगो जातः—

१ चरकचक्रपाणिदत्तटीका प्रसिद्धा इन्द्रियस्थानपर्यन्ता ।

२ चक्रपाणिदत्तटीका वङ्गाक्षरमयी लिखिता विमानस्थानमात्रम् । श्रीसाधुवरवैद्यराजपण्डितलक्ष्मीरामस्वामिदत्तम् ( जयपूर ) ।

३ श्रीकविराजजोगेन्द्रनाथवैद्यरत्नैर्दत्तं चिकित्सास्थानमात्रं लिखितम् ( कलकत्ता ) ।

४ श्रीमद्भिर्धन्वन्तरिकल्पैः श्रीकाशीस्थत्र्यम्बकशास्त्रिभिर्दत्तं चिकित्सास्थानं हस्तलिखितम् ( काशी )

५ विकानेरनरेशश्रीमन्महाराजगङ्गासिंहवर्मणां राजकीयप्राचीनग्रन्थालयस्थं चिकित्सा, कल्प सिद्धिस्थानत्रयात्मकमालेख्य संगृहीतम् ( विकानेर ) ।

एतेषु समुपलब्धेषु पुस्तकेषु मध्ये विकानेरस्थं पुस्तकं त्रुटितमेव दृश्यते । नास्मिन् सर्वा टीका लेखकप्रमादाल्लिखिता इत्यन्यपुस्तकादवगम्यते ।

श्रीमद्भिः कविराजजोगेन्द्रनाथवैद्यरत्नैर्दत्तं चिकित्सास्थानस्य लिखितं पुस्तकं पदे पदे बहुलमशुद्धम् । मूलग्रन्थसंदर्भादेव संगतितम् ।

श्रीमद्भिर्गुरुकल्पैस्त्र्यम्बकशास्त्रिभिर्दत्तं चिकित्सास्थानस्य पुस्तकमाश्चर्यबहुलं केषुचित्पत्रेषु टीकाग्रन्थो दृश्यते अनंतरं सर्वोपि ग्रन्थो वाग्भटादिग्रन्थानां मूलग्रन्थाध्यायैर्लिखितो नात्र टीकालेशोपि ।

एवं प्रत्यक्षं संशोधनावसरे चिकित्सास्थानस्य टीकायामेकमेव कविराजदत्तं पुस्तकं च सिद्धिस्थानस्य विकानेरस्थं पुस्तकमेकमेव, एतयोर्द्वयोरपि स्थानयोर्न केवलं संशोधनमेव प्रत्युताप्रसिद्धत्वात्तयोः प्रथमं प्रसिद्धीकरणमेवेदम् । अन्येषां स्थानानां पूर्वं प्रसिद्धानां तु केवलं संशोधनम् । अतोस्मिन्प्रथममेव प्रसिद्धीकरणप्रयत्ने बहूनां तत्तत्स्थानटीकापुस्तकानामावश्यकता सुविशुद्धत्वसम्पूर्णत्वप्राप्तये । परं हन्त, कृतोपि सुमहान्यत्नो विफलतां कथं गत इत्यधुनैवोपरि निवेदितम् । तथाप्येतावानेवानन्दस्यावकाशं यदद्य चरकसंहितायाः सर्वेषां स्थानानां श्रीमच्चरकचतुराननकृता टीका प्राकाश्यं नीत्वा पठनपाठनप्रचारं गता । तस्यास्तावच्छुद्धत्वमशुद्धत्वं सम्पूर्णत्वमसंपूर्णत्वं चेति द्वितीयमुद्रणावसरे श्रीशप्रसादात्कोपि महाभागः प्रयत्नतो लब्धान्यटीकाग्रन्थेभ्यस्समुन्नेष्यति । श्रीमतां परमपूज्यानां श्रीकविराजवैद्यरत्नानां जोगेन्द्रनाथानां श्रीमतामायुर्वेदमार्तण्डानां साधुवराणां परमपूज्यानां पण्डितप्रवरश्रीलक्ष्मीरामस्वामिनां श्रीमतां गुरुकल्पानां परमश्रेष्ठानां भिषङ्मूर्धन्यानां वैद्यवरत्र्यम्बकशास्त्रिणां तथाचायुर्वेदमार्तण्डानां विद्वद्वराणामाचार्येत्युपाह्वानां त्रिविक्रमात्मजजादवजीशर्मणां मदीयपरमपूज्य सानन्दं सविनयं प्रणतियुतमभिनन्दनं करोमि ।

सर्वैरपि महाशयैर्महदुपकृतं पुस्तकदानेन प्रवासवेलायां कृतशोभनातिथ्येन च । वैद्यव मूलमिव ग्रन्थप्रकाशनस्येति जयपूर-विकानेर-कलिकातादिस्थानेषु महत्तरपत्रदानेनान्येनापि व

तेन तेन सहाय्यदानेनोपकृतं तथाच संशोधनावसरे लेखनावसरे सूचिपत्रकरणावसरे च श्रीमत्या मदीयपरमप्रियभगिन्याः कुमारी दुर्गाताई खर्डीकरेतिप्रसिद्धाया आयुर्वेदपारगाया महत्तरं सहाय्यं कृतम्। तथा च मदन्तेवासिनो जोशीत्युपनामकस्यानन्तशास्त्रिणस्तथा येवलेग्रामनिवासिनो रामशास्त्रिणो विदुषः सुमहत्सहाय्यं जातमिति प्रकटयितुं महान् संतोषो जायते। तदद्य चरकटीकाग्रन्थः सांप्रतं श्रीमल्लक्ष्मीनारायणकृपाप्रसादात्तथा महाराष्ट्रप्रसिद्धानां तत्रभवतामस्मदीयगुरुचरणानां वैद्यवरदेवधरे-त्युपनामकानां श्रीकृष्णशास्त्रिणां शुभाशीर्वाददानेन सम्पूर्णसंशोधनप्रयत्नोद्य समर्प्यते पठनपाठन-प्रचारार्थमायुर्वेदसमुत्कर्षार्थं वर्तमानभाविभिषग्रूपिणे धन्वन्तरिपरमात्मने।

एवं महता यत्नेन संपादितेऽस्मिन्कार्ये भ्रमेण प्रमादेन वा जातं स्खलनं क्वचिद्दृश्येत तर्हि गुणैक-पक्षपातिभिर्विद्वद्भिः क्षंतव्यं सफलयितव्यश्च ममायं प्रयासो ग्रंथस्यास्याध्ययनाध्यापनपर्यालोचनादि-नेति शम्।

येवले.<br>
मिति मार्गशीर्ष.<br>
वद्यद्वितीया भृगुवासरः<br>
शकाब्दः १८४३

सर्वेषां वशंवदः<br>
दातारोपाह्वः केशवात्मजो वामनशर्मा<br>
जनस्थाननिवासी.

# विषयानुक्रमणिका ।

## सूत्रस्थानम् ।

विषयः — पृष्ठांकः

**संतर्पणीयस्त्रयोविंशोऽध्यायः ।**



**विधिशोणितीयश्चतुर्विंशोऽध्यायः ।**



**यज्जःपुरुषीयः पंचविंशोऽध्यायः ।**



**आत्रेयभद्रकाप्यीयः षड्विंशोऽध्यायः ।**

विषयः पृष्ठांकः



विविधाशितपीतीयोऽष्टाविंशोऽध्यायः।



दशप्राणायतनीय एकोनत्रिंशोऽध्यायः।



दशमूलीयस्त्रिंशत्तमोऽध्यायः।

विषयः — पृष्ठांकः



## निदानस्थानम् ।

### ज्वरनिदानं प्रथमोऽध्यायः ।



### रक्तपित्तनिदानं द्वितीयोऽध्यायः ।



### गुल्मनिदानं तृतीयोऽध्यायः ।



### प्रमेहनिदानं चतुर्थोऽध्यायः ।



### कुष्ठनिदानं पञ्चमोऽध्यायः ।

## शारीरस्थानम् ।

### कतिधापुरुषीयः प्रथमोऽध्यायः ।

विषयः — पृष्ठांकः



## अतुल्यगोत्रीयो द्वितीयोध्यायः ।

**शरीरविचयः षष्ठोऽध्यायः।**



**शरीरसंख्याभिधानं सप्तमोऽध्यायः।**



**जातिसूत्रीयाष्टमोऽध्यायः।**

विषयः — पृष्ठांकः



**रक्तपित्तचिकित्सितं चतुर्थोऽध्यायः।**



**गुल्मचिकित्सितं पंचमोऽध्यायः।**



**प्रमेहचिकित्सितं षष्ठोऽध्यायः।**

विषयः  पृष्ठांकः



## कुष्ठचिकित्सितं सप्तमोऽध्यायः।



## राजयक्ष्मचिकित्सितमष्टमोऽध्यायः।



## उन्मादचिकित्सितं नवमोऽध्यायः।



## अपस्मारचिकित्सितं दशमोऽध्यायः।

---

क्षतक्षीणचिकित्सितं एकादशोऽध्यायः ।



---

श्वयथुचिकित्सितं द्वादशोऽध्यायः ।



---

उदरचिकित्सितं त्रयोदशोऽध्यायः ।



---

अर्शश्चिकित्सितं चतुर्दशोऽध्यायः ।

विषयः — पृष्ठांकः



**ग्रहणीचिकित्सितं पंचदशोऽध्यायः ।**



**पांडुरोगचिकित्सितं षोडशोऽध्यायः ।**



**हिक्काश्वासचिकित्सितं सप्तदशोऽध्यायः ।**



**कासचिकित्सितं अष्टादशोऽध्यायः ।**



**अतीसारचिकित्सितं एकोनविंशोऽध्यायः ।**

## छर्दिचिकित्सितं विंशोऽध्यायः



## विसर्पचिकित्सितं एकविंशोऽध्यायः ।



## तृष्णारोगचिकित्सितं द्वाविंशोऽध्यायः ।



## विषचिकित्सितं त्रयोविंशोऽध्यायः ।



## मदात्ययचिकित्सा चतुर्विंशोऽध्यायः ।

द्विव्रणीयचिकित्सितं पंचविंशोऽध्यायः ।



त्रिमर्मीयचिकित्सितं षड्विंशोऽध्यायः ।



ऊरुस्तंभचिकित्सितं सप्तविंशोऽध्यायः ।



वातव्याधिचिकित्सितं अष्टाविंशोऽध्यायः ।

# चरकसंहिता

## श्रीचक्रदत्तव्याख्यासंवलिता ।



### सूत्रस्थानम् ।

---

### प्रथमोऽध्यायः १

अथातो दीर्घंजीवितीयमध्यायं व्याख्यास्यामः ॥ १ ॥

गुणत्रयविभेदेन मूर्तित्रयमुपेयुषे ।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥
सरस्वत्यै नमो यस्याः प्रसादात्पुण्यकर्मभिः ।
बुद्धिदर्पणसंक्रान्तं जगदध्यक्षमीक्ष्यते ॥
ब्रह्मदक्षाश्विदेवेशभरद्वाजपुनर्वसु- ।
हुताशवेशचरकप्रभृतिभ्यो नमोनमः ॥
पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥
नरदत्तगुरूद्दिष्टचरकार्थानुगामिनी ।
क्रियते चक्रदत्तेन टीकायुर्वेददीपिका ॥
सभ्याः सद्गुरुवाक्सुधास्तुतिपरिस्फीतश्रुतीनस्मि वो
नालं तोषयितुं पयोदपयसा नाम्भोनिधिस्तृप्यति ।
व्याख्याभाससरसप्रकाशनमिदं त्वस्मिन्यदि प्राप्यते
क्वापि क्वापि कणो गुणस्य तदसौ कर्णे क्षणं दीयताम् ॥

इह हि धर्मार्थकाममोक्षपरिपन्थिरोगोपशमाय ब्रह्मप्रभृतिभिः प्रणीतायुर्वेदतन्त्रेष्वतिविस्तरत्वेन संप्रति वर्तमानाल्पायुर्मेधसां पुरुषाणां न सम्यगर्थाधिगमः । तदनधिगमाच्च तद्विहितार्थानामननुष्ठाने "तथैवोपप्लवो रुजा"मिति मन्वानः परमकारुणिकोऽत्रभवानग्निवेशोऽल्पायुर्मेधसामपि सुखोपलम्भार्थं नातिसङ्क्षेपविस्तरं कायचिकित्साप्रधानमायुर्वेदतन्त्रं प्रणेतुमारब्धवान् । तस्मिंश्च श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानात्मकेऽभिधातव्ये निखिलतन्त्रप्रधानार्थाभिधायकतया श्लोकस्थानमेवाग्रे वक्तव्यममन्यत । वक्ष्यति हि "श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम् । चतुष्काणां महार्थानां स्थानेऽस्मिन्संग्रहः कृत" इति ।

तत्र च सूत्रस्थानेऽप्युत्पन्नरोगग्रहणे त्वरया रोगोपघातिभेषजाभिधायिचतुष्केऽभिधातव्ये निखिलतन्त्रबीजभूतहेतुलिङ्गौषधार्थस्य तथा तन्त्रप्रवृत्त्यङ्गप्रयोजनवदायुर्वेदागमादेरभिधायकं दीर्घंजीवितीयमध्यायमभिधातुमारब्धवान् ।

श्रोतृजनप्रवृत्तिहेत्वभिधेयप्रयोजनसंबन्धोपदर्शकं श्रोतृबुद्धिसमाधानाय व्याख्यानप्रतिज्ञापरमष्टपदं अष्टसंख्यया मङ्गलत्वेनादौ सूत्रं निवेशितवान् "अथातो दीर्घंजीवितीयमध्यायं व्याख्यास्यामः" इति । यतो निरभिधेये सप्रयोजने कचटतपादौ साभिधेये वा प्रयोजनशून्ये काकदन्तपरीक्षादौ प्रेक्षावतां प्रवृत्तिर्नोपलभ्यते, तेनादावभिधेयप्रयोजनेऽभिधातव्ये । यदुक्तं "अभिधेयफलज्ञानविरहस्तिमितोद्यमाः । श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः" । अभिधेयवत्त्वप्रयोजनवत्त्वनिर्वाहार्थं चाभिधेयशास्त्रयोरभिधानाभिधेयलक्षणः संबन्धः प्रयोजनशास्त्रयोश्च साध्यसाधनभावलक्षणोऽभिधातव्यः ।

तत्रेहाभिधेयं हिताहितादिरूपेणायुः । वक्ष्यति हि "हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते" इति । अत्र च सर्वाभिधेयावरोधो यथास्थानमेव व्याकरणीयः । प्रयोजनं धातुसाम्यम् । यथोक्तं "धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" इति । संबन्धोऽप्यायुःशास्त्रयोरभिधानाभिधेयलक्षणः । प्रयोजनेन च धातुसाम्येन सममस्य शास्त्रस्य हेयोपादेयज्ञानावान्तरव्यापारस्य साध्यसाधनभावलक्षणः । तदेतत्सर्वं दीर्घंजीवितीयमित्यनेन पदेन दीर्घंजीवितीयशब्दमधिकृत्य कृतप्रयोजनाद्यभिधायक- "धातुसाम्यक्रिया चोक्ता" इत्यादिवाक्याभिधायकेन दर्शितं मन्तव्यम् ।

ननु प्रयोजनाभिधानं शास्त्रप्रवृत्त्यर्थमिति यदुक्तं तन्न युक्तं । यतो न प्रयोजनाभिधानमात्रेण प्रयोजनवत्तावधारणम् । विप्रलंभकसंसारमोचनप्रतिपदाकादिशास्त्रेषु प्रयोजनाभिधानेऽपि निष्प्रयोजनत्वदर्शनात् । अथ मन्यसे, आप्तप्रयोजनाभिधानमेतत् । तत्कुतोऽयथार्थत्वम् । ननु भो कथमयं प्रयोजनाभिधायी आप्तः । तदभिहितशास्त्रस्य यथार्थत्वादिति चेत्, हन्त न यावच्छास्त्रस्य प्रयोजनवत्त्वावधारणं

न तावच्छास्त्रप्रवृत्तिः। न यावच्छास्त्रप्रवृत्तिः न तावच्छास्त्रस्य यथार्थत्वावधारणम्। नयावच्छास्त्रस्य यथार्थत्वावधारणम् न तावच्छास्त्रस्य कर्तुराप्तत्वमवधार्यते। आप्तत्वानवधृतौ च कुतस्तदभिहितप्रयोजनवत्तावधारणमिति चक्रकमापद्यते। अथ मन्यसे मा भवतु प्रयोजनवत्तावधारणम्। अर्थरूपप्रयोजनवत्तासन्देह एव प्रवर्तको भविष्यति। कृष्यादावपि हि प्रवृत्तिरर्थसन्देहादेव। नहि तत्र कृषीवलानां फललाभावधारणं विद्यते। अन्तरा अवग्रहादेरपि संभाव्यमानत्वात्।

नन्वेवमसत्यपि प्रयोजनाभिधाने सप्रयोजननिष्प्रयोजनशास्त्रदर्शनाच्छास्त्रत्वमेव प्रयोजनवत्तासन्देहोपदर्शकमस्तु तथाप्यलं प्रयोजनाभिधानेन। नैवम्, नहि सामान्येन प्रयोजनसन्देहः प्रयोजनविशेषार्थिनं तथा प्रवर्तयति यथाभिप्रेतप्रयोजनविशेषविषयः सन्देहः। अभिप्रेतविशेषविषयश्च सन्देहो न विशेषविषयस्मरणमन्तरा भवति। अतो ये तावदनवधृताग्निवेशप्रामाण्यास्तेषां धातुसाम्यसाधनमिदं शास्त्रं नवेत्येवमाकारविशेषसन्देहोत्पादनार्थं प्रयोजनविशेषाभिधानम्। ये पुनः परमर्षेरग्निवेशस्याद्यतएवावधृतप्रामाण्यास्तेषां तदभिहितप्रयोजनवत्तावधारणेनैव प्रवृत्तिरिति युक्तं प्रयोजनाभिधानं। प्रयोजनाभिधायिवाक्ये तु स्वल्पप्रयत्नबोध्ये प्रयोजनसामान्यसन्देहादेव प्रवृत्तिरुपपन्ना। न पुनरनेकसंवत्सरक्लेशबोध्ये शास्त्रे। तदेवं यदुच्यते प्रयोजनाभिधायिवाक्यप्रवृत्तावपि प्रयोजनमभिधातव्यं तथा चानवस्थेति तन्निरस्तं भवति।

अथेत्यादि सूत्रे। अथशब्दो ब्रह्मादिप्रणीततन्त्रे स्वल्पायुर्मेधसामर्थ्यानवधारणस्य तथाभीष्टदेवतानमस्कार–शास्त्रकरणार्थगुर्वाज्ञालाभयोरानन्तर्ये प्रयुक्तोऽपि शास्त्रादौ स्वरूपेण मङ्गलं भवत्युदकाहरणप्रवृत्तोदकुंभदर्शनमिव प्रस्थितानाम्। ग्रन्थादौ मङ्गलसेवानिरस्तान्तरायाणां ग्रन्थकर्तृश्रोतॄणामविघ्नेनेष्टलाभो भवतीति युक्तं मङ्गलोपादानम्। अथशब्दस्य मङ्गलत्वे स्मृतिः "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ"। शास्त्रान्तरे चादौ मङ्गलत्वेन दृष्टोऽयमथशब्दः। यथा "अथशब्दानुशासनम्" "अथातो धर्मं व्याख्यास्याम" इत्यादौ। अभीष्टदेवतानमस्कारस्तु ग्रन्थादौ शिष्टाचारप्राप्तः परमशिष्टेनाग्निवेशेन कृत एव। अन्यथा शिष्टाचारलङ्घनेन शिष्टत्वमेव न स्यात् व्याख्यानान्तरायभयात्, तथा ग्रन्थाविनिवेशितस्यापि नमस्कारस्य प्रत्यवायापहत्वाच्च न ग्रन्थनिवेशनम्। यथा च गुर्वाज्ञालाभानन्तरमेतत्तन्त्रकरणं तथा "अथ मैत्रीपरः पुण्यम्" इत्यादौ स्फुटमेव। ग्रन्थकरणे च गुर्वनुमतिप्रतिपादनेन ग्रन्थस्योपादेयता प्रदर्शिता भवति। यत्पुनः शिष्यप्रश्नानन्तर्यार्थत्वमथशब्दस्य वर्ण्यते तन्न मां धिनोति। नहि शिष्यान् पुरो व्यवस्थाप्य शास्त्रं क्रियते। श्रोतृबुद्धिस्थीकारे तु शास्त्रकरणं युक्तम्। न च बुद्धिस्थीकृताः प्रष्टारो भवन्ति।

अतःशब्दोऽधिकारप्रागवध्युपदर्शकः। अत ऊर्ध्वं यदुपदेक्ष्यामो दीर्घजीवितीयं तदिति। यदि वा हेतौ, येन ब्रह्मादिप्रणीतायुर्वेदतन्त्राणामुक्तेन न्यायेनोत्संबन्धत्वमिव[1]। अतो हेतोर्दीर्घंजीवितीयं व्याख्यास्याम इति योजनीयम्।

दीर्घजीवितीयमित्यत्र दीर्घंजीवितशब्दोऽस्मिन्नस्तीति मत्वर्थे "अध्यायानुवाकयोर्लुक् च" इति छप्रत्ययः। यदि वा दीर्घजीवितमधिकृत्य कृतो ग्रन्थोऽध्यायरूपस्तन्त्ररूपो वा इत्यस्यां विवक्षायाम् "अधिकृत्य कृतो ग्रन्थ" इत्यधिकारात् "शिशुक्रन्दयमसभ"इत्यादिना छः। एवमन्यत्राप्येवंजातीये मन्तव्यम्। अत्र सत्यपि शब्दान्तरे दीर्घजीवितशब्देनैव संज्ञा कृता दीर्घजीवितशब्दस्यैव प्रवचनादौ निवेशात् प्रशस्तत्वाच्च। दीर्घजीवितशब्दोऽस्मिन्नस्तीति दीर्घजीवितशब्दमधिकृत्य कृतो वेत्यनया व्युत्पत्त्या दीर्घजीवितीयशब्दस्तन्त्रेऽध्याये च प्रवर्तनीयः। तेन दीर्घजीवितीयं व्याख्यास्याम इत्यनेन तन्त्रं प्रति व्याख्यानप्रतिज्ञा लब्धा भवति पुनर्दीर्घजीवितीयमिति पदमावर्त्याध्यायपदसमभिव्याहृतमध्यायव्याख्यानप्रतिज्ञां लम्भयति। दृष्टं चावृत्य पदस्य योजनम्। यथा अपामार्गतण्डुलीये। "गौरवे शिरसः शूले पीनसे" इत्यादौ "शिरस" इतिपदम् "गौरवे" इत्यनेन युज्यते। आवृत्य "शूले" इत्यनेन। अतश्च यदुच्यते। अकृततन्त्रप्रतिज्ञा अध्यायप्रतिज्ञा क्रियमाना इति तन्निरस्तं भवति। यदि वा अध्यायप्रतिज्ञैवास्तु। तथैव तन्त्रप्रतिज्ञाप्यर्थलब्धैव। न ह्यध्यायस्तन्त्रव्यतिरिक्तस्तेनावयवव्याख्याने तन्त्रस्याप्यवयविनो व्याख्या भवत्येव। यथा अङ्गुलीग्रहणेन देवदत्तोऽपि गृहीतो भवति। अवयवान्तरव्याख्यानप्रतिज्ञा तु न लभ्यते, तां तु प्रत्यध्यायमेव करिष्यति।

अध्यायमिति। अधिपूर्वादिङः "इङश्च" इति कर्मणि घञा साध्यम्। तेन अधीयते असावित्यध्यायः। न चानया व्युत्पत्त्या प्रकरणचतुष्कस्थानादिष्वतिप्रसङ्गः। यतो योगरूढेयं संज्ञा। अध्यायस्य प्रकरणसमूहविशेष एव दीर्घजीवितीयादिलक्षणे पङ्कजशब्दवद्वर्तते न योगमात्रेण वर्तते। वक्ष्यति हि "अधिकृत्येयमध्यायनामसंज्ञा प्रतिष्ठिता" नामसंज्ञा योगरूढसंज्ञेत्यर्थः। यदि वा करणाधिकरणयोरर्थयोः "अध्यायन्यायोद्यावसंहाराश्च" इतिसूत्रेण निपातनादध्यायपदसिद्धिः। अधीयतेऽस्मिन्ननेन वा अर्थविशेष इत्यध्यायः। अतिप्रसक्तिनिषेधस्तूक्तन्यायः।

व्याख्यास्याम इति। व्याङ्पूर्वात्ख्यातेर्लृटा साध्यम्। चक्षिङो हि प्रयोगेऽनिच्छतोऽपि व्याख्यातुः क्रियाफलसंबन्धस्य दुर्निवारत्वेन "स्वरितञित" इत्यादिनात्मनेपदं स्यादिति। वीति विशेषे, विशेषाश्च व्याससमासादयः। आङोऽयं क्रियायोगे। ये तु मर्यादायामभिविधौ वा आङ्प्रयोगं मन्यन्ते तेषामभिप्रायं न विद्मः। यतो मर्यादायामभिविधौ चाङः प्रातिपदिकेन योगः स्यात्। यथा "आ-

---

1 'उत्सन्नत्वमिव' इति पाठः।

समुद्रक्षितीशः" "आपाटलीपुत्राद्दृष्टो देव" इत्यादौ । इहापि च तथा । क्रियायोगविरहे "उपसर्गाः क्रियायोग" इति नियमात् आङ उपसर्गत्वं न स्यात् । ततश्चानुपसर्गेणाङा व्यवधानात् वेरुपसर्गता न स्यात् । येनाव्यवहितः स्वजातीयव्यवहितो वा धातोरुपसर्गो भवति । व्याङोरप्युभयोरनुपसर्गत्वे तत्संबन्धोचितभूरिप्रातिपदिककल्पनागौरवप्रसङ्गात् । तस्मात् क्रियायोगित्वमेवाङो न्याय्यम् । अथ, अतः, दीर्घं, जीवितीयं, अध्यायं, वि, आ, ख्यास्याम इत्यष्टपदत्वम् ॥ १॥

## इति ह स्माह भगवानात्रेयः ॥ २ ॥

ननु खलु कथमग्निवेशः सकलपदार्थाशेषज्ञानव्याख्येयमायुर्वेदं व्याख्यास्यति । यतो न तावद्भेषजादीनामशेषविशेषः प्रत्यक्षज्ञेयः । सर्वपदार्थानां प्रत्यक्षाविषयत्वात् । अन्वयव्यतिरेकाभ्यां तु सर्वपदार्थावधारणं दुष्करमेव । यत एकमेव मधु स्वरूपेण जीवयति मारयति चोष्णं समघृतं च, कफप्रकृतेर्हितमहितं वातप्रकृतेः, आनूपे सात्म्यमसात्म्यं मरौ, शीते सेव्यमसेव्यं ग्रीष्मे, हितमवृद्धे वृद्धे चाहितं, अल्पं गुणकरं आबाधकरमत्युपयुक्तं, आमतां गतमुदरे उपक्रमविरोधित्वादतिविभ्रमकरम् । काकमाचीयुक्तं च मापकं पक्कं निकुचेन सहोपयुक्तं मरणाय अथवाबलवर्णवीर्यतेजोऽपघाताय भवतीत्येवमादि तत्तद्युक्तं तत्तच्छतशः करोति । अतएव एकस्यैव मधुनोरूपं यदानेन प्रकारेण दुरधिगमं, तदात्र कैव कथा निखिलपदार्थाशेषविशेषज्ञानस्य । अजानंश्च व्याचक्षाणः कथमुपादेयवचन इति कृत्वा गुरोरासात्प्रतिपन्नं प्रतिपादयिष्याम इति दर्शयन् तामिमां शङ्कां निराचिकीर्षुर्गुरूक्तानुवादरूपतां स्वग्रन्थस्य दर्शयन्नाह **इति ह स्माह भगवानात्रेय इति ।**

अत्र इतिशब्दो वक्ष्यमाणार्थपरामर्शकः । हशब्दोऽवधारणे । यथा "न ह वै शरीरस्य प्रियाप्रिययोरपहतिरस्ति" इति । अत्र न ह इति नैवेत्यर्थः । अत्र "स्माह" इतिशब्दप्रयोगेण भूतमात्र एव लिडर्थे "लट् स्मे" इति लट् न भूतानद्यतने परोक्षे । आत्रेयोपदेशस्याग्निवेशं प्रत्यपरोक्षत्वात् । यथा च भूतमात्रे लिङ् भवति तथाच दर्शयिष्यामः । भगं पूजितं ज्ञानं, तद्वान् । यथोक्तम् "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" । यदि वा भगशब्दः समस्तैश्वर्यमाहात्म्यादिवचनः । यथोक्तम् "ऐश्वर्यस्य समस्तस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना" ॥ अत्रेरपत्यमात्रेयः । अनेन विशुद्धवंशत्वं दर्शितं भवति ।

अत्रान्ये वर्णयन्ति । चतुर्विधं सूत्रं भवति—गुरुसूत्रं, शिष्यसूत्रं, प्रतिसंस्कर्तृसूत्रं, एकीयसूत्रम् । तत्र गुरुसूत्रं यथा—"नैतद्बुद्धिमता द्रष्टव्यमग्निवेश" इत्यादि । प्रतिसंस्कर्तृसूत्रं यथा—"तमुवाच भगवानात्रेयः" इत्यादि । शिष्यसूत्रं यथा—"नैतानि भगवन्पञ्चकषायशतानि पूर्यन्ते" इत्यादि । एकीयसूत्रं यथा—"कुमारस्य शिरः पूर्वमभिनिर्वर्तते इति कुमारशिरा भरद्वाजः" इत्यादि । तेनायं व्याख्यानप्रतिज्ञासूत्रं गुरोरेव, शिष्यस्याग्निवेशस्य व्याख्यानेऽनधिकारित्वात् । द्वितीयं सूत्रं प्रतिसंस्कर्तुः । इतिशब्देन च प्रकारवाचिना "दीर्घंजीवितीयं व्याख्यास्याम" इति परामृश्यते । तेनाह स्मेति भूतानद्यतनपरोक्ष एव भवति प्रतिसंस्कर्तारं प्रत्यात्रेयोपदेशस्य परोक्षत्वात् । अनेन न्यायेन च "तमुवाच भगवानात्रेयः" इत्यादावपि लिड्विधिरुपपन्नो भवति । सुश्रुते च "यथोवाच भगवान् धन्वन्तरिः" इति प्रतिसंस्कर्तृसूत्रमिति कृत्वा टीकाकृता लिड्विधिरुपपादितः । अत्र ब्रूमः । यत्तावदुक्तं शिष्यस्याग्निवेशस्य व्याख्यानानधिकारादिदं गुरोः सूत्रम्, तन्न । नहि जात्या गुरुत्वमस्ति । यतः स एवात्रेयः स्वगुरुमपेक्ष्य शिष्यः । अग्निवेशादीनपेक्ष्य गुरुः । एवमग्निवेशोऽपि ग्रन्थकरणकाले स्वबुद्धिस्थीकृतान् शिष्यान् प्रति गुरुरिति न कश्चिद्दोषः । यत्पुनर्द्वितीयसूत्रस्य प्रतिसंस्कर्तृसूत्रतया भूतानद्यतनपरोक्षे लिड्विधिरुपपद्यते । तत्र विचार्य, किमिदं द्वितीयं सूत्रं पूर्ववाक्यैकतापन्नं न वा । यद्येकवाक्यतापन्नं तदा सुश्रुते—तथा व्याख्यास्यामो यथोवाच धन्वन्तरिरिति योजनीयम्, तथाच व्याख्यास्याम इति क्रियैकवाक्यतापन्नं उवाचेति पदं न भिन्नकर्तृकं भवितुमर्हति । तथाच कुतो लिड्विधिः । अथ नैकतापन्नं तदा गौरश्वः पुरुषो हस्तीतिवन्नार्थसङ्गतिः । किंच यत्तु जतूकर्णादौ प्रतिसंस्कर्तृश्रुतिगन्धोऽपि नास्ति । तत्कथं "नानाश्रुतपरिपूर्णकण्ठः शिष्यो जतूकर्णः प्राञ्जलिरधिगम्योवाच" इत्यादौ लिड्विधिः । अनेन न्यायेन चरकेऽपि प्रतिसंस्कर्तृसूत्रपक्षे लिड्विधिर्नास्ति, तस्माच्चरकेऽग्निवेशः सुश्रुते सुश्रुत एव सूत्राणां प्रणेता क्वचित् किंचिदर्थं स्तोतुं निन्दितुं वा आख्यायिकारूपं पुराकल्पं दर्शयन् किमपि सूत्रं गुरूक्तानुवादरूपतया किमप्येकीयमतानुवादरूपतया लिखति । प्रतिसंस्कर्ता त्वयं ग्रन्थं पूरयति तदाद्यग्रन्थकर्तृतयैव । लिड्विधिस्तु भूतानद्यतनमात्र एव छन्दोविहितो भाषायामपि वर्णनीयः । अन्यथा उवाचेति पदं जतूकर्णादौ न स्यात् । तत्र च हरिवंशे धौम्योपाख्याने "मामुवाच" इति । तथा "अहमुवाच" इति च न स्यात् । यथा "स मामुवाचाम्बुचरः कूर्मो मानुपदेहधृक् । किमाश्चर्यं मयि मुने धन्यश्चासि कथं विभो" ।

१ काकमाचीं मधुना, पक्कं निकुचं माषेण, पक्कं निकुचं मधुना सहोपयुक्तं मरणायेति योजना । यथाह वाग्भटः "माषसूपगुडक्षीरदध्याज्यैर्लकुचं फलम् ॥ कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ॥ चरके तु—न वास्तुशाकं न लिकुचं पक्कं मधुपयोभ्यां सहोपयोज्यम् ॥ उदाहरणोद्धृतमधुविवेचनप्रकरणे मापकविवेचनमसंगतं तथाच व्युत्पत्त्यापि न समीचीनं तथा मापकस्य काकमाच्या सहोपयोगोपि शास्त्रे अदृष्टः तस्मादुपरिस्था टीका भ्रमप्रमादयुक्तेति भाति ।

१ 'कामस्याथ प्रयत्नस्य' इति पाठः ।

तथा "स्वयंभुवचनात्सोऽहं त्वद्वान्दै समुपस्थितः । उवाच चैनांश्चतुरः" इति । यदपीति. हृस्माहेत्यत्र इतिशब्देन पूर्वसूत्रं परामृश्यते । तत्र । येन दीर्घंजीवितीयादिसूत्रमात्रस्य तदर्थस्य वा गुरूक्तत्वप्रतिपादने सति नैवोत्तरत्राभिधेयाभिधानेन निखिलतन्त्रस्य गुरूक्तानुवादरूपतया करणं श्रोतृश्रद्धाकरणं प्रतिपादितं भवति । भवति तु भावयितुं । यथा पुरा व्याख्यातं तस्मात्तदेव न्याय्यमिति । अग्निवेशस्य व्याख्यास्याम इति वहुवचनमेकस्मिन्नपि । अस्मदः प्रयोगात् वहुवचनप्रयोगस्य साधुत्वात् । साधु हि वदन्ति वक्तारो "वयं करिष्यामः" इति । भगवानात्रेय इत्यत्र तु एकवचननिर्देशकृतो भगवानित्यनेनैवात्रेयस्य गुरोर्गौरवस्य दर्शितत्वात् ॥ २ ॥

**दीर्घंजीवितमन्विच्छन्भरद्वाज उपागमत् ।**
**इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम् ॥ ३ ॥**

ननु यथाग्निवेशस्यायुर्वेदस्य दुरधिगमत्वेन प्रत्यक्षतो वान्वयव्यतिरेकाद्वा ज्ञानं न संभाव्यते । एवमात्रेयस्यापि कथमायुर्वेदज्ञानं स्यात् । यन्मूलमग्निवेशस्यायुर्वेदज्ञानं समीचीनमुच्यते इत्याशङ्कयायुर्वेदस्याविच्छिन्नागमत्वं दर्शयन्नाह **दीर्घंजीवितमित्यादि** । जीवितं शरीरेन्द्रियसत्वात्मसंयोगः । तच्च दीर्घमिति दीर्घकालसंवन्धि । कालशब्दोऽप्यत्र लुप्तनिर्दिष्टो द्रष्टव्यः । यत्तन्त्रशैली चैवमाचार्यस्य यत आदिमध्यान्तलोपान्करोति । ये लुप्ता अपि गम्यन्त एव । यथा 'ग्राम्यानूपौदकरसा'इत्यत्र मांसशब्दो लुप्तस्तथा दिग्धविद्ध इत्यत्र विषशब्दो लुप्त इत्यादि । अन्विच्छन्निति अनुरूपं दीर्घमिच्छन्निति। भरद्वाज इति गोत्रनाम । उग्रतपा इति विशेषणेन भरद्वाजस्य मानुषस्यापि इन्द्राभिगमनशक्तिः, तथा शरण्यत्वप्रतीतिशक्तिश्चोपदर्श्यते । अचिन्त्यो हि तपसां प्रभावो येनागस्त्यो महोदधिमपि चुलुकनिपेयमकरोत् । नच वाच्यमुग्रतपस्त्वेनैव किमित्ययमायुर्वेदमपि न बुध्यते । यतस्तपःप्रभावोऽपि प्रतिनियतविषयत्वान्न सर्वत्र शक्तिमान् । शक्तिश्चास्य कार्योन्नेया । तेन गुरुनिरपेक्षायुर्वेदज्ञानलक्षणकार्यादर्शनात् न तत्तपस्तत्र समर्थमित्यवधारयामः । किंवा गुरुपूर्वकमेणैवायुर्वेदज्ञानं फलतीतीन्द्रमुपागमद्भरद्वाजः ।

अथ कथं ब्रह्मादिष्वायुर्वेदपूर्वगुरुषु विद्यमानेषु इन्द्रमेवायमुपागमत् । युक्तंच प्रधानगुरोरेव श्रवणं यतः शिष्यपरंपरासंचारिणी विद्याऽसम्यग्ग्रहणादिदोषात्पात्रपरंपरासंचार्यमाणमधुवत्क्षीणापि संभाव्येत । अत आह—बुद्ध्वा शरण्यममरेश्वरमिति यस्मादयमेवेन्द्रोऽल्पायुः स एव भयत्रस्तानां यथा शरण्यो रक्षणहितो न तथा ब्रह्मादयः । तेन तमेवोपागमत् । अमरेश्वर इत्यनेन च इन्द्रस्य रक्षणोपयुक्ततां दर्शयति । राजा हि प्रजारक्षणे प्रयत्नातिशयवान्भवति ।

ननु दीर्घंजीवितमन्विच्छन्नित्यत्र दीर्घस्याव्यवस्थितत्वेन कियत्कालं तद्दीर्घमभिप्रेतं । तत्र युगानुरूपं वर्षशतं यदुक्तं "वर्षशतं खल्वायुषः प्रमाणमस्मिन्काले" । एतच्च कलिकालादौ परमायुःकालस्य यथायथा क्षयस्तथातथायुषः क्षयः । यदाह "संवत्सरशते पूर्णे याति संवत्सरः क्षयम् । देहिनामायुषः काले यत्र यन्मानमिष्यते" । एतदनुसारेण पूर्वयुगेष्वायुःप्रकर्षः । यदाह भगवान्व्यासः "पुरुषाः सर्वसिद्धाश्च चतुर्वर्षशतायुषः । कृते त्रेतादिकेऽप्येवं पादशो ह्रसति क्रमात्" । कर्मणानुरूपं चायुर्नियतं वा, अनियतं वा भवति । तत्र वलवत्कर्मारब्धं नियतं यथायमस्मिन्काले म्रियत एव परं अवलवत्कर्मारब्धं त्वनियतं तद्यदा दृष्टं विषादि मारकं प्रत्ययमासादयति तदा संजातवलं मारयति, यदा न प्राप्नोति दृष्टं मारकं कारणं तदा युगानुरूपायुःप्राप्तौ युगप्रभावजर्जरीकृतशरीरं मारयति । अत्र दृष्टान्तश्चाचार्येण दर्शितः "यथा ह्यक्षः स्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छति । सएवाक्षोऽतिभाराधिष्ठितः" इत्यारभ्य "यावदन्तरा व्यसनमापद्यते तथा अनियतायुषः अन्तरा प्राणा अपरान्निरुध्यन्ते" इत्यन्तेन । यदा त्वनियतायुषो रसायनमाचरन्ति तदा तत्प्रभावाद्युगप्रभावनियतायुर्लङ्घनं भवति । यदाह "तानि यावन्ति भक्षयेत् । जीवेद्वर्षसहस्राणि तावन्त्यगतयौवनः" इत्यादि । न तु वलवत्कर्मनियतस्यायुषो लङ्घनमस्ति । यदाह "कर्म किंचित्क्वचित्काले विपाकनियतं महत् । किंचित्तु कालनियतं प्रत्ययैः प्रतिबुध्यते" । हन्त यद्येवं तदा सर्वत्र कर्मैव कारणं मरणे जीविते वा तथा व्याधौ व्याध्यपगमे वा तत्किमनेनायुर्वेदेन कर्मजनितफलानुविधायिना । तथाहि यत्तावदुच्यते नियतं कर्म तत्र तावदायुर्वेदव्यापारो नास्ति येन नियतेनैव कर्मणा मिलितमपि दृष्टं तत्र विफलीक्रियते । यच्चावलवत्कर्मारब्धत्वेनानियतमायुरुच्यते तदपि न श्रद्धाधीनं येनादृष्टशक्तिपराभवेन दृष्टस्य कार्यकारितां दृष्ट्वा विवादाध्यासितेऽपि विषयेऽदृष्टमेव कारणं अवधारयामः दृष्टं त्वदृष्टाकृष्टमेव तत्र भवति । नैवम् । एवं सति सर्वानुष्ठानस्योपरमप्रसङ्गः। किंच केवलकर्मवादिनो दृष्टमपवदतोऽदृष्टोत्पत्तिरेव न प्राप्नोति। अदृष्टं हि दृष्टाग्निष्टोमादिजन्यं दृष्टं च कारणं कर्मवादिनोऽभिमतम् । अथादृष्टकारणं दृष्टमिच्छन्ति हन्त तर्हि तेनैव न्यायेन दहनादीनामपि किमिति शीतापहत्वस्फोटादिजनकत्वं न स्वीक्रियते । किंच केवलकर्मवादिनो दृष्टे कारणे व्याप्तिग्रहणाभावाददृष्टानुमानमेव न स्यात्तस्माद्दृष्टमदृष्टं च कारणम् । तत्र क्वचिददृष्टं दृष्टेन वाध्यते क्वचिच्च दृष्टमदृष्टेनेति तेन यत्र पुरुषे वलवन्नियतमरणकारणमदृष्टं तत्र जीवितमरणयोरकिंचित्करोऽयमायुर्वेदः । किंतु तत्रापि नियतमरणकालादर्वाग्दुःखजनकव्याधिप्रशमने व्याप्रियत एव यदि व्याधिरपि तत्र नियतकर्मजन्यो न स्यात् । यत्तु कर्मानियतविपाकं भवति तत्प्रति सर्वथा प्रयोजनवदायुर्वेदोपादनम् । यत्तु युगनियतमायुः, तन्नातिवलवता कर्मणा नियमितं येन रसायनप्रयोगात्तद्वाधनं दृष्टत्वादनुमन्यते न तु सुस्थहि

तातुरहितचिकित्साभ्याम् । अयंच वादः शास्त्रकारेण स्वयमेव प्रपञ्चेन निर्लोचनीय इति नेह प्रतन्यते ॥ ३ ॥

**ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः ।**
**जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥ ४ ॥**
**अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम् ।**
**ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत् ॥ ५ ॥**

कथमिन्द्र एव शरण्यो न ब्रह्मादय इत्याह—ब्रह्मणा हीत्यादि । हि यस्मादर्थे, प्रजापतिर्दक्षनामा । प्रोक्तमिति प्रकर्षेणोक्तं प्रकर्षश्चानवशेषेणाभिधानम् । यथेत्यनेन तथाशब्दस्य नित्यसंवन्धस्याकर्षणत्वात् यादृशं प्रोक्तं तादृशमेव जग्राह । निखिलेनेत्यनवशेषेण । अश्विनौ तु ततः प्रजापतेर्जगृहतुः । अत्रापि यथाप्रोक्तं निखिलेन चेतिपदं तथैव योजनीयम् । एवमश्विभ्यां भगवान् शक्रः प्रतिपेदे । हेत्यत्रापि यथाप्रोक्तमित्यादि योजनीयम् । हशब्दस्त्ववधारणे । तेन प्रतिपेदे एव परं शक्रो नतु कस्मैचिदायुर्वेदं दत्तवान् इत्यर्थः । अनेन च ग्रन्थेनान्यूनाधिकायुर्वेदागमोपदर्शकेन यथा ब्रह्मण आयुर्वेदज्ञानं तथा इन्द्रस्यापीति दर्शितम् । तेन ब्रह्मणो वा आयुर्वेदः श्रूयते इन्द्राद्वेति न किञ्चिदर्थतो विशेषः । इन्द्रेत्विदमधिकं यदयमसंक्रामितविद्यत्वेन शिष्यार्थी । यदुक्तं "यो हि गुरुभ्यः सम्यगादाय विद्यां न प्रयच्छत्यन्तेवासिभ्यः स खलु ऋणी गुरुजनस्य महदेनो विन्दति" इत्यतोऽकृतशिष्यत्वेन शिष्यार्थित्वविशेषयोगाद्ब्रह्मादिभ्यो विशेषेणेन्द्र एव शरण्य इति । ब्रह्मणस्तु परमगुरोर्विदितसकलवेदस्य सर्वत्रातिरोहितमतेरायुर्वेदज्ञानं स्वतःसिद्धमेवेति न गुर्वन्तरापेक्षा । एतच्च ब्रह्मादिगुरुपरम्परोपदर्शनमायुर्वेदस्याविप्लुतागमोपदर्शनार्थं तथा महापुरुषसेवितत्वेनोपादेयत्वोपदर्शनार्थं च । वचनं हि तत्र "यन्मन्येत महद्यशस्विपुरुषसेवितम्" इत्यादि यावत् "उपादद्याच्छात्रः" इति । ऋषिप्रोक्त इति वक्ष्यमाणवृत्तान्तेन ऋषिप्रोक्तः । तस्मादिति यस्मादिन्द्र एव विशेषेण शरण्यः ॥ ४ ॥ ५ ॥

**विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।**
**तपोपवासाध्ययनब्रह्मचर्यव्रतायुषाम्[1] ॥ ६ ॥**
**तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।**
**समेताः पुण्यकर्माणः पार्श्वे हिमवतः शुभे ॥ ७ ॥**

अथ कथमयमृषिप्रोक्त इत्यायुर्वेदस्य मर्त्यलोकगमने हेतुमाह—विघ्नभूता इत्यादि । विघ्नभूता इत्यन्तरायस्वरूपाः । रुजन्तीति रोगाः । प्रादुर्भूता इत्याविर्भूताः । अयंच रोगप्रादुर्भावः कृतयुगान्ते बोद्धव्यः । वक्ष्यति हि "भ्रश्यति तु कृतयुगे" इत्यादिना रोगप्रादुर्भावं जनपदोध्वंसनीये । प्रादुर्भावश्च पूर्वसिद्धस्यैवाविर्भावः । तेन रोगसन्ताननित्यताप्यविरुद्धा भवतीत्यर्थोऽर्थे दशमहामूलीये वक्तव्यः । शीर्यत इति शरीरं तदस्यास्तीति शरीरी । [illegible] एव शीर्यमाणं रोगसंवन्धात्तु नितरां शीर्यते [illegible]ति । केषां विघ्नभूता इत्याह—तपोपवासाध्ययनेत्यादि । रोगग्रस्ता हि शरीरिणस्तपःप्रभृतीनि कर्तुं न पारयन्ति विघ्नवत्त्वात् । तथा आयुषश्च मारकत्वेन केचिद्रुदा विरोधका भवन्ति । अत्र तपश्चान्द्रायणादि । उपवासः क्रोधादिपरित्यागः सत्याद्युपादानं च । वचनं च "उपावृत्तस्य पापेभ्यः सहवासो गुणे हि यः । उपवासः स विज्ञेयो न शरीरस्य शोषणम्" । अध्ययनं वेदाध्ययनम् । ब्रह्मणे मोक्षाय चर्यं ब्रह्मचर्यं उपस्थनिग्रहादि । व्रतमीप्सितकामो नियमः । आयुरुक्तम् । तपोपवास इति प्रयोगः पूर्वत्रासिद्धविधेरनित्यत्वेन तपःसकारस्थानिभूतयलोपस्य सिद्धत्वात् ज्ञेयः । यथा नोपधाया इति । भूतेषु प्राणिषु अनुक्रोशमित्यनुकम्पां । कस्मात् अनेकार्थत्वाद्धातूनां । पुरस्कृत्यादृत्य । एतेन प्राणिरोगहरणमेव प्रधानमायुर्वेदोपगमने महर्षीणां फलम् । आयुःप्रकर्षस्तु अनुषङ्गसिद्धस्तेषां महात्मनामिति भावः । नरेष्विति वक्तव्ये यदयं भूतेष्विति सामान्यशब्दं करोति तेन न समानजीवप्रयुक्तेयमनुकम्पा । किंतु प्राणित्वमात्रप्रयुक्तेति समदर्शितामृषीणां दर्शयति । महान्तश्च ते ऋषयश्चेति महर्षयः । अनेन चतुर्विधा अपि ऋषयः—ऋषिकाः ऋषिपुत्राः देवर्षयः महर्षयश्च गृह्यन्ते । महर्ष्यनुगामित्वादृषिकादीनामपि ग्रहणम् । पुण्यं पावनं कर्म येषां ते पुण्यकर्माणः । पर्शुकाभिस्तृतं पार्श्वं तेन पार्श्वमिव ततं पार्श्वं । शुभ इति पदं कर्तव्यसमाध्यनुगुणतोपदर्शनार्थं । यतः शुभे हि देशे समाधयः प्रसीदन्ति ॥ ६ ॥ ७ ॥

**अङ्गिरा जमदग्निश्च वसिष्ठः कश्यपो भृगुः ।**
**आत्रेयो गौतमः साङ्ख्यः पुलस्त्यो नारदोऽसितः ८**
**अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ ।**
**पारिक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिञ्जलः ॥ ९ ॥**
**विश्वामित्राश्मरथ्यौ च भार्गवश्च्यवनोऽभिजित् ।**
**गार्ग्यः शाण्डिल्यकौण्डिल्यौ वार्क्षिर्देवलगालवौ १०**
**सांकृत्यो वैजवापिश्च कुशिको वादरायणः ।**
**वडिशः शरलोमा च काप्यकात्यायनावुभौ ॥ ११ ॥**
**काङ्कायनः कैकशेयो धौम्यो मारीचिकाश्यपौ ।**
**शर्कराक्षो हिरण्याक्षो लोकाक्षः पैङ्गिरेव च ॥ १२ ॥**
**शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।**
**वैखानसा वालखिल्यास्तथा चान्ये महर्षयः ॥ १३ ॥**
**ब्रह्मज्ञानस्य निधयो दमस्य नियमस्य च ।**
**तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥ १४ ॥**
**सुखोपविष्टास्ते तत्र पुण्यां चक्रुः कथामिमाम् ।**

के ते महर्षय इत्याह—अङ्गिरा इत्यादि । वहूर्षीणामत्र कीर्तनं च ग्रन्थादौ पापक्षयहेतुत्वेन, तथा आयुर्वेदस्यैवंविधमहापुरुषसेवितत्वेन सेव्यत्वोपदर्शनार्थं चेति । एषु च मध्ये केचिद्यायावराः, केचिच्छालीनाः, केचिदयोनिजाः एवं-

1. 'उपवासतपःपाठब्रह्मचर्यव्रतायुषाम्' इति पाठः ।

प्रकाराश्च सर्वे मिलिता बोद्धव्याः । भिक्षुरित्यात्रेयविशेषणं । वक्ष्यति हि "तत्रेति भिक्षुरात्रेय" इति । वैखानसा इति कर्मविशेषप्रयुक्ता संज्ञा । वालखिल्यास्तु खल्पप्रमाणाः केचिदृषयः । निधय इव निधयोऽक्षयस्थानत्वेन । दमो दान्तत्वम् । इमामित्यग्रे वक्ष्यमाणां ॥ ८–१४ ॥

**धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।**
**रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ॥ १५॥**
**प्रादुर्भूतो मनुष्याणामन्तरायो महानयं ।**
**कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः १६**
**अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ।**
**स वक्ष्यति शमोपायं यथावदमरप्रभुः ॥ १७ ॥**

धारणाद्धर्मः स चात्मसमवेतः कार्यदर्शनानुमेयः । अर्थः सुवर्णादिः । काम्यत इति कामो वनितापरिष्वङ्गादिः । मोक्षः संसारविमोक्षः । आरोग्यं रोगाभावाद्धातुसाम्यं । मूलं कारणं उत्तममिति प्रधानं । तेनारोग्यं चतुर्वर्गे प्रधानं कारणं । रोगगृहीतस्य क्वचिदपि पुरुषार्थेऽसमर्थत्वादित्युक्तं, तस्यापहर्तार इति आरोग्यस्यापहर्तारः । इदमेव च रोगाणामारोग्यापहरणं यदनर्थत्वलाभः । न पुनरुत्पन्नो रोगः पश्चादारोग्यमपहरति भावाभावयोः परस्पराभावात्मकत्वात् । श्रेयसः जीवितस्य चेति श्रेयोवज्जीवितं हितत्वेन सुखत्वेन चार्थे दशसहामूलीये वक्ष्यमाणं, तस्य जीवितस्यापहर्तार इति योजयति । अश्रेयः जीवितमहितत्वेन दुःखहेतुतया चानुपादेयमिति कृत्वा तदपहरणमिह नोक्तं । अत्र सुखहितजीवितोपघातो धर्मोपघातेनैव लब्धः । तेन वयं पश्यामः—श्रेयःशब्देन सामान्येनाभ्युदयवाचिना धर्मादयोऽभिधीयन्ते । जीवितशब्देन च जीवितं । यतो जीवितं खरूपेणैव सर्वप्राणिनां निरुपाध्युपादेयं। वचनं हि "आचक्रिमेव च ब्रह्मण इयमात्माशीरायुष्माणभूयासम्" इति । यत्त्वत्यन्तदुःखगृहीतस्य जीवितं जिहासितं, तत्र दुःखस्यात्यन्तजिहासितस्यान्यथाहातुमशक्यत्वात्प्रियमपि जीवितं त्यक्तुमिच्छति न खरूपेण । अन्तराय इति धर्मादिसाधने बोद्धव्यः । अयमिति रोगप्रादुर्भावरूपः । तेषामिति रोगाणां । शरणमिति रक्षितारम् । शक्तत्वाच्छक्र उच्यते । ध्यानं समाधिविशेषस्तदुपलब्धिसाधनत्वाच्चक्षुरिव ध्यानचक्षुः । तेन "स वक्ष्यति शमोपायं यथावदमरप्रभुः" । इति च ध्यानचक्षुषा ददृशुरिति योजना ॥ १५–१७ ॥

**कः सहस्राक्षभवनं गच्छेत्प्रष्टुं शचीपतिम् ।**
**अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।**
**भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥ १८॥**
**स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।**
**ददर्श बलहन्तारं दीप्यमानमिवानलं ॥ १९ ॥**

**सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरं ।**
**प्रोवाच भगवान्धीमान् ऋषीणां वाक्यमुत्तमम् ॥२०॥**
**व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः ।**
**तद्ब्रूहि मे शमोपायं यथावदमरप्रभो ॥ २१ ॥**
**तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः ।**
**पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥ २२ ॥**

अथैतेषु मध्ये भरद्वाजः कथमिन्द्रमुपागत इत्याह—क इत्यादि । शचीपतिमित्यनेन शचीसंभोगव्यासक्तमप्यहमुपासितुं क्षम इति भरद्वाजो दर्शयति । अर्थे प्रयोजने । नियुज्येयं व्यापार्येयं । अत्र प्रकृते, अत्रेतिशब्दो यस्मादर्थे । यथा "सुभिक्षमित्यागतः"—यस्मात् सुभिक्षं तस्मादागत इत्यर्थः । नियोजित इति चौरादिको णिच् न हेतौ । अनेन प्रकरणेन भरद्वाजस्यायुर्वेदागमे विशेषणार्थित्वान्न प्रेरणमिति दर्शितं भवति । प्रोवाचेति सम्यगुवाच । न तु प्रशब्दः प्रपंचार्थः पदैरल्पैरित्युक्तत्वात् । कस्मात्पदैरल्पैरुवाचेत्याह मतिं बुद्ध्वा विपुलामिति, यस्माद्विपुलमतिं भरद्वाजं प्रतिपन्नवान् तस्मात्पदैरल्पैरुवाचेति भावः मतिश्च बहुविषयत्वेन उपचाराद्विपुलेत्युच्यते सा च मतिः शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशवतीह विपुला बोद्धव्या । अत्र च इन्द्रेण दिव्यदृशा भरद्वाजाभिप्रायमग्रत एव बुद्ध्वा आयुर्वेद उपदिष्टः । तेन भरद्वाजस्य इन्द्रप्रच्छादि इह न दर्शितं । किंवा भूतमपि इन्द्रप्रच्छादि ग्रन्थविस्तरभयादिह न दर्शितम् ॥ १८–२२ ॥

**हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।**
**त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥ २३ ॥**

यादृशोऽसावल्पपदैरुपदिष्ट आयुर्वेदस्तमाह—हेतुलिङ्गौषधज्ञानमिति । हेत्वादीनि ज्ञायन्ते अनेनेति हेतुलिङ्गौषधज्ञानं । यावच्च आयुर्वेदवाच्यं तावद्धेत्वाद्यन्तर्भूतमित्यर्थः । हेतुग्रहणेन सन्निकृष्टविप्रकृष्टव्याधिहेतुग्रहणं । लिङ्गग्रहणेन च व्याधेरारोग्यस्य च कृत्स्नं लिङ्गमुच्यते तेन व्याध्यारोग्ये अपि लिङ्गशब्दवाच्ये यतस्ताभ्यामपि हि तल्लिङ्गमेव वक्ष्यति "विषमारम्भमूलानां ज्वर एको हि लक्षणं । विषमारम्भमूलैर्ज्वर एको निगद्यते" इत्यादि । औषधग्रहणेन च सर्वपथ्यावरोधः । शरीरं चात्र हेतौ लिङ्गे चान्तर्भवति । सुस्थातुरयोः परमुत्कृष्टमयनं मार्ग इति सुस्थातुरपरायणम् । किमन्योऽयं हेतुलिङ्गौषधज्ञानरूप आयुर्वेदो ब्रह्मबुद्धादायु

१ 'सेवितम्' इति पाठः ।

१ 'विनयेनाभिगम्यैतं द्रष्टुकामो महायशाः । दृष्ट्वैव च मुनिं प्राह भगवान्पाकशासनः । स्वागतं चेतिधर्मज्ञ मुनिस्तस्याथेप्सितं । अर्चितश्च यथान्यायमुपविष्टः समागतः । भक्त्योपाये विकाराणां पप्रच्छ हरिवाहनम् । ब्रूहि नः प्रशमोपायं तेषाममरसत्तम । श्रुत्वेतिवचनं तस्य सर्वभूतहितावहम् । तस्मै प्रोवाच' इत्यपरः पाठः ।

वेदादुतानन्यः इत्यत आह त्रिसूत्रमित्यादि ।—पितामहोऽपि यं त्रिसूत्रं बुबुधे तमिन्द्रः प्रोवाच । त्रीणि हेत्वादीनि सूत्र्यन्ते यस्मिन् येन वा तत्त्रिसूत्रं । तत्र सूचनात् सीवनात् सूत्रणाचार्थसन्ततेः सूत्रं । एतेन तं यथा ब्रह्मा त्रिसूत्रं बुबुधे तथैव तं हेतुलिङ्गौषधज्ञानमिन्द्रः प्रोवाचेत्यविप्लुतमागमं दर्शयति । बुबुध इति न कृतवान् । अतएवोक्तं शाश्वतं नित्यं इत्यर्थः । तच्च नित्यत्वं सूत्रस्थानान्ते व्युत्पादनीयम् ॥ २३ ॥

**सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः ।**
**यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः ॥ २४ ॥**
**तेनायुरमितं लेभे भरद्वाजः सुखान्वितः ।**
**ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन् ॥ २५ ॥**

अथोद्दिष्टमायुर्वेदं कथं गृहीतवान् भरद्वाज इत्याह—सोऽनन्तेत्यादि । अविद्यमानावन्तपारौ यस्यासावनन्तपारः । अत्र पारशब्देन गोबलीवर्दन्यायेनादिरुच्यते । पारशब्दो ह्युभयोरपि नदीकूलयोर्विवक्षावशाद्वर्तते । किंवा अनन्तो मोक्षः । पारमुत्कृष्टं फलं यस्यायुर्वेदस्यासावनन्तपारः । वक्ष्यति हि "चिकित्सा तु नैष्ठिकी या विनोपधाम्" इति । अत्र नैष्ठिकी मोक्षसाधनहेतुः । त्रयो हेत्वादयः स्कन्धरूपा यस्य स त्रिस्कन्धः । स्कन्धश्च स्थूलावयवः प्रविभागो वा तत्रैवायुर्वेदग्रहणे मनो यस्य स तन्मनाः । मननात् ज्ञानप्रकर्षशालित्वान्मुनिः । एतेन यस्मादयं महामतिः तन्मनाश्च मुनिश्च तेनानन्तपारमपि आयुर्वेदं हेत्वादिस्कन्धत्रयमालम्बनं कृत्वा यथावदायुर्वेदमचिरादेव प्रतिपन्नवानित्यर्थः । अचिरादित्यचिरेण । अत्र च यथा ब्रह्मा त्रिसूत्रं बुबुधे । यथा चेन्द्रो हेतुलिङ्गौषधज्ञानं प्रोवाच तथैव भरद्वाजोऽपि त्रिस्कन्धं बुबुधे । इत्यनेनायुर्वेदस्याविप्लुतागमत्वं उपदर्श्यते । तेन त्रिसूत्रत्रिस्कन्धयोर्न पुनरुक्तिः । तेनेति इन्द्राद्गृहीतेनायुर्वेदेन । अमितमिति अमितमिवामितमतिदीर्घत्वात् । आयुःशब्दश्चायुःकारणे रसायनज्ञाने बोद्धव्यः । येनोत्तरकालं हि रसायनोपयोगादयं भरद्वाजोऽमितमायुरवाप्स्यति । न ऋषिभ्य आयुर्वेदकथनात्पूर्वं आयुर्वेदमधीत्यानंतरमेवायं तमृषिभ्यो दत्तवान् न पूर्वं रसायनमाचरति स । किंवा सर्वप्राण्युपकारार्थाधीतायुर्वेदजनितधर्मवशात्तत्कालमेवामितमायुरालेभे भरद्वाज इति बोद्धव्यम् । तच्चेति श्रुतं । यदा तमिति पाठः, तदा तमायुर्वेदं । अनवशेषयन्निति कार्त्स्न्येनेत्यर्थः ॥२४॥२५॥

**ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।**
**दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः ॥ २६ ॥**
**महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।**
**सामान्यं च विशेषंच गुणान् द्रव्याणि कर्म च॥२७॥**
**समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।**
**लेभिरे परमं शर्म जीवितं चाप्यनश्वरम् ॥ २८ ॥**

दीर्घमायुश्चिकीर्षन्त इति प्राणिनामात्मनश्च । ज्ञानार्थं ज्ञानरूपं वा चक्षुः ज्ञानचक्षुः तेन ज्ञानचक्षुषा । आयुर्वेदेन किं ददृशुरित्याह—सामान्यंचेत्यादि । तेषां चोत्तरत्र लक्षणं षण्णां पदार्थानां विश्वरूपाणां भविष्यति । तेनैतत्तत्रैव व्याकरणीयं । तदिति सामान्यादि । तन्त्रोक्तं विधिमित्यपथ्यपरिहारपथ्योपादानरूपं । शर्म सुखं । परमिति दुःखानाक्रान्तं । अनश्वरमित्यगत्वरम् ॥ २६–२८ ॥

**अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः ।**
**शिष्येभ्यो दत्तवान्षड्भ्यः सर्वभूतानुकंपया ॥ २९ ॥**
**अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।**
**हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥ ३० ॥**

**अथेत्यादिना** भरद्वाजशिष्यस्यात्रेयस्य पुनर्वसुपरनाम्नोऽग्निवेशादिगुरुतां दर्शयति । अत्र केचिद्भरद्वाजात्रेययोरैक्यं मन्यन्ते । तन्न । भरद्वाजसंज्ञया आत्रेयस्य क्वचिदपि तन्त्रप्रदेशेऽकीर्तनात् । हारीते चात्रेयादिगुरुतया भरद्वाज उक्तः । "शक्रादहमधीतवान्" । इत्यादिना "मत्तः पुनरसंख्येयाः त्रिसूत्रं त्रिप्रयोजनम् । अत्रात्रेयादिपर्यन्ता विदुः सप्त महर्षयः । आत्रेयाद्धारीतऋषिः" इत्यन्तेन । वाग्भटेन तु यदुक्तं "ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् । सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन्" । इत्यनेनात्रेयस्य इन्द्रशिष्यत्वं, तदायुर्वेदसमुत्थानीयरसायनपादे आदिशब्देन वक्ष्यमाणेन्द्रशिष्यतायोगात्समर्थनीयम् । तत्र हीन्द्रेण पुनर्महर्षीणामायुर्वेद उपदिष्ट इति वक्तव्यम् । मैत्रीपरो मैत्रीप्रधानः । मैत्री च सर्वप्राणिष्वात्मनीव बुद्धिः ॥२९॥३०॥

**बुद्धेर्विशेषस्तत्रासीदुपदेशान्तरं मुनेः ।**
**तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत् ॥ ३१ ॥**
**अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।**
**श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥ ३२ ॥**
**श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्मणाम् ।**
**यथावत्सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ३३ ॥**
**सर्व एवास्तुवंस्तांश्च सर्वभूतहितैषिणः ।**
**साधु भूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समं ॥ ३४ ॥**
**तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः ।**
**सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥ ३५ ॥**
**अहो साध्विति निर्घोषो लोकांस्त्रीनन्ववादयत् ।**
**नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥ ३६ ॥**
**शिवो वायुर्ववौ सर्वा भाभिरुन्मीलिता दिशः ।**
**निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥ ३७ ॥**

१ 'तन्महामुनिः, २ शब्दाक्षरपदन्यासच्छंदोवृत्तरसक्रमैः । श्रुत्वा संहत्नवर्षाणामारोग्यार्थं विनिश्चयम् ॥ तेनायुरमितं' इत्यधिकः पाठः ।

१ 'सर्वभूतेषु' इति पाठान्तरं ।

**अथाग्निवेशप्रमुखान्विविशुर्ज्ञानदेवताः।**
**बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्तिः क्षमा दया**
**तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः।**
**भवाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥ ३९ ॥**

बुद्धेर्विशेष उत्कर्षः । यत इति बुद्धेर्विशेषात् । स्वं स्वं तन्त्रमिति स्वस्वनामाङ्कितं भेलतन्त्रं, जतूकर्णतन्त्रमित्यादिकं । कृतानि चेत्यत्र तन्त्राणीति शेषः । पुण्यमायुर्वेदतन्त्रकरणलक्षणं कर्म येषामग्निवेशादीनां ते पुण्यकर्माणः तेषां पुण्यकर्मणां । सर्वभूतहितैषिण इति अग्निवेशादिविशेषणं किंवा ऋषिसङ्घविशेषणं । साधुशब्दोऽजहल्लिङ्गतया नपुंसकलिङ्ग एव । यथा वेदाः प्रमाणमिति । केचित्तु साध्विति विशेषणस्य नपुंसकलिङ्गतानुरोधाद्विशेष्यस्य अनुक्रोशमित्यपि नपुंसकलिङ्गं पठन्ति । अहो इति साध्विति प्रशंसायां । स्निग्ध इति अनुत्कटत्वेनाह्लादिकत्वेन च । "शिवो वायुर्ववावि"त्यनेन शुभलक्षणेन प्रकृततन्त्रकरणस्य देवैरप्यर्थतोऽनुमतत्वमुपदर्श्यते । ज्ञानदेवता इति ज्ञानाभिमानिन्यो देवताः । तेन ग्रन्थकरणात्पूर्वमेवाग्निवेशादीनां बुद्ध्यादयो व्यवस्थिताः । तन्त्रकरणोत्तरकालं तु आदरेण बुद्ध्यादिदेवतानुप्रवेश इति । सिद्धिः साध्यसाधनज्ञानं । कीर्तिः कीर्तनं वक्तुं ज्ञानमित्यर्थः। ननु कीर्त्तिर्यशोरूपा तस्या अज्ञानरूपत्वात् । ज्ञानदेवाश्च इहोच्यन्ते। भवाय स्थितये रोगानुपहतजीवितायेति यावत् । प्रतिष्ठा जनोपादेयतयावस्थानम् ॥ ३१-३९ ॥

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।**
**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ ४० ॥**

संप्रत्यायुर्वेदव्युत्पत्तिं कुर्वन्नायुर्वेदाभिधेयं दर्शयति—हिताहितमित्यादि । हितं चाहितं । तथा सुखप्रयुक्तत्वात् सुखं; दुःखप्रयुक्तत्वाद्दुःखं, एतच्च चतुःप्रकारमप्यायुरर्थे दशमहामूलीये "तत्र शारीरमानसाभ्याम्" इत्यादिना ग्रन्थेन "अहितमतो विपर्ययेण" इत्यन्तेन वक्ष्यति । तस्य हिताहितमित्यायुषः पथ्यापथ्यं । मानं चेत्यायुष एव प्रमाणं मासिकद्विमासिकत्वेन विकृतिलक्षणैरिन्द्रियस्थाने तथा प्रकृतिलक्षणैरिदमायुष्मतां कुमाराणां लक्षणं भवतीत्यादिना वक्तव्यम् । तच्चेत्यायुः स्वरूपेण "शरीरेन्द्रियसत्वात्मसंयोग" इत्यादिना वक्ष्यमाणं । तेन हिताहितमित्यादिना आयुर्वेदयतीत्यायुर्वेद इत्युक्तं स्यात् । विदधातुश्चेह ज्ञानार्थ एवाभिप्रेतः । यद्वक्ष्यति अर्थे दशमहामूलीये "तथायुर्वेदयतीत्यायुर्वेद" इति । लाभादयस्त्वर्था विदेरिह नोक्ताः । तेषां साक्षादायुर्वेदाजन्यत्वादिति भावः ॥ ४० ॥

**शरीरेन्द्रियसत्वात्मसंयोगो धारि जीवितम्।**
**नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते ॥ ४१ ॥**

आयुर्वेदपदे पूर्वपदवाच्यमायुराह शरीरेत्यादि ।—शरीरं पंचमहाभूतविकारात्मकमात्मनो भोगायतनं । इन्द्रियाणि चक्षुरादीनि । सत्वं मनः आत्मा ज्ञानप्रतिसन्धातैव एषां सम्यगदृष्टयन्त्रितो योगः संयोगः । इन्द्रियाण्यपि यद्यपि शरीरग्रहणेनैव लभ्यन्ते तथापि प्राधान्यात्तानि पुनः पृथगुक्तानि । अयंच संयोगः संयोगिनः शरीरस्य क्षणिकत्वेन यद्यपि क्षणिकस्तथापि सन्तानव्यवस्थितोऽयमेकतयोच्यते । तस्यायुषः पर्यायानाह धारीत्यादि ।—धारयतीति शरीरं पूतितां गन्तुं न ददातीति धारि । जीवयति प्राणान् धारयतीति जीवितं । नित्यं शरीरस्य क्षणिकत्वेन गच्छतीति नित्यगः । अनुबध्नात्यायुरपरापरशरीरादिसंयोगरूपतया इत्यनुबन्धः । पर्यायैरायुरुच्यत इति एकार्थाभिधायिभिः शब्दैरुच्यते । यद्यपि च नित्यगानुबन्धशब्दाभ्यां न क्वचिदप्यायुरभिधीयते तथापि नित्यगत्वानुबन्धत्वधर्मख्यापनार्थमेवैव तत्संज्ञाद्वयं बोद्धव्यम् । धारिसंज्ञा त्वर्थे दशमहामूलीये भविष्यति । ननु "उत्तरत्र चैतन्यानुवृत्तिरायुः" इत्यायुर्लक्षणं करिष्यति । इह तु शरीरेन्द्रियसत्वात्मसंयोग इति किमर्थमुक्तम् । ब्रूमः—शरीरेन्द्रियसत्वात्मसंयोगजन्या चैतन्यानुवृत्तिर्यथोक्तसंयोगाव्यभिचारित्वेन व्यक्तत्वेन चार्थे दशमहामूलीये लक्षणत्वेनोक्ता । शरीरादिसंयोगरूपमेवत्वायुः परमार्थत एवं भूतसंयोगाभावे मरणमायुरुपरमरूपं भवति । मृतशरीरे तु चेतसोऽभावादायूरूपसंयोगाभावः ॥ ४१ ॥

**तस्यायुषः पुण्यतमो वेदो वेदविदां मतः।**
**वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः॥ ४२ ॥**

तस्येत्यादि । वेदयतीति वेदः । वेदविदां मत इति वेदविद्भिः पूजितः । अथ कस्मादायुर्वेदलक्षणो वेदः पुण्यतमो वेदविदां च पूजित इत्याह—वक्ष्यत इत्यादि । यदिति यस्मादेवमुक्तं भवति । यदन्ये ऋग्वेदादयः प्रायः परलोकहितमेवार्थं वदन्ति तेन पुण्याः । पुण्यतमश्चायं आयुर्वेदो यद् यस्मान्मनुष्याणामुभयोरपि लोकयोर्यद्धितमायुरारोग्यसाधनं धर्मसाधनं च तद्वक्ष्यते तेनातिशयेन पुण्यतमस्तथा वेदविदां च पूजित इति । केचिद्वक्ष्यते य इति पठन्ति, तत्रापि हेतुगर्भमिति व्याख्येयं । जीवितप्रदातृत्वादायुर्वेदस्य पुण्यतमत्वं बोद्धव्यं । यतश्चतुर्वर्गसाधनीभूतजीवितप्रदमेव सर्वोत्तमं भवति । उच्यते च "न हि जीवितदानाद्धि दानमन्यद्विशिष्यते" ॥ ४२ ॥

**सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।**
**ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु ॥ ४३ ॥**

संप्रत्यायुर्वेदाभिधेयतया सूत्रिते सामान्यादौ सामान्यस्य प्रथमसूत्रितत्वात्तथा सामान्यज्ञानमूलत्वाच्चायुर्वेदप्रतिपाद्यस्य हेत्वादेः सामान्यमेवाग्रे निर्दिशति—सर्वदेत्यादि । सर्वदा सर्वस्मिन् काले नित्यगे चावस्थिके च । सर्वभावानामित्यत्र सर्वशब्दः कृत्स्नवाची । भवन्ति सत्त्वमनुभवन्ति इति भावा गुणद्रव्यकर्माणीत्यर्थः । ननु भवन्त्युत्पद्यन्त इति भावाः । तथा सति पृथिव्यादिपरमाणूनां नित्यानां सामान्यस्य पार्थिवद्व्यणुकादिवृद्धं कार्यमसंगृहीतं स्यात् । सामान्यं च "सामान्यमेकत्वकरम्" इत्यादिना वक्ष्यमाणलक्षणं । वृद्धिराधिक्यं त-

त्कारणं वृद्धिकारणम् । एतच्च सामान्यं सामान्यवतो मांसद्रव्यादेर्वृद्धिकारणस्य लक्षणत्वेन वृद्धिकारणमित्युक्तं । यतो न सामान्यं मांसत्वादिजातिरूपं वृद्धौ कारणं भवति । तथाहि सति सामान्यं मांसत्वरूपं यथा वर्धके भोज्यरूपे मांसेऽस्ति तथा शरीरधातुरूपे वर्धनीयेऽप्यस्ति । ततश्च नित्यं मांसत्वसंबन्धादमांसादानामपि मांसेन वर्धितव्यं । तस्माद्वृद्धिकारणलक्षणत्वेन सामान्यं वृद्धिकारणमित्युक्तम् । अतएव वैशेषिकेऽप्युक्तं "त्रयाणामकार्यत्वमकारणत्वं चेति" । अत्र त्रयाणामिति सामान्यविशेषसमावायानाम् । ये तु समानमेव सामान्यमिति कृत्वा द्रव्यादेव सामान्यशब्देनाभिदधति तेषां च मते "सामान्यं च विशेषं च" इत्यादिग्रन्थोक्तस्य सामान्यस्य न किंचिदनेनोक्तं स्यादित्यसंवन्धार्थत्वं प्रकरणस्य स्यात् । एतच्च वृद्धिकारणत्वं सामान्यलक्षणं न भवति । किंतर्ह्यायुर्वेदोपयोगिना धर्मेण निर्देशः । लक्षणंतु "सामान्यमेकत्वकरम्" इति करिष्यति । एवं द्रव्यादावपि चोद्देशानन्तरं निर्देशं करिष्यति "खादीन्यात्मा" इत्यादिना । ततो लक्षणं "यत्राश्रिताः कर्मगुणा" इत्यादिना करिष्यति ।

सामान्यस्य च वृद्धिकारणत्वं ह्यसति विरोधिकारणे बोद्धव्यम् । तेनामलकादिगतानामम्लत्वादीनां पित्तगतायम्लत्वावर्धकत्वमामलकगतशिशिरत्वप्रभावविरोधित्वादुपपन्नम् । एवमन्यत्रापि त्रिदोषहरद्रव्ये बोद्धव्यम् । इह च सामान्यस्य वृद्धिकारणत्वमित्युच्यते, नतु सामान्यमेव वृद्धिकारणमित्युच्यते, तेनासमानादपि घृतान्मेधाया याच वह्नेश्च वृद्धिः प्रभावादेवोपपन्ना, यदुक्तं "घृतमग्निमेधे करोति" । तथा चिन्तया वातवृद्धिस्तथा सङ्कल्पाद्वृष्यपादयुगलेपाच्च शुक्रवृद्धिरित्यादि प्रभावादुपपन्नम् । सामान्यं चेह वृद्धिकारणमित्युच्यमाने समानस्येति गम्यते । न हि शोणितं प्रति मांसत्वं सामान्यं, किंतु व्यावृत्तबुद्धिजनकत्वाद्विशेष एव ।

अथ वैशेषिकोक्तानामन्त्यविशेषाणामिह शास्त्रे चिकित्सायामनुपयुक्तत्वात्तद्विशेषधर्मव्यावर्तकत्वायोगात्सामान्यविशेषानेव ह्रासकारणत्वेनाह—ह्रासहेतुरित्यादि । अत्रापि सर्वदा सर्वभावानामिति योजनीयम् । ह्रासोऽपचयः । विशिष्यते व्यावर्तते इति विशेषः । सामान्यमेव गवेधुकत्वं मांसादीन् प्रति विशेषः । गवेधुको हि गवेधुकत्वेन गवेधुकव्यक्त्यन्तरापेक्षया समानः । मांसापेक्षया व्यावृत्तत्वाद्विशेषः । न हि मांसे गवेधुकत्वमस्ति । एवं मांसत्वं मांसान्तरापेक्षयानुगतत्वात्सामान्यं शोणिताद्यपेक्षया तु मांसानां व्यावृत्तत्वाद्विशेष एव । अत्रापि ह्रासहेतुकत्वं ह्रासहेतुद्रव्यादिलक्षणत्वेन सामान्यवज्ज्ञेयम् । तथा ह्रासहेतुत्वमप्यसति विरोधके सामान्योक्तन्यायेन ज्ञेयं । तेन मन्दकनिकुच्यादीनां वातादिविरुद्धानामपि स्निग्धत्वादीनां वाताद्यशमकत्वं द्रव्यस्यापथ्यत्वंप्रभावादेव ज्ञेयम् । विशेषश्चेह विरुद्धत्वविशेषोऽभिप्रेतः । तेनोत्तरत्र विरुद्धविशेषमेव ह्रासहेतुतया तत्र तत्रोपदेक्ष्यति । यथा—"वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः" । इति । तथा "विपरीतगुणैर्देशमात्राकालोपपादितैः" इत्यादि । तथा "विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति" इत्यादि । तथा जतूकर्णेऽप्युक्तं "समानैः सर्वभावानां वृद्धिर्ह्रासोविपर्ययात्" इति । अविरुद्धविशेषस्तु यद्यपि ह्रासे वृद्धौ वाप्यकारणं यथा पृथिव्या अनुष्णशीतस्पर्शो वातस्य शैत्यं न वर्धयति नापि ह्रासयति, तथाप्यभिक्षीयमाणानां धातूनां असमानत्वेनाजनकत्वाद्ध्रासकारणमिव भवति । यतोऽसमानद्रव्योपयोगे सति ह्रासो विनश्वराणां भावानां आपूरकहेत्वभावादुपलभ्यत एव यथा वहतो जलस्य पूर्वदेशसेतुनोत्तरदेशजलस्य ह्रासः । एवं भूतं चाविरुद्धविशेषोपयोगेऽपि ह्रासं पश्यताऽऽचार्येण सामान्येनैव इहोक्तं "ह्रासहेतुर्विशेषः" इति । चशब्दः सर्वभावानामिति समुचिनोति ।

अथ किम् असंबन्धावपि सामान्यविशेषौ वृद्धिह्रासकारणं । नेत्याह—प्रवृत्तिरुभयस्य त्विति । कारणमिति शेषः । उभयस्य सामान्यस्य विशेषस्य च । प्रवृत्तिः प्रवर्तनं शरीरेणाभिसंबन्ध इति यावत् । एवंभूता प्रवृत्तिः धातुसामान्यविशेषयोर्वृद्धिह्रासे कारणमित्यर्थः । तुशब्दोवधारणे । तेन नासंबद्धौ सामान्यविशेषौ स्वकार्यं कुरुत इति दर्शयति । किंवा प्रवृत्तिरुचिता धातुप्रवृत्तिर्धातुसाम्यमिति यावत् । सा उभयस्य सामान्यस्य विशेषस्य च कार्येति शेषः । तेन केवलसमानोपयोगाद्धातुवृद्ध्या धातुवैषम्यं केवलविशिष्टोपयोगाच्च धातुक्षयाद्वा धातुवैषम्यं युगपत्समानविशिष्टद्रव्योपयोगात्प्रवृत्तिर्धातुसाम्यरूपा भवतीत्युक्तं भवति । तुशब्दः पूर्वपक्षादेकद्रव्योपयोगलक्षणरूपाद्व्यावर्तयति ॥ ४३ ॥

**सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ।**
**तुल्यार्थता हि सामान्यं विशेषस्तु विपर्ययः ॥ ४४ ॥**

अथ किंलक्षणं तत्सामान्यं किंलक्षणो वा स विशेष इत्याह—सामान्यमित्यादि । एकत्वकरमेकत्वबुद्धिकरं । सामान्यं—यदनेकासु भिन्नदेशकालासु गवादिव्यक्तिषु "अयं गौरयं गौः" इत्यादिप्रकारा एकाकारा बुद्धिस्तत्सामान्यम् । न हि भिन्नासु व्यक्तिषु अभिन्नं सामान्यमेकरूपं विनाऽभ्रान्ता एकाकारा बुद्धिर्भवतीति भावः । यथापिच "अयं पाचकोऽयं पाचकः" इति तथा "अयं शुक्लोऽयं शुक्लः" इतिप्रभृतिषु क्रियागुणादिसामान्यादेकरूपा बुद्धिस्तत्रापि सामान्यमेकक्रियागुणादिगतमेकरूपाध्यवसाये हेतुः । न ह्येकस्मिन् पाचके या क्रिया सा पाचकान्तरेऽपि किंतर्हि तज्जातीया । अतः क्रियासामान्यं तत्राप्येकत्वाध्यवसाये कारणम् ।

विशेषलक्षणं पृथक्त्वकृदिति व्यावृत्तबुद्धिकृत्, तेन यद् गोव्यक्त्यन्तरापेक्षया एकबुद्धिकर्तृतया गोत्वं सामान्ये । तदेव गोत्वं अश्वाद्यपेक्षया व्यावृत्तबुद्धिकर्तृत्वादश्वादीन् प्रति विशेष इत्युक्तं भवति । तेन मांसत्वं मांसं प्रति मांसान्तरापेक्षया समानत्वात् वृद्धिकारणं भवति । तदेव तु मांस-

त्वं वातं प्रति विशेषरूपतया ह्रासहेतुर्भवति । शोणितादीन् प्रति त्वविरोधविशेषत्वेन न तथा ह्रासकारणम् । गुणसामान्यात्तु वर्धकमपि मांसं शोणितादीनां भवति ।

कथमनेकासु व्यक्तिषु सामान्यमेकबुद्धिमव्यभिचारिणीं करोतीत्याह—तुल्यार्थताहीत्यादि । तुल्यार्थता एकसामान्यरूपार्थानुयोगिता । एतेन यस्माद्भिन्नासु व्यक्तिषु सामान्यमेकरूपसंवन्धमस्ति ततस्तदनेकार्थावलम्बा सत्यपि व्यक्तिभेदे एकबुद्धिर्युक्तेति भावः ।

विशेषस्तु विपर्यय इति अतुल्यार्थता विशेषत्वं, तेन गोगजयोरतुल्यगोत्वगजत्वरूपार्थयोः पृथग्बुद्धिर्युक्तैवेति दर्शितं भवति ।

अन्ये तु व्याख्यानयन्ति । यत् त्रिविधं सामान्यं, विशेषश्च त्रिविधः । यथा—द्रव्यगोचरो गुणगोचरः कर्मगोचरश्च । तत्र सर्वदेत्यादिना द्रव्यसामान्यमुच्यते । सामान्यमेकत्वकरमित्यनेन गुणसामान्यम् । यथा—पयःशुक्रयोर्भिन्नजातीययोरपि मधुरत्वादि सामान्यं तत्रैकतां करोति, एवं विशेषेऽप्युदाहार्यं । तुल्यार्थतेत्यादिना तु कर्मसामान्यं निगद्यते । आस्यारूपं कर्म न श्लेष्मणा समानमपितु पानीयादिकफसमानद्रव्यार्थक्रियाकारित्वात्कफवर्धकरूपतया आस्यापि कफसमानेत्युच्यते । एवं स्वप्नादावपि कर्मणि बोद्धव्यम् । तदेतद्भट्टारहरिश्चन्द्रेणैव दूषितम् । यतः सर्वदेत्यनेनैव लक्षणेन त्रिविधमपि सामान्यं लभ्यते । तेनास्मिन् पक्षे "सामान्यमेकत्वकरम्" इत्याद्यवाच्यं स्यादिति कृत्वा अन्येतु पश्यन्ति—यत् त्रिविधं सामान्यं अत्यन्तसामान्यं मध्यसामान्यमेकदेशसामान्यंच । तत्र "सर्वदा" इत्यादिना अत्यन्तसामान्यमुच्यते सामान्यमेकत्वकरमित्यनेन मध्यसामान्यं, तुल्यार्थता हीत्यादिना एकदेशसामान्यं, एतदपि त्रैविध्यकथनं नातिप्रयोजनमसंगतलक्षणं चेति नातिश्रद्धाकरम् ।

केचित्सामान्यं द्विविधमिच्छन्ति । उभयवृत्ति तथैकवृत्ति च । तत्र मांसं मांसवर्धकं उभयवृत्तिसामान्यात् । मांसत्वं हि पोष्ये पोषके च गतत्वादुभयवृत्ति । एकवृत्ति तु यथा घृतमग्निकरं तथा धावनादिकर्म वातकरम् । तथाऽऽस्यादि कफकरम् । एतद्धि सर्व न वर्धनीयेन समानं किंतु प्रभावाद्वर्धकम् । प्रभावश्च घृतत्वधावनत्वादिरेव । स चैकवृत्तिसामान्यरूपः । तेन नात्रापि सामान्यमेव वृद्धिकारणमिति ब्रुवते । अस्मिंस्तु पक्षे अनुभयवृत्तिसामान्यं विशेष एव भवति । तथा समानमसमानं च वृद्धिकारणं भवतीति न किंचित्सामान्यस्योक्तं स्यात् । अस्मन्मते तु सामान्यं वृद्धौ कारणमेव भवतीति सामान्यं वृद्धिकारणत्वेन नियम्यते । न वृद्धिः सामान्यकारणत्वेनैवेति नियम्यते । तेनासमानादपि वृद्धिर्भवति निर्दोषा ।

यत्तूच्यते, कर्मसामान्यं नेह तन्त्रे वृद्धिकारणमस्ति । यतो न धावनेन वायुः समान इति । अतएवाचार्येण द्रव्यसामान्यमुक्तं "मांसमाप्यायते मांसेन" इत्यादिना, तथा "सामान्यगुणानामाहारविकाराणामुपयोगः" इत्यादिना गुणसामान्यमुक्तम् । नैवं कर्मसामान्यमुक्तम् । वचनं हि "कर्मापि यद्यस्य धातोर्वृद्धिकरं तत्तदा सेव्यम्" इति । न तत्र सामान्योपग्रहः कृतः । अत्र ब्रूमः—कर्मणां प्रायः प्रभावेणैव वृद्धिहेतुत्वात्सामान्यानुपग्रहः कृतः । न च कर्मसामान्याभावात् । यतः क्रियावतो वातस्य क्रियावता व्यायामादियुक्तेन शरीरेण वृद्धिः क्रियते निष्क्रियतया चास्य वातस्य ह्रासः । स्वप्नादयस्तु संयोगे च विभागे चेत्यनेन वक्ष्यमाणलक्षणेनानुक्ता अपि शास्त्रव्यवहारात्कर्मशब्देनोच्यन्ते । तत्र स्वप्नः स्वकारणादेव चीयमानस्य कफस्य क्षयकारणशरीरपरिस्पन्दातिनिरोधकत्वेन वृद्धिकर उच्यते, न तु स्वप्नः साक्षात् श्लेष्मवृद्धिं करोति । एवमास्यादावपि चिन्तनीयम् । यत्र त्वेकं कारणं चिन्तयितुं न पार्यते तत्र प्रभाव एव वर्णनीयः ।

ननु मांसं मांसं वर्धयति सामान्याद्विशेषाच्च वातं क्षपयति तत्कथं युगपद्विरुद्धार्थद्वयकर्तृत्वं मांसस्य । न हि देवदत्तो यदैव कुंभं करोति तदैव काण्डमपि । नैवं क्रियावतामयं धर्मः नाक्रियावतामिति[1] । तथाहि—शब्दो युगपदनेकानेव शब्दान् एककालमारभते तथा अग्निः प्रकाशदाहौ युगपत्करोति । अतएवोक्तमाचार्येण "तस्माद्भेषजं सम्यगवचार्यमाणं युगपदूनातिरिक्तानां धातूनां साम्यकरं भवति । अधिकमपकर्षति । न्यूनमाप्याययति" इति ।

यदुच्यते क्षीयमाणधातोर्वृद्धस्य तथा बहुदोषस्य समानगुणोऽप्याहारो न वृद्धिहेतुः तथा ग्रीष्मे च मधुरादिना समानेनापि न कफादिवृद्धिरित्यादि । तत्र प्रतिबन्धकादीनां जराबहुदोषत्वग्रीष्मोष्णत्वादीनां विद्यमानत्वान्न सामान्यं वर्धकम् । असति च विरोधके सामान्यं वृद्धिकारणमिति सिद्धान्तः । तेन न काचित् क्षतिः । किंवा वृद्धादीनां समानाहारेण क्रियत एव वृद्धिः । परन्तु बलवता क्षयहेतुना आधीयमानक्षये पुरुषे सा वृद्धिर्नोपलभ्यते ।

अत्र च द्रव्यसामान्यमेव धातूनां द्रव्यरूपाणां वर्धकं न गुणसामान्यं । गुणानां द्रव्यानारम्भकत्वात् । गुणसामान्यात्तु तद्गुणाश्रयं द्रव्यमनुमीयते । तच्च द्रव्यं धातुवर्धकं भवति यथा—रूक्षादीन् गुणान् दृष्ट्वा चित्रको वाय्वधिको योऽनुमितः, स च चित्रक उपयुक्तो वातं वर्धयति, गुणास्तु गुणानेव जनयन्तोऽतिवर्धयन्ति । सामान्यंच वृद्धिकारणलक्षणं, न साक्षाद्वृद्धिकारणमिति प्रागेवोक्तं; एवं विशेषेऽपि । अयंच सामान्यविशेषवादो ग्रन्थविस्तरभयादायुर्वेदोपयुक्तधर्ममात्रेणोक्तः विस्तरस्त्वस्य वैशेषिके बोद्धव्यः ॥ ४४ ॥

**सत्त्वमात्मा शरीरं च त्रयमेतत्त्रिदण्डवत् ।**
**लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥४५॥**
**स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।**
**वेदस्यास्य तदर्थं हि वेदोऽयं संप्रकाशितः ॥४६॥**

१ 'नाक्रियाणां' इति पाठः.

संप्रति सामान्यविशेषावभिधाय उद्देशक्रमानुरोधात् गुणेऽभिधातव्ये, गुणेषु प्रधानभूतमायुर्वेदोपकार्यं सत्वात्मशरीरसंयोगं वक्तुमाह–सत्वमित्यादि । किंवा सामान्यविशेषाभ्यामेव हेतुलिङ्गौषधानि दर्शितानि । सामान्यविशेषवत एव सर्वत्र कारणत्वाल्लिङ्गत्वाच्च एतावदेव विचार्यमाणं तन्त्रं भवति । अधिकरणं च नोक्तम् अतः सत्वादिमेलकं हेत्वाद्यधिकरणमाह —सत्वमित्यादि । सत्वं मनः । चशब्दः समुच्चये । संख्येयनिर्देशादेव संख्यायां लब्धायां त्रयमिति पदं मिलितानामेव ग्रहणार्थम् । एतदित्यनन्तरोक्तनिर्देशः । त्रिदण्डः परस्परसंयोगविधृतः कुंभादिधारकस्तद्वत् । एतेन यथा त्रिदण्डेऽन्यतमापाये नावस्थानं तथा सत्वादीनामन्यतमापायेऽपि न लोकस्थितिरित्युक्तं स्यात् । लोकत आलोकत इति लोकः । तेनेह जङ्गमो भूतग्राम उच्यते । संयोगात्तिष्ठतीति परस्परोपग्राहकात् संयोगात्स्वार्थक्रियां कुर्वन्नविश्कलितं[3] भवति । अत्र तु पृथगिन्द्रियग्रहणं न कृतं शरीरग्रहणेनैव गृहीतत्वात् । "तत्र सर्वं प्रतिष्ठित"मित्यस्मिन् लोके कर्मफलादि व्यवस्थितं । यद्वक्ष्यति 'अत्र कर्मफलं चात्र ज्ञानं चात्र प्रतिष्ठितम् । अत्र मोहः सुखं दुःखं जीवितं मरणं प्रभा" । स पुमानिति तत्सत्वादित्रयं पुमानिति भण्यते । तत्र यद्यपि सत्वादित्रयं नपुंसकलिङ्गं, तथापि पुमानिति वक्ष्यमाणलिङ्गग्रहणात्स इति पुंलिङ्गनिर्देशः । यथा—"गेरणं यत्कर्म णौचेत्स कर्ता" इत्यादौ । किंचैतदिति यद्यपि वर्तमाननिर्देशः कृतस्तथापि तस्यैव स इत्यतीतनिर्देशोऽपि सर्वनाम्नां सर्वकालनिर्देशादेवाविरोधो मन्तव्यः । वदन्ति हि लाक्षणिकाः "प्रत्यक्षे च परोक्षे च सामीप्ये दूर एवच । एतेष्वर्थेषु विद्वद्भिः सर्वनाम प्रयुज्यते" । चेतनमिति ज्ञानवत् । तच्चाधिकरणं स्मृतं तन्त्रस्येति । अत्र हेतुमाह—तदर्थं हीत्यादि । तदर्थमिति तदुपकारार्थं । एतेन तदुद्दिश्य प्रवृत्तिरधिकरणार्थो नाधारार्थो इति दर्शयति । अत्र सत्वमादौ कृतं तदधीनत्वादात्मशरीरक्रियायाः । यदुक्तं "अचेतनं क्रियावच्च मनश्चेतयिता परः । युक्तस्य मनसा तस्य निर्दिशन्त्यात्मनः क्रियाम्" इति । पूर्वं "शरीरे"त्यादिना आयुरुक्तं, "सत्वमात्मा" इत्यादिना तु तदधिकरणभूतपुरुष उच्यते इति न पुनरुक्तं । अत्र चात्मग्रहणेनेह बुद्ध्यहंकारादीनां ग्रहणं । शरीरग्रहणेनेन्द्रियाणामर्थानां च शरीरसंबन्धानां ग्रहणं व्याख्येयम् ॥४५॥४६॥

**खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।**
**सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥ ४७ ॥**

संप्रति गुणाभिधानं क्रमप्राप्तमुल्लङ्घ्य द्रव्याणि निर्दिशता गुणाधारतया द्रव्यस्य प्राधान्यमुच्यते—सूत्रे च "सामान्यं च विशेषं च"त्यादौ गुणानादौ निर्दिशता गुणानामेवं रसादीनां प्रायः शास्त्रे कार्मकत्वमुपदर्श्यते । अतएवात्रेयभद्रकाप्यीये मधुरादिरसद्वारा सर्वगुणान् कर्माणि च द्रव्यस्य वक्ष्यति । किंच सर्वप्रधानं यज्जीवितं तदेव संयोगगुणरूपमित्यग्रे तत्र गुणग्रहणसूचनं सच संयोगगुणः "सत्वमात्मा" इत्यादिना प्रथममुक्तएव । विशेषगुणेषु तु द्रव्यं प्रधानमिति द्रव्यमुच्यते । खादीनीत्यादावात्मा कस्मात्प्रधानभूतोऽपि प्रथमं नोक्तः । उच्यते—शरीरस्येह व्याध्यारोग्याधिकरणतया प्रधानत्वात्तदारंभकादीनि खादीन्येवोच्यन्ते नात्मा । तस्य निर्विकारत्वात् । वचनं हि "निर्विकारः परस्त्वात्मा" इत्यादि । खादीनि च "महाभूतानि खं वायुरग्निरापः क्षितिस्तथा" इत्यनेन क्रमेणोक्तानि, भूतानि अनागतावेक्षणेनैवोच्यन्ते । आत्मादीनांच तथाऽव्यवहितस्य पूर्वनिर्देशः । द्रव्यसंग्रह इति करचरणहरीतकीत्रिवृताद्यसंख्येयभेदभिन्नस्य कार्यद्रव्यस्य कारणद्वारा संक्षेप इत्यर्थः ।

सर्वकार्यद्रव्याणामपि व्यवस्थामाह—सेन्द्रियमित्यादि । निरिन्द्रियमित्यत्र निःशब्दोऽभावे निर्मक्षिकमितिवत् । अत्र सेन्द्रियं चेतनमित्येतावतैवार्थापत्त्या निरिन्द्रियमचेतनमिति लब्धे पुनस्तद्वचनं एवंभूतार्थापत्तेरनैकान्तिकत्वाद्बोद्धव्यम् । यथा नवज्वरे दिवास्वप्नादि निषिद्धं, अर्थाज्जीर्णे ज्वरे तर्हि आपद्येत, न चैवं तत्र तेषां दिवास्वप्नादीनां निषिद्धत्वात् तस्मात् त्रिविधशिष्यबुद्धिहिततयाऽप्यूह्यमपि साक्षादेवोच्यते । वदन्ति हि न्यायविदो "व्याख्यानाद्वरं करण"मिति । यद्यपि चात्मैव चेतनो न शरीरं, नापि मनः, यत उक्तं—"चेतनावान्यतश्चात्मा ततः कर्ता निरुच्यते" इति । तथापि सलिलौष्ण्यवत्संयुक्तसमवायेन शरीराद्यपि चेतनम् । इदमेव चात्मनश्चेतनत्वं, यदिन्द्रियसंयोगे सति ज्ञानशालित्वम् । न निकृष्टस्यात्मनः चेतनत्वं, यदुक्तं "आत्मनः करणैर्योगाज्ज्ञानं तस्य प्रवर्तते" इति । अत्र सेन्द्रियत्वेन वृक्षादीनामपि चेतनत्वं बोद्धव्यम् । तथाहि सूर्यभक्ताया यथा यथा सूर्यो भ्रमति तथा तथा भ्रमणात् दृगनुमीयते । तथा लवली मेघस्तनितश्रवणात्फलवती स्यात् । बीजपूरकमपि शृगालादिवसागन्धेनातीव फलवद्भवति । वृन्तानांच मत्स्यवसासेकात्फलाढ्यतया रसनमनुमीयते । अशोकस्य च कामिनीपादतलाहतिसुखिनस्स्तबकितस्य स्पर्शनानुमानं । स्मृतिश्चानुमानं द्रढयति यथा—"अभिवादितस्तु यो विप्रो नाशिषं संप्रयच्छति । श्मशाने जायते वृक्षो गृध्रकङ्कोपसेवितः" । तथा "वृक्षगुल्मं बहुविधं तत्रैव तृणजातयः । तमसा धर्मरूपेण शब्दिताः कर्महेतुना । अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः । एतदन्ताश्च गतयो ब्रह्माद्यैः समुदाहृताः" । तथा तन्त्रकारश्च वानस्पत्यान् मूकान् प्राणिनो वक्ष्यति । तेनागमसंवलितया युक्त्या चेतना वृक्षाः ॥ ४७ ॥

**सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः ।**
**गुणाः प्रोक्ताः प्रयत्नादि कर्म चेष्टितमुच्यते ॥ ४८ ॥**

१ त्रिदण्डानामन्यतमापायेऽपीति पाठः । २ भवति इति पाठः । ३ विस्खलितमिति पाठः । ४ शुभा इति पाठः ।

१ इंद्रियादि इति पाठः ।

संप्रति गुणान्निर्देष्टुमाह—सार्था इत्यादि। अनेन त्रिविधा अपि वैशेषिकाः सामान्या आत्मगुणाश्चोद्दिष्टाः तत्रार्थाः शब्दस्पर्शरूपरसगन्धाः। यदुक्तं "अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः" इति। एतेन वैशेषिकाः। यतः आकाशस्यैव शब्दः प्राधान्येन, वायोरेव स्पर्शः प्राधान्येन, एवमग्न्यादिषु रूपादयः। अन्यगुणानां चान्यत्र दर्शनं भूतान्तरानुप्रवेशात्। वचनं हि "विष्टं[1] ह्यपरं परेण" इति। गुर्वादयस्तु गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा विंशतिः। एते च सामान्यगुणाः पृथिव्यादीनां साधारणत्वात्। एतेच यज्जःपुरुषीये प्राय आयुर्वेदोपयुक्तत्वात्परादिभ्यः पृथक् पठिताः। बुद्धिर्ज्ञानम्। अनेन च स्मृतिचेतनाधृत्यहङ्कारादीनां बुद्धिविशेषाणां ग्रहणम्। प्रयत्नोऽन्तो येषां ते प्रयत्नान्ताः। एतेन च इच्छाद्वेषसुखदुःखप्रयत्नानां ग्रहणम्। वचनं हि "इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः" इति। इह तु चेतनादीनां बुद्धिग्रहणेनैव ग्रहणं, शारीरे तु चेतनादीनामपि पृथगात्मगमकत्वेन पृथक् पाठः। एतच्च तत्रैव व्याकरणीयम्। परादयो यथा—"परापरत्वे युक्तिश्च संख्या संयोग एव च। विभागश्च पृथक्त्वं च परिमाणमथापि च। संस्कारोऽभ्यास इत्येते गुणाः प्रोक्ताः परादयः"। एतेच सामान्यगुणा अपि नात्युपयुक्तत्वात्तथा बुद्धिप्राधान्याच्चान्ते प्रोक्ताः। प्रोक्ता इति प्रकर्षेण विशेषगुणत्वादिनोक्ताः।

क्रमागतं कर्म निर्दिशति—प्रयत्नादीत्यादि। प्रयतनं प्रयत्नः कर्मैवाद्यमात्मनः, यथा—"तुल्याऽऽस्यप्रयत्नं सवर्णम्" इत्यत्र व्याख्यातम्। आदिशब्दः प्रकारवाची। तेन संस्कारगुरुत्वादिजन्यकृत्स्नक्रियावरोधः। यद्यपि चेष्टितं प्राणिव्यापार उच्यते, तथापीह सामान्येन क्रिया विवक्षिता, चेष्टितपदेनैव सर्वकर्मलाभे सिद्धे वमनादिकर्मनिषेधे च सिद्धे प्रयत्नादीति पदं सुसूक्ष्मप्रयत्नरूपकर्मव्यापित्वद्योतनार्थम्। अन्येतु प्रयत्नादीति प्रयत्नकारणमिति ब्रुवते। प्रयत्नग्रहणं च कारणोपलक्षणं वदन्ति। तेन गुरुत्वादिकार्यस्यापि कर्मणो ग्रहणमिति। प्रयत्नशब्दश्चायुर्वेदेऽपि कर्मवचनो दृश्यते—"प्रवृत्तिस्तु चेष्टा कार्यार्था सैव क्रिया प्रयत्नः कार्यसमारंभश्च" इति वचनात्॥ ४८॥

**समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः।**
**स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः॥ ४९॥**

समवायमाह—समवाय इत्यादि। समवायस्य चायं निर्देश एव लक्षणम्। तेनोत्तरोत्तरद्रव्यादिलक्षणे पुनरस्य लक्षणं न कर्तव्यम्। समवाय इति लक्ष्यनिर्देशः। अपृथग्भाव इति लक्षणम्। अपृथग्भावोऽयुतसिद्धिः सहैवावस्थानमिति यावत्। यथा—अवयवावयविनोः गुणगुणिनोः कर्मकर्मवतोः सामान्यसामान्यवतोः। नह्यवयवादीन् विरहय्यावयव्यादय उपलभ्यन्ते। अपृथग्भावमेव विशेषयन्नाह भूम्यादीनां गुणैर्मत इति। भूम्यादीनां भूमिप्रकाराणाम्। भूमिश्च भूयसामाधेयानामाधारः। तेनाधारत्वोदाहरणार्थमुक्ता। यतो भूमेरर्थाः सर्वे गुर्वादिपरादयश्च गुणास्तथान्यावयविसामान्यकर्माण्यप्याधेयानि। नेतरद्रव्ये यथोक्तसर्वाधेयसंपत्तिः। एतेन भूम्यादीनामित्याधाराणां, गुणैरित्यप्रधानैराधेयैः। आधेयो ह्याधारापेक्षयाऽप्रधानम्। अप्रधानेच गुणशब्दो यथा—"गुणीभूतोऽयम्" इत्यप्रधानमित्यर्थः। तेनाधाराणामाधेयैर्योऽपृथग्भावः स समवायः संबन्ध इति। तेन पृथिवीत्वगन्धवत्त्वयोरपृथक्सिद्धयोरप्याधाराधेयभावाभावान्न समवाय इत्युक्तं भवति। अतएवोक्तं वैशेषिके यत्—"अयुतसिद्धानामाधार्याधारभूतानां यः संबन्ध इहेतिप्रत्ययहेतुः स समवायः" इति। स नित्य इति समवायोऽविनाशी। सत्यपि समवायिनां द्रव्याणां नाशे समवायो न विनश्यति अत्र हेतुमाह—यत्र हीत्यादि। यत्र द्रव्यं नियतं नित्यं, यथा—आकाशं, न तत्र नित्य आकाशेऽनियतो विनाशी गुणः कश्चिदिति शेषः। एवं मन्यते—नित्ये व्योम्नि परिमाणमपि तावन्नित्यं, यथा द्रव्यत्वमप्याकाशगतं नित्यं तथा नित्ययोराकाशतद्गुणयोः समवायलक्षणः संबन्धोऽपि नित्य एव। एवं तत्र समवायस्य नित्यत्वे सिद्धे एकरूपत्वात्समवायस्यान्यत्रापि नित्यत्वमेव। न चाश्रयद्रव्यनाशे समवायविनाशः। यथा—गोव्यक्तिविनाशे गोत्वस्य सामान्यस्य न विनाशः, नित्यस्यैव समवायस्य ते ते पार्थिवद्रव्यादयस्तत्र तत्र व्यञ्जका भवन्ति सामान्यस्येव व्यक्तयः। अन्यैस्तु नित्यानित्यभेदेन द्विविधः समवायो व्याख्यातः। अयंच ग्रन्थो भूम्यादीनां गुणैरेव यः संबन्धः तस्यैव यथाश्रुतस्य प्रतिपादक इत्यादि व्याख्यातम्। तत्तु न व्यापकं नापि वैशेषिकमतानुसारीति नेह प्रपञ्चितम्॥ ४९॥

**यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्।**
**तद्द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः॥ ५०॥**

द्रव्यलक्षणमाह—यत्रेत्यादि। यत्राश्रिता यत्र समवेताः, कर्म च गुणाश्च कर्मगुणाः कारणं समवायि यदिति—समवायि कारणं यद्द्रव्यमेव हि द्रव्यगुणकर्मणां समवायिकारणम्। समवायिकारणं च तद्यत्स्वसमवेतं कार्यं जनयति। गुणकर्मणी तु न स्वसमवेतं कार्यं कुरुतः। अतो न ते समवायिकारणे। एतत्कर्मवत्त्वं हि द्रव्यस्य गुणादिपञ्चपदार्थव्यावृत्तिमात्रलक्षणकथनं, न तु स्वजातीयव्यापकविजातीयव्यावर्तकलक्षणकथनम्। येन कर्मसमवायो नाकाशादीनां वर्तते, तेन लक्षणानुगतं विजातीयव्यावृत्तं द्रव्यस्य लक्षणं गुणवत्त्वं समवायिकारणत्वं च बोद्धव्यम्। यदुत्पन्नमात्रं द्रव्यं प्रथमक्षणे निर्गुणं तदपि द्वितीयक्षणावश्यंभाविगुणवत्तया तद्योग्यत्वाद्गुणवदिति मन्तव्यम्। वैशेषिकेऽप्युच्यते "क्रियावद्गु-

१ "पूर्वभूतं परे भूते स्वगुणसहितं प्रविष्टं यथा आकाशः वायौ तौ वह्नौ ते जले तानि पृथिव्यां."

णवत्समवायि कारणं द्रव्यं" । तत्रापि च यथेह व्याख्यातं तथैव व्याख्यातम् ।

गुणलक्षणमाह—समवायीत्यादि । समवायीति समवायाधेयः । तेन व्यापकद्रव्येभ्यो निष्क्रियेभ्य आकाशादिभ्यो गुणव्यावृत्तिः । नह्याकाशादयः समवायाधेयाः । निर्गतश्चेष्टायाः निश्चेष्टः । चेष्टानिर्गत्या चेह चेष्टाशून्यत्वं तथा चेष्टाव्यतिरिक्तत्वं चोच्यते, तेन चेष्टारूपात्कर्मणो व्यावृत्तिः तथा क्रियाधारत्वयोगेभ्यो मूर्तद्रव्येभ्यो व्यावृत्तिः सिद्धा । गुणस्य "कारणं" इत्यनेन चाकारणेभ्यः सामान्यविशेषसमवायेभ्यो व्यावृत्तिस्सिद्धा । कारणत्वं तु विभुद्रव्यपरिमाणावयविरूपादिषु लक्षणीयेषु गुणेषु नास्ति, तेन भागासिद्धं लक्षणं स्यात्, अतः कारणत्वेनेह भावरूपकारणाव्यभिचारि सामान्यवत्त्वं लक्षणतया बोद्धव्यम् । तच्च सामान्यवत्त्वं सर्वगुणव्यापकसामान्यादिव्यावर्तकत्वं च सामान्यादीनां सामान्यवत्त्वाभावात् । किंवा विभुद्रव्यपरिमाणान्त्यावयविरूपाद्यन्तराणां कारणत्वदर्शनाद्विभुपरिमाणान्त्यावयविरूपादावपि कारणत्वयोग्यत्वमस्त्येवेति न भागासिद्धता कारणत्वस्य । किंवा योगिप्रत्यक्षज्ञानहेतुतया विभुपरिमाणादीनामपि कारणत्वं बोद्धव्यम् । एवंभूतं च कारणत्वं यद्यपि सामान्यादिष्वपि क्वचिदनुगम्यते, तथापि समवायीत्विति पदेन समवायाधारता तथा समवायाधेयता च युगपद्विवक्षिता । तेन समवायकेवलाधारस्य विभुद्रव्यस्य तथा समवायकेवलाधेयस्य सामान्यादेश्च व्युदासः सिद्धो भवति ॥ ५० ॥

**संयोगे च विभागे च कारणं द्रव्यमाश्रितम् ।**
**कर्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥ ५१ ॥**

कर्मलक्षणमाह–संयोग इत्यादि । संयोगे च विभागे च युगपत् कारणम् । तेन संयोगे उत्तरदेशसंयोगकारकेविभागकारणे तथा विभागेच विभागजविभागमात्रकारणे संयोगकारणे व्यावृत्तिः सिद्धा । द्रव्यमाश्रितमिति स्वरूपकथनं व्याख्येयं, द्रव्यव्यावृत्तिस्तु "कर्म नान्यदपेक्षते" इत्यनेन सिद्धा । अस्यायमर्थो यत्—कर्मोत्पन्नं स्वाश्रयस्य द्रव्यस्य पूर्वदेशविभागे चोत्तरदेशसंयोगे च कर्तव्ये नान्यत्कारणं पश्चात्कालभाव्यपेक्षते, द्रव्यं तु यद्यपि संयोगविभागकारणं युगपद्भवति तथापि तदुत्पन्नं यदा कर्मयुक्तं भवति तदैव संयोगविभागकारणं स्यात् । कर्म तूत्पन्नं करोत्येव परं संयोगविभागौ न तु कारणान्तरं पश्चाद्भाव्यपेक्षते, संयोगविभागाश्रयं प्रत्यासत्तिस्त्वपेक्षत एव, सा च पूर्वसिद्धैव, नच चरमभाविकारणान्तरापेक्षता कर्मणः । अथ कर्मशब्देन वमनादीनां तथाऽदृष्टस्य तथा क्रियायाश्चाभिधीयमानत्वात्कस्य कर्मण इदं लक्षणं इत्यत आह—कर्तव्यस्य क्रिया कर्मेति । कर्मेति । एतेन क्रियारूपस्य कर्मण इदं लक्षणं नादृष्टादेरिति ॥ ५१ ॥

**इत्युक्तं कारणं कार्यं धातुसाम्यमिहोच्यते ।**
**धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥५२॥**

प्रकरणमुपसंहरति—इतीत्यादि । इति समाप्तौ, तेनैतावदेव सामान्यादिषट्कं सर्वस्य कार्यजातस्य कारणं न चान्यत्कारणमस्ति । कारणं सामान्येनाभिधायायुर्वेदोपयुक्तं कार्यमाह—कार्यमित्यादि । धातुसाम्यमारोग्यं । वक्ष्यति हि "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते" । सुखसंज्ञकमारोग्यम्" इत्यादि । इहेत्यायुर्वेदे तेनान्यत्रान्यदपि घटादिकार्यमुच्यते इह तु किमिति तत्कार्यत्वेनोच्यते, इत्याह—धातुसाम्येत्यादि । चकारोहेतौ । धातुसाम्यक्रियैव यस्मादायुर्वेदप्रयोजनं, तस्मादायुर्वेदे धातुसाम्यमेवोच्यते कार्यम् । अन्यत्तु अविवक्षितत्वात्तथाऽप्रधानत्वाच्च नेह कार्यत्वेनोच्यते ॥५२॥

**कालबुद्धीन्द्रियार्थानां योगो मिथ्या नचाति च ।**
**द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ ५३ ॥**

संप्रति सामान्येन कारणमुक्तं तदायुर्वेदोपयुक्तद्वारेण वक्तव्यम् । तत्र व्याधिकारणमेव तावदग्रेऽभिधीयते–कालेत्यादिना सूत्रक्रमानुरोधात् । सूत्रणं हि"हेतुलिङ्गौषधज्ञानम्"इति। कालः शीतोष्णवर्षलक्षणः। बुद्धिः प्रज्ञा । इन्द्रियार्थाः–शब्दस्पर्शरसरूपगंधास्तत्सहचरितानि द्रव्यगुणकर्माणीन्द्रियद्वारोपयुज्यमानानि । तेषां कालादीनां योगः संबन्धः । तस्य विशेषलक्षणं विशेषणत्रयं—मिथ्या न चाति चेति । तेन कालादीनां मिथ्यायोगः,नच योगोऽयोग इत्यर्थः अतिच योगोतियोगइत्यर्थः द्वयाश्रयाणामिति मनःशरीराश्रयाणाम् । एतच्च मनःशरीराधिष्ठानत्वं पृथङ् मिलितंच बोद्धव्यम् । त्रिविध इत्ययोगातियोगमिथ्यायोगरूपः,हेतुसंग्रहो हेतुसंक्षेपः। एते च कालादीनामतियोगायोगमिथ्यायोगास्तिस्रैषणीये "तत्रातिप्रभावताम्" इत्यादिना ग्रन्थेन सुव्यक्तं वाच्याः नेह विव्रियन्ते । कालग्रहणं त्विहादौ कृतं कालस्य दुष्परिहारत्वात् । तदनु बुद्धिरुच्यते, बुद्ध्यपराधस्यैव इन्द्रियार्थातियोगादिहेतुत्वात् वक्ष्यति हि"प्रज्ञापराधाद्ध्यहितानर्थान्पञ्च निषेवते" । एवंच यद्यप्यसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधे प्रविशति, तथापि प्रत्यासन्नकारणत्वादसात्म्येन्द्रियार्थसंयोग एवायं पृथक् तन्त्रे सूच्यते । प्रज्ञापराधस्त्वसात्म्येन्द्रियार्थसंयोगव्यतिरिक्तकायवाङ्मनःक्रियापराधेवर्तते ।

अत्र चाधर्मोऽपि व्याधिहेतुरस्ति । यदुक्तं "क्रियाघ्नाः कर्मजा रोगाः" इत्यादि । तस्य चाधर्मस्य कालग्रहणेनैव ग्रहणं केचिन्मन्यन्ते । तन्न, तिस्रैषणीये प्रज्ञापराधेनैवाधर्मग्रहणात् । तत्र हि, अनृतवचनाभिध्यादिवाङ्मनोमिथ्यायोगरूपः प्रज्ञापराधविशेष उक्तः नत्वनृतवचनादीनां स्वरूपेण व्याधिकर्तृत्वं किन्त्वधर्मोत्पादावान्तरव्यापाराणामेव । तेन प्रज्ञापराध एवाधर्मोत्पादावान्तरव्यापारः कर्मजरोगेषु कारणं, योग इव धर्मोत्पादावान्तरव्यापारः स्वर्गे ।

यत्तूच्यते कालपरिणामजायमानत्वात्कर्मजविकाराणां कालजत्वं यदुक्तं "कालस्य परिणामेन जरामृत्युनिमित्तजाः । रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः" । तन्न, तथा

सति, असात्म्येन्द्रियार्थसंयोगजस्यापि किंचित्कालपरिणामजायमानस्य कालजत्वं स्यात् । नच कालातियोगाद्यभिधायिग्रन्थे तिस्रैषणीये कर्मावरोधः कथमपि प्रतिभाति । कतिधापुरुषीयेतु "धीधृतिस्मृतिविभ्रंशः संप्राप्तिः कालकर्मणाम् । असात्म्येन्द्रियसंयोगा विज्ञेया रोगहेतवः" । इत्यभिधाय स्वाभाविकानां रोगाणां तथा कर्मजानां च कालज एवावरोधः कृतः । उक्तं हि तत्र "कालस्य परिणामेन जरामृत्युनिमित्तजाः । रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः" । तथा "निर्दिष्टं दैवसंज्ञं तु कर्म यत्पौर्वदैहिकम् । हेतुस्तदपि कालेन रोगाणामुपलभ्यते" । अत्रापि बुद्धिमिथ्यायोगरूपः प्रज्ञापराध एव रोगजनकः कर्मकारणम् । कालविशेषं प्राप्य तु येषां व्याधीनामागमो भवति, ते कालमिथ्यादियोगजन्या वा भवन्तु, असात्म्येन्द्रियार्थाद्वा काले प्रवर्तन्ते, प्रज्ञापराधजन्या वा सर्व एवाविशेषेणकालकृताः, अभिव्यक्तिमात्रपरिग्रहणात्तत्र कालसंप्राप्तिजन्या इत्युक्ता गदाः । तथाहि—तत्र सन्तताद्विज्वरा अपि कालजन्या एवोक्ताः । वचनं हि "सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ । स्वे स्वे काले प्रवर्तन्ते काले ह्येषां बलागमः" इति । नच सन्ततादौ कालस्य मिथ्यायोगादयः कारणत्वेनोपलभ्यन्ते किंतु असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधावेव, तथा स्वाभाविकेषु च रोगेषु न कालमिथ्यायोगादयः कारणत्वेनोपलभ्यन्ते । तस्मान्न तत्र कालमिथ्यायोगादिजन्या आचार्यस्याभिप्रेताः, किंतु कालाभिव्यञ्जनीयाः कालजाः, अतएव च तत्र "संप्राप्तिः कालकर्मणाम्" इति पठितम् । नतु "कालो मिथ्या नचाति च युक्तः" इति पठितम् । किंच तत्रापि कालमभिधायापि कर्मणामिति पदं पृथक् पठितम् । कालजातः कर्मजः पृथगेव सूचितः । किंच उन्मादनिदाने साक्षादेवाचार्येण कर्मजस्य प्रज्ञापराधजत्वमुक्तम् । वचनं हि "प्रज्ञापराधात्संभूते व्याधौ कर्मज आत्मनः । नाभिशंसेद्बुधो देवान्न पितॄन्नच राक्षसान्" । जनपदोध्वंसनीयेप्युक्तं "तस्य मूलमधर्मस्तन्मूलं चासत्कर्म पूर्वकृतं । तयोर्योनिः प्रज्ञापराधएव" । तदेवं कर्मापेक्षद्वयमुपदर्शितम्, बलाबलं तु विद्वांसश्च स्वयमेव निर्लोचयिष्यन्ति । इदं त्वत्र चिन्त्यतां, स्वाभाविकानां क्षुत्पिपासादीनां तथा कालसम्यग्योगेऽपि जायमानानां दोषचयप्रकोपानां क्व प्रवेशो भवतु । न तावत्कालजे, यतः कालो हि तत्र सम्यग्युक्त एव, कालसम्यग्योगश्च न व्याधिकारणमिति सिद्धान्तः । अथ कालप्रतिनियतः तत्रासात्म्येन्द्रियार्थसंयोगएव कारणमिष्यते । तथाप्येवं सति कालमिथ्यायोगादावप्यसात्म्येन्द्रियार्थसंयोगएव कारणमिति वक्तुं पार्यते । तस्मादस्मिन्मार्गे एवं बुद्धिर्वर्णयति यत्—सहजानां विकाराणां निष्प्रतिक्रियत्वेनेहायोगादिजन्यत्वेनावरोधो न कृत एव, कालस्वभावजा अपि सहजा एव । या त्वत्र प्रतिक्रिया कालस्वभावानामनागतानां, भाविधात्वनुगुणद्रव्यरोगार्थरूपा तथा स्वाभाविकानां च क्षुत्पिपासाजरादीनां कालभोजनरसायनादिरूपा, तस्या अकरणे सति कालस्वभावजस्य रोगस्य प्रादुर्भावः प्रज्ञापराधजन्य एव, उचिते हि काले कर्तव्याकरणं प्रज्ञापराध एव । उक्तं हि कतिधापुरुषीयेऽपि प्रज्ञापराधसंग्रहे "कर्मकालातिपातश्च मिथ्यारंभश्च कर्मणाम्" इति । अन्येतु मिथ्यायोगादिशून्यकालविद्यमानत्वेन काल एवावरोध एषां विकाराणामिति कतिधापुरुषीये वक्ष्यमाणग्रन्थस्य यथाश्रुतार्थपरिग्रहाद्वर्णयन्ति । नचेति चकारात् हीनयोगं गृह्णाति । वक्ष्यति हि "मिथ्यातिहीनलिङ्गेभ्यो यो व्याधिरुपजायते" इति । हीनयोगस्य तु साक्षादपठनमयोगप्रभेदत्वात्स्वल्पयोगेऽप्ययोगो भवति, यथैकतण्डुलाभ्यवहारेऽनशनमुच्यते ॥ ५३ ॥

**शरीरं सत्वसंज्ञं च व्याधीनामाश्रयो मतः ।**
**तथा सुखानां योगस्तु सुखानां कारणं समः ॥५४॥**

द्व्याश्रयाणामित्यनेनोक्तमाश्रयं दर्शयति—शरीरमित्यादि । अत्र शरीरमादौ कृतं शरीररोगाधिकारेणैवास्य तन्त्रस्य प्रवर्तकत्वात् । सत्वसंज्ञशब्देन मन उच्यते । किंवा सत्वशब्देनैव मनसि लब्धे संज्ञाशब्देनात्मशरीरसंबद्धं मन उच्यते । शरीरात्मसंबन्धस्य मनसो व्याध्यनाश्रयत्वात् । असमासेन च पृथगपि शरीरमनसोर्व्याध्याश्रयत्वं दर्शयति । यतः कुष्ठादयः शारीरा एव, कामादयस्तु मानसाः, उन्मादादयश्च द्व्याश्रयाः । आरोग्यस्याश्रयं हेतुंचाह—तथा सुखानामित्यादि । सुखानामित्यारोग्याणाम् । वचनं हि "सुखसंज्ञकमारोग्यं विकारो दुःखमेव तु" तदेति शरीरं मनश्च, तत्र शारीररोगाभावरूपस्यारोग्यस्य शरीरमाश्रयः मानसरोगाभावस्य तु मनः । योगस्तु समः कालबुद्धीन्द्रियार्थानां सम्यग्योगरूपस्तथा सुखानामारोग्याणां कारणं, सुखानामिति सुखप्रदाभिधेयानां च संगृहीतं तत्किमिदं रोगाभावानां बहुत्वं च निषिध्य रोगबहुत्वादेव बोद्धव्यम् । इदमेव ह्यभावानां बहुत्वं यन्निषिध्य भावबहुत्वम् । नन्वायुर्वेदागमो हेतुरित्यादौ अध्यायार्थसंग्रहे व्याध्याश्रयो न संगृहीतः, तत्किमिदमनार्षं । न, हेतवश्चेत्यनेन व्याध्याश्रयरूपस्यापि हेतोस्तत्र संग्रहणम् ॥ ५४ ॥

**निर्विकारः परस्त्वात्मा सत्वभूतगुणेन्द्रियैः ।**
**चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥५५॥**

ननु सत्वमात्मा शरीरं चेति वचनेन त्रयमुपात्तम् । अत्र शरीरमनसी व्याध्याश्रयतयोक्ते आत्मनस्तु का व्यवस्थेत्याह—निर्विकारो निर्विकृतिः, तेन नीरोगत्वमात्मनः, पर इति सूक्ष्मः श्रेष्ठो वा, तेन सत्वशरीरात्ममेलकरूपो य आत्मशब्देनोच्यते तं व्यावर्तयति । यदुक्तं "संयोगिपुरुषस्येष्टो विशेषो वेदनाकृतः" इति । संयोगेऽपि च आत्मादीनां मनस्येव वेदना भवति, सा तु मनस्संयुक्ते आत्मन्यपि संबद्धेत्युच्यते, तेन "निर्व्यथे चान्तरात्मनि" इति वचनं निर्व्यथे मनसीति स्यात् तथा शरीरादावप्यात्मशब्दो वर्तते, तद्व्यवच्छेदार्थं पर इति

पदम्। उक्तं अन्यत्र "ब्रह्मेन्द्रवाय्वग्निमनोधृतीनां धर्मस्य कीर्तेर्यशसः श्रियश्च । तथा शरीरस्य शरीरिणश्च स्याद्वादशस्विङ्गित आत्मशब्दः" । ननु यद्यात्मा निर्विकारस्तत्किं ज्ञानरूपो विकारोऽस्ति वा नास्तीत्याह—सत्वेत्यादि । सत्वं मनः । भूतगुणाः शब्दादयः । इन्द्रियाणि च चक्षुरादीनि । एतैः करणभूतैश्चैतन्ये कारणं भवत्यात्मा । चैतन्यं चात्मनि जायते व्यज्यते वा । अतएव सत्वादीनां ज्ञानकरणानां सर्वत्रासंभवात्सर्वगतेऽप्यात्मनि न सर्वत्र प्रदेशे ज्ञानं स्यात् ।

ननु यदि चैतन्यवानात्मा, तदा कदाचित् ज्ञानवान् कदाचिदज्ञ इत्यनित्यः स्यादित्याह—नित्य इति । नित्यस्याप्यात्मनोज्ञानमनित्यम् । नंच धर्मानित्यत्वे धर्मिणोऽप्यनित्यत्वम् । नह्याकाशगुणशब्दानित्यत्वेऽप्याकाशस्याप्यनित्यत्वं इति भावः । नित्यत्वं चात्मनः पूर्वापरावस्थानुभूतार्थप्रतिसन्धानात् । नह्यनित्ये ज्ञातरि पूर्वानुभूतमर्थमुत्तरो ज्ञाता प्रतिसन्धत्ते । नहि देवदत्तबुद्धमर्थं यज्ञदत्तोऽवगतत्वेन प्रतिसन्दधाति । ननु, दृश्यते ज्ञानवतः सुखोपलब्धावनुरागलक्षणो विकारस्तथा दुःखोपलब्धौ च द्वेषलक्षणविकारः, तत्कथं सुखदुःखोपलब्धावयं आत्मा निर्विकार इत्याह—"द्रष्टा पश्यति हि क्रियाः ।" द्रष्टा साक्षी । तेन यतिर्यथा परमशान्तः साक्षी सन् जगतः क्रियाः सर्वाः पश्यन्न रागद्वेषादिना युज्यते, तथाऽऽत्मापि सुखदुःखाद्युपलभमानोऽपि न रागादिना युज्यते । दृश्यमानरागादिविकारस्तु मनसि, प्राकृते बुद्धौ वा सांख्यदर्शनपरिग्रहाद्भवतीति भावः । सांख्यमते च मनःशब्देन बुद्धिरन्तःकरणं च गृह्यते ॥ ५५ ॥

### वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः ।
### मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ५६ ॥

संप्रति विकाराश्रयं तथा विकारस्य व्यवहितं च हेतुमभिधाय प्रत्यासन्नं दोषरूपहेतुमाह—वायुरित्यादि । अत्र प्रधानत्वादग्रे वायुरुक्तः, प्राधान्यंचाशुभूरिदारुणरोगकर्तृत्वात्, वचनं हि "आशुकारी मुहुश्चारी," तथा "अशीतिं वातजान् विकारान् चत्वारिंशत् पित्तविकारान्, विंशतिं च कफजान्" । वक्ष्यति हि महारोगाध्याये 'वातमनु पित्तं प्रधानं शरीरमूलभूताग्निहेतुत्वात्तथा कफाधिकविकारकारित्वात्तथा कफापेक्षया चाशुकारित्वात्" । असमासकरणं तु पृथगपि वाय्वादीनां रोगकर्तृत्वोपदर्शनार्थं । शारीर इति मानसदोषव्यवच्छेदार्थं । संग्रह इति "द्व्युल्बणैकोल्वणैः षट् स्युर्हीनमध्याधिकैश्च षट् । इत्यादि वक्ष्यमाणप्रपंचस्य सक्षेपः । ननु शोणितस्यापि दोषत्वान्नात्र संग्रहः साधुः, यतो रक्तस्यापि वातादिवद्विशिष्टहेतुलक्षणविकारचिकित्सितनिर्देशः कृतः । तत्र हेतुनिर्देशो यथा—"काले चानवसेचना"दित्यादि । लक्षणंच यथा—"तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्" इत्यादि । रक्तविकाराश्च रक्तार्शःप्रदररक्तपित्तादय उक्ताः । उपक्रमश्च "स्रावणं शोणितस्यतु" इत्यादिनोक्ताः। तथा दोषसंज्ञा च चरके कृता । यदुक्तं "कफे वाते जितप्राये पित्तं शोणितमेव वा । यदि कुप्यति वातस्य क्रियमाणे चिकित्सिते । यथोल्वणस्य दोषस्य तत्र कार्यं भिषग्जितम्" इति । तथाच तन्त्रान्तरेऽपि शल्ये शोणितं दोषत्वेनोक्तं, "तैरेतैः शोणितचतुर्थैः" इति वचनात् । नैवं, दोषो हि स्वतन्त्रदूषणात्मक उच्यते । यतो न वातादयो वृद्धाः किंचिदपेक्ष्य दूषयन्ति किंतु स्वतएव, शोणितं तु दुष्टवातादिसंसर्गमपेक्ष्यैव दूषकं भवति । न हि शोणितं विकृतवातादिसम्बन्धमन्तरेण विकृतं स्यात्सर्वदा वातादिजनकैरेव शोणितदुष्टेः । तथा सर्वदा वातादिलक्षणयुक्तस्यैव शोणितस्य दुष्टत्वात् । यश्च हेत्वादिविशेष उक्तः स वातादियुक्तस्यैव शोणितस्य स्यात् । एतेन वातादय एव तत्रापि दूषणात्मकाः । शोणितंतु स्वप्रमाणातिरिक्तमपि दूष्यमेव, न च दूष्यस्य हेत्वादयो विशिष्टा न भवन्ति । यतो मांसादीनामपि हेत्वादिविशेषोऽस्ति, मांसदुष्टौ "मांसवाहीनि दुष्यन्ति भुक्त्वाच स्वपतो दिवा" इत्यादि वक्ष्यति । मांसदुष्टिलक्षणं "शृणु मांसप्रदोषजान्" इत्यादिना विविधाशितपीतीये वक्ष्यति यान् विकारांस्ते ज्ञेयाः । यत एतानेव मांसदोषविकारान् स्रोतोविमाने मांसदुष्टिलक्षणत्वेनातिदेशादभिधास्यति । दुष्टमांसविकारश्चाधिमांसार्बुदादय उक्ताः । उपक्रमश्च "मांसजानां तु संशुद्धिः शस्त्रक्षाराग्निकर्म च" इत्युक्तः । तस्माद्दूष्याधिकारे दोषकृते कार्ये दूष्येण व्यपदेशः, रक्तजोऽयं मांसजोऽयमित्यादि । यथा—स्नेहाधारेण वह्निना दग्धे स्नेहदग्ध इति व्यपदेशः । दोषसंज्ञा तु पीडाकर्तृत्वसामान्याददोषेऽपि स्याद्यथा—"स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशनैः" । इत्यत्र पुरीषमेव दोषत्वेनोक्तम् । सुश्रुते तु शोणितस्य दोषत्वं, व्रणेषु प्रायः शोणितदुष्टिदर्शनादुपचरितमेवोक्तम् । यतः प्रदेशान्तरे व्रणप्रश्ने वातादयस्त्रय एव तत्राप्युक्ताः "वातपित्तश्लेष्माण एव देहसंभवहेतवो भवन्ति" इत्यादिना । किंच यदि शोणितं दोषः स्यात्तदा वातादिवत्प्रकृत्यारंभकं स्यात् । नचारभते । तस्मात्त्रय एव दोषा इति सिद्धम् । मानसदोषमाह—मानसः पुनरित्यादि । पुनः शब्दोऽवधारणे, तेन मानस उद्दिष्ट एव परं न शारीरदोषवत्प्रपञ्चितः, मानसदोषाणामस्मिन्तन्त्रे कायचिकित्सारूपे प्रस्तावित्वादिति भावः । आदौ रज उक्तं प्राधान्याद्वचनं हि "नारजस्कं तम" इति, एवशब्देन सत्वाख्यगुणस्यादोषत्वमवधारयति, सत्वं ह्यविकारि ॥ ५६ ॥

### प्रशाम्यत्यौषधैः पूर्वो दैवयुक्तिव्यपाश्रयैः ।
### मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः ॥ ५७ ॥

संप्रति दोषप्रशमकारणमाह—प्रशाम्यतीत्यादि । पूर्वं इति शारीरदोषग्रहणेन तज्जन्या व्याधयोऽपि गृह्यन्ते । विकृतदोषादनन्यत्वाद्व्याधीनाम् । दैवमदृष्टं तदाश्रित्य यद्व्याधिप्रतीकारं करोति तद्दैवव्यपाश्रयम् बलिमन्त्रमङ्गलादि, एतच्च प्रथममुक्तं सद्योऽक्लेशेन च व्याधिप्रशमकत्वात् । युक्तिर्योजना । शरीरभेषजयोर्हितो यो योगस्तदपेक्षं संशोधनसंशमनादि युक्ति-

व्यपाश्रयमुच्यते। ज्ञानमध्यात्मज्ञानं विज्ञानं शास्त्रज्ञानं धैर्यमनुन्नतिश्चेतसः। स्मृतिरनुभूतार्थस्मरणं समाधिर्विषयेभ्यो निवर्त्यात्मनि मनसो नियमनम्॥ ५७॥

**रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः।**
**विपरीतगुणद्रव्यैर्मारुतः संप्रशाम्यति॥ ५८॥**
**सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु।**
**विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति॥ ५९॥**

संप्रति शरीररोगाधिकारप्रवृत्तत्वादस्य तन्त्रस्य शारीररोगजनकवातादिलक्षणं भेषजंचाह—रूक्ष इत्यादि। प्रधानत्वादग्रे वायोरभिधानं, रूक्षादीनां ज्यायस्त्वादभिधानं, तेन दारुणादयोऽपि गुणा बोद्धव्याः। रौक्ष्यंच वायोरधिकं स्नेहसाध्यत्वाद्वायोर्बोधकं अतो रूक्षत्वमग्रेऽभिहितम्। यद्यपि वैशेषिकेऽनुष्णाशीतो वायुस्तथापीह शीतेन वृद्धिदर्शनादुष्णेन प्रशमदर्शनाच्च शीतएव वायुः तथा· केवलवातारब्धे रोगे शीतदर्शनाच्च। यच्च पित्तयुक्तस्योष्णत्वं तद्योगवाहित्वात्, यथा पापाणस्य येन द्रव्येण शीतेनोष्णेन वा योगो भवति तद्गुणानुविधानं तथा वायोरपि। विपरीता वातगुणप्रतिपक्षा गुणा यस्य तद्विपरीतगुणं। गुणशब्देन चेह धर्मवाचिनो रसवीर्यविपाकप्रभावाः सर्व एव गृह्यन्ते, तेन प्रभावादपि यद्वातविपरीतं तदपि गृह्यते। अन्येत्वेकविपरीतशब्दलोपाद्विपरीतं विपरीतगुणं च ग्राहयन्ति। तेन विपरीतग्रहणात्पृथक् प्रभावविपरीतं गृह्यते, गुणवैपरीत्याद्विपाकादयो गृह्यन्ते। नन्वविपरीतगुणभूयिष्ठैरपि वातादीनां प्रशमो भवति। यतो न हि सर्व भेषजं वातादीनां सर्वात्मना विरुद्धं स्यात्। उक्तं हि "विरुद्धगुणसन्निपाते भूयसा स्वल्पमवजीयते"। तत् किमिति विरुद्धगुणभूयिष्ठस्य ग्रहणेन। विरुद्धगुणभूयिष्ठस्यापि विरुद्धगुणशब्देनैव ग्रहणात्। विपरीतगुणभूयिष्ठे हि येऽविपरीता अल्पा अवला वा गुणास्ते स्वकार्याकर्तृत्वादव्यपदेश्याएव। किंवा सर्वथा विपरीतगुणैरधिका प्रशस्ता च शान्तिर्भवति। अतएव संप्रशब्दौ शीघ्रसम्यक् प्रशमार्थाभिधायकौ कृतौ। अविपरीतगुणभूयिष्ठैर्न तथा शान्तिर्भवति। अतएव संप्रशब्दाभ्यां न तत्साक्षादुक्तम्। एवंच व्याख्यानं पित्तश्लेष्मणोरपि कर्तव्यम्।

**गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः।**
**श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः॥ ६०॥**

सस्नेहमिति ईषत्स्नेहं, तेन पित्ते सर्पिषः स्निग्धस्य भेषजत्वमुपपन्नम्। अम्लरसता चेह पित्तस्य चोच्यते अप्तेजःसमवायारब्धत्वात्पित्तस्य। सुश्रुते तु कटुत्वमेव पित्तस्योक्तम्, अम्लता च विदग्धस्य पित्तस्योक्ता। यदुक्तं "विदग्धं चाम्लमेव च"। एवं सस्नेहतायामपि पित्तस्य सुश्रुतस्य स्वरसो नास्ति। एतच्च स्निग्धत्वमम्लत्वं च जलानलारब्धत्वात्पित्तस्योपपन्नमेव। सुश्रुते तु तेजोरूपपित्ताभिप्रायेणैव तन्निरस्तं भवति। श्लेष्मणो विपरीतगुणैर्गुणानां प्रशम उच्यते न पुनः श्लेष्मणः प्रशमोऽभिधीयते। कस्मादुच्यते, गुणप्रशमनेन च गुणिप्रशमो गुणवृद्ध्या च गुणिवृद्धिर्भवतीति सूचनार्थम्। यत उष्णेन शीतप्रशमे क्रियमाणे शीताधारस्य उदकभागस्यावश्यमेव प्रशमः क्रियते॥ ६०॥

**विपरीतगुणैर्देशमात्राकालोपपादितैः।**
**भेषजैर्विनिवर्तन्ते विकाराः साध्यसंमताः।**
**साधनं नत्वसाध्यानां व्याधीनामुपदिश्यते॥ ६१॥**

ननु विपरीतगुणैरल्पमात्रैस्तु वाऽविपरीतदेशकालादिप्रतिबन्धैश्च न प्रशमो भवतीत्याह—विपरीतेत्यादि। देशो भूमिरातुरश्च। मात्रा अनपायिपरिमाणम्। कालो नित्यगः ऋत्वादिः आवस्थिको बाल्यादिश्च। देशाद्यपेक्षया यथोचितत्वेन कल्पितो देशमात्राकालोपपादितः। उपपादितैरिति चौरादिको णिच्, किंवा वैद्येनोपपादितैः। अत्र देशग्रहणाद्बलशरीराहारसात्म्यसत्वप्रकृतीनां ग्रहणम्। कालग्रहणाद्वयसोऽपि ग्रहणम्। दोषस्तु प्रशमनीयतयैव गृहीतः। भेषजं तु साक्षादेवोक्तम्। एवं दोषभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसां परीक्ष्याणां दशविधानां सर्वेषामेव ग्रहणं भवति।

साध्यत्वेन प्रामाणिकानां संमताः साध्यसंमताः। एतेनाज्ञेनाज्ञानाद्ये साध्यत्वेन गृहीतास्ते निराक्रियन्ते। यत्तु सम्यक् ग्रहणेन याप्ययापनमुच्यते तन्नातिसुन्दरं "विनिवर्तन्ते" इति वचनात्। नच याप्ययापनं विनिवृत्तिः। असाध्ये भेषजनिवृत्तिमाह—साधनमित्यादि। नन्वसाध्यानामपि साधनं दृष्टं, यतोऽरिष्टवांस्तावदवश्यं मृत्युगृहीतत्वेनासाध्यः। यदुक्तं "अरिष्टं चापि तन्नास्ति यद्विना मरणं भवेत्। मरणंचापि तन्नास्ति यन्नारिष्टपुरःसरं"। उत्पन्नारिष्टसाधनं च सुश्रुते उक्तं "ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत्किलामलैः। रसायनतपोजप्यतत्परैर्वा निवार्यते" इति। तथा चागस्त्यो भगवानाह "रसायनतपोजप्ययोगसिद्धैर्महात्मभिः। कालमृत्युरपि प्राज्ञैर्जीयते नालसैर्नरैः"। तथान्यत्राप्युक्तं "जातारिष्टोऽपि जीवति"। अत्राहुरेके द्विविधमरिष्टं नियतमनियतं च, तत्र नियतं यत्तदसाध्यमेव। अतएवोक्तं "नत्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते" अत्र जातस्येति वचनान्नियतस्येति दर्शयति। यत्त्वनियतमरिष्टं तत्प्रति सुश्रुतागस्त्यवचनयोरर्थवत्ता। चरकेऽप्यनियतमरिष्टमुक्तं यथा—"संशयप्राप्तमात्रेयो जीवति तस्य मन्यते" इति। अन्येतु ब्रुवते संशयप्राप्तमिति उक्तिभेदमात्रमत्र, तेन सर्वारिष्टं मारकमेवासति रसायनादौ। रसायनतपःप्रभृतयस्तु प्रभावातिशययोगादितरक्रिययाऽसाध्यमानमपि साधयन्ति। तच्चारिष्टनिवारणं विरलेष्वेव पुरुषातिशयेषु नन्दिकेश्वरादिषु द्रष्टव्यं। न सर्वपुरुषैस्तत् शक्यमतो जातारिष्टानां असाध्यत्वेन तन्त्रे प्रोच्यते। यत्तु कैश्चिदुच्यते नियतायुषो मृत्युररिष्टपूर्वो भवति, अनियतायुषस्त्वरिष्टं विनैव मृत्युर्भवति। तन्न, "मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" इति वचनात्। यदुच्यतेऽनियतायुषः सत्यपि रिष्ट-

१ योजकमिति पाठः।

प्रादुर्भावे सम्यक् क्रियोपपादनाज्जीवितेन भवितव्यम् । यतोऽनियतायुषः पुरुषकारापराधादेव परं मृत्युर्भवति सम्यक् क्रियायां च पुरुषकारापराधो नास्ति । तन्न, नह्यनियतायुषः सर्वदैव पुरुषाकारसाध्याः, किन्तु यथोचितकालक्रियमाणस्वस्थातुरहितसेवारूपपुरुषकारसाध्याः। तेन यथोचितकाले हितासेवनादसाध्यत्वयुक्ते व्याधौ रिष्टे जाते किंभेषजमतीतकालक्रियमाणमपक्रान्ते सलिल इव सेतुवन्धः करिष्यतीति । तस्मादसाध्यानां साधनं नोपदिश्यत इति साधुः ॥ ६१ ॥

**भूयश्चातो यथाद्रव्यं गुणकर्माणि वक्ष्यते ॥ ६२ ॥**

किमेतान्येव गुणकर्माणि उतापराण्यपीत्याह—भूयश्चेत्यादि गुणानां कर्माणि गुणकर्माणि । यथाद्रव्यमिति यस्मिन् यस्मिन् द्रव्ये यद्यद्गुणकर्म तत्तत्तस्मिंस्तस्मिन् द्रव्येऽनुपानादौ कृत्स्ने वा तन्त्रे वक्ष्यते आचार्य इति शेषः। वक्ष्यते इति ब्रूञो वचिरादेशात्-प्रयोगः। किंवा यथाद्रव्यमिति यथाहेतुम् । यद्यथा गुरुखरकठिनादिगुणवहुलं पार्थिवद्रव्यं तेषां च पार्थिवाणां गुणानां कर्मोपचयसङ्घातगौरवादीति ॥ ६२ ॥

**रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।**
**निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ ६३ ॥**

संप्रति दोषानभिधाय तत्प्रशमनप्रधानान् रसान् वक्तुमुद्यतो रसलक्षणपूर्वकं रसोत्पत्तिक्रममाह—रसनार्थ इति । रस्यत आस्वाद्यत इति रसः । रसनार्थ इति जिह्वाग्राह्यः । एतच्च षण्णामपि रसानामनुगतं रूपादिषु च व्यावृत्तत्वात्साधुलक्षणं । तस्येति रसस्य । द्रव्यमित्याधारकारणम् । द्रव्यशब्दो ह्याधारकारणवाची । यथा—"पञ्चेन्द्रियद्रव्याणि" इति ॥ क्षितिस्तथेति यथा आप आधारकारणं तथा क्षितिरपि । अप्क्षितीति वक्तव्ये क्षितिस्त्वग्रे प्रतिवचनात् क्षितेराधारकारणत्वमसुख्यमिति दर्शयति । येनापो हि निसर्गेण रसवत्यः । तथा ह्यात्रेयभद्रकाप्यीये "सौम्याः खल्वापः" इत्यादिना जल एव रसस्य व्यक्तिरिति दर्शयति । तत्सुश्रुतेऽप्युक्तं "तस्मादाप्यो रसः" इति । क्षितिस्त्वपामेव रसेन नित्यानुषक्तेन रसवतीत्युच्यते । यतो नित्यः क्षितेर्जलसंवन्धः वचनं हि—"विष्टं ह्यपरं परेण" इति अस्यार्थः—खवाय्वग्निजलक्षितीनामुत्तरोत्तरे भूते पूर्वपूर्वभूतस्य नित्यमनुप्रवेशः, तत्कृतश्च खादिषु गुणोत्कर्षः । रसस्य किं व्यक्तौ अप्क्षिती कारणं किंवा विशेष इत्याह—निर्वृत्तावित्यादि । निर्वृत्तौ चाभिव्यक्तौ । एतेन रसोऽभिव्यज्यमानो जलक्षित्याधार एव व्यज्यत इति दर्शयति । चकाराद्विशेषेऽपि मधुरादिलक्षणे अप्क्षिती प्रत्ययौ । तेन "सोमगुणातिरेकान्मधुरः पृथिव्यग्निगुणातिरेकादम्लः" इत्यादिना जलपृथिव्योरपि विशेषकारणत्वं वक्ष्यमाणमुपपन्नम् । विशेषे च प्रत्ययाः खादय इति मधुरादिविशेषनिर्वृत्तौ निमित्तकारणं खवाय्वनलाः, न प्रधानकारणभूताः । खादय इत्यनेनैव त्रित्वे लब्धे पुनस्त्रय इति वचनं तेषामेव व्यस्तसमस्तानामपि प्रत्ययत्वदर्शनार्थं । अतएव व्यस्तसमस्ताऽऽकाशादिसंसर्गाद्भेदस्तु रसानां मधुरतरमधुरतमादिश्चोपपन्नः । विशेषे चेति चकारादभिव्यक्तावप्याकाशादीनां निमित्तकारणत्वं दर्शयति । वक्ष्यति हि "तास्त्वन्तरीक्षाद्भ्रष्टा भ्रश्यमानाः पंचमहाभूतगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्तीरभिप्रीणयन्ति यासु षड्भिर्मूर्च्छन्ति रसाः" इति । अन्येतु विशेषेचेति चकारं खादयश्चेत्यत्र योजयन्ति, तेन चकारात्कालोऽपि विशेषेऽभिव्यक्तौ च कारणं लभ्यते । साक्षात्तु कालस्यावचनेन खादिभ्योऽप्यपकृष्टं कालस्य कारणत्वं दर्श्यते । किंवा रसस्यापो द्रव्यं क्षितिस्तथेति च पूर्ववदेव निर्वृत्तौ च, क्षितिरेव । निर्वृत्तावभिव्यक्तौ प्रत्यक्षं नापः । यत आपो ह्यव्यक्तरसा एव, क्षितिसंवन्धादेव च रसोऽभिव्यक्त उपलभ्यते । उक्तंच "जङ्गमस्थावराणां भूतानां मूर्तीरभिप्रीणयन्ति यासु षडभिर्मूर्च्छन्ति रसाः इति तेन पार्थिवद्रव्यसम्बन्धादेवापां रसो व्यज्यते, नान्यथा । विशेषे चेति चकारादप्क्षिती विशेषे कारणे । यद्यपि चाप्क्षिती विशेषे कारणे, तथापि "सोमगुणातिरेकान्मधुरः" इत्यादौ तु खादय एव तथा सन्निविशन्ति यथा सोमोऽतिरिक्तो भवति, तेन तत्रापि ऊनत्वेन सन्निविष्टाः खादय एव विशेषहेतव इति । यद्यपि चाभिव्यक्तिर्मधुरादिविशेषरहिता क्वचिद्भवति तथापि सामान्येन सर्वत्र यदभिव्यक्तयेऽनुगतं कारणमुपलभ्यते क्षितिरूपं जलक्षितिरूपं वा तदभिव्यक्तिकारणं । यदनुगमात्तु मधुरादिविशेषोपलब्धिस्तद्विशेषकारणं उच्यते ॥ ६३ ॥

**स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च ।**
**कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः ॥ ६४ ॥**

रसविशेषानाह—स्वादुरित्यादि । अत्र सर्वप्राणिनामिष्टत्वादादौ मधुर उक्तः । तदनु च प्राण्यभीष्टोत्कर्षक्रमेणैवादिनिर्देशक्रमो वोद्धव्यः । षट्क इति पुनः संख्याकारणं परवादिमतसप्तसंख्यत्वादिनिषेधार्थं । अयं संग्रह इत्यनेनावान्तरभेदबहुत्वं तथा वक्ष्यमाणरससंसर्गबहुत्वं च दर्शयति ॥ ६४ ॥

**स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः ।**
**जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥ ६५ ॥**

रसानामुपयुक्ततरं कार्यमाह—स्वाद्वम्लेत्यादि । अत्र च वायोर्नीरस्यापि रससहचरितस्निग्धत्वादिगुणैर्विपरीतैः प्रशमो ज्ञेयः । एवं मधुररसस्यापि श्लेष्मणोऽम्ललवणाभ्यां स्निग्धत्वाभिष्यन्दित्वादिसहचरितगुणयोगादेव वृद्धिः । अत्र च ये प्रशमकत्वेन रसा वातादीनां नोक्ता ते वर्धका वोद्धव्याः । यदाह वाग्भटः "तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् । कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते" इति । रसकर्मातिदेशेनैव गुणवीर्यविपाकानामपि कर्मनिर्देशः कृत एव । यतो मधुरादिरसेनैव सर्वगुणान् वीर्यविपाकांश्च निर्देक्ष्यत्यात्रेयभद्रकाप्यीये, "तत्र स्वादुः" इत्यादिना । तथा कटुतिक्तकषायाणां

१ खादिपुरसस इतिपाठः ।

विपाकः प्रायशः कटुः" । तथा "अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा । शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः । तयोरम्लं यदुष्णंच यच्चोष्णं कटुकं तयोः" इत्यादिना ॥ ६५ ॥

**किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम् ।**
**स्वस्थवृत्तौ मतं किंचित्त्रिविधं द्रव्यमुच्यते ॥ ६६ ॥**
**तत्पुनस्त्रिविधं प्रोक्तं जाङ्गमौद्भिदपार्थिवम् ।**
**मधूनि गोरसाः पित्तं वसा मज्जासृगामिषम् ॥६७॥**
**विण्मूत्रचर्मरेतोऽस्थिस्नायुश्रृङ्गनखाः खुराः ।**
**जङ्गमेभ्यः प्रयुज्यन्ते केशलोमानि रोचनाः ॥ ६८ ॥**
**सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा ।**
**मनःशिलाले मणयो लवणं गैरिकांजने ॥ ६९ ॥**

अतोऽवशिष्टद्रव्यकार्यं प्रभावकृतं वक्तुं प्रभावभेदेन द्रव्यभेदमाह—किंचिदित्यादि । किंचिदिति न सर्वं । दोषस्य दोषयोर्दोषाणां वा प्रशमनं दोषप्रशमनम् । दोषग्रहणेन दुष्टा रसादयोऽपि गृह्यन्ते । तेन द्रव्यमहिम्ना यद्दोषाणां दुष्टानां रसादीनां धातूनां वा शमकं आमलकदुरालभादि तद्गृह्यते । आमलकं हि शिवत्वात् त्रिदोषहरम् । दुरालभा चापि वातपित्तश्लेष्महरी । यद्यपि चामलकस्य "हन्ति वातं तदम्लत्वाद्" इत्यादिना गुणद्वारा त्रिदोषहरत्वमुच्यते तथापि तत्प्रभावबृंहितमेव बोद्धव्यम् । यतस्तत्राम्लत्वादिना पित्तादिकोपोऽपि युज्यते स त्वामलकप्रभावान्न स्यात् । धातुप्रदूषणमिति वातादीनां समत्वेन शरीरधारणात्मकानां तथा रसादीनांच दूषणं किंचियथा—यवकमन्दकविषादि । सुष्टु अवतिष्ठते नीरोगत्वेनेति स्वस्थस्तस्य वृत्तिः स्वस्थरूपतयानुवर्णनं तत्र स्वस्थवृत्तौ मतमभिमतं पूजितमिति यावत् । संख्येयनिर्देशादेव त्रित्वे लब्धे त्रिविधग्रहणं नियमार्थम् । तेन संशोधनसंशमनादीनामनेकविधानामपि तत्रैवावरोधः । रसायनवाजीकरणे तु स्वस्थवृत्तिमात्र एव । यदुक्तं "स्वस्थस्योजस्करं यत्तु तद्वृष्यं तद्रसायनं" इति । प्रति प्रति तु पादे किंचिद्ग्रहणं दोषहरत्वादिकर्मणां विभिन्नद्रव्याश्रयित्वोपदर्शनार्थं । एकं किंचिद्ग्रहणे तु एकमेव द्रव्यं दोषहरं धातुप्रदूषकं स्वस्थवृत्तिमतंच स्यान्नचतदभिमतम् । ननु सुस्थवृत्तिमतानां रक्तशालिषष्टिकयवादीनां दोषप्रशमनत्वमपि दृश्यते । यतो वक्ष्यति तत्र तत्र रक्तशाल्यादीनां ज्वरादौ प्रयोगम् । तथा प्रकृतिशरीरदेशकालमात्राभियुक्तं दोषप्रशमनमपि दोषकरं भवति । यथा–आमलकमतिमात्रमग्निमान्द्याय" इत्यादि ज्ञेयम् । तथा धातुप्रदूषाणामपि दोषशमनं दृश्यते, यथा "विषमुदरहरम्" । तथा यदेव मन्दकादि दोषकरं तदेव क्षीणदोषं प्रति वृद्धया साम्योपादानेन दोषप्रशमनं स्यात्तदेवमव्यवस्थितत्वात्किंचिद्दोषप्रशमनमित्यादि विरुद्धम् । अत्रोच्यते—स्वस्थवृत्तिमतं रक्तशाल्यादिदोषप्रशमनमपि स्यात् परं तत्प्रायः स्वस्थवृत्तिहितत्वात् स्वस्थवृत्तिमतत्वेन गृह्यते । वचनं हि "स्वस्थस्योजस्करं यत्तु तद्वृष्यं तद्रसायनम् । प्रायः प्रायेण रोगाणां द्वितीयं शमने हितम् । प्रायःशब्दो विशेषार्थः । उभयं ह्युभयार्थकृत्" इति । दोषप्रशमनानि द्रव्याणि विगुणप्रकृत्यादिप्रतिबन्धकाभावे दोषप्रशमनमाचरन्त्येव, प्रतिबन्धकसंभवे तु न कुर्वन्ति । नचैतावता तेषां स्वस्वभावो न भवति । नचाग्निर्मणिविप्रतिबन्धनात्कदाचिन्न दहतीति दाहकत्वेन नोपदिश्यते । एवं धातुप्रदूषकस्यापि कदाचिद्धातुप्रशमकत्वं निमित्तान्तरयोगाद्भवेत् । न धातुदूषकः स्वरूपतां हन्ति, यथा सलिलस्याग्निसम्बन्धादुष्णत्वं । तस्माद्यद्यस्य प्रायिकमनन्योपाधिकृतं च रूपं, तेनैव व्यपदेशो युक्तः । यच्च मन्दकादीनां क्षीणदोषवर्द्धकत्वेन दोषप्रशमकत्वं तद्विद्यमानमपि कादाचित्कत्वात्तथा साम्याय युत्तरकालं दोषापहृत्वाच्च न व्यपदिश्यते दोषप्रशमकत्वेन । ननु यद्यप्येवं तथापि यदेकदोषहरमपरदोषकरं यथा मरिचं श्लेष्महरं पित्तकरं चेत्यादिवत्तु द्रव्यजातं तत्कुत्र प्रविशतु । अत्रैके वदन्ति यदुभयात्मकं तद्दोषहरं दोषकरंच । नचैतावता द्रव्यत्रित्वक्षतिः । यतो वातादिसंसर्गजव्याधिसद्भावे वातादिजन्यत्वेन यत्त्रैविध्यं रोगाणामुच्यते तत्खण्डितं स्यात् । किंवा मरिचादीनां यदुभयकर्तृत्वादिकं न तद्द्रव्यप्रभावकृतं, किंतर्हि रसादिकृतं, तेन न द्रव्यप्रभावप्रस्तावे उदाहरणीयं । नच किंचिद्द्रव्यं तादृशमस्ति यत्प्रभावादेव किंचिद्दोषं करोति किंचिच्छमयतीति न दोषप्रशमनत्वादिप्रभावं प्रतिनियमः, अयमेव च पक्षः साधुः । ननु "किंचिद्दोषप्रशमनं किंचिद्दोषप्रदूषण" मिति वा क्रियतां "किंचिद्धातुप्रशमनं किंचिद्धातुप्रदूषणमिति वा" । नैवं, तथा सति दोषशब्दस्य मुख्यवृत्त्या वातादिष्वेव वृत्तित्वात्तथा धातुशब्दस्य रसादिवृत्तित्वादुभयग्रहणं न प्राप्यते । उभयपदोपादानेन द्वयं निपुणकारी तन्त्रकारो दूषणत्वधारणत्वयोगपरिग्रहाद्दोषप्रशमनेन दुष्टरसादिप्रशमनमपि भेषजं विविधाशीतपीतीयादिवक्ष्यमाणं तथा धातुप्रदूषणेन वातादिप्रदूषकमपि निदानादिवक्ष्यमाणं ग्राहयति । प्रशब्दोऽत्र प्रकारे । तेनप्रकारेण मृदुमध्यादिना प्रकोपणं तथा प्रकारेण संशोधनं संशमनादिना संशमनमुच्यते । किंवा धात्वर्थानुवृत्तावेव इमौ प्रशब्दौ । यथा च्युतांशः परिधावतीत्यत्र धावतीत्यर्थः । आदौ दोषप्रशमग्रहणं तस्यैवेहाभिप्रेतत्वात् । ननु स्वस्थवृत्तिमतद्रव्यं भाविदोषहरत्वेन दोषप्रशमनमेव । नैवं, नहि स्वास्थ्यानुवृत्तिजनकत्वाद्दोषनिवृत्तिकरं दोषहरणमुच्यते किं तर्हि समधातूनामवर्द्धकत्वेनाक्षयकरत्वेन च रसादिस्रोतसांचानुगुणत्वेन धातुसाम्यानुवृत्तिकरमुच्यते । वचनं हि "पथ्यं पथोऽनपेतं यदिति" ॥६६–६९॥

**भौममौषधमुद्दिष्टमौद्भिदंतु चतुर्विधम् ।**
**वनस्पतिस्तथा वीरुद्वानस्पत्यस्तथौषधिः ॥ ७० ॥**
**फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि ।**
**ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः॥७१॥**
**मूलत्वक्सारनिर्यासनालस्वरसपल्लवाः ।**
**क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः ॥७२॥**

**पत्राणि शुङ्गाः कन्दाश्च प्ररोहाश्चौद्भिदो गणः ।**
**मूलिन्यः षोडशैकोना फलिन्यो विंशतिं स्मृताः॥७३॥**
**महास्नेहाश्च चत्वारः पंचैव लवणानि च ।**
**अष्टौ मूत्राणि संख्यातान्यष्टावेव पयांसि च ॥ ७४॥**
**शोधनार्थाश्च षड्वृक्षाः पुनर्वसुनिदर्शिताः ।**
**य एतान् वेत्ति संयोक्तुं विकारेषु स वेदवित् ॥७५॥**

संप्रत्यन्यथा द्रव्यभेदमाह तत्पुनरित्यादि । तदिति द्रव्यम् । गच्छतीति जङ्गमम् । उद्भिद्य पृथिवीं जायत इति औद्भिदं वृक्षादि । उक्तप्रकारद्वयातिरिक्तपृथिवीविकारः पार्थिवम् । संस्वेदजस्येह क्रिम्यादेर्जङ्गमेऽवरोधः । कुष्माण्डकादेश्च औद्भिदे । इह च द्रव्यशब्देन पार्थिवद्रव्यमेवोच्यते । तेन जलानिलाग्न्यादीनामग्रहणादव्याप्तिर्न वाच्या । जङ्गमशब्देन जङ्गमप्रभवं गोरसमध्वाद्यपि ग्राह्यम् । एवमौद्भिदपार्थिवयोरपि ग्रहणं वाच्यम् । रोचना गोरोचना । एतच्च मध्वादि प्राय उपयोगित्वात्प्राधान्यादुक्तम् । तेनाण्डवस्त्यादीनांच ग्रहणं बोद्धव्यम् । यद्यपि जङ्गमानन्तरं बहुप्रपंचत्वेन प्रधानत्वादौद्भिदमुपदिष्टं तथाप्यबहुवक्तव्यत्वात् पार्थिवमेव जङ्गमानन्तरं विव्रियते तदनु बहुवक्तव्यमौद्भिदम् । सुवर्णमित्यादि । पंचलोहा इति ताम्ररजतत्रपुशीसकृष्णलोहानां ग्रहणम् । समला इति मलशब्देन शिलाजतूनि लोहमलरूपाणि गृह्यन्ते । तच्च सुश्रुतदर्शनात् सुवर्णरजतादिभवं षड्विधमेव गृह्यते । सुश्रुतेहि षड्विधमेव शिलाजतूक्तं इह तु रसायने चतुर्विधमुक्तं "चतुर्भ्यो धातुभ्यस्तस्य संभवः । हेम्नोऽथ रजतात्ताम्राद्वरं कृष्णायसादपि" इति वचनात् । एतच्च वचनं रसायनाधिकारित्वं चतुर्विधस्य शिलाजतुनो दर्शयति, नतु षड्विधशिलाजतुप्रतिषेधपरमिति न सुश्रुतेन समं विरोधः । किंवा सुवर्णं निर्मलं समलाश्च रजतताम्रत्रपुलोहा इति मिलित्वा पंचलोहाः । शिलाजतुपाषाणपङ्कजप्रभृतीनां तु ग्रहणं उद्दिष्टशब्देन सूचितम् । उद्देशोह्यल्पकथनम् । सुधा गाङ्गेटिका । आलं हरितालं अञ्जनं सौवीराञ्जनम् । फलैर्वनस्पतिरिति विनापुष्पैः फलैर्युक्ता वटोदुम्बरादयः । यदुक्तं हारीते "तेषामपुष्पाः फलिनो वनस्पतयः इति स्मृताः" । पुष्पैर्वानस्पत्यः फलैरपीति पुष्पान्तरं फलभाज इत्यर्थः । फलस्य पाकादन्तो विनाशो येषां तिलमुद्गादीनां ते फलपाकान्ताः । अत्र केचित् "फलान्ताः पाकान्ताश्चौषधयः" इति वदन्ति । तेन विनापि फलं पाकेनैवान्तो येषां दूर्वादीनां तेऽपि गृह्यन्ते । प्रतानशब्देन लता गुल्माश्च गृह्यन्ते । यदुक्तं हारीतेन "लता गुल्माश्च वीरुधः" इति । मूलत्वगित्यादौ निर्यासो लाक्षासर्जरसादिः । औद्भिदोगणं इत्यौद्भिदसंभूतगणः । संप्रत्यत्रैव जङ्गमौद्भिदपार्थिवद्रव्ये यत्प्रशस्तं तदाह मूलिन्य इत्यादि । मूलं प्रशस्ततमं यासां ता मूलिन्यः । एवं फलिन्योऽपि, षोडशेति च्छेदः । महास्नेहा इति क्षीरमांसादीनामपि स्नेहतया स्नेहाध्याये वक्ष्यमाणत्वेन तेषु सर्पिरादीनां भूरिस्नेहवत्त्वेन महत्त्वम् । पंचैव लवणानीति विमाने वक्ष्यमाणलक्षणे लवणबहुत्वे पंचानामेव प्रशस्तत्वेन दर्शनार्थम् । एवं मूत्रादिष्वपि प्राधान्यमुन्नेयं स्वजातीयेषु । वेदविदिति आयुर्वेदवित् ॥ ७०–७५ ॥

**हस्तिदन्ती हैमवती श्यामा त्रिवृदधोगुडा ।**
**सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि ॥७६॥**
**ज्योतिष्मती च बिम्बी च शणपुष्पी विषाणिका ।**
**अजगन्धा द्रवन्ती च क्षीरिणी चात्र षोडशी ॥७७॥**
**शणपुष्पी च बिम्बी च छर्दने हैमवत्यपि ।**
**श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने ॥७८॥**
**एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने ।**
**इत्युक्ता नाम कर्मभ्यां मूलिन्यः फलिनीः शृणु ॥७९॥**

हस्तिदन्तीत्यादि । हस्तिदन्ती वृहत्फला गोडुम्बा, नागदन्ती भण्यते इत्येके । हैमवती वचा । श्यामा श्याममूला । त्रिवृत् । अधोगुडा वृद्धदारकः । सप्तला चर्मकषा । श्वेतनामा श्वेताऽपराजिता । प्रत्यक्श्रेणी दन्ती । बिम्बी ओष्ठोपमफला । शणपुष्पी घण्टारवः । विषाणिका आवर्तनी । अजगन्धा फोकान्दी । काकाण्डी ख्याता । द्रवन्ती द्रवन्त्येव चीरितपत्रा । क्षीरिणी दुग्धिका । मूलिनीनां वमनादिविनियोगमाह शणपुष्पीत्यादि ॥ ७६–७९ ॥

**शङ्खिन्यथ विडङ्गानि त्रपुषं मदनानि च ।**
**आनूपं स्थलजं चैव क्लीतकं द्विविधं स्मृतम् ॥ ८० ॥**
**प्रकीर्या चोदकीर्या च प्रत्यक्पुष्पी तथाभया ।**
**अन्तःकोटरपुष्पी च हस्तिपर्ण्याश्च शारदम् ॥ ८१ ॥**
**कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च ॥**
**धामार्गवमथेक्ष्वाकु जीमूतं कृतवेधनम् ॥ ८२ ॥**
**मदनं कुटजं चैव त्रपुषं हस्तिपर्णिनी ।**
**एतानि वमने चैव योज्यान्यास्थापनेषु च ॥ ८३ ॥**
**मस्तःप्रछर्दने चैव प्रत्यक्पुष्पी विधीयते ॥ ८४ ॥**
**दश यान्यवशिष्टानि तान्युक्तानि विरेचने ।**
**नामकर्मभिरुक्तानि फलान्येकोनविंशतिः ॥ ८५ ॥**
**सर्पिस्तैलं वसा मज्जा स्नेहो दृष्टश्चतुर्विधः ।**
**पानाभ्यंजनवस्त्यर्थं नस्यार्थं चैव योगतः ॥ ८६ ॥**

शङ्खिनी श्वेतवुह्ना । क्लीतकं यष्टीमधु । अस्य तु यद्यपि मूलं सुश्रुते प्रशस्तं, मूलेनैव व्यवहारः, तथापि विरेचनं प्रति यष्टीमधुद्वयस्यापि फलमेव प्रशस्तं ज्ञेयम् । धामार्गवः पीतघोषकः । इक्ष्वाकुः तिक्तालाबुः । जीमूतो घोषकभेदः । कृतवेधनं ज्योत्स्निका । प्रकीर्योदकीर्ये करंजद्वयम् । प्रत्यक्पुष्पी अपामार्गः । अन्तःकोटरपुष्पी नीलवुह्ना । हस्तिपर्णी मोरटः । अस्याश्च शरत्कालभवमेव फलं ग्राह्यं, अत उक्तं "हस्तिपर्ण्याश्च शारदम्" इति । कम्पिल्लकं गुण्डारोचनी । आरग्वधस्य यद्यपि सुश्रुते पत्रं प्रधानमुक्तं तथापीह फलं प्रधानतमं ज्ञेयम् ।

धामार्गवेत्यादिना पंचकर्मविनियोग उच्यते । नस्तः प्रच्छर्दन इति शिरोविरेचनम् ॥ ८०-८६ ॥

स्नेहना जीवना वर्ण्या बलोपचयवर्धनाः ।
स्नेहा ह्येते च विहिता; वातपित्तकफापहाः ॥ ८७ ॥

महास्नेहेषु सर्पिरादौ पठितं प्राधान्यात् । वचनं हि "नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते । यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्" ॥ ८७ ॥

सौवर्चलं सैन्धवंच विडमौद्भिदमेव च ।
सामुद्रेण सहैतानि पंच स्युर्लवणानि च ॥ ८८ ॥
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च ।
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा ॥ ८९ ॥
अधोभागोर्ध्वभागेषु निरूहेष्वनुवासने ।
अभ्यंजने भोजनार्थे शिरसश्च विरेचने ॥ ९० ॥
शस्त्रकर्मणि वर्त्यर्थमंजनोत्सादनेषु च ।
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे ॥ ९१ ॥
उक्तानि लवणान्यूर्ध्वं मूत्राण्यष्टौ निबोध मे ।
मुख्यानि यानि ह्यिष्टानि सर्वाण्यात्रेयशासने ॥ ९२ ॥

लवणेषु यद्यपि सैन्धवं प्रधानं यतो वक्ष्यति "सैन्धवं लवणानाम्" इत्यग्न्यधिकारे, तथापि सौवर्चलस्य रोचनत्वप्रकर्षात् तथा सैन्धवमनुप्राधान्याख्यापनार्थमित्यग्रे पाठः । औद्भिदं औत्कारिकालवणं, केचित् शांभरिलवणमाहुः । सामुद्रं दक्षिणसमुद्रभवं करकच इति ख्यातम् । अभ्यंजन इति स्नेहाभ्यङ्गे । वर्त्यर्थमिति फलवर्त्याद्यर्थम् ॥ ८८-९२ ॥

अवीमूत्रमजामूत्रं गोमूत्रं माहिषंच यत् ।
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ॥ ९३ ॥
उष्णं तीक्ष्णमथोऽरूक्षं कटुकं लवणान्वितम् ।
मूत्रमुत्सादने युक्तं युक्तमालेपनेषु च ॥ ९४ ॥
युक्तमास्थापने मूत्रं युक्तं चापि विरेचने ।
स्वेदेष्वपि च तद्युक्तमानाहेष्वगदेषु च ॥ ९५ ॥
उदरेष्वथ चार्शःसु गुल्मकुष्ठकिलासिषु ।
तद्युक्तमुपनाहेषु परिषेके तथैव च ॥ ९६ ॥
दीपनीयं विषघ्नं च क्रिमिघ्नं चोपदिश्यते ।
पाण्डुरोगोपसृष्टानामुत्तमं शर्म चोच्यते ॥ ९७ ॥
श्लेष्माणं शमयेत्पीतं मारुतं चानुलोमयेत् ।
कर्षेत्पित्तमधोभागमित्यस्मिन् गुणसंग्रहः ॥
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते ॥ ९८ ॥
अवीमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च ।
आजं कषायमधुरं पथ्यं दोषान्निहन्ति च ॥ ९९ ॥
गव्यं समधुरं किंचित् दोषघ्नं क्रिमिकुष्ठनुत् ।
कण्डूलं शमयेत्पीतं सम्यग्दोषोदरे हितम् ॥ १०० ॥

१ 'लघूनिच' इति पाठः ।

अर्शःशोफोदरघ्नं तु सक्षारं माहिषं सरम् ।
हास्तिकं लवणं मूत्रं हितं तु क्रिमिकुष्ठिनाम् ॥१०१॥
प्रशस्तं बद्धविण्मूत्रविषश्लेष्मामयार्शसाम् ।
सतिक्तं श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते ।
वाजिनां तिक्तकटुकं कुष्ठव्रणविषापहम् ॥ १०२ ॥
खरमूत्रमपस्मारोन्मादग्रहविनाशनम् ।
इतीहोक्तानि मूत्राणि यथासामर्थ्ययोगतः ॥ १०३ ॥

अवीमूत्रमित्यादौ स्त्रीमूत्रमेव प्रशस्तं लिङ्गपरिग्रहाद्दर्शयति । यतः स्त्रीणां लघुत्वान्मूत्रमपि लघु, वचनं हि "लाघवं जातिसामान्ये स्त्रीणां पुंसां च गौरवम्" इति । यत्तूच्यते पुंसां मूत्रं शुक्रसंबन्धाद्गुरु, तन्न शुक्रसम्बन्धस्य स्त्रीणामपि शुक्रवत्त्वेन तुल्यत्वात् वचनं हि "यदा नारी च नार्या च मैथुनायोपपद्यते । मुंचतः शुक्रमन्योऽन्यमनस्थिस्तत्र जायते" इत्यादि । नपुंसकमूत्रत्वमङ्गलत्वान्न गृह्यते । अगदेष्वित्यनेनागदप्रयोगयौगिकत्वम् । विषघ्नमित्यनेन च केवलस्यैव विषहन्तृत्वमिति न पौनरुक्त्यम् । शर्म चोच्यत इति आरोग्यरूपसुखकर्तृत्वात् । अधोभागमित्यधोमार्गेण पित्तं कर्षेत् । किंवा यदेवाधोगतं पित्तं तदेव विरेचयति नोर्ध्वगं यथासामर्थ्ययोगत इति यादृशः शक्तियोगो मूत्राणां तथा ॥ ९३-१०३ ॥

अतः क्षीराणि वक्ष्यन्ते कर्म चैषां गुणाश्च ये ।
अवीक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत् ॥ १०४ ॥
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा ।
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयो मतम् ॥१०५॥
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम् ।
जीवनीयं श्रमहरं श्वासकासनिबर्हणम् ॥ १०६ ॥
हन्ति शोणितपित्तं च सन्धानं विहतस्य च ।
सर्वप्राणभृतां सात्म्यं शमनं शोधनं तथा ॥ १०७ ॥
तृष्णाघ्नं दीपनीयं च श्रेष्ठं क्षीणक्षतेषु च ।
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे ॥१०८॥
अतीसारे ज्वरे दाहे श्वयथौ च विधीयते ।
योनिशुक्रप्रदोषेषु मूत्रेष्वप्रदरेषु च ॥ १०९ ॥
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम् ।
नस्यालेपावगाहेषु वमनास्थापनेषु च ॥ ११० ॥
विरेचने स्नेहने च पयः सर्वत्र युज्यते ।
यथाक्रमं क्षीरगुणानेकैकस्य पृथक् पृथक् ।
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः ॥ १११ ॥

प्रायशो मधुरमिति प्राधान्येन मधुरम् । तेन क्षीरमुष्ट्रीणामीषल्लवणं तथा छागं कषायमित्यादौ रसान्तरस्याप्राधान्येनानुबन्धोऽपि क्षीरे भवतीति दर्शयति । प्रायश इति बृंहणं स्निग्धमित्येताभ्यां तथा शीतमित्यनेन च संबध्यते तेनोष्ट्रस्य रूक्षोष्णत्वाभिधानं न विरोधि । स्तन्यमिति स्तन्यवृद्धिकरम् । मनस्करमिति प्रभावादेवोजस्करत्वाच्चोजोवृद्ध्या हि तदनुविधायिनो मनसोऽपि स्वकर्मसामर्थ्यं स्यात् । एतदेव च नि-

ख्येह मनसः करणं यन्मनसः प्रकर्षवुध्युत्कर्षादिगुणकरणम् । हन्ति शोणितपित्तमिति अवस्थाविशेषापन्नमेव शोणितपित्तं हन्ति । वचनं हि "कषाययोगैर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च । यद्रक्तपित्तं प्रशमं न याति तत्रानिलः स्यादनु तत्र कार्यम् । छागं पयः स्यात्परमं प्रयोगो गव्यं शृतं पंचगुणे जले वा" । एवंच यदुच्यतेऽधोभागे रक्तपित्ते सरत्वात् क्षीरमयौगिकं, ऊर्ध्वगे च कफकर्तृतयाऽयौगिकमिति तन्निरस्तम्। सर्वप्राणभृतां सात्म्यं इत्यत्र सर्वशब्दश्चिकित्स्यतया प्रकृतसर्वमनुष्येष्वेव वर्तते । तेन क्षीरस्य संस्वेदजादिप्राण्यसात्म्यत्वं नोद्भावनीयम्। किंवा सर्वशब्दोऽयं भूरिवचनः ॥१०४–१११॥

**अथापरे त्रयो वृक्षाः पृथग् ये फलमूलिभिः[१] ।**
**स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म पृथक् पृथक् ॥११२॥**
**वमनेऽश्मन्तकं विद्यात्स्नुहीक्षीरं विरेचने ।**
**क्षीरमर्कस्य विज्ञेयं वमने सविरेचने ॥ ११३ ॥**

फलमूलिभिरिति पृथक्शब्दयोगादपादाने तृतीया । अश्मन्तको माल्लुयासदृशपत्रोवृक्षः ॥ ११२–११३ ॥

**इमांस्त्रीनपरान् वृक्षानाहुर्येषां हितास्त्वचः ।**
**पूतीकः कृष्णगन्धा च तिल्वकश्च तथा तरुः ॥११४॥**
**विरेचने प्रयोक्तव्यः पूतीकस्तिल्वकस्तथा ।**
**कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते ॥ ११५ ॥**
**दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च ।**
**षड्वृक्षान् शोधनानेतानपि विद्याद्विचक्षणः ॥११६॥**
**इत्युक्ताः फलमूलीभिः स्नेहाश्च लवणानि च ।**
**मूत्रं क्षीराणि वृक्षाश्च षड् ये दृष्टाः पयस्त्वचः ॥११७**

पूतीकः कण्टकीकरंजः । तिल्वको लोध्रः । तथा तरुरिति विशेषणेन पट्टिकालोध्रं व्युदस्यति । शावरलोध्रं च महाप्रमाणं तरुशब्दयोग्यं ग्राहयति । किंवा तरुविशेषणं बालं लोध्रं व्युदस्यति । षड्वृक्षान् शोधनानित्यत्र यद्यपि कृष्णगन्धायाः पंचकर्मण्यनभिधानान्न शोधनत्वं तथापि बाह्यलेपनेन बहिःस्थितदोषसंशोधनं बोद्धव्यम्। किंवा अपिशब्दात् कृष्णगन्धाया अपि शोधनत्वमपि सूच्यते ॥ ११४–११७ ॥

**ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने ।**
**अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥ ११८॥**
**न नामज्ञानमात्रेण रूपमात्रेण वा पुनः ।**
**ओषधीनां परां प्राप्तिं कश्चिद्वेदितुमर्हति ॥ ११९ ॥**
**योगविन्नामरूपज्ञस्तासां तत्त्वविदुच्यते ।**
**किंपुनर्यो विजानीयादोषधीः सर्वथा भिषक् ॥१२०॥**
**योगमासां तु यो विद्याद्देशकालोपपादितम् ।**
**पुरुषं पुरुषं वीक्ष्य स ज्ञेयो भिषगुत्तमः ॥ १२१ ॥**

उक्तानामोषधीनां योगज्ञानस्य प्राधान्यं दर्शयन्नाह ओषधीरित्यादि ।—परां प्राप्तिमित्युत्कृष्टं व्याधिशरीराद्यपेक्षं सम्यग्योगम् । योगो व्याधिशरीराद्यपेक्षया सम्यग्योजना भेषजस्य । सर्वथेति नामरूपयोगैः । योगमेव विशिष्टं दर्शयन्नाह योगमित्यादि । देशकालोपपादितमिति देशकालकृतम् । पुरुषं पुरुषं वीक्ष्येति वीप्सायां, प्रतिपुरुषं प्रकृत्यादिभेदेन योगस्य प्रायो भेदो भवतीति दर्शयति । पुरुषशब्देन चेतनामात्रयोगिपुरुषोऽभिप्रेतः ॥ ११८–१२१ ॥

**यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा ।**
**तथौषधमविज्ञातं विज्ञातममृतं यथा ॥ १२२ ॥**
**औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः ।**
**विज्ञातंचापि दुर्युक्तमनर्थायोपपद्यते ॥ १२३ ॥**

योगस्यौषधज्ञानाधीनत्वादौषधाज्ञानस्य महानर्थकारितां बहुभिर्दृष्टान्तैर्दर्शयति यथाविषमित्यादि । विषादिबहुदृष्टान्तेनाज्ञातं भेषजं किंचिद्विषवत् संज्ञानाशं कृत्वा मारयति, किंचिच्च शस्त्रवन्मर्मच्छेदं कृत्वा मारयति, किंचिच्चाग्निवत्स्फोटादिकं कृत्वा मारयति, किंचिच्चाशनिवत्सद्यो मारयति । नामरूपगुणैरित्यनेन त्रित्वे लब्धे पुनस्त्रिभिरिति वचनं एकैकज्ञाननिषेधार्थम्। तेन त्रिभिरेव मिलितैर्ज्ञातं भेषजं प्रशस्तमिति दर्शयति ॥ १२२–१२३ ॥

**योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत् ।**
**भेषजं चापि दुर्युक्तं तीक्ष्णं संपद्यते विषम् ॥ १२४ ॥**
**तस्मान्न भिषजा युक्तं युक्तिबाह्येन भेषजम् ।**
**धीमता किंचिदादेयं जीवितारोग्यकाङ्क्षिणा ॥ १२५ ॥**
**कुर्यान्निपातितो मूर्ध्नि सशेषं वासवाशनिः ।**
**सशेषमातुरं कुर्यान्नत्वज्ञमतमौषधम् ॥ १२६ ॥**
**दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।**
**यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥ १२७ ॥**
**त्यक्तधर्मस्य पापस्य मृत्युभूतस्य दुर्मतेः ।**
**नरो नरकपाती स्यात्तस्य संभाषणादपि ॥ १२८ ॥**
**वरमाशीविषविषं क्वथितं ताम्रमेव वा ।**
**पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः ॥ १२९ ॥**
**नतु श्रुतवतां वेशं बिभ्रता शरणागतात् ।**
**गृहीतमन्नं पानं वा वित्तं वा रोगपीडितात् ॥१३०॥**
**भिषग्बुभूषुर्मतिमानतः स्वगुणसम्पदि ।**
**परं प्रयत्नमातिष्ठेत् प्राणदः स्याद्यथा नृणाम् ॥ १३१॥**

योगं स्तौति योगादपीत्यादि ।—विषंच सम्यग्योगाद्भेषजं भवतीति "विषस्य तु तिलं दद्यात्" इत्यादिप्रयोगे बोद्धव्यम् । न केवलमातुरेणैवाभिषजो भेषजं नादेयं किन्तु भिषजापि युक्तिबाह्येन भेषजमातुराय न देयमित्याह दुःखितायेत्यादि ॥ १२४–१३१ ॥

१ 'फलमूलिनः' इति पाठः ।

**तदेव युक्तं भैषज्यं यदारोग्याय कल्पते।**
**सचैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत्॥१३२॥**

अथ सम्यग्युक्तस्य भेषजस्य किं लक्षणं किंवा उपादेयस्य श्रेष्ठवैद्यस्य किं लक्षणमित्याह तदेवेत्यादि। रोगेभ्यो यः प्रमोचयेदित्यनेन च ज्ञानपूर्वं भेषजप्रयोगेण रोगहारकत्वमुच्यते। तेन यादृच्छिकसिद्ध्या कुवैद्यव्यवहारो न वाच्यः यादृच्छिकसिद्धौ हि वैद्यो न रोगप्रमोक्षे कारणं किन्तु घुणाक्षरन्यायादेवागतो भेषजस्य सम्यग्योग इति॥ १३२॥

**सम्यक् प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम्।**
**सिद्धिराख्याति सर्वैश्च गुणैर्युक्तं भिषक्तमम्॥१३३॥**

तत्र श्लोकाः।

**आयुर्वेदागमो हेतुरागमस्य प्रवर्त्तनम्।**
**सूत्रणस्याभ्यनुज्ञानं आयुर्वेदस्य निर्णयः॥ १३४॥**
**सम्पूर्णं कारणं कार्यमायुर्वेदप्रयोजनम्।**
**हेतवश्चैव दोषाश्च भेषजं संग्रहेण च॥ १३५॥**
**रसाः सप्रत्ययद्रव्यास्त्रिविधो द्रव्यसंग्रहः।**
**मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च॥१३६॥**
**मूत्रं क्षीराणि वृक्षाश्च षड् ये क्षीरत्वगाश्रयाः।**
**कर्माणि चैषां सर्वेषां योगायोगगुणागुणाः॥१३७॥**
**वैद्यापवादो यत्रस्थाः सर्वे च भिषजां गुणाः।**
**सर्वमेतत्समाख्यातं पूर्वाध्याये महर्षिणा॥ १३८॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने दीर्घञ्जीवितीयोनाम प्रथमोऽध्यायः।**

अध्यायोक्तमर्थमध्यायान्ते संग्रहेणाभिधत्ते आयुर्वेदागम इत्यादिना। संग्रहकथनंच पूर्वोक्तार्थस्य सङ्क्षेपेण ग्रहणार्थं तथा दुर्ज्ञानप्रतिषेधार्थंच। यतो यत्किंचिदत्र दुर्ज्ञानं स्यात्तदिह प्रतिपादितार्थत्वेनाभिधासंवादेनावधार्यते। वचनं हि "गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते। तद्व्यक्तिव्यवसायार्थं द्विरुक्तिः सा न गृह्यते"। अत्र च गद्योक्त इति विस्तरोक्तोपलक्षणम्। तेन श्लोकोक्तस्याप्यारग्वधीयाद्यर्थस्य पुनः श्लोकेन संग्रहणमविरुद्धम्। व्यक्तिः स्पष्टता। व्यवसायोऽवधारणम्। आगम इतिदीर्घंजीवितमन्विच्छन्नित्यादिना। हेतुरित्यायुर्वेदागमहेतुः, स च विघ्नभूता यदा रोगा इत्यादिना रोगप्रादुर्भाव उक्तः। किंवा दीर्घं जीवितमन्विच्छन्नित्यादिश्लोकोऽविशेषेणायुर्वेदागमस्य तथायुर्वेदागमहेतोश्च पिण्डसूत्ररूपः। ब्रह्मणाहीत्यादिग्रन्थस्त्वायुर्वेदागमप्रतिपादकः। हेतुप्रतिपादकस्तु विघ्नभूता इत्यादि ग्रन्थो यथोक्त एव। आगमस्य प्रवर्त्तनमिति इन्द्रादीनां भरद्वाजेन मर्त्यलोके प्रवर्त्तनमायुर्वेदग्रहणपर्यन्तम्। सूत्रणमित्यायुर्वेदतन्त्रकरणमग्निवेशादीनाम्। अभ्युनुज्ञानमिति तानि चानुमतानीत्यादि। शेषं सुगमम्॥ १३३-१३८॥

इति दीर्घंजीवितीयः समाप्तः॥

---

# द्वितीयोऽध्यायः।

**अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्यामः॥१॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

**अपामार्गस्य बीजानि पिप्पलीर्मरिचानि च।**
**विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च॥ १॥**
**अजाजीं चाजगन्धां च पीलून्येलां हरेणुकाम्।**
**पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्जकौ॥ २॥**
**शिरीषबीजं लशुनं हरिद्रे लवणद्वयम्।**
**ज्योतिष्मतीं नागरंच दद्याच्छीर्षविरेचने॥ ३॥**
**गौरवे शिरसः शूले पीनसेऽर्द्धावभेदके।**
**क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके॥ ४॥**

दीर्घजीवितीये मूलिन्यश्च फलिन्यश्च पंचकर्माङ्गभूता उक्ताः। अपराण्यपि च पिप्पलीमरिचप्रभृतीनि पंचकर्मसाधनानि भवन्ति। तथा पंचकर्मप्रवृत्तिविषयोऽपि तत्र नोक्तः। तेनानन्तरं शेषपंचकर्मोपयोगिद्रव्यपंचकर्मप्रवृत्तिविषयाभिधायकोऽपामार्गतण्डुलीयोऽभिधीयते। पूर्वोक्तान्यपि चापामार्गादीनि यतः पुनरिहाभिधीयन्ते तदाचार्य एवाध्यायान्ते "पूर्वं मूलफल" इत्यादिना श्लोकद्वयेन समाधास्यति। अपामार्गबीजीय इति संज्ञायां प्राप्तायामपामार्गतण्डुलीय इतिसंज्ञाकरणमपामार्गादिबीजादीनां निस्तुषाणामेव ग्रहणार्थम्। अध्यायसंज्ञां तण्डुलेन कृत्वापामार्गस्य बीजानीति यद्बीजशब्दं करोति तदङ्कुरजननसमर्थबीजभवानामेव तण्डुलानां ग्रहणार्थम्। यद्यपि च इहोत्सर्गतः पंचकर्मप्रवृत्तिर्वमनपूर्विकैव स्यात्। यदुक्तं "साधारणेष्वृतुषु वमनादीनां प्रवृत्तिर्भवति" इत्यादि। तथा सुश्रुतेऽप्युक्तं—"अवान्तस्य हि सम्यग्विरिक्तस्याप्यधःस्रस्तः श्लेष्मा ग्रहणीमाच्छादयति" इत्यादि। तथापि क्वचित् प्रबलदोषापेक्षयाऽन्यथापि क्रमो भवति यथा शरद्युद्रिक्ते पित्ते विरेचनादि तथा प्रावृषि प्रबलवाते वस्त्यादिरित्यनियमार्थमिह शिरोविरेचनमादावभिहितम्। यदि वा, प्रधानाङ्गशिरःशोधनत्वात् शिरोविरेचनमादौ कृतम्। यदुक्तं "यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते" इति। शालक्येऽप्युक्तं "अनामये यथा मूले वृक्षः सम्यक् प्रवर्द्धते। अनामये शिरस्येवं देहः सम्यक् प्रवर्द्धते"। अपामार्गाभिधानमादौ शिरोविरेचनप्राधान्यात्। यदुक्तं "प्रत्यक्पुष्पी शिरोविरेचनानाम्। अजगन्धा अजमोदा, फोकान्धीति केचित्'। पीलु औत्तरापथिकं फलम्। लवणद्वयं लवणवर्गादिपठितं सौवर्चलं सैन्धवंच। अयं वर्गो व्यस्तः समस्तश्च शिरोविरेचने प्रयोज्यो गणत्वात्। यदुक्तं "परिसंख्यातमपि हि यद्द्रव्यमयौगिकं मन्येत तदपहरेत्" इति। अन्यत्राप्युक्तं "समस्तं वर्गमर्धं वा यथालाभमथापि वा" इति। शिरस इति गौरव इत्यनेन शूल इत्यनेन च संबध्यते। क्रिमिव्याधिरिह शिरोगत एव बोद्धव्यः। तत्रैव शिरोविरेचनस्य समर्थत्वात्। प्रमोहकोमूर्च्छा, इन्द्रियापटुत्वं वा॥ १-४॥

१ 'चाजमोदां च' इति पाठः।

**मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।**
**पिप्पलीकुटजेक्ष्वाकून्येलां धामार्गवाणि च ॥ ५ ॥**
**उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।**
**वमनार्थं प्रयुंजीत भिषग् देहमदूषयन् ॥ ६ ॥**

वमनद्रव्ये आदौ मदनं । प्राधान्यात् । उक्तंहि "वमनद्रव्ये मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्" । उपस्थित इति आमाशयोर्ध्वभागे श्लेष्मणः स्थानं गत्वोत्क्लेशं गतमिति व्याख्येयम् । श्लेष्मपित्त इति श्लेष्मपित्ते श्लेष्मणि पित्ते च । पित्तंच यद्यपि साक्षान्न वमनविषयं तथापि श्लेष्मस्थानगतत्वेन श्लेष्मसंबन्धाद्वमनविषयम् । यदुक्तं "दोषस्थानगतं दोषं स्थानिवत्समुपाचरेत्" इति । देहमदूषयन्निति यद्यपि वमने प्रोक्तं तथापि विरेचनादिष्वपि बोद्धव्यम् । तत्राप्यतियोगायोगमिथ्यायोगैर्देहदुष्टिशङ्कायाः समानत्वात् । उच्यते च न्यायविद्भिर्यत् "समानेष्वर्थेषु एकत्राभिहितो विधिरन्यत्राप्यनुषंजनीयः" इति ॥ ५–६ ॥

**त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।**
**कम्पिल्लकं गवाक्षीं च क्षीरिणीमुदकीर्यकाम् ॥ ७ ॥**
**पीलुन्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।**
**पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ ८ ॥**

वमनमनुविरेचनाभिधानं शिरःपूर्वकदेहशोधनाभिधानानुक्रमेणामाशयोर्ध्वभागशोधनानन्तरमामाशयाधोभागस्थितपित्तहरत्वेन । एवं विरेचनानन्तरं वस्त्यभिधानेऽपि वाच्यम् । त्रिवृदादावुच्यते विरेचनद्रव्येषु श्रेष्ठत्वात् । उक्तं हि "त्रिवृत् सुखविरेचनानाम्" इति । नीलिका नीलबुह्वा । क्षीरिणी दुग्धिका । द्रवन्ती दन्तीभेदः । निचुलं हिज्जलमिति प्रसिद्धम् । पक्वश्चासावाशयगतश्चेति पक्वाशयगतः । तेन पित्ताशय एवामाशयाधोभागलक्षणे दोषो विरेचनविषयो भवति न पक्वाशयगतः । दोषशब्देन चेह विरेचननिर्हरणयोग्यत्वात्पित्तं कफपित्तंवा गृह्यते । यदुक्तं "पित्तंवा कफपित्तंवा पित्ताशयगतं हरेत् । स्रंसनं[1] त्रीन् मलान् वस्तिर्हरेत्पक्वाशयस्थितान्" । यदि वा पक्वाशयसमीपगतत्वेनाधःप्रवृत्युन्मुखो दोषः पक्वाशयगत इत्युच्यते यथा गङ्गायां घोष इति ॥ ७–८ ॥

**पाटलिं[2] चाग्निमन्थंच विल्वं श्योनाकमेव च ।**
**काश्मर्यं शालपर्णीं च पृश्निपर्णीं निदिग्धिकाम् ॥९॥**
**बलां श्वदंष्ट्रां बृहतीमेरण्डं सपुनर्नवम् ।**
**यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च १०**
**पलाशं कत्तृणं चैवं स्नेहांश्च लवणानि च ।**
**उदावर्त्ते विबन्धेषु युंज्यादास्थापनेषु च ॥ ११ ॥**
**अतएवौषधगणात्सङ्कल्प्यमनुवासनम् ।**
**मारुतघ्नमिति प्रोक्तः संग्रहः पांचकर्मिकः ॥ १२ ॥**

पाटलमित्यादिनाऽनुवासनात्प्राङ्निरूहाभिधानं । निरूहस्य दोषहरणप्रधानत्वात् । कत्तृणं गन्धतृणम् । स्नेहाः सर्पिस्तैलवसामज्जानः । लवणानि सैन्धवादीनि । रोगभिषग्जितीये वस्त्यर्थ मुख्यान्युक्तानि गणेन । अतएवेति निरूहोक्तपाटल्यादिगणात् । संकल्प्यमनुवासनमित्यनेन स्नेहसाधनं ब्रूते । अनुवासनं हि स्नेह एव स्यात् अनुवासनार्थं स्नेहसाधनद्रव्यं पृथङ्नोक्तम् । निरूहार्थोक्तभेषजगणेनैव तत्सिद्धेः। मारुतघ्नमित्यनेनानुवासनप्रवृत्तिविषयं दर्शयति । मारुते हन्तव्येऽनुवासनं प्रकल्प्यमित्यर्थः। यदि वा पाटलादिर्मारुतहराद्गणान्मारुतघ्नमनुवासनं संकल्प्यम्। अन्यत्र तु पित्तहरणाद्गणात्पित्तघ्नं, तथा श्लेष्महराद्गणात् श्लेष्मघ्नमिति सूचयति । संग्रह इत्यनेन रोगभिषग्जितीये कल्पे सिद्धौ च वक्ष्यमाणपंचकर्मप्रपंचं सूचयति ॥ ९–१२ ॥

**तान्युपहितदोषाणां स्नेहस्वेदोपपादनैः ।**
**पंच कर्माणि कुर्वीत मात्राकालौ विचारयन् ॥ १३ ॥**

पंचकर्म यथा कर्त्तव्यं तथा तानीत्यादिना दर्शयति । तानीत्यादि पूर्वोक्तानि । स्नेहस्वेदोपपादनैरिति बहुवचनं नानाविधस्नेहस्वेदोपदर्शनार्थम् । उपस्थितदोषाणामिति शाखां त्यक्त्वा कोष्ठगमनेन तथा लीनत्वपरित्यागेन प्रधानावस्थाप्राप्तदोषाणाम् । तत्र पंचकर्मप्रवृत्तावुपस्थितदोषत्वमेव हेतुः । तद् यदि स्नेहस्वेदोपपादनमन्तरापि स्यात् । यथा ज्वरे "कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान् । बुध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत्" इति । तत्र स्नेहस्वेदावन्तरेणापि वमनप्रवृत्तिर्भवत्येव । स्नेहस्वेदोपपादनं तु प्रायिकत्वेन तथा ऽन्यथोपस्थितदोषेऽपि स्तोकमात्रया पंचकर्मप्रवृत्तिक्लेश[illegible]जयार्थं क्रियमाणत्वेनोक्तम् । मात्राकालयोर्विचार्यत्वेन ग्रहणं प्राधान्यात् । तेन दोषभेषजादयोऽपि विचार्यत्वेनेह बोद्धव्याः । यदि वा पूर्ववत् कालग्रहणादेव शेषाणां दोषादीनामवरोधो व्याख्येयः । तानीत्युक्तेऽपि पुनः पंचग्रहणं पंचानामप्युपस्थितदोषाणां वमनादीनां प्रवृत्युपदेशार्थम् । इह वमनादिषु कर्मलक्षणं बह्वितिकर्तव्यतायोगिदोषनिर्हरणशक्तिज्यायस्त्वम् । तेन तन्त्रान्तरेण स्नेहस्वेदौ प्रक्षिप्य सप्तकर्माणीति यदुच्यते तन्न स्यात् । नहि स्नेहस्वेदौ दोषबहिर्निःसरणं कुरुतः, दोषसंशमनं तु कुरुतः । पंचकर्माङ्गत्वेन व्याप्रियमाणौ स्नेहस्वेदौ दोषोपस्थान एव परं व्याप्रियेते । नहि दोषनिर्हरणे वमनादिसंपाद्ये । अनुवासनन्तु यद्यपि वमनादिवन्न बहुदोषनिर्हरणकारणं स्यात्तथापि पुरीषस्य पक्वाशयगतवातस्य च बहिर्निर्हारकत्वात्कर्मलक्षणप्राप्तमेव । निष्ठीवननेत्राञ्जनादौ तु न स्नेहस्वेदादिवद्बह्वितिकर्तव्यतायोगो नच बहुदोषनिर्हारकत्वम् । तेन न तत्कर्मशब्दवाच्यम् । उत्तरवस्तिस्तु स्नेहरूपो निरूहः स्नेहवस्तावेवान्तर्भवति । यदिवेह वमनादिषु पंचकर्मसु पङ्कजशब्दवद्योगरूढेयं संज्ञा । तेन न स्नेहस्वेदनिष्ठीवनादिषु वर्तते ॥ १३ ॥

१ पक्तव्यं यदपक्त्वैव श्लिष्टंकोष्ठे मलादिकं । नयत्यधःस्रंसनं तद्यथास्यात्कृतमालकः ॥ इति स्रंसनलक्षणम् । २ 'पाटलाम्' ।

**मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता ।**
**तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ १४ ॥**

मात्राकालविचारफलमाह मात्राकालेत्यादि ।—युक्तिर्योजना। भेषजस्य देहदोषाद्यपेक्षया युक्तिं स्तौति सिद्धिरित्यादिना। सिद्धिरिह विकारोपशमस्य साध्यस्य निष्पत्तिः ॥ १४ ॥

**अत ऊर्द्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।**
**विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥ १५॥**
**पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।**
**यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥ १६ ॥**

इदानीं, वमनादीनामयोगान्मंदीभूतस्य वह्नेः सन्धुक्षणार्थं तथा वमनादिष्वप्रयोगजनितस्य शूलादेः प्रशमार्थं प्रतिज्ञापूर्वकं यवागूरभिधत्ते अतऊर्ध्वमित्यादि । उक्तं हि ।"यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण । महान् स्थिरःसर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः" इति । पिप्पल्यादियवागूनिर्देश उपसाधितेति वचनं भेषजपानीयतण्डुलादिप्रकृतिद्रव्याणामुचितपरिमाणग्रहणार्थम् । साक्षाद्भेषजादीनां प्रमाणमिह नोक्तं मात्राया अग्न्यादिभेदेनानवस्थितत्वात् । यदुक्तं "मात्राया नास्त्यवस्थानं दोषमग्निबलं वयः । व्याधिं द्रव्यंच कोष्ठंच वीक्ष्य मात्रां प्रयोजयेत्" इति । यद्यप्येवं तथापि परिभाषादर्शनात् वृद्धवैद्यव्यवहारदर्शनाच्च यथाकर्त्तव्यं तदुच्यते । यवागूसाधनद्रव्यं तावद्द्विविधं वीर्यप्रधानमौषधद्रव्यं तथा रसप्रधानमाहारद्रव्यंच । तत्राप्यौषधद्रव्यं त्रिविधं वीर्यभेदात् । तीक्ष्णवीर्यं यथा शुण्ठ्यादि । मध्यवीर्यं विल्वाग्निमन्थादि । मृदुवीर्यं चामलकादि । इत्यत्र तीक्ष्णानां कर्षः । मध्यानामर्धपलं । मृदूनां पलमित्युत्सर्गः । यदुक्तमग्निवेशेन "कर्षार्द्धं वा कणाशुंठ्योः कल्कद्रव्यस्य वा पलम् । विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापरां" इति । अत्र मध्यवीर्याणामर्धपलमात्रा नोक्ता सा मध्यप्रमाणग्रहणाद्बोद्धव्या । तथा जीवन्त्यजाजीशटीपुष्कराह्वैरित्यादिकायां पेयायां नवभिर्द्रव्यैः कोलप्रमाणैर्मिलित्वा पलमदूरान्तरं स्यात् तच्च मृदुवीर्याभिप्रायेणैव । "क्वाथ्यद्रव्यांजलिं क्षुण्णं श्रपयित्वा जलाढके । अर्धश्रृते तु तेनाथ यवाग्वाद्युपकल्पयेत्" इति । अत्र चतुःपलद्रव्याभिधानं रसप्रधानद्रव्याभिप्रायेणैव । तेन "सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता" इत्यादावियं परिभाषा बोद्धव्या। षडङ्गसाधनपरिभाषायां—"यदप्सु श्रृतशीतासु षडङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि । अर्धश्रुतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति पेयां प्रति कर्षद्रव्याभिधानं मध्यवीर्यस्यापि षडङ्गस्य मन्दानलपुरुषाभिप्रायेण बोद्धव्यम् । वारिमानं तु षडङ्गादिपरिभाषायां कर्षद्रव्ये वारिप्रस्थोऽभिहितः । तदनुसारेणान्यत्रापि जलोत्कर्षो बोद्धव्यः। कल्कसाध्या तु यवागूर्यत्र स्यात्तत्र सूदशास्त्रोक्तपरिमाणाज्जलं ग्राह्यम् । यदुक्तं "अन्नं पंचगुणे साध्यं विलेपी च चतुर्गुणे । मंडश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि" । एतत्र "पंचगुणे" इत्यादि तंडुलभेषजसमुदायाद्बोद्धव्यम् । यवागूप्रकृतिभूततंडुलमानं तु सुश्रुतवचनात् बोद्धव्यम् । यदुक्तं "विलेपीमुचिताद्भक्ताच्चतुर्भागकृतां भिषग्" इत्यादि । तथा "यवागूः स्वल्पतण्डुला" इति ॥ १५–१६ ॥

**दधित्थबिल्वचांगेरीतक्रदाडिमसाधिता ।**
**पाचनी ग्राहिणी पेया सवाते पांचमूलिकी ॥ १७ ॥**
**शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।**
**दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् १८**

पंचकोलसाधिता यवागूरादावुच्यते । पंचकर्मक्षीणाग्निवृद्धिहेतुत्वेन । दधित्थः कपित्थः । तक्रमिह जलार्थकारकम् । ग्राहिणीति छेदः । सवात इति सवातेऽतीसारे । यदुक्तं शारीरे जतूकर्णे "ध्रुवाद्यैर्वाय्वतीसारे" इति । ध्रुवादिर्विदारिगन्धादिः । पृश्निपर्णी वर्तुलपत्रा सिंहपुच्छी । दाडिमाम्लेति वचनेन यावता दाडिमेनाम्लत्वं स्यात्तावन्मानं. दाडिमं दर्शयति ॥ १७–१८ ॥

**पयस्यर्धोदके च्छागे ह्रीवेरोत्पलनागरैः ।**
**पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥ १९॥**
**दद्यात् सातिविषां पेयां सामे साम्लां सनागराम् ।**
**श्वदंष्ट्राकण्टकारिभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥२०॥**
**विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ।**
**तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका २१**
**मृद्धिकाशारिवालाजापिप्पलीमधुनागरैः ।**
**पिपासाघ्नी विषघ्नी च सोमराजीविपाचिता ॥२२॥**
**सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता ।**
**गवेधुकानां भृष्टानां कर्षणीया समाक्षिका ॥ २३ ॥**
**सर्पिष्मती बहुतिला स्नेहनी लवणान्विता ।**
**कुशामलकनिर्यूहश्यामाकानां विरुक्षणी ॥ २४ ॥**
**दशमूलीशृता कासाहिक्काश्वासकफापहा ।**
**यमके मदिरासिद्धा पक्वाशयरुजापहा[1] ॥ २५ ॥**
**शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति ।**
**जम्ब्वाम्रास्थिदधित्थाम्लबिल्वैःसांग्राहिकी मता२६**
**क्षारचित्रकहिंग्वम्लवेतसैर्भेदिनी मता ।**
**अभयापिप्पलीमूलविश्वैर्वातानुलोमनी[2] ॥ २७ ॥**

पयस्यर्धोदक इत्यादौ—नागरं मुस्तम् । यदुक्तं जतूकर्णे "रक्तातीसारेऽजाक्षीरकोष्ट्रीघनजलोत्पलैः" इति । पृश्निपर्ण्या चेति रक्तातीसारघ्नयवाग्वामेव । साम्लामिति दाडिमाम्लामिति बोद्धव्यम् । श्वदंष्ट्रेत्यादौ जतूकर्णः पृश्निगोकण्टकगुडैर्मूत्रार्तिवस्तिशूलनुत्"। सुवर्चिका सर्जिकाक्षारः । पिपासाघ्नीति छेदः । सोमराजी अवल्गुजः । गवेधुको घुलुंच । गवेधुकश्च तण्डुलस्थाने । श्यामाकस्तृणविशेषः । तस्य च बीजतण्डुला ग्राह्याः । यमके घृततैले । मदिरा द्रवस्थाने । शाकादिभिः समानैर्यवागूर्मन्तव्या ।

१ 'रुजापहा' इति पाठः. २ 'विल्वैर्वातानुलोमनी' इति पाठः।

दधित्थाम्लशब्देन कपित्थस्याम्लावस्थायामेव ग्रहणं दर्शयति —क्षार इति । क्षारो यवक्षारः ॥ १९ ॥ २७ ॥

**तक्रसिद्धा यवागूः स्यात् घृतव्यापत्तिनाशिनी ।**
**तैलव्यापदि शस्ता स्यात् तक्रपिण्याकसाधिता २८**
**गव्यमांसरसैः साम्ला विषमज्वरनाशिनी ।**
**कण्ठ्या यवानां यमके पिप्पल्यामलकैः शृता ॥२९॥**
**ताम्रचूडरसे सिद्धा रेतोमार्गरुजापहा ।**
**समाषविदला वृष्या घृतक्षीरोपसाधिता ॥ ३० ॥**
**उपोदिकादधिभ्यां तु सिद्धा मदविनाशिनी ।**
**क्षुधं हन्यादपामार्गक्षीरगोधारसैः शृता ॥ ३१ ॥**

तक्रसिद्धेति तक्रकृतोदककार्या । पिण्याकस्तिलकल्कः । यमक इत्यनेन यमकेन परिभर्जनं दर्शयति । समाषविदलेत्यादौ तण्डुलेन माषविदलस्य तुल्यमानता । क्षीरंच जलस्थाने । घृतंच परिभर्जने किंवा माषप्रकृतिकेवेयं । मदशब्देन विषजरौधिरमद्यमदानां त्रयाणामपि ग्रहणमविशेषाभिधानात् । क्षुधं हन्यादित्यादौ अपामार्गतण्डुलास्तण्डुलस्थाने । क्षीरगोधामांसरसौ तु जलस्थाने ॥ २८–३१ ॥

**तत्र श्लोकाः ।**

**अष्टाविंशतिरित्येता यवाग्वः परिकीर्तिताः ।**
**पञ्चकर्माणि चाश्रित्य प्रोक्तो भैषज्यसंग्रहः ॥ ३२ ॥**
**पूर्वं मूलफलज्ञानहेतोरुक्तं यदौषधम् ।**
**पञ्चकर्माश्रयज्ञानहेतोस्तत् कीर्तितं पुनः ॥ ३३ ॥**

प्रतिलोमतन्त्रयुक्त्याऽध्यायसंग्रहं करोति—अष्टाविंशतिरित्यादि । दीर्घंजीवितीये मूलिनीफलिनीगणपठितानामपामार्गजीमूतादीनां पुनर्वचने उपपत्तिमाह—पूर्वमित्यादि । मूलफलज्ञानहेतोरिति अस्य मूलेन व्यवहारः अस्य फलेन व्यवहार इतिज्ञातुमित्यर्थः । पंचकर्मणामाश्रयः । आश्रयशब्दश्च भावप्रधानः । तेन पंचकर्माश्रयत्वे ज्ञानार्थमिति फलति । यद्यपि मूलिन्यश्च फलिन्यश्च दीर्घंजीवितीयेऽपि शणपुष्पी विम्बी चेत्यादिना ग्रन्थेन पंचकर्माश्रयत्वेनाप्युक्ताः । तथापीह मुख्यप्रपंचेनाभिधीयमानपंचकर्माश्रयद्रव्यगणेऽभिधानात्पंचकर्माश्रयत्वेनाप्राधान्यं वाऽपामार्गादीनां सङ्केतम् । अत उक्तं "पञ्चकर्माश्रयज्ञानहेतोस्तत्कीर्तितं पुनः" इति ॥ ३२–३३ ॥

**स्मृतिमान् हेतुयुक्तिज्ञो जितात्मा प्रतिपत्तिमान् ।**
**भिषगौषधसंयोगैश्चिकित्सां कर्तुमर्हति ॥ ३४ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥**

एतदध्यायप्रतिपादितायाः पंचकर्मप्रवृत्तेर्दुर्ज्ञेयत्वेन यथाभूतेन वैद्येन चिकित्सा कर्तव्या तादृशं वैद्यमाह—स्मृतिमानित्यादि । प्रतिपत्तिरुत्पन्नायामापदि झटिति यथाकर्तव्यताज्ञानं तद्वान् प्रतिपत्तिमान् ॥ ३४ ॥

अपामार्गतण्डुलीयकः समाप्तः ।

---



## तृतीयोऽध्यायः ।

**अथात आरग्वधीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**आरग्वधः सैडगजः करंजो**
**वासा गुडूची मदनं हरिद्रे ।**
**श्र्याह्वः सुराह्वः खदिरो धवश्च**
**निंबो विडङ्गं करवीरकत्वक् ॥ १ ॥**
**ग्रन्थिश्च भौर्जो लशुनः शिरीषः**
**सलोमशो गुग्गुलुकृष्णगंधे ।**
**फणिज्झको वत्सकसप्तपर्ण्यौ**
**पीलूनि कुष्ठं सुमनःप्रवालाः ॥ २ ॥**
**वचा हरेणुस्त्रिवृता निकुंभो**
**भल्लातकं गैरिकमंजनं च ।**
**मनःशिलाले गृहधूम एला**
**काशीशलोध्रार्जुनमुस्तसर्जाः ॥ ३ ॥**
**इत्यर्धरूपैर्विहिताः षडेते**
**गोपित्तपीताः पुनरेव पिष्टाः ।**
**सिद्धाः परं सर्षपतैलयुक्ता-**
**श्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥ ४ ॥**
**कुष्ठानि कृच्छ्राणि नवं किलासं**
**सुरेशलुप्तं किटिमं सदद्रु ।**
**भगन्दरार्शांस्यपचीं सपामां**
**हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥ ५ ॥**

द्विविधं हि भेषजमन्तःपरिमार्जनं वहिःपरिमार्जनं च । तत्रापामार्गतण्डुलीयेन पंचकर्म यवागूरूपमन्तःपरिमार्जनमभिधायाऽवशिष्टं वहिःपरिमार्जनं प्रलेपाद्यारग्वधीयेनाह—अथात आरग्वधीयमित्यादि । यद्यपि कुष्ठचिकित्सितं पृथगेव चिकित्सास्थाने भविष्यति । तत्रैव चावसरप्राप्ता एत आरग्वधादयो वक्तुमुचिताः । तथापीह पृथक् कुष्ठरोगाणामभिधानेन कुष्ठस्यानुवन्धित्वेन च महारोगत्वं ख्यापयति । अव्यवहितोह्यर्थः पुनः पुनरभिधीयते । इयंच कुष्ठचिकित्साऽऽनागतावेक्षणतन्त्रयुक्त्या निदानस्थाने हेतुलक्षणादिभिर्लक्षितं कुष्ठमुद्दिश्योक्ता । तेनालक्षितस्य चिकित्साऽभिधीयमानाऽज्ञातविषयत्वेन न युज्यत इति यच्चोच्यते तन्निरस्तं स्यात् । यद्यपि राजयक्ष्मप्रभृतयोऽपि महारोगाः सन्ति तथापि न ते भूरिवहिःपरिमार्जनविषया यथा कुष्ठमिति कुष्ठविषया एव वहिःपरिमार्जनयोगा अभिधीयन्ते । कुष्ठहरवहिःपरिमार्जनोपघातेन च वातोपघाताः कोलं कुलत्थादयोऽभिधास्यन्ते । किंच कुष्ठहरवहिःपरिमार्जनप्रयोगाणामिदं स्वरूपं यच्छोधनानन्तरं प्रयुज्यमानाः सिद्धिभाजो भवन्ति । यदुक्तं "ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्हृतास्रदोषाणाम् । संशोधिताशयानां सद्यः सिद्धिर्भवति तेषां" । तत् पूर्वाध्याये संशोधनमभिधायेह कुष्ठप्रयोगानवसरप्राप्तानभिदधताऽऽचार्येण साधुग्रन्थनिवेशः कृतः । यद्यपि "खदिरः

कुष्ठहराणाम्" इति वचनेन खदिरः कुष्ठहरभेषजेषु प्रधानम् । तथापि खदिरं परित्यज्यारग्वधमादावुपदिशति कुष्ठबहिःपरिमार्जनभेषजेष्वारग्वधस्यैव प्रधानत्वख्यापनार्थम् । श्याह्वो नवनीतखोटिरिति प्रसिद्धः । ग्रन्थिश्च भौर्ज इति भूर्जपत्रग्रन्थिः । सलोमशः कासीसं तमालपत्रं वा । फणिज्झकः पर्णासभेदः । सुमनःप्रवाला जातीपल्लवाः । निकुंभो दन्ती । आलं हरितालम् । अर्धरूपैरित्यर्धश्लोकैः । गोपित्तपीता इति पीतगोपित्ताः । मयूरव्यंसकादित्वात्पूर्वनिपातनियमात् । यदि वा गोपित्तभावनया पीतवर्णा गोपित्तपीताः । परमत्यर्थं सिद्धाः । यद्यपि सर्वत्र प्रयोगा महर्षिप्रणीताः स्वविषये सिद्धास्तथापीह वहूनां दुश्चिकित्स्यानां रोगाणामाशुहरणात् परं सिद्धा इत्युच्यन्ते । चूर्णानि च प्रदेहाश्च चूर्णप्रदेहाः । यदि वा चूर्णीकृतानां प्रदेहाः चूर्णप्रदेहाः । प्रदेहो लेपः । प्रदेहताकरणं चैषां योगानां कुष्ठहरगोमूत्रगोपित्तादीनां बोद्धव्यम् । सुरेशलुप्तमिन्द्रलुप्तम् । कुष्ठग्रहणेन लब्धानामपि किटिमदद्रुपामादीनां पुनरभिधानं प्रयोगाणां विशेषेण तदुद्धरणशक्तिख्यापनार्थम् ॥ १–५ ॥

कुष्ठं हरिद्रे सुरसं पटोलं
निंबाश्वगन्धे सुरदारुशिग्रुः ।
ससर्षपं तुंबुरुधान्यवन्यं
चंडां च चूर्णानि समानि कुर्यात् ॥ ६ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्यकंडूः पिडकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ७ ॥
कुष्ठामृतासंगकटंकटेरी-
काशीसकंपिल्लकमुस्तलोध्राः ।
सौगन्धिकं सर्जरसो विडंगं
मनःशिलाले करवीरकत्वक् ॥ ८ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रूः सकण्डुः किटिमानि पामा
विचर्चिका चैव तथैति शान्तिम् ॥ ९ ॥
मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः ।
तुत्थं विडङ्गं मरिचानि कुष्ठं
लोध्रं च तद्वत् समनःशिलं स्यात् ॥ १० ॥
रसाञ्जनं सप्रपुन्नाडबीजं
युक्तं कपित्थस्य रसेन लेपः ।
करञ्जबीजैडगजं सकुष्ठं
गोमूत्रपिष्टञ्च परः प्रदेहः ॥ ११ ॥
उभे हरिद्रे कुटजस्य बीजं
करञ्जबीजं सुमनःप्रवालान् ।
त्वचं समध्यां हयमारकस्य
लेपं तिलक्षारयुतं विदध्यात् ॥ १२ ॥
मनःशिला त्वक् कुटजात् सकुष्ठात्
सलोमशः सैडगजः करंजः ।
ग्रन्थिश्च भौर्जः करवीरमूलं
चूर्णानि साध्यानि तुषोदकेन ॥ १३ ॥
पलाशनिर्दाहरसेन चापि
कर्षोद्धृतान्याढकसंमितेन ।
दर्वीप्रलेपं प्रवदन्ति लेप-
मेतत् परं कुष्ठनिषूदनाय ॥ १४ ॥

तुंबुरु स्वनामप्रसिद्धम् । वन्यं कैवर्तमुस्तकम् । चण्डा चोरपुष्पी । प्रथममिति तैलाक्तमिलनेन संबध्यते । तैलंच कुष्ठहरप्रकरणे सार्षपं बोद्धव्यम् । [1]अमृतासङ्गः तुत्थकं, कटङ्कटेरी दारुहरिद्रा । सौगन्धिकं गन्धतृणं गन्धको वा । आर्कं पयः अर्कक्षीरम् । तद्वदिति प्रदेहः कुष्ठहरः । प्रपुन्नाड एडगजम् । हयमारकः करवीरः । तस्य त्वग्ग्राह्या, मध्यं च पृथग्भावेन ग्राह्यं । तुषोदकं सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जिकम् । पलाशनिर्दाहेन गृहीतो रसः पलाशनिर्दाहरसः स च पलाशस्य प्रधानमूले च्छिन्नेऽथ कुंभं दत्त्वोपरिवृक्षदाहात् यो गलति स्वरसः स गृह्यते ॥ ६–१४ ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठा-
न्युद्वर्तयेदश्वहनच्छदैश्च ॥ १५ ॥
कोलं कुलत्थाः सुरदारुरास्ना-
माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्ल-
मुष्णानि वातामयिनां प्रदेहः ॥ १६ ॥
आनूपमत्स्यामिषवेसवारै-
रुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रै-
र्गन्धौषधैश्चानिलहः प्रदेहः ॥ १७ ॥
तक्रेण युक्तं यवचूर्णमुष्णं
सक्षारमर्तिं जठरे निहन्यात् ।
कुष्ठं शताह्वां सवचां यवानां
चूर्णं सतैलाम्लमुशन्ति वाते ॥ १८ ॥
उभे शताह्वे मधुकं मधूकं
बलां पियालं च कशेरुकं च ।
घृतं विदारीं च सितोपलां च
कुर्यात् प्रदेहं पवने सरक्ते ॥ १९ ॥

१ अमृता गुडूची, सङ्गस्तुत्थकमिति पाठान्तरं तु समीचीनम् ।

रास्ना गुडूची मधुकं बले द्वे
सजीवकं सर्षभकं पयश्च ।
घृतं च सिद्धं मधुशेषयुक्तं
रक्तानिलार्तिं प्रणुदेत् प्रदेहः ॥ २० ॥
वाते सरक्ते सघृतः प्रदेहो
गोधूमचूर्णं छगलीपयश्च ।
नतोत्पलं चन्दनकुष्ठयुक्तं
शिरोरुजायां सघृतः प्रदेहः ॥ २१ ॥
प्रपौंडरीकं सुरदारुकुष्ठं
यष्ट्याह्वमेला कमलोत्पले च ।
शिरोरुजायां सघृतः प्रदेहो
लोहैरकापद्मकचोरकैश्च ॥ २२ ॥
रास्नाहरिद्रे नलदं शताह्वे
द्वे देवदारूणि सितोपलां च ।
जीवन्तिमूलं-सघृतं सतैल-
मालेपनं पार्श्वरुजासु कोष्णम् ॥ २३ ॥
शैवालपद्मोत्पलवेत्रतुङ्ग-
प्रपौण्डरीकाण्यमृणाललोध्रम् ।
प्रियङ्गुकालेयकचन्दनानि
निर्वापणः स्यात् सघृतः प्रदेहः ॥ २४ ॥
सिता लता वेतसपद्मकानि
यष्ट्याह्वमैन्द्री नलिनानि दूर्वा ।
यवासमूलं कुशकाशयोश्च
निर्वापणः स्याज्जलमेरका च ॥ २५ ॥
शैलेयमेलागुरुणी सकुष्ठे
चण्डा नतं त्वक् सुरदारु रास्ना ।
शीतं निहन्यादचिरात् प्रदेहो
विषं शिरीषस्तु ससिन्धुवारः ॥ २६ ॥
शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोध्राभयचन्दनानि
शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २७ ॥

चतुरंगुलः स्वर्णहालिः । अश्वहनः करवीरः । चतुरङ्गुलकाकमाच्यश्वहनच्छदैरेकः प्रयोगः । त्रित्वे ह्यस्य द्वात्रिंशत्संख्या वक्ष्यमाणा विरुध्यते । तैलयोनिफलान्येरण्डफलतिलादीनि । अम्लमिति काञ्जिकादियोगात् । आनूपानां खड्गादीनां मत्स्यानां चामिषं मांसं आनूपमत्स्यामिषम् । वेसवारः— "निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् । कृष्णामरिचसंयुक्तं वेसवार इति स्मृतः" । गन्धप्रधानान्यौषधानि गन्धौषधानि तानि चागुर्वादीनि ज्वराध्याये प्रतिपाद्यानि । गन्धौषधैश्च सिद्धैरिति योजनीयम् । तेन दशमूलगन्धौषधाभ्यां स्नेहाः साधनीयाः । किंवा गन्धौषधैर्दशमूलसिद्धैः स्नेहपृक्तैरयं प्रदेहः । उशन्ति कथयन्ति । विदारी विदारीकन्दः । सितोपला सितशर्करा । मधुशेषः सिक्थकम् । सिद्धमिति घृतदुग्धयुक्तं यत्किंचिदेवाग्नौ साधितम् । नतं तगरपादिका । तदभावे शीउलीच्छोपगुडको गृह्यते । प्रपौण्डरीकः पुण्डरीकम् । लोहमगुरु । एरका होगलः । अयं प्रपौंडरीकादिभिश्चोरकैश्चैलन्त एकः प्रयोगः । चोरकश्चोरपुष्पिका स्वनामप्रसिद्धः । नलदं मांसी । शताह्वे इति शतपुष्पामधुरिके । तुङ्गः पुन्नागः । अमृणालमुशीरम् । कालेयकं कालियाकाष्ठम् । लता मञ्जिष्ठा । ऐन्द्री गोरक्षकर्कटी । नलिनं कमलं । यवासमूलं दुरालभामूलम् । कुशकाशयोः मूलम् । अयं सितादिरेरका चैलन्त एक योगः । जलं वालम् । सिन्धुवारो निर्गुडी । विषमित्यादिरपरः प्रयोगः । लामज्जकमुशीरम् । हेम नागकेशरम् । अभयमुशीरम् ॥१५–२७॥

तत्र श्लोकः ।

इहात्रिजः सिद्धतमानुवाच
द्वात्रिंशतं सिद्धमहर्षिपूज्यः ।
चूर्णप्रदेहान् विविधामयघ्ना-
नारग्वधीये जगतो हितार्थम् ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
श्लोकस्थाने आरग्वधीयो नाम तृतीयोऽध्यायः ।

अध्यायार्थसंग्रह इहात्रिज इत्यादि ।—चूर्णप्रदेहानिति पूर्वंवद्व्याख्येयम् । द्वात्रिंशतमिति संख्याकरणं न्यूनाधिकसंख्याद्युवोधनिराकरणार्थम् ॥ २८ ॥

इत्यारग्वधीयः समाप्तः ।

---

## चतुर्थोऽध्यायः ।

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्यामः ॥ १ ॥

इतिहस्माह भगवानात्रेयः ॥ २ ॥

इह खलु षड्विरेचनशतानि भवन्ति । षड्विरेचनाश्रयाः । पञ्चकषायशतानि । पञ्चकषाययोनयः । पञ्चविधं कषायकल्पनम् । पञ्चाशन्महाकषाया इति संग्रहः । षड्विरेचनशतानि इति यदुक्तं, तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषदि व्याख्यास्यामः ॥ १ ॥

अपामार्गतण्डुलीयेऽन्तःपरिमार्जनमुक्तं, आरग्वधीये च बहिःपरिमार्जनमुक्तम् । संप्रति पूर्वाध्यायद्वयाप्रतिपादितं भेषजचतुष्कमवश्यं वक्तव्यमवशिष्टमुभयपरिमार्जनभेषजमभिधातुं षड्विरेचनशताश्रितीयोऽभिधीयते । आश्रीयत इत्याश्रितीयमाश्रय इत्यर्थः । षट्संख्यावच्छिन्नानि विरेचनशतान्याश्रितानि चाधिकृत्य कृतोऽध्यायः षड्विरेचनशताश्रितीयः । एतेन यदुक्तं—षड्विरेचनशतानि षड्विरेचनाश्रयाः । एतद्वयमधिकृत्य संज्ञेयं प्रणीतेति मन्तव्यम् । यद्यपि चाध्यायादाविह खल्विति पदं श्रूयते तथापि गुणप्रधानत्वान्नाध्यायसंज्ञा-

प्रणयने निवेशितम् । इहेत्यग्निवेशतन्त्रेऽनतिसंक्षेपविस्तरे । एतेन वक्ष्यमाणविरेचनषट्शतानां तथा पञ्चाशन्महाकषायाणां तथा पञ्चकषायशतानां विस्तरकल्पनायामधिकृतत्वमपि भवतीति सूच्यते । अतएव वक्ष्यति कल्पे । "उद्देशमात्रमेतावद्द्रष्टव्यमिह षट्शतम् । स्वबुद्ध्यैवं सहस्राणि कोटिर्वा संप्रकल्पयेत्" इति । तथात्रैव वक्ष्यति "न हि विस्तरस्य प्रमास्ति" इति । खलुशब्दः प्रकाशने । विरेचनशब्देनेह वमनं विरेचनं च गृह्यते । यतो वक्ष्यति कल्पे "उभयं वा दोषमलविरेचनाद्विरेचनशब्दं लभते" इति । न च वाच्यं, दोषमलविरेचनाचेत् विरेचनसंज्ञा । तेन वस्तिशिरोविरेचनयोरपि विरेचनसंज्ञाप्रवृत्तिः । यतस्तन्त्रकारसिद्धेयं संज्ञा न पाचकवत् योगमात्रप्रवृत्ता । तन्त्रकारश्च वमनविरेचनयोरेव योगरूढां संज्ञां विदधाति नान्यत्र । तत् कुतोऽन्यत्र प्रसक्तिः । षडविरेचनशतानीत्यादि स्वयमेवाचार्यो व्याख्यास्यति । पञ्चकषायशतानीत्यत्र कषायशब्देन मधुरादीनां लवणवर्जानां रसानां कषायत्वेन परिभाषितानामाश्रयत्वेनौषधद्रव्यमुच्यते । कषाययोनयः कषायजातयः । कषायाणां यथोक्तद्रव्याणां कल्पनमुपयोगार्थं संस्करणं कषायकल्पनम् । महाकषाया इति दशसंख्यावच्छिन्नस्यैककार्यकारणार्थोपात्तस्यौषधगणस्य संज्ञा । यद्वक्ष्यति "दशेमानि जीवनीयानि" इत्यादिना । संग्रहेणोद्देशमात्रेण । कल्पएवोपनिषत् कल्पोपनिषत् । उपनिषदित्यत्युपयुक्तरहस्यविद्योपदेशस्थानमुच्यते वेदे। तदिहापि कल्पस्याप्युत्कालेन रहस्यवमनविरेचनप्रयोगोपदेशकत्वात् कल्पएवोपनिषदित्युच्यते। न च वाच्यं कल्पएव विस्तरेण षड्विरेचनशतान्यभिधास्यन्ते । तेन च तदेवास्तु । अलमनेन संक्षेपाभिधानेन सम्यगवरोधानुपायत्वात् । यतस्तन्त्रधर्मोऽयं यत् प्रथमं सूत्रणं स्यात् तदनु तद्विवरणं प्रपञ्चेन । उच्यते च न्यायविद्भिः—"ते वै विषयाश्च सुसंगृहीताः स्युर्येषां समासो व्यासश्च" इति ॥ १ ॥

**तत्र त्रयस्त्रिंशद्योगशतं प्रणीतं फलेषु । एकोनचत्वारिंशज्जीमूतकेषु योगाः । पञ्चचत्वारिंशदिक्ष्वाकुषु । धामार्गवः षड्विधो भवति योगयुक्तः । कुटजस्त्वष्टादशधा योगमेति । कृतवेधनं षड्विधं भवति योगयुक्तम् । श्यामात्रिवृद्योगशतं प्रणीतम् । दशापरे चात्र भवन्ति योगाः । चतुरङ्गुलो द्वादशधा योगमेति लोध्रं विधौ षोडशयोगयुक्तम् । महावृक्षो भवति विंशतियोगयुक्तः । एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः । अष्टचत्वारिंशद्दन्तीद्रवन्त्योरिति षडविरेचनशतानि । षडविरेचनाश्रया इति क्षीरमूलत्वक्पत्रपुष्पफलानि ॥ २ ॥**

त्रयस्त्रिंशदधिकम् त्रयस्त्रिंशताधिकम् । कृतवेधनयोगान्ता योगा वमनस्य । शेषं विरेचनस्य । अत्र श्यामात्रिवृतोरिति । श्यामेति श्याममूला त्रिवृत् । त्रिवृदित्यरुणमूला त्रिवृत् । षडिति षडेव विरेचनाश्रया विरेचनाधिकरणानि । अत्र स्नुहिक्षीरसादौ कृतं तीक्ष्णविरेचनत्वात् । उक्तं—हि "स्नुक्पयस्तीक्ष्णविरेचनानाम्" इति । त्वगित्यनेन लोध्रत्वग्गृह्यते । पत्रमित्यनेन इक्ष्वाकादिपत्रम् । यद्वक्ष्यति कल्पे । "अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसंमितां । क्षीरप्रस्थे शृतं दद्यात् पित्तोद्रिक्ते कफज्वरे" इति । यद्यपि चैरण्डतैलताम्रपारदादीनां क्षीराद्यधिकानामपि विरेचनाश्रयत्वं संभवति, तथापि तेषामिह तन्त्रे कल्पस्थाने विरेचनाश्रयत्वेनानवस्थापनादध्यायादिप्रतिपादितेनेहशब्देन योगादिह षडाश्रया इत्यविरुद्धमेव ॥ २ ॥

**पञ्च कषाययोनय इति मधुरकषायः अम्लकषायः कटुकषायः तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा ॥ ३ ॥**

पञ्चकषायशतानि महाकषायं व्याख्याय व्याख्यातव्यानि, अतस्तदुल्लङ्घ्य पञ्चकषाययोनयोऽभिधीयन्ते । मधुरश्चासौ कषायश्चेति मधुरकषायः, एवं शेषेष्वपि तन्त्रे संज्ञेत्यनेन लवणरसं वर्जयित्वा मधुरादयो रसाः कषायसंज्ञया व्यवह्रियन्ते । अयं स्वतन्त्रसमय इति सूचयति, नात्र परतन्त्रस्य व्यवहार इति । अथ किमर्थं पुनराचार्येण कषायसंज्ञाप्रणयने लवणस्य मधुरादेरिव गुणादिभिरुद्दिष्टस्य तथा प्रयोगेषु चित्रकगुडिकादौ "द्वौ क्षारौ लवणानि च" इत्यादिनोद्दिष्टस्य रोगभिषग्जितीये च स्कन्धेनोपदिष्टस्य रसविकारेषु च तेषु तेषु मधुरादिवदुपदिष्टस्य परित्यागः क्रियते, उच्यते—कषायसंज्ञेयं भेषजत्वेन व्याप्रियमाणेषु रसेष्वाचार्येण निवेशिता । अत्र च केवलस्य लवणस्य च प्रयोगो नास्ति । मधुरादीनांतु केवलानामपि प्रयोगोऽस्ति । लवणं तु द्रव्यान्तरसंयुक्तमेवोपयुज्यते । तथा मधुरादिषु स्वरसकल्कादिलक्षणा कल्पना संभवति, न लवणे । यतो न तावल्लवणस्य स्वरसोऽस्ति, कल्कोऽपि द्रव्यस्य द्रवेण पेषणात्क्रियते, तच्च न संभवति लवणे । लवणं हि पानीययोगात्पानीयमेव भवति । यद्यपि कल्कस्यैव भेदश्चूर्णं चूर्णता च लवणस्य संभवति, तथापि लवणस्य चूर्णरूपता नतु पूर्वस्मादचूर्णरूपात् किंचित् शक्तिविशेषमापादयति, शक्तिविशेषकल्पनार्थं च कल्पना क्रियत इत्युत्तरत्र प्रतिपादयिष्यामः । तस्माच्चूर्णत्वमपि लवणस्य कल्पनमकल्पनं वा । शृतशीतफाण्टकषायास्तु द्रव्यस्य कार्त्स्न्येनानुपयोगस्य तत्तत्संस्कारवशाद्द्रवेषु द्रव्यस्य स्तोकावयवानुप्रवेशार्थमुपदिश्यन्ते । लवणे चैतन्न संभवति, लवणं हि द्रवसंबन्धे सर्वात्मनैव द्रवमनुगतं स्यात्, तस्माल्लवणं पृथक् प्रयोगाभावात् कल्पनाऽसंभवाच्चाचार्येण कषायसंज्ञाप्रणयने निरस्तमिति न निष्प्रयोजनेयमाचार्यप्रवृत्तिः ॥ ३ ॥

**पञ्चविधं कषायकल्पनं इति तद्यथा—स्वरसः कल्कः, शृतः, शीतः, फाण्टः, कषायश्चेति । तेषां यथापूर्वं बलाधिक्यं, अतः कषायकल्पना व्याध्यातुरबलापेक्षिणी । नत्वेवं खलु सर्वाणि सर्वत्रोपयोगीनि भवन्ति ॥ ४ ॥**

कल्पनमुपयोगार्थं प्रकल्पनं संस्करणमिति यावत्स्वरसादिवर्गलक्षणं, यथा "स्वो रसः स्वरसः प्रोक्तः कल्को दृशदि पेपितः । क्वथितस्तु श्रुतः शीतः शर्वरीमुषितो मतः । क्षिप्तोष्णतोये मृदितः फाण्ट इत्यभिधीयते" । अत्र शौनकवचनं तु "द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः समुदाहृतः" । फाण्टः कषाय इति कषायशब्दोऽयं स्वरसादिभिरपि संबध्यते, तेन स्वरसः कषायः कल्कः कषाय इत्याद्यपि बोद्धव्यम् । तेषां स्वरसादीनां यथापूर्वं बलाधिक्यमिति फाण्टाच्छीतो गुरुः शीतात् श्रुतो गुरुरित्यादि । यतो यथापूर्वं गुर्वी कषायकल्पना, अतएव व्याध्यातुरबलापेक्षिणी व्याधेरातुरस्य च बलमपेक्षत इत्यर्थः । अत्रोपपत्तिमाह—नत्वेवमित्यादि । बलवति पुरुषे व्याधौ च द्रव्यसारभागमयत्वेनात्यर्थं गुरुर्बहुकार्यकरः स्वरसो युज्यते, नायमल्पबले पुरुषे रोगे वा योगवान् स्यात् । बलभ्रंशभेषजातियोगे दोषकर्तृत्वादिति भावः । एवमन्यत्रापि व्याख्येयम् । तथा न सर्वाणि स्वरसादीनि सर्वत्र पुरुषे योग्यानि स्युः । यतः केचित्स्वरसद्विषः केचित्स्वरसप्रियाः, केचिदितरकल्पनाद्विष एवमादि । न चात्यर्थं द्विष्टभेषजस्य प्रयोग इष्यते, तत्क्षणवमनारुच्यादि दोषकर्तृत्वात् । तथा कषायकल्पना व्याध्यातुरबलापेक्षिणी चेत्येतदुदाहरणार्थम् । तेन द्रव्यापेक्षिणीत्येतदपि बोद्धव्यम् यतो द्रव्यनियमेन कल्पनानियमं वक्ष्यति रसायने, यथा, "मण्डूकपर्ण्याः स्वरसः प्रयोज्यः, क्षीरेण यष्टीमधुकस्य चूर्णम् । रसो गुडूच्यास्तु समूलपुष्प्याः, कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः" इति । चूर्णं कल्क एवान्तर्भावनीयम् । द्विविधो हि कल्कः सद्रवोऽद्रवश्चेति कृत्वा । तेन "निशि स्थिता वा स्वरसीकृता वा, कल्कीकृता चूर्णमथोश्रुता वा" इत्यादौ पृथक् चूर्णपाठेनाधिककल्पनाप्रसङ्गो नोद्भावनीयः॥४॥

**पञ्चाशन्महाकषाया इति यदुक्तं तदनु व्याख्यास्यामः, तद्यथा—जीवनीयो बृंहणीयो लेखनीयो भेदनीयः सन्धानीयो दीपनीय इति षट्कः कषायवर्गः । बल्यो वर्ण्यः कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः । तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः क्रिमिघ्नो विषघ्न इति षट्कः कषायवर्गः । स्तन्यजननस्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः । स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकः कषायवर्गः । छर्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः कषायवर्गः । पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्रसंग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चक कषायवर्गः । कासहरः श्वासहरः शोथहरो ज्वरहरः श्रमहर इति पञ्चकः कषायवर्गः दाहप्रशमनः शीतप्रशमन उदर्दप्रशमनोऽङ्गमर्दप्रशमनः शूलप्रशमन इति पञ्चकः कषायवर्गः । शोणितस्थापनो वेदनास्थापनः । संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पंचकः कषायवर्गः । इति पञ्चाशन्महाकषायाः, महतांच कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति । तेषां एकैकस्मिन् महाकषाये दशदशावयविकान् अनुव्याख्यास्यामः। तान्येव पञ्च कषायशतानि भवन्ति ॥५॥**

महाकषयानुदाहरति पञ्चाशदित्यादि । जीवने हितो जीवनीयः । एवमन्यत्रापि षड्भिर्निष्पादितः षट्कः एवं चतुष्कादिषु च बोद्धम् । अत्र षट्कादिर्महाकषायाणां परिच्छेदः कस्यचिदर्थस्यानुगमेन बोद्धव्यः । यथा जीवनीयादौ षट्के ईयान्तत्वम् । बल्यादौ यप्रत्ययान्तत्वम् । तृप्तिघ्नादौ घ्रान्तत्वम् । स्तन्यजननादौ स्तन्यशुक्रविषयत्वं एवमाद्युक्तम् । एतच्च ईयशब्दान्तत्वादिना बहुभेदकथनवैचित्र्येण ग्रन्थस्य पुष्कलाभिधानताकरणार्थम् । एतच्च शास्त्रेऽवश्यं कर्तव्यम् । यदुक्तमिहैव शास्त्रगुणकथने यथा "अनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानम्" इत्यादि । जीवनीयशब्देनेहायुष्यत्वमभिप्रेतत् । यत्र च मधुररसगुणे आयुष्योऽपिजीवनीयइति करिष्यति तत्र मूर्छितस्य संज्ञाजनकत्वे जीवनीयत्वं व्याख्येम् । तृप्तिः श्लेष्मविकारो येन तृप्तमिवात्मानं मन्यते तद्घ्नं तृप्तिघ्नम् । स्नेहोपगानीति स्नेहस्य सर्पिरादेः स्नेहनक्रियायां सहायत्वेनोपगच्छन्तीति स्नेहोपगानि । मृद्विकादिस्नेहोपयुक्तस्यसर्पिरादेः स्नेहने प्रकर्षवती शक्तिर्भवतीत्यर्थः । तथा वमनोपगानीत्यत्र मदनफलादीनां वमनद्रव्याणां मधुमधुकादीनि सहायानि भवन्तीति । एवं स्वेदोपगादौ व्याख्येम् । शिरोविरेचनोपगे तु शिरोविरेचनप्रधानान्येव द्रव्याणि बोद्धव्यानि । पुरीषस्य विरजनं दोषसंबन्धनिरासं करोतीति पुरीषविरजनीयः । एवं मूत्रविरजनीये वक्तव्यम् । मूत्रस्य विरेचनं करोतीति मूत्रविरेचनीयः । उदर्दो वरटीदष्टाकारः शोथः, तत्प्रशमन उदर्दप्रशमनः, न पुनरिह महारोगाध्याये पठितो वातविकारो गृह्यते । तिन्दुकादीनामुदर्दप्रशमनानां वातं प्रत्यननुकूलत्वात् । शोणितस्य दुष्टस्य दुष्टिमपहृत्य प्रकृतौ शोणितं स्थापयतीति शोणितस्थापनम् । वेदनायां संभूतायां तां निहत्य शरीरं प्रकृतौ स्थापयतीति वेदनास्थापनम् । संज्ञां ज्ञानं च स्थापयतीति संज्ञास्थापनम् । प्रजोपघातकं दोषं हत्वा प्रजां स्थापयतीति प्रजास्थापनम् । वयस्तारुण्यं स्थापयतीति वयःस्थापनम् ।

उपसंहरति इतीत्यादि । महतां कषायाणां पञ्चाशन्महाकषाया भवन्तीत्यनेनोद्दिष्टानां लक्षणं स्वरूपं जीवनीयादीत्यस्योदाहरणं प्रपंचेन कथनं, तदर्थं व्याख्याता निर्देशेन कथिता इत्यर्थः । यदि वा महतां कषायाणां यल्लक्षणं अनेकैः कषायैर्मिलित्वैकार्थजीवनीयादिसंपादनं तस्योदाहरणार्थं दृष्टान्तार्थम् । एतेनान्यान्यपि महाकषायाणि वातप्रशमनपित्तप्रशमनादीन्येककार्यसंपादकान्येकद्रव्यमयानि भवन्तीति सूच-

यतीति । महतां चेति चकार उदाहरणार्थं चेत्यत्र बोद्धव्यः, तेनाल्पबुद्धीनां व्यवहारार्थं चेति समुच्चिनोति । एतच्चोत्तरत्र स्फुटं भविष्यति । उत्तरत्र यद्वक्ष्यति—"महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति" इति तत् "तद्यथे-त्यादिग्रन्थस्यार्थं व्याकर्तुम् । किंवाऽत्र व्याख्याता इति पदं संज्ञामात्रेण महाकषायकथने वर्तते तथा तत्र तु "व्याख्याता" इति पदं प्रतिजीवकादिद्रव्यकथने वर्त्तते, तेन न पौनरुक्त्यम् । अवयवा एवाऽवयविकारास्तान्येव पञ्चाशन्महाकषायाणि दशावयवगुणितान्येकैकद्रव्यरूपाणि पञ्चकषायशतानि भवन्तीत्यर्थः ॥ ५ ॥

तद्यथा—जीवकर्षभकौ मेदा महामेदा काकोली क्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती मधुकमिति दशेमानि जीवनीयानि भवन्ति ॥ १ ॥

क्षीरिणी राजक्षवक बला काकोली क्षीरकाकोली वाट्यायनी भद्रौदनी भारद्वाजी पयस्या ऋष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति ॥२॥

मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणीचित्रकचिरबिल्वहैमवत्य इति दशेमानि लेखनीयानि भवन्ति ॥ ३ ॥

सुवहार्कोरुबुकाग्निमुखीचित्राचित्रकचिरबिल्वशङ्खिनीशकुलादनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति ॥ ४ ॥

मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गामोचरस-धातकीलोध्रप्रियङ्गुकट्फलानीति दशेमानि सन्धानीयानि भवन्ति ॥ ५ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि भवन्ति ॥ ६ ॥

इति षट्कः कषायवर्गः ॥

जीवनीयमादावुच्यते सर्वेषां जीवनहितस्यैवात्यर्थमभिप्रेतत्वात् । मुद्गमाषपर्ण्यन्तं सुगमम् । जीवन्ती स्वनामख्याता सुवर्णवर्णाभा, मधुकं यष्टीमधुकम् । क्षीरिणी क्षीरलता, राजक्षवकः दुग्धिका, वाट्यायनी श्वेतबला, भद्रौदनी पीतबला, भारद्वाजी वनकार्पासी, पयस्या विदारीकन्दः, ऋष्यगन्धा ऋष्यजाङ्गलकः । कटुका कटुरोहिणी, चिरबिल्वः करंजः, हैमवती श्वेतवचा । सुवहा त्रिवृत्, अग्निमुखी लाङ्गलिया इति ख्याता, चित्रा दन्ती, शङ्खिनी श्वेतबुह्ला, शकुलादनी कटुरोहिणी, स्वर्णक्षीरिणी अंगुष्ठप्रभा । अम्बष्ठकी अकर्णविद्धा, समङ्गा वराहक्रान्ता, कट्फलं स्वनामप्रसिद्धं, सन्धानीयः संग्रहणः, सामान्येन पुरीषस्य संग्रहणस्तु भिन्नमलमात्रसंग्रहणः । शृङ्गवेरः शुण्ठी, हिङ्गुनिर्य्यासो हिङ्गु ॥ ६ ॥

ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिराशेहिणीबलातिबला इति दशेमानि बल्यानि भवन्ति ॥ ७ ॥

चन्दनतुङ्गपद्मकोशीरमधुकमंजिष्ठासारिवापयस्याशितालता इति दशेमानि वर्ण्यानि भवन्ति ॥८॥

सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारीकैटर्य्यहंसपादीबृहतीकण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति ॥ ९ ॥

आम्राम्रातकनिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलबदरदाडिममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति ॥ १० ॥

इति चतुष्कः कषायवर्गः ॥ ७ ॥

ऐन्द्री गोरक्षकर्कटी, ऋषभी शूकशिम्बा, अतिरसा शतावरी, ऋष्यप्रोक्ता माषपर्णी, अतिबला पीतबला, वयस्थेह विदारीकन्दः क्षीरकाकोली वा, । तुंगः पुन्नागः, पयस्येह क्षीरकाकोली विदारीकन्दो वा, शिता श्वेतदूर्वा लता श्यामदूर्वा । सारिवा अनन्तमूलं, इक्षुमूलं मोरटो वा, विदारी विदारीकन्दः, कैटर्य्य कट्फलं हंसपादी स्वनामप्रसिद्धा । आम्रातकः आम्राडकः, वृक्षाम्लं वृहदम्लम् ॥ ७ ॥

नागरचव्यचित्रकविडङ्गमूर्वागुडूचीवचामुस्तपिप्पलीपटोलानीति दशेमानि तृप्तिघ्नानि भवन्ति ११

कुटजबिल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति दशेमानि अर्शोघ्नानि भवन्ति ॥ १२ ॥

खदिराभयामलकहरिद्रारुष्करसप्तपर्णारग्वधकरवीरविडङ्गजातीप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति ॥ १३ ॥

चन्दननलदकृतमालनक्तमालनिम्बकुटजसर्षपमधुकदारुहरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति ॥ १४ ॥

अक्षीवमरिचगण्डीरकेबुकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रावृषपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति ॥ १५ ॥

हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकतकशिरीषसिन्धुवारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति ॥ १६ ॥

इति षट्कः कषायवर्गः ॥ ८ ॥

तृप्तिघ्नो व्यक्तः । धन्वयासो दुरालभा, । अरुष्करो भल्लातकः । नलदं मांसी, कृतमालः सुवर्णहलिः, नक्तमालः करञ्जः । अक्षीवोऽद्दकः शोभाञ्जनो वा, गण्डीरः शमठशाकं, निर्गुडी सिन्धुवारः, किणिही कटभी, आखुपर्णी मूषिकपर्णी, वृषपर्णी च तद्भेदः पंजिपत्रिकेति ख्याता । सुवहा रास्ना हाफरमाली वा, पालिन्दी श्यामलता, श्लेष्मातको बहुवारः ॥८॥

वीरणशालिषष्टिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटकतृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति ॥ १७ ॥

पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तककटुरोहिणीसारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति ॥ १८ ॥

जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गमाषपर्णीमेदावृद्धरुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि भवन्ति ॥ १९ ॥

कुष्ठैलवालुककट्फलसमुद्रफेणकदम्बनिर्यासेक्षुकाण्डेक्षिवक्षुरकवसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति ॥ २० ॥

इति चतुष्कः कषायवर्गः ॥ ९ ॥

इक्षुवालिका खागारिका, दर्भ उलुयातृणं, गुन्द्रा गुलंच। स्तन्यशोधनो व्यक्तः। वृद्धरुहा शतावरी, वृक्षरुहापाठपक्षे वन्दारुः, जटिला उचटः, कुलिंगो उचटभेदः। कदम्बो बहुफलः, इक्षुरकः कोकिलाक्षः, वसुको वसुहट्टकः, अत्र जतूकर्णपठित एलवालुक कट्फलस्थाने ॥ ९ ॥

मृद्वीकामधुकमधुपर्णीमेदाविकारीकाकोलीक्षीरकाकोलीजीवकजीवन्तीशालपर्ण्य इति दशेमानि स्नेहोपगानि भवन्ति ॥ २१ ॥

शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषबदराणीति दशेमानि स्वेदोपगानि भवन्ति ॥ २२ ॥

मधुमधुककोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्प्य इति दशेमानि वमनोपगानि भवन्ति ॥ २३ ॥

द्राक्षाकाश्मर्यपरूषकाभयामलकविभीतककुवलबदरकर्कन्धुपीलूनीति दशेमानि विरेचनोपगानि भवन्ति ॥ २४ ॥

त्रिवृद्बिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानीति दशेमानि आस्थापनोपगानि भवन्ति ॥ २५ ॥

रास्नासुरदारुबिल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थस्योनाका इति दशेमानि अनुवासनोपगानि भवन्ति ॥ २६ ॥

ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रुसर्षपापामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति ॥ २७ ॥

इति सप्तकः कषायवर्गः ॥ १० ॥

स्नेहोपगो व्यक्तः। वृश्चीरः श्वेतपुनर्नवा, । कोविदारः खनामप्रसिद्धः कर्बुदारः श्वेतकाञ्चनः, विदुलो हिज्जलः, शणपुष्पी घण्टारवा सदापुष्पी अर्कः प्रत्यक्पुष्पी अपामार्गः। बदरीत्रयम्। व्यक्तम्। व्यक्तम्। क्षवकश्छिक्काकारकः, श्वेताऽपराजिता, महाश्वेता तद्भेदः कटभी वा ॥ १० ॥

जम्ब्वाम्रपल्लवमातुलुङ्गाम्लबदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्दिनिग्रहणानि भवन्ति ॥ २८ ॥

नागरधन्वयवासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्रीवेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति ॥ २९ ॥

शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभयापिप्पलीदुरालभाकुलीरशृंग्य इति दशेमानि हिक्कानिग्रहणानि भवन्ति ॥ ३० ॥

प्रियंग्वनन्ताम्रास्थिकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणानि भवन्ति ॥ ३१ ॥

जम्बुशल्लकीत्वक्कच्छुरामधूकशाल्मलीश्रीवेष्टकभृष्टमृत्पयस्योत्पलतिलकणा इति दशेमानि पुरीषविरजनीयानि भवन्ति ॥ ३२ ॥

जम्ब्वाम्रप्लक्षवटकपीतनोडुम्बराश्वत्थभल्लातकाश्मन्तकसोमवल्का इति दशेमानि मूत्रसंग्रहणीयानि भवन्ति ॥ ३३ ॥

पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधूकप्रियङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति ॥ ३४ ॥

इति त्रिकः कषायवर्गः ॥ ११ ॥

व्यक्तम्। व्यक्तम्। व्यक्ताम्। अनन्तोऽनन्तमूलं, कट्वंगः श्योनाकः, मोचरसः शाल्मलीविष्टः, पद्मा ब्राह्मणयष्टिका। शल्लकी खनामप्रसिद्धा, कच्छुरा शूकशिम्बा, शाल्मली शिमलीआठा, श्रीवेष्टको नवनीतखोटी। कपीतनो गन्धमुंडः, अश्मन्तकोऽम्ललोटः, सोमवल्कः खदिरः। पद्मभेदाश्चलारः, सौगन्धिकः शुन्धी ॥ ११ ॥

वृक्षादनीश्वदंष्ट्रावसुकवशिरपाषाणभेददर्भकुशकाशगुन्द्रेत्कटमूलानीति दशेमानि मूत्रविरेचनीयानि भवन्ति ॥ ३५ ॥

द्राक्षाभयामलकपिप्पलीदुरालभाशृङ्गीकण्टकारिकावृश्चीरपुनर्नवातामलक्य इति दशेमानि कासहराणि भवन्ति ॥ ३६ ॥

शटीपुष्करमूलाम्लवेतसैलाहिंग्वगुरुसुरसातामलकीजीवन्तीचण्डा इति दशेमानि श्वासहराणि भवन्ति ॥ ३७ ॥

पाटलाग्निमन्थस्योनाकबिल्वकाश्मार्यकण्टकारि-

कावृहतीशालपर्णीपृश्निपर्णीगोक्षुरका इति दशेमानि श्वयथुहराणि भवन्ति ॥ ३८ ॥

शारिवाशर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलकविभीतकानीति दशेमानि ज्वरहराणि भवन्ति ॥ ३९ ॥

द्राक्षाखर्जूरपियालबदरदाडिमफल्गुपरुषकेक्षुयवषष्टिका इति दशेमानि श्रमहराणि भवन्ति ॥४०॥

इति पञ्चकः कषायवर्गः ॥ १२ ॥

वृक्षादनी वन्दाको विदारिकन्दो वा, वशिरः सूर्यावर्त्तः । तामलकी भूम्यामलकी । चंडा चोरहुली । व्यक्ताः । व्यक्ताः । फल्गुः काष्ठोडुंबरकः ॥ १२ ॥

लाजाचन्दनकाश्मर्यफलमधूकशर्करानीलोत्पलोशीरशारिवागुडूचीह्रीवेराणीति दशेमानि दाहप्रशमनानि भवन्ति ॥ ४१ ॥

तगरागुरुधान्यकशृङ्गवेरभूतीकवचाकण्टकार्यग्निमन्थश्योनाकपिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति ॥ ४२ ॥

तिन्दुकपियालबदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासनारिमेदा इति दशेमान्युदर्दप्रशमनानि भवन्ति ॥ ४३ ॥

विदारीगन्धापृश्निपर्णीबृहतीकण्टकारिकैरण्डकाकोलीचन्दनोशीरैलामधूकानीति दशेमान्यङ्गमर्दप्रशमनानि भवन्ति ॥ ४४ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृंगवेरमरिचाजमोदाजगन्धाजाजीगण्डीराणीति दशेमानि शूलप्रमनानि भवन्ति ॥ ४५ ॥

इति पञ्चक कषायवर्गः ॥ १३ ॥

लाजादौ जतूकर्णपाठात् गुडूचीस्थाने पद्मकः, यदि वा 'अर्कागुरुगुडूचीनां तिक्तानां चोष्णमिष्यते" इति वचनाद्यद्यप्युष्णा गुडूची, तथापि तस्या दाहप्रशमकत्वं प्रभावाद्बोद्धव्यम् ॥ भूतीको यमानिका । तिन्दुकः केन्दुरिति प्रसिद्धः, कदरो विट्खदिरः, अरिमेदः खदिरभेदः । व्यक्ताः । अजगन्धा फोकान्दी ॥ १३ ॥

मधुमधुकरुधिरमोचरसमृत्कपाललोध्रगैरिकप्रियंगुशर्करालाजा इति दशेमानि शोणितस्थापनानि भवन्ति ॥ ४६ ॥

शालकट्फलकदंबपद्मकतुम्बमोचरसशिरीषवंजुलैलवालुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति ॥ ४७ ॥

हिंगुकैटर्यारिमेदावचाचोरकवयस्थागोलोमीजटिलापलंकषाशोकरोहिण्य इति दशेमानि संज्ञास्थापनानि भवन्ति ॥ ४८ ॥

ऐन्द्रीब्राह्मीशतवीर्यासहस्रवीर्याऽमोघाऽव्यथाशिवारिष्टा वाट्यपुष्पीविष्वक्सेनकान्ता इति दशेमानि प्रजास्थापनानि भवन्ति ॥ ४९ ॥

अमृताभयाधात्रीमुक्ताश्वेताजीवन्त्यतिरसामण्डूकपर्णीस्थिरापुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति ॥ ५० ॥

इति पंचककषायसर्गः ॥ १४ ॥

रुधिरं कुंकुमम् । वंजुलो वेतसः । कैटर्य पर्वतनिंबः, वयःस्था ब्राह्मी, गोलोमी भूतकेशः, पलंकषा गुग्गुलुः जटामांसी वा । शतवीर्यासहस्रवीर्ये दूर्वे, अमोघा पाटलाऽऽमलकी वा लक्ष्मणा वा, अव्यथा कदली गुडूची वा हरीतकी वा, अरिष्टा कटुरोहिणी, विश्वक्सेनकान्ता प्रियंगुः । मुक्ता रास्ना, श्वेतास्थाने श्रेयसीति केचित्, सा रास्ना भेदः॥ १४ ॥

इति पंचकषायशतान्यभिसमस्य पंचाशन्महाकषायाः महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति ॥ १५ ॥

सम्प्रत्येतान्येव जीवकादीन्युक्तानि प्रत्येकद्रव्यगणनया च पंचकषायशतानिस्युः दशकगणनया च पंचाशन्महाकषायाः श्लक्ष्णाहिकयोक्ता भवन्तीति दर्शयन्नुपसंहरति इतीत्यादि । अभिसमस्येति दशकसंख्ययैकवर्गीकृत्य। लक्षणस्योदाहरणं लक्षणोदाहरणं पूर्वं जीवनीयादि संज्ञालक्षणमभिप्रेत्योक्तम्। लक्षणोदाहरणार्थमिति संप्रति जीवकर्षभकादीनि, लक्षणम् । जीवकादिभिर्दशभिर्लक्ष्यते ज्ञायते जीवनीयादिमहाकषायः । महतां चेति चकारः पंचकषायशतानां च लक्षणस्योदाहरणार्थमिति समुच्चिनोति । तत्र जीवकादयः प्रत्येकं पंचकषायशतानामेकैकद्रव्यरूपाणां लक्षणस्वरूपा भवन्तीति । यदि वा लक्षणार्थमुदाहरणार्थं चेति। तत्र मन्दबुद्धीनां लक्षणार्थं पंचकषायशतपंचाशन्महाकषायज्ञानार्थमित्यर्थः । बुद्धिमतां तूदाहरणार्थं दृष्टान्तार्थमतिसंक्षेपार्थमित्यर्थः ॥ १५ ॥

नहि विस्तरस्य प्रमाणमस्ति नचाप्यतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्प्यते, तस्मादनतिसंक्षेपेणानतिविस्तरेणचोपदिष्टाः । एतावन्तो ह्यलमल्पबुद्धीनां व्यवहाराय, बुद्धिमतां च स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानायेति ।

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच—नैतानि भगवन्! पंचकषायशतानि पूर्यन्ते तानि तानि ह्येवांगान्युपप्लवन्ते तेषु तेषु महाकषायेष्विति।

तमुवाच भगवानात्रेयः—नैतदेवं बुद्धिमता द्रष्टव्यमग्निवेश । एकोऽपि ह्यनेकां संज्ञां लभते कार्यान्तराणि कुर्वन् तद्यथा पुरुषो बहूनां कर्मणां करणे समर्थो भवति स यद्यत्कर्म करोति तस्य तस्य कर्मणः कर्तृकरणकार्यं संप्रयुक्तं तत्तद्गौणं नामवि-

**शेषं प्राप्नोति तद्वदौषधद्रव्यमपि द्रष्टव्यम् । यदि चैकमेव किंचिद्द्रव्यमासादयामः तथागुणयुक्तं यत्सर्वकर्मणां करणे समर्थं स्यात्, कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति ॥ १६ ॥**

ननु कषायद्रव्याणि यावन्ति सन्ति तावन्ति वाऽभिधीयन्तां दृष्टान्तार्थं द्वित्रीणि वा । तत् किमर्थमयं नातिविस्तरो नातिसंक्षेपः इत्यत्राह—नहीत्यादि । न हि विस्तरस्य प्रमाणमस्ति इयत्तापरिच्छेदोऽस्ति, न तेन विस्तरोऽभिधीयत इत्यर्थः । अतिसंक्षेपोऽपि द्वित्रिलक्षणाभिधानरूपो नाल्पबुद्धीनामनुमानाकुशलानां सामर्थ्याय चिकित्साव्यवहारायोपकल्पते । एतावन्तो यथोक्ताः । अलं समर्थाः । व्यवहारायेति चिकित्साव्यवहाराय । स्वलक्षणस्य भावः स्वालक्षण्यं, तेनानुमानं तत्र कुशला अभिज्ञा इत्यर्थः । बुद्धिमन्तो हि, जीवकादयो हि स्निग्धशीतमधुरवृष्यादिगुणयुक्ताः सन्तो जीवनं कुर्वन्तीति भूयोदर्शनादुपधार्य तद्गुणयुक्तेऽन्यत्रापि द्राक्षापयोविदार्यादौ तज्जातीयत्वेन जीवनान्यनुमिमते । तथा जीवकादीनामेकजीवनकार्यकर्तृत्वेन महाकषायत्वं, तद्वत्पाठासमङ्गादिप्रभृतीनामप्यतीसारहराणामतीसारहरमहाकषायत्वम् । अनुमानेन कृत्स्नमेव कषायं प्रतिपद्यन्त इति भावः ।

पूर्वपक्षमुत्थापयति—एवमित्यादि । तानि तानीति जीवकक्षीरकाकोलीप्रभृतीनि, तेषु तेषु जीवनीयबृंहणीयशुक्रजननादिषु, उपप्लवन्ते पुनःपुनस्तान्येव पठ्यन्ते, एकं द्रव्यमनेकेषु पठ्यमानमेकमेव; ततश्च न संख्या पूर्यत इति पूर्वपक्षं सिद्धान्तयति—नैतदेवमित्यादि । एकस्यानेकत्वेनाभिधाने दृष्टान्तमाह—यथेत्यादि । एकः पुरुषः कर्मणां व्यापाराणां ओदनपचनकुंभकरणखनित्रकरणभूमिखननानां करणे समर्थो भवति, य इत्याध्याहार्य, स इत्युक्तगुणं पुरुषं प्रत्यवमृशति, यद्यत् कर्मेति ओदनपाकादिग्रहः, यद्यत् कर्म करोति तस्य तस्य कर्मणः कर्तृसंप्रयुक्तं पाचक इति, करणसमप्रयुक्तं खानित्रिक इति, कार्यसंप्रयुक्तं कुंभकार इति नामविशेषम् । गुणयोगप्रवृत्तं गौणम् । गुणयोगश्च पाचक इत्यत्र पचिक्रियायां कर्तृत्वं, खानित्रिक इत्यत्र खनित्रकरणयुक्तं खननं प्रति कर्तृत्वं कुंभकार इत्यत्र कार्यकुंभोपहितं कर्तृत्वमित्येभिस्त्रिभिर्गुणैरभिन्नो भिन्नोऽप्यभिधीयते व्यवह्रियते चेति भावः । तद्वत्तत्र पुरुषवदौषधद्रव्यमपि, एकमपि क्षीरकाकोलीद्रव्यं जीवनबृंहणशुक्रजननलक्षणनानागुणयोगान्नानाजीवनीयादिशब्देनाभिधीयते व्यवह्रियते चेत्यर्थः ।

अथ किमर्थं पुनरेकमेव द्रव्यं बहुजीवनीयादिगुणयोगात् तत्र तत्र पठ्यते सन्ति तावद्बहूनि द्रव्याण्येकैकजीवनीयादिगुणानि स्वरूपतो भिन्नानि, तान्येव पृथक्कस्मान्न पठ्यन्त इत्याह । यदि चैकमेव द्रव्यमासादयामस्तथा गुणयुक्तं, यत्सर्वकर्मणां करणे समर्थं स्यात्, कस्ततोऽन्यदिच्छेदुपदेष्टुमुपधारयितुं वा शिष्येभ्य इति । यत्र बहुद्रव्याण्येकैकजीवनीयादिकार्यकरणसमर्थानि भवन्ति तथैकमेव द्रव्यमनेकजीवनीयादिकार्यकरणसमर्थमस्ति । तत्रैकमेव द्रव्यं बहुकार्यकर्तृ शिष्येभ्य उपदेष्टुं उपधारयितुंच युज्यतेऽल्पप्रयत्नबोध्यत्वादल्पप्रयत्नधार्यत्वाच्च । न बहून्येककार्यनियतानि बहुप्रयासोपपाद्यत्वाद् बहुप्रयासबोध्यत्वाद् बहुप्रयासधार्यत्वाच्च । कार्यंच जीवनबृंहणाद्युभयोरपि पक्षयोरविशिष्टमिति वाक्यार्थः । तथा गुणयुक्तमनेकजीवनीयादिकार्यसमर्थम् । तथागुणयुक्तत्वमेव विवृणोति—यत्सर्वकर्मणां जीवनीयादीनां करणे समर्थं स्यात्, ततो बहुकार्यकारकादेकस्मादन्यद्बहु प्रतिनियतकर्मकारकं क इच्छेत् । न कोऽपीच्छेदित्यर्थः । उपधारयितुमावर्तनेन स्मृत्यारूढं कर्तुम् । कस्तत इत्यस्यादौ तत इत्यध्याहार्यम् ॥ १६ ॥

तत्र श्लोकाः ।

**यतो यावन्ति यैर्द्रव्यैर्विरेचनशतानि षट् ।**
**उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः ॥ १७ ॥**
**रसा लवणवर्ज्याश्च कषाय इति संज्ञिताः ।**
**तस्मात्पञ्चविधा योनिः कषायाणामुदाहृता ॥ १८ ॥**
**तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः ।**
**महतां च कषायाणां पञ्चाशत्परिकीर्तिताः ॥ १९ ॥**
**पञ्च चापि कषायाणां शतान्युक्तानि भागशः ।**
**लक्षणार्थं प्रमाणं हि विस्तरस्य न विद्यते ॥ २० ॥**
**न चालमतिसंक्षेपः सामर्थ्यायोपकल्पते ।**
**अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः ॥ २१ ॥**
**मन्दानां व्यवहाराय बुधानां बुद्धिवृद्धये ।**
**पञ्चाशत्को ह्ययं वर्गः कषायाणामुदाहृतः ॥ २२ ॥**
**तेषां कर्मसु बाह्येषु योगमाभ्यन्तरेषु च ।**
**संयोगं च प्रयोगं च यो वेद स भिषग्वरः ॥ २३ ॥**

**इत्यग्निवेशकृततन्त्रे चरक-प्रतिसंस्कृते षड्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः समाप्तः ।**

अध्यायार्थसंग्रहमाह—यत इति । यतो मदनफलादेः । यावन्ति त्रयस्त्रिंशद्योगशतमित्यादीनि । यैर्द्रव्यैर्विरेचनशतानि षडिति तैरेव मदनफलादिभिर्मिलितैः । यदुक्तमिति विरेचनशतानि षडिति । लक्षणार्थमित्यादिग्रन्थोऽनतिसंक्षेपविस्तरेणोक्तपञ्चाशन्महाकषायोपपत्तिसंग्राहकः । अलमतिसमर्थः । अल्पबुद्धेरयमिति पदमतिसंक्षेप इत्यनेन संबध्यते, यद्यपि चेहातिसंक्षेपो नास्ति तथापि बुद्धिस्थिरीकृतः प्रत्यवमृश्यते । पञ्चाशत्कोह्ययमित्यत्रायमिति पदं दुर्घटमेव । बाह्येषु प्रलेपादिषु । आभ्यन्तरेषु वमनादिषु । संयोगं द्रव्याणामुचितं मेलनम् । प्रयोगं कालप्रकृत्यपेक्षया योजना ॥ १७–२३ ॥

इति षड्विरेचनशताश्रितीयश्चतुर्थोऽध्यायः समाप्तः ।
इति भेषजचतुष्कः ॥

## पञ्चमोऽध्यायः ।

**अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**मात्राशी स्यादाहारमात्रा पुनरग्निबलापेक्षिणी १**

द्वितीयमिह शास्त्रप्रयोजनं यदातुरव्याधिहरणं स्वस्थस्वास्थ्यरक्षणंच । यदाह "स्वस्थातुरपरायणम्" इति । तेनोत्पन्नव्याधिप्रतीकारद्वाराऽऽतुररक्षणं भेषजचतुष्कमभिधाय स्वस्थचतुष्कोऽभिधातव्यः । तत्रापि स्वास्थ्यपरिपालनहेतुषु मात्रावदन्नं प्रधानम् । यदाह "प्राणिनां पुनर्मूलमाहारो बलवर्णौजसांच" । तचेह "मात्रावदन्नं विधीयते" इत्यादौ मात्राशितीय एवाभिधीयते । मात्राशितमधिकृत्य कृतोऽध्यायो मात्राशितीयः । यद्यपि "मात्राशी" इति पदमनुश्रूयते तथापि "मात्राशितीयः" इति संग्रणयने कष्टोच्चारणभयादर्थपरपर्यायशब्देनेयं संज्ञा कृता । यथा "न वेगान्धारणीया" इत्यादिका संज्ञा । मात्रां मात्रावदन्नमशितुं भोक्तुं शीलं यस्यासौ मात्राशी । यदि वा मात्रयाऽशितुं शीलं यस्य स तथोक्तः । तत्रेह मात्राऽनपायिपरिमाणम् । अशिरयमिहाविशेषेण खाद्यप्राश्यलेह्यपेयानामभ्यवहारे वर्तते । तेन "मात्राशी स्या"दित्युक्ते खाद्यलेह्यपेयानां मात्राभ्यवहरणं नोक्तमिति यचोच्यते, तन्निरस्तं स्यात् । दृष्टश्चायमशिः खाद्याद्यभ्यवहारे यथा—दशमूलहरीतक्यां "एकान्ततः प्राश्य ततश्च लेहाच्छक्तिर्निहन्ति श्वयथुं प्रवृद्धम्" । तथा "क्षीराशी तं प्रयोजयेदिति" इतश्चावगन्तव्यं अशिरयं सर्वाभ्यवहारे वर्तते, येनैतद्विवरणं सामान्येनैव कृतम् । आहारमात्रा पुनरिति न पुनरशितमात्रा पुनरिति ।

मात्रां व्याकरोति—आहारेत्यादि । अग्नेर्बलमुत्कृष्टं मध्यमल्पं वाऽपेक्ष्योत्कृष्टा मध्याऽल्पा वा मात्रा स्यादित्यग्निबलापेक्षिणी । पुनःशब्दो भेषजादिमात्रां व्यायाममात्रां च व्यावर्तयितुम् । तेन न सर्वमात्राऽग्निबलापेक्षिणी । यतो भेषजमात्रा व्याध्यातुरबलापेक्षिणी वक्तव्या, व्यायामस्य तु दोषक्षयाग्निवृद्ध्याद्युत्पादश्रमाद्यनुत्पादापेक्षिणी व्यवस्थापयितव्या । यदि वा पुनःशब्दः पौनःपुन्ये, तेनाहारमात्रा पुनः पुनरग्निबलमपेक्षत एतदुक्तं स्यात् । यत एकस्मिन् पुरुषे एकदा याऽग्निबलेन व्यवस्थापिता मात्रा सा न सर्वकालं स्यात् । यत ऋतुभेदेन वयोभेदेन च तस्यैवाग्निः कदाचिद्विवृद्धो भवति, यथा—हेमन्ते यौवने च । कदाचिन्मन्दो भवति यथा—वर्षासु वार्धक्ये च । तेनाग्निबलभेदान्मात्राप्येकरूपा न स्यात्, किंतु तत्कालभवमग्निबलमपेक्ष्य पुनः पुनर्मात्रापि भिद्यत इति ॥ १ ॥

**यावद्ध्यस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यं भवति ॥ २ ॥**

अग्निबलापेक्षित्वमेव विवृणोति—यावद्धीत्यादि । यावदिति यावत्परिमाणम् । हिशब्दो हेतौ । अस्येति भोक्तुः । अशनं चतुर्विधमपि भोज्यम् । अशितं भुक्तं । प्रकृतिं वातादीनां रसादीनां च साम्यावस्थाम् । अनुपहत्य विकारमकृत्वेत्यर्थः । यथाकालमिति निशाशेषे । तावदिति पूर्वप्रमाणावच्छिन्नमशनं प्रत्यवमृशति । द्वितीयम् "अस्य" इति ग्रहणमन्यत्र प्रतिषेधार्थम् । तेन यस्यैव यावती मात्रा निर्विकारा, तस्यैव सा मन्तव्या, नान्येषाम् । प्रतिपुरुषमग्निबलस्य भिन्नत्वात् । यद्यपि चैकस्मिन्नपि पुरुषे कालादिभेदेनाग्निबलभेदो भवति, तथाप्येकपुरुष एकमात्रामवधार्य कियन्तमपि कालं तयैव मात्रया अग्निबलभेदहेत्वभावे सति व्यवहारो भवत्येव । मात्राप्रमाणं मात्रेयत्ता, मात्राप्रमाणशब्देन चेह मात्राप्रमाणवदिति बोद्धव्यम् । अन्यथा, तावच्छब्देनावच्छिन्नाशनवाचिना मात्राप्रमाणशब्दस्य गुणवाचिनः सामानाधिकरण्यं न स्यात् । ननु प्रकृतिमनुपहत्येति न कर्तव्यं विशेषणं, नह्याहारो यो यथाकालं जरां याति स मात्रादोषाद्विकारं करोति । करोति तु द्रव्यस्वभावसंस्कारादिदोषात् । यथा मन्दकलकुचादयो यथाकालं जरां गच्छन्तोऽपि दोषजनका भवन्त्येव । न तावतापि तत्र मात्रा दुष्यति, यथा वक्ष्यति त्रिविधकुक्षीये "न च केवलं मात्रावत्त्वादेवाहारफलसौष्टवमवाप्तुं शक्यं, प्रकृत्यादीनामष्टानामाहारविधिविशेषायतनानां भिन्नफलत्वादिति" । नैवं, द्विविधा हि मात्रा रसविमाने वक्तव्या—सर्वग्रहरूपा परिग्रहरूपा च । तत्र समुदितस्याहारस्य परिमाणं सर्वग्रहः । मधुराम्लादीनामाहारावयवानां प्रत्येकं मात्रया ग्रहणं परिग्रहः । तेन यत्राहारसमुदायपरिमाणं समुचितमेव गृह्यते, आहारावयवानां तु मधुरादीनां स्वभावहितानामप्ययथोक्तमानं स्यात्, तत्राहारावयवमात्रावैषम्याद्धातुवैषम्यं भवत्येव, अयथाकालं जरागमनं च स्यात् । तदुक्तं प्रकृतिमनुपहत्येति विशेषणम् । अन्ये तु व्याख्यानयन्ति "अस्य" इति, "अशनम्" इति, "अशितम्" इति च पदत्रयं प्रकरणादेव लभ्यते । तत्पुनः क्रियते विशेषप्रतिपादनार्थम् । तेन "अस्य" इत्यनेन परीक्षको भोक्ताऽधिक्रियते । "अशनम्" इत्यनेन च प्रशस्तमशनं प्रकृतिकरणसंयोगदेशकालाविरुद्धमुच्यते । "अशितम्" इत्यनेन च यथाविधिभोजनमुच्यते । तदेवं सर्वगुणसंपन्नआहारोमात्रावानुच्यते ॥ २ ॥

**तत्र शालिषष्टिकमुद्गलावकपिंजलैणशशशरभशंबरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति । तथा पिष्टेक्षुक्षीरविकृतिमाषानूपौदकपिशितादीन्याहारद्रव्याणि प्रकृतिगुरुण्यपि मात्रामेवापेक्षन्ते ॥ ३ ॥**

मात्रालक्षणमुपदिश्य व्यवहारोपयोगिनं द्रव्यभेदेन मात्राभेदं दर्शयति—तत्र शालीत्यादि । अत्र लघुवर्ग एव प्रथमं पठ्यते पथ्यतमत्वात् । तत्राप्यादौ रक्तशालिराहारद्रव्यप्राधान्यात् । कपिंजलो गौरतित्तिरिः । एणः कृष्णसारः । शरभो

महाश्रृङ्गी हरिणः । शम्वरस्तद्विशेषः । अन्नपानविधौ "शीतः स्निग्धोऽगुरुः स्वादुः" इति षष्टिकगुणकथने "अगुरुः" इत्यकारप्रश्लेषो द्रष्टव्यः । तेनेह षष्टिकस्य लघुत्वप्रतिपादनं न विरुध्यते । अपि समुच्चये, तेन, प्रकृतिलघूनि करणलघूनि च लाजादीनि मात्रापेक्षीणि भवन्तीति लभ्यते । एवं प्रकृतिगुरुण्यत्रापि संस्कारगुरुशक्तुपिंडादिग्रहणं वाच्यम् । आदिशब्दोऽत्र प्रकारवाची शालिषष्टिकादिगणाभावात् । विकृतिशब्दः पिष्टेक्षुक्षीरैः संवध्यते । क्षीरविकृतिः क्षीरकृता भक्ष्या, पिशितमानूपौदकाभ्यां संवध्यते ॥ ३ ॥

**न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत, लघूनि हि द्रव्याणि वाय्वग्निगुणवहुलानि भवन्ति, पृथ्वीसोमगुणवहुलानीतराणि । तस्मात्स्वगुणादपि लघून्यग्निसन्धुक्षणस्वभावान्यल्पदोषाणि चोच्यन्तेऽपि सौहित्योपयुक्तानि, । गुरूणि पुनर्नाग्निसन्धुक्षणस्वभावान्यसामान्यादतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तान्यन्यत्र व्यायामाग्निवलात्, सैषा भवत्यग्निवलापेक्षिणी मात्रा ॥ ४ ॥**

ननु यदि लघु हितमपि स्वगुणकरणमेव, मात्रामपेक्षते । गुरु चाहितमपि मात्रापरिगृहीतं हितमेव स्यात्तत् किं गौरवलाघवोपदेशेनेत्याशंक्याह—न चैवमित्यादि । लघूनि यद्यप्याकाशवाय्वग्निगुणवहुलानि स्युस्तथाप्याकाशस्याग्निदीपनं प्रति तथाविधसामर्थ्याभावात् वाय्वग्न्योस्त्वग्निदीपकत्वात् वाय्वग्निगुणवहुलानीत्युक्तम् । तस्मात्कारणाल्लघूनि मात्रया तावदग्निं दीपयन्ति । स्वगुणादपि वाय्वग्निगुणवाहुल्यादग्निसन्धुक्षणस्वभावानि स्युः । मात्राव्यतिक्रमे, समानेऽपि लघुगुरुद्रव्ययोर्लघुगुरुद्रव्यस्य विशेषं दर्शयति । अल्पदोषाणि चोच्यन्तेऽपि सौहित्योपयुक्तानि, सौहित्यं मात्राव्यतिक्रमेण तृप्तिः । गुरूणीत्यादौ पुनःशब्दो व्यावृत्त्यर्थः । असामान्यादिति विरोगार्थे नञ्, तेनासामान्यादित्यग्निविरुद्धपृथ्वीतोयगुणवाहुल्यादित्यर्थः । अन्यसामान्यादिति पाठपक्षेऽप्यन्यशब्दो विरुद्धवचन एव, तेन तथापि स एवार्थः । अतश्चेत्यादिना मात्राव्यतिक्रमे गुरौ गरीयांसं दोषं दर्शयति । ननु दृश्यन्ते केचन भारिकादयः पुरुषाः सौहित्योपयुक्तगुरुद्रव्याहारेऽपि निर्दोषाः, तत्किमुच्यतेऽतिमात्रं दोषवन्तीत्याशङ्क्याह—अन्यत्रेत्यादि । व्यायामकृतमग्निवलं व्यायामाग्निवलम् । यद्यपि कालाहितवलोऽग्निर्मात्राऽधिकगुरुद्रव्यक्षमो भवति, यदुक्तं "पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमे" इति । तथापि व्यायामाहितवलो वह्निर्नितरां वलवान् भवतीत्ययमेव प्रधानपरिग्रहादुक्तः । ये तु व्यायामादिति चाग्निवलादिति हेतुद्वयं वर्णयन्ति, तेषामेवं सति व्यायामापेक्षिण्यशनमात्रा स्यादिति प्रकरणविरुद्धोऽर्थः स्यात् । प्रतिज्ञातमर्थं न्यायसंपादितमुपसंहरति सैषेत्यादि । सैषाग्निवलापेक्षिणी प्रतिज्ञाता मात्रा, एषेति न्यायेनाभ्यपेक्षत्वेन निर्वाहिता ॥ ४ ॥

**न च नापेक्षते द्रव्यं, द्रव्यापेक्षया च त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदृश्यते, लघूनामपि च नाति सौहित्यमग्नेर्युक्त्यर्थम् । मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं वलवर्णसुखायुषा योजयत्युपयोक्तारमवश्यमिति ॥ ५ ॥**

ननु यद्यप्यग्निवलापेक्षिणी मात्रा, तत्कस्मादेकरूप एवाग्नौ लघूनां द्रव्याणां भूयसी मात्रा स्यात् ततस्त्रिभागोचिता अर्धा वेत्याह—न चेत्यादि । द्रव्यमपेक्षत इत्यर्थः । त्रिभागसौहित्यं मनाग्गुरुभिः । एवं गुरु गौरवप्रकर्षापकर्षादन्यदपि कल्पनीयम् । लघूनामपि नातिसौहित्यमित्यत्र सौहित्यशब्दस्तृप्तिमात्रे वर्तते, तेन लघूनि तृप्त्यतिक्रमेण न भोक्तव्यानि, एवं हि तेषां मात्रातिक्रमो न स्यात् । अग्नेर्युक्तिः स्वमानावस्थितिः, तदर्थम् । ननु गुरूणां तावदतिमात्रोपयोगोऽग्निपरिपालनार्थं निषिध्यतां, येन गुरूण्यग्न्यसमानानि लघूनि पुनरग्निना समानानि तत्तेषां कथमतिमात्रोपयोगो वह्निमान्द्यमावहतीति । व्रूमः लघूनां द्रव्याणां सामान्यमभिभूयातिमात्रत्वमेवाग्निमान्द्यं करोति । यथा चक्षुस्तैजसं तेजःसहकृतं च पश्यति, तदेव तेजोऽतियोगादुपहन्यते, तथा शस्त्रमश्मसंभवम्, अश्मयोगाच्च तीक्ष्णं संपद्यते, अश्मन्येव च मिथ्यायोगात्प्रतिहतं स्यात्, तदुक्तं शालाक्ये "यत्तेजो ज्यो दीप्तं शारीरं प्राणिनां च यत् । संयुक्तं तेजसा तेजस्ता पाणि पश्यति । तदेव चक्षुस्तान्येव ज्योतींष्यति तु पश्यतः । विकारं भजतेऽत्यर्थमथवापि विनश्यति । शस्त्रस्याऽश्मा यथा योनिर्निशितं च तदश्मनि । तीक्ष्णं भवत्यतियोगात्तत्रैव, प्रतिहन्यते" । एवं तावद्व्युत्पादिताऽग्निवलद्रव्यापेक्षिणी मात्रा, मात्रान्वितं च भोज्यं भोक्तव्यमित्युक्तम् । मात्राशितत्वे को गुण इत्याह—मात्रावद्धीत्यादि । इहावश्यमिति नियमो विरोधिकारणान्तराभावे सति वोद्धव्यः । यतः यद्यपि पूर्ववदशनाशितोपयोक्तृपदैः प्रशस्तभोजनादिवाचिभिः प्रकृतिकरणादिगुणसंपन्नमन्नं लभ्यते, तथापि कालविपर्ययप्रज्ञापराधासात्म्यशब्दरूपरसस्पर्शगन्धाः सन्त्येवाहारजन्यवलादिविरोधकाः । यदाह "सन्ति ह्याहारादन्या अपि रोगप्रकृतयः" इति । तेन मात्रापरिगृहीताः शुभा अपि प्रकृत्यादयः प्रायो वलादिहेतवो भवन्तीति मात्रावदाहारस्तुत्यर्थम् "अवश्यम्" इति कृतम् । सुखयुक्तमायुः सुखायुः, यदि वा सुखं चायुश्चेति मन्तव्यं स्वरूपेणापि चायुर्मृग्यमिति प्राक् प्रतिपादितमेव ॥ ५ ॥

**भवति चात्र ।**

**गुरुपिष्टमयं तस्मात्तण्डुलान् पृथुकानपि ।**
**न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभुक्षितः ॥ ६ ॥**

भवति चात्रेति । तन्त्रकारस्य समयोऽयं, यत् पूर्वव्याख्यातार्थसंग्रहार्थं यदा श्लोकेन वहुमारभते तदा "भवति चात्र" इति करोति । पिष्टमयं पिष्टविकारः । तस्मादिति गु-

रुत्वात् । पृथुकाश्चिपिटा इति लोकप्रसिद्धाः । न जातु कदाचित् मात्रां खादेदित्यनपायिपरिमाणवन्तं खादेत् ॥ ६ ॥

**वल्लूरं शुष्कशाकानि शालूकानि बिसानि च ।**
**नाभ्यसेद्गौरवान्मांसं कृशं नैवोपयोजयेत् ॥ ७ ॥**
**कूर्चिकांश्च किलाटांश्च शौकरं गव्यमाहिषे ।**
**मत्स्यान् दधि च माषांश्च यवकांश्च न शीलयेत् ॥८॥**

वल्लूरं शुष्कमांसं, नाभ्यसेन्न निरन्तरमुपयुंज्यात् । अनभ्यासहेतुमाह—गौरवादिति । मांसं कृशमपुष्टं रोगादुपरतमृगादिसंभवमित्यर्थः । एतच्चाप्यवृष्यत्वादेव निषिद्धं, न गौरवादिति ब्रुवते । कूर्चीकः क्षीरेण समं दधि तक्रं वा पक्वकिलाटः । कूर्चीकपिण्डो नष्टक्षीरस्य घनो भाग इत्यन्ये । शौकरमिति शूकरमांसं, शूकरसाहचर्याद्गव्यमाहिषे अपि मांसे एव बोद्धव्ये । यवकः शूकधान्यविशेषः । वक्ष्यति हि "यवकः शूकधान्यानामपथ्यतमत्वेनाप्रकृष्टतमो भवति" इति ॥७॥८॥

**षष्टिकान् शालिमुद्गांश्च सैन्धवामलके यवान् ।**
**आन्तरीक्षं पयः सर्पिर्जाङ्गलं मधु चाभ्यसेत् ॥ ९ ॥**

अभ्यस्यान्दर्शयति—षष्टिकानित्यादि । इह षष्टिरादौ पठ्यते रक्तशालिकमनु प्रधानलख्यापनार्थम् । आन्तरीक्षमिति आन्तरीक्षं पानीयम् । पयः क्षीरं जाङ्गलमिति जाङ्गलदेशभवं मृगादिमांसम् । इह सैन्धवाभ्यासोऽन्नसंस्कारत्वेन मात्रयाऽभिप्रेतः । तेन, "त्रीणि द्रव्याणि नात्युपयुंजीत पिप्पल्यो लवणं क्षारः" इति यद्वक्ष्यति तेन समं विरोधो न भवति तत्र लवणातियोगस्य प्रतिपिद्धत्वात् ॥ ९ ॥

**तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्तते ।**
**अजातानां विकाराणामनुत्पत्तिकरं च यत् ॥१०॥**

मात्राशीत्यादिना स्वास्थ्यपरिपालनोपाय उच्यते । अतिबहु च स्वस्थपरिपालनं तन्त्रे वक्तव्यं, तच्चेहाभिधीयमानं ग्रन्थगौरवमावहति, अनभिधीयमानं च ग्रन्थस्य न्यूनतामापादयति । अतस्तत्सूत्रमात्रेणोद्देष्टुमाह—तच्चेत्यादि । सुष्ठु निर्विकारत्वेनावतिष्ठत इति स्वस्थस्तस्य भावः स्वास्थ्यमुद्रेककधातुवैषम्यविरहितधातुसाम्यमित्यर्थः । तच्च स्वास्थ्यमुभयथा परिपाल्यते विशुद्धाहाराचाराभ्यां सदा क्षीयमाणशरीरपोषणेन प्रत्यवायहेतुपरिहारेण च । यथा दीपपरिपालनं स्नेहवर्तिदानात् पोषणेन क्रियते तथा शलभवातादिनिर्वापकहेतुपरिहारेण च । शरीरप्रत्यवायहेतुश्च द्विविधः बुद्धिदोषाद्विषमशरीरन्यासादिर्वातादिकारकः । दुष्परिहरश्च कालविशेषः स्वभावादिह हेमन्तादिः कफचयादिकारकः । तच्छ्लोकपूर्वार्धेन स्वास्थ्यपोषकहेतुमाह । उत्तरार्धेन तु अजातानामित्यादिना स्वास्थ्यविघातकहेतुपरिहारमाह । यद्यपि चाजातानां विकाराणामनुत्पत्तिः स्वभावसिद्धा विद्यत एव, विद्यमानायां च करोत्यर्थो मुख्यो नास्ति, तथापीदमेवाजातविकाराणामनुत्पत्तिकरणं यत् तद्विकारहेतुपरिहरणं तथा दुष्परिहरकालविशेषजनितदोषहरणं, यथा वक्ष्यति, "माधवप्रथमे मासि नभस्यप्रथमे पुनः । सहस्यप्रथमे चैव वाहयेद्दोषसंचयम्" । तथा हेत्वन्तरनिरपेक्षात्पच्यमानचक्षुःश्लेष्महरणार्थमञ्जनम् । एवमादि ॥ १० ॥

**अत ऊर्ध्वं शरीरस्य कार्यमभ्यञ्जनादिकम् ।**
**स्वस्थवृत्तिमभिप्रेत्य गुणतः संप्रवक्ष्यते ॥ ११ ॥**

अत ऊर्ध्वमित्यादि । अतः स्वास्थ्यानुवृत्तिकारणकथनादूर्ध्वं, कार्यमवश्यं कार्यं स्वस्थवृत्तिमभिप्रेत्य, स्वस्थवृत्तानुष्ठानेऽक्ष्यञ्जनाद्यवश्यं कार्यमित्यर्थः । अञ्जनशब्दोऽभ्यञ्जनेऽपि वर्तते, तदर्थमक्ष्यञ्जनमित्युक्तम् । अञ्जनमेवादावुपहितं प्रधानावयवचक्षुःपरिपालकत्वात् । उक्तं च "चक्षुः प्रधानं सर्वेषामिन्द्रियाणां विदुर्बुधाः । घननीहारयुक्तानां ज्योतिषामिव भास्करः"। यदि वा स्वस्थवृत्तमधिकृत्य यदञ्जनादि, तदुच्यते । रोगेषु तु यदञ्जनादि, तत्तच्चिकित्सासु वक्तव्यम् । यद्यपि चैतदञ्जनादि-रोगहरमपि वक्तव्यं, तथापि प्रायः स्वस्थवृत्तमतमेतदिति स्वस्थवृत्तमभिप्रेत्येत्युक्तम् ॥ ११ ॥

**सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।**
**पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ॥ १२ ॥**

सौवीरेत्यादि—सुवीरानदीभवं सौवीरं, नित्यं प्रत्यहम्, अक्ष्णोरिति द्विवचनमक्षिगोलकद्वयेऽप्यञ्जनविधानार्थम् । पञ्चरात्राष्टरात्रग्रहणं दूरान्तरकाले नियमदर्शनार्थम् । तेन दोषकालमपेक्ष्यार्वाञ्चध्ये ऊर्ध्वं च कर्तव्यं स्रावणमञ्जनमिति भवति ॥ १२ ॥

**चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ।**
**दिवा तन्न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम् ॥१३॥**
**विरेकदुर्बलादृष्टिरादित्यं प्राप्य सीदति ।**
**तस्मात्स्राव्यं निशायां तु ध्रुवमञ्जनमिष्यते ॥**
**ततः श्लेष्महरं कर्म हितं दृष्टेः प्रसादनम् ॥ १४ ॥**

स्रावणाञ्जनप्रकरणोपपत्तिमाह—चक्षुरित्यादि । चक्षुरिन्द्रियस्य तैजसस्य श्लेष्मत आप्यात्तैजसविरुद्धत्वेन हेतुना विशेषादिति वातपित्तभयादधिकत्वेन भयं भवति । श्लेष्मजये च स्रावणं प्रधानं तस्मात्स्राव्यमित्यर्थः । स्रावणाञ्जनकालं नियमयति—निशायामित्यादि । ध्रुवमवश्यं निशायामेव अञ्जनं प्रत्यासन्नत्वात्स्रावणाञ्जनम् । जतूकर्णेनापि स्रावणरसाञ्जनं निशायामेव विहितं, यदुक्तं "सप्ताहाद्रसाञ्जनं नक्तमिति । शालाक्येऽप्युक्तं "विरेकदुर्बला दृष्टिरादित्यं प्राप्य सीदति । रात्रौ सुप्तगुणाच्चाक्षि पुष्यत्यञ्जनकर्षितम्" । सौवीराञ्जनं च विरेचनं न भवति, चक्षुःप्रसादमात्रं करोति । तेनैतद्दिवाक्रियमाणं न विरोधि । अन्ये तु व्याख्यानयन्ति ध्रुवं नित्यकर्तव्यं सौवीराञ्जनं यत्तन्निशि कर्तव्यं, स्रावणाञ्जनं तु श्लेष्मोद्रेकविषये वमनवत्पूर्वाह्ण एव कर्तव्यम् ॥ १३-१४ ॥

यथा हि कणकादीनां मणीनां विविधात्मनाम् ।
धौतानां निर्मला शुद्धिस्तैलचेलकचादिभिः॥१५॥
एवं नेत्रेषु मर्त्यानामंजनाश्च्योतनादिभिः ।
दृष्टिर्निराकुला भाति निर्मले नभसीन्दुवत् ॥१६॥

अंजनगुणमाह—यथाहीत्यादि । शुद्धिः स्वाभाविकी साऽऽगन्तुधूल्याद्यपनयने निर्मला सती भाति । आश्च्योतनं निलविरेकार्थं द्रवौषधदानं, तच्चेहानभिहितमपि फलैक्यादभिहितम् । आदिशब्देन पुटकादीनां ग्रहणम् ॥ १५-१६ ॥

हरेणुकां प्रियंगुं च पृथ्वीकां केशरं नखम् ।
ह्रीवेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम् ॥ १७ ॥
ध्यामकं मधुकं मांसी गुग्गुल्वगुरुशर्करम् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षलोध्रत्वचः शुभाः ॥ १८ ॥
वन्यं सर्जरसं मुस्तं शैलेयं कमलोत्पले ।
श्रीवेष्टकं शल्लकीं च शुकबर्हमथापि च ॥ १९ ॥
पिष्ट्वा लिंपेच्छरेषीकां तां वर्तिं यवसन्निभाम् ।
अंगुष्ठसंमितां कुर्यादष्टाङ्गुलसमां भिषक् ॥ २० ॥
शुष्कां निगर्भां तां वर्तिं धूमनेत्रार्पितां नरः ।
स्नेहाक्तामग्निसंप्लुष्टां पिबेत्प्रायोगिकीं सुखाम् ॥२१॥

इहैवांजनान्ते धूमपानं विधास्यति "नावनांजननिद्रान्ते" इत्यादिना । अतोऽञ्जनानन्तरं धूमोऽभिधीयते । उक्तंच शालाक्ये "तीक्ष्णांजनेनांजितलोचनस्य यः संप्रदुष्टो न निरेति नेत्रात् । श्लेष्मा शिरःस्थः स तु पीतमात्रे धूमे प्रशान्तिं लभते क्षणेन" । हरेणुकामित्यादि । हरेणुका रेणुका, पृथ्वीका कृष्णजीरकं, केशरं नागकेशरं, पद्मकं पद्मकाष्ठम्, ध्यामकं गन्धतृणं, न्यग्रोधानां प्लक्षान्तानां त्वचस्तासां विशेषणं शुभा इति, वन्यं कैवर्तमुस्तकं, शुकबर्हं ग्रन्थिपर्णकं, शरेषीका शरपुष्पस्य नाला शरिकेति प्रसिद्धा । अत्र विधानं-पिष्टैर्भेषजैः शरिका तथा वेष्टयितव्या यथाष्टाङ्गुलायताङ्गुष्ठपरिणाहा च वर्तिः स्यात्, तां च शुष्कां सतीं वर्तिं शरेषीकामाकृष्य स्नेहेनाभ्यज्याग्निनैकस्मिन्नग्रेऽवदह्यमानां वक्ष्यमाणधूमपाननलिकायां मूलरन्ध्रे निवेश्यातो धूमः पेयः । प्रायोगिकी च नित्यपेयवर्तिसंज्ञा । सुखामित्यनेनाकटुकत्वमनत्ययत्वं च दर्शयति ॥ १७-२१ ॥

वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः ।
वर्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत् ॥ २२ ॥

स्नैहिकधूमवर्तिमाह—वसेत्यादि । मधूच्छिष्टं सिक्थकं, वरौषधैरिति मधुरकविशेषणं, मधुरकाणि जीवनीयानि जीवकर्षभकादीनि । युक्तियुक्तैरित्यनेन तथा वसादिग्रहणं कर्तव्यं, यथा वर्तिः कर्तुं पार्यत इति दर्शयति । वर्तिकरणं च पूर्ववत् । स्नैहिकी स्नेहनकारिका ॥ २२ ॥

श्वेता ज्योतिष्मती चैव हरितालं मनःशिला ।
गन्धाश्चाऽगुरुपत्राद्या धूमः शीर्षविरेचनम् ॥ २३ ॥

गौरवं शिरसः शूलं पीनसार्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥ २४ ॥
दन्तदौर्बल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः ॥ २५ ॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ।
श्लेष्मप्रसेको वैस्वर्यं गलशुण्ड्युपजिह्विका ॥ २६ ॥
खालित्यं पिञ्जरत्वं च केशानां पतनं तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥ २७ ॥
धूमपानात्प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥ २८ ॥
न च वातकफात्मानो बलिनोऽप्यूर्ध्वजत्रुजाः ।
धूमवक्त्रकपानस्य[1] व्याधयः स्युः शिरोगताः ॥ २९ ॥

वैरेचनिकधूमपानवर्तिं दर्शयति—श्वेतेत्यादि । श्वेताऽपराजिता, गन्धाः सुगन्धद्रव्याणि, तेषां विशेषणमगुरुपत्राद्याः, अगुरु च पत्राद्याश्च अगुरुपत्राद्याः । अगुरुपत्राद्याश्च ज्वरे वक्ष्यमाणाः "अगुरुकुष्ठतगरपत्र" इत्यादिगणा मन्तव्याः । अगुर्वाद्या इति न कृतं, कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुंगकस्रावभयात्परिहारार्थम् । वक्ष्यति च त्रिमर्मीये "धूमवर्तिं पिबेद्गन्धैरकुष्ठतगरैस्तथा । शालाक्येप्युक्तं "नतकुष्ठे स्रावयतो धूमवर्तिप्रयोजिते । मस्तुलुंगं विशेषेण तस्मात्तेनैव योजयेत्" । सुश्रुतेऽप्युक्तं "एलादिना तरगकुष्ठवर्ज्येन" इति धूमपाने गुणान् दर्शयति—गौरवमित्यादि । शिरोरुहाः केशाः; कपालाश्च शिरस एव, बलिनोऽपीति बलवत्कारणा इत्यर्थः । ऊर्ध्वजत्रुजत्वेनैव शिरोगता अपि लब्धास्ते पुनरभिधीयन्ते विशेषविधानार्थम् ॥ २३-२९ ॥

प्रयोगपाने तस्याष्टौ कालाः संपरिकीर्तिताः ।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥ ३० ॥
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान्निघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत् ॥ ३१ ॥
तथा वातकफात्मानो न भवन्त्यूर्ध्वजत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ॥३२॥

धूमपानकालं दर्शयति—प्रयोगेत्यादि । प्रयोगपाने प्रायोगिकधूमपाने एतेऽष्टौ कालाः । स्नैहिकपाने तु वातवृद्ध्युपलक्षितः कालो वैरेचनिकपाने तु श्लेष्मवृद्ध्युपलक्षितो मन्तव्यः । प्रायोगिक एव प्रायः स्वस्थवृत्ताधिकारे, तेन तत्काल एवं कण्ठरवेणाभिधीयन्ते । यदि वा प्रयोगपाने सततपाने स्वस्थाधिकार इति यावत् । तेन धूमत्रयस्याप्येते काला भवन्ति । वातकफात्मशब्देन वातात्मानः कफात्मानो वातकफात्मानश्च गृह्यन्ते । पेयाः स्युरित्यादावापानाधूमाभ्यवहारमोक्षाः । एकैकस्मिन् स्नानादिधूमपानकाले, त्रिरिति आवृत्तित्रयं कर्तव्याः ते चावृत्तित्रयेऽपि त्रिधा त्रिधा कर्तव्याः । एकैकस्मिन् धूम-

[1] धूमरक्तकपालस्येति पाठः.

पानकाले नवधूमाभ्यवहारमोक्षाः कर्तव्याः । त्रींस्त्रीनभ्यवहारान् कृत्वा विश्रामोऽन्तरा कर्तव्य इत्यर्थः ॥ ३०-३२ ॥

**परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।**
**प्रयोगे स्नैहिके त्वेकं वैरेच्यं त्रिचतुः पिबेत् ॥ ३३ ॥**
**हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।**
**यथेरितानां दोषाणां सम्यक्पीतस्य लक्षणम् ॥३४॥**
**बाधिर्यमान्ध्यमूकत्वं रक्तपित्तं शिरोभ्रमम् ।**
**अकाले चातिपीतस्य धूमः कुर्यादुपद्रवान् ॥ ३५ ॥**

अष्टसु कालेष्वेकस्मिन्नेकस्मिन् दिवसे यस्मिन् धूमे यावान् यावान् पानकालनियमस्तं दर्शयति—परमित्यादि । कालेषु स्नानादिकालेषु । प्रयोगे प्रायोगिकधूमे । स्नैहिके त्वेकमिति स्नैहिकधूमे एकमेव कालं व्याप्य धूमं पिबेदिति योज्यम्। त्रिचतुरिति वैरेच्ये दोषबलापेक्षो विकल्पः ॥ ३३-३५ ॥

**तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ।**
**स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ॥ ३६ ॥**
**शीतं तु रक्तपित्ते स्याच्छ्लेष्मपित्ते विरूक्षणम् ।**
**परंत्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ॥३७॥**

तत्रेत्यादि । धूमज इत्यधिकप्रयुक्तधूमकृते यदि वायुः पित्तानुगो वृद्धस्तदा नावनाञ्जनतर्पणं स्नैहिकं स्नेहकृतं कर्तव्यं, शीतं शीतकृतं कर्तव्यं नावनाद्येव, विरूक्षणमपि नावनाद्येव ॥ ३६-३७ ॥

**न विरिक्तः पिबेद्धूमं न कृते बस्तिकर्मणि ।**
**न रक्ती न विषेणार्तो न शोचन्न च गर्भिणी ॥ ३८ ॥**
**न श्रमे न मदे नामे न पित्ते न प्रजागरे ।**
**न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ॥३९॥**
**न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम् ।**
**धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ॥४०॥**
**न तालुशोषे तिमिरे शिरस्यभिहते न च ।**
**न शङ्खके न रोहिण्यां न मेहे न मदात्यये ॥ ४१ ॥**
**एषु धूममकालेषु मोहात्पिबति यो नरः ।**
**रोगास्तस्य प्रवर्धन्ते दारुणा धूमविभ्रमात् ॥ ४२ ॥**

न विरिक्त इत्यादौ प्रतिनिषिद्धं नकारकरणं निषेधगौरवदर्शनार्थम् । धूमं न भुक्त्वेति पुनर्धूमग्रहणं दध्ना भुक्तवतो विशेषप्रतिषेधार्थम् ॥ ३८-४२ ॥

**धूमयोग्यः पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ।**
**घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणपो वमेत् ॥ ४३ ॥**
**आस्येन धूमकवलान् पिबन् घ्राणेन नोद्वमेत् ।**
**प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी ॥४४॥**

धूमयोग्य इत्यादौ घ्राणेनेति छेदः । प्रतिलोमं गत आस्यपीतो घ्राणं गत इत्यर्थः । हिशब्दद्वयं च हेतौ । तेनायमर्थः यस्मात्प्रतिलोमं विमार्गं गतो धूमस्तस्माच्चक्षुषी हिंस्यात् । यस्माद्धिंस्यात्तस्माद्घ्राणेन नोद्वमेदिति ॥ ४३-४४ ॥

**ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्ययम् ।**
**पिबेच्छिद्रं पिधायैकं नासया धूममात्मवान् ॥ ४५॥**

सम्यगुपविष्टः सूपविष्टः । त्रिपर्ययमिति तु यद्यपि पूर्वमेवोक्तम् आपानास्त्रय इत्येतेन, तथापि त्रिपर्ययमिति धूमपानपर्यन्तम् ऋज्वङ्गचक्षुरादि कर्तव्यं नोपक्रममात्र एवेति पुनरभिधानेन दर्शयति । नासिकयापि रन्ध्रैकच्छिद्रं पिधाय पिबेन्न पुनर्नासिकयैव पिबेदिति नियमः ॥ ४५ ॥

**चतुर्विंशतिकं नेत्रं स्वाङ्गुलैः स्याद्विरेचने ।**
**द्वात्रिंशदङ्गुलं स्नेहे प्रयोगेऽध्यर्धमिष्यते ॥ ४६ ॥**
**ऋजुत्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम् ।**
**बस्तिनेत्रसमं द्रव्यं धूमनेत्रे प्रशस्यते ॥ ४७ ॥**

नेत्रं नलिका चतुर्विंशतिकं चतुर्विंशत्यङ्गुलम्, अध्यर्धं सार्धमित्यर्थः । इह वैरेचनिकनेत्रमेव चतुर्विंशत्यङ्गुलं सार्धं सत्षट्त्रिंशदंगुलप्रमाणं, प्रायोगिकधूमपाने तत्तु जतूकर्णप्रत्याद्बोद्धव्यम् । यदाह "सार्द्धरूयंशयुतः पूर्णो हस्तः प्रायोगिकाद्विषु" इति । त्रिकोषाफलितमिति पर्वभिर्भिन्नैः समन्वितम् ॥ ४६-४७ ॥

**दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः ।**
**नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः ॥ ४८ ॥**
**यदा चोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत् ।**
**कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत् ॥ ४९ ॥**
**अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत् ।**
**स्तिमितो मस्तकश्चैवमपीतं धूममादिशेत् ॥ ५० ॥**
**तालु मूर्धा च कण्ठश्च शुष्यते परितप्यते ।**
**तृष्यते मुह्यते जंतू रक्तं च स्रवतेऽधिकम् ॥ ५१ ॥**
**शिरश्च भ्रमतेऽत्यर्थं मूर्च्छा चास्योपजायते ।**
**इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते ॥ ५२ ॥**

यथाभिहितनलिकया पाने गुणं दर्शयति—दूरादित्यादि । केचिद्धूमसम्यक्पानादिलक्षणं ग्रन्थं पठन्ति । तत्र चोरश्चेत्यादि सम्यग्धूमपानलक्षणम् । अविशुद्ध इत्याद्ययोगलक्षणम् । तालिवत्याद्यतियोगलक्षणम् । धूममिति पष्ठ्यर्थे द्वितीया । यदि वा धूमस्येति पाठः ॥ ४८-५२ ॥

**वर्षे वर्षेऽणुतैलं च कालेषु त्रिषु ना चरेत् ।**
**प्रावृट्शरद्वसन्तेषु गतमेघे नभस्तले ॥ ५३ ॥**
**नस्तःकर्म यथाकालं यो यथोक्तं निषेवते ।**
**न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥ ५४ ॥**
**न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।**
**न च केशाः प्रमुच्यन्ते वर्धन्ते च विशेषतः ॥ ५५ ॥**

---

१ च उरश्च इति पदच्छेदः. २ ना नरो वर्षे वर्षे प्रतिवर्षं नभस्तले गतमेघे सति त्रिषु प्रावृट्शरद्वसन्तेषु कालेषु अणुतैलमाचरेत्, नस्तःकर्मणा प्रयुंजीतेत्यर्थः ।

मन्यास्तम्भः शिरःशूलमर्दितं हनुसंग्रहः ।
पीनसार्धावभेदौ च शिरःकम्पश्च शाम्यति ॥ ५६ ॥
शिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ।
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥५७॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ॥ ५८॥
न चास्य रोगाः सहसा प्रभवन्त्यूर्ध्वजत्रुजाः ।
जीर्यतश्चोत्तमाङ्गेषु जरा न लभते बलम् ॥ ५९ ॥

धूमनस्ययोर्नासाद्वारसामान्याद्धूममनु नस्यं ब्रूते—वर्षे इत्यादि । अणूनां स्रोतसां हितमित्यणुतैलं, तच्चाग्रे वक्ष्यमाणम् । शिरःकपालानामेव शिराः सन्धयः स्नायुकण्डराश्च । उत्तमाङ्गेष्विति बहुवचनं शिरसोऽभ्यर्हितत्वात् । यदि वा जरा वलीपलितादिलक्षणा या सा उत्तमा प्रकर्षप्राप्ताऽङ्गेषु मस्तकादिषु निषिध्यते ॥ ५३–५९ ॥

चन्दनागुरुणी पत्रं दार्वीत्वङ्मधुकं बलाम् ।
प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं बिल्वमुत्पलम् ॥ ६० ॥
ह्रीवेरमभयां वन्यं त्वङ्मुस्तं शारिवां स्थिराम् ।
जीवन्तीं पृश्निपर्णीं च सुरदारु शतावरीम् ॥ ६१ ॥
हरेणुं बृहतीं व्याघ्रीं सुरभीं पद्मकेशरम् ।
विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि ॥ ६२ ॥
तैलाद्दशगुणं शेषं कषायमवतारयेत् ।
तेन तैलं कषायेण दशकृत्वो विपाचयेत् ॥ ६३ ॥
अथास्य दशमे पाके समांशं छागलं पयः ।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥ ६४ ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्धपलोन्मिताम् ।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥६५॥
त्र्यहात् त्र्यहाच्च सप्ताहमेतत्कर्म समाचरेत् ।
निवातोष्णसमाचारो हिताशी नियतेन्द्रियः ॥ ६६॥
तैलमेतत्त्रिदोषघ्नमिन्द्रियाणां बलप्रदम् ।
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ॥ ६७ ॥

चन्दनेत्यादौ दार्व्यास्त्वक् दार्वीत्वक् । जीवन्ती सुवर्णनाला स्वनामप्रसिद्धा, सुरभी शूकशिम्बा, पद्मस्य केशरं पद्मकेशरम्, । माहेन्द्र आन्तरिक्षे । शतगुणे तैलादिति योज्यम् । दशगुणमित्येतदपि तैलादिति योजनीयम् । अत्र तु क्वाथ्यभेषजं तावन्मानं ग्राह्यं यावत्क्वाथार्थोपपत्तिं पानीयं भेषजचतुर्गुणं भवति । "क्वाथ्याच्चतुर्गुणं वारि" इत्यस्या अबाधितत्वात् । न तु भेषजाच्छतगुणेऽम्भसीत्येवं व्याख्येयम् । यदाह जतूकर्णः—"पक्त्वाथाम्बुशतप्रस्थे दशभागस्थितेन तु । तैलप्रस्थं पचेत्तेन छागक्षीरेण संयुतम्" इति । यदि वा, तैलप्रमाणानुमानेनैव "स्नेहाच्चतुर्गुणं क्वाथ्यम्" इति परिभाषया क्वाथ्यद्रव्यपरिमाणं व्यवस्थापनीयम् । पिचुनेति तूलकपिण्डिकया, नावनैस्त्रिभिर्वारत्रयेणेत्यर्थः । त्र्यहात्त्र्यहादिति एकैकं दिनमन्तरीकृत्य, सप्ताहमित्यन्तरितदिनानि वर्जयित्वा तेनैकैकस्मिन् कृते त्रयोदशाहं नस्यप्रयोगः समाप्यते ॥ ६०–६७ ॥

आपोथिताग्रं द्वौ कालौ कषायं कटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ ६८ ॥
निहन्ति गन्धं वैरस्यं जिह्वादन्तास्यजं मलम् ।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥६९॥
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च ।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ॥ ७० ॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च ।
सौगन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत् ॥७१
करञ्जकरवीरार्कमालतीककुभासनाः ।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥ ७२ ॥
धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता ।
जातीकटुकपूगानां लवङ्गस्य फलानि च ॥ ७३ ॥
कक्कोलस्य फलं पत्रं ताम्बूलस्य शुभं तथा ।
तथा कर्पूरनिर्यासः सूक्ष्मैलायाः फलानि च ॥७४॥

स्थानप्रत्यासत्त्या दन्तकाष्ठगुणान्दर्शयति,—आपोथितेत्यादि । द्विकालं सायं प्रातरिति । दन्तान् पुनातीति दन्तपवनं दन्तकाष्ठम् । निष्कृष्य मलमिति संबन्धः । ककुभोऽर्जुनः, एवंविधा एवंरसा इत्यर्थः । कटुकं लताकस्तूरी, यद्यपि लवङ्गस्य वृन्तमभिप्रेतं तथापि बहूनां फलस्य ग्राह्यत्वात् छत्रिणो गच्छन्तीति न्यायेन सामान्येन फलमित्युक्तम् ॥ ६८–७४ ॥

हन्वोर्बलं स्वरबलं वदनोपचयः परः ।
स्यात्परं च रसज्ञानमन्ने च रुचिरुत्तमा ॥ ७५ ॥
न चास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम् ।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च ॥७६॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च ।
परानपि खरान् भक्ष्यान् तैलगण्डूषधारणात् ॥७७॥
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते ।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च ॥७८॥
बलं शिरःकपालानां विशेषेणाभिवर्द्धते ।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च ॥७९॥
इन्द्रियाणि प्रसीदन्ति सुत्वग्भवति चाननम् ।
निद्रालाभः सुखं च स्यान्मूर्ध्नि तैलनिषेवणात् ॥८०॥
न कर्णरोगा वातोत्था न मन्याहनुसंग्रहः ।
नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णतर्पणात् ॥८१॥
स्नेहाभ्यङ्गाद्यथा कुम्भश्चर्म स्नेहविमर्दनात् ।
भवत्युपाङ्गादक्षश्च दृढः क्लेशसहो यथा ॥ ८२ ॥
तथा शरीरमभ्यङ्गाद्दृढं सुत्वक् च जायते ।
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ॥ ८३ ॥
स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रितम् ।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात्तं शीलयेन्नरः ॥ ८४ ॥

न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्मणि वा क्वचित् ॥ ८५ ॥

हन्वोरित्यादि स्नेहगण्डूषगुणः । नित्यमित्यादि निषेवणादित्यन्तं शिरस्तैलगुणः । मूर्ध्नितैलनिषेवणादित्युक्तेऽपि स्नेहार्द्रशिरस इति यत्करोति, तेन, यावता तैलेनार्द्रशिरः स्यात्तावन्मूर्ध्नि तैलं सेव्यमिति दर्शयति । स्नेहाभ्यङ्गादित्यादि उपाङ्गस्नेहदानम् । अक्षो रथस्य चक्रनिबन्धनकाष्ठम् । बहुदृष्टान्तकरणं तु कस्यचित्किंचित्प्रसिद्धं भविष्यति । न हि सर्वं सर्वत्र प्रसिद्धमित्यभिप्रायेण यदि वा स्नेहस्य नानाकार्यशक्त्युपदर्शनार्थम् । स्पर्शनेन्द्रिये वायुरधिकः । वैद्यकदर्शने पाञ्चभौतिकत्वादिन्द्रियस्येत्यर्थः । "त्वच्यश्च परमोऽभ्यङ्ग" इति चकाराद्वातहितश्च त्वच्यश्च, एतेनाश्रितवाताधिकस्पर्शनेन्द्रियस्य आश्रयस्य च त्वचो हित इत्युक्तं भवति । बलेन संपाद्यं कर्म बलकर्म गुरुभारहरणादि ॥ ७५–८५ ॥

सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥ ८६ ॥
खरत्वं स्तब्धतारौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥ ८७ ॥
जायते सौकुमार्यं च बलं स्थैर्यं च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥ ८८ ॥
न तस्य गृध्रसी वातः पादयोः स्फुटनं न च ।
न शिरास्नायुसंकोचः पादाभ्यङ्गेन पादयोः ॥ ८९ ॥

खरत्वमित्यादि पादाभ्यङ्गगुणः । प्रथमं पादयोरिति पदं खरत्वादिविशेषणार्थम् । द्वितीयं तु बलादेः कालान्तरोत्पादसूचनार्थम् । तृतीयं तु स्फुटनविशेषणार्थम् । चतुर्थं तु शिरास्नायुविशेषणार्थम् । शिष्टन्तु पादाभ्यङ्गेनेति पदं दूरान्तरितस्य पादाभ्यङ्गस्य स्मरणार्थम् ॥ ८६–८९ ॥

दौर्गन्ध्यं गौरवं तन्द्रां कण्डूमलमरोचकम् ।
स्वेदबीभत्सतां हन्ति शरीरपरिमार्जनम् ॥ ९० ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥ ९१ ॥

अभ्यङ्गपूर्वकत्वादुद्वर्तनस्य तमनुपरिमार्जनमुद्वर्तनं ब्रूते दौर्गन्ध्यमित्यादि । स्वेदेन बीभत्सता स्वेदबीभत्सता । शरीरस्य बलेन सन्धानं योजनं करोतीत्यर्थः ॥ ९०–९१ ॥

काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम् ॥ ९२ ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥ ९३ ॥

१ शुष्कतेति पाठः ।
२ पवित्रं वृष्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं स्नानमोजस्करं परम् ॥ इति पाठः

धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम् ।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥ ९४ ॥
मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् ।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥ ९५ ॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपविराजनम् ।
केशश्मश्रुनखादीनां कल्पनं संप्रसादनम् ॥ ९६ ॥
चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम् ।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ ९७ ॥
ईतेः प्रशमनं बल्यं गुप्त्यावरणशंकरम् ।
घर्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते ॥ ९८ ॥
स्खलतः संप्रतिष्ठानं शत्रूणां च निषूदनम् ।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥ ९९ ॥

श्रीमदिति शोभायुक्तम्, परिषदि शस्तं पारिषदं, शस्तं माङ्गल्यम् । व्यसनं सर्पपिशाचाद्यभिघातः । रत्नैवदाभरणानि, रत्नं तु विशुद्धमाणिक्यहीरकमुक्ताफलसुवर्णादि । शौचाधानं पानीयेन मृदा च । अभीक्ष्णशः पुनः पुनः । शौचमिति शुचिताकारकम् । कल्पनं छेदनम् । संप्रसाधनं मंडनम् । एतच्च यथायोग्यतया योजनीयम् । केशानां प्रसाधनं सम्यग्बन्धनादि । श्मश्रूणां कल्पनमेव । नखस्य तु कल्पनमलक्तकादिदानेन प्रसाधनं च । आदिग्रहणेन नासारोमकल्पनादि गृह्यते । पादयोरिति स्पर्शनहितमित्यनेन च संबध्यते । पादत्रं पादध्नी पादुकामिति यावत् । अत्र च वृष्यत्वचक्षुष्यत्वे प्रभावात् । यदि वा पादसंबद्धनेत्रपोषिकानाडीप्रत्यवायहरणाच्चक्षुष्यम् । ईती रोगादिदुर्दैवम् । गुप्तिः पिशाचादिभ्यो रक्षा । शंकरं कल्याणकरम् । अवष्टम्भनं बलप्रदम् । भयघ्नं सर्पादिभ्यः ॥ ९२–९९ ॥

नगरी नगरस्येव रथस्येव रथी यथा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ १०० ॥

संप्रत्युक्तस्वस्थविध्युपसंहारार्थं तथोपदिष्टस्यावधानेन करणार्थमाह—नगरीत्यादि ।—कृत्येषु करणीयेषु उक्तेष्वनुक्तेषु च । नगरदृष्टान्तेनान्तरप्रत्यवायहेतुविघातकारिणि कृत्येऽवधानं दर्शयति । रथदृष्टान्तेन च बाह्यस्पर्शादिपरिहारके कृत्येऽवधानं दर्शयति । नगरोच्छेदे ह्यान्तरो दुष्टजनसंबन्ध एव हेतुः प्रायो भवति, रथभङ्गे तु बाह्यश्वभ्रविषमपतनादिश्च ॥ १०० ॥

भवति चात्र ।

वृत्त्युपायान्निषेवेत ये स्युर्धर्माविरोधिनः ।
शममध्ययनं चैव सुखमेवं समश्नुते ॥ १०१ ॥

प्रधानभूतां शरीरप्रत्यवेक्षां कृत्वा स्वस्थेन सता यदन्यच्च

१ ई डिंबप्रवासयोरित्यमरः डिंबो विप्लवः सच सप्तविधः—अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं च षडेता ईतयः स्मृताः ॥ २ रत्नवदाभरणानि तेषां धारणं रत्नाभरणधारणम् ।

कर्तव्यं तदाह—वृत्त्युपायानिल्यादि । वृत्तिर्वर्तनं, तस्योपायाः कृष्यादयो धनैषणायां तिस्रैषणीये वाच्याः । शमः शान्तिः अध्ययनं वेदाध्ययनं निषेवेतेति संबन्धः । एवं सति सुखं समश्नुते प्राप्नोति । एतेन कृष्यादिभ्योऽर्थः शान्त्यध्ययनाभ्यां धर्मः, अर्थधर्माभ्यां च सुखलक्षणः काम इति त्रिवर्गानुष्ठानं दर्शितं भवति ॥ १०१ ॥

तत्र श्लोकाः ।

**मात्रा द्रव्याणि मात्रांश्च संश्रित्य गुरुलाघवम् ।**
**द्रव्याणां गर्हितोऽभ्यासो येषां येषां च शस्यते १०२**
**अञ्जनं धूमवर्तिश्च त्रिविधा वर्तिकल्पना ।**
**धूमपानगुणाः कालाः पानमानं च यस्य यत् ॥१०३॥**
**व्यापत्तिचिह्नं भैषज्यं धूमो येषां विगर्हितः ।**
**पेयो यथा यन्मयं च नेत्रं यस्य च यद्विधम् ॥ १०४॥**
**नस्तःकर्मगुणा नस्तःकार्यं यच्च यथा यदा ।**
**भक्षयेद्दन्तपवनं यथा यद्यद्गुणं च यत् ॥ १०५ ॥**
**यदर्थं यानि चास्येन धार्याणि कवलग्रहे ।**
**तैलस्य ये गुणा दृष्टाः शिरस्तैलगुणाश्च ये ॥ १०६ ॥**
**कर्णतैले तथाभ्यङ्गे पादाभ्यङ्गेऽगमार्जने ।**
**स्नाने वाससि शुद्धे च सौगन्ध्ये रत्नधारणे ॥१०७॥**
**शौचे संहरणे लोम्नां पादत्रच्छत्रधारणे ।**
**गुणा मात्राशितीयेऽस्मिंस्तथोक्ता दण्डधारणे ॥१०८॥**

**इत्यग्निवेशकृततन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने मात्राशितीयो नाम पञ्चमोऽध्यायः समाप्तः ।**

मात्रेत्यादि ।—अध्यायार्थसंग्रहः, मात्रोक्ता "यावद्ध्यस्याशनम्" इत्यादिना । तथा द्रव्याणि "तत्र शाली" इत्यादिना मात्रां चाश्रित्य गुरुलाघवमिति "प्रकृतिलघून्यपि मात्रामेवापेक्षन्ते" इत्येवं प्रकारेणोक्तम् । पानस्य मानं पानमानम् "आपानास्त्रिस्त्रयस्त्रयः" इत्यादि । नस्तःकार्यं यदिति "अणुतैलं", यथेति "पिचुना" इत्यादि । यदेति "प्रावृट् शरद्" इत्यादि । शेषं सुगमम् ॥ १०२–१०८ ॥

इति मात्राशितीयः पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

**अथातस्तस्याशितीयाध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**तस्याशिताद्यादाहाराद्बलं वर्णश्च वर्धते ।**
**तस्यर्तुसात्म्यं विदितं चेष्टाहारव्यपाश्रयम्[१] ॥ ३ ॥**

मात्राशितीये मात्रावदाहारस्य बलादिहेतुत्वं प्रतिपादितं, तच्च ऋतुसात्म्यापेक्षकृतस्याहारस्य भवति; तेन, ऋतुप्रविभागपूर्वकमृतुसात्म्याभिधायकं तस्याशितीयं ब्रूते । अशिताद्यादित्यशितपीतलीढखादधात्, वर्णश्चेति चकारेण पूर्वाध्यायोक्तसुखायुषी अपि गृह्येते । यदि वा बलवर्णाभ्यामेव नान्तरीयं कृत्स्नं धातुसाम्यकार्यं सुखादि गृह्यते । विदितमित्यनेन सम्यक् ज्ञानपूर्वकमृतुसात्म्यानुष्ठानं दर्शयति । चेष्टाग्रहणेन व्यवायव्यायामाभ्यङ्गादीनां ग्रहणम् । चेष्टाहारव्यपाश्रयं चेष्टाहारगोचरम् ॥ १—३ ॥

**इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात् । तत्रादित्यस्योदगयनमादानं च त्रीनृतून् शिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्, वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गं च ॥ ४ ॥**

ऋतुज्ञानमन्तरर्तुसात्म्यज्ञानं न संभवतीत्यृतूनामुपयुक्तस्वरूपज्ञानार्थमाह—इहेत्यादि । ऋतुप्रतिपादनप्रस्तावे संवत्सरं विद्यादिति संवत्सरप्रतिपादनमृतूनामेव मिलितानां संवत्सरप्रतिपादनार्थम् । मेलकश्च बुद्ध्या व्यवह्रियते न तु परमार्थत ऋतूनां मेलकोऽस्ति । ऋतूनां संवत्सरात्मकत्वं पुनः पुनस्त एवर्तवः परावर्तन्त इति ज्ञानार्थमवश्यं प्रतिपादनीयम् । इहेतीह प्रकरणे षडङ्गं विद्यादित्यन्यत्र तु रोगभिषग्जितीयादौ तत्तत्कार्यवशादन्यथापि । उक्तं च—"शीतोष्णवर्षलक्षणः काल" इति । षडङ्गमिति समाहारे द्विगुः, ऋतुव्यतिरेकेण संवत्सरस्याविद्यमानत्वात् । यदि वा समुदायिभ्योऽन्यः समुदाय इत्याश्रित्य बहुव्रीहिः कार्यः । तत्रेति ऋतुविभागकथने, उदगुत्तरां दिशं प्रति अयनं गमनम् । आददाति क्षपयति पृथिव्याः सौम्यांशं प्राणिनां च बलमित्यादानम् । त्रीन् शिशिरादीनित्यनेनैव लब्धेऽपि ग्रीष्मान्तत्वे ग्रीष्मान्तानिति शिशिरस्यादिरिति विग्रहस्य तथाऽऽदिशब्दस्य प्रकारवाचितायाः प्रतिषेधार्थम् । एवं हेमन्तान्तानिति व्याख्येयम् । दक्षिणां दिशं प्रति अयनं दक्षिणायनं, विसृजति जनयत्याप्यमंशं प्राणिनां च बलमिति विसर्गः । संज्ञाप्रणयनं च व्यवहारार्थं, निरुक्तिप्रतीयमानार्थप्रतिपादनार्थं च ॥ ४ ॥

**विसर्गे पुनर्वायवो नातिरूक्षाः प्रवान्तीतरे पुनरादाने, सोमश्चाव्याहतबलः शिशिराभिर्भाभिरापूरयन् जगदाप्याययति शश्वदतो विसर्गः सौम्यः आदानं पुनराग्नेयं तावेतावर्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते ॥ ५ ॥**

विसर्गधर्मं निर्दिशति विसर्गे—पुनरित्यादि । यद्यपि चादानमादौ पठितं तथापि प्रतिलोमतन्त्रयुक्त्याऽऽदौ विसर्गगुणकथनं, यदि वा प्रथममादानस्योत्तरायणरूपस्य प्रशस्तत्वादग्रेऽभिधानम्, इह तु विसर्गस्य बलजनकत्वेनाभिप्रेतत्वादग्रेऽभिधानम् । नातिरूक्षा इति सौम्यविसर्गकालसंबन्धे मन्दीकृतरौक्ष्याः प्रवान्तीति । इतरे पुनरादान इति—अप्रशान्तातिरूक्षाश्चाग्नेयादानसंबन्धाहितरूक्षत्वात् । सोमश्चेत्यादि प्रकृतेन विसर्गेण संबध्यते, अव्याहतबल इति कालमार्गमेघवा-

१ तस्यर्तुसात्म्यमित्यत्र वक्ष्येति पाठो नातिसमीचीनः ।

तादिभिस्तदा सूर्यस्य सोमपरिपन्थिनो हतबलत्वात् । शिशिराभिः शीताभिः, शश्वदिति छेदः, सौम्यः सोमगुणप्रधानः, आग्नेयमग्निगुणप्रधानमप्रतिहतबलत्वेनेत्यर्थः । नन्वेतावर्तवादित्यचन्द्रवातानां बलवत्त्वमबलवत्त्वं च कथं भवतीत्याह—तावेतावित्यादि ।—कालो देवतारूपः, स च नित्यरूपोऽपि प्राणिनामदृष्टेन नानारूपेण गृहीतः सन् कदाचित् सूर्यबलवायुबलसोमबलादीन् करोति । स्वभावः सूर्यस्य सौम्यांशक्षयकर्तृत्वादिर्वायोर्विरूक्षणादिः सोमस्याप्यायनादिः, मार्गो दक्षिण उत्तरश्च, तत्र दक्षिणः कर्कटादयो धनुरन्ताः, मकरादिरुत्तरः । एते च कालस्वभावमार्गपरिग्रहा यथासंभवं बोद्धव्याः । न हि सोमे मार्गपरिग्रहः कंचिद्विशेषमावहति । वायोश्च मार्गपरिग्रह एव नास्ति । परिगृहीताः संबद्धाः, कालर्त्वादीनां निर्वृत्तिप्रत्ययभूता निष्पत्तिकारणभूताः, उपदिश्यन्ते आचार्यैरिति शेषः । कालः संवत्सरोऽयनद्वयं च, ऋतवः शिशिरादयः, देहस्य बलं देहबलम् । अन्ये तु ब्रुवते—संवत्सरस्यायनद्वयस्य च ऋतुमेलकरूपत्वादृतुग्रहणेनैव ग्रहणं लब्धं, कालग्रहणमृतुविशेषणं, तेन कालरूप ऋतुरिति स्त्रीणामेवार्तवदर्शनं यदृतुस्तद्व्यावर्त्यते । प्रत्ययभूता इत्यत्र भूतशब्द उपमाने । केचिद्व्याख्यानयन्ति—अर्कवायू इत्येकतया पठित्वा सोमश्चेति यत्पृथक् पठति, तेनार्कवाय्वोर्मिलितयोरादानं प्रति कारणत्वं, विसर्गं प्रति पृथगेव सोमस्य कारणत्वमिति दर्शयति । एवंबलहरणबलकरणादिष्वपि बोद्धव्यम् ॥ ५ ॥

**तत्र रविर्भाभिराददानो जगतः स्नेहं वायवस्तीव्ररूक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेष्वृतुषु यथाक्रमं रौक्ष्यमुत्पादयन्तो रूक्षान्रसान् तिक्तकषायकटुकांश्चाभिवर्धयन्तो नृणां दौर्बल्यमावहन्ति ॥ ६ ॥**

तत्रेत्यादि । आददान इत्युच्छोषयन्, जगतः स्थावरजङ्गमस्य, स्नेहं सारं सौम्यभागमित्यर्थः । न केवलं रविः, वायवश्च शोषयन्तः स्नेहमिति संबन्धः, तीव्राश्च रूक्षाश्च तीव्ररूक्षाः, यदि वा तीव्रं रौक्ष्यं येषां ते तीव्ररौक्ष्याः एतच्चादाने तीव्रेण रविणा संबन्धाद्वायोर्भवति योगवाहित्वाद्वायोः । उक्तं हि—"योगवाही परं वायुः संयोगादुभयार्थकृत्" इत्यादि । यथाक्रममिति शिशिरे रौक्ष्यं अल्पं, तिक्तं रसमल्पं च दौर्बल्यं तथा वसन्ते मध्यं रौक्ष्यं, कषायं रसं, मध्यं दौर्बल्यं, तथा ग्रीष्मे प्रकृष्टं रौक्ष्यं, कटुकं रसं, महच्च दौर्बल्यं दर्शयति । यद्यपि च कषायो रसो रूक्षतमः कटुकश्च रूक्षतरः, यदुक्तं "रौक्ष्यात्कषायो रूक्षाणां प्रवरो मध्यमः कटुः" इत्यादि । रौक्ष्यप्रकर्षश्च ग्रीष्मे, मध्यमबलं च रौक्ष्यं वसन्ते, तथापि वाय्वग्निगुणबाहुल्यात्कटुकस्य वाय्वग्निगुणबहुले ग्रीष्मकालएवोत्पत्तिः । पवनपृथिव्युत्कर्षवति तु वसन्ते च पवनपृथिव्युत्कर्षजन्यस्य कषायस्योत्पत्तिः । यदुक्तं "वाय्वग्निगुणभूयिष्ठत्वात्कटुकः, पवनपृथिव्यतिरेकात्कषायः" इति । पृथिव्युत्कर्षश्च कालविशेषप्रभावकृतः कार्यदर्शनादुन्नेयः । अभिवर्धयन्त इति वचनाद् यथास्वकाले तिक्तादीनां अभिवृद्धिः सूच्यते, तेन न तदेकरसत्वम् । अत्र च क्रमवद्रौक्ष्योत्पत्तितिक्ताद्युत्पत्ती अपि दौर्बल्योत्पत्तौ कारणं, यत् रौक्ष्यमुत्पादयन्त इति तिक्तकषायकटुकानभिवर्धयन्त इति च हेतुगर्भविशेषणद्वयं कृत्वा दौर्बल्यमावहन्तीत्युक्तम् ॥ ६ ॥

**वर्षाशरद्धेमन्तेष्वृतुषु तु दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे, शशिनि चाव्याहतबले माहेन्द्रसलिलप्रशान्तसन्तापे जगत्यरूक्षा रसाः प्रवर्धन्तेऽम्ललवणमधुरा यथाक्रमं तत्र बलमुपचीयते नृणामिति ॥ ७ ॥**

वर्षेत्यादि । तुशब्दः पूर्वपक्षव्यावृत्तौ, दक्षिणाभिमुखे दक्षिणाशां गन्तुमुद्यत एवार्के, तेन विषुवोभयोपलक्षितमध्यदेशादुत्तरेण वर्तमानोऽपि रविर्यदैव दक्षिणाशां गन्तुमुद्यतो भवति तदैव क्षीयमाणबलो भवति, उत्तराशागमनप्रकर्षाहितबलप्रकर्षतया तु स्तोकस्तोकक्रमापचीयमानबलोऽपि तथा दुर्बलो न लक्ष्यते । एवमुत्तरायणेऽपि व्याख्येयम् । कालः पूर्वं व्याख्यातः, मार्ग इह दक्षिणाभिमुखः, मेघस्य वातो मेघवातः, वर्षणं वर्षः, एतैरभिहतप्रतापेऽर्क इति संबन्धः। वातस्त्विह मेघसंबन्धाहितशैत्योऽर्कतापपरिपन्थी भवति, शशिनोऽव्याहतबलत्वं सूर्यस्य परिपन्थिनोऽभिहतप्रतापत्वादनुगुणमेघवातवर्षणयोगाच्च । जगति स्थावरजङ्गमे । अत्र च पृथिव्यग्निभूयिष्ठत्वादम्लः सलिलाग्निभूयिष्ठत्वाल्लवण इत्युक्तं, तत्कथं सौम्ये विसर्गे तयोश्चाग्नेययोः उत्पाद इति न वाच्यम्। यतो बलप्रकर्षवतोऽर्कस्य क्षीयमाणबलस्यापि विषुवपर्यन्तं बलवत्त्वमस्त्येवेति व्युत्पादितमेव ॥ ७ ॥

भवन्ति चात्र ।

**आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम् ।**
**मध्ये मध्यबलं त्वन्ते श्रेष्ठमग्रे विनिर्दिशेत् ॥ ८ ॥**

संप्रति शिशिरादौ बलह्रासः प्रतिपादितो वर्षादौ च बलोत्कर्षः । तत्र शिशिरे दुर्बला, वर्षासु बलवन्तः प्राणिनो भवन्तीत्यादिदुर्ग्रहं निषेद्धुमाह—आदावन्ते चेत्यादि । विसर्गस्यादौ वर्षासु, आदानस्यान्ते ग्रीष्मे दौर्बल्यं प्रकर्षप्राप्तं निर्दिशेदिति संबन्धः । तथा मध्ये विसर्गस्य, शरदि आदानस्य मध्ये वसन्ते मध्यं नातिक्षीणं नातिवृद्धं बलं विनिर्दिशेदिति योज्यम् । तथान्ते विसर्गस्य हेमन्तेऽथ च प्रथमे आदानस्य शिशिरे श्रेष्ठं बलं विनिर्दिशेदिति योजना । एवं मन्यते—विसर्गप्रकर्षाहितबलप्रकर्षः पुरुष आदानस्यादौ शिशिरे स्तोकक्षीयमाणबलोऽपि बलवान् भवति, यथा—पौषमासान्ताहितवृद्धिप्रकर्षा निशा माघफाल्गुनयोः क्षीयमाणापि दिवसान्महत्येव भवति । अनेन न्यायेन वर्षासु दौर्बल्यं, वसन्तशरदोश्च मध्यमं बलं बोद्धव्यम् । एवं कालर्तुरसदेहबलकारणत्वमर्कादीनां व्यवस्थापितम् ॥ ८ ॥

शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली ।
पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः ॥ ९ ॥

स यदा नेन्धनं युक्तं लभते देहजं तदा ।
रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति ॥१०॥

तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान् ।
औदकानूपमांसानां मेध्यानामुपयोजयेत् ॥ ११ ॥

बिलेशयानां मांसानि प्रसहानां भृतानि च ।
भक्षयेन्मदिरां शीधुं मधु चानुपिबेन्नरः ॥ १२ ॥

गोरसानिक्षुविकृतीर्वसां तैलं नवौदनम् ।
हेमन्तेऽभ्यस्यतस्तोयमुष्णं चायुर्न हीयते ॥ १३ ॥

अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जेन्ताकमातपम् ।
भजेद्भूमिगृहं चोष्णमुष्णं गर्भगृहं तथा ॥ १४ ॥

शीतेषु संवृतं सेव्यं यानं शयनमासनम् ।
प्रावाराजिनकौषेयप्रवेणीकुथकास्तृतम् ॥ १५ ॥

गुरूष्णवासादिग्धाङ्गो गुरुणाऽगुरुणा सदा ।
शयने प्रमदां पीनां विशालोपचितस्तनीम् ॥ १६ ॥

आलिङ्ग्यागुरुदिग्धाङ्गीं सुप्यात्समदमन्मथः ।
प्रकामं च निषेवेत मैथुनं शिशिरागमे ॥ १७ ॥

वर्जयेदन्नपानानि लघूनि वातलानि च ।
प्रवातं प्रमिताहारमुदमन्थं हिमागमे ॥ १८ ॥

दोषकारणत्वं त्वग्रे ऋतुविधाननिर्देशेऽभिधास्यते, वर्धमान-
बलप्रकर्षवत्तया हेमन्तस्याभिप्रेतत्वात् तत्रारम्भमेवाग्रे प्राह—
शीत इत्यादिना । शीते शीतगुणयुक्ते हेमन्ते, यद्यपि चा-
नुक्ते शीत इति विशेषणे हेमन्तः शीत एव लभ्यते, तथापि
न पूर्वं क्वचिद्धेमन्ते शीतत्वं प्रतिपादितमिति प्रतिपाद्यते ।
यदि वा यदैव हेमन्ते शीतं महद्भवति तदैव विशेषेण वह्नि-
र्बली भवति, नोपक्रममात्रेणापि, ऋतुव्यापत्तौ शीतादियोग
इति च शीत इति पदेन लभ्यते । हिमसंवन्धाद्विशेषेण शी-
तोऽनिलः शीतानिलः विशेषेण शीतत्वं वायोर्योगवाहित्वात्
शीतकालसंवन्धादेव लब्धं पुनरभिधीयतेऽग्निसंरोधे हेतुत्वात्।
वायुर्हि हिमसंवन्धादेव बहिर्निर्गच्छच्छरीरोष्मणो रोधं कृत्वा
कुंभकारपवनाहितपङ्कलेप इवान्तरस्य वह्नेर्वृद्धिमावहति । ए-
तेन यदुच्यतेऽसमानाच्छीतवातात् कथमग्निवृद्धिरित्येतदपा-
स्तम् । नह्यत्र शीतो वातोऽग्नित्वेन परिणमते, किंतर्हि निर्ग-
च्छत्तेजःप्रतीपीकृतः । शीतानिलस्य स्पर्शः शरीरसंवन्ध इत्यर्थः।
बलिनां प्राणिनां, हेमन्तस्वभावाद्बली भवति; अनेन प्राणिबलव-
त्त्वमग्निबलवत्त्वे हेतुरिति दर्शयति। उक्तं च हस्तिवैद्यके बाल-
गजानां नीरोगत्वप्रतिपादने, यथा—"अव्याहतादभिप्राया-
त्प्रीतिः प्रीतेर्बलं बलाद् । अग्निरग्नेश्च धातूनां बलं नाशस्ततो
रुजाम्" इति । मात्रया यद् गुर्वतिमात्रमित्यर्थः, द्रव्यतश्च
द्रव्यस्वभावतश्च यद् गुरु नवधान्यादि, तत्क्षमः । एवंभूतो
बली वह्निर्यदा युक्तं गुरुभूतं चान्नं न लभते, तदा देहजं रसं
हिनस्ति क्षयं नयति, देहजं देहजातं धातुरूपं रसमित्यर्थः ।
अत इन्धनाभावे सति रसधातुक्षयाद्वायुः प्रकुप्यति । हेमन्ते
हेत्वन्तरमाह वातकोपे—शीतः शीत इति । यस्मादयं शी-
तगुणो वायुः, तस्मात् शीतकाले हेमन्तलक्षणे समानं कारण-
मासाद्य कुप्यतीत्यर्थः । अतो वृद्धो वायुः, मेदस्विनो यथाऽग्नि-
वृद्धिं करोति, न तु वैषम्यमनतिवृद्धत्वात्, तथाग्निवृद्धिमेव
करोति । यदुक्तं—"मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि" । इत्यादिनाऽष्टौ नि-
न्दितीये । तस्मादिति देहजरसक्षयभयात् । प्रकरणलब्धोऽपि
तुषारसमय इति यत्पुनः करोति, तद्विशेषेण तुषारपाते वि-
शेषेण स्निग्धादीनां भोजनार्थम् । मेध्यानां मेदुराणाम् । औ-
दकानूपमांसादयश्च हेमन्तकालकफचयसंवर्धका अपि महा-
त्ययवातविकारप्रतिपक्षत्वेन व्यवायादिकफचयप्रतिपक्षयुक्ति-
द्वाराऽभिप्रेताः । औदकाः कूर्मादयोऽन्नपाने वक्ष्यमाणाः,
आनूपाः शूकरखड्गादयः, बिलेशया गोधाप्रभृतयः, प्रसहा
गोखरादयः, भृतं भर्जित्रमिति प्रसिद्धम् । हेमन्तेऽभ्यस्यत
इति पुनर्हेमन्तग्रहणं, हेमन्तं व्याप्यैवोष्णोदकसेवोपदर्शना-
र्थम् । जेन्ताकः स्वेदविशेषो वक्ष्यमाणः । गर्भगृहं गृहकोष्ठ-
कम् । हेमन्त इत्यनेनार्थे लब्धेऽपि शीतेष्विति पदं वर्षाका-
लादावपि शीतप्राप्तौ संवृतयानादिसेवोपदर्शनार्थम् । प्रा-
वारो गुरुप्रावरणं कम्बलादि, अजिनं व्याघ्रादिचर्म, कौषेयं
कोषकारकीटतन्तुमयं, प्रवेणी गोणीति प्रसिद्धा, कुथकश्चित्र-
कम्बलं, गुरुणाऽगुरुणेत्यगुरुघनप्रलेपेनेत्यर्थः । विशालावायामेन,
उपचितौ परिणाहेन । मैथुनसेवोपदेशश्चेह प्राणिनां बलवत्त्वेन
शीतप्रतीकारकत्वेन चीयमानकफविरुद्धत्वेन च सुश्रुतेन च
हेमन्ते मैथुनसेवोक्ता । यदुक्तं—"तत्रापनीतहाराश्च प्रिया
नार्यः स्वलंकृताः । रमयेयुर्यथाकामं बलादपि मदोत्कटाः"
इति ॥ ९—१८ ॥

हेमन्तशिशिरे तुल्ये शिशिरेऽल्पं विशेषणम् ।
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम् ॥ १९ ॥

तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ।
निवातमुष्णं त्वधिकं शिशिरे गृहमाश्रयेत् ॥ २० ॥

कटुतिक्तकषायाणि वातलानि लघूनि च ।
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ २१ ॥

शिशिरविधिमाह—हेमन्तेत्यादि । विशेषणं विशेषः ।
शिशिरस्यादानारंभकत्वेन रौक्ष्यं, तथा मेघमारुतवर्षाः शि-
शिरेऽधिका भवन्ति, तज्जं च शीतमधिकं हेमन्तादस्तीत्यर्थः ।
तस्मादिति हेमन्ततुल्यत्वाद्विशिष्टरौक्ष्यशीतयुक्तत्वाद्धैमन्तिको
विधिः । निवातमुष्णं त्विति तुशब्दः पक्षान्तरपरिग्रहार्थः ।
हेमन्तोक्तनिवातोष्णगृहाच्छिशिरे रूक्षातिशीतेऽधिकमुष्णं गृह-
माश्रयेदित्यभिप्रायः । केचिदत्राऽसेव्यप्रतिपादकं ग्रन्थं पठन्ति
स त्वनार्षः ॥ १९-२१ ॥

---

१ सात्म्यमिति पाठः ।

वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ॥ २२ ॥
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ।
गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत् ॥ २३ ॥
व्यायामोद्वर्तनं धूमं कवलग्रहमञ्जनम् ।
सुखाम्बुना शौचविधिं शीलयेत्कुसुमागमे ॥ २४ ॥
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ।
शारभं शाशमैणेयं मांसं लावकपिञ्जलम् ॥ २५ ॥
भक्षयेन्निगदं सीधुं पिबेन्माध्वीकमेव वा ।
वसन्तेऽनुभवेत्स्त्रीणां काननानां च यौवनम् ॥ २६ ॥

वसन्त इत्यादिना वसन्तविधिमाह,—निचितः संचितो वसन्तपूर्वकाले, ईरितो विलायितो वसन्ते, कायाग्निमिति कायनिवर्तकमग्निं जाठरं, न तु धात्वग्निविशेषमात्रम् । तत इत्यत्र चकारो लुप्तनिर्दिष्टो बोद्धव्यः, तेन ततोऽग्निवधाच्चेत्यर्थः । यदि वा ततोऽग्निवधानन्तरं वमनादीनि, वमनप्रधानानि तेन, आदानमध्यत्वेन यदि वातपित्तप्रकोपस्तथाविधो भवति तदा विरेचनास्थापनानुवासनानामपि प्रवृत्तिर्भवति । शिरोविरेचनं तु कफजयार्थं कर्तव्यमेव । वसन्तशब्देन वसन्तं प्रति चैत्रो बोद्धव्यः । येन, दोषचर्यार्थं पञ्चकर्मप्रवृत्त्यर्थं चाऽभिधातव्यप्रावृडाद्यृतुक्रमेण फाल्गुनचैत्रौ वसन्तो भवति, न वैशाखः । अनेनैवाऽभिप्रायेण पूर्वश्लोकेऽपि सामान्येन निचित इति कृतं, न तु हेमन्ते निचित इति । हेमन्त इत्युक्ते हि रसोत्पत्तिकमाभिहितमार्गशीर्षपौषात्मके हेमन्ते प्राकृतत्वाद्दोषचयो बुध्यते, स च नाभिप्रेतः । उक्तस्तु दोषचयादिकमोक्तपौषमाघात्मके हेमन्ते श्लेष्मचयः । सुखाम्बुना सुखोष्णाम्बुना, लावकपिञ्जलं मांसमिति संबन्धः । भक्षयेदिति च्छेदः । अनुभवेदिति भाषया श्लेष्मक्षयार्थं स्तोकमैथुनमनुजानाति ॥ २२–२६ ॥

मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥२७॥
शीतं सशर्करं मन्थं जाङ्गलान्मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥२७॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
लवणाम्लकटूष्णानि व्यायामं च विवर्जयेत् ॥ २८ ॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले ।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके ॥ २९ ॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः ।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ॥ ३० ॥
काननानि च शीतानि जलानि कुसुमानि च ।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ३१ ॥

मयूखैरित्यादिना ग्रैष्मविधिमाह—मयूखैस्तेजोभिः, स्नेहः सार इत्यर्थः, पेपीयतेऽत्यर्थं पिबति । मन्थः—"सक्तवः सर्पिषा युक्ताः शीतवारिपरिप्लुताः । नात्यच्छा नातिसान्द्राश्च मन्थ इत्यभिधीयते" । मद्यमल्पमित्येकान्तमद्यसात्म्येन, नवेति मद्यस्य स्वभावपाकाभ्यामम्लस्य ग्रीष्मविरुद्धत्वेन, सुबहूदकमिति मद्यसात्म्यस्यैव, मद्यस्योष्णाम्लत्वायपवादार्थं बहुतरपानीयं प्रक्षिप्य पातव्यमिति दर्शयति: तेनैतत्फलति यद्—मद्यं ग्रीष्मे न पातव्यमेव तावत्, मद्यसात्म्यानां मद्यत्यागे सात्म्यत्यागजा रोगा भवन्ति । तेन तस्याल्पं वा सुबहूदकं वा देयमित्यर्थः । मुक्तेव मणिर्मुक्तामणिः, ग्रीष्मकाले चण्डातपे मध्याह्न इत्यर्थः । मैथुनोपरतिस्तु दिवानिशं बोद्धव्या॥२७–३१॥

आदानदुर्बले देहे पक्ता भवति दुर्बलः ।
स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥ ३२ ॥

वर्षाविधिमाह—आदानेत्यादि । देहस्य दुर्बलत्वे पक्तापि दुर्बलो भवति, देहबलानुविधायित्वाद्वह्नेः । एतच्च बलिनां बली भवतीति व्युत्पादितम् । स इति दुर्बलो वह्निः, अनिलादीनामित्यनिलप्रधानानाम् ॥ ३२ ॥

भूबाष्पान्मेघनिस्यन्दात्पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥ ३३ ॥
तस्मात्साधारणः सर्वो विधिर्वर्षासु शस्यते ।
उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ॥ ३४ ॥
व्यायाममातपं चैव व्यवायं च विवर्जयेत् ।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत् ३५
व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि ।
विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये ॥ ३६ ॥
अग्निसंरक्षणवता यवगोधूमशालयः ।
पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः ॥ ३७ ॥
पिबेत् क्षौद्रान्वितं चाल्पं माध्वीकारिष्टमम्बु वा ।
माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा ॥ ३८ ॥
प्रघर्षोद्वर्तनं स्नानं गन्धमाल्यपरो भवेत् ।
लघुशुद्धाम्बरं स्थानं भजेदक्लेदि वार्षिकम् ॥ ३९ ॥

वर्षासु वातादयः कुतः कुप्यन्तीत्याह—भूबाष्पादित्यादि । भूबाष्पः प्रभावादेव त्रिदोषकोपनः । मेघनिःस्यन्दो वातश्लेष्मकारकः । अम्लपाकता जलस्य वर्षास्वभावकृता पित्तश्लेष्मकरी । अग्निबले क्षीण इत्यनेनाऽऽदानाहितमग्निमान्द्यमपि दोषप्रकोपकमिति दर्शयति । अग्निमान्द्यं चापाकविपाकाभ्यां कफपित्तकारि धातुपोषकरसानुत्पादाच्च धातुक्षयेण वातकारि । एतेन वर्षासु वह्निमान्द्येन वातादिकोपः वातादिकोपेन च वह्निमान्द्यमिति दर्शितम्। यदुक्तं वाग्भटे "भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा । वह्निनैव च मन्देन तेष्वित्यन्योऽन्यदूषिषु" । साधारणो विधिः कार्यस्त्रिदोषघ्नोऽग्निसन्दीपनश्च । उदकप्रधानो मन्थ उदमन्थः । पानमुदकादि, भोजनं रक्तशाल्यादि तयोः संस्काराः संस्कारवन्त्यन्नपानानीत्यर्थः । क्षौद्रं च यद्यपि वातप्रकोपि तथापि वार्षिकक्लेदशमनार्थं स्वल्पमात्रया क्षौद्रान्वितपदेन विहितम् । विशेषात् शीत इति हेतुगर्भविशेषणम् । तेनात्यर्थशीते दिवसे यस्मान्महात्ययस्य वातस्य कोपो भवति

ततस्तज्जयार्थं वर्षाकालप्रभावक्रियमाणपित्तचयानुगुणयोरप्य-म्ललवणयोरुपयोगः कर्तव्य इति दर्शितं भवति ॥३३–३९॥

**वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।**
**तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥ ४० ॥**

शरद्विधिमाह—वर्षेत्यादि । उचितम् अभ्यस्तम्, 'उच समवाये' इत्यस्माद्धातोः, शीतमुचितान्यङ्गानि शीतोचितानि । सहसैवेति पदेनाक्रमेण शरदि तीव्रातपसंबन्धादनभ्यस्तात् पित्तप्रकोपो न्याय्य इति दर्शयति । आचितमिति वर्षासु । प्राय इत्यनेनैव वर्षासु तु पित्तचयप्रतिकूलं विधिं प्रयत्नेनाचरतो न भवति पित्तचयः । शरदि तु प्रकोपो न भवतीति दर्शयति । एतच्च सामान्यन्यायेन श्लेष्मणो वातस्य च चयप्रकोपयोर्बोद्धव्यम् । यदि वा, प्रायः पित्तं प्रकुप्यति श्लेष्मा चानुवलत्वेनेत्यर्थः । यदुक्तं "तस्य चानुवलः कफः" इति ॥ ४० ॥

**तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम् ।**
**पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥ ४१ ॥**

लघ्वित्यग्निसन्धुक्षणार्थम् । अत्र वह्नेः समानेनापि पित्तेन द्रवांशसंभवेनाग्निमान्द्यं क्रियते च । यदुक्तं ग्रहण्यध्याये "आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" । उत्सर्गसिद्ध एव भोजनस्य मात्रावत्त्वे मात्रयेति वचनं मात्रातिक्रमेणेह विशेषतो भूरिदोपलदर्शनार्थम् । सुप्रकाङ्क्षितैः सुबुभुक्षितैः ॥ ४१ ॥

**लावान्कपिञ्जलानेणानुरभ्रान् शरभान् शशान् ।**
**शालीन्सयवगोधूमान्सेव्यानाहुर्घनात्यये ॥४२ ॥**
**तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम् ।**
**धाराधरात्यये कार्यमातपस्य च वर्जनम् ॥ ४३ ॥**
**वसां तैलमवश्यायमौदकानूपमामिषम् ।**
**क्षारं दधि दिवास्वप्नं प्राग्वातं च विवर्जयेत् ॥ ४४ ॥**

उरभ्रो मेषः । घनात्यय इति पुनर्वचनं शरत्प्रवेश एव एतदुक्तविधिकरणं गन्थाधिक्यात्सूचयन्तीति व्याख्यानयन्ति । पश्यामः—पर्यायशब्दानां पुनः पुनः करणे यत्तु तात्पर्यं शास्त्रे प्रतीयते तत्र तदेव वाच्यं, यत्र तात्पर्यान्तरं न प्रतीयते तत्र वाक्यभेदेनैव पुनरभिधानमिति । धाराधराणां मेघानामत्ययोऽदर्शनम् । तेन, प्रव्यक्तायां शरदि तिक्तसर्पिःपानं विरेकादि च कार्यम् । क्रमश्चात्राचार्याभिप्रेतः, तेन प्रथमं सर्पिष्पानं, तेन पित्ताप्रशान्तौ विरेकः, तेनाप्यशान्तौ शोणितदुष्टौ च सत्यां रक्तमोक्षणं, रक्तंचात्र कालस्वभावाद्दूष्यत्येव प्रायः । यदाह—"शरत्कालस्वभावाच्च शोणितं संप्रदूष्यति" ॥ ४२–४४ ॥

**दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम् ।**
**कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम् ॥ ४५ ॥**
**हंसोदकमिति ख्यातं शारदं विमलं शुचि ।**
**स्नानपानावगाहेषु हितमम्बु यथामृतम् ॥ ४६ ॥**

दिवेत्यादि ।—सूर्यांशुतापादेव दिवेति लब्धे दिवेति सकलदिनव्याप्त्यर्थम् । सूर्यतप्तमिति वक्तव्येंऽशुग्रहणं मेघावरणरहितांशुसूर्यग्रहणार्थम् । संतप्तमित्यत्र संशब्दः परितस्तापोपदर्शनार्थः । एवं निशीत्यादि च व्याख्येयम् । चन्द्रांशुग्रहणेन च निशि सौम्यांशुसंबन्धं लक्षयति । कालेनेति प्रभावेण । पक्वमिति वर्षास्वभिनवभूमिसंबन्धजनितपैच्छिल्यम्ललादिदोषरहितम् । यतः पक्वं ततो निर्दोषं दोषाजनकमित्यर्थः । अगस्त्येनाविषीकृतमित्यगस्त्योदयेनप्रभावाद्वर्षासु मेघसंबन्धोरगलूतादिसंबन्धात्सविषमविषं भवतीति वाच्यम् । हंसोदकमित्येवंभूतोदकस्य संज्ञा । हंसशब्देन सूर्याचन्द्रमसावभिधीयेते, ताभ्यां शोधितमुदकं हंसोदकम् । यदि वा हंससेवायोग्यमुदकं, हंसाः किल विशुद्धमेवोदकं भजन्ते । अवगाहश्चिरं जलावस्थानम् ॥ ४५–४६ ॥

**शारदानि च माल्यानि वासांसि विमलानि च ।**
**शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥ ४७ ॥**

शारदानीति माल्यविशेषणमनार्तवकुसुमनिषेधार्थम् । प्रदोष इति निशाप्रवेश एव परं चन्द्ररश्मिसेवा, नोपरि, शिशिरभयात् । अत्र पूर्वर्तुसात्म्यपरित्यागो भविष्यदृतुसात्म्याभ्यासश्च पूर्वर्त्वन्तसप्ताहागाम्यृत्वादिसप्ताहयोः कर्तव्यः । यदुक्तं वाग्भटे—"ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः । तत्र पूर्वो विधिस्त्याज्यः सेवनीयः परः क्रमात्" इति ॥४७॥

**इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम् ।**
**उपशेते यदौचित्यादोकसात्म्यं तदुच्यते ॥ ४८ ॥**

उपसंहरति—इत्युक्तमित्यादि । ऋतुसात्म्यप्रसङ्गेनाभ्याससात्म्यं दर्शयति—उपशेते इत्यादि । उपशेते सुखयति, अपथ्यमपि सद्विकारं न जानयति । कुत इत्याह—औचित्यादभ्यासादित्यर्थः । अपथ्यमपि हि निरन्तराभ्यासाद्विषमिवाशीविषस्य नोपघातकं भवतीति भावः ॥ ४८ ॥

**देशानामामयानां च विपरीतगुणं गुणैः ।**
**सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च ४९**

देशसात्म्यं रोगसात्म्यं च दर्शयति—देशानामित्यादि । देशानामानूपादीनां, गुणैः स्नेहगौरवादिभिः सह विपरीतगुणं स्नेहगौरवविपरीतगुणरौक्ष्यलाघवयुक्तं धन्वजाङ्गलमांसमध्वादि अदनीयम् आद्यं, चेष्टितं च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्वेदविद इत्यर्थः । एवमामयानां च विपरीतगुणमित्यादि व्याख्येयम् । गुणशब्दश्चेह धर्ममात्रवचनः । यथोच्यते—"द्रव्यगुणः" द्रव्यधर्म इत्यर्थः । तेन विपरीतप्रभावादीनामपि ग्रहणं भवति । आमयशब्देन चामयहेतुरपि गृहीतव्यः । ततः आमयविपरीतानां आमयहेतुविपरीतानां च तथा प्रभाववैपरीत्यात्तद्विपरीतार्थकारिणां च ग्रहणं भवति । तदुदाहरणमिदं यथावसरं निदाने करिष्यामः । आद्यग्रहणेनौषधाहारयोर्ग्रहणम् । चेष्टितशब्देन स्वप्नाभ्यञ्जनादीनां ग्रहणं व्याख्येयम् ॥ ४९ ॥

**ऋतावृतौ नृभिः सेव्यं न सेव्यं यच्च किंचन ।**
**तस्याशितीये निर्दिष्टं हेतुमत्सात्म्यमेव च ॥ ५० ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने तस्याशितीयो नाम षष्ठोऽध्यायः ।**

उक्तमध्यायार्थमुपसंहरति—ऋतावित्यादि । अत्र हेमन्तेऽसेव्यं कण्ठरवेण यद्यपि न प्रतिपादितं तथापि स यदा नेन्धनं युक्तं लभत इत्यभिधानादल्पभोजनपरिहार उक्त एव भवति । तेन, ऋतावृताविति वीप्सा कृतार्थवती भवति । यदि वा छत्रिणो गच्छन्तीति न्यायाद्वीप्सोक्ता । हेमन्तपरिहारविधिवच्च शिशिरपरिहारविधिर्व्याख्येयः । हेतुमदित्युपपत्तिमदौचित्यादिहेतुनिर्देशोपपन्नमित्यर्थः ॥ ५० ॥

इति तस्याशितीयः षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः ।

**अथातो न वेगान्धारणीयमध्यायं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**न वेगान्धारयेद्धीमान्जातान्मूत्रपुरीषयोः ।**
**न रेतसो न वातस्य न छर्द्याः क्षवथोर्न च ॥ ३ ॥**
**नोद्गारस्य न जृम्भाया न वेगान्क्षुत्पिपासयोः ।**
**न बाष्पस्य न निद्राया निश्वासस्य श्रमेण च ॥ ४ ॥**

पूर्वाध्यायाभ्यां स्वस्थहित आहारः प्राधान्येनोक्तः । तस्याहारस्य स्वस्थहितत्वमाहारपाकजमूत्रपुरीषाणामविधारितवेगानां बहिर्गमने सति भवतीति मूत्रादिवेगाविधारणोपदेशकं न वेगान्धारणीयमाह । इहापि न वेगधारणशब्दस्याभावात् मात्राशितीयवत् पर्यायशब्देन संज्ञा बोद्धव्या । जातानिति जातमात्रान् । वेगः प्रवृत्त्युन्मुखत्वं मूत्रपुरीषादीनाम् । मूत्रग्रहणमादौ मूत्रस्य पुरीषाद्यपेक्षया बहुवेगत्वात् । मूत्रपुरीषयोरिति क्षुत्पिपासयोरिति च समासकरणं प्रायशोऽनयोः सहोत्पाददर्शनार्थम् । प्रतिनिषिद्धं नकारकरणं निषिद्धगौरवोपदर्शनार्थम् । निःश्वासस्य श्रमेण चेति श्रमोत्थस्य निःश्वासस्याविधार्यत्वं दर्शयति । यतोऽनन्तरं वक्ष्यति "श्रमनिःश्वासधारणात्" इति । सुश्रुतेऽप्युक्तं "श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमूर्च्छाप्यथवापि गुल्मः" इति ॥ १—४ ॥

**एतान्धारयतो जातान्वेगान्रोगा भवन्ति ये ।**
**पृथक्पृथक्चिकित्सार्थं तन्मे निगदतः शृणु ॥ ५ ॥**
**वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा ।**
**विनामो वंक्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ६ ॥**
**स्वेदावगाहनाभ्यङ्गान्सर्पिषश्चावपीडकम् ।**
**मूत्रे प्रतिहते कुर्यात्त्रिविधं वस्तिकर्म च ॥ ७ ॥**
**पक्वाशयशिरःशूलं वातवर्चोऽप्रवर्तनम् ।**
**पिण्डिकोद्वेष्टनाध्मानं पुरीषे स्याद्विधारिते ॥ ८ ॥**

यद्वेगविधारणे ये रोगास्तेषां यच्चिकित्सितं तदल्पवक्तव्यत्वात्प्रकरणागतत्वाच्च ब्रूते—वस्तिमेहनेत्यादि । मेहनं शिश्नः विनमनं विनामः शरीरस्य । अवपीडको बहुमात्राप्रयोगः । मात्राधिकत्वेन हि भेषजं दोषान्पीडयतीति कृत्वा, अन्यत्राप्युक्तम् "अवपीडकसर्पिर्भिः कोष्णैर्घृततैलकैस्तथाभ्यङ्गैः" इति । त्रिविधमिति निरूहानुवासनोत्तरवस्त्यात्मकम् । पिण्डिका जानुजङ्घामध्यमांसपिण्डिका, वर्तयो वक्ष्यन्ते ॥ ५—८ ॥

**स्वेदाभ्यङ्गावगाहाश्च वर्तयो वस्तिकर्म च ।**
**हितं प्रतिहते वर्चस्यन्नपानं प्रमाथि च ॥ ९ ॥**
**मेढ्रे वृषणयोः शूलमङ्गमर्दो हृदि व्यथा ।**
**भवेत्प्रतिहते शुक्रे विबद्धं मूत्रमेव च ॥ १० ॥**
**तत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ।**
**शालिः पयोनिरूहाश्च शस्तं मैथुनमेव च ॥ ११ ॥**
**वातमूत्रपुरीषाणां सङ्गाध्मानं क्लमो रुजा ।**
**जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ १२ ॥**
**स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।**
**पानानि वस्तयश्चैव शस्तं वातानुलोमनम् ॥ १३ ॥**
**कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः ।**
**कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः ॥ १४ ॥**

प्रमाथ्यनुलोमनम् । चरणायुधः कुक्कुटः रुजा जठर इति संबन्धः । 'भोजनानि' 'पानानि' 'वस्तय' इति त्रयं वातानुलोमनं शस्तमिति योज्यम् । कोठो वरटीदष्टाकारः शोथः । व्यङ्गश्च श्यामवर्णो मण्डलः हृल्लास उत्क्लेशः ॥ ९–१४ ॥

**भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम् ।**
**रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥ १५ ॥**
**मन्यास्तम्भः शिरःशूलमर्दितार्धावभेदकौ ।**
**इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥१६॥**
**तत्रोर्ध्वजत्रुकेऽभ्यङ्गः स्वेदो धूमः सनावनः ।**
**हितं वातघ्नमाद्यं च घृतं चोत्तरभक्तिकम् ॥ १७ ॥**
**हिक्का श्वासोऽरुचिः कम्पो विबन्धो हृदयोरसोः ।**
**उद्गारनिग्रहात्तत्र हिक्कायास्तुल्यमौषधम् ॥ १८ ॥**
**विनामाक्षेपसङ्कोचाः सुप्तिः कम्पः प्रवेपणम् ।**
**जृम्भाया निग्रहात्तत्र सर्वं वातघ्नमौषधम् ॥ १९ ॥**
**कार्श्यदौर्बल्यवैवर्ण्यमङ्गमर्दोऽरुचिर्भ्रमः ।**
**क्षुद्वेगनिग्रहात्तत्र स्निग्धोष्णं लघुभोजनम् ॥ २० ॥**
**कण्ठास्यशोषो बाधिर्यं श्रमः सादो हृदि व्यथा ।**
**पिपासानिग्रहात्तत्र शीतं तर्पणमिष्यते ॥ २१ ॥**
**प्रतिश्यायोऽक्षिरोगश्च हृद्रोगश्चारुचिर्भ्रमः ।**
**बाष्पनिग्रहणात्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ २२ ॥**
**जृम्भाङ्गमर्दस्तन्द्रा च शिरोरोगाक्षिगौरवम् ।**
**निद्राविधारणात्तत्र स्वप्नः संवाहनानि च ॥ २३ ॥**

१ श्वास इति पाठः.

**गुल्महृद्रोगसंमोहाः श्रमनिश्वासधारणात् ।**
**जायन्ते तत्र विश्रामो वातघ्नाश्च क्रिया हिताः ॥२४॥**
**वेगनिग्रहजा रोगा य एते परिकीर्तिताः ।**
**इच्छंस्तेषामनुत्पत्तिं वेगानेतान्न धारयेत् ॥ २५ ॥**

अर्धावभेदोऽर्धमस्तककवेदना । सायं सायं भोजनमित्यर्थः । चकारात्स्वेदादयोऽपि वातघ्ना इति सूचयति । यद्यपि सुश्रुते मूत्रादीनां त्रयोदशानां विधारणात्त्रयोदशोदावर्ता अभिधीयन्ते तथापीहाष्टोदरीये मूत्रपुरीषवातशुक्रवमिक्षवथुविघातजा एव परं षडुदावर्ता अभिधातव्याः । उद्गारादिनिरोधजानां वातनिरोधज एवोदावर्तेऽन्तर्भावाभिप्रायात्; यदि वा, मूत्रादिविघातज एव विकारे चरकाचार्यस्य उदावर्तसंज्ञाभिप्रेता नान्यत्रेति न विरोधः । मुहुर्मुहुरङ्गानामाक्षेपणमाक्षेपः । पर्वणामाकुञ्चनं सङ्कोचः । सुप्तिः स्पर्शाज्ञानम् । भ्रमणं भ्रमो येन चक्रस्थितमिवात्मानं मन्यते । सादोऽङ्गावसादः । तर्पयतीति तर्पणं संवाहनं पाणिना पादादिप्रदेशे सुखमभिहननमुन्मर्दनं च ॥ १५—२५ ॥

**इमांस्तु धारयेद्वेगान्हितार्थी प्रेत्य चेह च ।**
**साहसानामशस्तानां मनोवाक्कायकर्मणाम् ॥ २६ ॥**

वेगानामविधार्यत्वेनोक्तत्वाल्लोभादीनामपि वेगा अविधार्याः स्युरित्याह—इमांस्त्वित्यादि । प्रेत्य जन्मान्तरे । इहेतीहजन्मनि । सहसा आत्मशक्तिमनालोच्य क्रियत इति साहसं, तत्तु गजाभिमुखधावनादि । अशस्तानां निष्फलानामिति यावत् । मनोवाक्कायकर्मणामित्यत्र कर्मशब्दो व्यापारवचनः ॥ २६ ॥

**लोभशोकभयक्रोधमानवेगान्विधारयेत्[1] ।**
**नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥२७॥**

अशस्तं मनसः कर्म दर्शयति—लोभेत्यादि । लोभो विषयेऽनुचितप्रार्थना । शोकः पुत्रादिविनाशजं दैन्यम् । भयमपकारकानुसंधानजं दैन्यम् । क्रोधः प्रद्वेषो येन प्रज्वलितमिवात्मानं मन्यते । मानः सदसद्गुणाद्यारोपेणात्मन्युत्कर्षप्रत्ययः। जुगुप्सितगोपनेच्छा लज्जा । तदभावो नैर्लज्ज्यम् । समाने द्रव्ये परसंबन्धप्रतिषेधेच्छा ईर्ष्या। अतिराग उचित एव विषये पुनः पुनः प्रवर्तनेच्छा । अभिध्यानमतिमात्रेहारम्भणं[2] यदि वा परद्रव्यविषये स्पृहा ॥ २७ ॥

**परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।**
**वाक्यस्याकालयुक्तस्य धारयेद्वेगमुत्थितम् ॥ २८ ॥**

अशस्तं वचनकर्माह—परुषस्येत्यादि । परुषं परोद्वेजकं वचनम् । अतिमात्रं बहु । सूचकं परारत्यभिधायकम्[3] । अनृतमपार्थकम् । अकालयुक्तमप्रस्तावागतम् ॥ २८ ॥

**देहप्रवृत्तिर्या काचिद्विद्यते परपीडया ।**
**स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान्विधारयेत् ॥२९॥**

अशस्तं देहकर्माह—देहेत्यादि । परपीडया परपीडानिमित्तमित्यर्थः । स्त्रीभोगः परस्त्रीभोगः । स्तेयं परद्रव्यग्रहणम् । हिंसा विधिरहिता प्राणिपीडा । आदिग्रहणाद्गुर्वाद्यभिमुखपादप्रसारणादि गृह्यते ॥ २९ ॥

**पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्मणाम् ।**
**धर्मार्थकामान्पुरुषः सुखी भुङ्क्ते चिनोति च ॥ ३० ॥**

एवं कृते यद्भवति तद्दर्शयति—पुण्येत्यादि । पुण्यः पावनः शब्दो यस्यासौ पुण्यशब्दः । भुङ्क्ते चिनोति चेति उत्पन्नानविरोधतः फलोपयोगेन भुङ्क्ते । चिनोति चोत्पादयति चापरानित्यर्थः ॥ ३० ॥

**शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धिनी ।**
**देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥ ३१ ॥**

अविधार्यप्रवृत्तीन्मूत्रादीन्विधार्यप्रवृत्तीन्साहसादीन्दर्शयित्वा विधार्याविधार्यप्रवृत्तिं व्यायाममाह—शरीरेत्यादि । देहस्य व्यायामो देहव्यायामः । देहग्रहणान्मनोव्यायामं चिन्तनादि निराकरोति । संख्याता संज्ञिता । या चेष्टाऽभिप्रेताऽत्र, तेन, भारहरणाद्याऽनिष्टाऽपि कार्यवशात्क्रियमाणा चेष्टा निरस्यते । चंक्रमणरूपा तु क्रिया प्राप्यते । स्थैर्यं स्थिरता शरीरस्य तदर्था । मात्रयाऽनपायिपरिमाणेन । एतावती चेयं शरीरचेष्टा मात्रावति । यावत्या लाघवादयो वक्ष्यमाणा भवन्ति । चेष्टातियोगा वक्ष्यमाणाश्च श्रमभ्रमादयो न भवन्ति। सुश्रुतेऽप्युक्तं—"यत्तु चंक्रमणं नातिदेहपीडाकरं भवेत् । तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम्" ॥ ३१ ॥

**लाघवं कर्मसामर्थ्यं स्थैर्यं दुःखसहिष्णुता ।**
**दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ३२ ॥**
**श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं प्रतामकः ।**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ ३३ ॥**

यथोक्तव्यायामगुणानाह—लाघवमित्यादि । दोषक्षयोऽत्र श्लेष्मक्षयोऽभिप्रेतः, यदि वाग्निकर्तृत्वेन त्रिदोषक्षयोऽपि । उक्तं हि—"शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ" इति । व्यायामातिप्रवृत्तिदोषमाह—श्रम इत्यादि । क्लम इह मनइन्द्रियग्लानिः, क्षयो धातुक्षयः, प्रतमक एव प्रतामकः श्वासविशेषः ॥३२॥ ॥ ३३ ॥

**व्यायामहास्यभाष्याध्वग्राम्यधर्मप्रजागरान् ।**
**नोचितानपि सेवेत बुद्धिमानतिमात्रया ॥ ३४ ॥**

इदानीं व्यायामतुल्यत्वेनान्यानप्यतिमात्रत्वेन निषेद्धुमाह—व्यायामेत्यादि । यद्यप्यतिव्यायामो निषिद्धस्तथापीह पुनरभिधीयते अतिभाष्यादिष्वपि तद्दोषश्रमक्लमादिप्राप्त्यर्थम् । यदि वा पूर्वमनभ्यस्तव्यायामातिसेवा निषिद्धा, इह तु अभ्यस्तस्यापि निषेधः । यदाह—नोचितानपि, उचितानप्यभ्यस्तानपीत्यर्थः।

---

[1] लोभशोकभयक्रोधद्वेषमानजुगुप्सितेति पाठः। [2] केचित्पराभिद्रोहचिन्तनं अभिद्रोहारंभणं वेति पाठं वदन्ति । [3] परापवादाभिधायकं इति पाठः ॥

अपिशब्दादनभ्यस्तानां निषेधो लभ्यते । भाषणं भाष्यम्, अध्वशब्देनाध्वगमनं, ग्राम्यधर्मो मैथुनम्, एवंशब्देन गुरुभारहरणदर्पशिलाचालनादि गृह्यते ॥ ३४ ॥

**एतानेवंविधांश्चान्यान्योऽतिमात्रं निषेवते ।**
**गजं सिंह इवाकृष्य सहसा स विनश्यति ॥ ३५ ॥**

सिंहः किल स्वल्पप्रमाणः स्वबलोद्रेकाद्गजं कर्षन्पाटयन्स्वदेहानुचितव्यायामात्पश्चाद्वातक्षोभेन विपद्यते तेनायं दृष्टान्तः सङ्गतार्थः । यदि वा सिंहोऽष्टापदोऽभिप्रेतः, स च किल गजं व्यापाद्य पृष्ठे क्षिपति, ततस्तत्कोथाद्विपद्यते तेन दृष्टान्तो व्याख्येयः ॥ ३५ ॥

**उचितादहिताद्धीमान्क्रमशो विरमेन्नरः ।**
**हितं क्रमेण सेवेत क्रमश्चात्रोपदेक्ष्यते ॥ ३६ ॥**
**प्रक्षेपापचये ताभ्यां क्रमः पादांशिको भवेत् ।**
**एकान्तरन्ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥ ३७ ॥**

हितस्य सेवनमहितस्य परित्यागः कर्त्तव्य इति पूर्वमुक्तं तच्च हितसेवनमहितपरिवर्जनं च क्रियमाणमक्रममक्रमाचरितव्यायामादिवत्प्रत्यवायकरं परं भवति । अतस्तत्क्रममाह-उचितादित्यादि । उचितादभ्यस्तात्, क्रमशो वक्ष्यमाणेन क्रमेण, हितमनभ्यस्तंहितम् । कोऽसौ क्रम इत्याह—क्रमश्चेत्यादि । प्रक्षेपो हितस्यापचयोऽहितस्य, ताभ्यां हिताहिताभ्याम्, पादश्चतुर्थो भागः, तद्रूपोंऽशः पादांशस्तेन कृतः क्रमः पादांशिकः । अन्ये तु पादस्यांशः पादांश इति षोडशं भागं वर्णयन्ति, स च हिताहितयोर्युगपत्प्रक्षेपापचये पादांशिकः क्रमः, प्रथममेकान्तरमेकाहमन्तरा कृत्वेत्यर्थः । ततः प्रथमहितपादप्रक्षेपाहितपादापचयाभ्यासादूर्ध्वं द्वितीयपादप्रक्षेपापचये द्व्यन्तरं द्व्यहमन्तरीकृत्य क्रमो भवेत् । तथा द्वितीयपादाभ्यासादूर्ध्वं तृतीयपादप्रक्षेपापचये त्र्यहमन्तरीकृत्य क्रमो भवेत् । चतुर्थपादप्रक्षेपापचये चतुरहमन्तरीकृत्य बोद्धव्यमत ऊर्ध्वं प्रक्षेपापचयाभावाच्चतुष्पादसंपूर्णस्य पथ्यस्यानवधिसेव्यत्वादयं पिण्डार्थः । अपथ्या यवकादयोऽभ्यस्तास्ते त्याज्याः, रक्तशाल्यादयः पथ्या अनभ्यस्तास्ते सेव्याः । तत्र प्रथमदिने यवकपादत्रयं रक्तशालीनामेकपादयोगवद्भोजनं, द्वितीये दिवसे द्वौ पथ्यस्य पादौ द्वावपथ्यस्य । एवं तृतीये एवं द्वितीयपादाभ्यासो द्व्यन्तरो भवति । चतुर्थे त्रयः पादाः पथ्यस्य एकोऽपथ्यस्य, एवं पञ्चमे षष्ठे च । एवं तृतीयपादाभ्यासस्त्र्यन्तरो भवति । सप्तदिनप्रभृति चतुष्पादपथ्याभ्यासः । यदि वाऽन्तरशब्दो व्यवधिवचनः, तथाशब्दाच्चतुरन्तरमिति च लभ्यते । तेनायमर्थः—प्रथमे दिवसेऽपथ्यपादत्रयं पथ्यस्यैकः पादः, द्वितीये सर्वमपथ्यं, तृतीये द्वौ पथ्यस्य द्वावपथ्यस्य, एवं चतुर्थे, पञ्चमे तु दिने पथ्यस्य भाग एकस्त्रयोऽपथ्यस्य, एवं द्व्यन्तरीकृतौ भवतः । षष्ठे पथ्यभागत्रयमपथ्यभाग एकः, एवं सप्तमेऽष्टमे च । ततो नवमे भागद्वयं पथ्यस्य चापथ्यस्य च, एवं त्रीण्यहान्यन्तरीकृतानि भवन्ति । ततो दशमे सर्वं पथ्यम्, एवमेकादशे द्वादशे त्रयोदशे च । चतुर्दशे तु पथ्यभागत्रयम् एकोऽपथ्यभागः एवं चतुरन्तरता तथाशब्दसूचिता भवति । पञ्चदशाहात्प्रभृति संपूर्णपथ्यतैव ॥ ३६ ॥ ३७ ॥

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।**
**सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥ ३८ ॥**

एवं कृते किं स्यादित्याह—क्रमेणेत्यादि । क्रमेणेति क्रमेणैव दोषा इति दोषजनकान्यभ्यस्तान्यपथ्यानि । गुणा इति गुणजनकानि पथ्यानि । अपुनर्भावं यान्ति दोषा इति संबन्धः । अक्रमेण तु सहसाऽपथ्यत्यागे दोषा भवन्त्येव । यदुक्तम्—"असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्" इति । अप्रकंप्या अप्रचाल्या भवन्ति गुणा इति संबन्धः । पथ्यमपि ह्यनभ्यस्तं सहसोपयुज्यमानमरुच्यग्निवधादीञ्जनयति ॥ ३८ ॥

**समपित्तानिलकफाः केचिद्गर्भादि मानवाः ।**
**दृश्यन्ते वातलाः केचित्पित्तलाः श्लेष्मलास्तथा ३९**

इह स्वस्थहितं सामान्येनैव रक्तशाल्यादि प्रतिपादितं, स्वस्थश्च प्रकृतिभेदेन नानाप्रकारः, अतस्तेषां हितानामपि नानाप्रकारत्वमुच्यते । तेन तत्प्रतिपादनार्थं प्रकृतिभेदमेव तावदाह—समपित्तानिलेत्यादि ।—समा अवैकारिकमानव्यवस्थिताः पित्तानिलकफा यस्य स तथा गर्भादि गर्भाधानादि शुक्रशोणितजीवसंमूर्च्छनादिति यावत्[1] । वातला वातप्रधानाः, एवं पित्तलाः श्लेष्मलाश्च । सर्वत्र गर्भादीति योज्यम् । अत्र पित्तग्रहणमादौ छन्दोऽनुरोधाद्वा पित्तसमानस्य वह्नेर्गौरवप्रदर्शनार्थम् । यदि वा प्रकृत्यारम्भे वातस्याप्राधान्यख्यापनार्थम् । वातप्रकृतिर्हि सर्वत्र प्रत्यवरो भवति । इह च प्रत्येकदोषप्रकृतिग्रहणेनैव द्वन्द्वप्रकृतिरपि ग्राह्यः, संयोगस्य संयोगिनामान्तरीयकत्वात्, निदान इव वातादिज्वराभिधानेन द्वन्द्वजज्वराभिधानं, तेन रोगभिषग्जितीयोक्ता द्वन्द्वजा अपि तिस्रः प्रकृतयो गृहीता भवन्ति । अन्ये तु, द्वितीये 'केचिद्' ग्रहणात् ग्रन्थाधिक्येन तद्ग्रहणं वर्णयन्ति ॥ ३९ ॥

**तेषामनातुराः पूर्वे वातलाद्याः सदातुराः ।**
**दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते ॥ ४० ॥**

तेषामिति—समवातपित्तश्लेष्मप्रकृत्यादीनां च मध्ये 'पूर्वे' इति समप्रकृतयः । सदातुरा इति स्वस्थव्यवहारभाजोऽपि स्फुटिताङ्गत्वविषमाग्नित्वादियुक्ता यस्मादित्यर्थः । स्वस्था अप्येते कस्माद्रोगिण इत्याह—दोषानुशयितेत्यादि । दोषानुशायितोल्वणवातादिभाविताऽव्यभिचारिणीति यावत् । देहप्रकृतिर्देहस्वास्थ्यमिति यावत्[2] । एतेनैतेषां वातलादीनां मुख्यं स्वास्थ्यं नास्ति, किंतर्हि उपचारस्वस्था एत इति दर्शयति । ननु, गर्भादीत्यनेन शुक्रशोणितजीवानां संसर्गे यथाभूता वातादयः समा विकृता वा तथाभूतैव प्रकृतिर्यावज्जीवमनुवर्त्तते रिष्टं

१ शुक्रशोणितजीवसंमूर्च्छनात्प्रभृतीति यावदिति पाठः ।
२ एषेति पाठः ।

विना । यदुच्यते सुश्रुते—"प्रकोपो वान्यभावो वा क्षयो वा नोपजायते । प्रकृतीनां स्वभावेन जायते तु गतायुषि" । तत्र यदा समप्रकृतेर्वातप्रकृतेर्वाऽऽक्षेपकादिर्वातविकारो भवति, तदा वातस्य प्रकृतिभूतस्याधिक्यं भवत्येव, यदा च वातप्रकृतेः पित्तविकारो भवति, तदा वातप्रकृतेरन्यथाभावः पित्तप्रकृतित्वं भवति, यदा तु समप्रकृतेरन्यतरदोषक्षयो भवति प्राकृतस्वकर्महानिलक्षणस्तदासौ प्रकृतिक्षयो भवति, यदुक्तं दोषक्षयलक्षणे—"कर्मणः प्रकृतेर्हानिर्वृद्धिर्वापि विरोधिनाम्" इति । अत्रोच्यते—प्रकृतिसमानरोगोत्पत्तौ न प्रकृतिभूतस्य वृद्धिः, किं तर्हि हेत्वन्तरजनितस्य वातादेस्तत्र विकारित्वं, प्रकृतिभूतस्तु दोषस्तत्रोपदर्शको भवति, यदुक्तं—"कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् । निष्प्रत्यनीकः कुरुते तस्माज्ज्ञेयः सुदुःसहः" । वातप्रकृतेस्तु पित्तविकारोत्पत्तौ वातः प्रकृतिभूतस्तथैव करचरणस्फुटनादिकं कुर्वन्नास्ते, न तस्यागन्तुना पित्तविकारेण किंचित्क्रियते । वातादीनां तु स्वमानात्क्षयः प्राकृतकर्महानिलक्षणो न शुक्रशोणितसंसर्गकालजस्य प्रकृतिभूतस्य दोषस्य बीजभूतस्य क्षयमावहतीति न प्रकृतिभूतदोषक्षयः । यदि वा, प्रकृतेः प्रकोपान्यथाभावक्षया न भवन्तीति प्रकृतित्वेनेति ब्रूमः । तेन समप्रकृतिर्वातप्रकृतिर्न भवति, वातप्रकृतिः पित्तप्रकृतिर्न भवति समप्रकृतिर्वा । विकारावस्था तु हीनाधिकवातत्वादिलक्षणा भवतीत्यर्थः । नच वाच्यं—प्रकृतिभूतानां वातादीनां दूषणात्मकानां कथं न शरीरबाधकत्वं, सहजातत्वेन तथाविधविनाशकविकाराकर्तृत्वात् । यदुक्तं सुश्रुते—"विषजातो यथा कीटो विषेण न विपद्यते । तद्वत्प्रकृतिभिर्देहस्तज्जातत्वान्न बाध्यते" । नातिबाध्यत इति बोद्धव्यं, वातादिप्रकृतेर्नित्यवातादिविकारगृहीतत्वात् । तदुक्तमिह "वातलाद्याः सदातुराः" इति । उक्तंचाश्ववैद्यके—"सर्वान्प्राणभृतो हन्ति नूनं तु कायगं विषम् । अस्मिंश्चापि समुत्पन्ना दृश्यन्ते क्रिमयो यथा । तथाहि विषमो दोषः प्रकृतिर्नाति बाधते" । नच वातादयो वृद्धास्तथा शुक्रशोणितसंसर्गे दुष्टत्वाद्वातविकारवन्तं गर्भं कुर्वन्ति तथा गर्भजनकत्वमेव शुक्रशोणितयोः कस्मान्न निघ्नन्ति इति वाच्यम् । वातादिप्रकोपाणामेव हीनमध्योत्तमानां नानाशक्तित्वात्प्रबला वातादयो विनाशयन्ति, हीनास्तु विकृतिमात्रं जनयन्ति ॥ ४० ॥

**विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः ।**
**समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥ ४१ ॥**

तेषामिति सदातुराणां वातलादीनां, विपरीतगुणो वातादिगतरौक्ष्यादिविपरीतस्नेहादिकर्मप्रयुक्त इत्यर्थः । समाः सर्वे रसा यत्र तत्तथा । समत्वं चेहानुरूपत्वमभिप्रेतं ननु तुल्यमानत्वं, न हि स्वस्थभोजने यावन्मधुर उपयुज्यते, तावन्मानाः

१ क्वचिद् गौरवेऽपीत्यसत्पाठः.



कट्वादयोऽपीति । यदि वा समशब्दोऽविरुद्धवचनः, तेनोपोदिकामत्स्यादिप्रतिपादनीयविरुद्धरसवर्जितं सर्वरसमित्यर्थः । अयं च प्रकृत्यपेक्षः समधातुं प्रति सर्वरसोपयोगः ऋतुविहितेन "तस्मात्तुषारसमये स्निग्धाम्ललवणान्रसान्" इत्यादिना विशेषविधानेन युक्तः सन्सर्वमेवाम्ललवणरसातिरिक्तं भोजनं हेमन्ते फलति । वातप्रकृतेस्तु कटुतिक्तकषायवर्जितं प्रभूतमधुराम्ललवणभोजनं हेमन्ते एवमन्यत्रापि देहप्रकृतिऋतुस्वभावपर्यालोचनयानुगुणं तर्कनीयम् । यदुक्तं वाग्भटेन—"नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ" ॥ ४१ ॥

**द्वे अधः सप्त शिरसि खानि स्वेदमुखानि च ।**
**मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः ॥ ४२ ॥**
**मलवृद्धिं गुरुतया लाघवान्मलसंक्षयम् ।**
**मलायनानां बुध्येत सङ्गोत्सर्गादतीव च ॥ ४३ ॥**

स्वास्थ्योत्पत्तिकारणमभिधाय स्वास्थ्यप्रतिबन्धकदोषसंचयनिर्हरणमभिधातुं दोषसंचयस्य लक्षणान्येव तावद्वक्तुमाह,—द्वे अध इत्यादि । द्वे गुदलिङ्गे । खानि छिद्राणि । सप्त शिरसीति—द्वे श्रोत्रे, द्वौ नासापुटौ, द्वे अक्षिणी, मुखं च । स्वेदमुखानीति लोमकूपानीति मलस्यायनानि । दुष्टैरिति गोबलीवर्दन्यायेन क्षीणैः, मात्राधिकैरिति वृद्धैः । येनोत्तरत्र क्षयवृद्ध्योरपि लक्षणं वेदयति । मलवृद्धिं गुरुतया मलायनगुरुतयेत्यर्थः, लाघवान्मलायनानां संक्षयं मलस्य स्वमानादपि क्षयमित्यर्थः । यद्वा दुष्टैरिति मात्राधिकैरित्यत्र विशेषणम्, एवं सति लाघवान्मलसङ्क्षयमिति प्रकृतिस्थाल्लाघवान्मलक्षयमित्यधिकस्य मलस्य क्षयं प्रकृतिस्थत्वमित्यर्थो व्याख्येयः । सङ्गोत्सर्गादतीव चेति अतीवसङ्गादप्रवृत्तेर्मलसङ्क्षयं अतीवोत्सर्गान्मलवृद्धिं जानीयादित्यर्थः ॥ ४२ ॥ ४३ ॥

**तान्दोषलिङ्गैरादिश्य व्याधीन्साध्यानुपाचरेत् ।**
**व्याधिहेतुप्रतिद्वन्द्वैर्मात्राकालौ विचारयन् ॥ ४४ ॥**
**विषमस्वस्थवृत्तानामेते रोगास्तथापरे ।**
**जायन्तेऽनातुरस्तस्मात्स्वस्थवृत्तपरो भवेत् ॥ ४५ ॥**

तानिति मलवृद्धिक्षयात्मकान्मलवृद्धिक्षयजनितानिति यावत् । दोषाणां वातादीनां लिङ्गैः क्षयवृद्धिसंबन्धैरादिश्य बुद्ध्वा ये साध्यास्तानुपाचरेत् । व्याधिप्रतिद्वन्द्वैः व्याधिप्रत्यनीकैः, हेतुप्रतिद्वन्द्वैः हेतुप्रत्यनीकैः । प्रतिद्वन्द्वशब्देन च विपरीतार्थकारिणामपि ग्रहणम् । मात्राकालग्रहणं च प्राधान्यात् । तेन, दोषभेषजादीनामपि ग्रहणं बोद्धव्यम् । यदि वा कालग्रहण एव

१ मात्राधिकैरिति विशेषणेन वृद्ध्यर्थस्य गृहीतत्वात् दुष्टशब्देन दूषणात्मक इति प्रसिद्धार्थेन अप्रसिद्धस्यावश्यकस्योर्वरितस्य हीनैः इत्यस्यार्थस्य ग्रहणं गोबलीवर्दन्यायेनात्र कृतम् । गोबलीवर्दन्यायस्तु गामानय बलीवर्दं च इत्यत्र प्रसिद्धधेन्वर्थपरेण गोशब्देन सहाऽप्रसिद्धबलीवर्दस्याप्यानयनं संगच्छते प्रसिध्यप्रसिद्धिनिबन्धनपरोऽयं न्यायः.

दोषादीनामवरोधो व्याख्येयः । अनातुरशब्देनातुर्यात्प्रागेवानागताबाधेन स्वस्थपरेण भवितव्यमिति शिक्षयति ॥ ४४ ॥ ॥ ४५ ॥

**माधवप्रथमे मासि नभस्यप्रथमे पुनः ।**
**सहस्यप्रथमे चैव हारयेद्दोषसंचयम् ॥ ४६ ॥**
**स्निग्धस्विन्नशरीराणामूर्ध्वं चाधश्च नित्यशः ।**
**बस्तिकर्म ततः कुर्यान्नस्तः कर्म च बुद्धिमान् ॥४७॥**
**यथाक्रमं यथायोग्यमत ऊर्ध्वं प्रयोजयेत् ।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥४८॥**
**रोगास्तथा न जायन्ते प्रकृतिस्थेषु धातुषु ।**
**धातवश्चाभिवर्धन्ते जरा मान्द्यमुपैति च ॥ ४९ ॥**
**विधिरेष विकाराणामनुत्पत्तौ निदर्शितः ।**
**निजानामितरेषां तु पृथगेवोपदेक्ष्यते ॥ ५० ॥**

माधवो वैशाखस्तस्य प्रथमश्चैत्रः । एवं नभस्यस्य भाद्रस्य प्रथमः श्रावणः । तथा सहस्यस्य पौषस्य प्रथमो मार्गशीर्षः । एते च मासाश्चैत्रश्रावणमार्गशीर्षा रोगभिषग्जितीये विमाने शोधनार्थं वक्ष्यमाणप्रावृडादिऋतुक्रमेण वसन्तप्रावृट्शरदन्तर्गता भवन्ति । दृढबलसंस्कारेऽपि पठ्यते—"प्रावृट् शुक्रनभौ ज्ञेयौ शरदूर्जसहौ पुनः । तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति ।" सुश्रुतेऽपि ऋतुचर्याध्याये दोषोपचयप्रकोपोपशमननिमित्तमीदृश एव ऋतुक्रमः पठितः । तेन, शोधनमभिधीयमानं शोधनार्थोक्तर्तुक्रमेणैव व्याख्येयम् । वरान्तादीनामन्तमासेषु तु वमनाद्यभिधानं संपूर्णप्रकोपे भूते निर्हरणोपदेशार्थम् । प्रथमेषु हि मासेषु फाल्गुनाषाढकार्तिकेषु प्रकोपः प्रकर्षप्राप्तो न भवति, चितस्य ह्यसम्यक्प्रकुपितस्याविलीनस्य सम्यङ्निर्हरणं न भवतीति । अतएव कपिलबलेऽपि पठ्यते—"मधौ सहे नभसि च मासि दोषान्प्रवाहयेत् । वमनैश्च विरेकैश्च निरूहैः सानुवासनैः" इति । हरिश्चन्द्रेण तु, सहशब्दोऽयमकारान्तो मार्गशीर्षवचनस्तस्य सहस्यप्रथमे कार्तिके इति व्याख्यातम् । तन्मतानुसारिणा वाग्भटेन चोक्तं "श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान्वाय्वादीनाशु निर्हरेत्" इति । "कार्तिके श्रावणे चैत्रे मासि साधारणे क्रमात् । वर्षादिसंचितान्दोषांस्त्रिमासान्तरितान्हरेत्" । इत्यस्य तु श्लोकस्य केनापि पठितस्याविरुद्धान्वेषणे बुद्धिमतां न व्यापारः । ऊर्ध्वंचेति वमनेन, अध इति विरेकेण, वस्तिकर्मशब्देनास्थापनानुवासने, एतच्च सर्वं वमनादि यथायोग्यतया, न यथासंख्येन । तेन वमनं मधौ प्रधानं, सहस्यप्रथमे विरेकः, नभस्यप्रथमे वस्तिरिति भवति । यथाक्रमं यथानुपूर्वं, यथायोग्यं यद्यस्य युज्यते । एतच्च पूर्वेण वमनादिना, उत्तरेण वा रसायनादि प्रयोजयेदित्यनेन योज्यम् । सिद्धानीति दृष्टफलानि, रोगास्तथा न जायन्त इति वमनादीनाचरतः । धातवश्चाभिवर्धन्त इति रसायनवृष्ययोगानुपयोज्य इति योजनीयम् । निजानामिति छेदः । इतरेषामित्यागन्तूनाम् । आगन्तवश्चेह भूतविषवातादिजन्यास्तथा मानसा अभिप्रेताः येनैतद्धितयमप्यभिधायाऽऽगन्तूनामनुत्पत्तावित्याद्युपसंहारमागन्तुकत्वेनैव करिष्यति ॥ ४६—॥५०॥

**ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः ।**
**नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति ॥ ५१ ॥**
**ईर्ष्याशोकभयक्रोधमानद्वेषादयश्च ये ।**
**मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः ॥ ५२ ॥**

ये भूतेति—भूताः पिशाचादयः, आदिग्रहणाद्वधबन्धनादीनां ग्रहणम् । प्रज्ञा बुद्धिस्तदपराधोऽज्ञानदुर्ज्ञाने । एतन्मलाश्चैते भूताभिषङ्गादय ईर्ष्यादयश्च । यद्यपि निजा अपि प्रज्ञापराधमूला एव, यदुक्तम्—"प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते" इति, तथापि प्राधान्यात्प्रज्ञापराधजनितवाह्यवातादिरूक्षभोजनादिजन्यत्वेन तथाऽन्तरा वातादिजन्यत्वेन प्रपञ्चेनोच्यन्ते ॥ ५१ ॥ ५२ ॥

**त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ ५३ ॥**
**आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः ।**
**प्राज्ञः प्रागेव तत्कुर्याद्धितं विद्याद्यदात्मनः ॥ ५४ ॥**

आगन्तुमूलकारणपरिहारे हेतुमाह—त्याग इत्यादि । इन्द्रियोपशम इन्द्रियाणां स्वविषयेऽलंपटत्वं, स्मृतिः पुत्रादीनां विनश्वरस्वभावाद्यनुस्मरणम् ।यदुक्तम्—"स्मृत्वा स्वभावं भावानां स्मरन्दुःखाद्विमुच्यते" । एतच्च द्वयं मानसरोगप्रतिघातकम् । देशज्ञानाच्छून्यगृहाटव्युपसर्गगृहीतदेशवर्जनादि भवति । कालज्ञानात्पौर्णमास्यादिवक्ष्यमाणभूताद्यभिघातकालादिवर्जनम् । आत्मज्ञानात्स्वशक्तिपर्यालोचनया प्रचरतो बलवदभिघातादिपरिवर्जनं व्याख्येयम् । सद्वृत्तमिन्द्रियोपक्रमणीये वक्ष्यमाणम् । प्रागेवेत्यनुत्पन्नेष्वेव रोगेषु ॥ ५३ ॥ ५४ ॥

**आप्तोपदेशप्रज्ञानं प्रतिपत्तिश्च कारणम् ।**
**विकाराणामनुत्पत्तावुत्पन्नानां च शान्तये ॥ ५५ ॥**
**पापवृत्तवचःसत्वाः सूचकाः कलहप्रियाः ।**
**मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ॥ ५६ ॥**
**परापवादरतयश्चपला रिपुसेविनः ।**
**निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः ॥ ५७ ॥**
**बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः ।**
**वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥ ५८ ॥**
**सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः ।**
**सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥ ५९ ॥**

अथ किं हितमित्याह—आप्तोपदेश इत्यादि । आप्ता ज्ञानवन्तो रागद्वेषादिरहिताः पुरुषाः, यद्वक्ष्यति—"रजस्तमोभ्यां निर्मुक्ताः" इत्यादि । प्रतिपत्तिरुपदिष्टार्थस्य सम्यगव-

बोधः एतद्वयं कारणं विकाराणामनुत्पत्तौ, हेतुवर्जनेनोत्पन्नानां च शान्तये कारणं तच्चिकित्सानुष्ठानेनेत्यर्थः । आप्तोपदेशग्रहणार्थम् अनाप्तान् वर्ज्यान्पापवृत्तेत्यादिना, सेव्यांश्चाप्तान्वुद्धीत्यादिना दर्शयति । वृत्तं चेष्टितं शरीरव्यापारः, सत्वं मनः एषां पापत्वं पापहेतुत्वात् । शठाः क्रूराः, निर्घृणा निष्कृपाः । वुद्ध्यादिभिर्वृद्धाः प्रभूतप्रशस्तवुद्ध्या युक्ता इत्यर्थः । गतव्यथा गतशोकादय इत्यर्थः । सुमुखाः प्रसन्नमुखाः, शंसितव्रता अवलम्बितनियमाः ॥ ५५–५९ ॥

**आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च ।**
**परं प्रयत्नमातिष्ठेद्बुद्धिमान्हितसेवने ॥ ६० ॥**

आहाराचारचेष्टास्विति निर्धारणे सप्तमी । तेनाहाराचारचेष्टानां मध्ये यद्धितं तस्य सेवने प्रयत्नमातिष्ठेदिति फलति । आचारः शास्त्रविहितानुष्ठानम् ॥ ६० ॥

**न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।**
**नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ ६१ ॥**
**ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।**
**प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः ६२ इति ॥**

दध्नोऽनेकप्रकारानेपिद्धत्वाद्दिङ्मात्रोदाहरणार्थं दधिभोजनविधिमाह—न नक्तमित्यादि । अत्र च न नक्तमित्यत्र नोष्णमित्यत्र च नकारः क्रियया संवध्यते, तेन निशि उष्णदधि सर्वथैव न सेव्यम् । अघृतशर्करमित्यादौ च निषेधो नञा संवध्यते, तेनोभयप्रतिषेधात्सशर्करं भुञ्जीतेत्यादि वाक्यार्थो भवति । घृतादीनां मध्येऽन्यतमसंवन्धेनापि दध्युपयोज्यं भवति । न नक्तमित्यादिवदिहापि नकारस्य क्रियासंवन्धे मुद्गसूपसहितस्याप्यशर्करत्वमस्त्येव । दध्न इत्यनुपादेयत्वं स्यात् । जतूकर्णेनापि घृतादीनां मिलितानामेवोपयोगाद्द्ध्यसेव्यमुक्तम् । यदुक्तं—"नाश्नीयाद्दधि नक्तमुष्णं वा न घृतमधुशर्करामुद्गामलकैर्विना वा" इति ॥ ६१–६२ ॥

तत्र श्लोकः ।

**वेगावेगसमुत्थाश्च रोगास्तेषां च भेषजम् ।**
**येषां वेगा विधार्याश्च यदर्थं यद्धिताहितम् ॥ ६३ ॥**
**उचिते चाहिते वर्ज्ये सेव्ये चानुचिते क्रमः ।**
**यथाप्रकृति चाहारो मलायनगदौषधम् ॥ ६४ ॥**
**भविष्यतामनुत्पत्तौ रोगाणामौषधं च यत् ।**
**वर्ज्याः सेव्याश्च पुरुषा धीमतात्मसुखार्थिना ॥६५॥**
**विधिना दधि सेव्यं च येन यस्मात्तदत्रिजः ।**
**न वेगान्धारणेऽध्याये सर्वमेवावदन्मुनिः ॥ ६६ ॥**

**इत्यग्निवेशकृते तन्त्रे चरक-प्रतिसंस्कृते श्लोकस्थाने न वेगान्धारणीयो नाम सप्तमोऽध्यायः ।**

अध्यायार्थसंग्रहे हिताहितमिति सेव्यासेव्यं व्यायामहास्यादि । भविष्यतामनुत्पत्तौ भेषजमिति माधवप्रथमे मासीत्यादिनोत्पन्नानां च शान्तय इत्यन्तेन ॥ ६३–६६ ॥

इति न वेगान्धारणीयः सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

**अथात इन्द्रियोपक्रमणीयमध्यायं व्याख्यास्यामः॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**इह खलु पञ्चेन्द्रियाणि, पञ्चेन्द्रियद्रव्याणि, पञ्चेन्द्रियाधिष्ठानानि, पञ्चेन्द्रियार्थाः, पञ्चेन्द्रियबुद्धयो भवन्तीत्युक्तमिन्द्रियाधिकारे ॥ ३ ॥**

स्वस्थाधिकारे आहाराचारचेष्टासु परं प्रयत्नमातिष्ठेदित्युक्तं, तत्राहारचेष्टाः काश्चित्पूर्वाध्यायत्रयेण प्रतिपादिताः, तेनावशिष्टस्याचारस्याभिधानार्थं तथेन्द्रियमनसामतियोगमिथ्यायोग-परिहाररूपचेष्टोपदर्शनार्थं चन्द्रियोपक्रमणीयमाह । तत्रापि वक्ष्यमाणचेष्टाचारयोः प्रायेणेन्द्रियादिविषयत्वेनेन्द्रियादीन्येवादावाह । इन्द्रियस्योपक्रमणं व्याकर्तुमारम्भः, तमिन्द्रियोपक्रममिन्द्रियव्याकरणमधिकृतोऽध्याय इन्द्रियोपक्रमणीयः । इहेतीह प्रकरणे पञ्चेन्द्रियाणि, तेन प्रकरणान्तरेण दर्शनान्तरपरिग्रहेण वक्ष्यमाणैकादशेन्द्रियाभिधानेन समं न विरोधः । यतः सर्वपारिषमिदं शास्त्रं, तेनायुर्वेदाविरुद्धवैशेषिकसांख्यादिदर्शनभेदेन विरुद्धार्थोऽभिधीयमानो न पूर्वापरविरोधमावहतीत्यर्थः । मनस्तु यद्यपि वैशेषिकमतेऽपीन्द्रियं शास्त्रकारेणापि मधुररसप्रस्तावे "षडिन्द्रियप्रसादनः" इत्यभिधानादनुमतमेव, तथापीह प्रकरणे चक्षुरादिभ्यो वक्ष्यमाणाधिकधर्मयोगितया नेन्द्रियमितीन्द्रियत्वेन न पठितम् । इन्द्रियादीनि स्वयमेव व्याकरिष्यति "तत्र चक्षुः" इत्यादिना । इत्येतावदेवोक्तमिन्द्रियाधिकारे पूर्वाचार्यैरिति शेषः । एतेनान्यशास्त्रेऽपीन्द्रियाधिकारे एतावदेवोक्तमिति फलति ॥ १—३ ॥

**अतीन्द्रियं पुनर्मनःसत्वसंज्ञकं चेत इत्याहुरेके, तदर्थात्मसंपदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम् ॥ ४ ॥**

---

१ सम्यगवरोध इति पाठः ।

२ "अलक्ष्मीदोषयुक्तत्वान्नक्तं तु दधि वर्जितम्
श्लेष्मलं स्यात्ससर्पिष्कं दधि मारुतसूदनम् ॥
न च सन्धुक्षयेत्पित्तमाहारं च विपाचयेत् ।
शर्करासंयुतं दद्यात्तृष्णादाहनिवारणम् ॥
मुद्गसूपेन संयुक्तं दद्याद्रक्तानिलापहम् ।
सुरसंचाल्पदोषं च क्षौद्रयुक्तं भवेद्दधि ॥
उष्णं पित्तासृक्दोषान्धात्रीयुक्तं तु निर्हरेत् ॥"
इति क्वचिदधिकपाठो दृश्यते ।

चक्षुरादिभ्यो विशिष्टेन धर्मेण मनो दर्शयति—अतीन्द्रियमित्यादि । अतिक्रान्तमिन्द्रियमतीन्द्रियं; चक्षुरादीनां यदिन्द्रियत्वं वाह्यज्ञानकारणत्वं, तदतिक्रान्तमित्यर्थः । यद्यपि मनोऽपि सुखादिज्ञानं प्रति कारणत्वेनेन्द्रियं, तथापीन्द्रियचक्षुरादेरधिष्ठायकत्वविशेषादतीन्द्रियमित्युक्तम् । यदिवाऽतीन्द्रियमिति चक्षुरादिभ्योऽप्यतीन्द्रियेभ्यः सूक्ष्मतरं दुरवरोधात् । सत्वमित्येषा संज्ञा यस्य तत्तथा । चेत इत्याहुरेक इत्यादि परमतस्याप्रतिपेधात्स्वयमप्यनुमतं, पर्यायकथनं शास्त्रव्यवहारार्थम् । तदिति मनः, तस्याऽर्थो मनोऽर्थः, स च सुखादिश्चिन्त्यो विचार्यादिश्च । आत्मा चेतनप्रतिसन्धाता । अनयोः सम्पत्तदर्थात्मसम्पत्, एतदायत्ता चेष्टा व्यापारो यस्य तत्तथा । तत्रार्थसम्पत्सुखादीनां सन्निकर्पश्चिन्त्यादीनामाभिमुख्यं च । आत्मसम्पदर्थग्रहणे प्रयत्नशालित्वम् । मनश्चेष्टा च सुखादिज्ञानं तथा चिन्त्यचिन्तनादि तथा चक्षुरादीन्द्रियप्रेरणंच । इन्द्रियाणां चक्षुरादीनां या चेष्टा स्वविपयरूपादिज्ञानलक्षणा, तत्र प्रत्ययभूतं कारणभूतं मन इति योज्यम् । एतेनैतदुक्तं भवति—यदा सुखादयश्चिन्त्यादयोऽपि विपया भवन्त्याऽऽत्मा च प्रयत्नवान्भवति, तदा मनः स्वविपये प्रवर्तते, इन्द्रियाणि चाधितिष्ठति, इन्द्रियाणि च मनोऽधिष्ठितान्येव स्वविपयज्ञाने प्रवर्तन्ते ॥ ४ ॥

**स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन्पुरुषे सत्त्वं रजस्तमःसत्त्वगुणयोगाच्च, न चानेकत्वं; नह्येकं ह्येककालमनेकेषु प्रवर्तते, तस्मान्नैककाला सर्वेन्द्रियप्रवृत्तिः ॥ ५ ॥**

इदानीं तन्मन एकस्मिन्पुरुपे उपाधिभेदादनेकं परमार्थतस्त्वेकमिति दर्शयति—स्वार्थेत्यादि । सत्त्वं मनः । अनेकमनेकमिव, यतः स्वार्थेन्द्रियसङ्कल्पव्यभिचरणाच्च तथा रजस्तमःसत्त्वगुणयोगाच्च, चकारः परस्परसमुच्चये । स्वार्थस्य मनोऽर्थस्य चिन्त्यस्य व्यभिचरणाच्च एवं चिन्त्यमर्थं परित्यज्यान्यार्थस्य ग्रहणादित्यर्थः । एतेनैतदुक्तं भवति, यत एकमेव मनो यदा धर्मं चिन्तयेत्तदा धर्मचिन्तकं, यदा धर्मं परित्यज्य कामं चिन्तयति तदा कामचिन्तकमित्येवमादिना धर्मभेदेन भिन्नमप्यभिधीयते, एवमिन्द्रियार्थव्यभिचरणेऽपि यदा रूपं गृह्णाति तदा रूपग्राहकं, यदा गन्धं गृह्णाति तदा गन्धग्राहकमित्यादि वाच्यम् । एवं सङ्कल्पव्यभिचरणेऽपि व्याख्येयम् । तत्र सङ्कल्पप्रतिपन्नानां भावानां, उपकारकं ममेदमपकारकं ममेदमिति वा गुणतो दोषतो वा कल्पनम् । एतद्व्यभिचरणे च कदाचिद्गुणकल्पनं कदाचिद्दोपकल्पनमिति मनोभेदो व्याख्येयः । तथा एकपुरुष एकमेव मनो यदा वहुरजोयुक्तं भवति तदा क्रोधादिमद्भवति, यदा वहुतमोयुक्तं भवति तदाऽज्ञानभयादिमद्भवति, यदा सत्वयुक्तं भवति, तदा सत्यशौचादियुक्तं भवति । ततश्चानेकमिव मनो भवति । तदेतत्प्रतिपादितमनेकत्वं परमार्थतो न भवतीत्याह—न चेति । न चानेकत्वं मनस इत्यर्थः । चकारादमहत्त्वं च मनस इति समुच्चिनोति । यदुक्तम्—"अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ" । कुतो नानेकत्वमित्याह—अनेकमेककालं प्रवर्तते, अनेकं यन्मनः देवदत्तयज्ञदत्तविष्णुमित्रेषु दृष्टं तदेककालं युगपदनेकेषु रूपज्ञानशब्दज्ञानगन्धज्ञानेषु वर्तते, एवं दृष्टं तद्यदि एकपुरुषेऽपि वहूनि मनांसि स्युस्तदा तान्यपि युगपदेकपुरुष एव रूपादिज्ञानेषु प्रवर्तेरन्, न तु प्रवर्तन्ते, तस्मादेकमेवैकपुरुषे मन इत्यर्थः । दीर्घां शष्कुलीं भक्षयतो युगपत्पञ्चज्ञानान्युत्पद्यन्त इति तु ज्ञानं युगपदुत्पलपत्रशतव्यक्तिभेदज्ञानवद् भ्रान्तम् । परमार्थतो युगपज्ज्ञानोत्पत्तौ हि सति विपयसन्निकर्षे सर्वदैव हि युगपज्ज्ञानानि स्युः । अतएव हि कारणान्महत्त्वमपि मनसो नास्ति, महत्त्वे हि सति युगपत्पञ्चेन्द्रियाधिष्ठानाज्ज्ञानोत्पत्तिः स्यान्न च भवति, तस्मादेकमणु च मन इति । यस्माच्चैकपुरुषे एकं मनोऽणुपरिमाणं च, तस्मात्कारणान्नैककाला सर्वेन्द्रियप्रवृत्तिर्न युगपदिन्द्रियाणि स्वविपयोपलब्धौ प्रवर्तन्त इत्यर्थः । इन्द्रियाणि मनोऽधिष्ठितानि प्रवर्तन्ते, तेन यदा मनश्चक्षुरधितिष्ठति तदा न घ्राणादीनि, एवं यदा घ्राणमधितिष्ठति तदा न चक्षुरादीनि ॥ ५ ॥

**यद्गुणं चाभीक्ष्णं पुरुषमनुवर्तते सत्त्वं, तत्सत्वमेवोपदिशन्ति मुनयो गुणवाहुल्यानुशयात् ॥ ६ ॥**

ननु यद्येकस्मिन्नेव पुरुषे कदाचिद्रजोयुक्तं कदाचित्तमोयुक्तं कदाचित् सत्वयुक्तं मनो भवति, तत्कथमयं सात्त्विकोऽयं राजस इत्यादिव्यपदेशो भवतीत्याह—यद्गुणमित्यादि । येन गुणेन सत्वादिना युक्तं यद्गुणं, अभीक्ष्णं पुनः पुनः, सत्वं मनोऽनुवर्ततेऽनुवध्नाति, तत्सत्वं सात्विकं राजसं तामसं वा उपदिशन्ति वाहुल्यानुशयाद्भूरिसंवन्धादित्यर्थः । एतदुक्तं भवति—सत्यपि गुणान्तरान्वये सत्त्ववाहुल्यात्सत्त्वकार्याणि सत्यशौचादीनि यस्य भवन्ति स सात्त्विक इति व्यपदिश्यते । एवमपरमपि व्याख्येयम् ॥ ६ ॥

**मनःपुरःसराणि चेन्द्रियाण्यर्थसंग्रहणसमर्थानि भवन्ति । तत्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि ॥ ७ ॥**

उक्तं मनश्चेष्टाप्रत्ययभूतमिन्द्रियाणां तद्व्याकरोति—मनःपुरःसराणि मनोधिष्ठितानि । पञ्चेन्द्रियाणि इत्युक्तं तद्विवृणोति—तत्र चक्षुरित्यादि । चष्टे रूपं रूपवन्तं च प्रकाशयतीति चक्षुः । तच्चोभयनयनगोलकाधिष्ठानमेकमेव । शृणोत्यनेनेति श्रोत्रम् । जिघ्रत्यनेनेति घ्राणम् । रसयत्यनेनेति रसनम् । स्पृशत्यनेनेति स्पर्शनम् ॥ ७ ॥

**पञ्चेन्द्रियद्रव्याणि खं वायुर्ज्योतिरापो भूरिति ॥ ८ ॥**

१ नाप्यनेकमिति पाठः,

**पञ्चेन्द्रियाधिष्ठानानि—अक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति ॥ ९ ॥**

इन्द्रियाणां प्राधान्येनारम्भकं द्रव्यमिन्द्रियद्रव्यम् । इन्द्रियेषु चक्षुरादौ निर्दिष्टं प्राधान्यात् । यदुक्तं शालाक्ये—"श्रोत्रत्वक्घ्राणरसनैः श्रेष्ठैरपि समन्वितः । बलवर्णायुपेतोऽपि नष्टदृक् कुब्जसन्निभः" इति । इन्द्रियद्रव्यनिर्देशे तु खादितत्वेन निर्देशः कृतो वक्ष्यमाणेन "महाभूतानि खं वायुरग्निरापः क्षितिस्तथा" इति ग्रन्थक्रमानुरोधेन । इन्द्रियाधिष्ठानमिन्द्रियाश्रयः । यद्यपि चाक्षिणी कर्णौ नासापुटे द्वे तथाप्येकेन्द्रियाधिष्ठानत्वेनैकत्वमेवेति कृत्वा "पञ्च" इत्युक्तम् ॥ ८ ॥ ९ ॥

**पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः ॥ १० ॥**

इन्द्रियार्था इन्द्रियविषयाः । स्पर्शग्रहणेन स्पर्शस्य स्पर्शाश्रयस्य च द्रव्यस्य स्पर्शैकार्थसमवेतस्य च परिमाणादेः स्पर्शग्राह्यस्य ग्रहणम् । एवं रूपादिषु च वाच्यम् ॥ १० ॥

**पञ्चेन्द्रियबुद्धयः चक्षुर्बुद्ध्यादिकास्ताः पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः, क्षणिका निश्चयात्मिकाश्च, इत्येतत् पञ्चपञ्चकम् ॥ ११ ॥**

असाधारणेन कारणेनेन्द्रियेण व्यपदिष्टा बुद्धय इतीन्द्रियबुद्धयः । चक्षुषाऽसाधारणेन कारणेन जनिता बुद्धिश्चक्षुर्बुद्धिः । एवं श्रोत्रादिबुद्धिषु वाच्यम् । इह चक्षुर्बुद्धिरादावुपदिश्यते चक्षुर्बुद्धेरेव बहुविषयत्वात् । इन्द्रियबुद्ध्युत्पादसामग्रीमाह—ताः पुनरित्यादि । सन्निकर्षः संबन्धः, स च क्वचित्संयोगः क्वचित्समवायः, तेन चक्षुर्बुद्ध्यादावात्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन । श्रोत्रबुद्धौ तु श्रोत्रशब्दयोः समवाय इति विशेषः । क्षणिका इत्याशुतरविनाशिन्यः, न तु बौद्धसिद्धान्तवदेकक्षणावस्थायिन्यः । निश्चयात्मिका वस्तुस्वरूपपरिच्छेदात्मिका, क्षणिकत्वेऽपि वस्तुपरिच्छेदकत्वं प्रदीपार्चिर्ज्वलनवद्बुद्धीनामविरुद्धमित्यर्थः ॥ ११ ॥

**मनोमनोऽर्थो बुद्धिरात्मा च इत्यध्यात्मद्रव्यगुणसंग्रहः शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च, द्रव्याश्रितं च कर्म,—यदुच्यते क्रियेति ॥ १२ ॥**

मनोऽर्थो वक्ष्यमाणो "मनसस्तु चिन्त्यमर्थः" इत्यनेन । बुद्धिरिह मनोबुद्धिर्विवक्षिता, इन्द्रियबुद्धीनां पञ्चपञ्चकेनैव ग्रहणात् । आत्मानमधिकृत्याध्यात्मं, आत्मानमधिकृत्य यानि द्रव्याणि ये च गुणाः, तेषां संग्रहोऽध्यात्मद्रव्यगुणसंग्रहः । तत्र गुणा रूपादिबुद्धयः, शेषं द्रव्यम् । एतदुक्तं भवति—आत्मनोऽपकारकोपकारकाणां द्रव्यगुणानामयं संग्रह इति । योऽयं संग्रहः शुभस्य धर्मस्य सुखस्य च प्रवृत्तौ हेतुर्भवति, अशुभस्याधर्मस्यासुखस्य च निवृत्तौ च हेतुर्भवति, तत्रोक्तसंग्रहस्य सम्यग्योगः शुभस्य प्रवृत्तावशुभस्य निवृत्तौ हेतुर्भवति, अयोगातियोगमिथ्यायोगास्तु अशुभस्य प्रवृत्तौ च हेतवः । यदि वा शुभस्य पूर्वव्याकृतस्य चाशुभस्य पूर्वव्याकृतस्य प्रवृत्तेः संसारस्य निवृत्तेः मोक्षस्य यथोक्तसंग्रहोहेतुरिति व्याख्येयम् । तत्र संग्रहस्य शुभाशुभहेतुत्वं पूर्ववदेव व्याख्येयम् । दुर्ज्ञातस्तु संग्रहः संसारस्य हेतुर्भवति तत्त्वतो ज्ञातस्तु मोक्षाय हेतुरिति व्याख्येयम् । अध्यात्मद्रव्यगुणादधिकमनुक्तं हेतुमाह—द्रव्याश्रितं चेत्यादि । कर्म इत्युच्यमाने वमनादिष्वपि तथाऽऽस्यासम्प्रादिष्वपि कर्मशब्दवाच्येषु प्रसक्तिः स्यात्, अतस्तद्व्यावृत्त्यर्थं द्रव्याश्रितपदं, तथापि धर्माधर्मयोः कर्मशब्दवाच्ययोः प्रसक्तिः स्यादित्युक्तं यदुच्यते क्रियेति । कर्मणः पृथक् कृत्वाभिधानं पञ्चकर्मादिषु कर्मणोऽप्रविष्टत्वात् ॥ १२ ॥

**तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मकानामपि सतामिन्द्रियाणां तेजश्चक्षुषि, खं श्रोत्रे, घ्राणे क्षितिः, आपो रसने, स्पर्शनेऽनिलो विशेषेणोपपद्यते ॥ १३ ॥**

संप्रति वैद्यकसिद्धान्तेन पाञ्चभौतिकानामपि चक्षुरादीनां यथा तैजसत्वादिव्यपदेशो भवतीति तत्राह—तत्रेत्यादि । अनुमानेन प्रतीयन्त इत्यनुमानगम्यानि, अनुमानं च—चक्षुर्बुद्ध्यादयः करणकार्याः क्रियात्वाच्छिदिक्रियावत् । महाभूतानि खादीनि तेषां विकारः परिणामविशेषः, समुदायो मेलकः, स आत्मा समवायिकारणं येषां तानि । विशेषेणाधिकत्वेन । तदुक्तं भवति—पाञ्चभौतिकत्वेऽपि तेजोऽधिकत्वाच्चक्षुस्तैजसं व्यपदिश्यते । एवं घ्राणादिष्वपि पृथिव्याद्यधिकत्वेन पार्थिवत्वादिव्यपदेशः ॥ १३ ॥

**तत्र यद्यदात्मकमिन्द्रियं विशेषात्तत्तदात्मकमेवार्थमनुगृह्णाति तत्स्वभावाद्विभुत्वाच्च ॥ १४ ॥**

अथ कथं चक्षुस्तेजोधिकं, घ्राणं पृथिव्यधिकमित्याद्यवधार्यत इत्याह—तत्रेत्यादि । यदिन्द्रियं विशेषाद्यदात्मकं, तद्भूतारब्धं तदिन्द्रियं तदात्मकमेव तद्भूतात्मकमेव अर्थं विषयमनुगृह्णात्यनुधावति । यत्तेजःप्रधानं तत्तेजःप्रधानमेव विषयं गृह्णातीत्यर्थः । एवं पार्थिवादिष्वपि वाच्यम् । तत्र हेतुमाह,—"तत्स्वभावाद्विभुत्वाच्च" तत्स्वभावादिति ग्राह्याणां रूपादीनां यः स्वभावः तैजसत्वादिः, चक्षुरादीनामपि तत्स्वभावादेवेत्यर्थः । विभुत्वादिति शक्तत्वात् । समानजातीयतैजसादिग्रहण एव चक्षुरादीनां शक्तत्वादित्यर्थः । तदनेन ग्रन्थेन एतदनुमानमुपदिश्यते—एतच्चक्षुस्तैजसं, रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वाद्बाह्यालोकवत् । रसनमाप्यं, रूपादीनां मध्ये रसस्यैव प्रकाशकत्वाद्दन्तोदकवत् । तथा गन्धः स्वजातीयगुणोत्कर्षवदिन्द्रियग्राह्यो भूतविशेषगुणत्वाद्रूपवदित्यादि ॥ १४ ॥

**तदर्थातियोगायोगमिथ्यायोगात्समनस्कमिन्द्रियं विकृतिमापद्यमानं यथास्वं बुद्ध्युपघाताय संप-**

**महर्षीणां मतिर्या या पुनर्वसुमतिश्च या ।**
**कलाकलीये वातस्य तत्सर्वं संप्रकाशितम् ॥ १७ ॥**

**इत्यग्निवेशकृते तन्त्रे चरक-प्रतिसंस्कृते श्लोकस्थाने वातकलाकलीयो नाम द्वादशोऽध्यायः समाप्तः ।**
**इति निर्देशचतुष्कम् ॥**

संग्रहे गुणाः पठितिति रूक्षादयः, द्विविधो हेतुरिति वातप्रकोपहेतुर्वातप्रशमहेतुः, विविधं नानाप्रकारं सन्निखिलमेव वायोः कर्म यत्कुपिताऽकुपिताऽशरीरशरीरचरभेदेन भवति, तदुक्तमिति योजनीयं, न हि चतुर्विधव्यतिरेकेण वायोः पृथग्विधं कर्मोक्तम् ॥ १६ ॥ १७ ॥

वातकलाकलीयो द्वादशोऽध्यायः ।
निर्देशचतुष्कः समाप्तः ।

---

## त्रयोदशोऽध्यायः ।

**अथातः स्नेहाध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

निर्देशवातकलाकलीये वातादयोऽभिहिताः तेषां भेषजं यथा कल्पनीयं, तदुपदेष्टुं कल्पनाचतुष्कोऽभिधीयते। भेषजानां कल्पना भेषजकल्पना, सा च कल्पनाऽऽश्रयद्रव्याभिधानं विना न पार्यते कल्पयितुं, अतः स्नेहादिद्रव्यगोचरा स्नेह-स्वेद-वमन-विरेचनकल्पनेहाऽभिधीयते । वस्तिकल्पना तु वहुवक्तव्यत्वान्नोक्ता । अत्रापि वमनादिप्रवृत्तौ स्नेहस्यैव प्रथमं विधीयमानतया तथा दोषप्रधानस्य वातस्य प्रधानभेषजत्वाच्च तत्प्रतिपादकं एव स्नेहाध्यायोऽभिधीयते । स्नेहस्य प्रतिपादकोऽध्यायः स्नेहाध्यायः ॥ १ ॥ २ ॥

**सांख्यैः संख्यातसंख्येयैः सहासीनं पुनर्वसुम् ।**
**जगद्धितार्थं पप्रच्छ वह्निवेशः स्वसंशयम् ॥ ३ ॥**

संख्या सम्यग्ज्ञानं, तेन व्यवहरन्तीति सांख्याः । संख्यातं ज्ञातं संख्येयं ज्ञेयं यैस्ते तथा । यदि वा, संख्यातसंख्येयमिति पाठः, तदा पुनर्वसुविशेषणमेतत्, अर्थस्तु समानः । सांख्यैः सहावस्थानदर्शनमात्रेयस्य कर्तव्यप्रश्नानुगुणमनःसमाधानोपदर्शनार्थम् । संशयमिति संशयेन विपयिणा विषयं लक्षयति, तेन संशयविषयमित्यर्थः ॥ ३ ॥

**किंयोनयः कति स्नेहाः के च स्नेहगुणाः पृथक् ।**
**कालानुपाने के कस्य कति काश्च विचारणाः ॥ ४ ॥**
**कति मात्राः कथंमाना का च केषूपदिश्यते ।**
**कश्च केभ्यो हितः स्नेहः प्रकर्षः स्नेहने च कः ॥ ५ ॥**
**स्नेह्याः के के न च स्निग्धाऽस्निग्धातिस्निग्धलक्षणम् ।**
**किं पानात्प्रथमं पीते जीर्णे किंच हिताऽहितम् ॥६॥**
**के मृदुक्रूरकोष्ठाः का व्यापदः सिद्धयश्च काः ।**
**अच्छे संशोधने चैव स्नेहे का वृत्तिरिष्यते ॥ ७ ॥**
**विचारणाः केषु योज्या विधिना केन तत्प्रभो ! ।**
**स्नेहस्यामितविज्ञानज्ञानमिच्छामि वेदितुम् ॥ ८ ॥**
**अथ तत्संशयच्छेत्ता प्रत्युवाच पुनर्वसुः ।**
**स्नेहानां द्विविधा चासौ योनिः स्थावरजङ्गमा ॥९॥**

किंयोनयः किंवाऽऽधारकारणाः कालश्चानुपानं च कालानुपाने, विचारणा द्रव्यान्तरासंयुक्तस्नेहपानं वर्जयित्वा स्नेहोपयोगः, कथंमाना कीदृङ्माना, का चेति मात्रा, प्रकर्षः कालप्रकर्षः, स्नेहने स्नेहयुक्तिक्रियायां; के नचेति के नच स्नेह्याः, किं पानात्प्रथमं पूर्वं हिताऽहितं, किंच पीते तु स्नेहे तथा जीर्णे च स्नेहे हिताऽहितमिति योज्यम् । सिद्धयो व्यापत्साधनानि भेषजानि, अच्छ इति पृथङ्निर्देशात् गोवलीवर्दन्यायेन संशमन इति भवति । वृत्तिरिति, वृत्तिरुपचारविधानम्, ज्ञानं शास्त्रम् ॥ ४—९ ॥

**तिलः पियालाभिषुकौ विभीतकश्चित्राभयैरण्डमधूकसर्षपाः ।**
**कुसुंभविल्वारुकमूलकातसीनिकोठकाक्षोडकरंजशिग्रुकाः ॥ १० ॥**
**स्नेहाशयाः स्थावरसंज्ञितास्तथा स्युर्जङ्गमा मत्स्यमृगाः सपक्षिणः ।**
**तेषां दधिक्षीरघृतामिषं वसा स्नेहेषु मज्जा च तथोपदिश्यते ॥ ११ ॥**

अभिषुक औत्तरापथिकः, चित्रा गोरक्षकर्कटी तद्वीजमिह, यदि वा, चित्रा लौहितैरण्डः, अतसी उमा इति ख्याता, अरुकं निकोठाक्षोडा इति औत्तरापथिकाः, स्नेहाशयाः स्नेहस्थानानि, एते चाऽऽविष्कृततमत्वेनोक्ताः, तेन निम्बतैलादयो बोद्धव्याः, आमिषं मांसम् ॥ १०—११ ॥

**सर्वेषां तैलजातानां तिलतैलं विशिष्यते ।**
**वलार्थे स्नेहने चाग्र्यमैरण्डं तु विरेचने ॥ १२ ॥**

तैलजातानामिति, जातशब्दः प्रकारवचनः। यथा—"यदाऽऽहारजातमग्निवेशः" इत्यादि । अत्र यद्यपि योगात्तिलभवमेव तैलं, तथापि रूढ्येह सर्व एव स्थावरस्नेहास्तैलमित्युच्यन्ते । यदुक्तं सुश्रुते "निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" इति । विशिष्यतेऽतिरिच्यते। अग्र्यमित्यैरण्डेन सम्बध्यते ॥ १२ ॥

**सर्पिस्तैलं वसा मज्जा सर्वस्नेहोत्तमा मताः ।**
**एभ्यश्चैवोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ १३ ॥**

सर्वस्नेहोत्तमा इत्यत्र सर्वशब्देन दधिक्षीरादयो गृह्यन्ते, सर्वस्नेहोत्तमत्वं च सर्पिरादीनां स्नेहगुणप्रकर्षवत्त्वेन। संस्कारो गुणान्तराऽऽरोपणं, तस्यानुवर्तनमनुविधानं स्वीकरणमिति यावत्। एतदुक्तं भवति—यत्—न तथा तैलादयो द्रव्यान्त-

रसंस्कृताः संस्कारगुणानावहन्ति यथा सर्पिरिति । अतएवोक्तं—"नान्यः स्नेहस्तथा कश्चित्संस्कारमनुवर्त्तते । यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्" । अतएव संस्कारकद्रव्यचित्रकादिगुणानुविधानेऽपि सर्पिर्न स्वगुणान्स्नेहशैत्यादीन् जहाति, किंच, स्वगुणान् तद्गुणांश्च वहति, यतः अनुशब्देन पश्चाद्वाचिना स्वगुणवर्त्तनस्य पश्चात्संस्कारकगुणवर्त्तनमुच्यते । अतएवोक्तं—"स्नेहाद्वातं शमयति पित्तं माधुर्यशैत्यतः । घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत्कफम्" । न च वाच्यं रूक्षोष्णचित्रकादिसंस्काराद्रूक्षोष्णं सर्पिर्भूतं, ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथं तिष्ठतः, यतः, सर्पिः संबद्धचित्रकाऽवयवानुगतं हि रूक्षोष्णत्वं, सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः, इदमेव च सर्पिषः संस्कारानुवर्त्तनं—यद्—गुणविरुद्धस्यापि तस्यानुपघातेन धारणम् । संस्कारकचित्रकादिगुणवहनेऽपि सर्पिषः शैत्यादयः कदाचिदभिभूयन्ते संस्कारकगुणैरुष्णादिभिर्न पुनः स्नेहगुणः, तस्य स्नेहेषु सर्वात्मना व्यवस्थितस्य प्रबलत्वात्, अतएव सर्पिरादयः स्नेहप्रधानत्वात् स्नेहा इत्युच्यन्ते । अन्ये तु संस्कारानुवर्त्तनं स्वगुणोपघातेन संस्कारकगुणवहनं ब्रुवते, एतच्च तैले तिष्ठति न सर्पिषीति वदन्ति, सर्पिषि तु संस्कारानुवर्त्तनमुक्तं यत्, तत्सर्पिषि सर्वथा कस्यचिद्गुणस्य संस्कारगुणेन स्वगुणोपघाताद्भवति । तथा हि—दाहप्रशमनार्थं ज्वरे चन्दनादिशीतद्रव्यसाधिततैलमुक्तं, यतः, शीतेन साधिततैलमुष्णमपि स्वभावाच्छीतमेव भवतीति स्नेहगुणानभिधत्ते ॥ १३ ॥

**घृतं पित्तानिलहरं रसशुक्रौजसां हितम् ।**
**निर्वापणं मृदुकरं स्वरवर्णप्रसादनम् ॥ १४ ॥**
**मारुतघ्नं न च श्लेष्मवर्द्धनं बलवर्द्धनम् ।**
**त्वच्यमुष्णं स्थिरकरं तैलं योनिविशोधनम् ॥ १५ ॥**
**विद्धभग्नाहतभ्रष्टयोनिकर्णशिरोरुजि ।**
**पौरुषोपचये स्नेहे व्यायामे चेष्यते वसा ॥ १६ ॥**
**बलशुक्ररसश्लेष्ममेदोमज्जविवर्द्धनः ।**
**मज्जा विशेषतोऽस्थ्नां च बलकृत्स्नेहने हितः ॥ १७ ॥**

घृतमित्यादि । निर्वापणं दाहप्रशमनम् । मारुतघ्नमित्यादि तैलगुणः, स्थिरकरमङ्गस्थैर्यकरम् । विद्धेत्यादि वसागुणः, पौरुषोपचयः शुक्रोपचयः, स्नेहे शरीरस्नेहने कर्त्तव्ये । बलशुक्रेत्यादि । मज्जगुणः ॥ १४–१७ ॥

**सर्पिः शरदि पातव्यं वसा मज्जा च माधवे ।**
**तैलं प्रावृषि नात्युष्णशीते स्नेहं पिबेन्नरः ॥ १८ ॥**

सर्पिरादिपानकालमाह—सर्पिः शरदीत्यादि ।—माधवे वैशाखे, प्रावृडाषाढश्रावणौ, यदुक्तं—"प्रावृट् शुक्रनभौ ज्ञेयौ" इति । शरदि बहुपित्तत्वेन पित्तविरुद्धं घृतमेव यौगिकं, नान्यस्तैलादिः । वसामज्ज्ञोस्तु नातिशीतोष्णत्वात्साधारणोष्णयोस्त्वयोरनुपाने शीतत्वेन वोष्णत्वेन वा निर्देशो न कृतः "साधारत्वं तु शैत्योष्णे वसामज्ज्ञे विनिर्दिशेत्" । इति तु वचनेन शैत्योष्णाभिधानं सामान्येन तैलसर्पिर्वदुष्णशैत्याभिधानान्न प्रकर्षप्राप्तशैत्योष्णत्वप्रापकम् । अतएवोक्तं—"तैलवसामज्जसर्पिषां तु यथापूर्वं श्रेष्ठत्वं वातविकारेषु भवति, यथोत्तरं पित्तविकारेषु" इति । तत्र उत्तरस्य सर्पिषः शैत्यात् पित्तहरत्वम्, तैलस्य तूष्णत्वाद्वातश्लेष्महरत्वम्, वसामज्ज्ञोस्तु साधारणत्वेन मध्यगतत्वमिति स्थितम् । एवं वसामज्ज्ञोः साधारणत्वेन तथा बलत्वधातुवृद्धिकरत्वाभ्यामनतिशीतोष्णे तथा बलक्षयधातुक्षयासन्ने माधवे प्रायः प्रयोगो युक्तः । मैत्रस्तु तुल्यसाधारणगुणोऽपि प्रभूतश्लेष्मतया न स्नेहविषय इत्यनुक्तः। सामान्येन स्नेहोपयोगेऽशस्तं कालमाह—नात्युष्णेत्यादि । नात्युष्णे ग्रीष्मे, नातिशीते हेमन्ते शिशिरे च तथा वर्षजनितशैत्ये वर्षाकाले । अयं नानात्वविकाविकारे सति कालनियमो ज्ञेयः, अग्रे उष्णे शीते च काले स्नेहोपदेशात् ॥ १८ ॥

**वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः ।**
**श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥ १९ ॥**

कालविशेषे दोषविशेषे च पानकालं दर्शयति—वातेत्यादिना । वातश्च पित्तं च वातपित्तं तदधिको वातपित्ताधिकः । रात्रावित्ति सायं, उष्णे ग्रीष्मे, श्लेष्माधिकग्रहणमत्यन्तशीतविकारगृहीतपुरुषोपलक्षणार्थं, तेन वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते । अतएव सुश्रुतेऽप्युक्तं—"वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" इति । केवलवाताधिकस्य तथा पित्ताधिकस्य श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव पानकालो वक्ष्यमाणो भवति । वक्ष्यति हि—"पिबेत्संशमनस्नेहमन्नकाले" इत्यादि । अन्ये तु ब्रुवते—वाताधिकग्रहणेन केवलवातस्यापि ग्रहणं श्लेष्माधिकव्यपदेशाच्च वातश्लेष्मपित्तश्लेष्मणोरपि ग्रहणमिति । शीते हेमन्तादौ, अमलः प्रबलरश्मिर्यस्मिन् दिनस्य भागे भास्करः सोऽमलभास्करो मध्याह्न इति यावत् ॥ १९ ॥

**अत्युष्णे वा दिवा पीतो वातपित्ताधिकेन वा ।**
**मूर्च्छां पिपासामुन्मादं कामलां वा समीरयेत् ॥ २० ॥**
**शीते रात्रौ पिबन्स्नेहं नरः श्लेष्माधिकोऽपि वा ।**
**आनाहमरुचिं शूलं पाण्डुतां वा समृच्छति ॥ २१ ॥**

उक्तकालनियमविपर्यये दोषमाह—अत्युष्णे वेत्यादि । अत्युष्णे काले दिवा पीतः स्नेहः श्लैष्मिकस्यापि यथोक्तविकारकरः, तथा वातपित्ताधिकेन पीतः शीतकालेऽपि यथोक्तविकारकरः । एवं निशापानेऽपि वाक्यार्थः, परं निषिद्धस्य कालस्य दोषस्य च मेलकेऽत्यये चोक्तविकारप्रकर्षाऽप्रकर्षौ तर्कणीयौ ॥ २०–२१ ॥

**जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ।**
**वसामज्ज्ञोस्तु मण्डः स्यात्सर्वेषूष्णमथाम्बु वा ॥ २२ ॥**

अनुपानमाह—जलमित्यादि । तैलेऽम्बिलत्वनुपाने, अ-

नुपानपरिमाणं तु सम्यग्भेषजपाकार्थं क्रियमाणं भेषजाऽवैकारिकपोंकेनैवोन्नेयं वृद्धवैद्यव्यवहाराच्च ॥ २२ ॥

**ओदनश्च विलेपी च रसो मांसं पयो दधि ।**
**यवागूः सूपशाकौ च यूषः कांवलिकः खडः ॥२३॥**
**सक्तवस्तिलपिष्टं च मद्यं लेहास्तथैव च ।**
**भक्ष्यमभ्यञ्जनं वस्तिस्तथा चोत्तरवस्तयः ॥ २४॥**
**गण्डूषः कर्णतैलं च नस्तः कर्णाऽक्षितर्पणम् ।**
**चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणाः ॥ २५ ॥**

विचारणाः संख्यया स्वरूपेण चैकग्रन्थेनाह—ओदनश्चेत्यादि । विलेपी विरलद्रवा यवागूर्वहुसिक्थसमन्विता ज्ञेया । सशाकपल्लवेन कृतो यूपः खडः, काम्बलिको दधिलवणतिलादिकृत ईपदम्लः । एतयोरुदाहरणं यथा—"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूपोऽयमयं काम्बलिको मतः । दध्यम्लो लवणस्नेहतिलमापान्वितः शृतः" इति । लेहः शर्करादीनां पाकात्कृतः, लिह्यत इति लेहः । प्रविचार्यतेऽवचार्यतेऽनुकल्पेनोपयुज्यतेऽनयेति प्रविचारणा ओदनादयः ओदनादयश्च स्नेहविचारणायां स्नेहयुक्ता एव बोद्धव्याः । अभ्यञ्जनादयस्तु यद्यपि शुद्धस्नेहसंपायास्तथापि जठराग्नि संवन्धेन व्याप्रियन्त इति तन्त्रे विचारणाशब्देनोच्यन्ते ॥ २३–२५॥

**अच्छपेयस्तु यः स्नेहो न तामाहुर्विचारणाम् ।**
**स्नेहस्य स भिपग्दृष्टः कल्पः प्राथमकल्पिकः ॥ २६ ॥**

केवलस्नेहपानं तु स्नेहने शक्त्यतिशयवत्त्वेन न विचारणासंज्ञयोच्यते, एतदेवाह—अच्छपेय इत्यादि ।—अच्छश्च पेयश्च अच्छपेयः, ओदनाद्यसंवन्धे सति पेय इत्यर्थः, न तामाहुर्विचारणामिति वचनेन वैद्यपरम्परासिद्धोऽयं व्यवहार इति दर्शयति । भिपग्भिर्दृष्टो भिपग्दृष्टः । प्रथमे श्रेष्ठे कल्पे पक्षे भवतीति प्राथमकल्पिकः श्रेष्ठ इत्यर्थः ॥ २६ ॥

**रसैश्चोपहितः स्नेहः समासव्यासयोगिभिः ।**
**पड्भिस्त्रिपष्टिधा संख्यां प्राप्नोत्येकश्च केवलः ॥२७॥**

प्रकारान्तरेण विचारणाभेदमाह—रसैश्चेत्यादि । समासो रसानामन्योन्यमेलकः, व्यासोऽमेलकः समासव्यासवद्भिः पड्भी रसैरोदनादिगतैरुपहितो युक्तः सन्स्नेहस्त्रिपष्टिसंख्यां प्राप्नोति । एकश्च केवल इत्यच्छपेयं वर्जयित्वाऽभ्यञ्जनादिप्रयोज्यः । त्रिपष्टीरसभेद आत्रेय भद्रकापीये "स्वाद्वम्लादिभिर्योगम्" इत्यादिवाक्ये वक्ष्यमाणो बोद्धव्यः । एवं स्नेहानां रसयुक्तानां चतुःपष्टिः प्रविचारणाः स्युः । चतुःषष्टिरिति स्नेहानामित्यनेन संवध्यते, तेन प्रविचारणेत्येकवचनमुपपन्नं स्यात् ॥ २७ ॥

**एवमेपा चतुःपष्टिः स्नेहानां प्रविचारणा ।**
**ओकर्तुव्याधिपुरुषान्प्रयोज्या जानता भवेत् ॥२८॥**

न सर्वविचारणा सर्वत्र कर्त्तव्या, किन्तु सात्म्यर्तुव्याधिदोपपुरुपान्परीक्ष्य या यत्र युज्यते तत्र सा कर्तव्येत्याह—ओकर्त्वित्यादि ।—ओकोऽभ्यासः । पुरुपग्रहणेन कस्मिन्देशेऽयं पुरुपो वर्तत इति परीक्षया देशोऽप्यवरुद्धो बोद्धव्यः । वयो-वल-प्रभृतयश्च बोद्धव्याः ॥ २८ ॥

**अहोरात्रमहः कृत्स्नमर्द्धाहं च प्रतीक्ष्यते ।**
**प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥ २९ ॥**
**इति तिस्रः समुद्दिष्टा मात्राः स्नेहस्य मानतः ।**
**तासां प्रयोगान्वक्ष्यामि पुरुषं पुरुषं प्रति ॥ ३० ॥**
**प्रभूतस्नेहनित्या ये क्षुत्पिपासाऽसहा नराः ।**
**पावकश्चोत्तमवलो येपां ये चोत्तमा वले ॥ ३१ ॥**
**गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ।**
**उन्मत्ताः कृच्छ्रमूत्राश्च गाढवर्चस एव च ॥ ३२ ॥**
**पिबेयुरुत्तमां मात्रां तस्याः पाने गुणान् शृणु ।**
**विकारान् शमयत्येपा शीघ्रं सम्यक्प्रयोजिता ॥३३॥**
**दोपानुकर्पिणी मात्रा सर्वमार्गानुसारिणी ।**
**वल्या पुनर्नवकरी शरीरेन्द्रियचेतसाम् ॥ ३४ ॥**

मात्रायाः संख्यां प्रमाणं चाह—अहोरात्रेत्यादि ।—अहोरात्रशब्दोऽष्टप्रहरोपलक्षणः, एवमहःशब्दार्द्धाहशब्दौ चतुःप्रहरद्विप्रहरोपलक्षणौ, तेन प्रहराद्यतीतेऽप्यहनि पीता मात्रा यथोक्तप्रहरकालप्राप्त्या दिनान्तरे रात्रौ वा जीर्यमाणा मन्तव्या, अन्ये त्वहोरात्रशब्देन न्यूनेनाप्यह्ना युक्ता रात्रिरहोरात्रेणैवोच्यते, कृत्स्नार्द्धाहौ तु प्रहरोपलक्षणाविति वदन्ति, अत्र यदाऽहोरात्रपरिणामिनी मात्रा क्रियते, तदा तदहराहारो न कर्त्तव्यः, अतएवैतत्पानं पुरुपविशेपविषयकथने उक्तं "क्षुत्पिपासासहा नराः" इति । प्रभूतस्नेहनित्याः प्रभूतस्नेहसात्म्याः सम्यग्योजितेतिवचनेन महाव्यापत्तित्वमस्याः सूचयति । सर्वमार्गाः कोष्ठसन्धिमर्मशाखाः, पुनर्नवकरी निःशेपदोपहरत्वेन ॥ २९–३४ ॥

**अरुष्कास्फोटपिडकाकण्डूपामाभिरर्दिताः ।**
**कुष्ठिनश्च प्रमीढाश्च वातशोणितिकाश्च ये ॥ ३५ ॥**
**नातिवह्वाशिनश्चैव मृदुकोष्ठास्तथैव च ।**
**पिवेयुर्मध्यमां मात्रां मध्यमाश्चापि ये वले ॥ ३६ ॥**
**मात्रैपा मन्दविभ्रंशा न चातिवलहारिणी ।**
**सुखेन च स्नेहयति शोधनार्थे च युज्यते ॥ ३७ ॥**
**ये तु वृद्धाश्च वालाश्च सुकुमाराः सुखोचिताः ।**
**रिक्तकोष्ठत्वमहितं येपां मन्दाग्नयश्च ये ॥ ३८ ॥**
**ज्वरातीसारकासाश्च येपां चिरसमुत्थिताः ।**
**स्नेहमात्रां पिवेयुस्ते ह्रस्वां ये चावरा वले ॥ ३९ ॥**
**परिहारे सुखा चैपा मात्रा स्नेहनबृंहणी ।**
**वृष्या वल्या निरावाधा चिरं चाप्यनुवर्तते ॥ ४० ॥**

१ कल्पनापूर्वकभेदा इत्यर्थः ।

**वातपित्तप्रकृतयो वातपित्तविकारिणः ।**
**चक्षुःकामाः क्षताः क्षीणा वृद्धा वालास्तथाऽवलाः ४१**
**आयुःप्रकर्षकामाश्च वलवर्णस्वरार्थिनः ।**
**पुष्टिकामाः प्रजाकामाः सौकुमार्यार्थिनश्च ये ॥४२॥**
**दीप्त्योजःस्मृतिमेधाग्निवुद्धीन्द्रियवलार्थिनः ।**
**पिवेयुः सर्पिरार्ताश्च दाहशस्त्रविषाग्निभिः ॥ ४३ ॥**

अरुष्केत्यादि मध्यममात्रागुणः, अरुष्काऽर्षपिका, शोधनार्थं इति शोधनार्थस्नेहकरणे, एतेन, उत्तममात्रा संशमने एव परं, न तु शोधनाङ्गस्नेहे कर्तव्ये इति दर्शयति । ये त्वित्यादि ह्रस्वमात्रागुणः, परिहारे सुखेत्यल्पमात्रपरिहारत्वेन । यः स्नेहो यत्र कार्यस्तमाह—वातपित्तेत्यादि । वातपित्तविकारग्रहणेनैव वातपित्तप्रकृतिषु लब्धेषु पुनस्तदभिधानं वातपित्तप्रकृतीनां स्तोकश्लेष्मविकारेऽपि घृतपानोपदेशार्थम् । एवं वातव्याधिभिराविष्टा वातप्रकृतयश्च य इत्यत्र व्याख्येयम् । वलार्थिन इत्यत्र वलशब्दः स्मृत्यादिभिः संवध्यते । आर्ताः पीडिता दाहादिभिरिति संवन्धः ॥ ३५–४३ ॥

**प्रवृद्धश्लेष्ममेदस्काश्चलस्थूलगलोदराः ।**
**वातव्याधिभिराविष्टा वातप्रकृतयश्च ये ॥ ४४ ॥**
**वलं तनुत्वं लघुतां दृढतां स्थिरगात्रताम्[1] ।**
**स्निग्धश्लक्ष्णतनुत्वक्तां ये च काङ्क्षन्ति देहिनः ॥४५**
**कृमिकोष्ठाः क्रूरकोष्ठास्तथा नाडीभिरर्दिताः ।**
**पिवेयुः शीतले काले तैलं तैलोचिताश्च ये ॥ ४६ ॥**

तैलविषयमाह—प्रवृद्धेत्यादि । शीतले काल इति तैलस्योष्णत्वेन शीतलेऽपि काल इत्यर्थः । तेन, सामान्यप्रतिषेधः—"नात्युष्णशीते स्नेहं पिवेन्नरः" इति न विरुध्यते । यदि वा सर्पिःपानकालापेक्षया शीतत्वं वोद्धव्यम् ॥४४—४६॥

**वातातपसहा ये च रूक्षा भाराध्वकर्शिताः ।**
**संशुष्करेतोरुधिरा निष्पीतकफमेदसः ॥ ४७ ॥**
**अस्थिसन्धिशिरास्नायुमर्मकोष्ठमहारुजः ।**
**वलवान्मारुतो येषां खानि चावृत्य तिष्ठति ॥ ४८ ॥**
**महच्चाग्निवलं येषां वसासात्म्याश्च ये नराः ।**
**तेषां स्नेहयितव्यानां वसापानं विधीयते ॥ ४९ ॥**
**दीप्ताग्नयः क्लेशसहा घस्मराः स्नेहसेविनः ।**
**वातार्त्ताः क्रूरकोष्ठाश्च स्नेह्या मज्जानमाप्नुयुः ॥ ५० ॥**
**येभ्यो येभ्यो हितो यो यः स्नेहः स परिकीर्त्तितः ।**
**स्नेहनस्य प्रकर्षौ तु सप्तरात्रात्रिरात्रकौ ॥ ५१ ॥**

वसाविषयमाह वातातपेत्यादि ।—संशुष्कनिष्पीतशब्दौ क्षीणार्थावेव । महारुज इत्यस्थ्यादिभिः संवध्यते; खानि स्रोतांसि । दीप्ताग्नय इत्यादि मज्जपानविषयः, घस्मरा वहुभक्षकाः, आप्नुयुरुपयुञ्जीरन् ॥ ४७–५१ ॥

**स्वेद्याः शोधयितव्याश्च रूक्षा वातविकारिणः ।**
**व्यायाममद्यस्त्रीनित्याः स्नेह्याः स्युर्ये च चिन्तकाः ५२**

प्रकर्षाविल्यल्पप्रकर्षभूयःप्रकर्षौ, तेन, अल्पत्वेन त्रिरात्रिकः प्रकर्षो भूयस्त्वेन साप्तरात्रिक इति च स्यात् । एतच्च वक्ष्यमाणसद्यःस्नेहप्रयोगातिरिक्तप्रयोगे वोद्धव्यं, यदि वा, सद्यःस्नेहप्रयोगा अपि त्र्यहेणैव स्नेहयन्ति, स्युरित्यर्थं तु तेषु सद्य इत्युक्तम् । यदुक्तं—"त्र्यहावरं सप्तदिनं परं तु स्निग्धो नरः स्वेदयितव्य इष्टः । नातःपरं स्नेहनमादिशन्ति सात्मीभवेत्सप्तदिनात्परं तु" ॥ ५२ ॥

**संशोधनादृते येषां रूक्षणं संप्रचक्षते ।**
**न तेषां स्नेहनं शस्तमुत्सन्नकफमेदसाम् ॥ ५३ ॥**
**अभिष्यण्णाननगुदा नित्यमन्दाग्नयश्च ये ।**
**तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः ॥ ५४ ॥**
**अन्नद्विषश्छर्दयन्तो जठरामगरार्दिताः ।**
**दुर्वलाश्च प्रतान्ताश्च स्नेहग्लाना मदातुराः ॥ ५५ ॥**
**न स्नेह्या वर्तमानेषु न नस्तो वस्तिकर्मसु ।**
**स्नेहपानात्प्रजायन्ते तेषां रोगाः सुदारुणाः ॥ ५६ ॥**

सामान्येन स्नेह्यानाह—स्वेद्या इति ।—स्वेद्याः, स्वतन्त्रस्वेदसाध्याः वातरुगार्त्तादयः, शोधनाङ्गस्वेदसाध्यानां तु 'शोधयितव्याः' इत्यनेनैव गृहीतत्वात् । चिन्तका इति चिन्तावहुलाः । अस्नेह्यानाह—संशोधनादृत इत्यादि । येषां रूक्षणं वक्ष्यते लङ्घनवृंहणीये,—"अभिष्यन्दा महादोषा मर्मस्था व्याधयश्च ये । ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः" इत्यनेन तेषां शोधनादृते स्नेहनं न शस्तं, यदा च शोधने विरूक्ष्यन्ते तदा परं शोधनाङ्गस्तत्र स्नेहः कर्त्तव्य इति भावः । उत्सन्नो वृद्धः कफो मेदश्च येषां ते तथा—एतच्च विशेषणं, विरूक्षणीया एवंभूता एव भवन्तीति दर्शयति । अभिष्यण्णो द्रवप्रधानश्लेष्मविकारी, गरः कृत्रिमं विषं, अतिप्रतान्तोऽतिक्षीणद्रवधातुः । वर्त्तमानेषु क्रियमाणेष्वित्यर्थः ॥ ५३–५६ ॥

**पुरीषं ग्रथितं रूक्षं वायुरप्रगुणो मृदुः ।**
**पक्ता खरत्वं रौक्ष्यं च गात्रस्यास्निग्धलक्षणम् ॥५७॥**
**वातानुलोम्यं दीप्तोऽग्निर्वर्चःस्निग्धमसंहतम् ।**
**मार्दवं स्निग्धता चाङ्गे स्निग्धानामुपजायते ॥ ५८ ॥**
**पाण्डुता गौरवं[1] जाड्यं पुरीषस्याविपक्वता ।**
**तन्द्रीररुचिरुत्क्लेशः स्यादतिस्निग्धलक्षणम् ॥ ५९ ॥**

अस्निग्धलक्षणमाह—पुरीषमित्यादि । मृदुरिति पक्तुर्विशेषणम् । वातानुलोम्यमित्यादि स्निग्धलक्षणम् । पाण्डुतेत्याद्यतिस्निग्धलक्षणम् । जाड्यमिन्द्रियजडत्वम् ॥ ५७–५९ ॥

---

१ स्थिरतां दृढगात्रतामिति पाठः

१ सदनमिति पाठः ।

द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः ।
नातिस्निग्धमसंकीर्णं श्वः स्नेहं पातुमिच्छता ॥६०॥
पिबेत्संशमनं स्नेहमन्नकाले प्रकांक्षितः ।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ॥६१॥

स्नेहात्पूर्वं यत्पथ्यं तदाह—द्रवोष्णमित्यादि। असङ्कीर्णमविरुद्धवीर्यम्। श्व इत्यागामिदिने। अन्नकाले द्विप्रहरादिलक्षणे, बुभुक्षा कदाचिन्न स्यादपि, तदर्थं विशेषणम्—"प्रकाङ्क्षितः" इति। शुद्ध्यर्थं स्नेहं नैशे दिनान्तरकृत आहारे जीर्णे एव प्रातरेव पिबेदित्यर्थः। संशमनार्थस्नेहो यदि जरणान्ते प्रातरेव क्रियते, तदा कोष्ठोपलेपकदोषस्याक्षयात्तेन दोषेण संबद्धो दोषोत्क्लेशं कुर्यान्न संशमनं, संशोधनार्थस्तु दोषोत्क्लेशं करोतीत्यपेक्षणीय एवेति भावः। एतच्च कालकथनमुत्सर्गेण, तेन "वातपित्ताधिको रात्रौ" इत्युक्तकालविरोधो न स्यात् ॥ ६०–६१ ॥

उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः[1] ।
शकृन्मूत्रानिलोद्गारानुदीर्णांश्च[2] न धारयेत् ॥ ६२ ॥
व्यायाममुच्चैर्वचनं क्रोधशोकौ हिमाऽऽतपौ ।
वर्जयेदप्रवातं च सेवेत शयनासनम् ॥ ६३ ॥
स्नेहं पीत्वा नरः स्नेहं प्रतिभुञ्जान एव च ।
स्नेहमिथ्योपचाराद्धि जायन्ते दारुणा गदाः ॥ ६४॥

क्षपायामेव स्वपितीति क्षपाशयः। अप्रवातं चेति शयनासनविशेषणम्। स्नेहं प्रतिभुञ्जान इति स्नेहे जीर्णेऽपि स्नेहप्रयोगानुगुणमन्यस्नेहमविरुद्धवीर्यादिगुणयुक्तं भुञ्जानः। एतेन स्नेहे पीते जीर्णे किंच हिताहितमिति प्रश्नद्वयस्योत्तरमिदं—"उष्णोदकोपचारी स्याद्" इत्यादि स्यात् ॥ ६२–६४ ॥

मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ ६५ ॥
गुडमिक्षुरसं मस्तु क्षीरमुल्लोडितं दधि ।
पायसं कृशरं सर्पिः काश्मर्यत्रिफलारसम् ॥ ६६ ॥
द्राक्षारसं पीलुरसं जलमुष्णमथापि वा ।
मद्यं वा तरुणं पीत्वा मृदुकोष्ठो विरिच्यते ॥ ६७ ॥
विरेचयन्ति नैतानि क्रूरकोष्ठं कदाचन ।
भवति क्रूरकोष्ठस्य ग्रहण्यत्युल्बणानिला ॥ ६८ ॥

मृदुकोष्ठादिलक्षणमाह—मृद्वित्यादि। अभ्यर्हितत्वात् कोष्ठज्ञानस्याप्यथापि तल्लक्षणमाह—गुडमित्यादि।—उल्लोडितं दधिसरः, कृशरा तिलतण्डुलमाषकृता यवागूः। वचनं हि—"तिलतण्डुलमाषैस्तु कृशरा त्रिसरेति च"। क्रूरकोष्ठानां विरेचनहेतुमाह—भवतीत्यादि।—ग्रहणी कोष्ठस्थाग्न्यधिष्ठानभूता नाडी। यदुक्तम्—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" इति ॥ ६५–६८ ॥

उदीर्णपित्ताल्पकफा ग्रहणी मन्दमारुता ।
मृदुकोष्ठस्य तस्मात्स सुविरेच्यो नरः स्मृतः ॥६९॥

उदीर्णपित्तेत्यादि मृदुकोष्ठस्वरूपकथनम्। क्रूरकोष्ठस्य ग्रहणीगतो वायुर्गुडादीनां सरत्वं प्रतिबध्नाति, मृदुकोष्ठस्य हि ग्रहण्यां विरोधको वायुर्नास्ति स्तंभकोऽपि श्लेष्माऽल्पः, उद्भूतरसगुणं च पित्तं प्रबलं; तेन गुडादिभिः सुखं विरेचनं भवतीति भावः ॥ ६९ ॥

उदीर्णपित्ता ग्रहणी यस्य चाग्निबलं महत् ।
भस्मीभवति तस्याशु स्नेहः पीतोऽग्नितेजसा ॥७०॥
स जग्ध्वा स्नेहमात्रां तामोजः प्रक्षारयन् बली ।
स्नेहाऽग्निरुत्तमां तृष्णां सोपसर्गामुदीरयेत् ॥ ७१ ॥
नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्वपि ।
स चेत्सुशीतं सलिलं नासादयति दह्यते ।
यथैवाशीविषः कक्षमध्यगः स्वविषाग्निना ॥ ७२ ॥
अजीर्णे यदि तु स्नेहे तृष्णा स्याच्छर्दयेद्भिषक् ।
शीतोदकं पुनः पीत्वा भुक्त्वा रूक्षान्नमुल्लिखेत् ७३

संप्रति स्नेहव्यापदो दर्शयति—उदीर्णेत्यादि।—ओजः सर्वधातुसारभूतं हृदिस्थितं, प्रक्षारयन् स्थानाद्भ्रंशयन् क्षपयंश्च। बलीत्यनेन स्नेहेन्धनो वह्निर्नितरां बलवान्भवतीति दर्शयति। वचनं हि—"नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्वपि"। उत्तमां महतीं मात्रां, सोपसर्गा सोपद्रवां, कक्षः काष्ठसमूहः, छर्दयेदिति प्रथमं स्नेहमेव, तृष्णाकारकं तं स्नेहं छर्दयित्वा पुनः शीतोदकं पीत्वा रूक्षान्नं च भुक्त्वा उल्लिखेदिति योजनीयम् ॥ ७०–७३ ॥

न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ।
सर्वं ह्यनुरजेद्देहं हत्वा संज्ञां च मारयेत् ॥ ७४ ॥
तन्द्रा सोत्क्लेश आनाहो ज्वरः स्तम्भो विसंज्ञता ।
कुष्ठानि कण्डूः पाण्डुत्वं शोफार्शांस्यरुचिस्तृषा ७५
जठरं ग्रहणीदोषः स्तैमित्यं वाक्यनिग्रहः ।
शूलमामप्रदोषाश्च जायन्ते स्नेहविभ्रमात् ॥ ७६ ॥
तत्राप्युल्लेखनं शस्तं स्वेदः कालप्रतीक्षणम् ।
प्रतिप्रतिव्याधिबलं बुद्ध्वा स्रंसनमेव च ॥ ७७ ॥
तक्रारिष्टप्रयोगश्च रूक्षपानान्नसेवनम् ।
मूत्राणां त्रिफलायाश्च स्नेहव्यापत्तिभेषजम् ॥ ७८ ॥

न सर्पिरित्यादि।—न सर्पिः सामे पित्ते पेयं, केवलं त्वसंस्कृतं विशेषतो न पेयं सामपित्त एवेति योजना, एवं मन्यते—संस्कृतं तिक्तकादिभिः घृतं सामे पित्ते तिक्तकादिपाचनगुणानुयोगात् योग्यं कदाचिद्भवत्यप्यसंस्कृतं तु सर्वथा विरुद्धमेव। यदि वा, केवलमसंस्कृतं सर्पिः पित्ते सामान्येन

१ ब्रह्मचारी क्षपाशय इत्यनेन मैथुन-दिवास्वप्नरात्रिजागरणानां निषेधः। शि:। २ उदीर्णांश्च न धारयेदित्यत्र चकारादनुदीर्णांश्च नोदीरयेदित्यर्थो ज्ञेयः। शि:।

सामे निरामे वा न पेयं, सामे पित्ते विशेषत इति योजना। एतेन, यत्रापि सामान्येन घृतं विहितं, यथा—"अत ऊर्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे। परिपक्वेषु दोषेषु सर्पिःपानं यथाऽमृतम्" तत्राप्युचितभेषजसंस्कृतमेव बोद्धव्यम्। यदिवा, न केवलं पित्ते सामे सर्पिर्विशेषतो न पेयं, किंतर्हि, तैलादीन्यपि वातश्लेष्मविहितानि, तयोः सामयोर्न पेयानीत्यर्थः। तस्मिन् व्याख्यानेऽपेयमित्यकारप्रश्लेषो द्रष्टव्यः, अनुरजेत् पित्तवर्णं कुर्यात्, संज्ञा स्मृतिस्तद्धननं चेह व्याधिप्रभावात्। स्तैमित्यं आर्द्रवस्त्रगुण्ठितत्वमिव, आमप्रदोषा अलसकविसूचिकादयः, कालप्रतीक्षणं स्नेहजनितदोषक्षयं यावदभोजनम्। तक्रस्यारिष्टानां च चिकित्सावक्ष्यमाणानां प्रयोगः, मूत्राणां च त्रिफलायाश्च सेवनमिति संबन्धः॥ ७४–७८॥

**अकाले चाहितश्चैव मात्रया न च योजितः।**
**स्नेहो मिथ्योपचाराच्च व्यापद्येताऽतिसेवितः॥७९॥**
**स्नेहात्प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत्।**
**स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम्॥ ८०॥**

मिथ्योपचारायथोक्तविध्यननुष्ठानात्, अतिसेवितः कालप्रकर्षेण सेवितः। संशोधनस्नेहपाने वृत्तिप्रचारमाह—स्नेहादित्यादि।—स्नेहात्स्नेहप्रयोगात्, त्रिरात्रोपरतः त्रिरात्रं परित्यक्तस्नेहपान इत्यर्थः। प्रस्कन्दनं विरेचनं, स्नेहोपरतस्य त्रिरात्र एव भोजनं दर्शयति—स्नेहवदित्यादि।—रसप्रधानमोदनं रसौदनम्॥ ७९–८०॥

**एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत्।**
**स्यात्त्वसंशोधनार्थीये वृत्तिः स्नेहे विरिक्तवत्॥ ८१॥**

वमने स्नेहवृत्तिमाह—एकेत्यादि। एकाहोपरतः स्नेहादिति योजना, तद्वदिति स्नेहवद्द्रवमुष्णं च रसौदनं स्नेहोपरमदिवस एव। संशमनविधिमाह—स्यात्त्वित्यादि।—असंशोधनार्थीये संशमने, वृत्तिरुपचारः, विरिक्तवदित्यनागतावेक्षणेनोपकल्पनीयवक्ष्यमाणं "सम्यग्विरिक्तं तैलम्" इत्यादिग्रन्थप्रतिपादनीयमुपचारमाह, न तु पेयादिक्रमम्। यद्यपि वमनोक्ता एव तत्रोच्चैर्भाष्यादयो विरेचनवृत्तावप्यतिदिष्टास्तथापीह वमनविधिं परित्यज्य विरेचनविध्यतिदेशो धूमपानप्रतिषेधार्थः, विरेचने हि तत्र "धूमपानवर्जम्" इति कृतं, स्नेहपाने च धूमपानं निषिद्धं मात्राशीतीये,—"न मद्य-दुग्धे पीत्वा च न स्नेहम्" इत्यादिना॥ ८१॥

**स्नेहद्विषः स्नेहनित्या मृदुकोष्ठाश्च ये नराः।**
**क्लेशासहा मद्यनित्यास्तेषामिष्टा विचारणा॥ ८२॥**
**लावतैत्तिरिमायूरहंसवाराहकौक्कुटाः।**
**गव्याजौरभ्रमात्स्याश्च रसाः स्युः स्नेहने हिताः॥८३॥**
**यवकोलकुलत्थाश्च स्नेहाः सगुडशर्कराः।**
**दाडिमं दधि सव्योषं रससंयोगसंग्रहः॥ ८४॥**

विचारणाविषयमाह 'स्नेहद्विष' इत्यादिना। लावादिरसानामुक्तानां संस्कारमाह—यवेत्यादि।—रसे स्नेहार्थोक्तरस उचितः संयोगो येषां ते रससंयोगास्तेषां संग्रहणं संग्रहः॥ ८२–८४॥

**स्नेहयन्ति तिलाः पूर्वं जग्धाः सस्नेहफाणिताः।**
**कृशराश्च बहुस्नेहास्तिलकाम्बलिकास्तथा॥ ८५॥**
**फाणितं शृङ्गवेरं च तैलं च सुरया सह।**
**पिबेद्रूक्षो भृतैर्मांसैर्जीर्णेऽश्नीयाच्च भोजनम्॥ ८६॥**
**तैलं सुरायां मण्डेन वसां मज्जानमेव वा।**
**पिबेत्सफाणितं क्षीरं नरः स्निह्यति वातिकः॥ ८७॥**
**धारोष्णं स्नेहसंयुक्तं पीत्वा सशर्करं[1] पयः।**
**नरः स्निह्यति पीत्वा वा सरं दध्नः सफाणितम्॥८८॥**
**पाञ्चप्रसृतिकी पेया पायसो माषमिश्रकः।**
**क्षीरसिद्धो बहुस्नेहः स्नेहयेदचिरान्नरम्॥ ८९॥**
**सर्पिस्तैलवसामज्जातण्डुलप्रसृतैः शृता।**
**पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता॥ ९०॥**
**ग्राम्यानूपौदकं मांसं गुडं दधि पयस्तिलान्।**
**कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत्॥ ९१॥**

पूर्वमिति भोजनात्पूर्वम्। तिलप्रधानः काम्बलिकस्तिलकाम्बलिकः। फाणितमित्यादौ शृङ्गवेरमिति शृङ्गवेररसम्, भृतैर्भर्टित्रीकृतैः। पाञ्चप्रसृतिक्यग्रे वक्ष्यमाणा; माषमिश्रको माषतण्डुलकृतमन्नं; पेया पातव्या॥ ८५–९१॥

**स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः।**
**पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलयापि वा॥ ९२॥**
**द्राक्षामलकयूषाभ्यां दध्ना चाम्लेन साधयेत्।**
**व्योषगर्भं भिषक्स्नेहं पीत्वा स्निह्यति तन्नरः॥ ९३॥**
**यवकोलकुलत्थानां रसाः क्षीरं सुरा दधि।**
**क्षारः सर्पिश्च तत्सिद्धं स्नेहनीयं घृतोत्तमम्॥ ९४॥**
**तैलमज्जवसासर्पिर्बदरत्रिफलारसैः।**
**योनिशुक्रप्रदोषेषु साधयित्वा प्रयोजयेत्॥ ९५॥**

यथास्वमिति यो यत्र स्नेहो युज्यते सर्पिरादिः; सिद्धैरिति पिप्पलीभिस्तथा हरीतक्या तथा त्रिफलया चेति पृथग्योजनीयम्। पिप्पल्यादिसिद्धस्नेहश्च कुष्ठादिषु यथासंख्यमिति केचित्। यूषशब्दः क्वाथवचनः, व्योषगर्भं व्योषकल्कं, अत्र त्रिभिर्द्रव्यैर्मिलित्वा चातुर्गुण्यम्। यवकोलादौ षड्द्रव्याणि स्नेहसमानि, क्षारो यवक्षारः कल्कः। तैलमज्जेत्यादि।—चतुःस्नेहोऽकल्क एव, तैलमज्जवसासर्पिरित्येकवद्भावाद्वितीयान्तः प्रयोगः॥ ९२–९५॥

**गृह्णात्यम्बु यथा वस्त्रं प्रस्रवत्यधिकं यथा।**
**यथाग्नि जीर्यति स्नेहस्तथा स्रवति चाधिकः॥९६॥**

१ सलवणमिति वा पाठः।

**यथा चाक्लेद्य मृत्पिण्डमासिक्तं त्वरया जलम् ।**
**स्रवति स्रंसते स्नेहस्तथा त्वरितसेवितः ॥ ९७ ॥**

संप्रति स्नेह उपयुक्तो यथा शरीरं संस्नेह्याऽधिको दृश्यते, तदाह—गृह्णातीत्यादि ।—तत्र शिष्येणाऽध्यायादावपृष्टमपि शिष्यहिततयाऽभिधीयते । यथाग्नीत्यग्न्यनधिक इत्यर्थः । नन्वग्न्यधिकश्चेत्स्रवति तदवधि च स्नेहलक्षणमुक्तं, यदुच्यते—"अधस्तात्स्नेहदर्शनम्" इति । तेनैकदिन एवाधिकस्नेहपानं क्रियतामित्याह—यथा चेत्यादि ।—आक्लेद्य ईषत्क्लेदयित्वा । त्वरितसेवितः स्नेहो धातूनस्नेहयित्वैव स्रंसतेऽधो याति यावान्, न तावता स्नेहनं भवतीति भावः ॥ ९६–९७ ॥

**लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम् ।**
**तद्ध्यभिष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ॥ ९८ ॥**
**स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम् ।**
**स्नेहस्वेदोपपन्नस्य संशोधनमथेतरदिति ॥ ९९ ॥**

तत्र श्लोकः ।

**स्नेहाः स्नेहविधिः कृत्स्नव्यापत्सिद्धिः सभेषजा ।**
**यथाप्रश्नं भगवता व्याहृतं चान्द्रभागिना ॥ १०० ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने स्नेहाध्यायो नाम त्रयोदशोऽध्यायः ।**

स्नेहने सर्वस्नेहेषु लवणप्रयोगमाह—लवणोपहित इत्यादि तदिति लवणं, अभिष्यन्दि दोषसङ्घातविच्छेदकं व्यायि अखिलदेहव्याप्तिपूर्वकपाकगामि । अतो वक्ष्यमाणस्वेदोपकल्पनाध्याययोः सम्बन्धसूचनं स्वेदादिषु स्नेहस्य प्राग्भावमाह—स्नेहमित्यादि । चान्द्रभागी अग्निवेशः ॥९८–१००॥

स्नेहाध्यायः समाप्तः ।

---

## चतुर्दशोऽध्यायः ।

**अथातः स्वेदाध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत्प्रयोजितैः ।**
**स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः ॥३॥**

स्नेहपूर्वकत्वात् स्वेदस्य स्वेदाध्यायोऽभिधीयते । स्वेदप्रतिपादकोऽध्यायः स्वेदाध्यायः । वातकफात्मका असंसृष्टवातकफजाः, वातकफजत्वेऽप्युदरादयः स्वेदेन न शाम्यन्ति, अत आह—'स्वेदसाध्याः', एतेनोदरादयोऽस्वेद्या व्यावर्त्त्यन्ते ॥ १–३ ॥

**स्नेहपूर्वं प्रयुक्तेन स्वेदेनाऽऽवर्जितेऽनिले ।**
**पुरीषमूत्ररेतांसि न सज्जन्ति कथंचन ॥ ४ ॥**
**शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ।**
**नमयन्ति यथान्यायं किं पुनर्जीवतो नरान्[1] ॥ ५ ॥**

स्नेहपूर्वमिति क्रियाविशेषणं, न सज्जन्ति अप्रवृत्तानि न भवन्ति । यथान्यायं यथागमं, एतच्च स्नेहस्वेदोपपादनैरित्यनेन संबध्यते । यदि वा यथान्यायं यथासहजं नमयन्तीति सम्बन्धः ॥ ४–५ ॥

**रोगर्त्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च ।**
**द्रव्यवान् कल्पितो देशे स्वेदः कार्यकरो मतः ॥ ६ ॥**

रोगमृतुं व्याधितं च बलाबलादिनाऽपेक्षत इति रोगर्तुव्याधितापेक्षः । नात्युष्णो नातिचण्डतापः; द्रव्यवानिति स्निग्धरूक्षादिद्रव्यवान्, कल्पित इति रोगादीनपेक्ष्य यथोचितेन द्रव्येण, देशे चामाशयादौ यथायोग्यतया संपादित इति मन्तव्यम् ॥ ६ ॥

**व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।**
**दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो हितः ॥ ७ ॥**
**वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।**
**स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ॥ ८ ॥**

रोगाद्यपेक्षयोक्तकल्पनां दर्शयति—व्याधावित्यादि ।—व्याधौ महाबले तथा शीते कालकृते महाबले, महानिति चण्डताप एव पुनः पुनः क्रियमाणत्वेन मृदुस्वेदाऽपेक्षयाऽधिकतापत्वेन ज्ञेयः । दुर्बल इति च तथा मध्यम इति च व्याध्यादिषु पूर्ववद्योजनीयं, स्निग्धरूक्षद्रव्यकृतः स्निग्धरूक्षः, स्निग्धरूक्षद्रव्यादयो वातश्लेष्मादिषु यथासंख्यं मन्तव्याः । एतच्च स्निग्धरूक्षादिकथनं द्रव्यापेक्षकल्पनोदाहरणम् । वाते स्निग्धः, कफे रूक्षः ॥ ७–८ ॥

**आमाशयगते वाते कफे पक्वाशयाश्रिते ।**
**रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥ ९ ॥**

तं देशविशेषसंबन्धेन व्यभिचारयन् देशापेक्षां च कल्पनामाह—आमाशयेत्यादि ।—आमाशयगते वाते रूक्षपूर्व च स्थानापेक्षया रूक्षं कृत्वा पश्चाद्वातापेक्षः स्निग्धः कार्यः, एवं पक्वाशयगते कफे स्नेहपूर्वो व्याख्येयः; आमाशयशब्देन कफस्थानं ज्ञेयं, कफस्थानापेक्षया हि प्रथमं रूक्षः क्रियते, यदुक्तम्—"स्थानं जयेद्धि पूर्वं तु स्थानस्थस्याविरुद्धतः" इति ॥ ९ ॥

**वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु नैव वा ।**
**मध्यमं वंक्षणौ शेषमङ्गावयवमिष्टतः ॥ १० ॥**

मृदु नैवेति ।—स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदुस्वेदव्यतिरिक्तोपायान्तरसम्भवे तु न वेति बोद्धव्यं । इष्टत इत्यातुरेच्छातो वैद्येच्छातश्च । इष्टत इति भावक्तादिच्छावचनः ॥१०॥

**शुद्धैर्नक्तकैः पिण्ड्या गोधूमानामथापि वा ।**
**पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी ॥ ११ ॥**
**मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि ।**
**जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् ॥ १२ ॥**

१ यथान्यायं यथाशास्त्रं स्नेहस्वेदोपपादनैरित्यन्वयः, शास्त्रोक्तस्नेहस्वेदविधिभिरित्यर्थः । शि० ।

स्वेदे क्रियमाणे चक्षुषः स्वेदपरिहारोपायमाह—शुद्धैरित्यादि।—नक्तकः कर्पटावयवः[१]। स्वेदे क्रियमाणे हृदयरक्षणार्थमाह—मुक्तावलीत्यादि।—जलजानि पङ्कजादीनि; एवमस्वेद्यत्वसामान्यात्तदूषणरक्षाऽप्युन्नेतव्या, प्राधान्यात् हृदयचक्षुःपालनमुक्तम् ॥ ११-१२ ॥

**शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे।**
**संजाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ १३ ॥**

शीतशूलेत्यादौ स्वेद इति स्वेदभवे धर्मे, स्वेदनाद्विरतिर्मतेत्युपदिशन् शीतादिव्युपरमे सति स्वेदो निवर्तनीयः, शीताद्यनुपरमे च स्वेदः कर्तव्य इति द्वयमुपदिशति; ततश्च इतएव स्वेदनिवृत्तिविषयशीतादिव्युपरमोत्पादः स्वेदस्य सम्यग्योगलक्षणं तथा शीतादिव्युपरमानुत्पादश्च स्वेदानिवृत्तिविषयोऽयोगलक्षणमुक्तं भवतीति नाऽयोगलक्षणानभिधानमुद्भावनीयम् ॥ १३ ॥

**पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा।**
**दाहः स्वेदाङ्गदौर्बल्यमतिस्विन्नस्य लक्षणम् ॥ १४ ॥**
**उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्वशो विधिः।**
**सोऽतिस्विन्नस्य कर्तव्यो मधुरः स्निग्धशीतलः॥१५॥**

अतिस्विन्नचिकित्सितमाह—उक्त इत्यादि।—ग्रैष्मिकविधिरित्यनेन लब्धे पुनर्मधुरः शीतल इत्यादिवचनम्, "मद्यमल्पं न वा पेयम्" इत्यत्रोपदिष्टमद्यपानस्य प्रतिषेधार्थं मधुरशीतादियोगविशेषविधानार्थं च ॥ १४-१५ ॥

**कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम्।**
**पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम् ॥ १६**
**विदग्धभ्रष्टब्रध्नानां विषमद्यविकारिणाम्।**
**श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम् ॥१७**
**तृष्यतां क्षुधितानां च क्रुद्धानां शोचतामपि।**
**कामल्युदरिणां चैव क्षतानामाढ्यरोगिणाम् ॥ १८॥**
**दुर्बलातिविशुष्काणामुपक्षीणौजसां तथा।**
**भिषक्तैमिरिकाणां च न स्वेदमवतारयेत् ॥ १९ ॥**

अस्वेद्यानाह—कषायेत्यादि।—कषायद्रव्यकृतं मद्यं कषायमद्यम्, किंवा, कषायशब्दोऽमधुरवचनः, तेन, यदुच्यते—कषायनित्यस्य वातप्रधानता स्यात् कषायस्य वातकारित्वात्, वाते च स्वेदोविहित एव, तत्कथं कषायनित्यं प्रति स्वेदनिषेध इति, तन्निरस्तं स्यात्। किंवा, कषायनित्या रूक्षातिस्तब्धगात्रा भवन्ति कषायस्य विरूक्षकस्तम्भकत्वेन, ततश्च तेषां स्वेदः पर्वभेदमावहतीत्यतः कषायनित्यनिषेधः। रक्तपित्तिनामविधानादेव स्वेदे निषिद्धे, पुनः स्वेदनिषेधो रक्तपित्तिनां यद्यन्योऽपि स्वेदसाध्यो वातश्लेष्मजो विकारो भवति तत्रापि स्वेदनिषेधार्थं तथा रक्तपित्तिनां वमनविरेचनांगतया प्राप्तस्वेदप्रतिप्रसवनिषेधार्थं च। एवं पित्तमेहिकामल्यादिष्वपि व्याख्येयम्, पित्तिनामिति पित्तप्रकृतीनां, मधुमेहशब्देन सर्वे एव मेहा गृह्यन्ते, मधुमेहशब्दो हि सर्वेष्वेव मेहेषु वर्तत इति कियन्तःशिरसीये दर्शनीयम्, मेहेषु च सर्वेष्वेव शरीरशैथिल्यप्रवृत्तेषु विशेषतः शरीरशैथिल्यहेतुत्वेन स्वेदो न युज्यते; पित्तमेहिनामिति तु पुनरभिधानं पित्तसंबन्धेन विशेषप्रतिषेधतादर्शनार्थम्। ब्रध्नो गुदः, मद्यविकारिणामिति मद्यनित्यस्य वातकफजमदात्यये स्वेदनिषेधार्थः; आढ्यरोगीह वातरक्ती; एषु चाऽस्वेद्यविषयेषु यदि स्वेदैकसाध्यः संन्यासादिर्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेक्ष्यापि स्वेदो विधेय इति, न्यायसिद्धमेव, यदाहुर्न्यायविदः—"यद्भूयोविरोधे स्वल्पमन्याय्यम्" इति ॥ १६-१९ ॥

**प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे।**
**कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे ॥ २० ॥**
**अर्दितैकांगसर्वांगपक्षाघाते विनामके।**
**कोष्ठानाहविबन्धेषु शुक्राघाते विजृम्भके ॥ २१ ॥**
**पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च।**
**मूत्रकृच्छ्रे महत्वे च मुष्कयोरङ्गमर्दके ॥ २२ ॥**
**पादजानूरुजङ्घार्त्तिसंग्रहे श्वयथावपि।**
**खल्लीष्वामेषु शीते च वेपथौ वातकण्टके ॥ २३ ॥**
**संकोचायामशूलेषु स्तंभगौरवसुप्तिषु।**
**सर्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते ॥ २४ ॥**

प्रतिश्याये चेत्यादिना स्वेद्यान् दर्शयति—विनामकः शरीरविनमनकारी वातः; विजृम्भको बहिरायामः, जृंभाबहुत्वं वा; पादजानूरुजंघाभिरार्त्तिः संग्रहश्च पृथक्संबध्यते, खल्ली हस्तपादावमोटनम्, वातकण्टको गुल्फाश्रितो वातः, अलाघव इति पूर्वमुक्तोऽपि पुनर्गौरववचनमङ्गानां गुरुतरत्वप्रतिपादनार्थम्, अलाघववचनं तु लाघवप्रतिषेधमात्रप्रयोजनं नातिगुरुत्वं ब्रूते, यतः सर्वत्र नञ्विरुद्धे न वर्तते, यतः, "अरूक्षमनभिष्यंदि त्वासीनप्रचलायितम्" इत्यत्र न ह्यरूक्षशब्देन स्निग्धत्वमभिप्रेतम्, किंतर्हि, रूक्षताप्रतिषेधमात्रमेव ॥ २०-२४ ॥

**तिलमाषकुलत्थाम्लघृततैलाऽऽमिषौदनैः।**
**पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् ॥ २५ ॥**
**गोखरोष्ट्रवराहाश्वशकृद्भिः संतुषैर्यवैः।**
**सिकतापांशुपाषाणकरीषाऽऽयसपुटकैः॥ २६ ॥**
**श्लैष्मिकान् स्वेदयेत्पूर्वैर्वातिकान् समुपाचरेत्।**
**द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि ॥ २७ ॥**

वक्ष्यमाणानां सङ्करादिस्वेदानां द्रव्याण्याह—तिलमाषेत्यादि। पिण्डरूपः स्वेदः पिण्डस्वेदः। करीषः शुष्कगोमयः; आयसः अयोविकारः, सचेह पुटकरणयोग्यो बोद्धव्यः; पूर्वैरिति तिलमाषादिभिः। यथास्वमित्यनेन, तिलमाषाद्यो वाते, गोखरादिग्रन्थोक्ताश्च श्लेष्मणि प्रस्तरस्वेदे कर्तव्या इति दर्शयति ॥ २५-२७ ॥

---
१ कर्पटावयवः पटावयवः।

भूगृहेषु च जेन्ताकेषूष्णगर्भगृहेषु च ।
विधूमाऽङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम् ॥२८॥
ग्राम्यानूपौदकं मांसं पयोवस्तशिरस्तथा ।
वराहमध्यपित्तासृक्स्नेहवत्तिलतण्डुलान् ॥ २९ ॥
इत्येतानि समुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत् ।
देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः ॥ ३० ॥
वारुणामृतकैरण्डशिग्रुमूलकसर्षपैः ।
वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च ॥ ३१ ॥
शोभांजनकशैरीयमालतीसुरसार्जकैः ।
पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत् ॥ ३२ ॥
भूतीकपञ्चमूलाभ्यां सुरया दधिमस्तुना ।
मूत्रैरम्लैश्च सस्नेहैर्नाडीस्वेदं प्रयोजयेत् ॥ ३३ ॥
एत एव च निर्यूहाः प्रयोज्या जलकोष्ठके ।
स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत् ॥ ३४ ॥

भूस्वेदार्थेषु गृहेषु भूगृहेष्विति; उष्णगर्भगृहेष्विति कुटीस्वेदं दर्शयति, अभ्यक्त इति सम्यगभ्यक्तः । वस्तशिरश्छागमस्तकं, स्नेहवन्तश्चैरण्डवीजादयः तिलाश्च तण्डुलाश्च स्नेहवत्तिलतण्डुलाः । ग्राम्येत्यादिना वातापहो नाडीस्वेद उक्तः, वारुणेत्यादिना कफापहः, भूतीकेत्यादिना वातश्लेष्मापहः । वारुणः वरुणः, अमृतका गुडूची, सर्षपैरित्यत्र पत्रैरिति संवध्यते, वंशो वेणुः, पुनः शोभाञ्जनग्रहणाद्द्वितीयो विटपशोभांजनो गृह्यते, शैरीयः झिंटी । एत एवेति नाडीस्वेदोक्तात्त्रयोऽपि, जलकोष्ठोऽवगाहार्थंकृतं महज्जलपात्रम्, एवं घृतक्षीरतैलकोष्ठाश्च व्याख्याताः ॥ २८–३४ ॥

गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः ।
सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते ॥ ३५ ॥
गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया ।
उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् ॥ ३६ ॥
चर्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः ।
उष्णवीर्यैरलाभे तु कौशेयाविकशाटकैः ॥ ३७ ॥

गोधूमशकलैर्गोधूमचूर्णैः, किण्वः सुरावीजं; उपनाहो वहलं लेपं दत्वा चर्मादिभिरावृत्य व्याधियुक्तस्याङ्गवन्धनम्; उपनाहः प्रशस्यते इत्यत्र उपनाहोऽनग्निस्वेदो ग्राह्यः । गन्धैश्च सुगन्धिद्रव्यैरुपनाहो वन्धनीयः; उष्णवीर्यैरिति उष्णवीर्यानूपादिप्राणिप्रभवैः, आविकशाटकः कम्वलः ॥ ३५–३७ ॥

रात्रौ वद्धं दिवा मुंचेन्मुंचेद्रात्रौ दिवा कृतम् ।
विदाहपरिहारार्थं स्यात्प्रकर्षस्तु शीतले ॥ ३८ ॥

उपनाहस्वेदे वन्धमोक्षविधिं दर्शयति—रात्रौ वद्धमित्यादि ।—दिवाकृतमित्यत्र वद्धमिति शेषः; विदाहो रक्तादिविदाहः; शीतल इत्यत्र काल इति शेषः; प्रकर्ष उक्ताद्वन्धनकालादधिककालत्वं वन्धनस्य ॥ ३८ ॥

सङ्करः प्रस्तरो नाडी परिषेकोवगाहनम् ।
जेन्ताकोऽश्मघनः कर्षूः कुटी भूः कुंभिकैव च ॥३९
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ।
तान् यथावत्प्रवक्ष्यामि सर्वानेवानुपूर्वश इति ॥४०॥

संप्रति साग्निस्वेदानां लक्षणमभिधातुं सङ्करादीन् स्वेदान् नामतस्तावदुद्दिशति सङ्करइत्यादि सङ्करादिस्वेदाश्चायुर्वेदपरंपरासिद्धाः, तत्र क्वचिन्नाडीस्वेदादौ नाड्या प्रणीयत इत्यन्वयोऽप्यनुसरणीयः, जेन्ताकादयश्चान्वयनिरपेक्षा एव ॥ ३९–४० ॥

तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेद इति विद्यात् ॥ ४१ ॥

पिण्डैर्यथोक्तैरिति तिलमाषादिपिण्डैः तथा गोखरादिग्रन्थोक्तं पुटकरूपैश्च पिण्डैः; स्वेदनमेवोपस्वेदनम् ॥ ४१ ॥

शूकशमीधान्यपुलाकानां वेशवाराऽऽयसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुवकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति विद्यात् ॥ ४२ ॥

पुलाकस्तुच्छधान्यकम्, उत्कारिका माषादिकृतमूषिकोत्काराकृतिव्यंजनविशेषः, प्रस्तीर्यत इति प्रस्तरः शयनप्रमाणेन स्वेदवस्तूनां विस्तरणं, तस्मिन् प्रस्तरे कौषेयाविकोत्तरप्रच्छदे कौषेयाविकपिहित इत्यर्थः; पञ्चाङ्गुल एरण्डभेदः ॥ ४२ ॥

स्वेदनद्रव्याणां पुनर्मूलफलपत्रभङ्गादीनां मृगशकुनपिशितशिरःपदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणं स्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुंभ्यां वाष्पमनुद्वमन्त्यामुत्क्वथितानां नाड्या शरेषीकावंशदलकरंजार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्द्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया वातहरसिद्धस्नेहाभ्यक्तगात्रो वाष्पमुपहरेत् । वाष्पो ह्यनूर्द्ध्वगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ॥ ४३ ॥

स्वेदनेत्यादिना नाडीस्वेदमाह । स्वेदनद्रव्याणि स्वेदोपगगणोक्तानि, इह च नाडीस्वेदक्वाथार्थमुक्तानि;शिरः पदोमस्तकं; वाष्पमनुद्वमन्त्यामित्यनेन क्वथनकाले वाष्पो यथा न निर्याति तथा कर्तव्यमिति दर्शयति; उत्क्वथितानां वाष्पं स्नेहाक्तगात्रः सन् नाड्या उपहरेदिति सम्वन्धः । नाडीकरणविधिमाह शरेषीकेत्यादि ।—वंशदलो वंशविदलः, गजाग्रहस्तसंस्थानत्वं नाड्या अग्र एव वोद्धव्यं, व्यामस्तिर्यग्विस्तृतवाहुद्वयप्रमाणं, व्यामदीर्घत्वं नाड्या वहलस्वेदे कर्तव्यम्; व्यामचतुर्थभागेन व्यामाष्टभागेन च मूले अग्रे च यथासंख्यमानं

नाड्या वेदितव्यं, परिणाहेन वेष्टनेन स्रोतो यस्याः सा तथा। यथोक्तनाडीकरणगुणमाह—वाष्पो हीत्यादि। विहतचण्डवेगत्वं नाडीकाया दीर्घत्वेन वक्रत्वेन च बोद्धव्यम्॥ ४३॥

वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वार्षुलिकाः प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः॥ ४४॥

वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः॥ ४५॥

परिषेकविधिमाह—वातिकोत्तरेत्यादि। वातिकानि वातहरणानि, उत्तरवातिकानि उत्तरवाते प्रधानवाते वातश्लेष्मणि हितानीह ग्राह्याणि, वार्षुलिका अल्पघटी, सहस्रधारा इत्यन्ये; प्रणाडी वेणुनलनाड्याद्याः। यथोक्त एवेति लोकप्रसिद्ध इवेति, अवगाहोऽवगाहस्वेदः॥ ४४-४५॥

अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत,—तत्र पूर्वस्यां दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वाऽरत्नीरुपक्रम्योदकात्प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत्, उत्सेधविस्तारतः परमरत्नीः षोडश, समन्तात् सुवृत्तं मृत्कर्मसम्पन्नमनेकवातायनम्; अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेदाकपाटात्, मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रपुरुषप्रमाणं मृण्मयं कुन्दसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत्। तं च खादिराणामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत्। स यदा जानीयाः साधु दग्धानि काष्ठानि गतधूमानि अवतप्तं च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत्, प्रवेशयंश्चैनमनुशिष्यात्—"सौम्य! प्रविश कल्याणायारोग्याय चेति, प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः, न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्याऽऽप्राणोच्छ्वासात्, भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः, तस्मात् पिण्डिकामेनां न कथंचन मुञ्चेथाः, त्वं यदा जानीयाः—विगताभिष्यन्दमात्मानं सम्यक्प्रसृतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघूभूतमपगतविबन्धस्तम्भसुप्तिवेदनमिति, ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः, निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः अपगतसन्तापक्लमस्तु मुहूर्तात्सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयाः, इति जेन्ताकः स्वेदः॥ ४६॥

जेन्ताकविधिमाह—अथेत्यादि। अथ शब्दो मङ्गल आनन्तर्ये वा, पूर्वस्यामुत्तरस्यां वा इति ग्रामाद्बोद्धव्यः, गुणवतीति सम्यक्प्ररोहादियुक्तत्वेन, प्रशस्तभूमिभागत्वं तृणाङ्गारादिरहितत्वेन, परीवापो दीर्घिका, सुष्ठु च उपसमीपे तीर्थं यस्य तस्मिन् सूपतीर्थे, अरत्निर्हस्तः, प्राङ्मुखमिति पश्चिमे, उदङ्मुखमिति दक्षिणे, एवं ह्यभिमुखं तीर्थं स्यात्, कूटागारमिति वर्तुलागारम्, आकवाटादित्यनेन द्वारपर्यन्तं लक्षयति, किष्कुर्हस्तः, पुरुषप्रमाणमित्यनेन, कुम्भः कुम्भाकारामिस्थानं, अङ्गारार्थं कोष्ठोऽवकाशो विद्यते यस्मिन् सोऽङ्गारकोष्ठकः स एव स्तम्भः, खादिराणामिति पूरणे षष्ठी, स इत्यत्र त्वमित्यध्याहार्यं, जानीया इत्यर्थः; किंवा, जानीयादिति पाठः, उत्तरत्रापि प्रपद्येतेति पाठः; एवं च सुगमं; पिच्छा स्वेदस्यैव पिच्छिलो भागः, सर्वेषु स्रोतःसु विमुक्तमपगतबन्धं सर्वस्रोतोविमुक्तं, अपगतविबन्धस्तु अपगतमलविबन्धो बोद्धव्यः; चक्षुषोः परिपालनार्थमिति—अत्रोपतप्तस्य सहसा शीतजलप्रवेशेन शीतजलपरिहृत ऊष्मा नयनोपघातं करोतीत्यभिप्रायः। अत्र जेन्ताके भूमिविशेषपरिग्रहजलसान्निध्यादयो मङ्गलार्थाः; जलसान्निध्यं तु स्वेद्यमानस्य दर्शनेन दृष्टेः परिपालनार्थं च स्यात्, तथा स्वेदातियोगप्रतिक्रियार्थं कूटागारस्य जलसान्निध्ये सुखेन करणार्थं च॥ ४६॥

शयानस्य प्रमाणेन घनामश्ममयीं शिलाम्।
तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः॥ ४७॥
व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा।
तां शिलामथ कुर्वीत कौषेयाविकसंस्तराम्॥ ४८॥
तस्यां स्वभ्यक्तसर्वाङ्गः स्वपन् स्विद्यति ना सुखम्।
कौरवाजिनकौषेयप्रावाराद्यैः सुसंवृतः।
इत्युक्तोऽश्मघनस्वेदः, कर्षूस्वेदः प्रवक्ष्यते—॥ ४९॥
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित्।
दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत्ततः।
तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम्॥ ५०॥
अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम्।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः संप्रलेपयेत्॥ ५१॥
कुटीमध्ये भिषक् शय्यां स्वास्तीर्णां चोपकल्पयेत्।
प्रावाराजिनकौषेयकुथकम्बलगोलकैः॥ ५२॥
हसन्तिकाभिरङ्गारपूर्णाभिस्तां च सर्वशः।
परिवार्य तामारोहेदभ्यक्तः स्विद्यते सुखम्॥ ५३॥

कौरवं कार्पासं, कर्षुरभ्यन्तरविस्तीर्णोऽल्पमुखो गर्तः, अनत्युत्सेधविस्तारामिति स्वल्पप्रमाणोच्छ्रायविस्तारां; अलोचनां

निर्ज्जालकां, कुष्ठाद्यैरित्यत्रादिशब्दः प्रकारवचनः, तेन, उष्ण-सुगन्धिद्रव्यैरिति स्यात्; हसन्तिकाऽङ्गारधानिका, परिवार्येति हसन्तिकाभिरित्यनेन सम्बध्यते । तामिति उपकल्पितशय्यां कुटीं आरोहेदिति संवन्धः ॥ ४७–५३ ॥

य एवाश्मघनस्वेदविधिर्भूमौ स एव तु ।
प्रशस्तायां निवातायां समायामुपदिश्यते ॥ ५४ ॥
कुम्भीं वातहरक्वाथपूर्णां भूमौ निखानयेत् ।
अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि ॥ ५५ ॥
स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम् ।
अथ कुंभ्यां सुसन्तप्तान्प्रक्षिपेदयसो गुडान् ॥ ५६ ॥
पाषाणांश्चोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ।
सुसंवृतांगः स्वभ्यंगः स्नेहैरनिलनाशनैः ॥ ५७ ॥
कूपं शयनविस्तारं द्विगुणं चापि वेध्यतः ।
देशे निवाते शस्ते च कुर्यादन्तः सुमार्जितम् ॥ ५८ ॥
हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते ।
स्ववच्छन्नः सुसंस्तीर्णेऽभ्यक्तः स्विद्यति ना सुखम् ५९

शयनं तत्र चोपरीत्यत्र कुम्भीकोपरिशयनं खट्वादि तथा कर्तव्यं यथा कुम्भीका न भज्यते, तत्स्थ इति यथोक्तशयनासनस्थः । कूपमिति कूपमिव कूपगंभीरत्वेन, द्विगुणमिति विस्ताराद्बोद्धव्यं, वेधत इत्यधःखननप्रमाणेन, सुसंस्तीर्ण इति सुष्ठ संस्तीर्णे आच्छादिते, शय्यायां खट्वोपरिस्थितायां कूपं इति वोद्धव्यम् ॥ ५४–५९ ॥

धीतीकां तु करीषाणां यथोक्तानां प्रदीपयेत् ।
शयनान्तःप्रमाणेन शय्यामुपरि तत्र च ॥ ६० ॥
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ।
स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् ६१
होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणेति ।
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥ ६२ ॥

धीतीकामिति होलाकस्वेदः, धीतीका शुष्कगोमयादिकृतोऽग्न्याश्रयविशेषः, यथोक्तानामिति पूर्वोक्तहस्त्यश्वादिभवानां, शयनान्तःप्रमाणेनेति 'धीतीकां कृत्वा' इत्यध्याहार्य योज्यं, यथोक्तामिति नातिसान्द्रपरिच्छदाम् । उपसंहरति—इतीत्यादि ।—अग्नेर्गुणमुष्णत्वमाश्रित्य स्वेदयतीत्यग्निगुणसंश्रयः ॥ ६१–६२ ॥

व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा ।
वहुपानं भयक्रोधावुपनाहाहवातपाः ॥ ६३ ॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ।

संप्रत्यनग्निस्वेदानाह—व्यायाम इत्यादि ।—उष्णं सदनमित्यग्निसन्तापव्यतिरेकेण निर्जालकतया घनभित्तितया च यद्गृहं स्वेदयति, तद्बोद्धव्यं; वहुपानमिति वहुमद्यपानं, उपनाहो द्विविधः साग्निरनग्निश्च, तत्र यः साग्निरुपनाहः स संकर एव वोद्धव्यः, यदुक्तं,—"कोलं कुलत्थाः सुरदारुरास्ना:" इत्यादिनाऽऽरग्वधीये, यस्त्वनग्निवलत्वेन शरीरोष्णरोधं कृत्वा स्वेदयति स इह वोद्धव्यः, आतपश्च यद्यपि उष्णः; तथाप्यग्निकृतं तस्योष्णत्वं न भवतीत्यनग्निस्वेद उक्तः, अग्निगुणादृते साक्षादग्निसम्बन्धेन कृतादुष्णत्वाद्विना ॥ ६३ ॥

इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च ॥ ६४ ॥
एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च ।
इत्येतद्विविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितम् ॥ ६५ ॥

सर्वस्वेदमुपसंहरति इत्युक्त इत्यादि । एकाङ्गगताः सङ्करनाड्यादयः, सर्वाङ्गगताः प्रस्तरजेन्ताकादयः, स्निग्धो वातविहितः स्वेदः, रूक्षः कफविहितः, स्निग्धरूक्षस्तु वातश्लेष्मविहितोऽनयोर्न भिद्यत इति पृथङ्नोक्तः; द्वन्द्वं परस्परं विरुद्धं युग्मम् ॥ ६४–६५ ॥

स्निग्धः स्वेदैरुपक्रम्यः स्विन्नः पथ्याशनो भवेत् ।
तदहः स्विन्नगात्रस्तु व्यायामं वर्जयेन्नर इति ॥ ६६ ॥

स्विन्नेन यथा कर्तव्यं, तदाह—स्विन्न इत्यादि ।—पथ्याशनो भवेदित्यत्र यद्यपि श्रद्धग्राहिकया नोक्तं, तथापि स्वेदप्रवृत्तिविषयदोषस्य यत्पथ्यं तदेव वोद्धव्यम् ॥ ६६ ॥

तत्र श्लोकाः ।

स्वेदो यथा कार्यकरो हितो येभ्यश्च यद्विधः ।
यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो यथा ॥ ६७ ॥
स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम् ।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना ॥ ६८ ॥
त्रयोदशविधः स्वेदो विना दशविधोऽग्निना ।
संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः ॥ ६९ ॥
स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा ।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुरिति ॥ ७० ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
स्वेदाध्यायो नाम चतुर्दशोऽध्यायः ।

संग्रहे स्वेदो यथा कार्यकर इति स्नेहपूर्व प्रयुक्तेनेत्यादि, येभ्यश्च यद्विध इति वाते स्निग्ध इत्यादि संगृह्णाति, यत्र देशे यथायोग्य इति आमाशयगते वाते रूक्षपूर्व इत्यादि; शेषं सुगमम् ॥ ६७–७० ॥

स्वेदाध्यायः समाप्तः ॥

## पञ्चदशोऽध्यायः ।

अथात उपकल्पनीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

इह खलु राजानं राजमात्रमन्यं वा विपुलद्रव्यं संभृतसंभारं वमनं विरेचनं वा पाययितुकामेन

१ यद्वाच्यमुक्तमिति, स्वेदाध्याये यद्वाच्यं योऽर्थ उक्तः तच्छिष्यैः प्रतिपत्तव्यम्, यतः, पुनर्वसुरुपदेष्टेति । शिः ।

भिषजा प्रागेवौषधपानात् संभारा उपकल्पनीया भवन्ति सम्यक्चैव हि गच्छत्यौषधे प्रतिभोगार्थाः व्यापन्ने चौषधे व्यापदः परिसंख्याय प्रतीकारार्थाः। न हि सन्निकृष्टे काले प्रादुर्भूतायामापदि सत्यपि क्रयाक्रये सुकरमाशु संभरणमौषधानां यथावत्॥ ३॥

इत्येवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच;— ननु भगवन्नादावेव ज्ञानवता तथा प्रतिविधातव्यं यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन, सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा, व्यापच्चासम्यक्प्रयोगनिमित्ता; अथ सम्यगसम्यक्च समारब्धं कर्म सिद्ध्यति व्यापद्यते वाऽनियमेन, तुल्यं भवति ज्ञानमज्ञानेनेति॥ ४॥

स्नेहस्वेदोपपन्नस्य संशोधनमनन्तरमित्यनेनैवोक्तात् संवन्धादुपकल्पनीय इति शोधनोपकल्पनावाचको ज्ञेयः। राज्ञ इव मात्रा परिच्छेदो यस्य स राजमात्रः, विपुलद्रव्यस्तु वणिगादिः; परिसंख्यायेति ज्ञात्वा; क्रयः पण्यं, आक्रयो मूल्यम्। अनियमेनेति सम्यगारब्धं च सिध्यति व्यापद्यते च॥१-४॥

तमुवाच भगवानात्रेयः;—शक्यं तथा प्रतिविधातुमस्माभिरस्मद्विधैर्वाप्यग्निवेश यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन, तच्च प्रयोगसौष्ठवमुपदेष्टुं यथावद्। नहि कश्चिदस्ति, य एतदेवमुपदिष्टमुपधारयितुमुत्सहेत, उपधार्य वा तथा प्रतिपत्तुं प्रयोक्तुं वा। सूक्ष्माणि हि दोषभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि, यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्युः, किं पुनरल्पबुद्धेः। तस्मादुभयमेतद्यथावदुपदेक्ष्यामः सम्यक्प्रयोगं चौषधानां, व्यापन्नानां च व्यापत्साधनानि सिद्धिषूत्तरकालम्॥ ५॥

प्रयोगसौष्ठवं प्रयोगसुष्ठुत्वं, यथावदुपदेष्टुं शक्यमस्माभिरस्मद्विधैर्वेति योजना। एतदिति प्रयोगसौष्ठवं एवमिति यथावद्, उपधारयितुमिति ग्रन्थेन धारयितुं; प्रतिपत्तुमित्यर्थतो ग्रहीतुम्—सूक्ष्माणीत्यादि। सूक्ष्माणीव सूक्ष्माणि दुर्बोधत्वेन, तत्र दोषस्यावस्थान्तराणि—क्षयस्तथा वृद्धिस्तथा समत्वं, एवमूर्ध्वदेहगमनं तथाऽधोदेहगमनं तिर्यग्गमनं वा, तथा शाखाश्रयित्वं कोष्ठाश्रयित्वं मध्यमार्गाश्रयित्वं, तथा स्वदेशगमनं परदेशगमनं, तथा स्वतन्त्रं परतन्त्रं, तथांऽशांशविकल्पस्तथा धातुविशेषाश्रयित्वं, तथा कालप्रकृतिदूष्यानुगुणत्वादिकृतं स्वतन्त्रप्रतिपादितं ज्ञेयानि; एवं भेषजस्यावस्थान्तराणि—तरुणत्वं, वृद्धत्वं, आर्द्रत्वं, शुष्कत्वं, द्रव्यान्तरसंयुक्तत्वं, स्वरसादिकल्पनायोगित्वं, रसवीर्यविपाकैः प्रभावैश्च तस्मिन् देहे दोषादौ तत्तत्कार्यकर्तृत्वमेवमादीनि; देशस्यानूपजाङ्गलसाधारणप्रशस्तादिभेदभिन्नः, कालाऽवस्थान्तराणि तु ऋतुभेदाः, पूर्वाह्लादिश्च तथा व्याध्यवस्था ज्वराष्टाहादय इत्येवमादीनि; बलं तु सहजयुक्तिकृतं उत्कृष्टापकृष्टमध्यादिभेदभिन्नं; शरीरं तु स्थूलत्वसारवत्त्वनिःसारवत्त्वादिभिः, तथा परिपालनीयदुष्टैर्मर्मावयवविपर्य्यादिभिश्च भिन्नं; आहारस्तु प्रकृतिकरणसंयोगराशिभेदादिभिर्भिन्नः; सात्म्यं तु देशतः कालतो व्याधितः प्रकृतितः स्वभावतोऽभ्यासतश्च भिन्नं स्यात्; सत्वं तु भय-शौर्य-विषाद-द्वेषहर्षादियोगभिन्नं स्यात्; प्रकृतिभेदास्त्वनेकप्रकारभिन्नवाताद्यारब्धत्वेन बोद्धव्याः; वयोभेदास्तु बाल्ययौवनवार्द्धक्याद्यवस्थाकृततदवान्तरभेदाः; एतानि दोषाद्यवस्थान्तराणि चिकित्साप्रयोगे यथायथाऽपेक्ष्यन्ते, तदुदाहरणं शास्त्रेऽनुसरणीयं, इह लिख्यमानं तु विस्तरत्वं ग्रन्थस्यावहतीति नोक्तम्; उभयमेतदुत्तरकालं सिद्धिषूपदेक्ष्याम इति योजना॥ ५॥

इदानीं तावत्सम्भारान् विविधानपि समासेनोपदेक्ष्यामः—तद्यथा—दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यकं धूमातपजलरजसामनभिगमनीयमनिष्टानां च शब्दस्पर्शरसरूपगन्धानां सोदपानोदूखलमुपलवर्चःस्थानस्नानभूमिमहानसोपेतं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत्पूर्वमुपकल्पयेत्॥ ६॥

विविधानपीत्यपिशब्दः समासेनापीत्येवंरूपो ज्ञेयः, तेन गृहादयोऽपि विस्तरेणोच्यन्ते, संग्रहणीयादयश्च समासेनेति द्वयमपि सुस्थं स्यात्; यदि वा द्विविधानपीति पाठः, तेन, भोगार्थानि तथा व्यापत्साधनानि गृह्यन्ते। अनुपत्यकं यद् विदूरमन्यस्य महतोगृहस्य, उदकं पीयते येन तदुदपानम्॥ ६॥

ततः शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नानुपचारकुशलान् सर्वकर्मसु पर्यवदातान् सूपौदनपाचकस्नापकसंवाहकोत्थापकसंवेशकौषधपेषकांश्च परिचारकान् सर्वकर्मस्वप्रतिकूलान् तथा गीतवादित्रोल्लापकश्लोकगाथाख्यायिकेतिहासपुराणकुशलानभिप्रायज्ञानानुमतांश्च देशकालविदः पारिषद्यांश्च, तथा लावकपिञ्जलशशहरिणैणकालपुच्छकमृगमातृकोरभ्रान्, गां दोग्ध्रीं शीलवतीमनातुरां जीवद्वत्सां सुप्रतिविहिततृणशरणपानीयाम्, पाद्याचमनीयोदकोष्ठमणिकघटपिठरपर्योगकुंभीकुंभकुण्डशरावदर्वीकटोदञ्चनपरिपचनमन्थानचर्मचेलसूत्रकार्पासोर्णादीनि च शयनासनादीनि चोपन्यस्तभृङ्गारप्रतिग्रहाणि सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानानि स्वापाश्रयाणि संवेशनोपवेशनस्नेहस्वेदाभ्यङ्गप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनशिरोविरेचनमूत्रोच्चारकर्मणामुपचारसुखानि सुप्रक्षालितोपधानाश्च

सुश्लक्ष्णखरमध्यमा दृषदः शस्त्राणि चोपकरणार्थानि, धूमनेत्रं च बस्तिनेत्रं चोत्तरबस्तिकं च कुशहस्तकं च तुलां च मानभांडं च घृततैलवसामज्जक्षौद्रफाणितलवणेन्धनोदकमधुसीधुसुरासौवीरकतुषोदकमैरेयमेदकदधिदधिमंडोदश्विद्धान्याम्लमूत्राणि च, तथा शालिषष्टिकमुद्गमाषयवतिलकुलत्थबदरमृद्वीकाकाश्मर्यपरूषाभयामलकविभीतकानि नानाविधानि च स्नेहस्वेदोपकरणानि द्रव्याणि तथैवोर्ध्वहरानुलोमिकोभयभांजि संग्रहणीयदीपनीयपाचनीयोपशमनीयवातहराणि समाख्यातानि चौषधानि यच्चान्यदपि किंचिद्व्यापदः परिसंख्यायोपकरणं विद्यात्, यच्च प्रतिभोगार्थं तत्तदुपकल्पयेत् ॥ ७ ॥

प्रादक्षिण्यमानुकूल्यं, उल्लापकं स्तोत्रं, इतिहासोऽज्ञायमानकर्तृकाप्तोपदेशः, मृगमातृका पृथूदरो हरिणः, शरणं गृहं, आचमनीयोदकोष्टमाचमनार्थमुदककोष्टं, किंवा आचम्यते येन पात्रेण तदाचमनं; मणिको गोलकः[1], पिठरः स्थाली, पर्योगः कटाहः, कुंभो दृढावयवोऽल्पमुखो घटः, कटस्तृणादिरचितमासनम्, उदंचनं पिधानशरावः, परिपचनं तैलपाचनिका, ऊर्णा गड्डररोमाणि, सुप्रक्षालितेत्यादौ उपधानः शिलापुत्र इति प्रसिद्धः[2], दृषदः पाषाणपट्टकाः, शस्त्राणि चोपकरणार्थानीति कुद्दालकर्तरीप्रभृतीनि, कुशहस्तकं वर्जनी,[3] अन्ये तु आर्द्रद्रव्यपरिपचनमभिदधति; मानभाण्डं प्रतिमानम्[4] ॥ ७ ॥

ततस्तं पुरुषं यथोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपादयेत् । तं चेदस्मिन्नन्तरे मानसः शारीरो वा व्याधिः कश्चित्तीव्रतरः सहसाभ्यागच्छेत्तमेव तावदस्योपावर्तयितुं यतेत । ततस्तमुपावर्त्य तावन्तमेवैनं कालं तथाविधेनैव कर्मणोपाचरेत् ॥ ८ ॥

ततस्तं पुरुषं,स्नेहस्वेदोपपन्नमनुपहतमानसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतं देवताग्निद्विजगुरुवृद्धवैद्यानर्चितवन्तमिष्टे नक्षत्रतिथिकरणमुहूर्ते कारयित्वा ब्राह्मणान्स्वस्तिवाचनं प्रयुक्ताभिराशीर्भिरभिमन्त्रितां मधुमधुकसैन्धवफाणितोपहितां मदनफलकषायमात्रां पाययेत् ॥ ९ ॥

तं चेत्यादावस्मिन्नन्तर इति स्नेहस्वेदकरणसमये,तावन्तमेव कालमिति यावत्कालेन व्याधिप्रशमः कृतस्तावन्तम् । इष्ट इति शोधनकर्तृनक्षत्राद्यनुगुणे औषधप्रयोगार्थं विहित इत्यर्थः, यदुक्तं ज्योतिषे—"पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनौ । स्वाति सौम्यं च भैषज्ये कुर्यादन्यत्र वर्जयेत्" इति । कारयित्वेति स्वस्तिवाचनं कारयित्वा ॥ ८ ॥ ९ ॥

मदनफलकषायमात्राप्रमाणं तु खलु सर्वसंशोधनमात्राप्रमाणानि च प्रतिपुरुषमपेक्षितव्यानि भवन्ति, यावद्धि यस्य संशोधनं पीतं वैकारिकदोषहरणायोपपद्यते नचातियोगायोगाय, तावदस्य मात्राप्रमाणं वेदितव्यं भवति । पीतवन्तं तु खल्वेनं मुहूर्तमनुकांक्षेत्तस्य यदा जानीयात्स्वेदप्रादुर्भावेण दोषप्रविलयनमापद्यमानं लोमहर्षेण च स्थानेभ्यः प्रचलितं कुक्षिसमाध्मापनेन च कुक्षिमनुगतं हृल्लासास्यस्रवणाभ्यामपि चोर्ध्वमुखीभूतमथास्मै जानुसममसंबाधं सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानं स्वापाश्रयमासनमुपवेष्टुं प्रयच्छेत्[1] ॥ १० ॥

प्रतिपुरुषमपेक्षितव्यानीत्यनेन प्रतिपुरुषं शोधनमात्राभेदं दर्शयति; यावद्धीत्यादि मात्राशितीयोक्तं "यावद्ध्यस्याशनम्" इत्यादिग्रन्थव्याख्यानानुसारेण व्याख्येयम् । अनुकांक्षेदिति परीक्षयन् धारयेत्, असंबाधमित्यसंकीर्णम् ॥ १० ॥

प्रतिग्रहांश्चोपचारयेत्—ललाटप्रतिग्रहे पार्श्वोपग्रहणेनाभिप्रपीडने पृष्ठोन्मर्दनेऽनपत्रपनीयाः सुहृदोऽनुमताः प्रयतेरन् ॥ ११ ॥

अथैनमनुशिष्यात्—विवृतोष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीर्णानुदीरयन् किंचिदवनम्य ग्रीवामूर्ध्वशरीरमुपवेगमप्रवृत्तान्प्रवर्तयन् सुपरिलिखितनखाभ्यामङ्गुलिभ्यामुत्पलकुमुदसौगन्धिकनालैर्वा कण्ठमभिस्पृशन्सुखं प्रवर्तयस्वेति ॥ १२ ॥

प्रतिगृह्णन्तीति प्रतिग्रहाः ललाटप्रतिग्रहादयः, अनपत्रपनीया अलज्जाविषयाः । उपवेगं वेगसमीपं, एतेन सर्वथाऽप्रवृत्ते वेगे प्रवर्तनं निषेधयति ॥ ११ ॥ १२ ॥

स तथाविधं कुर्यात् । ततोऽस्य वेगान् प्रतिग्रहगतानवेक्षेतावहितः वेगविशेषदर्शनाद्धि कुशलो योगायोगातियोगविशेषानुपलभेत, वेगविशेषदर्शी पुनः कृत्यं यथार्हमवबुध्येत लक्षणेन; तस्माद्वेगानवेक्षेतावहितः ॥ १३ ॥

वेगविशेषदर्शनाद्धीत्यादिग्रन्थस्य भाविनो योगायोगादीन्वेगविषयानुपलभ्य तर्कयतीत्यर्थः । किंवा, वैगिकी शुद्धिरभि-

१ मणति गभीरत्वाज्जलार्पणे शब्दायते इति मणिकः । २ शिराउण ( ल ) इति प्रसिद्ध इति ग्रा पाठः । ३ संमार्जनीति शिः । ४ मानभाण्डं घृततैलादिपरिमाणार्थं भाण्डम् । शिः ।

१ स्वापाश्रयं निद्रालम्बनं निद्राकरणोपयोगीत्यर्थः । २ प्रतिग्रहान् पतद्ग्रहान् 'प्रतिस्वीकरणे सैन्ये पृष्ठे पतद्ग्रहे' इति मेदिनी ।

धातव्या "जघन्य-मध्य-प्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ" इत्यादिना, तामनेन दर्शयति ॥ १३ ॥

**तत्रामून्ययोगयोगातियोगविशेषज्ञानानि भवन्ति, तद्यथा—अप्रवृत्तिः कुतश्चित् केवलस्य वाप्यौषधस्य विभ्रंशो विबन्धो वेगानामयोगलक्षणानि भवन्ति; काले प्रवृत्तिरनतिमहती व्यथा यथाक्रमं दोषहरणं स्वयंचावस्थानमिति योगलक्षणानि भवन्ति, योगेन तु दोषप्रमाणविशेषेण तीक्ष्णमृदुमध्यविभागो ज्ञेयः। योगाधिक्येन तु फेनिलरक्तचन्द्रिकोपगमनमित्यतियोगलक्षणानि भवन्ति। तत्रातियोगायोगनिमित्तानिमानुपद्रवान् विद्यात्—आध्मानं परिकर्तिका परिस्रावो हृदयोपशरणमङ्गग्रहो जीवादानं विभ्रंशः स्तम्भः क्लम उपद्रव इति ॥ १४ ॥**

अप्रवृत्तिः कुतश्चिदिति सर्वस्यैवाप्रवृत्तिः, तथा केवलस्य कृत्स्नस्य शोधनीयदोषस्याऽप्रवृत्तिः, तथौषधस्य विभ्रंशः प्रातिलोम्येन गमनं, यथा—वमनस्याध ऊर्ध्वं च विरेचनस्य, एतदेव सिद्धावुक्तं,—"अयोगः प्रातिलोम्येन नवाऽल्पं वा प्रवर्तनम्" इति । किंवा; कुतश्चिद्वाऽप्रवृत्तिः स्तोकदोषप्रवृत्तिरित्यर्थः, तथा केवलस्य चाप्यौषधस्य प्रवृत्तिरिति । यथाक्रममिति वमने प्रथमं श्लेष्मा, तदनु पित्तं, तदनु वायुः । यदुक्तं—"क्रमात्कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः' इति । सम्यग्योगोऽपि हर्तव्यदोषस्याल्पत्वमध्यत्वोत्कृष्टत्वेन त्रिविधो भवतीति दर्शयन्नाह—योगेन त्वित्यादि । तुशब्दोऽवधारणे तेन, योगेनैव यः प्रमाणविशेषोऽल्पादिस्तेन, नत्वयोगातियोगाभ्यामित्यर्थः, अयं च तीक्ष्णादियोगविभागः पेयाक्रमोत्कर्षार्थः, तथाहि वक्ष्यति सिद्धौ—'पेयां विलेपीम्' इत्यादि । तत्रातियोगेत्यादौ आध्मानादयः शोधनसिद्धौ "बहुदोषस्य रूक्षस्य" इत्यादिना ग्रन्थेन प्रपञ्चेन वक्तव्याः, अतस्तत्रैषां योगातियोगजन्यो यथायोगजन्यः स स्फुटो ज्ञेयः ॥ १४ ॥

**योगेन तु खल्वेनं छर्दितवन्तमभिसमीक्ष्य सुप्रक्षालितपाणिपादास्यं मुहूर्तमाश्वास्य स्नैहिकवैरेचनिकोपशमनीयानां धूमानामन्यतमं सामर्थ्यतः पाययित्वा पुनरेवोदकमुपस्पर्शयेत् ॥ १५ ॥**

**उपस्पृष्टोदकं चैनं निवातमागारमनुप्रवेश्य संवेश्य चानुशिष्यात्—उच्चैर्भाष्यमत्याशनमतिस्थानमतिचंक्रमणं क्रोधशोकहिमातपावश्यायातिप्रवातान् यानयानं ग्राम्यधर्ममस्वपनं निशि दिवा स्वप्नम् विरुद्धाजीर्णासात्म्याकालप्रमितातिहीनगुरुविषमभोजनवेगसन्धारणोदीरणमिति भावानेतान्मनसाप्यसेवमानः सर्वमाहारमद्यादिति । स तथा कुर्यात् ॥ १६ ॥**

स्नैहिकधूमपानविकल्पः पुरुषप्रकृत्यपेक्षः, अतएव सामर्थ्यत इत्युक्तं यद्यस्य युज्यत इत्यर्थः । अतिस्थानमिति अत्यर्थं दण्डायमानत्वेनावस्थितिः । प्रमितभोजनमेकरसाभ्यासः । अतिहीनकं नष्टशक्तिकं धान्यादि । गुरुशब्देन स्वभावगुरुलड्डुकचिपिटकादेर्यथोक्तमात्रयापि भोजननिषेधः ॥ १५–१६ ॥

**अथैनं सायाह्ने परे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्ववक्लिन्नानां मण्डपूर्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य च, एवं द्वितीये तृतीये चान्नकाले । चतुर्थे त्वन्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत् । एवं पञ्चमे षष्ठे चान्नकाले । सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् । एवमष्टमे नवमे चान्नकाले । दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनौदकलावणिकेनापि[१] सारवता भोजयेत्, उष्णोदकानुपानम्; एवमेकादशे द्वादशे चान्नकाले । अत ऊर्ध्वमन्नगुणान् क्रमेणोपभुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेत् ॥१७॥**

सायाह्न इत्यादौ सम्यगग्निशुद्धिलक्षणभूते सायाह्ने, किंचित्त्वविशुद्धावपरेऽह्नि । यदुक्तं सिद्धौ—"वमितं लङ्घयेत्सम्यग्जीर्णलिङ्गान्यपेक्षयन् । तानि दृष्ट्वा तु पेयादिक्रमं कुर्यान्न लङ्घनम्" इति । मण्डपूर्वां मण्डप्रधानां, अयं च द्वादशकालनिवर्तनीयः क्रमः प्रधानशुद्धिशुद्धे ज्ञेयः । मध्येत्वष्टानुकालिकः; उक्तं हि—"पेयां विलेपीम्" इत्यादि ।—अनुगुणान् मधुरादीन् गुरुकठिनादींश्च । एतच्च संसर्जनक्रमादूर्ध्वं सप्तरात्रेण प्रकृतिभोजनगमनं तदा कर्तव्यं, यदि वमनानन्तरं विरेचनं न कर्तव्यं भवति । तत्करणे तु संसर्जनक्रमादूर्ध्वमेव स्नेहपानं; यदुक्तं—"संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेद्वाप्यनुवासयेद्वा" इति । तथा सुश्रुतेऽप्युक्तं—"पक्षाद्विरेको वान्तस्य" इति । यदि संसर्जनक्रमं तथानुगुणाभ्यासं च कृत्वा स्नेहः क्रियते, तदा पक्षाद्विरेको वान्तस्य न स्यात् ॥ १७ ॥

---

१ हृदयोपसरणं हृद्ग्रहः, किंवा, हृद्ग्रहोत्पादनार्थं हृदये दोषाणामुपशरणं; अतएव वक्ष्यति—"कुपिता हृदयं गत्वा दोषाः कुर्वन्ति हृद्ग्रहम्" इति । जीवादानमिति जीवनहेतुधातुरूपशोणितनिर्गमः, यदुक्तं—"अतियोगाच्च भैषज्यं जीवं हरति शोणितम् । तज्जीवादानमित्युक्तमादत्ते जीवितं यतः" इति । विभ्रंशः संज्ञाभ्रंशादिरूपस्त्रिविधः, स च सिद्धौ वक्ष्यमाणः शिः ।

१ औदकलावणिकेनोदकलवणाभ्यां संस्कृतेन । शिः ।

अथैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्यानुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं कृतहोमबलिमङ्गलजप्यप्रायश्चित्तमिष्टे तिथिनक्षत्रकरणमुहूर्ते ब्राह्मणान्स्वस्ति वाचयित्वा त्रिवृत्कल्कमक्षमात्रं यथार्हालोडनप्रतिविनीतं पाययेत् प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि विकारांश्च । सम्यक् विरिक्तं चैनं वमनानन्तरलक्षणोक्तेन धूमवर्जेन विधिनोपपादयेदाबलवर्णप्रकृतिलाभाद्बलवर्णोपपन्नं चैनमनुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतमनुरूपालङ्कारालङ्कृतं सुहृदां दर्शयित्वा ज्ञातीनां दर्शयेदथैनं कामेष्ववसृजेत् ॥ १८ ॥

भवन्ति चात्र ।

अनेन विधिना राजा राजमात्रोऽथवा पुनः ।
यस्य वा विपुलं द्रव्यं स संशोधनमर्हति ॥ १९ ॥

अथैनमिति कृतसंसर्जनक्रमं, प्रतिविनीतं आलोडितं, दोषादयः पूर्वव्याख्येयाः; विकारांश्चेति कुष्ठज्वरादीन् विरेचनसाध्यान्, पूर्वं तु "सूक्ष्माणि हि" इत्यादौ विकारो नोक्तः, तस्य परीक्ष्यत्वेनैव ग्रहणात्, किंवा दोषग्रहणेनैव तत्र विकारग्रहणम्; कामेष्वीप्सितेषु, अवसृजेन्निर्यन्त्रणं कुर्यात् ॥ १८–१९ ॥

दरिद्रस्त्वापदं प्राप्य प्राप्तकालं विरेचनम् ।
पिबेत्काममसंभृत्य संभारानपि दुर्लभान् ॥ २० ॥
नहि सर्वमनुष्याणां सन्ति सर्वपरिच्छदाः ।
न च रोगा न बाधन्ते दरिद्रानपि दारुणाः ॥ २१ ॥
यद्यच्छक्यं मनुष्येण कर्तुमौषधमापदि ।
तत्तत्सेव्यं यथाशक्ति वसनान्यशनानि च ॥ २२ ॥
मलापहं रोगहरं बलवर्णप्रसादनम् ।
पीत्वा संशोधनं सम्यगायुषा युज्यते चिरम् ॥ २३ ॥

संप्रति दरिद्रस्य यथोक्तं संभारमकृत्वापि संशोधनकरणमाह—दरिद्र इत्यादि । दुर्लभानिति वचनेन सुलभानि दरिद्रेणोत्पादनीयानि । संशोधनकरणगुणमाह—मलापहमित्यादि ॥ २०–२३ ॥

तत्र श्लोकाः ।

ईश्वराणां वसुमतां वमनं सविरेचनम् ।
संभारा ये यदर्थं च समानीय प्रयोजयेत् ॥ २४ ॥
यथा प्रयोज्या मात्रा या यदयोगस्य लक्षणम् ।
योगातियोगयोर्यच्च दोषा ये चाप्युपद्रवाः ॥ २५ ॥
यदसेव्यं विशुद्धेन यश्च संसर्जनक्रमः ।
तत्सर्वं कल्पनाध्याये व्याजहार पुनर्वसुः ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने उपकल्पनीयो नाम पञ्चदशोऽध्यायः ।

संग्रहे—ईश्वराः सविलासाः, तेन राज्ञो राजमात्रस्य च ग्रहणम्, प्रयोजयेदिति संभारानिति शेषः ॥ २४–२६ ॥

इत्युपकल्पनीयोऽध्यायः ।

---

## षोडशोऽध्यायः ।

अथातश्चिकित्साप्राभृतीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
चिकित्साप्राभृतो विद्वान् शास्त्रवान् कर्मतत्परः ।
नरं विरेचयति यं स योगात्सुखमश्नुते ॥ ३ ॥
यं वैद्यमानी त्वबुधो विरेचयति मानवम् ।
सोऽतियोगादयोगाच्च मानवो दुःखमश्नुते ॥ ४ ॥

पूर्वाध्यायोक्तवमनविरेचनयोर्विस्तरेण सम्यग्योगादिलक्षणम्, तथा तत्प्रवृत्तिविषयपुरुषायभिधातुं चिकित्साप्राभृतीयोऽभिधीयते ।—चिकित्सा प्राभृतरूपा सदा यत्नेन आतुरोपढौकनीयत्वेन यस्य विद्यते स चिकित्साप्राभृतीयः । योगात् सम्यग्योगात्, सुखमारोग्यम्, विरेचयतीत्यत्र वामयतीत्यपि बोद्धव्यं विरेचनशब्दस्य वमनेऽपि प्रवृत्तेः;—सोऽतियोगादित्यादि । दुःखं विकारं, यदुक्तं—"विकारो दुःखमेव तु" । ननु वमनादौ कस्मान्मिथ्यायोगो नोच्यते, यावता यस्य वस्तुन उचितो योगः स योगः, तस्य स्वल्पो वा योगः सर्वथा वाऽयोगोऽयोग उच्यते, तस्यैवातिमात्रयोगो विकारकरोऽतियोगः । अनुचितसंबन्धेन तु वस्तुनो मिथ्यायोगः, तेनेहाप्युत्क्लिष्टश्लेष्मादिधर्मप्रयुक्ते पुरुषे विरेचनं सर्वथाऽयौगिकमेव, तच्च प्रयुक्तं प्रतीपगमनेनैव याति, विरेचने मिथ्यायोगोऽयमयोगः, एवं वमनादिष्वपि ज्ञेयम् । एवं भूतस्य मिथ्यायोगस्यायोगेनैव ग्रहणात्, उक्तं हि—"प्रातिलोम्येन दोषाणां हरणात्ते ह्यकृत्स्नशः । अयोगसंज्ञे कृच्छ्रेण यदागच्छति चाल्पशः" इति । दुष्टविरेचनौषधस्य वमनोपयुज्यमानस्य हीनमात्रत्वातिमात्रत्वाभ्यां विना यद्याधिकरणत्वं तन्मिथ्यायोगादेव परं स्यात्; यदुक्तं तिस्रैषणीये, 'मिथ्यायोगो राशिवर्ज्येष्वाहारविधिविशेषायतनेषूपदेक्ष्यते' इति । सत्यं भेषजस्य मिथ्यायोगोऽयं, वमनस्य तु दोषहरणरूपस्यायोग इति; एवंच विरेचनादावपि ज्ञेयम् । यद्यप्यत्रापि मिथ्यायोगः कथंचित्पार्यते कल्पयितुं, तथापि प्रयोजनशून्यत्वादाचार्येण पृथङ् न कृतः, शब्दादिषु तु मिथ्यायोगिनां संबन्धमात्रस्यापि परिहारार्थं पृथक् कृत इति ॥ १–४ ॥

दौर्बल्यं लाघवं ग्लानिर्व्याधीनामणुता रुचिः ।
हृद्वर्णशुद्धिः क्षुत्तृष्णा काले वेगप्रवर्तनम् ॥ ५ ॥
बुद्धीन्द्रियमनःशुद्धिर्मारुतस्यानुलोमता ।
सम्यग्विरिक्तलिङ्गानि कायाग्नेश्चानुवर्तनम् ॥ ६ ॥
ष्ठीवनं हृदयाऽशुद्धिरुत्क्लेशः श्लेष्मपित्तयोः ।
आध्मानमरुचिश्छर्दिरदौर्बल्यमलाघवम् ॥ ७ ॥
जङ्घोरुसदनं तन्द्रा स्तैमित्यं पीनसागमः ।
लक्षणान्यविरिक्तानां मारुतस्य च निग्रहः ॥ ८ ॥
विट्पित्तश्लेष्मवातानामागतानां यथाक्रमम् ।
परं स्रवति यद्रक्तं मेदोमांसोदकोपमम् ॥ ९ ॥
निःश्लेष्मपित्तमुदकं शोणितं कृष्णमेव वा ।
तृष्यतो मारुतार्तस्य सोऽतियोगः प्रमुह्यतः ॥ १० ॥

दौर्बल्यमित्यादि । विरेचनस्य सम्यग्युक्तायुक्तातियुक्तस्य लक्षणानि । अदौर्बल्यं स्थौल्यानपगमः । यथाक्रममिति पठन् क्रमेणैवेति दर्शयति, यदुक्तं—"प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण" । आगतानां परमूर्ध्वमिति योजना ॥ ५–१० ॥

वमनेऽतिकृते लिङ्गान्येतान्येव भवन्ति हि ।
ऊर्ध्वगा वातरोगाश्च वाग्ग्रहश्चाधिको भवेत् ॥ ११ ॥
चिकित्साप्राभृतं तस्मादुपेयाच्छरणं नरः ।
युंज्याद्य एतमत्यन्तमायुषा च सुखेन च ॥ १२ ॥

अतियोगलक्षणं वमनेऽतिदिशति—वमन इत्यादि । वमनातियोगे विट्पित्तकफवातानामिति न योजनीयं, येन वमनप्रयोगे कफपित्तानिलागमरूपः क्रमो भवेत् । यदुक्तं—"क्रमात्कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः" इति ॥ ११–१२ ॥

अविपाकोऽरुचिः स्थौल्यं पाण्डुता गौरवं क्लमः ।
पिडकाकोठकण्डूनां संभवोऽरतिरेव च ॥ १३ ॥
आलस्यश्रमदौर्बल्यं दौर्गन्ध्यमवसादकः ।
श्लेष्मपित्तसमुत्क्लेशो निद्रानाशोऽतिनिद्रता ॥ १४ ॥
तन्द्राक्लैब्यमबुद्धित्वमशस्तस्वप्नदर्शनम् ।
बलवर्णप्रणाशश्च तृप्यतो बृंहणैरपि ॥ १५ ॥
बहुदोषस्य लिङ्गानि तस्मै संशोधनं हितम् ।
ऊर्ध्वं चैवानुलोम्यं च यथादोषं यथाबलम् ॥ १६ ॥
एवं विशुद्धकोष्ठस्य कायाग्निरभिवर्धते ।
व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्तते ॥ १७ ॥
इन्द्रियाणि मनोबुद्धिर्वर्णश्चास्य प्रसीदति ।
बलं पुष्टिरपत्यं च वृषता चास्य जायते ॥ १८ ॥
जरां कृच्छ्रेण लभते चिरं जीवत्यनामयः ।
तस्मात्संशोधनं काले युक्तियुक्तं पिबेन्नरः ॥ १९ ॥

संशोधनविषयबहुदोषलक्षणमाह—अविपाक इत्यादि । क्लम इत्यनायासकृतः श्रमः, श्रमस्त्विह स्वल्पेनायासेन ज्ञेयः, अवसादको मनोऽवसादः, निद्रानाशो वातप्रधानेन दोषेण; अतिनिद्रता श्लेष्मप्रधानेन ॥ १३–१९ ॥

दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः ॥ २० ॥
दोषाणां च द्रुमाणां च मूलेऽनुपहते सति ।
रोगाणां प्रसवानां च गतानामागतिर्ध्रुवा ॥ २१ ॥

समूलदोषापहारकत्वेन संशोधनस्य, लङ्घनपाचनयोस्तु दोषापहरत्वे सत्यपि न संशोधनवद्दोषहन्तृत्वमित्याह—दोषा इत्यादि । कदाचिदित्यपहेतुप्राप्त्या, न तेषां पुनरुद्भव इति बलवद्दोषकारणत्वं विनेति मन्तव्यम् । उक्तेऽर्थे दृष्टान्तमाह—दोषाणामित्यादि ।—लङ्घनपाचनाभ्यां रोगकारणीभूतदोषप्रकोपहरणमात्रे कृते रोगो यो निवृत्तः, स मूलभूताशयव्यवस्थितदोषानुच्छेदाद्यत्किंचिदनुगुणकालादिप्राप्त्या पुनः कुपितदोषेण भवतीति भावः ॥ २०–२१ ॥

भेषजक्षपिते पथ्यमाहारैरेव बृंहणम् ।
घृतमांसरसक्षीरहृद्ययूषोपसंहितैः ॥ २२ ॥
अभ्यङ्गोत्सादनैः स्नानैर्निरूहैः सानुवासनैः ।
तथा स लभते शर्म युज्यते चायुषा चिरम् ॥ २३ ॥

संप्रति शोधनेन यथा दोषक्षयः तथा धातुक्षयोऽपि स्यात्तेन प्रतीकारमाह—भेषज इत्यादि । आहारैरेवेत्येवावधारणे, तेन भैषज्यैर्बृंहणं निषेधति, भेषजस्य वीर्यप्रधानस्य तदा दुःसहत्वात् । अनुवासनैरित्यत्र चकारो बोद्धव्यः, तेन अभ्यङ्गादिभिश्च बृंहणं पथ्यम् ॥ २२—२३ ॥

अतियोगानुबद्धानां सर्पिःपानं प्रशस्यते ।
तैलं मधुरकैः सिद्धमथवाप्यनुवासनम् ॥ २४ ॥
यस्य त्वयोगस्तं स्निग्धं पुनः संशोधयेन्नरम् ।
मात्राकालबलापेक्षी स्मरन्पूर्वमनुक्रमम् ॥ २५ ॥
स्नेहने स्वेदने शुद्धौ रोगाः संसर्जने च ये ।
जायन्तेऽमार्गविहिते तेषां सिद्धिषु साधनम् ॥ २६ ॥

अतियोगादिचिकित्सामाह—अतियोगेत्यादि । स्मरन् पूर्वमनुक्रममित्यनेन, यः पूर्वमयोगे हेतुभूतः, तं परिहरन्निति शिक्षयति । अमार्गविहितेऽविधिविहिते; साधनमित्यत्र वक्ष्यत इति शेषः ॥ २४–२६ ॥

जायन्ते हेतुवैषम्याद्विषमा देहधातवः ।
हेतुसाम्यात्समास्तेषां स्वभावोपरमः सदा ॥ २७ ॥

संप्रति यदेतत् सिद्धौ वक्ष्यमाणम्, तदनुषङ्गेण च सर्वभेषजानामेव क्षणभङ्गभावे पक्षेऽपि रोगशमकत्वं प्रतिपादयितुं

१ संप्रति रोगाणां क्षणिकत्वेन यद् उपशमार्थं चिकित्साभिधानं निष्फलमिति सौगतपक्षे, चिकित्सायाः प्रयोजकत्वमभिधातुं तन्मतमुपन्यस्यति जायन्त इत्यादि । शिः ।

प्रकरणमारभते—जायन्त इत्यादि । तेषामिति विषमाणां धातूनां समानां च स्वभावाद्विनाशकारिणां निरपेक्षादुपरमो विनाशः स्वभावोपरमः, सद्वेत्यविलम्बेन, तेनोत्पन्नमात्र एव विनश्यतीत्यर्थः ॥ २७ ॥

**प्रवृत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम् ।**
**केचित्त्वत्रापि मन्यन्ते हेतुं हेतोरवर्तनम् ॥ २८ ॥**

अत्रैवार्थे उपपत्तिमाह—प्रवृत्तीत्यादि । प्रवृत्तिहेतुरुत्पत्तिहेतुर्भावानामस्ति, निरोधे विनाशे हेतुर्भावानां कारणं नास्ति, यस्मात्सर्वे एव भावाः प्रदीपार्चिर्वदुत्पत्तौ कारणापेक्षिणः, विनाशे तु द्वितीयक्षणाविद्यमानत्वलक्षणे सहजसिद्धत्वे न हेत्वन्तरमपेक्षन्ते, यतः न स्वाभाविकरूपे हेत्वन्तरापेक्षा स्यात्, नह्युत्पन्नः खड्गः स्वाभाविके लौहमयत्वे कारणान्तरमपेक्षते । तदेवं सर्वथा भावानामेव स्वाभाविके नाशे, देहधातूनामपि नाशः स्वाभाविक एवेति भावः । व्याधिप्रशमे च चिकित्साऽपेक्षकं पक्षान्तरमाह—केचिदित्यादि । तत्रापि विनाशेऽपि हेतुं कारणम्, हेतोरवर्तनमिति उत्पादकहेतोरभावं मन्यन्त इति योजना । एवमपि हेतुपरंपरायाः क्षणिकत्वेन तत्कार्याणामपि स्वभावादेव नित्यसन्निहितसहेतुविनाशहेतूनां न विनाशहेतुचिकित्सापेक्षेति भावः ॥ २८ ॥

**एवमुक्तार्थमाचार्यमग्निवेशोऽभ्यभाषत ।**
**स्वभावोपरमे कर्म चिकित्साप्राभृतस्य किम् ॥२९॥**
**भेषजैर्विषमान् धातून् कान् समीकुरुते भिषक् ।**
**का वा चिकित्सा भगवन् किमर्थं वा प्रयुज्यते ॥३०**

एवमुत्थितायां शङ्कायां गुरुं पृच्छति—एवमित्यादि । किमित्याक्षेपे । कर्म साध्यं, स्वभावोपरमे सति न किमपि साध्यं पश्यामीति भावः । कान् समीकुरुते, विषमाणामस्थिरत्वेन साम्यं तत्र कर्तुं न पार्यते इत्याशयः । का वा चिकित्सेति रोगप्रशमं प्रत्यकारणत्वेन चिकित्सा नास्तीत्यर्थः । किमर्थं वा प्रयुज्यत इति यन्निवृत्त्यर्थं चिकित्सा प्रयुज्यते तद्धातुवैषम्यं स्वभावान्निवृत्तमिति चिकित्साप्रयोजनं नास्ति ॥२९—३०

**तच्छिष्यवचनं श्रुत्वा व्याजहार पुनर्वसुः ।**
**श्रूयतामत्र या सोम्य युक्तिर्दृष्टा महर्षिभिः ॥ ३१ ॥**
**न नाशकारणाभावाद्भावानां नाशकारणम् ।**
**ज्ञायते नित्यगस्येव कालस्यात्ययकारणम् ॥ ३२ ॥**

पूर्वोक्तहेतुविनाशं दृष्टान्तेन हेतुमन्तमाह—न नाशेत्यादि । भावानां नाशकारणं न ज्ञायते, तत् किमभावादेव, यथा—शशविषाणं, तद्वाऽज्ञानयोग्यत्वात् पृथिव्यां निखातमूलकीलकादिवत् सदपि न ज्ञायते, इत्याह—नाशकारणाभावादिति । नाज्ञानयोग्यत्वेन, किंतर्ह्यभावादेवेत्यर्थः । अत्र दृष्टान्तमाह—नित्यगस्येत्यादि । निमेषादिरूपत्वेन नित्यगस्य, एवं मन्यते—नित्यगः कालो यथा विनश्वरत्वेन हेत्वन्तरं विनाशेऽपेक्षते, तथा सर्वएव भावाः, यद्धि यस्य हेत्वन्तरापेक्षं न तस्य तदवश्यंभावि, यथा—पटस्य रागः; हेत्वन्तरापेक्षी चेद्विनाशः स्यात्, नावश्यंभावी स्यात् । एतद्विपर्ययाच्चानपेक्षत्वं विनाशस्य सिद्धम् । संप्रत्यहेतुको विनाश उत्पत्त्यन्तरमेव स्यात्, पश्चात् स्थिरत्वेन संस्काराधानमपि भावेषु न पार्यते कर्तुमित्याह—यथा भूत इति । यादृश उत्पन्नः, तथेति तादृश एव ॥ ३१—३२ ॥

**शीघ्रगत्वाद्यथा भूतस्तथा भावो विपद्यते ।**
**निरोधे कारणं तस्य नास्ति नैवान्यथाक्रिया ॥ ३३ ॥**

पूर्वसाधितमहेतुविनाशित्वं तथा शीघ्रगत्वहेतुसाधितमसत्कार्यत्वमुपसंहरति—निरोध इत्यादि । अन्यथाक्रिया अन्यथाकरणं संस्काराधानमिति यावत् ॥ ३३ ॥

**याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।**
**सा चिकित्सा विकाराणां कर्म तद्भिषजां स्मृतम् ३४**

एतेन विषमे धातौ साम्यं संस्कार आधीयतामित्येवंरूपापि चिकित्सा निरस्ता मन्तव्या, एवं व्यवस्थिते पूर्वाक्षिप्तं चिकित्सितं समादधाति—याभिरित्यादि । "सा चिकित्सा" इत्यनेन "का वा चिकित्सा" इत्याक्षेपः परिहृतः । "कर्म तद्" इत्यनेन प्रथमोद्दिष्ट आक्षेपः परिहृतः । "इत्यर्थं क्रियते क्रिया" इत्यनेन "किमर्थं वा" इत्याक्षेपः परिहृतः । "कान् समीकुरुते" इत्याक्षेपस्तु, "समैस्तु हेतुभिर्यस्माद्" इत्यादिना परिहृतः । विषमेषु धातुषु याभिः क्रियाभिः समा धातवो जन्यन्ते सा चिकित्सा; एवं मन्यते—यद्यपि धातुवैषम्यं विनश्वरम्, तथापि विनश्यदपि तद्धातुवैषम्यं स्वकार्यं विषममेव धातुमारभते, एवं सोऽप्यपरं विषममिति न धातुवैषम्यसन्ताननिवृत्तिर्धातुसाम्यजनकत्वहेतुं विना । यदा तु धातुसाम्यहेतुरुपयुक्तो भवति, तदा तेन सहितं वैषम्यसन्ततिरहितमपि कारणं सममेव धातुसंतानमारभते, यथा मुद्गरप्रहारसहितो घटपरमाणुसन्तानो विसदृशं कपालसन्तानमारभते॥३४॥

**कथं शरीरे धातूनां वैषम्यं न भवेदिति ।**
**समानां चानुबन्धः स्यादित्यर्थं क्रियते क्रिया ॥३५॥**
**त्यागाद्विषमहेतूनां समानां चोपसेवनात् ।**
**विषमा नानुबध्नन्ति जायन्ते धातवः समाः ॥ ३६ ॥**

एवं व्यवस्थिते, "कथं शरीरे" इत्यादिग्रन्थो व्याख्येयः । वैषम्यं न भवेन्नोत्पद्येतेत्यर्थः । समानां चानुबन्ध इति सन्तत्योत्पादः । विषमा नानुबध्नन्ति इति हेत्वभावाद्विषमसंतानस्योत्पादो न भवति । समानां चोपसेवनादिति समहेतूनां सेवनात् ॥ ३५—३६ ॥

**समैस्तु हेतुभिर्यस्माद्धातून् संजनयेत्समान् ।**
**चिकित्साप्राभृतस्तस्माद्दाता देहसुखायुषाम् ॥३७॥**
**धर्मस्यार्थस्य कामस्य नृलोकस्योभयस्य च ।**
**दाता संपद्यते वैद्यो दानाद्देहसुखायुषाम् इति॥३८॥**

देहसुखायुषां दानात् धर्मादीनां दाता भवति, देहसंपत्तिसाध्यत्वाद्धर्मादीनामपीति भावः ॥ ३७—३८ ॥

तत्र श्लोकाः ।

**चिकित्साप्राभृतगुणो दोषो यश्चेतराश्रयः ।**
**योगायोगातियोगानां लक्षणं शुद्धिसंश्रयम् ॥ ३९ ॥**
**बहुदोषस्य लिङ्गानि संशोधनगुणाश्च ये ।**
**चिकित्सासूत्रमात्रं च सिद्धिव्यापत्तिसंश्रयम् ॥४०॥**
**या च युक्तिश्चिकित्सायां यं चार्थं कुरुते भिषक् ।**
**चिकित्साप्राभृतेऽध्याये तत्सर्वमवदन्मुनिः ॥ ४१ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने चिकित्साप्राभृतीयो नाम षोडशोऽध्यायः ॥**

**समाप्तः कल्पनाचतुष्कः ॥**

संग्रहे सिद्धिसंश्रयं च व्यापत्तिसंश्रयं च सिद्धिव्यापत्तिसंश्रयम् । तत्र सिद्धिसंश्रयं सिद्धिसंस्थानसंश्रयेण, व्यापत्तिसंश्रयं "अतियोगानुबद्धानाम्" इत्यादिनोक्तम् ॥ ३९–४१ ॥

इति चिकित्साप्राभृतीयः कल्पनाचतुष्कः समाप्तः ॥

## सप्तदशोऽध्यायः ।

**अथातः कियन्तःशिरसीयमध्यायं व्याख्यास्यामः॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**कियन्तः शिरसि प्रोक्ता रोगा हृदि च देहिनाम् ।**
**कति चाप्यनिलादीनां रोगा मानविकल्पजाः ॥ ३ ॥**
**क्षयाः कति समाख्याताः पिडकाः कति चानघ ।**
**गतिः कतिविधा चोक्ता दोषाणां दोषसूदन ॥ ४ ॥**
**हुताशवेशस्य¹ वचस्तच्छ्रुत्वा गुरुरब्रवीत् ।**
**पृष्टवानसि यत्सौम्य तन्मे शृणु सविस्तरम् ॥ ५ ॥**

पूर्वचतुष्कचतुष्टयेन भेषजमभिहितम्, संप्रति तद्विषयरोगाभिधानार्थं रोगचतुष्कोऽभिधातव्यः, चिकित्सा च विधेयत्वेनैव प्रधानमतः प्रथममुक्ता, किंच दर्शितश्चायं प्रथमाध्यायएव संबन्धः, एवंचाङ्गेषु मर्मसु च प्रधानभूतशिरोहृदयरोगाभिधायकत्वेन कियन्तःशिरसीयोऽभिधीयते ॥ १—५ ॥

**दृष्टाः पञ्च शिरोरोगाः पञ्चैव हृदयामयाः ।**
**व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा ॥ ६ ॥**
**दशाष्टौ च क्षयाः सप्त पिडका मधुमेहिकाः ।**
**दोषाणां त्रिविधा चोक्ता गतिर्विस्तरतः शृणु ॥ ७ ॥**

क्षयस्थानवृद्ध्यो दोषमानं, तस्य विकल्पो दोषान्तरसंबन्धाऽसंबन्धकृतोभेदः; मधुमेहिका इत्यत्र मधुमेहशब्दः सामान्येन प्रमेहवचनः । यतोऽत्रैव सामान्येन ब्रुवते—"विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" इति । अन्यथा हि 'विना मधुमेहम्' इति कृतं स्यात्, तथा चिकित्सिते वक्ष्यति सामान्येनैव यत्—"प्रमेहिणो याः पीडका यथोक्ता रोगाधिकारे पृथगेव सप्त" इत्यादि । तथा मधुमेहपिडकानां चिकित्सितोपदेशाच्च सर्वमेहभवत्वं पिडकानां, मधुमेहभवत्वेन हि मधुमेहस्यैवाऽसाध्यत्वान्न तद्भवपीडकानामुपक्रमणीयत्वमस्ति, किंच प्रदेशान्तरेऽपि मधुमेहशब्देनायं सर्वप्रमेहानुक्तवान्, यथा—"गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः । अचिकित्स्या भवन्त्येते बलमांसपरिक्षये" इति । अत्रापि यदि वातिको मधुमेहोऽभिप्रेतः स्यात्तदा तस्य स्वरूपत एवासाध्यत्वेन 'बलमांसपरिक्षये सति' इति विशेषणमनर्थकं स्यात् । सुश्रुतेनापि च सामान्येन प्रमेह एवैताः पिडका दर्शिताः, यदुक्तं—"तद्वच्च वसामेदोभ्यामभिपन्नस्य शरीरस्य दोषैश्चानुगतधातोः प्रमेहिणः पिडका जायन्ते" इत्यादि । सर्व एव प्रमेहा यस्माद्देहं मधुरीकृत्य जायन्ते तस्मान्मधुमेहा इत्युच्यन्ते वचनं हि—"षट्पदपिपीलिकाभिसरणम्" इति तथा च वाग्भटः "मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति । सर्वे हि मधुमेहाख्या माधुर्याच्च तनोरतः" ॥ ६–७ ॥

**संधारणाद्दिवास्वप्नाद्रात्रौ जागरणान्मदात् ।**
**उच्चैर्भाष्यादवश्यायात्प्राग्वातादतिमैथुनात् ॥ ८ ॥**
**गन्धादसात्म्यादाघ्रातद्रजोधूमहिमातपात् ।**
**गुर्वम्लहरितादानादतिशीताम्बुसेवनात् ॥ ९ ॥**
**शिरोऽभिघाताद्दुष्टामाद्रोदनाद्बाष्पनिग्रहात् ।**
**मेघागमान्मनस्तापाद्देशकालविपर्ययात् ॥ १० ॥**
**वातादयः प्रकुप्यन्ति शिरस्यस्रं प्रदुष्यति ।**
**ततः शिरसि जायन्ते रोगा विविधलक्षणाः ॥११॥**

विस्तरत इति शृण्वित्यनेन संबध्यते । संधारणादिति वेगसंधारणात्, हरितमार्द्रकादि, अतीति पूर्वेण परेण च शीताम्बुसेवनादित्यनेन संबध्यते । दुष्टाऽऽमात् किंवा उष्णाऽऽमादिति पाठः, तत्रोष्णाचामाचेत्यर्थः । देशकालविपर्ययादित्यत्र देशविपर्यय उपसर्गगृहीतत्वं देशस्य; अस्रं च प्रदुष्यतीत्यभिदधानः सर्वशिरोरोगे रक्तदुष्टिं दर्शयति ॥ ८–११ ॥

**प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च ।**
**यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ॥ १२ ॥**

प्राणा इत्यादिनाऽङ्गेषु शिरःप्राधान्यं दर्शयन् प्रकृतशिरोरोगाणामेवात्यहितत्वं दर्शयति । तेन नोत्सूत्रं शिरःप्राधान्याभिधानम् । श्रिता इव श्रिताः शिरउपघाते उपघातात् । उपरिष्टादङ्गमुत्तमाङ्गम् ॥ १२ ॥

**अर्धावभेदको वा स्यात्सर्वं वा रुज्यते शिरः ।**
**प्रतिश्यायमुखनासाक्षिकर्णरोगाः शिरोभ्रमः ॥ १३ ॥**

प्रकृतान् शिरोरोगानाह—अर्धेत्यादिना क्रिमिसंभवा इत्यनेन। एतच्च "जायन्ते रोगा विविधलक्षणाः" इत्यस्य विवरणम्॥१३॥

१ हुताशवेपचनमिति वा पाठः.

१ द्रुस्वेदादिति पाठः. २ शिरस्यस्रं च दूष्यतीति पाठः.

अर्दितं शिरसः कम्पो गलमन्याहनुग्रहः।
विविधाश्चापरे रोगा वातादिक्रिमिसंभवाः ॥ १४ ॥
पृथग्दृष्टास्तु ये पंच संग्रहे परमर्षिभिः।
शिरोगदांस्तान् शृणु मे यथास्वैर्हेतुलक्षणैः ॥ १५ ॥
उच्चैर्भाष्यातिभाष्येभ्यस्तीक्ष्णपानात्प्रजागरात्।
शीतमारुतसंस्पर्शाद्व्यवायाद्वेगनिग्रहात् ॥ १६ ॥
उपवासादभीघाताद्विरेकाद्वमनादपि।
वाष्पशोकभयत्रासाद्भारमार्गातिकर्षणात् ॥ १७ ॥
शिरोगताः शिरा वृद्धो वायुराविश्य कुप्यति।
ततः शूलं महत्तस्य वातात्समुपजायते ॥ १८ ॥
निस्तुद्येते भृशं शङ्खौ घाटा संभिद्यते तथा।
सभ्रूमध्यं ललाटं च तपतीवातिवेदनम् ॥ १९ ॥
वध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी।
घूर्णतीव शिरः सर्वं संधिभ्य इव मुच्यते ॥ २० ॥
स्फुरत्यतिशिराजालं स्तभ्यते च शिरोधरा।
स्निग्धोष्णमुपशेते च शिरोरोगेऽनिलात्मके ॥ २१ ॥

शिरोगतत्वेन नासादिरोगेष्वपि प्राप्तेष्वपि तान् विहायै-वाष्टोदरीये प्रोक्तांस्तानेव शिरःशूललक्षणात्रोगान्प्रपञ्चेन वक्तु-माह—पृथगित्यादि। संग्रहेऽष्टोदरीये, तेन नासिकाद-योऽत्र प्रकरणे शिरोरोगशब्देनोच्यन्ते। शिरोरोगशब्दस्य शूल एव रुजाकरे वृत्तत्वात्। तीक्ष्णपानं तीक्ष्णमद्यपानं, किंवा, तीक्ष्णं मरिचादि। वध्येत इव वध्येते इत्यर्थः पीडायुक्तत्वेन ॥ १४–२१ ॥

कट्वम्ललवणक्षारमद्यक्रोधातपानलैः।
पित्तं शिरसि संदुष्टं शिरोरोगाय कल्पते ॥ २२ ॥
दह्यते रुज्यते तेन शिरः शीतं सुप्रूयते।
दह्येते चक्षुषी तृष्णा भ्रमः स्वेदश्च जायते ॥ २३ ॥
आस्यासुखैः स्वप्नसुखैर्गुरुस्निग्धातिभोजनैः।
श्लेष्मा शिरसि संदुष्टः शिरोरोगाय कल्पते ॥ २४ ॥
शिरोमन्दरुजं तेन सुप्तंस्तिमितभारिकम्।
भवत्युत्पद्यते तन्द्रा तथालस्यमरोचकम् ॥ २५ ॥
वाताच्छूलं भ्रमः कंपः पित्ताद्दाहो मदस्तृषा।
कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे ॥ २६ ॥

शीतं सुप्रूयते शीतमिच्छन्ति। स्वप्नसुखमनुचितदिवास्व-प्नेन ज्ञेयं, सुप्तमिव सुप्तं प्रबोधरहितत्वेन। भाराक्रान्तमिव भारिकम् ॥ २२–२६ ॥

तिलक्षीरगुडाजीर्णपूतिसङ्कीर्णभोजनात्।
क्लेदोऽसृक्कफमांसानां दोषलस्योपजायते ॥ २७ ॥
ततः शिरसि संक्लेदात् क्रिमयः पापकर्मणः।
जनयन्ति शिरोरोगं जाता बीभत्सलक्षणम् ॥ २८ ॥
व्यधच्छेदरुजाकण्डुशोफदौर्गन्ध्यदुःखितम्।
क्रिमिरोगातुरं विद्यात् क्रिमीणां दर्शनेन च ॥ २९ ॥

संकीर्णभोजनं विरुद्धाहारः। दोषलस्य बहुदोषस्य। पाप-कर्मण इत्यनेनाधर्मवत एवायमतिदुःखक्रिमिरोगो भवतीति दर्शयति–बीभत्सलक्षणमिति। घ्राणादिभ्यः पूयादिप्रवृत्तिः ॥ २७–२९ ॥

शोकोपवासव्यायामरूक्षशुष्काल्पभोजनैः।
वायुराविश्य हृदयं जनयत्युत्तमां रुजम् ॥ ३० ॥
वेपथुर्वेष्टनं स्तंभः प्रमोहः शून्यता दरः।
हृदि वातातुरे रूपं जीर्णे चात्यर्थवेदना ॥ ३१ ॥
उष्णाम्ललवणक्षारकटुकाजीर्णभोजनैः।
मद्यक्रोधातपैश्चाशु हृदि पित्तं प्रकुप्यति ॥ ३२ ॥
हृद्दाहस्तिक्तता वक्त्रे तिक्ताम्लोद्गिरणं क्रमः।
तृष्णा मूर्च्छा भ्रमः स्वेदः पित्तहृद्रोगलक्षणम् ॥ ३३ ॥
अत्यादानं गुरुस्निग्धमचिन्तनमचेष्टनम्।
निद्रासुखं चाभ्यधिकं कफहृद्रोगकारणम् ॥ ३४ ॥
हृदयं कफहृद्रोगे सुप्तंस्तिमितभारिकम्।
तन्द्रारुचिपरीतस्य भवत्यश्मावृतं यथा ॥ ३५ ॥
हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः।
त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते ॥ ३६ ॥
तिलक्षीरगुडादीनि ग्रन्थिस्तस्योपजायते।
मर्मैकदेशे संक्लेदं रसश्चास्योपगच्छति ॥ ३७ ॥
संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः।
मर्मैकदेशे संजाताः सर्पन्तो भक्षयन्ति च ॥ ३८ ॥
तुद्यमानं स हृदयं सूचीभिरिव मन्यते।
छिद्यमानं यथा शस्त्रैर्जातकण्डूमहारुजम् ॥ ३९ ॥
हृद्रोगं क्रिमिजं त्वेतैर्लिङ्गैर्बुद्ध्वा सुदारुणम्।
त्वरेत जेतुं तं विद्वान्विकारं शीघ्रकारिणम् ॥ ४० ॥

शोकोपवासेत्यादि हृद्रोगलक्षणम्। वेष्टनमुद्वेष्टनमिव। दरो-दरदरिका। अचिन्तनं स्वल्पचिन्तनम्। अश्मावृतमश्मा-क्रान्तम्। ग्रन्थिरिव ग्रन्थिः, स च रसदोषकृतः। मर्मैकदेशे हृदयैकदेशे। द्वितीयं मर्मेतिपदं कर्मतापन्नम् ॥ ३०–४० ॥

द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्।
समैश्चैको विकारास्ते सन्निपातास्त्रयोदश ॥ ४१ ॥
संसर्गे नव षट् तेभ्य एकवृद्ध्या समैस्त्रयः।
पृथक् त्रयः स्युस्तैर्वृद्धैर्व्याधयः पञ्चविंशतिः ॥४२॥

१ शिरोगतां वै धमनीं वायुराविश्य कुप्यतीति वा पाठः। २ घाटा ग्रीवायाः पश्चाद्भागे, घाड इति यस्यापभ्रंशः। ३ वृ-त्तत्वात् प्रसिद्धत्वात्। ४ भ्रुवोर्मध्यं ललाटं च पततीवातिवेदनमिति। ५ सुप्तिस्तिमितभारिकमिति वा पाठः

१ छेदव्यधनरुक्कण्डशोफदौर्गन्ध्यदुःखितमिति वा पाठः। २ शून्यता श्रम इति वा पाठः। ३ स्तंभस्तिमितकारकमिति वा पाठः।

**यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ।**
**वृद्धिक्षयकृतश्चान्यो विकल्प उपदेक्ष्यते ॥ ४३ ॥**
**वृद्धिरेकस्य समता चैकस्यैकस्य संक्षयः ।**
**द्वन्द्ववृद्धिः क्षयश्चैकस्यैकवृद्धिर्द्वयोः क्षयः ॥ ४४ ॥**

"कति चाप्यनिलादीनाम्" इत्याद्युक्तस्योत्तरं द्युल्वणैरित्यादि ।—हीनमध्याधिकैरिति वृद्धवृद्धतरवृद्धतमैः । संसर्गे नवेतिच्छेदः । अस्यैव विवरणं "षट् तेभ्यः" इत्यादि । समैस्त्रय इति वृद्धैः समैः । वृद्धिक्षयकृत इत्यस्य विवरणं वृद्धिरेकस्येत्यादि । अत्र च यद्यपि समतापि वृद्धिक्षयविकल्पे पठ्यते, तथापि समतायां स्वातन्त्र्येण विकाराकर्तृत्वात् वृद्धिक्षयकृत इत्युक्तम् । वृद्धिरेकस्य समता चैकस्य संक्षय इत्यनेन षड् विकाराः । द्वन्द्ववृद्धिः क्षयश्चैकस्येत्यनेन त्रयः । एकवृद्धिर्द्वयोः क्षयस्तेन त्रयः । एवं द्विषष्टिप्रकारा भवन्ति ॥ ४१-४४ ॥

**प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये ।**
**स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ ४५ ॥**
**तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः ।**
**गात्रदेशे भवत्यस्य श्रमो दौर्बल्यमेव च ॥ ४६ ॥**
**साम्ये स्थितं कफं वायुः क्षीणे पित्ते यदा बली ।**
**कर्षेत्कुर्यात्तदा शूलं सशैत्यस्तम्भगौरवम् ॥ ४७ ॥**
**यदानिलं प्रकृतिगं पित्तं कफपरिक्षये ।**
**संरुणद्धि तदा दाहः शूलं चास्योपजायते ॥ ४८ ॥**
**श्लेष्माणं हि समं पित्तं यदा वातपरिक्षये ।**
**निपीडयेत्तदा कुर्यात्सतन्द्रागौरवं ज्वरम् ॥ ४९ ॥**
**प्रवृद्धो हि यदा श्लेष्मा पित्ते क्षीणे समीरणम्[१] ।**
**रुन्ध्यात्तदा प्रकुर्वीत शीतकं गौरवं रुजम् ॥ ५० ॥**
**समीरणे परिक्षीणे कफः पित्तं समत्वगम् ।**
**कुर्वीत सन्निरुन्धानो मृद्वग्नित्वं शिरोग्रहम् ॥ ५१ ॥**
**निद्रां तन्द्रां प्रलापं च हृद्रोगं गात्रगौरवम् ।**
**नखादीनां च पीतत्वं ष्ठीवनं कफपित्तयोः ॥ ५२ ॥**

वृद्धिरेकस्येत्यादेरुदाहरणम्—"प्रकृतिस्थं यदा पित्तम्" इत्यादि । अत्र केचिदेतदेव परमुदाहरणं दृष्टान्तार्थं पठन्ति, शेषोदाहरणं तु कृत्स्ने तन्त्रे बोद्धव्यम् । केचित्तु,—वृद्धिक्षयविकल्पस्य दुर्बोधत्वेन सर्वेषामेव द्वादशानामपि विकल्पानामाचार्येण लक्षणं कृतमिति कृत्वा सर्वमेव पठन्ति । ननु प्रकृतिस्थे पित्ते कथं तदा दाहश्चेति सङ्गतं भवतु, न हि प्रकृतिस्थो दोषो विकारकारी, न च वायोर्दाहः संभवति । उच्यते—यत्र यत्रेति वचनात् । यत्र कुपितेन वायुना पित्तं नीतं, तत्र शरीरावयवे प्रकृतिमानस्थितमपि पित्तं वृद्धमेव । यतस्तस्मिन् प्रदेशे तावान् पित्तसंबन्ध उचितो न भवत्येवेत्यधिकेन तत्र पित्तेन दाह उपपन्न एव, एवमन्यत्रापि प्रकृतिस्थस्यापि दोषस्य विकारे व्याख्येयम् । अन्ये तु ब्रुवते—प्रकृतिस्थानामपि दोषाणां दुष्टदोषसंबन्धाद्विकारकारित्वं स्यात्, यथा—रक्तादीनाम् ॥ ४५-५२ ॥

**हीनवातस्य तु कफः पित्तेन सहितश्चरन् ।**
**करोत्यरोचकाऽपाकौ सदनं गौरवं तथा ॥ ५३ ॥**
**हृल्लासमास्यस्रवणं दूयनं पाण्डुतां मदम् ।**
**विरेकस्य हि वैषम्यं वैषम्यमनलस्य च ॥ ५४ ॥**
**क्षीणपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः ।**
**स्तंभं शैत्यं च तोदं च जनयत्यनवस्थितम् ॥ ५५ ॥**
**गौरवं मृदुतामग्नेर्भक्ताऽश्रद्धां प्रवेपनम्[१] ।**
**नखादीनां च शुक्लत्वं गात्रपारुष्यमेव च ॥ ५६ ॥**
**हीने कफे मारुतस्तु पित्तं तु कुपितं द्वयम् ।**
**करोति यानि लिङ्गानि शृणु तानि समासतः ॥५७॥**
**भ्रममुद्वेष्टनं तोदं दाहं स्फोटनमुत्तमम् ।**
**अङ्गमर्दं परीशोषं दूयनं धूपनं तथा ॥ ५८ ॥**
**वातपित्तक्षये श्लेष्मा स्रोतांस्यपि दधद्भृशम् ।**
**चेष्टाप्रणाशं मूर्च्छां च वाक्सङ्गं च करोति हि ॥५९॥**
**श्लेष्मवातक्षये पित्तं देहौजः स्रंसयञ्चरत् ।**
**ग्लानिमिन्द्रियदौर्बल्यं तृष्णां मूर्च्छां क्रियाक्षयम् ६०**
**पित्तश्लेष्मक्षये वायुर्मर्माण्यतिनिपीडयन् ।**
**प्रणाशयति संज्ञां च वेपयत्यथवा नरम्[२] ॥ ६१ ॥**

हीनवातस्येत्यादि द्वन्द्ववृद्धिः । क्षयश्चैकस्येत्यस्योदाहरणम् । देहौजो देहसारः, किंवा देहश्च ओजश्च देहौजः ॥५३-६१॥

**दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम् ।**
**क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म कुर्वते ॥६२॥**

दोषाणां वृद्धिसाम्यक्षयलक्षणानि पृथगाह—दोषा इत्यादि । स्वं लिङ्गमिति वैकारिकं, यथाबलमिति । अतिवृद्धैरतिवृद्धं मध्यवृद्धैर्मध्यवृद्धमित्यादि । लिङ्गं स्वं जहतीत्यनेन क्षीणानां प्रकृतिलिङ्गक्षयव्यतिरिक्तं विकारकर्तृत्वं नास्तीति दर्शयति । यतः, वृद्धा उन्मार्गगामिनो दोषा दूष्यं दूषयन्तो ज्वरादीन् कुर्वन्ति, न क्षीणाः, स्वयमेव दुःस्थितत्वात् । स्वं कर्मेति प्राकृतं कर्म । एते च द्विषष्टिर्भेदा आविष्कृततमत्वेनोक्ताः । तेनैकदोषक्षये द्विदोषवृद्धौ वृद्धवृद्धतरभेदादिभ्योऽधिकत्वं नोद्भावनीयम् । ननु भवत्येवं संख्या, यदि सन्निपातो दोषाणां स्यात्, स तु न भवितुमर्हति, यतः वातादीनां परस्परं विरुद्धाः सन्ति गुणाः, विरुद्धगुणानां तु परस्परोपघातो भवति, यथा—वह्नितोययोः । नैवं, विरोधो हि भावानां कार्योन्नेयः, नान्यतो दृष्टमात्रेण कल्पयितुं पार्यते ।

१ समैस्त्रय इति समैरिव वृद्धैस्त्रय इत्यर्थः; तद्यथा समवृद्धवातपित्ते इत्येकः, समवृद्धवातकफाविति द्वितीयः, समवृद्धपित्तकफाविति तृतीयः । शि: । २ प्रकृतिस्थं वायुमित्यर्थः । ३ प्रकृतिस्थं यदा पित्तं श्लेष्मा मारुतसंक्षये । संनिरुध्यात्तदा कुर्यान्मृद्वग्निं च शिरोग्रहमिति समार्थोऽन्यः पाठः ।

१ स्फुटनवेपने इति वा पाठः । २ वेपयत्यथ मानवमिति वा पाठः ।

यतः, अन्यत्र तोयदहनयोर्भेद उपलब्धः, तत् किं पाञ्चभौतिकद्रव्यारंभेऽपि तयोर्विरोधात्पाञ्चभौतिकं द्रव्यं न स्यात्, तोयाग्निगुणातिरेकाद्वाऽम्लरसो न स्यात् । तस्मादनुपलब्धत्वाद्दोषसंसर्गे विरोधस्य स्वभावपर्यनुयोगो न युज्यते । अथ मन्यसे—एवं विरुद्धगुणानामपि दोषाणामविरोधे "विरुद्धगुणसन्निपाते भूयसाऽल्पमवजीयते" इति, तथा "हासहेतुर्विशेषस्तु" इति वचने तर्हि निरर्थके, न, अनयोः प्रभावात्प्रतिपादितविषयव्यतिरेके चरितार्थत्वात् । प्रभावश्च तयोर्विरोधको भवत्येव । यथा त्रिदोषकरनिकुचगता गुणाः सामान्दोषान्कुर्वते परं, न तु विरुद्धत्वेन दोषहरणं कुर्वते, त्रिदोषकर्तृत्वप्रभावात् । तथा, आमलकेऽम्लत्वं वातं हन्ति, माधुर्यशैत्ये पित्तं, श्लेष्माणं च कटुत्वतिक्तत्वे, अम्लं कषायशैत्याभिभूतं वातं न निहन्ति, माधुर्यशैत्ये वाऽम्लत्वाभिभूते पित्तं न जयत एवमादि । तस्माद्दोषाणां प्रभावोऽयं दृष्टत्वादवधार्यते, यत्र ते परस्परमुपघ्नन्ति । एवंभूतप्रभावत्वे तु तेषामदृष्टमेव कारणं, प्राणिनां दुःखजनकेन ह्यदृष्टेन तेऽविरोधेन निर्वेद्यन्ते, अतएव वक्ष्यति "विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहजसात्म्यत्वाद्घोरं विषमहीनिव"। सहजं दैववशात्स्वाभाविकं सात्म्यत्वम् । अनेन व्याख्यानेन "यथा दोषा अन्योन्यं नोपघ्नन्ति, तथा रसरक्तादीनपि नोपहन्युः" इत्यादि यदुच्यते कैश्चित्तत्सर्वं तन्निरस्तम् । ननु, "कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि संततं निष्प्रत्यनीकं कुरुते" इति चिकित्सिते वक्ष्यति, तेन, प्रकृतिर्दोषस्य प्रतिपक्षा भवतीत्युक्तम् । प्रकृतिश्च जन्मप्रभृतिवृद्धो वातादिरुच्यते । "दोषानुशायिता ह्येषां देहप्रकृतिरुच्यते" इत्यादिवचनात् । तदयं प्राकृतेन दोषेण दोषस्य विरोधः कथं तर्ह्युपपन्नः । उच्यते—तत्र प्रकृतेः प्रत्यनीकता इत्यर्थगुणत्वेन मन्तव्या । समानां हि प्रकृतिं प्राप्य दोषः प्रवृद्धबलो भवति, असमानां तु प्राप्य तथा बलवान्न स्यात्, न समानया प्रकृत्या हन्यते । एवमन्यत्राप्युन्नेयम्, अतिवृद्धेन वायुना श्लेष्मणो दुर्बलस्य दुष्टत्वाद्विरोधो भवत्येव, क्वचिन्नैतावता संसर्गसन्निपातासंभवः॥६२॥

**वातादीनां रसादीनां मलानामोजसस्तथा ।**
**क्षयास्तत्रानिलादीनामुक्तं संक्षीणलक्षणम् ॥ ६३ ॥**
**घट्टते सहते शब्दं नोच्चैर्द्रवति शूल्यते ।**
**हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥ ६४ ॥**
**परुषा स्फुटिता म्लाना त्वग्रूक्षा रक्तसंक्षये ।**
**मांसक्षये विशेषेण स्फिग्ग्रीवोदरशुष्कता ॥ ६५ ॥**

संप्रत्यष्टादशक्षयानाह—वातादीनामित्यादि । अत्र मलानामित्यनेन मूत्रपुरीषयोः पंचेन्द्रियमलानां च ग्रहणम् । विशेषेणेतिवचनादन्यगात्राणामपि शुष्कता लभ्यते ॥ ६३–६५ ॥

१ द्रवतीति हृदयं धुगधुगिति करोति । शि० । २ कुर्वते जनयन्ति वर्धयन्तीति यावत् ।

**सन्धीनां स्फुटनं ग्लानिरक्ष्णोरायास एव च ।**
**लक्षणं मेदसि क्षीणे तनुत्वं चोदरस्य च ॥ ६६ ॥**
**केशलोमनखश्मश्रुद्विजप्रपतनं श्रमः ।**
**ज्ञेयमस्थिक्षये रूपं सन्धिशैथिल्यमेव च ॥ ६७ ॥**
**शीर्यन्त इव चास्थीनि दुर्बलानि लघूनि च ।**
**प्रततं वातरोगाणि क्षीणे मज्जनि देहिनाम् ॥ ६८ ॥**
**दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं श्रमः ।**
**क्लैब्यं शुक्राऽविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥६९॥**
**क्षीणे शकृति चान्त्राणि पीडयन्निव मारुतः ।**
**रूक्षस्योन्नमयन्कुक्षिं तिर्यगूर्ध्वं च गच्छति ॥ ७० ॥**
**मूत्रक्षये मूत्रकृच्छ्रं मूत्रवैवर्ण्यमेव च ।**
**पिपासा बाधते चास्य मुखं च परिशुष्यति ॥ ७१ ॥**
**मलायनानि चान्यानि शून्यानि च लघूनि च ।**
**विशुष्काणि च लक्ष्यन्ते यथास्वं मलसंक्षये ॥ ७२॥**

सन्धीनामित्यादि मेदःक्षयलक्षणम्, केशेत्यादि अस्थिक्षयस्य, बाधते चास्येति कर्मणि शेषलक्षणा षष्ठी । मलायनानीत्यनेन पंचेन्द्रियाधिष्ठानानां मुखनासिकाचक्षुःकर्णानां त्वगिन्द्रियाधिष्ठानभूतानां च लोमकूपप्रजननानां यथास्वं मलायनानि गृह्यन्ते । यदुक्तं जतूकर्णे "दोषाणां धातूनां ओजोमूत्रशकृदिन्द्रियमलायनानामष्टादशक्षयास्ते लक्ष्याः स्वगुणक्रियानाशात्" इति ॥ ६६–७२ ॥

**बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।**
**दुश्छायो दुर्मना रूक्षः क्षामश्चैवोजसः क्षये ॥७३ ॥**
**हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् ।**
**ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥७४॥**
**प्रथमं जायते ह्योजः शरीरेऽस्मिञ्छरीरिणाम् ।**
**सर्पिर्वर्णं मधुरसं लाजगन्धि प्रजायते ॥ ७५ ॥**

ओजःक्षयलक्षणमाह—बिभेतीत्यादि । दुर्मना मनोबलविहीनः । ओजसो दुर्ज्ञेयत्वेन लक्षणमाह—हृदीत्यादि । शुद्धमिति शुक्लम्, रक्तमीषदिति किंचिद्रक्तम्, सपीतकमिति ईषत्पीतकम्, तेन शुक्लवर्णमोजः, रक्तपीतौ तु वर्णावत्रानुगतौ । किंवा, ईषदित्यल्पप्रमाणम्, तेन अष्टबिन्दुकमोज इति दर्शयति । यदुक्तं तन्त्रान्तरे । "प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रयाः"इति। एतच्चाष्टबिन्दुकं परमोजो ज्ञेयम्,अर्धाञ्जलिपरिमाणं तु यदोजस्तदप्रधानम् । यच्छारीरे वक्ष्यति । "तावच्चैव श्लेष्मण ओजसश्च प्रमाण"मित्यनेन । तस्माद्द्विविधमिहौजः । अतएवार्थे दशमहामूलीये वक्ष्यति । "तत्परस्यौजसः स्थानम्" इति । परस्य श्रेष्ठस्याष्टबिन्दुकस्येत्यर्थः । इह च क्षयलक्षणमर्धाञ्जलि-

१ तनुत्वं तोदनं त्वच इति वा पाठः । २ विशुष्काणि च लक्ष्यंते क्षीणे मज्जनि निर्दिशेदिति वा पाठः । ३ भ्रमरैः फलपुष्पेभ्यो यथा संभ्रियते मधु । तद्वदोजःस्वमर्मभ्यो ( शरीरेभ्यो ) गुणैः संभ्रियते सदेति पाठः ।

मानस्यैव ज्ञेयम्, अष्टबिन्दुकस्य त्ववयवनाशेऽपि मृत्युर्भवतीति "हृदि" इत्यादिना ग्रन्थेन दर्शयति । एतच्चौजः सर्वधातुसमुदायरूपम्, तेन, सप्तधातुष्वेवावरुद्धमिति नाष्टमधातुलादिप्रसक्तिः, अतएव सुश्रुतेऽप्युक्तम्—"रसादीनां शुक्रान्तानां तत्परं तेजस्तत्खल्वोजः" इति । अन्यत्राप्युक्तम् । "भ्रमरैः फलपुष्पेभ्यो यथा संह्रियते मधु । तद्वदोजः शरीरेभ्यो गुणैः संह्रियते नृणाम्" इति । "प्रथमे जायते" इत्यादिपाठस्तु नातिप्रसिद्धः । एतेऽष्टादश क्षया आविष्कृततमत्वेनोक्ताः । तेन, उदकक्षयस्वरक्षयाद्यनभिधानं नोद्भावनीयम्" उक्तं हि । "स्वरक्षयमुरोरोगम्" इति । तथोदकक्षयलक्षणं यथा । "ताल्वोष्ठकण्ठक्लोमसंशोषं पिपासां च दृष्ट्वा उदकवहान्यस्य दुष्टानीति जानीयात्" इति ॥ ७३–७५ ॥

**व्यायामोऽनशनं चिन्ता रूक्षाल्पप्रमिताशनम् ।**
**वातातपौ भयं शोको रूक्षपानं प्रजागरः ॥ ७६ ॥**
**कफशोणितशुक्राणां मलानां चातिवर्तनम् ।**
**कालो भूतोपघातश्च ज्ञातव्याः क्षयहेतवः ॥ ७७ ॥**

सामान्येन क्षयाणां हेतुमाह—व्यायाम इत्यादि । प्रमिताशनं एकरसाभ्यासः । अतिवर्तनमतिप्रवृत्तिर्बहिर्गमनमिति यावत् । कालो वार्धक्यमादानं च । भूतोपघातः पिशाचाद्युपघातः । अत्र वातक्षयहेतुर्नोक्तो विलक्षणत्वात्, स चाचिन्तनदिवास्वपनादिर्ज्ञेयः । किंवा, अनशनात् किट्टाभावः, ततश्च किट्टरूपस्य वातस्याप्यनुत्पादात्क्षयो ज्ञेयः ॥ ७६–७७ ॥

**गुरुस्निग्धाम्ललवणं भजतामतिमात्रशः ।**
**नवमन्नं च पानं च निद्रामास्यासुखानि च ॥ ७८ ॥**
**त्यक्तव्यायामचिन्तानां संशोधनमकुर्वताम् ।**
**श्लेष्मा पित्तं च मेदश्च मांसं चातिप्रवर्धते ॥ ७९ ॥**
**तैरावृतगतिर्वायुरोज आदाय गच्छति ।**
**यदा बस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्तते ॥ ८० ॥**
**समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः ।**
**दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः ॥ ८१ ॥**
**उपेक्षयास्य जायन्ते पिडकाः सप्त दारुणाः ।**
**मांसलेष्ववकाशेषु मर्मस्वपि च संधिषु ॥ ८२ ॥**
**शराविका कच्छपिका जालिनी सर्षपी तथा ।**
**अलजी विनताख्या च विद्रधी चेति सप्तमी ॥८३॥**
**अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।**
**शराविका स्यात्पिडका शरावाकृतिसंस्थिता ॥८४॥**
**अवगाढार्तिनिस्तोदा महावास्तुपरिग्रहा ।**
**श्लक्ष्णा कच्छपपृष्ठाभा पिडका कच्छपी मता ॥८५॥**
**स्तब्धा शिराजालवती स्निग्धस्रावा महाशया ।**
**रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥८६॥**

१ तैरावृतः प्रसादं च गृहीत्वायाति मारुत इति वा पाठः ।
२ अवगाढातिनिस्तोदेति वा पाठः ।

**पिडका नातिमहती क्षिप्रपाका महारुजा ।**
**सर्षपी सर्षपाभाभिः पिडकाभिश्चिता भवेत् ॥८७॥**
**दहति त्वचमुत्थाने तृष्णामोहज्वरप्रदा ।**
**विसर्पत्यनिशं दुःखाद्दहत्यग्निरिवालजी ॥ ८८ ॥**
**अवगाढरुजाक्लेदा पृष्ठे वाप्युदरेऽपि वा ।**
**महती विनता नीला पिडका विनता मता ॥ ८९ ॥**

संप्रति सप्तपिडका वक्तव्याः, अतस्तासां प्रधानहेतुत्वेन प्रमेहांस्तावन्निदानादिक्रमेणाह—गुर्वित्यादि । नवं पानमिति नवं मद्यम् । निद्रामास्यासुखानि चेलत्रान्ते भजतामिति शेषः । ओजः प्रसादो धातूनामिति यावत् । कृच्छ्र इति कृच्छ्रसाध्यः । उपेक्षयाऽचिकित्सया । शराविकादिसंज्ञान्वयो विवरणे स्फुटः । अलजीसंज्ञा रूढा । एताश्च प्राधान्यादुक्ताः । तेन सुश्रुतेऽपि पिडकाधिक्यमुक्तं यत्, तन्न विरोधि । शिराजालं शिरासमूहः । चिताऽधिष्ठिता ॥ ७८–८९ ॥

**विद्रधिं द्विविधामाहुर्बाह्यामाभ्यन्तरीं तथा ।**
**बाह्या त्वक्स्नायुमांसोत्था कण्डराभा महारुजा॥९०॥**
**शीतकान्नविदाह्युष्णरूक्षशुष्कातिभोजनात् ।**
**विरुद्धाजीर्णसंक्लिष्टविषमासात्म्यभोजनात् ॥ ९१ ॥**
**व्यापन्नबहुमद्यत्वाद्वेगसन्धारणाच्छ्रमात् ।**
**जिह्मव्यायामशयनादतिभाराध्वमैथुनात् ॥ ९२ ॥**
**अन्तःशरीरे मांसासृगाविशन्ति यदा मलाः ।**
**तदा संजायते ग्रन्थिर्गम्भीरस्थः सुदारुणः ॥ ९३ ॥**
**हृदये क्लोम्नि यकृति प्लीह्नि कुक्षौ च वृक्कयोः ।**
**नाभ्यां वंक्षणयोर्वापि वस्तौ वा तीव्रवेदनः ॥ ९४ ॥**
**दुष्टरक्तातिमात्रत्वात्स वै शीघ्रं विदह्यते ।**
**ततः शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते ॥ ९५ ॥**
**व्यधच्छेदभ्रमानाहशब्दस्फुरणसर्पणैः ।**
**वातिकीं पैत्तिकीं तृष्णादाहमोहमदज्वरैः ॥ ९६ ॥**
**जृम्भोत्क्लेशारुचिस्तम्भशीतकैः श्लैष्मिकीं विदुः ।**
**सर्वासु च महच्छूलं विद्रधीषूपजायते ॥ ९७ ॥**
**तप्तैः शस्त्रैर्यथा मथ्येतोल्मुकैरिव दह्यते ।**
**विद्रधी व्यम्लतां याता वृश्चिकैरिव दश्यते ॥ ९८ ॥**
**तनुरूक्षारुणस्रावं फेनिलं वातविद्रधी ।**
**तिलमाषकुलत्थोदसन्निभं पित्तविद्रधी ॥ ९९ ॥**
**श्लैष्मिकी स्रवति श्वेतं बहलं पिच्छिलं बहु ।**
**लक्षणं सर्वमेवैतद्भजते सान्निपातिकी ॥ १०० ॥**

**अथासां विद्रधीनां साध्यासाध्यविशेषज्ञानार्थं स्थानकृतं लिङ्गविशेषमुपदेक्ष्यामः—तत्र प्रधानमर्मजायां विद्रध्यां हृद्घट्टनतमकप्रमोहकासश्वासाः,**

१ कडारामेति वा पाठः। कडारेति कपिशवर्णा। कडारः कपिशः पिंग इत्यमरः । २ शस्त्राऽऽभिर्मथ्यत इव चोल्मुकैरिव दह्यते इति वा पाठः। उल्मुकमङ्गारम् ।

क्लोमजायां पिपासा मुखशोषगलग्रहाः, यकृज्जायां श्वासः, प्लीहजायामुच्छ्वासोपरोधः, कुक्षिजायां कुक्षिपार्श्वान्तरांसशूलम्, वृक्कजायां पृष्ठकटिग्रहः, नाभिजायां हिक्का, वंक्षणजायां सक्थिसादः, वस्तिजायां कृच्छ्रपूतिमूत्रवर्चस्त्वं चेति ।

पक्वप्रभिन्नासूर्ध्वजासु मुखात्स्रावः स्रवति, अधोजासु गुदात्, उभयतस्तु नाभिजासु ।

तासां हृन्नाभिवस्तिजाः परिपक्वा सान्निपातिकी च मरणाय । अवशिष्टाः पुनः कुशलमाशुप्रतिकारिणं चिकित्सकमासाद्योपशाम्यन्ति । तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्पविद्युदग्नितुल्यां स्नेहविरेचनैराश्वेवोपक्रमेत्सर्वशो गुल्मवच्चेति ॥ १०१ ॥

विद्रधिं द्विविधामित्यनेनाभ्यन्तरविद्रधेरपि विद्रधित्वेन पिडकानां सप्तत्वेऽविरोध इति दर्शयति । कण्डराभा स्थूलस्नाय्वाकारा । अन्तर्विद्रधेर्गरीयस्त्वेन निदानान्याह—शीतकेत्यादि । संक्लिष्टं दोषलम्, व्यापन्नं च बहु च मद्यमुपयुङ्क्ते यः स व्यापन्नबहुमद्यः । अन्तःशरीर इति कोष्ठे । मला दोषाः । ग्रन्थिरिव ग्रन्थिः । स इति ग्रन्थिः । व्यधादयो व्यथाप्रकाराः । शीतमेव शीतकम् । व्यम्लतां याता विदाहं प्राप्ता । तमकः श्वासभेदः । कुक्षिपार्श्वान्तरांसशूलमिति कुक्षिपार्श्वान्तरांसेषु शूलम् । हृन्नाभिवस्तिजासु सान्निपातिकीं पृथक्पठन्, सान्निपातिकीं पक्वामपक्वां चासाध्यां दर्शयति । शस्त्रादिदृष्टान्तत्रयाच्छस्त्रवन्मर्मच्छेदकत्वं सर्पवदाशुसंज्ञाहारित्वं, विद्युदग्निवदाशुमारकत्वं ज्ञेयम् ॥ ९०–१०१ ॥

भवन्ति चात्र ।

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ।
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहाः ॥ १०२ ॥
शराविका कच्छपिका जालिनी चेति दुःसहाः ।
जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसाम् ॥१०३॥
सर्षपी चालजी चैव विनता विद्रधी च या ।
साध्याः पित्तोल्बणास्ता हि संभवन्त्यल्पमेदसाम् ॥
मर्मस्वंसे गुदे पाण्योः स्तने सन्धिषु पादयोः ।
जायन्ते यस्य पिडिकाः स प्रमेही न जीवति ॥१०५

प्रमेहं विनाप्युक्तपिडकासंभवं दर्शयति—विनेत्यादि । एतेन च पिडकानां माधुमेहिकत्वं यत्पूर्वमुक्तं तत्प्रायिकत्वेन ज्ञेयं वास्तु । स्थानं विद्रधी चेति बाह्यविद्रधी ॥ १०२–१०५

तथान्याः पिडकाः सन्ति रक्तपीतासितारुणाः ।
पाण्डुराः पाण्डुवर्णाश्च भस्माभा मेचकप्रभाः॥१०६॥

मृद्व्यश्च कठिनाश्चान्याः स्थूलाः सूक्ष्मास्तथापराः ।
मन्दवेगा महावेगाः स्वल्पशूला महारुजः ॥ १०७ ॥
ता बुद्ध्वा मारुतादीनां यथास्वैर्हेतुलक्षणैः ।
ब्रूयादुपचरेच्चाशु प्रागुपद्रवदर्शनात् ॥ १०८ ॥
तृट्श्वासमांससंकोथमोहहिक्कामदज्वराः ।
वीसर्पमर्मसंरोधाः पिडकानामुपद्रवाः ॥ १०९ ॥

पिडकाप्रसङ्गेनान्यासामपि पिडकानामाविष्कृतानां लक्षणं ब्रूते—तथाऽन्या इत्यादि । पाण्डुरा धूसराः, पाण्डुवर्णास्तु रूक्षपाण्डुवर्णा ज्ञेयाः । मेचकप्रभाः स्निग्धकृष्णवर्णाः । उपचरेच्चेति मारुतादीनां भेषजैरित्यर्थाद्भवति । प्रागुपद्रवदर्शनादित्यनेन, उपद्रवयुक्ता पिडकाऽसाध्येति दर्शयति । संकोथः पूतिभावः ॥ १०६–१०९ ॥

क्षयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः ।
ऊर्ध्वं चाधश्च तिर्यक्च विज्ञेया त्रिविधापरा॥११०॥
इत्युक्ता विधिभेदेन दोषाणां त्रिविधा गतिः ।
त्रिविधा चापरा कोष्ठशाखामर्मास्थिसन्धिषु॥१११

संप्रति दोषाणां गतिं विवृणोति—क्षय इत्यादि । स्थानं स्वमानावस्थानम्, गतिः प्रकारोऽवस्था वा । चय इत्यत्र प्रशब्दो लुप्तनिर्दिष्टः । तेन प्रकृष्टचयः, एवं प्रशमोऽपि । एतेन वर्षादिषु पित्तादीनां प्रकृष्टश्चयो भवतीति दर्श्यते, इतरदोषस्यापि च स्तोकमात्रेण चयो यथासंभवं सूच्यते । तेन शरदृतुबलत्वेन कफप्रकोपो भवतीत्यादि गृहीतं स्यात् ॥११०–१११॥

चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम् ।
भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु ॥ ११२ ॥

यथाक्रममिति वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृट्क्रमेण, किंवा यथाक्रममिति यथायोग्यतया । पित्तादीनामिति पित्तश्लेष्मवातानाम् । एकैकश इति अयौगपद्येन । एतच्च प्राधान्येनैव ज्ञेयम्, तेन प्रावृषि श्लेष्मपित्तकोपेनाप्रधानेन न व्यभिचारः । यदुक्तम् । "वर्षास्वग्निबले हीने कुप्यन्ति पवनादयः" इत्यत्र हि पवनादय इति पवनप्रधानाः । एवं वसन्ते वातपित्तप्रकोपे व्याख्येयम् । अत्र च षट्सु ऋतुषु पित्तश्लेष्मवातानां प्रबलचयादयः विभज्यमानत्वेन पित्तचयकाले वातस्य कोपः । शरदि पित्तस्य प्रकोपकाले वातप्रशमः, हेमन्ते पित्तप्रशमः । कफस्य चयः । वसन्ते कफप्रकोप एव परं, तथा कफप्रशमके ग्रीष्मे वातचय इति च स्यात् । वातं परित्यज्य पित्तादीनामित्यभिधानं विसर्गस्याभिप्रेतत्वेनाग्रे वक्तव्यत्वात्कृतम्, विसर्गे च पित्तचय एव स्यादिति कृत्वा ॥ ११२ ॥

गतिः कालकृता चैषा चयाद्या पुनरुच्यते ।
गतिश्च द्विविधा दृष्टा प्राकृती वैकृती च या॥११३॥

---

१ कृच्छ्रमूत्रता, पूतिवर्चस्त्वंचेति वा पाठः । २ व्यापन्नमसन्व्यवसन्धानादिना विकृतिमापन्नम् ।

१ वर्षाद्या इति वा पाठः ।

पित्तादेवोष्मणः पक्तिर्नराणामुपजायते ।
तच्च पित्तं प्रकुपितं विकारान्कुरुते बहून् ॥ ११४ ॥
प्राकृतस्तु बलं श्लेष्मा विकृतो मल उच्यते ।
स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते॥११५
सर्वा हि चेष्टा वातेन स प्राणः प्राणिनां स्मृतः ।
तेनैव रोगा जायन्ते तेन चैवोपरुध्यते ॥ ११६ ॥

गतिभेदान्तरमाह—गतिश्चेत्यादि । अत्र पित्तमादौ कृतं शरीरस्थितिहेत्वग्निकर्तृत्वेन । पक्तिः पाकः । बलमिति बलहेतुत्वेन । मल इति शरीरमलिनीकरणात् । ओज इति सारभूतम् । यदि वा, द्वितीयश्लैष्मिकौजोहेतुत्वेनौजः । वक्ष्यति हि शारीरे "तावच्चैव श्लैष्मिकौजसश्च प्रमाणम्" इति । दुःखहेतुत्वात्पाप्मा सर्वा हि चेष्टा इत्यविकृतगमनाद्याः । उपरुध्यते म्रियते ॥ ११३-११६ ॥

नित्यसन्निहिताऽमित्रं समीक्ष्यात्मानमात्मवान् ।
नित्यं युक्तः परिचरेदिच्छन्नायुरनित्वरमिति॥११७॥

तत्र श्लोकौ ।

शिरोरोगाः सहृद्रोगा रोगा मानविकल्पजाः ।
क्षयाः सपिडकाश्चोक्ता दोषाणां गतिरेव च ॥ ११८
कियन्तःशिरसीयेऽस्मिन्नध्याये तत्त्वदर्शिना ।
ज्ञानार्थं भिषजां चैव प्रजानां च हितैषिणा॥ ११९ ॥

आत्मवानिति प्रशंसायां मतुप्प्रत्ययः । युक्त इत्युद्युक्तः । अनित्वरमनश्वरम् ॥ ११७-११९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने कियन्तःशिरसीयो नाम सप्तदशोऽध्यायः ॥

कियन्तःशिरसीयः समाप्तः ॥

---

## अष्टादशोऽध्यायः ।

अथातस्त्रिशोथीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

त्रयः शोथा भवन्ति वातपित्तश्लेष्मनिमित्ताः, ते पुनर्द्विविधा निजागन्तुभेदेन । तत्राऽऽगन्तवः छेदनभेदनक्षणनभञ्जनपिच्छनोत्पेषणप्रहारवधबन्धनवेष्टनव्यधनपीडनादिभिर्वा भल्लातकपुष्पफलरसात्मगुप्ताशूकक्रिमिशूकाहितपत्रलतागुल्मसंस्पर्शनैर्वा स्वेदनपरिसर्पणावमूत्रणैर्वा विषिणां सविषप्राणिदंष्ट्रादन्तविषाणनखनिपातैर्वा सागरविषवातहिमदहनसंस्पर्शनैर्वा शोथाः समुपजायन्ते ॥ ३ ॥

पूर्वाध्याये पिडका उक्ताः, ताश्च शोथरूपाः, तेन शोथाधिकारात्त्रिशोथीयोऽभिधीयते । वक्ष्यमाणद्विविधादिभेदे विद्यमानेऽपि वातादिकृतत्रित्वाभिधानमग्रे वातादिकृतस्यैव प्राधान्यख्यापनार्थम् । भेदनमाशयविदारणम्। क्षणनमस्थिचूर्णनम् । भञ्जनं जर्जरीकरणम् । पिच्छनमलमर्थपीडनम् । उत्पेषणं शिलोत्पेषणमिव । वेष्टनमग्रन्थिबन्धनं सर्पादिभिः । शूकवतां क्रिमीणां शूकः शूकक्रिमिशूकः । स्वेदनादिभिर्विषिणामिति योज्यम् ॥ १-३ ॥

ते पुनर्यथास्वं हेतुव्यञ्जनैरादावुपलभ्यन्ते निजव्यञ्जनैकदेशविपरीतैः, बन्धमन्त्रागदप्रलेपप्रवातनिर्वापणादिभिश्चोपक्रमैरुपक्रम्यमाणाः प्रशान्तिमापद्यन्ते ॥ ४ ॥

आदावुपलभ्यन्त इति वचनादुत्तरकालमागन्तोरपि निजतुल्यतां ब्रूते । यदुक्तम् । "आगन्तुरन्वेति निजं विकारम्" इति । निजव्यञ्जनैकदेशविपरीतैरिति निजलक्षणेभ्य आगन्तूनामेकदेशो विपरीतो भवति, स च वातादिजन्यश्याववर्णविकारत्वाज्ज्ञेयः । किंवा, आगन्तुर्य्यथापूर्वो भवति पश्चाद्वातादिभिरनुबध्यते । निजस्तु पूर्वं वातादिलक्षणैर्युज्यते, पश्चाद्वेदनावान्स्यादित्येकदेशविपरीतम् । व्रणेऽरिष्टबन्धो बन्धः । बन्धादयश्च यथायोग्यतया बोद्धव्याः ॥ ४ ॥

निजाः पुनः स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत्प्रयोगान्मिथ्यासंसर्जनाद्वा छर्दिरलसकविसूचिकाश्वासकासातिसारशोषपाण्डुरोगज्वरोदरप्रदरभगन्दरार्शोविकारातिकर्षणैर्वा कुष्ठकण्डूपिडकादिभिर्वा छर्दिक्षवथूद्गारशुक्रवातमूत्रपुरीषवेगधारणैर्वा कर्मरोगोपवासातिकर्षितस्य वा सहसातिगुर्वम्ललवणपिष्टान्नफलशाकरागदधिहरितकमद्यमन्दकविरूढनवशूकशमीधान्यानूपौदकपिशितोपयोगान्मृत्पङ्कलोष्टभक्षणाल्लवणातिभक्षणाद्वा गर्भसंपीडनादामगर्भप्रपतनात्प्रजातानां च मिथ्योपचारादुदीर्णदोषत्वाच्छोफाः प्रादुर्भवन्तीत्युक्तः सामान्यो हेतुः ॥ ५ ॥

छर्द्यादयः पुराणा एव शोथहेतवः । कर्माद्यतिकर्षितस्य तु सहसातिगुर्वादिसेवनं शोथहेतुः । कर्मेति पञ्चकर्म । विरूढनवशब्दौ शूकशमीधान्यविशेषणवाचकौ । प्रजातानामित्यचिरप्रसूतानाम् ॥ ५ ॥

अयं त्वत्र विशेषः—शीतरूक्षलघुविशदश्रमोपवासातिकर्षणक्षपणादिभिर्वायुः प्रकुपितः त्वङ्मांसशोणितादीन्यभिभूय शोफं जनयति ॥ ६ ॥

स क्षिप्रोत्थानप्रशमो भवति श्यामारुणवर्णः प्रकृतिवर्णो वा, चलः स्पन्दनः खरपरुषभिन्नत्वग्लोमा छिद्यत इव भिद्यत इव पीड्यत इव सूचीभिरिव तुद्यते पिपीलिकाभिरिव संसृप्यते सर्षपादिककल्कावलिप्त इव चिमिचिमायते संकुच्यत आयम्यत[1] इति वातशोफः ॥ ७ ॥

---

[1] आतत इति चलस्थाने वा पाठः

उष्णतीक्ष्णकटुकक्षारलवणाम्लाजीर्णभोजनैरग्न्यातपप्रतापैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितान्यभिभूय शोफं जनयति ॥ ८ ॥

स क्षिप्रोत्थानप्रशमो भवति—कृष्णपीतनीलताम्रावभास उष्णो मृदुः कपिलताम्रलोमा उष्यते दह्यते दूयते धूप्यते ऊष्मायते स्विद्यति क्लिद्यते न च स्पर्शमुष्णं वा मृष्यत इति पित्तशोफः ॥ ९ ॥

गुरुमधुरशीतस्निग्धैरतिस्वप्नाव्यायामादिभिश्च श्लेष्मा प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोफं जनयति ॥ १० ॥

स कृच्छ्रोत्थानप्रशमो भवति, पाण्डुश्वेतावभासः स्निग्धः श्लक्ष्णः गुरुः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्मशोफः ॥ ११ ॥

यथास्वकारणाकृतिसंसर्गाद्द्विदोषजास्त्रयः शोफा भवन्ति ॥ १२ ॥

कारणाकृतिसन्निपातात्सान्निपातिक एकः ॥१३॥

एवं भेदप्रकृतिभिस्ताभिर्भिद्यमानो द्विविधस्त्रिविधश्चतुर्विधः सप्तविधश्च शोफ उपलभ्यते, पुनश्चैक एवोत्सेधसामान्यादिति ॥ १४ ॥

क्षपणं वमनादिभिः । प्रकृतिवर्णो देहसमानवर्णः । चलः संक्रमवान् । सन्दनः कम्पनः । उष्यते पार्श्वस्थेनेव वह्निना दह्यते, धूप्यते धूममिवोद्वमति । उष्मायते बहिः परैरप्युष्णत्वेनोपलभ्यते । स्विद्यति स्वेदनवान्स्यात् । न मृष्यते न सहते, स्पर्शनं च न सहते उष्णं च न सहते । स कृच्छ्रोत्थानप्रशम इति चिरोत्थानप्रशमः, प्रकृतिभिरिति कारणैः, उत्सेध उन्नतत्वम् ॥ ६–१४ ॥

भवन्ति चात्र ।

शूयन्ते यस्य गात्राणि स्वपन्तीव रुजन्ति च ।
पीडितान्युन्नमन्त्याशु वातशोफं तमादिशेत् ॥ १५ ॥
यश्चाप्यरुणवर्णाभः शोफो नक्तं प्रणश्यति ।
स्नेहोष्णमर्दनाभ्यां च प्रणश्येत्स च वातिकः ॥ १६ ॥
यः पिपासाज्वरार्तस्य दूयतेऽथ विदह्यते ।
स्विद्यति क्लिद्यते गन्धी स पैत्तः श्वयथुः स्मृतः ॥१७॥
यः पीतनेत्रवक्त्रत्वक्पूर्वं मध्यात्प्रसूयते ।
तनुत्वक्चातिसारी च पित्तशोफः स उच्यते ॥१८॥
शीतः सक्तगतिर्यस्तु कण्डूमान्पाण्डुरेव च ।
निपीडितो नोन्नमति श्वयथुः स कफात्मकः ॥१९॥
यस्य शस्त्रकुशच्छिन्नाच्छोणितं न प्रवर्तते ।
कृच्छ्रेण पिच्छां स्रवति स चापि कफसंभवः ॥२०॥

१ स्पन्दन्तीवेति वा पाठः । २ पीतमुखवर्णत्वक् इति वा पाठः । ३ पीडितो नोन्नमेन्मन्द इति वा पाठः

निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्द्विदोषजः ।
सर्वाकृतिः सन्निपाताच्छोफो व्यामिश्रहेतुजः ॥२१॥

शूयन्त इत्यादि पुनः श्लोकेन पुनर्लक्षणाभिधानं प्रायोभाविलक्षणदर्शनार्थम् । स्वपन्तीवेति निर्वेदनः । एतेन वायोश्चलत्वेन क्षणाच्च रुक्, क्षणाच्च तदभाव इति ज्ञेयम् । मध्यादिति शरीरमध्यात् । सक्तगतिरविसारी, छिन्नादिति छेदात् ॥ १५–२१ ॥

यस्तु पादाभिनिर्वृत्तः शोफः सर्वाङ्गगो भवेत् ।
जन्तोः स च सुकष्टः स्यात्प्रसृतः स्त्रीमुखाच्च यः २२
यश्चापि गुह्यप्रभवः स्त्रियो वा पुरुषस्य वा ।
स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥ २३ ॥
छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च ।
सप्तकोऽयं सदौर्बल्यः शोफोपद्रवसंग्रहः ॥ २४ ॥

पादाभिनिर्वृत्तः पुरुषाणां लघावधोदेशे जातः सन्यदा न जीयते तदा गुरुमूर्ध्वदेशं गतः स च न पार्यते जेतुम्, यो हि लघौ प्रदेशे जेतुं न पार्यते गुरुप्रदेशगतो नितरामेव न पार्यते । एवम्, प्रसृतः स्त्रीमुखाच्च य इत्यपि ज्ञेयम् । वचनं हि । "अधोभागो गुरुः स्त्रीणामूर्ध्वः पुंसां गुरुस्तथा" इति । उक्तानुपद्रवानाह—छर्दिरित्यादि ॥ २२–२४ ॥

यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते ।
आशु संजनयेच्छोथं जायतेऽस्योपजिह्विका ॥ २५॥
यस्य श्लेष्मा प्रकुपितः काकले व्यवतिष्ठते ।
आशु संजनयेच्छोफं करोति गलशुण्डिकाम् ॥२६॥
यस्य श्लेष्मा प्रकुपितो गलबाह्येऽवतिष्ठते ।
शनैः संजनयेच्छोफं गलगण्डोऽस्य जायते ॥ २७ ॥
यस्य श्लेष्मा प्रकुपितो तिष्ठत्यन्तर्गले स्थितः ।
आशु संजनयेच्छोफं जायतेऽस्य गलग्रहः ॥ २८ ॥

संप्रत्युत्सेधसामान्यात्प्रादेशिकाञ्शोथानाह—यस्येत्यादि । काकलं तालुमूलम् । शनैरितिवचनेन गलगण्डकारिणो दोषाश्चिरक्रिया भवन्ति । गलग्रहादौ चाशुकारिणो दोषा भवन्ति । विसर्पस्य पिडकायाश्च तुल्यकारणत्वेऽपि विसर्पे सर्पणशीलो दोषः पिडकायां च स्थिरो ज्ञेयः । अतएव पिडकासंप्राप्तौ "अवतिष्ठते" इत्युक्तम् ॥ २५–२८ ॥

यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति ।
शोफं सरागं जनयेद्विसर्पस्तस्य जायते ॥ २९ ॥
यस्य पित्तं प्रकुपितं त्वचि रक्तेन तिष्ठति ।
शोथं सरागं जनयेत्पिडका तस्य जायते ॥ ३० ॥
यस्य प्रकुपितं पित्तं शोणितं प्राप्य शुष्यति ।
तिलका पिप्लवो व्यङ्गा नीलिका तस्य जायते॥३१॥
यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते ।
श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥ ३२ ॥

यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते ।
ज्वरान्ते दुर्जयोऽन्ताय शोफस्तस्योपजायते ॥ ३३ ॥

यस्य पित्तमित्यादौ पित्तं प्राप्य शोणितं कर्तृ कुप्यतीति योजनीयम् । पिडवो जट्ठला इति प्रसिद्धाः । दारुणोऽनुपक्रमादाशुमारकः । दुर्जयोऽन्तायेति दुर्जयो वा यथाक्रममुपक्रम्यमाणः । अन्तायेति मिथ्योपक्रमाद्वेति मन्तव्यम् । अयमेव शोथोऽन्यत्राप्युक्तः । "सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः । शोथः संजायते तेन कश्चिदेव प्रमुच्यते" इति ॥ २९–३३ ॥

वातः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति ।
शनैः परितुदन्पार्श्वं प्लीहा तस्याभिवर्धते ॥ ३४ ॥
यस्य वायुः प्रकुपितो गुल्मस्थानेऽवतिष्ठते ।
शोफं सशूलं जनयन्गुल्मस्तस्योपजायते ॥ ३५ ॥
यस्य वायुः प्रकुपितः शोफशूलकरश्चरन् ।
वङ्क्षणाद्वृषणौ याति वृद्धिस्तस्योपजायते ॥ ३६ ॥
यस्य वातः प्रकुपितस्त्वङ्मांसान्तरमाश्रितः ।
शोफं संजनयन्कुक्षावुदरं तस्य जायते ॥ ३७ ॥
यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति ।
नाधो व्रजति नाप्यूर्ध्वं चानाहस्तस्य जायते ॥ ३८ ॥
रोगाश्चोत्सेधसामान्यादधिमांसार्बुदादयः ।
विशिष्टा नामरूपाभ्यां निर्देश्याः शोथसंग्रहे ॥ ३९ ॥

गुल्मादयो विस्तरवक्तव्या अपि इहोत्सेधसामान्यलेशात उच्यन्ते । शोथसंग्रह इति । शोथत्वेनोत्सेधरूपेण संग्रहः शोथसंग्रहः ॥ ३४–३९ ॥

वातपित्तकफा यस्य युगपत्कुपितास्त्रयः ।
जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः ॥ ४० ॥
जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः ।
तं शीघ्रकारिणं नाम्ना रोहिणीति विनिर्दिशेत् ॥ ४१ ॥
त्रिरात्रं परमं तस्य जन्तोर्भवति जीवितम् ।
कुशलेन त्वनुक्रान्तः क्षिप्रं संपद्यते सुखी ॥ ४२ ॥
सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः ।
ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः ॥ ४३ ॥
साध्याश्चाप्यपरे सन्ति व्याधयो मृदुसंमताः ।
यत्नाऽयत्नकृतं येषु कर्म सिध्यत्यसंशयम् ॥ ४४ ॥

समुच्छ्रिता अतिरिक्तप्रमाणाः । भृशमत्यर्थदुःखकारणम् । क्षिप्रमित्यनुपक्रान्त इत्यनेन संबध्यते, तेन त्रिरात्रघातित्वं यस्य तस्य कथं शीघ्रप्रशम इति चोद्यं नोत्तिष्ठते । किंवा, क्षिप्रं संपद्यते सुखीति व्याधिमहिम्ना भवति । व्याधेरेवैतत्स्वरूपं यच्छीघ्रं हन्ति शीघ्रं प्रशाम्यतीति । यदुक्तं "स शीघ्रं शीघ्रकारित्वात्प्रशमं याति हन्ति वा" इति ॥ ४०–४४ ॥

असाध्याश्चापरे सन्ति व्याधयो याप्यसंज्ञिताः ।
सुसाध्वपि कृतं येषु कर्म यात्राकरं भवेत् ॥ ४५ ॥
सन्ति चाप्यपरे रोगाः कर्म येषु न सिध्यति ।
अपि यत्नकृतं बालैर्न तान्विद्वानुपाचरेत् ॥ ४६ ॥
साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः ।
मृदुदारुणभेदेन ते भवन्ति चतुर्विधाः ॥ ४७ ॥

एतदेव शीघ्रकारित्वं अन्येष्वपि ज्वरान्तकर्णशोथवलयादिष्वस्तीत्याह—सन्ति ह्येवमित्यादि । दारुणा इति संमता दारुणसंमताः । दारुणत्वप्रसङ्गेन मृद्वादिभेदानप्याह—साध्याश्चेत्यादि । यात्राकरं यापनाकरम् । बालैरज्ञैः । असाध्ये अज्ञा एवोत्साहात्प्रवर्तन्त इत्यर्थः । असाध्यस्य मृदुदारुणत्वं याप्यप्रत्याख्येयभेदेन, तथा सद्यःप्राणहरकालान्तरप्राणहरत्वादिना च ॥ ४५–४७ ॥

त एवापरिसंख्येया भिद्यमाना भवन्ति हि ।
रुजावर्णसमुत्थानस्थानसंस्थाननामभिः ॥ ४८ ॥
व्यवस्थाकारणं तेषां यथास्थूलेषु संग्रहः ।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥ ४९ ॥
विकारनामाकुशलो न जिह्रीयात्कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ५० ॥
स एव कुपितो दोषः समुत्थानविशेषतः ।
स्थानान्तरगतश्चैव जनयत्यामयान्बहून् ॥ ५१ ॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ।
समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत् ॥ ५२ ॥
यो ह्येतत्त्रिविधं ज्ञात्वा कर्माण्यारभते भिषक् ।
ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥ ५३ ॥

रुजावर्णेत्यादि । समुत्थानभेदा हेतुभेदाः। रूक्षभोजनरात्रिजागरणादिभिन्नहेतुजन्यो हि वातो भिन्नोपक्रमसाध्यश्च भवतीति भावः । स्थानभेदा आमाशयादयो रसादयश्च । संस्थानमाकृतिः, यथा गुल्मार्बुदादिः । नामभेदो यथा एकस्मिन्नेव राजयक्ष्मणि राजयक्ष्मशोषादिसंज्ञा । नन्वेवमपरिसंख्येयत्वे कथं व्यवहार इत्याह—व्यवस्थेत्यादि । व्यवस्थाकरणं चिकित्साव्यवहारार्थं संख्याकथनम् । यथास्थूलेष्विति । ये ये स्थूला उदरमूत्रकृच्छ्रादयः तेषु संग्रहोऽष्टोदरीयरोगसंग्रह इत्यर्थः । स्थूलेषु विकारेषु अष्टोदरीये संज्ञयाऽनुक्तेषु कथं व्यवस्थाकरणमित्याह—तथेत्यादि । प्रकृतिसामान्यं समानकारणता तेन अनुक्तेषु साक्षाद्व्याधिषु वातजोऽयं श्लेष्मजोऽयमिति तथा रसजोऽयम्, रक्तजोऽयमित्यादिका चिकित्सा व्यवहारार्थं व्यवस्था कर्तव्येति भावः । अतएवाष्टोदरीये वक्ष्यति । "सर्वे विकारा वातपित्तकफान्नातिवर्तन्ते" इति । ज्वररक्तपित्तादि-

१ शूलैः परितुदन्निति वा पाठः । २ महोत्सेधसामान्यादिति वा पाठः । ३ क्षिप्रमनुक्रान्त इति शीघ्रं चिकित्सित इत्यर्थः । शि० ।

१ अति यत्नकृतमिति वा पाठः । २ निदानवेदनावर्णस्थानसंस्थाननामभिरिति वा पाठः ।

वन्नामाज्ञानेऽपि वातादिजन्यत्वज्ञानेनैव प्रचरितव्यमित्याह—विकारेत्यादि । स्थानान्तरगतश्चेत्यत्र चकार एकस्थानगतोऽपि वहुविकारं करोतीति समुच्चिनोति । यतो वक्ष्यति । "करोति गलमाश्रितः । कण्ठोद्धंसं च कासं च खरभेदमरोचकम्" इति । अधिष्ठानान्तराण्याशयान्तराणि । ज्ञानपूर्वमिति चिकित्साज्ञानपूर्वकम् । यथान्यायं यथागमम् । एवं मन्यते यद्वातारब्धत्वादिज्ञानमेव कारणं रोगाणां चिकित्सायामुपकारि । नामज्ञानं तु व्यवहारमात्रप्रयोजनार्थम् । न खरूपेण चिकित्साया-मुपकारीति ॥ ४८–५३ ॥

**नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः ।**
**विकृताः प्रकृतिस्था वा तान्बुभुत्सेत पण्डितः ॥५४॥**

संप्रति वातादिज्ञानेन रोगज्ञानमुद्दिष्टं तेनोपोद्घातेन वातादीनां प्रकृतिस्थानामप्रकृतिस्थानां च लक्षणं वक्तुमाह—नित्या इत्यादि । बुभुत्सेत ज्ञातुमिच्छेत् ॥ ५४ ॥

**उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा ।**
**समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥५५॥**
**दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम् ।**
**प्रभा प्रसादो मेधा च पित्तकर्माऽविकारजम् ॥५६॥**
**स्नेहो वन्धः स्थिरत्वं च गौरवं वृषता वलम् ।**
**क्षमा धृतिरलोभश्च कफकर्माऽविकारजम् ॥ ५७ ॥**
**वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते ।**
**कर्मणः प्राकृताद्धानिर्वृद्धिर्वापि विरोधिनाम् ॥५८॥**

चेष्टेत्यविकृता चेष्टा । धातुगतिरिति रसादीनां पोष्यं धातुं प्रति गमनम् । गतिमतामिति पुरीषादीनां वहिर्निःसरताम् । प्रसादो मनःप्रसादः । वन्धः सन्धिवन्धः । स्थिरत्वमशैथिल्यम् । गौरवं प्राकृतं शरीरगौरवम् । क्षमा सहिष्णुता । धृतिर्मनसोऽचाञ्चल्यम् । क्षमादयश्च श्लेष्मणः प्रभावात् क्रियन्ते । एवमन्यत्रापि ज्ञेयम् । कर्मणः प्राकृतादिति वातादिप्रकृतिकर्मत्वेनोक्तादुत्साहादेः । हानिरपचयः । वृद्धिर्वापि विरोधिनामिति । उक्तप्राकृतलक्षणविरोधिनां कर्मणां वृद्धिः । यथा वातक्षये उत्साहविरोधिनो विषादस्य वृद्धिः । पित्तक्षयेऽदर्शनापक्त्यादीनाम् । श्लेष्मक्षये रौक्ष्यादीनां वृद्धिः । इह प्राकृतकर्महानौ सत्याम् नावश्यं विरोधिकर्मवृद्धिरत उक्तं "वृद्धिर्वेत्यादि," । न ह्यवश्यमुत्साहहानावल्पमात्रायां सत्यां विषादो वर्धते । अलोभन्यूनत्वे वा मनाग्लोभो वर्धते । किंवा, उत्साहाद्यभावेनाभावमुखेन ज्ञानार्थं 'कर्मणः प्राकृताद्धानिः' इत्युक्तम् । विषादवृद्ध्या तु विधिमुखेन ज्ञानार्थं 'वृद्धिर्वापि विरोधिनाम्' इत्युक्तम् । यदुच्यते वृद्धिर्वापि विरोधिनामिति । विरोधिदोषाणाम् । यथा । पित्तवृद्धौ तु श्लेष्मक्षयो जायते, इत्येवमादि । तन्न, यतः अन्यदोषवृद्धावन्यस्यावश्यं न ह्यपायो भवति, तथाहि सति, पित्तवृद्धौ सत्यां सर्वदा श्लेष्मक्षयः स्यात् । न च दोषाः परस्परघातकाः इति प्रागेव प्रतिपादितम् । प्रदेशान्तरेऽपि दोषाणां स्वलक्षणहानिरेव परं क्षयलक्षणं "क्षीणा जहति लिङ्गं स्व"मित्यनेनोक्तम् ॥५५–५८॥

**दोषप्रकृतिवैशेष्यं नियतं वृद्धिलक्षणम् ।**
**दोषाणां प्रकृतिर्हानिर्वृद्धिश्चैवं परीक्ष्यते ॥ ५९ ॥**

वृद्धिलक्षणमाह—दोषेत्यादि । प्रकृतिः स्वभावस्तस्य वैशेष्यमाधिक्यम् । श्लेष्मणः स्नेहशैत्यमाधुर्यादिर्या प्रकृतिस्तस्या अतिस्निग्धातिशैत्यातिमाधुर्यादि वैशेष्यं वृद्धिलक्षणम् । नियतमिति प्रतिनियतम् । यद्यस्य प्रकृतिलक्षणं तद्वृद्धं सत्तस्यैव वृद्धिलक्षणमित्यर्थः । अन्ये तु निश्चितमित्याहुः ॥ ५९ ॥

तत्र श्लोकाः ।

**संख्यानिमित्तं रूपाणि शोथानां साध्यतां न च ।**
**तेषां तेषां विकाराणां शोथांस्तांस्तांश्च पूर्वजान् ॥६०**
**विधिभेदं विकाराणां त्रिविधं वोध्यसंग्रहम् ।**
**प्राकृतं कर्म दोषाणां लक्षणं हानिवृद्धिषु ॥ ६१ ॥**
**वीतमोहरजोदोषलोभमानमदस्पृहः ।**
**व्याख्यातवांस्त्रिशोथीये रोगाध्याये पुनर्वसुः ॥ ६२॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने त्रिशोथीयोनामाष्टादशोऽध्यायः समाप्तः ।**

संग्रहे शोथानां साध्यतामिति स्नेहौष्ण्यमर्दनाभ्यां च प्रणश्येत्, स च वातिकमित्युक्तं ज्ञेयम् । न चेति न च साध्यताम्, यथा—"यश्च पादाभिनिर्वृत्तः" इत्यादि । तेषामित्युपजिह्वादीनाम् । शोथान्पूर्वजानित्यभिदधानः, उपजिह्वादिषु पूर्वं शोथो भवति, पश्चादुपजिह्वादिरोगव्यक्तिरिति दर्शयति । अतएव "आशु संजनयेच्छोथं"इत्युक्त्वा "जायतेऽस्योपजिह्विका" इत्युक्तम् । वोध्यो वोद्धव्यो विकारप्रकृत्यादिः । तस्य त्रिविधं संग्रहमिति, "तस्माद्विकारप्रकृतीः" इत्याद्युक्तं ग्रयम् ॥ ६०–६२ ॥

त्रिशोथीयः समाप्तः ।

---

## ऊनविंशोऽध्यायः ।

**अथातोऽष्टोदरीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याय उक्तं 'व्यवस्थाकरणं तेषां यथा स्थूलेषु संग्रहः' इति, तदनु जिज्ञासायामष्टावुदराणीत्यादि यथास्थूलं संग्रहोऽभिधीयते । अष्टोदरीय इति चार्थपरसंज्ञा । उदराभिधानमादौ पूर्वाध्यायोक्तशोथसामान्यात् । उदराणि उत्सेधसामान्याच्छोथप्रभेदा एव ॥ १ ॥ २ ॥

**इह खल्वष्टावुदराणि, अष्टौ मूत्राघाताः, अष्टौ क्षीरदोषाः, अष्टौ रेतोदोषाः । सप्त कुष्ठानि, सप्त**

पिडकाः, सप्त वीसर्पाः। षडतीसाराः, षडुदावर्ताः। पंच गुल्माः, पंच प्लीहप्रदोषाः, पंच कासाः, पंच श्वासाः, पंच हिक्काः, पंच तृष्णाः, पंच छर्दयः, पंच भक्तस्यानशनस्थानानि, पंच शिरोरोगाः, पंच हृद्रोगाः, पंच पाण्डुरोगाः, पंचोन्मादाः। चत्वारोऽपस्माराः, चत्वारोऽक्षिरोगाः, चत्वारः कर्णरोगाः, चत्वारः प्रतिश्यायाः, चत्वारो मुखरोगाः, चत्वारो ग्रहणीदोषाः, चत्वारो मदाः, चत्वारो मूर्च्छायाः, चत्वारः शोषाः, चत्वारि क्लैव्यानि। त्रयः शोफाः, त्रीणि किलासानि, त्रिविधं लोहितपित्तम्। द्वौ ज्वरौ, द्वौ व्रणौ, द्वावायामौ, द्वे गृध्रस्यौ, द्वे कामले, द्विविधमामं, द्विविधं वातरक्तं, द्विविधान्यर्शांसि। एक ऊरुस्तम्भः, एकः संन्यासः, एको महागदः। विंशतिः क्रिमिजातयः, विंशतिः प्रमेहाः, विंशतिर्योनिव्यापद इत्यष्टाचत्वारिंशद्रोगाधिकरणान्यस्मिन्संग्रहे समुद्दिष्टानि ॥ ३ ॥

एतानि यथोद्देशमभिनिर्देक्ष्यामः ॥ ४ ॥

अष्टावुदराणीति वातपित्तकफसन्निपातप्लीहबद्धच्छिद्रदकोदराणीति। अष्टौ मूत्राघाता इति वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितजा इति। अष्टौ क्षीरदोषा इति वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसङ्घातो रौक्ष्यं गौरवमतिस्नेहश्चेति। अष्टौ रेतोदोषा इति तनु शुष्कं फेनिलमश्वेतं पूति अतिपिच्छलमन्यधातूपहितमवसादि चेति ॥ ५ ॥

सप्त कुष्ठानीति कपालोदुंबरमण्डलर्ष्यजिह्वपुण्डरीकसिध्मकाकणानीति। सप्त पिडका इति शराविका कच्छपिका जालिनी सर्षप्यलजी विनता विद्रधी चेति। सप्त विसर्पा इति वातपित्तकफाग्निकर्दमकग्रन्थिसन्निपाताख्याः ॥ ६ ॥

षडतीसारा इति वातपित्तकफसन्निपातभयशोकजाः। षडुदावर्ता इति वातमूत्रपुरीषशुक्रच्छर्दिक्षवथुजाः ॥ ७ ॥

पंच गुल्मा इति वातपित्तकफसन्निपातशोणितजाः। पंच प्लीहदोषा इति गुल्मैर्व्याख्याताः। पंच कासा इति वातपित्तकफक्षतक्षयजाः। पंच श्वासा इति महोर्ध्वच्छिन्नतमकक्षुद्राः। पंच हिक्का इति महती गम्भीरा व्यपेता क्षुद्रा चान्नजा च। पंच तृष्णा इति वातपित्तामक्षयोपसर्गात्मिकाः। पंच छर्दय इति द्विष्टार्थसंयोगवातपित्तकफसन्निपातोद्रेकात्मिकाः। पंच भक्तस्यानशनस्थानानीति वातपित्तकफद्वेषायासाः। पंच शिरोरोगा इति पूर्वोद्देशमभिसमस्य वातपित्तकफसन्निपातक्रिमिजा इति। पंच हृद्रोगा इति शिरोरोगैर्व्याख्याताः। पंच पाण्डुरोगा इति वातपित्तकफसन्निपातमृद्भक्षणजाः। पंचोन्मादा इति वातपित्तकफसन्निपातागन्तुनिमित्ताः ॥ ८ ॥

चत्वारोऽपस्मारा इति वातपित्तकफसन्निपातनिमित्ताः। चत्वारोऽक्षिरोगाः चत्वारः कर्णरोगाः चत्वारः प्रतिश्यायाः, चत्वारो मुखरोगाः, चत्वारो ग्रहणीदोषाः, चत्वारो मदाः, चत्वारो मूर्च्छाया इत्यपस्मारैर्व्याख्याताः। चत्वारः शोषा इति साहससन्धारणक्षयविषमाशनजाः। चत्वारि क्लैव्यानीति बीजोपघाताद्ध्वजभङ्गाज्जरया शुक्रक्षयाच्च ॥ ९ ॥

त्रयः शोथाश्चेति वातपित्तश्लेष्मनिमित्ताः। त्रीणि किलासानीति रक्तताम्रशुक्लानि। त्रिविधं लोहितपित्तमित्यूर्ध्वभागमधोभागमुभयभागं च ॥ १० ॥

द्वौ ज्वरावित्युष्णाभिप्रायः शीतसमुत्थश्च, शीताभिप्रायश्चोष्णसमुत्थः। द्वौ व्रणाविति निजश्चागन्तुजश्च। द्वावायामाविति बाह्यश्चाभ्यन्तरश्च। द्वे गृध्रस्याविति वाताद्वातकफाच्च। द्वे कामले इति कोष्ठाश्रया शाखाश्रया च। द्विविधमाममित्यलसको विसूचिका च। द्विविधं वातरक्तमिति गम्भीरमुत्तानं च। द्विविधान्यर्शांसीति शुष्काण्यार्द्राणि च ॥ ११ ॥

एक ऊरुस्तंभ इत्यामत्रिदोषसमुत्थानः। एकः संन्यास इति त्रिदोषात्मको मनःशरीराधिष्ठानः। एको महागद इत्यतत्त्वाभिनिवेशः ॥ १२ ॥

इहैकादिसंख्यापरित्यागादष्टसंग्रहणमादौ कृतम्, अष्टसंख्याया बहुत्वेन प्राधान्यात्। विंशतिसंख्या मेहादीनाम् ऊनविंशत्यधःसंख्यानुपूर्व्याप्राप्त्यभावान्न कृतः प्रथमं निवेशः। यद्यपि चिकित्सिते अष्टादश कुष्ठानि, तथापीह महाकुष्ठाभिप्रायेण सप्तोच्यते। षडुदावर्ता इत्यत्र न वेगान्धारणीयोक्तन्यायेन उच्चारादिनिरोधजादय उदावर्ता इहोच्यन्ते। गुल्मैर्व्याख्यता इति यथा गुल्मभेदस्तथापीह पञ्च तृष्णेति संभोजनस्नेहादिजनितानामपि वातादिजन्य एवावरोधात्। स्थानमिव स्थानं कारणम्। तेन अनशनस्थानान्यरोचकानीत्यनेन कारणेन कार्याण्यरोचकानि गृह्यन्ते। तेन संग्रहे कारणाभिधानमन्याय्यमिति न भवति। पूर्वोद्देशमभिसमस्येति कियन्तःशिरसीये विस्तरोक्तान्संक्षिप्य। किंवा कियन्तःशिरसीय एव 'अर्धावभेदको वा स्या'दित्याद्युद्दिष्टानभिसमस्य परित्यज्य शिरस्येव रुजारूपा ये पञ्चोच्यन्ते। साहसं सन्धारणं क्षयो विषमाशनमिति पाठे कारणेन कार्यं च चतुर्विधः शोष उच्यते। द्वौ ज्वरावित्यादौ शीतसमुत्थेनैवोष्णाभिप्रायता लब्धा। यतः।

निदानविपरीतमिच्छति ज्वरी । तदाह उष्णाभिप्रायताविशेषणं शीतर्तुसमुत्थत्वेन पैत्तिकस्यापि ज्वरस्य शीतसमुत्थत्वनिरासार्थम् । एवं शीताभिप्रायेऽपि वक्तव्यम् । द्विविधमाममिति आमविषस्य त्रिविधकुक्षीये वक्ष्यमाणस्यालसक एवान्तर्भावात् । अन्ये त्वामविषस्य विषत्वेनान्यविषतन्त्रविषयत्वादिहाऽग्रहणमिति ब्रुवते । अतत्त्वाभिनिवेशो मानसो विकारः, स च सर्वसंसारिदुःखहेतुतया गद इत्युच्यते ॥ ३–१२ ॥

मेहश्च शुक्रमेहश्च शुक्रमेहश्च शीतमेहश्च शनैर्मेहश्च सिकतामेहश्च लालामेहश्चेति दश श्लेष्मनिमित्ताः । क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मंजिष्ठामेहश्च हरिद्रामेहश्चेति षट् पित्तनिमित्ताः । वसामेहश्च मज्जामेहश्च हस्तिमेहश्च मधुमेहश्चेति चत्वारो वातनिमित्ता इति विंशतिः प्रमेहाः । विंशतिर्योनिव्यापद इति वातिकी पैत्तिकी श्लैष्मिकी सान्निपातिकी चेति चतस्रः, दोषदूष्यसंसर्गप्रकृतिनिर्देशैरवशिष्टाः षोडश निर्दिश्यन्ते तद्यथा—रक्तयोनिश्चारजस्का चाचरणा चातिचरणा च प्राक्चरणा चोपप्लुता च परिप्लुता चोदावर्तिनी च कर्णिनी च पुत्रघ्नी चान्तर्मुखी च सूचीमुखी च शुष्का च वामिनी च षण्ढयोनिश्च महायोनिश्चेति विंशतिर्योनिव्यापदः । केवलश्चायमुद्देशो यथोद्देशमभिनिर्दिष्ट इति ॥ १३ ॥

भवति चात्र ।

विंशकाश्चैककाश्चैव त्रिकाश्चोक्तास्त्रयस्त्रयः ।
द्विकाश्चाष्टौ चतुष्काश्च दश द्वादश पञ्चकाः ॥१४॥
चत्वारश्चाष्टका वर्गाः षट्कौ द्वौ सप्तकास्त्रयः ।
अष्टोदरीये रोगाणां रोगाध्याये प्रकाशिता इति॥१५

क्रिमीणां संज्ञा प्रायो रूढ्या ज्ञातव्या । पिपीलिकालिख्याः । दोषस्य दूष्येण रक्तादिना संसर्गो दोषदूष्यसंबन्धः । प्रकृतिः कारणम्, तत्र दोषदूष्यसंसर्गनिर्देशेन रक्तयोन्यादयः, प्रकृतिनिर्देशेन प्राक्चरणादयो योनिव्यापत्तिचिकित्सितं वीक्ष्य व्याकर्तव्याः । अत्र 'मदा एव मदात्ययरूपतां यान्तीति कृत्वा मदात्ययाः पृथङ्नोक्ताः । इह चोक्तानां रोगाणां यद्यपि प्रकारान्तरेणान्यथापि संख्या स्यात्, तथाहि । अष्टौ ज्वराः, द्वावुन्मादौ निजागन्तुकभेदेनेत्यादि । तथापि प्रधानविवक्षया एत एव भेदा गृहीताः । प्राधान्यं च स्वाधिकारे रोगाणामनुसरणीयम् ॥ १३–१५ ॥

सर्व एव विकारा निजा नान्यत्र वातपित्तकफेभ्यो निर्वर्तन्ते, यथाहि शकुनिः सर्वं दिवसमपि परिपतन्स्वां छायां नातिवर्तते, तथा स्वधातुवैषम्यनिमित्ताः सर्वविकारा वातपित्तकफान्नातिवर्तन्ते । वातपित्तश्लेष्मणां पुनः स्थानसंस्थानप्रकृतिविशेषानभिसमीक्ष्य[1] तदात्मकानपि च सर्वविकारांस्तानेवोपदिशन्ति बुद्धिमन्त इति ॥ १६ ॥



संप्रलष्टोदरादीनां तथा वक्ष्यमाणानां महारोगे तथाऽनुक्तानामिह तन्त्रे रोगाणां निजानां वातपित्तश्लेष्माण एव व्यस्ताः समस्ता वा कारणं भवन्तीत्येतद्रूपं रोगाणां चिकित्सोपयोगिसूत्रं दर्शयितुमाह—सर्व इत्यादि । सर्व इत्युक्ता अनुक्ताश्च । यद्यप्यागन्तुष्वपि दोषसंबन्धो न व्यभिचरति, तथाप्यागन्तौ रोगे दोषापेक्षया न चिकित्सेत्यागन्तुव्युदासार्थं निजा इत्युक्तम् । स्वशब्देनागन्तुकृतं धातुवैषम्यं निराकरोति । ननु यदि वातादिजन्या एव सर्वविकारास्तत् किमर्थमन्यथाप्युदरादयः प्लीहजलादिभिः निर्दिश्यन्त इत्याह—वातपित्तेत्यादि । स्थानं रसादयो वस्त्यादयश्च । संस्थानमाकृतिर्लक्षणमितियावत्, प्रकृतिः कारणं, एषां विशेषानभिसमीक्ष्य तांस्तानुपदिशन्ति । "अष्टावुदराणि" इत्येवमाद्युपदिशन्ति । तदात्मकानपीति वातादिजनितानपि । तत्र स्थानविशेषादुपदेशो यथा ऊरुस्तम्भरक्तयोनिकामलाप्रभृतयः । संस्थानविशेषात् पिडकागुल्मप्रभृतयः । प्रकृतिविशेषाच्छ्लेष्मप्लीहोदरप्रभृतयः । अन्ये तु व्याख्यानयन्ति यतस्तानेवेति वातादिजानेवेति व्यपदिशन्ति । तदात्मकानपीति यथोक्ताष्टादिसंख्यायुक्तानपि, यद्यपि प्लीहादिकारणान्तरेण भिन्ना अपि रोगास्तथापि वातादिस्थानजन्यत्वेन तथा वातादिलक्षणयुक्तत्वेन तथा वातादिकारणजातत्वेन वातादिजा एव सर्वविकारा इति वाक्यार्थः ॥ १६ ॥

तत्र श्लोकौ ।

स्वधातुवैषम्यनिमित्तजा ये
विकारसंघा बहवः शरीरे ।
न ते पृथक्पित्तकफानिलेभ्य
आगन्तवस्त्वेव ततो विशिष्टाः ॥ १७ ॥

अमुमेवार्थं श्लोकेनाह—स्वधात्वित्यादि । स्वशब्दोऽग्रे वक्ष्यमाणशरीरापेक्षः, तेन शरीरधातुवैषम्यं गृह्यते । मानसं तु प्रतिक्षिप्यते । धातवश्च न स्वरूपेण रोगकारणमिति वैषम्यपदं कृतम् । आगन्तवो हि रोगा अभिघातज्वरादयो धातुवैषम्यजा भवन्ति, अतस्तद्व्युदासार्थं निमित्तपदम् । आगन्तुषु वैषम्यं विद्यमानमपि कारणत्वेन न व्यपदिश्यते, अप्रधानत्वात् । किंत्वागन्तुरेव लगुडादिप्रहारस्तत्र चिकित्साविशेषप्रयोजककारणम् । निजे तु वैषम्यमेव चिकित्साप्रयोजकम् । 'निमित्तजाः' इति च स्वधातुवैषम्यपदस्य कर्मधारयत्वेन, बहुव्रीहिपक्षे त्वनर्थक एव स्यात् । विकारसंघा इत्यष्टावुदराणीत्यादयः । बहुवचनेनैव बहुत्वे लब्धे पुनः 'बहवः' इति वचनं बहुवचनस्य त्रित्वमात्रेणैव चरितार्थत्वनि-

[1] समुत्थानस्थानसंस्थानप्रकृतिवेदनावर्णनामप्रभावचिकित्सितविशेषानभिसमीक्ष्येति पाठस्तु न चक्रसंमतः ॥

षेधार्थम्। न ते पित्तकफानिलेभ्यः पृथगिति पित्तकफानिला एव ते दूष्यादिविशेषभाज इत्यर्थः। इह पित्तमादौ कृतं छन्दोऽनुरोधात्, किंवा प्राधान्यानियमज्ञापनार्थं कृतम्। अत्र च धातुवैषम्यमात्रं विकारो नोक्तः। तस्य वातादिवैषम्यरूपत्वेन सिद्धत्वादेव। यस्तु धातुवैषम्यविशेषो धातुवैषम्यजातो ज्वरादिरूपः, स इह शिष्यं प्रति विकृतवाताद्यभेदेन प्रतिपाद्यते। तत इति पूर्वोक्तविकारसंघात्। विशिष्टा इति पित्तकफानिलव्यतिरिक्ताः॥ १७॥

**आगन्तुरन्वेति निजं विकारं**
**निजस्तथागन्तुमपि प्रवृद्धः।**
**तत्राऽनुबन्धं प्रकृतिं च सम्यग्-**
**ज्ञात्वा ततः कर्म समारभेत॥ १८॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽष्टोदरीयोनामैकोनविंशोऽध्यायः।**

संप्रति भिन्नयोर्निजागन्त्वोः संबन्धमाह—आगन्तुरित्यादि। निजं प्रथमसमुत्पन्नं विकारमागन्तुर्भूतादिजन्यो विकारोऽन्वेत्यनुगतो भवति। यथा दोषजएव ज्वरे उन्मादे वा पश्चाद्भूतनिवेशोऽपि भवति, तथाऽऽगन्तुमुत्पन्नमभिघातजं ज्वरं भूतजं चोन्मादं पश्चाद्धेतुमासाद्य निजोऽपि तत्र दोषलक्षणलक्षितो गदो भवति। 'अपि प्रवृद्धः' इति वचनेन आगन्त्ववस्थायामपि निजदोषो वृद्धोऽस्त्येव, परं, प्रवृद्धोऽसौ न भवति स्वलक्षणाकर्तृत्वेनेति दर्शयति। अपिशब्देन तु निजस्य निजेन तथाऽगन्तोरप्यागन्तुना अनुबन्धः सूच्यते। अत्र निजागन्त्वोरनुकार्यमाह—तत्रेत्यादि। अनुबन्धः पश्चात्कालजातः। प्रकृतिर्मूलभूतः। सम्यग्ज्ञात्वेति बलवत्त्वाबलवत्त्वादिना। किंवा, अनुबन्धोऽप्रधानः, प्रकृतिरनुबन्ध्यः प्रधानमित्यर्थः। यदुक्तं "स्वतन्त्रोव्यक्तलिङ्गः स्वचिकित्साप्रशमश्चानुबन्ध्योऽतो विपरीतस्त्वनुबन्धः" इति॥ १८॥

अष्टोदरीयः समाप्तः।

---

## विंशोऽध्यायः।

**अथातो महारोगाऽध्यायं व्याख्यास्यामः॥ १॥**
**इतिह स्माह भगवानात्रेयः॥ २॥**

**चत्वारो रोगा भवन्ति आगन्तुवातपित्तश्लेष्मनिमित्ताः; तेषां चतुर्णामपि रोगत्वमेकविधं भवति रुक्सामान्यात्, द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभागात्, द्विविधं चैषामधिष्ठानं मनःशरीरविशेषात्॥ ३॥**

पूर्वं सामान्येन वातादिजन्या उक्ताः, संप्रत्यवशिष्टान्केवलवातादिजन्यानभिधातुं महारोगाध्यायोऽभिधीयते[1]। आगन्तोरुक्तस्यापि त्रिशोथीये पुनरिह विशेषेण लक्षणाद्यभिधानार्थमभिधानम्। प्रकृतिरिह स्वभावः। मनःशरीरविशेषादिति आगन्तोरपि मनः शरीरं चाधिष्ठानम्। एवं निजस्यापि। आगन्तुग्रहणेन च मानसोऽपि कामादिर्गृह्यते॥ १—३॥

**विकाराः पुनरपरिसंख्येयाः प्रकृत्यधिष्ठानलिङ्गायतनविकल्पविशेषात्तेषामपरिसंख्येयत्वात्[1]॥४॥**

एवं चतुर्विधत्वादि प्रतिपाद्य पुनः प्रकारान्तरेणाऽपरिसंख्येयतां रोगाणामाह—विकारा इत्यादि[2]। पुनरिति[3] वक्ष्यमाणप्रकारान्तरेण। प्रकृतिः प्रत्यासन्नं कारणं वातादि। अधिष्ठानं दूष्यं। लिङ्गानि लक्षणानि। आयतनानि बाह्यहेतवो दुष्टाहाराचाराः। एषां विकल्परूपोविशेषो विकल्पविशेषः। तेषामपरिसंख्येयत्वादिति। अत्र दोषाः संसर्गांशांशविकल्पादिभिरसंख्येयाः। दूष्यास्तु शरीरावयवा अणुशः परस्परमेव मेलकेन विभज्यमाना असंख्येयाः। लिङ्गानि कृत्स्नविकारगतान्यसंख्येयान्येव, आविष्कृतानि तु तन्त्रे कथितानि। हेतवश्चावान्तरविशेषादसंख्येयाः। प्रव्यक्ता एव विकाराः। केचित्पुनरेषामिति पठन्ति, स तु पाठो नानुमतस्तावत्, यदि च स्यात्तदा देहमनःप्रत्यवमर्षकम् 'एषाम्' इति पदम्। बहुवचनं तु मनःशरीरयोर्बहुत्वविवक्षया॥ ४॥

**मुखानि तु खल्वागन्तोः नखदशनपतनाभिचाराभिशापाभिषङ्गाभिघातवधबन्धपीडनरज्जुदहनशस्त्राशनिभूतोपसर्गादीनि[5], निजस्य तु मुखं वातपित्तश्लेष्मणां वैषम्यम्॥ ५॥**

**द्वयोस्तु खलु आगन्तुनिजयोः प्रेरणमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति॥ ६॥**

**सर्वेऽपि तु खल्वेतेऽभिप्रवृद्धाश्चत्वारो रोगाः परस्परमनुबध्नन्ति, न चान्योन्यसन्देहमापद्यन्ते[4]॥ ७**

मुखानि कारणानि, यथा "रजस्वलागमनमलक्ष्मीमुखानाम्" इति। प्रेरणमिति कारणम्, अनेकार्थत्वाद्धातूनाम्। अनुबध्नन्त्यनुगच्छन्ति। न संदेहमापद्यन्त इति न संदेहविषयतामापद्यन्ते। मिश्रीभूता अपि प्रतिसंभिन्नैर्लक्षणैर्भेदा ज्ञायन्त इत्यर्थः॥ ५—७॥

**आगन्तुर्हि व्यथापूर्वं समुत्पन्नो जघन्यं वातपित्त-**

---

१ महत्त्वंचास्य पूर्वाध्यायापेक्षया न तु महायाससाधनानां रोगाणामभिधायकोऽध्यायो महारोगाध्याय इति शिः।

१ प्रकृत्यधिष्ठानलिंगवेदनाविकल्पविशेषाणामपरिसंख्येयत्वादिति वा पाठः। २ पुनरेषामपरिसंख्येयत्वादिति वा पाठः। ३ एते चागन्तवो दोषजाश्च परस्परं संसृज्यन्ते इत्याह सर्वेऽपीत्यादि। अनुबध्नन्त्यनुगच्छन्ति। ननु यदा येषां परस्परसंसर्गस्तदा संसृष्टयोः क्षीरनीरयोरिव भेदेन ज्ञानं न स्यात्, तथाच तद्विशेषज्ञाननिबन्धनचिकित्साविशेषोऽपि न संभवतीत्याह न चेतीति शिः। ४ पुनःशब्दः पूर्वोक्तभेदापेक्षयेति शिः। ५ मन्त्राशनिभूतोपसर्गादीनीति वा पाठः.

श्लेष्मणां वैषम्यमापादयति, निजे तु वातपित्तश्लेष्माणः पूर्वं वैषम्यमापद्यन्ते जघन्यां व्यथामभिनिर्वर्तयन्ति ॥ ८ ॥

आगन्तुनिजयोर्भेदकं लक्षणमाह—आगन्तुर्हीत्यादि । आगन्तुरुत्पन्नः सन्, व्यथापूर्वमिति पीडां प्रथमं कृत्वा पश्चाद्दोषाणां वैषम्यमिति दोषवैषम्यलक्षणमुक्तम्, स्वलक्षणकारकं तु वैषम्यमागन्तोरादितः प्रभृति विद्यमानमप्यकिंचित्करमिति भावः ॥ ८ ॥

तेषां त्रयाणामपि दोषाणां शरीरे स्थानविभाग उपदेक्ष्यते, तद्यथा—वस्तिः पुरीषाधानं कटिः सक्थिनी पादावस्थीनि च वातस्थानानि, अत्रापि पक्वाशयो विशेषेण वातस्थानम्। स्वेदो रसो लसीका रुधिरमामाशयश्च पित्तस्थानानि, अत्राप्यामाशयो विशेषेण पित्तस्थानम्। उरःशिरोग्रीवापर्वाण्यामाशयो भेदश्च श्लेष्मणः स्थानानि, अत्राप्युरोविशेषेण श्लेष्मस्थानम् ॥ ९ ॥

आगन्तुनिजयोर्भेदकं लक्षणमभिधाय निजविकारकराणां वातादीनां भेदज्ञानार्थमाह—तेषामित्यादि ।—पुरीषादानं पक्वाशयः । यद्यपि प्राणादिभेदभिन्नस्य वायोः पृथगेव स्थानानि वक्ष्यति, यथा, "स्थानं प्राणस्य शीर्षोरःकण्ठजिह्वास्यकर्णनासिकाः" इत्यादि । तथापीदं वैशेषिकं स्थानं ज्ञेयं, यतः, अत्र प्रायो वातादिविकारा भवन्ति, भूताश्च दुर्जयाः । अत्र च विजिते वाते सर्ववातविकाराऽवजयः । लसीकोदकस्य पिच्छाभागः, पित्तस्थाने आमाशय इति आमाशयाऽधोभागः, श्लेष्मस्थानेष्वामाशय आमाशयोर्ध्वभागः ॥ ९ ॥

सर्वशरीरचरास्तु वातपित्तश्लेष्माणो हि सर्वस्मिन् शरीरे कुपिताऽकुपिताः शुभाऽशुभानि कुर्वन्ति—प्रकृतिभूताः शुभानि उपचयबलवर्णप्रसादादीनि, अशुभानि पुनर्विकृतिमापन्नानि विकारसंज्ञकानि ॥ १० ॥

तत्र विकाराः सामान्यजा नानात्मजाश्च, तत्र सामान्यजाः पूर्वमष्टोदरीये व्याख्याताः । नानात्मजांस्त्विहाध्यायेऽनुव्याख्यास्यामः, तद्यथा—अशीतिर्वातविकाराः, चत्वारिंशत्पित्तविकाराः, विंशतिः श्लेष्मविकाराः ॥ ११ ॥

तत्रादौ वातविकाराननुव्याख्यास्यामः। तद्यथा—नखभेदश्च, विपादिका च, पादशूलश्च, पादभ्रंशश्च, सुप्तपादता च, वातखुड्डका च, गुल्फग्रन्थिश्च, पिण्डिकोद्वेष्टनं च, गृध्रसी च, जानुभेदश्च, जानुविश्लेषश्च, ऊरुस्तंभश्च, ऊरुसादश्च, पाङ्गुल्यं च, गुदभ्रंशश्च, गुदार्तिश्च, वृषणोत्क्षेपश्च, शेफस्तंभश्च, वंक्षणानाहश्च, श्रोणिभेदश्च, विड्भेदश्च, उदावर्तश्च, खंजत्वं च, कुब्जत्वं च, वामनत्वं च, त्रिकग्रहश्च, पृष्ठग्रहश्च, पार्श्वावमर्दश्च, उदरावेष्टश्च, हृन्मोहश्च, हृद्द्रवश्च, वक्षउद्धर्षश्च, वक्षउपरोधश्च, बाहुशोषश्च, ग्रीवास्तंभश्च, मन्यास्तंभश्च, कंठोद्ध्वंसश्च, हनुभेदश्च, ओष्ठभेदश्च, दन्तभेदश्च, दन्तशैथिल्यं च, मूकत्वं च, वाक्संगश्च, कषायास्यता च, मुखशोषश्च, अरसज्ञता च, अगन्धज्ञता च, घ्राणनाशश्च, कर्णशूलश्च, अशब्दश्रवणं च, उच्चैःश्रुतिश्च, बाधिर्यं च, वर्त्मस्तंभश्च, वर्त्मसङ्कोचश्च, तिमिरश्च, अक्षिशूलश्च, अक्षिव्युदासश्च, भ्रूव्युदासश्च, शङ्खभेदश्च, ललाटभेदश्च, शिरोरुक् च, केशभूमिस्फुटनं च, अर्दितं च, एकाङ्गरोगश्च, सर्वाङ्गरोगश्च, पक्षवधश्च, आक्षेपकश्च, दण्डकश्च, श्रमश्च, भ्रमश्च, वेपथुश्च, जृम्भा च, विषादश्च, अतिप्रलापश्च, ग्लानिश्च, रौक्ष्यं च, पारुष्यं च, श्यावारुणावभासता च, अस्वप्नश्च, अनवस्थितत्वं चेत्यशीतिर्वातविकारा वातविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः ॥ १२ ॥

सामान्यजा इति वातादिभिः प्रत्येकं मिलितैश्च ये जन्यन्ते। नानाऽऽत्मजा इति ये वातादिभिर्दोषान्तरासंपृक्तैर्जन्यन्ते । विपादिका पाणिपादस्फुटनं, पादभ्रंशः पादस्यारोपविषयदेशादन्यत्र पतनम् । सुप्तिः पादयोर्निष्क्रियत्वं स्पर्शाज्ञता वा । वातखुड्डका चालुक इति प्रसिद्धः । गृध्रसीशब्देन गृध्रसीशूलं गृह्यते । ऊरुस्तम्भेन च ऊरुस्तम्भनमात्रं वातजन्यत्वेन गृह्यते। एवं कर्णाक्षिशूलयोः शूलमात्रम् । वातजातीसारेऽपि विड्भेदो वातजः । एवंच न गृध्रस्यादीनां सामान्यजत्वं, यथोक्तातङ्कस्य [1]केवलवातजन्यत्वात् । उदरस्यावेष्टनमिवोदरस्यावेष्टः । अशब्दश्रवणं शब्दाऽभावेऽपि शब्दश्रवणम् । उच्चैःश्रुतिस्तावत्स्वरमात्रश्रवणम् । अल्पशब्दस्य तु सर्वथैवाऽश्रवणम् । बाधिर्यं शब्दमात्रस्यैवाश्रवणम् । तिमिरं तु वातजमेव, दोषान्तरसंबन्धस्त्वत्रानुबन्धरूपः । एकाङ्गरोगः सर्वाङ्गरोगश्चेति, ज्वरादिषु उष्णत्वशीतत्वादीनां कदाचिदेकाङ्गव्यापकत्वेनैकाङ्गरोगः, तेषामेव कदाचित्सर्वाङ्गव्यापकत्वेन सर्वाङ्गरोगः, दोषान्तरसंबन्धोऽपि व्याप्यव्याप्ती वातकृते एव, "वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवदि"ति वचनात् । तथा भ्रमश्च वार्तिकः स्मृतिमोहरूपः । अत्र कस्यचिदङ्गस्य पादादेः शूलादयोऽभिहिताः, न हस्तादीनां, तत्र येऽभिहितास्ते प्रधानभूताः प्रायोभावित्वेन, अनुक्तास्तु वातविकाराणामपरिसंख्येयत्वेन ग्राह्याः ॥ १०—१२ ॥

सर्वेष्वपि[2] खल्वेतेषु वातविकारेषूक्तेष्वन्येषु चानु-

१ यथोक्तांगस्येति वा पाठः । २ इदानीमनुक्तवातविकारज्ञानार्थं वायोः सहजसिद्धं स्वरूपं तथा विकृतवायुजन्यकर्मणश्च स्वरूपं निर्देष्टुं भूमिकां रचयति सर्वेष्वित्यादि ॥

केषु वायोरिदमात्मरूपमपरिणामिकर्मणश्च स्वलक्षणम्, यदुपलभ्य तदवयवं वा विमुक्तसन्देहा वातविकारमेवाऽध्यवस्यन्ति कुशलाः। तद्यथा—रौक्ष्यं लाघवं वैशद्यं शैत्यं गतिरमूर्तत्वं चेति वायोरात्मरूपाणि भवन्ति, एवंविधत्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति ॥ १३ ॥

वायोरिदमित्यादौ वायोरिदमात्मरूपं स्वरूपम्, अपरिणामीति सहजसिद्धं नान्योपाधिकृतमित्यर्थः। कर्मणश्चेति विकृतस्य वायोः कर्मणः स्वलक्षणमित्यात्मीयं लक्षणम्। अत्राप्यपरिणामीति पित्तश्लेष्मसंवन्धनिरपेक्षं, न तु शरीरावयवानपेक्षमिति। यतः, ब्रूते "तं तं शरीरावयवमाविशतः" इति। अतएव च स्रंसादीनां शरीरावयवापेक्षत्वेन न सर्वदा भावः। एवं च पित्तश्लेष्मणोरपि चात्मरूपादि व्याख्येयम्। अमूर्तत्वमित्यदृश्यत्वम्, एवंविधत्वादिति रौक्ष्यादियुक्तत्वाद्वायोरिति संवन्धः ॥ १३ ॥

तं तं शरीरावयवमाविशतः[1] स्रंसभ्रंसव्यासंभेदसादहर्षतर्षकम्पवर्तचालतोदव्यथाचेष्टाद्यास्तथा खरपरुषविशदसुशिराऽरुणवर्णकषायविरसमुखशोषशूलसुप्तिसंकुचनस्तम्भनखञ्जतादीनि वायोः कर्माणि, तैरन्वितं वातविकारमेवाध्यवस्येत् ॥ १४ ॥

स्रंसः किंचिदवस्थानसंचलनं, भ्रंशस्तु दूरगतिः। व्यासोविस्तरणम्। हर्षो वायोरनस्थितत्वेन प्रभावाद्वा क्रियते। वर्तुलीकरणं वर्तः। चालः स्पन्दः। रसवर्णौ वायुना रसवर्णरहितेनापि प्रभावात् क्रियेते ॥ १४ ॥

तं मधुराम्ललवणस्निग्धोष्णैरुपक्रमैरुपक्रमेत स्नेहस्वेदास्थापनानुवासननस्तःकर्मभोजनाभ्यङ्गोत्सादनपरिषेकादिभिर्वातहरैर्मात्राकालं च प्रमाणीकृत्य, आस्थापनानुवासनं तु खलु सर्वथोपक्रमेभ्यो वाते प्रधानतमं मन्यन्ते भिषजः। तदादित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वातमूलं छिनत्ति। तत्रावजिते वातेऽपि शरीरान्तर्गता वातविकाराः प्रशान्तिमापद्यन्ते यथा वनस्पतेर्मूले छिन्ने स्कन्धशाखावरोहकुसुमफलपलाशादीनां नियतो विनाशस्तद्वत् ॥ १५ ॥

प्रस्तावागतत्वेन चिकित्सामाह—मधुरेत्यादि। आदित एवेति शीघ्रमेव, केवलं वैकारिकमिति सकलविकारकारकम् ॥ १५ ॥ ३ ॥

पित्तविकाराः—ओषश्च, प्लोषश्च, दाहश्च, दवथुश्च, धूमकश्च, अम्लकश्च, विदाहश्च, अन्तर्दाहश्च, अङ्गदाहश्च, ऊष्मण आधिक्यं च, अतिस्वेदश्च, अङ्गस्वेदश्च, अङ्गगन्धश्च, अङ्गावदरणं च, शोणितक्लेदश्च, मांसक्लेदश्च, त्वग्दाहश्च, मांसदाहश्च, त्वङ्मांसावदरणं च चर्मदरणंच, रक्तकोठकाश्च, रक्तपित्तं च, रक्तमण्डलानि च, हरितत्वं च, हारिद्रत्वं च, नीलिका च, कक्ष्या च, कामला च, तिक्तास्यता च, पूतिमुखता च, तृष्णाया आधिक्यं च, अतृप्तिश्च, आस्यविपाकश्च, गलपाकश्च, अक्षिपाकश्च, गुदपाकश्च, मेढ्रपाकश्च, जीवादानं च[1] तमःप्रवेशश्च, हरितहारिद्रनेत्रमूत्रवर्चस्त्वंचेति चत्वारिंशत्पित्तविकाराः पित्तविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः ॥ १६ ॥

सर्वेष्वपि खल्वेतेषु पित्तविकारेष्वन्येषु चानुक्तेषु पित्तस्येदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणम्, यदुपलभ्य तदवयवं वा विमुक्तसंदेहाः पित्तविकारमेवाध्यवस्यन्ति कुशलाः, तद्यथा—औष्ण्यं तैक्ष्ण्यं लाघवमनतिस्नेहो वर्णश्च शुक्लारुणवर्जो गन्धश्च विस्रो रसौ च कटुकाम्लौ पित्तस्यात्मरूपाण्येवंविधत्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति ॥ १७ ॥

तं तं शरीरावयवमाविशतो दाहौष्ण्यपाकस्वेदक्लेदकोथकण्डूस्रावरागाः यथास्वं च गन्धवर्णरसाभिनिर्वर्तनं पित्तस्य कर्माणि, तैरन्वितं पित्तविकारमेवाध्यवस्येत् ॥ १८ ॥

तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रमेत स्नेहविरेकप्रदेहपरिषेकाभ्यङ्गादिभिः पित्तहरैर्मात्रां कालं च प्रमाणीकृत्य, विरेचनं तु सर्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते भिषजः, तद्ध्यादितएवामाशयमनुप्रविश्य केवलं वैकारिकं पित्तमूलं चापकर्षति। तत्रावजिते पित्तेऽपि शरीरान्तर्गताः पित्तविकाराः प्रशान्तिमापद्यन्ते यथाग्नौ व्यपोढे केवलमग्निगृहं च शीतीभवति तद्वत् ॥ १९ ॥

ओषः पार्श्वस्थितेनेव वह्निना पीडा। प्लोषः किंचिद्दहनमिव दाहः। सर्वाङ्गदहनमिव दवथुः धगधगिकेति लोके

१ ननु वायोरदृश्यत्वेन तत्र रौक्ष्यादयो गुणास्तथा वक्ष्यमाणस्रंसादीनि च कर्माणि प्रत्यक्षेण नोपलभ्यन्ते तत्कथमेतानि वायोरात्मरूपाणि? इत्यत आह तं तं शरीरावयवमाविशत इति। एतेन यद्यपि वायोरेते गुणास्तथा एतानि कर्माणि प्रत्यक्षेण नोपलभ्यन्ते तथापि यं यं शरीरावयवमाविशति विकृतो वायुस्तत्र तत्र रौक्ष्यादिकं स्रंसादिकं च दृष्ट्वा वायोरपि तद्गुणकर्मयोगित्वमवधार्यते तत्तदवयवगतरौक्ष्यादीनां विकृतवायुसंवन्धान्वयव्यतिरेकाधिष्ठानादिति भाव इति शिः। २ व्यासंगेति वा पाठः। ३ व्यधचेष्टाभंगा इति

१ जीवादानं जीवनहेतुधातुरूपशोणितनिर्गम इति शिः।

ख्याता । धूमको धूमोद्वमनमिव, त्वगवदरणं बाह्यत्वङ्मात्रावदरणम् । चर्मावदरणं तु षण्णामपि त्वचां दरणम् । रक्तपित्तं दोषान्तरासंपृक्तं रक्तपैत्तिकं ज्ञेयम् । एवं तृष्णायां च तृष्णामात्रम् । कक्ष्या कक्षदेशगतमांसदरणम् । स्फोटाः सुश्रुतक्षुद्ररोगोक्ताः । गन्धोविस्र इत्यामगन्धः । यथाऽऽस्रमित्यामगन्धवर्णसदृशम्, अग्निमद्गृहमग्निग्रहम् ॥ १६—१९ ॥

श्लेष्मविकारांश्च विंशतिमत ऊर्ध्वं व्याख्यास्यामः, तद्यथा—तृप्तिश्च, तन्द्रा च, निद्राया आधिक्यं च, स्तैमित्यं च, गुरुगात्रता च, आलस्यं च, मुखमाधुर्यं च मुखस्रावश्च, श्लेष्मोद्गिरणं च, मलस्याधिक्यं च, वलासकश्च, हृदयोपलेपश्च, कण्ठोपलेपश्च, धमनीप्रतिचयश्च, गलगण्डश्च, अतिस्थौल्यं च, शीताग्निता च, उदर्दश्च, श्वेतावभासता च, श्वेतमूत्रनेत्रवर्चस्त्वं चेति विंशतिः श्लेष्मविकाराः । श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याता भवन्ति ॥ २० ॥

सर्वेष्वपि तु खल्वेतेषु श्लेष्मविकारेष्वन्येषु चानुक्तेषु श्लेष्मण इदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणम्, यदुपलभ्य तदवयवं वा विमुक्तसंदेहाः श्लेष्मविकारमेवाध्यवस्यन्ति कुशलाः । तद्यथा—स्नेहशैत्यशौक्ल्यगौरवमाधुर्यमात्स्न्र्यानि श्लेष्मण आत्मरूपाण्येवंविधत्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति ॥ २१ ॥

तं तं शरीरावयवमाविशतः श्वैत्यशैत्यकण्डूस्थैर्यगौरवस्नेहस्तम्भसुप्तिक्लेदोपदेहबन्धमाधुर्यचिरकारित्वानि श्लेष्मणः कर्माणि, तैरन्वितं श्लेष्मविकारमेवाध्यवस्येत् ॥ २२ ॥

तं कटुकतिक्तकषायतीक्ष्णोष्णरूक्षैरुपक्रमैरुपक्रमेत् स्वेदवमनशिरोविरेचनव्यायामादिभिः श्लेष्महरैर्मात्रां कालं च प्रमाणीकृत्य, वमनं तु सर्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः । तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं श्लेष्ममूलमपकर्षति, तत्रावजिते श्लेष्मण्यपि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते यथा भिन्ने केदारसेतौ शालियवषष्टिकादीन्यनभिष्यन्द्यमानान्यम्भसा प्रशोषमापद्यन्ते तद्वदिति ॥ २३ ॥

तृप्तिर्येन तृप्तमिवात्मानं सर्वदा मन्यते । वलासको वलक्षयः । किंवा श्लेष्मोद्रेकान्मन्दजवित्वम्, स्थूलाङ्गता वा वलासकः । धमनीप्रतिचयो धमन्युपलेपः । शीताग्निता मन्दाग्निता । मात्स्न्र्यं मसृणता । श्लेष्मकर्मसु सुप्तिर्निष्क्रियत्वेन, वाते तु स्पर्शाज्ञानेन । अत्रामाशयमनुप्रविश्येति वचनेन श्लेष्मस्थानेष्वामाशयस्य प्राधान्यम्, पूर्वं तु "तत्रापि उरो विशेषेण" इति वचनेनोरः प्रधानम् । एवमुभयमपि तुल्यं ज्ञेयम् ॥ २०—२३ ॥ ३ ॥

भवन्ति चात्र ।

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म भिषक्पश्चाज्ज्ञानपूर्वं समाचरेत्[1] ॥ २४ ॥
यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक् ।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥ २५ ॥
यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः ।
देश[2]कालप्रमाणज्ञस्तस्य सिद्धिरसंशयम् ॥ २६ ॥

संप्रति रोगज्ञानस्य चिकित्सायामुपयोगमाह—रोगमित्यादि । औषधं परीक्षेतेति संबन्धः । औषधपरीक्षा रोगापेक्षिणी, तेन तदनन्तरमेव सा भवतीति भावः । अतः कर्मेति चिकित्साम्, ज्ञानपूर्वमिति कर्मदर्शनजनितज्ञानपूर्वम् ॥ २४—२६ ॥

संग्रहः प्रकृतिर्देशो विकारमुखमीरणम् ।
असन्देहोऽनुबन्धश्च रोगाणां संप्रकाशितः ॥ २७ ॥
दोषस्थानानि रोगाणां गणा नानात्मजाश्च ये ।
रूपं पृथक्त्वाद्दोषाणां कर्म चापरिणामि यत् ॥२८॥
पृथक्त्वेन च दोषाणां निर्दिष्टाः समुपक्रमाः ।
सम्यङ्महति रोगाणामध्याये तत्त्वदर्शिना ॥ २९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने महारोगाध्यायोनाम विंशोऽध्यायः ॥

समाप्तं रोगचतुष्कम् ।

संग्रहे "संग्रहइति चत्वारो रोगाः" इत्यादि संक्षेपोक्तिः । प्रकृतिरिति "द्विविधा पुनः" इत्यादि । देश इति "द्विविधं चैषामधिष्ठानम्" इत्यादि । विकाराश्च मुखं च विकारमुखम् । तत्र विकाराः "विकाराः पुनः" इत्यादिना । "मुखानि" इत्यादिना मुखम् । "द्वयोस्तु" इत्यादिना ईरणम् । असन्देहः "न चान्योन्य" इत्यादिना । "सर्वेषु" इत्यादिना अनुबन्धः । नानात्मजाः सर्वे दोषान्तरासंपृक्तदोषजन्या उक्ताः ॥ २९ ॥

महारोगाध्यायः समाप्तः ।

इति रोगचतुष्कं समाप्तम् ।

---

## एकविंशोऽध्यायः ।

अथातोऽष्टौनिन्दितीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

रोगचतुष्के रोगा उक्ताः, भेषजं च भेषजचतुष्के, रोगभेष-

---

१ इदानीं रोगे ज्ञातेऽपि येन क्रमेण चिकित्सा कार्या तं क्रमं दर्शयति—रोगमादावित्यादीति शिः । २ देशकालविभागज्ञ इति वा पाठः । ३ ज्ञानार्थं भिषजांचैव प्रजानां च हितैषिणेति वा पाठः ।

जयोस्तु योजना यथा कर्तव्या तदुक्तं योजनाचतुष्कोऽभिधीयते । सा च योजना रोगेण समं भेषजानां प्रायः शरीरमेवापेक्षत इति शरीरभेदप्रतिपादकोऽष्टौनिन्दितीयोऽभिधीयते ॥ १ ॥ २ ॥

**इह खलु शरीरमधिकृत्याष्टौ पुरुषा निन्दिता भवन्ति, तद्यथा—अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा चातिकृष्णश्चातिगौरश्चातिस्थूलश्चातिकृशश्चेति ॥ ३ ॥**

शरीरमधिकृत्येतिवचनेन मनोऽधिकृत्य ये निन्दिता आधार्मिककदर्यादयः तानिहानुपयुक्तान्निराकरोति । अतिदीर्घादयश्च षडिह निन्दितप्रस्तावादुच्यन्ते । निन्दितत्वं च तेषां लोकविगानादेव । अतिदीर्घश्चेत्यादिचकारः कुब्जादिनिन्दितग्रहणार्थम् ॥ ३ ॥

**तत्रातिस्थूलकृशयोर्भूय एवापरे निन्दितविशेषा भवन्ति । अतिस्थूलस्य तावदायुषो ह्रासो जरोपरोधः कृच्छ्रव्यवायता दौर्बल्यं दौर्गन्ध्यं स्वेदाबाधः क्षुदतिमात्रं पिपासातियोगश्चेति भवन्त्यष्टौ दोषाः । तदतिस्थौल्यमतिसंपूरणाद्गुरुमधुरशीतस्निग्धोपयोगादव्यायामादव्यवायाद्दिवास्वप्नाद्धर्षनित्यत्वादचिन्तनाद्बीजस्वभावाच्चोपजायन्ते । तस्य हि अतिमात्रं मेदस्विनो मेद एवोपचीयते, न तथेतरे धातवः । तस्मादस्यायुषो ह्रासः शैथिल्यात्सौकुमार्याद्गुरुत्वाच्च मेदसो जरोपरोधः, शुक्राबहुत्वान्मेदसावृतमार्गत्वात्कृच्छ्रव्यवायता, दौर्बल्यमसमत्वाद्धातूनाम्, दौर्गन्ध्यं मेदोदोषान्मेदसः स्वभावात्स्वेदलत्वाच्च । मेदसः श्लेष्मसंसर्गाद्विष्यन्दित्वाद्बहुत्वाद्गुरुत्वाद्व्यायामासहत्वाच्च स्वेदाबाधः, तीक्ष्णाग्नित्वात्प्रभूतकोष्ठवायुत्वाच्च क्षुदतिमात्रं पिपासातियोगश्चेति ॥ ४ ॥**

तत्रातिस्थूलकृशयोश्चिकित्सोपयुक्तं विशेषं वक्तुमाह—तत्रेत्यादि । भूयएवेत्यतिदीर्घादितुल्यलोकविगानादधिका निन्दिताश्च ते विशेषाश्चेति निन्दितविशेषाः । अतिस्थौल्यस्य हेतुमाह—तदित्यादि । अतिसंपूरणमतिभोजनम् । बीजस्वभावादिति स्थूलमातापितृजन्यत्वात् । संप्रति स्थूलस्य साधारणादप्याहाराद्भूरिमेदोजन्माह—तस्य हीत्यादि । मेदस्विन इति हेतुगर्भविशेषणं, तेन यस्मादतिस्थूलशरीरे मेदोदेहव्यापकत्वेन लब्धवृत्त्यतस्तदेव प्रायो वर्धते, नान्ये रसादयस्तदभिभूतत्वादित्यर्थः । तस्मादिति विषमधातुत्वात् । मेदोदोषादिति दुष्टमेदोदौर्गन्ध्यं भवति । स्वभावादिति स्वभावादपि मेदआमगन्धित्वेन दुर्गन्धम् । स्वेदलत्वाच्चेति सति च स्वेदे दुर्गन्धतानुभवसिद्धैवेत्यर्थः । श्लेष्मसंसर्गादिभ्यो हेतुभ्यः स्वेदाबाधो ज्ञेयः ॥ ४ ॥

भवन्ति चात्र ।

**मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।**
**चरन्सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥**
**तस्मात्स शीघ्रं जरयत्याहारं चातिकाङ्क्षति ।**
**विकारांश्चाश्नुते घोरान्कांश्चित्कालव्यतिक्रमात् ॥६॥**
**एतावुपद्रवकरौ विशेषादग्निमारुतौ ।**
**एतौ हि दहतः स्थूलं वनदावो वनं यथा ॥ ७ ॥**
**मेदस्यति च संवृद्धे सहसैवानिलादयः ।**
**विकारान्दारुणान्कृत्वा नाशयन्त्याशु जीवितम् ॥८॥**
**मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।**
**अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥**
**इति मेदस्विनो दोषा हेतवो रूपमेव च ।**
**निर्दिष्टं वक्ष्यते वाच्यमतिकार्श्येऽप्यतःपरम् ॥ १० ॥**
**सेवा रूक्षान्नपानानां लङ्घनं प्रमिताशनम् ।**
**क्रियातियोगः शोकश्च वेगनिद्राविनिग्रहः ॥ ११ ॥**
**रूक्षस्योद्वर्तनस्नानस्याभ्यासः प्रकृतिर्जरा ।**
**विकारानुशयः क्रोधः कुर्वन्त्यतिकृशं नरम् ॥ १२ ॥**

मेदस्येत्यादौ वायोरनतिवृद्धत्वेनाग्निसन्धुक्षणत्वम्, न वैषम्यापादकत्वम्, यतः अतिवृद्धो हि वैषम्यं वह्नेः करोति वायुः। स इति मेदस्वी । कालव्यतिक्रमादिति भोजनकालातिक्रमात् । अतिस्थूललक्षणमाह—मेदोमांसेत्यादि । वाच्यमभिधेयम्, किंवा वाच्यमिति निन्दितमवद्यमिति यावत् ॥५-१२

**व्यायाममतिसौहित्यं क्षुत्पिपासामयौषधम् ।**
**कृशो न सहते तद्वदतिशीतोष्णमैथुनम् ॥ १३ ॥**
**प्लीहा कासः क्षयः श्वासो गुल्मार्शांस्युदराणि च ।**
**कृशं प्रायोऽभिधावन्ति रोगाश्च ग्रहणीगताः ॥१४॥**
**शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः ।**
**त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मतः ॥ १५ ॥**
**सततव्याधितावेतावतिस्थूलकृशौ नरौ ।**
**सततं चोपचर्यौ हि कर्षणैर्बृंहणैरपि ॥ १६ ॥**

प्रमितस्य स्तोकस्याशनं प्रमिताशनम् । क्रियातियोगो वमनातियोगः । प्रकृतिर्देहजनकं बीजम् । अनुशयोऽनुबन्धः । कृशस्य लक्षणम् शुष्केत्यादि । त्वगस्थिशेष इति दृश्यत इति शेषः । स्थूलपर्वा स्थूलग्रन्थिः ॥ १३—१६ ॥

१ एषां च निन्दितत्वे वैरूप्यमेव हेतुः । प्रत्येकं चकारकरणमेषां परस्परसांकर्येऽतिशयितविधित्वं बोधयति, तेन अतिदीर्घोऽतिह्रस्वो वा पुरुषो यद्यतिलोमादिर्भवति, तदा विशेषान्निन्दितो भवतीत्यर्थ इति शि: । २ जवोपरोध इति वा पाठः

१ विकारान्दारुणानिति प्रमेहपिडकाज्वरभगन्दरविद्रधिवातरोगाणामन्यतमानिति शि: । २ अयथोपचयोत्साह इति शरीरोपचयानुरूपबलरहित इत्यर्थ इति शि: । ३ अभिवाधन्ते इति वा पाठः ।

स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हि तौ[1] ।
यद्युभौ व्याधिरागच्छेत्स्थूलमेवातिपीडयेत् ॥ १७ ॥

कर्षणैर्बृहणैरिति यथासंख्यम् । वरमिति मनागिष्टम् । स्थूलमेवातिपीडयेदिति स्थूलस्य दुरुपक्रमत्वात् । यतः स्थूलस्य सन्तर्पणमतिस्थौल्यकरम्, अपतर्पणं चाग्नं प्रवृद्धाग्निवातान्न सोढुं क्षमः, अबले तु सन्तर्पणं योग्यमेवेति भावः ॥ १६—१७ ॥

सममांसप्रमाणस्तु समसंहननो नरः ।
दृढेन्द्रियत्वाद्व्याधीनां न बलेनाभिभूयते ॥ १८ ॥
क्षुत्पिपासातपसहः शीतव्यायामसंसहः ।
समपक्ता समजरः सममांसचयो मतः ॥ १९ ॥

संप्रति प्रशस्तपुरुषमाह—सममित्यादि । मांसशब्देनेहोपचयो विवक्षितः, तेन सममुपचयस्य प्रमाणं यस्य स तथा । संहननं मेलकः । अपरमपि सममांसप्रमाणगुणानाह—क्षुदित्यादि ॥ १८—१९ ॥

गुरु चातर्पणं चेष्टं स्थूलानां कर्षणं प्रति ।
कृशानां बृंहणार्थं च लघु सन्तर्पणं च यत् ॥ २० ॥
वातघ्नान्यन्नपानानि श्लेष्ममेदोहराणि च ।
रूक्षोष्णा बस्तयस्तीक्ष्णा रूक्षाण्युद्वर्तनानि च ॥ २१ ॥

एवं स्थूलकृशौ प्रतिपाद्य तयोर्योजनीयं भेषजमाह—गुर्वित्यादि । गुरुचातर्पणं च, यथा मधु । एतद्धि गुरुत्वाद्वह्निमग्निं चापयति[2] अतर्पणत्वान्मेदो हन्ति । एवं प्रशातिकाप्रभृतिनामतर्पणानां संस्कारादिना गुरुत्वं कृत्वा भोजनं देयम् । कृशानां तु लघुतर्पणं देयम् । तद्धि लाघवादग्निवृद्धिकरं सन्तर्पणत्वाच्च पुष्टिकृत् । एतच्च द्वितयमप्यभीष्टतमत्वेनोक्तम् । तेन, मेदस्विनो यल्लघु चातर्पणं प्रशातिकाप्रियङ्ग्वादि, तन्न कर्तव्यम् । तथा कृशस्यापि नवान्नादि गुर्वपि सन्तर्पणं कर्तव्यम् । परं लाघवं गौरवं च तत्संस्कारादिना प्रतिकर्तव्यम् ॥ २०—२१ ॥

गुडूचीभद्रमुस्तानां प्रयोगस्त्रैफलस्तथा ।
तक्रारिष्टप्रयोगस्तु प्रयोगो माक्षिकस्य च ॥ २२ ॥
विडङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णं च प्रयोगः श्रेष्ठ उच्यते ॥ २३ ॥
बिल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः ।
शिलाजतुप्रयोगस्तु साग्निमन्थरसः परः ॥ २४ ॥
प्रशातिका प्रियङ्गुश्च श्यामाका यवका यवाः ।
जूर्णाह्वाः[3] कोद्रवा मुद्गाः कुलत्थाश्चक्रमुद्गकाः[4] ॥ २५ ॥
आढकीनां च बीजानि पटोलामलकैः सह ।
भोजनार्थं प्रयोज्यानि पानं चानु मधूदकम् ॥ २६ ॥

अरिष्टांश्चानुपानार्थे मेदोमांसकफापहान् ।
अतिस्थौल्यविनाशाय संविभज्य प्रयोजयेत् ॥ २७ ॥
प्रजागरं व्यवायं च व्यायामं चिन्तनानि च ।
स्थौल्यमिच्छन्परित्यक्तुं क्रमेणाभिप्रवर्धयेत् ॥ २८ ॥

माक्षिकस्येति मधुनः, नच मधुनो वृष्यप्रयोगेषु दृष्टत्वाद् बृंहणत्वं वाच्यम्, यतः योगवाहि मधु यदा वृष्येण युज्यते तदा वृष्यत्वं करोति, लेखनयुक्तं तु लेखनकरम्, तथा स्वरूपेणापि रुक्षादिगुणयोगात्कर्षणं, वचनं हि "नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु" । विडङ्गादिप्रयोगो गौरवनिरपेक्ष एवातिस्थौल्यहरः प्रभावात् । प्रशातिका उडिकेति प्रसिद्धा । यवका स्वल्पयवाः । चक्रमुद्गकः ऋषिमुद्गक इति प्रसिद्धः । आढकी तुवरी ॥ २२—२८ ॥

स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः ।
चिन्ताव्यवायव्यायामविरामः प्रियदर्शनम् ॥ २९ ॥
नवान्नानि नवं मद्यं ग्राम्यानूपौदका रसाः ।
संस्कृतानि च मांसानि दधि सर्पिः पयांसि च ॥ ३० ॥
इक्षवः शालयो माषा गोधूमा गुडवैकृतम् ।
बस्तयः स्निग्धमधुरास्तैलाभ्यङ्गश्च सर्वदा ॥ ३१ ॥
स्निग्धमुद्वर्तनं स्नानं गन्धमाल्यनिषेवणम् ।
शुक्लवासो यथाकालं दोषाणामवसेचनम् ॥ ३२ ॥
रसायनानां वृष्याणां योगानामुपसेवनम् ।
हत्वातिकार्श्यमादत्ते नृणामुपचयं परम् ॥ ३३ ॥
अचिन्तनाच्च कार्याणां ध्रुवं सन्तर्पणेन च ।
स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥ ३४ ॥

कार्श्यचिकित्सामाह—स्वप्न इत्यादि । शमः शान्तिः । ननु नवान्नादीनां गुरूणां संस्कारादिनाऽगौरवं प्रतिकर्तव्यमग्निमान्द्यभयात्, तत्किमिति लघून्येव रक्तशाल्यादीनि तथा न क्रियन्ते । तानि हि प्रकृत्या लघूनि तर्पणानि च मधुरयोगात् । न, उभयस्याभिप्रेतत्वात्, प्रकृतिलघु च तर्पणं रक्तशाल्यादि, संस्कारादिलघु च नवान्नादि सन्तर्पणकरणमिति । एवं पूर्वोक्तप्रशातिकादावप्यनुसर्तव्यम् । अचिन्तनाच्चेत्यादिना प्रकृष्टं बृंहणकारणमुच्यते, स्वप्नप्रसङ्गोनित्यं स्वप्नमतिमात्रं च ॥ २९—३४

यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः ।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः ॥ ३५ ॥

संप्रति प्रस्तावानुगतं स्थौल्यकार्श्यचिकित्साप्रधानभूतं स्वप्नं निद्रारूपं सर्वतो निरूपयति—यदात्वित्यादि । मनसीत्यन्तःकरणे । किंवा मनोयुक्तआत्मा मन इत्युच्यते, तस्मिन् क्लान्त इति निष्क्रिये । कर्मात्मान इतीन्द्रियाणि । क्लमान्विताः क्रियारहिताः । विषयेभ्यो रूपादिभ्यः । मनसोऽप्रवृत्त्येन्द्रियाण्यपि न प्रवर्तन्त इति भावः । तदा स्वपितीति स्वप्नगुणयुक्तो भवति, स्वप्नश्च निरिन्द्रियप्रदेशे मनोऽवस्थानम् । किंवा कर्मात्मान इति संसार्यात्मानः । मनसि क्लान्ते आत्मानः क्लान्ता भवन्ति,

[1] समोपकरणाविति सममुपकरणं चिकित्साविधानं ययोस्तौ, तथाच चिकित्स्यत्वेन तुल्यावपीत्यर्थं इति शिः । [2] चापयातीति वा पाठः । [3] जूर्णाह्वास्तृणधान्यविशेषा दक्षिणापथे योर्णक इति प्रसिद्ध इत्यरुण इति शिः । [4] समकुष्ठकाः इति वा पाठः ।

मनोऽधीनप्रवृत्तित्वादात्मनाम्। ततश्च मनोनिवृत्त्याऽऽत्मानोऽपि न विषयान् गृह्णन्ति। इन्द्रियाणि चात्मनोऽप्रवृत्त्यैव न प्रवर्तन्ते ॥ ३५ ॥

**निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम्।**
**वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥ ३६ ॥**
**अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।**
**सुखायुषी पराकुर्यात्कालरात्रिरिवापरा ॥ ३७ ॥**
**सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा।**
**पुरुषं योगिनं सिद्ध्या सत्या बुद्धिरिवागता ॥ ३८ ॥**

संप्रति विधिना सेवितायाः गुणमविधिना च निद्राया दोषमाह—निद्रायत्तमित्यादिना न चेत्यन्तेन। अत्र च सुखादि विधिसेवितनिद्राफलम्, दुःखादि त्वविधिनिद्राफलम्। एतदेव विभजते—अकाल इत्यादि। अकाल इति दिनादौ निद्रां प्रति निषिद्धे काले। अनेन च मिथ्यायोगो निद्राया उक्तः। कालोपा कालरात्रिः, सत्या बुद्धिस्तत्त्वज्ञानम् ॥ ३६—३८ ॥

**गीताध्ययनमद्यस्त्रीकर्मभाराध्वकर्षिताः।**
**अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथाबलाः ३९**
**तृष्णातीसारशूलार्ताः श्वासिनो हिक्किनः[२] कृशाः।**
**पतिताभिहतोन्मत्ताः क्लान्ता यानप्रजागरैः ॥ ४० ॥**
**क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये।**
**सर्व एते दिवास्वप्नं सेवेरन्सार्वकालिकम् ॥ ४१ ॥**
**धातुसाम्यं तथा ह्येषां बलं चाप्युपजायते।**
**श्लेष्मा पुष्णाति चाङ्गानि स्थैर्यं भवति चायुषः॥४२**

१ काले सैवाऽगता गदानिति पाठे काले आगता निद्रागदान्पराकुर्यादित्यर्थः। २ शूलिन इति पाठस्तु न समीचीनः, शूलार्ता इत्यनेनैव तदर्थगृहीतत्वात्। ३ अपिशब्दावत्र सामर्थ्याल्लब्धौ बोद्धव्यौ, तेन रात्रावपि जागरणं रूक्षम्, दिवात्वाग्नेयमत्यर्थं रूक्षं कालेनाहितबलत्वात्, तथा प्रस्वपनं दिवापि स्निग्धम्, रात्रौ तु सौम्यकालेऽतिशयेन स्निग्धत्वमवतिष्ठते। अपिशब्दाभ्यामन्तरेण तु रात्रावेव जागरणं रूक्षं दिवा तु स्निग्धमित्यर्थो जायते, व्यवच्छेदफलत्वाद्वाक्यानाम्। एवं दिवस एव स्निग्धं प्रस्वपनं रात्रौ तु रूक्षमिति, नैतद्युज्यते। ततो दिवा जागरणं सदा रूक्षम् नाभविष्यत्, तत्कथमिदमुपपत्स्यते, "बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि। विषार्त्तः कण्ठरोगी च नैव जातु निशास्वपि" इति। येषां ह्यपतर्पणमेव हितम्, यच्चापतर्पणं तदवश्यं रूक्षम्, तस्मादपतर्पणस्वभावं जागरणमेव सेव्यम्, तथा, "ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः। दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः॥मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः। क्रोधशोकभयैः क्लान्तान् श्वासहिक्कातिसारिणः। वृद्धबालबलक्षीणक्षततृट्शूलपीडितान्। अजीर्ण्यभिहतोन्मत्तान्दिवास्वप्नोचितानपि" तदेषां संतर्पणार्हत्वात्सन्तर्पणमेव हितम्, यच्च सन्तर्पणं तदवश्यं स्निग्धम्। तस्मादेतैः सन्तर्पणस्वभावमेव प्रस्वपनं सेव्यम्। एवं पूर्वमेव च व्याख्यानं युक्तमित्यरुणदत्तकृताऽष्टाङ्गहृदयटीकायाम्।

संप्रति दिनेऽपि यैर्निद्रा सेव्या तानाह—गीतेत्यादि। इह गीतकर्शितानां दिवास्वप्नाद्धातुपुष्टौ सत्यामारोग्यम्। अतीसारादिषु च प्रभावाद्दिवापि निद्रा हिता। अजीर्णिनस्त्वजीर्णपाकार्थं दिवानिद्रा। निद्रा हि स्रोतोऽवरोधेनाग्निबलं कृत्वा शीघ्रमाहारं पचति। दिवास्वप्नसात्म्यात्सहसा तत्परित्यागे दोष एव स्यात्। रात्रौ जागरितानां च तज्जनितवातक्षोभशमार्थं दिवास्वप्नः, स च क्षारपाणिवचनेन कर्तव्यः, यदुक्तम्। "यावत्कालं न सुप्तः स्याद्रात्रौ स्वप्नाद्यथोचितात्। ततोऽर्धमात्रं तत्कालं दिवा स्वप्नो विधीयते।" अयंच दिवास्वप्नोऽभुक्तवतामेव। यदुक्तं हारीते "भुक्त्वा स्वप्नं न सेवेत सुप्तोऽन्यसुखितो भवेत्"। अन्यत्राप्युक्तं व्यायामादिषु दिवास्वप्नविधाने "नराग्निरशनान्कामं दिवा स्वापयेत्"दिति। सार्वकालिकमिति ग्रीष्मं परित्यज्यापि। 'रात्रीणां चातिसंक्षेपा'दित्यनेनाल्पनिद्रत्वं च सूचयति ॥ ३९—४२ ॥

**ग्रीष्मे त्वादानरूक्षाणां वर्धमाने च मारुते।**
**रात्रीणां चातिसंक्षेपाद्दिवा स्वप्नः प्रशस्यते ॥ ४३ ॥**
**ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात्प्रकुप्यतः।**
**श्लेष्मपित्ते दिवा स्वप्नस्तस्मात्तेषु न शस्यते ॥ ४४ ॥**
**मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः।**
**दूषीविषार्ताश्च दिवा न शयीरन्कदाचन ॥ ४५ ॥**
**हलीमकः शिरःशूलं स्तैमित्यं गुरुगात्रता।**
**अङ्गमर्दोऽग्निनाशश्च प्रलेपो हृदयस्य च ॥ ४६ ॥**
**शोफारोचकहृल्लासपीनसार्धावभेदकाः।**
**कोठोऽरुः पिडकाः कण्डूस्तन्द्रा कासो गलामयाः॥४७**
**स्मृतिबुद्धिप्रमोहश्च संरोधः स्रोतसां ज्वरः।**
**इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्तनम् ॥ ४८ ॥**
**भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात्।**
**तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात्सुखं बुधः ॥४९॥**

"न शयीरन्कदाचनेति" वचनाद्ग्रीष्मेऽपि दिवास्वप्नं मेदस्विप्रभृतीनां निषेधति। गीतकर्षणादौ तु बलाबलं निरूप्य दिवास्वप्नप्रवृत्तिर्वा विधेया। विषवेगप्रवर्तनमिति दूषीविषार्तानां बोद्धव्यम्। स्वप्यात्सुखमिति सुखं यथा भवति तथा स्वप्यात्। तच्चाहितस्वप्नपरित्यागेन हितस्वप्नसेवया च॥४३—४९

**रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।**
**अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ५० ॥**
**देहवृत्तौ यथाऽऽहारस्तथा स्वप्नः सुखो मतः।**
**स्वप्नाऽऽहारसमुत्थे च स्थौल्यकार्श्ये विशेषतः ॥५१**

रात्रावित्यादिना जागरणस्य स्वप्नस्य च रूक्षत्वं स्निग्धत्वं च तत्कार्यकर्तृत्वादुपचर्यते। किंच जागरणं रात्रौ दिने वा रूक्षमेव। परं दिवा जागरणं न विलक्षणं शरीरे करोति रात्रिस्वप्नस्निग्धत्वात्, रात्रौ जागरणं तु रौक्ष्यं करोति, तेन तद्रूक्षमुच्यते। एवं दिवास्वप्नेऽपि वाच्यम्। स्वप्नप्रसङ्गेन स्वप्नभेद-

गुणमाह—अहृक्षमित्यादि । अनभिष्यन्दमित्यधमित्यर्थः । आसीनप्रचलायितमुपविष्टस्य किंचिन्निद्रासेवनम्[1]। यदाहुर्जनाः प्रधानं विहारेषु, स्वप्नप्राधान्ये हेतुमाह—देहवृत्ताविलादि ॥ ५०—५१ ॥

अभ्यङ्गोत्सादनं स्नानं ग्राम्यानूपौदका रसाः ।
शाल्यन्नं सदधि क्षीरं स्नेहो मद्यं मनःसुखम् ॥५२॥
मनसोऽनुगुणा गन्धाः शब्दाः संवाहनानि च ।
चक्षुषस्तर्पणं लेपः शिरसो वदनस्य च ॥ ५३ ॥
स्वास्तीर्णं शयनं वेश्म सुखं कालस्तथोचितः ।
आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः ॥ ५४ ॥

सुखहेतुस्वप्नजनकं हेतुमाह—अभ्यङ्गेत्यादि । कालस्तथोचित इति यस्मिन्काले निद्रा पुरुषेणाभ्यस्ता स कालस्तथोचितः । निमित्ततः प्रनष्टेतिवचनमरिष्टजनितनिद्राभावप्रतिषेधार्थम् । अरिष्टं ह्यनिमित्तमुच्यते ॥ ५२—५४ ॥

कायस्य शिरसश्चैव विरेकश्छर्दनं भयम् ।
चिन्ता क्रोधः कथा धूमो व्यवायो रक्तमोक्षणम् ॥५५॥
उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः ।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥ ५६ ॥
एत एव च विज्ञेया निद्रानाशस्य हेतवः ।
कार्यं कालो विकारश्च प्रकृतिर्वायुरेव च ॥ ५७ ॥

अत्र निद्राप्रतिषेधहेतुमाह—कायस्येत्यादि । सत्त्वौदार्यम् सत्वभूरित्वम्, तमोजयस्तमोगुणजयः । स च योगाभ्यासादिना भवति। एत एव चेति स्वस्थे क्रियमाणा इति बोद्धव्यम् । निद्रातिप्रसङ्गे सति क्रियमाणा अतिप्रसङ्गनिषेधका भवन्ति । अपरानपि निद्रानाशहेतूनाह—कार्यमित्यादि । कार्यमिति कार्यासक्तो न निद्रां याति । काल इति वार्धक्यम् । वृद्धा हि स्वभावत एव जागरूका भवन्ति । विकारो व्याधिः शूलादिः, प्रकृतिः स्वभावः, स्वभावादेव केचिदनिद्रा भवन्ति । विकारग्रहणेनैव वाते लब्धे पुनर्वातग्रहणं विशेषेण वायोर्निद्रापहारकत्वप्रतिपादनार्थम् ॥ ५५—५७ ॥

तमोभवा श्लेष्मसमुद्भवा च
मनःशरीरश्रमसंभवा च ।
आगन्तुकी व्याध्यनुवर्तिनी च
रात्रिस्वभावप्रभवा च निद्रा ॥ ५८ ॥

निद्राविशेषानाह—तमोभवेत्यादि । तमोभवा इति तमोगुणोद्रेकभवा, मनःशरीरश्रमसंभवा तु निद्रा मनःशरीरयोः श्रमेण क्रियोपरमे सति नेन्द्रियाणि न च मनो विषयेषु प्रवर्तन्ते, ततश्च निद्रा स्यात्, श्रमश्चायमनतिवृद्धो भूरिवातप्रकोपकोऽभिप्रेतः, तेन श्रमस्य वातजनकत्वेन निद्रानाशः किमिति न भवतीति न वाच्यम् । दृष्टं चैतयत् श्रान्तानामनिद्रा न भवतीति। आगन्तुकी रिष्टभूता व्याध्यनुवर्तिनी सन्निपातज्वरादिकार्या रात्रिस्वभावात्प्रभवतीति रात्रिस्वभावप्रभवा । दिवा प्रभवन्ती तु निद्रा तमःप्रभृतिभ्यस्त्रिभ्य एव स्यात् ॥ ५८ ॥

रात्रिस्वभावप्रभवा मता या
तां भूतधात्रीं प्रवदन्ति निद्राम् ।
तमोभवामाहुरघस्य मूलं
शेषं पुनर्व्याधिषु निर्दिशन्ति ॥ ५९ ॥

आसु निद्रासु प्रशस्तां निद्रां चाह—रात्रीत्यादि । भूतानि प्राणिनो दधाति पुष्णातीति भूतधात्री, धात्रीव धात्री । अघस्य पापस्य मूलमिति कारणम् । तमोगृहीतो हि सदा निद्रात्मकत्वेनानुष्ठेयं सद्वृत्तं न करोति ततश्चाऽधर्मोत्पादः । व्याधिष्विति शरीरव्याधिषु, श्लेष्मादयो व्याधय एव, तेषु च भूता निद्रा व्याधिरूपैव । आगन्तुकी चासाध्यव्याधिभवा च स्वयमप्यसाध्यभूता व्याधिरूपा, तेन तां च व्याधिषु मध्ये निर्दिशन्ति । किंवा व्याधिष्वाधारेषु निर्दिशन्तीत्यर्थो ज्ञेयः॥५९॥

तत्र श्लोकाः ।

निन्दिताः पुरुषास्तेषां यौ विशेषेण निन्दितौ ।
निन्दिते कारणं दोषास्तयोर्निन्दितभेषजम् ॥ ६० ॥
येभ्यो यदा हिता निद्रा येभ्यश्चाप्यहिता यदा ।
अतिनिद्रायाऽनिद्राय भेषजं यद्भवा च सा ॥ ६१ ॥
या या यथाप्रभावा च निद्रा तत्सर्वमत्रिजः ।
अष्टौनिन्दितसंख्याते व्याजहार पुनर्वसुः ॥ ६२ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अष्टौनिन्दितीयोनामैकविंशोऽध्यायः ॥

संग्रहे अनिद्रायेति अविद्यमाननिद्राय पुरुषाय, यथाप्रभावा चेति भूतधात्रीत्यादिवर्णितप्रभावा ॥ ६०—६२ ॥

इत्यष्टौनिन्दितीयः समाप्तः ।

## द्वाविंशोऽध्यायः ।

अथातो लङ्घनबृंहणीयमध्यायं व्याख्यास्यामः[2] ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान् ।
षडग्निवेशप्रमुखानुक्तवान्परिचोदयन् ॥ ३ ॥

---

१ आसीनस्योपविष्टस्य प्रचलायितमासीनप्रचलायितं, न तु प्रस्वपनं सर्वसार्विकया, येन, स्नेहनहेतुः स्वादित्यरुणतः । आसीनप्रचलायितमिति उपविष्टस्य घूर्णनमित्यर्थः, घूर्णितं प्रचलायितमित्यमर इति शिः । २ व्यायाम इति वा पाठः । ३ निद्रानाशयेति हितनिद्रानाशस्याप्येते एव सुखेनातिप्रसङ्गेन क्रियमाणा हेतवो भवन्तीत्यर्थ इति शिः ।

१ यद्यपि तमोभवापि व्याधिरेव, तथापि सा मानसदोषजन्येति न तस्याः शरीरव्याधिष्वन्तर्भाव इत्यर्थ इति शिः । २ पूर्वाध्याये तर्पणैर्बृंहणैरित्युक्तम्, अतस्तदभिधायकं लङ्घनबृंहणीयमाह—अथात इत्यादि । इति शिः ।

लङ्घनं[1] बृंहणं काले रूक्षणं स्नेहनं तथा ।
स्वेदनं स्तम्भनं चैव जानीते यः स वै भिषक् ॥४॥
तमुक्तवन्तमात्रेयमग्निवेश उवाच ह ॥ ५ ॥
भगवँल्लङ्घनं किंस्विल्लङ्घनीयाश्च कीदृशाः ।
बृंहणं बृंहणीयाश्च रूक्षणीयाश्च रूक्षणम् ॥ ६ ॥
स्नेहनं स्नेहनीयाश्च स्वेदाः स्वेद्याश्च के मताः ॥
स्तंभनं स्तंभनीयाश्च वक्तुमर्हसि तद्गुरो ॥ ७ ॥
लङ्घनप्रभृतीनां च षण्णामेषां समासतः ।
कृताकृतातिरिक्तानां लक्षणं वक्तुमर्हसि ॥ ८ ॥

योजनापेक्षिणीयशरीरमभिधाय लङ्घनादिविषयत्वाद्योजनाया लङ्घनादीन्येव विषयतः स्वरूपतश्च वक्तुं लङ्घनबृंहणीयोऽभिधीयते । परिचोदयन्निति ज्ञानार्थं प्रेरयन् । कृतेत्यादौ कृतं सम्यक्कृतम् ॥ १—८ ॥

वचस्तदग्निवेशस्य निशम्य गुरुरब्रवीत् ।
यत्किंचिल्लाघवकरं देहे तल्लङ्घनं स्मृतम् ॥ ९ ॥
बृहत्त्वं यच्छरीरस्य जनयेत्तच्च बृंहणम् ।
रौक्ष्यं खरत्वं वैशद्यं यत्कुर्यात्तद्धि रूक्षणम् ॥ १० ॥
स्नेहनं स्नेहविष्यन्दमार्दवक्लेदकारकम् ।
स्तंभगौरवशीतघ्नं स्वेदनं स्वेदकारकम् ॥ ११ ॥
स्तंभनं स्तंभयति यद्गतिमन्तं चलं ध्रुवम् ।
लघूष्णतीक्ष्णविशदं रूक्षं सूक्ष्मं खरं सरम् ॥ १२ ॥
कठिनं चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम् ।
गुरुशीतमृदुस्निग्धं बहलं स्थूलपिच्छिलम् ॥ १३ ॥
प्रायो मन्दं स्थिरं श्लक्ष्णं द्रव्यं बृंहणमुच्यते ।
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरमपिच्छलम्[2] ॥१४॥
प्रायशः कठिनं चैव यद्द्रव्यं तद्धि रूक्षणम् ।

रौक्ष्यमित्यादौ रौक्ष्यमेव प्रधानं बोद्धव्यम्, खरत्ववैशद्ये तु तदनुगते, विष्यन्दो विलयनम् । स्वेदकारकं घर्मकारकम् । स्तम्भयतीति विरुणद्धि । चलमिति किंचिद्गतिमत् । गतिमन्तमिति प्रव्यक्तगतिमन्तम् । एतच्चातिसारशोणितस्रुतिविषदाहवेदनादिषु बोद्धव्यम् । न तु केवलवाते गतिमन्तं प्रति, स्तम्भकस्य वर्धकत्वात् । गुर्वित्यादौ बहलं घनम् । मन्दमिति चिरकारि । स्थूलं संहतावयवं लड्डुकपिष्टकादि । विरूक्षणद्रव्यकथने यद्गुणमेव लङ्घनद्रव्यमुक्तं तद्गुणमेव विरूक्षणं यद्यप्युक्तं, तथापि रूक्षगुणस्यात्र प्राधान्यम्, लङ्घने तु लघुगुणप्राधान्यं ज्ञेयम् । तथा लङ्घनमद्रव्येणोपवासेनापि क्रियते । विरूक्षणं तु द्रव्यकार्यतयैव प्राधान्यादुक्तम्, तेन लङ्घनविरूक्षणयोर्नैकता । यत्तु वक्ष्यति "कृतातिकृतलिङ्गं यल्लङ्घिते तद्विरूक्षिते" इति, तत् प्रायो वादात् । विरूक्षणस्य हि मुख्यः स्नेहाभावः, लङ्घनस्य तु गौरवाभाव इति स्फुट एवं भेदः प्रतिभाति ॥ ९—१४ ॥

द्रवं सूक्ष्मं सरं स्निग्धं पिच्छिलं गुरु शीतलम् ।
मन्दं मृदु च प्रायो यद्द्रव्यं तत्स्नेहनं मतम् ॥ १५ ॥
उष्णं तीक्ष्णं सरं स्निग्धं रूक्षं सूक्ष्मं द्रवं स्थिरम् ।
द्रव्यं गुरु च यत्प्रायस्तद्धि स्वेदनमुच्यते ॥ १६ ॥
शीतं मन्दं मृदु श्लक्ष्णं रूक्षं सूक्ष्मं द्रवं स्थिरम् ।
यद्द्रव्यं लघु चोद्दिष्टं प्रायस्तत्स्तंभनं स्मृतम् ॥ १७ ॥
चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥ १८ ॥

स्वेदगुणकथने स्निग्धं रूक्षमिति स्निग्धं वा रूक्षं वेत्यर्थः । एवं सरस्थिरावपि विकल्पेन ज्ञेयौ । पिपासेति पिपासानिग्रहः । मारुतो यद्यपि सोमसंबन्धात्तथा लङ्घनं न भवति, तथापि स्वरूपेण लङ्घनमेव । पचन्तमग्निं प्रतिपक्षक्षपणेन बलदानेन च यत्पाचयति तत्पाचनं, तच्च वाय्वग्निगुणभूयिष्ठम् । चतुःप्रकारा संशुद्धिरित्यनुवासनं वर्जयित्वा, तस्य बृंहणत्वात् ॥ १५—१८ ॥

प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः[1] ।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥ १९ ॥
येषां मध्यबला रोगाः कफपित्तसमुत्थिताः ।
वम्यतीसारहृद्रोगविसूच्यलसकज्वराः ॥ २० ॥
विबन्धगौरवोद्गारहृल्लासाऽरोचकादयः ।
पाचनैस्तान् भिषक्प्राज्ञः प्रायेणादावुपाचरेत् ॥ २१ ॥
एत एव यथोद्दिष्टा येषामल्पबला गदाः ।
पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत् ॥ २२ ॥
रोगान् जयेन्मध्यबलान् व्यायामातपमारुतैः ।
बलिनां किं पुनर्येषां रोगाणामवरं बलम् ॥ २३ ॥

उक्तस्य दशप्रकारलङ्घनस्य भिन्नं विषयमाह—प्रभूतेत्यादि । आदाविति वचनमन्ते च्छर्द्यादीनां निरामाणां संशमनीयत्वात् । रोगानिति लङ्घनीयरोगान् । बलिनामिति पदं बलवतामेव व्यायामादिसेवाविधानार्थम् । मध्यबलानामप्येतेनाल्पबला एव गदा व्यायामादिविषया इति भावः ॥ १९—२३ ॥

त्वग्दोषिणां प्रमूढानां[2] स्निग्धाऽभिष्यन्दिबृंहिणाम् ।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥ २४ ॥

बृंहिणां बृंहणयुक्तानां, लङ्घनं शस्तमिति दशविधमपि । शिशिर इति शिशिरगुणयुक्ते हेमन्ते शिशिरे च । अत्र च लङ्घनं बलवत्त्वात्प्राणिनां कार्यम् ॥ २४ ॥

अदिग्धविद्धमक्लिष्टं वयस्थं सात्म्यचारिणाम् ।
मृगमत्स्यविहङ्गानां मांसं बृंहणमुच्यते ॥ २५ ॥

---

१ लङ्घनमित्यादि । रूक्षादीन्यपि लङ्घनबृंहणयोरन्तर्भवन्ति, तदुक्तम् "स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनं च यत् । भूतानां तच्च द्वैविध्याद्द्वितयं नातिवर्तते" इति तथाप्यशेषविशेषज्ञानार्थं तेषामपीह भेदेनोपादानं मन्तव्यमिति शिः । २ अविज्जलमिति वा पाठः ।

१ संसृष्टमारुता इति वा पाठः । २ प्रगीढानामिति वा पाठः

क्षीणाः क्षताः कृशा वृद्धा दुर्बला नित्यमध्वगाः ।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः ॥२६
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्शिताश्च ये ।
तेषां क्रव्यादमांसानां बृंहणा लघवो रसाः[1] ॥ २७ ॥
स्नानमुत्सादनं स्वप्नो मधुराः स्नेहवस्तयः ।
शर्करा क्षीरसर्पींषि सर्वेषां विद्धि बृंहणम् ॥ २८ ॥

अदिग्धविद्धमिति विषाक्तशस्त्राविद्धम् । सात्म्यदेशे चरन्तीति सात्म्यचारिणः । लघव इति संस्कारेण लघवः । किंवा क्रव्यादानां ये लघवः श्येनादयः तन्मांसरसा इत्यर्थः ॥ २५—२८ ॥

कटुतिक्तकषायाणां सेवनं स्त्रीष्वसंयमः ।
खलिपिण्याकतक्राणां मध्वादीनां च रूक्षणम् ॥२९॥
अभिष्यन्दा महादोषा मर्मस्था व्याधयश्च ये ।
ऊरुस्तंभप्रभृतयो रूक्षणीया निदर्शिताः ॥ ३० ॥
स्नेहाः स्नेहयितव्याश्च स्वेदाः स्वेद्याश्च ये मताः ।
स्नेहाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तरम् ॥३१॥
द्रवं तनु[2] सरं यावच्छीतीकरणमौषधम् ॥ ३२ ॥
स्वादु तिक्तं कषायं च स्तम्भनं सर्वमेव तत् ।
पित्तक्षाराग्निदग्धा[3] ये वम्यतीसारपीडिताः ॥ ३३ ॥
विषस्वेदातियोगार्ताः स्तम्भनीयास्तथाविधाः ।
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ॥ ३४ ॥

मध्वादीनां च सेवनमिति संबन्धः । खलिः सर्षपखलिः । पिण्याकं तिलखलिः, किंवा पिण्याकशाकम् । प्रभृतिग्रहणादाढ्यवातप्रमेहादयो ग्राह्याः । तन्वबहलं, सरति गच्छतीति सरं न सरमसरं स्थिरमित्यर्थः ॥ २९—३४ ॥

हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ।
स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये ॥ ३५ ॥
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ।
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ॥ ३६ ॥
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ।
मनसः संभ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि ।
देहाग्निबलनाशश्च लङ्घनेऽतिकृते भवेत् ॥ ३७ ॥

क्षुत्पिपासयोरसहः पीडाकरत्वेनोदयः क्षुत्पिपासासहोदयः, न तु क्षुत्पिपासयोर्युगपदुदयः । अतएव सुश्रुते "सृष्टमारुतविण्मूत्रक्षुत्पिपासासहं लघुम्" इत्यादि[4], अन्तरात्मनीति मनसि । मनसः संभ्रमो भ्रान्तिरेव, ऊर्ध्वकाये वात ऊर्ध्ववातः[1] ॥ ३५—३७ ॥

बलं पुष्ट्युपलम्भश्च कार्श्यदोषविवर्जनम् ।
लक्षणं बृंहिते स्थौल्यमति चात्यर्थबृंहिते ॥ ३८ ॥
कृताकृतस्य लिङ्गं यल्लङ्घिते तद्धि रूक्षिते ।
स्तम्भितः स्याद्बले लब्धे यथोक्तैश्चामयैर्जितैः ॥३९॥

कार्श्यदोषविवर्जनमिति कार्श्ये ये दोषाः शीतोष्णासहत्वादयः, तेषां वर्जनम् । बले लब्धे इति बलवान्यदा पुरुषो भवति । यथोक्तैरिति "पित्तक्षाराग्निदग्धा ये" इत्याद्यभिधेयैः । उद्वेग ऊर्ध्ववातवेगः । किंवा भैषज्यानभिलाषः ॥३८—३९॥

श्यावता स्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः ।
हृद्वर्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम् ॥ ४० ॥
लक्षणं चाकृतानां स्यात्षण्णामेषां समासतः ।
तदौषधानां धातूनामशमो वृद्धिरेव च ॥ ४१ ॥
इति षट् सर्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः ।
साध्यानां साधने सिद्धा मात्राकालानुरोधिन इति

तदौषधानामिति लङ्घनादिसाध्यानाम् । वृद्धिरेव चेति स्तोकमात्रकृतलङ्घनादिक्रियया दोषक्षोभमात्रस्य कृतत्वात् । धातूनामिति दोषाणाम् । "दोषा अपि धातुशब्दं लभन्ते" इति वचनात् ॥ ४०—४२ ॥

भवति चात्र ।

दोषाणां बहुसंसर्गात्सङ्कीर्यन्ते ह्युपक्रमाः ।
षट्त्वं तु नातिवर्तन्ते त्रित्वं वातादयो यथा ॥४३॥
इत्यस्मिँल्लङ्घनाध्याये व्याख्याताः षडुपक्रमाः ।
यथाप्रश्नं भगवता चिकित्सा यैः प्रवर्तिता ॥ ४४ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
लङ्घनबृंहणीयो नाम द्वाविंशोऽध्यायः ।

संप्रत्युक्तलङ्घनाद्युपक्रमाणां विकारापेक्षया संसर्गमाह—दोषाणामित्यादि । दोषाणां यस्मात्संसर्गा बहवस्तस्मात्तत्साधनार्थमुपक्रमा अपि सङ्कीर्यन्ते मिश्रतां यान्ति । यथा क्वचिल्लङ्घनस्वेदने, क्वचिद्बृंहणस्वेदने, एवमादि । षट्त्वं तु नातिवर्तन्त इति संसृष्टा अपि लङ्घनादिस्वरूपं न जहति । लङ्घनादयः परस्परयुक्ता मधुसर्पिःसंयोगवन्न प्रकृतिगुणानपेक्षिकार्यान्तरमारभन्त इति भावः । अत्रैव दृष्टान्तमाह—त्रित्वमित्यादि । अयं च दृष्टान्तः संसर्गिसंख्याऽपरित्यागमात्रकः ॥ ४३—४४॥

लङ्घनबृंहणीयः समाप्तः ।

---

१ क्रव्यान्मांसरसास्तेषां बृंहणं लाघवं सममिति वा पाठः । २ तनुरसमिति वा पाठः । ३ पित्तज्वराग्निदग्धा ये इति वा पाठः । ४ क्षुत्पिपासयोरसहः पीडाकरत्वेनोदयः क्षुत्पिपासासहोदयः न तु क्षुत्पिपासयोर्युगपदुदय इति, सुश्रुते—"सृष्टमारुतविण्मूत्रक्षुत्पिपासासहं लघुम्" इत्युक्तत्वादिति चक्रः । किंतु, "क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता । व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते" [illegible]भिवचनाद्युगपदुदय इत्यर्थोऽपि प्रमाणसिद्ध एवेति शिः ।

१ ऊर्ध्वकाये वात ऊर्ध्ववातो हिक्काश्वासकर्णस्वनजृम्भादयः, न पुनरुद्गारविशेषः, तस्यावरोधककफजन्यत्वात् । प्रकृते तु लङ्घनेन कफसंक्षयात्, स च कफकोपात्; यदुक्तं "अधःप्रतिहतो वायुः श्लेष्मणा कुपितेन च । करोति नित्यमुद्गारमूर्ध्ववातः स उच्यते" इति शिः ।

## त्रयोविंशोऽध्यायः ।

अथातः सन्तर्पणीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
सन्तर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः ।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः ॥ ३ ॥
गोरसैर्गौडिकैश्चान्नैः पैष्टिकैश्चातिमात्रशः ।
चेष्टाद्वेषी दिवास्वप्नशय्यासनसुखे रतः ॥ ४ ॥
रोगास्तस्योपजायन्ते सन्तर्पणनिमित्तजाः ।
प्रमेहकण्डूपिडकाः कोठपाण्ड्वामयज्वराः ॥ ५ ॥
कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकः ।
तन्द्राक्लैब्यमतिस्थौल्यमालस्यं गुरुगात्रता ॥ ६ ॥
इन्द्रियस्रोतसां लेपो बुद्धेर्मोहः प्रमीलकः ।
शोफाश्चैवंविधाश्चान्ये शीघ्रमप्रतिकुर्वतः ॥ ७ ॥

व्याख्यातषडुपक्रमाणामेव सन्तर्पणापतर्पणभेदेन द्विविधानां द्विविधविषये प्रवृत्तिं दर्शयितुं सन्तर्पणीयोऽभिधीयते[२] । सन्तर्पयति सन्तर्पणमाचरति । स्निग्धैरित्यादिवचनम्, अस्निग्धादिभिरपि शक्तुप्रभृतिभिस्तृप्तिमात्रकारकत्वेन सन्तर्पणनिषेधार्थम् । भवति हि तृप्तिकारके सन्तर्पणशब्दप्रयोगः । यथात्रैव सन्तर्पणप्रयोगे "शक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत्" इति । शय्यासनसुखे रतत्वेनैव चेष्टाद्वेषित्वे लब्धे पुनस्तद्वचनं शय्यासनस्थितस्यापि गीताङ्गचालनादिचेष्टानिषेधार्थम् । आमप्रदोषा विसूचिकादयः । प्रमीलकः सततं प्रध्यानम् ॥ १—७ ॥

शस्तमुल्लेखनं तत्र विरेको रक्तमोक्षणम् ।
व्यायामश्चोपवासश्च धूमाश्च स्वेदनानि च ॥ ८ ॥
सक्षौद्रश्चाभयाप्राशः प्रायो रूक्षान्नसेवनम् ।
चूर्णप्रदेहा ये चोक्ताः कण्डूकोठविनाशनाः ॥ ९ ॥
त्रिफलारग्वधं पाठां सप्तपर्णं सवत्सकम् ।
मुस्तं निम्बं समदनं जलेनोत्क्वथितं पिबेत् ॥ १० ॥
तेन मेहादयो यान्ति नाशमभ्यस्यतो ध्रुवम् ।
मात्राकालप्रयुक्तेन सन्तर्पणसमुत्थिताः ॥ ११ ॥

सक्षौद्रश्चाभयाप्राशइति क्षौद्रेण सह हरीतकीप्राशः । किंवा अगस्त्यहरीतक्यादिप्राशः । ये चोक्ता इत्यारग्वधीये । तेनेति क्वाथेन करणभूतेन अभ्यस्यतोऽभ्यासं कुर्वाणस्य, किंवा तेन क्वाथेन त्रिफलादीन्यभ्यस्यत इति योजना ॥ ८—११ ॥

मुस्तमारग्वधः पाठा त्रिफला देवदारु च ।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रे त्वक्च वत्सकात् १२
रसमेषां यथादोषं प्रातः प्रातः पिबेन्नरः ।
सन्तर्पणकृतैः सर्वैर्व्याधिभिर्विप्रमुच्यते ॥ १३ ॥
एभिश्चोद्वर्तनोद्धर्षस्नानयोगोपयोजितैः ।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंहितैः ॥ १४ ॥
कुष्ठं गोमेदकं हिङ्गु क्रौंचास्थि त्र्यूषणं वचाम् ।
वृषकैले श्वदंष्ट्रां च खराश्वांचाश्मभेदिकम् ॥ १५ ॥
तक्रेण दधिमण्डेन बदराम्लरसेन वा ।
मूत्रकृच्छ्रं प्रमेहं च पीतमेतद्व्यपोहति ॥ १६ ॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च ।
अरिष्टानां प्रयोगैश्च यान्ति मेहादयः शमम् ॥ १७ ॥
त्र्यूषणं त्रिफला क्षौद्रं क्रिमिघ्नं साजमोदकम् ।
मन्थोऽयं सक्तवस्तैलं हितो लोहोदकाप्लुतः ॥ १८ ॥

यथादोषमिति दोषप्रमाणापेक्षया गृहीतमात्रम् । उद्वर्तनमभ्यङ्गपूर्वकम् । उद्धर्षस्त्वनभ्यङ्गपूर्वकः । स्नेहोपसंहितैरिति स्नेहसाधनेनोपयुक्तैः । गोमेदको मणिविशेषः, क्रौंचः पक्षी, कोंच इति ख्यातः पक्षी । खराश्वाऽजमोदा । लौहोदकाप्लुत इत्यगुरूदकाप्लुतः । उदककरणं च षडङ्गविधानेन । इह प्रयोगे वक्ष्यमाणव्योषाद्युक्तप्रमाणेन साहचर्याच्चूर्णादिमानं ज्ञेयम् ॥ १२—१८ ॥

व्योषं [२] विडङ्गं शिग्रूणि त्रिफला कटुरोहिणी ।
बृहत्यौ द्वे हरिद्रे द्वे पाठा सातिविषा स्थिरा ॥१९॥
हिङ्गु केबुकमूलानि यवानी धान्यचित्रकम् ।
सौवर्चलमजाजीं च हपुषां चेति चूर्णयेत् ॥ २० ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ।
सक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत् ॥ २१ ॥
प्रयोगात्तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ॥ २२ ॥
प्लीहा पाण्ड्वामयः शोफो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासः श्वासो गलग्रहः ॥२३॥
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्धते ॥ २४ ॥
व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः ॥
सन्तर्पणकृतैर्दोषैः स्थौल्यं मुक्त्वा विमुच्यते ॥२५॥
उक्तं सन्तर्पणोत्थानामपतर्पणमौषधम् ।
वक्ष्यन्ते सौषधाश्चोर्ध्वमपतर्पणजा गदाः ॥ २६ ॥
देहाग्निबलवर्णौजःशुक्रमांसपरिक्षयः ।
ज्वरः कासानुबन्धश्च पार्श्वशूलमरोचकः ॥ २७ ॥
श्रोत्रदौर्बल्यमुन्मादप्रलापो हृदयव्यथा ।
विण्मूत्रसंग्रहः शूलं जङ्घोरुत्रिकसंश्रयम् ॥ २८ ॥

१ के ते सन्तर्पणनिमित्तजा रोगा इत्याह प्रमेहेत्यादीति शिः । २ पूर्वाध्याये षडुपक्रमा उक्तास्ते सन्तर्पणापतर्पणभेदेन द्विविधाः, तदुक्तम्, "उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मतः । एकः सन्तर्पणः प्रोक्तो द्वितीयश्चापतर्पणः" इति । अतस्तेषां द्विविधविषये प्रवृत्तिं दर्शयितुं सन्तर्पणीयोऽभिधीयते अथात इत्यादीति शिः ।

१ क्रौंचास्थीन्यूषणमिति वा पाठः । २ व्योषमित्यादि । अत्र तैलघृतक्षौद्राणां प्रत्येकं मिलितचूर्णसमत्वम्, समुदितचूर्णमपेक्षैव सक्तूनां षोडशगुणो भाग इति शिः ।

पर्वास्थिसन्धिभेदश्च ये चान्ये वातजा गदाः ।
ऊर्ध्ववातादयः सर्वे जायन्ते तेऽपतर्पणात् ॥ २९ ॥
तेषां सन्तर्पणं तज्ज्ञैः पुनराख्यातमौषधम् ।
यत्तदात्वं समर्थं स्यादभ्यासे वा तदिष्यते[1] ॥ ३० ॥

सन्तर्पणमिति जलालोडितशक्तुरूपतया, तेन सन्तर्पणसंज्ञकस्याप्यपतर्पणता ज्ञेया । श्वैत्र्यं श्वित्रित्वम् । श्वैत्यमिति पाठे श्वेतावभासता । ऊर्ध्ववातादय इति पूर्वाध्यायोक्ताः "ऊर्ध्ववातास्तमो हृदि" इत्यादि । ऊर्ध्ववातः श्वासादिर्यत्रोर्ध्वं वायुर्याति, किंवा तन्त्रान्तरोक्ता रोगविशेषा एव, यथा—"अधः प्रतिहतो वायुः श्लेष्मणा कुपितेन च । करोत्यनिशमुद्गारमूर्ध्ववातः स उच्यते" इति ॥ १९—३० ॥

सद्यःक्षीणो हि सद्यो वै तर्पणेनोपचीयते ।
नर्ते सन्तर्पणाभ्यासाच्चिरक्षीणस्तु पुष्यति ॥ ३१ ॥
देहाग्निदोषभैषज्यमात्राकालानुवर्तिना ।
कार्यमत्वरमाणेन भेषजं चिरदुर्बले ॥ ३२ ॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च ।
स्नानानि वस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये ॥ ३३ ॥
ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम् ।
तृष्यतामूर्ध्ववातानां हितं वक्ष्यामि तर्पणम् ॥ ३४ ॥
शर्करापिप्पलीमूलघृतक्षौद्रसमांशकैः[2] ।
सक्तुर्द्विगुणितो वृष्यस्तेषां मन्थः प्रशस्यते ॥ ३५ ॥
सक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम् ।
पिबेन्मारुतविण्मूत्रकफपित्तानुलोमनम् ॥ ३६ ॥
फाणितं सक्तवः सर्पिर्दधिमण्डोऽम्लकाञ्जिकम् ।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्तहरं पिबेत् ॥ ३७ ॥
मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ ३८ ॥

सद्यस्तर्पणतर्पणाभ्यासयोर्विषयभेदमाह—सद्य इत्यादि । अत्वरमाणेनेति वचनेन चिरदुर्बले त्वरया क्रियमाणमग्निवधादिदोषं करोतीति सूचयति । तर्पणास्तर्पणाश्चेति सन्तर्पणकारकमन्थादयः, तेन इह संज्ञामात्रेण ये तर्पणा अपतर्पणकारका व्योपादयस्ते न ग्राह्याः । किंतु शर्करापिप्पलीत्यादिग्रन्थवाच्याः शर्करादिमन्थोक्तमानेनापरेऽपीह मन्था ग्राह्याः ॥ ३१—३८ ॥

स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा ।
सद्यः सन्तर्पणो मन्थः स्थैर्यवर्णबलप्रद इति ॥ ३९ ॥

तत्र श्लोकः ।
सन्तर्पणोत्था ये रोगा रोगा ये चापतर्पणात् ।
सन्तर्पणीये तेऽध्याये सौषधाः परिकीर्तिताः ॥ ४० ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
सन्तर्पणीयो नाम त्रयोविंशोऽध्यायः ॥

स्वादुरम्लेत्यादिना सद्यस्तर्पणमाह—अम्ल इति । अम्लदाडिमादियोगात् । अत्र रूक्षसक्तुकृतस्यापि मन्थस्य द्रवत्वशैत्यदेहानुसारित्वैः सद्यस्तर्पकत्वं भवत्येव, अतएव सद्य इत्युक्तम् । स्नेहादिबृंहणद्रव्ययोगात्तु कालान्तरतर्पकत्वमपि भवति ॥ ३९—४० ॥

सन्तर्पणीयः समाप्तः ।

---

# चतुर्विंशोऽध्यायः ।

अथातो विधिशोणितीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
विधिना शोणितं जातं शुद्धं भवति देहिनाम् ।
देशकालौकसात्म्यानां विधिर्यः संप्रकाशितः ॥ ३ ॥
तद्विशुद्धं हि रुधिरं बलवर्णसुखायुषा ।
युनक्ति प्राणिनं प्राणः शोणितं ह्यनुवर्तते ॥ ४ ॥

संप्रति वातादिवद्बहुविकारकर्तृत्वेन शोणितस्य[1] शोणितविकाराणां पूर्वोक्तानेवोपक्रमान् लङ्घनबृंहणादीन् विशेषेण दर्शयितुं विधिशोणितीयोऽभिधीयते । इयमप्यर्थपरा संज्ञा[2] । विधिनेति सम्यगाहाराचारविधिना । शुद्धं भवतीत्यत्र भवति विद्यत इत्यर्थः । उत्पादस्य जातशब्देनैवोक्तत्वात् । केन विधिनेत्याह—देशेत्यादि । सात्म्यशब्दस्य देशादिभिः प्रत्येकमन्वयः । ओकसात्म्यमभ्याससात्म्यम् । संप्रकाशित इति तस्याशितीये । संप्रकाशित इत्यत्र तेनेति शेषः । अतो यः संप्रकाशितो विधिस्तेन विधिनेति संवन्धः । अन्ये व्याख्यानयन्ति शोणितं जातं तावद्भवति, तच्च कारणान्तरदुष्टं सद्विधिना यथोक्तेन पुनः शुद्धं भवतीति योजनीयम् । विशुद्धं शोणितं किं करोतीत्याह—तद्विशुद्धमित्यादि । तेन विधिना विशुद्धं तद्विशुद्धम्, किं वा तदिति शोणितम् । प्राणः शोणितं ह्यनुवर्तत इति शोणितान्वयव्यतिरेकमनुविधीयते । यदुक्तम् "दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः । शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्" इति ॥ १—४ ॥

प्रदुष्टबहुतीक्ष्णोष्णैर्मद्यैरन्यैश्च तद्विधैः ।
तथातिलवणक्षारैरम्लैः कटुभिरेव च ॥ ५ ॥

---

१ सन्तर्पणस्य द्वैविध्यमाह यत्तदात्व इत्यादि । तदात्व इति सद्यः समर्थमित्यपतर्पणजव्याधिनिराकरणसमर्थं, तेन, सद्यः सन्तर्पणमेकमभ्यासवशात्सन्तर्पणमपरमित्यर्थः । २ शर्करापिप्पलीतैलघृतक्षौद्रसमांशकैरिति वा पाठः ।

१ यद्यपि शोणितविकारा अपि वातादिजन्या एव, तथापि धातुषु बहुविकारकर्तृत्वेन प्राधान्यसूचनार्थं पृथगध्यायेऽभिधानं ज्ञेयमिति शिः । २ इयमप्यर्थपरसंज्ञा, किं वा विधिनाशोणितमितिशब्दमधिकृत्य कृतोऽध्यायो विधिशोणिताध्यायः "वर्णागमः" इत्यादिना 'ना' शब्दलोप इति शिः ।

कुलत्थमापनिष्पावतिलतैलनिषेवणैः ।
पिण्डालुमूलकादीनां हरितानां च सर्वशः ॥ ६ ॥
जलजानूपशैलानां प्रसहानां च सेवनात् ।
दध्यम्लमस्तुसुक्तानां सुरासौवीरकस्य च ॥ ७ ॥
विरुद्धानामुपक्लिन्नपूतीनां भक्षणेन च ।
भुक्त्वा दिवा प्रस्वपतां द्रवस्निग्धगुरूणि च ॥ ८ ॥
अत्यादानं तथा क्रोधं भजतां चातपानलौ ।
छर्दिवेगप्रतीघातात्काले चानवसेचनात् ॥ ९ ॥
श्रमाभिघातसन्तापैरजीर्णाध्यशनैस्तथा ।
शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति ॥ १० ॥

शुद्धिहेतुमभिधाय दुष्टिहेतुमाह—प्रदुष्टैत्यादि । प्रदुष्टं स्वप्रकृतिविपरीतम् । अन्यैश्च तद्विधैरिति प्रदुष्टपानकादिभिः, किंवा "अन्नैः" इति पाठः । "तथाऽतिलवणक्षारैः" इत्यादि केचिद्भेषजविषयं वर्णयन्ति । तद्विधैरिति वचनेनान्नपानस्यातिलवणादेर्गृहीतत्वात् । निष्पावः श्वेतशिम्बिः । अत्यादानं तृप्तिमतिक्रम्य भोजनम् । काले चेति शोणितदुष्टियुक्ते शरत्काले । अजीर्णेऽध्यशनमजीर्णाध्यशनं, किं वा अजीर्णस्यापक्वस्याशनम्, अध्यशनं तु पूर्वान्नशेषे यद्भुज्यते, यदाह "भुक्तस्योपरि यद्भुक्तं तदध्यशनमुच्यते" ॥ ५—१० ॥

ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः ।
मुखपाकोऽक्षिरागश्च पूतिघ्राणास्यगन्धिता ॥ ११ ॥
गुल्मोपकुशवीसर्परक्तपित्तप्रमीलकाः ।
विद्रधी रक्तमेहश्च प्रदरो वातशोणितम् ॥ १२ ॥
वैवर्ण्यमग्निनाशश्च पिपासा गुरुगात्रता ।
सन्तापश्चातिदौर्बल्यमरुचिः शिरसश्च रुक् ॥ १३ ॥
विदाहश्चान्नपानस्य तिक्ताम्लोद्गिरणं क्लमः ।
क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता ॥ १४ ॥
स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः ।
तन्द्रा निद्रातियोगश्च तमसश्चातिदर्शनम् ॥ १५ ॥
कण्ड्वरुकोठपिडकाः[3] कुष्ठचर्मदलादयः ।
विकाराः सर्व एवैते विज्ञेयाः शोणिताश्रयाः ॥१६॥
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ।
सम्यक्साध्या न सिध्यन्ति रक्तजांस्तान्विभावयेत् ॥
कुर्याच्छोणितरोगेषु रक्तपित्तहरीं क्रियाम् ।
विरेकमुपवासं[4] वा स्रावणं शोणितस्य वा ॥ १८ ॥

उपकुशो मुखरोगविशेषः । यदुक्तं सुश्रुते "वेष्टेषु दाहो भवति तेषु दन्ताश्चलन्ति च । यस्मिन्नुपकुशो नाम पित्तरक्तकृतो गदः" इति । कुष्ठ इत्युक्तेऽपि चर्मदलाभिधानं विशेषार्थम् । शोणिताश्रया इति भाषया शोणितस्य वातादिवत्स्वातन्त्र्येण रोगकर्तृत्वं निराकरोति । अनुक्तभूरिशोणितरोगग्रहणार्थमाह—शीतोष्णेत्यादि । आद्यग्रहणात्तीक्ष्णमृद्वादीनां ग्रहणम् । सम्यगिति पूर्वेण योजनीयम् । तत्र शीतोष्णस्निग्धरूक्षाद्यैरिति शोणितवृद्धिमनपेक्ष्य वातादिजयार्थमात्रप्रयुक्तैरिति मन्तव्यम् । येन शोणितव्याधेरपि शान्तिर्वक्ष्यमाणरक्तपित्तहरक्रियादिभिः शीतोष्णस्निग्धादिक्रियाप्रविष्टैव, ततश्च शोणितरोगस्यापि शीतादिक्रियाभिरेव शोणितप्रतिकूलाभिः प्रशमो भवति । प्रवृद्धशोणिताश्रयास्तु वातादयः स्वाश्रयप्रभावाः[2] स्वचिकित्सामात्रेण न प्रशाम्यन्ति । रक्तपित्तहरक्रियादयो यथायोग्यतया बोद्धव्याः ॥ ११—१८ ॥

बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा ।
रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा ॥ १९ ॥

उक्तशोणितस्रावणप्रमाणमाह—बलेत्यादि । बलदोषप्रमाणादिति बलस्य तथा दोषस्य शोणितव्याधिरूपस्य प्रमाणं वीक्ष्य । दोषशब्दो ह्ययं रोगे वर्तते । विशुद्ध्या रुधिरस्य चेति यावता स्रावणेन शोणितं शुद्धं स्यात् । आशयं स्थानं दुष्टशोणिताशयमिति यावत् । यथा स्वल्पे कुष्ठे स्तोकमेव विशुद्ध्यर्थमुपादेयम्, महति कुष्ठे बहु स्रावणीयम् । यदुक्तम् "प्रच्छनमल्पे कुष्ठे महति च शस्तं सिराव्यधनम्" । एषु च पक्षेषु यद्यत्रानत्ययं भवति तत्तत्र ग्राह्यम् ॥ १९ ॥

अरुणाभं भवेद्वाताद्विशदं फेनिलं तनु ।
पित्तात्पीतासितं रक्तं स्त्यायत्यौष्ण्याच्चिरेण च ॥२०
ईषत्पाण्डु कफाद्दुष्टं पिच्छिलं तन्तुमद्घनम् ।
द्विदोषलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥२१॥
तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम् ।
गुञ्जाफलसवर्णं च विशुद्धं विद्धि शोणितम् ॥ २२॥

दुष्टरक्तलक्षणमाह—अरुणाभमित्यादि । स्त्यायति घनं भवति । विशुद्धरक्तलिङ्गे नानावर्णता नानावातादिप्रकृतित्वान्मनुष्याणाम् । तपनीयं लोहितसुवर्णम्, इन्द्रगोपः स्वनामप्रसिद्धः कीटविशेषः ॥ २०—२२ ॥

नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृ-
गग्निर्विशेषेण च रक्षितव्यः ॥ २३ ॥

नात्युष्णादिभोजने हेतुमाह—तदेत्यादि[4] । अतिशीतमग्नि-

१ पूर्वान्नभुक्तशेष इति वा पाठः । २ अक्षिपाकश्चेति वा पाठः । ३ कण्ड्वरुगिति वा पाठः । ४ विरेकमनुवासं वेति वा पाठः ।

१ सम्यगुपक्रान्ता इत्यन्वय इति शिः । २ आश्रयप्रभावान् स्वचिकित्सामात्रेण प्रशाम्यन्तीति वा पाठः । ३ स्निग्धमिति वा पाठः । ४ रक्तस्रावानन्तरं यद्धितं तदाह—नात्युष्णेत्यादि । कुत इत्याह । तदेत्यादि । अनवस्थितासृगिति प्रचलरक्तम्, प्रचलस्याऽसृजो हि अत्युष्णमन्नपानमत्यर्थं रक्तस्य प्रचलतां करोति, तेन नात्युष्णम्, तथाऽतिशीतमग्निमान्द्यजनकत्वेन च नातिशीतम् । तथा लघु दीपनीयं च हितमित्यर्थ इति शिः ।

मान्द्यं करोति, अत्युष्णं च प्रचलत्वाद्रजो नितरां प्रचलतां करोति, तस्मान्नात्युष्णशीतम् । लघु दीपनीयं चाग्निदीप्त्यर्थमेव ॥ २३ ॥

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थान्
इच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं तुष्टिवलोपपन्नम्
विशुद्धरक्तं पुरुषं वदन्ति ॥ २४ ॥

यदा तु रक्तवाहीनि रससंज्ञावहानि च ।
पृथक्पृथक्समस्ता वा स्रोतांसि कुपिता मलाः॥२५॥
मलिनाहारशीलस्य रजोमोहावृतात्मनः ।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा ॥ २६ ॥
मदमूर्च्छायसंन्यासास्तेषां विद्याद्विचक्षणः ।
यथोत्तरं वलाधिक्यं हेतुलिङ्गोपशान्तिषु ॥ २७ ॥
दुर्वलं चेतसः स्थानं यदा वायुः प्रपद्यते ।
मनो विक्षोभयन्जन्तोः संज्ञां संमोहयेत्तदा ॥ २८ ॥
पित्तमेवं कफश्चैवं मनोविक्षोभयन्नृणाम् ।
संज्ञां नयत्याकुलतां विशेषश्चात्र वक्ष्यते ॥ २९ ॥

संप्रति शोणितादर्शनेनापि विशुद्धरक्तज्ञानार्थं लक्षणमाह—प्रसन्नेत्यादि । अव्याहता पक्तिश्च वेगश्च पुरीषादीनां यस्य स तथा । संप्रति रक्तवाहिधमनीदुष्ट्या ये व्याधयो भवन्ति तानाह—यदा त्वित्यादि । संज्ञावहानीति संज्ञाहेतुमनोवहानि। मनसस्तु केवलशरीरमयनीभूतम् । यदुक्तम् "सत्वादीनां पुनः केवलं शरीरमयनीभूतम्" इत्यादि । किंवा रससंज्ञं धातुमावहन्तीति रससंज्ञावहानि[1] । रसवहधमनीनां तु हृदयं स्थानम्, तदुपघाताच्च मोह उपपन्न एवं । मला इति दुष्टदोषसंज्ञा, यदुक्तम् "मलिनीकरणान्मलाः" इति । यथोत्तरं लिङ्गाधिक्यं मदमूर्च्छायसंन्यासेषु मोहरूपं ज्ञेयम् । मदेऽपि हि स्तोको मोहोऽस्ति, उत्तरयोस्तु व्यक्त एव मोहः ॥ २४—२९ ॥

सक्तानल्पद्रुतभाषं चलस्खलितचेष्टितम्[2] ।
विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम् ॥ ३० ॥
सक्रोधपरुषाभाषं संप्रहारकलिप्रियम् ।
विद्यात्पित्तमदाविष्टं रक्तपीतासिताकृतिम् ॥ ३१ ॥
स्वल्पसंवन्धवचनं तन्द्रालस्यसमन्वितम् ।
विद्यात्कफमदाविष्टं पाण्डुं प्रध्यानतत्परम् ॥ ३२ ॥
सर्वाण्येतानि रूपाणि सन्निपातकृते मदे ।
जायते शाम्यति त्वाशु मदो मद्यमदाकृतिः ॥ ३३ ॥
यश्च मद्यमदः प्रोक्तो विषजो रौधिरश्च यः ।
सर्व एते मदा नर्ते वातपित्तकफत्रयात् ॥ ३४ ॥

परुषं रूक्ष इति परुषाभाषः । मदस्वरूपमाह—जायत इत्यादि । मदप्रसङ्गेन मद्यविषजयोरपि मदयोश्चातुर्विध्यमाह—यश्चेत्यादि । वातपित्तकफत्रयादिति वातात् पित्तात्कफाद्वातपित्तकफाच्च । एतेन तेषामप्येतदेव लक्षणं वातादिकृतं भवतीति भावः ॥ ३०—३४ ॥

नीलं वा यदि वा कृष्णमाकाशमथवारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते[1] ॥ ३५ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ।
कार्श्यं श्यावारुणा छाया मूर्च्छाये वातसंभवे॥३६॥
रक्तं हरितवर्णं वा वियत्पीतमथाऽपि वा ।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ३७ ॥
सपिपासः ससन्तापो रक्तपीताकुलेक्षणः ।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥ ३८ ॥
मेघसङ्काशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ३९ ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे ॥ ४० ॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना वीभत्सचेष्टितैः ॥ ४१ ॥

मूर्च्छायलक्षणमाह—नीलंवेत्यादि । तत्र वातमूर्च्छाये श्यावारुणा छाया रिष्टरूपत्वान्मरणाय स्याद् वायव्यत्वादिति चोद्यं कुर्वन्ति । उक्तं हि "वायव्या सा विनाशाय क्लेशाय महतेऽपि वा" इति । तन्न, अनिमित्ता हि छाया रिष्टं विनाशयति, न तु दृश्यमाननिमित्ता । इह च वातसंबन्धो दृश्यत एव निमित्तम् । किं वा, "क्लेशाय महतेऽपि वा" इति वचनादेव वायव्यच्छायाया मारकत्वं व्यभिचरितम् । तमोभिर्घनैश्चेति तमोघनैः, किं वा तमोभिरेव घनैः । विना वीभत्सचेष्टितैरिति दन्तखादनाङ्गविक्षेपणादिकं विना ॥ ३५—४१ ॥

दोषेषु मदमूर्च्छायाः कृतवेगेषु[2] देहिनाम् ।
स्वयमेवोपशाम्यन्ति सन्न्यासो नौषधैर्विना ॥ ४२ ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिवला मलाः ।
संन्यस्यन्त्यवलं जन्तुं प्राणायतनसंश्रिताः ॥ ४३ ॥
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्वियुज्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम्॥४४॥
दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया वुधः ।
गृह्णीयात्तलमप्राप्तं तथा संन्यासपीडितम् ॥ ४५ ॥
अञ्जनान्यवपीडाश्च धूमः प्रधमनानि च ।
सूचीभिस्तोदनं शस्त्रैर्दाहः पीडा नखान्तरे ॥ ४६ ॥

---

१ अन्ये तु रससंज्ञं धातुमावहन्तीति रससंज्ञावहानीत्याहुः किंतु "रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः । मदमूर्च्छायसंन्यासा यथोत्तरवलोत्तराः" इति । तन्त्रान्तरे मनोवहधमनीदुष्टिर्व्यक्ता, सा चास्मिन् व्याख्याने नोपपद्यते, इति पूर्वव्याख्यैव युक्तेति शिः ।
२ सक्तानल्पद्रुतभाषमिति सक्तं विच्छिन्नवर्णं, अनल्पं वहु, द्रुतं शीघ्रं भाषते स तथा, एवं परुषाभासमित्यपि व्याख्येयमिति शिः ।

१ तमः प्रविशति मूर्च्छतीत्यर्थः, शीघ्रं च प्रतिबुध्यत इति वायोः शीघ्रकारित्वादिति शिः । २ हृतवेगेष्विति वा पाठः ।

लुंचनं केशलोम्नां च दन्तैर्दशनमेव च।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने ॥ ४७ ॥
संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च।
प्रभूतकटुयुक्तानि तस्यास्ये गालयेन्मुहुः ॥ ४८ ॥
मातुलुङ्गरसं तद्वन्महौषधसमायुतम्।
तद्वत्सौवर्चलं दद्याद्युक्तं मद्याम्लकाञ्जिकैः ॥ ४९ ॥
हिङ्गूषणसमायुक्तं यावत्संज्ञाप्रबोधनम्।
प्रबुद्धसंज्ञमन्नैश्च लघुभिस्तमुपाचरेत् ॥ ५० ॥
विस्मापनैः स्मारणैश्च प्रियश्रुतिभिरेव च।
पटुभिर्गीतवादित्रशब्दैश्चित्रैश्च दर्शनैः ॥ ५१ ॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवलग्रहैः।
शोणितस्यावसेकैश्च व्यायामोद्घर्षणैस्तथा ॥ ५२ ॥
प्रबुद्धसंज्ञं मतिमाननुबंधमुपक्रमेत्।
तस्य संरक्षितव्यं हि मनः प्रलयहेतुतः ॥ ५३ ॥
स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम्।
पञ्च कर्माणि कुर्वीत मूर्च्छायेषु मदेषु च ॥ ५४ ॥
अष्टाविंशत्यौषधस्य तथा तिक्तस्य सर्पिषः।
प्रयोगः शस्यते तद्वन्महतः षट्पलस्य वा ॥ ५५ ॥
त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः।
शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपि वा ॥५६॥
पिप्पलीनां प्रयोगो वा पयसश्चित्रकस्य वा।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ५७ ॥
रक्तावसेकाच्छास्त्राणां सतां सत्त्ववतामपि।
सेवनान्मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणाम्। इति

तत्र श्लोकौ।

विशुद्धं चाविशुद्धं च शोणितं तस्य हेतवः।
रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥ ५८ ॥
मदमूर्च्छायसंन्याससहेतुलक्षणभेषजम्।
विधिशोणितकेऽध्याये सर्वमेतत्प्रकाशितम् ॥५९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने विधिशोणितीयो नाम चतुर्विंशोऽध्यायः।

संन्यासस्य मूर्च्छादिभ्यो भेदकं लक्षणमाह—दोषेष्वित्यादि। कृतवेगेष्विति वेगं कृत्वा क्षीणबलेषु। वेगो हि दोषाणां बलक्षयकारणं भवति। यदुक्तं विषमज्वरे "कृत्वा वेगं गतबला" इत्यादि। संन्यस्यन्त्यचेष्टं कुर्वन्ति। प्राणायतनमिति हृदयम्। मुक्त्वेत्यप्राप्य। सद्यःफलामिति सद्यःप्रबोधनकारिकां तीक्ष्णाञ्जनादिकाम्। शस्त्रैरिति च तोदनेन संबध्यते। संमूर्च्छितानीति मिलितानि। गालयेदिति यत्नेन मुखे प्रक्षिपेत्। सौवर्चलं केचित्सौवीरमाहुः। अनुबन्धं सततम्। प्रलयहेतुत इति मोहहेतुतः। अष्टाविंशत्यौषधस्येति पानीयकल्याणस्य। तिक्तस्य महतस्तथा तिक्तस्य षट्पलस्येति संबन्धः। एते च तिक्तषट्पलमहातिक्तकघृते कुष्ठचिकित्सिते वक्तव्ये। कौम्भं दशाब्दिकम् ॥ ४२—५९ ॥

विधिशोणितीयः समाप्तः।

समाप्तो योजनाचतुष्कः।

---

१ तिक्तानीति वा पाठः। २ सौवीरकमिति वा पाठः। ३ उद्धर्षणैरिति वा पाठः। ४ संन्यस्यन्ति मोहयन्तीति शिः।

## पञ्चविंशोऽध्यायः।

अथातो यज्जःपुरुषीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

य इमे योजनाचतुष्के षड्उपक्रमा अभिहितास्तेऽन्नपानापेक्षयैव व्याधिहरणे समर्थाः, अतोऽन्नपानचतुष्कोऽभिधीयते। तत्रापि संक्षेपेणान्नपानगुणाभिधायको यज्जःपुरुषीयोऽभिधीयते। तत्रादौ पुरुषव्याधिकारणनिश्चायकप्रकरणेनाहारगुणप्रश्नावतारार्थं तथा पूर्वोक्तषड्उपक्रमणीयरोगकारणज्ञानार्थं च 'यज्जःपुरुष' इति प्रश्नं प्राधान्येनाधिकृत्य कृतोऽध्यायो यज्जःपुरुषीयो ज्ञेयः। यद्यपि "पुरुषो यज्जः" इति प्रश्नक्रमः, तथापि प्रश्नार्थोऽत्र गृहीतः ॥ १—२ ॥

पुरा प्रत्यक्षधर्माणं भगवन्तं पुनर्वसुम्।
समेतानां महर्षीणां प्रादुरासीदियं कथा ॥ ३ ॥
आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः।
राशिरस्यामयानां च प्रागुत्पत्तिविनिश्चये ॥ ४ ॥

प्रत्यक्षधर्मत्वं तपःप्रभावात्। इयमित्यग्रे वक्ष्यमाणा, कथा तत्त्वजिज्ञासार्थमन्योन्यपृच्छा। राशिर्मेलक आत्मेन्द्रियमनोऽर्थसमुदय इत्यर्थः। अस्य राशेरामयानां चोत्पत्तिविनिश्चये उत्पत्तिविनिश्चयविषयिणी कथा प्रादुरासीदिति संबन्धः॥३—४॥

तदन्तरं काशिपतिर्वामको वाचमर्थवित्।
व्याजहारर्षिसमितिमभिसृत्याभिवाद्य च ॥ ५ ॥
किन्नु स्यात्पुरुषो यज्जस्तज्जास्तस्यामयाः स्मृताः।
न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन्पुनर्वसुः ॥ ६ ॥

तामेव परस्परप्रश्नरूपां कथां दर्शयति—तदन्तरमित्यादि। अन्तरशब्दः कालवचनः, यथा "अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम्" इति, किंचित्कालमित्यर्थः। तेन तदन्तरमिति कथारंभकाल इत्यर्थः। काशी वाराणसी तस्याः पतिः तेषां बहुत्वाद्विशेषणं 'वामकः' इति। यस्माज्जातो यज्जः; तत एव पुरुषजनकात्कारणाज्जातास्तज्जाः। न वेति अन्यतः पुरुषो जायतेऽन्यतश्च तस्य रोगा इत्यर्थः। नरेन्द्रेणेति काशिपतिनाम्ना राजर्षिणा ॥ ५—६ ॥

---

१ महर्षय उपासीनाः प्रादुश्चक्रुरिमां कथामिति वा पाठः। २ अथ काशिपतिर्वाक्यं वामकोऽर्थवदन्तरेति वा पाठः।

**सर्वं एवामितज्ञानविज्ञानच्छिन्नसंशयाः ।**
**भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम् ॥ ७ ॥**

अमिताभ्यां ज्ञानविज्ञानाभ्यां छिन्नः संशयो येषां ते तथा। "भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम्" इति पाठः सुगमः । "भवन्तोऽर्हन्ति नश्छेत्तुं काशिराजे च संशयम्" इति तु पाठे, नोऽस्माकं काशिराजेऽस्मन्मध्यगत इत्यर्थः । एतेन स्वपक्षे काशिराजे न व्यामोहवचनं वक्तव्यमिति शिक्षयति । चकारेणान्येषां च ऋषीणां संशयं समुच्चिनोति । अन्ये तु, नोऽस्माकं संशयं काशिराजे च संशयमिति व्याख्यानयन्ति। संशयद्वये चैकोऽत्र ऋषीणां "आत्मेन्द्रिय" इत्यादिना श्लोकेन दर्शितः संशयः, स च पुरुषस्यामयानां च प्रागुत्पत्तिं प्रथमोत्पत्तिं प्रतीति व्याख्यानयन्ति । द्वितीयस्तु काशिपतेर्यथोक्त एव ॥ ७ ॥

**परीक्षिस्तत्परीक्ष्याग्रे[1] मौद्गल्यो वाक्यमब्रवीत् ।**
**आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः ॥८॥**
**स चिनोत्युपभुङ्क्ते च कर्म कर्मफलानि च ।**
**नह्यृते चेतनाधातोः[2] प्रवृत्तिः सुखदुःखयोः[3] ॥ ९ ॥**

आत्मजः पुरुष इत्याद्यपि प्रश्नद्वयस्योत्तरम्, तत्र पूर्वप्रश्नस्य, पुरुषस्यामयानां च कुत उत्पत्तिरित्येवंरूपस्य प्रश्नस्योत्तरं आत्मजः पुरुषो रोगाश्चेति, काशिपतिप्रश्नमात्रेऽप्युत्तरमेतत् यत एवात्मतः पुरुषो जायते तत एव रोगा इत्यनुरूपमेव । प्रश्नोत्तरता त्वस्य ग्रन्थस्य सुगमैव । कारणत्वे हेतुमाह—सचिनोतीत्यादि । चिनोति कर्म, कर्मफलानि च शरीरारोग्यविकारादीनि भुंक्त इति योजना । कर्मसहायस्यात्मनः शरीरविकारादिकर्तृत्वात्कारणत्वमिति भावः । एतदेव व्यतिरेकेणाह—नह्यृत इत्यादि । चेतनाधातुरात्मा । सुखदुःखयोरिति सुखदुःखसाधनयोः नीरुक्शरीरविकारयोरित्यर्थः ॥ ८—९ ॥

**शरलोमा तु नेत्याह न ह्यात्मात्मानमात्मना ।**
**योजयेद्व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥ १० ॥**
**रजस्तमोभ्यां तु मनः परीतं सत्त्वसंज्ञकम् ।**
**शरीरस्य समुत्पत्तौ विकाराणां च कारणम् ॥ ११ ॥**
**वार्योविदस्तु नेत्याह न ह्येकं कारणं मनः ।**
**नर्ते शरीरं शारीररोगा न मनसः स्थितिः ॥ १२ ॥**

**रसजानि तु भूतानि व्याधयश्च पृथग्विधाः ।**
**आपो हि रसवत्यस्ताः स्मृता निर्वृत्तिहेतवः ॥ १३ ॥**

मन इत्युक्ते मन्यतेऽनेनेति व्युत्पत्त्याऽऽत्मापि शङ्क्यते, तदुक्तम् "सत्त्वसंज्ञकम्" इति । नर्ते शरीराच्छारीरा वातादिजन्याः शोषादयस्तिष्ठन्ति । तथा न मनसः स्थितिर्वा ऋते शरीरादिति योज्यम् । रजस्तमःपरीतस्य हि मनसो नित्यं शरीर एव स्थितिः । यत्तु निर्दोषं मनः, तत्तु पुरुषस्य नापि च व्याधेः कारणमिति भावः । रसजानीत्यादौ स्मृता निर्वृत्तिहेतव इति व्याधिपुरुषयोः । एतेन व्याधिपुरुषजनकरसकारणत्वेनापःकारणकारणतया पुरुषविकारयोः कारणं भवति । किंवा आपो निर्वृत्तिहेतव इति रसानां, किंवा यस्माद्रसवत्यापः, तस्मात्ता निर्वृत्तिहेतव इति योजना ॥ १०—१३ ॥

**हिरण्याक्षस्तु[1] नेत्याह न ह्यात्मा रसजः स्मृतः ।**
**नातीन्द्रियं मनः सन्ति रोगाः शब्दादिजास्तथा १४**
**षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा ।**
**राशिः षड्धातुजः सांख्यैराद्यैः संपरिकीर्तितः॥१५**

नह्यात्मेत्यादौ नातीन्द्रियं मनो रसजं स्मृतमिति योजना, यस्मादतीन्द्रियं मन आत्मा चातीन्द्रियः, तस्मान्न रसजौ, रसाद्धि जायमानं कारणगुणानुविधानादैन्द्रियकं स्यादित्यर्थः । हेत्वन्तरमाह—सन्तीत्यादि[2] । अहितशब्दरूपादिजन्ये विकारे न रसः कारणमित्यर्थः । आत्मा पृथिव्यादीनि च पञ्च षड् धातवः । यदुक्तम् "खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः" इति ॥ १४—१५ ॥

**तदुक्तवन्तं कुशिकमाह तन्नेति कौशिकः ।**
**कस्मान्मातापितृभ्यां हि विना षड्धातुजो भवेत्१६**
**पुरुषः पुरुषाद्गौर्गोरश्वादश्वः प्रजायते ।**
**पित्र्या मेहादयश्चोक्ता रोगास्तावत्र कारणम्[3] ॥ १७ ॥**

कुशिक इति हिरण्याक्षस्य नाम । कस्मादित्याक्षेपे । मातापितॄनपेक्षित्वे सर्वप्राणिषु षड्धातुसमुदायस्य विद्यमानत्वेन

---

१ परीक्षाग्रे इति वा पाठः। परीक्ष्य विचार्य, यद्वा, भावपक्षे परीक्षा उक्तरूपप्रश्नस्य उपपत्त्यनुपपत्तिभ्यां विचारस्तस्याग्रे प्रथममित्यर्थ इति शिः । २ व्यतिरेकेणापि कारणतां दर्शयति—नह्यृत इत्यादीति शिः । ३ सुखदुःखयोरिति आरोग्यरोगयोरिति शिः । ४ न ह्येकं कारणं मन इति व्याधिमात्रं प्रतीति शेषः । व्याधिमात्रं प्रति कथं मनसः कारणत्वं नास्तीत्याह—नर्ते इत्यादि । मानसरोगेष्वेव मनसः कारणत्वं, शारीरा वातादिजन्यव्याधयः पुनः शरीरादृते न तिष्ठन्तीति शरीरस्यैव कारणत्वं, न तु मनस इति भावः । शरीरोत्पत्तावपि मनसः कारणत्वं नास्तीत्याह—मनसः स्थितिरिति । अत्रापि शरीरान्यत इति योज्यम्, शरीरमन्तरेण रजस्तमःसम्बन्धस्य मनसः स्थितिरेव नास्ति, मनसि रजस्तमस्सम्बन्धस्य शरीराधिनत्वात्, । तथाच, रजस्तमःसम्बन्धे सति शरीरोत्पत्तिः, शरीरसंबन्धे च मनसि रजस्तमस्सम्बन्ध इति परस्पराश्रयप्रसङ्गाच्छरीरोत्पत्तिं प्रति रजस्तमःपरीतस्य मनसः कारणत्वं नास्तीति भावः । रसजानीत्यादि । भूतानि पृथिव्यादीनि एतेन तेषां रसजत्वेन । तन्मेलकस्य पुरुषस्यापि रसजत्वमिति भाव इति शिः ।

१ हिरण्याक्ष इत्यादौ मन इति च्छेदः, अतीन्द्रियमिति हेतुगर्भविशेषणम्, अतीन्द्रियं सूक्ष्मं निरवयवमिति यावत्, यस्मादतीन्द्रिय आत्मा मनोऽप्यतीन्द्रियं तस्मान्न रसजमिति शिः । २ व्याधीनामपि रसजत्वं निराकरोति—सन्ति रोगाः शब्दादिजास्तथेति शिः । ३ पितृमातृभवाश्चोक्ता रोगास्तावत्र कारणमिति वा पाठः ।

नरगोऽश्वादिभेदो न स्यादिति भावः । हेत्वन्तरमाह—पित्र्या मेहादयश्चोक्ता इति । पितृतोऽपत्यं गच्छन्तीति पित्र्याः । आदिशब्देन कुष्ठार्शःप्रभृतयो ग्राह्याः । स्वपक्षं दर्शयति—तावत्र कारणमिति । तौ मातापितरौ ॥ १७ ॥

**भद्रकाप्यस्तु नेत्याह न ह्यन्धोऽन्धात्प्रजायते ।**
**मातापित्रोरपि च ते प्रागुत्पत्तिर्न युज्यते[1] ॥ १८ ॥**
**कर्मजस्तु मतो जन्तुः कर्मजास्तस्य चामयाः ।**
**न ह्यृते कर्मणो जन्म रोगाणां पुरुषस्य च ॥ १९ ॥**

न ह्यन्ध इत्यादि । मातापितृकारणत्वेऽन्धेन जातोऽन्धः स्यादित्यर्थः । हेत्वन्तरमाह—मातापित्रोरपीत्यादि । ते तव मातापितृकारणवादिनः, प्रागिति सर्गादौ निःशरीरिणि मातापित्रोरुत्पत्तिर्न स्यात्, सर्गादौ निःशरीरिण्यादिभूतयोर्मातापित्रोरभावादुत्पादो नोपपन्न इति भावः ॥ १८—१९ ॥

**भरद्वाजस्तु नेत्याह कर्ता पूर्वं हि कर्मणः ।**
**दृष्टं न चाकृतं कर्म यस्य स्यात्पुरुषः फलम् ॥ २० ॥**
**भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च ।**
**खरद्रवचलोष्णत्वं तेजोऽन्तानां यथैव हि ॥ २१ ॥**

कर्ता पूर्वं हीत्यादि । कर्मणः पूर्वं कर्ता भवतीति शेषः । येन कर्मणा स पुरुषः कर्तव्यः, तस्य कर्मणः पुरुषपूर्वभावित्वात्कारणत्वं स्वीकर्तव्यम्, ततश्च, स चेद्विना कर्म पुरुषोऽभूत्, कथं पुरुषस्य कर्म कारणमिति भावः । अथ शङ्क्यते अकृतमेवादौ पुरुषजनकं कर्म भविष्यतीत्याह—दृष्टं न चेत्यादि । अकृतं कर्म न दृष्टं प्रमाणेन नोपलब्धमित्यर्थः । यस्माच्छुभाशुभकर्म क्रियाजन्यमेव धर्माधर्मरूपं सर्वं भवतीति भावः । भावहेतुरुत्पत्तिहेतुः । स्वाभाविकत्वे दृष्टान्तमाह[2]—खरेत्यादि । तेजोऽन्तानामिति "खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्" इत्यादि वक्ष्यमाणक्रमेण भवेत् ॥ २०—२१ ॥

**काङ्कायनस्तु नेत्याह न ह्यारम्भफलं भवेत् ।**
**भवेत्स्वभावाद्भावानामसिद्धिः सिद्धिरेव वा ॥ २२ ॥**
**स्रष्टा त्वमितसङ्कल्पो ब्रह्मापत्यं प्रजापतिः ।**
**चेतनाऽचेतनस्यास्य जगतः सुखदुःखयोः ॥ २३ ॥**
**तन्नेति भिक्षुरात्रेयो न ह्यपत्यं प्रजापतिः ।**
**प्रजाहितैषी सततं दुःखैर्युज्यादसाधुवत् ॥ २४ ॥**
**कालजस्त्वेव पुरुषः कालजास्तस्य चामयाः ।**
**जगत्कालवशं सर्वं कालः सर्वत्र कारणम् ॥ २५ ॥**

स्वभावादित्यत्रादौ "यदि" इत्यध्याहर्तव्यम्, तेन, यदि स्वभावादेव भावानां विकारशरीरादीनां सिद्ध्यसिद्धी

१ मातापित्रोश्च ते पूर्वमुत्पत्तिर्नोपपद्यते इति शिः । २ अत्रैव दृष्टान्तमाह खरेत्यादि । तेजोऽन्तानामिति भूजलानिलतेजसां क्रमात्खरचलोष्णत्वं यथा स्वभावसिद्धं, तथा व्याधिपुरुषयोरपि स्वभावसिद्धतेत्यर्थ इति शिः ।

भवतः, तदाऽऽरम्भफलं न भवेत्, स्वाभाविकत्वाद्भावानाम् । य इमे लोकशास्त्रसिद्धा यागकृष्यध्ययनाद्यारम्भास्ते निष्प्रयोजना भवेयुरकारणत्वादित्यर्थः । स्रष्टेत्यादौ जगतः सुखदुःखयोश्च स्रष्टा प्रजापतिरिति योजना । स च ब्रह्मणोऽपत्यम्[1] । अमितसङ्कल्प इति युगपदपरिमितस्थावरजङ्गमरूपकार्यकर्तृत्वेनाऽपरिमिततज्जननसङ्कल्प इत्यर्थः । असाधुवदित्यसाधुरिवाऽपत्यद्रोहकारी ॥ २२–२५ ॥

**तथर्षीणां विवदतामुवाचेदं पुनर्वसुः ।**
**मैवं वोचत तत्त्वं हि दुष्प्रापं पक्षसंश्रयात् ॥ २६ ॥**
**वादान्सप्रतिवादान् हि वदन्तो निश्चितानिव ।**
**पक्षान्तं नैव गच्छन्ति तिलपीडकवद्गतौ ॥ २७ ॥**
**मुक्त्वैवं वादसङ्घट्टमध्यात्ममनुचिन्त्यताम् ।**
**नाऽविधूततमःस्कन्धे ज्ञेये ज्ञानं प्रवर्तते ॥ २८ ॥**
**येषामेव हि भावानां संपत्संजनयेन्नरम् ।**
**तेषामेव विपद्व्याधीन्विविधान्समुदीरयेत् ॥ २९ ॥**

पक्षसंश्रयादिति रागतः पक्षसंग्रहात् । निश्चितानिवेति परमार्थतोऽनिश्चिता एव, परं पक्षरागाद्बुद्धिप्रकर्षान्निश्चिता इवाभिधीयन्ते पक्षा इत्यर्थः । पक्षान्तमिति सम्यगर्थावधारणरूपं पक्षान्तम् । तिलपीडकस्तैलार्थं यन्त्रोपरि स्थितो मनुष्यः[2] तिलपीडको यथा, गतौ गमने सति गम्यदेशाऽप्राप्त्या चान्तं नासादयति, पुनस्तत्रैव भ्रमणात् । तथा, पक्षसंश्रयाद्वादिनोऽपीत्यर्थः । सङ्घट्टोऽन्योन्यपीडको मेलकः । अध्यात्मं तत्त्वम् । स्कन्धः समूहः । पक्षरागश्चेह तत्त्वज्ञानप्रतिबन्धकत्वेन 'तमस्कन्ध' उच्यते । सिद्धान्तमाह—येषामित्यादि । येषामिति यज्जातीयानां, ते च महाभूतादयः । तेन महाभूतत्वेनैव वातादीनां ग्रहणम् । सम्पदिति प्रशस्तगुणता । नरमिति संयोगिपुरुषम्[3] । विपदिति वैगुण्यं, समुदीरयेदिति जनयेत् । एतेषां च ऋषिवादानां कथनं पूर्वपक्षसिद्धान्तश्रवणेन शिष्यसन्देहनिवृत्त्यर्थम् ॥ २६—२९ ॥

**अथाऽऽत्रेयस्य भगवतो वचनमनुनिशम्य पुनरेव वामकः काशिपतिरुवाच भगवन्तमात्रेयं भगवन्संपन्निमित्तजस्य पुरुषस्य विपन्निमित्तजानां रोगाणां किमभिवृद्धिकारणमिति ॥ ३० ॥**

**तमुवाच भगवानात्रेयः । हिताहारोपयोग एक एव पुरुषवृद्धिकरो भवति, अहिताहारोपयोगः पुनर्व्याधिनिमित्त इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—कथमिह भगवन् हिताहितानामाहारजातानां लक्षणमनपवादमभिजानीयात् । हितसमाख्यातानां चैव ह्याहारजातानामहितसमाख्या-**

१ ब्रह्मणो नारायणस्यापत्यं अंशावतार इति शिः । २ कलु क्वचित्खलु इति च यस्य प्रसिद्धिः । ३ संयोगपुरुष इति वा पाठः ।

**तानां च मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तरेषु विपरीतकारित्वमुपलभामहे इति ॥ ३१ ॥**

हिताहारोपयोग एक एवेत्यवधारणेनान्याप्राधान्यं दर्शयति, नान्यप्रतिषेधम् । आचारस्य स्वप्नादेः कारणत्वेन तथा शब्दादीनामपि कारणत्वात् । व्याधिनिमित्तमिति व्याध्यभिवृद्धिनिमित्तं मध्यपदलोपाज्ज्ञेयम्, अभिवृद्धिकारणस्यैव पृष्टत्वात्, तथाऽहिताहारस्य यद्व्याधिनिमित्तत्वं, तस्य "तेषामेव विपद्याधीन्विविधान्समुदीरयेत्" इत्यनेनैवोक्तत्वात् । किंवा व्याधिनिमित्तशब्देन सामान्येन जनको वर्धकश्च हेतुरुच्यते । अनपवादमित्यव्यभिचारि । हिताहारदुर्ज्ञानताहेतुमाह—हितसमाख्यातानामित्यादि । विपरीतकारित्वमिति पथ्यस्याऽपथ्यत्वं मात्रादिवशाद्भवति, तत्र पथ्या रक्तशाल्यादयोऽतिमात्रा हीनमात्रा वा मात्रादोषादपथ्या भवन्ति । तथा कालवशात्त एव शाल्यादयो लघुत्वाद्बलवदग्नीनां हेमन्ते न हिताः । कालशब्देन चेह नित्य एव कालो गृह्यते, आवस्थिकस्य पुरुषावस्थाशब्देन गृहीतत्वात् । क्रिया तु संस्करणं, तेन च, रक्तशाल्यादिरसम्यक्क्लिन्नत्वाऽप्रस्रुतत्वादिना ओदनदोषेणाऽहितो भवति । तथा, स एव भूमिसंबन्धादानूपदेशजः सन्नपथ्यो भवति, तथा, देहाऽपेक्षया मेदस्विनो रक्तशालिर्लघुतया न हितो भवति, तदुक्तम् "गुरु चाऽतर्पणं चेष्टं स्थूलानां कर्शनं प्रति" इति । तथा स एव दोषे वायावहितः, दोषशब्देन व्याधिरपि ग्रहीतव्यः । तथा, पुरुषस्य बाल्यावस्थायां श्लेष्मप्रधानायां तिक्तादि पथ्यम्, तत्तु वार्धक्ये वृद्धवाते न पथ्यम् । अवस्थान्तरशब्दश्च मात्रादिभिः प्रत्येकं संबध्यते । एवमहितस्यापि मात्रादिपरिग्रहेण हितत्वमुन्नेतव्यम् ॥ ३०—३१ ॥

**तमुवाच भगवानात्रेयः—यदाहारजातमग्निवेश, समांश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमांश्च समीकरोतीत्येतद्धितं विद्धि, अहितं विपरीतमित्येतद्धिताहितलक्षणमनपवादं भवति ॥ ३२ ॥**

**एवंवादिनं च भगवन्तमात्रेयमग्निवेश उवाच भगवन्, नत्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति ॥ ३३ ॥**

सिद्धान्तयति—यदाहारमित्यादि । अनेन च ग्रन्थेन हिताहितत्वं न स्वरूपेण भावानाम्, किंतु, मात्रादिसव्यपेक्षमिति दर्शितं स्यात् । नत्वित्यादि । एतदिति हिताहितम्; एवमुद्दिष्टमिति "यदाहारजातम्" इत्यादिलक्षणोद्दिष्टम् । विज्ञास्यन्ति नत्विति संबन्धः । एतस्मिन् हिताहितलक्षणे मात्राद्यवस्थान्तरज्ञानं विना न हितत्वमहितत्वं वा हितानां रक्तशाल्यादीनामहितानां यवकादीनां च ज्ञातुं पार्यते, मात्राद्यवस्थायाश्च दुर्ज्ञानत्वेन सर्ववैद्या ज्ञातुमक्षमा इति ॥ ३२—३३ ॥

**तमुवाच भगवानात्रेयः येषां विदितमाहारतत्त्वमग्निवेश, गुणतो द्रव्यतः कर्मतः सर्वावयवशश्च मात्रादयो भावाः, त एतदेवमुपदिष्टं विज्ञातुमुत्सहन्ते । यथा तु खल्वेतदुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति, तथैतदुपदेक्ष्यामो मात्रादीन्भावाननुदाहरन्तः, तेषां हि बहुविधविकल्पा भवन्ति । आहारविधिविशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्यास्यामः ॥ ३४ ॥**

एतदेवाऽसर्वभिषग्ज्ञेयत्वं लक्षणस्याह—येषामित्यादि । गुणत इतीह प्रकरणे गुरुलघुत्वादिगुणतः । द्रव्यत इति कारणतः, यथा "इदमाप्यमिदमाग्नेयम्" इत्यादि । किंवा, द्रव्यत इत्याहारद्रव्याद्रक्तशाल्यादेः । कर्मतः कार्यतः, यथा "इदं जीवनमिदं बृंहणम्" इत्यादि । सर्वावयवशश्चेति रसवीर्यविपाकप्रभावेभ्यः । मात्रादयश्चानन्तरोक्ताः पुरुषावस्थान्तरान्ता ज्ञेयाः । आहारतत्वं च गुणादिभ्यो विदितम्, मात्रादयश्च विदिता इति योजना । किंवा गुणशब्देन रसवीर्यादीनामपि ग्रहणम् । सर्वावयवशश्चेति मात्रादिज्ञानेन संबध्यते । यथेत्यादौ एतदिति हिताहितम् । भूयिष्ठकल्पा नानाप्रकारा उत्तमाधममध्यमा इत्यर्थः, भूयिष्ठकल्पा इति कृत्वा सर्वग्रहणमुत्तमादीनामेव श्रेष्ठश्रेष्ठतमादिभेदग्रहणार्थम् । किंवा शल्याद्यष्टाङ्गाध्यायिवैद्यग्रहणार्थम् । किंवा भूयिष्ठकल्पा इति विज्ञातभूरिहिताहितोदाहरणाः । अभ्याधिकारेण बहुहिताहितं वक्तव्यम्, तच्चाल्पबुद्धीनां व्यवहाराय भवति, प्रकृष्टबुद्धीनां चानुज्ञानायेति भावः। लक्षणत इति । लक्षणं आहारत्वस्थावरजङ्गमादि, एतच्च, "तद्यथाऽऽहारत्वम्" इत्यादिना "करणबाहुल्या"दित्यन्तेन वक्ष्यति । अवयवत इत्येकदेशतः, एकदेशाश्च लोहितशाल्यादयः, ते तु "तद्यथा लोहितशाल्यादयः" इत्यादिना वक्ष्यन्ते ॥३४॥

**तद्यथा—आहारत्वमाहारस्यैकविधमर्थाभेदात्, स पुनर्द्वियोनिः स्थावरजङ्गमात्मकत्वात्, द्विविधप्रभावो हिताहितोदर्कविशेषात्, चतुर्विधोपयोगः पानाशनभक्ष्यलेह्योपयोगात्, षडास्वादो रसभेदतः षड्विधत्वात्, विंशतिगुणो गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानुगमात्, अपरिसंख्येयविकल्पो द्रव्यसंयोगकरणबाहुल्यात् ॥ ३५ ॥**

अर्थाभेदादित्यभ्यवह्रियमाणत्वार्थाभेदात् । द्वियोनिरिति द्विप्रभवः । हितरूपोऽहितरूपो वोदर्को हिताहितोदर्कः, स एव विशेषः । उदर्क उत्तरकालीनं फलम् । गुरुलाघवादयो युग्माः परस्परविरोधिनो ज्ञेयाः, अनुगमादित्यनुगतत्वादिति । आत्रेयभद्रकाप्यीये वक्ष्यमाणाः परत्वापरत्वादयो गुणा न तथाऽत्रोपकारका इति नेहोच्यन्ते । ये तु तत्र संयोगकरणे आहारविधौ भूर्युपयोगिनी, ते बहुविधत्वेन त्वपरिसंख्येयविकल्पहेतुत्वेनैव

१ सामान्यतस्सर्वावयवत् इति पाठः । २ लक्ष्यत इति पाठः ।

निवेशिते । परिमाणं तु मात्रा, सा चेहानुदाहरणीयत्वेन प्रतिज्ञाता "मात्रादीन्भावाननुदाहरन्तः" इति वचनेन । द्रव्यसंयोगकारणबाहुल्यादिति । द्रव्यं शूकधान्यादिकम् । संयोग आहारद्रव्याणां मेलकः । करणं संस्कारः ॥ ३५ ॥

**तस्य खलु ये ये विकारावयवा भूयिष्ठमुपयुज्यन्ते, भूयिष्ठकल्पानां च मनुष्याणां प्रकृत्यैव हिततमाश्चाहिततमाश्च, तांस्तान्यथावदनुव्याख्यास्यामः ॥३६॥**

विकारावयवा इति प्रकारैकदेशाः, भूयिष्ठकल्पानामिति किंचिन्न्यूनवस्तूनां, कल्पशब्दो ह्ययमीषदसमाप्त्यर्थः, यथा "राजकल्पः" इति । एतेन प्रायशो वस्तूनां ये हिता अहिताश्च त उच्यन्त इत्यर्थः । अन्ये तु भूयिष्ठकल्पानामिति समानधातुप्रकृतीनामिति ब्रुवते । प्रकृत्येति न संयोगकरणादिना, किंतु स्वभावेन ॥ ३६ ॥

**तद्यथा—लोहितशालयः शूकधान्यानां पथ्यतमत्वे श्रेष्ठतमाः, मुद्गाः शमीधान्यानाम्, आन्तरिक्षमुदकानाम्, सैन्धवं लवणानाम्, जीवन्तीशाकं शाकानाम्, ऐणेयं मृगमांसानाम्, लावः पक्षिणाम्, गोधा विलेशयानाम्, रोहितो मत्स्यानाम्, गव्यं सर्पिः सर्पिषाम्, गोक्षीरं क्षीराणाम्, तिलतैलं स्थावरजातानां स्नेहानाम्, वराहवसा आनूपमृगवसानाम्, चुलुकीवसा मत्स्यवसानाम्, पाकहंसवसा जलचरविहङ्गवसानाम्, कुक्कुटवसा विष्किरशकुनिवसानाम्, अजमेदः शाखादमेदसाम्, शृङ्गवेरं कन्दानाम्, मृद्वीका फलानाम्, शर्करेक्षुविकाराणां प्रकृत्यैव हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि भवन्ति ॥ ३७ ॥**

लोहितशाली रक्तशालिः, शूकधान्यानामित्यादौ निर्धारणे षष्ठी । पथ्यतमत्व इति तमप्प्रयोगः । सजातीयेभ्यः प्रकृष्टत्वेन श्रेष्ठतमा इति तमप्ग्रहणं स्वार्थिकं, यथा "युधिष्ठिरः श्रेष्ठतमः कुरूणाम्" इति, तथा "अन्यतमं जिह्वावैषयिकम्" इति । श्रेष्ठतमा इति प्रशस्याः । यद्यपि काकमाची त्रिदोषघ्नी रसायनी च, तथाऽपीह जीवन्ती स्वस्थहितत्वप्रकर्षादुच्यते, स्वस्थहितत्वप्रकर्षश्चेह वचनादेव लभ्यते । एवमन्यत्रापि व्याख्येयम् । काकमाच्यास्त्वयं विशेषः यत् काकमाची पर्युषिता मरणाय । यद्यपि गोधारोहितौ कफपित्तवर्धनौ, वचनं हि "भूशया वारिजाताश्च कफपित्तविवर्धनाः" इति, तथापीह सजातीयेषु पथ्यत्वप्रकर्षेणेहोच्येते, तथा किंचिद्दोषकरस्यापि धातुभेदेन पथ्यत्वं भवत्येव, किंचित् स्वस्थहितत्वं द्रव्यस्य पृथगेव गुणः दोषकर्तृत्वं दोषकृत्यं वाऽपेक्षते, यदुक्तम् "किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम् । स्वस्थवृत्तौ मतं किंचिद्द्रव्यं त्रिविधमुच्यते" इति । चुलुकी "शुशु" इति ख्यातः । पाकहंसः श्वेतहंसः ॥ ३७ ॥

१ आहारविधिविशेषांल्लक्षणतो निरूप्य अवयवतो निरूपयितुं प्रतिजानीते । तस्य खल्वित्यादीति शिः । २ भूयिष्ठकल्पानामिति प्रायेणापि केषामित्यर्थ इति शिः । ३ शमीधान्यमिति शिंबीधान्यम् ।

**अहितानप्युपदेक्ष्यामः—यवकाः शूकधान्यानामपथ्यतमत्वे प्रकृष्टतमा भवन्ति; माषाः शमीधान्यानाम्, वर्षानादेयमुदकानाम्, ऊषरं लवणानाम्, सर्षपशाकं शाकानाम्, गोमांसं मृगमांसानाम्, काणकपोतः पक्षिणाम्, भेको विलेशयानाम्, चिलिचिमो मत्स्यानाम्, आविकं सर्पिः सर्पिषाम्, अविक्षीरं क्षीराणाम्, कुसुम्भस्नेहः स्थावरस्नेहानाम्, महिषवसा आनूपमृगवसानाम्, कुम्भीरवसा मत्स्यवसानाम्, काकमद्गुवसा जलचरविहङ्गवसानाम्, कारण्डववसा विष्किरशकुनिवसानाम्, हस्तिमेदः शाखादमेदसाम्, निकुचं फलानाम्, आलुकं कन्दानाम्, फाणितमिक्षुविकाराणाम्, चटकवसा विष्किरशकुनिवसानामिति प्रकृत्यैवाऽहिततमानामाहारविकाराणां प्रकृष्टतमानि द्रव्याणि व्याख्यातानि भवन्ति, हिताहितावयवमाहारविकाराणाम्[2]; अतो भूय भूयः कर्मौषधानां प्राधान्यतः सानुबन्धानि द्रव्याणि व्याख्यातान्यनुव्याख्यास्यामः ॥ ३८ ॥**

प्रकृष्टतम इति तमप्प्रयोगः पूर्ववत् स्वार्थिकः । यद्यप्यपथ्यतम इति तमप्प्रयोगेणैव प्रकृष्टत्वं प्रतिपादितम्, तथाप्यपथ्यतमानां बहूनां मध्ये प्रकर्षख्यापनार्थं "प्रकृष्टतमः" इति पदम् । वर्षासु नादेयं वर्षानादेयम् । ऊषरदेशभवमूषरम्, काणकपोत इत्यत्र काणशब्दोऽल्पवचनः यथा "काणो मेघः" इति । चिलिचिमो महाशकली मत्स्यो रोहितभेदः, आत्रेयभद्रकाप्यीयेऽग्रे रोहितभेदमेव चिलिचिमं वक्ष्यति । काकमद्गुः पानीयकाकिका । चटकः प्रसिद्धः । हिताहितावयवमित्यादि[3]। अत्रादाविति शब्दोऽध्याहार्यः, तेन इति हिताहितावयवमाहारविकाराणां व्याख्यातं भवतीति पूर्वेणैव योजनीयम् । अतोभूय इति, अत इति हेतौ, यस्माद्धिताऽहिताद्युक्तम्, न तु तेषां कर्मेत्यर्थः । भूयःशब्दः पुनरर्थे, कर्मेतिकार्यम्, तेन, अतो भूय आहारविकाराणां कर्म, यथा "अन्नं वृत्तिकराणाम्"। "उदकमाश्वासकराणाम्" इत्यादि तथौषधानां च कर्म, यथा "त्रिवृत्सुखविरेचनानाम्" इत्यादि वक्ष्यामः । प्राधान्यत इत्य-

१ मूलकमिति वा पाठः । २ हिताहितावयवानामाहारविकाराणामिति वा पाठः । ३ हिताहितावयवमित्यादि । अत्र व्याख्यायेति शेषः, औषधानां चेति चकारेणाहारविकाराणामप्यनुकर्षणम्, तेन, आहारविकाराणां हिताऽहितैकदेशं व्याख्याय अत ऊर्ध्वं भूयः पुनराहारविकाराणां कर्मतस्तथा औषधानां च कर्मतस्तथा सानुबन्धानि द्रव्याण्यनुव्याख्यास्याम इत्यर्थ इति शिः ।

नेन, सर्वेषामाहारविकाराणामौषधानां च कर्माभिधातव्यम्[1] । किंतु, यथाप्रधानमिति दर्शयति । सानुबन्धानीति सप्रयोजनानीति, यथा—अजीर्णमुद्धार्योणाम्, इत्यादि; अजीर्णज्वरादिकर्मकथनं हि चिकित्सोपयोगि वक्तव्यमेव । द्रव्याणीति महाभूतानि, यथा "जलं स्तम्भनानाम्, वायुः संज्ञाप्रदानहेतूनाम्" इत्यादि । द्रव्याणीत्युपलक्षणम्, तत्र सानुबन्धानीत्यस्य विशेषणम्, तेन अद्रव्यमपि सानुबन्धमुच्यते, यथा- "शास्त्रसहितस्तर्कः साधनानाम्" इति । किंवा, हिताहितावयवमिति कर्मविशेषणम्, तेन, हिताहितैकदेशरूपं कर्माऽऽहारविकाराणामिति स्यात्; तत्र हितं कर्म, "अन्नं वृत्तिकराणाम्" इत्यादि । अहितं कर्म, "आविकं सर्पिरहृद्यानाम्" इत्यादि । औषधानां कर्म, त्रिवृत्सुखविरेचनानामित्यादि । व्याख्यानं पूर्ववदेव ॥ ३८ ॥

अन्नं वृत्तिकराणां श्रेष्ठम्, उदकमाश्वासकराणां[2], सुरा श्रमहराणां, क्षीरं जीवनीयानां, मांसं बृंहणीयानां[3], लवणमन्नद्रव्यरुचिकराणाम्, अम्लं हृद्यानां, कुक्कुटो बल्यानां, नक्ररेतो वृष्याणां, मधु श्लेष्मपित्तप्रशमनानां, सर्पिर्वातपित्तप्रशमनानां, तैलं वातश्लेष्मप्रशमनानां, वमनं श्लेष्महराणां, विरेचनं पित्तहराणां, वस्तिर्वातहराणां, स्वेदो मार्दवकराणां, व्यायामः स्थैर्यकराणां, क्षारः पुंस्त्वोपघातिनां, तिन्दुकमनन्नद्रव्यरुचिकराणाम्, आमकपित्थमकण्ठ्यानां, आविकं सर्पिरहृद्यानां, अजाक्षीरं शोषघ्नस्तन्यसात्म्यरक्तसांग्राहिकरक्तपित्तप्रशमनानां, अविक्षीरं श्लेष्मपित्तोपचयकराणां, महिषीक्षीर स्वप्नजननानां, मन्दकं दध्यभिष्यन्दकराणां, गवेधुकान्नं कर्शनीयानां, उद्दालकान्नं विरूक्षणीयानाम्, इक्षुर्मूत्रजननानां, यवाः पुरीषजननानां, (जाम्बवं वातजननानां,) शष्कुल्यः श्लेष्मपित्तजननानां, कुलत्था अम्लपित्तजननानां, माषाः श्लेष्मपित्तजननानां, मदनफलं वमनास्थापनानुवासनोपयोगिनां, त्रिवृत्सुखविरेचनानां, चतुरङ्गुलं मृदुविरेचनानां, स्नुक्पयस्तीक्ष्णविरेचनानां, (प्रत्यक्पुष्पी शिरोविरेचनानां,) विडङ्गं क्रिमिघ्नानां, शिरीषो विषघ्नानां, खदिरः कुष्ठघ्नानां, रास्ना वातहराणाम्, आमलकं वयःस्थापनानां, हरीतकी पथ्यानाम्, एरण्डमूलं वृष्यवातहराणां, पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानां, चित्रकमूलं दीपनीयपाचनीयगुदशोथार्शःशूलहराणां, पुष्करमूलं हिक्काश्वासकासपार्श्वशूलहराणां, मुस्तं संग्राहकदीपनीय[4]पाचनीयानाम्, उदीच्यं निर्वापणदीपनीयपाचनीयच्छर्द्यतीसारहराणां, कट्वङ्गं संग्राहकपाचनीयदीपनीयानाम्, अनन्ता संग्राहकरक्तपित्तप्रशमनानां, अमृता संग्राहक[1]वातहरदीपनीयश्लेष्मशोणितविबन्धप्रशमनानां, बिल्वं संग्राहकदीपनीयवातकफप्रशमनानाम्, अतिविषा दीपनीयपाचनीयसंग्राहकसर्वदोषहराणाम्, उत्पलकुमुदपद्मकिंजल्कः संग्राहकरक्तपित्तप्रशमनानां, दुरालभा पित्तश्लेष्मप्रशमनानां, गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानां, कुटजत्वक् श्लेष्मपित्तरक्तसंग्राहकोपशोषणानां, काश्मर्यफलं रक्तसंग्राहकरक्तपित्तप्रशमनानां, पृश्निपर्णी संग्राहकवातहरदीपनीयवृष्याणां, विदारिगन्धा वृष्यसर्वदोषहराणां, बला संग्राहकबल्यवातहराणां, गोक्षुरको मूत्रकृच्छ्रानिलहराणां, हिङ्गुनिर्यासश्छेदनीयदीपनीयानुलोमिकवातकफप्रशमनानाम्, अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्मप्रशमनानां, यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां, तक्राभ्यासो ग्रहणीदोष[2]शोफार्शोघृतव्यापत्प्रशमनानां, क्रव्यान्मांसरसाभ्यासो ग्रहणीदोषशोषार्शोघ्नानां, क्षीरघृताभ्यासो रसायनानां, समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणां, तैलगण्डूषाभ्यासो दन्तबलरुचिकराणां, चन्दनोडुम्बरं दा[3]हनिर्वापणलेपनानां, रास्नागुरुणी शीतापनयनप्रलेपनानां, लामज्जकोशीरं दाहत्वग्दोषस्वेदापनयनप्रलेपनानां, कुष्ठं वातहराभ्यङ्गोपनाहयोगिनां, मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यवर्ण्यविरजनीयरोपणीयानां, वायुः प्राणसंज्ञाप्रदानहेतूनां, अग्निरामस्तम्भशीतशूलोद्वेपनप्रशमनानाम्, जलं स्तम्भनीयानां, मृद्भृष्टलोष्ट्रनिर्वापितमुदकं तृष्णातियोगप्रशमनानां, अतिमात्राशनमामप्रदोषहेतूनां, यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानां, यथासात्म्यं चेष्टाभ्यवहारावुपसेव्यानां, कालभोजनमारोग्यकराणां, वेगसन्धारणमनारोग्यकराणां[4] मद्यं सौमनस्यजननानां, मद्याक्षेपो धीधृतिस्मृतिहराणां, गुरुभोजनं दुर्विपाकानाम्, एकाशनभोजनं सुखपरिणामकराणां, स्त्रीष्वतिप्रसङ्गः शोषकराणां, शुक्रवेगनिग्रहः पाण्ड्यकराणां, पराघातनमन्नाश्रद्धाजननानां, अनशनमायुषो ह्रासकराणां, प्रमिताशनं कर्षणीयानां, अजीर्णाध्यशनं ग्रहणीदूषणानां, विषमाशनमग्निवै-

१ अभिधानमिति वा पाठः । २ आप्यायनकारणामिति वा पाठः । ३ रसस्तर्पणीयानामिति वा पाठः। रसो मांसरसः। ४ संशमनीयानामिति पाठः ।

१ दीपनीयवातपित्तकफप्रशमनानामिति वा पाठः । २ शोफार्शोघृतव्यापत्प्रशमनानामिति वा पाठः । ३ दुर्गन्धनिर्वापणानुलेपनानामिति वा पाठः । ४ तृप्तिराहारगुणानामित्यधिकं ।

पस्यकराणां, विरुद्धवीर्याशनं निन्दितव्याधिकराणां, प्रशमः पथ्यानां, आयासः सर्वापथ्यानां, मिथ्यायोगो व्याधिमुखानां, रजस्वलाभिगमनमलक्ष्मीमुखानां, ब्रह्मचर्यमायुष्यकराणां, सङ्कल्पो वृष्याणां, दौर्मनस्यमवृष्याणाम्, अयथाबलमारम्भः प्राणोपरोधिनां, विषादो रोगवर्धनानां, स्नानं श्रमहराणां, हर्षः प्रीणनानां, शोकः शोषणानां, निवृत्तिः पुष्टिकराणां, पुष्टिः स्वप्नकराणां स्वप्नस्तन्द्राकराणां, सर्वरसाभ्यासो बलकराणां, एकरसाभ्यासो दौर्बल्यकराणां, गर्भशल्यमनाहार्याणां, अजीर्णमुद्धार्याणां, बालो मृदुभेषजीयानां, वृद्धो याप्यानां, गर्भिणी तीक्ष्णौषधव्यायामवर्जनीयानां, सौमनस्यं गर्भधारकाणां, सन्निपातो दुश्चिकित्स्यानां, आमो विषमचिकित्स्यानां, ज्वरो रोगाणां, कुष्ठं दीर्घरोगाणां, राजयक्ष्मा रोगसमूहानां, प्रमेहोऽनुषङ्गिणां, जलौकसोऽनुशस्त्राणां, वस्तिस्तन्त्राणां, हिमवानौषधिभूमीनां, मरुभूरारोग्यदेशानां, अनूपमहितदेशानाम्, निर्देशकारित्वमातुरगुणानां, भिषक् चिकित्साङ्गानां, नास्तिको वर्ज्यानां, लौल्यं क्लेशकराणां, अनिर्देशकारित्वमरिष्टानां, अनिर्वेदो वार्तलक्षणानां, वैद्यसमूहो निःसंशयकराणाम्, योगो वैद्यगुणानां, विज्ञानमौषधीनां, शास्त्रसहितस्तर्कः साधनानां, सम्प्रतिपत्तिः कालज्ञानप्रयोजनानां, तृप्तिराहारगुणानाम्, अव्यवसायः फलातिपत्तिहेतूनां, दृष्टकर्मता निःसंशयकराणां, असमर्थता भयकराणां, तद्विद्यसंभाषा बुद्धिवर्धनानां, आचार्यः शास्त्राधिगमहेतूनां, आयुर्वेदोऽमृतानाम्, सद्वचनमनुष्ठेयानां, असद्ग्रहणं सर्वाहितानां, सर्वसन्न्यासः सुखानामिति ॥ ३९ ॥

वृत्तिकराणामिति शरीरस्थितिकराणाम्, अन्नद्रव्यरुचिकराणामिति लवणमन्नेन संयुक्तं सदन्ने रुचिं करोतीत्यर्थः । अम्लं हृद्यानामिति रुच्यानामिति, अम्लं तु स्वयमेव रोचते । मधु श्लेष्मपित्तप्रशमनानामिति द्रवद्रव्येषु, दुरालभा त्वौषधद्रव्येषु, तेन, दुरालभाया मधुनश्च श्लेष्मपित्तप्रशमनश्रेष्ठत्वावधारणं न विरोधि । वस्तिरित्यविशेषादास्थापनानुवासने । अविक्षीरं पित्तश्लेष्मजननानामिति पेयेषु मध्ये, माषाः पित्तश्लेष्मजननानामिति भोज्येषु, शष्कुल्यः पित्तश्लेष्मजननानामिति भक्ष्येषु मध्ये । किंवा, त्रयमप्येतत् पित्तश्लेष्मजननं प्रति समानमिति त्रितयमुच्यते । एवमन्यत्रापि तुल्यश्रेष्ठताऽभिधानं तज्जातीयश्रेष्ठताभिप्रायेण तुल्यत्वेन च ज्ञेयम् । मन्दकमिति मन्दजातम् । उद्दालको वनकोद्रवः । गुदशोथोऽर्शः । गन्धप्रियङ्गुः प्रियङ्गुरेव । क्रव्यं मांसमत्तीति क्रव्यादो व्याघ्रादिः। समघृत इत्यत्र समशब्दः सहार्थः । उद्वेपनमिति वेपनम् । उदकमाश्वासनस्तम्भनानामिति वक्तव्ये, यत्पृथक् "उदकमाश्वासकराणां" तथा, "जलं स्तम्भनानाम्" इति करोति, तेन कर्मद्वयेऽपि जलस्यानन्यसाधारणतां दर्शयति । मिलिता गुणपाठे ह्युभयकर्मकर्तृत्वे ह्येव प्राधान्यं स्यात् । एवमन्यत्राप्यनेककर्मकर्तृत्वे यस्य प्राधान्यमुक्तं पिप्पलीमूलादौ, तत्र तथाभूतानेककर्मकर्तृत्वे ह्येव प्राधान्यं ज्ञेयम्, न तु पृथक् कर्मणि । लामज्जकोशीरं उशीरद्वयं सगन्धमगन्धं च गृह्यते । एकाशनभोजनमित्येककालभोजनम्, अनेन सुखपरिणाममात्रमुच्यते, न द्वितीयान्नप्रतिषेधः क्रियते, एतेन द्विर्भोजनेष्वव्याहताऽमितानिद्रादयः सुखपरिणामकारणं ज्ञेयाः । शोषद्वाराणामिति शोषकारणानाम् । पराघातनं वधस्थानम्, वध्यमानप्राणिदर्शनाद्धि घृणया नान्ने श्रद्धा स्यात् । "यथा शितम्" इति केचित्पठन्ति, तन्नातिसाधु । प्रमिताशनमतीतकालभोजनम्, स्तोकभोजनं वा । विषमाशनं प्रकृतिकरणादिविषमाशनम् । निन्दितव्याधिः श्वित्रकुष्ठादिः । अलक्ष्मीमुखानामलक्ष्मीकारणानाम् । मिथ्यायोगः सम्यग्योगादन्यस्त्रिविधो योगः । सङ्कल्पः स्त्रीसङ्गसङ्कल्पः । ज्वरो रोगाणामिति रुजाकर्तृणाम् । अनुषङ्गी पुनर्भावी, तन्त्राणामिति कर्मणाम् । सोम ओषधिराजः पञ्चदशपर्वा । वार्तलक्षणानामित्यारोग्यलक्षणानाम्। ज्ञानमित्यौषधविज्ञानम्। साधनानामिति ज्ञानसाधनानाम् । संप्रतिपत्तिः यथाकर्तव्यतानुष्ठानम्, तृप्तिराहारगुणानामित्यत्र गुणशब्दः प्रशस्तधर्मवचनः । एकरसाभ्यासः कर्शनानामित्यपवादं वर्जयित्वा, तेन घृताभ्यासो रसायनानामिति न विरुध्यते । अमृतानामिति जीवितप्रधानहेतूनाम् । सर्वसंन्यासः सर्वक्रियात्यागः, सहि परमसुखमोक्षहेतुः शारीरे वक्तव्यः ॥ ३९ ॥

### भवन्ति चात्र।

**अग्र्याणां शतमुद्दिष्टं यद्द्विपञ्चाशदुत्तरम्।**
**अलमेतद्विकाराणां विघातायोपदिश्यते ॥ ४० ॥**

अग्र्याणमित्यादौ[२] अग्र्यशब्दः श्रेष्ठवचनः । अलमिति स-

१ निवृत्तिरिति वा पाठः । २ व्यवायव्यायामवर्जनीयानामिति वा पाठः । ३ सोमऔषधीनामिति वा पाठः । ४ लामज्जकं सगन्धवीरणमूलम् , उशीरं निर्गन्धमिति शिः । ५ असंबन्धवचनमसद्ग्रहणमसद्वचनमिति च त्रिविधः पाठः । ६ केषुचिदादर्शेषु द्विपंचाशदधिकशतसंख्यातिरिक्तान्यग्र्याणि दृश्यन्ते, निर्दिष्टसंख्यातिरिक्तानि तानि तु न निरर्थकानीति मनसि कृत्वा सन्निवेशितानि; अधिकं तु न दोषायेतिसुधिभिर्विभावनीयम् ।

१ कालानतिक्रमेण कार्यकरणं संप्रतिपत्तिः, अव्यवसायोऽनुद्योगः, अध्यवसाय इति पाठे अध्यवसायः कर्तव्यतामात्रेण ज्ञानमिति शिः । २ अत्र वृत्तिकराणामिति यदुक्तं तस्य संख्याकथनपूर्वकं विहारप्रशमकतामाह—अग्र्याणामित्यादि । अग्र्याणां बलवत्कर्मकारिणामिति शिः ।

मर्थम्, अत्र ज्वरप्रभेदादयोऽपि स्वरूपेणातिपीडाकरत्वानुपघ्निकत्वादिना ज्ञाताः सन्तः चिकित्सायामुपयुक्ता भवन्ति, अतो ज्वरादिज्ञानमपि विकाराणां विघाताय समर्थं भवति, अप्र्याणां च विकारशमकत्वाभिधानं प्राधान्यादुच्यते, स्तुत्यर्थं वा, तेन यदुच्यते—एत एव चेदग्र्याधिकारे विहिता विकारान् शमयन्ति, तत् किमपरचिकित्साभिधानेनेति तन्निरस्तम् । विकारविघातश्चेहोत्पन्नानां चौषधोपयोगेन तथाऽनुत्पन्नानां स्वास्थ्यपरिपालनेन ज्ञेयः ॥ ४० ॥

**समानकारिणो येऽर्थास्तेषां श्रेष्ठस्य लक्षणम् ।**
**ज्यायस्त्वं कार्यकारित्वे वरत्वं चाप्युदाहृतम् ॥४१॥**
**वातपित्तकफेभ्यश्च यद्यत्प्रशमने हितम् ।**
**प्राधान्यतश्च निर्दिष्टं यद्व्याधिहरमुत्तमम् ॥ ४२ ॥**
**एतन्निशम्य निपुणं चिकित्सां संप्रयोजयेत् ।**
**एवं कुर्वन्सदा वैद्यो धर्मकामौ समश्नुते ॥ ४३ ॥**

अग्र्याधिकारोक्तं संग्रहेण कथयति—समानेत्यादि[4] । समानकारिणस्तुल्यकर्माणः । श्रेष्ठस्य लक्षणमिति प्रशस्तस्य लक्षणम्, लक्षणंत्विह पाठ एव, पाठेन हि श्रैष्ठ्यं लक्ष्यते ज्ञायते इत्यर्थः । ज्यायस्त्वं वृहत्त्वम्, तदा प्रशस्तगुणवृहत्त्वं चज्ञेयम्, अतएवाऽहिताधिकारकथने श्रेष्ठतमशब्दं त्यक्त्वा "अपथ्यतमत्वे प्रकृष्टतमा भवन्ति" इत्युक्तम्, तेन श्रेष्ठस्य लक्षणमिति रक्तशाल्यादीनां हिताहाराणां ज्ञेयम् । ज्यायस्त्वंचाहिताहाराणां यवकादीनामपथ्यतमत्वे प्रकर्षशालित्वम् । कार्यकर्तृत्वे वरत्वंचेति कर्मणि चोत्कृष्टत्वं, तच्च "अन्नं वृत्तिकराणाम्" इत्यादिनोक्तं ज्ञेयम् । वातपित्तकफेभ्यश्चेत्यादौ "वस्तिर्वातहराणाम्" विरेचनं पित्तहराणाम्" "वमनं श्लेष्महराणाम्" "आस्थापनं वातहराणाम्" इत्यादि ज्ञेयम् । यद्व्याधिहरमिति "खदिरं कुष्ठहराणाम्" "पुष्करमूलं हिक्काश्वासपार्श्वशूलानाहहराणाम्" इत्यादि ज्ञेयम् । किंवा, "अवरत्वम्"

१ अत्र ज्वरादीनामपि पीडाकरत्वादि ज्ञात्वा भिषगातुरश्च तत्प्रशमेऽवहितो भवतीति ज्वरादिज्ञानमपि विघाताय समर्थं भवतीति शिः । २ समानकारणा इति पाठः । ३ अग्र्याधिकारे यदुक्तं तत्संगृह्णाति–समानेत्यादि । समानकारिणस्तुल्यकर्माणो येऽर्थाः शाल्यादयस्तेषां मध्ये यः श्रेष्ठो रक्तशाल्यादिस्तस्य लक्षणं उपदर्शनं कृतमिति शेषः, यथा रक्तशालयः शूकधान्यानां मध्ये पथ्यतमत्वेन श्रेष्ठास्तथा यवका अपथ्यतमत्वेन श्रेष्ठा इति । तथा कार्यकर्तृत्वे हितरूपकार्यकर्तृत्वे सति ज्यायस्त्वमुत्कृष्टत्वमुदाहृतं, यथा—अन्नं वृत्तिकराणामित्यादि । तथा कार्यकर्तृत्वेऽहितकार्यकर्तृत्वे सत्यवरत्वं अधमत्वं च, यथा शुक्रवेगविनिग्रहः पाण्ड्यकराणामित्यादि । वातपित्तेत्यादि । प्रशमनरूपकार्ये वातपित्तकफेभ्यो यद्धितं तदप्युदाहृतं, यथा वस्तिर्वातहराणामित्यादि । यद्व्याधिहरमुक्तमिति खदिरः कुष्ठहराणामित्यादीति शिः । ४ उक्तस्यार्थस्य चिकित्सोपयोगितामाह—एतन्निशम्येत्यादीति शिः ।

इति पाठः, तदा अवरत्वं अत्यर्थाभिप्रेतकर्तृत्वम्, तच्च "रजस्वलागमनमलक्ष्मीमुखानाम्"इत्यादि ज्ञेयम् । श्रेष्ठत्वज्यायस्त्वाभ्यां प्रशस्ताऽप्रशस्तकर्मणामपि ग्रहणं व्याख्येयम् ॥४१-४३॥

**पथ्यं पथोऽनपेतं यद्यच्चोक्तं मनसः प्रियम् ।**
**यच्चाप्रियमपथ्यं च नियतं तन्न लक्षयेत् ॥ ४४ ॥**
**मात्राकालक्रिया[1]भूमिदेहदोषगुणान्तरम् ।**
**प्राप्य तत्तद्धि दृश्यन्ते ते ते भावास्तथातथा ॥४५॥**
**तस्मात्स्वभावो निर्दिष्टस्तथा मात्रादिराश्रयः ।**
**तदपेक्ष्योभयं कर्म प्रयोज्यं सिद्धिमिच्छता ॥ ४६ ॥**
**तदात्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि भगवन्तमात्रेयमग्निवेश उवाच यथोद्देशमभिनिर्दिष्टः केवलो[2]ऽयमर्थो भगवताऽऽसवद्रव्याणामिदानीमनपवादं लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामह इति ॥ ४७ ॥**

संप्रत्युक्तस्य पथ्यस्य हितापरनाम्नो लक्षणमाह-पथ्यमित्यादि[3] । पथःशरीरमार्गात् स्रोतोरूपादनपेतम्, अपेतमपकारमनपेतमनपकारकमित्यर्थः, पथग्रहणेन पथो वाह्यदोषा धातवश्च, तथा पथो निवर्तका धातवो गृह्यन्ते । तेन कृत्स्नमेव शरीरं गृहीतं स्यात्, ततश्च शरीरानुपघाति पथ्यमिति स्यात् । किंवा, स्वस्थस्वास्थ्यरक्षणमातुरव्याधिपरिमोक्षश्चेति पन्थाः, तस्मादनपेतं पथ्यम् । एवमपि मनोऽनुपघातित्वं न लभ्यत इत्याह—यच्चोक्तं मनसः प्रियमिति । मनसोऽतिप्रीत्यामिलपितं, तेन मनसोहितमिति प्रियार्थः । तेन प्रशमज्ञानाभीष्टत्वादयो गृह्यन्ते । एतेन, मनःशरीरानुपघाति पथ्यमिति पथ्यलक्षणमनपवादमुक्तं स्यात् । अन्ये तु पथ्यलक्षणद्वयमेतत् पठन्ति, वदन्ति च "यद्येवं लक्षणं स्यात्तदा ज्वरादिषु तिक्तं भेषजं मनसोऽप्रियत्वेन न पथ्यं स्यात्, एतच्चानुमतमेव, यद् ज्वरे तिक्तप्रयोगस्य तदात्वे न मनसोऽनुकूलत्वं, न चैताव-

१ क्रिया संस्कारः । २ केवल इति संपूर्ण इति शिः । ३ स्रोतोरूपत्वेन मार्गसाधर्म्याच्छरीरमेव ग्राह्यम्, तस्मादनपेतं शरीरस्यानपकारकं यत्तत्पथ्यमित्यर्थः, एवमपि मानसदोषनिववर्तकस्य धैर्यज्ञानादेस्तथा मनोऽनुकूलस्य चाभीष्टत्वादेः पथ्यस्य संग्रहो न स्यादित्यत उक्तं—यच्चापि मनसः प्रियमिति । एतेन मनःशरीरानुपघाति पथ्यम्, एतद्विपरीतमपथ्यमिति सिद्धम् । एतल्लक्षणं चानुपपन्नं, तथा सति, ज्वरादिहरतिक्तभेषजस्य च मनसोऽप्रियत्वेनाऽसंग्रहः स्यादितत्यत्र केचिल्लक्षणद्वयमेवैतदिति वदन्ति । अस्मत्पितृचरणास्तु व्याचक्षते—आयुर्वेदबोधितमार्गः पन्थास्तस्मादनपेतमायुर्वेदाविरुद्धं यदाहारादि तदेव पथ्यमिति, तेन न कश्चिद्दोषः; तदेतल्लक्षणमुक्त्वा समासेन लक्षणमप्याह—'यच्चोक्तं मनसः प्रियम्' इति । प्रियमित्यनुकूलं तद्दोषनिवर्तकमिति यावत्, चकारो मनस इत्यनन्तरं द्रष्टव्यः, तेन शारीरदोषनिवर्तकं यदाहारादि, तदपि पथ्योदाहरणतया ज्ञातव्यमित्यर्थ इति शिः ।

ता शरीरं प्रत्यपथ्यत्वं स्यात्, अतः, यन्मात्रं मनोऽनुकूलत्वं मानसविकाराकर्तृत्वात् तद्व्यपदेश्यमेव। किंवा तावन्मात्रमनोऽननुकूलत्वं मानसविकाराकर्तृत्वादव्यपदेश्यमेव। तदेतदपथ्यत्वं किमाहाराचाराणां नियतमस्ति नेत्याह—तच्चेत्यादि। नियतं निश्चितमिदमप्रियमेव सर्वदेदमपथ्यमेव सर्वदेत्येवंरूपं किंचिन्नास्तीत्यर्थः। कुतो नास्तीत्याह—मात्रेत्यादि। गुणान्तरशब्दो मात्रादिभिः संबध्यते। तत्तदिति मात्रादिगुणान्तरम्। ते ते इति हिताहिताहाराचाराः। तथा तथेति हितोक्ता अपि हिता अहिताश्च। तथाऽहितोक्ताश्चाऽहिता हिताश्च। एवं प्रियमपि मधुरादि अप्रियम्, तिक्ताद्यप्रियमपि प्रियम्। अत्रोदारणम्, यथ पथ्यं तावद्घृतम्, तदतिमात्रमपथ्यं स्यात्, काले च वसन्तेऽपथ्यम्, संस्कारेण च विरुद्धद्रव्यसंस्कृतमपथ्यम्, भूमौ चानूपायामपथ्यम्, एवं देहेऽतिस्थूले, एवं दोषे कफेऽपथ्यम्। अपथ्यमपि विषं मात्रादिना हितं स्यात्, यथा "उदरे विषस्य तिलं दद्या"दित्यादि। एवमन्यदप्यूह्यम्। यस्मादेवमेकान्तमपथ्यत्वमनिश्चितम्, प्रायोवादपथ्यता तु निश्चिता। तस्मात्स्वभावो निर्दिष्ट इति, पथ्यानां रक्तशाल्यादीनामपथ्यानां च यवकादीनामित्यर्थः, स्वभावः प्रकृत्या पथ्यताऽपथ्यता च तथा मात्रादिराश्रय इति निर्दिष्ट इति संबन्धः। मात्रादिर्मात्राकालक्रियादिः। आश्रय इति पथ्यत्वापथ्यत्वयोः। मात्रादीन्याश्रित्य भावानां पथ्यत्वापथ्यत्वं च पारमार्थिकं भवतीत्यर्थः। उभयमिति स्वभावो मात्रादिश्च ॥ ४४–४७ ॥

**तमुवाच भगवानात्रेयः धान्यफलमूलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयः अग्निवेश, संग्रहेणाष्टौ, शर्करा नवमी। तास्वेव द्रव्यसंयोगकरणतोऽपरिसंख्येयास्ु यथापथ्यतमासवचतुरशीतिं[2] निबोध। तद्यथा सुरासौवीरतुषोदकमैरेयमेदकधान्याम्लुपष्टा धान्यासवा भवन्ति। मृद्वीकाखर्जूरकाश्मर्यधन्वनराजादनतृणशून्यपरूषाभयामलकमृगलिण्डिकाजाम्बवकपित्थकुव लबदरकर्कन्धुपीलुप्रियालपनसन्यग्रोधाश्वत्थप्लक्षक पीतनोडुम्बराजमोदश्रृङ्गाटकशङ्खिनीति फलासवाः षड्विंशतिः। विदारिगन्धाश्वगन्धाकृष्णगन्धाशतावरीश्यामात्रिवृद्दन्तीद्रवन्तीबिल्वोरुबूकचित्रकमूलैरेकादश मूलासवाः। शालप्रियकाश्वकर्णचन्दनस्यन्दनखदिरकदरसप्तपर्णार्जुनासनारिमेदतिन्दुककिणिहीसमीशुक्तिशिंशपाशिरीषवञ्जुलधन्वनमधुकैः सारासवा विंशतिः। पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधूकप्रियङ्गुधातकीपुष्पदशमाः पुष्पासवा भवन्ति। इक्षुकाण्डेक्षुइक्षुवालिकापुण्ड्रकचतुर्थाः काण्डासवा भवन्ति। पटोलताडकपत्रासवौ द्वौ भवतः। तिल्वकलोध्रैलवालुककमुकचतुर्थास्त्वगासवा भवन्ति। शर्करासव एक एवेति। एवमेषामासवानां चतुरशीतिः परस्परेणाऽसंसृष्टानामासवद्रव्याणामुपनिर्दिष्टा। इत्येषामासवानामासुतत्वादासवसंज्ञा। द्रव्यसंयोगविभागस्त्वेषां[1] बहुविधकल्पः, संस्कारश्च। यथास्वं संयोगसंस्कारसंस्कृताश्चासवाः[2] स्वकर्म कुर्वन्ति। संयोगसंस्कारदेशकालस्थापनमात्रादयश्च भावास्तेषां तेषामासवानां ते ते भावाः समुपदिश्यन्ते तत्तत्कार्यमभिसमीक्ष्येति ॥ ४८ ॥**

भवति चात्र।

**मनः[3]शरीराग्निबलप्रदानामस्वप्नशोकारुचिनाशनानाम्।**
**संहर्षणानां प्रवरासवानामशीतिरुक्ता चतुरुत्तरैषा ॥ ४९ ॥**
**शरीररोगप्रकृतौ मतानि[4] तत्त्वेन चाहारविनिश्चयो यः।**
**उवाच यज्ञःपुरुषादिकेऽस्मिन्[5]मुनिस्तथाग्र्याणि वरासवांश्च ॥ ५० ॥**

इदानीं अग्र्याधिकारादासवेष्वनन्तेषु य आसवा अग्र्यास्त उच्यन्ते। धान्यादीन्येकत्वेन पठित्वा पृथक् शर्करां पठन्ति, धान्यादीनामवान्तरजातिमत्त्वात्, शर्करायास्त्ववान्तरजातिर्नास्ति। तासु शर्करा नवम्यासवकारणतया श्रूयते। मधुशर्करा तु मध्वन्तरनिविष्टैव। मधु तु नासवयोनितया पृथक्पठितम्, येन तत्कृतस्यासवस्य धान्यसंबन्धत्वात् धान्यासवेनैव ग्रहणम्। एवं गौडासवादिष्वपि बोद्धव्यम्। द्रव्यं च संयोगश्च करणं च द्रव्यसंयोगकरणम्, ततोऽपरिसंख्येयाः स्युः। सौवीरं निस्तुषयवकृतं, मैरेयं सुरासवकृता सुरा, मेदकः श्वेतसुरा जगलाख्याख्या,धान्याम्लु काञ्जिकम्। तृणशून्यं केतकी। मृगलिण्डिका विभीतकम्। कुवलमिति स्थूलवदरी। कर्कन्धुः शृगालवदरी। कदरः श्वेतखदिरः। अश्वकर्णः शालभेदः। अरिमेदो विट्खदिरः। किणिही अपामार्गः। शुक्तिर्वदरी, पद्मं सरक्तमष्टदलपद्मम्। नलिनं श्वेतमष्टदलपद्मम्। पुण्डरीकं श्वेतशतपत्रपद्मम्। शतपत्रं त्वरुणम्। इक्षुशब्दप्राप्तस्यापि पुण्ड्रकस्य पुनरभिधानमासवं प्रति तस्य प्रा-

---

१ करणतः संस्कारत इति शि:। २ पथ्यतमानामासवानां चतुरशीतिमिति वा पाठः।

१ द्रव्यसंयोगविभागस्तु द्रव्याणामावापोद्वापप्रपंच इतीति शि:। २ योनिसंस्कारसंस्कृताश्चासवा वा इति पाठः। ३ भक्तक्लिन्नकृता सुरा जगलेति ख्याता शि:। ४ शरीररोगप्रकृतौ मतानीति शरीररोगयोः कारणे ये मुनीनां मतभेदास्तानित्यर्थ इति शि:। ५ यज्जपुरुषाधिकारेऽस्मिन्निति वा पाठः।

धान्यख्यापनार्थम् । क्रमुकं गुवाकम् । तिल्वकः शावरलोध्रः। आसुतत्वादिति सन्धानरूपत्वात् । द्रव्यसंयोगविभाग इत्यादौ 'एषाम्' इति पदेन प्रत्येकं धान्यादिद्रव्यकृता आसवा उक्ताः । तेषांच विभागोऽनुपपन्न एकरूपत्वादिति, तन्न, तेषामपि स्वजातीयद्रव्यविभागस्य विद्यमानत्वात्, किंच संस्कारद्रव्यविभागस्यापि तत्र शक्यत्वात् नह्येकेनैव द्रव्येण सुरादयः क्रियन्ते, प्राधान्यात्तु धान्यादयोऽभिधीयन्ते । संस्कारश्च बहुविधविकल्प इति योजना । संयोगसंस्कारकरणप्रयोजनमाह— यथास्वमित्यादि । यथास्वमिति यद्युज्यते; देशो भस्मराशिधान्यराश्यादिः सन्धानेषु वक्ष्यमाणः । कालस्तु पक्षमासादिः । स्थापनमात्रा सन्धानद्रव्यमात्रा । आदिग्रहणाद्द्रव्यस्वभावेतिकर्तव्यतासंग्रहणम् । तत्तत्कार्यमिति देशकालशरीरदोषादिभिन्नं हितत्वम्[1] । मनःशरीरेत्यादिना गुणकथनं युक्त्या पीतस्यासवस्य ज्ञेयम् ॥ ४८—५० ॥

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने यज्जःपुरुषीयो नाम पंचविंशोऽध्यायः ।**

यज्जःपुरुषीयः समाप्तः ।

---

## षड्विंशोऽध्यायः ।

**अथात आत्रेयभद्रकाप्यीयमध्यायं व्याख्यास्यामः॥१**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

हिताहितैकदेशमभिधाय कृत्स्नद्रव्यहिताहितत्वज्ञानार्थं रसवीर्यविपाकाभिधायकात्रेयभद्रकाप्यीयोऽभिधीयते[2] । तत्रापि विपाकादीनामपि रसेनैव प्रायो लक्षणीयत्वाद्रसप्रकरणमादौ कृतम् ॥ १—२ ॥

**आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च ।**
**पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः ॥ ३ ॥**
**यः कुमारशिरा नाम भरद्वाजः स चानघः ।**
**श्रीमान्वार्योविदश्चैव राजा मतिमतां वरः ॥ ४ ॥**
**निमिश्च राजा वैदेहो वडिशश्च महामतिः ।**
**कांङ्कायनश्च वाह्लीको वाह्लीकभिषजां वरः ॥ ५ ॥**
**एते श्रुतवयोवृद्धा जितात्मानो महर्षयः ।**
**वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः ॥ ६ ॥**
**तेषां तत्रोपविष्टानामियमर्थवती कथा ।**
**बभूवार्थविदां सम्यग्रसाहारविनिश्चये ॥ ७ ॥**

मुनिमतैः पूर्वपक्षं कृत्वा सिद्धान्तव्यवस्थापनं शिष्यव्युत्पत्त्यर्थम् रसेनाहारविनिश्चयो रसाहारविनिश्चयः, किंवा, "अयं रसविनिश्चयः तथाऽपरंचातो विपाकानाम्" इत्यादिराहारविनिश्चयः[1] ॥ ३—७ ॥

१ तत्तत्कार्यमिति तत्तद्दोषप्रशमनरूपं कार्यमिति शिः । २ इदानीं पूर्वाध्यायोक्तस्याहारस्य रसवीर्यज्ञानार्थे रसवीर्याभिधायकमात्रेयभद्रकाप्यीयमाह—अथेत्यादीति । शिः ।

**एक एव रस इत्युवाच भद्रकाप्यो यं तं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वावैषयिकं भावमाचक्षते कुशलाः, स पुनरुदकादनन्य इति । द्वौ रसाविति शाकुन्तेयो ब्राह्मणश्छेदनीयश्चोपशमनीयश्चेति । त्रयो रसा इति पूर्णाक्षो मौद्गल्यश्छेदनीयोपशमनीयः साधारणश्चेति । चत्वारो रसा इति हिरण्याक्षः कौशिकः स्वादुर्हितश्च स्वादुरहितश्चास्वादुर्हिताश्चास्वादुरहितश्चेति । पञ्चरसा इति कुमारशिरा भरद्वाजो भौमौदकाग्नेयवायवीयान्तरिक्षाः । षड्रसा इति वार्योविदो राजर्षिः गुरुलघुशीतोष्णस्निग्धरूक्षाः । सप्तरसा इति निमिर्वैदेहो मधुराम्ललवणकटुतिक्तकषायक्षाराः अष्टौ रसा इति वडिशो धामार्गवो मधुराम्ललवणकटुतिक्तकषायक्षाराऽव्यक्ताः। अपरिसंख्येया रसा इति काङ्कायनो वाह्लीकभिषगाश्रयगुणकर्मसंस्वादविशेषाणामपरिमेयत्वात् ॥ ८ ॥**

एक एवेत्यादि । इन्द्रियार्थानामिति निर्धारणे षष्ठी । अन्यतममित्येकम्, अन्यशब्दो ह्ययमेकवचनः, यथा "अन्यो दक्षिणेन गतः अन्य उत्तरेण" । एक इत्यर्थः। तमशब्दः स्वार्थिकः । जिह्वावैषयिकमिति जिह्वाग्राह्यम् । रसाभावोऽपि जिह्वया गृह्यते, अत आह भावमिति । उदकादनन्य इति रसोदकयोरेकत्वख्यापनार्थं पूर्वपक्षत्वात् । दृष्टः[2] पूर्वपक्षश्च कापिलमतेन, तेहि "रसतन्मात्रं गन्धतन्मात्रम्" इत्यादिवचनेन गुणव्यतिरिक्तद्रव्यमिति ब्रुवते । छेदनीय इत्यपतर्पणकारकः उपशमनीय इति बृंहणः साधारण इत्याग्नेयसौम्यसामान्यादुभयोरपि लङ्घनबृंहणयोः कर्ता, परस्परविरोधादकर्ता वा[3] । स्वादुरित्यभीष्टः, हित इत्यायत्यनपकारी । आश्रीयत इत्याश्रयो द्रव्यम् । गुणाः स्निग्धगुर्वादयः, कर्म धातुवर्धनक्षपणादि[4] । संस्वादो रसानामवान्तरभेदः, एषां विशेषाणां भेदानामित्यर्थः । तत्र द्रव्यभेदादाधारभेदेनाश्रितस्यापि रसस्य भेदो भवति, आश्रयो हि कारणं, कारणभेदाच्च कार्यभेदोऽवश्यं भवतीत्यर्थः । गुर्वादिगुणभेदास्तथा कर्मभेदाश्च रसकृता एव । ततश्च कार्यभेदादवश्यं कारणभेद इति पूर्वपक्षाभिप्रायः । संस्वादभेदस्तु एकस्या-

१ रसविनिश्चय इति रसविनिश्चयपूर्वक आहारविनिश्चयो रसाहारविनिश्चय इति शिः । २ तन्न, "पाको नास्ति विना वीर्यं वीर्यं नास्ति विना रसा"दिति वीर्यविपाकयोः रसाधीनत्वात् प्रथमं रसविनिश्चयप्रकरणमाह—एक एवेत्यादि । ३ छेदनीय इति कर्शनीयः, उपशमनीय इति बृंहणीयः, साधारण इति आग्नेयसौम्यसंबन्धाल्लङ्घनबृंहणयोः कर्ता, यथा तैलम्. यदुक्तं वाग्भटे "कृशानां बृंहणायालं स्थूलानां कर्शनाय च"इतीति शिः । ४ धातुवर्धनलक्षणादिति वा पाठः ।

मपि मधुरजाताविक्षुगुडादिगतः प्रत्यक्षमेव भेदो दृश्यते, स तु संस्वादभेदः स्वसंवेद्य एव, यदुक्तं "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । भेदस्तथापि नाख्यातुं सरस्वत्यापि शक्यते" ॥ ८ ॥

**षडेव रसा इत्युवाच भगवानात्रेयः पुनर्वसुर्मधुराम्ललवणकटुतिक्तकषायाः, तेषां[1] षण्णां रसानां योनिरुदकम् । छेदनोपशमने द्वे कर्मणी, तयोर्मिश्रीभावात्साधारणत्वं । स्वाद्वस्वादुता भक्तिः, हिताहितौ प्रभावौ । पञ्चमहाभूतविकारास्त्वाश्रयाः प्रकृतिविकृतिविचारदेशकालवशाः, तेष्वाश्रयेषु द्रव्यसंज्ञकेषु गुणा गुरुलघुशीतोष्णस्निग्धरूक्षाद्याः । क्षरणात् क्षारो नासौ रसः, द्रव्यं तदनेकरससमुत्पन्नमनेकरसं कटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनिर्वृत्तम् । अव्यक्तीभावस्तु खलु रसानां प्रकृतौ भवत्यनुरसेऽनुरससमन्विते वा द्रव्ये । अपरिसंख्येयत्वं पुनस्तेषामाश्रयादीनां भावानां विशेषापरिसंख्येयत्वान्न युक्तम्, एकैकोऽपि हि पुनरेषामाश्रयादीनां भावानां विशेषानाश्रयते, विशेषाऽपरिसंख्येयत्वात् । न च तस्मादन्यत्वमुपपद्यते । परस्परसंसृष्टभूयिष्ठत्वान्न चैषामभिनिर्वृत्तेर्गुणप्रकृतीनामपरिसंख्येयत्वं भवति । तस्मान्न संसृष्टानां रसानां कर्मोपदिशन्ति बुद्धिमन्तः । तच्चैव कारणमपेक्षमाणाः षण्णां रसानां परस्परेणाऽसंसृष्टानां लक्षणपृथक्त्वमुपदेक्ष्यामः[3] ॥ ९ ॥**

सिद्धान्तं पुनर्वसुवचनत्वेनाह—षडेवेत्यादि । पूर्वपक्षोक्तरसैकत्वादिव्यवस्थामाह—तेषां षण्णामित्यादि । योनिराधारकारणं, कार्यकारणयोश्च भेदात् सिद्ध उदकाद्रसभेदः प्रत्यक्ष एवेति भावः । क्षितिव्यतिरिक्तमुदकमेव यथा रसयोनिस्तथा "रसनार्थो रसस्तस्य" इत्यादौ विवृतमेव दीर्घंजीवितीये । तयोर्मिश्रीभावादिति कर्मणोरमूर्तयोर्मिश्रीभावानुपपत्तौ तदाधारयोर्द्रव्ययोर्मिश्रीभावादिति बोद्धव्यम् । साधारणमिति साधारणकार्ययोगित्वम् । भक्तिरितीच्छेत्यर्थः । तेन, यो यमिच्छति स तस्य स्वादुरस्वादुरितर इति पुरुषापेक्षौ धर्मौ, न रसभेदकार्यावित्यर्थः । पंचमहाभूतेत्यादौ 'तु' शब्दोऽवधारणे, तेन, आश्रया एव न रसा इत्यर्थः । किंभूता भौमादयो भूतविकारा आश्रया इत्याह—प्रकृतिविकृतिविचारदेशकालवशा इति । वशशब्दोऽधीनार्थः, स च प्रकृत्यादिभिः प्रत्येकं योज्यः, प्रकृतिवशा यथा मुद्गाः कषाया मधुराश्च सन्तः प्रकृत्या लघवः[1] । एतद्धि लाघवं न रसवशं, तथाहि सति, कषायमधुरत्वाद्गुरुत्वं स्यात् । विकृतिवशं च व्रीहेर्लाजानां लघुत्वं तथा सक्तुसिद्धपिण्डकानां च गुरुत्वम्, विचारणा विचारो द्रव्यान्तरसंयोग इत्यर्थः, तेन विचारणावशं यथा मधुसर्पिषी संयुक्ते विषम्, तथा विषं चागदयुक्तं स्वकार्यव्यतिरिक्तकार्यकारि[2] । देशो द्विविधो भूमिरातुरश्च । तत्र भूमौ 'श्वेतकपोती[3] च वल्मीकाधिरूढा विषहरी', तथा "हिमवति भेषजानि महागुणानि भवन्ति" । शरीरदेशे यथा "सक्थिमांसाद्गुरुतरं स्कन्धक्रोडशिरस्सदाम्" इत्यादि । कालवशं तु यथा मूलकमधिकृत्योक्तं "तद्बालं दोषहरं वृद्धं त्रिदोषम्", तथा "यथर्तुपुष्पफलमाददीत" इत्यादि । अत्र चैकप्रकरणोक्ता येऽनुक्तास्ते चकारात्स्वभावादेरन्तर्भावनीयाः । यदुक्तम् "चरः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन्परीक्ष्यते" इति । तत्र, चरशरीरावयवधातूनां देशेन ग्रहणं, मात्रा विचारे प्रविशति, शेषं स्वभावे, तयो रसविमाने वक्ष्यमाणं चात्राप्रविष्टमाहारविशेषायतनमन्तर्भावनीयं यथासंभवम् । स्निग्धरूक्षाद्या इत्यत्राऽऽदिग्रहणेनानुक्ता अपि तीक्ष्णमृद्वादयो न रसाः, किंतु द्रव्यगुणाः पृथगेवेति दर्शयति । क्षरणादधोगमनक्रियायोगात् क्षारो द्रव्यं नासौ रसः, रसस्य हि निष्क्रियस्य क्रियाऽनुपपन्नेत्यर्थः । क्षरणं च क्षारस्य पानीययुक्तस्याधोगमनेन, वदन्ति हि लौकिकाः "क्षारं स्रावयामः" इति । शास्त्रे च "छित्त्वा छित्त्वाऽऽशयात् क्षारः क्षारत्वात् क्षारयत्यधः" इति । हेत्वन्तरमाह द्रव्यं तदनेकरसोत्पन्नमिति, अनेकरसेभ्यो मुष्ककापामार्गादिभ्य उत्पन्नमनेकरसोत्पन्नम्, यतश्चानेकरसोत्पन्नमत एवानेकरसं, कारणगुणानुविधायित्वात्कार्यगुणस्येति भावः । अनेकरसत्वं चाह—कटुकलवणभूयिष्ठमिति । भूयिष्ठशब्देनाप्रधानरसान्तरसम्बन्धोऽस्तीति दर्शयति । हेत्वन्तरमाह—अनेकेन्द्रियार्थसमन्वितमिति । क्षारो हि स्पर्शेन गन्धेन चान्वितः, तेन द्रव्यम् । रसे हि गुणे न स्पर्शो नापि गन्ध इति भावः । हेत्वन्तरमाह—

---

१ एक एव रस इत्यादि यदुक्तं तन्निराकरोति—तेषामित्यादि । षण्णां रसानामित्यनेन रसस्यैकत्वावधारणं प्रत्युक्तं रसभेदस्य प्रत्यक्षसिद्धत्वादिति भावः, तथा योनिराधारकारणम् । एतेन 'स पुनरुदकादनन्यः' इति प्रत्याख्यातम् । कार्यकारणयोर्भेदस्य दुरुपपन्नत्वादिति भावः; छेदनोपशमने कर्मणी, तयोर्मिश्रीभावाच्च साधारणत्वमित्यनेन द्वितीयतृतीयपक्षौ निराकृतौ । भक्तिरिच्छार्थः; तेन, यो यमिच्छति स तस्य स्वादुः, इतरः पुनरस्वादुरिति पुरुषापेक्षौ धर्मौ, न रसभेदकारिणावित्यर्थ इति शिः । २ वार्यविदमतं निराकरोतिप्रकृतीत्यादि—गुरुलघ्वादयः प्रकृत्यादिवशाः, न तु रसा इत्यर्थ इति शिः । ३ उपदेक्ष्याम इत्यनन्तरं तु संसृष्टानामिति न शेष इति शिः ।

१ एतद्धि लाघवं स्वाभाविकमेव, न तु रसवशं, तथा सति कषायमधुरत्वाद्गुरुत्वं स्यात्, वक्ष्यते "स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः" इति शिः । २ विचारणा विचारो द्रव्यान्तरसंयोग इत्यर्थः, तद्वशं यथा उष्णवीर्यस्यापि तैलस्य चन्दनोशीरादिशीतवीर्यद्रव्यसंस्काराच्छैत्यं तथा शीतवीर्यस्यापि घृतस्य तत्तद्द्रव्यसंयोगादुष्णता, तथा मांसरससिद्धस्य रक्तशालेर्गुरुत्वमित्यादीति । शिः । ३ श्वेतकटभीति वा पाठः । ४ सप्तमं रसं निराकरोति—क्षरणादित्यादीति । शिः ।

करणाभिनिर्वृत्तमिति । करणेन भस्मत्वावादिनाऽभिनिर्वृत्तं कृतमित्यर्थः, न रसोऽनेन प्रकारेण क्रियत इति भावः ।

अव्यक्तरसपक्षं निषेधयति—अव्यक्तीत्यादि । अव्यक्तीभाव इत्यभूततद्भावे च्विप्रत्ययेन रसानां मधुरादीनां व्यक्तानामेव क्वचिदाधारेऽव्यक्तत्वं, नान्यो मधुरादिभ्योऽव्यक्तरस इत्यर्थः । रसानामिति मधुरादीनां षण्णाम् । प्रकृतावित्यादि । प्रकृतौ कारणे जल इत्यर्थः । अव्यक्तत्वं च रससामान्यमात्रोपलब्धिर्मधुरादिविशेषशून्या, सा च जले स्यात्, यत उक्तं जलगुणकथने सुश्रुते "व्यक्तरसता रसदोषः" इति । इहापि च "अव्यक्तरसं च" इति वक्ष्यति, लोकेऽपि चाऽव्यक्तरसं द्रव्यमास्वाद्य वक्तारो वदन्ति "जलस्येवास्य रसो न कश्चिन्मधुरादियुक्तः" इति । विशेषमधुराद्यनुपलब्धिश्चानुद्भूतत्वेन, यथा दूरादविज्ञायमानविशेषवर्णे वस्तुनि रूपसामान्यप्रतीतिर्भवति, न शुक्लादिविशेषबुद्धिरिति; तथाऽनुरसेऽव्यक्तीभावो भवति, प्रधानं व्यक्तं रसमनुगतोऽव्यक्तत्वेनेत्यनुरसः, यथा वेणुयवे मधुरे कषायोऽनुरसः । यदुक्तम् "रूक्षः कषायानुरसो मधुरः कफपित्तहा" इति । अनुरससमन्वित इति सर्वानुरसयुक्ते, यथा विषे, वचनं हि—"उष्णमनिर्देश्यरसम्" इत्यादि । किंवा, अणुरससमन्वित इति पाठः, तेन, अणुरसेनैकेन मरिचेन युक्ते शर्करापानके कटुत्वमव्यक्तं स्यात् । अपरिसंख्येयपक्षं दूषयति—अपरीत्यादि । तेषामिति रसानामपरिसंख्येयत्वं न युक्तं, आश्रयादीनां भावानामित्याश्रयगुणकर्मसंस्वादानां, विशेषाऽपरिसंख्येयत्वादित्याश्रयादिभेदस्यापरिसंख्येयत्वात् । अत्र हेतुमाह—एकैकोऽपि हीत्यादि । एषामाश्रयगुणकर्मसंस्वादानां विशेषानेकैकोऽपि मधुरादिराश्रयते । न च तस्मादाश्रयादिभेदादन्यत्वमाश्रितस्य मधुरादेर्भवति । एवं मन्यते—यद्यपि शालिमुद्गघृतक्षीरादयो मधुराश्रयाभिन्नास्तथापि तत्र मधुरत्वजात्याक्रान्त एक एव रसो भवति वलाकाक्षीरकार्पासादिषु शुक्लवर्ण इवेति । तथा गुणानां गुरुपिच्छिलस्निग्धादीनां अन्यत्वेऽपि कर्मणां वा रसादिवर्द्धनायुर्जननवर्णकरणादीनां भिन्नत्वे सति न मधुररसस्यान्यत्वम्, यतः एक एव मधुरस्तत्तद्गुणयुक्तो भवति तत्कर्मकारी चेति को विरोधः । तथा मधुरस्यावान्तरास्वादभेदेऽपि मधुरत्वजात्यनतिक्रमः । कृष्णवर्णावान्तरभेदे यथाकृष्णत्वानतिक्रमः । ननु मैवं भवत्वपरिसंख्येयत्वं रसानां परस्परसंयोगात्तु य आस्वादविशेषः स कार्यविशेषकरोऽपि, नहि यन्मधुराम्लेन क्रियते, तन्मधुरेण वाऽम्लेन वा शक्यम्, अतः तेन परस्परसंयोगेनाऽपरिसंख्येयत्वं भविष्यतीत्याह—परस्परेत्यादि । संसृष्टमिति भावे क्तः, तेन संसर्गभूयिष्ठत्वादेषां मधुरत्वादीनामभिनिर्वृत्तेर्न च गुणप्रकृतीनामसंख्येयत्वमिति योजना, अयमर्थः—यद्यपि रसाः परस्परसंसर्गेणाति भूयसा युक्ताः सन्तोऽभिनिर्वृत्ता घृतक्षीरादौ[1] द्रव्ये भवन्ति, तथापि न तेषां गुणा गुरुलघ्वादयः, प्रकृतयो वा मधुरादीनां या याऽऽयुष्यत्वरसाभिवर्द्धकत्वाद्यास्ताः असंख्येया भवन्ति, किन्तु य एव मधुरादीनां प्रत्येकं गुणाः प्रकृतयश्च उद्दिष्टाः, त एव मिश्रा भवन्ति । किं वा, गुणप्रकृतीनामिति मधुरादिषड्गुणस्वरूपाणामित्यर्थः । तेन, रसस्य रसान्तरसंसर्गे दोषाणामिव दोषान्तरसंसर्गे रसानां नापरिसंख्येयत्वमित्यर्थः । प्रकृतिशब्देन कर्म वोच्यते, तेन गुणकर्मणामित्यर्थः । मधुरादीनामवान्तरास्वादविशेषोऽपि परस्परसंसर्गकृतो ज्ञेयः ।

यत एव हेतो रसानां संसृष्टानां नान्ये गुणकर्मणी भवतः, अत एव संसृष्टानां रसानां पृथक्कर्म शास्त्रान्तरेऽपि नोक्तमित्याह—तस्मादित्यादि । कर्मशब्देनेह गौरवलाघवादिकारकत्वादयो रसरक्तादिजननादयोऽपि बोद्धव्याः । न केवलमन्यशास्त्रकारै रसानां संसृष्टानां कर्म नोपदिष्टं, किंतु वयमपि नोपदेक्ष्याम इत्याह—तत्रैवेत्यादि । तत्रैव कारणमिति परस्परसंसर्गेऽपि रसानामनधिकगुणकर्मत्वम् । लक्षणेन पृथक्त्वं लक्षण-

---

१ कस्मिन् कस्मिन्नाधारविशेषेऽव्यक्तत्वं तदाह—प्रकृतावित्यादि । प्रकृतौ रसकारणे जले तथाऽनुरसे प्रधानरसमनुगते रसे, यथा वेणुयवे मधुरे कषायोऽनुरसोऽव्यक्त इति शिः । २ किं वा, अणुरससमन्वित इति पाठः, अणुशब्दोऽल्पवचनः । एतेन, अणुरसेनैकेन मरिचेन शर्करापानके युक्ते कटुत्वमव्यक्तं स्यादिति शिः । ३ शर्करापले इति वा पाठः । ४ अपरिसंख्येयपक्षं दूषयति—अपरिसंख्येयत्वमित्यादि । आदिशब्देन गुणकर्मसंस्वादानां ग्रहणम्, आश्रयगुणकर्मसंस्वादानां ये विशेषा भेदास्तेषामपरिसंख्येयत्वात्तेषां रसानामपरिसंख्येयत्वं यदुच्यते, तन्नयुक्तम्, तत्र हेतुमाह—एकैकोऽपीत्यादि ।—एषामाश्रयगुणकर्मसंस्वादानां विशेषानेकैकोऽपि मधुरादिराश्रयते, न त्वऽस्मादाश्रयादिभेदादन्यत्वमाश्रितस्य मधुरादेर्भवति । एतेन, आश्रयादय एव परं भिन्नाः, मधुरादिस्त्वेक एवेत्यर्थः । तथाहि—यद्यपि शालिमुद्गघृतक्षीरादयो मधुरस्याश्रयाभिन्नाः, तथापि तत्र मधुरत्वजात्याक्रान्त एक एव रसो भवति वलाकाक्षीरादिषु शुक्लवर्णवत् । एवं गुणानां गुरुपिच्छिलादीनामन्यत्वेऽपि तथा कर्मणां रसादिवर्द्धनवत्वर्णकरणादीनां भिन्नत्वेऽपि तथा मधुरस्यावान्तरास्वादभेदेऽपि न मधुररसस्यान्यत्वं मधुरत्वजात्यनतिक्रमादिति भाव इति शिः ।

१ द्विरसादाविति वा पाठः । २ गुणप्रकृतीनामिति परस्परसंसर्गहेतुत्वान्मधुरादिगुणा एव प्रकृतयः तासां मधुरादिषड्गुणस्वरूपाणामित्यर्थः । तथा च, परस्परसंसर्गभूयिष्ठत्वादेषां रसानामभिनिर्वृत्तेः प्रकृतिभूतानां मधुरादिगुणानामसंख्येयत्वं न चेति योजना । तेन, रसानां रसान्तरसंसर्गे रसान्तरभेदसंसर्गे वा तत्संसर्गाणामेवापरिसंख्येयत्वं, न पुनः प्रकृतिभूतमधुरादिषड्रसानां षट्त्वातिक्रमः, यथा दोषाणां परस्परसंसर्गभूयस्त्वेऽपि त्रित्वानतिक्रम इत्यर्थः । यतः संसृष्टानां रसानां मधुरादिषड्रसप्रकृतिकत्वान्न रसान्तरत्वं, अत एव संसृष्टरसानां पृथक् कर्म शास्त्रान्तरेऽपि नोक्तमित्याह । तस्मान्न संसृष्टानामित्यन्दीति शिः ।

पृथक्त्वम्। लक्ष्यते येन तल्लक्षणम् "अतस्तु मधुरो रसः" इत्यादिना ग्रन्थेन, तथा "स्नेहनप्रीणनह्लादन" इत्यादिना यद्वाच्यं, तत्सर्वं गृह्यते। किं वा, लक्षणशब्देन "मधुररस" इत्यादिग्रन्थवाच्यं लक्षणमुच्यते। पृथक्त्वं च रसे भेदज्ञानार्थं यद्वक्ष्यते "स्नेहनप्रीणन" इत्यादि तद्गृह्यते॥ ९॥

**अग्रे तु तावद्द्रव्यभेदमभिप्रेत्य किंचिदभिधास्यामः॥ १०॥**

अग्र इत्यादि। रसेषु वाच्येषु द्रव्यभेदमभिप्रेत्य प्रतिपादनीयतया परिगृह्य रसानां द्रव्यज्ञानाधीनज्ञानत्वात् द्रव्याभिधानमग्रे कृतमित्यर्थः। किंचिदिति। आयुर्वेदोपयोगि द्रव्यस्वरूपं न सर्वमिति। अप्रसङ्गदोषादिति भावः॥ १०॥

**सर्वं द्रव्यं पाञ्चभौतिकमस्मिन्नर्थे तच्चेतनावदचेतनं च। तस्य गुणाः शब्दादयो गुर्वादयश्च द्रवान्ताः। कर्म पञ्चविधमुक्तं वमनादि। तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणबहुलानि पार्थिवानि[१]; तान्युपचयसङ्घातगौरवस्थैर्यकराणि। द्रवस्निग्धशीतमन्दमृदुपिच्छिलरसगुणबहुलान्याप्यानि, तान्युपक्लेदस्नेहबन्धनविष्यन्दमार्दवप्रह्लादकराणि। उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणबहुलान्याग्नेयानि, तानि दाहपाकप्रभाप्रकाशवर्णकराणि। लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानि, तानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि। मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि, तानि मार्दवसौषिर्यलाघवकराणि॥ ११॥**

सर्वद्रव्यमिति कार्यद्रव्यम्। अस्मिन्नर्थेऽस्मिन् प्रकरणे[३]। द्रवान्ता इति वचनेन पूर्वोक्तान् विंशतिगुणानाह। अत्र परत्वापरत्वादीनामिहानभिधानेन चिकित्सायां परत्वादीनामप्राधान्यं दर्शयति, येऽपि तत्रापि युक्तिसंयोगपरिमाणसंस्काराभ्यासा अत्यर्थं चिकित्सोपयोगिनोऽपि, न ते पार्थिवादिद्रव्याणां शब्दादिवत्सांसिद्धिकाः, किंतर्हि, आधेयाः, अत इह नैसर्गिकगुणकथने नोक्ताः। उक्तमित्यपामार्गतण्डुलीये। एतच्च प्राधान्यादुच्यते, तेन बृंहणाद्यपि बोद्धव्यम्। बहुलशब्दो गुर्वादिभिः प्रत्येकं सम्बध्यते, किंवा, गन्धेनैव। यतः, गन्धगुणबहुला पृथिव्येव भवति, अतएव द्रव्यान्तरलक्षणेऽपि वैशेषिकगुणोऽन्त एव पठ्यते

---

१ पार्थिवानीति पृथिवीभूतबहुलानीत्यर्थः। एवमाप्यानीत्यादयेपि बोध्यमिति शिः। २ गुरुमंदेति पाठस्तु समीचिनः, यथाह वाग्भटः—द्रवशीतगुरुस्निग्धमन्दसान्द्ररसोल्बणं आप्यम्। नवमोध्यायः। ३ (अस्मिन्नर्थे इत्यस्मिन् प्रकरणे, तेन, पांचभौतिकत्वं यद्द्रव्याणां तदायुर्वेदसिद्धान्तः, न तु शास्त्रान्तरस्येत्यर्थः, नैयायिकादिभिः पांचभौतिकत्वानभ्युपगमादिति शिः।)

"रसगुणबहुलानि" इत्यादि, तेन तत्रापि रसादिभिरेव बहुलशब्दो योज्यः। सर्वकार्यद्रव्याणां पाञ्चभौतिकत्वेऽपि पृथिव्याद्युत्कर्षेण पार्थिवत्वादि ज्ञेयम्, सङ्घातः काठिन्यं, स्थैर्यमविचाल्यम्, बन्धनं परस्परयोजनसम्बन्धः[१], प्रह्लादः शरीरेन्द्रियतर्पणं, सूक्ष्मं सूक्ष्मस्रोतोऽनुसारि, प्रभा वर्णप्रकाशिनी दीप्तिः, यदुक्तम्, "वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिका" इत्यादि। विचारणं विचारो गतिरित्यर्थः। सौषिर्यं रन्ध्रबहुलता। अत्राकाशबाहुल्यं द्रव्यस्य पृथिव्यादिभूतान्तरालपरत्वेन भूरिव्याकाशत्वेन च ज्ञेयम्। यदेव भूरिशुषिरं तन्नाभसम्, किंवा आकाशगुणबहुलत्वे नाभसं द्रव्यमित्युच्यते॥ ११॥

**अनेनोपदेशेन नानौषधिभूतं जगति किंचिद्द्रव्यमुपलभ्यते तां तां युक्तिमर्थं च तं तमभिप्रेत्य। न तु केवलं गुणप्रभावादेव कार्मुकाणि भवन्ति। द्रव्याणि हि द्रव्यप्रभावाद्गुणप्रभावाद्द्रव्यगुणप्रभावाच्च तस्मिंस्तस्मिन्काले तत्तदधिष्ठानमासाद्य तां तां च युक्तिमर्थं च तं तमभिप्रेत्य यत्कुर्वन्ति, तत्कर्म। येन कुर्वन्ति, तद्वीर्यं। यत्र कुर्वन्ति, तदधिकरणम्। यदा कुर्वन्ति, स कालः। यथा कुर्वन्ति, स उपायः। यत्साधयन्ति, तत्फलम्॥ १२॥**

अनेनेति। प्रतिनियतद्रव्योपदेशेन यत्पार्थिवादि द्रव्यं यद्गुणं, तद्गुणे देहे संपाद्ये भेषजं भवतीत्यर्थः। तच्च पार्थिवादि द्रव्यं न सर्वथा न च सर्वस्मिन् व्याधौ भेषजमित्यादि। तां तांयुक्तिमित्यादि। युक्तिमित्युपायम्, अर्थमिति प्रयोजनम्, अभिप्रेत्येत्यधिकृत्य, तेन केनचिदुपायेन क्वचित् प्रयोजने किंचिद्द्रव्यमौषधं स्यान्न सर्वत्र तेन यदुच्यते—वैरोधिकानां सर्वदाऽपथ्यत्वेन "नानौषधं द्रव्यम्" इति वचोविरोधि, तन्न स्यात्। वैरोधिकानि संयोगसंस्कारदेशकालाद्यपेक्षाणि भवन्ति, वैरोधिकसंयोगाद्यभावे तु पथ्यान्यपि क्वचित्स्युः। यान्यपि सर्वदापि स्वभावादेव विषमन्दकादीन्यपथ्यानि, तान्यप्युपाययुक्तानि क्वचित्पथ्यानि स्युः, यथा "उदरे विषस्य तिलं दद्या"दित्यादि। यत् तृणपांशुप्रभृतीनि नोपयुज्यन्ते अतो न तानि भेषजानीत्युच्यते, तन्न, तेषामपि भेषजस्वेदाद्युपायत्वेन भेषजत्वात्।

पार्थिवादिद्रव्याणां गुरुखरादिगुणयोगाद्भेषजत्वमुक्तं, तेन गुणप्रभावादेव भेषजं स्यादिति शङ्कां निरस्यन्नाह—न तु केवलमित्यादि। द्रव्यप्रभावाद्यथा दन्त्या विरेकत्वं, तथा मणीनां विषादिहन्तृत्वमित्यादि। गुणप्रभावाद्यथा ज्वरे तिक्तको रसः, शीतेऽग्निरित्यादि। द्रव्यगुणप्रभावाद्यथा कृष्णाजिनस्योपरीति, अत्रापि कृष्णत्वं गुणोऽजिनं च द्रव्यमभिप्रेतम्। तथा च "मण्डलैर्जातरूपस्य तस्या एव पयः शृतम्"। तत्र मण्डलगुणयुक्तस्यैव[२] जातरूपस्य कार्मुकत्वम्। कथं कुर्वन्तीत्याह—तस्मिंस्त-

---

१ बन्धनं (बन्धः) परस्परसंयोजनमिति शिः। २ अत्र मण्डलयुक्तगुणस्यैव जातरूपस्य कार्मुकत्वमिति शिः। जातरूपं सुवर्णम्।

त्यनिलादि। ता ता युक्तिमासाद्येति ता ता योजना प्राप्य। यत् कुर्वन्तीत्यादावुदाहरणं यथा शिरोविरेचनद्रव्याणि यत् शिरोविरेचनं कुर्वन्ति, तत् शिरोविरेचनं कर्म, येनोष्णत्वादिकारणेन शिरोविरेचनं कुर्वन्ति, तद्वीर्यं, वीर्यं शक्तिः, सा च द्रव्यस्य गुणस्य वा। यत्र शिरोविरेचनं कुर्वन्ति, तदधिकरणं शिरः। नान्यत्राङ्गे शिरोविरेचनद्रव्यं स्यादित्यर्थः। यदेति वसन्तादौ शिरोगौरवादियुक्ते च काले, एतेन अकाले शीतादौ शिरोविरेचनं स्वव्यलाभं कार्मुकं, किन्तु स्वकाल एव। यथा येन प्रकारेण प्रधमनावपीडनादिना तथा "प्रसारिताङ्गमुत्तानं शयने सत्तरास्तृते। ईषत्प्रलम्बशिरसं सवेदय चाहते क्षण"मित्यादिना विधिना कुर्वन्ति, स उपायः। यत्साधयन्ति शिरोगं ... , तत्फलम्, फलमुद्देश्यम्। कर्म कार्यम्, ... फलं यथा, योगनिष्पाद्यो धर्मः कार्यतया कर्म, तज्जन्यस्तु स्वर्गादिरुद्देश्यं फलम्, एवं वमनादिष्वपि कर्मवीर्याधिकरणाद्यूनेयम्॥ १२॥

**भेदश्चैषां त्रिषष्टिविधविकल्पो द्रव्यदेशकालप्रभावाद्भवति तमुपदेक्ष्यामः॥ १३॥**

सम्प्रति द्रव्यमभिधाय विकृतानां रसानामेव भेदमाह—भेदश्चैषामित्यादि। प्रभावशब्दो द्रव्यदेशकाले प्रत्येकं युज्यते, तत्र द्रव्यप्रभावाद्यथा "सोमगुणातिरेकान्मधुर" इत्यादि, देशप्रभावाद्यथा "हिमवति द्राक्षादाडिमादीनि मधुराणि भवन्त्यन्यत्राम्लानि" इत्यादि। कालप्रभावाद्यथा "बालाम्रं सकषायं तरुणमम्लं पक्वं मधुरं", तथा, हेमन्ते "ओषध्यो मधुरा वर्षास्वम्ला" इत्यादि। अग्निसंयोगादयो येऽन्ये रसहेतवः, तेऽपि काले द्रव्ये ... ॥ १३॥

**स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक्।**
**यान्ति पञ्चदशैतानि द्रव्याणि द्विरसानि तु॥ १४॥**

भेदमाह—स्वादुरित्यादि। तत्र स्वादोरम्लादियोगात्पञ्च, शेषैरिति। आदित्वेनोपयुक्तादन्ये, तेनाम्लस्य लवणादियोगाच्चत्वारि। एवं लवणस्य कट्वादियोगात्त्रीणि, कटुकस्य तिक्तकषाययोगाद्द्वे, तिक्तस्य कषाययोगादेकम्, एवं पञ्चदश द्विरसानि॥ १४॥

**पृथगम्लादियुक्तस्य योगः शेषैः पृथग्भवेत्।**
**मधुरस्य तथाम्लस्य लवणस्य कटोस्तथा।**
**त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः॥ १५॥**

त्रिरसानाह—पृथगित्यादि। मधुरस्याम्लादिरसचतुष्टयेन पृथगित्येकशो युक्तस्य शेषैर्लवणादिभिर्योगो भवति, तत्र मधुरस्याम्लयुक्तस्य शेषैर्लवणादियोगाच्चत्वारि, तथा मधुरस्य लवणयुक्तस्य कट्वादियोगात्त्रीणि, तथा कटुयुक्तस्य तिक्तादियोगाद्द्वे, तथा तिक्तयुक्तस्य कषाययोगादेकम्, एवं मधुरेणादिमिश्रितेन दश। एवमम्लस्यादिमिश्रितस्य लवणयुक्तस्य कट्वादियोगात्त्रीणि, तथा कटुकयुक्तस्य शेषाभ्यां योगाद्द्वे, एवं तिक्तयुक्तस्य कषाययोगादेकं, एवमम्लस्य षट्। अनेनैव न्यायेन लवणस्य त्रीणि, कटोश्चैकमेव। एवं मिलित्वा त्रिरसानि विंशतिः॥ १५॥

**वक्ष्यन्ते तु चतुष्केण द्रव्याणि दश पञ्च च।**
**स्वाद्वम्लौ सहितौ योगं लवणाद्यैः पृथग्गतौ॥ १६॥**
**योगं शेषैः पृथग्यातः चतुष्करससंख्यया।**
**सहितौ स्वादुलवणौ तद्वत्कट्वादिभिः पृथक्॥ १७॥**
**युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ तथा।**
**कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक्॥ १८॥**
**यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा।**
**युज्यते तु कषायेण सतिक्तौ लवणोषणौ॥ १९॥**
**षट् तु पञ्चरसान्याहुरेकैकस्यापवर्जनात्।**
**षट् चैवैकरसानि स्युरेकं षड्रसमेव तु॥ २०॥**

१ शिरोगौरवशूलमुपशमयतीति वा पाठः। २ तदुपदेक्ष्याम इति पाठः। ३ द्रव्यभेदमभिधाय रसभेदमाह—भेदश्चैषामित्यादीति शि। ४ पृथिवीजलबाहुल्यान्मधुर इत्यादीति शि। ५ एतच्चोपलक्षणं, तेन, अग्निसंयोगादयोऽपि रसभेदहेतवो ज्ञेया इति शि। ६ स्वादोरम्लादियोगात्पञ्च तद्यथा मधुराम्ल १, मधुरलवण २, मधुरकटु ३, मधुरतिक्त ४, मधुरकषाय ५ शेषैरित्यादिरित्वेनोपयुक्तादन्ये, अम्लादयः शेषैर्योगं यान्ति, तेन, अपरे दश, तथाहि अम्लस्य प्रत्येकं लवणादिचतुष्कयोगाच्चत्वारः, अम्ललवण १, अम्लकटु २, अम्लतिक्त ३ अम्लकषाय ४, तथा लवणस्य कट्वादियोगात्त्रयः, लवणकटु १, लवणतिक्त २, लवणकषाय ३; कटुकस्य तिक्तकषाययोगाद्द्वौ भेदौ, कटुतिक्त १, कटुकषाय २, तिक्तस्य कषाययोगादेकः, तिक्तकषाय १; एवं द्विरसानि द्रव्याणि पञ्चदश भवन्तीति शि।

१ इदानीं त्रिरसद्रव्याणां विंशतिभेदानाह—पृथगम्लेत्यादि। मधुरस्य अम्लादिरसचतुष्टयेन पृथगित्येकैकशो युक्तस्य शेषैर्लवणादिभिर्योगो भवति, तत्र मधुरस्याम्लयुक्तस्य शेषैर्लवणादिभिर्योगाच्चत्वारो भेदाः, मधुराम्ललवण १, मधुराम्लकटु २, मधुराम्लतिक्त ३, मधुराम्लकषाय ४, तथा मधुरस्य लवणयुक्तस्य शेषैः कटुतिक्तकषायैर्योगात्त्रयः, मधुरलवणकटु १, मधुरलवणतिक्त २, मधुरलवणकषाय ३, तथा मधुरस्य कटुयुक्तस्य तिक्तकषाययोगाद्द्वौ, मधुरकटुतिक्त १, मधुरकटुकषाय २, एवं मधुरस्य तिक्तयुक्तस्य कषाययोगादेकः, मधुरतिक्तकषाय १; एवमम्लस्य लवणयुक्तस्य प्रत्येकं कटुतिक्तकषाययोगात्त्रयः, अम्ललवणकटु १, अम्ललवणतिक्त २; अम्ललवणकषाय ३, तथा तस्यैव कटुकयुक्तस्य तिक्तकषाययोगाद्द्वौ, अम्लकटुतिक्त १, अम्लकटुकषाय २, तथाऽम्लस्य तिक्तयुक्तस्य कषाययोगादेकः, अम्लतिक्तकषाय १, एवं लवणस्य कटुयुक्तस्य तिक्तकषाययोगाद्द्वे, लवणकटुतिक्त १, लवणकटुकषाय २, तथा लवणस्य तिक्तयुक्तस्य कषाययोगादेकं लवणतिक्तकषाय १, कटोश्च तिक्तयुक्तस्य कषाययोगादेकं १, एवमिति मिलित्वा त्रिरसानि द्रव्याणि विंशति भवन्तीति शि।

चतूरसे स्वाद्वम्लादिस्थितौ लवणादिभिरेकैकद्वयेन युक्तौ शेषैः कट्वादिभिर्योगात् षड् भवन्ति। स्वादुलवणौ सहितावादिस्थितौ। कट्वादिभिरिति। कटुतिक्ताभ्यां पृथग्युक्तौ। शेषैरिति। तिक्तकषायाभ्याम्। तेन इह बहुवचनं जातौ बोद्धव्यम्, एवं त्रीणि। एवं स्वादूषणौ तथेत्यनेन स्वादुकटुकतिक्तकषायरूपमेकम्। कट्वाद्यैरित्यादावपि बहुवचनं जातौ, अम्ललवणौ संयुक्तौ कटुना सहितौ शेषाभ्यां योगाद्धे, तथाम्ललवणौ तिक्तयुक्तौ शेषयोगादेकम्। अम्लकटू तथेत्यनेनाऽम्लकटुतिक्तकषायरूपमेकं युज्यते। त्वित्यादिना चैकम्। एवं पञ्चदश चतूरसानि[1]। अपवर्जनादिति[2] त्यागात्[3]। अत्र च रसानां गुणत्वेननैकस्मिन् द्रव्ये समवायो योगशब्देनोच्यते ॥१६-२०

**इति त्रिषष्टिर्द्रव्याणां निर्दिष्टा रससंख्यया।**
**त्रिषष्टिः स्यात्त्वसंख्येया रसानुरसकल्पनात्।**
**रसास्तरतमाभ्यस्ताः संख्यामतिपतन्ति हि ॥ २१ ॥**

रससंसर्गस्य प्रकारान्तरेणाऽपरिसंख्येयतामाह—त्रिषष्टिः स्यादित्यादि। अनुरसोऽग्रे वक्ष्यमाणः। अत्र च त्रिषष्ट्यात्मकरसे

१ चतुष्कसंयोगेन पंचदशभेदानाह—वक्ष्यन्त इत्यादि। सहितौ स्वाद्वम्लौ लवणाद्यैश्चतुर्भिः पृथगेकैकशो योगं गतौ शेषैः कटुतिक्तकषायैः पृथग्योगं चतुष्करससंख्यया यातो गच्छतः तेन षट् भेदाः। मधुराम्ललवणकटु१, मधुराम्ललवणतिक्त २, मधुराम्ललवणकषाय ३, मधुराम्लकटुतिक्त ४, मधुराम्लकटुकषाय ५, मधुराम्लतिक्तकषाय ६; अम्लपरित्यागेनापरांश्चतुरो भेदानाह—सहितानित्यादि। मिलितौ स्वादुलवणौ कट्वादिभिः कटुतिक्तकषायैःपृथग्युक्तौ। शेषैरिति। यथाक्रमं तिक्तकषायकटुभिः पृथग्योगं यातो गच्छतः तेन त्रयो भेदाः स्वादुलवणकटुतिक्त १, स्वादुलवणतिक्तकषाय २, स्वादुलवणकषायकटु ३; अत्राद्यपेक्षया शेषाणां बहुत्वाद्बहुवचनमुपपन्नम्। लवणपरित्यागात्पुनश्चतुर्थो भेद इत्याह—स्वादूषणौ तथेति, स्वादूषणावपि शेषाभ्यां तिक्तकषायाभ्यां योगं यातः, स्वादुकटुतिक्तकषाय १। एवं चतुष्के मधुरयोगेन दश भेदाः। इदानीं मधुरपरित्यागात्पंच भेदानाह—कट्वाद्यैरित्यादि। अम्ललवणौ कट्वाद्यैः कटुतिक्तकषायैः पृथग्युक्तौ यथाक्रमं शेषैः तिक्तकषायकटुभिः पृथग्योगं यातो गच्छतः, तेन त्रयोभेदाः।अम्ललवणकटुतिक्त१,अम्ललवणतिक्तकषाय२,अम्ललवणकषायकटु ३। लवणपरित्यागाच्चतुर्थं भेदमाह—शेषैरम्लकटू तथेति, । अम्लकटू शेषैरिति शेषाभ्यां तिक्तकषायाभ्यां योगं यातो गच्छतः, अत्र शेषैरिति जातौ बहुवचनम्। अम्लकटुतिक्तकषाय१। मधुराम्लपरित्यागात्तु पंचमो भेद इत्याह—युज्यते त्वित्यादि। लवणकटुतिक्तकषाय१। तदेवं चतुष्के पूर्वं दशभिर्मिलित्वा पंचदश भेदा उक्ता इति शिः।
२ पंचके षड्भेदानाह—षडित्यादि। अपवर्जनादिति त्यागात्, यथा मधुरत्यागादम्ललवणकटुतिक्तकषाय १, एवमम्लत्यागान्मधुरलवणकटुतिक्तकषाय २, लवणपरित्यागान्मधुराम्लकटुतिक्तकषाय ३, एवं कटुत्यागात् ४, तिक्तत्यागात् ५, कषायत्यागात् ६, इति शिः।
३ अपवर्जनादिति स्फोटनादिति पाठान्तरम्।

रसानुरसकल्पना नास्ति केवलस्य मधुरादेरपवर्जनात्, "तेन यथासंभवं सप्तपंचाशतसंयोगविशेषं[1] रसानां रसकल्पनं[2] ज्ञेयम्। किंवा एकरसेऽप्यनुरसोऽस्त्येवाऽव्यपदेश्यः। प्रकारान्तरेणाप्यसंख्येयतामाह—रसास्तरतमाभ्यस्ताः संख्यामित्यादि। मधुरमधुरतरमधुरतमादिभेदादसंख्येयता रसानां भवतीति भावः। किंवा, रसानुरसत्वेनैव याऽसंख्येयता, तत्रचाऽयं हेतुः रसास्तरतमेत्यादिः ॥ २१ ॥

**संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा।**
**रसानां तत्र योग्यत्वात्कल्पिता रसचिन्तकैः ॥२२॥**

एवमसंख्येयत्वेऽपि त्रिषष्टिविधैव कल्पना चिकित्साव्यवहारार्थमिहाचार्यैः कल्पिता इत्याह—संयोगा इत्यादि। तत्र योग्यत्वादिति, तत्र स्वस्थातुरहितचिकित्साप्रयोगेऽनतिसंक्षेपविस्तररूपतया हितत्वादित्यर्थः ॥ २२ ॥

**क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित्।**
**दोषौषधादीन् संचिन्त्य भिषजा सिद्धिमिच्छता॥२३**
**द्रव्याणि हि रसादीनि संयुक्तांश्च रसान् बुधाः।**
**रसानेकैकशो वापि कल्पयन्ति गदान् प्रति ॥२४॥**

तमेव चिकित्साप्रयोगमाह—क्वचिदित्यादि। अत्राऽऽदिग्रहणाद्देशकालबलादीनां ग्रहणम्। एतदेव संयुक्तासंयुक्तरसकल्पनं भिन्नरसद्रव्यमेलकाद्वाऽनेकरसैकद्रव्यप्रयोगादेकरसद्रव्यप्रयोगाद्वा भवतीति दर्शयन्नाह—द्रव्याणीत्यादि। द्विरसादीन्युत्पत्तिसिद्धद्विरसत्रिरसादीनि द्विरसं यथा कषायमधुरो मुद्गः। त्रिरसं यथा "मधुराम्लकषायं च विष्टम्भि गुरु शीतलम्। पित्तश्लेष्महरं भव्यम्" इत्यादि। चतूरसस्तिलः, यदुक्तम् "स्निग्धोष्णमधुरस्तिक्तः कषायः कटुकस्तिलः"। पञ्चरसं त्वामलकं हरीतकी च, "शिवा पञ्चरसा" इत्यादिवचनात्। व्यक्तषड्रसं तु द्रव्यमिहानुक्तम्। विपन्त्वव्यक्तषड्रससंयुक्तम्। हारीते तु एणमांसं व्यक्तषड्रससंयुक्तमुक्तम्। एवं द्विरसादिद्रव्ययोगाद्द्विरसाद्युपयोगः। तथा संयुक्तांश्च रसानिति, एकैकरसादिद्रव्यमेलकात् संयुक्तान् रसान् तथैकैकशः कल्पयन्ति प्रयोजयन्ति। गदान् प्रतीति प्राधान्येन, तेन स्वस्थवृत्तेऽपि बोद्धव्यम्; किंवा, द्विरसादिभेदो गद एव, स्वस्थे तु सर्वरसप्रयोग एव, यदुक्तम् "समसर्वरसं सात्म्यं समधातोः प्रशस्यते" एवं च व्याख्याने सति "क्वचिदेकरस" इत्यादिना समस्य न पौनरुक्त्यम्। किंवा, "क्वचिदेकरस "इत्यादिना स्वमतमुक्तम्, अत्रैवार्थे "द्रव्याणि द्विरसादीनि" इत्यादिनाऽऽचार्यान्तरसंमतिं दर्शयति। अत-

१ सप्तपञ्चाशत् संयोगविषयमिति वा पाठः। २ रसानां रसकल्पनमिति। रसानां षण्णां मधुरादीनां, रसकल्पनं स्वाद्वम्लादिद्विरसादिरेसकल्पनमित्यर्थः। रसानुरसकल्पनमिति पाठस्तु नातिसमीचीनतया प्रतिभाति। ३ भव्यं तालफलोपमं केवलवल्कलसंहतिमात्रमिति चन्द्रिका भानुमती च। अन्ये तु कर्मरङ्गफलं भव्यमाहुरिति द्रव्यगुणटीकायां शिवदासः।

एवाऽऽचार्यान्तराभिप्रायेण "कल्पयन्ति" इत्युक्तम् तेन न पौनरुक्त्यम् ॥ २३—२४ ॥

**यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित् ।**
**न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु ॥ २५ ॥**

रसज्ञानफलमाह—यः स्यादित्यादि । अत्र रसविकल्पज्ञानादेव व्याधिहेतुद्रव्यज्ञानं कृत्स्नमवरुद्धम्, रसज्ञानेनैव प्रायः सकलद्रव्यगुणस्य वक्ष्यमाणत्वात् । दोषविकल्पज्ञानाच्च लिङ्गज्ञानम्, यावद्धि लिङ्गं, तत् सर्वं दोषविकल्पसंवद्धम् । रसदोषविकल्पज्ञानात्तु भेषजज्ञानम्, यतः, रसतः स्वरूपज्ञानं भेषजद्रव्यस्य, दोषश्च भेषजप्रयोगविषयविज्ञानम् । किंवा, रसविकल्पाच्च तथा दोषविकल्पाच्च हेत्वादिज्ञानं पृथगेव वक्तव्यम्, रसभेदाद्धि तत्कार्यं लिङ्गमपि ज्ञायते । हेतुभेषजविज्ञानं तु रसभेदविज्ञानादेव वक्तव्यम्, यतः, रसभेदवद्द्रव्यमेव विकाराणां हेतुर्भेषजं च भवतीति, एवं दोषभेदं ज्ञात्वा च तस्य समानं हेतुं प्रत्येति—दोषविरोधि च द्रव्यं भेषजमिति । तद्युक्तमुक्तम् 'न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु' इति ॥२५॥

**व्यक्तः शुष्कस्य चादौ च रसो द्रव्यस्य लक्ष्यते ।**
**विपर्ययेणाऽनुरसो रसो नास्ति हि सप्तमः ॥ २६ ॥**

पूर्वोक्तरसानुरसलक्षणमाह—व्यक्त इत्यादि । शुष्कस्य चेति चकारादार्द्रस्य च । आदौ चेति चकरादन्ते च । तेन शुष्कस्य वाऽऽर्द्रस्य वा प्रथमजिह्वासंवन्धे वाऽऽदावास्वादान्ते वा यो व्यक्तत्वेन मधुरोऽयमम्लोऽयमित्यादिना विकल्पेन गृह्यते, स व्यक्तः । यस्तूक्तावस्थाचतुष्टयेऽपि व्यक्तो नोपलभ्यते, किंतर्हि, अव्यपदेश्यतया छायामात्रेण कार्यमात्रेण वा मीयते, सोऽनुरस इति वाक्यार्थः । यतश्च मधुरादय एव व्यक्तत्वाऽव्यक्तत्वाभ्यां रसानुरसरूपाः, अतः अव्यक्तनामा सप्तमो रसो नास्ति । अयं चार्थः पूर्वं प्रतिषिद्धोऽप्यनुगुणस्पष्टहेतुप्राप्त्या पुनर्निषिध्यते । अन्ये त्वाहुः—शुष्कस्य चेत्यनेन, यस्य द्रव्यस्य शुष्कस्य चार्द्रस्य चोपयोगः, तत्र शुष्कावस्थायां योव्यक्तः, स रस उच्यते, यस्त्वार्द्रावस्थायां व्यक्तः सन् शुष्कावस्थायां नानुयाति, नासौ रसः, किन्त्वनुरसः । यथा पिप्पल्या आर्द्राया मधुरो रसो व्यक्तः शुष्कायाः पिप्पल्याः कटुकः, तेन कटुक एव रसः पिप्पल्याः, मधुरस्त्वनुरसः । यस्तु द्राक्षादीनामार्द्राऽवस्थायां शुष्कावस्थायां च मधुर एवेति, तत्र विप्रतिपत्तिरेव नास्ति, तेन, तत्र मधुर एव रसः । नित्यार्द्रप्रयोज्यानां तु काञ्जिकतक्रादीनामादौ व्यक्तो य उपलभ्यते, स रसः, अनु चोपलभ्यते यः सोऽनुरसः, चुक्रतिक्तत्वादिस्तथाऽऽर्द्रावस्थायां शुष्कावस्थाविपरीतो यः पिप्पल्या इव मधुरः, सोऽनुरस इति, किंत्वार्द्राऽपि पिप्पली मधुररसैवेति पश्यामः, यतः, वक्ष्यति "श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली" इति । मधुरस्य तत्रानुरसत्वे गुरुत्वश्लेष्मकर्तृत्वानुपपन्नानि । तेन, आर्द्रा पिप्पली व्यक्तमधुररसैव, शुष्का तु मधुरानुरसेति युक्तम् ॥ २६ ॥

**परापरत्वे युक्तिश्च संख्या संयोग एव च ।**
**विभागश्च पृथक्त्वं च परिमाणमथापि च ॥ २७ ॥**
**संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः ।**
**सिद्ध्युपायाश्चिकित्साया लक्षणैस्तान्प्रवक्ष्यते ॥२८॥**
**देशकालवयोमानपाकवीर्यरसादिषु ।**
**परापरत्वे युक्तिश्च योजना या तु युज्यते ॥ २९ ॥**

संप्रति पूर्वोक्तगुर्वादिगुणातिरिक्तान् परत्वाऽपरत्वादीन् दशगुणान् रसधर्मत्वेनोपदेष्टव्यानाह—परेत्यादि । तच्च परत्वं प्रधानत्वं, अपरत्वमप्रधानत्वम् । तद्विवरणं देशकालेत्यादि । तत्र देशो मरुः परः, अनूपोऽपरः । कालो विसर्गः परः, आदानमपरः । वयस्तरुणं परं, अपरमितरत् । मानं च शरीरस्य यथा वक्ष्यमाणं शारीरं परं, ततोऽन्यदपरम् । पाकवीर्यरसास्तु ये यस्य योगिनस्ते तं प्रति पराः, अयौगिकास्त्वपराः । 'आदि' ग्रहणात् प्रकृतिवलादीनां ग्रहणम् । किंवा, परत्वापरत्वे वैदेशिकोक्ते ज्ञेये, तत्र देशापेक्षया सन्निकृष्टदेशसंवन्धिनमपेक्ष्य विदूरदेशसंवन्धिनः परत्वं, सन्निकृष्टदेशसंवन्धिनि चापरत्वम् स्यात् । एवं सन्निकृष्टविप्रकृष्टकालापेक्षया च स्थविरे परत्वं यूनि चापरत्वं स्यात् । वयःप्रभृतिषु परत्वापरत्वं यथासंभवं कालदेशकृतमेवेहोपयोगादुपचरितमप्यभिहितं, यतः, गुणे मानादौ न गुणान्तरसंभवः । युक्तिश्चेत्यादौ योजना दोषाद्यपेक्षया भेषजस्य समीचीनकल्पना, अतएवोक्तम् 'या तु युज्यते', या कल्पना यौगिकी स्यात्, सा तु युक्तिरुच्यते, अयौगिकी तु कल्पनाऽपि सती युक्तिर्नोच्यते पुत्रोप्यपुत्रवत् । युक्तिश्चेयं संयोगपरिमाणसंस्काराद्यन्तर्गताप्यत्युपयुक्तत्वात् पृथगुच्यते ॥ २७—२९ ॥

**संख्या स्याद्गणितं योगः सह संयोग उच्यते ।**
**द्रव्याणां द्वन्द्वसर्वैककर्मजोऽनित्य एव च ॥ ३० ॥**

संख्यां लक्षयति संख्या—स्याद्गणितमिति । गणितमिहैकद्वित्रीत्यादि । संयोगमाह—योग इत्यादि । सहेति मिलितानां द्र-

---

१ उपशान्तिश्चिकित्सेति शिः । २ दोषविकल्पमानाच्चेति वा पाठः । ३ दोषभेदज्ञानत्वाच्चेति वा पाठः । ४ सुष्ठूक्तमिति वा पाठः । ५ कार्यदर्शनमात्रेणेति शिः ।

१ संयोगमाह—योग इत्यादि । द्रव्याणां योगः संवन्ध इत्युक्ते अवयवावयविसंवन्धस्यापि संयोगत्वं स्यात्, अत आह सहेति । साहित्यरूपो योगः, स च पृथक्सिद्धयोरेव भवतीति भावः । ननु विभुनोरपि संयोगः कुतो न स्यादित्याह द्वन्द्वसर्वैककर्मज इति । द्वन्द्वकर्मजो यथा युध्यमानयोर्मेषयोः, सर्वकर्मजो यथा भाण्डे प्रक्षिप्यमाणानां माषाणां वहुमाषक्रियासंयोगजः, एकतरकर्मजो यथा वृक्षवायसयोः, एतच्चोपलक्षणं, तेन, संयोगजोऽपि वोध्यः, यथा अङ्गुलीतरुसंयोगाद्धस्ततरुसंयोगः, एतेन, विभुद्रव्ययोरुक्तकारणाभावादेव संयोगो नास्तीति भावः । ननु, अनित्य एव कारणापेक्षः, विभुनोस्तु संयोगो

व्याणां योगः प्राप्तिरित्यर्थः, सहेत्यनेनेहाऽकिंचित्करं परस्परसंयोगं निराकरोति। तद्भेदमाह—द्वन्द्वेत्यादि। तत्र द्वन्द्वकर्मजो यथा युध्यमानयोर्मेषयोः, सर्वकर्मजो यथा भाण्डे प्रक्षिप्यमाणानां मापानां वहुलमापक्रियायोगजः, एककर्मजो यथा वृक्षवायसयोः। अनित्य इति संयोगस्य कर्मजत्वेनानित्यत्वं दर्शयति ॥ ३० ॥

**विभागस्तु विभक्तिः स्याद्वियोगो भागशो ग्रहः।**
**पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ॥ ३१ ॥**

विभागमाह—विभागस्त्वित्यादि। विभक्तिर्विभजनम्। विभक्तिमेव विवृणोति—वियोग इति। संयोगस्य विगमो वियोगः तत् किं संयोगाभाव एव वियोग इत्याह—विभागशो ग्रह इति, विभागशो विभक्तत्वेन ग्रहणं ततो भवतीति भावः, तेन विभक्तिरित्येषा भावरूपा प्रतीतिः, न संयोगाभावमात्रं स्यात्, किंतर्हि, भावरूपविभागगुणयुक्त इत्यर्थः ॥ ३१ ॥

**परिमाणं पुनर्मानं, संस्कारः करणं मतम्।**
**भावाभ्यसनमभ्यासः शीलनं सततक्रिया ॥ ३२ ॥**
**इति स्वलक्षणैरुक्ता गुणाः सर्वे परादयः।**
**चिकित्सा यैरविदितैर्न यथावत्प्रवर्तते ॥ ३३ ॥**

पृथक्त्वं तु इदं द्रव्यं पटलक्षणं घटात् पृथगित्यादिका बुद्धिर्यतो भवति, तत् पृथक्त्वं स्यात्। तच्चाचार्यस्त्रैविध्येनाह—पृथक्त्वमित्यादि। तत्र यत् सर्वथाऽसंयुज्यमानयोरिव मेरुहिमाचलयोः पृथक्त्वं, एतदसंयोग इत्यनेनोक्तम्; तथा, संयुज्यमानानामपि पृथक्त्वं विजातीयानां महिषवराहादीनां, तदाह—वैलक्षण्यमिति। विशिष्टलक्षणयुक्तत्वेन लक्षितं विजातीयानां पृथक्त्वमित्यर्थः। तथैकजातीयानामप्यविलक्षणानां मापाणां पृथक्त्वं भवतीत्याह—अनेकतेति। एकजातीयेषु हि संयुक्तेषु न वैलक्षण्यं नाप्यसंयोगः, अथ चानेकता पृथक्त्वरूपा भवतीति भावः। किंवा, पृथक्त्वं गुणान्तरमिच्छन् लोकव्यवहारार्थमसंयोगवैलक्षण्याऽनेकतारूपमेव यथोदाहृतं पृथक्त्वं दर्शयति मानं प्रस्थाढकादि तुलादिमेयम्। करणं गुणान्तराधायकत्वं संस्करणमित्यर्थः, यद्वक्ष्यति "संस्कारो हि गुणान्तराधानमुच्यते"। भावस्य षष्टिकादेर्व्यायामादेश्चाभ्यसनमभ्यासः, अभ्यसनमेव लोकसिद्धाभ्यां पर्यायाभ्यां विवृणोति—शीलनं सततक्रियेति। यं लोकाः शीलनसततक्रियाभ्यामभिदधति, सोऽभ्यास इति भावः। अयं च संयोगसंस्कारविशेषरूपोऽपि विशेषेण चिकित्सोपयुक्तत्वात् पृथगुच्यते। न यथावत् प्रवर्तेत इतिवचनेन शब्दादिषु च गुर्वादिषु च परादीनामप्राधान्यं सूचयति ॥ ३२—३३ ॥

**गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक्।**
**विद्याद्द्रव्यगुणान् कर्तुरभिप्रायः पृथग्विधः ॥ ३४ ॥**

संप्रति रसानां परस्परसंयोगो गुण उक्तः, तथा चाऽग्रे स्निग्धत्वादिर्गुणो वाच्यः, स च गुणरूपरसे न संभवतीति यथा रसानां गुणनिर्देशो वोद्धव्यः, तदाह–गुणा इत्यादि। गुणागुणाश्रया नोक्ता इति दीर्घजीवितीये "समवायी तु निश्चेष्टः कारणं गुणः" इत्यनेन, रसगुणानिति रसे स्निग्धत्वादीन् गुणान्निर्दिष्टान् तदाधारद्रव्यगुणानेव विद्यात्। ननु, यदि द्रव्यगुणा एव ते, तत् किमिति रसगुणत्वेनोच्यन्त इत्याह। कर्तुरिति—कर्तुरिति तन्त्रकर्तुः, अभिप्राया इति। तत्र तत्रोपचारेण तथा सामान्यशब्दादिप्रयोगेण तन्त्रकरणबुद्धयः, सामान्यशब्दोपचारादिप्रयोगश्च प्रकरणादिवशादेव स्फुटत्वात् तथा प्रयोजनवशाच्च क्रियते। तच्च प्रकरणादि, "अतश्च प्रकृतं बुद्धा" इत्यादौ दर्शयिष्यामः। इह च द्रव्यगुणानां रसेषु यदुपचरणं, तस्याऽयमभिप्रायः—यन्मधुरादिनिर्देशेनैव स्निग्धत्वादिगुणा अपि प्रायो मधुराद्यव्यभिचारिणो द्रव्ये निर्दिष्टा भवन्तीति न मधुरत्वं निर्दिश्य स्निग्धत्वादिप्रतिपादनं पुनः पृथक् क्रियत इति ॥ ३४ ॥

**अतश्च प्रकृतं बुद्धा देशकालान्तराणि च।**
**तन्त्रकर्तुरभिप्रायानुपायांश्चार्थमादिशेत् ॥ ३५ ॥**

अभिप्रायपृथक्त्वे सति यथा ग्रन्थो वोद्धव्यस्तदाह–अतश्चेत्यादि। तत्र प्रकृतं बुद्धा यथा "क्षाराः क्षीरं फलं पुष्पम्"

---

नित्य एव भविष्यतीत्याह अनित्य एवेति। एवेत्यवधारणे। नित्यः संयोगो न संभवत्येव, अप्राप्तिपूर्विकायाः प्राप्तेः संयोगत्वानित्यत्वे च तद्विरोधादिति दिगिति शिः।

१ यतोभवतीति वा पाठः। २ संयोगाभावमात्रे भवतीति वा पाठः। ३ विभागलक्षणमाह-विभागस्त्वित्यादि। विभक्तिरिति विभक्तिप्रतीतिहेतुर्विभाग इत्यर्थः। ननु विभाग एव न प्रमाणं संयोगाभावस्यैव विभक्तिप्रतीतिहेतुत्वादित्याह–विभागशो ग्रह इति। 'तु' शब्दो वियोग इत्यनन्तरं द्रष्टव्यः, तेन, वियोग एव विभागशो विभक्तत्वेन प्रतीतिहेतुः, न च तत्र विभागव्यवहारः, न च द्रव्ययोर्वर्तमानः संयोगात्यन्ताभावो विभक्तिप्रतीतिहेतुरिति वाच्यम्, अवयवावयविनोरपि प्रसङ्गात्, नापि संयोगध्वंसो वियोगः, एकसंयोगानन्तरं पुनः संयुक्तयोर्वदरामलकयोः संयोगदशायामपि विभक्तिप्रत्ययप्रसङ्गादिति दिगिति शिः। ४ सर्वदेति वा पाठः।

१ पृथक्त्वं लक्षयति—पृथक्त्वं स्यादित्यादि। इदमस्मात् पृथगन्यदर्थान्तरमित्यादि व्यवहारो यो भवति, तत् पृथक्त्वं स्यात्। न च, अन्योन्याभाव एव पृथक्त्वम्, इदमस्मात् पृथगन्यदित्यादिप्रतीतेरन्योन्याभावालम्बनादिति वाच्यम्, पृथगादिशब्दानां पर्यायत्वेऽपि नान्योऽन्याभावार्थत्वम्, तत्र पंचमीप्रयोगानुपपत्तेः, इदमस्मात् पृथगिदं न भवतीति प्रतीत्योर्भावाभावविषयत्वेन भिन्नविषयकत्वादित्यन्यत्र विस्तरः, तस्य पर्यायमाह–असंयोगो वैलक्षण्यमनेकतेतीति शिः। २ गुणा गुणाश्रया नोक्ता इति सगुणत्वे द्रव्यत्वप्रसाङ्गादिति भावः, तस्माद्रसनिर्दिष्टान् गुणान् द्रव्यगुणानेव विद्यात्, एकार्थसमवायेनोपचारादिति भाव इति शिः। ३ तत्रेति वा पाठः। ४ प्रकृतं प्रकरणमिति शिः।

इत्यत्रोद्भिदगणस्य प्रकृतत्वात् "क्षीरम्" इति लुह्यादिक्षीरमेव क्षीरशब्देन वदेत् । देशान्तरं वुद्ध्वेति यथा शिरसि शोधनेऽभिधीयमाने "क्रिमिव्याधौ" इति, तत् शिरोगतक्रिमिव्याधावेव भवति । कालान्तरे यथा वमनकालेऽभिहितं "प्रतिग्रहांश्चोपहारयेदिति, तत्र प्रतिग्रहशब्देन पात्रमुच्यते, न तु, ग्रहणं प्रतिग्रहः । तन्त्रकर्तुरभिप्रायानिति यथोक्तं, रसेषु गुणारोपणे तद्बोद्धव्यम् । उपायानिति शास्त्रोपायान् तन्त्रयुक्तिरूपान् इति । अर्थमभिधेयम् । यद्यपि प्रकृतादयोऽपि तन्त्रकर्तुरभिप्राया एव, तथापि यत्र प्रकृतत्वादि न स्फुटं प्रतीयते, तत्र तन्त्रकर्तुरभिप्रायत्वेन बोद्धव्यम् ॥ ३५ ॥

**षड्विभक्तीः प्रवक्ष्यामि रसानामत उत्तरम् ।**
**षट् पञ्चभूतप्रभवाः संख्याताश्च यथा रसाः ॥ ३६ ॥**

षड्विभक्तीरिति मधुरादिषड्विभागानित्यर्थः । षट्पंचभूतप्रभवा इति पंचभूतप्रभवाः सन्तो यथोक्तेन प्रकारेण "सोमगुणातिरेकादित्यादिना संख्याताः षट्संख्यापरिच्छिन्ना भवन्ति, तथा वक्ष्यामीति योजना ॥ ३६ ॥

**सौम्याः खल्वापोऽन्तरिक्षप्रभवाः प्रकृतिशीता लघ्व्यश्चाऽव्यक्तरसाश्च, तास्त्वन्तरिक्षाद्भ्रश्यमाना भ्रष्टाश्च पंचमहाभूतगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्तीरभिप्रीणयन्ति, यासु मूर्तिषु षडभिमूर्च्छन्ति रसाः ॥ ३७ ॥**

संप्रति रसानामादिकारणमेव तावदाह—सौम्या इत्यादि । सौम्या सोमदेवताकाः । भ्रश्यमाना इति वदता भूमिसंबन्धव्यतिरेकेणान्तरीक्षेरितैः पृथिव्यादिभिः परमाण्वादिभिः संबन्धो रसारंभको भवतीति दर्श्यते । मूर्तीरिति व्यक्तीः, अभिप्रीणयन्तीति तर्पयन्ति, किंवा जनयन्ति । अभिमूर्च्छन्ति रसा इति व्यक्तिं यान्ति । अत्र चान्तरीक्षमुदकं रसकारणत्वे प्रधानत्वादुक्तम्, तेन क्षितिस्थमपि स्थावरजङ्गमोत्पत्तौ रसकारणं भवत्येव ॥ ३७ ॥

**तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः[3] । पृथिव्यग्निभूयिष्ठत्वादम्लः । सलिलाऽग्निभूयिष्ठत्वाल्लवणः । वाय्वग्निभूयिष्ठत्वात्कटुकः । वाय्वाकाशातिरिक्तत्वात्तिक्तः । पवनपृथिव्यतिरेकात्कषाय इति । एवमेषां षण्णां रसानां षट्त्वमुपपन्नमूनातिरेकविशेषान्महाभूतानां भूतानामिव जङ्गमस्थावराणां नानावर्णाकृतिविशेषाः षडृतुकत्वाच्च कालस्योपपन्नो महाभूतानामूनातिरेकविशेषः ॥ ३८ ॥**

सोमगुणातिरेकादिति अतिरेकशब्देन सर्वेष्वेव रसेषु सर्वभूतस्य सान्निध्यमस्ति, क्वचित्कस्यचिद्भूतगुणस्यातिरेकाद्रसविशेषो भवतीति दर्शयति, एतच्च मधुरं प्रति अब्गुणातिरिक्तत्वं विशेषोत्पत्तौ कारणत्वेन ज्ञेयम्; यच्चाऽधारकारणत्वमपां, तत्सर्वसाधारणम् । एवं लवणेऽप्यपां कारणत्वं ज्ञेयम् । लवणस्तु सुश्रुते पृथिव्यतिरेकात् पठितः, अस्मिंश्च विरोधे कार्यविरोधो नास्त्येव । ननु, उष्णशीताभ्यामग्निसलिलाभ्यां कृतस्य लवणस्याप्युष्णशीतत्वेन भवितव्यम्, तल्लवणं कथमुष्णं स्यात्, नैवम्, यतः भूतानामयं स्वभावः यत् केनचित् प्रकारेण सन्निविष्टानि कंचिद्गुणमारभन्ते, न सर्वम् । यथा मकुष्टकेऽद्भिर्मधुरो रसः क्रियते, न स्नेहः । तथा सैन्धवे वह्निनाऽपि नोष्णत्वमारभ्यते । अयं च भूतानां सन्निवेशोऽदृष्टप्रभावकृत एव, स च सन्निवेशः कार्यदर्शनोन्नेयः । तेन यत्र कार्यं दृश्यते, तत्र कल्प्यते, यथा—लवणे उष्णत्वादग्निर्विष्यन्दित्वाच्च जलमनुमीयते । आगमवेदनीयश्चायमर्थो नाऽस्मद्विधानां कल्पनाः प्रसरन्ति । एतेन यदुच्यते तोयवत् पृथिव्यादयोऽपि किमिति पृथग् रसान्तरं न कुर्वन्ति तथा, तोयवातादिसंयोगादिभ्यः किमिति रसान्तराणि नोत्पद्यन्त इति, तदपि भूतस्वभावापर्यनुयोगादेव प्रत्युक्तम् । इह च कारणत्वं भूतानां रसस्य मधुरत्वादिविशेष एव निमित्तकारणत्वमुच्यते, तेन नीरसानामपि हि दहनादीनां कारणत्वमुपपन्नमेव व्युत्पादितम् । रसभेदं दृष्टान्तेन साधयन्नाह—एवमित्यादि । रसानां षट्त्वं महाभूतानां न्यूनातिरेकविशेषात् सोमगुणातिरेकपृथिव्यम्ब्यतिरेकादेः षडुत्पादकारणादुपपन्नम्, षड्भ्यः कारणेभ्यः षट् कार्याणि स्युरिति युक्तमेवेति भावः । भूतानामित्यादि । भूतानां यथा नानाऽऽकृतिवर्णविशेषो महाभूतानां न्यूनातिरेकविशेषात् तथा रसानामपीति । भूतानां यथोक्तानामतिरेकविशेषहेतुमाह—षडृतुकत्वादित्यादि । षडृतुकत्वेन कालो नानाहेमन्तादिरूपतया किञ्चिद्भूतविशेषं क्वचिद्वर्धयति, स चाऽऽत्मकार्यं रसं पुष्टं करोति, यथा—हेमन्तकाले सोमगुणातिरेको भवति, शिशिरे वाय्वाकाशातिरेकः, एवं तस्याशितीयोक्तरसोत्पादक्रमेण वसन्तादावपि भूतोत्कर्षो ज्ञेयः, षडृतुकाच्चेति चकारेणाहोरात्रकृतोऽपि भूतोत्कर्षो ज्ञेयस्तथाऽदृष्टकृतश्च, तेन हेमन्तादावपि रसान्तरोत्पादः क्वचिद्वस्तुन्युपपन्नो भवति । यद्यपि च, ऋतु-

---

१ अर्थं तात्पर्यमिति शिः । २ तास्विति वा पाठः । ३ पृथ्वीसोमगुणातिरेकान्मधुरो रस इति पाठस्तु समीचिनः प्रतिभाति । यदाह वाग्भटः—क्ष्मांभोऽग्निक्ष्मांबुतेजःखवाय्वग्न्यनिलगोनिलैः । द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः । तथा चास्मिन्नर्थे शिवोदासविवरणमपि संमतम् ।

१ ननु कारणानां भूतानां पञ्चविधत्वेन कार्यस्यापि रसस्य पंचविधत्वमेव युक्तमित्यभिप्रेत्य षट्त्वमुपपादयति—सोमगुणातिरेकादित्यादि । सोमो जलदेवता, तेन जलगुणातिरेकादित्यर्थः । किंवा सोमशब्देन पृथिवीजलयोरेव ग्रहणं, उभयोरेव सौम्यत्वात्, अतएव सुश्रुतेऽपि पृथिव्यम्बुगुणावाह—स्यात् मधुर इत्यादि । तथा अत्रैव पृथिव्यग्निगुणबाहुल्याल्लवणः, तोयाग्निगुणबाहुल्यादम्ल इति यदुक्तं तदपि न विरुध्यते, भूमिजलयोः सौम्यत्वेनैकरूपतया कार्यविरोधाभावादिति शिः । २ तच्चेति पाठान्तरम् ।

भेदेऽपि भूतोत्कर्षविशेष एव कारणं, यदुक्तम् "तावेनावर्कवायू" इत्यादि, तथापि, बीजाङ्कुरकार्यकारणभाववत् संसाराऽनादित्वेनैव भूतविशेषकृतो कार्यकारणभावो वाच्य ॥३८॥

**तत्राऽग्निमारुताऽऽत्मका रसाः प्रायेणोर्ध्वभाजो लाघवात् प्लवनत्वाच्च वायोरूर्ध्वज्वलनत्वाच्च वह्नेः, सलिलपृथिव्याऽऽत्मकास्तु प्रायेणाऽधोभाजः पृथिव्या गुरुत्वान्निम्नगत्वाच्चोदकस्य, व्यामिश्रात्मकाः पुनरुभयतोभाजः ॥ ३९ ॥**

भूतविशेषकृतं[2] रसानां धर्मान्तरमाह—तत्रेत्यादि । प्रायेणेति न सर्वे, रसा इति रसयुक्तानि द्रव्याणि । प्लवनत्वादिति गतिमत्त्वात्, यद्यपि गतिरधोऽपि स्यात्, तथापि लघुत्वपरिगतिरिह वायोरूर्ध्वमेव गमनं करोति, यथा—शाल्मलीतुलानाम्[3] । हेत्वन्तरमाह—ऊर्ध्वज्वलनत्वाच्चाग्नेरिति, अग्नेरप्यूर्ध्वगतित्वादित्यर्थः । निम्नगत्वमधोगत्वमेव ॥ ३९ ॥

**तेषां षण्णां रसानामेकैकस्य यथाद्रव्यगुणकर्माण्यनुव्याख्यास्यामः ॥ ४० ॥**

**तत्र मधुरो रसः शरीरसात्म्याद्रसरुधिरमांसमेदोऽस्थिमज्जौजःशुक्राऽभिवर्धन आयुष्यः षडिन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्नस्तृष्णाप्रशमनस्त्वच्यः केश्यः कण्ठ्यः प्रीणनो जीवनस्तर्पणो बृंहणः स्थैर्यकरः क्षीणक्षतसन्धानकरो घ्राणमुखकण्ठौष्ठजिह्वाप्रह्लादनो दाहमूर्च्छाप्रशमनः षट्पदपिपीलिकानामिष्टतमः स्निग्धः शीतो गुरुश्च । स एवंगुणोऽप्येक एवाऽत्यर्थमुपयुज्यमानः स्थौल्यं मार्दवमालस्यमतिस्वप्नं गौरवमनन्नाभिलाषमग्नेर्दौर्बल्यमास्यकण्ठमांसाभिवृद्धिं श्वासकासप्रतिश्यायाऽलसकशीतज्वराऽऽनाहाऽऽस्यमाधुर्यवमथुसंज्ञास्वरप्रणाशगलगण्डगण्डमालाश्लीपदगलशोफबस्तिधमनीगलोपलेपाऽक्ष्यामयानभिष्यन्दमित्येवंप्रभृतीन्। कफजान्विकारानुपजनयति ॥ ४१ ॥**

यथा द्रव्यमिति[4] यद्यस्य रसस्य द्रव्यमाधारस्तदनतिक्रमेण । एतेन, रसानां गुणकर्माणी रसाधारद्रव्ये बोद्धव्ये इति दर्शयति । तत्रेत्यादिना मधुर आदावुच्यते[5] प्रशस्ताऽऽयुष्यादिगुणतया प्रायः प्राणिप्रियतया च; षडिन्द्रियाणि मनसा समम्, जीवनोऽभिघातादिमूर्च्छितस्य जीवनः । आयुष्यस्त्वायुःप्रकर्षकारित्वेन, क्षीणस्य सन्धानकरो धातुपोषकत्वेन, किंवा, क्षीणश्चासौ क्षतश्चेति । तेन, क्षीणक्षतस्य उरःक्षतं सन्दधाति । षट्पदाद्यभीष्टत्वगुणकथनं प्रमेहपूर्वरूपादिज्ञानोपयुक्तम्[1] । यदुक्तम् "मूत्रेऽभिधावन्ति पिपीलिकाश्च" इति, तथा रिष्टे वक्ष्यति—"मक्षिकाऽऽक्रान्तम" इति, अनेन च मधुरत्वं ज्ञायते । अध्यायगयेनैवाभिष्यन्दे लब्धे विशेषोपादानार्थं पुनर्वचनं, किंवा अभिष्यन्दो नासादिष्वपि ज्ञेयः ॥ ४० ॥ ४१ ॥

**अम्लो रसो भुक्तं रोचयति, अग्निं दीपयति, देहं बृंहयति ऊर्जयति, मनो बोधयति, इन्द्रियाणि दृढीकरोति, बलं वर्धयति, वातमनुलोमयति, हृदयं तर्पयति, आस्यमास्रावयति, भक्तमपकर्षयति क्लेदयति जरयति, प्रीणयति, लघुरुष्णः स्निग्धश्च स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो दन्तान् हर्षयति, तर्षयति, संमीलयति अक्षिणी, संवेजयति लोमानि, कफं विलापयति, पित्तमभिवर्धयति, रक्तं दूषयति, मांसं विदहति, कायं शिथिलीकरोति, क्षीणक्षतकृशदुर्बलानां श्वयथुमापादयति, अपि च क्षताभिहतदष्टदग्धभग्नशूनच्युतावमूत्रितपरिसर्पितमर्दितच्छिन्नविद्धोत्पिष्टादीन् पाचयत्याग्नेयस्वभावात्परिदहति कण्ठमुरो हृदयं च ॥ ४२ ॥**

हृदयं तर्पयतीति हृद्यो भवति, भुक्तमपकर्षयतीति सारयति, क्लेदयति तथा जरयति भुक्तमेव । अवमूत्रितं मूत्रविषैर्जन्तुभिः, परिसर्पितं च सर्पविषैः कारण्डादिभि ॥ ४२ ॥

**लवणो रसः पाचनः क्लेदनः दीपनः च्यावनः छेदनः भेदनः तीक्ष्णः सरो विकास्यधःस्रंस्यवकाशकरो[2] वातहरः स्तम्भबन्धसङ्घातविधमनः स रसप्रत्यनीकभूत आस्यमास्रावयति, कफं विष्यन्दयति मार्गान् शोधयति, सर्वशरीरावयवान् मृदूकरोति रोचयत्याहारमाहारयोगी नात्यर्थगुरुः स्निग्धउष्णश्च । स एवंगुणोऽप्येकएवात्यर्थमुपयुज्यमानः पित्तं कोपयति, रक्तं वर्धयति, तर्षयति, मूर्च्छयति[3], तापयति, दारयति, कुष्णाति मांसानि, प्रगालयति कुष्ठानि, विषं वर्धयति शोफान् स्फोटयति दन्तांश्च्यावयति पुंस्त्वमुपहन्ति, इन्द्रियाण्युपरुणद्धि, वलीपलितखालित्यमापादयति । अपि च लोहितपित्ताम्लपित्तवीसर्पवातलोहितविचर्चिकेन्द्रलुप्तप्रभृतीन्विकारानुपजनयति ॥ ४३ ॥**

विकासी क्लेदच्छेदनः, अधःस्रंसी विष्यन्दनशीलः, सर्वरसप्रत्यनीकभूत इति यत्र मात्रातिरिक्तो लवणो भवति तत्र नान्यो रस उपलक्ष्यते । आहारयोगीत्याहारे सदा युज्यते, मोहयति वैचित्यं कुरुते, मूर्च्छयतीति संज्ञानाशं करोति ॥४३॥

---

१ प्लवनत्वात्तिर्यगूर्ध्वगतिमत्त्वादिति शिवदास. । २ भूतविशेषकार्यमिति वा पाठ. । ३ शाल्मलीभूतानामिति पाठस्तु नातिमनोरमः । ४ यथाद्रव्यमिति यस्य रसस्य यद्द्रव्य समवायिकारणं तदनतिक्रमेण, तेन रसाधारगुणकर्मणो रसाधारद्रव्ये इति दर्शयतीति शिवदासः । ५ मधुरस्याभ्यर्हितत्वात् प्रथम तमेवाह—तत्रेत्यादीति शिवदासः ।

१ प्रमेहरूपादिज्ञानोपयुक्तमिति वा पाठः । २ सरो विकास्यधःस्रंस्यवकाशकर इति वा पाठः । ३ मोहयतीति वा पाठः ।

कटुको रसो वक्त्रं शोधयति, अग्निं दीपयति, भक्तं शोषयति, घ्राणमास्रावयति, चक्षुर्विरेचयति, स्फुटीकरोतीन्द्रियाणि अलसश्वयथूपचयोदर्दाभिष्यन्दस्नेहस्वेदक्लेदमलानुपहन्ति रोचयत्यशनं कण्डूर्विनाशयति व्रणानवसादयति क्रिमीन् हिनस्ति मांसं विलिखति शोणितसङ्घातं भिनत्ति बन्धांश्छिनत्ति मार्गान् विवृणोति श्लेष्माणं शमयति लघुरुष्णो रूक्षश्च। स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो विपाकप्रभावात् पुंस्त्वमुपहन्ति रसवीर्यप्रभावान्मोहयति ग्लापयति सादयति कर्शयति मूर्च्छयति नमयति तमयति भ्रमयति कण्ठं परिदहति शरीरतापमुपजनयति बलं क्षिणोति तृष्णां जनयति। वाय्वग्निगुणबाहुल्याद्भ्रमदवथुकम्पतोदभेदैश्चरणभुजपार्श्वपृष्ठप्रभृतिषु मारुतजान् विकारानुपजनयति ॥ ४४ ॥

तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नः क्रिमिघ्नः मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनस्त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसामज्जलसीकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणः रूक्षः शीतो लघुश्च। स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यात्खरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थिमज्जशुक्राण्युच्छोषयति स्रोतसां खरत्वमुपपादयति बलमादत्ते कर्शयति ग्लपयति मोहयति भ्रमयति वदनमुपशोषयति अपरांश्च वातविकारानुपजनयति ॥ ४५ ॥

कषायो रसः संशमनः संग्राही सन्धानः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्तप्रशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतो गुरुश्च। स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमान आस्यं शोषयति हृदयं पीडयति, उदरमाध्मापयति, वाचं निगृह्णाति स्रोतांस्यवबध्नाति, श्यावत्वमापादयति, पुंस्त्वमुपहन्ति, विष्टभ्य जरां गच्छति, वातमूत्रपुरीषरेतांस्यवगृह्णाति, कर्शयति, ग्लापयति, तर्पयति, स्तम्भयति, खरविशदरूक्षत्वात्पक्षवधग्रहापतानकार्दितप्रभृतींश्च वातविकारानुपजनयति ॥ ४६ ॥

विपाकस्य प्रभावो विपाकप्रभाव, विपाकश्च कटुना कटुरेव, रसस्य वी[illegible] च प्रभावो रसवीर्यप्रभाव। अयं च वक्ष्यमाणे सर्वत्र हेतु। चरणादीनां साक्षाद्ग्रहणं, तत्रैव प्रायो वातविकारभावात्। अत्र च विपाकप्रभावादिकथनमुदाहरणार्थम्, तेन मधुरादिषु विपाकादि कार्यमुन्नेयम्, ग्लपयति हर्षक्षयं करोति, पीडनो व्रणपीडन, शरीरक्लेदस्योपयोक्तेति आचूषक, शीतो लघुश्च [illegible] लेपादलघु। अवगृह्णातीति बद्धानि करोति ॥ ४४-४६ ॥

इत्येवमेते षड्रसाः पृथक्त्वेनैकत्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकाराय भवन्त्यध्यात्मलोकस्य अपकारकराः पुनरतोऽन्यथोपयुज्यमानाः, तान्विद्वानुपकारार्थमेव मात्रातः सम्यगुपयोजयेदिति ॥ ४७ ॥

पृथक्त्वेनेति एकैकशो मात्रया एकत्वेनेत्येकं कृत्वा समुदयं मात्रशब्दार्थ। मात्रश इति मात्रया। तत्रैकीकरणं द्विव्यादि[illegible] गवह्नेयम, [illegible] सर्वत्र [illegible] स अन्यथेत्यमात्रया ॥ ४७ ॥

भवन्ति चात्र

शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णं च यद्द्रव्यं कटुकं तयोः ॥ ४८ ॥

मधुरेति रसद्वारेणैव द्रव्याणां वीर्यमाह [illegible] तमित्यादि। यद्द्रव्यं रसे पाके च मधुरम्, तच्छीतं वीर्येण ज्ञेयम्, तथा तयोरिति रसपाकयो[र]म्लं द्रव्यम, तदुष्णं वीर्येण तथा, यच्च द्रव्यं तयोरिति रसपाकयो कटुकमुक्तम्, तच्चोष्णं वीर्येण स्यादिति शेष। किंवा यच्चोष्णं कटुकं तयोरिति पाठ। अत्र यद्रसतो मधुरम् तद्वीर्यत शीतमिति वक्तव्ये यद्रसपाकयोरिति करोति, तन्मधुररसोचितपाकस्यैव द्रव्यस्य शीतवीर्यताप्राप्त्यर्थम। एवमम्लकटुकयोरपि वाच्यम् ॥ ४८ ॥

तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः।
वीर्यतोऽविपरीतानां पाकतश्चोपदेक्ष्यते ॥ ४९ ॥
यथा पयो यथा सर्पिर्यथा वा चव्यचित्रकौ।
एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक् ॥ ५० ॥

---

१ वर्धयतीति वा पाठः। २ मदवर्णावति वा पाठः। ३ तर्पयति इति पाठः।

१ शीतो लघुश्चेत्यकारप्रश्लेषादलघु, उक्तञ्च वाग्भटे "कषायः पित्तकफहा गुरुर्वास्तिविशोधन" इति। यत्तु सुश्रुते 'कषायो रसो लाघवादग्नि वर्धयति' इत्युक्तम्' तत्तु लघुपाकतयेति न विरोध इति शिवदास। २ मात्रश इति मात्रया, तेन पृथक्त्वेनैकैकशो मात्रया सम्यगुपयुज्यमानास्तथैकत्वेन समुदितत्वेनैकीकृत्य मात्रया सम्यगुपयुज्यमाना रसाः अध्यात्मलोकस्य सर्वप्राणिजनस्योपकारका भवन्तीत्य[र्थः], अतोऽन्यथेत्यमात्रया, तत्र मात्रयोपयोग नियमयति तानित्यादीति शिवदास। ३ तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोरिति वा पाठ। ४ इदानीं रसविशेषाद्विपाकविशेषाच्च वीर्यविशेषो ज्ञातव्य इत्याह शीत इत्यादिति शिवदाससेन।

तेषामिति मधुरपाकादीनाम्, रसोपदेशेनेति रसगात्रकथनेनैव, यतः विपाकोऽपि रसत एव प्रायो ज्ञायते, वक्ष्यति "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः" इत्यादि । एतच्च न सर्वत्रेत्याह—वीर्यत इत्यादि । वीर्यतोऽविपरीतानां रसद्वारा वीर्यज्ञानम्, न तु रसविरुद्धवीर्याणाम, यथा महापञ्चमूलादीनाम् । न केवलं रसेन कितर्हि पाकत उपदेक्ष्यते गुणसंग्रहः "शुक्रहा बद्धविण्मूत्रो विपाकोवातलः कटुः" रित्यादिना, स च वीर्यतोऽविरुद्धानां विज्ञेयः, यदि तत्र वीर्यं विरोधि स्यात्तदा विपाकोऽपि यथोक्तगुणकारी न स्यात् किंवा, पाकतश्चाऽविपरीतानां रसोपदेशेन गुणसंग्रहः शीतोष्णलक्षणो निर्देश्यः, यस्यास्तु पिप्पल्याः कटुकाया अपि विपरीतमधुरपाकित्वम्, न तत्र कटुकरसत्वेनोष्णत्वमित्यर्थः। अस्मिश्च पक्षे "उपदेक्ष्यते" इति "यथा पय" इत्यादिना सवध्यते । तान्येवाऽविपरीतवीर्यविपाकान्याह—यथा पय इत्यादि । पयःप्रभृतीनि हि द्रव्यगुणकथनेनाऽविरुद्धवीर्यविपाकान्युपदेष्टव्यानि ॥ ४९–५० ॥

**मधुरं किंचिदुष्णं स्यात्कषायं तिक्तमेव च ।**
**यथा महत्पञ्चमूलं यथाऽब्जाऽनूपगामिषम् ॥**
**लवणं सैन्धवं नोष्णमम्लमामलकं तथा ॥ ५१ ॥**

संप्रति यत्र विरुद्धवीर्यविपाकरसेनोष्णत्वादि निर्देश्यं तदाह—मधुरमित्यादि[3] । किंचित्कषायं चोष्णं तिक्तं चोष्णमिति योजना, कषायतिक्तलवणादीनामुदाहरणमसूत्रितानामपि प्रकरणात् कृतम् । महत्पञ्चमूलं बिल्वादिपञ्चमूलमिह । एतच्च तिक्तस्य कषायस्य चोष्णताया उदाहरणम् । अब्जाऽऽनूपाऽऽमिषं तु मधुरस्योष्णवीर्यत्वेन ॥ ५१ ॥

१ सम्प्रति मधुरतिक्तकषायाणां शीतत्वम्, तथा कट्वम्ललवणानामोष्णत्वम्, तथा कटुतिक्तकषायाणामवृष्यत्वमित्यादयो रसद्वारेण द्रव्याणां ये गुणा उक्तास्तदपवादमाह—तेषामित्यादि । रसोपदेशेन रसगुणकथनद्वारेण द्रव्याणां यः शीतोष्णादिगुणसंग्रहः कृतः, सवीर्यतः पाकतश्चाऽविपरीतानां तेषां वक्ष्यमाणक्षीरादिद्रव्याणामेव निर्दिष्टं ज्ञेयः, न तु रसविपरीतवीर्यविपाकानामित्यर्थः । तेष्वविपरीतवीर्यविपाकानुपदिशति—उपदेक्ष्यत इत्यादि । उपदेक्ष्यत इति यथा पयइत्यादिभिः सम्बध्यते, एतानि हि द्रव्यगुणकथनप्रसङ्गेरसाऽविपरीतवीर्यविपाकतयैवोपदेष्टव्यानीति रसानुरूपगुणत्वमेषां ज्ञातव्यमित्यर्थः । इदंतूदाहरणैकदेशमात्रम्, तेन, अपराण्यप्येवंजातीयान्युदाहर्तव्यानीत्याह—एवमादीनीत्यादि । एवमादीन्येवंप्रकाराणि गोधूमादीनीत्यर्थ इति शिवोदासः । २ लवणमित्यादि । लवणमपि न किंचिदुष्णं यथा सैन्धवम्, अम्लमपि न किंचिदुष्णं यथाऽऽमलकमितीति शिवदाससेनः । ३ सम्प्रति विरुद्धवीर्यत्वेन विरुद्धविपाकत्वेन वा रसद्वारेण ये गुणा निर्देश्यास्तानाह मधुरमित्यादीति शिवदाससेनः । ४ किंचिन्मधुरमुष्णं स्यात् किंचिच्च कषायमुष्णं स्यात् किंचिच्च तिक्तमुष्णं स्यादिति योजनेति शिवदाससेनः ।

**शर्कराऽमृतगुडूच्योर्नां तिक्तानामुष्णमुच्यते ।**
**किंचिदम्लं हि संग्राहि किंचिदम्लं भिनत्ति च ।**
**यथा कपित्थं संग्राहि भेदि चामलकं तथा ॥ ५२ ॥**
**पिप्पली नागरं वृष्यं कटु चाऽवृष्यमुच्यते ।**
**कषायः स्तम्भनः शीतः सोऽभयाया मतोऽन्यथा ॥ ५३ ॥**
**तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेत् ।**
**दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम् ॥ ५४ ॥**
**रौक्ष्यात्कषायो रूक्षाणामुत्तमो मध्यमः कटुः ।**
**तिक्तोऽवरस्तथोष्णानामुष्णत्वाल्लवणः परः ॥ ५५ ॥**
**मध्योऽम्लः कटुकश्चान्त्यः स्निग्धानां मधुरः परः ।**
**मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्नियच्छति ॥ ५६ ॥**
**मध्योत्कृष्टाऽवराः शैत्यात्कषायस्वादुतिक्तकाः ।**
**स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः ॥ ५७ ॥**

वीर्यप्रसङ्गादन्यदप्यम्लादीनां विरुद्धगुणमाह—किंचिदित्यादि । अभयायामतोऽन्यथेति अभयाया कषायो रसो भेदनश्चोष्णश्चेत्यर्थः । रौक्ष्यादिति । रौक्ष्येण कषाय उत्तम इति रूक्षतमः । तिक्तो रूक्षः, कटुस्तु मध्ये रूक्षतरः । एवमन्यत्रापि । कटुश्चान्त्य इत्यवर इत्यर्थः । लवणोऽवर इति गुरुत्वेनेत्यर्थः । अम्लात्कटुरित्यत्राप्यम्लात्कटुर्लघुः, ततः कटुकाल्लाघवेनाम्लादुत्तमात्तिक्तो लघुत्वेनोत्तमोत्तमः, उत्तमात्कटुकादुत्तमोत्तमः ॥ ५२–५७ ॥

**अम्लात्कटुस्ततस्तिक्तो लघुत्वादुत्तमो मतः ।**
**केचिल्लघूनामवरमिच्छन्ति लवणं रसम् ॥ ५८ ॥**

एकीयमतमाह—केचिदित्यादि । एकीयमतं वचनभङ्ग्या स्वीकुर्वन्नाह—गौरव इत्यादि । एतेन, गौरवे लाघवे चावरत्वं लवणस्य स्वीकुर्वन् गौरवेऽवर इत्यनेनाऽम्लकटुतिक्तेभ्यो गुरुत्वं स्वीकरोति लवणस्य, लाघवे चावर इत्यनेनाऽम्लादपि लघुनोऽल्पं लाघवं लवणस्य स्वीकरोति । न च वाच्यम्, अम्ले पृथिवी कारणं लवणे तु तोयम्, ततः पृथिव्यपेक्षया तोयजन्यस्य लवणस्यैव लाघवमुचितमिति, यतः न भूतनिवेशेन गौरवलाघवे शक्ये अवधारयितुम्, तथाहि तोयाऽतिरेककृतो मधुरः पृथिव्यतिरेककृतात्कषायाद्गुरुर्भवति[6] ॥ ५८ ॥

१ पिप्पलीत्यादि । अत्र पिप्पलीनागरयोः कटुकयोरपि तद्विपरीतमधुरविपाकित्वेन नोष्णत्वं ज्ञेयमिति शिवदाससेनः । २ तस्मादित्यादि ।—उक्तरीत्या तुल्यरसेऽपि द्रव्ये द्रव्ये यतोगुणान्तरं दृष्टं, तस्मादित्यर्थ इति शिवदासः । ३ स्नेहान्नियच्छति वा पाठः । ४ तिक्तात्कषायो मधुरः शीतात्शीततरः पर इति वा पाठः । ५ अल्पमित्यन्तरम् । ६ मतान्तरमाह—केचिदित्यादि । प्रतिसंस्कर्ता उभयोरपि मतयोरववोधार्थं मतद्वयं सङ्कलय्य दर्शयति—गौरव इत्यादि । उभयोरपीति । मतद्वयेऽपि स लवणोऽवरः, अग्निवेशमते गौरवेऽवरः, मतान्तरे लाघवेऽवरः । एतेन गौरवेऽवर इति येनोच्यते, तेनाऽपि किंचिल्लघुत्वं स्वीक्रियत एव, तथा लाघवेऽवर इति मतेऽपि किंचिद्गुरुत्वमर्थात्तमेवेति न कश्चिदर्थभेद इत्यर्थ इति शिवदासः ।

**गौरवे लाघवे चैव सोऽवरस्तूभयोरपि ।**
**परं चातो विपाकानां लक्षणं संप्रवक्ष्यते ॥ ५९ ॥**
**कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ।**
**अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥ ६० ॥**

संप्रति विपाकस्यापि रसरूपत्वाल्लक्षणमाह—परमित्यादि । प्रायोग्रहणात् पिप्पलीकुलत्थादीनां रसाननुगुणपाकितां दर्शयति । कटुकादिशब्देन तदाधारं द्रव्यमुच्यते, यतः न रसाः पच्यन्ते, किंतु द्रव्यमेव । लवणस्तु तथेति लवणोऽपि मधुरविपाकप्राय इत्यर्थः । विपाकलक्षणं तु जठराग्नियोगादाहारस्य निष्ठाकाले यो गुण उत्पद्यते, स विपाकः, वचनं हि "जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । आहारपरिणामान्ते स विपाक इति स्मृतः" ॥ ५९ ॥ ६० ॥

**मधुरो लवणाम्लौ च स्निग्धभावात्त्रयो रसाः ।**
**वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः ॥ ६१ ॥**
**कटुतिक्तकषायास्तु रूक्षभावात्त्रयो रसाः ।**
**दुःखाय मोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् ॥ ६२ ॥**

संप्रति वक्ष्यमाणविपाकलक्षणे मधुराम्लपाकयोर्वातमूत्रपुरीषाऽनवरोधकत्वे तथा कटोर्विपाकस्य वातमूत्रपुरीषविबन्धकत्वे हेतुमाह—मधुर इत्यादि । अत्र मधुराम्ललवणा विपाकनिष्ठाः पाकं गता अपि सन्तः स्नेहगुणयोगाद्वातमूत्रपुरीषाणां विसर्गं सुखेन कुर्वन्तीति वाक्यार्थः । तेन मधुराम्लपाकयोरेतत्समानं लक्षणम् । एवं कटुतिक्तकषायेष्वपि विपर्ययेऽपि वाक्यार्थः ॥ ६१ ॥ ६२ ॥

**शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः ।**
**मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः ॥ ६३ ॥**
**पित्तकृत्सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः ।**
**तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ॥ ६४ ॥**

संप्रति विपाकलक्षणं हेतुव्युत्पादितं शुक्रहत्वादिविशेषयुक्तं वक्तुमाह—शुक्रहेत्यादि । अतोऽन्यथेति लघुः ॥ ६३ ॥ ६४ ॥

**विपाकलक्षणस्याल्पमध्यभूयिष्ठतां प्रति ।**
**द्रव्याणां गुणवैशेष्यात्तत्र तत्रोपलक्षयेत् ॥ ६५ ॥**

संप्रति यथोक्तविपाकलक्षणानां द्रव्यभेदे क्वचिदल्पत्वं क्वचिन्मध्यत्वं क्वचिच्चोत्कृष्टत्वं यथा स्यात्तदाह—विपाकेत्यादि । विपाकलक्षणस्याल्पभूयिष्ठतामुपलक्षयेत्, प्रतिप्रतिद्रव्याणां गुणवैशेष्याद्धेतोरित्यर्थः । एतेन, द्रव्येषु यथा वैशेष्यं मधुरत्वमधुरतरत्वमधुरतमत्वादिः, ततो हेतोर्विपाकानामल्पत्वादयो विशेषा भवन्तीत्युक्तं भवति । अत्र केचिद्ब्रुवते प्रतिरसं पाको भवति, यथा मधुरादीनां षण्णां षण्मधुरादयः पाका इति । केचिद्ब्रुवते—बलवतां रसानामबलवन्तो रसा वशतां यान्ति, ततश्चानवस्थितः पाकः । तन्नैतद्द्वितयपाकव्यवस्थाकरणमनादृत्य सुश्रुतेन द्विविधः पाकः 'मधुरः' 'कटु'श्चाङ्गीकृतः । द्वैविध्यं च पञ्चभूतात्मके द्रव्ये पृथिवीतोयातिरेकान्मधुरपाको भवति, शेषलघुभूतातिरेकात्तु कटुकः पाको भवति, यदुक्तम् "द्रव्येषु पच्यमानेषु येषु स्युः पृथिवीगुणाः । निर्वर्तन्तेऽधिकास्तत्र पाको मधुर उच्यते । तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु । निर्वर्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते" इति । प्रतिरसपाके तथाऽनवस्थितपाके च द्रव्यं रसगुणेनैव तुल्यं पाकावस्थायामपि स्यात्तेन, कश्चिद्विशेषो विपाके न तत्र बुध्यत इति सुश्रुतेन तत्पक्षद्वयमुपेक्षितमिति साधुकृतम् । तृतीयाम्लपाकनिरासः पुनर्दोषमावहति[1], यतः, व्रीहिकुलत्थादीनामम्लपाकतया पित्तकर्तृत्वमुपलभ्यते । अथ मन्यसे व्रीह्यादेरुष्णवीर्यत्वेन तत्र पित्तकर्तृत्वम् । तन्न; मधुरस्य व्रीहेस्तन्मते च मधुरविपाकस्योष्णवीर्यतायामपि सत्यां न पित्तकर्तृत्वमुपपद्यते रसविपाकाभ्यामेकस्य वीर्यस्य बाधनीयत्वात् । किंच, अम्लपाकत्वाद्व्रीह्यादेः पित्तमम्लगुणमुत्पद्यते । यदि तु तदुष्णवीर्यताकृतं स्यात्तदा कटुगुणभूयिष्ठं पित्तं स्यात् । दृश्यते च व्रीहिभक्षणादम्लोद्गारादिनाऽम्लगुणभूयिष्ठतैवेति । किंच, पृथिवीसोमगुणातिरेकान्मधुरपाको भवति, वाय्वग्न्याकाशातिरेकाच्च कटुर्भवतीत्यपेक्षया[2] यदा व्यामिश्रगुणातिरेकता स्यात्तदा सोमाग्न्यात्मकस्याम्लस्योत्पादः कथं प्रतिक्षेपणीयः । अथवा, तन्त्रकारयोः किमनयोरनेन वचनमात्रविरोधेन कर्तव्यम् । यतः, यदम्लपाकं चरको ब्रूते, तत्सुश्रुतेन वीर्योष्णमिति कृत्वा समाधीयते, तेन न कश्चिद्द्रव्यगुणे विरोधः । यत्तु सुश्रुते अम्लपाकनिरासार्थं दूषणमुच्यते "पित्तं हि विदग्धमम्लतामुपैति" इत्यादिना, तदनभ्युपगमादेव निरस्तम् । ननु लवणस्य मधुरपाकित्वे पित्तरक्तादिकर्तृत्वमनुपपन्नं, तथा तिक्तकषाययोः कटुपाकित्वे पित्तहन्तृत्वमनुपपन्नम्, नैवम्, सत्यपि लवणस्य मधुरपाकित्वे तत्र लवणे रस उष्णं च वीर्यं यदस्ति, तेन तु[3] पित्तरक्तादिकारकत्वम् । विपाकस्तु तत्र पित्तरक्तहरणलक्षणे कार्ये बाधितः सन् "सृष्टविण्मूत्र" इत्यादिना लक्षणेन लक्ष्यत एव । एतेन यदुच्यते—लवणे मधुरो विपाकश्चेद्रसवीर्याभ्यां बाधितः सन् स्वकार्यकरो न स्यात्तत् किं तेनोपदिष्टेनेति तन्निरस्तं स्यात् । यतः, अस्त्येव सृष्टविण्मूत्रतादिना तत्र लवणे मधुरविपाकित्वं लक्षणीयम् । अनया

१ विपाकस्याऽपि रसरूपत्वात्तदनन्तरं विपाकलक्षणाभिधानं प्रतिजानीते—परं चात इत्यादि । आहारपरिणामात्त्रयोऽवस्थापाकाः, ते च ग्रहणीचिकित्सिते "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" इत्यादिना वक्ष्यमाणाः, तेषामवसाने पुनर्जठराग्निसंयोगे सति यद्रसान्तरं रसविशेष उदेति स विशिष्टः पाको विपाक इत्यर्थ इति शिवदाससेनः ।

[1] तृतीयाऽम्लपाकनिरासस्तु न दोषमावहतीति पाठान्तरं तु नातिमनोरमम्, अत्र च सन्निविष्ट पाठस्याऽभिप्रायेणैव शिवदासेनाप्युक्तं "यत्पुनः सुश्रुतेनाऽम्लपाको न मन्यते, तच्चरकमतानुयायिनो न सहन्ते" इति । [2] कटुर्भवतीति पक्षे इति वा पाठः । [3] तेन तत्पित्तरक्तादिकारकमिति वा पाठः ।

दिशा तिक्तकषाययोरपि पूर्वपक्षपरिहारः। अन्ये तु दोषभयाल्लवणोऽम्लं पच्यत इति व्याख्यानयन्ति "लवणस्तथा" इत्यत्र 'तथा'-पदेन विप्रकृष्टस्याम्लस्य कर्षणादिति। तन्न, "कट्वादीनां कटुको विपाकोऽम्लोऽम्लस्य शेषयोर्मधुरः" इति जतूकर्णवचनात्। नच वाच्यम्, कस्मात्त्रय एव विपाका भवन्ति, न पुनस्तिक्तादयोपीति, यतः भूतस्वभाव एवैषः, येन मधुरादयस्त्रय एव भवन्ति, भूतस्वभावाश्चापर्यानुयोज्याः। ननु, यश्च रसविपरीतः पाकः यथा—लवणस्य मधुरः, तिक्तकषाययोश्च कटुः, स उच्यताम्, यस्तु समानगुणो मधुरस्य मधुरोऽम्लस्य अम्लः कटुकस्य वा कटुकः, तत्कथने किं प्रयोजनम्। यतः, रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते। नैवम्, येन लवणादिवद्विसदृशरसान्तरोत्पादशङ्कानिरासार्थमपि तत्रानुगुणोपि विपाको वक्तव्य एव, विपाकजश्च रस आहारपरिणामान्ते भवति, प्राकृतस्तु रसो विपाकविरुद्धः परिणामकालं वर्जयित्वा ज्ञेयः, तेन पिप्पल्याः कटुकरसत्वमादौ कण्ठस्थश्लेष्मक्षेपणमुखशोधनादिकर्तृत्वेन सप्रयोजनम्, मधुरविपाकत्वं तु परिणामेन वृष्यत्वज्ञापनेन सप्रयोजनम्। तथा, यत्र विपाकस्य रसाः समानगुणतयाऽनुगुणा भवन्ति, तत्र बलवत् कार्यं भवति। विपर्यये तु दुर्बलमिति ज्ञेयम्। एतच्च पाकत्रयं द्रव्यनियतं ग्रहण्यध्याये वक्ष्यमाणाऽऽहाराऽवस्थापाकाद्भिन्नमेव, तत्र ह्यविशेषेण सर्वेषामेव रसानामवस्थावशात्त्रयः पाका वाच्याः "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" इत्यादिना ग्रन्थेन ॥ ६५ ॥

**मृदुतीक्ष्णगुरुलघुस्निग्धरूक्षोष्णशीतलम्।**
**वीर्यमष्टविधं केचित्केचिद्द्विविधमास्थिताः ॥ ६६ ॥**
**शीतोष्णमिति वीर्यं तु क्रियते येन या क्रिया।**
**नावीर्यं कुरुते किंचित्सर्वा वीर्यकृता क्रिया ॥ ६७ ॥**

एकीयमतेन वीर्यलक्षणमाह—मृद्वित्यादि। एतच्चैकीयमतद्वयं पारिभाषिकीं वीर्यसंज्ञां पुरस्कृत्य प्रवृत्तम्। वैद्यके हि रसविपाकप्रभावव्यतिरिक्ते प्रभूतकार्यकारिणि गुणे "वीर्यमि"ति संज्ञा, तेन अष्टविधवीर्यवादिमते पिच्छिलविशदादयो गुणा न रसादि विपरीतं कार्यं प्रायः कुर्वन्ति, तेन तेषां रसाद्युपदेशेनैव ग्रहणम्। मृद्वादीनां तु रसाद्यभिभावकत्वमस्ति, यथा पिप्पल्यां कटुरसकार्यं पित्तकोपनमभिभूय तद्गते मृदुशीतवीर्ये पित्तमेव शमयत इति, तथा कषाये तिक्तानुरसे महति पञ्चमूले तत्कार्यं वातकोपनमभिभूय उष्णेन वीर्येण तद्विरुद्धं वातशमनमेव क्रियते, तथा मधुरेऽपीक्षौ शीतवीर्यत्वेन वातवृद्धिरित्यादि। यदुक्तं सुश्रुते "एतानि खलु वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म दर्शयन्ती"त्यादि। शीतोष्णवीर्यवादिमतं तु अग्निषोमीयत्वाज्जगतः शीतोष्णयोरेव प्राधान्याद्ज्ञेयम्। उक्तं च "नानाऽऽत्मकमपि द्रव्यमग्निषोमौ महाबलौ। व्यक्ताऽव्यक्तं जगदिव नातिक्रामति जातुचित्"। एतच्च मतद्वयमप्याचार्यस्य परिभाषासिद्धमनुमतमेव, येन उत्तरत्र, "रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते" इत्यादौ पारिभाषिकमेव वीर्यं निर्देक्ष्यति। पारिभाषिकवीर्यसंज्ञापरित्यागेन तु शक्तिपर्यायस्य वीर्यस्य लक्षणमाह—वीर्यन्त्वित्यादि। वीर्यमिति शक्तिः, येनेति रसेन वा विपाकेन वा प्रभावेण वा गुर्वादिपरत्वादिभिर्वा गुणैर्या क्रिया तर्पणह्लादनशमनादिरूपा कृत्स्ना क्रियत इत्युपदिश्यते, तस्यां क्रियायां तद्रसादि वीर्यम्, अतएवोक्तं सुश्रुते, "येन कुर्वन्ति तद्वीर्यमि"ति। अत्रैव लोकप्रसिद्धामुपपत्तिमाह—नावीर्यमित्यादि। अवीर्यमशक्तमित्यर्थः। वीर्यकृतेति वीर्यवता कृता वीर्यकृता ॥६६॥ ॥ ६७ ॥

**रसो निपाते द्रव्याणां, विपाकः कर्मनिष्ठया।**
**वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ ६८ ॥**

रसादीनामेकद्रव्यनिविष्टानां भेदेन ज्ञानार्थं लक्षणमाह—रसो निपात इत्यादि। निपात इति रसनायोगे, कर्मनिष्ठयेति कर्मणो निष्ठा निष्पत्तिः कर्मनिष्ठा क्रियापरिसमाप्तिः रसोपयोगे सति योऽन्त्याहारपरिणामकृतः कर्मविशेषः कफशुक्राभिवृद्ध्यादिलक्षणः, तेन विपाको निश्चीयते। अधीवासः सहावस्थानं, यावदधीवासादिति यावच्छरीरनिवासात्, एतच्च पाकात्पूर्वं निपाताच्चोर्ध्वं ज्ञेयम्। निपाताच्चेति शरीरसंयोगमात्रात्तेन किंचिद्वीर्यमधीवासादुपलभ्यते, यथा—आनूपमांसादेरुष्णत्वम्, किंचिच्च निपातादेव लभ्यते, यथा—मरीचादीनां तीक्ष्णत्वादि, किंचिच्च निपाताधीवासाभ्यां च, यथा—मरीचादीनां दीपनीयादीनामेव। एतेन रसः प्रत्यक्षेणैव, विपाकस्तु नित्यपरोक्षस्तत्कार्येणानुमीयते, वीर्यं तु किंचिदनुमानेन, यथा सैन्धवगतं शैत्यं आनूपमांसगतं वा औष्ण्यं, किंचिच्च वीर्यं प्रत्यक्षेणैव यथा राजिकागतं तैक्ष्ण्यं घ्राणेन, पिच्छिलविशदस्निग्धरूक्षादयः चक्षुःस्पर्शनाभ्यां निश्चीयन्ते इति वाक्यार्थः। एतच्च वीर्यं सहजं कृत्रिमं च

---

१ तथाशब्देनेति वा पाठः। २ कुर्वन्तीति वा पाठः।

१ पारिभाषिकवीर्यसंज्ञापरित्यागेन शक्तिपर्यायस्य वीर्यस्य लक्षणमाह—वीर्यन्त्वित्यादि। येनेति। येन रसेन पाकेन वा प्रभावेण वा गुर्वादिभिर्गुणैर्वा या क्रियाह्लादनतर्पणशमनादिरूपा क्रियते; तस्यां क्रियायां तद्रसादि वीर्यमुच्यते इत्यर्थः। नचैवं द्रव्यस्यापि वीर्यत्वप्रसङ्गः। येनेति करणे तृतीया, करणस्यैव शक्तित्वात्, द्रव्यस्य तु कर्तृत्वात्। एतेन, द्रव्यकर्तृत्वे रसादिकरणे कार्ये रसादीनां वीर्यत्वमित्यर्थः। सुश्रुतेऽप्युक्तम् "येन कुर्वन्ति तद्वीर्यमि"ति शिवदासः। २ अत्रैव लोकसिद्धामुपपत्तिमाह—नावीर्यमित्यादि। अवीर्यमशक्तमित्यर्थः। एतेन रसादयः सर्व एव स्वकार्यकरणसमर्थाः सन्तो द्रव्यशक्तिपर्यायरूपवीर्यशब्दवाच्या भवन्तीत्यर्थ इति शिवदासः। ३ भेदज्ञानार्थमिति वा पाठः।

ज्ञेयम् । एतच्च यथासंभवं गुरुलघ्वादिषु वीर्येषु लक्षणं ज्ञेयम्, द्रव्याणामिति उपयुज्यमानद्रव्याणाम् । एतच्च वीर्यलक्षणं पारिभाषिकमेव ॥ ६८ ॥

**रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते ।**
**विशेषः कर्मणां चैव प्रभावस्तस्य च स्मृतः ॥ ६९ ॥**

प्रभावलक्षणमाह—रसवीर्येत्यादि । सामान्यमिति तुल्यता, विशेषः कर्मणामिति दन्त्याद्याश्रयाणां विरेचनत्वादीनां । सामान्यं लक्ष्यत इत्यनेन रसादिकार्यत्वेन यन्नावधारयितुं शक्यते कार्यं, तत् प्रभावकृतमिति सूचयति, अतएवोक्तम् "प्रभावोऽचिन्त्य उच्यते" । रसवीर्यविपाकतयाऽचिन्त्य इत्यर्थः ॥ ६९ ॥

**कटुकः कटुकः पाके वीर्योष्णश्चित्रको मतः ।**
**तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम् ॥ ७० ॥**
**विषं विषघ्नमुक्तं यत्प्रभावस्तत्र कारणम् ।**
**ऊर्ध्वानुलोमिकं यच्च तत्प्रभावप्रभावितम् ॥ ७१ ॥**

अस्यैव दुरभिगमत्वादुदाहरणानि बहून्याह—कटुक इत्यादिना । तद्वद्दन्ती चित्रकसमानगुणा, विषघ्नमुक्तमिति "तस्माद्दंष्ट्राविषं मौलम्" इत्यादिना । ऊर्ध्वानुलोमिकमिति युगपदुभयभागहरम् । किंवा ऊर्ध्वहरं तथाऽनुलोमकरं च ॥७०—७१॥

**मणीनां धारणीयानां कर्म यद्विविधात्मकम् ।**
**तत्प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते ॥ ७२ ॥**

कर्म यद्विविधात्मकमिति विषहरणशूलहरणादि । एतच्चोदाहरणमात्रम्, तेन जीवनमेध्यादिद्रव्यस्य रसायचिन्त्यं सर्वं 'प्रभाव' इति ज्ञेयम् । प्रभावश्चेह द्रव्यशक्तिरभिप्रेता, सा च द्रव्याणां सामान्यविशेषः दन्तीत्वादियुक्ता व्यक्तिरेव, यतः शक्तिर्हि स्वरूपमेव भावानाम्, नातिरिक्तं किंचिद्धर्मान्तरं भावानाम्; एवं प्रदेशान्तरोक्तगुणप्रभावेष्वपि वाच्यम्, यथोक्तं "द्रव्याणि हि द्रव्यप्रभावाद्गुणप्रभावादि" त्यादि । न च वाच्यम् दन्त्यादिरेव स्वरूपत एव विरेचयति, तेन किमिति जलाद्युपहता दन्ती न विरेचयतीति; प्रतिबन्धकाभावविशिष्टस्यैव प्रभावस्य कारणत्वात्, जलोपहतायां दन्त्यां जलोपघातः प्रतिबन्धक इत्याद्यनुसरणीयम् । नैयायिकशक्तिवादे या च विषस्य विषघ्नत्वे उपपत्तिरुक्ता ऊर्ध्वाधोगामित्वविरोधलक्षणा साऽन्तर्भागत्वात् प्रभावादेव स्यात् । एवमूर्ध्वानुलोमिकत्वादौ पार्थिवत्वादिलक्षणेऽपि वाच्यम् ॥ ७२ ॥

**सम्यग्विपाकवीर्याणि प्रभावश्चाप्युदाहृतः ।**
**किंचिद्रसेन कुरुते कर्म वीर्येण चापरम् ॥ ७३ ॥**
**द्रव्यं गुणेन पाकेन प्रभावेण च किंचन ।**
**रसं विपाकस्तौ वीर्यं प्रभावस्तानपोहति ॥ ७४ ॥**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ।**
**षण्णां रसानां विज्ञानमुपदेक्ष्याम्यतः परम् ॥ ७५ ॥**
**स्नेहनप्रीणनाह्लादमार्दवैरुपलभ्यते ।**
**मुखस्थो मधुरश्चास्यं व्याप्नुवँल्लिम्पतीव च ॥ ७६ ॥**
**दन्तहर्षान्मुखस्रावात्स्वेदनान्मुखबोधनात् ।**
**विदाहाच्चास्य कण्ठस्य प्राश्यैवाम्लरसं वदेत् ॥ ७७ ॥**
**प्रलीयन्क्लेदविष्यन्दमार्दवं कुरुते मुखे ।**
**यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च ॥ ७८ ॥**
**संवेजयेद्यो रसनां निपाते तुदतीव च ।**
**विदहन्मुखनासाक्षि संस्रावी स कटुः स्मृतः ॥ ७९ ॥**
**प्रतिहन्ति निपाते यो रसनं स्वदते न च ।**
**स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः ॥ ८० ॥**
**वैशद्यस्तंभजाड्यैर्यो रसनं योजयेद्रसः ।**
**बध्नातीव च यः कण्ठं कषायः स विकास्यपि ॥ ८१ ॥**

विज्ञायतेऽनेनेति विज्ञानं लक्षणमित्यर्थः । प्रलीयन्निति विलीनो भवन्, संस्रावयतीति संस्रावी । विकासीति हृदयविकसनशीलः, उक्तं हि सुश्रुते "हृदयं पीडयति" इति ७३–८१

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच भगवन् श्रुतमेतदवितथमर्थसंपद्युक्तं भगवतो यथावद्द्रव्यगुणकर्माधिकारे वचः, परंत्वाहारविकाराणां**

---

१ एतच्च वीर्यं सहजं कृत्रिमं च ज्ञेयम्, तत्राद्यं माषाणां गौरवं मुद्गानां लाघवमित्यादि, कृत्रिमन्तु लाजादीनां लघुत्वमित्यर्थ इति शिवदासः । २ सामान्यं तुल्यता । कर्मणां पुनर्विशेषः, न तु तुल्यतेत्यर्थः । एतेन द्रव्ययो रसादिसमान्ये सत्यपि, एकस्मिन् द्रव्ये जायते कार्यविशेषः, अन्यस्मिन्न जायते इत्यत्र यत्कारणतया वाच्यम्, तत् प्रभाव इत्यर्थ इति शिवदासः । ३ सा नरमिति वा पाठः । ४ ऊर्ध्वानुलोमनमिति पाठस्तु न चक्रसंमतः । ५ तद्वद्दंति चित्रकतुल्यरसवीर्यविपाका । एतेन, चित्रकस्य रसाद्यैस्तुल्यायामपि दन्त्यां यद्विरेकत्वरूपं विशिष्टकर्म, तत् स्वकारणं प्रभावमनुमापयतीति भाव इति शिवदासः । ६ विषघ्नमिति स्थावरजङ्गमविषयोः परस्परहन्तृत्वमिति शिवदासः । ७ युगपदुभयतो भागवहमिति वा पाठः । ८ ननु विषमण्यादौ रसवीर्यादिनिश्चयो दुर्घटस्तत्कथमत्र प्रभाव उच्यते, उक्तप्रभावलक्षणस्यासंभवादित्याह—प्रभावोऽचिन्त्य उच्यते इति । रसवीर्यविपाकाजन्यतयाऽचिन्त्य इत्यर्थः । एतेन रसादिजन्यत्वेन यत्कार्यं नावधारयितुं शक्यते; तदपि प्रभावकृतमिति मन्तव्यमित्यर्थ इति शि: ।

१ अन्तर्भागविदिति कर्मविशेषान्तर्भूतत्वादित्यर्थः । २ तिक्तो मुखस्य प्रह्लादकारकोऽरुचिहन्तृत्वादिति शिवदासः । ३ विकासी धातूनां हिंसकः, तदुक्तम् "विकासी विकसन् धातू"निति, अन्ये तु हृत्पीडाजनक इत्याहुरिति शिवदासः । ४ प्रलीयन्निति रसनेन्द्रियसंबन्धादेव विलीनो भवतीत्यर्थ इति शिवदासः । ५ विकाराः पञ्चभूतप्रकृतिकानि द्रव्याणि, तेन आहारद्रव्याणामित्यर्थ इति शिवदासः ।

**वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामह इति ॥ ८२ ॥**

संप्रति विरुद्धाहारं वक्तुमाह—एवमित्यादि । शरीरधातुविरोधं कुर्वन्तीति वैरोधिकाः, लक्ष्यते वैरोधिकमनेनेति लक्षणं वैरोधिकाभिधायको ग्रन्थ एव । "यत् किंचिद्दोषमस्राव्यमि–" त्यादि वैरोधिकलक्षणं ज्ञेयम् ॥ ८२ ॥

**तमुवाच भगवानात्रेयः देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते परस्परगुणविरुद्धानि कानिचित्कानिचित्संयोगात्संस्काराद्पराणि देशकालमात्रादिभिश्चापराणि तथा स्वभावाद्पराणि ॥ ८३ ॥**

देहधातुप्रत्यनीकभूतानीति देहधातूनां रसादीनां वातादीनां च प्रकृतिस्थानां प्रत्यनीकस्वरूपाणि, विरोधमापद्यन्त इति देहधातूनां विरोधमाचरन्ति दूषयन्तीति यावत् । यथाभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते तदाह परस्परविरुद्धानि कानिचिदित्यादि । तत्र परस्परविरुद्धानि, यथा "न मत्स्यान्पयसाभ्यवहरेदुभयं ह्येतदि"त्यादिनोक्तानि । संयोगविरुद्धं यथा "तदेव निकुचं पक्कं न माष" इत्यादिनोक्तम्, यत्संस्कारादिविरुद्धगुणकथनं विना साहित्यमात्रेण विरुद्धमुच्यते, तत्संयोगविरुद्धम् । मत्स्यपयसोस्तु यद्यपि सहोपयोगो विरुद्धत्वेनोक्तः, तथाप्यसौ गुणविरुद्धत्वेन कथित इति गुणविरोधकस्यैवोदाहरणम् । विरोधश्च विरुद्धगुणत्वे सत्यपि क्वचिदेव द्रव्यप्रभावात्स्यात्, तेन षड्रसाहारोपयोगे मधुराम्लयोर्विरुद्धशीतोष्णवीर्ययोर्विरोधो न भावनीयः । संस्कारविरुद्धं यथा "न कपोतान्सर्षपतैलभृष्टानि"त्यादि । देशो द्विविधः भूमिः शरीरं च । तत्र भूमिविरुद्धं,यथा—"तदेव भस्मपांशुपरिध्वस्तम्" किंवा, "यत् किंचिदगोचरभूतम्" तद्देशविरुद्धम् । शरीरविरुद्धं यथा "उष्णार्तस्य मधु मरणाय" । कालविरुद्धं, यथा "पर्युषिता काकमाची मरणाय" । मात्राविरुद्धं यथा—"समघृते मधुसर्पिषी मरणाय" । आदिग्रहणाद्दोषप्रकृत्यादिविरुद्धानां ग्रहणम् । स्वभावविरुद्धं यथा विषम् ॥ ८३ ॥

**तत्र यान्याहारमधिकृत्य भूयिष्ठमुपयुज्यन्ते तेषामेकदेशं वैरोधिकमधिकृत्योपदेक्ष्यामः न मत्स्यान्पयसा सहाभ्यवहरेदुभयं ह्येतन्मधुरं मधुरविपाकं महाभिष्यन्दि शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वाच्छोणितप्रदूषणाय महाभिष्यन्दित्वान्मार्गोपरोधाय च ॥ ८४ ॥**

**तदनन्तरमात्रेयवचनमनुमन्य भद्रकाप्योऽग्निवेशमुवाच सर्वानेव मत्स्यान्पयसा सहाभ्यवहरेदन्यत्रैकस्माच्चिलिचिमात्, स पुनः शकली सर्वतो लोहितराजिर्लोहितप्रकारः प्रायो भूमौ चरति, तं चेत्पयसा सहाभ्यवहरेन्निःसंशयं शोणितजानां विबन्धजानां च व्याधीनामन्यतममथवा मरणं प्राप्नुयादिति ॥ ८५ ॥**

वैरोधिकमधिकृत्येति वैरोधिकमुद्दिश्य, शीतोष्णत्वादिति पयः शीतं उष्णवीर्याश्च मत्स्याः, शेषं मधुरत्वादि समानम् । एतच्च द्रव्यप्रभावादेव विरोधि । "स पुनः शकली" इत्यादिना नान्दिनिरिति ख्यातो मत्स्य उच्यते ॥ ८४ ॥ ८५ ॥

**नेति भगवानात्रेयः—सर्वानेव मत्स्यान्न पयसाभ्यवहरेद्विशेषतस्तु चिलिचिमम्, स हि महाभिष्यन्दितमत्वात्स्थूललक्षणतरानेतान् व्याधीनुपजनयत्यामविषमुदीरयति चेति । ग्राम्यानूपौदकपिशितानि च मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकध्याऽद्यात्, तन्मूलं च बाधिर्यान्ध्यवेपथुजाड्यकलमूकतामैण्मिण्यमथवा मरणमाप्नोति । न पौष्करं रोहिणीकं वा शाकं न कपोतान्सार्षपतैलभ्रष्टान्मधुपयोभ्यां सहाभ्यवहरेत् । तन्मूलं हि शोणिताभिष्यन्दधमनीप्रविचयापस्मारशंखकगलगण्डरोहिणीकानामन्यतमं प्राप्नोत्यथवा मरणमिति । न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात् । न जातु शाकं न निकुचं पक्कं मधुपयोभ्यां सहोपयोज्यम्, एतद्धि मरणायाथवा बलवर्णतेजोवी-**

१ मत्स्यपयसोः कथं विरोध इत्याह—उभयं ह्येत्यादि । शीतोष्णत्वादिति, पयः शीतम्, उष्णा मत्स्याः, शेषं मधुरत्वादि समानम् । नन्वेवं षड्रसाहारोपयोगे मधुराम्लयोर्विरुद्धवीर्ययोर्विरोधः कथं न स्यात्, अथ द्रव्यप्रभावान्मत्स्यपयसोर्विरोधो नान्यत्रेति चेत्, तर्हि कथं गुणविरोधोदाहरणमेतदिति प्रागुक्तव्यभिचारेण शीतोष्णयोर्विरोधं प्रत्यहेतुमात्रम् । अत्रोच्यते । मत्स्यपयसोर्विरोधित्वं तावदुभयवादिसिद्धम्, स च विरोधः शीतोष्णकृतो वा प्रभावकृतो वेति विप्रतिपत्तौ शीतोष्णकृत एव कल्प्यते दृष्टत्वात्, शीतोष्णयोर्हि विरोधः स्वभावसिद्ध इति । यत्र च मधुराम्लगते शीतोष्णवीर्ये अपि न स्वकार्यं जनयतः, तत्रानन्यगतिकतया प्रभाव एव प्रतिबन्धकत्वेन कल्प्यत इति युक्तम् । एतेन प्रभावान्मत्स्यपयसोरेव विरोधित्वमिति यत्केनचिदुक्तं, तदपास्तम् उक्तरीत्या विरोधं प्रति प्रभावस्य हेतुत्वात्, हेतुत्वे च प्रभावेनैव विरुद्धयोर्मत्स्यपयसोः शीतोष्णगुणद्वारकविरोधकथनमसङ्गतं स्यादिति शिवदासः । २ किमाकारश्चिलचिम इत्याह—स पुनरित्यादि । शकलं वल्कलमस्यास्तीति प्रकर्षे मतुप्, लोहितराजी रेखा यस्य स तथा, भूमौ चरतीति प्रायःकर्दममध्येतिष्ठति, तादृशश्च मत्स्योऽनूपदेशे नान्दिनिरीत्युच्यते इति शिवदासः । ३ स्थूललक्षणतरानिति महत इत्यर्थ इति शिवदासः । ४ मैण्मिण्यं सानुनासिकवचनमिति शिवदासः ।

१ उक्तानि विरुद्धगुणान्युदाहर्तुं प्रतिजानीते—तत्रेत्यादि ।

र्थोपरोधायाल्पुव्याश्रये पांट्याय चेति । तदेव-निकुञ्चपक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधिकत्वात् । तथाऽम्लाम्रातकमातुलुङ्गनिकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतिन्तिडीकपारावताक्षोडपनसनालिकेरदाडिमामलकान्येवंप्रकाराणि चान्यानि द्रव्याणि सर्वं चाम्लं द्रवमद्रवं च पयसा सह विरुद्धम् । तथा कङ्गुवनकमकुष्ठककुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः । पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धं वातं चातिकोपयति । हारिद्रकः सर्षपतैलभृष्टो विरुद्धः पित्तं चातिकोपयति । पायसो मन्थानुपानो विरुद्धः श्लेष्माणं चातिकोपयति । उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य । बलाका वारुण्या सह कुल्माषैरपि विरुद्धा, सैव शूकरवसापरिभृष्टा सद्यो व्यापादयति । मयूरमांसमेरण्डसीसकावसक्तमेरण्डाग्निप्लुष्टमेरण्डतैलयुक्तं सद्योव्यापादयति । हारिद्रकमांसं हारिद्रसीसकावसक्तं हारिद्राग्निप्लुष्टं सद्योव्यापादयति । तदेव भस्मपांशुपरिध्वस्तं सक्षौद्रं मरणाय । मत्स्यनिस्तालनसिद्धाः पिप्पल्यस्तथा काकमाची मधु च मरणाय मधु चोष्णमुष्णार्तस्य मधु मरणाय । मधुसर्पिषी समधृते, मधु वारि चान्तरिक्षं समधृतं, मधु पुष्करबीजं, मधु पीत्वोष्णोदकं, भल्लातकोष्णोदकं, तक्रसिद्धः कंपिल्लकः, पर्युषिता काकमाची, अङ्गारशूल्यो भासश्चेति विरुद्धानीत्येतद्यथा प्रश्नमभिनिर्दिष्टं भवति ॥ ८६ ॥

ग्राम्यपिशितादीनि मध्वादीनामन्यतरेणापि विरुद्धानि । कलमूकतेति कलमूकताऽव्यक्तवचनता । पौष्करादीनां मधुपयोभ्यां सहाभ्यवहारो विरुद्ध, पौ पुष्करपत्ररूपं शाकं, रोहिणी कट्टरोहिणी, धमनीप्रतिचय सिराजग्रन्थि । जातुशाक वशपत्रिका । वैरोधिकत्वादित्य प्रकरणलब्धस्यापि वैरोधिकत्वस्य पुनरभिधानं सामान्योक्ते पाठ्यादिव्याविकर्तृतोपदर्शनार्थम्, एवमन्यत्रापि सामान्येऽपि वैरोधिकत्वमात्राभिधाने वक्तव्यम्[3] । तथाम्लेत्यादौ अम्लग्रहणेन लब्धस्याप्यम्लादीनामभिधानं विशेषविरोधसूचनार्थम् । सर्वग्रहणेनैव द्रवाऽद्रवाम्ले प्राप्ते पुनर्द्रवाद्रववचन 'सर्व' शब्दस्य द्रवाद्रवाम्लस्यास्त्यर्थताप्रतिपादनार्थं[4], भवति हि प्रकरणादेकदेशेऽपि सर्वव्यपदेश, यथा "सर्वान् भोजये"दिति, किंवा, सर्वग्रहणमम्लपाकानामपि व्रीह्यादीनां ग्रहण र्थम् । तृतीययैव सहार्थे लब्धे पुन 'सह' इत्यभिधान केवलाम्लादियुक्तस्यैव विशेषितोपदर्शनार्थम्, तेन, अम्लपय सयोगे, गुडादिसत्वे सति विरुद्धत्व न दुग्धाम्रादीनाम् । वनको वनकोद्रव, पद्मोत्तरिका कुसुम्भ, शार्कर इति मैरेयविशेषणम्; अति वात कोपयतीति वचनेन पित्तकफावल्पं कोपयतीति वो , एवं पित्त चातिकोपयति कफ चातिकोपयतीत्येतयोरपि वाच्यम् । हारिद्रको हरिताल इति ख्यातः । पक्षी बलाका वारुण्या सह विरुद्धा, तथा कुल्माषैश्च बलाका विरुद्धा । एरण्डसीसकावसक्तमिति, सीसको हि भटित्रकरणकाष्ठमुच्यते । तदेवेति हारिद्रमासम् । मत्स्या निस्ताल्यन्ते पच्यन्ते यस्मिन् तन्मत्स्यनिस्तालनम्, किंवा, निस्तालन वसा, जतूकर्णेऽप्युक्तम् "मत्स्यवसासिद्धाः पिप्पल्य." इति । काकमाची मधु चेति सयोगविरुद्धम् । भासो गोष्ठकुक्कुट' ॥ ८६ ॥

भवन्ति चात्र श्लोकाः ।

यत्किञ्चिद्दोषमास्राव्य न निर्हरति कायतः ।
आहारजातं तत्सर्वमहितायोपपद्यते ॥ ८७ ॥

अनुक्तवैरोधिकसंग्रहार्थमाह—यत् किञ्चिदित्यादि । आह्रियत इत्याहारो भेषजमपि, दोषमास्राव्येति दोषानुत्क्लिष्टरूपान् जनयित्वा न निर्हरतीति । अनेन वमनविरेचनद्रव्याणि निराकरोति, तानि हि दोषानास्राव्य निर्हरन्ति ॥ ८७ ॥

यच्चापि देशकालाग्निसात्म्यासात्म्यानिलादिभिः ।
संस्कारतो वीर्यतश्च कोष्ठावस्थाक्रमैरपि ॥ ८८ ॥
परिहारोपचाराभ्यां पाकात्संयोगतोऽपि च ।
विरुद्धं तच्च न हितं हृत्संपद्विधिभिश्च यत् ॥ ८९ ॥
विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादि धन्वनि ।
आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते ॥ ९० ॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम् ।
शीते काले तथोष्णे च कटुकोष्णादिसेवनम् ॥ ९१ ॥
विरुद्धमनले तद्वदन्नपानं चतुर्विधे ।
मधुसर्पिः समधृतं मात्रया तद्विरुध्यते ॥ ९२ ॥
कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम् ।
यत्तत्सात्म्यविरुद्धं तु विरुद्धं त्वनिलादिभिः ॥ ९३ ॥
या समानगुणाभ्यासविरुद्धान्नौषधक्रिया ।
संस्कारतो विरुद्धं तद्यद्भोज्यं विषवद्भवेत् ॥ ९४ ॥
ऐरंडसीसकासक्तं शिखिमांसं तथैव हि ।
विरुद्धं वीर्यतो ज्ञेयं वीर्यतः शीतलात्मकम् ॥
तत्संयोज्योष्णवीर्येण द्रव्येण सह सेव्यते ।
क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्यमभेदनम् ॥

1 गुरुष्वेति पाठः । 2 हारीतकशाकमिति पाठ । 3 एवमन्यत्राऽप्येवं जातीयेषु व्याख्येयमिति शिवदास । 4 प्रतिषेधार्थमिति पाठस्तु न मनोरम ।

1 यवपिष्टगुणोदकसिक्तामीपरिस्विन्नगपूपीकृत कुदीनि मश्लेष- शिवदास । 2 मात्रासात्म्यानिलादिभिरिति पाठ । ...ति शिवदास । ...मनलस्तद्वद्धानुरूप चतुर्विधमिति पाठ. ।

मृदुकोष्ठस्य गुरु च भेदनीयं तथा बहु।
एतत्कोष्ठविरुद्धं तु, विरुद्धं स्यादवस्थया ॥ ९७ ॥
श्रमव्यवायव्यायामसक्तस्यानिलकोपनम्।
निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम् ॥ ९८ ॥
यच्चानुत्सृज्य विण्मूत्रं भुंक्ते यश्चाबुभुक्षितः।
तच्च क्रमविरुद्धं स्याद्यच्चातिक्षुद्वशानुगः ॥ ९९ ॥
परिहारविरुद्धंतु वराहादीन्निषेव्य यत्।
सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते ॥ १०० ॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम्।
अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत्।
संयोगतो विरुद्धं तद्यथाम्लं पयसा सह ॥ १०१ ॥
अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते।
संपद्विरुद्धं तद्विद्यादसंजातरसं तु तत् ॥ १०२ ॥
अतिक्रान्तरसं वापि विपन्नरसमेव वा।
ज्ञेयं विधिविरुद्धंतु भुज्यते निभृतेन यत् ॥ १०३ ॥
तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम्।
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च ॥ १०४

"यच्चापि देशकालाग्नी" त्यादि ग्रन्थं केचित्पठन्ति तद्व्यक्तमेव ॥ ८८–१०४ ॥

स्नेहव्यायामबलिनो विरुद्धं वितथं भवेत्।
पाण्ड्यान्ध्यवीसर्पदकोदराणां
विस्फोटकोन्मादभगन्दराणाम्।
मूर्च्छामदाध्मानगलामयानां
पाण्ड्वामयस्यामविषस्य चैव ॥ १०५ ॥
किलासकुष्ठग्रहणीगदानां
शोफाम्लपित्तज्वरपीनसानाम्।
सन्तानदोषस्य तथैव मृत्यो
र्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥ १०६ ॥

एषां च खलु परेषां च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतिकारा भवन्ति। यथा वमनं विरेचनं च तद्विरोधिनां च द्रव्याणां संशमनार्थमुपयोगस्तथाविधैश्च द्रव्यैः पूर्वमभिसंस्कारः शरीरस्येति ॥ १०७ ॥

पा॰ पाण्ड्यं नपुंसकता, संन्तानदोषो मृतवत्सत्वादि। एतच्च न्यपरधिककथनं विशेषवचनेन बाध्यते; तेन, लशुनस्य क्षीरेण सहा किञ्चिन्न विरोधि, यदुक्तं "साधयेच्छुद्धशुष्कस्य लशुनस्य त्वाच्छोम्। क्षीरोदकेऽष्टगुणिते क्षीरशेषं च पाययेत्"। धाय च लकस्वरसं क्षीरम्" इत्यादिप्रयोगेषून्नेयम्। किंवा, तदनन्तसंयोगादत्र विरोधिनामविरोधः, विरोधिमात्रसंयोगशमुवाच्च सम्भवति। यत्तु मधुन उष्णेन वमनेन संयुक्तस्य नैकस्माच्चिलिशसंयोगेऽविरोधार्थमुक्तमपक्वगमनादि, तन्मधुनो द्रव्यान्तरसंयोगेऽप्युष्णसंबन्धविरोधित्वेन, यतः, विषान्वयं मधु, विषस्य चोष्णं विरोधि। लशुनादीनांतु द्रव्यान्तरा संयोगे सत्येव मेलको विरुद्ध इति शास्त्रवचनादुन्नीयते। तद्विरोधिनामिति पाण्ड्यादिहराणाम्। तथाविधैरिति विरुद्धाहारजन्यव्याधिविरुद्धैः। अभिसंस्कार इति सततोपयोगेन शरीरभावनम्। किंवा, तथाविधैरिति रसायनप्रयोगैः। एतच्चानागतव्याधिचिकित्सितं ज्ञेयम् ॥ १०५–१०७ ॥

भवति चात्र।

विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम्।
वमनं शमनं चैव पूर्वं वा हितसेवनम् ॥ १०८ ॥
मतिरासीन्महर्षीणां या या रसविनिश्चये।
द्रव्याणि गुणकर्मभ्यां द्रव्यसंख्या रसाश्रया ॥ १०९ ॥
कारणं रससंख्याया रसानुरसलक्षणम्।
परादीनां गुणानां च लक्षणानि पृथक्पृथक् ॥ ११० ॥
पंचात्मकानां षट्त्वं च रसानां येन हेतुना।
ऊर्ध्वानुलोमभाजश्च यद्गुणातिशयाद्रसाः ॥ १११ ॥
षण्णां रसानां षट्त्वे च सविभक्ता विभक्तयः।
उद्देशश्चापवादश्च द्रव्याणां गुणकर्मणि ॥ ११२ ॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु।
पाकप्रभावयोर्लिङ्गं वीर्यसंख्याविनिश्चयः ॥ ११३ ॥
षण्णामास्वाद्यमानानां रसानां यत्स्वलक्षणम्।
यद्यद्विरुध्यते यस्माद्येन यत्कारि चैव यत् ॥ ११४ ॥
वैरोधिकनिमित्तानां व्याधीनामौषधं च यत्।
आत्रेयभद्रकाप्यीये तत्सर्वमवदन्मुनिः ॥ ११५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः समाप्तः।

संग्रहे द्रव्यसंख्या रसाश्रया इति "भेदश्चैषामि" त्यादिना, रससंख्या हि परमार्थतो द्रव्यसंख्यैव निर्गुणत्वाद्रसानामित्यर्थः। कारणं रससंख्याया इति "रसानां तत्र योग्यत्वा" दित्यादिना। विभक्तयो भेदाः "तत्र मधुर" इत्यादिना। उद्देशो द्रव्याणां "शीतं वीर्येण" इत्यादिना, अपवादो द्रव्याणाम्, "मधुरं किंचि" दित्यादिना ॥ १०८–११५ ॥

आत्रेयभद्रकाप्यीयः समाप्तः।

---

१ उक्तानि विरुद्धपानगलग्रहाणामिति पाठः।

१ विरुद्धाशनजानित्यादौ प्रतिहन्तीति प्रतिपक्षं संहन्तीति, तेन, कुष्ठादिप्रतिपक्षं विरेचनादिकुष्ठादि हन्ति, एवं वमनशमनयोरपि प्रत्यर्थो व्याख्येयः, पूर्वं वा हितसेवनं पूर्वं महाप्रभावरसायनादिसेवया न भवत्येवंभूता व्याधय इति शिवदासः। २ रसानामिति भाव इति पाठः। ३ गुणकर्मणीति गुणकर्मविषयकद्रव्याणामुद्देशः, स च शीतं वीर्येणेत्यादिनोक्त इति शिवदासः।

## सप्तविंशोऽध्यायः ।

**अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

संप्रति सामान्येनोक्तानां गुणकर्मभ्यां प्रतिव्यक्त्यनुक्तानां प्रतिव्यक्तिप्रायोपयोगिद्रव्यस्य विशिष्टगुणकर्मकथनार्थमन्नपानविधिरध्यायोऽभिधीयते । अत्रोत्पन्नस्य छप्रत्ययस्य लुक् । अन्नाने काठिन्यसामान्यात्खाद्यम्, पाने च द्रवत्वसामान्याल्लेह्यमवरुद्धं ज्ञेयम् । अन्नपानं विधीयते विशिष्टगुणकर्मयोगितया प्रतिपाद्यतेऽनेनेत्यन्नपानविधिः, द्रव्याणां गुणकर्मकथनमेव चान्नपानविधिः, यतः, तद्धि ज्ञात्वाऽन्नपानं विधीयते ॥१॥२॥

**इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणिसंज्ञकानां प्राणमाचक्षते कुशलाः, प्रत्यक्षफलदर्शनात्तदिन्धना ह्यन्तराग्नेः स्थितिस्तत्सत्त्वमूर्जयति, तच्छरीरधातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं विपरीतमहिताय संपद्यते ॥ ३ ॥**

किंतदन्नपानं करोतीत्याह—इष्टेत्यादि[1] । इष्टमभिमतं हितं च, किंवा, इष्टमिति प्रियं हितं च, विरोधि ह्यप्रियम् । हितं तु विधिविहितशब्देनैव प्राप्यते । विधिर्वक्ष्यमाणरसविमाने "तदेतदाहारविधानम्" इत्यादिग्रन्थवाच्यः । तथेन्द्रियोपक्रमणीये च "नारत्नपाणिः" इत्यादिनोक्तं विधानं, तेन विधिना विहितं विधिविहितम् । अत्र वर्णादिषु शब्दाग्रहणमन्नपाने प्रायः शब्दस्याऽविद्यमानत्वात् । वर्णादिषु यद्यत् प्रथममन्नपाने गृह्यते, तत्तत्पूर्वमुक्तम् । रसस्तु स्पर्शस्य पश्चाद्गृह्यमाणोऽपि प्राधान्यख्यापनार्थं स्पर्शस्याग्रे कृतः । प्राणिनामित्यनेनैव लब्धेऽपि 'प्राणिसंज्ञकानाम्' इति वचनं स्थावरप्राणिप्रतिषेधार्थम्, वृक्षादयो हि वनस्पतिवर्गानुकारोपदेशाच्छास्त्रे[2] प्राणिन उक्ताः, नतु लोके प्राणिसंज्ञकाः, किंतर्हि, जङ्गमा एव । इह च मनुष्यस्यैवाऽधिकृतत्वेऽपि सामान्येन सकलप्राणिप्राणहेतुतयाऽऽहारकथनं मनुष्यव्यतिरिक्तेऽपि प्राणिन्याहारस्य प्राणजनकत्वोपदर्शनार्थम् । प्राणमिति प्राणहेतुत्वात् यथा "आयुर्घृतम्" । अथ कथं तत् प्राणमाचक्षत इत्याह—प्रत्यक्षफलदर्शनादिति[3] । प्रत्यक्षेणैव ह्याहारं विधिना कुर्वतां प्राणा अनुवर्त्तन्त इति तथा निराहाराणां प्राणा नह्यवतिष्ठन्त इति, दृश्यत इत्यर्थः, प्रत्यक्षशब्दश्चेह स्फुटप्रमाणे वर्त्तते, यतः प्राणानामन्नकार्यत्वमनुमानगम्यमेव । अन्नकार्यत्व एव प्राणानां हेतुमाह[4]—तदिन्धना इत्यादिना । अग्निहेतुश्च प्राणहेतुः, ततोऽन्नं प्राणा इति भावः, उक्तं हि

१ अन्नपानकथने उपपत्तिमभिधातुं तत्स्वरूपमाह इष्टवर्णेत्यादीति शिवदासः । २ वनस्पतिप्रकारोपदेशादिति पाठः । ३ प्राणहेतुत्वे हेतुमाह प्रत्यक्षफलदर्शनादिति, अन्वयव्यतिरेकसहकृतेन प्रत्यक्षेण विधिविहिताहारस्य प्राणरूपफलदर्शनात् प्राणहेतुत्वमित्यर्थ इति शिवदासः । ४ हेत्वन्तरमाह तदिन्धना ह्यन्तराग्नेः स्थितिरिति शिवदासः ।

"बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः" । किंवा, पूर्वमन्नपानस्य प्राणहेतुत्वमुक्तम् । 'तदिन्धना हि' इत्यादिनाऽग्निहेतुत्वं वर्ण्यते । सत्त्वमूर्जयतीति मनोबलं करोति । धातुव्यूहो धातुसङ्घातः । विपरीतं अविधिस्थितम् ॥ ३ ॥

**तस्माद्धिताहितावबोधनार्थमन्नपानविधिमखिलेनोपदेक्ष्यामः, अग्निवेश तत्स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु सन्दधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं बृंहयति, रसः प्रीणयति, सुरा जर्जरीकरोति, शीधुरवधमयति, द्राक्षासवो दीपयति, फाणितमाचिनोति, दधि शोफं जनयति, पिण्याकशाकं ग्लपयति, प्रभूतान्तर्मलो माषसूपः, दृष्टिशुक्रघ्नः क्षारः, प्रायः पित्तलमम्लमन्यत्र दाडिमामलकात्, प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः पुराणाच्च शालियवगोधूमात् । प्रायः सर्वं तिक्तं वातलमवृष्यं चान्यत्र वेत्राग्रपटोलात्, प्रायः कटुकं वातलमवृष्यं चान्यत्र पिप्पलीविश्वभेषजात् ॥ ४ ॥**

अन्नपानं विधीयते येन ज्ञानेन तं विधिं द्रव्यगुणकर्मरूपम्, तथा, चरशरीरावयवादिरूपं चाखिलेन कात्स्न्र्येनोपदेक्ष्यामः । यद्यपि चेह द्रव्यं प्रतिगुणकर्मभ्यां न निर्देक्ष्यति, वक्ष्यति हि "अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिक" इति, तथाप्यनुक्तानां द्रव्याणामपि चरशरीरावयवाद्युपदेशेन, तथा, पूर्वाध्यायोक्तपार्थिवादिद्रव्यगुणकथनेन च तद्विधानामप्युक्तं स्यादित्यत उक्तं 'अखिलेन' इति, वक्ष्यति हि "यथा नानौषधं किंचिद्देशजानां वचो यथा । द्रव्यं तु तत्तथा वाच्यमनुक्तमिह यद्भवेत्" तथा, "चरः शरीरावयव" इत्यादि । किंवा, विधिशब्दोऽशितपीतलीढखादितप्रकारवाची, तेन चाशितादयः सर्वएवाऽखिलेन वाच्याः, तत्कारणभूतानि तु द्रव्याणि रक्तशाल्यादीन्येकदेशेनोक्तानि, अतो वक्ष्यति "अन्नपानैकदेशोऽयमुक्त" इति । अन्नपाने च वक्तव्ये यद्द्रव्यं प्राय उपयुज्यते, तस्य सामान्यगुणमभिधाय वर्ग-संग्रहेण[2] गुणमुपदेक्ष्यति । उदकाभिधानं चाग्रे कृतमुदकस्यान्ने पाने च व्याप्रियमाणत्वात् । तदित्युदाहरणम्, किंवा स स्वभावो यस्य स तत्स्वभावस्तस्मात् क्लेदनस्वभावादित्यर्थः । यद्यपि "जलमाश्वासकराणाम्" "जलं स्तम्भनानाम्" इत्युक्तम्, तथापि इहानुक्तक्लेदकर्माद्यभिधानार्थं पुनरुच्यते । इह जललवणादीनां यत्कर्मोच्यते तत्तेषामितरकर्मभ्यः प्रधानं ज्ञेयम्, अग्न्याधिकारे तु तत्कर्मकर्त्तृत्वद्रव्यान्तरप्रशस्तता ज्ञेया । क्षारः पचन्तमग्निं पाचयति, तेन पाचयतीति 'हेतौ णिच्' । स्नेहयतीत्यादौ तु "तत्करोति तदाचष्टे" इति णिच् । सन्दधातीति विश्लिष्टानि त्वङ्मांसादीनि संश्लेष-

१ विधिमिति तत्तद्विशिष्टकर्मनिबन्धनं प्रकारमिति शिवदासः । २ वर्गसंश्रयेणेति पाठः ।

यति । रसो मांसरसः । प्रीणयतीति क्षीणान्पुष्णाति नलति-वृद्धं करोति, तेन, मांसकर्मणा वृंहणेन समं नैक्यम्; जर्जरीकरोति श्लथमांसाद्युपचयं करोति, यदुक्तम् हारीते "सुरा जर्जरीकरोत्यसृङ्मेदोबाहुल्या"दिति, तथा तत्रैवोक्तम् "सुरा कृशादीनां पुष्ट्यर्थम्" इति। अवधमयतीति विलिखतीत्यर्थः। अनेकार्थत्वाद्धातूनाम्, वचनं हि "लेखनः शीतरसिक" इति, तथा हारीतेऽप्युक्तं "शीधुरवधमयति वाग्वह्निप्रबोधनादिति;" आचिनोति दोषानिति शेषः, तन्त्रान्तरवचनं हि "वातपित्त-कफांस्तस्मादाचिनोति च फाणित"मिति। पिण्याकस्तिलकल्कः, निघण्टुकारस्त्वाह "पिण्याको हरितशिग्रुः"। ग्लपयति हर्ष-क्षयं करोति; प्रभूतान्तर्मलस्य पुरीषस्य कर्त्ता प्रभूतान्तर्मलः, यद्यपि "माषो बहुमलः" इति वक्ष्यति, तथापि, माषविकृतेः सूपस्येह गुणकथनम्, तेन न पुनरुक्तम्। न चावश्यं प्रकृति-धर्मो विकृतिमनुगच्छति, यतः, सक्तूनां सिद्धपिण्डिकागुरवः स्युः। तस्मान्माषविकृतावपि मलवृद्धिदर्शनार्थमेतदभिधानम्। क्षारस्य पाचनत्वगुणोऽभिहितः, इह तु, 'दृष्टिशुक्रघ्नत्वं दोष' इति पृथगुच्यते। प्रायः पित्तलमिति विशेषेणाऽन्येभ्यो लवणकर्त्तृकेभ्योऽम्लं पित्तलम्। एवमन्यत्रापि 'प्रायः' शब्दो विशेषार्थो वाच्यः, किंवा 'प्रायः' शब्दोऽम्लेन संबध्यते। अत्र पित्तमादावम्लजन्यतयोक्तं दोषप्राधान्यस्याऽनियतत्वाद्, उक्तं हि "न ते पृथक् पित्तकफानिलेभ्य" इति, तथा, "समपित्त-कफानिला" इति, किंवा, पित्तोष्मा वह्निः, सचेहान्नपानपचने प्रधानम्, यदुक्तम् "यदन्नं देहधात्वोजोबलवर्णादिपोषकम्। तत्राग्निर्हेतुराहारान्नह्यपक्काद्रसादयः" इति। तेनेह, वह्निकार-णपित्तजनकमेवादावुच्यते, यतश्च पित्तजनकमग्रे वक्तव्यम्, अतो रसप्रधानमपि मधुरो नादावुक्तः। मधुन इति विच्छेद-पाठेन नवाऽनवस्य मधुनः कफाऽकर्त्तृत्वं दर्शयति। इह च षड्रसस्यैव कथनमेतत्, त्रयेणैवाऽनुक्तानां लवणतिक्तकषाया-णामपि पाकद्वारा ग्रहणात्, यतः, लवणः पाकात् प्रायो मधुरः, तिक्तकषायौ कटुकौ पाकतो भवतः। 'प्रायः सर्वं तिक्त'मित्यादिस्तु ग्रन्थो हारीतीयः, इह केनाऽपि प्रमादाल्लिखितः ॥ ४ ॥

**परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः।**
**शूकधान्यशमीधान्यमांसशाकफलाश्रयान्।**
**वर्गान्हरितमद्याम्बुगोरसेक्षुविकारिकान् ॥ ५ ॥**
**दश द्वौ चापरौ वर्गौ कृतान्नाहारयोगिनाम्।**
**रसवीर्यविपाकैश्च प्रभावैश्चोपदेक्ष्यते ॥ ६ ॥**

वर्गेण शूकधान्यादीनां संग्रह आहारद्रव्याणां वर्गसंग्रहः। रसवीर्येत्यादौ प्रभावोऽल्पविषयतया पृथक्पठितः, रसादिनि-र्देशश्च यथायोग्यतया ज्ञेयः, तेन न सर्वद्रव्ये सर्वरसाद्यभि-धानं भविष्यति। अत्र शूकधान्यमादावाहारप्रधानत्वात्, शूक-वन्ति धान्यानि शूकधान्यानि ॥ ५ ॥ ६ ॥

**रक्तशालिर्महाशालिः कलमः शकुनाहृतः।**
**तूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्गुलौ ॥ ७ ॥**
**सुगन्धिकालोहवालाः शारिवाख्याः प्रमोदकाः।**
**पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ ८ ॥**
**शीता रसे विपाके च मधुराः स्वल्पमारुताः।**
**बद्धाल्पवर्चसः स्निग्धा वृंहणाः शुक्रमूत्रलाः ॥ ९ ॥**
**रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः।**
**महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥ १० ॥**

इह च द्रव्यनामानि नानादेशप्रसिद्धानि, तेन, नामज्ञाने सामर्थ्यं तथाभूतं नास्त्येवाऽन्येषामपि टीकाकृताम्, तेन-देशान्तरेभ्यो नाम प्रायशो ज्ञेयम्, यत्तु प्रचरति गौडे, तल्ले-खिष्यामः अन्यदेशप्रसिद्धं च किंचित्। कलमो वेदाग्रहारेषु स्वनामप्रसिद्धः, शकुनाहृतः अवन्त्यां वक्रनाम्ना प्रसिद्धः। रक्त-शालिः प्रसिद्ध एव, महाशालिर्मगधे प्रसिद्धः, अत्र शालिर्है-

१ नत्वतिवृंहणत्वं करोतीति पाठः। २ जर्जरीकरोतीति मांसादि शिथिलीकरोतीत्यर्थ इति शिवदासः। ३ अवधमयतीति कृशीकरोतीति शिवदासः। ४ पिण्याकशाकमिति शाकविशेषः। अन्ये तु तिल-कल्कसंस्कृतं शाकमाहुरिति शिवदासः। ५ प्राय इत्यादौ 'प्रायः' शब्देन किंचिदम्लं न पित्तलमिति बोधयति, एतदेवाह "अन्यत्र दाडि-मामलकादि"ति किंवा, 'प्रायः' शब्दो विशेषार्थः, तेन, अन्येभ्यो लवणादिभ्योऽम्लं विशेषेण पित्तलमित्यर्थः, अत्र भट्टारहरिश्चन्द्रेण दाडिमग्रहणं निरस्य "अन्यत्रामलकादि"त्येव पुरस्कृतम्। सुश्रुतेनापि "नाति पित्तलं दाडिम"मित्युक्तं, तेन, ईषत्पित्तकर्तृत्वं दाडिमस्यायाति, अन्ये तु "अम्लं पित्तकरं प्रायो दाडिमामलकादृते" इति वाग्भटदर्शनात्। "नाति पित्तलम्" इत्यत्र 'नापि पित्तलम्' इति पठित्वा अम्लं दाडिमं पित्तं न करोति न च शमयतीति व्याचक्षते। किंतु, अत्रापि वक्ष्यमाणगुणे "कफपित्ताऽविरोधि" इत्युक्तम्, तत्राम्लं पित्ताऽविरोधि मधुरन्तु कफाविरोधीति, तेनाऽत्रापि दाडिमपाठो न प्रतिक्षेपमर्हति। प्रायः श्लेष्मलमित्यादावपि 'प्रायः' शब्दः पूर्ववदेव व्याख्येय इति शिवदासः।

१ कलमोऽन्तर्वेद्यां कलविरिति ख्यात इति डल्लणः कलमी मग-धादिषु प्रसिद्धः, स एव महान्तण्डुल इति काश्मीरेष्विरुणदत्तः। शकुनाऽऽहृतः उत्तरकुरुभ्यो हंसैरानीतः,अवन्त्यां वक्रनाम्ना प्रसिद्धः, मगधदेशे तु पाशक इति। वृद्धवैद्यास्तु—द्वीपान्तरात्समानीतो गरु-डेन महात्मना। शकुनाऽऽहृतः, स शालिः स्याद्गरुडापरनामक इत्याहुरिति सुश्रुतटीकायां डल्लणाचार्यः। अरुणदत्तस्तु अष्टाङ्गहृ-दयटीकायां शकुनाऽऽहृतो यो मगधेषु बुद्धोत्पादकाले उत्तरकुरुभ्यो हंसैरानीतो मृगारिमाला विशाखाख्यया वापितो विस्तारं गतः, अतएव शकुनाऽऽहृत इत्यन्वर्थास्य संज्ञेत्याह। तूर्णकश्च काश्मीरेषु आजव इति प्रसिद्ध इत्यरुणदत्तः। दीर्घशूकः, दीर्घा शूका यस्य स दीर्घशूक इति डल्लणः। सुगन्धिको गन्धशालिसंज्ञया जालंधरमग-धादिषु ख्यातो देवशालिरित्यपरनामेत्यरुणदत्तः। ये चान्ये तिरोहि-तार्थाः गौरादयः ते नानादेशेषु कर्षकादिभ्योऽवधार्याः।

नन्तं धान्यम्, षष्टिकादयश्च ग्रैष्मिकाः, व्रीहयः शारदा इति व्यवस्था। रक्तशाल्यादीनां मधुरपाकित्वे वद्धवर्चस्त्वं प्रभावादेव। महांस्तस्याऽन्विति रक्तशालेरनु, तेन, रक्तशालिगुणान्महाशालेर्मनागल्पाः, एवं तस्याऽनुकलम इत्यत्रापि वाच्यम्, तस्येति महाशालेः, ततः परं इति शकुनाहृतादयः, इत्युत्तरोत्तरमल्पगुणा इत्यर्थः ॥ ७–१० ॥

**यवका हायनाः पांसुवाप्यो नैषधकादयः ।**
**शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः ॥ ११ ॥**
**शीतः स्निग्धोऽगुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः ।**
**षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥ १२ ॥**
**वरकोद्दालकौ चीनशारदोज्ज्वलदर्दुराः ।**
**गन्धनाः कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥१३॥**
**मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।**
**बहुमूत्रपुरीषोष्णस्त्रिदोषस्त्वेव पाटलः ॥ १४ ॥**

गुणागुणैरिति शालीनां, रक्तशाल्यादीनां ये गुणास्तृष्णाघ्नत्वत्रिमलापहत्वादयः, तेषामगुणैस्तद्गुणविपरीतैर्दोषैर्यवकादयोऽनुकारं कुर्वन्ति, ततश्च यवकास्तृष्णात्रिमलादिकरा इति स्युः । गुणशब्दश्चेह प्रशंसायाम्[2] । षष्टिकगुणेऽकारप्रश्लेषाद्गुरु-

१ व्यवस्थिता इति पाठः । २ यवका इत्यादि । गुणाऽगुणैरिति गुणदोषैः, तेन, यवकादयः शालयः गुणाऽगुणैः शालीनां रक्तशाल्यादीनामनुकारं कुर्वन्ति, तेन शालीनां ये गुणा दोषाश्च ते यवकादीनामपीत्यर्थः । इदं तु न मनोरमम्, वाग्भटे यवकादीनां दोषलत्वेनाम्लपाकत्वेन चोक्तत्वात्, तस्मात् शालीनां ये गुणास्त्रिमलापहत्वतृष्णाघ्नत्वादयस्तेषामगुणैस्तद्विपरीतैर्दोषैर्यवकादयोऽनुकारं कुर्वन्ति, ततश्च यवकादयस्तृष्णात्रिमलादिकारका भवन्तीत्यर्थः। ननु शाल्यादीनामुपयोगस्तण्डुलभक्तपेयादिप्रकारेण परं भवति, ते च प्रकाराः पृथगेव गुणतो निर्देष्टव्यास्तत्प्रकृतिगुणसहिता एव विकृतिगुणाः कार्यकराः, यतः, तण्डुलभक्तपेयादयो रक्तशाल्यादिप्रकृतिगुणानुगता एव, नहि, रक्तशालिभक्तपेयालाजादयो यथा लघ्वादिगुणास्तथा व्रीहिकृतभक्तपेयादयः, किंतु प्रकृतिगुणानुगतरक्तशालिकृतभक्ताद्यपेक्षया गुरव एव, तेन, यत्र प्रकृतिसमानो विकृतिगुणस्तत्र गुणोत्कर्षः यत्र प्रकृतिगुणविपरीतो विकृतिगुणस्तत्र गुणाऽपकर्षः यथा व्रीहेर्गुरोर्लघवो लाजाः, अत्र लाजकरणेनाल्पमेव लघुत्वं क्रियते । यत्र तु प्रकृतिगुणैर्न समानो नापि विपरीतो विकृतेर्गुणः यथा दध्नोऽम्लत्वं मण्डस्य वा दीपनत्वम्, तत्र द्वयोरपि प्रकृतिविकृतिगुणयोः पृथगेव कार्यकारित्वमुत्सर्गतः । कचित्तु यद्विकृतेर्बलीयस्त्वेन प्रकृतिगुणाभिभवकत्वम्, यथा शुक्ताऽऽसुताऽऽर्द्रककरीरादिषु, तत्, तदासुतं तद्वदिति विशेषागमादेव प्रतीयते, तेन, तत्र प्रकृतिगुणानां दुर्बलत्वम् । यदपि प्रकृतिगुणोपमर्देन तद्विरुद्धकार्यकर्तृत्वं विकृतेर्यथा कांस्यभाजने दशरात्रस्थितस्य सर्पिषो मारकत्वमित्यादि, तदपवादरूपागमवेद्यमेव, तेन यत्नोत्सर्गभूतशास्त्रार्थापवादः, तत्रोपदेशं करोत्येव शास्त्रकार इति प्रकृतिविकृतिपृथगभिधानं युक्तमेव, अयं च न्याय एवंजातीये सर्वत्र मांसादिषु ज्ञेय इति शिवदासः।

रिति बोद्धव्यम्, मात्राशितीये षष्टिको लघुः पठितः । ततोऽन्विति गौरषष्टिकादल्पान्तरगुणः । वरकोद्दालकादयः षष्टिकविशेषाः । केचित्कुधान्यानि वरकादीनि वदन्ति । व्रीहिरिति शारदाशुधान्यस्य संज्ञा । पाटलो व्रीहिविशेषः तन्त्रान्तरे पठ्यते "त्रिदोषस्त्वेव पाटलः" इति, सुश्रुते पाटलशब्दे नैतद्व्यतिरिक्तो धान्यविशेषो ज्ञेयः, तेन, तद्गुणकथनेन नेह विरोधः ॥ ११—१४ ॥

**सकोरदूषः श्यामाकः कषायमधुरो लघुः ।**
**वातलः कफपित्तघ्नः शीतसंग्राहिशोषणः ॥ १५ ॥**

कोरदूषादयः कुधान्यविशेषाः, कोरदूषः कोद्रवः, कोरदूषस्य केवलस्य श्लेष्मपित्तघ्नत्वं, तेन, यदुक्तं रक्तपित्तनिदाने "यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते" इत्यादिना पित्तकर्तृत्वम् कोरदूषस्य, तत्तत्रैवोक्तनिष्पावकाञ्जिकादियुक्तस्य संयोगमहिम्ना बोद्धव्यम् । श्यामाकादयोऽपि तृणधान्यविशेषाः ॥ १५ ॥

**हस्तिश्यामाकनीवारतोयपर्णीगवेधुकाः ।**
**प्रशातिकाम्भःश्यामाकलौहित्याणुप्रियङ्गवः ॥ १६ ॥**
**मुकुन्दो[2] झिण्टिगर्मुटी चारुकवरकास्तथा ।**
**शिविरोत्कटजूर्णाह्वाः श्यामाकसदृशा गुणैः ॥१७॥**

हस्तिश्यामाकः श्यामाकभेद एव, नीवार ओडिका, गवेधुको घुलंचः स ग्राम्यारण्यभेदेन द्विविधः, प्रशातिका ओडिकैव स्थलजा रक्तशूका, अम्भःश्यामाका जलजा ओडिका लोके झरा इत्युच्यते, प्रियङ्गुः कायनीति प्रसिद्धा, मुकुन्दो वाकसतृण इति, चारुकः शाणबीजं, वरकः सामबीजम्, शिविरस्तीरभुक्तौ[4] सिद्धक इत्युच्यते, जूर्णाह्वो जोनार इति ख्यातः ॥ १६ ॥ १७ ॥

**रूक्षः शीतो गुरुः स्वादुर्बहुवातशकृद्यवः ।**
**स्थैर्यकृत्सकषायश्च बल्यः श्लेष्मविकारनुत् ॥ १८ ॥**
**रूक्षः कषायानुरसो मधुरः कफपित्तहा ।**
**मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥ १९ ॥**

यवस्य गुरोरपि बहुवातत्वं रूक्षत्वात्, किंवा, सुश्रुते यवो

१ अणुश्चीनः, चिना इति लोके । २ मुद्गन्ध इति पाठः । ३ वरकः वरु इति लोके इति सु. टी. ङः । ४ तीरभुक्तौ विदेहदेशे इति शिवदासः । ५ सकषायश्चेति कषायस्य स्वादुत्वापेक्षया हीनताऽवबोधार्थं उपसर्जनार्थं सहशब्दः प्रयुक्त इति ज्ञेयम् । ६ किंवा, सुश्रुते यवो लघुः पठितः तेन, अत्राप्यकारप्रश्लेषेणाऽगुरुरिति पाठोऽमन्तव्यः गुरुत्वप्रतिज्ञानार्थमीषदर्थे नञ् प्रश्लेषयन्ति, अतएव लघुरित्यसन्दिग्धमपि न पठितम्, तथाप्येतदर्थमेवाऽसन्दिग्धार्थमेवाऽसन्दिग्धमपि "लघुपाकः" इति न कृतम् । अन्येतु गुरुगुणस्याऽपि यवस्य कटुविपाकित्वं द्रव्यप्रभावादेव समर्थनीयमित्याहुः । सकषाय ईषत्कषायः, बल्यत्वंच स्रोतोविशुद्धिकरत्वेन सम्यग्रससंचारेणेष्टम्, न तु देहस्योपचयकारकत्वेन रौक्ष्यादिधर्मयोगाद्यवस्येति शिवदासः।

लघुः पठितः, तेन, अत्राप्यगुरुरिति मन्तव्यम्, वल्यं च स्रोतः-शुद्धिकरत्वात्प्रभावाद्वा । अस्य च शीतमधुरकषायत्वेनाऽनुक्त-मपि पित्तहन्तृत्वं लभ्यत एव, तेन, सुश्रुते "कफपित्तहन्ता" इत्युक्तमुपपन्नम् ॥ १८ ॥ १९ ॥

**सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः ।**
**जीवनो बृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥२०॥**
**नान्दीमुखी मधुली च मधुरस्निग्धशीतले ।**
**इत्ययं शूकधान्यानां पूर्वो वर्गः समाप्यते ॥ २१ ॥**

**इति शूकधान्यवर्गः ।**

गोधूमस्य स्वादुशीतस्निग्धादिगुणोपयोगाच्छ्लेष्मकर्तृत्वं भव-त्येव, अतएव सुश्रुते "श्लेष्मकर" इत्युक्तम् । यत्तु वसन्ते कफप्रधाने यवगोधूमभोजनं इत्युक्तं तत्पुराणगोधूमाभिप्रायेण। पुराणश्च गोधूमः कफं न करोतीत्युक्तमेव " प्रायः श्लेष्मलं मधुरम् " इत्यादिना ग्रन्थेनाऽत्रैवाऽध्याये[1] । नान्दी-मुखी यविका, मधुली गोधूमभेदः । इत्ययमत्र 'इति' प्रकारार्थः । समाप्त इति वक्तव्ये समाप्यत इति यत्करोति, तेन, ज्ञापयति यत् बहुद्रव्यत्वान्नायं समाप्तो गुणः, किंतु यथाकथंचित् प्रसिद्धगुणकथनेन समाप्यते । एवमन्यत्रापि पष्ठो वर्गः समाप्यत इत्यादौ व्याख्येयम् ॥ २०—२१ ॥

**कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः ।**
**विशदः श्लेष्मपित्तघ्नो मुद्गः सूप्योत्तमो मतः ॥२२॥**
**वृष्यः परं वातहरः स्निग्धोष्णमधुरो गुरुः ।**
**वल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥२३॥**

धान्यत्वेन शमीधान्यवर्गे निरूपयितव्ये प्रधानत्वाद् मुद्गो निरुच्यते, सूप्यं सूपयोग्यं शमीधान्यं, तत्रोत्तमः सूप्योत्तमः[3] वृष्य इत्यादिमाषगुणे स्निग्धोष्णः मधुरत्वादिगुणयोगादेव वात-हरत्वे लब्धे पुनस्तदभिधानं विशेषवातहन्तृत्वप्रतिपादनार्थम्। एवमन्यत्राप्येवंजातीये व्याख्येयम्, पुंस्त्वं शुक्रम् । शीघ्र-मितिवचनेन शुक्रस्रुतिकरत्वलक्षणमपि वृष्यत्वं माषस्य दर्शयति शुक्रस्रुतिकरणं च वृष्यशब्देनोच्यत एव, वचनं हि "शुक्रस्रुति-करं किंचित् किंचित् शुक्रविवर्द्धनं । स्रुतिवृद्धिकरं किंचित् त्रि-विधं वृष्यमुच्यते" । तदेवं संपूर्णवृष्यत्वं माषे बोद्धव्यम् ॥ २२ ॥ २३ ॥

**राजमाषः सरो रुच्यः कफशुक्राम्लपित्तकृत्[1]**
**तत्स्वादुर्वातलो रूक्षः कषायो विशदो गुरुः ॥ २४ ॥**
**उष्णाः कषायाः पाकेऽम्लाः कफशुक्राऽनिलापहाः।**
**कुलत्था ग्राहिणः कासहिक्काश्वासार्शसां हिताः२५॥**

राजमाषगुणकथने तत्स्वादुरिति माषवत्स्वादुः, किंवा, रूक्षश्चेत्यादि पाठान्तरम्[2] उष्णइत्यादिना कुलत्थगुणः, कुल-त्थश्च शुक्लकृष्णचित्रलोहितभेदेन चतुर्विधो भवति, तथा ग्राम्य-वन्यभेदेन च द्विविधोऽपि, अतएव तन्त्रान्तरे " वन्यकुलत्थ-स्तद्वच्च विशेषान्नेत्ररोगनुदि"त्युक्तम् ॥ २४ ॥ २५ ॥

**मधुरामधुराः पाके ग्राहिणो रूक्षशीतलाः ।**
**मकुष्ठकाः[3] प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥ २६ ॥**
**चणकाश्च मसूराश्च खण्डिकाः सहरेणवः ।**
**लघवः शीतमधुराः सकषाया विरूक्षणाः ।**
**पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ॥ २७ ॥**
**तेषां मसूरः संग्राही कलायो वातलः परः ।**
**स्निग्धोष्णमधुरस्तीक्ष्णः कषायः कटुकस्तिलः ।२८।**
**त्वच्यः केश्यश्च वल्यश्च वातघ्नः कफपित्तकृत् ॥**
**गुर्व्योऽथ मधुराऽशीता वलघ्न्यो रूक्षणात्मिकाः ।**
**सस्नेहा वलिभिर्भोज्या विविधाः शिंविजातयः ॥२९॥**

---

१ अत्र गोधूमस्य स्वादुशीतस्निग्धादिगुणयोगाच्छ्लेष्मकर्तृत्वं ज्ञेयम् अतएव सुश्रुते "श्लेष्मकरः" इत्युक्तम् । अन्ये तु " चन्दनाऽगुरुदि-ग्धाङ्गो यवगोधूमभोजनः" इति वसन्ते गोधूमस्य विधानात् श्लेष्मका-रित्वमस्याऽयुक्तमिति मन्यमानाः, सुश्रुते "श्लेष्मकरः" इत्यस्य स्थाने " शोफहरः" इति पठन्ति । तत्तु न सम्यग्, गोधूमगुण-पर्यालोचनया कफकर्तृत्वस्यैव युक्तत्वात्, वसन्तस्यादानमध्यत्वेन वातपित्तानुबन्धात् स्निग्धशीतस्याऽपि गोधूमस्य तत्रोपयोगोपि न विरुध्यते । किंवा, गोधूमोऽत्र पुराणोऽभिहितः, स च न कफकरः, यदुक्तं "मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते । मुद्गाद्गोधूमतः क्षौद्रात् सिताया जाङ्गलाऽऽमिषाविति" अतएव वसन्तचर्यायां वाग्भ-टेन 'पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभु' गित्युक्तम्, अन्ये तु, आदान-मध्यत्वेन यथा चन्दनाऽगुरुभ्यां मिलित्वाऽनुलेपः, तथा यवगोधूम-योर्यथायथं वातपित्तप्रत्यनीकत्वान्मिलितयोरेवोपयोग इत्याहुरिति शिव-दासः । २ श्लेष्मपित्तप्रशमन इति पाठः । ३ सूप्यं सूपयोग्यं शमीधान्यं तत्रोत्तमः श्रेष्ठ इत्यर्थः, अस्य च कषायरूक्षत्वादिना किंचिद्वातकोपकत्वं ज्ञेयम्, अत एव वाग्भटेऽपि "मुद्गोऽल्पचलः" इत्युक्तं अल्पचलोऽल्पवात इत्यर्थः, सुश्रुतेऽपि नात्यर्थं वातल इत्युक्तमिति शिवदासः ।

१ रूक्षश्चैव कषायश्च वातलः श्लेष्मपित्तहा । विष्टम्भी चाप्यवृ-ष्यश्च राजमाषः प्रकीर्त्तित इति पाठन्तरम् । २ राजमाषगुणमाह राजमाष इति, सरति जलक्षिप्ततैलवदाशयं व्याप्नोतीति सरः, सरत्वं हि स्थिरविपरीतगुणः, अयं च गुणो जलबहुलस्यैव द्रव्यस्य भवति, तदुक्तं "शीतस्निग्धमृदुस्तिमितसरपिच्छिलमाप्यमिति । तत्-स्वादुरिति तयो रसपाकयोः स्वादुः, उक्तं हि सुश्रुते "कषायभावान्न पुरीषभेदो न मूत्रलो नैव कफस्य कर्त्ता। स्वादुर्विपाके मधुरोऽलसान्द्रः सन्तर्पणः स्तन्यरुचिप्रदश्च" । अलसान्द्रो राजमाष इति चक्रादयः । अस्य च विपाके मधुरस्यापि प्रभावादेव बद्धविण्मूत्रवत्त्वं कफहारित्वम-वृष्यत्वं चेति गयदासः । अन्ये तु तत्स्वादुरिति माषवत्स्वादुरित्याहुः, ये तु, सर इत्यस्य वर्चोभेदार्थत्वं वर्णयन्ति, तन्मते सुश्रुतविरोधोऽ-परिहार्य इति शिवदासः । ३ मुद्गष्टका इति पाठः । मकुष्ठो वनमुद्गः स्यान्मकुष्टकमुकुष्टकाविति भावप्रकाशः ।

**शिंबी रूक्षा कषाया च कोष्ठे वातप्रकोपिनी ।**
**न च वृष्या न चक्षुष्या विष्टभ्य च विपच्यते ॥३०॥**

मुकुष्टको मोठ इति ख्यातः । चणकः प्रसिद्धः । खण्डिका त्रिपुटकलायः, हरेणुर्वर्तुलकलायः । कलायो वातल इति त्रिपुटकलायः । तिलगुणो यद्यपि विशेषेण नोक्तः, तथापि प्रधाने कृष्णतिले ज्ञेयः, उक्तं हि सुश्रुते "तिलेषु सर्वेष्वसितः प्रधानः, मध्यः सितो हीनतरास्ततोऽन्ये" इति[1] विविधाः शिम्बीजातय इति, कृष्णपीतरक्तश्वेतकशिम्बीभेदा इत्यर्थः । शिम्बी रूक्षेत्यादि केचित्पठन्ति[2] ॥ २६—३० ॥

**आढकी कफपित्तघ्नी वातला, कफवातनुत् ।**
**अवल्गुजः सैडगजो निष्पावा वातपित्तलाः ॥ ३१ ॥**
**काकाण्डोमात्मगुप्तानां माषवत्फलमादिशेत् ।**
**द्वितीयोऽयं शमीधान्यवर्गः प्रोक्तो महर्षिणा ॥ ३२ ॥**

आढकी तुवरी, वातलेतिच्छेदः । कफवातनुदित्यवल्गुजैडगजयोर्बीजस्य गुणः । निष्पावो[3] वल्लः । काकाण्डः शूकरशिम्बिः[4], उमा अतसी, ऊर्णापाठे तस्यैवोर्णा । शमीधान्यवर्ग इति शमी शिम्बिस्तदन्तर्गतं धान्यम् ॥ ३१ ॥ ३२ ॥

**इति शमीधान्यवर्गः ।**

**गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।**
**वृको व्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिकाः ॥ ३३ ॥**
**लोपाको जम्बुकः श्येनो वान्तादश्चास(ष) वायसौ ।**
**शशघ्नी मधुहा भासो गृध्रोलूककुलिङ्गकाः ॥ ३४ ॥**

सूप्यानन्तरं मांसस्य व्यंजनत्वे प्राधान्यात् मांसवर्गाभिधानम् । खरो गर्दभः, अश्वतरो वेगसरः, स चाऽश्वायां खराज्जातः । द्वीपिश्चित्रव्याघ्रः, ऋक्षो भल्लूकः, वृकः कुक्कुरानुकारी पशुशत्रुः, तरक्षुर्व्याघ्रभेदः तरच्छ इति ख्यातः । बभ्रुरतिलोमशः कुक्कुरः पर्वतोपकण्ठे भवति, केचिद्बृहन्नकुलमाहुः । लोपाकः स्वल्पशृगालो महालाङ्गूलः, श्येनः, पक्षी प्रसिद्धः, वान्तादः कुक्कुरः, चासः ( चाषः ) कनकवायस इति ख्यातः शशघ्नी पाशिरिति ख्याता, भासो भस्मवर्णपक्षी । शिखावान् प्रसहादः कुलिङ्गः कौलचटकः ॥ ३३–३४ ॥

**धूमीका कुररश्चेति प्रसहा मृगपक्षिणः ।**
**श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुली मृगः ॥३५॥**
**कूर्चीका चिल्लटो भेको गोधा शल्लकगांडकौ ।**
**कदली नकुलः श्वाविदिति भूमिशयाः स्मृताः ॥३६**

काकुलीमृगो मालुयासर्प इति ख्यातः, तस्य श्वेत इत्यादयश्चत्वारो भेदाः । कूर्चीका सङ्कुचः । चिल्लटश्चियारः, शल्लको महाशल्लकः, शल इति ख्यातः । गाण्डको गोधाभेदः कदली कदलीहट इति ख्यातः श्वावित्सेर्जक इति ख्यातः ॥३५ ॥ ३६ ॥

**सृमरश्चमरः खड्गो महिषो गवयो गजः ।**
**न्यंकुर्वराहश्चानूपाँ मृगाः सर्वे रुरुस्तथा ॥ ३७ ॥**

सृमरो महाशूकरः, चमरः केशमृगयुः, खड्गो गण्डकः, गवयो गवाकारः, न्यङ्कुर्हरिणः, रुरुर्बहुशृङ्गो हरिणः ॥ ३७ ॥

**कूर्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः ।**
**शुक्तिशङ्खोद्रकुंभीरचुलुकीमकरादयः ॥ ३८ ॥**
**इति वारिशयाः प्रोक्ता वक्ष्यन्ते वारिचारिणः ।**

शिशुमारो गोतुण्डनक्रः, तिमिङ्गिलः, सामुद्रो महामत्स्यः शुक्तिर्मुक्ताप्रभवो जन्तुः, उद्रो जलविडालः, कुम्भीरो घटिकावान्, चुलुकी शुशु इति ख्यातः, शिशुमारादीनां मत्स्येन ग्रहणे प्राप्ते विशेषव्यवहारार्थं पुनरभिधानम् ॥ ३८ ॥

---

१ स्निग्ध इत्यादि तिलगुणः मधुर इति रसेन पाकेन च ज्ञेयः, उक्तं हि "ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः । तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपनएव पथ्य" इति । यद्यपि तन्त्रान्तरे माधुर्याच्च तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः । कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तनुत् । औष्ण्यात्कषायभावाच्च तिक्तत्वाच्च कफे हित" इत्यनेन तिलस्य त्रिदोषहरत्वमेवोक्तम्, तथापि व्रणविषयप्रलेपाभिप्रायेण तद्वचनं व्याख्येयम्, अतएव सुश्रुते "व्रणलेप एव पथ्यः" इत्यत्र एवकारेण व्रणे तिलानामालेपन एव पथ्यत्वं, अभ्यवहारेण पुनः कफपित्तकरत्वेनापथ्यत्वमेवेति बोधयति । अतएव तत्र, व्रणविरुद्धवर्गे नवधान्यादौ तिलः पठितः । सेयं स्वभावोपजनितैवाधारशक्तिरस्य । यदुक्तं सुश्रुते 'यत्र कुर्वन्ति तदधिकरणम्' इति, धान्याम्लस्य बहिरन्तःप्रयोगे दाहहरणकरणत्ववदितीति शिवदासः । २ शिम्बीगुणे मधुराश्चाऽशीतलाश्चेति मधुराऽशीतलाः, सविसर्गपाठश्च न युज्यते सुश्रुते, शिम्बीनामुष्णत्वेनोक्तत्वादिति शिः । ३ निष्पावो राजशिम्बीरित्यरुणः । निष्पावो राजशिम्बीः स्याद्वल्लकः श्वेतशिम्बिक इति भावप्रकाशः । ४ शूकशिम्बीसदृशशिखः काकाण्डः शूकरशिम्बीतिलोके, उमा अतसी, आत्मगुप्ता शूकशिम्बी, अन्येतु "फलानि माषवद्विद्यात्काकांडोलात्मगुप्तयोरिति" वाग्भट द्विवचनं दृष्ट्वा काकाण्डोला कटभीति व्याचक्षत इति शिवदासः ।

१ चासो नीलपक्षः टाक्षणा इति राढदेशे ख्यात इति शिवदासः । करटाशन इति लोके इति सुः टीः डः । २ भासो गोष्ठकुक्कुट इति शिवदासः । भासो गोकुलचारी गृध्रविशेषः श्वेतशिखावानिति सुः टीः डः । ३ गवादयः प्रसह्याहृत्य भक्षणात्प्रसहाः, मृगाश्च पक्षिणश्च मृगपक्षिणः केचिन्मृगाः केचित्पक्षिण इत्यर्थः । बभ्रुर्जाहकः, नकुल इत्यन्ये । लोपाकः लोमशः श्येनो गरुडाकृतिः, चासः किकीदिविः, उलूकः काकारिः, कुलिङ्गकः कृष्णचटक इत्यरुणः । ४ भूमिशया विलेशया इत्यर्थ इति शिवदासः । ५ कदली व्याघ्राकृतिर्मार्जारः, अन्ये सर्पविशेषा इत्याहुरिति शिवदासः । ६ शल्लकः श्वाविच्च सेजकभेद इति शिवदासः । ७ आनूपा नद्यादिकूलचारिण इति शिवदासः ।

हंसः क्रौंचो वलाका च वकः कारंडवः प्लवः ॥३९॥
शरारिः पुष्कराह्वश्च केशरी मानतुण्डकः।
मृणालकण्ठो मद्गुश्च कादंवः काकतुण्डकः ॥ ४० ॥
उत्क्रोशः पुंडरीकाक्षो मेघरावोऽम्वुकुक्कुटी।
आरा नन्दीमुखी वाटी सुमुखाः सहचारिणः ॥४१॥
रोहिणी कांशिकानी च सारसो रक्तशीर्षकः।
चक्रवाकस्तथान्ये च खगाः सन्त्यंवुचारिणः ॥४२॥

हंसश्चतुर्विधोऽपि राजहंसादिर्ग्राह्यः, क्रौञ्चः कोच इति ख्यातः, वकः पाण्डुरपक्षः, वलाका शुक्ला, कारण्डवः काकवर्णः, प्लवः स्वनामप्रसिद्धः, शरारिः शरालीतिलोके, मद्गुः पानीयकाकः, कादम्बः कलहंसः, काकतुण्डकः श्वेतकारण्डवः, उत्क्रोशः कुरल इति ख्यातः, पुण्डरीकाक्षः पुण्डरः। मेघरावो मेघनादः, मेघरावश्चातक इत्यन्ये, तन्न, तस्य वारिचरत्वाभावात्। अम्बुकुक्कुटी जलकुक्कुटी, आरा स्वनामख्याता, नन्दीमुखी पत्राटी (गन्त्रटी), सारसः प्रसिद्धः, रक्तशीर्षकः सारसभेदो लोहितशिराः। अम्बुचारिण इति जले प्लवन्त इत्यर्थः ॥
॥ ३९—४२ ॥

पृषतः शरभो रामः श्वदंष्ट्रा मृगमातृकाः।
शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः ॥ ४३ ॥
चारुष्को हरिणैणौ च शंवरः कालपुच्छकः।
ऋष्यश्च वरपोतश्च विज्ञेया जाङ्गला मृगाः ॥ ४४ ॥

पृषतश्चित्रहरिणः। शरभोऽष्टापदः उष्ट्रप्रमाणो महाशृङ्गः पृष्ठगतचतुष्पादः काश्मीरे प्रसिद्धः, रामः हिमालये महामृगः, श्वदंष्ट्रा चतुर्दंष्ट्रा कार्त्तिकपुरे प्रसिद्धः, मृगमातृका स्वल्पा पृथूदरा हरिणजातिः, कुरङ्गो हरिणभेदः, गोकर्णो गोमुखहरिणविशेषः, हरिणस्ताम्रवर्णः, एणः कृष्णसारः ऋष्यो नीलाण्डो हरिणः, चारुष्कादयोऽपि हरिणभेदा एव। शशास्तु सुश्रुते विलेशयेषु पठितः, तद्गुणान्तरार्थम् ॥ ४३—४४ ॥

लावो वर्त्तीं वकश्चैव वार्तीकः सकपिञ्जलः।
चकोरश्चोपचक्रश्च कुक्कुभो रक्तवर्णकः ॥ ४५ ॥
लावाद्या विष्किरास्त्वेते वक्ष्यन्ते वर्तकादयः।
वर्त्तको वर्त्तिका चैव वर्हीं तित्तिरिकुक्कुटौ ॥ ४६ ॥

लावः प्रसिद्धः वर्त्तीरः कपिञ्जलभेदः, कपिञ्जलो गौरतित्तिरिः वार्तीकश्चटकभेदः सङ्घातचारी, उपचक्रश्चकोरभेदः, कुक्कुभः, प्रसिद्धः, र[illegible] इति कुक्कुभविशेषणम्, तेन स्थूलकुक्कुटो गृह्यते ॥ ४५—४६ ॥

कङ्कशारपदेन्द्राभगोनर्दगिरिवर्त्तकाः।
क्रकरो वृकरश्चैव वारटश्चेति विष्किराः ॥४७॥

वर्त्तकः वटेही ख्याता, वर्त्तिका स्वल्पप्रमाणजात्यन्तरमेव। केचित्तु वर्त्तकस्त्रियं वर्त्तिका वदन्ति, अस्यास्त्र ग्रहणं स्त्रीलिङ्गभेदोऽपि विशेषलाघवप्रतिपेधार्थं, अन्यथा, स्त्रीत्वेन वर्त्तिकावृत्तिकाया लाघवं स्याद्। वर्हीं मयूरः। शारपदेन्द्राभो महाकङ्कः, गोनर्दो घोडाकङ्क इतिख्यातः। क्रकरः प्रसिद्धः। लावादिवर्त्तिकादिगणद्वयकथनं गुणभेदार्थम् ॥ ४७ ॥

शतपत्रो भृङ्गराजः कोयष्टिर्जीवजीवकः।
कैरातः कोकिलोऽत्यूहो गोपापुत्रः प्रियात्मजः ॥४८॥
लट्वा लट्टूषको वभ्रुर्वटहा डिंडिमानकः।
जटी दुन्दुभिपाक्कारलोहपृष्ठकुलिङ्गकाः ॥ ४९ ॥
कपोतशुकशारङ्गश्चिरिटीकंकुयष्टिकाः।
सारिका कलविङ्कश्च चटकोऽङ्गारचूडकः ॥ ५० ॥

शतपत्रः काष्ठकुक्कुटकः, भृङ्गराजः प्रसिद्धो भ्रमरवर्णः, कोयष्टिः, कोडा इति ख्यातः। जीवजीवको विषदर्शनमृत्युः। अत्यूहो डाहुकः, दात्यूह इति प्रसिद्धः पाठः। लट्वा फेञ्चाको रक्तपुच्छाधोभागः, लट्टूषकोऽपि तद्भेदः। डिण्डिमानकः डिण्डिमवदुत्कटध्वनिः। कुलिङ्ग इति वनचटकाकारः पीतमस्तकः वाऐ इति लोके। कलविङ्को ग्राम्यचटकः, चटकस्तु देवकुलचटकः स्वल्पप्रमाणः। यान्यत्रानुक्तान्यप्रसिद्धानि तानि तद्विद्योपदेशान्तरेभ्यः ज्ञेयानि ॥ ४८-५० ॥

पारावतः पानविक इत्युक्ताः प्रतुदा द्विजाः।
प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः ॥ ५१ ॥
भूशया विलवासित्वादानूपानूपसंश्रयात्।
जले निवासाज्जलजा जलेचर्याज्जलेचराः ॥ ५२ ॥
स्थलजा जाङ्गला प्रोक्ता मृगाजाङ्गलचारिणः।
विकीर्य विष्किराश्चेति प्रतुद्य प्रतुदाः स्मृताः।
योनिरष्टविधा त्वेषां मांसानां परिकीर्त्तिता ॥५३॥

---

१ चारुष्कश्चारुशरीरः। स्वल्पतनुर्मृगभेद एव, सुः टीः डः। २ चकोरश्चोपचक्रश्च कुक्कुभो रक्तवर्मक इति पाठेतु "लाववर्त्तीकवर्त्तीररक्तवर्मकुभाः"इत्यादिवाग्भटोक्तस्य व्याख्याने—"रक्ते वर्त्मनी यस्य स रक्तवर्त्मा " इत्यरुणदत्तोक्तमनुसरणीयम्। ३ वक्ष्यन्ते वर्त्तकादय इति वर्त्तकादयो विष्किरा वक्ष्यन्त इत्यन्वय इति शिवदासः।

१ वराहश्चेति पाठः। २ तित्तिरिः कृष्णतित्तिरिश्चित्रपक्षः,शारपदेन्द्राभो महाकङ्कप्रभेदौ, गोनर्दो घोडाकङ्क इति ख्यातः। एतेन, लावादिभिः सहैकाविंशतिविष्किरा उक्ताः। ये च रक्तवर्णक इति कुक्कुभविशेषणं तथा शारपदेन्द्राभ इति चैवमेव नाम कुर्वन्ति। तन्मते विष्किरभेदेन सिद्धो वक्ष्यमाणानां वस्तीनां सङ्ख्यापूरणं न स्यादितीति शिवदासः। ३ क्रकरोलावान्तकः कपिलअलातस्थूलः कय इति लोके इति सुः टीः डः। ४ नष्टा लडुषको दद्दुंडभा हिण्डिमानक इति पाठस्तु न समीचीनतया प्रतिभाति। ५ शारङ्गश्चातकः अन्ये कृष्णकर्बुरचातकाकारो विष्किर इति सुः टीः डः। ६ शतपत्रो राजशुकः भृङ्गराजो भ्रमरको धूम्याटसदृशः पक्षिराज इति लोके, कोयष्टिः कोपाङ्गका दीर्घजङ्घा कोपाङ्ग इति लोके, टिण्डिमानको टिण्डिमोत्कटध्वनिरिति सु टीः डः।

**प्रसहा भूशयानूपवारिजा वारिचारिणः ॥**
**गुरूष्णस्निग्धमधुरा बलोपचयवर्धनाः ॥ ५४ ॥**
**वृष्याः परं वातहराः कफपित्ताभिवर्धिनः।**
**हिता व्यायामनित्येभ्यो नरा दीप्ताग्नयश्च ये[1] ॥ ५५ ॥**

प्रसहादिसंज्ञानिरुक्त्या लक्षणमाह—प्रसह्येति हठात्। आनूपानूपसंश्रयादिति "पूर्वत्रासिद्धविधेरनित्यत्वादानूपानूप" इत्यत्र लोपस्य सिद्धत्वेनैव संहिता ज्ञेया, जलेचर्यादिति जलवासिनामेव हंसादीनां जले चरणमात्रत्वं बोद्धव्यम्। स्थलजा इत्युक्तेर्गजादिष्वपि स्थलजातेषु प्रसक्तिः स्यादित्याह–जाङ्गलचारिण इति। विकीर्येत्यत्र भक्षयन्तीति शेषः। एवं प्रतुद्येत्यत्रापि, प्रतुद्येति बहुधाऽभिहत्य ॥ ५१—५५ ॥

**प्रसहानां विशेषेण मांसं मांसाशिनां भिषक्।**
**जीर्णार्शोग्रहणीदोषशोषार्त्तानां प्रयोजयेत् ॥ ५६ ॥**
**लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।**
**लघवः शीतमधुराः सकषाया हिता नृणाम् ॥ ५७ ॥**
**पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।**
**विष्किरावर्तकाद्यास्तु प्रसहाल्पान्तरा गुणैः ॥ ५८ ॥**

प्रसहा द्विविधा मांसादा व्याघ्रश्येनादयः, तथा अमांसादाश्च गवादयः। तेन, मांसादानां विशेषमाह–प्रसहानामित्यादि। जीर्णत्वेनार्शःप्रभृतीनां चिरानुबन्धं दर्शयति। प्रतुदा इत्यत्र, तथा, जाङ्गला इत्यत्र चकारो लुप्तनिर्दिष्टः। कफानुगे इतिच्छेदः ॥ ५६—५८ ॥

**नातिशीतगुरुस्निग्धं मांसमाजमदोषलम्[2]।**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥ ५९ ॥**
**मांसं मधुरशीतत्वाद्गुरु बृंहणमाविकम् ॥**
**योनावजाविके मिश्रगोचरत्वादनिश्चिते ॥ ६० ॥**
**सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक्।**
**केषांचिद्गुणवैशेष्याद्विशेष उपदेक्ष्यते ॥ ६१ ॥**

शरीरधातुसामान्यादिति मनुष्यमांससमानत्वात्। एतेन शीतगुरुस्निग्धत्वेन युक्तमप्याजमांसं शरीरधातुसाम्यात्कफं न करोतीत्युक्तं स्यात्। आविकं मांसं मधुरशीतत्वेन पित्तहरमपि बोद्धव्यम्, अतएव शरद्विधावप्युक्तम् "उरभ्रशरभान्" इति। रक्तपित्तनिदाने तु "वराहमहिष" इत्यादिना द्रव्यान्तरसंयुक्तस्यैवाविकमांसस्य रक्तपित्तकर्तृत्वं ज्ञेयम्[1]। योनाविति[2] प्रसहाद्यष्टविधजातौ। मिश्रगोचरत्वादिति कदाचिदानूपसेवनात्, कदाचिद्धन्वसेवनात्, कदाचिदुभयसेवनात्, अजाव्योरनिश्चितयोनित्वमित्यर्थः। अत्र, 'अनिश्चिते' इति योनिविशेषणम्, किंवा, अजा च अवी च एते अनिश्चिते। ननु यद्येवं, तदा तित्तिरिरपि धन्वानूपसेवनात्र विष्किरगणे पठनीयः। नैवं, तित्तिरिजातिविशेषस्य धन्वानूपयोर्नियमेन निषेवणाद्गुणनियमः पार्यते कर्तुम्। अव्यजयोस्तु नियमोऽयं नास्ति, यतः केचिदजावी धन्वमात्रचरे, केचिच्चाऽनूपमात्रचरे, केचिच्चोभयमात्रचरे। तेन, तयोर्नियमचरकृतो योनिभेदः कर्तुं न पार्यते। केषांचिदिति वक्ष्यमाणमयूरादीनाम्। गुणवैशेष्यादिति विशिष्टगुणशालित्वात् ॥ ॥ ५९—६१ ॥

**दर्शनश्रोत्रमेधाग्निवयोवर्णस्वरायुषाम्।**
**बर्ही हिततमो बल्यो वातघ्नो मांसशुक्रलः ॥ ६२ ॥**
**गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ।**
**बृंहणाः शुक्रलाश्चोक्ता हंसा मारुतनाशनाः ॥ ६३ ॥**
**स्निग्धाश्चोष्णाश्च वृष्याश्च बृंहणाः स्वरबोधनाः[3]।**
**बल्याः परं वातहराः स्वेदनाश्चरणायुधाः ॥ ६४ ॥**
**गुरूष्णमधुरो नातिधन्वानूपनिषेवणात् ।**
**तित्तिरिस्तुजयेच्छीघ्रं त्रीन्दोषाननिलोल्बणान् ६५ ।**
**पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ।**
**मन्दवातेषु शस्यन्ते शैत्यमाधुर्यलाघवात् ॥ ६६ ॥**
**लावाः कषायमधुरा लघवोऽग्निविवर्धनाः ।**
**सन्निपातप्रशमनाः कटुकाश्च विपाकतः ॥ ६७ ॥**

---

१ ये दीप्ताग्नयो नरास्तेभ्यो व्यायामनित्येभ्यश्च हिता इति योजना।
२ नातिशीतेत्यादि अदोषलमिति, यद्यपि सुश्रुते "अतिशीतगुरुस्निग्धो मन्दपित्तकफः स्मृतः। छागलस्त्वनभिष्यन्दी तेषां पीनसनाशन" इति कथितस्तथाप्यत्रपदेश्य पित्तकफजनकत्वाददोषलमित्युक्तः। यत्तु हारीते "त्रिदोषमलनुदेहधातुसामान्याच्छागलं लघु" इत्युक्तम्, तदपि ग्राम्यत्वेन कफजननयोग्यस्यापि छागलस्य तदजनकत्वात्समाधेयम्, यथा मधुरस्य दाडिमस्य मधुरद्रव्यान्तरवत्कफाजनकत्वेन त्रिदोषहरत्वम्, यथा वा, सहकारतैलस्य रूक्षत्वं सजातीयापेक्षया तथाविधस्नेहनकर्तृत्वात्। यथा वा, "चतुर्भागावशिष्टन्तु तोयं कफहरं स्मृतम्" इत्यत्र कफं प्रतीतरपानीयवदजनकत्वेन कफहरत्वमुच्यते। अन्यत्राप्येवंजातीये प्रतुदविष्किररसामज्जादौ श्लेष्महरत्वादि व्याख्येयम्। शरीरसामान्यादितिमनुष्यमांसस्यापि नातिशीतगुरुस्निग्धत्वादित्यर्थः। अयंच बृंहणत्वे हेतुः। एतेन, यद्यपि मांसान्तरमपि मांसत्वेन शरीरमांसतुल्यम्, तथापि, तत्र, गुणसामान्याभावादजमांसवन्न सर्वरूपेण बृंहणमित्यर्थः। एतेन, भङ्ग्या नृमांसस्यापि गुणा आचार्येणोक्ता इत्यभिधेयम्। अन्येतु, शरीरधातुसामान्यादित्यनभिष्यन्दत्वे हेतुमाहुः, तत्र, अप्रयोजकत्वात्, स्वमते तु, ग्राम्यस्य, बृंहणस्याप्यजमांसस्यानभिष्यन्दित्वं प्रभावादेव वक्तव्यम्। यदेव हि द्रव्यगुणद्वारा नोपपद्यते, तत्रैव प्रभावकल्पनस्योचितत्वादिति शिवदासः.

१ यत्तु रक्तपित्तनिदाने वराहमहिषेत्यादिना आविकमांसस्य रक्तपित्तनिदानत्वमुक्तम्, तदपि द्रव्यान्तरसंयुक्तस्यैवाविकमांसस्य, नतु केवलस्येति। अतएव सुश्रुतेऽपि "बृंहणं मांसमौरभ्रं पित्तश्लेष्मापहं गुरु" इत्युक्तम्। वाप्यचन्द्रस्तु, "पित्तश्लेष्मावहम्" इति पठति व्याचष्टेच, यद्यपि, औरभ्रं मांसं पित्तश्लेष्मकरमत्रोक्तं तथापि, सातिशयं पित्तंश्लेष्माणंच न करोति, तदप्यनादरणीयंसूक्त्युक्तेरेव इति शिवदासः.
२ ननु छागमेषयोः प्रागुक्ताष्टविधयोनिष्वपठितत्वात्कुत्रान्तर्भावो भविष्यतीत्यत आह योनावित्यादि. ३ स्वरवर्द्धना इति पाठः.

मयूरस्य गुरुत्वस्निग्धत्वं वर्त्तकादिगणपठितत्वेनैव लब्धं सत्पुनरुच्यते विशेषार्थम् । एवमन्यत्रापि गणोक्तगुणकथनेन लब्धस्य पुनः कथने व्याख्येयम् । चरणायुधः कुक्कुटः । धन्वानूपनिषेवणादिति हेतुकथनेन य एव धन्वानूपनिषेवी तित्तिरिः स एव यथोक्तगुण इति ज्ञेयः । एवमन्येऽपि ये गवादयो धन्वानूपनिषेविणस्तेऽपि तित्तिरिसमानगुणाः स्युः । तित्तिरिस्तु विशेषेणेति तित्तिरिः साक्षादुक्तः । किंवा, तित्तिरेरेव एवंगुणत्वे धन्वानूपनिषेवणं हेतुः, नान्यत्र गवादेरनूपदेशादेरिति ज्ञेयम् ॥ ६२—६७ ॥

कषायविशदाः[१] शीता रक्तपित्तनिबर्हणाः ।
विपाके मधुराश्चैव कपोता गृहवासिनः ॥ ६८ ॥
तेभ्यो लघुतराः किंचित्कपोता वनवासिनः[२] ।
शीताः संग्राहिणश्चैव स्वल्पमूत्रकराश्च ते ॥ ६९ ॥
शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् ।
शोषकासक्षयहितं संग्राहि लघु दीपनम् ॥ ७० ॥
कषायविशदो रूक्षः शीतः पाके कटुर्लघुः ।
शशः स्वादुः प्रशस्तश्च सन्निपातेऽनिलाऽवरे ॥७१॥
चटकामधुराः स्निग्धा बलशुक्रविवर्धनाः[३] ।
सन्निपातप्रशमनाः शमना मारुतस्य च ॥ ७२ ॥
मधुरामधुराः पाके त्रिदोषशमनाः शिवाः ।
लघवो बद्धविण्मूत्राः शीताश्चैणाः प्रकीर्तिताः ॥७३॥
गोधा विपाकिमधुराः कषायकटुका रसे ।
वातपित्तप्रशमनी बृंहणी बलवर्धनी ॥ ७४ ॥
शल्लको मधुराम्लस्तु विपाके कटुकः स्मृतः ।
वातपित्तकफघ्नश्च कासश्वासहरस्तथा ॥ ७५ ॥
गुरूष्णमधुरा बल्या बृंहणाः पवनापहाः ।
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्तिताः ७६
शैवलाहारभोजित्वात्स्वप्नस्य च विवर्जनात् ।
रोहितो दीपनीयश्च लघुपाको महाबलः ॥ ७७ ॥
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ।
वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ॥ ७८ ॥
बल्यो वातहरो वृष्यश्चक्षुष्यो बलवर्धनः ।
मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म उच्यते ॥ ७९ ॥
गव्यं[४] केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्निमांसक्षयहितं च तत् ॥ ८० ॥
स्निग्धोष्णमधुरं वृष्यं माहिषं गुरु बृंहणम्[५] ।
दार्ढ्यं बृहत्त्वमुत्साहं स्वप्नं च जनयत्यपि ॥ ८१ ॥

१ कषायमधुरा इति पाठः. २ कपोता वनवासिन इति वनवासिनो पारावता इत्यर्थः, न तु वनवासिपाण्डुकपोताः, तेषां काणकपोतत्वेनाऽपथ्यत्वादित्याहुरिति शिः. ३ कफशुक्रविवर्धना इति पाठः। ४ हस्तिमांसं तु मधुरमुष्णं च गुरु निर्दिशेत्। गजमांसगुणैस्तुल्यं गावयं मांसमुच्यते इत्यधिकम्. ५ तर्पणमिति पाठः.

धार्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानां च यानि स्युरण्डानि च हितानि च ॥८२॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।
मधुराण्यविपाकीनि सद्योबलकराणि च ॥ ८३ ॥
शरीरबृंहणे नान्यत्खाद्यं मांसाद्विशिष्यते ।
इति वर्गस्तृतीयोऽयं मांसानां परिकीर्तितः ॥ ८४ ॥

इति मांसवर्गः ।

कपोता गृहवासिन इति पारावताः । चटका मधुरा इति केचित्पठन्त्येव, ये तु न पठन्ति, तेषां चटकस्य प्रतुदसामान्यगुणलब्धं वृष्यत्वं "तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः" इत्यादिवृष्यप्रयोगादेव लभ्यते । मयूरादीनां तु बहवो गुणा गणोक्तगुणाधिका इति पृथक्पाठः कृतः । "मांसं बृंहणानाम्" इत्यनेनैवाग्र्याऽधिकारवचनेन मांसस्य बृंहणत्वे लब्धे "शरीरबृंहणे नान्यत्" इत्यादिवचनं प्रकरणप्राप्तत्वेन तथा तस्यैवार्थस्य दार्ढ्यार्थं च ज्ञेयम् ॥ ६८—८४ ॥

पाठा शुषा शटीशाकं वास्तुकं सुनिषण्णकम् ।
विद्याद्ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकम् ॥८५॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ।
नात्युष्णशीतवीर्या च भेदिनी कुष्ठनाशिनी ॥ ८६ ॥
राजक्षवकशाकं तु त्रिदोषशमनं लघु ।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥८७॥
कालशाकं तु कटुकं दीपनं गरशोफजित् ।
लघूष्णं वातलं रूक्षं कालाख्यं शाकमुच्यते ॥ ८८ ॥
दीपनी चोष्णवीर्या च ग्राहिणी कफमारुते ।
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा ॥८९॥
मधुरामधुरा पाके भेदिनी श्लेष्मवर्धनी ।
वृष्या स्निग्धा च शीता च मदघ्नी चाप्युपोदिका९०
रूक्षो मदविषघ्नश्च प्रशस्तो रक्तपित्तिनाम् ।
मधुरोऽमधुरः पाके शीतलस्तंडुलीयकः ॥ ९१ ॥
मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकम् ।
कर्कोटकावल्गुजकौ पटोलं शकुलादनी ॥ ९२ ॥
वृषपुष्पाणि शार्ङ्गेष्टा केबुकं सकठिल्लकम् ।
नाडीकलायं गोजिह्वा वार्ताकं तिलपर्णिका ॥९३॥
कुलकं कार्कशं निंबं शाकं पार्पटिकं च यत् ।
कफपित्तहरं तिक्तं शीतं कटु विपच्यते ॥ ९४ ॥

शाकानामपि व्यंजनत्वेनानन्तरमुपदेशः । शुषा कासमर्दः, शटी स्वनामप्रसिद्धा, वास्तुकं टकवास्तुकम् । नात्युष्णशीतवीर्येति नोष्णत्वं प्रकर्षप्राप्तमस्या नापि शीतत्वमित्यर्थः । यत्तु सुश्रुते "तिक्ता काकमाची वातं शमयत्युष्णवीर्यत्वादित्युक्तं, तद्वीर्यवादिमतेन, अतएव, द्रव्यगुणे सुश्रुतेऽपि नात्युष्णशीतमेव पठितम् । राजक्षवको दुग्धिका, कालशाकं कालिया इति ख्यातम्, कालाख्यमिति कालशाक-

नेत्रोच्यते पुन, अन्ये तु "कालायम्" इति पठन्ति । मण्डूकपर्णी मणिमणिख्याता, कुंचेला अम्बष्ठिकाभेद । वनतिक्तकं पथ्यसुन्दर, अवल्गुजो वागुजी, शकुलादनी कटुरोहिणी, नाडीच काकनिका, कठिल्ल, पुनर्नवा, नाडी नाडीच, कलाय वर्तुलकलायम्, तिलपर्णिका हुलहुलिका, गोजिह्वा दार्विपत्रिका, कुलक कारवेल्लक, केचित्तु कुलक पटलभेदमाहु, कर्कश खरपर्कोटक ॥ ८५—९८ ॥

सर्वाणि सूप्यशाकानि फंजी चिल्ली कुतुंबकः ।
आलुकानि च सर्वाणि सपत्राणि कुटिंजरम् ॥९५॥
शणशाल्मलिपुष्पाणि कर्बुदारः सुवर्चला ।
निष्पावः कोविदारश्च पत्तूरश्चुचुपर्णिका ॥ ९६ ॥
कुमारजीवो लोट्टाकः पालक्यो मारिषस्तथा ।
कलंबनालिकाऽऽसूर्यः कुसुंभवृकधूमकौ ॥ ९७ ॥
लक्ष्मणा प्रपुनाडी च नलिनीका कुठेरकः ।
लोणिका यवशाकं च कूष्माण्डकमवल्गुजम् ॥९८॥
यातुकः शालकल्याणी त्रिपत्री पीलुपर्णिका ।
शाकं गुरु च रूक्षं च प्रायो विष्टभ्य जीर्यति ॥९९॥
मधुरं शीतवीर्यं च पुरीषस्य च भेदनम् ।
स्विन्नं निष्पीडितरसं स्नेहाढ्यं तत्प्रशस्यते ॥१००॥
शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः ।
पुष्पं ग्राहि प्रशस्तं च रक्तपित्ते विशेषतः ॥ १०१ ॥
न्यग्रोधोडुंबराश्वत्थप्लक्षपद्मादिपल्लवाः ।
कषायाः स्तंभनाः शीता हिताः पित्तातिसारिणाम् ॥

सूप्यशाकानि माषपर्ण्यादीनि, फञ्जी ब्रा टिका, चिल्ली गौडवास्तुक, कुतुम्बको द्रोणपुष्पिका, आलुकादीनि पिण्डालुकादीनि, कर्बुदार काञ्चन, सुवर्चला सूर्यभक्तिका, केचित्त फलस्माहु, पत्तूर शालिञ्च, चुचुपर्णिका नाडीचभेद, कुमारजीवो जीवशाक, लोट्टाको लोट्टामारिष, नालिका गोनाडीच, आसुरी राजिका मण्डूको वा, वृकधूमको भूमिशिरीष, लक्ष्मणा स्वनामख्याता, नलिनी पद्ममृणाल, नीलिनीपाठपक्षे गुहा, यवशाक क्षेत्रवास्तुक, कूष्माण्ट स च्छत्र, अवल्गुजमिलवल्गुजभेद, यातुक शुक्रा शालपर्णी शालकल्याणी शालिञ्चीभेद, त्रिपर्णी हंसपादिका, पीलुपर्णी मोरटक ॥ ९५—१०२ ॥

वायुं वत्सादनी हन्यात्कफं गंडीरचित्रकौ ।
श्रेयसी बिल्वपर्णी च बिल्वपत्रं तु वातनुत् ॥१०३॥
भंडी शतावरी शाकं बला जीवन्तिकं च यत् ।
पर्वण्याः पर्वपुष्प्याश्च वातपित्तहरं स्मृतम् ॥१०४॥
लघु भिन्नशकृत्तिक्तं लाङ्गलक्युरुवृकयोः ।
तिल्वेतसशाकं च शाकं पंचाङ्गलस्य वा ॥ १०५ ॥
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्त्तकम् ।
रूक्षाम्लमुष्णं कौसुंभं कफघ्नं पित्तवर्द्धनम् ॥१०६॥
त्रपुसैर्वारुकं स्वादु गुरु विष्टम्भि शीतलम् ।
मुखप्रियं च रूक्षं च मूत्रलं त्रपुसं त्वति ॥ १०७ ॥
एर्वारुकं च संपक्वं दाहतृष्णाक्लमार्त्तिनुत् ।
वर्चोभेदीन्यलावूनि रूक्षशीतगुरूणि च ॥ १०८ ॥
चिर्भटैर्वारुके तद्वद्वर्चोभेदहिते तु ते ।
कूष्मांडमुक्तं सक्षारं मधुराम्लं तथा लघु ॥ १०९ ॥
सृष्टमूत्रपुरीषं च सर्वदोषनिवर्हणम् ।
केलुटं च कदंबं च नंदीमाषकमैन्दुकम् ॥ ११० ॥

गण्डीर शमठ, बिल्वपर्णी विरवार्जकम् । भण्डी स्वनामख्याता, पर्वणी पर्वशाक, पर्वपुष्पी कुक्कुटी । पञ्चाङ्गलश्चैरण्ड । एर्वारुक राजकर्कटी । कूष्माण्डक सुश्रुते बाल्याद्यवस्थाभेदेन पठित तदप्यविरुद्धमेव, यतः, बालमध्ययोस्तत्र पित्तहरत्व कफकरत्वं चोक्तं, तदपीह पित्तोत्तरे कफोत्तरे सन्निपाते बोद्धव्यम् ॥ १०३—११० ॥

विशदं गुरु शीतं च समभिष्यन्दि चोच्यते ।
उत्पलानि कषायाणि रक्तपित्तहराणि च ॥ १११ ॥
तथा तालप्रलंबं च उरःक्षतरुजापहम् ।
खर्जूरं तालशस्यं च रक्तपित्तक्षयापहम् ॥ ११२ ॥
तरूटबिसशालूककौंचादनकशेरुकम् ।
शृङ्गाटमङ्कालोड्यं च गुरु विष्टंभि शीतलम् ॥११३॥
कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः ।
शीताः स्वादुकषायास्तु कफमारुतकोपनाः ॥११४॥
कषायमीषद्विष्टंभि रक्तपित्तहरं स्मृतम् ।
पौष्करं तु भवेद्बीजं मधुरं रसपाकयोः ॥ ११५ ॥
बल्यः शीतो गुरुः स्निग्धस्तर्पणो बृंहणात्मकः ।
वातपित्तहरः स्वादुर्वृष्यो मुंजातकः स्मृतः ॥११६॥
जीवनो बृंहणो वृष्यः कण्ठ्यः शस्तो रसायने ।
विदारिकन्दो बल्यश्च मूत्रलः स्वादुशीतलः ॥११७॥

१ मण्डूकपर्णी थानकुनीति ख्यातेति पाठः २ सर्वाणि शुष्कशाकानीतिपाठ. ३ कुटिञ्जर ताम्रमूलकमित्यरुणदत्त. ४ कलम्ब कदम्बम्, नालिका दीर्घनालरूपा कलम्बुसेत्यरुणदत्त. ५ लोणिका लोणार इत्यरुणदत्त. ६ सुवर्चला सूर्यावर्त्तभेद., अन्ये तु नारिषमहत्वनालमार्त्तगलमहत्रपत्र इत्यरुणदत्त इति शिवदास.

१ मुखप्रियमित्यादौ त्रपुषमिति त्रपुसफलम्, एर्वारुक लोमशकर्कटीत्युल्वण, राजकर्कटीत्यन्ये, स्फुटित्तया शोटे प्रसिद्धमिति त्रिविक्रम इति शिवदास २ चिर्भट गोरक्षकर्कटी, एर्वारुकमेर्वारुकयामर्लकि शिवदास. ३ कूष्माण्डमित्य दि पक्वकूष्माण्डगुण, बालमध्ययो क्षारत्वाभावात्, अतएव तन्त्रान्तरे "पित्तघ्नेषु कूष्माण्ड बालमध्य कफावह । पक्व लघूष्ण सक्षार दीपन बस्ति शोधनम् । सर्वदोषहर हृद्य पथ्य चेतोविकारिणाम्" इति शिवदास. ४ नन्दी माषकमैन्दवमिति पाठे नन्दी तुण्डिका, माषकम् वास्तुक इत्यरुणदत्तोक्तमनुसरणीयम्

अ॑ कायाः स्मृतः कंदो ग्रहण्यर्शोहितो लघुः ।
अत्युष्णः कफवातघ्नो ग्राही नास्तो मदात्यये ॥११८॥
त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते ।
तद्वत्पिण्डालुकं विद्यात्कन्दत्वाच्च मुखप्रियम्॥११९॥
सर्पच्छत्रकवर्ज्यास्तु बह्व्योऽन्याश्छत्रजातयः ।
शीताः पीनसकर्त्र्यश्च मधुरा गुर्व्य एव च ।
चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः ॥ १२० ॥

इति शाकवर्गः ।

केलुटे हारीतवचनं "केलुटं स्वादु विटपं तत्कन्द. स्वादुशीतलः" इति । कदम्बं कदम्बिका वदन्ति, केचित्तु स्वल्पकदम्बकमाहु., नंदीमापक. उन्दीमानवक इति ख्यातः, ऐन्दुकं निक्षारः । तालप्रलम्बस्तालाङ्कुरः, शस्यशब्देनेह मस्तकमज्जा गृह्यते । तरुटः कहारकन्दः, क्रौञ्चादनं घिचुलिका, कशेरुकशब्देन चिचोडका राजकशेरुकश्च गृह्यते, अङ्कालोड्यं हस्तोत्पलकन्दः । युंजातक औत्तरापथिककन्दः । अम्लिका स्वल्पविटपा प्रायः कामरूपादौ भवति । सर्पच्छत्रं सर्पफणाकार छत्रकम् । अन्याश्छत्रजातय. करीषपलालादिजा बहुला नेयाः । पत्रकन्दफलाश्रय इति प्राधान्येन, तेन पुष्पाश्रयत्वमपि शाकवर्गस्य ज्ञेयम् ॥ १११—१२० ॥

तृष्णादाहज्वरश्वासरक्तपित्तक्षतक्षयान् ।
वातपित्तमुदावर्तं स्वर॑ दं मदात्ययम् ॥ १२१ ॥
तिक्तास्यतामास्यशोषं कासं चाशु व्यपोहति ।
मृद्वीका बृंहणी वृष्या मधुरस्निग्धशीतला ॥१२२॥
मधुरं बृंहणं वृष्यं खर्जूरं गुरु शीतलम् ।
क्षयेऽभिघाते दाहे च वातपित्ते च तद्धितम्॥१२३॥
तर्पणं बृंहणं फल्गु गुरु विष्टम्भि शीतलम् ।
परूपकं मधूकं च वातपित्ते च शस्यते ॥ १२४ ॥
मधुरं बृंहणं बल्यमाम्रातं तर्पणं गुरु ।
सस्नेहं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्यति ॥१२५॥
तालशस्यानि सिद्धानि नारिकेलफलानि च ।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥ १२६॥

फलानामपि केषांचिच्छाकवदुपयोगात्फलवर्गमाह । मृद्वीकाऽऽदावभिधीयते, श्रेष्ठगुणत्वात् । फल्गु औडुम्बरम् । मधूकशब्देन समानगुणत्वात्फलं कुसुमं च नेयम् । परूपकं चेह मधुरपरूपकं ज्ञेयम् । आम्रात आमडा इति ख्यातम, आम्रफलसदृशमिति चन्द्रिका, एतच्च द्विविधं मधुरमम्लं च, अत्र मधुरस्यैव गुणः, अम्लस्य वक्ष्यमाणत्वात् । तालशस्यानीति तालफलानि, यथा "हरीतक्यादीनां शस्या..." इति फल॑ शस्यमुच्यते । सिद्धानि पक्वानि, तेन पक्वतालस्य ग्रहणम् ॥ १२१—१२६ ॥

मधुराम्लकषायं च विष्टंभि गुरु शीतलम् ।
पित्तश्लेष्मकरं भव्यं ग्राहि वक्त्रविशोधनम् ॥ १२७ ॥
अम्लं परूपकं द्राक्षा बदराण्यारुकाणि च ।
पित्तश्लेष्मप्रकोपीनि कर्कन्धूनिकुचान्यपि ॥ १२८ ॥
नात्युष्णं गुरु संपक्वं स्वादुप्रायं मुखप्रियम् ।
बृंहणं जीर्यति क्षिप्रं नातिदोषलमारुकम् ॥ १२९ ॥
द्विविधं शीतमुष्णं च मधुरं चाम्लमेव च ।
गुरु पारावतं ज्ञेयमरुच्यत्यग्निनाशनम् ॥ १३० ॥

भव्यं कर्मरङ्गं फलं, केचित्त्वक्संहतिफलं वदन्ति । आरुकं कार्त्तिकपुरे प्रसिद्धम् । कर्कन्धूः शृगालबदरी, कर्कन्धूनिकुचयोर्विच्छिद्य पाठे न नित्य पित्तश्लेष्मकर्तृत्वं तयोर्दर्शयति । परूपकादीनां तु मधुराम्लभेदेन द्विरूपाणां य एव परूपकादयोऽम्लास्त एव पित्तश्लेष्मकरा इति । पारावतः कामरूपप्रसिद्ध. । अत्र यो मधुरः सशीतः, यश्चाम्लः स ॰ष्ण इति ज्ञेयम् । एवं रसनिर्देशेनैव वीर्ये लब्धेऽपि पुनः वीर्याख्यानं अम्लस्याऽऽमलकस्य शीततादर्शनाद्बोद्धव्यम् ॥ १२७—१३० ॥

भव्यादल्पान्तरगुणं काश्मर्यफलमुच्यते ।
तथैवाल्पान्तरगुणं तूदमम्लपरूपकात् ॥ १३१ ॥
कषायमधुरं टङ्कं वातलं गुरु शीतलम् ।
कपित्थं विषकण्ठघ्नमामं संग्राहि वातलम् ॥१३२॥
मधुराम्लकषायत्वात्सौगन्ध्याच्च रुचिप्रदम् ।
तदेव सिद्धं दोषघ्नं विषघ्नं ग्राहि गुर्वपि ॥ १३३ ॥
बिल्वं तु दुर्जरं सिद्धं दोषलं पूतिमारुतम् ।
स्निग्धो॑ क्ष्णं तद्बालं दीपनं कफवातजित् १३४
वातपित्तकरं बालमापूर्णं पित्तवर्द्धनम् ।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥ १३५ ॥
कषायमधुरप्रायं गुरु विष्टम्भि शीतलम् ।
जाम्बवं कफपित्तघ्नं ग्राहि वातकरं परम् ॥ १३६ ॥

---

१ "तद्वत्स्याद्रक्तनालस्य स्वनन्लं विशेषत" इति पाठः.
२ परूपकमिद पक्वन्, आमस्य पित्तजनकत्वात्, उक्त च वाग्भटे—वातघ्न पित्तजननमाम विद्यात्परूपक । न्टेन पक्वं मधुर वातपित्तनिबर्हणमितीति शिः.

१ पित्तश्लेष्महरमिति पाठस्तासुर्यथा मदनपालनिघटौ "कर्मरगं नागफलं भव्य पिच्छिलबीजकम् । कर्मरग हिमं ग्राहि स्वाद्म्लं कफपित्तजित्" १३६ श्लोकः. २ आम्रस्यावस्थाभेदेन गुणभेदमाह रक्तपित्तकरमित्यादि । अत्र वातपित्तकरमित्यत्र रक्तपित्तकरमिति केचित्पठन्ति, तन्न सुश्रुते "पित्तमारुतकृद्बालम्" इत्युक्तत्वात्, अत्र भट्टारहरिश्चन्द्रेणापि 'रक्तपित्तकर बालम्' इत्येव पाठ निरस्य 'वातपित्तकर बालम्' इत्येव पाठ. पुरस्कृतः चक्रेणापि सुश्रुतविरोध दृष्ट्वा 'रक्तपित्तकर बालम्' इति पाठश्चरकेणेष्यते इति भानुमत्यामुक्तम् । अन्ये तु,.. 'वातपित्तास्रकृद्बालम्' इति वाग्भटदर्शनाद्रक्तपित्तकरं वचो न विरुध्यते इत्याहुः.

मधुरं बदरं स्निग्धं भेदनं वातपित्तजित् ।
तच्छुष्कं कफवातघ्नं पित्ते न च विरुध्यते ॥ १३७॥
कषायमधुरं शीतं ग्राहि सिम्बितिकाफलम् ।
गाङ्गेरुकी करीरं च बिम्बीतोदनधन्वनम् ॥ १३८ ॥
मधुरं सकषायं च शीतं पित्तकफापहम् ।
संपक्वं पनसं मोचं राजादनफलानि च ॥ १३९ ॥
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च ।
कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ॥१४०॥

तूदं औत्तरापथिकफलम् । टङ्कं काश्मीरप्रसिद्धम् । सिद्धमिति कालवशात्पक्वम् । कपित्थबिल्वाम्राणामवस्थाभेदेन गुणकथनं सर्वावस्थासु तेषामुपयोज्यत्वात् । बदरं मध्यप्रमाणं तद्धि मधुरमेव स्यात् । गाङ्गेरुकं नागबलाफलम्, करीरो मरुजो द्रुमः, तोदनं धन्वनभेदः । राजादनं क्षीरि, अवदंशक्षमिति लवलीफलं प्राश्य द्रव्यान्तरे रुचिर्भवति ॥१३१—१४० ॥

अवदंशक्षमं रूक्षं वातलं लवलीफलम् ।
नीपं शताह्वकं पीलु तृणशून्यं विकङ्कतम् ॥ १४१ ॥
प्राचीनामलकं चैव दोषघ्नं गरहारि च ।
इङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् ॥१४२॥
तिन्दुकं कफपित्तघ्नं कषायमधुरं लघु ।
विद्यादामलके सर्वान् रसान् लवणवर्जितान् १४३
स्वेदमेदःकफोत्क्लेदपित्तरोगविनाशनम् ।
रूक्षं स्वादु कषायाम्लं कफपित्तहरं परम् ।
रसासृङ्मांसमेदोजान्दोषान्हन्ति बिभीतकम् १४४
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम् ।
स्निग्धोष्णं दाडिमं हृद्यं कफपित्ताविरोधि च १४५
रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम् ।
मधुरं पित्तनुत्तेषां पूर्वं दाडिममुत्तमम् ॥ १४६ ॥

नीपं कदम्बकम्, शताह्वकफलं शरका इति ख्यातम् । पीलु औत्तरापथिकम्, तृणशून्यं केतकीफलम् । प्राचीनामलकं पानीयामलकम् । इङ्गुदं पुत्रजीवकफलम् । तिन्दुकं केन्दुः । दाडिमगुणे कफपित्ताविरोधीत्यम्लदाडिमं पित्ताऽविरोधि, मधुरं तु कफाविरोधि, तेन, त्रिदोषहरत्वमस्योपपन्नम्, यदुक्तम् सुश्रुते "द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च । त्रिदोषघ्नं तु मधुरमम्लं वातकफापहम्" इति ॥१४१—१४६ ॥

वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्मणि शस्यते ।
अम्लिकायाः फलं पक्वं तस्मादल्पान्तरं गुणैः १४७
गुणैस्तैरेव संयुक्तं भेदनं त्वम्लवेतसम् ।
शूलेऽरुचौ विबन्धे च मन्देऽग्नौ मद्यविप्लवे १४८
हिक्काकासे च श्वासे च वम्यां वर्चोगदेषु च ।
वातश्लेष्मसमुत्थेषु सर्वेष्वेतेषु दिश्यते ॥ १४९ ॥
केसरं मातुलुङ्गस्य लघु शेषमतोऽन्यथा ।
रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्विवर्जितः ।
कर्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः ॥१५०॥
मधुरं किंचिदम्लं च हृद्यं भक्तप्ररोचनम् ।
दुर्जरं वातशमनं नागरङ्गफलं गुरु ॥ १५१ ॥
वातामाभिषुकाक्षोटमकूलकनिकोचकाः ।
गुरूष्णस्निग्धमधुराः सोरुमाणा बलप्रदाः ॥ १५२ ॥
वातघ्ना बृंहणा वृष्याः कफपित्ताभिवर्द्धनाः ।
पियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ॥१५३
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ।
श्लेष्मलं गुरु विष्टंभि चाङ्कोटफलमग्निजित् ॥१५४॥
गुरूष्णमधुरं शीतं केशघ्नं च शमीफलम् ।
विष्टम्भयति कारंजं वातश्लेष्माविरोधि च ॥१५५॥

वृक्षाम्लं महार्द्रकम्, अम्लिका तिन्तिडी । शेषमिति त्वङ्मांसम्, अतोऽन्यथेति गुरु, किंवा, शूलेऽरुचावित्युक्तकेशरगुणविपरीतम् । वातामाद्य औत्तारापथिकाः । पियालोऽयं मगधप्रसिद्धः ॥ १४७—१५५ ॥

आम्रातकं दन्तशठमम्लं सकरमर्दकम् ।
रक्तपित्तकरं विद्यादैरावतकमेव च ॥ १५६ ॥

दन्तशठो जम्बीरः, केचिदम्लोटं वदन्ति । इहाऽऽम्रातकमम्लं ग्राह्यम् । पूर्वं तु मधुरमाम्रातकमुक्तम् । करमर्दं द्विविधं ग्रामजं वनजं ऐरावतमम्लांतकम्, किंवा नागरङ्गम् ॥ १५६ ॥

वातघ्नं दीपनं चैव वार्ताकं कटु...कफम् ।
वातलं कफपित्तघ्नं विद्यात्पर्पटकीफलम् ॥ १५७ ॥
पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षिकीफम् ।
मधुराण्यनुपाकीनि वातपित्तहराणि च ॥ १५८ ॥

---

१ तोदनमप्रसिद्धम्, धन्वनभेद इत्यन्ये, अन्ये तु तोदनं वामप्रियफलमाहुः, वारणाग्निकेति दाक्षिणात्येषु ख्यातमित्याहुः । सुश्रुते तु पित्ताभिवर्द्धनमित्युक्तम्, तदामावस्थस्य, अत्र तु, प्राप्तमधुरभावस्य पक्वस्य पित्तहरत्वमिति न बाध इति शिवदास. २ सभांगकमिति शताक्षकमिति द्वौ पाठौ. ३ सरतस इति ख्यातमिति पाठः.

१ मद्यविक्लवो मदात्यय इति शिवदासः. २ सुगन्धि मधुरं साम्लं विशदं भक्तारोचनम् । गुरु वातप्रशमनं विद्यान्नारिङ्गजं फलम् ॥ इति पाठः. ३ मकूलकनिकोठका इति पाठः. ४ मगधप्रतिष्ठ इति पाठः. ५ करमर्दः कण्टकिफल इति चन्द्रिका, तद्द्विविधं महदल्पं च, तत्र महत्प्रायशो ग्रामभवमम्लं च, अल्पा तु करमर्दी वनजा मधुराम्लफलेत्याहुरिति शिवदासः. ६ ऐरावतं ऐरावणिका कृष्णलोहितात्पफलेति सुश्रुतटीकायां डल्हणः. ७ चाक्षकीफलमिति पाठः.

अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि च ।
कषायमधुराम्लानि वातलानि गुरूणि च ॥ १५९ ॥
भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम् ।
पंचमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ॥ १६० ॥

इति फलवर्गः ।

वार्त्ताकं दक्षिणापथे फलवत्खाद्यते, यद्गोष्टवार्त्ताकसंज्ञकं, तस्येह गुणः । किंवा फलवदसिद्धस्यैव वार्त्ताकस्योपयोज्यस्यायं गुणः । आक्षिकीलता तस्याः फलमाक्षिकम् । अनुपाकि अनुया इति ख्याता । अग्निसममिति स्फोटादिजनकत्वात् । फलवर्गः ॥ १५७—१६० ॥

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम् ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥ १६१ ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिर्मुखशोधनः ।
जम्बीरः कफवातघ्नः क्रिमिघ्नो भुक्तपाचनः ॥१६२॥
बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम् ।
स्निग्धसिद्धं विशुष्कं तु मूलकं कफवातजित् १६३

हरितानामप्यार्द्रकादीनां फलवदग्निपाकमन्तरेण भोजनस्य प्राक् पश्चाच्चोपयोगात्फलमनु हरितकथनं, फलेषु पश्चादभिधानं हरितस्य तृप्त्यनाधायकत्वात् । आर्द्रकमिति विशेषणं शुण्ठीव्यावृत्त्यर्थम्, शुण्ठीगुणश्चाहारसंयोगवर्गे भविष्यति । जम्बीरः पर्णासभेदः, जम्बीरफलं सुगन्धि । बालं दोषहरमिति तरुणाऽवस्थायामव्यक्तरसायां त्रिदोषहरम् । तन्त्रान्तरवचनं हि "यावद्धि चाव्यक्तरसान्वितानि नवप्ररूढानि च मूलकानि । भवन्ति तावल्लघुदीपनानि पित्तानिलश्लेष्महराणि चैव" । वृद्धं त्रिदोषमिति, तदेव प्रवृद्धम्[1], एनामेव मूलकावस्थामभिप्रेत्य चोक्तं, "मूलकं कन्दानामपथ्यत्वे प्रकृष्टतमम्" इति । मारुतापहं स्निग्धसिद्धमिति सामान्येन बालं वृद्धं च । "शुष्काणि कफवातघ्नान्येतानि" इति वक्ष्यमाणग्रन्थेनैव शुष्कमूलकस्य कफवातहन्तृत्वे लब्धे पुनर्वचनं प्रकृष्टप्राप्त्यर्थम् ॥ १६१—१६३ ॥

हिक्काकासविषश्वासपार्श्वशूलविनाशनः ।
पित्तकृत्कफवातघ्नः सुरसः पूतिगन्धहा ॥ १६४ ॥
यमानी चार्जकश्चैव शिग्रुशालेयमृष्टकम् ।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति च ॥१६५॥

पूतिगन्धहेति शरीरस्य तथा व्यंजनान्न मांसस्य पूतिगन्धतां हन्ति । अर्जकः श्वेतपर्णासः, शिग्रुविटपं शोभांजनम् । शालेयश्चाणक्यमूलं मरौ प्रसिद्धम्, किंवा, शालेयमिति मिस्तेयं पाटकप्रसिद्धम्, वचनं हि "चाणक्यमूलमिस्तेये शालेयाभिख्यया जगुः" इति । मृष्टकं राजिका ॥१६४–१६५ ॥

गण्डीरो जलपिप्पल्यस्तुम्बुरुः शृङ्गवेरिका ।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च ॥ १६६ ॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूस्तृणो वक्त्रशोधनः ।
खराश्वा कफवातघ्नी वस्तिरोगरुजापहा ॥ १६७ ॥

गण्डीरो द्विविधो रक्तः शुक्लश्च, तत्र यो रक्तः स कटुत्वेन हरितवर्गे पठ्यते, यस्तु शुक्लो जलजः स शाकवर्गे पठित इति नैकस्य वर्गद्वये पाठः । जलपिप्पली जले पिप्पल्याकारा स्यात् । शृङ्गवेरी गोजिह्विका, किंवा आर्द्रकाकृतिः शृङ्गवेरी, यदुक्तं "शृङ्गवेरवदाकृत्या शृङ्गवेरीति भाषिता । कुस्तुम्बुरुसमाकृत्या तुम्बुरूणि वदन्ति च" । भूस्तृणो गन्धतृणः, खराश्वा कृष्णजीरकम् ॥ १६६ ॥ १६७ ॥

धान्यकं चाजगन्धा च सुमुखाश्चेति रोचनाः ।
सुगन्धा नातिकटुका दोषानुत्क्लेशयन्ति च ॥१६८॥
ग्राही गृंजनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः ।
स्वेदनेऽभ्यवहार्ये च योजयेत्तमपित्तिनाम् ॥ १६९ ॥
श्लेष्मलो मारुतघ्नश्च पलाण्डुर्न च पित्तनुत्[1] ।
आहारयोगी वल्यश्च गुरुर्वृष्योऽथ रोचनः ॥ १७० ॥
क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः ।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः ॥१७१॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि च ।
हरितानामयं चैषां षष्ठो वर्गः समाप्यते ॥ १७२ ॥

इति हरितवर्गः ।

अजगन्धा यमानी, सुमुखः पर्णासभेदः, अयं च धान्यकादीनां आर्द्राणां गुणः, शुष्काणां त्वाहारयोगिगणे "कारव्योपकुंचिका" इत्यादिना गुणं निर्देक्ष्यति । गृंजनकः स्वल्पनालपत्रः पलाण्डुरेव । एतानीति हरितवर्गोक्तानि । शुष्काणीत्यादिना यद्यपि शुष्काणामपि शुण्ठीप्रभृतीनां गुण उक्तो भवति, तथापि विशेषगुणकथनार्थं पुनस्तदभिधानमाहारसंयोगिवर्गे भविष्यतीति न पौनरुक्त्यम् । इति हरितवर्गः ॥ १६८—१७२ ॥

प्रकृत्या मद्यमम्लोष्णमम्लं चोक्तं विपाकतः ।
सर्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते ॥ १७३ ॥

अन्नमभिधाय पानं वक्तव्यम्, अत्रापि पानप्रधानमपि पानीयमुल्लङ्घ्य हर्षादिकर्तृत्वाज्जनानां मुख्यपेयत्वाच्च मद्यमाह । प्रकृत्येति स्वभावात् । यद्यपि च मद्ये पीयमाने नाम्लरसता प्रतीयते व्यक्ता, तथापि, दन्तहर्षमुखस्रावाद्यम्लकार्यकर्तृत्वादम्लमेव । वचनं हि "अम्लानि चाम्लप्रभावानि चाम्लमेव कृत्वोपदेक्ष्यामः" इति । तेन, अम्लप्रभावस्याम्लरसत्वमेव, अतएवोक्तम्, "सर्वेषां मद्यमम्लानामुपर्युपरि वर्तते" इति । विपाकत इति तृतीयायां तसिः ॥ १७३ ॥

१ प्रवृद्धं प्रव्यक्तरसमित्यर्थः ।

१ नच पित्तनुदिति नातिपित्तलः किंचित्पित्तं करोत्येव ।

कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम् ।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च ॥ १७४ ॥
हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ ।
वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥ १७५ ॥
शूलप्रवाहिकाटोपकफवातार्शसां हितः ।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भक्तपाचनः ॥ १७६ ॥
शोषार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान् ।
हन्त्यरिष्टः कफकृतान्रोगान्रोचनदीपनः ॥ १७७ ॥
सुखप्रियः सुखमदः सुगन्धिर्वस्तिरोगनुत् ।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः ॥ १७८ ॥
रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः ।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः ॥ १७९ ॥
जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ।
लेखनः शीतरसिको हितः शोफोदरार्शसाम् १८०
सृष्टभिन्नशकृद्वातो गौडस्तर्पणदीपनः ।
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी मता ॥ १८१ ॥
सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ॥ १८२ ॥

सुरा अनुद्धृतमण्डा, मदिरा तु सुरामण्डः, जगलो भक्तकिण्वकृता सुरा, अरिष्ट औषधक्वाथसम्पादितो वक्ष्यमाणो दन्त्यभयारिष्टादिः । शार्करः शर्कराप्रकृतिक आसवः, पक्वरसो यः क्वथितेनेक्षुरसेन क्रियते । शीतरसिकस्तु शीतेक्षुरसकृतः । गौडी गुडप्रकृतिकः । सुरासवो यत्र सुरयैव तोयकार्यं क्रियते । मधूकपुष्पकृतो मध्वासवः । मैरेयलक्षणम्, यथा—"आसवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद्विजानीयान्मैरेयमुभयाश्रयम्" इति ॥ १७४—१८२ ॥

धातक्याभिषुतो हृद्यो रूक्षो रोचनदीपनः ।
माध्वीकवन्न चात्युष्णो मृद्वीकेक्षुरसासवः ॥ १८३ ॥
रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ।
विबन्धघ्नं कफघ्नं च मधु लघ्वल्पमारुतम् ॥ १८४ ॥
सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला ।
गुर्वी जीर्यति विष्टभ्य श्लेष्मलस्तु मधूलकः ॥ १८५ ॥
दीपनं जरणीयं च हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ॥ १८६ ॥
दाहज्वरापहं स्पर्शात्पानाद्वातकफापहम् ।
विबन्धघ्नमविस्रंसि दीपनं चाम्लकाञ्जिकम् ॥ १८७ ॥
प्रायशोऽभिनवं मद्यं गुरुदोषसमीरणम् ।
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ॥ १८८ ॥

१ पाचन इति पाठः. २ वस्तिदोषनुदिति पाठः. ३ आक्षिकी विभीतककृता सुरा बन्धनीति प्रसिद्धेति शिवदासः. ४ जीर्णं इति पाठः.

हर्षणं प्रीणनं बल्यं भयशोकश्रमापहम्[1] ।
प्रागल्भ्यवीर्यप्रतिभातुष्टिपुष्टिबलप्रदम् ॥ १८९ ॥
सात्त्विकैर्विधिवद्युक्त्या पीतं स्यादमृतं यथा ।
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्त्तितः ॥ १९० ॥

इति मद्यवर्गः ।

धातक्याऽभिषुतो धातकीफलासवः, माध्वीकं मधुप्रधानम्, रोचनं दीपनमित्यादि वक्ष्यमाणं, तद्वन्मृद्वीकेक्षुरसाभ्यां मिलिताभ्यां कृत आसवो ज्ञेयः । मध्विति मधुप्रधान आसवः । सुरा समण्डेति यवतण्डुलकृता बोद्धव्या, विष्टभ्येति विच्छेदः । मधूलको गोधूमभेदः, तत्कृतं मद्यं मधूलकम् । अन्ये तु मेदकमाहुः । दीपनमित्यादि—सौवीरतुषोदकगुणः । अम्लकांजिकमिति कांजिकमेवाम्लगुणम् ॥ १८३–१९० ॥

जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात् ।
तत्पतत्पतितं[3] चैव देशकालावपेक्षते ॥ १९१ ॥

संप्रति पानप्रधानस्य जलस्य गुणमाह—जलमित्यादि । सर्वमिति सुश्रुतप्रतिपादितधारकारहैमतौषारमपि, एकविधमिति "शिवाः खल्वापः" इत्यादिनोक्तगुणम् । तथा 'शीतं शुचि' इत्यादिवक्ष्यमाणगुणम्, ऐन्द्रमिति प्राण्यदृष्टवशेनेन्द्रप्रेरितम् । एकविधत्वेऽपि तस्य भेदमाह—तत्पतदित्यादि[4] । पतद्देशमाकाशगतभूतरूपम्, कालं च शीतोष्णादिरूपम्, तथा पतितं च भूमिविशेषरूपं देशम्, कालं च तथैवाऽपेक्षते । गुणदोषसम्बन्धे इति शेषः ॥ १९१ ॥

खात्पतत्[5]सोमवाय्वर्कैः स्पृष्टं कालानुवर्तिभिः ।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः ॥ १९२ ॥
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते ॥ १९३ ॥
श्वेते कषायं भवति पाण्डरे चैव तिक्तकम् ।
कपिले क्षारसंसृष्टमूषरे लवणान्वितम्[6] ॥ १९४ ॥
कटु पर्वतविस्तारे मधुरं कृष्णमृत्तिके ।
एतत् षाड्गुण्यमाख्यातं महीस्थस्य जलस्य हि १९५
तथाऽव्यक्तरसं विद्यादैन्द्रं कारं हिमं च यत् ।
यदन्तरीक्षात्पततीन्द्रसृष्टं
चोक्तैश्च पात्रैः परिगृह्यतेऽम्भः ॥

१ मद्यं शोकश्रमापहमिति पाठः. २ निस्तुषयवकृतं काञ्जिकं सौवीरम्, सतुषयवकृतं तुषोदकमिति शिवदासः. ३ उत्पतत्पतितमिति पाठः. ४ ननु एकविधत्वे किंचिज्जलं सदोषं किंचिच्च सगुणमिति यो भेद उपलभ्यते, तस्य का गतिरित्याहतत्पतदित्यादीति शिवदासः. ५ एनमेव देशकालसम्बन्धविशेषं दर्शयति खात्पतदित्यादि । सोमवाय्वर्कैरित्युपलक्षणं, तेन, वायुनीयमानानां गगनगतधूलीनां तथा मेघसहचरितलूतादीनां च ग्रहणं बोध्यमिति शि. । ६ कपिले कटुकं तोयं ऊषरे लवणान्वितमिति पाठः ।

तदैन्द्रमित्येव वदन्ति धीरा
नरेन्द्रपेयं सलिलं प्रधानम् ॥ १९६ ॥
ऋतावृताविह ख्याताः सर्व एवाम्भसो गुणाः १९७
ईषत्कषायमधुरं सुसूक्ष्मं विशदं लघु ।
अरूक्षमनभिष्यन्दि सर्वं पानीयमुत्तमम् ॥ १९८ ॥
गुर्वभिष्यन्दि पानीयं वार्षिकं मधुरं नवम् ।
तनु लघ्वनभिष्यन्दि प्रायः शरदि वर्षति ॥ १९९ ॥
तत्तु ये सुकुमाराः स्युः स्निग्धभूयिष्ठभोजनाः ।
तेषां भोज्ये च भक्ष्ये च लेह्ये पेये च शस्यते ॥ २००
हेमन्ते सलिलं स्निग्धं वृष्यं बलहितं गुरु ।
किंचित्ततो लघुतरं शिशिरे कफवातजित् ॥ २०१ ॥

एनमेव देशकालसम्बन्धमाह खादित्यादि । सौम्यत्वात्पृथिव्या अपि गगनागतधूलीरूपायास्तथा मेघसहचरितलूतादिविषादिरूपायाश्च ग्रहणं वक्तव्यम् । किंवा, वायुग्रहणादेव वायुना नीयमानायाः पृथिव्या ग्रहणम्, स्पृष्टं भवतीतिशेषः । कालानुवृत्तिभिरिति कालपराधीनैः कालप्रधानैरिति यावत् । एतेन, कालकृतसोमादिसंबन्धविशेषो जले विशेषं करोति, तेन न कालस्याकिंचित्करता । पतितजलस्य देशकालसम्बन्धमाह—शीतोष्णेत्यादि । यथासन्नमिति यस्मिन् काले यस्यां मह्यां ये गुणाः शीतादय उद्रिक्ता भवन्ति, तैः स्पृष्टं जलं भवति । एतेन, सुश्रुते प्रतिपादितगाङ्गसामुद्रभेदो गुणदोषसम्बन्धमात्रकृत एव दिव्यजलस्येति दर्शयति । तेन, यद्विषादिजुष्टं तत्सामुद्रसमानगुणत्वात् सामुद्रम् । यद्धूल्यादिना विषादिना च रहितं, तत्तद्गुणत्वाद्गाङ्गमित्युक्तं सुश्रुते । आश्विने तु मासि दिव्यजलस्य धूलीविषादिसम्बन्धो न भवत्येव, कालमहिम्ना, भवन्नपि वा न जलं तथा दूषयति, अत उक्तं सुश्रुते—"सामुद्रं तन्न पातव्यं मासादश्वयुजाद्विना" इति । अतः, हारीतवचनात्कार्त्तिकाग्रहायणयोरप्यान्तरीक्षं जलं ग्राह्यमेव भवति, यदाह "प्रवृत्तायां शरद्यऽस्मात्पश्चाद्वाते प्रवात्यपि । हेमन्ते वापि गृह्णीयात्तज्जलं मृन्मयैर्घटैः" इति । तेन, "अश्वयुजाद्विना" इति वचनं अश्वयुजात्प्रभृति जलोपादेयतोपदर्शनार्थम्, न त्वाश्विन एवोपादेयतोपदर्शनपरम् । अन्ये त्वाहुः "आश्विन एव परमान्तरीक्षं ग्राह्यम्" इति । जतूकर्णवचनं तु "वर्षासु चरन्ति घनैः सहोरगा वियति च कीटलूताश्च । तद्विषजुष्टमपेयं खजलमगस्त्योदयात्पूर्वम्" ॥ १९२-२०१ ॥

कषायमधुरं रूक्षं विद्याद्वासन्तिकं जलम् ।
ग्रैष्मिकं त्वनभिष्यन्दिरूपमित्येष निश्चयः ॥ २०२ ॥
विभ्रान्तेषु तु कालेषु यत्प्रयच्छन्ति तोयदाः ।
सलिलं तत्तु दोषाय युज्यते नात्र संशयः ॥ २०३ ॥
राजभीराजमात्रैश्च सुकुमारैश्च मानवैः ।
गृहीत्वा तु शरद्यापः प्रयोक्तव्या विशेषतः ॥२०४॥

दिव्यजलस्य प्राकृतगुणमाह—शीतमित्यादि । शिवमिति कल्याणकरत्वेन, मृष्टमिति वदनप्रियत्वेन । वक्ष्यमाणगुणविशेषहेतुमाह—भ्रष्टमित्यादि । पात्रमपेक्षत इति नद्यादिपात्रविशेषसम्बन्धमपेक्ष्य गुणविशेषवद्भवति । एतच्च, यद्यपि 'देशकालावपेक्षते' इत्यनेन पूर्वमेवोक्तम्, तथापि, कालाऽपेक्षया देशविशेषस्य प्रकर्षेण गुणविशेषे हेतुताप्रदर्शनार्थं पुनरुक्तम् । केचित्तु "श्वेते कषायं भवति" इत्यादिग्रन्थं पठन्ति, सतु नातिप्रसिद्धः ॥ २०२—२०४ ॥

नद्यः पाषाणविच्छिन्नविक्षुब्धाभिहतोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥२०५॥
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥ २०६ ॥
पश्चिमाभिमुखा याश्च पथ्यास्ता निर्मलोदकाः ।
प्रायो मृदुवहा गुर्व्यो याश्च पूर्वसमुद्रगाः ॥ २०७॥
पारियात्रभवायाश्च विन्ध्यसह्यभवाश्च याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥ २०८॥

आधारविशेषे गुणविशेषमाह—नद्य इत्यादि । पाषाणैर्विच्छिन्नं विक्षुब्धमभिहतं चोदकं यासां तास्तथा, एतेन,अधित्यकाप्रभवा एव हिमालये नद्यः पथ्या उक्ता भवन्ति, नोपत्यकाप्रभवाः । यतः, अधित्यकाप्रभवास्वेव पाषाणविच्छिन्नत्वादि, अतः, सुश्रुते यदुक्तम् "हिमवत्प्रभवा हृद्रोगादीन् जनयन्ति," तदुपत्यकाप्रभवाभिप्रायेणेति न विरोधः । यत्तु, अत्रोक्तं "मलयप्रभवाः क्रिमीन् जनयन्ति" तदपाषाणसिकतावाहिनद्यभिप्रायेण, इह "पाषाणसिकतावाहिनदीष्वमृतोपम्" इति न विरोधः । यत्तु, पारियात्रभवानां शिरोरोगादिकर्तृत्वम्, तत् पारियात्रदरीभवनदीजलाभिप्रायेण, सुश्रुते तु पारियात्रतडागभवनदीजलाभिप्रायेणोक्तम् "पारियात्रभवाः पथ्या" इति । तदुक्तम् विश्वामित्रेण "तडागजं दरीजं च तडागाद्यत्सरिज्जलम् । बलारोग्यकरं तत् स्याद्दरीजं दोषलं मतम्" ॥ प्रायोग्रहणात् "पूर्वसमुद्रगा" इति पूर्वसमुद्रगमनेऽपि गाङ्गं पथ्यं भवति, किंवा, यथोक्तलक्षणहिमालयभवत्वादेव गाङ्गं पथ्यम् । पारियात्रादयः पर्वताः स्वनामप्रसिद्धाः ॥ २०५—२०८ ॥

वसुधाकीटसर्पाखुमलसंदूषितोदकाः ।
वर्षाजलवहा नद्यः सर्वदोषसमीरणाः ॥ २०९ ॥
वापीकूपतडागोत्ससरःप्रस्रवणादिषु ।
आनूपशैलधन्वानां गुणदोषैर्विभावयेत् ॥ २१० ॥
पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम् २११
विस्रं त्रिदोषं लवणमम्बु यद्वरुणालयम् ।
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः ॥२१२॥

इत्यम्बुवर्गः ।

वर्षासु जलं वहन्तीति वर्षाजलवहाः, यदुक्तमग्र्याधिकारे "वर्षानादेयमुदकानाम्" इति । तस्येहाऽपथ्यत्वे उपपत्तिवर्ण-

नमिति न पौनरुक्त्यम् । प्रस्रवणादिष्विति जलमिति शेषः । वाप्यादयोऽनूपदेशधन्वदेशहिमालयादिपर्वतादिषु भवन्त्यतस्तथानूपादिजलगुणैरेव तद्गुणनिर्देशः कर्तव्यः। पश्चिमाभिमुखनदीजलपूर्वाभिमुखनदीजलाऽनूपजलधन्वजलपर्वतजलगुणाश्चोक्ता एव, तेन तद्गुणातिदेशो वाप्यादिषु बोद्धव्यः। उक्तञ्च हारीतेन "आनूपदेशे यद्वारि गुरु तत् श्लेष्मवर्द्धनम् । विपरीतमतो मुख्यं जाङ्गलं लघु चोच्यते" । सुश्रुतेऽपि वाप्यादीनां पृथगेवोक्ता गुणाः । स चेह कूपादीनां संस्कारादिः[1] प्रत्यक्षदृष्टो ग्रन्थविस्तरभयान्नोक्त एवेति मन्तव्यम् । वापी इष्टकादिबद्धतीर्था दीर्घिका, कूपः प्रसिद्धः, तटादागो गतिर्यस्य स तडागः। स पुनरुच्चदेशादागच्छज्जलबन्धनाद्भवति, अन्ये तु पुष्करिणीं तडागमाहुः । उत्सा निम्नादुत्तिष्ठज्जलस्थानम् । सरो दिव्यखातं पुरुषव्यापारं विना, तत्पुनः पम्पादि । प्रस्रवणी-निर्झरः । अन्ये तु ह्रदधाराजलानीति पठन्ति, तत्र ह्रदो नदीस्थजलप्रदेशो गम्भीरो जलाशयः । धारा तु पर्वतादेव जलधारारूपा पतन्ती । आदिग्रहणात् केदारकुण्डादीनां ग्रहणम् । क्लिन्नं पर्णादिभिर्युतं सदित्यर्थः । वरुणालये समुद्रे विस्रमामगन्धि । सुविनिश्चित इति सर्वजलगुणकथनात् । इत्यम्बुवर्गः ॥ २०९—२१२ ॥

**स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम् ।**
**गुरु मन्दं प्रसन्नं च गव्यं दशगुणं पयः ॥ २१३ ॥**
**तदेवंगुणमेवौजः सामान्यादभिवर्द्धयेत् ।**
**प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम् ॥ २१४ ॥**

जीवनीयसामान्याज्जलमनु क्षीरमुच्यते[2] । क्षीरजत्वाद्दध्यादय उच्यन्ते । प्रसन्नमिति निर्दोषम्, निर्दोषता तु प्रशस्तत्वेन गुण इत्युच्यते, किंवा, गुणानामसंख्येयत्वेन प्रसन्नत्वं गुर्वाद्यपठितमपि गुण एवेति ज्ञेयम् । एवंगुणमेवेति स्वाद्वादिदशगुणम् । सामान्यादिति सामान्यत्वात् ॥ २१३॥२१४ ॥

**महिषीणां गुरुतरं गव्याच्छीततरं पयः ।**
**स्नेहाऽन्यूनमनिद्राय[3] हितमत्यग्नये च तत् ॥ २१५ ॥**

महीषीक्षीरगुणे स्नेहोनमिति महिषीक्षीरं गव्यक्षीरात्स्नेहोनम् गौरवशैत्याभ्यां तु तदधिकमिति केचिद्ब्रुवते, तन्न, प्रत्यक्षमेव हि महीषीक्षीरादधिकमेव घृतं दृश्यते, तथा, जतूकर्णेऽप्युक्तम्, "गुरु शीतं स्निग्धतरं माहिषमतिवल्यं बृहणं चाऽग्र्यम्" सुश्रुतेऽप्युक्तं "गव्यात् स्निग्धतरम्" इति, तेन "स्नेहाऽन्यूनम्" इति पाठः । तेन, स्नेहादधिकमित्यर्थः, किंवा, 'स्नेहाऽन्यूनम्' इति स्नेहपूर्णमित्यर्थः[1] ॥ २१५ ॥

**रूक्षोष्णं क्षीरमुष्ट्रीणामीषत्सलवणं लघु ।**
**शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥२१६॥**
**वल्यं स्थैर्यकरं सर्वमुष्णं चैकशफं पयः ।**
**साम्लं सलवणं रूक्षं शाखावातहरं लघु ॥ २१७ ॥**
**छागं कषायमधुरं शीतं ग्राहि पयो लघु ।**
**रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥ २१८ ॥**
**हिक्काश्वासकरं तूर्णं पित्तश्लेष्मलमाविकम् ।**
**हस्तिनीनां पयो वल्यं गुरु स्थैर्यकरं परम् ॥२१९ ॥**
**जीवनं बृंहणं सात्म्यं स्नेहनं मानुषं पयः ।**
**नावनं रक्तपित्ते च तर्पणं चाक्षिशूलिनाम् ॥२२० ॥**

उष्ट्रीक्षीरादीनां सलवणत्वादि मधुरानुरसत्वेन बोद्धव्यम् । मधुरस्तु रसः प्रधान एव, दीर्घञ्जीवितीये "प्रायशो मधुरम्" इत्युक्तम्, न तु सर्वथा मधुरमेव । ऐकशफमिति वडवायाः। केचित्तु सर्वशब्देन खरवेगसरयोरपि क्षीरस्यायं गुण इत्यपि वदन्ति । उष्णमिति क्षीरान्तरापेक्षया तेन, सामान्यगुणे शीतत्वमुक्तमविरुद्धं भवति, यतः लघूत्तमात्तित्तिरसाद्गुरुरपि कटुर्लघुरेवोच्यते मधुराद्यपेक्षया, एवं शीततमादितरक्षीरादुष्णमिति । वडवायाः क्षीरं शीतमेव मूत्राद्यपेक्षया भवति । एवं रूक्षमित्येतदपि व्याख्येयम्[2] । यद्यपि च हस्तिक्षीरादीनि शास्त्रे प्रयोगेषु नोक्तानि तथापि कथितगुणं बुद्ध्वा तत्र तत्र प्रयोज्यानि ॥ २१६—२२० ॥

---

१ संस्कारः कथनरूपः कार्य इत्यर्थः । २ पयः क्षीरसंज्ञासामान्यात् पयसइव जीवनीयादिगुणयोगाच्च तोयवर्गानन्तरं क्षीरवर्गः प्रस्तूयते, तत्र श्रेष्ठत्वात् प्रथमं गव्यक्षीरगुणमाह—स्वादित्यादीति शिवदासः । ३ स्नेहादूनमनिद्रायेतिपाठान्तरम् ।

---

१ महिषीक्षीरं गव्यात् क्षीरात् गव्यक्षीरमपेक्ष्य गुरुतरमतिशयेन गुरु तथा शीततरं च, स्नेहात्पुनरूनं हीनमित्यर्थः । इदं न सङ्गच्छते प्रत्यक्षविरोधात्, प्रत्यक्षमेव माहिषक्षीरादधिकमेव घृतं दृश्यते, तथा जतूकर्णेऽप्युक्तम्, "गुरुशीतस्निग्धतरं माहिषमतिवल्यं वृंहणंचाऽग्र्यम्" इति, सुश्रुतेऽप्युक्तम्,—"गव्यात् स्निग्धतरम्" इति तस्मादत्र गव्यस्नेहादूनमिति योज्यम्, तेन महिषीक्षीरं गव्यस्नेहादूनं हीनम्, गव्यक्षीरात्पुनः स्नेहाधिकमेवेत्यर्थ इति चन्द्रिका । अन्ये तु, "स्नेहान्यूनम्" इति पठित्वा स्नेहाधिकमित्यर्थं कुर्वन्तीति शिवदासः । २ एकः शफः खुरो यासां ता एकशफाः, अत्राश्वाया इति वक्तव्ये यदैकशफमिति सामान्यशब्दप्रयोगं करोति, तद्वेगसरीप्रभृतीनामप्येकशफानां ग्रहणार्थम्, शाखावातहरमित्यत्र केचिच्छाखाशब्देन बाहू सक्थिनी चाहुः । अन्ये तु वक्त्रादीनाहुः । धान्याम्लस्यैवोभयत्राधारशक्तिप्रभावेन परस्परविरुद्धकार्यद्वयं भवति, तद्यथा वहिरन्तःपित्तहरत्वम्, एवं शाखागतवातहरत्वम्, कुक्षिगतवातहरत्वं चास्याधारशक्तिप्रभावेण मन्तव्यमित्याहुरिति शिवदासः ।

**रोचनं दीपनं वृष्यं स्नेहनं बलवर्द्धनम्।**
**पाकेऽम्लमुष्णं वातघ्नं मङ्गलं बृंहणं दधि ॥ २२१ ॥**
**पीनसे चातिसारे च शीतके विषमज्वरे।**
**अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते॥२२२॥**
**शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।**
**रक्तपित्तकफोत्थेषु विकारेष्वहितं च तत् ॥ २२३ ॥**

दधिगुणमाह—रोचनमित्यादि। अत्र रोचनमित्युक्त्वाऽपि "अरुचि" इति वचनमरुचिहरत्वेन, रोचनता तूपयोगकालएव वास्तवरुचिकरत्वेनोक्ता। बृंहणमिति रोगादिकृशस्य बृंहणम्, कार्श्ये चेति सहजकार्श्ये शस्यते इति बोद्धव्यम्, तेन न पौनरुक्त्यम्। पीनसे चतुर्विधेऽपि प्रभावाद्धितम्, किंवा, पीनसपाचकत्वात् सर्वत्र हितम्। यच्च वृष्यशीतकरत्वहितत्वादि दधिगुणपर्यालोचनयाऽनुपपद्यमानमिह दृश्यते, तत्प्रभावाद्बोद्धव्यम्। यच्च, गुणान्तरादेवाम्लत्वोष्णत्वस्निग्धत्वाल्लभ्यमानमपि वातघ्नत्वं पुनरुच्यते, तत्प्रकर्षार्थं, तथा, अम्लत्वादियुक्तस्यापि वातहन्तृतादिव्यभिचारदर्शनादिति बोद्धव्यम्। व्यभिचारोदाहरणानि च मन्दकमन्दजातमण्डादीन्यनुसर्त्तव्यानि। न्यायश्चायं सर्वान्नपानगुणकथने यथासंभवं वर्णनीयः। ग्रन्थप्रचुरतरताभीत्या सर्वं वस्तु वयं नोद्भावयामः। प्रायश इति वचनात्कालान्तरेऽपि गर्हितत्वं शरदादावपि प्रकृत्यादिवशाद्धितत्वं दर्शयति ॥ २२१—२२३ ॥

**त्रिदोषं मन्दकं जातं वातघ्नं दधि, शुक्रलः।**
**सरः, श्लेष्मानिलघ्नस्तु मण्डः स्रोतोविशोधनः॥२२४**

मन्दकं यदा क्षीरं विक्रियामापन्नं घनत्वं याति, तदा तन्मन्दकम्। जातं वातघ्नमिति यदा तु मन्दकावस्थामुत्सृज्य घनतया जातं सन् मधुरमीषदम्लं च भवति, तदा वातघ्नं विशेषेण भवतीत्यर्थः[2]। पूर्वे तु दधिगुणाः सुजातस्य व्यक्ताम्लस्य बोद्धव्याः। शुक्रलः सर इति च्छेदः। सरो दध्युपरिस्नेहः, शुक्रलः शुक्रस्रुतिवृद्धिकरः, अतएव सुश्रुते सरगुणे "वृष्यः शुक्रविवर्द्धनः" इति पदद्वयोपादानं कृतम्। मण्ड इति प्रकरणाद्दधिमण्डो मस्त्वित्यर्थः ॥ २२४ ॥

**शोफार्शोग्रहणीदोषमूत्रग्रहोदरारुचौ।**
**स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद्गरेषु च ॥ २२५ ॥**
**संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम्।**
**ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम् ॥ २२६ ॥**

शोफेत्यादि तक्रगुणः, मूत्रग्रहो मूत्रकृच्छ्राणि गरोऽकृत्रिमविषम्। संग्राहीत्यादि नवनीतगुणः नवोद्धृतं सद्यस्कम्, नवोद्धृतमिति वचनादभिनवस्यैव नवनीतस्य यथोक्तगुणाः प्रकर्षवन्तो भवन्तीति, पुराणस्य तु नैते बलवन्तो गुणा भवन्तीति ॥ २२५ ॥ २२६ ॥

**स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्द्धनम्।**
**वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥२२७॥**
**सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः।**
**सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ २२८ ॥**
**मदापस्मारमूर्च्छायशोषोन्मादगरज्वरान्।**
**योनिकर्णशिरःशूलं घृतं जीर्णमपोहति ॥ २२९ ॥**
**सर्पींष्यजाविमहिषीक्षीरवत्स्वानि निर्दिशेत्।**
**पीयूषो मोरटं चैव किलाटा विविधाश्च ये ॥२३०॥**

उत्पादक्रमागतस्य घृतस्य गुणमाह—स्मृतीत्यादि। सहस्रवीर्यमिति भूरिशक्तिकम्। कथं सहस्रवीर्यमित्याह—विधिवदिति। विधिवद् विधियुक्तं सदित्यर्थः, विधिश्च नानाकर्मकारिभिर्द्रव्यैः संस्कारः संयोगश्च, अतएवोक्तम् "नान्यः स्नेहस्तथा कश्चित्संस्कारमनुवर्त्तते", तथा तन्त्रान्तरे "घृतं योगवाहि" इति, तस्मात्सहस्रवीर्यतः कर्मसहस्रकृदिति योज्यम्। यत्तु सुश्रुतटीकाकृतः सुश्रुतोक्तघृतगुणेषु त्रिदोषापकर्षणमिति पठन्ति, तत्संस्कारेण कफहरणादिति ज्ञेयम्। मदेत्यादि। जीर्णं तु दशवर्षातीतम्, वचनं हि "पुराणं दशवर्षं स्यात्प्रपुराणमतःपरम्" इति। यथा यथा च जीर्णत्वप्रकर्षस्तथातथा गुणोत्कर्षो ज्ञेयः। उक्तं हि हारीते "यथा यथा जरां याति गुणवत्स्यात्तथा तथा" इति। अनुक्तसर्पिर्गुणानतिदिशति—सर्पींषीत्यादि। सर्पींषि स्वानीति संबंधः, तेन, अजाक्षीरवदजासर्पिर्निर्दिशेदिति। एवं शेषयोरपि वाच्यम्। अनेन च न्यायेन हस्त्यादिसर्पिरपि बोद्धव्यम्, हस्त्यादिसर्पिर्व्यवहाराभावात्साक्षान्नोक्तम् ॥ २२७—२३० ॥

**दीप्ताग्नीनामनिद्राणां सर्व एते सुखप्रदाः।**
**गुरवस्तर्पणा वृष्या बृंहणाः पवनापहाः ॥ २३१ ॥**
**विशदा गुरवो रूक्षा ग्राहिणस्तक्रपिण्डकाः।**
**गोरसानामयं वर्गो नवमः परिकीर्त्तितः ॥ २३२ ॥**

## इति गोरसवर्गः।

पीयूषः सद्यः प्रसूतायाः क्षीरम्। तदेव यावन्न परतोऽप्रसन्नतां याति, तावन्मोरट इत्युच्यते। किलाटो नष्टक्षीरभागः, यं लोकाः क्षीरसामित्याहुः। विशद इत्यादि तक्रपिण्डगुणः,

१ शुक्रलमितिपाठे शुक्रलं दधि मन्तव्यम्। २ त्रिदोषं मन्दकमिति क्षीरावस्थामतिक्रम्य संप्राप्तदध्यवस्थं मन्दकमुच्यते, तत्पुनस्त्रिदोषं दोषकोपकं; जातं वातघ्नमिति यदा तु तदेव मन्दकं मन्दकावस्थामुत्सृज्य कालवशाद् घनतया जातं सन्मधुरमीषदम्लं भवति, तदा वातघ्नं विशेषेण भवतीत्यर्थ इति शिवदासः।

१ अत्र घृतस्य स्मृत्यादिकर्तृत्वं तथाऽलक्ष्मीप्रशमकत्वं च गुणपर्यालोचनयाऽनुपपद्यमानं प्रभावादेव ज्ञेयम्, एवमन्यत्रापि गुणद्वाराऽनुपपद्यमानकार्यस्य प्रभावजनकत्वं व्याख्येयमिति शिवदासः। २ पीयूषमोरटयोर्लक्षणं यथा "क्षीरं सद्यःप्रसूतायाः पीयूषमिति संज्ञितम्। सप्तरात्रात्परं क्षीरमप्रसन्नं च मोरटम्" इति। जेज्जटस्तु मोरटस्थाने मोरणमिति पठित्वा मोरणी नष्टक्षीरद्रवभाग इति व्याचष्टे। किलाटो नष्टक्षीरपिण्डं यमाहुर्लोकाः क्षीरसा इतीति शिवदासः।

तक्रपिण्डस्तक्रकूर्चिकाया एव स्रुतद्रवो घनो भागः । गोरसानामित्यत्र 'आदि' शब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन, महिषीक्षीरादीनामपि ग्रहणम्, किंवा प्राधान्याद्गोरसनिर्देशाद्गोरसतया गोरसनिष्पन्नाः सर्व एव क्षीरदधितक्रादयो गृह्यन्ते, लोके हि सर्वेष्वेवैषु गोरससंज्ञा माधुर्यसामान्यात् । इति गोरसवर्गः ॥ २३१—२३२ ॥

**वृष्यः शीतः सरः स्निग्धो बृंहणो मधुरो रसः ।**
**श्लेष्मलो भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते ॥२३३॥**
**शैत्यात्प्रसादान्माधुर्यात्पौण्ड्रकाद्वांशको वरः ।**
**प्रभूतक्रिमिमज्जासृङ्मेदोमांसकरो गुडः ॥ २३४ ॥**

इक्षुविकृतिप्रायो वर्ग उच्यते । भक्षितस्येति दन्तपीडितस्य । यान्त्रिक इति यन्त्रपीडितः, विदाहश्चास्य प्रायशस्त्वग्रन्थियुक्तस्य यन्त्रेण पीडनात्, तथा, कालान्तरमवस्थानाच्च । वचनं हि "त्वग्रन्थिसंयोगाद्यान्त्रिकस्तु विदह्यते" उक्तंच हारीते "व्यापित्वात्सुकुमारो हि रसो यन्त्रनिपीडितः । सौक्ष्म्यात्स्पृष्टोऽनिलार्काभ्यां भृशं काये विदह्यते" । तत्र व्यापित्वादिति त्वगादियुक्तेक्षुकाण्डभवत्वात् । यदुच्यते विदाहित्वे यान्त्रिकस्य रक्तपित्तहन्तृत्वमुक्तं विरुध्यते, यथा "मधूदकस्येक्षुरसस्य चैव पानाच्छमं गच्छति रक्तपित्तम्" । तन्न, यतः, दन्तनिष्पीडितस्यैवाविदाहिनो रक्तपित्ते ग्रहणं भविष्यति । किंवा, यान्त्रिकोऽपि विदाहकारकत्वादिसंयोगस्य यथा कालान्तरावस्थानस्य च त्यागं कृत्वोपयोगः कर्त्तव्यः । "यान्त्रिकस्तु विदह्यते" इति वचनं प्रायोवादमात्रिल्य बोध्यम् । अन्ये तद्दोषभयाद्विदह्यत इति शीघ्रं पच्यत इति व्याख्यानयन्ति ॥ २३३ ॥ २३४ ॥

**क्षुद्रो गुडश्चतुर्भागत्रिभागार्द्धावशेषितः ।**
**रसो गुरुर्यथापूर्वं धौतः स्वल्पमलो गुडः ॥ २३५ ॥**
**ततो मत्स्यण्डिकाखण्डशर्करा विमलाः परम् ।**
**यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥२३६॥**

प्रभूतक्रिम्यादिकारणत्वात्प्रभूतक्रिम्यादिकरो गुड उच्यते । क्षुद्रगुडस्तथा चतुर्भागत्रिभागार्द्धावशेषितः । रस इत्यत्र चकारलोपो द्रष्टव्यः, तेन, क्षुद्रगुडश्चतुर्भागावशेषिताद्रसाद्गुरुस्तथा त्रिभागाच्चतुर्भागावशेषितो गुरुरित्यादि ज्ञेयम् । अत्र क्षुद्रगुडोऽसितगुड इत्युच्यते । फाणितं च तण्डुलीभावाद्भवति । धौतः स्वल्पमल इति मलावशेषेण धौतेऽल्पमलो भवति, तेनाल्पक्रिम्यादि भवतीति भावः । तत इति धौतगुडात् । मत्स्यण्डिका खण्डमध्ये पाकाद्घनीभूता मत्स्याण्डनिभा भवति । विमलाः परमित्युत्तरोत्तरं विमलाः । भवेच्छैत्यं तथा तथेति मत्स्यण्डिकायाश्च खण्डः शीततरः, ततश्च शर्करा शीततमेत्यर्थः ॥ २३५ ॥ २३६ ॥

**वृष्याः क्षीणक्षतहिताः सस्नेहा गुडशर्कराः ।**
**कषायमधुराः शीताः सतिक्तायासशर्कराः ॥२३७॥**
**रूक्षा वम्यतिसारघ्नी छेदनी मधुशर्करा ।**
**तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्वशर्कराः ॥२३८॥**

गुडशर्करेति यासमधुशर्करयोर्व्यवच्छेदार्थम् । यासशर्करा दुरालभाक्वाथकृता शर्करा । मधुशर्करा तु मधुमण्डेषु शर्करा भवति ॥ २३७—२३८ ॥

**माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः ।**
**माक्षिकं प्रवरं तेषां विशेषाद्भ्रामरं गुरु ॥ २३९ ॥**
**माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पौत्तिकम् ।**
**क्षौद्रं तु कपिलं विद्याच्छ्वेतं भ्रामरमुच्यते ॥ २४० ॥**
**वातलं गुरु शीतं च रक्तपित्तकफापहम् ।**
**सन्धातृ च्छेदनं रूक्षं कषायमधुरं मधु ॥ २४१ ॥**
**हन्यान्मधूष्णमुष्णार्तमथवा सविषान्वयात् ।**
**गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥ २४२ ॥**

मधुशर्कराप्रसङ्गेन मध्वभिधानम् । मक्षिका पिङ्गलाः, तद्भवं माक्षिकम् । भ्रमरः प्रसिद्धः । क्षुद्रमक्षिकाभवं क्षौद्रम् । पिङ्गलामक्षिका महत्यः पुत्तकाः, तद्भवं पौत्तिकम् । छत्रादयश्चत्वारो मधुभेदाः सुश्रुतोक्ताः सामान्यमधुगुणा एव ज्ञेयाः, किंवा, अप्रशस्तत्वादिह नोक्ताः । 'केचिन्माक्षिकं तैलवर्णं स्यादित्यादि' श्लोकं पठन्ति । उष्णार्त्तमथवेति भाषया, यथा उष्णं मधु हन्यात्र तथा उष्णार्त्तमिति सूचयति । तत्रैव हेतुमाह—विषान्वयादिति । सविषप्रायाणि नानापुष्पाणि, किंवा, सविषा एव मक्षिकादयोऽन्वया उत्पत्तिस्थानानि यस्य तत्सविषान्वयं मधु, तेन, सविषान्वयाद्विषानुगतस्योष्णविरोधित्वस्यैव मधुनोऽनुगमो भवति, न तु सविषत्वस्य । तथा सत्युष्णमपि मारकं स्यात्, किंवा, "अथवा" इति सविषान्वयादित्यनेन संबध्यते, तेन सविषान्वयादन्यतश्च शैत्यात्सौकुमार्याच्च उष्णेन मधु विरुध्यत इत्यर्थो भवति । उक्तं हि हारीते "नानापुष्पप्रकाराणां रससारात्मकं मधु । तच्छैत्यात्सौकुमार्याच्च सर्वैरुष्णैर्विरुध्यते" । सुश्रुतेऽप्युक्तम् "तत्सौकुमार्याच्च तथैव शैत्यादित्यादि । अल्पस्य मधुनो हितत्वे

१ शैत्यमित्युपलक्षणम्, तेन, मधुरत्वादिकमपि बोध्यम्, उक्तंच सुश्रुते "यथायथैषां वैमल्यं मधुरत्वं तथा तथा । स्नेहगौरवशैत्यानि रसत्वं च तथा भवेदिति" इति शिवदासः ।

१ मध्विति पाठः । २ वातलमित्यादि मधुसामान्यस्य गुणः । ननु सुश्रुते मधुनस्त्रिदोषशमनत्वं लघुत्वं चोक्तम्, अत्र च वातलं गुरुत्वं चोच्यते इति विरोधः, सत्यम्, सुश्रुते त्रिदोषशमनत्वं यदस्योक्तम्, तत्प्रभावान्मिलितस्त्रिदोषारब्धज्वरहरतया ज्ञेयम्, अत्र तु पृथग्वातजनकमुक्तमिति न विरोधः । तथा सुश्रुते—यल्लघुत्वमुक्तम्, तत्पुराणाभिप्रायेण, अत्र पुराणादिविशेषमनादृत्य गुरुत्वमुक्तम्, चक्रस्तु लघ्विति व्याख्यानेन विरोधं परिहरतीति शिवदासः ।

हेतुमाह—गुर्वित्यादि । गुरुत्वान्मध्वामकारकं भवति, रूक्षं कषायं शैत्यन्तु महात्ययं वातकरमिति भावः॥२३९-२४२॥

**नातः कष्टतमं किंचिन्मध्वामात्तद्धि मानवम् ।**
**उपक्रमविरोधित्वात्सद्यो हन्याद्यथाविषम् ॥ २४३ ॥**
**आमे सोष्णा क्रिया कार्या सा मध्वामे विरुध्यते ।**
**मध्वामं दारुणं तस्मात्सद्यो हन्याद्यथाविषम् ॥२४४॥**
**नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ।**
**इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मतः ॥ २४५ ॥**

**इतीक्षुवर्गः ।**

मध्वामस्य महात्ययतामाह—नात इत्यादि । उपक्रमविरोधित्वं मध्वामे यथा आमे तूर्णं पथ्यम्, तन्मधुनो विरुद्धम्, यत्तु मधुहितं शीतम्, तदामे विरुद्धम् । मधुनो योगवाहित्वमाह—नानेत्यादि । यस्मान्नानारसादिवीर्यादिभ्यः पुष्पेभ्य उत्पन्नं तन्मधु, तेनानभिव्यक्तनानाशक्तिकमेव । ततश्च, येन द्रव्येण वामनीयेनाऽस्थापनीयेन वा वृष्येण कार्यान्तरकारकेण वा युज्यते, तस्यैव कर्म करोति समानानुकारिद्रव्यप्रबोधितशक्तित्वादिति भावः । चकारोऽत्र हेत्वन्तरसमुच्चये, तेन प्रभावाच्चेति बोद्धव्यम् । तेन, सत्यपि नानौषधिसंभवत्वे प्रभावान्न क्षीरमद्यादयो योगवाहिनः, तथा, अनानात्मका अपि शिलाजतुतैलादयो योगवाहिनो भवन्ति । योगवाहित्वेऽपि मधु स्नेहने न प्रयुज्यते, वाते रूक्षादिगुणयुक्तत्वात् । नानाद्रव्यात्मकत्वेऽपि मधु रूक्षकषायाभ्यां द्वाभ्यामेवाऽविर्भूतं स्यात्, प्रायेण रूक्षकषायगुणाधिकानामेव मधुमक्षिकाणां च करणादिति बोद्धव्यम् । अनेन न्यायेन, नानाद्रव्यात्मकत्वेन सर्वगुणता मधुनो निरस्ता भवति । सुश्रुतेऽप्येवमेव योगवाहित्वं "तच्च नाना" इत्यादिना ग्रन्थेन मधुन उक्तम् । इक्षुविकृतिप्राय इति इक्षुविकृतिप्रधानः, तेन, वासशर्करादिकथनमप्यत्राविरुद्धमिति भावः । इतीक्षुवर्गः ॥ २४३—२४५ ॥

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगविनाशिनी ।**
**स्वेदाग्निजननी पेया वातवर्चोऽनुलोमनी ॥ २४६ ॥**
**तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका ।**
**मण्डस्तु दीपयत्यग्निं वातं चाप्यनुलोमयेत् ॥२४७॥**
**मृदूकरोति स्रोतांसि स्वेदं संजनयत्यपि ।**
**लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम् ॥२४८॥**
**दीपनत्वाल्लघुत्वाच्च मण्डः स्यात्प्राणधारणः ।**
**लाजपेया श्रमघ्नी तु क्षामकण्ठस्य देहिनः ॥ २४९ ॥**
**तृष्णातीसारशमनो धातुसाम्यकरः शिवः ।**
**लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः ॥२५०॥**
**मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ।**
**देयश्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ॥२५१॥**

१ ग्राही दोषविपाचन इति पाठः

**क्षुत्पिपासासहः पथ्यः शुद्धानां च मलापहः ।**
**शृतः पिप्पलिशुण्ठिभ्यां युक्तो लाजाम्लदाडिमैः॥२५२**

संप्रति शूकधान्यादिवर्गैर्यथासंभवं संपादितस्य कृतान्नस्य पेयादेर्गुणान् वक्तुं कृतान्नवर्ग उच्यते[1] । ते च पेयादीनां गुणाः केचित्संस्कारसंयोगादिजाः, केचित्प्राकृता अपि ज्ञेयाः । न च वाच्यम्, पेयादीनामेव गुणेन बाधितत्वात् शूकधान्यादीनां पृथग्गुणो न वाच्य इति, यतः, पेयादयो हि प्रकृतिगुणानुविधायिनः सन्तः स्वगुणमावहन्ति, तेन; कृतान्नस्य गुण उच्यते, स यदि रक्तशाल्यादिप्रकृतावपि भवति, तदा बलवान्भवति, अथ प्रकृतौ विपरीतो गुणो भवति, तदा कृतान्नगुणस्याल्पत्वं भवतीति मन्तव्यम् । अत्र स्वस्थातुरहिततत्वेनादौ पेयोच्यते, पेया बहुद्रवा यवागूः, विलेपी विरलद्रवा यवागूः । पेयादिक्रमेणान्ने वक्तव्ये प्रथमोत्पद्यमानत्वेन मण्डगुणकथनम् । दीपनलघुत्वाभ्यामग्निं यस्मात्करोति, तस्माल्लङ्घितादीनां प्राणधारण इति ज्ञेयम् । सुसंस्कृत इति धान्याकपिप्पल्यादिसुसंस्कृतः । शुद्धानां मलापह इति सम्यक् शुद्धानामपि कोष्ठोपलेपकदोषापहरत्वेन, यदुच्यते शुद्धानामिति ईषच्छुद्धानाम्, तेन, ईषच्छुद्धा शेषदोषसंबन्धान्मलापह इत्युपपन्नम्, तथा, सुश्रुतेऽपि, "लाजमण्डो विशुद्धानाम्" इत्यकरोत्, विशेषादीषच्छुद्धानामिति बोध्यम् । तन्न सत्, ईषद्विशुद्धे पेया निषिद्धैव, वचनं हि "कफपित्ते विशुद्धेऽल्पे मद्यपे वातपैत्तिके । तर्पणादिक्रमः कार्यः पेयाऽभिष्यन्दयेद्धि तान्" ॥ २४६—२५२ ॥

**मण्डः सन्दीपयत्यग्निं वातं चाप्यनुलोमयेत् ।**
**सुधौतः प्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः ॥२५३॥**
**भृष्टतण्डुलमिच्छन्ति गरश्लेष्मामयेष्वपि ।**
**अधौतः प्रस्रुतः स्विन्नः शीतश्चाप्योदनो गुरुः ॥२५४॥**
**मांसशाकवसातैलघृतमज्जफलौदनाः ।**
**बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च ॥२५५॥**

स्विन्न इत्युत्स्विन्नधान्यतण्डुलकृतः, किंवा, सम्यक्स्विन्नत्वेन मृदुभूतः, सन्तप्त इति सहजेनोष्मणा, न तु पुनस्तापनेन, वचनं हि "विवर्जयेत् स्थिरं शीतमन्नमुष्णीकृतं पुनः" इति । भृष्टतण्डुलकृतमोदनं भृष्टतण्डुलम् । अधौतोऽधौततण्डुलकृतः । अत्र सुधौतत्वादिगुणविशिष्टस्यौदनस्य लघुत्ववचनेन तद्विपरीतानामधौतादीनां गुरुत्वमर्थतः सिद्धमपि यत्पुनरुच्यते, तत्स्पष्टार्थम् । सन्तर्पणा इति तदात्वेऽपि बलकरा मांसादिसंयोगसाधिताश्चौदना एव बोध्याः । अत्र

१ धान्यादीनां संस्कारविशेषाद्धितं गुणमभिधातुं कृतान्नवर्ग उच्यत इति शिवदासः । २ सुधौत इत्यादि । सुधौत इति कुण्डलेन प्रक्षालनेन च निर्मलीकृतः, प्रस्रुत इति स्राव्यावितद्रवभागः इति शिवदासः ३ अत्रांतरे—तथा पर्युषितश्चैव खरः पिच्छिल एवचेति पाठः

न्धाभ्यां शाकमकुष्ठकाभ्यामपि संयुक्तस्यौदनस्य बल्यत्वादिसंयोगमहिम्ना तथा घृतादिसंस्काराच लोकव्यवहारक्रियमाणत्वाद्बोद्धव्यम् ॥ २५३—२५५ ॥

तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः।
कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ॥२५६॥
स्विन्नभक्ष्यास्तु ये केचित्सौप्यगोधूमयावकाः।
भिषक् तेषां यथाद्रव्यमादिशेद्गुरुलाघवम् ॥२५७॥
अकृतं कृतयूषं च तनुं संस्कारिकं रसम्।
सूपमम्लमनम्लं च गुरुं विद्याद्यथोत्तरम् ॥ २५८ ॥

यवपिष्टमुष्णोदकसिक्तमीषत्स्विन्नमपूपीकृतं कुल्माषमाहुः। स्विन्नभक्ष्या इत्युत्स्वेदेन भक्ष्यकृता इण्टरिकादयः। यथाद्रव्यमिति वदन्नन्यत्र प्रकृतिगुणोपमर्दनलाजादाविव न गुणान्तरोदय इति दर्शयति। अकृतकृतयूषलक्षणम् "अस्नेहलवणं सर्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्" इति। तनुमिति स्वल्पमांसत्वेनाऽघनम्, संस्कारिकमिति बहुमांसादिसंस्कृतत्वाद्घनम् ॥ २५६—२५८ ॥

सक्तवो वातला रूक्षा बहुवर्चोऽनुलोमिनः।
तर्पयन्ति नरं सद्यः पीताः सद्योबलाश्च ते ॥२५९॥
मधुरा लघवः शीताः सक्तवः शालिसंभवाः।
ग्राहिणो रक्तपित्तघ्नास्तृष्णाछर्दिज्वरापहाः ॥ २६० ॥

सक्तूनां रूक्षत्वेऽपि वातलत्वाभिधानं तक्रस्य रूक्षस्यापि वातहारित्वदर्शनात्। पीता इत्यनेन सक्तूनां पिण्डोपयोगे निषेधं दर्शयति। तर्पयन्ति तृप्तिं जनयन्ति, सद्योबलास्तदात्वेनैव वाजीकरणवद्बलकराः। एतेन, परिणामेन बलापहत्वमप्युक्तं भवति ॥ २५९ ॥ २६० ॥

हन्याद्व्याधीन् यवापूपो यावकोवाट्य एव च।
उदावर्तप्रतिश्यायकासमेहगलग्रहान् ॥ २६१ ॥
धानासंज्ञास्तु ये भक्ष्याः प्रायस्ते लेखनात्मकाः।
शुष्कत्वात्तर्पणाश्चैव विष्टम्भित्वाच्च दुर्जराः ॥ २६२॥
विरूढधानाः शष्कुल्यो मधुक्रोडाः सपिण्डकाः।
पूपाः पूपलिकाद्याश्च गुरवः पैष्टिकाः परम् ॥२६३॥

यवकृतो वाट्यो यावको वाट्यः, वाट्यो भृष्टयवौदनैः। धाना भृष्टयवाः। अङ्कुरितस्य यवस्य धाना विरूढधानाः। शष्कुल्यः शालिपिष्टाः सतिलास्तैलपक्काः क्रियन्ते। मधुक्रोडाः पाकघनीभूतमधुगर्भाः। सपिण्डका इति मधुक्रोडा एव सपिष्टकपिण्डाः, अतस्त्वाह—"विमर्द्य समिताचूर्णं[2] मृदुपाकं गुडान्वितम्। घृतावगाहे गुडिकां वृतां पक्कां सकेशराम्। सौगन्धिकाधिवासां च कुर्यात् पूपलिकां बुधः। स एव खण्डसंयानः सिताघ्रातकपूरितः। मातुलुङ्गत्वचा चैव वेष्टितो मधुशीर्षकः" इति। मधुशीर्षक एव मधुक्रोडः। पूपाः पिष्टिकाः। पूपलिका चापटिकेति ख्याता ॥२६१-२६३॥

फलमांसवसाशाकपललक्षौद्रसंस्कृताः।
भक्ष्या वृष्याश्च बल्याश्च गुरवो बृंहणात्मकाः ॥२६४॥
वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः।
गुरवस्तर्पणा वृष्याः क्षीरेक्षुरसपूपकाः ॥ २६५ ॥
सगुडाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः।
वृष्या बल्याश्च भक्ष्यास्तु ते परं गुरवः स्मृताः ॥२६६॥

पललं तिलचूर्णम्। वेशवारः सूदशास्त्रे "मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम्। पिप्पलीखण्डमरिचगुडसर्पिः समन्वितम्। ऐकध्यं विपचेत्सम्यग्वेशवार इति स्मृतम्"। क्षीरप्रधानाः पूपाः क्षीरपूपाः। सगुडा इत्यादौ 'सक्षीराः' इति क्षीरयोगमात्रम्, न क्षीरप्रधानतेति न पौनरुक्त्यम्। ॥ २६४—२६६ ॥

सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः।
गुरवस्तर्पणा वृष्या हृद्या गौधूमिका मताः ॥२६७॥
संस्कारात्लघवः सन्ति भक्ष्या गोधूमपैष्टिकाः।
धानापर्पटपूपाद्यास्तान् बुद्ध्वा निर्दिशेत्तथा ॥२६८॥

सस्नेहा इति पिष्टावस्थायामेव स्नेहयोगाद्गुरुत्वेनोक्तानामपि भूयोऽग्निसंयोगादिना संस्काराल्लघव इति। बुद्ध्वा निर्दिशेदिति संस्कारगुणं तथा प्रकृतिगुणं च बुद्ध्वा यथोचितं गुणं निर्दिशेत् ॥ २६७ ॥ २६८ ॥

पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान्।
यावा विष्टभ्य जीर्यन्ति सरसा भिन्नवर्चसः ॥२६९॥
सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः।
सकटुस्नेहलवणानल्पशो भक्षयेत्तु तान् ॥ २७० ॥
मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये।
गुरवस्ते व्यतिक्रान्तपाकाः पुष्टिबलप्रदाः ॥ २७१ ॥

पृथुकाश्चिपिटाः। यावा इति यवचिपिटाः, अन्ये तु गान्धारदेशप्रसिद्धान् संपिष्टसंज्ञानाहुः, सरसा अशुष्काः। सूप्यविकृता इति मुद्गमाषादिविकाराः। मृदुपाकाः स्तोकाऽग्निसंयोगसाध्याः। व्यतिक्रान्तपाका इति चिरेण जरां गच्छन्ति ॥ २६९—२७१ ॥

१ यावको वाट्य इति यवकृतो भक्ष्य इति शिवदासः। वाट्यो यवगोधूमादिभिर्दलितैः कृतः, अन्ये तु भृष्टयवकृतो भक्ष्य इत्याहुरिति, सुश्रुतटीकायां डल्हणः। २ समिताचूर्णं गोधूमचूर्णम्।

१ पूपः पूया इति प्रसिद्ध इति शिवदासः। २ हृद्याश्चेति पाठः। ३ क्षीरेक्षुरसपूपका इति क्षीरे इक्षुरसे च भाविताः पूपिका इत्यर्थ इति शिवदासः। ४ सस्नेहा इति पिष्टकावस्थायामेव स्नेहयोगादिति शिवदासः। ५ गुरूणामपि भक्ष्याणां संस्काराल्लघुत्वं भवतीत्याह संस्कारादिति भूयोऽग्निसंयोगादिना, बुद्ध्वेति संस्कारगुणं प्रकृतिगुणं च बुद्ध्वा यथोचितं गुणं विनिर्दिशेदिति शिवदासः।

**द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक्तथा ।**
**भक्ष्याणामादिशेद्बुद्ध्वा यथास्वं गुरुलाघवम् ॥२७२॥**
**नानाद्रव्यैः समायुक्तः पक्वामक्लिन्नभर्जितैः ।**
**निमर्दको गुरुर्हृद्यो वृष्यो बलवतां हितः ॥ २७३ ॥**
**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।**
**स्नेहनं तर्पणं हृद्यं वातघ्नं सगुडं दधि ॥ २७४ ॥**

अनुक्तगुणातिदेशार्थमाह—द्रव्यसंयोगेत्यादि । द्रव्यमानं[1] पृथगिति भक्ष्यकरणे संयुक्तानां मध्ये कस्य कियन्मानमिति बुद्ध्वा । यथास्वमिति यस्य द्रव्यस्य गौरवं लाघवं वा बलवद्भवति तं निर्दिशेत् । रसाललक्षणम्, "सचातुर्जातकाजाजि सगुडार्द्रकनागरम् । रसाला स्याच्छिखरिणी संघृष्टं ससरं दधि" । रसालाप्रसङ्गेन सगुडदधिगुणमाह—स्नेहनमित्यादि ॥ २७२—२७४ ॥

**द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पानकम् ।**
**परूषकाणां क्षौद्रस्य यच्चेक्षुविकृतिं प्रति ॥ २७५ ॥**
**तेषां कट्वम्लसंयोगाः पानकानां पृथक्पृथक् ।**
**द्रव्यमानं च विज्ञाय गुणकर्माणि चादिशेत्[2]॥२७६॥**
**कट्वम्लस्वादुलवणा लघवो रागषाडवाः ।**
**मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः[3] ॥ २७७ ॥**
**आम्राऽऽमलकलेहाश्च बृंहणा बलवर्द्धनाः ।**
**रोचनास्तर्पणाश्चोक्ताः स्नेहमाधुर्यगौरवात् ॥ २७८ ॥**
**बुद्ध्वा संयोगसंस्कारं द्रव्यमानं च तच्छ्रितम् ।**
**गुणकर्माणि लेहानां तेषां तेषां तथा वदेत् ॥२७९॥**

पानकानामपि कृतान्नतो भेदात्तद्गुणमाह—द्राक्षेत्यादि । यच्चेक्षुविकृतिं प्रति पानकमिति सम्बन्धः । रागषाडवं केचिदेवं वदन्ति "क्वथितन्तु गुडोपेतं सहकारफलं नवम् । तैलनागरसंयुक्तं विज्ञेयो रागषाडवः" इति । किंवा, "सितारुचकसिद्धार्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकयान्वितः"। षाडवस्तु मधुराम्लद्रव्यकृतः ।' आम्राऽऽमलकलेहास्तु तयोः पृथक् क्वाथेन सशर्करेण घनाः क्रियन्ते । अनुक्तपानकगुणातिदेशार्थमाह—बुद्ध्वेत्यादि । अस्य "द्रव्यसंयोग" इत्यादिवद्व्याख्यानम् ॥ २७५—२७९ ॥

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।**
**कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम् ॥ २८० ॥**
**शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ।**
**विद्याद्वर्गकृतान्नानामेकादशतमं भिषक् ॥ २८१ ॥**

इति कृतान्नवर्गः ।

शुक्तलक्षणम्, "यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" । तदाऽऽसुतमिति शुक्तमध्यस्थितं मूलककूष्माण्डादि । शिण्डाकी स्वनामप्रसिद्धा तीरभुक्तौ[1] । आसुतं चान्यदिति सन्धानान्तरम् । कालाम्लमिति चिरकालावस्थानादम्लं नवम्लद्रव्यसंयोगात् । कृतान्नानामिति करणनिष्पादितमण्डपेयादीनाम् । इति कृतान्नवर्गः ॥ २८०—२८१ ॥

**कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।**
**पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्धनम् ॥२८२॥**
**वातघ्नेषूत्तमं बल्यं त्वच्यं मेधाग्निवर्धनम् ।**
**तैलं संयोगसंस्कारात्सर्वरोगापहं मतम्[2] ॥ २८३ ॥**
**तैलप्रयोगादजरा निर्विकारा जितश्रमाः ।**
**आसन्नतिबलाः संख्ये दैत्याधिपतयः पुरा ॥ २८४ ॥**
**ऐरण्डतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।**
**वातासृग्गुल्महृद्रोगजीर्णज्वरहरं परम् ॥ २८५ ॥**
**कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम् ।**
**कफशुक्रानिलहरं कण्डूकोठविनाशनम् ॥ २८६ ॥**
**पियालतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।**
**हितमिच्छन्ति नात्यौष्ण्यात्संयोगे वातपित्तयोः॥२८७**
**आतस्यं मधुराम्लन्तु विपाके कटुकं तथा ।**
**उष्णवीर्यं हितं वाते रक्तपित्तप्रकोपणम् ॥ २८८ ॥**

१ अनुक्तभक्ष्यातिदेशार्थमाह संयोगेत्यादि । यस्मिन् भक्ष्ये गुरुद्रव्यसंयोगः तत्र गुरुत्वमन्यथा लघुत्वम् । तथा यत्राल्पाग्निसंयोगादिसंस्कारः, तत्र गुरुत्वमन्यथा लघुत्वम् । द्रव्यमानमिति, यत्र भक्ष्ये लघुगुरुबहुद्रव्यसंयोगस्तत्र कस्य द्रव्यस्य कियन्मानमिति बुद्ध्वा यस्याधिक्यं तत्कृतं गौरवं लाघवं वा विनिर्दिशेदित्यर्थ इति शिवदासः । २ उक्तानुक्तपानकज्ञानोपायमाह तेषामित्यादि । नहि नियतं द्रव्यं पानके तु संयुज्यते, किन्तर्हि पुरुषाणामभिलाषात् तथा व्याधिविशेषैश्च तानि तानि द्रव्याणि सह युज्यन्ते, अतस्तत्कट्वम्लादि द्रव्यसंयोगं बुद्ध्वा तथा संयुक्तानां द्रव्याणां च मध्ये कस्य कियन्मानमिति बुद्ध्वा तथा संयुक्तानांच द्रव्याणामुक्तानुक्तपानकानां गुणकर्माणि निर्दिशेदिति शिः । २ रागषाडवा इति रागाश्च षाडवाश्चेत्यर्थः, तत्र रागः "सिता रुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागोराजिकया कृतः ।" षाडवाः पुनर्लवणाम्लमधुरद्रव्यजाः नानाविधाः । अन्ये तु पुनरेवं वदन्ति यदाह बलः—"क्वथितन्तु गुडोपेतं सहकारफलं नवम् । तैलनागरसंयुक्तं विज्ञेयो रागषाडवः" । ३ आम्रामलकलेहा इति आम्रस्यामलकस्य वा रसेनातपसंयोगादग्निसंयोगाद्वा घनीभूतेन सशर्करेण कृता लेहा इत्यर्थ इति शिवदासः ।

१ तीरभुक्तिर्विदेहदेशः तिहोदिति यस्य प्रसिद्धिः । २ सूक्ष्ममिति सूक्ष्मस्रोतोऽनुसारि । व्यवायीति अपक्वमेवाखिलदेहव्यापकम् । त्वच्यमित्यभ्यङ्गात् । यत्तु वाग्भटे त्वग्दोषकरत्वमुक्तं तैलस्य तद्भक्षणाभिप्रायेणेति न विरोधः । अन्ये तु तत्रापि त्वग्दोषहृदिति पठन्ति, तत्तु न टीकाकृद्भिर्व्याख्यातम् तैलमिति तिलभवस्नेह इति शिवदासः ।

कुसुम्भतैलमुष्णं च विपाके कटुकं गुरु ।
विदाहि च विशेषेण सर्वरोगप्रकोपणम्[1] ॥ २८९ ॥
फलानां यानि चान्यानि तैलान्याहारसन्निधौ ।
युज्यन्ते गुणकर्मभ्यां तानि ब्रूयाद्यथाफलम् ॥२९०॥
मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा॥२९१॥

आहारमभिधाय तद्योगिद्रव्यमुच्यते । तत्र सर्पिष उक्तत्वात्तैलमेवासन्नसंस्कारप्रधानत्वादाह—कषायेत्यादि । संयोगाच्च संस्काराच्चेति संयोगसंस्कारात्, संस्कारस्तैलस्य भेषजैः पाकः, संयोगस्त्ववचारणायां ज्ञेयः । संख्ये युद्धे । आतस्यं उमातैलम् । अनुक्ततैलगुणनिर्देशार्थमाह फलानामित्यादि । फलानामित्युपलक्षणम्, तेन, सारस्नेहा अपि सुश्रुतोक्ता बोद्धव्याः । यथाफलमिति यादृशगुणं फलम्, तादृश एव तत्स्नेहोऽपीत्यर्थः[2] ॥ २८२—२९१ ॥

यथासत्त्वन्तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत् ।
सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम् ॥ २९२ ॥
विपाकमधुरं हृद्यं रोचनं विश्वभेषजम् ।
श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली २९३

सा शुष्का कफवातघ्नी कटूष्णा वृष्यसम्मता[1] ।
नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम् ॥ २९४ ॥
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित्[2] ॥२९५॥
वातश्लेष्मविवन्धघ्नं कटूष्णं दीपनं लघु ।
हिङ्गु शूलप्रशमनं विद्यात्पाचनरोचनम् ॥ २९६ ॥
रोचनं दीपनं वृष्यं चक्षुष्यमविदाहि च ।
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम्[3] ॥ २९७ ॥

यथासत्त्वमिति यः प्राणी आनूपादिरुष्णस्तस्योष्णः, यस्तु प्राणी जाङ्गलादिः शीतस्तस्य शीत इत्यर्थः । सामान्यतस्तु वसामज्ज्ञोरुष्णाशीतत्वं यथा भवति तथा स्नेहाध्याये एव प्रोक्तम् ॥ २९२—२९७ ॥

सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
सौवर्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च ॥ २९८ ॥
तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम् ।
ऊर्ध्वंचाधश्च वातानामानुलोम्यकरं बिडम् ॥२९९॥
सतिक्तकटुसक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।
न काललवणे गन्धः सौवर्चलगुणाश्च ते ॥३०० ॥
सामुद्रकं समधुरं सतिक्तं कटु पांशुजम् ।
रोचनं लवणं सर्वं पाकि स्रंस्यनिलापहम् ॥ ३०१ ॥

सौक्ष्म्यादित्यादि सौवर्चलगुणः । तैक्ष्ण्यादित्यादि विड्गुणः । औद्भिदमुत्कारिकालवणम्[2] । काललवणं सौवर्चलमेवागन्धं दक्षिणसमुद्रसमीपे भवतीति । सामुद्रं करकचम्, पांशुजं पूर्वसमुद्रजम् ॥ २९८—३०१ ॥

हृत्पाण्डुग्रहणीदोषप्लीहानाहगलग्रहान् ।
कासं कफजमर्शांसि यावशूको व्यपोहति ॥३०२॥
तीक्ष्णोष्णो लघुरूक्षश्च क्लेदी पक्ता विदारणः ।
दाहनो दीपनश्छेत्ता सर्वः क्षारोऽग्निसन्निभः॥३०३॥
कारव्यः कुंचिकाजाजी यमानी धान्यतुम्बुरु ।
रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम् ॥ ३०४ ॥
आहारयोगिनां भक्तिनिश्चयो न तु विद्यते ।
समाप्तो द्वादशश्चायं वर्ग आहारयोगिनाम् ॥३०५॥

इत्याहारयोगवर्गः ।

क्षाराणामपि लवणसत्वात्क्षारगुणमाह—हृदित्यादि । यवक्षा-

---

१ रोगप्रकोपणमिति, अत्र रोगशब्दो दोषवचनः कारणे कार्योपचारात्, यथा 'सर्वव्याधिहरं पयः" इत्यत्र, अतएव वक्ष्यति "समानो हि रोगशब्दो दोषेषु व्याधिषु च" इति शिवदासः । २ ननु तैलपदं तैलत्वप्रवृत्तिनिमित्तम्, तच्च न तावत् तिलोद्भवत्वं सर्षपतैलादावव्याप्तेः । नापि बीजप्रभवत्वं तद्गतरूपादावतिव्याप्तेः । नापि बीजप्रभवस्नेहत्वं सारतैलादावव्याप्तेः । अपि च बीजप्रभवस्नेहत्वं न तावत्स्नेहरूपगुणवृत्ति । 'तैलं गन्धवदिति प्रत्ययस्य सर्वजनसाधारणस्य भ्रान्तित्वापत्तेः । नापि स्नेहाश्रयद्रव्यवृत्ति, बीजद्रवमात्रस्यैव तैलत्वापत्तेरित्यनुपपत्तिं हृदि निधाय सर्षपादिस्नेहेष्वपि तैलशब्दं व्युत्पादयन्नाह "निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" । निष्पत्तेरिति तिले यथा तैलं निष्पद्यते चूर्णीकरणयन्त्रादिना तथा सर्षपादावपि स्नेहापकर्षणात् । भवति च समाननिष्पत्तिकतया तच्छब्दता यथा वितुषे धान्ये तण्डुलशब्दो वृत्तः, स वितुषे विटङ्गेऽपि वर्तते, यथा "विडङ्गतण्डुलाः" इति । तद्गुणत्वेन च तच्छब्दता, यथा—"गौर्वाहिकः" इति । तद्गुणत्वं च सुश्रुतेनोक्तं तथा "यावन्तः स्थावराः स्नेहाः समासात्परिकीर्तिताः । सर्वे तैलगुणाः ज्ञेया सर्वे चानिलनाशनाः" इति । एतेन 'तिलस्य विकारस्तैलम्' इति योगे बाधकाभावात्तिलप्रभवस्नेह एव तैलपदप्रयोगात्स्नेहत्वेऽपि शक्ते तैलपदं योगरूढम् । सार्षपादौ तैलपदप्रयोगो भाक्त इति भावः । अन्ये तु गन्धरसविशेषाङ्गं तैलत्वं जातिः, अतएव घृततैलसंशये गन्धविशेषनिश्चयात्तैलत्वनिश्चय इति सार्षपस्नेहादीनामपि तैलत्वमित्याहुरिति शिवदासः ।

१ आर्द्रपिप्पलीगुणे श्लेष्मलेति सजातीयद्रव्यान्तरवच्छ्लेष्माणं न शमयतीति कृत्वैव श्लेष्मलत्वमस्याइति केचित् । सा शुष्का कफवातघ्नीत्यनेन पित्ताविरोधित्वमस्या इति बोधयति, अतएव सुश्रुते "पित्तप्रसादनी" इत्युक्तमिति शिवदासः । २ विडमकृत्रिमं स्वनामख्यातम् । उत्तरदेशभवमुत्कारिकालवणमौद्भिदमिति शिवदासः । ३ नात्यर्थमुष्णमित्यादि शुष्कमरिचगुणः आर्द्रमरिचं तु कफप्रकोपकम्, उक्तं च सुश्रुते "स्वादुपाक्यार्द्रं मरिचं गुरुश्लेष्मप्रकोपि च" इतीति शिवदासः । ४ सैन्धवगुणे समधुरमीषन्मधुरमिति शिवदासः ।

रगुणः। सर्वक्षार इति स्वर्जिकाक्षारटङ्कनक्षारादिः। कारवी कृष्णजीरकम्, कुंचिका स्थूलजीरकम्, अजाजी सूक्ष्मजीरकम्। उक्तात्तैलादेरन्यदप्याहारसंस्कारकत्वेनाहारयोगि भवतीत्याह—आहारेत्यादि। भक्तिर्विभाग इयत्तेति यावत्, किंवा, भक्तिरिच्छा, तेन, पुरुषेच्छानामनियमादुक्तमपि किंचित्प्राय-आहारयोगि न भवति, तथा, अनुक्तमपि रसोनाम्रपेषिकाद्याहारसंयोगि भवतीत्युक्तं भवति। इत्याहारयोगवर्गः॥ ३०२—३०५॥

**शूकधान्यं शमीधान्यं समातीतं प्रशस्यते।**
**पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु॥ ३०६॥**
**यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम्।**
**निस्तुषं युक्तिभृष्टं तु सूप्यं लघु विपच्यते॥३०७॥**

संप्रत्युक्तानां शूकधान्यादीनां यदनुक्तगुणं तद्वक्तुमाह—शूकधान्यमित्यादि। समातीतमित्येकवर्षातीतम्, प्रशस्यत इति लाघवात्, हेमन्ते नवधान्यविधानन्त्वपवादः। आगच्छति क्षिप्रमिति उप्तं सच्छीघ्रं भवति। तेन, षष्टिकाः सर्वधान्येषु लघवः, ते हि षष्टिरात्रेण भवन्ति। अस्मिंश्च व्याख्याने, व्रीहेः शारदस्य च हैमन्तं शालिं प्रत्यल्पकालत्वेन लघुत्वं प्राप्नोति, तस्मात् सजातीय एव शीघ्रागमनं लाघवहेतुरिति वाच्यम्। किंवा, आगच्छति क्षिप्रमिति भुक्तं सत् क्षिप्रं पच्यते। युक्तिभृष्टमीषद्भृष्टमिति यावत्। सूप्यं सूपाय योग्यं मुद्गमाषादि॥ ३०६—३०७॥

**मृतं कृशातिमेद्यं च वृद्धं बालं विषैर्हतम्।**
**अगोचरभृतं व्याडसूदितं मांसमुत्सृजेत्॥ ३०८॥**
**अतोऽन्यथा हितं मांसं बृंहणं बलवर्द्धनम्।**
**प्रीणनः सर्वभूतानां हृद्यो मांसरसः परम्॥ ३०९॥**
**शुष्यतां व्याधिमुक्तानां कृशानां क्षीणरेतसाम्।**
**बलवर्णार्थिनां चैव रसं विद्याद्यथामृतम्॥ ३१०॥**
**सर्वरोगप्रशमनं यथास्वं विहितं रसम्।**
**विद्यात्स्वर्यं बलकरं वयोबुद्धीन्द्रियायुषाम्॥३११॥**
**व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः।**
**नित्यं मांसरसाहारा नातुराः स्युर्न दुर्बलाः॥३१२॥**

मृतमिति स्वयं मृतम्, मेद्यं मेदुरम्, कृशग्रहणेन शुष्कमपि ग्राह्यम्। अगोचरभृतम्, यथा—आनूपं धन्वदेशे पुष्टम्। व्याडा व्याघ्रादयः, किंवा व्याडः सर्पः। विषहतन्तु विषदिग्धशस्त्रविद्धम्। मांसरसगुणः प्रीणन इत्यादि। सर्वरोगप्रशमन इति सर्वशब्दो भूरिवचनः, एतेन उन्मादादौ मांसनिषेधो न विरोधवान् भवति, उक्तम् हि "उन्मादे निवृत्तामिषमद्यो यः" इत्यादि[1]। यथास्वमिति यस्य व्याधेर्यो विहित इति, तादृशं रसम्॥ ३०८—३१२॥

**क्रिमिवातातपहतं शुष्कं जीर्णमनार्त्तवम्।**
**शाकं निःस्नेहसिद्धं च वर्ज्यं यच्चापरिस्रुतम्॥३१३॥**
**पुराणमामं संक्लिष्टं क्रिमिव्याडहिमातपैः।**
**अदेशाकालजं क्लिन्नं यत्स्यात्फलमसाधु तत्॥३१४॥**

स्नेहेन विना सिद्धं निःस्नेहसिद्धम्। आममित्यपक्कम्, एतच्च बिल्वादीन् विहाय बोद्धव्यम्। अदेशजमित्यनुचितदेशभवम्, अकालजमनार्तवम्। साधनादृत इति हरितानामार्द्रकपलाण्डुप्रभृतीनां निःस्नेहसिद्धानामपि तथाऽपरिस्रुतानामपि निर्दोषत्वमित्यर्थः[2]॥ ३१३—३१४॥

**हरितानां यथाशाकं निर्देशः साधनादृते।**
**मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः॥३१५॥**

विनिश्चयः कृत इति शेषः, तथाच मद्यानाम्, "प्रायशोऽभिनवम्" इत्यादिना गुणदोषकथनं कृतमेव, एवं जलेऽपि "पिच्छिलं क्रिमिलम्" इत्यादिना। गोरसकृतान्नाहारानुसंयोगिवर्गेषु तु यथोक्तकर्तृगुणवद्विपरीते विपरीतगुणमनुमेयमिति भावः[3]॥ ३१५॥

**यदाहारगुणैः पानं विपरीतं तदिष्यते।**
**अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च॥ ३१६॥**
**आसवानां समुद्दिष्टा अशीतिश्चतुरुत्तरा।**
**जलं पेयमपेयं च परीक्ष्यानुपिबेद्धितम्॥ ३१७॥**
**स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम्।**
**कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम्[4]॥३१८॥**
**उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः।**
**क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम्॥३१९॥**
**सुराकृशानां पुष्ट्यर्थमनुपानं प्रशस्यते।**
**कार्श्यार्थं स्थूलदेहानामनुशस्तं मधूदकम्॥ ३२०॥**

---

१ प्रायशो रूक्षमिति प्रायःशब्दो विशेषार्थः, तेन पुराणं वर्षद्वयातीतमतिशयेन रूक्षं भवतीति तत्र प्रशस्तमित्यर्थः एवं, प्रायेणाभिनवं गुर्वित्यपि व्याख्येयमिति शिवदासः। २ मृतं कृशममेध्यंचेति पाठः। अत्रामेध्यं पूतिमांसग्रहणम्। ३ अगोचरभृतमिति गोचरो देशः, तेन, यस्य वराहमहिषादेर्यो देशोऽनूपादिः, तत्र न पुष्टं किन्तु, आनूपं धन्वदेशे पुष्टं, जाङ्गलं वानूपे पुष्टमिति शिवदासः।

१ सर्वरोगप्रशमनमित्यत्र सर्वशब्दो भूरिवचनः, तेन कुष्ठादौ मांसनिषेधो न विरोधमावहति, यथा "वर्जयेद्वैदलं शूली कुष्ठी मांसं क्षयी स्त्रियम्" इतीति शिवदासः। २ हरितानामित्यादि। हरितानां पलाण्डुप्रभृतीनां यथाशाकं निर्देशः, तेन हरिता अपि क्रिमिवाताद्युपहतास्तथा शुष्कजीर्णा अनार्त्तवाश्च न ग्राह्याः। साधनादृत इति साधनं संस्कारः, तेन हरितानां निःस्नेहसिद्धानामपि तथा अपरिस्रुतानामपि निर्दोषत्वमित्यर्थ इति शिवदासः। ३ यथोक्तकर्तृगुणवद्विपरीतन्तु दोषवदुन्नेयमिति भाव इति पाठः। ४ सामान्येनानुपानमभिधाय विशेषेणानुपानेऽभिधीतव्ये दोषविशेषेऽनुपानमाह स्निग्धोष्णमिति शिवदासः।

अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ।
मद्यमांसोचितानां च मद्यमेवानुशस्यते ॥ ३२१ ॥

अथानुपानकर्म प्रवक्ष्यामि अनुपानं तर्पयति, प्रीणयति, ऊर्जयति, पर्याप्तिमभिनिर्वर्तयति, भक्तमवसादयति, अन्नसङ्घातं भिनत्ति, मार्दवमापादयति क्लेदयति, जरयति, सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयतीति[1] ॥ ३२२ ॥

अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।
सुखं पचति चाहारमायुषे च बलाय च ॥ ३२३ ॥

संप्रत्येषां यदनुपानं कर्तव्यं तदेवाह—यदेत्यादि[2] । आहारगुणैरिति शीतस्नेहमधुरादिभिः विपरीतमिति विपरीतगुणमनुपेयम् । एवं दध्नोऽम्लस्य मधुरं क्षीरं तथा पायसस्य काञ्जिकानुपानं स्यादित्याह—धातूनां यन्न विरोधि चेति । एवं चाम्ले पयोऽनुपीयमानं विरुद्धत्वाद्धातुविरोधेन प्रत्युक्तं भवति, एवमन्यदपि विरुद्धं वोद्धव्यम् । समुद्दिष्टमिति यज्जःपुरुषीये । पेयमपेयं च सहजगुणदोषवत्त्वात् तथा उपयुक्तभोजनापेक्षया । स्निग्धोष्णमित्यादिनाप्यनुपानमाह । अनुशस्तमित्यनुपानम् । अनुपानगुणमाह—अथेत्यादि । पर्याप्तिस्तृप्तिः ॥ ३२१—३२३ ॥

नोर्ध्वाङ्गमारुताविष्टा न हिक्काश्वासकासिनः ।
न गीतभाष्याध्ययनप्रसक्ता नोरसि क्षताः ॥३२४॥
पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम् ।
स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥ ३२५ ॥

यैरनुपानं न कर्तव्यं तानाह—नोर्ध्वाङ्गेत्यादि । कण्ठोरसि स्थितमित्यादिना तदुक्तं मारुतादीनामनुपानं कण्ठोरसि स्थितमेव भवति नाधोयातीति दर्शयति । स्नेहमाहारजं हत्वाऽभिभूय भूयोदोषाय कल्पते वातलक्षणं दोषं करोतीत्यर्थः । आहारस्नेहेन यो वातप्रशमः कर्तव्यस्तं शैत्यप्रकर्षात्पानीयमभिभवतीत्यर्थः । एतेन यदुच्यते अपां स्निग्धत्वेन स्नेहनमुपपन्नमिति, यत्तु ब्रुवते—हनहिंसागत्योरिति वचनात्स्नेहं हत्वेति स्नेहं गत्वेत्यर्थः, तदपि न भवति, यतः, स्नेहयुक्तत्वेन ऊर्ध्वाङ्गमारुतादिहननमेवोक्तम्, तन्मारुतहननस्याधिकरणम्, किंवा स्नेहमिति सारम्, "यस्माद्देहस्नेहपरिक्षयादिति देहसारपरिक्षयादित्यर्थः, सारहननं च जलेनाहारस्नेहं गृहीत्वा कण्ठोरस्यवस्थानादपाकात् क्रियते[1] ॥ ३२४-३२५ ॥

अन्नपानैकदेशोऽयमुक्तः[2] प्रायोपयोगिकः ।
द्रव्याणि न हि निर्देष्टुं शक्यं कार्त्स्न्येन नामभिः ३२६
यथा नानौषधं किंचिद्देशजानां वचो यथा ।
द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह यद्भवेत् ॥ ३२७ ॥

अन्नपानद्रव्यैकदेशकथनं सहेतुकमाह—अन्नेत्यादि । अन्नपानैकदेशः प्रायोपयोगिक इति बाहुल्येन यदुपयुज्यते, एतेन यद्बाहुल्येनोपयुज्यते तस्य श्लक्ष्णग्राहिकतया कथनम्, प्रायोपयुज्यमानानां श्लक्ष्णग्राहिकतयाऽल्पकथनमल्पदोषमिति दर्शयति, तथा, अल्पदोषस्यापि परिहारार्थम् । तदपि किमिति नोच्यत इत्याह—द्रव्याणीत्यादि । द्रव्याणि कार्त्स्न्येनेति साकल्येन निर्देष्टुं नामभिरिति नामभिरपि न शक्यं, केनचिदिति शेषः, हिशब्दो यस्मादर्थे । एतेन, सर्वाणि द्रव्याणि नाममात्रेणापि वक्तुं कश्चिन्न पारयत्यतिबहुत्वात्, तत्का कथा अशेषान्नपानद्रव्यस्य श्लक्ष्णग्राहिकतया गुणकथनंप्रतीति भावः । किंवा, नामभिर्युक्तानि तानि कार्त्स्न्येन निर्देष्टुमिति गुणतः कथयितुं न शक्यं केनचिदिति योजना । अथ कथं हि अत्राऽकीर्तितान्नपानस्य तर्हि गुणा निर्देष्टव्या इत्याह—यथेत्यादि । यथा येन प्रकारेण नानौषधं किंचिदिति पूर्वाध्याये प्रोक्तं तथा तेन प्रकारेणानुक्तं द्रव्यं वाच्यं, गुणत इति शेषः । पूर्वाध्याये हि "तत्र द्रव्याणि गुरु-खर" इत्यादिना ग्रन्थेन पार्थिवादिभेदेन विशिष्टेन च कर्मणा प्रोक्तानि द्रव्याणि, ततश्चानुक्तं द्रव्यं तेनैव गुरुखरादिना गुणेन पार्थिवत्वादि प्रतिपद्य यथोपचयादिकर्मकर्तृकतया व्यपदेष्टव्यमित्यर्थः । तदेवाऽनिर्दिष्टस्य द्रव्यस्य गुरुखरत्वादि कथं ज्ञेयमित्याह—देशजानां वचोयथेति, देशजा देशान्तरीयाः, तद्देशीयवचनात्तेते गुरुखरादयो ज्ञेया इत्यर्थः । किंवा, देशजा यथा तत्तद्द्रव्यं व्यवहरन्ति 'इदं मधुरमम्लम्' इत्यादि, तत्प्रतिपद्य, मधुरत्वाम्लत्वादिप्रतिपन्नपृथिव्याद्यस्य कारणमिति पृथिव्यादीनां गुर्वादिगुणगणेन कर्मणा च रसोक्तेन तद्वक्तव्यमित्यर्थः ॥ ३२६—३२७ ॥

---

१ अथेत्यादि तर्पयतीति चक्षुरादिप्रसादं जनयति, प्रीणयतीति मनःप्रसादं जनयति, ऊर्जयतीत्युत्साहं जनयति, पर्याप्तिमलोलुपताम्, अभिनिर्वर्तयतीति जनयति, भुक्तमवसादयतीत्यामाशयमधोभागं नयति, अन्नस्य सङ्घातं काठिन्यं, व्यवायितां व्यापकत्वमिति शिवदासः । २ आहारमभिधाय तस्यैव सुखपाकार्थमनुपानमुपयुज्यत इत्यनन्तरं अनुपानं वाच्यम्, तत्र समासेनानुपानमाह यदाहारेत्यादीति शिवदासः ।

१ आहारस्नेहेन यो वातप्रशमः कर्तव्यस्तं शैत्यप्रकर्षात्पानीयमभिभवतीत्यर्थ इति केचित्, तन्न, यदि हि पानीयस्य शैत्यप्रकर्ष एवाहारस्नेहहनने हेतुस्तदा "कण्ठोरसि स्थितम्" इति विशेषणं व्यर्थं, कण्ठोरस्यनवस्थितस्यापि जलशैत्यप्रकर्षेण स्नेहोपघातकत्वात्, तस्मादयमर्थः उदकं हि आहारसङ्गतं भूत्वैव स्निग्धत्वादाहारस्नेहं जनयति, तद्यदि कण्ठोरसि स्थितं भवति, तदा, आहारेण सहासम्बन्धादाहारस्नेहं न जनयतीति कृत्वैव स्नेहोपघातकत्वं जलस्येत्युच्यते, यथा अवग्रहप्रतिबन्धाया वृष्टेः सम्यगजनकत्वेनैव शस्योपघातकत्वमितीति शिवदासः । २ केचिदनवधानतः "अनुपानैकदेशीयमुक्तः" इति पठन्ति ।

**चरः शरीरावयवाः स्वभावो धातवः क्रिया ।**
**लिङ्गं प्रमाणं संस्कारो मात्रा चात्र परीक्ष्यते॥३२८॥**

अपरमप्यनुक्तान्नपानगुणज्ञानकारणमाह—चर इत्यादि । चर्यते इति चरो देशः, भक्ष्यश्च सामान्येन गृह्यते । क्रिया व्यापारः, प्रमाणं मानम्, अत्रेत्यन्नपानगुणाधिकरणे ॥ ३२८॥

**चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः ।**
**जलजानूपजाश्चैव जलानूपचराश्च ये ॥ ३२९ ॥**
**गुरुभक्ष्यास्तु ये सत्त्वाः सर्वे ते गुरवः स्मृताः ।**
**लघुभक्ष्यास्तु लघवो धन्वजाधन्वचारिणः ॥३३०॥**
**शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा ।**
**सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः॥३३१**

चरं विवृणोति चरोऽनूपेत्यादि । भक्ष्यस्य संविधिः भक्ष्यभक्षणम् । तत्रानूपजलाकाशधन्वाद्य इत्यनेन गतिरूपश्चर इत्युच्यते, भक्ष्यसंविधिवचनेन च भक्ष्यरूपश्चर उच्यते । अत्रैवोदाहरणमाह—जलजेत्यादि । अत्र जलजत्वेनानूपजत्वेन च जले वाऽनूपे वा गतिरेव दृश्यते, न हि जलादौ ये जातास्ते प्रायोऽन्यत्रावतिष्ठन्ते, ये त्वन्यत्र जाता अप्यन्यत्र तिष्ठन्ते प्रायः काकमद्गुप्रभृतयः, तद्ग्रहणार्थमाह 'जलानूपचराश्च ये' इति । एतेन, सामान्येन जले प्रायोऽवस्थानादिह जलचरत्वम्, एवमनूपचरत्वादपि ज्ञेयम् । भक्ष्यरूपचरकृतं गुणमाह—गुरुभक्ष्या इत्यादि । धन्वजा धन्वचारिण इत्यत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन, आकाशचारिणामपि श्येनादीनामनुक्तं लाघवं स्वजातिप्रसहान्तरापेक्षया बोद्धव्यमाकाशस्य लघुत्वात् । यत्तु ब्रुवते आकाशचारिणां गौरवलाघवानियमादकथनमिति, तन्न, तथा सत्याकाशस्याऽप्रयोजकत्वात् "चरोऽनूपजलाकाशधन्वाद्यः" इत्यत्राकाशकथनं निष्प्रयोजनं स्यात् ॥ ३२९-३३१ ॥

**वृषणौ चर्म मेढ्रं च श्रोणी वृक्कौ यकृद्गुदम् ।**
**मांसाद्गुरुतरं विद्याद्यथास्वं मध्यमस्थि च ॥ ३३२ ॥**

मांसाद्गुरुतरं विद्यादिति गुरुत्वेन प्रतिपादनं, सक्थ्यादिमांसाद्वृषणादिगुरुतरं विद्यादिति । यथास्वमित्यत्र शरीरसक्थ्यादीनामेवैतद्गौरवादि, नत्वन्यस्य शरीरापेक्षयेति ज्ञेयम् । मध्यमित्यन्तराधिः, अस्थि इति अस्थिस्थितं मांसम् । अन्ये तु मध्यमित्यस्थिमध्यगतं मज्जानं ब्रुवते, तन्नातिसुन्दरम्, तस्योत्तरोत्तरधातुकथनेनैव लब्धत्वात् ॥ ३३२ ॥

**स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।**
**स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥ ३३३ ॥**
**धातूनां शोणिताद्यानां गुरुं विद्याद्यथोत्तरम् ।**
**अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः॥३३४॥**

स्वभावादिति प्रकृत्या । क्रियोदाहरणम् अलसेभ्य इत्यादि, अलसेभ्य इत्यल्पक्रियेभ्यः । विशिष्यन्त इति विशिष्टा भवन्ति लघवो भवन्तीत्यर्थः ॥ ३३३—३३४ ॥

**गौरवं लिङ्गसामान्ये पुंसां स्त्रीणांच लाघवम् ।**
**महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥३३५॥**
**गुरूणां लाघवं विद्यात्संस्कारात्सविपर्ययम् ।**
**व्रीहेर्लाजा यथा च स्युः सक्तूनांसिद्धपिण्डकाः ३३६**

लिङ्ग्यन्ते ज्ञायन्तेऽनेनेति लिङ्गं जातिः, तेन, लिङ्गसामान्ये जातिसामान्ये, एतच्च चतुष्पादाद्यभिप्रायेण बोद्धव्यम् । पक्षिषु विपर्ययः, यदाह हारीतः "चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमानिति अत्राप्युक्तम् "स्त्रियश्चतुष्पदे प्राद्याः पुमांसो विहगेषु च" । पुंसां च गौरवे अत्यर्थगुरोः शुक्रस्यारम्भकस्य भूयस्त्वं हेतुं ब्रुवते । किन्तु, स्वभावस्तत्र हेतुरपवाद इति पश्यामो विहगेषु । सविपर्ययमिति संस्काराल्लघूनामपि गौरवं विद्यादित्यर्थः । तदेव संस्कारजन्यं लाघवं गौरवंचाह—व्रीहेरित्यादि । गुरोरपि व्रीहेः संस्कारात्लाजालघव इत्यर्थः । सक्तूनां च लघूनां सिद्धपिण्डिका गुरवः, सिद्धपिण्डिका अग्निपाचिताः पिण्डाः ॥ ३३५ ॥ ३३६ ॥

**अल्पादाने गुरूणां च लघूनां चातिसेवने ।**
**मात्राकारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥ ३३७ ॥**
**गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते ।**
**मात्रां द्रव्याण्यपेक्षन्ते मात्रा चाग्निमपेक्षते ॥ ३३८॥**

अल्पादान इत्यादि मात्राविवरणम्, गुरूणामपि द्रव्याणां अल्पस्य स्तोकमात्रस्यादाने यल्लाघवं, तस्मिन् लाघवे मात्रामात्रकारणम्, न द्रव्यं, तस्य गुरुत्वात् । एवं लघूनामतिसेवने गौरवं मात्राकृतम् । उद्दिष्टमिति मात्राशितीये पुन-

---

१ चर्यत इति चरो देशो भक्ष्यश्च, चर गतिभक्षणयोरित्यतो निष्पन्नत्वात्सामान्येन गृह्यते, कस्मिन् देशेऽयं विहरति धन्वन्यनूपे जले वियति वा, किं पुनरयमाहरति गुरुलघुशीतमुष्णं स्निग्धं रूक्षं वा, एतद्विहारादिगुणभावितशरीरधातोर्मृगस्य पक्षिणो वा तत्तद्गुणमेव मांसमिति प्रतिपत्तव्यमिति भावः । शरीरावयवाः सक्थ्यादयः । स्वभावस्तत्तद्द्रव्यप्रतिबद्धस्वाभाविको धर्मः । धातवः शोणितादयः । क्रियेति क्रिया चेष्टा । लिङ्गं स्त्रीत्वादि । प्रमाणं मानम् । संस्कारो गुणान्तराधानम् । मात्रा चेति चकारेण वह्निरनुक्तोऽपि मात्रायाः कारणभूतः समुच्चीयते, तेन, मात्राया भूयस्त्वाल्पीयस्त्वेनाग्निरपि परीक्ष्य इत्यर्थ इति शिवदासः । २ क्रोडः शिरस्पदमिति पाठः । ३ वुक्काविति पाठः ।

१ स्वभावनियतं लाघवगौरवमुदाहरति स्वभावादित्यादीति शिवदासः । २ महाप्रमाणा इत्यादि प्रमाणोदाहरणम्, अन्यथेत्यल्पप्रमाणा इति शिवदासः । ३ गुरूणामित्यादि संस्कारविवरणमिति शिवदासः । ४ गुरूणामित्यादिना मात्राप्रमाणमाह वाग्भटेऽप्युक्तम्, "गुरूणामर्धसौहित्यं लघूनां नातितृप्तता । मात्राप्रमाणं निर्दिष्ट"मिति मात्रा चानपायिपरिमाणमिति शिः ॥

रुक्षम् । द्रव्याणि मात्रामपेक्षन्त इति यथोचितमात्रावन्ति सुखं पच्यन्त इत्यर्थः । मात्रा चाग्निमपेक्षत इति प्रतिपुरुषं प्रतिदिनं चाग्निभेदमपेक्ष्य मात्रा महती स्वल्पा वा भवति, न प्रतिनियतमात्रा विद्यत इति भावः ॥ ३३७ ॥ ३३८ ॥

**बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।**
**अन्नपानेन्धनैश्चाग्निर्ज्वलति व्येति चान्यथा ॥३३९॥**

कुतः पुनरग्न्यपेक्षया मात्रा क्रियत इत्याह—बलमित्यादि । अग्निमपेक्ष्य मात्रया प्रयुक्तयाऽग्न्यनाशाद्बलादयो भवन्तीति-भावः । अग्नौ प्रतिष्ठिता इति अग्न्यधीनाः । यथा राजाऽऽश्रिताः प्रजा इति । प्राणा इति वायवः । किंवा, प्राणा आश्रयाः शङ्खादयो दशप्राणाः । इन्धनं काष्ठम्, इन्धनमिवेन्धनम्, तैः, किंवा, अग्निदाह-इन्धनमुच्यते । अन्यथेत्यनिन्धनम् ॥ ३३९ ॥

**गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति ।**
**मन्दक्रियाननारोग्यान्सुकुमारान्सुखोचितान् ॥३४०**

इयं चरादिकृता गुरुलाघवचिन्ता अल्पाग्निं प्रति प्राय इति दर्शयन्नाह-गुर्वित्यादि । अत्राप्यवलवत्त्वेन मन्दकार्यैरपि वह्निमान्द्यमेव लक्षणीयम् ॥ ३४० ॥

**दीप्ताग्नयः खराहाराः कर्मनित्या महोदराः ।**
**ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम् ॥३४१॥**

खराहारा इति कठिनाहारसामर्थ्याः, महोदरत्वेनाऽपि मेदोऽवरोधात् महाग्नित्वं दर्शयति, नावश्यं चिन्त्यमित्यनेन दीप्ताग्नीनामपि प्रतिस्तोकप्रयोजनाय गुरुलाघवचिन्ता विद्यत[1] इति दर्शयति । यतः, दीप्ताग्न्यादीनामपि गुरुद्रव्यमग्नेः प्रतिपक्षमावहत्येव, स्वभावतोऽग्निविरुद्धात् ॥ ३४१ ॥

**हिताभिर्जुहुयान्नित्यमन्तराग्निं समाहितः ।**
**अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥३४२॥**
**आहिताग्निः सदा पथ्यान्यन्तराग्नौ जुहोति यः ।**
**दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ॥ ३४३ ॥**
**नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजने ।**
**भजन्ते नामयाः केचिद्भाविनोऽप्यन्तरादृते ॥३४४॥**

समिधइव समिधः, आहिताग्निरिति सात्म्येन व्यवस्थापिताग्निः, किंवा, आहिताग्निरिवाहिताग्निः, तेन, आहिताग्निर्यथा प्रातः सायं जुहोति, तथाऽयमपि प्रातः सायं च पथ्यान्तराग्नौ जुहोति । ब्रह्म जपतीति प्रणवादिमन्त्रमावर्त्तयति । ददाति चेति यथाशक्ति दानमाचरति, तं नरं निःश्रेयसे कल्याणे युक्तमामया न भजन्ते, भाविनोऽपीति जन्मान्तरेऽपि, अत्रेह जन्मनि पथ्याशितवान्न भवन्ति गदा जन्मान्तरेऽपि ब्रह्मजपदानाभ्यां अर्जितधर्मप्रभावादेव न भवन्ति । अतएवाह अन्तरादृत इति, अन्तरादिति कारणादृते विना, अपथ्यस्य तथा अधर्मस्य रोगकरणभावाद्गदा भवन्तीति भावः ॥ ३४२—३४४ ॥

**षट्त्रिंशतं सहस्राणि रात्रीणां हितभोजनः ।**
**जीवत्यनातुरो जन्तुर्जितात्मा संमतः सतामिति ३४५**

वर्षशतायुष्ट्वमपि हितादिभोजनाद्भवतीत्याह—षट्त्रिंशतमित्यादि । एतावतीभी रात्रिभिर्वर्षशतमेव भवतीति, जितात्मा जितेन्द्रियः । संमत पूजितः ॥ ३४५ ॥

तत्र श्लोकाः ।

**अन्नपानगुणाः साग्र्या वर्गा द्वादश निश्चिताः ।**
**सगुणान्यनुपानानि गुरुलाघवसंग्रहः ।**
**अन्नपानविधावुक्तं तत्परीक्ष्यं विशेषतः ॥ ३४६ ॥**

संग्रहेऽन्नपानगुणा इति "इष्टवर्णम्" इत्यादिनोक्ताः । साग्र्या इति "उदकं क्लेदयति" इत्यादिना । उदकादयो हि क्लेदनादिषु अग्र्याः श्रेष्ठा इत्यर्थः ॥ ३४६ ॥

**प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ।**
**वर्णप्रसादः सौस्वर्यं जीवितं प्रतिभा सुखम् ॥३४७॥**
**तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ।**
**लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ।**
**कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥ ३४८ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽन्नपानविधिर्नाम सप्तविंशोऽध्यायः ।**

किमर्थमन्नपानविधावेतत्परीक्ष्यमित्याह—प्राणा इत्यादि । अभिधावतीति प्रार्थयति, प्रतिभा प्रज्ञा, मेधा धारणावती धीः, लौकिकमित्यपरीक्षकलोके भवं, अपरीक्षका एव हि वर्त्तमानमात्रे प्रवर्तन्ते, परीक्षकास्तु जन्मान्तरोपकारिण्येव प्रायः-कर्म यद्वृत्ताविति वर्त्तमाने साध्ये यत्कृष्यादि कर्म । स्वर्गताविति स्वर्गगमने, वैदिकमिति यज्ञादि । अपवर्ग इति मोक्षे । एताश्च निमित्तसप्तम्यः । यच्चोक्तमिति मोक्षशास्त्रे "सत्यं ब्रह्मचर्यादि अन्ने प्रतिष्ठितम्" इति । अन्ननिबन्धनदेहस्थित्यभावेन सर्वारम्भाभावात् । यस्मादन्नं सर्वत्र कारणम्, ततस्तत्रावधातव्यमिति ॥ ३४७ ॥ १४८ ॥

इत्यन्नपानाध्यायः ।

---

## अष्टाविंशोऽध्यायः ।

**अथातो विविधाशितपीतीयमध्यायंव्याख्यास्यामः १**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याये "अन्नं प्राणाः" इत्युक्तम्, येन प्रकारेणान्नं प्राणहेतुर्भवति तदभिधानार्थं विविधाशितपीतीयोऽभिधीयते[1] इयमप्यर्थपरा संज्ञा ॥ १ ॥ २ ॥

---

[1] दीप्यते शाम्यतेऽन्यथेति पाठः ।

[1] पूर्वाध्यायत्रयेणान्नपानस्वरूपविशेषाणामनुक्तानामभिधानाय विविधाशितपीतीयोऽभिधीयत इति शिवदासः ।

**विविधमशितपीतलीढखादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्वधातुपाकमनुपहतसर्वधातूष्ममारुतस्रोतःकेवलंशरीरमुपचयबलवर्णसुखायुषा योजयति शरीरधातूनूर्जयति। धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते । तत्राहारप्रसादाख्यो रसः किट्टं च मलाख्यमभिनिर्वर्तते। किट्टात्स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासिकास्यलोमकूपप्रजननमलाः केशश्मश्रुलोमनखादयश्चावयवाः पुष्यन्ति। पुष्यन्ति त्वाहाररसात् रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातुप्रसादसंज्ञकानि शरीरसन्धिबन्धपिच्छादयश्चावयवाः। ते सर्वे एव धातवो मलाख्याः प्रसादाख्याश्च रसमलाभ्यां पुष्यन्तः स्वमानमनुवर्तन्ते यथावयःशरीरम्। एवं रसमलौ स्वप्रमाणावस्थितौ आश्रयस्य समधातोर्धातुसाम्यमनुवर्तयतः। निमित्ततस्तु क्षीणवृद्धानां प्रसादाख्यानां धातूनां वृद्धिक्षयाभ्यामाहारमूलाभ्यां रसः साम्यमुत्पादयत्यारोग्याय। किट्टं च मलानामेवमेव, स्वमानातिरिक्ताश्चोत्सर्गिणः शीतोष्णपर्ययगुणैश्चोपचर्यमाणा मलाः शरीरधातुसाम्यकराः समुपलभ्यन्ते । तेषां तु मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि। यथास्वं तानि यथाविभागेन यथास्वं धातूनापूरयन्त्येवमिदं शरीरमशितपीतलीढखादितप्रभवम्। अशितपीतलीढखादितप्रभवाश्चास्मिन् शरीरे व्याधयो भवन्ति । हिताहितोपयोगविशेषास्त्वत्र शुभाशुभविशेषकरा भवन्तीति ॥ ३ ॥**

विविधमित्यादि, विविधमित्यनेनाशितादीनामवान्तरभेदं दर्शयति, अशितादिषु यो यः प्राय उपयुज्यते, स पूर्वमुक्तः। जन्तोर्हितमिति वचनं अहितस्याशितादेर्बलवर्णादिकर्तृत्वाभावात् । अन्तरग्निना जाठरेण वह्निना सन्धुक्षितं बलं यस्य तेनान्तरग्निसन्धुक्षितबलेनोष्मणा। यथा स्वेनोष्मणेति पृथिव्यादिरूपाशितादेर्यस्य य ऊष्मा पार्थिवाबादिकरूपस्तेन, वचनं हि "भौमाप्याग्नेयवायव्याः पंचोष्माणः सनाभसाः। पंचाहारगुणान्स्वान्स्वान् पार्थिवादीन्पचन्ति हि" इति। सम्यगविपच्यमानमित्यशितादि। किंवा, यथा स्वेनोष्मणेति यस्य रुधिरादेर्य ऊष्मा धात्वग्निरूपस्तेन सम्यगविपच्यमानमशितादि रसतामापन्नम्, यथा कालो नित्यगत्वेनानवस्थितः, तथाऽनवस्थितोऽविश्रान्तः सर्वधातूनां पाको यस्मिन् शरीरे तत्तथा तेन, स्वाग्निपाकक्षीयमाणधातोः शरीरस्याऽशितादिनाउपचयादियोजनमुपपन्नमिति दर्शयति । यदि हि पाकक्षीयमाणं शरीरं स्यात्तदा स्वतः सिद्धे उपचयादौ किमशितादि कुर्यादिति भावः। किंवा कालवदित्यशितादिविशेषणम्, तेन यथोक्तकालकृतमशितादीत्यर्थः, अकालभोजनस्योपचयाकारकत्वात्, तथा, अनवस्थितः सर्वधातुषु पाको यस्य तस्याशितादेस्तत्तथा, एतेन क्वचिदप्यशितादेः रसरूपस्य पाकविगमनान्नोपचयादिर्भवतीति दर्शयति। एतच्च व्याख्यानं नातिसुन्दरम्, अस्यार्थस्य "अनुपहत" इत्यादिशरीरविशेषणेनैव लब्धत्वात्पुनः शरीरविशेषणमनुपपन्नम्। अनुपहतेत्यादि।—अनुपहतानि सर्वधातूनां उष्ममारुतस्रोतांसि यस्य तत्तथा, यदा हि एकोऽपि धातुपाचकोऽग्निरुपहतो मारुतो वा धातुपोषकरसवाही व्यानरूपः क्वचिदुपहतो भवति, तथा स्रोतो वा धातुपोषकरसवहमुपहतं स्यात्, तदाऽशितादिकं धातूनामवर्द्धकत्वान्नोपचयादिकारकमिति भावः । केवलमिति कृत्स्नं शरीरम्, किंवा, केवलमित्यधर्मरहितम्, अधर्मयुक्ते हि शरीरे विफलमशितादि भवतीति। ननु शरीरधातूनां प्रकृतिस्थितानां स्वतएवोपचयाद्यस्ति, तत्किमशितादिना क्रियतइत्याह—धातवो हीत्यादि। धातुराहारो येषां ते धात्वाहाराः, धातवो रसादयो नित्यं क्षीयमाणा अशितादिजनितधात्वाहारा एव सन्तः परं स्वास्थ्यमनुवर्तन्ते, नान्यथेत्यर्थः।

योऽसौ धातूनामाहारस्तमाह—तत्रेत्यादि। तत्रेत्यशितादौ रसः किट्टंचाऽऽभिनिर्वर्तत इत्यन्वयः । आहारप्रसाद आख्या यस्य स तथा, प्रसादः सारः । किट्टमसारभागः। किट्टादिति मलाख्यात्, तेन, अन्नस्य किट्टांशस्ततो मूत्रपुरीषे भवतो वायुश्च, रसात्पच्यमानान्मलः कफः। इमानि ग्रहण्यध्याये वक्ष्यमाणान्यनुसर्तव्यानि, वक्ष्यति हि "किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः । पित्तं मांसस्य खमलो मलः स्वेदस्तु मेदसः। स्यात्किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्वचः"। आदिग्रहणात्स्नेहादि ग्राह्यम्। यद्यपि वातोऽनशनादप्युपलभ्यते तथापि रूक्षकिट्टादिभोजनमलांशादप्युपपद्यत एवेति किट्टाद्वातोत्पत्तिर्युक्तैव। न चायं नियमः यत् मलादेवोत्पद्यतएवेति व्यायामादवगाहादेरपि वातादिसद्भावात्। प्रजननं लिङ्गम्।

रसपोष्यमाह—पुष्यन्ति हीत्यादि । पंचेन्द्रियद्रव्याणीति पृथिव्यादीनि घ्राणादीन्द्रियकराणि, धातुप्रसादसंज्ञकानीति अत्यर्थशुद्धत्वेनैव धातुप्रसादत्वेनेन्द्रियाण्यारभन्त इति दर्शयति[१]। शरीरं बध्नातीति शरीरबन्धः स्नायुशिरादिः। आदिग्रहणादार्तवस्तन्यादिग्रहणम् । अत्राहारेण रसादिपोषणमेवं केचिद्ब्रुवते यद्रसो रक्तरूपतया परिणमति, रक्तं च मांसरूपतया, एवं मांसादयोऽप्युत्तरोत्तरधातुरूपतया परिणमन्ति । अत्रापि च मध्ये केचिद्ब्रुवते क्षीराद्यथा सर्वात्मना दधि भवति, तथा कृत्स्नाद्रसाद्रक्तं भवति, एवं रक्तादयो मांसा-

१ पंचेन्द्रियद्रव्याणीति घ्राणादिपंचेन्द्रियाणां द्रव्याणि समवायिकारणानि पृथिव्यादीनि, कीदृक्षानि धातुप्रसादसंज्ञानीति शिवदासः।

स्थिरा भवन्तीति, अन्ये त्वाहुः केदारीकुल्यान्यायेन रसस्य धातुपोषणम्, तत्राहारादुत्पन्नो रसो धातुरूपं रसमधिगम्य कियताप्यंशेन रसं वर्द्धयति, अपरश्च रसराशिस्तत्र च गतः सन् शोणितगन्धवर्णयुक्तत्वाच्छोणितमिव भूत्वा कियताऽपि शोणितसमानेनांशेन धातुरूपं शोणितं पुष्णाति, शेषश्च भागो मांसं याति, तत्रापि शोणितवद्व्यवस्था । तथा मेदःप्रभृति-ष्वपीति । अतएव च मुख्यार्थोऽयं ग्रन्थो भवति यथा "रसाद्रक्तं ततो मांसम् मांसान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः" इति । तथा हारीतेऽप्युक्तं "रसः सप्ताहादर्वाक्परिवर्तमानः श्वेतकपोतहरित-हारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरि-वर्ताद्वर्णपरिवर्तमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते" इति तथा, सुश्रुतेऽप्युक्तम् "स खल्वाप्योरस एकैकस्मिन्धातौ त्रीणि त्रीणि कलासहस्राणि पंचदशकला अवतिष्ठन् एवं मासेन रसः शुक्रीभवति"। अन्ये त्वाहुः खलेकपोतन्यायेनायमन्न-रसः पृथक्पृथक् धातुमार्गं गतः सन्रसादीन्पोषयति, तत्रास्य धातुपोषको रसभागो धात्वन्तरेण समं संबन्धमप्यनुभवति । रसादिपोषकाणि स्रोतांसि उत्तरोत्तरं सूक्ष्ममुखानि दीर्घाणि च, तेनैव रसपोषकरसभागो रसमार्गचारित्वाद्रसं पोषयति, एवं रसपोषणकालादुत्तरकालं रक्तपोषकमार्गचारित्वाद्रक्तपो-षको रसभागो रक्तं पोषयति, तथा शोणितपोषणकालादुत्त-रकालं मांसपोषकरसभागो मांसं पोषयति चिरसूक्ष्ममार्ग-चारित्वात् । एवं मेदःप्रभृतिपोषणेऽपि ज्ञेयम् । तेन, "रसाद्रक्तं ततो मांसम्" इत्यादेरयमर्थः, यत् रसपुष्टिकाला-दुत्तरकालं रक्तं जायते, तथा रक्तकालादुत्तरकालं मांसं प्रजायत, इत्यादि । यच्च "रक्तं विबद्धमार्गत्वान्मांसादीन्न प्रपद्यते" इति राजयक्ष्मणि वक्ष्यति, तद्धृदयचारिशोणिताभि-प्रायेण, न तु पोषकशोणिताभिप्रायेण । किंच, परिणामपक्षे, वृष्यप्रयोगस्य रक्तादिरूपापत्तिक्रमेणातिचिरेण शुक्रं भवतीति । क्षीरादयश्च सद्य एव वृष्या दृश्यन्ते । खलेकपोतपक्षे तु वृष्योत्पन्नो रसः प्रभावाच्छीघ्रमेव शुक्रेण संबद्धः सन् तत्पुष्टिं करोतीति युक्तम्, तथा रसदुष्टौ सत्यां परिणामपक्षे तज्जन्मनां शोणितादीनां सर्वेषामेव दुष्टिः स्याद्दुष्टकारणजातत्वात् । खलेकपोतपक्षे तु यद्धातुपोषको रसभागो दुष्टः, स एव दुष्यति न सर्वे, तदितरेषामदुष्टकारणत्वात् । तथापि मेदोवृद्धौ सत्यां भूरिकारणत्वेनास्थ्नापि भूयसा भवितव्यम्, दृश्यते च भूरि-मेदस इतरधातुपरिक्षयः । वचनं च "मेदस्विनो मेद एवो-पचीयते, न तथेतरे धातवः" इति । एवमादिपरिणामवादे दूषणम् । एषु पक्षेषु सर्वात्मपरिणामवादो विरुद्ध एव, येन सर्वात्मपरिणामे त्रिचतुरोपवासाच्छरीरस्य मरणं स्यात्, मा-सोपवासे च केवलं शुक्रमयं स्यात् । केदारीकुल्यान्यायस्तु तुल्यबलएव खलेकपोतन्यायेन यतः, यदुक्तं वृष्यप्रभावं प्रति, तत्केदारीकुल्यापक्षेऽपि प्रभावादेव शीघ्रं रक्तादिधातूनधि-गम्य शुक्रं जनयिष्यति वृष्यम्, यथा खलेकपोतपक्षेऽपि 'प्रभावादिति' । यत्तु रसदुष्टौ शोणितदूषणम्, तत्र भवति, धातुभूतशोणितांशपोषकस्य रसभागस्यादुष्टत्वादिति समानं पूर्वेण । अत्रापि हि पक्षे न सर्वो रसो धातुरूपशोणितताम-पद्यते । किं तर्हि, कश्चिदेव शोणितसमानभागः । शेषस्तु शो-णितस्थानगतत्वेन किंचिच्छोणितसमानवर्णादित्वाच्च शोणित-मुच्यते, अनेन न्यायेन, मेदोवृद्धौ सत्यामस्थिवृद्धिरपि निरस्ता, यतः, मेदसा सहास्थि पोष्यते, अपि तर्हि मेदःस्थानगतेनैव रसेन मेदोऽनुकारिणा । एवमनयोः पक्षयोर्महाजनादृतत्वेन तुल्यन्यायत्वेन च नैकमपि निश्चितं ब्रूमः, बुद्धिविभवाच्च पक्ष-बलाबलम्, तत्र न कश्चित्कार्यविरोध इत्युपरम्यते ।

नन्वाहाररसाद्रसादयः पुष्यन्तीति वदता धातुरसादाहा-ररसोत्पादः पृथक्क्रियते, ततश्च, तस्य किं स्थानं, किंवा प्रमाणमिति नोच्यते न तस्याहारोत्कर्षापकर्षावेवंविधावुत्कर्षा-पकर्षस्य निश्चितप्रमाणत्वाभावात् । तत्स्थानं, तु धमन्य एव, पोषकाहाररसस्य तस्य च पृथग्रसादिधातुभ्यः प्रदेशा-न्तरग्रहणं न क्रियते, रसादिकारणरूपतया रसादिग्रहणेनैव ग्रहणात् । अत्र यद्यप्योजः सप्तधातुसाररूपम्, तेन धातुग्र-हणेनैव लभ्यते, तथापि [illegible]धारणकर्तृत्वेन पृथक्पठति । ये तु शुक्रजन्यमोज इच्छन्ति, [illegible]मष्टमो धातुरोजः स्यादिति पक्षे चातिदेशं कृत्वा वक्ष्यति 'रसादीनां शुक्रान्तानां यत्परं तेजः, तत्खल्वोजः' इति । [illegible]

उपपादितपोषणानां धातुमलानां प्रकृतदृष्टविधानमुपसंह-रति—ते सर्वइत्यादि[1] । मलाख्या अपि स्वे[illegible]दयः स्वमा-नावस्थिता देहधारणात् धातवो भवन्तीत्युक्तं [illegible]वो म-लाख्याः" इति । यथा वयःशरीरमिति यस्मिन् [illegible] बा-ल्यादौ यादृशं मानं धातूनां, तादृशं पुष्यन्तः । तथा य[illegible] शरीरे प्रकृत्या दीर्घे ह्रस्वे कृशे वा स्थूले वा यादृशं मा[illegible] धातूनां तादृशं पुष्यन्त इति योजना । एवमित्यादौ स्वप्रमा णावस्थिता इति अनतिरिक्तायन्यूनां च । आश्रयस्येति शरी रस्य, यथा पक्तं सर्वाश्रयं पश्चाद्धमनीभिः प्रपद्यते सर्वशरीर-मित्यर्थः । समधातोरिति समरसादेः समस्वेदमूत्रादेश्च । निमित्तत इत्यादि । निमित्तत इत्यनेन अनिमित्तेऽरिष्टरूपे क्षयवृद्धी निराकरोति । वृद्धिक्षयाभ्यामिति यथासंख्यं वृद्ध-क्षीणाहारकृताभ्याम्, एतेन, आहारविशेषकृतवृद्धिक्षयोररसः साम्यं करोतीत्यर्थः[2] । धातुसाम्यस्यारोग्यत्वे सिद्धेऽपि यदारो-

१ केदारीकुल्यापक्षोऽपि खलेकपोतेन सह तुल्यबल एवेति शिवदासः ।

१ तदेवमुपपादितपोषणधातुमलानां स्वास्थ्यानुवर्तनमुपसंहरति ते सर्वे एवेत्यादीति शिवदासः । २ वृद्धिक्षयाभ्यामिति यथासं-ख्यमन्वयः, पंचमी च ल्यब्लोपे, तेन, क्षीणानां धातूनां वृद्धिं विधाय साम्यमापादयति । अतिवृद्धानां च धातूनां क्षयं [illegible]विधाय साम्यमापादयतीत्यर्थः । आहारमूलाभ्यामिति यथाक्रममन्वयः, एवं [illegible]णाभ्यामाहारकृताभ्यामित्यर्थं इति शिवदासः ।

ग्यायेति ब्रूते, तेन, प्राकृतधातूनां क्षयेण वातिवृद्ध्या वा साम्यं निराकरोति, अस्य साम्यस्य रोगकर्तृत्वादेव। किट्टं च मलानामेवमेवेति, यथा रसस्तथा किट्टमप्यारोग्याय मलानां साम्यं प्रतिपादितं रसक्रमेण करोति। वृद्धमलानां चिकित्सान्तरमाह—खमानेत्यादि। उत्सर्गो बहिर्निःसरणं संशोधनरूपमेषाम् शास्त्रोक्तमस्ति, उत्सर्गं वा वहन्तीत्युत्सर्गिणः। वृद्धानां मलानां चिकित्सान्तरमाह—शीतोष्णेत्यादि। पर्ययो विपर्ययः, तेन, शीतोष्णविपरीतगुणैरित्यर्थः, तेन, शीतसमुत्थे मले उष्णं तथोष्णसमुत्थे शीतमुपचारो भवति। आदिशब्दश्चात्र लुप्तनिर्दिष्टः, तेन स्निग्धरूक्षादीनामपि विपरीतगुणानां ग्रहणम्, किंवा पर्ययगुणात्मगुणाः शीतोष्णस्निग्धरूक्षादयः, तैश्च यथायोग्यतयोपचर्यमाणा इति ज्ञेयम्। एतेन, वृद्धमलानां त्रिविधोऽप्युपक्रमो निदानवर्जनशोधनशमनरूप उक्तो भवति, अत्र निदानवर्जनं वृद्धमले मलवृद्धिहेत्वाहारपरित्यागादल्पमलाहारोपयोगाद्वा बोद्धव्यम्, संशोधनं च "उत्सर्गिणः" इत्यनेनोक्तम्, शमनं च "शीतोष्ण" इत्यादिग्रन्थेनोक्तम्।

अयनानि च तानि मुखानि, इत्ययनमुखानि, अत्रायान्त्यनेनायनानि, खनामस्रोतोमुखं वायनं च। किंवा, अयनस्यागमनस्य मुखानि मार्गाणि, तेन, अयनमुखानि गतिमार्गाणीत्यर्थः। तानि तानि स्रोतांसि मलप्रसादपूरितानि। धातूनयथास्वमिति यद्यस्य पोष्यं तच्च तत्पूरयति। यथाविभागेनेति यस्य यावान् विभागः प्रमाणं तेनैव प्रमाणेन पूरयति, तादृक्प्रमाणान्येव पुष्यन्ति, नाधिकानीत्यर्थः। एतच्च प्रकृतिस्थानां कर्म। विकृतानान्तु न्यूनातिरिक्तधातुकरणमस्त्येवेति बोद्धव्यम्। उक्तंचान्यत्र "स्रोतसा च यथास्वेन धातुः पुष्यति धातुना" इति।

उपसंहरति—एवमित्यादि। कथमशितादेर्विरुद्धयोः शरीरवृद्धुपघातकरोगयोरुत्पाद इत्याह—हिताहितेत्यादि। हितरूपोऽशितादिविशेषः शुभरूपविशेषकारकः, अहितरूपस्त्वशितादिविशेषोऽशुभरूपविशेषकरो भवतीति तेन, नैकरूपात्कारणाद्विरुद्धकार्योदय इति भावः॥ ३॥

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच दृश्यन्ते हि भगवन् हितसमाख्यातमप्याहारमुपयुञ्जाना व्याधिमन्तश्चागदाश्च, तथैवाहितसमाख्यातम्। एवं दृष्टे कथं हिताहितोपयोगविशेषात्मकं शुभाशुभविशेषमुपलभामह इति॥ ४॥**

दृश्यन्ते हि भगवन्नित्यादौ तथैवाहितसमाख्यातं उपयुञ्जाना व्याधिमन्तश्चागदाश्चेति संबन्धः, विशेषात्मकमिति उपचयात्मकम्॥ ४॥

माणं शरीरं कुर्य्यादिति भावः। संशोधनार्हा इत्यर्थ इति शिवदासः।

**तमुवाच भगवानात्रेयः न हिताहारोपयोगिनामग्निवेश! तन्निमित्ता व्याधयो जायन्ते, न च केवलं हिताहारोपयोगादेव सर्वव्याधिभयमतिक्रान्तं भवति। सन्ति ह्यृतेऽप्यहिताहारोपयोगादन्या रोगप्रकृतयः, तद्यथा कालविपर्ययः प्रज्ञापराधः परिणामश्च शब्दस्पर्शरूपरसगन्धाश्चासात्म्या इति। ताश्च रोगप्रकृतयो रसान्सम्यगुपयुञ्जानं पुरुषमशुभेनोपपादयन्ति। तस्माद्धिताहारोपयोगिनोऽपि दृश्यन्ते व्याधिमन्तः। अहिताहारोपयोगिनां पुनः कारणतो न सद्यो दोषवान्भवत्यपचारः। न हि सर्वाण्यपथ्यानि तुल्यदोषाणि, न च सर्वे दोषास्तुल्यबलाः, न च सर्वाणि शरीराणि व्याधिक्षमित्वे[1] समर्थानि भवन्ति। तदेव ह्यपथ्यं देशकालसंयोगवीर्यप्रमाणातियोगाद्भूयस्तरमपथ्यं संपद्यते, स एव दोषः संसृष्टयोनिर्विरुद्धोपक्रमो गंभीरानुगतः चिरस्थितः प्राणायतनसमुत्थो मर्मोपघाती वा भूयान्कष्टतमः क्षिप्रकारितमश्च संपद्यते, शरीराणि चातिस्थूलान्यतिकृशान्यनिविष्टमांसशोणितास्थीनि दुर्बलान्यसात्म्याहारोपचितान्यल्पाहाराण्यल्पसत्त्वानि वा भवन्त्यव्याधिसहानि, विपरीतानि पुनर्व्याधिसहानि। एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाश्चिरकारिणश्च भवन्ति। अतएव च वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषानभिनिर्वर्तयन्त्यग्निवेश॥ ५॥**

तन्निमित्ता इति हिताहारनिमित्ताः। न केवलमिति न परम्। रोगप्रकृतय इति रोगकारणानि। अहिताहारोपयोगिनामित्यादि। कारणत इति निमित्तान्तरात्प्रतिबन्धकात्, तच्च कारणम्, "तदेव ह्यपथ्य"मित्यादिवक्ष्यमाणग्रन्थविपरीतं बोद्धव्यम्। सद्य इति तत्कालम्, अनेनापथ्यस्य रोगजननं प्रति कालान्तरविकारकर्तृत्वं प्रायो भवतीति दर्शयति, अन्यथा सद्य इत्यनर्थकं स्यात्कालान्तरेऽपि दोषाकर्तृत्वात्। दोषवानिति व्याधिजनकः, अपचार इति अहिताहारोपयोगः। उक्तकारणमाह—नहीत्यादि। तुल्यदोषाणीति तुल्यदोषकराणि। व्याधिक्षमित्वं व्याधिबलविरोधित्वं व्याध्युत्पादप्रतिबन्धकत्वमिति यावत्। तदेवापथ्यतुल्यदोषादि विवृणोति—तदेवेत्यादि। अत्र यद्यपि प्रस्तुतत्वादपथ्यप्रतिबन्धकानि कारणानि वक्तव्यानि तथापि सामान्यन्यायतयाऽपथ्यशक्तिवर्द्धकान्युच्यन्ते। तत्र देशादीनां योगादिति अनुगुणदेशादियोगात्, यथा व्रीहिः पित्तकर्तृत्वेनापथ्यः, सचानूपदेशयोगाद्भूयस्तरमपथ्यो भवति, धन्वदेशे तु हीनबलो भवति। तथा शरत्कालस्यानुगुणस्य

[1] व्याधिक्षयित्व इति पाठः।

योगात् वलवान् भवति, हेमन्ते दुर्वलः। संयोगाद्यथा दधि फाणितादियुक्तो वलवान्, मध्वादियुक्तश्च दुर्वलः। वीर्याद्यथा संस्कारोष्णीकृतो वलवान्, शीतस्तु दुर्वलः। स एव च प्रमाणातियोगाद्वली, हीनमात्रस्त्ववल इत्याद्यनुसर्तव्यम्। दोषतुल्यवलतामाह—स एव दोष इत्यादि। संसृष्टा मिलिता वहवो योनयः कारणानि यस्य स तथा। किंवा, संसृष्टयोनिरित्यनुगुणदूष्यो यथा पित्तस्य रक्तं दूष्यं असाध्यकष्टत्वं क्षिप्रकारित्वंच भवति। विरुद्धोपक्रमो यथा—पित्तं मेहारंभकम्, वचनं हि "लज्जांसाश्रयमुत्तानं गंभीरं त्वंतराश्रयमिति। गंभीरानुगत इति गंभीरमज्जादिधातुगत इत्यर्थः। चिरस्थित इति देहे चिरकालावस्थानेन कृतमूलत्वात्कष्टतमासाध्यः। प्राणायतनसमुत्थ इति अध्याध्याये वक्ष्यमाणशङ्खादिदशप्राणायतनाश्रयी। मर्मोपघाती इति प्राणायतनव्यतिरिक्तक्षिप्रकारितमो हृदयादिमर्मोपघातकारी। मर्मघातित्वेनैव मर्मविशेषप्राणायतनसमुत्थत्वे लब्धे पुनस्तद्वचनं प्राणायतनमर्माश्रयिणो विशेषेण कष्टत्वप्रतिपादनार्थम्। कष्टतम इति वहुदुःखकर्तृत्वेनासाध्यत्वेन च क्षिप्रकारितम इत्याशु विकारकारितमः। चकारात्संसृष्टयोनित्वादिहेतूनामल्पत्वेन कष्टकष्टतरक्षिप्रकारिव्याधिकारित्वं[1] दर्शयति। व्याध्यक्षमिशरीराण्याह—शरीराणि चेत्यादि। अनिविष्टानि श्लथमांसादीनि येषां शरीराणां तानि तथा, किंवा, अनिविष्टानि विषमाणि। उपचितानीति संवर्द्धितानि। आमान्नपुष्टं हि शरीरमनुभूतदोषभावितमेव भवतीति भावः। विपरीतानीत्यनतिस्थूलत्वादियुक्तानि, व्याधिसहानीति व्याध्युत्पादकप्रतिवन्धकानि। एतच्च शरीरमधिकृत्य वैपरीत्यं व्याधिसहत्वे उदाहरणार्थमुपन्यस्तम्, तेन, यथोक्तापथ्यवलवैपरीत्यं दोषवलवैपरीत्यं च न सद्यो व्याधिकारकं भवतीत्येतदप्युक्तं वोद्धव्यम्। एतदेवापथ्याहारदोषशरीराणामेवावलवत्त्ववलवत्वेन लक्षणविशेषं यथायोग्यतया मृद्वादिव्याधिकारणत्वेन उपसंहरन्नाह—एभ्यश्चेत्यादि[2]। विशेषा यथोक्ता उक्तविपरीताश्च, तत्र, उक्तविपरीतानां विशेषान्मृदवस्तथा चिरकारिणश्च भवन्ति, यथोक्तापथ्यादिविशेषाद्दारुणाः क्षिप्रकारिणश्च भवन्तीति मन्तव्यम्। अनेन प्रसङ्गेन वातादीनां रसादिस्थानविशेषेषु कुपितानां ये व्याधयो भवन्ति, तान्दर्शयितुमाह—अत एवेत्यादि[3] ॥५॥

**तत्र रसादिषु स्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयः संभवन्ति तांस्तान् यथावदनुव्याख्यास्यामः ॥ ६ ॥**

तत्र रसेत्यादौ कुपितानां दोषाणामित्यनियमेन रसे कुपितो वायुः पित्तं वा श्लेष्मा वा, वातादयोऽश्रद्धादीनि कुर्वन्ति सत्यपि दोषभेदे आश्रयस्याभेदात्, आश्रयप्रभावेणैवाऽश्रद्धादयो भवन्ति, परं, दोषभेदे अश्रद्धादावेव वातादिलिङ्गं विशिष्टं भवति। किंवा यथायोग्यरसाश्रयिणा वातादिनाऽश्रद्धादिकरणं वोद्धव्यम्। यतः, न गौरवं वातदुष्टरसे भवितुमर्हति, एतच्च नातिसुन्दरम्, तेन पूर्वपक्षो ज्यायान् ॥ ६ ॥

**अश्रद्धा चाऽरुचिश्चास्यवैरस्यमरसज्ञता।**
**हृल्लासो गौरवं तन्द्रा साङ्गमर्दो ज्वरस्तमः ॥ ७ ॥**
**पाण्डुत्वं स्रोतसां रोधः क्लैव्यं सादः कृशाङ्गता।**
**नाशोऽग्नेरयथाकालं वलयः पलितानि च।**
**रसप्रदोषजा रोगा, वक्ष्यन्ते रक्तदोषजाः ॥ ८ ॥**

अश्रद्धायां मुखप्रविष्टस्याहारस्याभ्यवहरणं भवत्येव परन्त्वनिच्छा[1] अरुचौ तु मुखप्रविष्टं नाभ्यवहरतीति भेदः। आस्यवैरस्यमुचितादाहारस्य रसादन्यथात्वम्, अरसज्ञता रसाप्रतिपत्तिः, सादोऽवसादः[2] ॥ ७ ॥ ८ ॥

**कुष्ठवीसर्पपिडका रक्तपित्तमसृग्दरः।**
**गुदमेढ्रास्यपाकश्च प्लीहा गुल्मोऽथ विद्रधी ॥ ९ ॥**
**नीलिका कामला व्यङ्गः पिप्लवस्तिलकालकाः।**
**दद्रुश्चर्मदलं श्वित्रं पामा कोठास्रमण्डलम्।**
**रक्तप्रदोषाज्जायन्ते, शृणु मांसप्रदोषजान् ॥ १० ॥**

रक्तप्रदोषजेषु कुष्ठग्रहणादेव चर्मकीलदद्वादिलाभे सिद्धे पुनस्तद्वचनं विशेषप्रादुर्भावप्रदर्शनार्थम्, तिलकालकास्तिलाकृतयः, अस्रमण्डलं लोहितमण्डलम् ॥ ९ ॥ १० ॥

**अधिमांसार्वुदं कीलगलशालूकशुण्डिकाः[3]।**
**पूतिमांसालजीगण्डगण्डमालोपजिह्विकाः ॥**
**विद्यान्मांसाश्रयान्, मेदःसंश्रयांस्तु प्रवक्ष्यते ॥ ११ ॥**
**मांसप्रदोषजान्विद्याद्रोगान्मेदःप्रदोषजान्।**
**निन्दितानि प्रमेहाणां पूर्वरूपाणि यानि च ॥ १२ ॥**
**अध्यस्थिदन्तदन्तास्थिभेदशूलं विवर्णता।**
**केशलोमनखश्मश्रुदोषाश्चास्थिप्रकोपजाः[4] ॥ १३ ॥**

कीलशब्देनाऽत्रार्श उच्यते। निन्दितानि प्रमेहपूर्वरूपा-

१ कष्टकष्टतरक्षिप्रकारिव्याधिकारणत्वमिति पाठः। २ इदानीमुक्तानामेवापथ्याहारदोषशरीराणां वलवत्त्वावलवत्वेन लक्षणविशेषं यथायोग्यतया मृद्वादिव्याधिकारणत्वेनोपसंहरन्नाह एभ्यश्चेत्यादि। अपथ्यदोषयोर्दुर्वलत्वेन शरीरस्य च व्याधिवलसहत्वेन व्याधयो मृदवश्चिरकारिणश्च भवन्ति, उक्तवैपरीत्येन तु दारुणाः क्षिप्रकारिणश्च भवन्तीत्यर्थ इति शिवदासः। ३ न केवलमुक्तविशेषेभ्य एव व्याधिविशेषाः, अपि तु, दोषाणां स्थानविशेषसंवन्धादप्येवं व्याधिविशेषा भवन्तीत्याह अत एवेत्यादीति शिवदासः।

१ प्रथमन्त्वनिच्छेति पाठः। २ सादोऽङ्गानां कर्माऽक्षमत्वादिति शिवदासः। ३ गलशब्दस्य शालूकशुण्डिकाभ्यां प्रत्येकमन्वय इति शिवदासः। ४ अधिशब्दस्यास्थिदन्ताभ्यां प्रत्येकमन्वयः, एवं भेदशब्दस्यापि दन्तास्थिभ्यामिति शिवदासः।

णीति केशजटिलत्वादीनि तेपामेव निन्दितत्वात्, नत्वास्यवैरस्यमधुरत्वादीनि । किंवा, निन्दितानीति अतिस्थूलगतान्यायुर्ह्रासादीनि अष्टौ निन्दितीयोक्तानि, तेषां च निन्दितत्वं निन्दितातिस्थूलत्वेन । एवं पूर्वस्मिन् व्याख्याने "यानि च" इति 'च'कारो नियमे, उत्तरव्याख्याने च समुच्चये ॥११-१३॥

**रुक्पर्वणां भ्रमो मूर्छा दर्शनं तमसो मताः ।**
**अरुषां स्थूलमूलानां पर्वजानां च दर्शनम् ॥ १४ ॥**
**मज्जप्रदोषात्, शुक्रस्य दोषात् क्लैव्यमहर्षणम् ।**
**रोगिणं क्लीवमल्पायुं विरूपं वा प्रजायते ॥ १५ ॥**
**न वा संजायते गर्भः पतति प्रस्रवत्यपि ।**
**शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम् ॥ १६ ॥**

अध्यस्थिदन्तशब्देन अध्यस्थ्यधिदन्तयोर्ग्रहणम्, शूलमध्यस्थिशूलमेव बोद्धव्यम् । मूर्च्छेत्यादि मज्जदोषाज्ज्ञेयम् । अरुंपीति व्रणानि । क्लैव्यमिति ध्वजानुच्छ्रायः । अहर्षणंच सत्यपि ध्वजोत्थाने मैथुनाऽशक्तिः । "शुक्रं हि दुष्टं सापत्यं सदारं बाधते नर"मित्यत्रापत्यबाधा रोगिक्लीवायपत्यजनकत्वेन, दारबाधा तु स्राविगर्भादिजनकत्वेन ॥ १४-१६ ॥

**इन्द्रियाणि समाश्रित्य प्रकुप्यन्ति यदा मलाः ।**
**उपघातोपतापाभ्यां योजयन्तीन्द्रियाणि ते ॥ १७ ॥**
**स्नायुशिराकण्डराभ्यो दुष्टाः क्लिश्नन्ति मानवम् ।**
**स्तंभसंकोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः ॥ १८ ॥**
**मलानाश्रित्य कुपिता भेदशोषप्रदूषणम् ।**
**दोषा मलानां कुर्वन्ति सङ्गोत्सर्गावतीव च ॥ १९ ॥**

उपघातेत्यादौ उपघातो विनाशः, उपतापस्तु किंचिद्वैकल्यम्, कण्डराभ्य इति सप्तम्यर्थे पंचमी । खल्ली करपदावमोटनम्, ग्रन्थिः स्नाय्वादिग्रन्थिरेव । मलानित्यादौ भेदशोषप्रदूषणमिति यथासंभवं ज्ञेयम्, अत्र भेदः पुरीपस्य, शोषस्तु विशेषणं सर्वमलेषु संभवति, प्रदूषणं तु प्रदुष्टवर्णादियुक्तत्वेन प्राकृतवर्णाद्युपघातः । संगोत्सर्गावतीव चेति अतीवाप्रवृत्तिप्रवृत्ती ॥ १७—१९ ॥

**विविधादशितात्पीतादहिताल्लीढखादितात् ।**
**भवन्त्येते मनुष्याणां विकारा ये उदाहृताः ॥ २० ॥**
**तेषामिच्छन्ननुत्पत्तिं सेवेत मतिमान्सदा ।**
**हितान्येवाशितादीनि न स्युस्तज्जास्तथामयाः ॥२१॥**
**रसजानां विकाराणां सर्वं लङ्घनमौषधम् ।**
**विधिशोणितकेऽध्याये रक्तजानां भिषग्जितम् ॥२२॥**

१. निन्दितानीति निन्दितपुरुषगतान्यतिस्थूलातिकृशातिदीर्घातिह्रस्वादीन्यष्टौ निन्दितीयोक्तानि, किंवा, प्रमेहपूर्वरूपविशेषणमिति शिवदासः । २ स्थूलमूलानां गंभीरपरिणाहानामिति शिवदासः । ३ कण्डराभ्य इति पंचमी ल्यवलोपे, तेन, स्नाय्वादीन् प्राप्य दुष्टा इत्यर्थः, अन्ये तु सप्तमीस्थाने पंचमीत्याहुरिति शिवदासः । स्नायौ शिराकण्डरयोरिति पाठः ।

**मांसजानां तु संशुद्धिः शस्त्रक्षाराग्निकर्म च ।**
**अष्टौ निन्दितिकेऽध्याये मेदोजानां चिकित्सितम् २३**
**अस्थ्याश्रयाणां व्याधीनां पंचकर्माणि भेषजम् ।**
**बस्तयः क्षीरसर्पींषि तिक्तकोपहितानि च ॥ २४ ॥**
**मज्जशुक्रसमुत्थानामौषधं स्वादुतिक्तकम् ।**
**अन्नं व्यवायव्यायामौ शुद्धिः काले च मात्रया ॥२५॥**
**शान्तिरिन्द्रियजानां तु त्रिमर्मीये प्रवक्ष्यते ।**
**स्नाय्वादिजानां प्रशमो वक्ष्यते वातरोगिके ॥ २६ ॥**
**नवेगान्धारणेऽध्याये चिकित्सासंग्रहः कृतः ।**
**मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित्क्वचित् २७**

संप्रत्यहिताहारजनितान् दोषान् दर्शयन् यथा कर्तव्यमुपदिशति—विविधादित्यादि । भिषग्जितमुक्तमिति शेषः । पंचकर्माणीत्यभिधायापि वस्तय इतिवचनं तिक्तोपहितवस्तेर्विशेषेण हितत्वोपदर्शनार्थम् । शुद्धिरिति वमनादिना सिद्धिः प्रोक्ता । क्वचिदिति अतीसारग्रहण्यादौ ॥ २०—२७ ॥

**व्यायामादूष्मणस्तैक्ष्ण्याद्धितस्यानवचारणात् ।**
**कोष्ठाच्छाखा मला यान्ति द्रुतत्वान्मारुतस्य च॥२८॥**
**तत्रस्थाश्च विलंबन्ते कदाचिन्न समीरिताः ।**
**नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः ॥ २९ ॥**

संप्रति, रसादीनां शाखारूपत्वात्कोष्ठाश्रयिणो दोषा यथा शाखां यान्ति, तदाह—व्यायामेत्यादि । व्यायामक्षोभात्कोष्ठं परित्यज्य शाखां मला यान्ति, ऊष्मणो वह्नेस्तीक्ष्णत्वाद्विलायिता दोषा शाखां यान्तीति । हितस्याऽनवचारणयाऽतिसेवयाऽतिमात्रवृद्धो दोषो जलपूरवद्वृद्धः स्वस्थानमाप्लाव्य स्थानान्तरं यातीति युक्तम् । द्रुतत्वान्मारुतस्येति चलत्वाद्वायोर्वायुनाक्षिप्तो यातीत्यर्थः । वाय्वन्तरेण च वायोराक्षेपणमुपपन्नमेवेति, अन्यथा, "मला" इति बहुवचनमसाधु । अथ शाखां गताः किं कुर्वन्तीत्याह—तत्रस्थाश्चेत्यादि । विलंबन्ते कदाचिदिति कदाचिद्याधिकरणे विलंबं कुर्वन्ति । कुतो विलंबन्त इत्याह न समीरिताः, ये दोषा अल्पत्वेनाऽवलवन्तः, ते हेत्वन्तरेण समीरिताः सन्तः कुप्यन्ति । तथा च, तत्र नादेश इत्यननुगुणदेशे तथा नाकाल इत्यननुगुणकाले कुप्यन्तीति योजना । तत्रैव हेतुमाह—भूय इत्यादि । यस्माद्भूयो हेतुप्रतीक्षिणस्तेऽल्पबला दोषास्तस्मादीरणाद्यपेक्षन्ते एतेन च भूयोहेतुप्रतीक्षिणो भवन्ति, बलवत्त्वान्न ते ईरणाद्यपेक्षन्ते, अतएवोक्तम् 'कदाचिद्' इति ॥ २८ ॥ २९ ॥

**वृद्ध्याभिष्यन्दनात्पाकात्स्रोतोमुखविशोधनात् ।**
**शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात्**

संप्रति शाखाभ्यः कोष्ठागमनहेतुं दोषाणामाह—वृद्धेत्यादि । विष्यन्दनादिति विलयनात्, विलीनश्च द्रवत्वादेव कोष्ठं निम्नं याति । पाकादिति पक्वो दोषोऽवृद्धत्वेनैव कोष्ठं

१ शाखा इति रसादिधातूनिति शिवदासः ।

यातिं[1]। स्रोतोमुखविशोधनादिति, अवरोधकापगमात्। वायोर्निग्रहादिति क्षिप्रुर्वायोर्निग्रहात् प्राकृतं स्थानं कोष्ठं याति ॥ ३० ॥

**अजातानामनुत्पत्तौ जातानां विनिवृत्तये।**
**रोगाणां यो विधिर्दृष्टः सुखार्थी तं समाचरेत्॥३१॥**
**सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः।**
**ज्ञानाज्ञानविशेषात्तु मार्गामार्गप्रवृत्तयः॥ ३२॥**

इदानीं सङ्क्षेपेणाखिलव्याधिप्रतीकारं सूत्रयति। अजातानामित्यादि। यो विधिर्दृष्ट इति कृत्स्ने तन्त्रे। ननु यदि सुखार्था सर्वप्राणिनां प्रवृत्तिस्तत्कथं कोऽपि अमार्गे प्रवर्तत इत्याह ज्ञानेत्यादि। अज्ञानादेव सुखसाधनमिदमिति कृत्वाऽपरीक्षका प्रवर्तन्ते, न तु दुःखकर्तृतासन्धानादिति भावः ॥ ३१ ॥ ३२ ॥

**हितमेवानुरुध्यन्ते प्रपरीक्ष्य परीक्षकाः।**
**रजोमोहावृतात्मानः प्रियमेव तु लौकिकाः॥ ३३॥**
**श्रुतं बुद्धिः स्मृतिर्दाक्ष्यं धृतिर्हितनिषेवणम्।**
**वाग्विशुद्धिः शमो धैर्यमाश्रयन्ति परीक्षकम्॥३४॥**
**लौकिकं नाश्रयंते ते गुणा मोहतमःश्रितम्।**
**तन्मूला बहुलाश्चैव रोगाः शारीरमानसाः॥ ३५॥**

हितमेवेत्यायतिविशुद्धमेव तदात्वे दुःखकरम्, प्रियमेव तदात्वे सुखकरमायतिविरुद्धम्। लौकिका अपरीक्षकाः। परीक्षकं स्तौति श्रुतमित्यादि। परीक्षकमाश्रयन्त इति परीक्षके भवन्ति। किंवा, बुद्ध्यादिदेवताः परीक्षकमाश्रयन्ते, यदुक्तम्, "विशुद्धं ज्ञानदेवताः" इति ॥ ३३—३५ ॥

**प्रज्ञापराधाद्ध्यहितानर्थान् पंच निषेवते।**
**सन्धारयति वेगांश्च सेवते साहसानि च॥ ३६॥**

**तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते।**
**रज्यते न तु विज्ञाता विज्ञाने ह्यमलीकृते॥ ३७॥**

रजस्तमोमूला रोगा भवन्ति, तदाह प्रज्ञापराधादित्यादि। अहितार्थसेवादि च रोगं करोतीति भावः। तदात्वे सुखेष्विति वक्तव्ये, यत् "सुखसंज्ञेषु" इति करोति, तत्तदात्वसुखस्यापथ्यदुःखानुबन्धसुखकर्तृतया परमार्थतस्तदात्वेऽप्यसुखत्वं दर्शयति, यथा "सुखसंज्ञकमारोग्यम्" इत्यत्रोक्तम्। विज्ञातेति परीक्षकः ॥ ३६ ॥ ३७ ॥

**न रागान्नाप्यविज्ञानादाहारमुपयोजयेत्।**
**परीक्ष्य हितमश्नीयाद्देहो ह्याहारसंभवः॥ ३८॥**

न रागादित्यादौ अहितत्वेन जानन्नपि रागादेव कश्चिद्दुष्टः प्रवर्तते, अज्ञानाच्चाहिताज्ञानादेव कश्चिद्धिताध्यवसायेन प्रवर्तते, एतद्द्वयमपि निषिध्यते ॥ ३८ ॥

**आहारस्य विधावष्टौ विशेषा हेतुसंज्ञकाः।**
**शुभाशुभसमुत्पत्तौ तान्परीक्ष्योपयोजयेत्॥ ३९॥**

कथमाहारः परीक्ष्य इत्याह आहारस्येत्यादि। आहारस्य विधौ विधानेऽष्टौ विशेषाः प्रकृतिकरणसंयोगादयो रसविमाने वक्तव्या हेतुसंज्ञकाः, क्व हेतुसंज्ञका इत्याह शुभेत्यादि। शुभाशुभसमुत्पत्तौ ते च प्रकृत्यादयः शुभाशुभकरा इति ज्ञेयम्[1] ॥ ३९ ॥

**परिहार्याण्यपथ्यानि सदा परिहरन्नरः।**
**भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः॥ ४०॥**
**यत्तु रोगसमुत्थानमशक्यमिह केनचित्।**
**परिहर्तुं न तत्प्राप्य शोचितव्यं मनीषिणेति॥ ४१॥**

ननु पथ्यसेवायां क्रियमाणायामपि बलवत्प्राक्तनाधर्मवशादपि व्याधयो भवन्ति, तत्किमनेन पथ्यसेवनेनेत्याह परिहार्याणीत्यादि। अनृणतामिव प्राप्तोऽनृणतां प्राप्ता, एतेन, परिहार्यपरिहारेण पुरुषकारेऽनपराधः पुरुषो भवतीति दर्शयति। यस्तु दैवागतस्तस्य व्याधिस्तत्र साधवो नैवं पथ्यसेविनं गर्हयन्ति, एतदेवाह यत्त्वित्यादि। अशक्यं परिहर्तुमिति बलवत्कर्मजन्यत्वादित्यर्थः। न शोचितव्यमिति पुरुषकारस्य दैवजन्यत्वे अवश्यंभाविव्याधौ अकिंचित्करत्वादित्यर्थः ॥ ४० ॥ ४१ ॥

तत्र श्लोकाः।

**आहारसंभवं वस्तु रोगाश्चाहारसंभवाः।**
**हिताहितविशेषाच्च विशेषः सुखदुःखयोः॥ ४२॥**

१· पाकादिति पाकजनितलाघवात्, पक्वो हि दोषो लघुः सन् कोष्ठं यातीति शिवदासः। २ इदानीं संक्षेपेण निखिलव्याधिप्रतीकारं सूत्रयति अजातानामित्यादि। यो विधिर्दृष्ट इति कृत्स्ने तन्त्रे। सुखार्थी आरोग्यार्थी सुखस्य स्वतः पुरुषार्थत्वं दर्शयति सुखार्थी इत्यादि। एतेन निरुपाधीच्छाविषयत्वेन सुखस्य स्वतः पुरुषार्थत्वमित्यर्थः। नन्विदमसङ्गतम् असुखसाधनेऽप्यसन्मार्गे जनप्रवृत्तिदर्शनादित्याह ज्ञानाज्ञानेत्यादि। अत्र यथासंख्यमन्वयः, एतेन, असुखसाधनेऽसन्मार्गे 'सुखसाधनोऽयम्' इति भ्रमाद्रागाद्वा प्रवर्त्तते, न तु दुःखकर्तृतानुसन्धानादिति भाव इति शिवदासः। ३ हितमेवेत्यादि। परीक्षकाः सदसद्विवेचकाः प्रेक्षापूर्वककारिणः, हितमायतिविशुद्धमेवेति प्रपरीक्ष्य सम्यग् ज्ञात्वा अनुरुध्यन्ते कामयन्ते, अनूपपदको हि रुधधातुः कामे वर्तते, वचनं हि "अनुरुधः कामे" इतीति शिवदासः। ४ कथं पुनरपरीक्षके रजस्तमोमूला रोगा भवन्तीत्याह प्रज्ञापराधादित्यादि। हि यस्मादज्ञोऽपरीक्षकः प्रज्ञापराधाद्रजस्तमोऽभिभूतबुद्धित्वादहितेन्द्रियार्थसेवादिं करोति, अतस्तन्मूला व्याधयो भवन्तीति भाव इति शिवदासः।

१ कथमाहारपरीक्षा कार्येत्याह आहारस्येत्यादि। आहारस्य विधौ विधानेऽष्टौ विशेषाः प्रकृतिकरणसंयोगादयो रसविमाने वक्तव्याः। शुभाऽशुभसमुत्पत्तौ हेतुसंज्ञका इत्यन्वयः, तत्र शुभाः प्रकृत्यादयः शुभकराः, अशुभास्त्वशुभकरा इति ज्ञेयमिति शिवदासः।

सहत्वे चासहत्वे च दुःखानां देहसत्वयोः ।
विशेषो रोगसङ्घाश्च धातुजा ये पृथक्पृथक् ॥४३॥
तेषां चैव प्रशमनं कोष्ठाच्छाखा उपेत्य च ।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेव च॥४४॥
प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितं च यत् ।
विविधाशितपीतीये तत्सर्वं संप्रकाशितम् ॥ ४५ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
विविधाशितपीतीयो नामाष्टाविंशोऽध्यायः ॥
समाप्तमन्नपानचतुष्कम् ।

संग्रहे वस्त्विति शरीरम् । सहत्वे चासहत्वे चेत्यादिना 'शरीराणि चातिस्थूलानीत्यादि विपरीतानि पुनर्व्याधिसहानि' इत्यन्तं ग्रन्थं ज्ञापयति ॥ ४२—४५ ॥

इति विविधाशितपीतीयोऽध्यायः ।
अन्नपानचतुष्कं समाप्तम् ।

## ऊनत्रिंशोऽध्यायः ।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्यामः ॥१
इति ह स्माह भगवानात्रेयः ॥ २ ॥

संप्रत्यध्यायद्वयेऽवशिष्टे वक्तव्ये पूर्वाध्याये "प्राणायतनसमुत्थः" इति प्राणायतनशब्दकीर्तनाद्दशप्राणायतनीय उच्यते[2], किंवा, अयं दशप्राणायतनीयः सूत्रस्थानसंग्रहः, शेषाध्यायस्तु सर्वतन्त्रसंग्रह इति पश्चादुच्यते । इयमर्थपरा संज्ञा, न शब्दानुकारिणी, आयतनानीवायतनानि । तदुपघाते, प्राणोपघातात् तन्नाशात्प्राणनाशादित्यर्थः, न पुनः प्राणस्य जीविताख्यस्य शरीरेन्द्रियसत्वात्मसंयोगरूपस्य शङ्खादय एव परमाश्रयास्तस्य कृत्स्नशरीराद्याश्रयत्वात् ॥ १ ॥ २ ॥

दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः[3] ।
शङ्खौ मर्मत्रयं कण्ठो रक्तशुक्रौजसी गुदम् ॥ ३ ॥
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयम् ।
जानीते यः स विद्वान् वै प्राणाभिसर उच्यते इति४
द्विविधास्तु खलु भिषजो भवन्त्यग्निवेश प्राणानामेकेऽभिसरा हन्तारो रोगाणाम्, रोगाणामेकेऽभिसरा हन्तारः प्राणानामिति ॥ ५ ॥

मर्मत्रयमिति हृदयवस्तिशिरांसि । तानीति शङ्खादीनि । विज्ञानं बुद्धिः । चेतना हेतुरात्मा चेतनासमवायिकारणत्वात्, किंवा चेतनाशब्देनात्मा, हेतुशब्देन तु व्याधीनां जनकहेतुर्निदानरूपस्तथा शमकहेतुर्भेषजरूप उच्यते । आमयशब्देन च लिङ्गमुच्यते । तेन, आध्यात्मिकानि इन्द्रियादीनि बाह्यानि च हेतुलिङ्गौषधानि यो जानीत इत्युक्तं भवति । एतावच्चैतच्छास्त्रं, यदाध्यात्मिकानीन्द्रियाणि तथा हेतुलिङ्गौषधानि च प्राणाभिसरा महाचतुष्पादे उक्ताः सर्वचिकित्सायाः वैद्याधीनत्वेन यादृशो वैद्य उपादेयो यादृशश्चानुपादेयस्तद्दर्शनं च कौशलात्सूत्रस्थानार्थसंग्रह इति दर्शयति । द्विविधा इत्यादि । रोगाणामभिसरा इति रोगाणामनेतारः ॥३—५॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—भगवंस्ते कथमस्माभिर्वेदितव्या भवेयुरिति ॥ ६ ॥

भगवानुवाच य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरणवन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञास्ते प्राणानामभिसरा हन्तारो रोगाणाम्, तथाविधाहि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानां च रोगाणां समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषविज्ञाने व्यपगतसन्देहाः त्रिविधस्यायुर्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः[2] पंचत्रिंशतश्च मूलफलानां चतुर्णां च स्नेहानां पंचानां च लवणानामष्टानां च मूत्राणां अष्टानां च क्षीराणां क्षीरत्वग्वृक्षाणां च षण्णां शिरोविरेचनादेश्च पंचकर्माश्रयस्यौषधगणस्याष्टाविंशतेश्च यवागूनां द्वात्रिंशच्चूर्णप्रदेहानां षण्णां च विरेचनशतानां पंचानां च कषायशतानां स्वस्थवृत्तावपि च भोजनपाननियमस्थानचङ्क्रमणशयनासनमात्राद्रव्यांजनधूमनावनाभ्यंजनपरिमार्जनवेगविधारणाविधारणव्यायामसात्म्येन्द्रियपरीक्षोपक्रमसद्वृत्तकुशलाः चतुष्पादोपगृहीते च भेषजे षोडशकले सविनिश्चये सत्रिपर्यषणे सवातकलाकलज्ञाने व्यपगतसन्देहाः चतुर्विधस्य च स्नेहस्य चतुर्विंशत्युपनयस्य[3] उपकल्पनीयस्य चतुःषष्टिपर्यन्तस्य[4] व्यवस्थापयितारो बहुविधानामुक्तानां च स्ने-

१ दुःखानां व्याधीनामिति शिः । २ पूर्वाध्याये प्राणायतनसमुत्थ इत्युक्तं तत्र कानि प्राणायतनानीति जिज्ञासायां तदभिधायकदशप्राणायतनीय उच्यत इति शिवदासः । ३ प्रतिष्ठिता नियता इति शिः । ४ संप्रति सूत्रस्थानार्थसंग्रहणं दर्शयितुं भूमिकां रचयति द्विविधा इत्यादि । अभिसरा प्रत्यावर्तका इति शिवदासः । ५ विज्ञानं बुद्धिः, विज्ञायतेऽनेनेति विज्ञानं निदानपूर्वरूपरूपोपशयसंप्राप्तिरूपमिति शिवदासः ।

१ श्रुतं शास्त्रं ज्ञानं वा, जितहस्ता लघुहस्ताः, जितात्मान इति जितेन्द्रियाः, प्रकृतिः कारणमिति शिवदासः । २ सत्रिविधौषधग्रामस्येति ग्रामशब्दः समूहवचनः, प्रवक्तार इत्यस्य सर्वैं षष्ठ्यन्तैः प्रत्येकमन्वय इति शिवदासः । ३ चतुर्विंशत्युपनयस्येति उपनयो विचारणा इति शिवदासः । ४ चतुःषष्टिपर्यन्तस्येति रसभेदेन चतुःषष्टिसंख्यापर्यन्तोऽवधिर्यस्य चतुःषष्टिसंख्याकरस्येत्यर्थ इति शिवदासः

ह्यस्वेद्यवम्यविरेच्यौषधोपचाराणां च कुशलाः शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य सक्षयपिडकाविद्रधेस्त्रयाणां च शोफानां बहुविधशोफानुबन्धानामष्टाचत्वारिंशतश्च रोगाधिकरणानां चत्वारिंशदुत्तरस्य च नानात्मजस्य व्याधिशतस्य, तथा विगर्हितातिस्थूलातिकृशानां च सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्यास्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णां च लङ्घनादीनामुपक्रमाणां सन्तर्पणापतर्पणजानां च रोगाणां स्वरूपप्रशमनानां च शोणितजानां च व्याधीनां मदमूर्च्छायसंन्यासानां च सकारणरूपौषधानां कुशलाः कुशलाश्चाहारविधिविनिश्चयस्य प्रकृत्या च हिताहितानामाहारविकाराणामग्र्यसंग्रहस्यासवानां च चतुरशीतेः द्रव्यगुणविनिश्चयस्य रसानुरससंश्रयस्य सविकल्पवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानस्य सगुणप्रभावस्य सानुपानगुणस्य नवविधस्याऽर्थसंग्रहस्याऽऽहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयाणां च रोगाणामौषधसंग्रहाणां च दशानां च प्राणायतनानां यं च वक्ष्यामोऽर्थे दशमहामूलीये त्रिंशत्तमाध्याये तत्र च कृत्स्नस्य तन्त्रोद्देशलक्षणस्य तन्त्रस्य च ग्रहणधारणविज्ञानप्रयोगकर्मकार्यकालकर्तृकरणकुशलाः कुशलाश्च स्मृतिमतिशास्त्रसंयुक्तियुक्तिज्ञानस्यात्मनः शीलगुणैरविसंवादनेन च संपादनेन सर्वप्राणिषु चेतसो मैत्रस्य मातृपितृभ्रातृवन्धुवदेवमुक्ताः भवन्त्यग्निवेश प्राणानामभिसरा हन्तारो रोगाणामिति ॥ ७ ॥

प्रतिपत्तिज्ञा इति तदात्वे कर्तव्यज्ञाः । शरीराभिनिर्वृत्तिज्ञानं—यथा शरीरं शुक्रशोणितसंयोगादिभ्य उपजायते, तथा ज्ञानम् । प्रकृतिविकारज्ञानं सांख्यनयेन शारीरे वक्ष्यमाणम् । त्रिविधस्यायुर्वेदसूत्रस्येति हेतुलिङ्गौषधज्ञानमित्यस्य । इतःप्रभृति "तन्त्रोद्देशलक्षणस्य" इत्यन्तेन सूत्रस्थानार्थसंग्रहो यथाक्रममनुसारणीयः । ससंग्रहव्याकरणस्येति "सामान्यं च विशेषं च" इत्यादि दीर्घञ्जीवितीये संग्रहः, व्याकरणंचे, "सामान्यमेकत्वकरणम्" इत्यादि । सत्रिपर्येषण इति एषणात्रययुक्ते । विविधस्येति "चरः शरीरावयवाः" इत्यादेः आहारगतेति "विविधमशितपीतम्" इत्यादिना । तन्त्रोद्देशलक्षणस्येति, तत्र तन्त्रोद्देशः "अष्टौ स्थानानि" इत्यादिना । तन्त्रलक्षणं तु आयुषो वेदस्य च यन्निरुक्तौ लक्षणं वक्ष्यति । अत्र स्थानार्थज्ञाने कौशलमभिधायान्यथाप्याह तन्त्रस्येत्यादि ।

गृहीतस्योत्तरकालस्मरणं धारणम् । विज्ञानमर्थतो ज्ञानम् । प्रयोगश्चिकित्साप्रयोगः । कर्म अनेकधा चिकित्साकरणम् । कार्यं धातुसाम्यम् । कालः क्रियाकालः । कर्तेह भिषक् । करणं भेषजम् । शास्त्रसंयुक्तिः शास्त्रयोजना । युक्तिज्ञानस्येति कुशलसंयोगात्करणे षष्ठी । आत्मन इत्यादि ।—आत्मनः शीलगुणैः करणभूतैः मातृपितृबन्धुवत् सर्वप्राणिषु चेतसो मैत्रस्य संपादनेन तथाऽविसंवादनेन कुशला इति ग्रन्थसंबंधो बोद्धव्यः ॥ ६ ॥ ७ ॥

अतो विपर्ययेण विपरीता रोगाणामभिसरा हन्तारः प्राणानां भिषक्छद्मप्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपकत्यक्तधर्माणो राज्ञां प्रमादाच्चरन्ति राष्ट्राणि ॥ ८ ॥

तेषामिदं विशेषविज्ञानम् अत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्मलोभात्, श्रुत्वा च कस्यचिदातुर्यमभितः परिपतन्ति, संश्रवणे चास्यात्मनो वैद्यगुणानुच्चैर्वदन्ति, यश्चास्य वैद्यः प्रतिकर्म करोति, तस्य च दोषान्मुहुर्मुहुरुदाहरन्ति आतुरमित्राणि च प्रहर्षणोपजापोपसेवादिभिरिच्छन्त्यात्मीकर्तुं स्वल्पेच्छतां चात्मनः ख्यापयन्ति, कर्म चासाद्य मुहुर्मुहुरवलोकयन्ति, दाक्ष्येणाज्ञानमात्मनः प्रच्छादयितुकामा व्याधिं चापवर्तयितुमशक्नुवन्तो व्याधितमेवानुपकरणमपचारिकमनात्मवन्तमुद्दिशन्ति, अन्तगतं चैनमभिसमीक्ष्यान्यमाश्रयन्ति देशमपदेशमात्मनः कृत्वा, प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवद्वर्णयन्ति अधीरवच्च धैर्यमपवदन्ति धीराणाम् विद्वज्जनसन्निपातं चाभिसमीक्ष्य प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरात्, यश्चैषांकश्चित् सूत्रावयवो भवत्युपयुक्तः तमप्रकृते प्रकृतान्तरे वा सततमुदाहरन्ति, न चानुयोगमिच्छन्त्यनुयोक्तुं वा, मृत्योरिव चानुयोगादुद्विजन्ते, न चैषामाचार्यः शिष्यो वा सब्रह्मचारी वैवादिको वा कश्चित्प्रज्ञायते इति ॥ ९ ॥

भिषक्छद्म वंचनार्थकृतभिषग्वेशः, प्रतिरूपकः अन्यथारूपकारी द्रोहकारक इत्युच्यते लोके । राज्ञां प्रमादादिति राज्ञा हि ते कुवैद्याः शासनीयाः । विशिखा रथ्या, किंवा, कर्ममात्रम् । संश्रवणे चास्येत्यातुरस्य श्रवणयोग्ये प्रदेशे ।

१ एवं युक्ता इति पाठः । २ संग्रहः सङ्कलय्य कथनम्, व्याकरणं च विवरणमिति शिवदासः ।

१ मैत्रं चेतः मैत्री बुद्धिः अविसंवादोऽविरोधः । २ धैर्यमिति पाण्डित्यमिति शिवदासः । ३ यश्चैषामित्यादि । एषामायुर्वेदसूत्राणां मध्ये, किंवा, एषां भिषक्छद्मचराणामिति शिवदासः । ४ सब्रह्मचारी सहाध्यायीति शिवदासः । ५ प्रतिरूपेण ब्रह्मचर्यादिवेशेन चरन्तीति प्रतिरूपकाधर्मध्वजिन इति शिवदासः ।

अन्तगतमिति मुमूर्षुम् । अपदेशमव्याजम्[1] । अकुशलवदिति यथा अकुशलाः परस्परविरुद्धमात्मकौशलं वर्णयन्ति तथेत्यर्थः । अधीरवदिति उच्चाटरवाः सन्तः । उपयुक्त इति ज्ञातः । अनुयोगं पृच्छाम् ॥ ८ ॥ ९ ॥

तत्र श्लोकाः ।

**भिषक्छद्म प्रविश्यैव व्याधितांस्तर्कयन्ति ये ।**
**वीतंसमिव संश्रित्य वने शाकुन्तिको द्विजान् ॥१०॥**
**श्रुतदृष्टिक्रियाकालमात्राज्ञानबहिष्कृताः ।**
**वर्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि ॥ ११ ॥**
**वृत्तिहेतोर्भिषङ्मानपूर्णान्मूर्खविशारदान् ।**
**वर्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥ १२ ॥**
**ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः ।**
**जितहस्ता जितात्मानः तेभ्यो नित्यं कृतं नमः॥१३॥**
**दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः ।**
**द्विविधा भिषजश्चोक्ताः प्राणस्यायतनानि च इति१४**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने दशप्राणायतनीयोनामोनत्रिंशोऽध्यायः ।**

वीतंसः पक्षिबन्धनम्[2] । श्रुतं शास्त्रे श्रवणम् । दृष्टं कर्मदर्शनम् । क्रिया चिकित्साज्ञानम् । ज्ञानं शास्त्रजन्यम्, श्रुतं तु श्रवणमात्रम् । तेभ्यो नित्यं कृतं नम इत्यनेन प्राणाभिसरं स्तौति ॥ १०—१४ ॥

इति दशप्राणायतनीयः ॥

## त्रिंशोऽध्यायः ।

**अथातोऽर्थे दशमहामूलीयमध्यायं व्याख्यास्यामः १**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पारिशेष्यात्, किंवा, सूत्रस्थानमभिधाय तन्त्रसंग्रहं वक्तुं अर्थे दशमहामूलीय उच्यते[3] । अत्र 'अधिकृत्य कृते ग्रन्थे' इत्यनुवर्त्तमाने "अध्यायानुवाकयोर्लुग्" इति च्छः ॥ १ ॥ २॥

**अर्थे दशमहामूलाः समासक्ता महाफलाः ।**
**महच्चार्थश्च हृदयं पर्यायैरुच्यते बुधैः ॥ ३ ॥**[4]

**षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपंचकम् ।**
**आत्मा च सगुणश्चेतः चिन्त्यं च हृदि संश्रितम् ॥४॥**[1]

अर्थे इति हृदये, महामूला इति महद्धृदयं मूलं यासां धमनीनां तास्तथा, समासक्ता इत्याश्रिताः । अस्य हृदयस्य पर्यायानाह महच्चेत्यादि । महत् संज्ञा, तथाऽर्थसंज्ञा च हृदयस्य । वैद्यव्यवहारविज्ञानसर्वेशास्त्रान्तरेषु हृदयस्य यन्महत्त्वमर्थत्वं च, तद्धृदयस्याभ्यर्हितत्वादित्यभ्यर्हितत्वमाह षडङ्गमित्यादि । षडङ्गानि बाहुद्वयजङ्घाद्वयशिरोऽन्तराधिरूपाणि यस्य तत्षडङ्गमङ्गम् । अङ्गं च षडङ्गादतिरिक्तं समुदायरूपं अवयविरूपं वा । अङ्गमिति वक्तव्ये षडङ्गविशेषणं षण्णामङ्गानामपि हृदयाश्रितत्वप्रतिपादनार्थम् । किंवा, अङ्गशब्दस्यावयववाचिनो निषेधार्थम् । विज्ञानं च यद्यपि "आत्मा च सगुणः" इति वचनादेव आत्मगुणत्वेन लब्धम्, तथाप्यात्मगुणेषु प्राधान्यात्पुनः पृथगुच्यते, वचनं हि "सुखं समग्रं विज्ञानं विसर्गे च प्रतिष्ठितम्" इति । इन्द्रियाणि चक्षुरादीनि । अर्थपंचकं शब्दादि । सगुण इत्यनेन सुखादिग्रहणम् । चेतो मनः । चिन्त्यं मनोविषयः । एते च षडङ्गविज्ञानादयः श्रुतिप्रतिपठिताः प्रत्येकमेवोपादेयत्वेन, तेन, अत्र कस्यचिदर्थलब्धत्वेनानुपादानं कर्तव्यमिति नोद्भावनीयम्, अर्थलब्धो ह्यर्थः साक्षादनभिधीयमानत्वादप्रधानं भवति ॥ ३ ॥ ४ ॥

**प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते ।**
**गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ।**
**तस्योपघातान्मूर्छायं भेदान्मरणमृच्छति[2] ॥ ५ ॥**

अथ कथममी षडङ्गादयो हृदयाश्रयाः, "यावता हृदयं घ्रङ्गुलं च" इति वक्ष्यति, अङ्गं च षडङ्गाश्रयं महत्, इन्द्रियाण्यपि च स्वाश्रयचक्षुरादिस्थितानि, अर्थाश्च बाह्यद्रव्याश्रयिणः आत्मा चानाश्रित एव व्यापकः, तद्गुणश्च विज्ञानंचात्मन्येवाश्रितम्, मनोऽप्यनाश्रितमात्मगतम्, चिन्त्यंच ध्येयादि न हृदीत्याशंक्याह प्रतिष्ठेत्यादि । प्रतिष्ठा कार्यकारणाविरोधेनावस्थानम् । भावानामेषामिति षडङ्गादीनाम्, हृदयमिष्यत इति हृदयमिष्यते कारणमिति शेषः । अत्रैव दृष्टान्तमाह गोपानसीनामित्यादि । गोपानस्यो गृहाच्छादनाधारकाष्ठानि । आगारकर्णिका गृहाच्छादनमध्ये गृहाच्छादनकाष्ठनिबन्धनी । लोके आडकमित्युच्यते । अर्थचिन्तकैरिति हृदयचिन्तकैः । तेन, षडङ्गादीनां हृदयाश्रितत्वं नाधाराधेयभावेन, किंतर्हि, तदन्वयव्यतिरेकानुविधायित्वेवेति द-

---

१ आत्मनोऽपदेशं नामदेशायपह्नवरूपं कपटं कृत्वा । २ वीतसः पक्षिवन्धनजालमिति शिवदासः । ३ पूर्वाध्याये सूत्रस्थानर्थसंग्रहः कृतः, पारिशेष्याच्चार्थेदशमहामूलीयमाह । किंवा, पूर्वाध्याये हृदयं प्राणायतनत्वेनोक्तं,संप्रति तस्यैव हृदयस्य तत्संबद्धानां च धमनीनां विवेचनार्थमर्थे दशमहामूलीयमाह अथेत्यादीति शिवदासः । ४ तत्र हृदयाश्रितव्याधीनां शीघ्रं प्रतिकर्तव्यतां बोधयितुं सर्वावयवापेक्षया हृदयस्य प्राधान्यमाह अर्थे इत्यादि हृदये समासक्ता प्रसङ्गता महामूला धमन्यो दशेत्यन्वयः महद्धृदयं मूलं यासामिति विग्रहः । महदर्थयोरर्थं स्पष्टयति महच्चार्थश्चेत्यादि अर्थ्यते उपादीयतया याच्यत इत्यर्थ इति शिवदासः ।

१ आत्मा च सगुण इत्यत्र गुणशब्देन विज्ञानातिरिक्त आत्मगुणो गोबलीवर्दन्यायेनाभिधीयते । एवमिन्द्रियाणीत्यनेनाऽपि मनोभिन्नमिन्द्रियमुच्यते, एतच्च विज्ञानमनसोः सजातीयेषु प्राधान्यख्यापनार्थं पृथग्बोध्यमिति शिवदासः । २ तस्य हृदयस्योपघातः किंचिदुपहननमिति शि॰ ।

शितं भवति । हृदयाश्रितत्वं हृदये प्रकृतिस्थे षडङ्गादिभावानां प्रकृतिस्थत्वं हृदयोपघाते तदुपघात इत्यर्थः । यद्यपि च, आत्मविज्ञानमनसां हृदयाश्रितत्वमाधाराधेयभावादपि कष्टसृष्ट्या वक्तुं पार्यते, तथापि, सर्वव्यापकत्वान्नोपादेयमाधारधेयत्वम् । नैवम्, आत्मा यश्च संसारी भोगायतनत्वेनाभिप्रेतः, स च हृदयप्रदेश एव सुखदुःखादुपपद्यत इत्यनुभवसिद्धम्, तेन, हृदयाश्रित इवात्मा, तथापि प्रायेण हृद्येव तिष्ठति, यतः, उपरतक्रियं मनो हृद्येव तिष्ठति, तथा, अध्ययने योगे च हृदिस्थमेव मनो भवति । यदप्युक्तम् "आत्मस्थे मनसि स्थिरे" इति, तदप्यात्मस्थमनसो हृदयस्थत्वमेव । एवं ज्ञानसुखदुःखानि च हृदयस्थान्येव लक्ष्यन्ते, तथा चितिचिन्तनात्तथा दुःखावेशत्वाद्धृदयमेव पीड्यते, नान्यदङ्गम् । अलमात्मना व्यापकेनाश्रयाश्रयिभावेन व्युत्पादितेन, यश्चात्मा संसारी हृदयाश्रितो भवति तस्यैव हृदयनाशान्नाश इतिभावः ॥ ५ ॥

**यद्धि तत्स्पर्शविज्ञानं धारि तत्तत्र संश्रितम् ।**
**तत्परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः ।**
**हृदयं महदर्थश्च तस्मादुक्तं चिकित्सकैः ॥ ६ ॥**

कथमेतद्भवतीत्याह यद्धीत्यादि । स्पर्शो विज्ञायतेऽनेनेति स्पर्शं वा विजानातीति स्पर्शविज्ञानम्, तस्यैव विशेषणं धारीति, धारि तु शरीरेन्द्रियसत्त्वात्मसंयोगः । यदुक्तम् "शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्" इति । एतेन, यः शरीरादिसंयोगः स्पर्शनेन विजानाति सर्वं ज्ञेयम्, यश्चायं शरीरधारणाद्धारीत्युच्यते, स हृदि स्थितः । तेन, तदुपघातान्मूर्च्छा तथा तद्भेदान्मरणं चैतन्याननुवृत्तिलक्षणमुपपन्नम् । स्पर्शो हि द्विविधः ऐन्द्रियको मानसश्च, एतत्स्पर्शद्वयं विना च न किंचिज्ज्ञानं च भवति, यदुक्तम् "यश्चैवेन्द्रियकः स्पर्शः स्पर्शो मानस एव च । द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः" इति । मानसं च स्पर्शनं शारीरे यथास्थानमेव दर्शयिष्यामः । स्पर्शो विज्ञायत इति निरुक्तिपक्षे तु स्पर्शशब्देन लक्षणया स्पृश्यमानोऽर्थोऽभिप्रेतः, तेन, सर्वज्ञेयावरोधः, यं प्राप्यैवार्थमिन्द्रियाण्यसद्दर्शनार्थं प्रकाशयन्ति, यदुक्तम् "स्पृश्यते नानुपादानो नाऽस्पृष्टो वेत्ति वेदनाः" इति । यद्यपि, शरीरेन्द्रियसत्त्वात्मसंयोगः शरीरप्रदेशान्तरेऽप्यस्ति, तथापि नाऽसौ शरीरधारणे तथा ज्ञानोत्पत्तौ वा प्रधानम्, तदुपघातेऽपि शरीरधारणज्ञानयोर्दृष्टत्वात् । हृद्गतस्तु संयोगः प्रधानं तदन्वयव्यतिरेकानुविधायित्वात्सञ्ज्ञानशरीरधारणयोः । तेन, सूक्तम् "तत्तत्र संश्रितम्" इति । हृदयस्याभ्यर्हितत्वे धर्मान्तरमाह तत्परस्येत्यादि । परस्य श्रेष्ठस्य । एतेन द्विविधमोजो दर्शयति परमपरं च, तत्राञ्जलिपरिमाणमपरम्, यदुक्तम् "तावदेव परिमाणं श्लेष्मणश्चौजसः" इति । अल्पप्रमाणं तु परम्, यदभिप्रेत्योक्तम् "हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम्" इति । तन्त्रान्तरेऽप्युक्तम् "प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रिताः" इति । किंच, सति हि परे चापरे चौजसि 'परस्य' इति विशेषणं सार्थकं भवति, नत्वेकरूपे । अर्द्धाञ्जलिपरिमितस्यौजसो धमन्य एव हृदयाश्रिताः स्थानम्, तथा, प्रमेहेऽर्द्धाञ्जलिपरिमितमेवौजः क्षीयते, नाष्टबिन्दुकम्, अस्य हि किंचित्क्षयेऽपि मरणं भवति, प्रमेहे तु ओजःक्षये जीवत्येव तावत् । ओजःक्षयलक्षणमप्यर्द्धाजस्योजःक्षय एव बोद्धव्यम् । ओजःशब्दश्च यद्यपि रसेऽपि वर्तते, यदुक्तम् "रसश्चौजःसंख्यातः" इति, तथा, "मली भवति तत्प्रायः कल्पते किंचिदोजसः" इति । तथापि, इह सर्वधातुसारमोजोऽभिधीयते । एतच्चौज उपधातुरूपं केचिदाहुः । धातुर्हि धारणपोषणयोगाद्भवति, ओजस्तु देहधारकं सदपि न देहपोषकम्, तेन, नाष्टमो धातुरोजः । केचित्तु शुक्रविशेषमोजः प्राहुः, तच्च न मनः प्रीणाति । ये तु ब्रुवते सर्वधातूनां सारसमुदयभूतमोजः, ते, रसादिसाररूपतया रसादिभ्यो भिन्नमोज इति पृथग्धातुत्वेनोपधातुत्वेन वा निर्देश्यमिति पश्यन्ति । वचनं च—"भ्रमरैः फलपुष्पेभ्यो यथा संचीयते मधु । तद्वदोजः शरीरेभ्यो गुणैः संभृयते नृणाम्" अत्र शरीरेभ्य इति धातुभ्यः, गुणैरिति सारभागैः । तत्र चैतन्यसंग्रह इति, तत्र हृदि चैतन्यविषये प्रसृतस्य संग्रहं संवरणं करोति, तेन, प्रसृतं मनो हृदये निगृह्य योगज्ञो भवतीत्यर्थत इत्युक्तं भवति ततश्च योगस्य मोक्षसाधनत्वेनोपादेयस्यापि हृदयमेव स्थानमिति हृदयमभ्यर्हितं भवति । यस्मादेवंगुणं हृदयम्, ततः 'महद्' इति च, तथा, 'अर्थ' इति चोच्यते चिकित्सकैः ॥६॥

**तेन मूलेन महता महामूला मता दश ।**
**ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः ॥ ७ ॥**
**येनौजसा वर्तयन्ति प्रीणिताः सर्वजन्तवः ।**
**यदृते सर्वभूतानां जीवितं नावतिष्ठते ॥ ८ ॥**

---

१ ननु यद्यप्यात्मनो विभुत्वेन नाधेयत्वमुक्तं, तथापि लिङ्गशरीरावच्छिन्नस्य साङ्ख्यस्वीकृतस्य जीवात्मनो हृदयाश्रितत्वमुपचारेण शक्यते वक्तुम् । एवमात्मगुणस्यापि हृदयाश्रितत्वं परंपरयाऽपि शक्यतेऽभिधातुम् । मनसोऽपि प्रायशो हृदय एवावस्थितिरिति तस्यापि हृदयाश्रितत्वमस्तु, एवमतिचिन्तया हृदयमेव पीड्यते, नान्यमङ्गमिति दर्शनात् तस्यापि हृदयाश्रितत्वं यथाकथंचिदुपपद्यतां नाम । षडङ्गादीनां तु हृदयाश्रितत्वं कथमपि नोपपद्यते, "यावता हृदयं षडङ्गुलम्" इति वक्ष्यति, षडङ्गाश्रयमङ्गं च महदिति, इन्द्रियाण्यपि चक्षुरादीनि हृदयाऽपेक्षया नितरां विप्रकृष्टानीति, अर्थाश्च शब्दादयो बाह्यद्रव्याश्रयिण इत्याशङ्कां निराचिकीर्षुराह प्रतिष्ठार्थमित्यादीति शिवदासः ।

१ इदानीं येनौजसेत्यादिना महाफल इत्यन्तेन धमनीनां महाफलत्वमपि प्रतिपादयन्नाह येनौजसेत्यादीति शिवदासः ।

**यत्सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः ।**
**संवर्तमानं हृदयं समाविशति यत्पुरा ॥ ९ ॥**
**यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम् ।**
**यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः ॥ १० ॥**
**तत्फला बहुधा वा ताः फलन्तीव महाफलाः ।**
**ध्मानाद्धमन्यः स्रवणात्स्रोतांसि सरणात्सिराः ११॥**

संप्रति धमनीनां महामूलत्वं प्रतिपादयति तेनेत्यादि । तेनेति महता हृदयेनेति शेषः। विधम्यन्ते विसर्प्यन्ते। संप्रति धमनीनामुक्तं महाफलत्वं व्युत्पादयन्नाह येनौजसेत्यादि । सामान्येन द्विविधमप्योजो ग्राह्यम् । वर्त्तयन्ति जीवन्ति, चौरादिको णिच् । प्रीणिता इति तर्पिताः । यत्सारमादौ गर्भस्येति शुक्रशोणितसंयोगे जीवाधिष्ठितमात्रे यत्सारभूतम्, तत्रापि तिष्ठति । यद्गर्भरसाद्रस इति गर्भरसाच्छुक्रशोणितसंयोगपरिणामेन कललरूपाद्रस इति सारभूतम् । संवर्त्तमानं हृदयं समाविशति यत्पुरेति यदा हृदयं निष्पाद्यमानं, तदैव व्यक्तलक्षणं सत् हृदयमधितिष्ठति यदित्यर्थः । एतेन, गर्भावस्थात्रयेऽपि तदोजस्तिष्ठतीत्युच्यते, परं गर्भादौ शुक्रशोणितसाररूपतया, रसावस्थायां तु रससाररूपतयाऽवयवनिष्पत्तौ स्वलक्षणयुक्तमेव भवत्योज इत्योजसः सर्वावस्थाव्यापकत्वेन महत्त्वमुच्यते । यस्य नाशात्तु नाशोऽस्तीति धात्वन्तराऽक्षयेऽपि सत्योजःक्षये मरणमित्यर्थः । धारीति जीवधारकसंयोगिभ्यः प्रधानत्वात् । शरीररसस्नेह इति शरीररसशब्दः स्नेहशब्दश्च सारवचनः, तेन, शरीररसानां धातूनामपि सार इत्यर्थः । एतच्च प्रकारान्तरेणाभ्यर्हितानेककर्मकथनमोजसोऽभ्यर्हितत्वख्यापनार्थम् । तत्फला ओजःफला ओजोवहा इति यावत् । एतेन, यथोक्तगुणशालित्वेनौजो महत् । एतद्वचने फलन्तीवेति महाफला धमन्य उक्ताः । विपरीतायां निरुक्तिमाह बहुधा वा ताः फलन्तीति, ता हृदयाश्रिता दश धमन्यो बहुधाऽनेकप्रकारं फलंतीति निष्पाद्यन्ते । एतेन, मूले हृदये दशरूपाः सत्यो महासंख्याः शरीरे प्रतानभेदा भवन्तीत्युक्तम्[1] धमनीशब्दादीनिरुक्तिं करोति ध्मानादित्यादि । ध्मानात्पूरणात्, वाह्येन रसादिनेत्यर्थः । स्रवणादिति रसादेरेव पोष्यस्य स्रवणात् । सरणाद्देशान्तरगमनात् ॥ ७—११ ॥

१ धारीति जीवाधिष्ठितं लिंगशरीरम्, तदेव शरीरधारकत्वाद्धारिशब्देनोच्यते । किंवा, जीवितधारकत्वादोज एव धारिशब्दार्थ उच्यते, "यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्" । एतेन, यस्मान्निखिलपदार्थज्ञानहेतुभूतं मनो हृदि संश्रितं तिष्ठति, तस्मात्तदुपघातभेदाभ्यां मनोजीवितयोरप्युपघातभेदाविति मूर्छामरणं चोपपन्नमित्यर्थः । यद्यपि मनोजीविताश्रयत्वेन हृदयमुक्तमेव, तथापि तदुपघातस्य मूर्च्छामरणहेतुत्वप्रदर्शनार्थं पुनरुक्तमिति मन्तव्यमिति शिवदासः । २ विविधा इति पाठः । ३ विधम्यन्ते विसर्प्यन्ते किंवा विधम्यन्ते पूर्यन्ते वाह्येन धातुनेति शेषः इति ।

**तन्महत्ता महामूलास्तच्चौजः परिरक्षता ।**
**परिहार्या विशेषेण मनसो दुःखहेतवः ॥ १२ ॥**
**हृद्यं यत्स्याद्यदौजस्यं स्रोतसां यत्प्रसादनम् ।**
**तत्तत्सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव चेति ॥ १३ ॥**

संप्रति हृदिस्थस्य मनसः परिपालनहेतुमाह तन्महदित्यादि । तन्महदिति षडङ्गादिस्थानं हृदयम् । ता महामूला इत्योजोवहा धमन्यः । तच्चौजइति "येनौजसा" इत्यादिनोक्तगुणमोजः । प्रशमः शान्तिः । ज्ञानं तत्त्वज्ञानम्॥१२॥१३॥

**अथ खल्वेकं प्राणवर्द्धनानामुत्कृष्टतममेकं बलवर्द्धनानामेकं बृंहणानामेकं नन्दनानामेकं हर्षणानामेकमयनानामिति । तत्राहिंसा प्राणिनां प्राणवर्द्धनानामुत्कृष्टतमम्, वीर्यं बलवर्द्धनानाम्, विद्या बृंहणानाम्, इन्द्रियजयो नन्दनानाम्, तत्त्वावबोधो हर्षणानाम्, ब्रह्मचर्यमयनानामित्यायुर्वेदविदो मन्यन्ते ॥ १४ ॥**

सेव्यप्रस्तावेन प्राणवर्द्धनोत्कृष्टान्यहिंसादीन्यप्याह अथ खल्वित्यादि । एकमित्येकमेव, न द्वितीयमुत्कृष्टतममस्तीत्यर्थः । अयनानामिति मार्गाणाम् । यद्यप्यन्नं प्राणवर्द्धनं तथाप्यहिंसैवोत्कृष्टा, अहिंसया हि धर्मजननात्तयाऽऽयुर्वर्द्धनं भवति । यद्यपि मांसं बृंहणप्रधानं, तथापि तच्छरीरमात्रबृंहणं, विद्या तु शरीरमनोबृंहणीयाऽतिरिच्यते ॥ १४ ॥

**तत्रायुर्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशोवाक्यार्थशोऽर्थावयवशश्च प्रवक्तारो मन्तव्याः । अत्राह—कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति उक्तानि भवन्तीति ॥१५**

**अत्रोच्यते—तन्त्रमार्षं कार्त्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तम् ॥ १६ ॥**

**बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्याससमासप्रतिज्ञाहेतूदाहरणोपनयनिगमनयुक्ताभिस्त्रिविधशिष्यबुद्धिगम्याभिरुच्यमानं वाक्यार्थशो भवत्युक्तम् ॥ १७ ॥**

१ नियमानामिति पाठः । २ वीर्यमुत्साहः । विद्या योगविद्या नन्दनानामिति श्रेयःसमृद्धिजनन‌ानाम् । अयनानामिति मोक्षसाधनमार्गाणामिति शिवदासः । ३ साध्यधर्मवत्त्वेन पक्षकथनं प्रतिज्ञा, यथा आयुर्वेदो नित्य इति । हेतुस्तत्साधकवचनम्, यथा— अनादित्वादिति । उदाहरणं दृष्टान्तः, यथा आत्मवदिति । उपनयो नाम साधनधर्मवत्त्वेन पुनः पक्षकथनम्, यथा अनादिस्तथाचायमिति । निगमनंतु पुनः हेतुसाधितस्य साध्यस्य पक्षनिष्ठतया कथनम्, यथा तस्मान्नित्य इति शिवदासः । ४ त्रिविधशिष्यबुद्धिगम्याभिरिति उत्तममध्यमाधमशिष्यबुद्धिगम्याभिरिति शिवदासः ॥

**तन्त्रनियतानामर्थदुर्गाणां पुनर्विभावनैरुक्तमर्थावयवशो भवत्युक्तम् ॥ १८ ॥**

आयुर्वेदश्रवणप्रसङ्गेनायुर्वेदनिरुक्त्याऽऽयुपस्तथाऽऽयुर्वेदस्य च निरूपकं प्रकरणं ब्रूते तत्रेत्यादि । वाक्यश इत्यादि स्वयमेव व्याकरिष्यति, आर्षमृषिकृतम्, तन्त्रं शास्त्रम्, यथाऽऽम्नायमुच्यमानमिति यथापाठक्रमेणोच्यमानम् । उदाहरणं दृष्टान्तः । उपनयः सिद्धान्तोपपादितस्य साधनधर्मस्य साध्ये पुनः कथनम्, यथा तथा चायं धूमवानिति । निगमनं हेतुसाधितसाध्यधर्मकथनम्, यथा तस्मादग्निमानिति । तन्त्रनियतानामिति तन्त्रगतानाम् । विभावनैरुक्तमिति व्याख्यानैः कथनम्, उक्तमिति भावे 'क्तः' । अस्योदाहरणम्, यथा "शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्द्धिनी" इत्यत्र 'इष्टा या चेष्टा' इत्येतावन्मात्रमुच्यते, तेन द्वितीयचेष्टापदस्य दुर्गस्य व्याकरणपरं भवति[1] ॥ १५—१८ ॥

**तत्र चेत्प्रष्टारः स्युः,—चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः किमायुः कस्मादायुर्वेदः किंचायमायुर्वेदः शाश्वतोऽशाश्वतश्च कति कानि चास्याङ्गानि कैश्चायमध्येतव्यः किमर्थं चेति ॥ १९ ॥**

इदानीमायुर्वेदविदः प्रश्नेनैव निर्णेतव्या इत्यतः प्रश्नानाह तत्र चेदित्यादि । कं वेदमुपदिशन्त्यायुर्वेदमिति शेषः ॥ १९ ॥

**तत्र भिषजा पृष्टेनैवंचतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या, वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह । चिकित्सा चायुषो हितायोपदिश्यते । वेदं चोपदिश्यायुर्वाच्यं, तत्रायुश्चेतनानुवृत्तिर्जीवितमनुबन्धोधारि चेत्येकोऽर्थः । तत्राऽऽयुर्वेदयतीत्यायुर्वेदः, कथमिति चेदुच्यते, स्वलक्षणतः सुखासुखतो हिताहिततः प्रमाणाप्रमाणतश्च, यतश्चायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि वेदयत्यतोऽप्यायुर्वेदः ॥ २० ॥**

**तत्रायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि केवलेनोपदेक्ष्यन्ते तन्त्रेण ॥ २१ ॥**

अथर्ववेदे भक्तिः सेवेत्यर्थः, एतेन भिषक्सेव्यत्वेनाऽथर्ववेदस्यायुर्वेदत्वमुक्तं भवति । आयुर्वेदस्याथर्ववेदाभेदहेतुमाह—वेदोहीत्यादि । एतेनैकप्रयोजनत्वादथर्ववेदैकदेशएवायुर्वेद इत्युक्तं भवति । प्रश्नक्रमेण वेदं प्रतिपाद्यायुरेव प्रतिपादनीयं भवतीत्याह— वेदंचोपदिश्येत्यादि । चेतनानुवृत्तिरिति चैतन्यसन्तानः, एतच्च गर्भाद्यवधिमरणपर्यन्तं बोद्धव्यम्, तदूर्द्धं चेतनाननुवृत्तेः, साक्षादनुपलब्धत्वेनैवाननुवृत्तिरिति भावः । नच वाच्यम् प्रसुप्तस्य चैतन्यविच्छेदो भवति । यतस्तत्रापि 'सुखमहमस्वाप्सम्' इत्युत्तरकालीनप्रतिसन्धानदर्शनात्सूक्ष्मज्ञानमस्त्येव । यद्यपि दीर्घञ्जीवितीये 'शरीरादिसंयोग आयुः' इत्युक्तम्, तथापि तत्कार्यत्वादिह चैतन्यानुवृत्तिः कार्यकारणयोरभेदविवक्षयाऽऽयुरुच्यते । अनुबन्धधारिशब्दौ प्रथमाध्याये व्याकृतौ । 'कस्मादायुर्वेदः' इत्यस्योत्तरम् तत्रायुरित्यादि । वेदयति बोधयति । ये त्वत्र तन्त्रान्तरे विदेर्लाभादयोऽर्था व्याख्याताः, ते साक्षात्तु तदर्थजन्या इतीह नोक्ताः । स्वलक्षणत इत्यादि स्वयमेवोदाहरिष्यति । आयुष्यानायुष्ये 'आयुः'शब्देन वक्तव्ये, तेन आयुष्यानायुष्यवेदपक्षे गौणी निरुक्तिः 'आयुर्वेदः' इति । अतएवात्र 'अपि' शब्दः 'अतोऽप्यायुर्वेदः' इति । अनायुष्यमपि च ज्ञातमसेव्यत्वेनाव्यवह्रियमाणमायुःकारणं भवत्येव, तेनानायुष्यमप्यायुःकारणतयाऽऽयुःशब्दवाच्यं, नात्रापराधः ॥ २० ॥ २१ ॥

**तत्रायुरुक्तं स्वलक्षणतो यथावदिहैव । तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशेषेण यौवनवतः समर्थानुगतबलवीर्यपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदाये वर्तमानस्य परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्वारंभस्य यथेष्टविचारिणः सुखमायुरुच्यते । असुखमतो विपर्ययेण । हितैषिणः पुनर्भूतानां परस्वादुपरतस्य सत्यवादिनः शमपरस्य परीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुपसेवमानस्य पूजार्हसंपूजकस्य ज्ञानविज्ञानोपशमशीलस्य वृद्धोपसेविनः सुनियतरागरोषेर्ष्यामदमानवेगस्य सततं विविधप्रदानपरस्य तपोज्ञानप्रशमनित्यस्याऽध्यात्मविदस्तत्परस्य लोकमिमं चामुं चापेक्षमाणस्य स्मृतिमतो हितमायुरुच्यते । अहितमतो विपर्ययेण ॥ २२ ॥**

इहैवेति तत्रायुः 'चेतनानुवृत्तिः' इत्यादिना । तत्र 'शारीर' इत्यादिना सुखमायुरभिधत्ते । पौरुषमुत्कृष्टं कर्म । ज्ञानविज्ञानेन्द्रियैर्बलशब्दः । इन्द्रियार्थेन च समुदायशब्दः संबध्यते । किंवा, ज्ञानादिभिः सर्वैरेव समुदायशब्दः संबध्यते । किंवा, ज्ञानादिभिः सर्वैरेव 'बलसमुदाये' इति योज्यम्

---

१ अवयवश इत्यस्यार्थमाह तन्त्रनियतानामित्यादि । अत्रापि तन्त्रमार्षमिति संबध्यते, तन्त्रनियतानां तन्त्रगतानाम् । दुःखेन गम्यन्ते बुध्यन्ते इति दुर्गः, दुर्गार्थानामिति. दुर्गाश्च ते अर्थाश्चेति तेषाम्, विभावनैः प्रकाशनैः, तन्त्रस्थितानां दुर्बोधार्थानां यत्पुनःप्रकाशनानि तैरुक्तं व्याख्यातं तन्त्रमवयवश उक्तं भवतीत्यर्थः । अस्योदाहरणम्, यथा 'शरीरचेष्टा या चेष्टा' इत्यत्र 'इष्टा या चेष्टा' इति विभज्योक्ते सति द्वितीयचेष्टापदस्यार्थः प्रकाशितो भवतीति, एवमन्यदप्युन्नेयमिति शिवदासः । २ वेदानामिति निर्द्धारणे षष्ठीति शिवदासः ।

बलस्य समुदायो बलसमुदायः । परमाऽत्यर्थेर्द्धिर्यस्य स परमार्द्धिः । समृद्धा निष्पादितसाध्याः सर्वारंभा यस्य स तथा । हितैषिणो भूतानामिति शेषः । तत्परस्येत्यध्यात्मपरस्य, अध्यात्ममात्मादिस्वरूपम्, अमुंचेति परलोकम् ॥ २२ ॥

**प्रमाणमायुपस्त्वर्थेन्द्रियमनोबुद्धिचेष्टादीनां विकृतिलक्षणैरुपलभ्यतेऽनिमित्तैः, इदमस्मात्क्षणान्मुहूर्ताद्दिवसात्त्रिपंचसप्तदशद्वादशाहात्पक्षान्मासात्पण्मासात्संवत्सराद्वा स्वभावमापत्स्यते इति । तत्र स्वभावः प्रवृत्तेरुपरमो मरणमनित्यता निरोध इत्येकोऽर्थ इत्यायुषः प्रमाणमतो विपरीतमप्रमाणम् । अरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्य चोपदिष्टमायुषः प्रमाणमायुर्वेदे ॥ २३ ॥**

विकृतिरूपैर्लक्षणैः, तेपामेव विशेषणम् अनिमित्तैराकस्मिकैररिष्टैरित्यर्थः । अनिमित्ता हि विकृतिरर्थेन्द्रियानामरिष्टम्, तत्रार्थविकृतिर्यथा "नानापुष्पोपमगन्धो यस्य वाति दिवानिशम्" इत्यादि । इन्द्रियविकृतिर्यथा "यश्च पश्यत्यदृश्यान्" इत्यादि । मनोविकृतिर्यथा "यैः पुरा विन्दते भावैः समेतैः परमां रतिम् । तैरेवारममाणस्य ग्लान्नोर्मरणमादिशेत्" इति । बुद्धिविकृतिर्यथा "बुद्धिर्बलस्यहेतुकम्" इत्यादि । चेष्टाविकृतिर्यथा "विकर्षन्निव यः पादौ मृत्युं स परिधावति" इत्यादि । आदिग्रहणात्परिजनविकृत्यादयो ज्ञेयाः । अत्र रिष्टप्रस्तावे क्षणादिवर्षान्तकालकथनं वर्षादूर्द्ध्वं रिष्टजन्यमरणाभावात् । अतोविपरीतमप्रमाणम्, रिष्टहीनं न निश्चितप्रमाणमायुररिष्टाधिकार इत्यर्थः । अन्यदपि चायुःप्रमाणज्ञानमाह—देहप्रकृतीत्यादि[1] । देहश्च प्रकृतिश्च लक्षणं च देहप्रकृतिलक्षणम् । तत्र देहमधिकृत्यायुःप्रमाणं यथा "सर्वैः सारैरुपेताः" इत्यारभ्य "यावच्चिरं जीविनो भवन्ति" इति । प्रकृतितो यथा "श्लैष्मिका बलवन्तो वसुमन्तश्च भवन्ति" इति । लक्षणतो तथा "आयुष्मतां कुमाराणां लक्षणान्युपदेक्ष्यामः" इत्यादि । किंवा, देहस्य सहजलक्षणं देहप्रकृतिलक्षणम्, तच्च सर्व सारप्रकृत्यादिलक्षणं बोध्यम् ॥ २३ ॥

**सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते अनादित्वात्स्वभावसंसिद्धलक्षणत्वाद्भावस्वभावनित्यत्वाच्च[2] । न हि नाभूत्कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा, शाश्वतश्चायुषो वेदिता अनादि च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात् । एष चार्थसंग्रहो विभाव्यते आयुर्वेदलक्षणमिति । गुरुलघुशीतोष्णस्निग्धरूक्षादीनां च द्वन्द्वानां सामान्यविशेषाभ्यां वृद्धिह्रासौ यथोक्तम् । गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनाम् । एवमेवेतरेपामित्येष भावस्वभावो नित्यः, स्वलक्षणंच द्रव्याणां पृथिव्यादीनाम्; सन्ति तु सर्वदा गुणाश्च नित्यानित्याः । न ह्यायुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यतेऽन्यत्रावबोधोपदेशाभ्याम् । एतद्वै द्वयमधिकृत्योत्पत्तिमुपदिशन्त्येके । स्वाभाविकं चास्य लक्षणमकृतकम्, यदुक्तमिह चाद्येऽध्याये, यथाग्नेरौष्ण्यं, अपां द्रवत्वम् । भावस्वभावनित्यत्वमपि चास्य यथोक्तं गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनामित्येवमादि ॥ २४ ॥**

अनादित्वादिति हेतुत्रयमात्रात् । प्रथमस्य विवरणम् 'न हि' इत्यादि । इह व्यवहारनित्यत्वमायुर्वेदे साध्यम्, तच्चार्थरूपस्यायुर्वेदस्य, न शब्दरूपस्य । किंवा, व्यवहारनित्यायुर्वेदार्थाभिधायकस्यायुर्वेदस्य पारंपर्ययोगान्नित्यत्वं साध्यते । तत्रायुषस्तावदायुर्वेदप्रतिपाद्यस्य नित्यत्वम्, न हि नाभूत्कदाचिदायुःसन्तानः' सर्वदैवायुरपरापरसन्तानन्यायेन विद्यते, आयुर्युक्तानां प्राणिनामनुच्छेदादित्यर्थः । एवं बुद्धिसन्तानानामपि 'न हि नाभूत्कदाचिदिति योजना । एतेन, तस्यापि सन्तानेन नित्यस्यायुषो वेदनमपि नित्यम् । 'शाश्वतश्चायुषो वेदिता' इत्यनेनायुर्वेदवेदितृनित्यत्वमुक्तम् । एतेन, वेद्यवेदनवेदितृणामनादित्वादायुर्वेदस्य नित्यत्वम् ।

---

१ न केवलमरिष्टाधिकारेऽरिष्टमात्रमधिकृत्यायुषः प्रमाणमुपदिष्टम्, देहादिकमधिकृत्यापि विमाने उपदिष्टमित्याह देहप्रकृतिलक्षणमित्यादीति शिवदासः । २ इदानीं किमायुर्वेदः शाश्वतोऽशाश्वतो वेति प्रश्नस्योत्तरमाह सोऽयमित्यादि । शाश्वत इत्यपौरुपेयः अनादित्वादिति संप्रदायाऽविच्छेदे सत्यस्मर्यमाणकर्तृत्वादात्मवदित्यर्थः । न च कल्पादौ हिरण्यगर्भ एवेमं प्रणीतवानित्यसिद्धो हेतुरिति वाच्यम्, यतः, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेर्न हिरण्यगर्भकृतत्वं वेदस्येति । न च शब्दत्वेन वेदस्यापि पौरुपेयत्वं साध्यम्, शब्दस्याऽनित्यत्वात्, किमत्र प्रमाणमिति चेत्, मीमांसका एव पर्यनुयोज्याः, अस्माकं पुनरार्द्रकवणिजां वहित्रचिन्तया प्रयोजनं नास्तीति । ये तु द्विविधो ह्यायुर्वेदः शब्दरूपोऽर्थरूपश्च, तत्राद्यः कृतकत्वादनित्य एव, अर्थरूपस्तु नित्य एवेत्याहुः, तेपामायुर्वेदस्य नित्यत्वमर्द्धशौचन्यायमवगाहत इतीति शिवदासः ।

१ इदानीं संप्रदायाविच्छेदं दर्शयितुमायुर्वेदस्य सन्ताननित्यतामाह नहीत्यादि । अयं भावः अनादौ संसारे आयुर्युक्तानां प्राणिनामनुच्छेदात्सर्वदैवायुरपरापरसन्तानन्यायेन विद्यते, ततश्चायुर्वेदोपकार्यस्यायुःसन्तानस्यानादित्वात्तदुपकरणायुर्वेदेनापि तथा भवितव्यम्, नह्युपकरणाभावे उपकार्यत्वं सम्भवतीति "न हि नाभूत्कदाचिदायुःसन्तानः" इतिन्यायेनायुर्वेदाभिधेयस्यायुःसन्तानस्य नित्यत्वेन तदभिधायकस्यापि नित्यत्वमिति वर्णयन्तीति शिवदासः । २ भावस्वभावनित्यत्वादिति तृतीयं हेतुं व्याचष्टे—गुर्वित्यादि । गुर्वादिद्रव्याणां सामान्याद्वृद्धिः, विशेषाद्ध्रास इति योज्यम् । अमुमेवार्थं द्रढयितुं पूर्वोक्तं सारयति 'यथोक्तम्' इतीति शिवदासः ।

न चायुःस्वरूपेणैवायुर्वेदविषय उक्तः, किंतर्हि, रोगादिगृहीतेनेत्याह—अनादि चेत्यादि । सुखदुःखमिति, आरोग्यं सुखं व्याधिर्दुःखम् । सद्रव्यहेतुलक्षणमिति सद्रव्यचिकित्सितलिङ्गम् । हेतुशब्दस्य हि द्रव्यशब्देनैव व्याधिकारणत्वेनोक्तत्वात्प्रशमहेतुत्वमाह । केचित्तु सहेतुलक्षणमिति पठन्ति, तत्रापि हेतुशब्देन जनकः शमकश्च रोगहेतुर्व्याख्यातः । यदि वा, सुखहेतुर्भेषजं दुःखहेतुश्च निदानमिति ज्ञेयम् । लक्षणं च व्याध्यारोग्ययोरुभयोरपि, एतेन दुःखं तावत्कदाचिदप्यजिहासितं न भवति, जिहासितस्यानुपायो न भवति, उपायश्चायुर्वेदो दुःखपरिहारार्थमुपादेयः । तस्माद्दुःखप्रशमनोपायोपदेशरूपायुर्वेदस्यानादितेति भावः । एवं सुखस्य नित्योपादेयत्वं सिद्धम्, तदुपायस्यायुर्वेदस्य च । कथमनादि सुखदुःखमित्याह—अपरापरयोगादिति । सन्तानादित्यर्थः ।

स्वभावसंसिद्धलक्षणत्वं द्वितीयं हेतुमाह—एष चेत्यादि । एष इति सुखदुःखाद्यर्थसंग्रहोऽभिधेयसंग्रहः, एतेन आयुरादिरायुर्वेदप्रतिपाद्य इति दर्शयति । अयंचायुरादिरत्रायुर्वेदलक्षणमिति विभाव्यते ज्ञायत इत्यर्थः, आयुरादिनाऽभिधेयेनायुर्वेदो लक्ष्यते, वचनं हि,—"हिताहितं सुखं दुःखम्" इत्याद्यायुर्वेदलक्षणम् । एतेन, आयुरादेस्तस्यायुर्वेदलक्षणस्यानादितया यथोक्तया स्वभावसंसिद्धलक्षणत्वं व्याकृतं भवति । स्वभावसंसिद्धमिति सर्वदा सन्तानन्यायेन सिद्धत्वमभिप्रेतम् ।

भावस्वभावनित्यत्वादिति तृतीयं हेतुं व्याकरोति—गुर्वित्यादि । गुरुलघुस्निग्धरूक्षशीतोष्णानां द्रव्याणां सामान्यविशेषाभ्यां यथाक्रमं वृद्धिह्रासौ भवतः । तदेव पूर्वोक्तं घटयति गुरुभिरित्यादिना एवमेवेतरेषामित्यन्तेन । एवमेवेतरेषामिति, लघुभिरभ्यस्यमानैर्लघूनामुपचयो भवति, अपचयो गुरूणामित्यादि द्रष्टव्यम् । एष इत्येवंप्रकारभावस्वभावो नित्य इति नैव सामान्यविशेषाभ्यां वृद्धिह्रासरूपो भावस्वभावः कदाचिदन्यथा भवतीत्यर्थः । न केवलमयं भावस्वभावो नित्यः, किन्तर्हि, अन्योऽपीत्याह-स्वलक्षणंचेत्यादि । स्वलक्षणं पृथिव्यादीनां खरद्रवत्वादि । कथं पृथिव्यादिस्वलक्षणं नित्यमित्याह—सन्ति त्वित्यादि । द्रव्याणि यस्मात्सर्वदा सन्ति, गुणाश्च नित्याः सर्वदा, चकाराद्द्रव्याणि चानित्यानि सन्ति । तत्राकाशादि द्रव्यं नित्यं, पृथिव्यादिकं चाऽनित्यम् । एवंगुणा आकाशपरिमाणादयो नित्याः, अनित्याश्च कार्यगुणा रसादयः, अनित्या अपि च स्वजातीयापरापरसन्तानन्यायेन सर्वदा तिष्ठन्तीतियुक्तम् । अनित्यानामपि सन्ताननित्यत्वमिति भावः । अत्र भावस्वभावनित्यत्वेन हेतुना भावस्वभावस्य व्याधिजनकस्य तथा व्याधिशमकस्य नित्यत्वेन तत्प्रतिपादकस्यायुर्वेदस्य नित्यत्वमुक्तं भवतीति मन्तव्यम् ।

अथायुर्वेदस्य यत्र तत्रोत्पत्तिश्रवणेन कथं नित्यत्वमित्याह—न ह्यायुर्वेदस्येत्यादि । अभूत्वोत्पत्तिः पूर्वमसत्त्वेवदुत्पत्तिः । अन्यत्रावबोधोपदेशाभ्यामिति यत्र यत्रायुर्वेदस्योत्पत्तिरुक्ता, तत्र तत्रावबोधादुपदेशाद्वा, अवबोधादुत्पत्तिर्यथा, ब्रह्मण आयुर्वेदोत्पत्तिः, उपदेशाच्चोत्पत्तिर्यथा—इन्द्रोपदेशाद्भरद्वाजेन मर्त्यलोके आयुर्वेद उत्पादित इत्यादि । एतद्वयमित्यवबोधोपदेशौ । ननु स्वभावसंसिद्धलक्षणत्वादिति यो हेतुरुक्तः, तत्र स्वाभाविकं च लक्षणं भविष्यति अनित्यं च, यथा घटे कम्बुग्रीवाकारतादि, न हि तत्स्वाभाविकमपि घटस्य नित्यतां साधयतीत्याह—स्वाभाविकं चेत्यादि । अकृतकमिति नासदादिना कृतम् । यदुक्तमिह "स्वलक्षणतः सुखदुःखतः" इत्यादिना, आद्ये चाध्याये दीर्घञ्जीवितीये "हिताऽहितं सुखं दुःखम्" इत्यादिना । अत्रैवाकृतकत्वे दृष्टान्तमाह—यथाग्नेरौष्ण्यमित्यादि । एतेनास्य लक्षणस्याकृतकत्वे व्यवहारनित्यत्वात्तत्प्रतिपादकस्यायुर्वेदस्यापि व्यवहारनित्यत्वमिति भावः । न केवलं स्वाभाविकं लक्षणमकृतकम्, किं तर्हि, भावस्वभावनित्यत्वमपि । यदि केनचिदीश्वरादिना कृतमित्याह–भावस्वभावनित्यत्वमपि चेति, अकृतकमपि चकारेणानुकर्षति । तदेव भावस्वभावनित्यत्वं दर्शयति—यथोक्तमित्यादि । सामान्यविशेषकृतवृद्धिह्रासकारकोऽपि भावस्वभावो न केनचित्कृत इत्यर्थः, ततश्चायुर्वेदोऽपि नित्यः ॥ २४ ॥

**तस्यायुर्वेदस्याङ्गान्यष्टौ, तद्यथा कायचिकित्सा शालाक्यम् शल्यापहर्तृकम् विषगरवैरोधिकप्रशमनम् भूतविद्या कौमारभृत्यकम् रसायनानि वाजीकरणमिति ॥ २५ ॥**

**स चाध्येतव्यो ब्राह्मणराजन्यवैश्यैः, तत्रानुग्रहार्थं प्राणिनां ब्राह्मणैरात्मरक्षार्थं राजन्यैः वृत्त्यर्थं वैश्यैः सामान्यतो वा धर्मार्थकामपरिग्रहार्थं सर्वैः, तत्र च यदध्यात्मविदां धर्मपथस्थापकानां धर्मप्रकाशानां वा मातृपितृभ्रातृबन्धुगुरुजनस्य वा विकारप्रशमने प्रयत्नवान्भवति, यच्चायुर्वेदोक्तमध्यात्ममनुध्यायति वेदयत्यनुविधीयते वा, सोऽस्यस्य परो धर्मः । या पुनरीश्वराणां वसुमतां वा सकाशात्सुखोपहारनिमित्ता भवत्यर्थावाप्तिरारक्षणं च, या च स्वपरिगृहीतानां प्राणिनामातुर्यादारक्षा, सोऽस्यार्थः । यत्पुनरस्य विद्वद्ग्रहणयशः शरण्यत्वं च, या च संमानशुश्रूषा यच्चेष्टानां विषयाणामारोग्यमाधत्ते सोऽस्य काम इति यथाप्रश्नमुक्तमशेषेण ॥ २६ ॥**

संप्रति कानि चेत्यादिप्रश्नोत्तरं तस्येत्यादि । कायस्यान्तरा-

मेश्चिकित्सा, पटलवेधशलाकाप्रधानमङ्गं शालाक्यम्, गरः कालान्तरप्रकोपि विषम्, वैरोधिकं संयोगविरुद्धम्, भूतानां राक्षसादीनां ज्ञानार्था प्रशमार्था च विद्या भूतविद्या, कुमारभरणमधिकृत्य कौमारभृत्यम् । आरक्षार्थं राजन्यैरिति क्षत्रियस्य परिपालनधर्मकत्वात् । अनुध्यायति मनसा चिन्तयति, वेदयतीत्यन्यस्य प्रतिपादयति, अनुविधीयत इति तदनुगुणान्देहेनानुतिष्ठति । आरक्षणमात्मादिरक्षणम्, स्वपरिगृहीतानामिति भृत्यादीनाम्, विद्वद्ग्रहणमेव यशः विद्वदुपादेयताजन्यं यश इत्यर्थः । इष्टानामिति वनितादीनाम् ॥ २५ ॥ २६ ॥

**अथ भिषगादित एव भिषजा प्रष्टव्योऽष्टविधं भवति तद्यथा तन्त्रं तन्त्रार्थं स्थानानि स्थानार्थानध्यायानध्यायार्थान् प्रश्नान् प्रश्नार्थांश्चेति पृष्टेन चैतद्वक्तव्यमशेषेण वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति २७**

---

१ कायचिकित्सेति, यद्यपि सुश्रुते शल्यमेव प्रथमतो निर्दिष्टं तथाप्यस्य तन्त्रस्य कायचिकित्साप्रधानत्वादग्रे तन्निर्देश इति ध्येयम्, कायः सकलं शरीरं तस्य चिकित्सा, प्रायेण रसादेः सर्वाङ्गव्यापकस्य दोषादेव ज्वरातीसाररक्तपित्तादयः संभवन्ति । किंवा, कायति शब्दं करोतीति कायो जाठराग्निः, अङ्गुलीपिहिते कर्णयुगले 'धूक्' इति शब्दश्रवणात्तात्स्थ्याद्वा कायशब्देनाग्निरुच्यते, उक्तं च भोजे "जाठरः प्राणिनामग्निः काय इत्यभिधीयते । यस्तु चिकित्सेत्सीदन्तं सवै कायचिकित्सकः" इति । युक्तं चैतत्, यतो ज्वरातीसारादयः कायचिकित्साविषया रोगा अग्निदोषादेव भवन्तीति शिवदासः ।

२ शलाका पटलवेधनी, तस्याः कर्म शालाक्यं ब्राह्मणादित्वात् ष्यञ्, शालाक्यप्रधानमङ्गं शालाक्यम् । एतेन, शिरोरोगप्रतीकारस्यापि ग्रहणम्, प्राधान्यं च शालाक्यस्य प्रधानचक्षुर्विषयतया । एवमन्यत्रापि प्राधान्येन व्यपदेशः ।

शल्यमिति शल हिंसायामिति धातुः, तस्माच्चौरादिण्यन्तादच्', शलः शलनं हिंसेत्यर्थः, शलस्य निमित्तं संयोग इति विवक्षायां "तस्य निमित्तं संयोगोत्पातौ" इत्यनुवर्त्तमानात् "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्" इति लब्धवाद्यत्, तेन शल्यं हिंसोचितसंबन्धः, तदाहरणार्थं तन्त्रमपि शल्यम् ।

कौमारभृत्यमिति कुमाराणां भृतिर्धारणं पोषणं च, तस्येदमिति कौमारभृत्यम्, "तस्येदम्" इति यत् । इति शिवदासः । इत्थमेव भानुमत्यां चक्रेणापि व्याख्यातम् ।

रसायनानीति अत्र रसशब्देन रसकार्यत्वात्सर्वेषामेव धातूनां ग्रहणम्, तेन, रसादीनां शुक्रान्तानाम्, किंवा रसवीर्यविपाकानामयनं, लाभोपायो रसायनम्, वक्ष्यति च "लाभोपायो हि शस्तानां रसादीनां रसायनम्" इति ।

वाजीकरणमिति अवाजिनं वाजिनं कुर्वन्त्यनेनेति वाजीकरणम्, येन वात्यत्यर्थं व्यज्यते स्त्रीषु शुक्रं तद्वाजीकरणम्, वक्ष्यति च "येन नारीषु सामर्थ्यं वाजिवल्लभते नरः । व्रजते चाधिकं येन वाजीकरणमेव तत्" इति । व्रजेच्चाप्यधिकमिति पाठे पुनः पुनर्गच्छेदित्यर्थः । शब्दसिद्धिस्तु पृषोदरादित्वादिति । अन्ये तु, वाजी वेगः प्रस्तावाच्छुक्रस्य, स विद्यते येषां ते वाजिनः ते क्रियन्तेऽनेनेति वाजीकरणमित्याहुः । किंवा, वाजी शुक्रम्, सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तद्वाजीकरणम् । किंवा, वाजी मैथुनम्, उक्तं हि हारीते, "वाजो नाम प्रकाशत्वात्तच्च मैथुनसंज्ञितम् । वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रचक्षते" इति शिवदासः ।

१ 'वैद्यायमध्येतव्यम्' इत्यस्योत्तरमाह 'स चाध्येतव्यः' इत्यादि । अत्र केचित्—सच्छूद्रस्य वैश्यवदतिदेशेन सच्छूद्रेणापि पठितव्योऽयमायुर्वेदः, अतएव सुश्रुतेऽप्युक्तम् "शूद्रमपि कुलगुणसम्पन्नमुपनीतमध्यापये"दिति । अन्ये तु 'शूद्रमपि' इत्यादि सौश्रुतवचनमनार्षं मन्यन्ते, तन्त्रान्तरे साक्षाच्छूद्रनिषेधात्, तदुक्तम् भालुकितन्त्रे "वेदोपवेदत्वान्न कथंचन शूद्रैरध्येतव्यः" इति । अन्ये तु "नमस्कारेण मन्त्रेण पंचयज्ञान्समापयेद्" इति वचनाद्यथा पंचयज्ञाधिकारः शूद्रस्य तथाऽऽयुर्वेदेऽपि शिष्टाचारपरंपरापरिप्राप्तः सच्छूद्रस्याधिकारो युज्यते, एवं वेदाङ्गव्याकरणादावपि सच्छूद्रस्य वैश्यवदतिदेशादधिकारो न विरुध्यते इति । तन्त्रान्तरे तु शूद्रानधिकारोक्तिः सामान्येन शूद्राधिकारप्रतिषेधपरा न वैश्यवच्छूद्राधिकारं निषेधयति, ऋषिभिस्तु सर्वशूद्रपाठातिप्रसङ्गभयादायुर्वेदपाठे साक्षाच्छूद्रग्रहणं न कृतम्, वैश्यविध्यतिदेशेन तु लब्धत एव । किंच, हारीतेनार्थापत्त्या तद्विधकुलजातस्य सच्छूद्रस्यायुर्वेदपाठोऽभ्युपगम्यते, तथा हि "अकुलीनं त्यजेच्छिष्यमशमं चपलं शठम्" इत्यादौ वियोनिम्लेच्छजातिम्'इत्यनेन म्लेच्छनिषेधात् सच्छूद्रस्य प्रसक्तिरर्थादुक्तैव, अन्यथा, शूद्रमात्रानधिकारे म्लेच्छप्रसक्तिरेव नास्ति, तत्कुतस्तन्निषेध इत्याहुः । वस्तुतस्तु ब्रह्ममुखोद्भवत्वेन वेदजातत्वाद् वैद्यानामम्बष्ठदेशस्थायित्वात् 'अम्बष्ठः' इति संज्ञा, यदाह शङ्खः— "वेदाज्जातो हि वैद्यः स्यादम्बष्ठो ब्रह्मवक्त्रजः । अम्बष्ठदेशस्थायित्वादम्बष्ठसंज्ञकः स्मृतः" । अतएव वेदजातत्वाद्वैद्यानामायुर्वेदाधिकारः । यदाह भगवान् मनुः "सुतानामस्य सारथ्यमाम्बष्ठानां चिकित्सितम्" इति । वैद्यस्तु पंचमो वर्ण इति यदाह भगवान् शङ्खः "विप्रवैद्यक्षत्रवैश्याः शूद्रस्तु पंचमो मतः । वर्णानान्तु ब्रह्मादीनां गुरवः स्युर्यथोत्तरम्" । हारीतेऽपि "ब्रह्मा मूर्द्धाभिषिक्तश्च वैद्यक्षत्रविशा अपि । अमी पंच द्विजाः प्रोक्ता गुरवः स्युर्यथोत्तरम्" इति । वक्ष्यति च "आयुर्वेदोपनयनाद्वैद्यो द्विज इति स्मृतः" । किन्तु वैद्यानामेवाधिकारः, तथा चाग्निपुराणे "ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चैव विशेषतः । सर्वे प्रलयमायान्ति वैद्यवृत्तिपरिग्रहात्" । प्रलयं नरकमिति । अनुविधीयत इति आत्मादिस्वरूपं ज्ञात्वा विधातुं युज्यते, तदनुतिष्ठतीति शिवदासः । २ वक्तव्यमिति वक्ष्यमाणं तन्त्रादिस्वरूपम् । वाक्यश इत्यादि पूर्ववद्व्याख्येयमिति शिवदासः ।

तत्रायुर्वेदः शाखा विद्या सूत्रं ज्ञानं शास्त्रं लक्षणं तन्त्रमित्यनर्थान्तरम्[१]। तन्त्रार्थः पुनः स्वलक्षणैरुपदिष्टः स चार्थः प्रकरणैर्विभाव्यमानो भूय एव शरीरवृत्तिहेतुव्याधिकर्मकार्यकालकर्तृकरणविधिविनिश्चयाद्दशप्रकरणः, तानि च प्रकरणानि केवलेनोपदेक्ष्यन्ते तन्त्रेण ॥

तन्त्रमष्टौ स्थानानि[२], तद्यथा—श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानानि।

तत्र त्रिंशदध्यायकं श्लोकस्थानम्, अष्टाध्यायकानि निदानविमानशारीरस्थानानि, द्वादशकमिन्द्रियाणाम्, त्रिंशकं चिकित्सितानाम्, द्वादशके कल्पसिद्धिस्थाने इति ॥ २८ ॥

भिपक्परीक्षार्थं पृच्छाविधिमाह—अथेत्यादि । स्वलक्षणैरिति "ततश्चायुर्वेदयतीत्यायुर्वेदः" इत्यादिना हिताहितायूरूपैरित्यर्थः। प्रकरणैरित्यायुर्वेदप्रदेशैः, दशप्रकरणानि दशभेदाः, ते च शरीरादयो दश। तत्र शरीरं पञ्चमहाभूतविकारसमुदयात्मकमवयवादिभेदाद्बहुप्रकारम् । वृत्तिश्चाहारोऽशितपीतादिभिन्ना । हेतुस्तु व्याधिहेतुरसात्म्येन्द्रियार्थसंयोगप्रज्ञाऽपराधपरिणामलक्षणः । व्याधिश्च धातुवैपम्यरूपः । कर्म चिकित्सा । कार्यमारोग्यम् । कालो ऋत्वादिः, क्रियाकालश्च । कर्ता भिपक् । करणं भेपजम् । विधिर्विधानमुपकल्पना, सा च कालव्याधिद्रव्यापेक्षया बोद्धव्या, यथा "हेमन्तेऽभ्यसतस्तोयमुष्णमायुर्न हीयते" इत्यादि । देशस्त्वत्राऽहितो हेतुग्रहणेन, हितस्तु देशः करणग्रहणेन गृहीतो मन्तव्यः[३] । शरीरवृत्त्यादिभेदाश्च बहवः कृत्स्नतन्त्रे बुद्धिमता बोद्धव्याः[४] । 'केवलेनेति समग्रेण । इन्द्रियाणां चिकित्सितानां चेत्युभयत्रापि स्थानमिति शेपः ॥ २७ ॥ २८ ॥

तत्र श्लोकाः ।

द्वे त्रिंशके द्वादशकत्रयं च
त्रीण्यष्टकान्येषु समाप्तिरुक्ता ।
श्लोकौपधारिष्टविकल्पसिद्धि-
निदानमानाश्रयसंज्ञकेषु ॥ २९ ॥
स्वे स्वे स्थाने यथास्वं च स्थानार्थ उपदेक्ष्यते ।
सविंशमध्यायशतं शृणु नाम क्रमागतम् ॥ ३० ॥

त्रिंशके सूत्रे चिकित्सिते च । आश्रयसंज्ञकं शारीरस्थानम्, आश्रयो हि शरीरमुच्यते, सविंशमिति विंशतिशब्दात्स्वार्थे 'डः' यतः, स्वार्थिकश्च 'ड' प्रत्ययो भवति, तेन, ललितेश्वरे च "चतुर्विंशाधिकम्" इति प्रयोगः सिद्धो भवति, वचनं हि "चतुर्विंशाधिकं ज्ञानं भुवनानां शतत्रयम्" इति । एवं प्रस्तुतेऽपि "सविंशम्" इति व्याख्येयम् ॥ २९ ॥ ३० ॥

दीर्घञ्जीवोऽप्यपामार्गतण्डुलारग्वधादिकौ ।
षड्विरेकाश्रयश्चेति चतुष्को भेपजाश्रयः ॥ ३१ ॥
मात्रातस्याशितीयौ च न वेगान्धारणं तथा ।
इन्द्रियोपक्रमश्चेति चत्वारः स्वास्थ्यवृत्तिकाः ॥३२॥
खुड्डाकश्च चतुष्पादो महांस्तिस्रैपणस्तथा ।
सहवातकलाख्येन विद्यान्नैर्देशिकान्बुधः ॥ ३३ ॥
स्नेहनस्वेदनाध्यायावुभौ यश्चोपकल्पनः ।
चिकित्साप्राभृतश्चैव सर्वा एवोपकल्पनाः ॥ ३४ ॥
कियन्तःशिरसीयश्च त्रिशोफाष्टोदरादिकौ ।
रोगाध्यायो महांश्चैव रोगाध्यायचतुष्टयम् ॥ ३५ ॥
अष्टौ निन्दितसंख्यातस्तथा लङ्घनतर्पणौ ।
विधिशोणितकश्चैव व्याख्यातास्तत्र योजनाः ॥३६॥
यज्जःपुरुषसंख्यातो भद्रकाप्यान्नपानिकौ ।
विविधाशितपीतश्च चत्वारोऽन्नविनिश्चये ॥ ३७ ॥
दशप्राणायतनिकस्तथार्थे दशमूलिकः ।
द्वावेतौ प्राणदेहार्थौ प्रोक्तौ वैद्यगुणाश्रयौ ॥ ३८ ॥
औषधस्वस्थनिर्देशकल्पनारोगयोजनाः ।
चतुष्काः षट् क्रमेणोक्ताः सप्तमश्चान्नपानिकः ॥३९
द्वौ चान्त्यौ संग्रहाध्यायाविति त्रिंशत्कमर्थवत् ।
श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम्[१] ॥४०॥
चतुष्काणां महार्थानां स्थानेऽस्मिन् संग्रहः कृतः ।
श्लोकार्थः संचयार्थश्च[२] श्लोकस्थानमतः स्मृतम्[३] ४१
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोपोन्मादनिदाने च स्यादपस्मारिणं च यत् ॥४२॥
इत्यध्यायाष्टकमिदं निदानस्थानमुच्यते ।
रसेपु त्रिविधे कुक्षौ ध्वंसे जनपदस्य च ॥ ४३ ॥

---

१ उक्तानामेव तन्त्रादीनां स्वरूपं क्रमेणाह तत्रेत्यादि । तत्र तेपु तन्त्रादिपु मध्ये 'तन्त्रस्वरूपं निरुच्यत' इति शेपः, अनर्थान्तरमिति अर्थान्तरमर्थभेदः, न विद्यतेऽर्थभेदो यत्र तत्तथा, अभिन्नार्थमित्यर्थः । एतेन, एते शब्दा यस्यार्थस्याभेदेन वाचकाः, तत्तन्त्रमिति तन्त्रस्वरूपं दर्शितं भवति । तन्त्रार्थ इति तन्त्रस्यार्थोऽभिधेयम्, स च हिताहितादिरूपमायुः आयुष्याश्च पदार्थाः । स्वलक्षणैरिति आयुश्चेतनानुवृत्तिजीवितमित्यादिना ग्रन्थेनोक्तैरायुःस्वरूपैरिति शिवदासः । २ तन्त्रमष्टौ स्थानानीत्यादिना स्थानमाहेति शिवदासः । तन्त्रस्याष्टौ स्थानानीति पाठः । ३ हिताहितदेशौ तु करणहेतुशब्दाभ्यां गृहीतौ मन्तव्याविति शिवदासः । ४ शरीरवृत्त्यादिभेदाः कृत्स्नतन्त्रे बुद्धिमता बोद्धव्याः इति शिवदासः ।

१ इति त्रिंशकं श्लोकस्थानं समुद्दिष्टमित्यन्वयः, अर्थवदिति स्थानार्थसहितम्, शिर इव शिरः प्रधानत्वादिति शिवदासः । २ संचय इति पाठः । ३ श्लोकस्थानार्थनिरुक्तिमाह श्लोकार्थ इत्यादि । अत इत्यर्थानां संग्रहणात् । संक्षेपेण ग्रहणं संग्रहः ।

त्रिविधे रोगविज्ञाने स्रोतःस्वपि च वर्त्तने।
रोगानीके व्याधिरूपे रोगाणां च भिषग्जिते ॥ ४४॥
अष्टौ विमानान्युक्तानि मानार्थानि महर्षिणा।
कतिधापुरुषीयं च गोत्रेणातुल्यमेव च ॥ ४५ ॥
खुड्डीका महती चैव गर्भावक्रान्तिरुच्यते।
पुरुषस्य शरीरस्य विचयौ द्वौ विनिश्चितौ ॥ ४६ ॥
शारीरसंख्या सूत्रं च जातेरष्टममुच्यते[१]।
इत्युद्दिष्टानि मुनिना शारीराण्यत्रिसूनुना ॥ ४७ ॥
वर्णस्वरीयः पुष्पाख्यस्तृतीयः परिमर्षणः।
तथाचैवेन्द्रियानीकः पूर्वरूपिक एव च ॥ ४८ ॥
कतमानिशरीरीयः पन्नरूपोऽप्यवाक्शिराः।
यस्य श्यावनिमित्तश्च सद्योमरण एव च ॥ ४९ ॥
अणुज्योतिरिति ख्यातस्तथा गोमयचूर्णवान्।
द्वादशाध्यायकं स्थानमिन्द्रियाणामिति स्मृतम् ५०
अभयामलकीयंच प्राणकामीयमेव च।
करप्रचितिकं वेदसमुत्थानं रसायनम् ॥ ५१ ॥
संयोगशरमूलीयमासिक्तक्षीरिकं तथा।
मापपर्णतृतीयं च पुमान्जातबलादिकम् ॥ ५२ ॥
चतुष्कद्वयमप्येतदध्यायद्वयमुच्यते।
रसायनमिति ज्ञेयं वाजीकरणमेव च ॥ ५३ ॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः।
शोषोन्मादे(?)प्यपस्मारक्षतशोथोदरार्शसाम् ॥ ५४ ॥
हिक्कायां श्वासकासे च ग्रहणीपाण्डुरोगयोः[३]।
छर्दिवीसर्पतृष्णानां विषमद्यविकारिणाम् ॥ ५५ ॥
द्विव्रणीयं त्रिमर्मीयमूरुस्तंभिकमेव च।
वातरोगे वातरक्ते योनिव्यापदिकं च यत् ॥ ५६ ॥
त्रिंशच्चिकित्सितान्युक्तान्यतः कल्पान्तरं शृणु[४]।
फलजीमूतकेक्ष्वाकुकल्पो धामार्गवस्य च ॥ ५७ ॥
पञ्चमो वत्सकस्योक्तः षष्ठश्च कृतवेधने।
श्यामात्रिवृतयोः कल्पस्तथैव चतुरङ्गुले ॥ ५८ ॥
तिल्वकस्य सुधायाश्च सप्तलाशङ्खिनीष्वपि।
दन्तीद्रवन्त्योः कल्पश्च द्वादशोऽयं समाप्यते ॥५९॥
कल्पना पञ्चकर्माख्या वस्तिमूत्रा तथैव च।
स्नेहव्यापदिकी सिद्धिर्नेत्रव्यापदिकी तथा ॥ ६० ॥
सिद्धिः शोधनयोश्चैव वस्तिसिद्धिस्तथैव च।
प्रासृती मर्मसंख्याता सिद्धिर्वस्त्याश्रया च या ॥६१॥
फलमात्रा तथा सिद्धिः सिद्धिश्चोत्तरसंज्ञिता।
सिद्धयो द्वादशैवैतास्तन्त्रं चासु समाप्यते ॥ ६२ ॥

१ सूत्रं च जातेरिति जातिसूत्रीयमित्यर्थ इति शिवदासः। २ प्रकीर्त्तितमिति पाठः। ३ ग्रहणीपाण्डुरोगाणां श्वासकासातिसारिणामिति पाठः। ४ अतः कल्पानिति अतःपरं कल्पान् शृण्वित्यन्वयः इति शिवदासः।

स्वे स्वे स्थाने तथाध्याये चाध्यायार्थः प्रवक्ष्यते[१]।
तं ब्रूयात्सर्वतः सर्वं यथास्वं ह्यर्थसंग्रहात् ॥ ६३ ॥

'दीर्घञ्जीव' इत्यादयः श्लोकानुरोधादेकदेशलक्षणयाबोद्धव्याः। प्राणदेहार्थावित्यादौ देहशब्देनौजोऽभिधीयते[२]। शिरः शुभमित्यत्र शिर इव शिरः। श्लोकार्थइत्यादौ श्लोकार्थः संग्रहार्थ इति, चकारात्सूत्रस्थानोक्तसूत्रणादिकम्, यथा "सूत्रणात्सूचनाच्चैव धारणादर्थसन्ततेः। सूत्रस्थानं समुद्दिष्टम्" इत्येतदपि गृहीतं भवति। मानार्थानीति ज्ञानार्थानि। इन्द्रियाणामिति इन्द्रियादिविशिष्टानाम्। चतुष्कद्वयमिति रसायनपादचतुष्क एकः, वाजीकरणपादचतुष्क एकः, चतुष्पादश्चाध्यायो भवतीति युक्तमेवाध्यायत्वम्। तन्त्रं चासु समाप्यत इति। आसु समाप्तासु तन्त्रं समाप्यत इत्यर्थः। 'चाध्यायार्थः' इति चकारो भिन्नक्रमे, तेन, अध्यायार्थश्चाऽध्यायान्ते तथा स्थानार्थश्च स्थानान्ते कृतसंग्रहः यद्यपि शारीरे स्थानार्थो न व्यक्तः, तथापि शारीरव्युत्पत्त्या बोद्धव्यः। तन्त्रान्तराद्वा यथा—"शरीरं चिन्त्यते सर्वं दैवमानुषसंपदा। सर्वभावैर्युतस्तस्माच्छारीरं स्थानमुच्यते" ॥ ३१—६३ ॥

पृच्छा तन्त्राद्यथाम्नायं विधिना प्रश्न उच्यते[३]।
प्रश्नार्थे युक्तिमांस्तत्र तन्त्रेणैवार्थनिश्चयः ॥ ६४ ॥

१ अध्यायमुक्त्वाऽध्यायार्थमाह—स्वे स्वे स्थान इत्यादि।—स्वे स्वे स्थाने योऽध्यायो वक्तव्यस्तत्र तत्र वाऽध्याये तस्य तस्याऽध्यायस्यार्थ संग्रहो वाच्य इत्यर्थः, अन्येत्विल्याहुः—एतद्व्याख्याने तु पूर्वोक्तस्थानार्थ इत्यत्र श्लोकस्थाननिरुक्तिमात्रमुच्यते, तेन न पौनरुक्त्यम्। चकारोऽत्र अध्यायार्थ इत्यनन्तरं योज्यः, तेन स्थानार्थ इति समुच्चीयते, ततश्च स्थानान्ते स्थानार्थसंग्रहमध्यायान्ते चाध्यायार्थसंग्रहं यथाक्रमेण वक्ष्यतीत्यर्थः।

यद्यपि शारीरस्थाने तत्स्थानार्थो विशिष्य न वक्तव्यः, तथापि शारीरस्थानस्य शरीरनिरूपणरूपो योऽर्थः, सः "शरीरं चिन्त्यते सर्वं दैवमानुषसंपदा" इत्यादिशारीरशब्दनिरुक्तिद्वारेणैवोक्त इति ज्ञेयम्। तं ब्रूयादिति। तं सर्वमिति तत्रार्थं स्थानार्थमध्यायार्थंच। अर्थसंग्रहादिति ल्यब्लोपे पंचमी, तन्त्रादीनामर्थं संगृह्य संक्षिप्येत्यर्थः। सर्वतोऽनवशेषतः। यथास्वमित्यनेन, यो यस्यार्थस्तस्य संग्रहं कृत्वा तत्रार्थं स्थानार्थमध्यायार्थं चाशेषतो ब्रूयादित्यर्थ इति शिवदासः। २ प्राणदेहार्थावित्यत्र देहशब्देन हृदयं तदाश्रितमोजोऽप्यभिधीयते इति शिवदासः। ३ तन्त्रादिति तन्त्रमारभ्य। यथाम्नायं यथाक्रमम्। विधिना सामान्यविशेषप्रकारेण, पूर्वापरविरोधादिदोषशून्येन वा पृच्छा प्रश्न उच्यत इत्यर्थः। प्रश्नार्थं विवृणोति प्रश्नार्थे इत्यादि। तस्य प्रश्नस्य तन्त्रेण शास्त्रेणार्थनिश्चयो यः स प्रश्नार्थः। प्रश्नप्रयोजनमुच्यते, युक्तिमानिति, युक्तिमानुपपत्तिमानिति शिवदासः।

**निरुक्तं तन्त्रणात्तन्त्रं स्थानमर्थप्रतिष्ठया ।**
**अधिकृत्यार्थमध्यायनामसंज्ञा प्रतिष्ठिता ॥ ६५ ॥**
**इति सर्वं यथाप्रश्नमष्टकं संप्रकाशितम् ।**
**कार्त्स्न्येन चोक्तस्तन्त्रस्य संग्रहः सुविनिश्चितः ॥६६॥**

विधिना प्रश्न इत्यत्र विधिनेति पूर्वापराविरोधाद्दोषशून्येन वाक्येन । तन्त्रणादिति शरीरधारणात् । अर्थप्रतिष्ठयेति प्रधानभूतार्थावस्थानात्, एताश्च योगरूढाः संज्ञाः, तेन अतिप्रसङ्गो न वाच्यः । अधिकृत्येति अधिकारिणं कृत्वा । अर्थं दीर्घञ्जीवितादिकम् । अध्यायनामसंज्ञा अध्यायरूपनामसंज्ञा, नामसंज्ञा च योगरूढादिसंज्ञोच्यते, किंवा, अध्यायो नामेति पाठः, तदा नामशब्दः प्रकाशने, तेन अधिकार इत्यर्थः । अर्थशब्दोऽत्रार्थान्तरे, तेन युक्ताऽध्यायसंज्ञा, सा च अधिकरणसाधना करणसाधना वा कर्मसाधना वा बोद्धव्या, अधीयतेऽस्मिन्नधीयतेऽनेन वा अधीयते वा अध्यायः[2] ॥ ६४—६६ ॥

**सन्ति पाल्लविकोत्पाताः संक्षोभं जनयन्ति ये ।**
**वर्त्तकानामिवोत्पाताः सहसैवाविभाविताः ॥ ६७ ॥**
**तस्मात्तान्पूर्वसंजल्पे सर्वत्राष्टकमादिशेत् ।**
**परावरपरीक्षार्थं तत्र शास्त्रविदां बलम् ॥ ६८ ॥**
**शब्दमात्रेण तन्त्रस्य केवलस्यैकदेशिकाः ।**
**भ्रमन्त्यल्पबलास्तन्त्रे ज्याशब्देनैव वर्तकाः ॥ ६९ ॥**

प्रश्नाष्टकस्योक्तस्य निराकरणीयसंज्ञं वैद्यमाह—सन्तीत्यादि पाल्लविकाः प्रादेशिकाः, वर्त्तका अकस्मादुत्पतन्तः क्षोभं मनसो जनयन्तीति । लोकसिद्धमष्टकमिदं यथोक्तं प्रश्नाष्टकम् । परावरौ-श्रेष्ठाश्रेष्ठौ, तत्र शास्त्रविदां बलमिति शास्त्रविद एव प्रश्नाष्टकं जानन्ति, न पाल्लविकाः ॥ ६७—६९ ॥

**पशुः पशूनां दौर्बल्यात्कश्चिन्मध्ये वृकायते ।**
**ससत्त्वं वृकमासाद्य प्रकृतिं भजते पशुः ॥ ७० ॥**
**तद्वदज्ञोऽज्ञमध्यस्थः कश्चिन्मौखर्यसाधनः ।**
**स्थापयत्याप्तमात्मानमाप्तं त्वासाद्य भिद्यते ॥ ७१ ॥**
**बभ्रुर्गूढ इवोर्णाभिरबुद्धिरबहुश्रुतः ।**
**किंवै वक्ष्यति संजल्पे कुण्डभेदी जडो यथा ॥ ७२ ॥**

१ तन्त्रादिशब्दानां निरुक्तिद्वारेणार्थं स्पष्टयति निरुक्तमित्यादि । तन्त्रणादिति व्युत्पादनात् । अर्थप्रतिष्ठयेति प्रधानभूतार्थावस्थानात्, एतेन तन्त्र्यते व्युत्पाद्यतेऽनेनेति तन्त्रं शास्त्रं, तथा चार्थाः प्रतिष्ठन्त्यस्मिन्निति स्थानमिति निरुक्तिर्दर्शिता भवतीति शिवदासः ।
२ अधिकृत्येति निरुक्त्यैकदेशप्रकाशनम्, अधिकृतोऽध्यायार्थः, तत्प्रयुक्ता नामसंज्ञा अध्यायनामसंज्ञा योगरूढसंज्ञेत्यर्थः, किंवा अधिकृत्येति तृतीयान्तपदम्, तेन, अधिकृतिरधिकृतार्थसंबन्धः, तेनोपलक्षिताऽध्यायसंज्ञेत्यर्थ इति शिवदासः ।

**सद्वृत्तैर्न विगृह्णीयाद्द्विपगल्पश्रुतैरपि ।**
**हन्यात्प्रश्नाष्टकेनादावितरांस्त्वात्ममानिनः ॥ ७३ ॥**
**दंभिनो मुखरा ह्यज्ञाः प्रभूताबद्धभाषिणः ।**
**प्रायः प्रायेण सुमुखाः सन्तो युक्ताल्पभाषिणः ॥७४**
**तत्त्वज्ञानप्रकाशार्थमहङ्कारमनाश्रिताः ।**
**स्वल्पाधाराज्ञमुखरान्मर्षयेन्न विवादिनः ॥ ७५ ॥**
**परोभूतेष्वनुक्रोशस्तत्त्वज्ञाने परा दया ।**
**येषां तेषामसंवादनिग्रहे निरता मतिः ॥ ७६ ॥**

प्रकृतिः स्वभावः । बभ्रुरूर्णावान् कश्चित्पशुः, स यथा मेषं न ज्ञात्वा आत्मीयामिवोर्णां दृष्ट्वा उपसृत्याङ्गभङ्गमाप्नोति । तद्वदज्ञ आप्तं प्राप्य भिद्यत इत्यर्थः । किंवा, बभ्रुर्वृद्धनकुल-ऊर्णाराशिमध्यगो यथा किंचिन्न प्रतिपद्यते, तथाऽबुद्धिरपि संजल्पे वादिप्रतिवादिकथायाम् । कुण्डभेदी भ्रष्टयोनिः[1] । तेन पृच्छादिनाऽऽत्मीयनिन्दितजातिर्यथाऽवदातजातिः सन् कश्चिद्ब्रूते, तथाऽबुद्धिरपि संजल्पे । निगृह्णीयाद्विगृह्य संभाषां कुर्यात् । इतरानसद्वृत्तान् । स्वल्पाधाराः स्वल्पश्रुताः, न मर्षयेदिति नोपेक्षेत । अज्ञवैद्यसंवादप्रतिषेधमाह—परो भूतेष्वित्यादि । निरता इति तत्परा ॥ ७०—७६ ॥

**असत्पक्षाक्षणिकार्त्तिदंभपारुष्यसाधनाः ।**
**भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थकाः ॥७७॥**
**तान्कालपाशसदृशान्वर्जयेच्छास्त्रदूषकान् ।**
**प्रशमज्ञानविज्ञानपूर्णाः सेव्या भिषक्तमाः ॥ ७८ ॥**

अज्ञवैद्यफलमाह—असत्पक्षेत्यादि । असत्पक्षादिसाधनं येषां ते तथा, असत्पक्षोऽनागमपक्षसिद्धः पक्षः । अक्षणिकत्वं पृच्छार्थमनुयुक्तस्य 'संप्रति वक्तुं क्षणो नास्ति' इति भाषणम्, अर्त्तिः पृच्छार्थमनुयुक्तस्य शिरोव्यथादिकं उच्चार्य श्लाघमानं भाषणम्, दंभः पुस्तकवैद्यभाण्डादिभिः स्वार्थोत्कर्षप्रतिपादनम्, पारुष्यं—कृच्छ्रतोऽपि नवाच्यत्वादिति परुषभाषणम् । अनाप्ताः स्वे तन्त्र इति स्वतन्त्रानभिज्ञत्वात्, परविकत्थकाः परदूषणाः ॥ ७७ ॥ ७८ ॥

**समग्रं दुःखमायत्तमविज्ञाने द्वयाश्रयम् ।**
**सुखं समग्रं विज्ञाने विमले च प्रतिष्ठितम् ॥ ७९ ॥**
**इदमेवमुदारार्थमज्ञानार्थप्रकाशकम् ।**
**शास्त्रं दृष्टिप्रणष्टानां यथैवादित्यमण्डलमिति ॥८०॥**

द्व्याश्रयमिति मनःशरीराश्रयम् । समग्रमिति शारीरं मानसं च, सुखमारोग्यादिरूपम्, विज्ञाने विमल इति विशुद्धज्ञाने, किंवा विज्ञाने विमल इति मोक्षे, मोक्षे हि सुखं समग्रं दुःखासंभिन्नत्वात्, किंवा, भट्टदर्शनाद्दानाकृत्योद्धृतम् । इदमिति शास्त्रम्, एवमुदारार्थमिति लोकद्वयहितार्थाभिधायकम्, दृष्टिप्रणष्टानामिति प्रणष्टदृशाम् ॥ ७९ ॥ ८० ॥

१ निन्दितजातिरित्यर्थः ।

तत्र श्लोकाः ।

अर्थे दशमहामूलाः संज्ञा चैषां यथाकृता।
अयनान्ताः षडग्र्याश्च रूपं वेदविदां च यत् ॥८१॥
सप्तकश्चाष्टकश्चैव परिप्रश्नः सनिर्णयः ।
यथा वाच्यं यदर्थं च यद्विधाश्चैकदेशिकाः ॥
अर्थे दशमहामूले सर्वमेतत्प्रकाशितम् ॥ ८२ ॥
संग्रहश्चायमध्यायस्तन्त्रस्यास्यैव केवलः ।
यथा सुमनसां सूत्रं संग्रहार्थं विधीयते ।
संग्रहार्थं तथार्थानामृषिणा संग्रहः कृतः ॥ ८३ ॥

इत्यग्निवेशकृते तंत्रे चरकप्रतिसंस्कृते श्लोकस्थाने-ऽर्थे दशमहामूलीयो नाम त्रिंशोऽध्यायः समाप्तः ॥

अग्निवेशकृते तंत्रे चरकप्रतिसंस्कृते ।
इयताऽवधिना सर्वं सूत्रस्थानं समाप्यते ॥

संग्रहे संज्ञा चैषां यथाकृतेति "तेन मूलेन महता महा-मूला" इत्यादिना । अयनान्ताः षडग्र्याश्चेति "एकं प्राणव-र्द्धनानाम्" इत्यादिनोक्ताः । एते चाहिंसादयोऽग्र्याधिकारे यज्जःपुरुषीये उक्तास्तानुल्लङ्घ्येहोक्ता अध्यात्मविषयत्वेन, पूर्वोक्तास्त्वग्र्यरोगाधिकारिणाम्, सप्तकः "किमायुश्च कस्मादा-युर्वेदम्" इत्यादि, अष्टकः प्रश्नः "तन्त्रं तन्त्रार्थम्" इत्यादि ॥ ८१—८३ ॥

अर्थेदशमहामूलीयः समाप्तः ।

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तकृता-यामायुर्वेददीपिकायां चरकतात्पर्यटी-कायां सूत्रस्थानं समाप्तम् ।

# निदानस्थानम् ।

## प्रथमोऽध्यायः ।

**अथातो ज्वरनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

संक्षेपेण हेतुलिङ्गाभिधायकं सूत्रस्थानमनुप्रपञ्चेन हेतुलिङ्गाभिधायकं निदानस्थानमुच्यते । हेतुलिङ्गज्ञानपूर्विका हि चिकित्सा साध्वी भवति । यच्च चिकित्सासूत्रमात्रमभिधातव्यम्, तदुपशयान्तर्गतमेवेति कृत्वा । किंवा, हेतुलिङ्गाभिधायकस्यापि चिकित्सार्थत्वाच्चिकित्सासूत्रमात्राभिधानमिह । तत्रापि च शरीरविकारेषु प्रधानत्वात् ज्वरस्यैव निदानमादावुच्यते । तथा च ज्वरः प्रधानमत्रैव "ज्वरस्तु खलु" इत्यादिना वक्ष्यति । तथा च चिकित्सिते च वक्ष्यति, "देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली" इत्यादि । यत्तु वक्ष्यति, "पुरागुल्मोत्पत्तिरभूद्" इति । तत्र 'पुरा' शब्द आद्याविर्भावे गुल्मस्य वर्त्तते, नतु ज्वरस्य प्राग्भावे । दक्षाध्वरध्वंसे हि ज्वरपरिगृहीतानां प्राणिनां दिक्षु विद्रावणादिना गुल्मोत्पत्तेरुक्तत्वात् । निदानं कारणमिहोच्यते, तच्चेह व्याधिजनकं व्याधिबोधकं च सामान्येनोच्यते । तत्र व्याधिजनकं निदानं हेतुः, व्याधिबोधकं च कारणं निदानपूर्वरूपरूपोपशयसम्प्राप्तिरूपम् । तत्र हेतुरूपं निदानं जनकं च भवति, व्याधेर्बोधकं च भवति । अतएव प्रथमम्, "इह खलु" इत्यादिना हेतुमभिधाय "तस्योपलब्धिर्निदानं" इत्यादिना पुनर्हेतुरप्युक्तः । ज्वरस्य निदानं ज्वरनिदानम् । किंवा, निदानशब्दो जनककारणवचन एव । तत्र ज्वरस्य जनककारणं निदानमधिकृत्य कृतोऽध्यायो ज्वरनिदानम् । तेन पूर्वरूपादीनामपि ज्ञप्तिहेतूनां तथा चिकित्सासूत्रस्य च ग्रहणम् ॥ १ ॥ २ ॥

**इह खलु हेतुर्निमित्तमायतनं कर्त्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम् । तत्त्रिविधम् ॥ असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति ३**

तदेवं ज्वरनिदाने वक्तव्ये सर्वव्याधिसाधारणमेव निदानं वक्तुमुद्यतः सामान्यपूर्वकत्वाद्विशेषस्य तथाप्युत्पन्नस्य व्याधेर्लक्षणं युक्तमिति कृत्वा उत्पत्तिहेतुं व्यवहारार्थं लक्षणार्थं च पर्यायैराह इह खल्वित्यादि । इहेति इह प्रकरणे कारणाभिधायकहेत्वादयो नार्थान्तरे, प्रकरणान्तरेऽर्थान्तरे हेत्वादिशब्दा भवन्तीति दर्शयति । यथा वक्ष्यति "हेतुरकृतकत्वाद्" इति । तथा "दशैवायतनानि स्युः" । तथा "कर्त्ता, मन्ता, बोद्धा" इत्यादौ, प्रत्ययस्य लडादौ, उत्थानस्य उद्गमनादौ हेत्वादिभूरिपर्यायकथनं शास्त्रे व्यवहारार्थम् । तथा हेत्वादिशब्दानामर्थान्तरेऽपि वर्त्तमानत्वे पर्यायान्तरेण[१] समं सामानाधिकरण्यात् कारण एव वृत्तिर्नियम्यते । तेन, एकस्मिन्नर्थे यस्मिंस्ते शब्दाः प्रवर्त्तन्ते, तत्कारणमितरहेत्वाद्यर्थेभ्यो व्यवच्छिद्यते । तेन, लक्षणार्थं च[२] पर्यायाभिधानं भवति । एवमन्यत्रापि व्याध्यादिपर्यायाभिधानेऽपि व्याख्येयम् । इह चाष्टसंख्याया[३] मङ्गलत्वेन, तथा, अष्टविधव्याधिज्वराद्यभिधानार्थसंज्ञाश्चाष्टेत्यष्टावेवं हेतुपर्याया उक्ताः, तेन, अपरेऽपि योनिमूलमुखप्रकृत्यादयो हेतुपर्याया बोद्धव्यास्तन्त्रविस्तरभयान्नोक्ताः । एवं रोगपर्यायान्तरानभिधानेऽपि ग्रन्थविस्तरभयाद्यनुसरणीयम् । हेतोर्भेदमाह तत् त्रिविधमित्यादि । एतच्चासात्म्येन्द्रियार्थसंयोगादि दीर्घञ्जीवितीये तिस्रैषणीये च प्रपञ्चितमिति नेह प्रपञ्च्यते । अत्र पाठादेव त्रित्वे सिद्धे त्रिविधमितिवचनं बहुप्रपञ्चस्यापि असात्म्येन्द्रियार्थसंयोगादेस्त्रैविध्यानतिक्रमोपदर्शनार्थम्, तथा, प्रत्येकमयोगातियोगमिथ्यायोगभेदात् त्रिविधत्वदर्शनार्थं च । एतच्च हेतुत्रितयमुक्तमपि पुनः प्रकरणवशादुच्यमानमिह[४] न पुनरुक्तं दोषमावहति । एतच्चासात्म्येन्द्रियार्थादेस्त्रैविध्यं मूलकारणं प्रति नियामकम् । तेन, "ज्वरसन्तापाद्रक्तपित्तमुदीर्यते" इत्याद्युक्तरोगादेरपि प्रत्यासन्नकारणावबोधो नोद्भावनीयः । किंवा, रक्तपित्तादिकारणे ज्वरादावपि असात्म्येन्द्रियार्थसंयोगाद्येव मूलकारणम् । तेन, ज्वरादिकार्थे रक्तपित्तादौ ज्वरादिकारणमेवं[५] मूलकारणं भवति । पूर्वोक्तकालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति चेतिक्रमभेदेनेहासात्म्येन्द्रियार्थसंयोगस्यादावभिधानेन सर्वेषामेवैषां रोगकर्तृत्वे प्राधान्यं दर्शयति । मा भूदेकान्ताभिधानेन प्रधानतानियमः । यद्यपि मूलभूतत्वेन प्रज्ञापराधः प्रधानं भवति, तथापि प्रत्यासन्नकारणत्वेन, तथा अबुद्धिपूर्वकस्यापि उत्कटशब्दमिथ्यायोगादेरपि कारणत्वेनाऽसात्म्येन्द्रियार्थसंयोगोऽपि प्रधानम् । यद्यपि कालो दुष्परिहरत्वेन प्रधानम्, तथापि सोऽपीन्द्रियार्थपराधीनत्वेनाप्रधानम् । कालातियोगादय इन्द्रियार्थशीताद्यतियोगादिभ्य एव प्रायो भवन्ति ॥ ३ ॥

---

१ चिकित्सार्थत्वादिति चिकित्सामात्रप्रयोजनत्वादित्यर्थः ।

१ पर्यायान्तरेणेति एकार्थवाचकशब्दान्तरेणेत्यर्थः । २ लक्षणार्थमिति लक्षणप्रयोजनकमित्यर्थः । ३ संख्या चाष्टेत्यष्टावेवेति पाठः । ४ वक्ष्यमाणमिहेति पाठः । ५ ज्वरादिकारणमेवेति ज्वरादिमूलकारणमसात्म्येन्द्रियार्थसंयोगाद्येवेत्यर्थः ।

**अतस्त्रिविधविकल्पा व्याधयः प्रादुर्भवन्त्याग्नेयसौम्यवायव्याः। द्विविधाश्चापरे राजसास्तामसाश्च। अत्र व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकारो रोग इत्यनर्थान्तरम्॥ ४॥**

हेतोर्हेतुत्वं कार्ये भवतीति हेतुकार्यं व्याधिमाह—अतस्त्रिविधेत्यादि। न चात्र यथासंख्यम्, एकरूपादपि हेतोस्त्रिविधव्याध्युत्पादः। अत्रापि 'त्रिविध'वचनमानन्त्येऽपि रोगाणामाग्नेयत्वाद्यनतिक्रमोपदर्शनार्थम्। आग्नेयाः पैत्तिकाः, सौम्याः कफजाः, वायव्याः वातजाः। यद्यपि प्रधानत्वेन वायव्या एव प्रथमं निर्देष्टुं युज्यन्ते, तथापीह ज्वरे पित्तस्य प्रधानत्वादाग्नेयाभिधानम्। आग्नेयसौम्यवायव्या इति समासेनैकैकस्याप्यसात्म्येन्द्रियार्थसंयोगादेस्त्रिविधरोगोत्पत्तित्वं दर्शयति। असमासे हि यथासंख्यमपि शङ्क्यते। अन्यथापि व्याधीनुक्तहेतुजानाह द्विविधाश्चापर इत्यादि। राजसतामसानां च विच्छिद्य पाठेनेह तन्त्रे शारीरव्याध्यधिकारप्रवृत्तेरनधिकारत्वेनाऽप्रपञ्चनीयत्वं दर्शयति। अभिधानं च राजसतामसयोरिह व्याधिकथनस्य न्यूनतापरिहारार्थम्। आगन्तवश्चाभिघातादिजा रोगा आग्नेयादिष्वेवान्तर्भवन्ति। यतस्तत्रापि हि दोषप्रकोपव्यपदेशोऽस्त्येव। किंवा, 'अपरे' इत्यऽप्रधानाः, परो हि श्रेष्ठ उच्यते। अप्रधानत्वे चोक्तैवोपपत्तिः। व्याधीनामाग्नेयादिविभागं दर्शयित्वा व्यवहारार्थं लक्षणार्थं च पर्यायानाह अत्र व्याधिरित्यादि। अत्रापि पर्यायाणामनर्थान्तरेणातङ्कादिशब्दानां भयाद्यर्थतान्युदासाय्याधिलक्षणत्वं बोध्यम्। आतङ्केन हि भयमप्युच्यते, विकारशब्देन हि इन्द्रियादयोऽपि षोडश विकारा उच्यन्ते। तथा व्याध्यादिशब्दानां व्युत्पत्त्या रोगधर्मा लक्षणीयाः। तथा च विविधं दुःखमादधातीति व्याधिः। प्रायेणामसमुत्थत्वेनामय उच्यते। आतङ्क इति दुःखयुक्तत्वेन कृच्छ्रजीवनं करोति। वचनं हि "आतङ्कः कृच्छ्रजीवने"। यक्ष्मशब्देन च राजयक्ष्मवदनेकरोगयुक्तत्वं विकाराणां दर्शयति। ज्वरशब्देन च देहमनःसन्तापकरत्वम्। विकारशब्देन च शरीरमनसोरन्यथाकरणत्वं व्याधेर्दर्शयति। रोगशब्देन च रुजाकर्तृत्वम्॥ ४॥

**तस्योपलब्धिर्निदानपूर्वरूपलिङ्गोपशयसंप्राप्तितः ५**

इदानीं व्याधेर्जनकहेतुमभिधाय तथा तद्धेतुजन्यं च व्याधिमुक्त्वा तस्य व्याधेर्ज्ञानोपायमाह तस्येत्यादि। अविज्ञाते हि व्याधौ चिकित्सा न प्रवर्त्तते। अतः, सामान्येन व्याधिज्ञानोपायनिदानपञ्चकाभिधानम्॥ ५॥

**तत्र निदानं कारणमित्युक्तमग्रे॥ ६॥**

उक्तं निदानं विवृणोति निदानमित्यादि। अग्रे उक्तमिति "इह खलु" इत्यादिना "परिणामश्च" इत्यन्तेन। कारणं च व्याधीनां सन्निकृष्टं वातादि, विप्रकृष्टं चार्थानामयोगादि। पुनर्विप्रकृष्टं कारणं ज्वरस्य रुद्रकोपः, सन्निकृष्टं कारणं रक्तपित्तस्य ज्वरसन्तापं इति। पुनश्च व्याधीनां सामान्येन विप्रकृष्टं कारणमुक्तम्, यथा "प्रागपि चाऽधर्मादृते न रोगोत्पत्तिरभूद्" इत्यादि। तदेतत्सर्वमपि कारणशब्देन ग्राह्यम्। तत्राधर्मकार्यत्वेन व्याधीनां दैवव्यपाश्रयप्रायश्चित्तबलिमङ्गलेत्यादिचिकित्सासाध्यत्वं प्रतीयते। रुद्रकोपभवत्वेन च ज्वरस्य महादेवप्रभवत्वं तथाग्नेयत्वं प्रतीयते। क्रोधो ह्याग्नेयः। तेन, तन्मयो ज्वरोऽप्याग्नेयः। तथाच वचनम् "ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्" इति। वातादिजन्यत्वज्ञानेन च वातादिविपरीतभेषजसाध्यत्वम्। तथाऽनुद्भूतवातादिविकारान्तरसम्बन्धोऽपि भावी कल्प्यते। असात्म्यहेतुसेवोपदर्शकेन च भावी व्याधिस्तज्जन्य उन्नीयते। व्याधिपरीक्षायां च सन्देहे जाते यस्य व्याधेर्हेतुसेवा दृश्यते, स परिकल्प्यते, एवमादिहेतुना व्याधिपरीक्षणम्॥ ६॥

**पूर्वरूपं प्रागुत्पत्तिलक्षणं व्याधेः॥ ७॥**

निदानानन्तरीयकत्वात् पूर्वरूपादीनां निदानानन्तरं पूर्वरूपादीन्युच्यन्ते। अतः पूर्वरूपलक्षणमाह पूर्वेत्यादि उत्पत्तेः प्राक् प्रागुत्पत्तिः। एतेन, उत्पत्तेः पूर्वं यद्व्याधिप्रत्यायकं लक्षणम्, तत्पूर्वरूपम्। निदानसेवा तु भाविव्याधिबोधिका भवत्यपि निदानशब्दगृहीतत्वादेव तथा लक्षणशब्दानभिधेयत्वाच्च न पूर्वरूपशब्देनोच्यते। उक्तं ह्यन्यत्र "स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम्। लिङ्गं[1] कुर्वन्ति यद्दोषाः पूर्वरूपं तदुच्यते"। न च वाच्यम्, यदनुत्पन्नस्याविद्यमानस्य व्याधेः कथं लक्षणं भवतीति। यतः, मेघादपि भाविनी वृष्टिरनुमीयते, तथा, रोहिण्युदयं दृष्ट्वा कृत्तिकोदयोऽनुमीयते। तच्च पूर्वरूपं द्विविधं एकं भाविव्याध्यव्यक्तलिङ्गम्, यदुक्तम्, "अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्" इति, तथा, "पूर्वरूपं लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम्" इति द्वितीयं तु दोषदूष्यसंमूर्च्छनाजन्यमव्यक्तलिङ्गादन्यदेव, यथा ज्वरे बालप्रद्वेषरोमहर्षादि। न ह्येतत् पूर्वरूपं ज्वरावस्थायां नियमेन व्यक्तं भवति, किन्तु, ज्वरपूर्वकालएव। यत्र तु व्यक्तं भवति स चासाध्यो मतः। अतएवैवंभूतपूर्वरूपाभिप्रायेणैव अरिष्टे[2] वक्ष्यति, "पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरस्सरः" इति। तथा, "अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्" इति। एतद्धि अव्यक्तलक्षणपूर्वरूपाभिप्रायेण। वचनं हि तदा सर्वज्वराणाम-

१ लिङ्गं लक्षणम्; अव्यक्तं नात्यभिव्यक्तम्, अत्र हेतुरल्पत्वाद् अणुत्वाद्, नत्वावरणादियोगादव्यक्तमित्यर्थ इति मा, नि, वि, र,।

२ विशिष्टे इति पाठः।

साध्यत्वं स्यात्, यदा पूर्वरूपावस्थायामव्यक्तानि लक्षणानि ज्वरे जाते व्यक्तानि सर्वाणि सर्वत्रैव भवन्ति । तस्मात् पूर्वरूपावस्थाप्रतिनियतपूर्वरूपाभिप्रायेणैवैतद्वचनम् । अव्यक्तता च लक्षणानामियमेव, यदल्पत्वेन स्फुटत्वम् । यत्तु पूर्वरूपं दोषदूष्यसंमूर्च्छनावस्थानियतम्, तद् व्याधिमात्रस्य गमकम्, न तद्दोषविशेषगमकम् । एतत् पूर्वरूपाभिप्रायेण च वाग्भटेऽप्युक्तम्, यथा "प्राग्रूपं येन लक्ष्यते । उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः" इति । यत्तु अव्यक्तलिङ्गं पूर्वरूपम्, तद्दोषदूष्यविशेषमपि व्याधेर्गमयति, यदुक्तं हारीते "इति पूर्वरूपमष्टानां ज्वराणां सामान्यतो विशेषतस्तु । जृम्भाङ्गमर्दभूयिष्ठं हृदयोद्वेगि वातजम्" इत्यादि । तथा, सुश्रुतेऽप्युक्तम् "सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफान्नानाभिनन्दनम्" इति । एतद्धि पूर्वरूपं भाविज्वरलिङ्गमेवाव्यक्तमल्पत्वेन ज्ञेयम् । व्यक्ते हि ज्वरे वातादिजे जृम्भादयः पूर्वरूपापेक्षया अत्यर्थं भवन्ति । एवं पूर्वरूपद्वैविध्ये यत्र विशिष्टं पूर्वरूपमस्ति, तत्र साक्षादेवाभिधीयते, यत्र विशिष्टं तु नास्ति, तत्र लिङ्गमात्रं वक्ष्यति । तेन अव्यक्तान्येव लिङ्गानि पूर्वरूपमिति तत्र ज्ञातव्यम् ॥ ७ ॥

**प्रादुर्भूतलक्षणं पुनर्लिङ्गम् । तत्र लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यस्मिन्नर्थेऽनर्थान्तरम् ॥ ८ ॥**

लक्षणमाह—प्रादुर्भूतेत्यादि । उत्पन्नव्याधेः स्वरूपं तथा वाताद्यामपक्वादिविशेषणविशिष्टं व्याधिं निदानोपशयसंप्राप्तिव्यतिरिक्तं यद्बोधयति, तल्लिङ्गम् । अनेन च व्याधिप्रतिनियतं लिङ्गम्, यथा ज्वरस्य सन्तापः, तथा, अतिसरणमतीसारस्येत्यादि गृह्यते । तथा, वातादिकृतं च वातादिज्वरस्य विषमारम्भविसर्गित्वादि गृह्यते । तथा, आमपक्वजीर्णज्वरलक्षणादीनि विशिष्टव्याधिबोधकानि गृह्यन्ते । तथा, उपद्रवाश्चासाध्यताद्यवस्थापन्नव्याधिबोधकत्वेन लक्षणान्येव । रिष्टं तु मरणस्य पूर्वरूपमेव । निदानादयस्तु यद्यपि उत्पन्नव्याधिगमका अपि भवन्ति तथापि पृथक् लक्षणनिर्देशान्न ते इह लिङ्गशब्देनोच्यन्ते । व्यवहारार्थं तथा लक्षणार्थं च पर्यायानाह—तत्र लिङ्गमित्यादि । अस्मिन्नर्थेऽनर्थान्तरमिति लिङ्गलक्षणेऽर्थेऽभिधेयेऽनर्थान्तरम्, प्रकरणान्तरे तु अर्थान्तरेऽपि लिङ्गादयो भवन्ति, यथा—"वली लिङ्गं समर्पयेद्" इत्यत्र शेफ उच्यते, तथा, "संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या," तथा, "लक्षणवचोदाहरणवच," तथा "तैलसर्पिर्भ्यां व्यञ्जनमुपकल्पयेत्," तथा, "रूपस्य सत्त्वस्य च सन्ततिर्या" इत्यादौ । ननु, यथेह "अस्मिन्नर्थे" इत्युक्तम्, तथा, हेतुव्याधिसंप्राप्तिपर्यायाभिधानेऽपि "अस्मिन्नर्थे" इति वक्तव्यम् । ननु हेतुपर्यायाभिधाने तावत् "इह खलु" इत्यनेनैव तदर्थ उक्त एव, सम्प्राप्तिपर्यायकथने च "व्याधेः" इति पदेन 'अस्मिन्नर्थे' इतिपदस्यार्थ उक्त एव, गदपर्याये तु नार्थान्तरता प्रायो दृश्यते । तेन, तत्र 'अस्मिन्नर्थे' इति न कृतम् । अयं चाचार्याभिप्रायः—यद्यत्रान्यार्थतां शब्दस्य पश्यति, तत्रैव 'अस्मिन्नर्थे' इति करोति । तथा "समवेतानां पुनर्दोषाणामंशांशविकल्पो विकल्पोऽस्मिन्नर्थे इति । 'विकल्प' शब्दो ह्यन्यत्रापि वर्तते, यथा—"अन्यैश्च विकल्पैर्विकल्पितानाम्," तथा, "विकल्पो न त्वसाध्यानाम्" इत्यादि । ननु पूर्वरूपोपशययोः किमिति पर्यायानभिधानम् । ब्रूमः पूर्वरूपस्य तावत्पर्यायाभिधानम्, यदेव रूपस्य तदेव । यतः, रूपादय एव हि 'पूर्व' शब्दयुक्ताः पूर्वरूपपर्याया भवन्ति । उपशयस्तु चिकित्सा, तस्यास्तु पर्यायाश्चिकित्सितएव स्वाधिकारत्वेन वक्तव्याः' इति नेह पुनरुक्ताः ॥ ८ ॥

**उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणामौषधाहारविहाराणामुपयोगः सुखानुबन्धः ॥ ९ ॥**

उपशयमाह—उपशय इत्यादि । उपशमनमुपशयः सुखानुबन्ध इत्यर्थः । हेतुना, तथा व्याधिना, तथा हेतुव्याधिभ्यां च विपरीता हेतुव्याधिविपरीताः, तेषामौषधाहारविहाराणाम् । तथा हेतुव्याधिविपरीतार्थकारिणां चौषधान्नविहाराणाम् । सुखानुबन्ध इति सुखरूपोऽनुबन्धः, अनुबन्धश्च सुखकराणामित्यर्थः । अयं चोपशयो गूढलिङ्गे च व्याधौ ज्ञानोपायो भवति । यदुक्तम्,—"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" वक्ष्यति च गुल्मे—"स्नेहोष्मसर्दनाभ्यां च प्रणश्येत्सच वातिकः" तत्र विपरीतार्थकारि तदेवोच्यते, यद्विपरीततया आपाततः प्रतीयमानं विपरीतस्यार्थं प्रशमलक्षणं करोति । अत्रोदाहरणानि लिख्यन्ते—हेतुविपरीतमौषधम्, यथा—शीतकफज्वरे शुण्ठ्याद्युष्णं भेषजम् । हेतुविपरीतमन्नम्, यथा—श्रमानिलजे ज्वरे रसौदनः । हेतुविपरीतो विहारः, यथा दिवास्वप्नोत्थकफे रात्रौ जागरणम् । व्याधिविपरीतमौषधम्, यथा अतिसारे स्तम्भनं पाठादि । व्याधिविपरीतमन्नम्, यथा अतीसारे स्तम्भनं मसूरादि । व्याधिविपरीतो विहारः, यथा उदावर्त्ते प्रवाहणम् । हेतुव्याधिविपरीतमौषधम्, यथा वातशोथे वातहरं शोथहरं च दशमूलम् ।

१ उत्पित्सुः सामग्रीसाकल्यादुत्पादेच्छुरामयो रोगः दोषविशेषेण वातादिजन्यवेपथ्वादिना अनधिष्ठितोऽसंबद्ध इति मा; नि, वि, र ।

२ सामान्यतः प्राग्रूपं द्विविधं सामान्यं विशिष्टं च सामान्यं तु दोषदूष्यसंमूर्च्छनावस्थाजनितम् येन भाविज्वरादिव्याधिमात्रं प्रतीयते; नतु वातादिजनितत्वादिविशेषः । विशिष्टं पुनः भाविव्याधिलिंगानां अव्यक्तत्वम् अतएवाऽह वाग्भटः "प्राग्रूपं येन लक्ष्यते । उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः । लिंगमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ अरुणदत्तेनतु—पूर्वरूपत्रैविध्यं दर्शितम् शारीरम्, मानसम, शारीरमानसंच ।

हेतुव्याधिविपरीतमन्नम्, यथा शीतोत्थज्वरे उष्णा ज्वरघ्नी यवागूः । हेतुव्याधिविपरीतो विहारः, यथा स्निग्धदिवास्वप्नजायां तन्द्रायां रूक्षं तन्द्राविपरीतं रात्रिजागरणम् । हेतुविपरीतार्थकार्यौषधम्, यथा पित्तप्रधाने पच्यमाने शोथे पित्तकर उष्ण उपनाहः । हेतुविपरीतार्थकार्यन्नम्, यथा पच्यमाने पित्तप्रधाने शोथे विदाह्यन्नम् । हेतुविपरीतार्थकारी विहारः, यथा वातोन्मादे त्रासनम् । व्याधिविपरीतार्थकार्यौषधम्, यथा—छर्द्यां वमनकारकं मदनफलम् । व्याधिविपरीतार्थकार्यन्नम्, यथा—अतीसारे विरेककारकं क्षीरम् । उक्तं हि—"बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति । पैत्तिको यद्यतीसारः पयसा तं विरेचयेत्" इति । व्याधिविपरीतार्थकारी विहारः, यथा— छर्द्या छर्दिसाध्यायां वमनार्थं प्रवाहणम् । हेतुव्याधिविपरीतार्थकार्यौषधम् । यथा—अग्निना प्लुष्टेऽगुर्वादिना लेपः । उष्णं हि हेतावग्नौ व्याधौ चानुगुणं प्रतिभाति । हेतुव्याधिविपरीतार्थकार्यन्नम्, यथा—मद्यपानोत्थे मदात्यये मद्ययुक्ते मदकारकं मद्यम् । हेतुव्याधिविपरीतार्थकारी विहारः, यथा—व्यायामजनितसम्मूढवाते जलप्रतरणादिरूपो व्यायामः । अयं हेतौ व्यायामे व्याधौ च सम्मूढवातेऽनुगुणः प्रतिभाति ।

ननूपशयवदनुपशयोऽपि व्याधिपरीक्षकोऽस्ति । उच्यते च—"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" । तथा वाग्भटेऽप्युक्तम्,—"विपरीतोऽनुपशयः स ह्यसात्म्यमिति स्मृतः" इति । सत्यमस्ति च, परं निदानग्रहणेनैव गृहीतत्वान्न पृथगुच्यते, अनुपशयोऽपि हेतुसेवयैव भवति ॥ ९ ॥

**संप्राप्तिर्जातिरागतिरित्यनर्थान्तरं व्याधेः, सा संख्याप्राधान्यविधिविकल्पबलकालविशेषैर्भिद्यते १०**

यद्यपि सम्प्राप्त्यनन्तरं लिङ्गप्रादुर्भावः, तथापि, संप्राप्तेर्निरूपणं प्रति अल्पप्रयोजनाच्छेषतः सम्प्राप्तिमाह—सम्प्राप्तिरित्यादि ।—जातिर्जन्म, सम्प्राप्त्यागतिजातिशब्दैर्योऽर्थोऽभिधीयते व्याधेः, सा संप्राप्तिरित्यर्थः । अन्येके व्याधिजन्ममात्रमन्यकारणव्यापारजन्यं संप्राप्तिमाहुः । इयं च संप्राप्तिर्यद्यपि निदानादिवद्व्याधिबोधिका न भवति, तथापि, नानुत्पन्नस्य व्याधेर्लक्षणं भवतीति कृत्वा उत्पत्तेर्व्याध्युपलम्भकत्वं वर्णयन्ति । एतच्चान्ये न मन्यन्ते । यतः,—नैवं सति सम्प्राप्तितः कश्चिद्विशेषो व्याधेरधिगम्यते । न चायं नियमः—यदुत्पन्नएव परं व्याधिरुपलभ्यते । यतः, निदानपूर्वरूपाभ्यामनुत्पन्नो व्याधिर्भावित्वेन बुध्यते। तस्माद्व्याधिजनकदोषव्यापारविशेषयुक्तं व्याधिजन्मेह सम्प्राप्तिः । पर्याये 'आगतिः' इत्युक्तम् । आगतिर्हि उत्पादकारणस्य व्याधिजनन-पर्यन्तं गमनम्; इयंच सम्प्राप्तिर्व्याधिविशेषं बोधयत्येव । यथा—ज्वरे—"स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यारभ्य "तदा ज्वरमभिनिर्वर्तयति" इत्यन्तेन या सम्प्राप्तिरुच्यते, तथा ज्वरस्यामाशयदूषकत्वमग्न्युपघातकरसदूषकत्वादयोधर्माः प्रतीयन्ते । न च वाच्यम्,—दोषाणामयमामाशयदूषकत्वादिधर्मः, ततश्च कारणधर्माणां निदानग्रहणेनैव ग्रहणं भवतीति । यतः, कारणधर्मोऽप्ययं व्याधिजनकदोषव्यापाररूपः सम्प्राप्तिशब्देन विशेषबोधनार्थं पृथक् कृत्वोच्यते । यथा—लिङ्गत्वाविशेषेऽपि भाविव्याधिबोधकत्वविशेषात् पूर्वरूपं पृथगुच्यते । अतएव वाग्भटेऽप्येवमेव सम्प्राप्तिलक्षणमुक्तम् ;—"यथा दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः"[१] इति । संप्रति सम्प्राप्तेः प्रतिव्याधिव्यक्तिभिन्नायाः सर्वत्र व्याधौ तत्प्रयोजनाभावान्न भेदो वक्तव्यः, यस्तूपयुक्तो भवति सम्प्राप्तिविशेषः, तमभिधास्यत्येव, "स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यादिना ग्रन्थेन । अतः सर्वसम्प्राप्त्यनभिधानान्न्यूनतादोषपरिहारार्थं सर्वव्याधिसाधारणान् सम्प्राप्तिभेदानाह—सा संख्येत्यादि ।—'सा सम्प्राप्तिः संख्यादिभिर्भिद्यते' इति संख्यादिभिन्ने व्याधौ भिन्ना भवतीत्यर्थः । यतः, न भिन्नानां भावानामभिन्नोत्पत्तिर्भवति, किन्तर्हि भिन्नैव भवति, यद्यपि च प्रतिव्याधिव्यक्त्यपि सम्प्राप्तिर्भिन्नैव भवति, तथापि स भेदः सम्प्राप्तेरिह प्रयोजनाभावान्नोच्यते । यतः, संख्याप्राधान्यविध्यादितुल्यासु ज्वरव्यक्तिषु एकरूपनिदानलिङ्गचिकित्सितासु भेदप्रतिपादनेन किंचित् प्रयोजनमस्ति । संख्यादिभिन्ने तु ज्वरादौ निदानलिङ्गचिकित्साभेदोऽस्ति । अतः संख्यादिभेदजनिकायाः सम्प्राप्तेर्भेदकथनमुचितमेव ॥ १० ॥

**संख्या तावद्यथा—अष्टौ ज्वराः, पञ्च गुल्माः, सप्त कुष्ठान्येवमादिः ॥ १०।१ ॥**

संख्याभेदमुदाहरति—संख्या तावदिति । यद्यपि प्राधान्यादिभेदभिन्नेऽपि व्याधौ संख्याभेदोऽस्त्येव, तथापीह यैव शास्त्रसिद्धा अष्टोदरीयादिप्रतिपादिता सैव संख्याशब्देन प्राप्ता । अतएवाष्टौ ज्वरा इत्यभिधाय द्विविधं शोणितपित्तमिति क्रमात्प्राप्तं रक्तपित्तं नोदाहरति । यतः, द्विविधं हि रक्तपित्तस्य विधिभेदे प्रविशति, न द्विविधं संख्यायाम्, 'द्विविधं शोणितपित्तम्' इति विधिशब्देनैवोक्तत्वात् ॥ १० । १ ॥

**प्राधान्यं पुनर्दोषाणां तरतमाभ्यां योगेनोपलभ्यते । तत्र द्वयोस्तरस्त्रिषु तम इति ॥ १० । २ ॥**

प्राधान्यं पुनरित्यादौ तरतमाभ्यामिति 'तरतम' शब्दाभिधेयाभ्यां वृद्धिभ्याम् । तरतमशब्दयोर्विषयं विभजते—द्वयोरित्यादि ।—'द्वयोस्तरः' इति द्वयोर्दोषयोर्वृद्धयोः 'तर' प्रयोगो भवति—'वृद्धतरः' इति । एवं त्रिषु 'तमः' इति त्रिषु दोषेषु

१ येन प्रकारेणदुष्टः कुपितो वाताद्यन्यतमो दोषो यथा दुष्टस्तेन यथा दुष्टेन दोषेण यथाचानुविसर्पता देहमनुधावता सन्निवेशविशेषेण गच्छता प्रत्यामयं यानिर्वृत्तिर्निष्पत्तिरुद्भवइति यावन्निर्दिष्टा सासंप्राप्तिः ॥ इति वाग्भटटीकायामरुणदत्तः ॥

वृद्धेषु सत्सु 'तम' प्रयोगो भवति । तदेवं द्वन्द्वारब्धे विकारेऽन्यतरदोषस्य 'तर' शब्दलक्षितेन प्राधान्येन सम्प्राप्तिर्भिद्यते । तथा, त्रिदोषारब्धे विकारे 'तम' शब्दलक्षितान्यतमदोषप्राधान्यात् सम्प्राप्तिर्भिद्यते इत्युक्तं भवति ॥ १०।२ ॥

**विधिर्नाम द्विविधा व्याधयो निजागन्तुभेदेन, त्रिविधास्त्रिदोषभेदेन, चतुर्विधाः साध्यासाध्यमृदुदारुणभेदेन ॥ १० । ३ ॥**

सम्प्राप्तिभेदकं क्रमागतं विधिमाह—विधिर्नामेत्यादि—"द्विविधा व्याधयो निजागन्तुभेदेन' इत्यादिना विधिरिति कृतमित्यर्थः ।—ते द्विविधत्वादयो भेदा यतो भवन्ति, स विधिः विधिश्च प्रकारो भेद इत्यर्थः । साध्यासाध्यमृदुदारुणभेदेनेति साध्यासाध्यगतेन मृदुदारुणभेदेन । तेन, मृदुसाध्यं, सुखसाध्यम्, दारुणसाध्यं कृच्छ्रसाध्यम्—रोहिणीवलयादि, तथा, मृदुसाध्यं याप्यं, दारुणासाध्यं प्रत्याख्येयमिति भेदचतुष्टम् । यद्यपि च संख्याप्राधान्यादिकृतोऽपि व्याधेर्विधिभेदो भवत्येव, तथापि संख्यादिभेदानां स्वसंज्ञयैव गृहीतत्वाद्गोवलीवर्दन्यायात् संख्याद्यगृहीते व्याधिप्रकारे च विधिशब्दो वर्तनीयः ॥ १० । ३ ॥

**समवेतानां पुनर्दोषाणामंशांशविकल्पोविकल्पोऽस्मिन्नर्थे ॥ १० । ४ ॥**

क्रमागतं विकल्पमाह—समवेतानामित्यादि ।—समवेतानां सर्वेषाम् । तेन, एकशो द्विशो मिलितानां च दोषाणां ग्रहणम् । अंशमंशं प्रति बलं अंशांशबलम्, तस्य विकल्प उत्कर्षापकर्षरूपः अंशांशबलविकल्पः, एवंभूतो दोषाणां अंशांशविकल्पोऽस्मिन्नर्थ इति अस्मिन् प्रकरणे विकल्प उच्यते। प्रकरणान्तरे तु विकल्पशब्देन भेदमात्रमुच्यते, यथा—'विकल्पो न त्वसाध्यानाम्' इत्यादाविति भावः । तत्र दोषाणामंशांशविकल्पो यथा—वाते प्रकुपितेऽपि कदाचिद्वातस्य शीतांशो बलवान् भवति, कदाचिल्लघ्वंशः, कदाचिद्रूक्षांशः कदाचिल्लघुरूक्षांश इति । एवं पित्तकफयोरप्युदाहार्योऽशांशविकल्पः; अयं चांशांशविकल्पो दोषाणां शीतादिगुणोद्भूतहेतुभेदाद्भवति ॥ १० । ४॥

**बलकालविशेषः पुनर्व्याधीनामृत्वहोरात्राहारकालविधिनियतः ॥ १० । ५ ॥**

बलकालविशेषमाह—बलेत्यादि ।—बलस्य कालो बलकालः, तस्य विशेषो वसन्तपूर्वाह्णादिर्बलकालविशेषः । ऋतवश्चाहोरात्राहारयोश्च काला ऋत्वहोरात्राहारकालाः, तेषां भेदो विधिः तत्र नियतो बलकालविशेष ऋत्वहोरात्राहारकालविधिनियतः-अत्र ऋतुविनियतो बलकालविशेषो यथा—श्लेष्मज्वरस्य वसन्तः । अहोरात्रविनियतो यथा—श्लेष्मज्वरस्य पूर्वाह्णः प्रदोषश्च । आहारविनियतो यथा—श्लेष्मज्वरस्य भुक्तमात्रकालः । एवमाद्यूह्नेयम् । केचित्तु विधिशब्देन पूर्वकृतं कर्म ब्रुवते । अत्र कर्मनियतो बलकालविशेषः पच्यमानकर्मकालएव बोद्धव्यः । एषु बलकालेषु यद्यपि व्याधेरभूतप्रादुर्भावरूपा सम्प्राप्तिर्न भवति, तथापि व्याधिसन्ताने तत्कालं व्याध्युत्पत्तौ च सम्प्राप्तिर्भिन्नैव भवतीति मन्तव्यम् । इयं च कालविशेषाख्या बलवद्व्याधिजनिका सम्प्राप्तिर्व्याधिर्विशेषं स्फुटमेव बोधयति । यतः पूर्वाह्णादिबलसम्प्राप्त्या ज्वरस्य कफादिजत्वमुन्नीयते इति। इह च सम्प्राप्तेरेव विशेषाः संख्यादिकृता उक्ताः, न तु निदानादीनां विशेषाः । यतः, निदानादिविशेषाः प्रतिव्याधिवक्ष्यमाणभेदेनैवोपयुक्ताः । यतः, यादृग्ज्वरे निदानम्, न तादृग्रक्तपित्ते । ये च पूर्वरूपादिविशेषाः ज्वरे, न ते रक्तपित्तादौ, भिन्नजातीया एव । स च भेदो निदानादीनां भेदगमकत्वेनोपयुक्तो व्याधिभेदकथनएव । सम्प्राप्तेस्तु संख्यादिभेदः सर्वव्याधिष्वेकजातीयत्वेन न विशेषगमक इति इहैव कथ्यते । निदानादिविशेषास्तु प्रतिव्याधि विशिष्टत्वेन नेह प्रपञ्चेनोच्यन्ते । अतएव चात्रैवाध्याये सम्प्राप्तेः सामान्याभिधानेनैवोक्तत्वात् सम्प्राप्तिं परित्यज्य निदानादिविशेषाभिधानम्, तत्प्रतिजानीते "तस्य निदानपूर्वरूपलिङ्गोपशयविशेषाननुव्याख्यास्यामः" इति ॥ १० । ५ ॥

**तस्माद्व्याधीन्भिषगनुपहतसत्त्वबुद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुध्येत ॥ ११ ॥**

यस्मादिमे निदानादय उक्तेन न्यायेन परीक्षायामुपयुक्ताः, तस्माद्व्याधीन् भिषग् हेत्वादिभिः परीक्षेतेति योजना । न च वाच्यम्-यन्निदानादीनां मध्ये चेदन्यतमेनापि व्याधिं परिच्छेत्तुं समर्थस्तत् कथं पञ्चकाभिधानेनेति । यतः, यावन्तो ज्ञानोपाया व्याधीनाम्, ते सर्वे एवोपदर्शनीयाः । तत्र यो निदानं विस्मृतवान्, तस्य पूर्वरूपादिभिर्व्याधिः परीक्ष्यते । तथा, यत्र च पूर्वरूपादयो विस्मृताः सन्दिग्धा वा, तत्रोपशयेन परीक्षा भवति । एवं कफजत्वसन्देहे ज्वरस्य सम्प्राप्तिरपि पूर्वाह्णे भुक्तमात्रे वा भवतीति कफजत्वं गमयतीत्यादि प्रयोजनमनुसरणीयम् । तथा पूर्वरूपेणापि लिङ्गसामान्यनिश्चय उक्तः । यदुक्तम्—"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः । यो मूत्रयेत्तं न वदेत्प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः" इति । तथा, लिङ्गनिश्चितेऽपि व्याधौ पूर्वरूपेणासाध्यत्वमुक्तम् । यथा—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः" इति । तस्मान्निदानादिपञ्चकमभिधातव्यमेव । ननु लिङ्गेन व्याधिः परीक्षणीय इतिवचनाल्लिङ्गव्यतिरिक्तो व्याधिरित्युक्तं भवति । तत्र च लिङ्गसमुदायव्यतिरिक्तो न व्याधिरुपलभ्यते । विषमारम्भिविसर्गित्वादयो हि सन्तापसहिता ज्वराः, तथा, प्रतिश्यायकासाद्येकादशरूपमेलकएव यक्ष्मा । नैवम्, लिङ्गत्वेन शास्त्रे प्रतिपादितानां तदतिरिक्तव्याध्यभावे लिङ्गत्वानुपपत्तेः वचनं हि—"विषमारम्भमूलाद्यैर्ज्व-

१ पृथक् पृथक् समेतानामित्यन्यः पाठः ।

र एको निरुच्यते" । विकारश्चेह दोषदूष्यमेलकविशेषो ज्वरादिशब्देनोच्यते । स च दोषदूष्यविशेषात्मा ज्वरोऽरुच्यादिभ्यो दोषदूष्यवैषम्यविशेषेभ्योऽर्थान्तरमेव । न च वाच्यम्, ज्वरलिङ्गारुच्यङ्गमर्दादिरूपधातुवैषम्यविशेषमेलको ज्वरोऽस्तु, अलं तदतिरिक्तज्वरकल्पनया । लिङ्गलिङ्गिभावश्च समुदायसमुदायिभेदाद्भविष्यतीति । यतः, एवमप्यरुच्यङ्गमर्दादिधातुवैषम्यानुगतो धातुवैषम्यविशेषो ज्वररूपोऽवयवीति भिन्नएव वक्तव्यः जङ्घाबाहुशिरोन्तराध्यवयवानतिरिक्तमेव शरीरमवयविरूपम् । नच दुःखमेव व्याधिरिति पूर्वमेव पराकृतम् । तेन, दुःखरूपत्वाद्व्याधेरवयवित्वं न संभवतीति न वाच्यम् । लिङ्गानि तु स्वरूपेण व्याधयो भवन्ति, ते च बोद्धव्यव्याध्यपेक्षया लिङ्गं भवति । तदुक्तम् "व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः" इति लिङ्गलिङ्गिभावश्च जिज्ञासावशाद्भवति । यद्वक्ष्यति—"विषमारम्भमूलानां ज्वर एको हि लक्षणम् । विषमारम्भमूलेश्च ज्वर एको निरुच्यते" । अस्य चार्थमपस्मार निदाने प्रकरणागतं व्याख्यास्यामः । तस्मात्सुस्थितं व्याधिगमकत्वं निदानादिपञ्चकस्येत्यर्थः ॥ ११ ॥

**इत्यर्थसंग्रहो निदानस्थानस्योद्दिष्टः तं विस्तरेण भूयस्तरमतोऽनुव्याख्यास्यामः ॥ १२ ॥**

इतीत्यादौ इति परिसमाप्तौ । निदानस्थानस्येति सर्वव्याधिनिदानस्य । अर्थसंग्रह इत्यनेनैव संक्षेपार्थाभिधाने लब्धे- 'उद्दिष्टः' इति संक्षेपाभिधायिपदकरणेन संक्षेपस्यापि संक्षेपाभिधानमेतदिति दर्शयति । तमिति सामान्यनिदानोद्देशम्; अतो निदानोद्देशमात्रतो भूयस्तरमुपदिशन्तो विस्तरेण व्याख्यास्याम इति योजना । तेनैतदतिसंक्षेपकथनापेक्षया प्रपञ्चकथनमेवेह विस्तरशब्दार्थ इति दर्शयति । तेन निदानादीनां यावद्विस्तरकथनमुत्तरत्रोपपन्नं भवति ॥ १२ ॥

**तत्र प्रथमत एव तावदाद्यांल्लोभाभिद्रोहकोपप्रभवानष्टौ व्याधीन्निदानपूर्वेण क्रमेण व्याख्यास्यामः, तथा सूत्रसंग्रहमात्रं चिकित्सायाः । चिकित्सितेषु चोत्तरकालं यथोपचितविकारानुव्याख्यास्यामः । इह तु ज्वर एवादौ विकाराणामुपदिश्यते, तत्प्रथमत्वाच्छारीराणाम् ॥ १३ ॥**

तत्रेत्यादि ज्वराद्यष्टविधरोगस्य निदानस्थाने कथनं प्रतिजानीते । "प्रथमत एव तावद्" इत्यनेन पश्चाच्चिकित्साभिधेयानर्शःप्रभृतीन् सूचयति । "आद्यानित्यनेन, आदौ दक्षाध्वरोद्ध्वंसे उत्पन्ना ये तेषामिह कथनं दर्शयति । यद्यपि च राजयक्ष्मा पृथगेवोत्पन्नः, वचनं हि—"अतिव्यवायात्पुनर्नक्षत्रराजस्य यक्ष्मा" । तथाप्यस्य प्राधान्यादिहाभिधानम् । यद्यपि च दक्षाध्वरोद्ध्वंसोद्भूतानपस्मारान्तानभिधाय पृथगुत्पन्नस्य यक्ष्मणोऽभिधानमुचितम्, तथाप्युन्मादापस्मारयोरागन्तुत्वेन शोषमप्यभिधायान्तेऽभिधानम् । "लोभाभिद्रोहप्रभवान्" इत्यनेन जनपदोद्ध्वंसनीये "प्रागपि चाधर्मादृते न रोगोत्पत्तिरभूत्" इत्यनेन वक्ष्यमाणानां ज्वरादीनां लोभाभिद्रोहजन्यतां दर्शयति । अनेनाधर्मजत्वं ज्वरादीनामुक्तं भवति । निदानपूर्वेणेति निदानप्रथमेन । क्रमेणेति रोगसामान्योक्तनिदानपूर्वरूपरूपोपशयसम्प्राप्तिरूपेण । अयं च क्रमः क्वचित्प्रयोजनवशाद्बाध्यते । यथा अत्रैव ज्वरे,— अग्रे हि रूपमभिधाय पूर्वरूपमभिधातव्यम् । क्रमभेदप्रयोजनं चेह,—यत्,—रूपाण्यत्र प्रतिज्वरमभिधातव्यानि; न तु प्राग्रूपाणि प्रतिज्वरमभिधातव्यानि । तेन, सर्वसाधारणत्वाद्रूपमभिधाय सामान्यं प्राग्रूपमभिधातव्यम् । तथा, सूत्रसंग्रहमात्रं चिकित्सायाः व्याख्यास्याम इति सम्बन्धः । निदाने च चिकित्साभिधानप्रयोजनं प्रागेवोक्तम् । 'सूत्रम्' इति कृत्वा यत्संग्रहं करोति तेन, सूत्रस्यापि संक्षेपेणाभिधानं दर्शयति । तथाच चिकित्सासूत्रमपीह किंचिन्न वक्तव्यम् । यथा "लङ्घनयवाग्वादयश्चिकित्सिते" इत्यनेनैव चोत्तरकालत्वे लब्धे, पुनः 'उत्तरकालम्' इति वचनम्, चिकित्सितस्थानेऽपि ज्वराद्यभिधानोत्तरकालमेव यथोपचितविकाराणां निदानादिकथनं दर्शयति । यथोपचितमिति ये ये उपचिता विकाराः शोषार्शःप्रभृतयस्तान् । किंवा, 'यथाऽऽचितम्' इति पाठः, तत्रापि 'यथाप्रधानम्' इत्यर्थ उन्नेयः । चिकित्सिते च विकाराणां निदानाद्यभिधानं निदानादिनाव्यवधानेन प्रतीते विषये चिकित्सा सम्यक् प्रतीयते इत्यभिप्रायेण । अतएव च ज्वरादीनामपि च पुनर्निदानाद्यभिधास्यति, इहतु ज्वरादीनां निदानाद्यभिधानं बहुवक्तव्यत्वेन स्थानभेदं कृत्वा कृतम् । स्थानभेदकरणेन च चिकित्सावदायुर्वेदे निदानस्यापि ज्ञेयत्वेन प्राधान्यं दर्शयति । इह खल्वित्यष्टविधव्याधिनिदाने वक्तव्ये । 'शारीराणाम्' इत्यनेन, कामक्रोधादिमानसं रोगं प्रति न ज्वरस्य प्रथमत्वमिति दर्शयति ॥ १३ ॥

**अथ अष्टाभ्यः कारणेभ्यो ज्वरः संजायते मनुष्याणाम्, तद्यथा—वातात्, पित्तात्, कफात्, वातपित्ताभ्याम्, वातश्लेष्मभ्याम्, पित्तश्लेष्मभ्याम्, वातपित्तश्लेष्मभ्यः, आगन्तोरष्टमात्कारणात् ॥ १४ ॥**

ज्वरस्य निरूपणीयस्य कारणकृतं भेदमाह—अथेत्यादि ।

---

१ ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानिसंग्रहे । व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः ॥ २ यथाचितम्, यथाचित्रं यथोद्दिष्टं चेति पाठान्तराणि ।

१ ग्रहणी अग्न्यधिष्ठानं धमनी । यदाहचरकः—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता । नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता । अपक्वं धारयत्यन्नं पक्वं सृजति चाप्यधः" इति । सुश्रुतेऽप्येतदुक्तम्—"षष्ठी पित्तधरा नाम या कला परिकीर्तिता । पक्वामाशयमध्यस्था ग्रहणी सा प्रकल्पिता" इति । कला धात्वन्तरमर्यादा, पक्वामाशयमध्यस्था पच्यमानाशयरूपेत्यर्थ इति, गा, नि, वि ।

—एतच्च कारणं वातादि सन्निकृष्टम् । मनुष्याणामितिवचनेन, गोगजशकुन्यादीनां नावश्यमिदं ज्वराष्टत्वमनुगामीति दर्शयति । तथाहि—हस्त्यादीनां पाकलादयो नाष्टविधाः प्रतिपाद्यन्ते । आगन्तोरिति वक्तव्ये 'अष्टमाद्' इतिवचनं, आगन्तोरभिघातादिचतुष्कारणभेदेऽपि एकत्वोपदर्शनार्थम् । आगन्तुर्हि कारणभेदोत्पन्नोऽप्येकरूपएव । यतः, आगन्तुः सर्वो व्यथापूर्वमेव भवति । यस्तु तत्र, "कामशोकभयाद्वायुः" इत्यादिना भेदो वक्तव्यः, स वातादिकृतएवेति भावः ॥ १४ ॥

**तस्य निदानपूर्वरूपलिङ्गोपशयविशेषाननुव्याख्यास्यामः, तद्यथा ॥ १५ ॥**

तस्येत्यादौ 'तस्य' इति ज्वरस्य । विशेषानिति निदानादिभिः प्रत्येकं सम्बध्यते । निदानादिविशेषाश्चेह रोगान्तररक्तपित्ताद्यपेक्षया तथा परस्परं वातादिज्वरापेक्षया च यथासम्भवं बोद्धव्याः । तेन पूर्वरूपविशेष इह रक्तपित्तादिपूर्वरूपापेक्षया बोद्धव्यः, पूर्वरूपस्य विशेषेणेहानभिधानात् । उपशयविशेषानभिधानं च निदानविशेषादेव लभ्यते । यतः, निदानविपर्ययेणोपशयमभिधास्यति । पूर्वरूपं चेह विशिष्टमव्यक्तलिङ्गविशेषरूपमेव ज्ञेयम् । सम्प्राप्तेस्तु वक्ष्यमाणाया इहाप्रतिज्ञानम्, तस्याः सर्वरोगे सम्प्राप्तिभेदाभिधानेनैव कथितत्वात्, तथा निदानादिवत् सम्प्राप्तेर्व्याधिबोधनं प्रत्यप्रधानत्वाच्च । यश्च सम्प्राप्तिभेदोऽभिधातव्यः स सर्वरोगसाधारण एव । भेदस्तु तस्या वातादिदोषमात्रकृतएव । वातादिभेदश्च निदानभेद एव । अन्येतु ब्रुवते—सम्प्राप्तिं नाभिधास्यत्येवायम्, यदेतत् ।—"स यदा प्रकुपितः" इत्यभिधास्यति, तन्निदानरूपवातादिधर्मकथनमिति निदानान्तर्गतमेव ॥ १५ ॥

**रूक्षलघुशीतव्यायामवमनविरेचनास्थापनशिरोविरेचनातियोगवेगसन्धारणानशनाऽभिघातव्यवायोद्वेगशोकशोणिताभिषेकजागरणविषमशरीरन्यासेभ्योतिसेवितेभ्यो वायुः प्रकोपमापद्यते ॥१६॥**

रूक्षेत्यादि ।—वातप्रकोपणं प्रति रूक्षस्य प्रधानत्वेनाग्रेऽभिधानम् । रूक्षो हि गुणो वातगुणेषु प्रधानम् । आस्थापनं यद्यपि वातहरमुक्तम्, —"आस्थापनानुवासनं तु खलु सर्ववातविकारेषु प्रधानम्" इतिवचनात्, तथापीहास्थापनस्यातियोगो वातहेतुरुक्त एवेति न दोषः । वचनं हि—"उत्क्लेशाऽग्निवधौ स्नेहान्निरूहात्पवनाद्भयम्" । निरूहश्चानुवासनं कृत्वा युक्त एव मात्राकृतः साधारणवातहर इति सिद्धान्तः ॥ १६ ॥

**स यदा प्रकुपितः प्रविश्यामाशयमूष्मणः स्थानमूष्मणा सह मिश्रीभूत आद्यमाहारपरिणामधातुं रसनामानमन्वेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्निरस्य केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्तयति ॥१७॥**

'स यदा' इत्यादिना सम्प्राप्तिमाह—'यदा' इति वचनात्, एवं कुपितोऽपि वायुर्यदा आमाशयप्रवेशादिसम्प्राप्तियुक्तो भवति, तदैव ज्वरं करोति, नान्यदेति दर्शयति । 'प्रविश्यामाशयम्' इत्यनेन ज्वरकर्तुर्दोषस्यामाशयदूषकत्वं दर्शयति । अतएव सर्वज्वरे आमाशयविशुद्ध्यर्थं लङ्घनमुत्सर्गतो वदन्ति । यद्यपि चामाशयप्रवेशादेवोष्मणापि मिश्रत्वं लभ्यतएव । यतः, आमाशयएव वह्निस्थानम्, "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" इति वचनात्, तथापि वह्निस्थानस्यामाशयैकदेशत्वेनामाशयप्रवेशेऽपि नावश्यं ग्रहणीरूपवह्निस्थानदुष्टिर्विशेषेण लभ्यत इति अतएवोक्तम्—"ऊष्मणा सहमिश्रीभूतः" इति । 'रसनामानम्' इत्युच्यमाने आहाररसेऽपि मधुररसादौ प्रसक्तिः स्यात्, अत उक्तम्—'आहारपरिणामभवो धातुराहारपरिणामधातुस्तमिति । तेन, आहारपरिणामधातुत्वं च परम्परया रक्तादिष्वप्यस्तीत्याह—'आद्यम्' इति प्रथममित्यर्थः । रसमिति वक्तव्ये 'रसनामानम्' इति यत्करोति तेन, रसतीति 'रसः' इति व्युत्पत्तिमात्रेण रक्तादिषु रससंज्ञां निषेधयति । यत्रैव रससंज्ञा रूढा, तं ग्राहयति; एवमन्यत्रापिच यत्पदमधिकार्थमिह प्रतीयते तत्सष्टार्थमेव, यतस्त्रिविधशिष्यबुद्धिहितमेव विसष्टार्थं तन्त्रं युज्यते । अन्वितिं यथोक्तक्रमेण । अवेत्य गत्वा । पिधायेत्यवरुध्य । पक्तिस्थानादितिवचनेन पक्तिस्थानात्पाचकाग्निस्थानात् उष्माणमिति पाचकवह्निम् । बहिरिति पक्तिस्थानव्यतिरिक्तशरीरे । यद्यपि चोष्माणं निरस्येतिवचनादेव 'पक्तिस्थानाद्' इति लभ्यते, तथापि 'पक्तिस्थानाद्' इतिवचनेन पक्तिस्थानात् 'कृत्स्नस्य वह्नेर्निरसनं' दर्शयति, इह चोष्मशब्देन पाचकाग्निं व्यपदिशन् पाचकस्य वह्नेरुष्मरूपतां दर्शयति, बाह्यवह्निसदृशज्वालाकरं पित्तं निषेधयति । अतएव च वह्नेर्निरसनादग्निमान्द्यं ज्वरे दर्शितं भवति । वायुश्चात्रातिवृद्धत्वेन वह्निनिरासकस्तेनाग्निदीप्तिं न करोति । यत्र हि प्रेरकमात्रो भवति वायुः, तत्र वह्नेर्वृद्धिं करोति । यथा—मेदस्विन कोष्ठे चरन्वायुरग्निवृद्धिकरो भवति ॥ १७ ॥

**तस्येमानि लिङ्गानि भवन्ति । तद्यथा—विषमारम्भविसर्गित्वमूष्मणो वैषम्यं तीव्रतनुभावानवस्थानानि ज्वरस्य, जरणान्ते दिवसान्ते निशान्ते घर्मान्ते ज्वराभ्यागमनमभिवृद्धिर्वा ज्वरस्य, विशेषेण परुषारुणवर्णत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थं क्लृप्तीभावश्च, अनेकविधोपमाश्चलाचलाश्च वेदनास्तेषां तेषामङ्गावयवानाम्, तद्यथा—पादयोः सुप्तता, पिण्डिकयोरुद्वेष्टनम्, जानुनोः केवलानां च सन्धीनां विश्लेषणम्, ऊर्वोः सादः, कटीपार्श्वपृष्ठस्कन्धबाहंसोरसां च भग्नमृदितमथितचटितपीडितावनुन्नत्वमिव, हन्वोश्चाप्रसिद्धिः, स्वनश्च**

१ मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः । चरन्संधुक्षयत्यग्निमाहारं शोषयत्यपि । माधवनिदाने मेदोनिदानं श्लोक. ५ वा.

**कर्णयोः, शङ्खयोर्निस्तोदः, कषायास्यताऽऽस्यवैरस्यं वा, मुखतालुकण्ठशोषः, पिपासा, हृदयग्रहः, शुष्कच्छर्दिः, शुष्ककासः, क्षवथूद्गारविनिग्रहोऽन्नरसखेदः, प्रसेकारोचकविपाकाः, विषादजृम्भाविनामवेपथुश्रमभ्रमप्रलापप्रजागरणरोमहर्षदन्तहर्षास्तथोष्णाभिप्रायता, निदानोक्तानामनुपशयो विपरीतोपशयश्चेति वातज्वरस्य लिङ्गानि स्युः ॥ १८ ॥**

लिङ्गान्याह—तद्यथा विषमेत्यादि ।—तदिति सामान्येन स्त्रीपुंनपुंसकलिङ्गवक्ष्यमाणरूपप्रत्यवमर्शकम्, सर्वलिङ्गप्रत्यवमर्षे हि 'तद्' इति सर्वनाम युक्तम् । यथेत्युदाहरणे । आरम्भ उत्पादः, विसर्गो मोक्षः, तौ विषमौ यस्य स विषमारम्भविसर्गी विषमत्वंच कदाचिच्छिरो गृहीत्वा भवति, कदाचित्पृष्ठं कदाचिच्छङ्खमित्यादि । एवं मोक्षोऽपि कदाचिच्छिरोऽग्रे मुच्यते इति । किंवा, ज्वरारम्भमोक्षकालानवस्थितत्वमेव वैषम्यम् । उष्मणो वैषम्यमिति क्वचिच्छरीरप्रदेशे महानुष्मा क्वचिन्मन्द इत्यादि । तीव्रतनुभावानवस्थानानीति तीव्रभावस्तनुभावश्च ज्वरस्य कालोऽप्रतिनियत इत्यर्थः । एतत्सर्वं वायोरनवस्थितत्वेनोपपन्नम् । यच्च वायोर्जरणान्तनिवसान्तादिषु बलवत्कार्यकर्तृत्वं प्रोक्तम्, तदपि प्रायिकत्वेन ज्ञेयम् । अन्यथा, एतदेवारम्भादिवैषम्यं न स्यात् । यदि कालविशेषेषु जरणान्तादौ शरीरप्रदेशविशेषे च जङ्घादौ प्रतिनियमेन वातकोपः स्यात्, तदा शरीरप्रदेशविशेषे वातस्थाने जङ्घादौ कालविशेषे जरणान्तादौ च वातप्रकोपः प्रायिको ज्ञेयः । एतमेव प्रायिकवातकालमाश्रित्याह—जरणान्त इत्यादि । घर्मान्त इति प्रावृषि मुख्यभावतो ज्वरस्य सततकादेरभ्यागमनं, नित्यानुषक्तस्य त्वतिवृद्धिरिति व्यवस्था । परुषारुणत्वं च नखादिष्वेव प्रव्यक्तमुपलभ्यत इति कृत्वा नखादय इत्युच्यते । त्वग्ग्रहणेनैव वदनग्रहणे लब्धेऽपि वदनग्रहणं वदनत्वचि विशेषेण परुषत्वादिदर्शनार्थम् । क्लृप्तीभावोऽप्रवृत्तिः, सा च योग्यतया मूत्रपुरीषयोरेव नखादिसूक्तयोर्मन्तव्या । किंवा, क्लृप्तीभावो भेदः स्फुटनमिति यावत्, स च नखादीनाम् । चलाश्च काश्चिद्वेदना अचलाश्च काश्चिन्नित्यानुपक्तत्वेनेति चलाचलाः, किंवा, अत्यर्थं चलाश्च चलाचलाः । पिण्डिका जान्वधो जङ्घामध्यमांसपिण्डिका । भग्नं किंचिदवशेषेण च्छिन्नम् । मृदितं पार्श्वावमोटितम् । अवपाटितमेकदेशोत्पाटितम् । अवनुन्नं प्रेरितम् । एषां च भग्नादीनां लोकतएवार्थावगतिः । यतः, लौकिकैरेव एते शब्दाः प्रसिद्धत्वेन तत्र तत्र शास्त्रैरभिधीयन्ते । हन्वोरप्रसिद्धिरिति हन्वोः, खव्यापाराकरणम् । आस्यस्य वैरस्यमिति अरसज्ञता । अन्नरसखेदोऽन्नरसे मधुररसादौ खेदः सर्वरसेष्वनिच्छेत्यर्थः । [1]**किंवा अन्नरसस्य खेटो** वमनमन्नरसखेटः । अरुचिर्वक्ष्यमाणा वक्त्रे प्रविष्टस्यान्नस्यानभ्यवहरणा बोद्धव्या । उष्णाभिप्रायता उष्णप्रियता । निदानोक्तानामनुपशय इति वचनेनैव विपरीत उपशयोऽर्थलब्धोऽपि स्पष्टार्थमुच्यते । किंवा, अर्थापत्तेरनैकान्तिकत्वेन उच्यते । यथा,—नवज्वरे दिवास्वप्ने प्रतिषिद्धेऽर्थापत्त्या पुराणज्वरे दिवास्वप्नः प्राप्नोति, अथच तत्र दिवास्वप्नो न विहित इति अर्थापत्तेरनैकान्तिकत्वमस्ति । निदानोक्तानामित्यत्र 'उक्त'ग्रहणाद्, यदेव निदानत्वेनोक्तम्, तस्यैवानुपशयित्वं दर्शितं, न पुनर्यस्यापाततो निदानत्वं प्रतिभाति । तेन, मदात्ययादौ मद्यादेर्निदानत्वेन प्रतीयमानस्यापि उपशयित्वमेव ॥ १८ ॥

[1] अस्मत्संगृहीतपुस्तके नास्त्येतत् ।

**उष्णाम्ललवणक्षारकटुकाजीर्णभोजनेभ्योऽतिसेवितेभ्यस्तथाऽतितीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारेभ्यश्च पित्तं प्रकोपमापद्यते । तद्यदा प्रकुपितमामाशयादूष्माणमुपसृज्याद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधाय द्रवत्वादग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्निरस्य प्रपीडयत्केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्तयतीति ॥ १९ ॥**

**तस्येमानि लिङ्गानि भवन्ति, तद्यथा—युगपदेव केवले शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा भुक्तस्य विदाहकाले मध्यन्दिनेऽर्धरात्रे शरदि वा विशेषेण, कटुकास्यता, घ्राणमुखकण्ठोष्ठतालुपाकः, ऊष्मा मदो भ्रमो मूर्च्छा पित्तच्छर्दनमतीसारोऽन्नद्वेषः सदनं संस्वेदः प्रलापो रक्तकोठाभिनिर्वृत्तिः शरीरे, हरितहारिद्रत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थमूष्मणस्तीव्रभावोऽतिमात्रं च दाहः, शीताभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्चेति पित्तज्वरलिङ्गानि भवन्ति ॥ २० ॥**

उष्णेत्यादिना पित्तज्वरमाह–तद्यदेत्यादि पूर्ववद्व्याख्येयम् । द्रवत्वादग्निमुपहत्येतिवचनादुष्णस्यापि पित्तस्य द्रवत्वेनाग्निविपरीतेन गुणेनाग्निहन्तृतां दर्शयति । वक्ष्यति हि ग्रहण्यध्याये—"आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" इति बहिः प्रपीडयदितिवचनेन पित्तज्वरे वातज्वर इव न सहसा वह्निक्षेपणं भवति, किंतु शनैः स्तोकक्रमेणेति दर्शयति । युगपदेवेति न वैषम्येण अभ्यागमनमभिवृद्धिर्वेतिच पूर्वेण, युगपदेवेत्यादिना परेण च विशेषेणेत्यन्तेन च ग्रन्थेन संबध्यते । कोठाभिनिर्वृत्तिः शरीर इतिच्छेदः ॥ १९ ॥ २० ॥

**स्निग्धगुरुमधुरपिच्छिलशीताम्ललवणदिवास्वप्नप्रहर्षाऽव्यायामेभ्योऽतिसेवितेभ्यः श्लेष्मा प्रकोपमापद्यते । स यदा प्रकुपितः प्रविश्यामाशयमूष्मणा सह मिश्रीभूयाद्यमाहारपरिणामधातुं रस-**

**नामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्निरस्य प्रपीडयन् केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्तयति ॥ २१ ॥**

स्निग्धेत्यादिना श्लेष्मज्वरमाह । स यदेत्यादि पूर्ववत् कफज्वरेऽपि व्याख्येयम् । ननु, श्लेष्मणः आमाशयः स्थानम्, तत् किं प्रविश्यामाशयमिति वचनेन । नैवम्, श्लेष्मणा उरोऽपि प्रधानं स्थानम् । तेन इहोरःस्थस्यापि श्लेष्मण आमाशयप्रवेशं दर्शयति । यत्तु केवलामाशयस्थितं पित्तम्, तत्र 'आमाशयं प्रविश्य' इति न कृतम्, किंतु, 'आमाशयादुष्माणमुत्सृज्य' इति कृतम् । पित्तं ह्यामाशयप्रविष्टमेव भवति । तच्चामाशयैकदेशस्थं ग्रहणीरूपामाशयैकदेशं वह्निस्थानं स्वस्थानाद्गच्छतीति युक्तम् ॥२१॥

**तस्येमानि लिङ्गानि भवन्ति, तद्यथा—युगपदेव शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा । भुक्तमात्रे पूर्वाह्णे पूर्वरात्रे वसन्तकाले वा विशेषेण, गुरुगात्रत्वमनन्नाभिलाषः श्लेष्मप्रसेको मुखमाधुर्यं हृल्लासो हृदयोपलेपः स्तिमितत्वं छर्दिर्मृद्वग्निता निद्राधिक्यं स्तम्भस्तन्द्रा कासः श्वासः प्रतिश्यायः शैत्यम्, श्वैत्यं च नखनयनवदनमूत्रपुरीषत्वचामत्यर्थं च शीतपिडका भृशमङ्गेभ्य उत्तिष्ठन्ति, उष्णाभिप्रायता, निदानोक्तानामनुपशयो विपरीतोपशयश्चेति श्लेष्मज्वरलिङ्गानि भवन्ति ॥ २२ ॥**

युगपदित्येककालम्, एकदैव कफज्वरे सर्वशरीरव्याप्त्या आगमनमभिवृद्धिर्वा भवतीति दर्शयति । शीतपिडकास्तन्त्रान्तरे श्वेतपिडका उच्यन्ते 'तस्येमानि लिङ्गानि भवन्ति' इत्येतावतैव कफज्वरलिङ्गत्वे लब्धे पुनः श्लेष्मज्वरलिङ्गानि भवन्ति' इतिवचनं किमर्थम् ब्रूमः—'तस्य' इतिपदेन स्वदोषमात्रप्रत्ययमपोऽपि स्यात्, तेन, दोषलिङ्गतैव[1] परं लिङ्गानां सा स्यादित्येतदर्थं पुनरभिधानम् । किंवा, पूर्वप्रतिज्ञया लिङ्गानां प्रागवच्छेद उक्तः, उत्तरेण श्लेष्मज्वरलिङ्गानि भवन्तीत्यनेनान्त्यावच्छेदउच्यते । एवमन्यत्रापि वातज्वरादौ पूर्वरूपे च पुनरुक्तिः परिहर्त्तव्या ॥ २२ ॥

**विषमाशनादनशनादन्नपरिवर्तादृतुव्यापत्तेरसात्म्यगन्धोपघ्राणाद्विषोपहतस्य चोदकस्योपयोगाद् गरेभ्यो गिरीणां चोपश्लेषात्, स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत्प्रयोगात्, मिथ्यासंसर्जनाद्वा स्त्रीणां च विषमप्रजननात्, प्रजातानां च मिथ्योपयोगात्, यथोक्तानां च हेतूनां मिश्रीभावाद्यथानिदानं द्वन्द्वानामन्यतमः सर्वे वा त्रयोदोषा युगत्प्रकोपमापद्यन्ते, ते प्रकुपितास्तयैवानुपूर्व्या ज्वरमभिनिर्वर्तयन्ति ॥२३॥**

विषमाशनादिना द्वान्द्विकसान्निपातिकज्वरानाह । अनशनं यद्यपि न पित्तश्लेष्मकरम्, तथापि, अग्निमान्द्यकरत्वात्त्रिदोषकरमपि भवति किंवा, एषु विषमाशनादिषु यथायोग्यतया द्वन्द्वकारणत्वं त्रिदोषकारणत्वं चोन्नेयम् । तेन अनशनं वातपित्तकरं बोध्यम् । यत्तु पित्तहरत्वमुक्तमनशनस्य, तत्तु द्रवांशक्षयात् । वचनं हि—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति । अन्नपरिवर्तादिति सहसैवाक्रमेण कृताभ्यस्तान्नपरिवर्त्तात् । असात्म्यगन्धोपघ्राणादसात्म्यगन्धद्रव्यस्य नासिकयान्तःप्रवेशाद्[1] यथा दोषकरो भवति, न तथा असात्म्यरूपादयः । ते हि नावश्यं शरीरं विशन्ति । तेन नेहासात्म्यरूपादय उक्ताः । यथानिदानमिति, यदा द्वयोर्निदानं सेव्यते, तदा द्वन्द्वः, यदा त्रयाणाम् तदा त्रयो दोषाः । द्वन्द्वेऽपि यदा वातपित्तयोर्निदानं सेव्यते, तदा वातपित्तरूपं द्वन्द्वम् । एवमन्यदपि कुप्यतीत्यर्थः । सर्वे त्रयो दोषा इत्यनेन लब्धेऽपि 'युगपद्' इतिवचनं क्रमप्रकोपप्रतिषेधार्थम्, युगपदेव प्रकोपमापद्यन्ते न क्रमेणेत्यर्थः ॥ २३ ॥

**तत्र यथोक्तानां ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनाद्द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं च विद्यात् ॥ २४ ॥**

ज्वरलिङ्गानामित्यादौ मिश्रीभावविशेषा वातपित्तलिङ्गं वातश्लेष्मलिङ्गं वा पित्तश्लेष्मलिङ्गं वा । अन्यतममिति वातपित्तज्वरादिकम् ॥ २४ ॥

**अभिघाताभिषङ्गाभिचाराभिशापेभ्य आगन्तुर्हि व्यथापूर्वोऽष्टमो ज्वरो भवति ॥ २५ ॥**

आगन्तुज्वरमाह—अभिघातेत्यादि ।—अभिघातो लगुडाद्यभिघातः । अभिषङ्गः कामाद्यभिषङ्गः[2] । अभिचारोऽथर्वमन्त्रादिः ज्वरकरः । अभिशापस्तु गुरुसिद्धाद्यभिशपनम् । एतत् प्रधानत्वेन चतुर्विधं कारणमिहोक्तम् । तेन ओषधिगन्धभूताभिषङ्गदुष्टग्रहनिरीक्षणादयोऽप्यागन्तुज्वरहेतवो बोद्धव्याः । किंवा, अभिघातग्रहणेन शरीराभिहननवाचिनोऽसात्म्यगन्धादयो ग्राह्याः । अभिषङ्गेण तु भूताभिषङ्गादयः व्यथापूर्वमिति आगन्तौ प्रथमं व्यथा भवति, पश्चाद्दोषानुबन्धकृतानि लक्षणानीति दर्शयति । किंवा, 'व्यथापूर्वम्' इतिवचनात् आगन्तौ ज्वरे व्यथैव पूर्वरूपमिति वदन्ति । रूपंतु यदेव ज्वरस्य प्रात्यात्मिकं सन्तापरूपम्, तदेव वातज्वरादिलक्षणरहितं बोद्धव्यं प्रथमतः, उत्तरकालीनदोषानुबन्धे तु यथावक्ष्यमाणदोषलिङ्गान्येव भवन्ति । अष्टम इति-

[1] दोषलिङ्गतैव परं, श्लेष्मलिङ्गतैव परं ननु श्लेष्मज्वरलिङ्गतेति भावः ।

[1] प्रवेशकरणादिति पाठः । [2] कामक्रोधादिषट्विकारकृतपराभवइत्यर्थः । त्वभिषगः पराभव इत्यमरः ।

वचनेनाभिघातादिहेतुचतुष्टययोगप्राप्तं चातुर्विध्यं निषेध्य व्यथापूर्वकत्वेनैकरूपयोगादेकविधत्वं चतुर्णां दर्शयति । चातुर्विध्ये ह्यागन्तोर्नाष्टमत्वम्, नवमत्वादयोऽपि स्युः ॥ २५ ॥

**स किंचित्कालमागन्तुः केवलो भूत्वा पश्चाद्दोषैरनुबध्यते तत्राभिघातजो वायुना दुष्टशोणिताधिष्ठानेन, अभिषङ्गजः पुनर्वातपित्ताभ्याम् अभिचाराभिशापजौ तु सन्निपातेनानुबध्येते ॥ २६ ॥**

किंचित्कालमिति स्तोककालम् । केचित् 'त्र्यहम्' अन्ये 'सप्ताहम्' आहुः । आगन्तौ सप्ताहादूर्द्ध्वं दोषलिङ्गानि भवन्तीति दृष्टम् । तस्य, यस्यागन्तोर्यादृशो दोषानुबन्धोऽस्ति, तमाह—तत्राभिघातेत्यादि ।—वातपित्ताभ्यामिति कश्चिद्वातेन, कश्चित्पित्तेन, कश्चिद्वातपित्ताभ्याम् । वचनं हि—"कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः । भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः" इति । भूताभिषङ्गे तु यद्यपि त्रिदोषप्रकोप उक्तस्तथापि तत्र वातपित्तयोरेवैतद्वचनात्प्राधान्यम् ॥ २६ ॥

**स सप्तविधाज्ज्वराद्विशिष्टलिङ्गोपक्रमसमुत्थानत्वाद्विशिष्टो वेदितव्यः, कर्मणा साधारणेन चोपक्रम्यत इत्यष्टविधा ज्वरप्रकृतिरुक्ता ॥ २७ ॥**

आगन्तोर्निजाद्भेदमाह—स इत्यादि ।—विशेषलिङ्गता आगन्तोर्व्यथापूर्वव्याख्यानव्याकृता । समुत्थानविशेषोऽपि अभिघातादिरुक्तः । उपक्रमविशेषस्तु "साधारणेन कर्मणा चोपचर्यते" इति वचनेनैवात्र कथ्यते । साधारणेनेति दैवयुक्तिव्यपाश्रयेण । दैवव्यपाश्रयं हि बलिमङ्गलहोमादि, युक्तिव्यपाश्रयं हि लघ्वशनापतर्पणयवागूकषायपानादि । प्रकृतिरुक्तेति स्वभावोऽपि वातादिज्वराणां निदानाद्युपाहित उक्त इत्यर्थः ॥ २७ ॥

**ज्वरस्त्वेकएव सन्तापलक्षणस्तमेवाभिप्रायविशेषात्त्रिविधमाचक्षते निजागन्तुकविशेषाच्च । तत्र निजं द्विविधं त्रिविधं चतुर्विधं सप्तविधंचाहुर्भिषजो वातादिविकल्पात् ॥ २८ ॥**

निजागन्तुविशेषाच्च द्विविधमिति संबन्धः । निजं द्विविधमित्यादौ द्वैविध्यं संसृष्टासंसृष्टजन्यत्वेन शीतोष्णाभिप्रायभेदात् । त्रिविधं दोषभेदात् । चतुर्विधं प्रत्येकं वातादिदोषजन्यत्वभेदात् । तत्र चातुर्विध्ये द्वन्द्वज्वराः प्रतिक्षिप्यन्ते, तेषां प्रत्येकं वातादिज्वरसदृशत्वात् त्रिदोषज्वरस्तु असाध्यतायोगात् कृच्छ्रसाध्यतायोगाद्वा पृथगुच्यते ॥ २८ ॥

१ त्रयोमला भूताभिषङ्गात्कुप्यन्तीतिभूतप्रभावात् । भूतसामान्यलक्षणाइति यस्यभूतस्य देवग्रहादेरभिषङ्गात्कुप्यन्ति तस्य यल्लक्षणं रोदनादितेनसामान्यं सदृशं लक्षणं येषां ते तथा । दोषलक्षणानि भूतलक्षणानिभवन्तीत्यर्थः । इति माधवनिदानटीकायां विजयरक्षितः। २ स सप्तविधज्वरादित्यत्र सप्तविधज्वर इति पाठः ।

**तस्येमानि पूर्वरूपाणि भवन्ति,—तद्यथा—मुखवैरस्यं गुरुगात्रत्वमनन्नाभिलाषश्चक्षुषोराकुलत्वमस्रागमनं निद्राधिक्यमरतिः जृम्भा विनामो वेपथुः श्रमभ्रमप्रलापजागरणरोमहर्षदन्तहर्षाः शब्दशीतवातातपसहत्वासहत्वमरोचकाविपाकौ दौर्बल्यमङ्गमर्दः सदनमल्पप्राणता दीर्घसूत्रतालस्यमुचितस्य कर्मणो हानिः प्रतीपता स्वकार्येषु गुरूणां वाक्येष्वभ्यसूयाः बालेभ्यः प्रद्वेषः स्वधर्मेष्वचिन्ता माल्यानुलेपनभोजनपरिक्लेशनं मधुरेभ्यश्च भक्ष्येभ्यः प्रद्वेषोऽम्ललवणकटुकप्रियता चेति ज्वरस्य पूर्वरूपाणि भवन्ति प्राक्सन्तापात्, अपि चैनं सन्तापार्तमनुवध्नन्ति ॥ २९ ॥**

**इत्येतान्येकैकशो ज्वरलिङ्गानि व्याख्यातानि भवन्ति विस्तरसमासाभ्याम् ॥ ३० ॥**

तस्येमानीत्यादिना सर्वज्वरसाधारणं पूर्वरूपमाह । एतानि च पूर्वरूपाणि आगन्तोरपीत्येके वदन्ति । अन्ये तु निजानामेवैतानि वदन्ति, आगन्तोस्तु व्यथैव पूर्वम् । अत्राप्यनन्नाभिलापारोचकयोः पूर्ववद्भेदः दौर्बल्यं शरीरमात्रबलहानिः अल्पप्राणता च मानसबलहानिर्बोद्धव्या । किंवा, दौर्बल्यं मांसापचयः । दीर्घसूत्रता चिरेण कार्यकर्तृत्वम् । ज्वरपूर्वरूपाणि भवन्ति प्राक्सन्तापादितिच्छेदः, ज्वरपूर्वरूपसन्तापात्प्रागेतानि पूर्वरूपाणि भवन्तीत्यर्थः । अपिच सन्तापार्तमनुवध्नन्तीत्यनेन प्रव्यक्तेऽपि ज्वरे कानिचित्पूर्वरूपाणि मुखवैरस्यारुच्यादीनि भवन्तीति । न चैवं पूर्वरूपानुवृत्ते रिष्टत्वं वाच्यम्, यतः, सर्वपूर्वरूपाणामतिमात्रानुवर्तनं रिष्टमुक्तम् । वचनं हि—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः" इति । किंवा, अस्य श्लोकस्यान्य एवार्थः, तमिन्द्रिये वक्ष्यामः । न चारुच्यादीनां व्यक्तज्वरभावित्वेन पूर्वरूपत्वं हन्यते । यतः, लिङ्गान्तरयुक्तानि अरुच्यादीनि लिङ्गानि भवन्ति । लिङ्गान्तरविरहितानि तु पूर्वरूपाणि । एकैकशो ज्वरलिङ्गानीत्यत्र 'लिङ्ग'शब्देन निदानपूर्वरूपादीन्युच्यन्ते । विस्तरसमासाभ्यामिति विस्तरेण वातादिज्वरा उक्ताः, समासेन संसर्गसन्निपातजाः । यस्त्वत्र समासेनोक्तः, स चिकित्सिते प्रपञ्चनीय इति भावः ॥ २९ ॥ ३० ॥

**ज्वरस्तु खलु महेश्वरकोपप्रभवः सर्वप्राणिनां प्राणहरः देहेन्द्रियमनस्तापकरः, प्रज्ञाबलवर्णहर्षो-**

१ शब्दशीतेतिवाऽन्यपाठः । २ इन्द्रियस्थाने पञ्चमाध्याये अस्य श्लोकस्य व्याख्यानं 'पूर्वरूपाणि इत्यादिना 'तस्यापि मरणं ध्रुवं' इत्यन्तेन सर्वव्याधिसाधारणंरिष्टमुक्तमसर्वाणीति समस्तानि । अतिमात्रया अत्युल्वणत्वेन । ज्वरपुरःसर इति ज्वरान्तरभावीति टीकाकृताकृतम् ।

**त्साहह्रासकरः श्रमक्लममोहाहारोपरोधसंजननो ज्वरयति शरीराणीति ज्वरः, नान्ये व्याधयस्तथा दारुणा बहूपद्रवा दुश्चिकित्साश्च यथाऽयमिति । स सर्वरोगाधिपतिर्नानातिर्यग्योनिषु च बहुविधैः शब्दैरभिधीयते । सर्वप्राणभृतश्च सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते, स महामोहः । तेनाभिभूताः प्राग्दैहिकं देहिनः कर्म किंचिदपि न स्मरन्ति, सर्वप्राणभृतां ज्वरएवान्ते प्राणानादत्ते ॥ ३१ ॥**

संप्रति ज्वरस्य महाप्रभावतां दर्शयितुं पूर्वोत्पत्तिप्रकारान्तरंचाह—ज्वरस्त्वित्यादि ।—'महेश्वरकोपप्रभवः' इति, ज्वरचिकित्सिते "द्वितीये हि युगे शर्वमक्रोधव्रतमास्थितम्" इत्यादिग्रन्थे वक्ष्यमाणां ज्वरोत्पत्तिमाह । क्रोधभवत्वेन च श्लेष्मजन्यस्याप्याग्नेयत्वं दर्शयति । क्रोधो ह्यग्निरूपः, तेन, तन्मयोऽपि ज्वरस्तथैव; अतएवोक्तम्—'ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना । तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्" इति । न च रुद्रकोपभवत्वेन लोभाभिद्रोहप्रभवत्वं ज्वरस्य विरुध्यते । यतः, रुद्रकोपोद्भूत एव ज्वरो लोभाभिद्रोहस्वरूपपापाचारप्राप्त्या पुरा मनुष्येषु भूतः सर्वप्राणिनां ज्वर एव प्राणहर इति, मरणकाले सर्वप्राणिनां ज्वर एव प्राणहर इति दर्शयति । देहेन्द्रियमनस्तापकर इत्यत्र प्रत्येकं तापलक्षणं ज्वरचिकित्सिते बोद्धव्यं "वैचित्त्यमरतिर्ग्लानिर्मनःसन्तापलक्षणम्" इत्यादिना ज्वरयति सन्तापयति । 'इति' शब्दो हेतौ । तेन, यस्मादुक्तमहेश्वरक्रोधप्रभवत्वादियुक्तः, तस्मात्सर्वरोगाधिपतिरिव रोगाधिपतिः । नानाविधैः शब्दैरिति हस्तिषु पाकलो गोषु खेरिको मत्स्यानामिन्द्रजालो विहङ्गानां भ्रामरक इत्यादिशब्दैः । सर्वप्राणभृतः सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते । तत्किमिति तेषां जन्मनि मरणे वा सन्तापात्मा ज्वरो न लक्ष्यत इत्याह—स महामोह इति, जन्ममरणयोर्महामोहरूपो ज्वरो भवति, न सन्तापात्मेत्यर्थः । अतएवोक्तम्—"ज्वरप्रभावो जन्मादौ निधने च महत्तमः" इति । जन्मनि महामोहतामाह—तेनेत्यादि । प्राग्दैहिकं जन्मान्तरकृतम् । ननु शुद्धसत्त्वानुगमात् प्राग्दैहिकं स्मरणं युक्तम् । वचनं हि—"यदा तेनैव सत्त्वेन मनसा युज्यते, तदा जातिमतिक्रान्तामपि स्मरति" इति । न, तस्य शुद्धमनःसत्त्वानुवृत्तेरपवादत्वादेतत्परित्यज्यान्यत्र ज्वरस्य प्राग्दैहिकंविस्मारकत्वं ज्ञेयम् । मरणे महामोहतामाह—सर्वप्राणभृतामित्यादि ।—ज्वर एव महामोह एवेति भावः । तेन, म्रियमाणाः सर्वे महामोहं प्रविशन्तीत्यर्थः ॥ ३१ ॥

**तत्र पूर्वे रूपदर्शने ज्वरादौ वा हितं लघ्वशनमपतर्पणं वा ज्वरस्यामाशयसमुत्थत्वात् । ततः कषायपानाभ्यङ्गस्नेहस्वेदप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्मधूपधूमपानांजनक्षीरभोजनविधानं च यथास्वं युक्त्या प्रयोज्यम् ॥ ३२ ॥**

संप्रति सूत्रितं चिकित्सासूत्रमाह—तत्रेत्यादि ।—यद्यपि चिकित्सिते ज्वरादौ लङ्घनं वक्ष्यति, तथापीह पाक्षिकलघ्वशनविधानं न विरोधि, लघ्वशनस्यापि लाघवकर्तृत्वेनैव लङ्घनत्वात् । किंवा, यत्र वातादिज्वरे लङ्घनं न कर्तव्यम्, तत्र लघ्वशनं बोद्धव्यम्, अपतर्पणं च लङ्घनमेव । अथ किमिति वातिकेऽपि वातकारकं लघ्वशनमपतर्पणं वा कार्यमित्याह—आमाशयसमुत्थत्वादित्यादि ।—आमाशयसमुत्थत्वेन वातोऽपि मनागलङ्घनीयः स्थानापेक्षया भवतीति भावः । वचनं हि—"जयेद्धि पूर्वं स्थानस्य विरुद्धं च" इति ॥ ३२ ॥

**जीर्णज्वरेषु तु सर्वेष्वेव सर्पिषः पानं प्रशस्यते, यथास्वौषधसिद्धस्य, सर्पिर्हि स्नेहाद्वातं शमयति, संस्कारात् कफम्, शैत्यात्पित्तमुष्माणं चोपशमयति, तस्माज्जीर्णज्वरेषु सर्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येष्विति ॥ ३३ ॥**

यथास्वौषधसिद्धस्येति वातादिज्वरे वातज्वरादिहरद्रव्यसिद्धस्य । कथं सर्पिः सर्वत्र कार्यमित्याह—सर्पिर्हिस्नेहादित्यादि ।—संस्कारात्कफमिति कटुतिक्तादिकफहरसंस्कारात् । यद्यपि च यथास्वौषधसिद्धस्येति वचनात् वातेऽपि वातहरसंस्कृतमेव सर्पिर्विहितम्, तथापि वाते रूक्षविपरीतेन स्नेहेनापि सर्पिर्वातहरमेव, पित्तेऽपि उष्णविपरीतशैत्यान्वितम्, कफे तु सर्पिषा स्नेहशैत्यादिना समानेन कश्चित्र स्वाभाविको विरोधिगुणोऽस्ति, किंतु संस्कारादितमेव दर्शयति । ऊष्माणं चेति ज्वरप्रभावभूतमूष्माणम्, न पित्तोष्माणम्, तस्य पित्तग्रहणेनैव ग्रहणात् । अनेन ज्वरस्योष्महरणेन सर्पिषो ज्वरव्याधिप्रत्यनीकत्वं दर्शितं भवति । अत्र वातशमनं सर्पिषोऽभिधाय पित्तशमनेऽभिधातव्ये कफशमनमुच्यते शैत्यतो वक्तव्योष्मरूपव्याधिप्रत्यनीकतयाऽपि पित्तशमनहेतोः शैत्यस्य समानगुणत्वात् । यदि त्विह मध्ये पित्तप्रशमनमुच्यते, तदा पुनः संस्कारात्कफमित्युक्त्वा शैत्यादूष्माणमिति वक्तव्यं स्यात् । यत्र तु श्लोकपाठे प्रत्यनीकत्वं घृतस्य पृथङ्नोक्तम्, तत्र, "स्नेहाद्वातं शमयति" इत्यादौ वातमनु पित्तमेव कृतमिति साधु कृतम् । तस्मादिति दोषव्याधिप्रत्यनीकत्वात् । 'जीर्णज्वर' इति वचनेनामज्वरे निषेधयति । सामे हि समानगुणत्वात्सर्पिरहितम् । शान्तिमिति सन्तापशान्तिम् । अभिप्रेत्येति बुद्ध्या स्वीकृत्य, तथा जीर्णज्वरे घृतं ददातीति शेषः । नन्वत्र, श्लोके सर्पिर्गुणकथने किमिति व्याधिरूपोष्मशमनं नोच्यते ब्रूमः ।—पित्तोष्माव्यतिरिक्तत्वेन

१ प्रज्ञाबलवर्णहर्षोत्साहसादनः इति पाठः ।

१ सर्पिर्हितमिति वाऽन्यः पाठः ।

ज्वरोष्मणः पित्तशमनेनैव लब्धत्वात् । ननु यद्येवम् गद्यपाठे पृथङ् न पठनीय ऊष्मा ब्रूमः—यावानूष्मा शारीरः, स पैत्त एव । यतो ब्रूते—"ऊष्मा पित्तादृते नास्ति" इति, तथा, 'पित्तादूष्मणः पक्तिर्नराणामुपजायते" इति । किंतु, नासावूष्मा कदाचिदिपित्तेन साम्येऽप्येको भवति, यथा—कफज्वरे कदाचित्त्वधिके पित्ते वह्निरूपऊष्मा मन्दो भवति, यथाच—पित्ताग्निमान्द्ये । तदेवमूष्मा पित्ताद्भिन्नोऽभिन्नश्च भवति । तत्र भेदं गृहीत्वा गद्यपाठे पृथग् ज्वरोष्मा पठितः, श्लोकपाठे त्वभेदविवक्षया न पृथक् पठितः । ज्वरे तु पित्तोष्मा ज्वरप्रभावेण वर्तते, स च प्रभावो ज्वरस्य दोषदूष्यविशेषात्मकस्य, तथा "रुद्रकोधोद्भूतत्रिपादत्रिशिराः" इत्याद्युक्तप्राणिविशेषस्य ज्ञेयः । ननु सर्पिः कथं पित्तं हन्ति यतः, यथा पित्तविपरीतशैत्यं सर्पिषि, तथा पित्तसमानः स्नेहोऽप्यस्ति । मैवम् । पित्तं सस्नेहमित्यत्र ईषदर्थेन 'सशब्देनाल्पस्य स्नेहस्याभिधानात्, उष्णत्वं तु पित्ते प्रधानम् । यद्यपि पित्तं जलेनाप्यारब्धम्, तथापि तत्र शैत्यमभिभूयाग्निकृतमौष्ण्यमेवाधिकं भवति तथा तेजसो रौक्ष्येण जलकृतस्नेहोऽपि पित्तेऽभिभूयते, द्रवत्वं तु जलकृतं तेजसा नाभिभूयते । दृश्यते ह्यग्निसंपृक्तजले द्रवत्वमल्पस्नेहता उष्णता चेति । किंवा, किमनेन तप्तजलदृष्टान्तेन, अदृष्टकृत एवायं भूतानामुत्पादः । तेन, कश्चिदेव गुणः पाञ्चभौतिकत्वेऽपि द्रव्याणामाविर्भूतो भवति, नतु सर्वः । यथा—शालिषु तोयकृतं मधुरत्वम्, न तु गौरवमित्युक्तं सूत्रस्थाने । उत्सर्गतः सस्नेहस्यापि पित्तस्य कदाचित्तेजोभूयस्त्वेन रूक्षत्वमपि भवति जीर्णज्वरे । तेन, सस्नेहशीतं सर्पिर्हितं तत्र भवतीति न दोषः । अतएवोक्तं चिकित्सिते—"रूक्षं तेजोज्वरकरम्" इत्यादि । न च वाच्यम्—यथा सांसिद्धिकमपि चेत्पित्तस्य स्निग्धत्वमपैति तथा वातस्यापि रौक्ष्यं किमिति[2] नापैतीति यतो विचित्रा एव हि गुणा अप्रतिक्षेपणीयाः प्रतिक्षेपणीयाश्च । तत्र ये न सर्वदा दृश्यन्ते वातशैत्यपित्तस्नेहादयः, त एव प्रतिक्षेपणीयाः, नान्ये, तथैव दृष्टत्वात् ॥ ३३ ॥

भवन्ति चात्र ।

**यथा प्रोज्वलितं वेश्म परिषिंचन्ति वारिणा ।**
**नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतम् ॥३४॥**
**स्नेहाद्वातं शमयति शैत्यात्पित्तं नियच्छति ।**
**घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत्कफम् ॥ ३५ ॥**
**नान्यः स्नेहस्तथा कश्चित्संस्कारमनुवर्त्तते ।**
**यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम् ॥ ३६ ॥**

तुल्यगुणमिति सर्वथा तुल्यगुणम् । ननु संस्कारात्कफहन्तृत्वे संस्कारेणैव कफो हन्यते, कस्तत्र सर्पिषो व्यापार इत्याह—नान्य इत्यादि ।—नान्य इति तैलादिः । संस्कारमनुवर्त्तत इति संस्कारकद्रव्यकार्यं करोति । तेनैतद्दर्शयति—यत्—तेनैव द्रव्येण यादृशानेन घृतं संस्क्रियते, अन्यश्च तैलादिस्तथैव संस्क्रियते, तदा घृतमेवान्यस्नेहेभ्यो विशेषेण संस्कारकद्रव्यकार्यं करोति ।—अयं घृतप्रभावोऽधिकः तेन, संस्कारात्कफविजये घृतमेव कर्तव्यमित्यर्थः । प्रपंचितश्चायमर्थः स्नेहाध्याये ॥ ३४—३६ ॥

**गद्योक्तो यः पुनः पद्यैरर्थः समनुगीयते ।**
**तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गर्ह्यते ॥ ३७ ॥**

ननु स्नेहाद्वातं शमयतीत्यादिग्रन्थो गद्येनैवोक्तः, तत्किमर्थं श्लोकनोच्यते इत्याह—गद्योक्तो य इत्यादि ।—तद्व्यक्तिव्यवसायार्थमिति, तद्व्यक्तिर्गद्योक्तार्थस्य व्यक्तिः प्रसन्नतेति यावत् । व्यवसायोऽध्यवसायो ग्रहणमित्यर्थः । यस्मात्पूर्वोक्तार्थस्य स्वीकरणार्थं पुनः श्लोकेनाभिधानम्, तस्मात्प्रयोजनान्तरयुक्तत्वान्न पुनरुक्तिदोष इति भावः । गद्योक्तापेक्षया श्लोकाभिधानं सुखग्रहणं भवतीति लोकसिद्धमेव । अत्र च गद्योक्त इत्युपलक्षणम्, तेन, श्लोकोक्तोऽपि श्लोकेनोच्यते इति बोद्धव्यम् । यथा—आरग्वधीये । एवं गद्योक्तोऽपि गद्येनेति बोद्धव्यम् यथा—प्रपञ्चेन कारणाद्यभिधायोक्तमेव "असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च" । इत्यादि तथा श्लोकेनोक्तोऽपि गद्येनोच्यते यथा—"ब्रह्मणा हि यथा प्रोक्तम्" इत्यादि श्लोकेनाभिधाय आद्येऽध्याये । पुनरन्यत्रोक्तम्—"य मायुर्वेदमश्विनौ मह्यं प्रायच्छेताम्" इत्यादि । अत्र श्लोकाभिधानमेव सुखग्रहणार्थमिति ज्ञेयम् । किंवा, तद्व्यक्तिव्यवसायार्थमिति यथायोग्यतया बोद्धव्यम् । तेन, प्रपञ्चाभिधानमनुवृत्त्यर्थं बोद्धव्यम्, संक्षेपाभिधानं तु व्यवसायार्थम्, । तेन, गद्यश्लोकाभिधानाभ्यां व्यक्तिव्यवसायौ क्रियेते । तत्र प्रपंचाभिधाने अर्थस्य व्यक्तिः स्फुटतैवेति, संक्षेपाभिधानं तु प्रपञ्चापेक्षया सुखग्रहणं भवति ॥ ३७ ॥

तत्र श्लोकाः ।

**त्रिविधं नामपर्यायैर्हेतुं पंचविधं गदम् ।**
**गदलक्षणपर्यायान्व्याधेः पंचविधं ग्रहम् ॥**
**ज्वरमष्टविधं तस्य प्रकृष्टासन्नकारणम् ।**
**पूर्वरूपं च रूपं च भेषजं संग्रहेण च ॥**
**व्याजहार ज्वरस्याग्रे निदाने विगतज्वरः ।**
**भगवानग्निवेशाय प्रणताय पुनर्वसुः ॥ ३८ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । निदानस्थाने ज्वरनिदानं नाम प्रथमोऽध्यायः ॥**

संग्रहे यद्यपि हेतुपर्यायाः पूर्वमुक्तास्तदनु हेतुत्रैविध्यम्, तथापि छन्दोऽनुरोधेन तद्विपर्ययकथनम् । नामरूपा योगरूढाः पर्याया नामपर्यायाः । पञ्चविधं गदमित्यामेयादिभेदेन । पर्यायनामानीति पाठे लिङ्गपर्यायाभिधानम् । तस्य, व्याधिप-

१ ननु यद्येवं ज्वरोष्मणः पित्तोष्माव्यतिरिक्तत्वं स्यात्तर्हि गद्यपाठे पृथङ् न पठनीय उष्मेति योजना । २ किमपीति वाऽन्यः पाठः ।

ग्रविधग्रहशब्देनैव "तस्योपलब्धिः" इत्यादिग्रन्थान्तर्निविष्ट-सकलार्थस्य गृहीतत्वात् । गदलक्षणपर्यायानिति पाठे तु पूर्वपक्षो नास्त्येव । पाठस्तु नायमतिप्रसिद्धः । प्रकृष्टासन्नकारणमिति ज्वरस्य रूक्षादि प्रकृष्टम्, आसन्नं वातादि, तथा प्रकृष्टं रुद्रकोपः, आसन्नं तु रूक्षादि[1] यद्यपि रूपात्पश्चात्पूर्वरूपमित्युक्तम्, तथापि छन्दोनुरोधात्पूर्वरूपमग्रेकृतम् । किंवा, वातादिजविशिष्टज्वरलक्षणानामव्यक्तानां विशिष्टज्वरपूर्वरूपतां सूचयता पूर्वरूपं पूर्वं कृतम् । वातादिज्वरलक्षणानि ह्यव्यक्तानि पूर्वरूपमेव भवन्ति ॥ ३८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां ज्वरनिदानम् ॥

---

## द्वितीयोऽध्यायः ।

**अथातो रक्तपित्तनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**पित्तं यथाभूतं लोहितपित्तमिति संज्ञां लभते, तथानुव्याख्यास्यामः ॥ ३ ॥**

आद्योत्पत्तौ ज्वरसन्तापाद्रक्तपित्तोत्पत्तेर्ज्वरमनु रक्तपित्तनिदानमुच्यते । 'पित्तं यथाभूतम्' इत्यादिना पित्तमेव अवस्थावशात् लोहितपित्तमित्युच्यते इति दर्शयति, नतु रक्तं च पित्तं च रक्तपित्तमिति ॥ १—३ ॥

**यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते, भृशोष्णतीक्ष्णमपि चान्नजातं निष्पावमाषकुलत्थसूपक्षारोपिहितं दधिदधिमण्डोदश्वित्कट्वराम्लकाञ्जिकोपसेकं वाराहमाहिषाविकमात्स्यगव्यपिशितपिण्याकपिण्डालुशुष्कशाकोपहितं मूलकसर्षपलशुनकरञ्जशिग्रुकमधुशिग्रुखडयूषभूस्तृणसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकोपदंशं सुरासौवीरतुषोदकमैरेयमेदकमधुलकशुक्तकुवलबदराम्लप्रायानुपानं पिष्टान्नोत्तरभूयिष्ठमुष्णाभितप्तो वातिमात्रमतिवेलं पयः पिबति पयसा वा समश्नाति रौहिणीकं वा काणकपोतं वा सर्षपतैलक्षारसिद्धं कुलत्थपिण्याकजाम्बवलकुचपक्वैः शौक्तिकैर्वा सह क्षीरमाममतिमात्रमथवा[2] पिबत्युष्णाभितप्तस्तस्यैवमाचरतः पित्तं प्रकोपमापद्यते, लोहितं च स्वप्रमाणमतिवर्तते । तस्मिन्प्रमाणातिवृत्ते पित्तं प्रकुपितं शरीरमनुसर्पद्यदेव यकृत्प्लीहप्रभवाणां लोहितवहानां स्रोतसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिरुन्ध्यात्[1] तदेव लोहितं दूषयति संसर्गात् ॥ ४ ॥**

'यदा जन्तुः' इत्यादिना निदानमुच्यते । यवको व्रीहिविशेषः । उद्दालो वनकोद्रवः । कोरदूषो यद्यप्यन्नपाने पित्तहर उक्तस्तथापि, अस्य निष्पावादियुक्तस्य संयोगमहिम्ना रक्तपित्तनिदानत्वं ज्ञेयम् । एवमन्यत्रापि रक्तपित्तनिदानत्वेनेह उक्तक्षीरादौ ज्ञेयम् । दधिमण्डो मस्तु, उदश्विदर्धजलं तक्रम् । कट्वरं निर्जलम्, किंवा अम्लं तक्रम् । मधुशिग्रु स्वल्पशोभाञ्जनकम् । खडयूषो[2] रागकर्पूर इति ख्यातः । सुमुखादयः फणिज्झकान्ताः पर्णासभेदाः । उपदंशमिति मूलकादीनि खादयित्वा यावकाद्यन्नं भुङ्क्त इत्यर्थः । मधुलको गोधूमविशेषः । शुक्तः सन्धानविशेषः । पिष्टान्नमुत्तरत्र भोजनस्य भूयिष्ठं यत्र तत्पिष्टान्नोत्तरभूयिष्ठम् । अतिवेलमिति पुनः पुनः । रौहिणीकं रोहिणीशाकम् । शौक्तिकैरिति बदरीफलैः । आममित्युत्तरेण सम्बध्यते । स्वप्रमाणमतिवर्तते प्रवर्द्धत इत्यर्थः । यदेवेत्यनेन, एवमपि कुपितस्य पित्तस्य य एवांश उक्तसम्प्राप्तिमान् भवति, स एव रक्तं दूषयति, नान्य इति दर्शयति । लोहिताभिष्यन्दगुरूणि प्रवृद्धलोहितस्यन्देन गुरूणि उत्सन्नानि विवृतानीति यावत् । प्रतिरुन्ध्याद्वृद्धेन शोणितेनेति शेषः । प्रतिपद्यत इति पाठपक्षे तु शोणितमिति शेषः, शोणितं प्रतिपद्यत इत्यर्थः । यकृत्प्लीहप्रभवाणामित्यस्य विशेषणं—'लोहितवहानाम्' इति । चकारोऽवधारणे । वक्ष्यति च चिकित्सिते,—"प्लीहानं च यकृच्चैव तदधिष्ठाय वर्तते । स्रोतांसि रक्तवहानि तन्मूलानि हि देहिनाम्" इति ॥ ४ ॥

**संसर्गाल्लोहितप्रदूषणाल्लोहितगन्धवर्णानुविधानाच्च पित्तं लोहितपित्तमित्याचक्षते ॥ ५ ॥**

एवं रक्तदूषके पित्ते यथा 'रक्तपित्त'संज्ञा भवति, तदाह—संसर्गादित्यादि ।—संसर्गाल्लोहितसंबंधात् । लोहितगन्धवर्णानुविधायित्वादिति लोहितसदृशगन्धवर्णयुक्तत्वात् । एतेन, रक्तयुक्तं पित्तं 'रक्तपित्तम्' इति प्रथमा निरुक्तिः । रक्ते दूष्ये पित्तमिति द्वितीया, रक्तवत्पित्तं रक्तपित्तमिति तृतीया दर्श्यते । उक्तं च चिकित्सिते—"संसर्गाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः । रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः" । एतदेव च रक्तपित्तस्य सामान्यं लक्षणम्—यद्—'रक्तगन्धवर्णानुविधानम्' । विशेषलक्षणं तु ऊर्द्ध्वादिभे-

---

१ रूक्षादीति रूक्षं वातकरं रूक्षद्रव्यं, आदिशब्देन पित्तादिकरमुष्णादिद्रव्यग्रहणमिति । २ क्षीरमतिमात्रमति वेति वाऽन्यः पाठः ।

१ प्रतिपद्यते इति वाऽन्यः पाठः । २ खडो द्विविधः—सतक्रशमीधान्य एकः, सतक्रशाकश्चापरः । तत्राद्यः—"सशमीधान्यान्सस्नेहान्साम्लान्सांग्राहिकान्खडान्" इत्युक्तलक्षणः । सतक्रशाकस्तु—"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूषोऽयम्" इति शिवदासः ॥

देन कफादिसम्बन्धादेवेह बोद्धव्यम् । चिकित्सितेऽपि "सान्द्रं सपाण्डु" इत्यादि लक्षणं वक्ष्यति ॥ ५ ॥

**तस्येमानि पूर्वरूपाणि भवन्ति, तद्यथा—अनन्नाभिलाषो भुक्तस्य विदाहः शुक्ताम्लगन्धरस उद्गारश्छर्देरभीक्ष्णागमनं छर्दितस्य वीभत्सता स्वरभेदो गात्राणां सदनं परिदाहो मुखाद्धूमागम इव लोहलोहितमत्स्यामगन्धित्वमपि चास्यस्य[१] रक्तहरितहारिद्रवत्त्वमङ्गावयवशकृन्मूत्रस्वेदलालासिङ्घाणकास्यकर्णमलपिडकोलिकापिडकानामङ्गवेदना लोहितनीलपीतश्यावानामर्चिष्मतां च रूपाणां स्वप्ने दर्शनमभीक्ष्णमिति लोहितपित्तपूर्वरूपाणि भवन्ति ॥६॥**

**उपद्रवास्तु खलु दौर्बल्यारोचकाविपाकश्वासकासज्वरातीसारशोफशोषपाण्डुरोगाः स्वरभेदश्च ॥ ७ ॥**

पूर्वरूपे छर्दितस्य वीभत्सता वैवर्ण्यवैगन्ध्यादियोगात् । पिडकोलिका नेत्रमलाः । अङ्गवेदना अङ्गमर्दः । व्याधेरसाध्यस्य कृच्छ्रसाध्यस्य वा धर्मस्य ख्यापकान् लिङ्गविशेषानुपद्रवाख्यानाह—उपद्रवास्त्वित्यादि ।—तेनोपद्रवस्य लिङ्गभूतत्वेन निदानपञ्चकातिरिक्तत्वम् । रक्तपित्ते चैते उपद्रवाः प्रायोभावित्वेन नियता इत्यभिधीयन्ते । ज्वरे तूपद्रवा नियता न सन्ति, तेन तत्र नोक्ताः । एवं गुल्मादावपि प्रायोभावित्वेन उपद्रवकथनं व्याख्येयम् । स्वरभेदश्चेति पृथक्पाठेन, स्वरभेदस्य प्रायोभावित्वमाह ॥ ६—७ ॥

**मार्गौ पुनरस्य द्वावूर्ध्वं चाधश्च तद्बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादूर्ध्वं प्रपद्यमानं कर्णनासिकानेत्रास्येभ्यः प्रच्यवते। बहुवाते तु शरीरे वातसंसर्गादधः प्रपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते बहुवातश्लेष्मणि तु शरीरे श्लेष्मवातसंसर्गाद्द्वावपि मार्गौ प्रपद्यते, तौ मार्गौ प्रतिपद्यमानं सर्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्यवते शरीरस्य ॥ ८ ॥**

**तत्र यदूर्ध्वभागं तत्साध्यं विरेचनोपक्रमणीयत्वाद्बह्वौषधत्वाच्च[१] यदधोभागं, तद्याप्यं वमनोपक्रमणीयत्वादल्पौषधत्वाच्च, यदुभयभागं तदसाध्यं वमनविरेचनायौगित्वादनौषधत्वाच्चेति ॥ ९ ॥**

साध्यत्वादिविशेषस्य तथा कफादिसम्बन्धस्य च मार्गविशेषकृतस्य[२] प्रतिपादनार्थं मार्गमाह—मार्गावित्यादि ।—बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादिति वचनेन ऊर्ध्वगे रक्तपित्ते श्लेष्मसम्बन्धः कारणान्तरचितेनापि श्लेष्मणा भवतीति दर्शयति । यत्तु रक्तपित्तनिदानजन्यत्वं कफस्य, तन्नावश्यं भवति। अतएव "स्निग्धोष्णमुष्णरूक्षं च रक्तपित्तस्य कारणम् । अधोगस्योत्तरं प्रायः" इत्यादौ 'प्रायः' शब्दं कृतवान् । एवं बहुवाते इत्यत्रापि व्याख्येयम् । खेभ्य इति रन्ध्रेभ्यः । विरेचनीयोपक्रमणीयत्वात्, तत् श्लोकेन स्वयमेव व्याकरिष्यति ॥ ८ ॥ ९ ॥

**रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञोद्ध्वंसे रुद्रकोपामर्षाग्निना प्राणिनां परिगतशरीरप्राणानामभवज्ज्वरमनु, तस्याशुकारिणो दावाग्नेरिवापतितस्यात्ययिकस्याशु प्रशान्तौ यतितव्यं मात्रां देशं कालं चाभिसमीक्ष्य सन्तर्पणेनापतर्पणेन वा मृदुमधुरशिशिरतिक्तकषायैरभ्यवहार्यैः प्रदेहपरिषेकावगाहसंस्पर्शनैर्वमनाद्यैर्वा तत्रावहितेनेति ॥ १० ॥**

**भवन्ति चात्र ।**

**साध्यं लोहितपित्तं तद्यदूर्ध्वं प्रतिपद्यते ।**
**विरेचनस्य योगित्वाद्बहुत्वाद्भेषजस्य च ॥ ११ ॥**

रक्तपित्तस्याप्याग्नेयत्वप्रतिपादनार्थं पूर्वोत्पत्तिमाह—रक्तेत्यादि ।—कोपयुक्तोऽमर्षोऽभिनिवेशः । अन्यत्रापि च कोपामर्षयोर्भेद उक्तः, यथा—"अमर्षसंरंभविनम्रभावाः सन्तर्जनामिद्रवणौष्ण्यरोषाः"[२] इति । सन्तर्पणेनेति अधोगस्य । अपतर्पणेनेत्यूर्ध्वगस्य । संस्पृश्यत इति संस्पर्शनं मुक्तादि ॥ १०—११ ॥

**विरेचनं तु पित्तस्य जयार्थे परमौषधम् ।**
**यश्च तत्रान्वयः श्लेष्मा तस्य चानधमं स्मृतम् ।**
**भवेद्योगावहं तत्र मधुरं चैव भेषजम् ॥ १२ ॥**
**तस्मात्साध्यं मतं रक्तं यदूर्ध्वं प्रतिपद्यते ॥१३॥**
**रक्तं तु यदधोभागं तद्याप्यमिति निश्चितम् ।**
**वमनस्याल्पयोगित्वादल्पत्वाद्भेषजस्य च ॥ १४ ॥**

ऊर्ध्वगस्य विरेचनयोग्यतां विवेचयति—विरेचनमिति, ऊर्ध्वगे रक्तपित्ते प्रधानं पित्तम्, अनुबन्धश्च श्लेष्मा । रक्तपित्ताख्यव्याधिर्जेतव्यः, अत्र पित्तस्य जयार्थे विरेचनं तावत् परमौषधम्, "विरेचनं पित्तहरणानाम्" इति वचनादिति भावः । यश्च तत्रान्वयोऽनुबन्धस्वरूपः श्लेष्मा, तस्य जयार्थे अनधममधमं न भवति मध्यममित्यर्थः । वचनं हि—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् । स्रंसनम्" इति । योगावहं च तत्रेति, तत्र ऊर्ध्वगे रक्तपित्ते तद्विरेचनं योगावहं भवति प्रतिमार्गहरणरूपत्वादित्यर्थः । अनेन च व्याधिप्रत्यनीकमुच्यते । एवं व्याधिप्रधानकारणे पित्ते प्रधानशमकत्वात् तथा मध्यकुपिते च कफे मध्यभेषजत्वात् प्रतिमार्गहरणरूपतया च प्रत्यनीकत्वात् विरेचनमूर्ध्वगे साधु भेषजम् । मधुरंचैव भेषजमित्यत्र 'एव' शब्दोऽप्यर्थः । तेन, कषायतिक्ते

१ चास्यस्येत्यत्र चास्यास्य इति वाऽन्यः पाठः। २ मार्गविशेषकृतस्येति वाऽन्यः पाठः ।

१ विरेचनोपक्रमणीयत्वात् ॥ इति वाऽन्यः पाठः ॥ २ संतर्जनातिद्रवणौष्ण्यरोषाः ॥

तावद्भेषजे भवत एव पित्तकफप्रत्यनीकत्वात् । मधुरमपि लङ्घनादिना कफे जिते भेषजं भवतीत्यर्थः ॥ १२—१४ ॥

**वमनं हि न पित्तस्य हरणे श्रेष्ठमुच्यते ।**
**यश्च तत्रान्वयो वायुस्तच्छान्तौ चावरं स्मृतम् ।**
**तच्च योगावहं तत्र कषायं तिक्तकानि च ।**
**तस्माद्याप्यं समाख्यातं यदुक्तमनुलोमगम् ॥ १५ ॥**

अधोगे वमनस्यानुपयोगितां विवेचयति—वमनं हीत्यादि ।—पित्तस्य रक्तपित्तमूलस्य हरणे न श्रेष्ठं वमनम्, वमनं हि कफानुगतं पित्तं हरति, न पित्ते प्राधान्येन क्रियते । तच्छान्तौ चावरमिति वातहरणे त्वप्राधान्यमेव वमनम् । वातहरणेऽयुक्तत्वादेव वमनस्य । तच्चायोगावहमिति तद्वमनं प्रतिमार्गहरणरूपतया योगावहमपि सत् पित्तवातयोरुक्तेन न्यायेनायौगिकत्वेनायोगावहमित्यर्थः । कषायतिक्तकानि च अयोगावहानीति योजना, कषायतिक्तयोर्वातप्रतिकूलत्वादित्यर्थः । एवं मधुरमेकमवशिष्टमधोगे रक्तपित्ते भेषजं भवति । तेनाल्पौषधत्वं सिद्धम् । अम्ललवणकटुकानां च पित्तविरुद्धत्वेन रक्तपित्तेऽप्रसक्तिरिति ॥ १५ ॥

**रक्तपित्तं तु यन्मार्गौ द्वावपि प्रतिपद्यते ।**
**असाध्यमिति तज्ज्ञेयं पूर्वोक्तादपि कारणात् ॥१६॥**
**नहि संशोधनं किंचिदस्त्यस्य प्रतिमार्गगम् ॥**
**प्रतिमार्गं च हरणं रक्तपित्ते विधीयते ।**
**एवमेवोपशमनं सर्वशो नास्य विद्यते ॥**
**संसृष्टेषु च दोषेषु सर्वजिच्छमनं मतम् ॥ १७ ॥**
**इत्युक्तं त्रिविधोदर्कं रक्तं मार्गविशेषतः ॥ १८ ॥**

पूर्वोक्तादिति वमनविरेचनायौगिकत्वादनौषधत्वाच्च । वमनविरेचनायौगिकत्वं व्युत्पादयति—न हीत्यादि ।—संशोधनमिति सामान्यवचनेन वस्तिशिरोविरेचनयोरपि प्रतिक्षेपणं सूचयति । यदधोभागं विरेचनम्, तदधोभागं रक्तपित्तं कोपयति, यदूर्द्ध्वभागं वमनम्, तदूर्ध्वभागं रक्तपित्तं कोपयति । अतः, नास्त्युभयमार्गे रक्तपित्ते शोधनम् । अथानुगुणशोधनं कफच्छर्दामिव वमनं रक्तपित्ते भवतीत्याह—प्रतिमार्गं चेत्यादि ।—रक्तपित्तव्याधिमहिम्ना प्रतिमार्गहरणमेव भेषजं भवति नान्यदित्यर्थः । अथात्रैव संशमनं वा भवतु भेषजम्? तन्न भवतीत्याह—एवमेवेत्यादि ।—उभयमार्गानुसारित्वेन वातकफानुबन्धत्वात् यथायौगिकं संशोधनं नास्ति तथोपशमनमपि युगपद्वातकफशमकत्वाभावान्नास्तीत्यर्थः । सर्वशो न विद्यत इति किंचिदपि न विद्यत इति । एतदेवोपशमनभेषजाभावं स्फोटयति—संसृष्टेष्विति, सन्निपातेषु बोद्धव्यम् । सर्वजिदिति अनुबन्धभूतवातकफमूलभूतपित्तजित्—मधुरं हि कफकारि, तिक्तकषायौ तु वातकरौ, शेषास्तु पित्तकरा एवेति भावः । किंवा, एवमेवेति, विना भेषजं नोपशमनं रक्तपित्तस्य भवतीति योजनीयम् । त्रिविधोदर्कमिति त्रिविधजातीयफलम्, यत साध्यत्वयाप्यत्वप्रत्याख्येयत्वरूपम् ॥ १६—१८ ॥

**एभ्यस्तु खलु हेतुभ्यः किंचित्साध्यं न सिध्यति ॥**
**प्रेष्योपकरणाभावाद्दौरात्म्याद्वैद्यदोषतः ।**
**अकर्मतश्च साध्यत्वं कश्चिद्रोगोऽतिवर्तते ।**
**तत्रासाध्यत्वमेकं स्यात्साध्ययाप्यपरिक्रमात् ॥१९॥**

असाध्यतोपोद्धातेनेतरव्याधिसाधारण्येऽप्यसाध्यतापत्तिकारणान्याह—एभ्यस्त्वित्यादि ।—उपकरणाभावादिति भेषजाभावात् । दौरात्म्यादिति, आतुरस्यानात्मवत्त्वात् । अकर्मत इत्यत्र कुत्सायां नञ्, अपुत्र इति यथा । तेन, अकर्मतोऽसम्यक्चिकित्सात इत्यर्थः । किंवा अकर्मत इति अधर्मादसाध्यव्याधिजनकात् । कश्चिदितिवचनेन, अचिकित्सया न सर्वे तिलालकमशकादयोऽवश्यमसाध्या भवन्तीति दर्शयति, तेषामचिकित्सयापि साध्यत्वात् । प्रेष्यादिदोषेण प्रकृतरक्तपित्ते असाध्यत्वं दर्शयन्नाह—तत्रेत्यादि ।—तत्रेति रक्तपित्ते । असाध्यत्वमेकमिति असाध्यत्वमेव परं स्यात् । साध्ययाप्यपरिक्रमादिति साध्ययाप्यमार्गाभ्यां परिक्रमादुभयमार्गानुसारित्वादित्यर्थः । किंवा, साध्ययाप्ययोः परिक्रमः तस्मात् । तत्र साध्यस्य परिक्रमो याप्यमार्गगामित्वम्, एवं याप्यस्य परिक्रमः साध्यमार्गगामित्वम् । अयं च मार्गपरिक्रमो मार्गपरित्यागादपरित्यागाद्वाऽसाध्य एव, अपरित्यागे तावदुभयमार्गेणैव असाध्यत्वम् । परित्यागेऽसाध्यत्वमुक्तं वक्ष्यति हि चिकित्सिते—"मार्गान्मार्गं चरेद्वा तच्च रक्तमसिद्धिमत्" इति । किंवा, असाध्यत्वमेकं साध्ययाप्यपरिक्रमादिति साध्यस्य याप्यत्वेन परिक्रमादित्यर्थः ॥ १९ ॥

**रक्तपित्तस्य विज्ञानमिदं तस्योपदेक्ष्यते ॥**
**यत्कृष्णमथवा नीलं यद्वा शक्रधनुष्प्रभम् ।**
**रक्तपित्तमसाध्यं तद्वाससो रञ्जनं च यत् ॥ २० ॥**
**भृशं पूत्यतिमात्रं च सर्वोपद्रववच्च यत् ।**
**बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत् ॥ २१ ॥**

ऊर्द्ध्वगस्यापि रक्तपित्तस्य लाक्षणिकीमसाध्यतामाह—रक्तपित्तस्येत्यादि ।—एते कृष्णादयो वर्णाः गंभीरधातुसंबन्धाद्भवन्ति । ततश्चासाध्यं युक्तमेव । वाससो रञ्जनं च यदिति प्रक्षालितमपि सद्वासो रञ्जयति, न क्षालनेनापैतीति बोद्धव्यम् । अन्यथा 'सर्वमेव रक्तं वाससो रञ्जनं भवतीति वचनमनर्थकं स्यात् । किंवा, 'अरञ्जनम्' इति पाठः । तेन, रक्तस्य वाससो रञ्जकस्यारञ्जनमेव विकृतिः । भृशं पूतीति धात्वन्तरसंबन्धादतिदुर्गन्धि सर्वोपद्रववदिति उक्तदौर्बल्याद्युपद्रवयुक्तम् ॥ २० ॥ २१ ॥

---

१ वमनस्याल्पयोगितामिति वाऽन्यः पाठः । २ हितमिति पाठः ।

**येन चोपहतो रक्तं रक्तपित्तेन मानवः।**
**पश्येद्दृश्यं वियच्चैव तच्चासाध्यमसंशयम्॥ २२॥**
**तत्रासाध्यं परित्यज्य याप्यं यत्नेन यापयेत्।**
**साध्यं चावहितः सिद्धैर्भेषजैः साधयेद्भिषगिति २३**

दृश्यं घटपटादि। वियदाकाशम्। रक्तं रक्तवर्णमित्यर्थः। यद्यप्याकाशमपि दृश्यं भवति मीमांसकनये, तथापि प्राय आकाशे एवासाध्यरक्तपित्तरक्तत्वं प्रतीयत इति न पुनरुक्तम्। यत्नेनेति वचनाद्याप्ययापनं यत्नं विना न भवतीति दर्शयति॥ २२—२३॥

तत्र श्लोकौ।

**कारणं नाम निर्वृत्तिं पूर्वरूपाण्युपद्रवान्।**
**मार्गौ दोषानुबन्धं च साध्यत्वं न च हेतुमत्॥**
**निदाने रक्तपित्तस्य व्याजहार पुनर्वसुः।**
**वीतमोहरजोदोषलोभमानमदस्पृह इति॥ २४॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते**
**निदानस्थाने रक्तपित्तनिदानम्।**

कारणमित्यादिसंग्रहः। नामनिर्वृत्तिमिति 'लोहितसंसर्गाद्' इत्यादिना। 'न च' इति न चासाध्यत्वम्, अनेन च याप्यमपि गृहीतम्। असाध्यभेदो हि याप्यम्। हेतुमदिति विरेचने यौगिकत्वायौगिकत्वादिहेतुवर्णनं संगृह्णाति। वीता अपगता मोहादयो यस्य स तथा॥ २४॥

इति महामहोपध्यायश्रीमच्चरकचतुराननचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां रक्तपित्तनिदानम्॥

---

## तृतीयोऽध्यायः।

**अथातो गुल्मनिदानं व्याख्यास्यामः॥ १॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

**इह खलु पञ्च गुल्मा भवन्ति, तद्यथा वातगुल्मः पित्तगुल्मः श्लेष्मगुल्मो निचयगुल्मः शोणितगुल्म इति॥ ३॥**

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच— कथमिह भगवन् पञ्चानां गुल्मानां विशेषमभिजानीयाम्। नह्यविशेषविद्रोगाणामौषधविदपि भिषक्प्रशमनसमर्थो भवतीति॥ ४॥**

दक्षाध्वरोद्ध्वंसे रक्तपित्तमनु गुल्मोत्पन्न इति रक्तपित्तमनु गुल्मनिदानम्। इह पञ्चेतिवचनात् चिकित्सितेऽधिकान् गुल्मान् सूचयति, वक्ष्यति हि—"व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम्" इति। निचयः सन्निपातः तत्कृतगुल्मो निचयगुल्मः। इह प्रत्येकवातादिगुल्मक्रियामेलकादेव द्वन्द्वजगुल्माः साध्यन्त इति कृत्वा न पृथगुक्ताः। सन्निपातगुल्मास्तु वातादिगुल्मक्रियामेलकेन साध्या भवन्त्येव। तेन, वातादिसंयोगमहिम्ना अतिरिक्तासाध्यत्वयोगान्निचयगुल्मः पृथगुक्तः। एतदेव गुल्मेऽस्मिन्नसाध्यत्वं प्रतिपादयितुं सन्निपातशब्दं साध्यज्वरादिसन्निपातेऽपि वर्तमानं परित्यज्य निचयशब्दः। अत्यर्थं हि असाध्यरूपश्चायं निचयः॥ १—४॥

**तमुवाच भगवानात्रेयः समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषेभ्यो विशेषविज्ञानं गुल्मानां भवत्यन्येषां च रोगाणामग्निवेश! तत्तु खलु गुल्मेषूच्यमानं निबोध॥ ५॥**

समुत्थानेत्यादौ लिङ्गान्तर्निविष्टा उपद्रवा न पृथगुच्यन्ते। वेदनारूपं च लिङ्गं गुल्मलिङ्गान्तर्गतमपि वेदनाप्रधानविकारेषु प्रायो वेदनयैव विशेषावधारणं भवतीति पृथग्दर्शितम्[1]। संप्राप्तेस्त्विहाकथनं गुल्मविशेषागमकत्वेनैव बोद्धव्यम्, गुल्मविशेषविज्ञानं चेहाधिकृतम्। संख्यादिभेदभिन्ना तु सामान्यसंप्राप्तिः सर्वरोगनिदान एवोक्तेति भावः। बलकालभिन्ना तु संप्राप्तिर्यद्यपि वातिकत्वादिविशेषं गमयत्यपि, तथाप्यल्पत्वात्तथा लिङ्गगृहीतत्वाच्च सा नाद्रियते। दिवसान्तजरणान्तादिबलसंप्राप्तिर्हि लिङ्गमध्य एव पठ्यते तत्र तत्र। तेन, लिङ्गग्रहणेनैव तत्सुस्थम्। प्राग्रूपं च यद्यपि पृथग्वातादिगुल्मगमकं साक्षान्न पठितम्, तथापि विशेषलिङ्गाव्यक्तारूपविशिष्टं प्राग्रूपं विशेषलिङ्गकथनेनैव उक्तमेव। तेन, वातादिगुल्मविशेषगमकनिदानादिमध्ये पूर्वरूपपाठो न्याय्य एवेति। किंवा, पूर्वरूपविशेषोऽप्यत्र रक्तपित्तादिरोगापेक्षया सामान्योक्तोऽपि विशेषो ज्ञेयः॥ ५॥

**यदा पुरुषो वातलो विशेषेण ज्वरवमनविरेचनातीसाराणामन्यतमेन कर्शनेन कर्शितो वातलमाहारमाहरति शीतं वा विशेषेणातिमात्रमस्नेहपूर्वं वा वमनविरेचने पिबत्यनुदीर्णां वा छर्दिमुदीरयत्युदीर्णान्वातमूत्रपुरीषवेगान्निरुणद्ध्यत्यशितो वापिबति नवोदकमतिमात्रमतिमात्रसंक्षोभिना वा यानेन यात्यतिव्यवायव्यायाममद्यरुचिर्वाभिघातमृच्छति वा विषमासनशयनस्थानचङ्क्रमणसेवी वा भवत्यन्यद्वा किंचिदेवंविधं विषं अतिमात्रं व्यायामजातमारभते, तस्यापचाराद्वातः प्रकोपमापद्यते॥ ६॥**

वातलो विशेषेणेति वचनात्पित्तलादेरपि यथोक्तमाचरतो वातगुल्मो भवति, वातलस्य त्वत्यर्थमिति दर्शयति। शीतं वा

---

[1] वेदनारूपस्य लिंगस्य गुल्मादिष्वंतर्गतस्य वेदनाप्रधानविकारेषु प्रायो वेदनयैव विशेषावधारणं भवतीति दर्शयति॥ इति वाऽन्यः पाठः॥

विशेषेणेति अत्यर्थशीतमित्यर्थः । अतिमात्रमितिच्छेदः । अतिव्यवायव्यायामादिरुचिर्भवतीति शेषः । व्यवायादिरुच्या व्यवायाद्याचरणं लक्षयति ॥ ६ ॥

स प्रकुपितो महास्रोतोऽनुप्रविश्य रौक्ष्यात्कठिनीभूतमाप्लुत्य पिण्डितोऽवस्थानं करोति हृदि वस्तौ पार्श्वयोर्नाभ्यां वा । स शूलमुपजनयति ग्रन्थींश्चानेकविधान्, पिण्डितश्चावतिष्ठते । स पिण्डितत्वाद्गुल्म इत्युच्यते, स मुहुराध्मति, मुहुरल्पत्वमापद्यते, अनियतविपुलाणुवेदनश्च भवति चलत्वाद्वायोः, पिपीलिकासंप्रचार इवाङ्गेषु तोदस्फुरणायामसङ्कोचसुप्तिहर्षप्रलयोदयबहुलस्तदातुरः सूच्येव शङ्कुनेव चातिसंविद्धमात्मानं मन्यतेऽपि च दिवसान्ते जीर्यते, शुष्यति चास्यास्यमुच्छ्वासश्चोपरुध्यते, हृष्यन्ति चास्य रोमाणि वेदनायाः प्रादुर्भावे ॥ ७ ॥

प्लीहाटोपान्त्रकूजनाविपाकोदावर्ताङ्गमर्दमन्याशिरःशङ्खशूलब्रध्नरोगाश्चैनमुपद्रवन्ति, कृष्णारुणपरुषत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति ॥ ८ ॥

निदानोक्तानि चास्य नोपशेरते, विपरीतानि चोपशेरत इति वातगुल्मः ॥ ९ ॥

रौक्ष्यात्कठिनीभूतमिति महास्रोतोविशेषणम् । तच्च प्रकुपितस्य वायो रौक्ष्येण यथोक्तज्वरकर्शनादिहेतुकृताच्च रौक्ष्यात्कोष्ठस्य कठिनत्वमुपपन्नम् । आप्लुत्येति व्याप्य कोष्ठमेव । अन्यत्राप्युक्तम्—"आप्लुतं मारुतेनेह शरीरं यस्य केवलम्" इति । आप्लुतं व्याप्तमित्यर्थः । यदा तु, 'रौक्ष्यात्कठिनीभूतः' इतिपाठः, तदा वातविशेषणम्, वातस्य कठिनत्वमप्यत्र प्रकोपेण घनत्वमेव बोद्धव्यम् । पिण्डित इति कुण्डलीभूतः । पिण्डितश्चेति द्वितीय 'पिण्डित' शब्देन मांसाद्यनुण्डनेन गुल्मप्रदेशस्यापि पिण्डितत्वमुच्यते । तेन, पूर्वोक्ते 'पिण्डित'शब्देन वायोः पिण्डितत्वेन न पौनरुक्त्यम् । अनेकविधानितिच्छेदः । ग्रन्थींश्चानेकविधानिति, 'दीर्घ' 'वृत्त' 'स्थूला'दिभेदेन भिन्नान् । 'पिण्डितत्वाद्गुल्मः इत्युच्यते' इत्यनेन लतादिगुल्मसादृश्यनिबन्धनां गुल्मसंज्ञां दर्शयति । आध्मति विस्तारीभवति । अनियतविपुलाणुवेदन इति कदाचिद्विपुलवेदनः कदाचिदल्पवेदनश्चानियतमेव भवति । अत्रैव हेतुमाह—चलत्वाद्वायोरिति । आयामो विस्तरणम् । हर्षो रोमहर्षः । प्रलयो नाशः, उदयो जन्म, स्फुरणादीनां जन्मनाशौ बहुधा भवत इत्यर्थः । अत्रापि चलत्वमेव वायोर्हेतुर्वोद्धव्यः । हृष्यन्ति चास्य रोमाणीति वेदनाप्रादुर्भावे प्रतिनियमेन, स्फुरणादौ तु हर्षो विनापि वेदनामिति ज्ञेयम् ॥ ७—९ ॥

तैरेव तु कर्शनैः कर्शितस्याम्ललवणकटुकक्षारोष्णतीक्ष्णशुक्तव्यापन्नमद्यहरितकफलाम्लानां विदाहिनां च शाकधान्यमांसादीनामुपयोगादजीर्णाध्यशनाद्रौक्ष्यानुगते चामाशये वमनविरेचनमतिवेलं सन्धारणं वातातपौ चातिसेवमानस्य पित्तं सह मारुतेन प्रकोपमापद्यते ॥ १० ॥

तत्प्रकुपितं मारुत आमाशयैकदेशे संमूर्च्छ्य तानेव वेदनाप्रकारानुपजनयति, य उक्ता वातगुल्मे पित्तं त्वेनं विदहति कुक्षौ हृद्युरसि कण्ठे च स विदह्यमानः सधूममिवोद्गारमुद्गिरत्यम्लान्वितम् । गुल्मावकाशश्चास्य दह्यते दूयते धूप्यते उष्णायते स्विद्यते क्लिद्यते शिथिल इव स्पर्शासहोऽल्परोमाञ्चो भवति ॥ ११ ॥

ज्वरभ्रमदवथुपिपासागलवदनतालुशोषप्रमोहविड्भेदाश्चैनमुपद्रवन्ति । हरितहारिद्रत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति ॥ १२ ॥

निदानोक्तानि चास्य नोपशेरते, विपरीतान्युपशेरत इति पित्तगुल्मः ॥ १३ ॥

रौक्ष्यानुगते चामाशये इति रौक्ष्येण हेतुनाऽतीवरूक्षीकृत इत्यर्थः । किंवा रौक्ष्यानुगते चामाशये सति वमनं सेवमानस्येति योजनीयम् । आमाशयैकदेशे संमूर्च्छ्येतिवचनात्पित्तगुल्मस्य कफगुल्मस्य च वस्तिः स्थानं न भवतीति दर्शयति । वचनं हि—"नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" इति । वातगुल्मस्य तु वस्तिरपि स्थानं भवति । अतएव तत्र सामान्येन 'महास्रोतः' इति कृतम् । 'महास्रोतोग्रहणेन च वस्तिरपि गृह्यते' तथा वातगुल्मएव 'हृदि वस्तौ'' इत्यादि कृतम् । दाहदूयनादयः पित्तवेदनाविशेषा असकृद्व्याख्याताः । दवथुर्धक्धक्कि[१]तेति लोके कथ्यते ॥ १०—१३ ॥

तैरेव तु कर्शनैः कर्शितस्यात्यशनादतिस्निग्धगुरुमधुरशीताशनात् पिष्टेक्षुक्षीरमाषतिलगुडविकृतिसेवनान्मन्दकमद्यातिपानाद्धरितकातिप्रणनयादानूपौदकग्राम्यमांसातिभक्षणात् सन्धारणादतिभुक्तस्य चातिप्रगाढमुदकपानात् संक्षोभणाद्वा शरीरस्य श्लेष्मा सह मारुतेन प्रकोपमापद्यते ॥ १४ ॥

तं प्रकुपितं मारुत आमाशयैकदेशे संमूर्च्छ्य तानेव गाढवेदनाप्रकारानुपजनयति, य उक्ता वातगुल्मे, श्लेष्मा त्वस्य शीतज्वरारोचकाविपाकाङ्गमर्दहर्षहृद्रोगच्छर्दिनिद्रालस्यस्तैमित्यगौरवशिरोऽङ्गतापानुपजनयति, अपिच गुल्मस्य स्थैर्यगौरवकाठिन्यावगाढसुप्तताः, तथा कासश्वासप्रतिश्यायान् राजयक्ष्माणं चातिप्रवृद्धः श्वैत्यं त्वङ्नखनयनवदनमूत्रपुरीषेषूपजनयति ॥ १५ ॥

---

१ धकधकिकेति वाऽन्यः पाठः ।

**निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति श्लेष्मगुल्मः ॥ १६ ॥**

श्लेष्मगुल्मेऽतिभुक्तस्येति अतिभुक्षितस्य । अतिसुहितस्येति वा पाठः । यद्यपि राजयक्ष्मा त्रिदोषजः, तथापि कफगुल्म एव रोगमहिम्ना अजनितदोषत्रयेण जन्यत इति बोद्धव्यम्॥ १४—१६ ॥

**त्रिदोषहेतुलिङ्गसन्निपाते तु सान्निपातिकं गुल्ममुपदिशन्ति कुशलाः । स विप्रतिषिद्धोपक्रमत्वादसाध्यो निचयगुल्मः ॥ १७ ॥**

विप्रतिषिद्धोपक्रमत्वादिति परस्परं वातादिविरुद्धोपक्रमत्वात् । इह च विप्रतिषिद्धोपक्रमत्वं विकृतिविषमसन्निपातेन बोद्धव्यम् । तेन, साध्यत्रिदोषज्वरादौ वातादिविरुद्धोपक्रमत्वं सदपि नासाध्यतामापादयति ॥ १७ ॥

**शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य ॥ १८ ॥**

**गर्भकोष्ठार्तवागमनवैशेष्यात्पारतन्त्र्यादवैशारद्यात्सततमुपचारानुरोधाद्वेगानुदीर्णानुपरुन्धत्या आमगर्भे वाप्यचिरात्पतिते अथवाप्यचिरप्रजाताया ऋतौ वा वातप्रकोपणान्यासेवमानायाः क्षिप्रं वातः प्रकोपमापद्यते ॥ १९ ॥**

शोणितगुल्मे 'स्त्रिया एव' इति वचनादेव 'न पुरुषस्य' इति लब्धे पुनः 'न पुरुषस्य' इति वचनं स्पष्टार्थम् । गर्भात्मकः कोष्ठो गर्भकोष्ठस्तस्मिन् गर्भकोष्ठे य आर्तवस्याऽऽगमनरूपो विशेषो रक्तगुल्मकारणम्, स स्त्रिया एव भवति । तेन एवंरूप आर्त्तवप्रतिबन्धजन्यः शोणितगुल्मः पुरुषस्य न भवति । सामान्यशोणितदुष्टिजन्यस्तु पुरुषस्यापि भवति तथाहि वक्ष्यति—"कफो वाते जितप्राये पित्तं शोणितमेव वा । यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते" इति । तथा "गुल्मोपकुशवीसर्प इत्यादयो रक्तजगदाः" इत्युक्तम् । पारतन्त्र्यादि हेतुत्रयं वेगविधारणे, पारतन्त्र्यादेव स्त्रियो वेगं विधारयन्ति । अवैशारद्यमज्ञानम् । तेन, वेगविधारणेन महान् व्याधिर्भवत्येव, अज्ञा एव वेगं विधारयन्ति । उपचारादिति भर्त्ताद्युपचारपरत्वात् । योनिमुखमिति गर्भाशयद्वारम् ॥ १८—१९ ॥

**स प्रकुपितो योनिमुखमनुप्रविश्यार्त्तवमुपरुणद्धि मासि मासि, तदार्तवमुपरुध्यमानं कुक्षिमभिवर्द्धयति ॥ २० ॥**

**तस्याः शूलकासातीसारच्छर्दरोचकाविपाकाङ्गमर्दनिद्रालस्यकफप्रसेकाः समुपजायन्ते, स्तनयोश्च स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं ग्लानिः चक्षुषोर्मूर्च्छा हृल्लासो दोहदः श्वयथुश्च पादयोरीषल्लोमराज्या योन्याश्चाटालत्वमपि च योन्या दौर्गन्ध्यमास्रावश्चोपजायते केवलश्चास्या गुल्मः स्पन्दते तामगर्भां गर्भिणीमित्याहुर्मूढाः ॥ २१ ॥**

स्तनयोः स्तन्यमिति रोगप्रभावादेव बोद्धव्यम् । आर्तवरोगलक्षणस्य व्याधेरयं प्रभावः, यतः स्तन्यं करोति, दृष्टत्वात् तेन, यदुच्यते—"स्त्रिया ह्युत्पन्नगर्भायास्त्रिधा रसः सम्पद्यते स्वशरीरपुष्ट्ये, स्तन्याय, गर्भाभिवृद्धये च" इति वचनात्, 'गर्भ एव स्तन्यं भवति,' तन्निरस्तं मन्तव्यम् । दोहदशब्देनेह नार्या उच्चावचतावदिच्छायोगो दोहदाभिधानो ज्ञेयः । यदुक्तं क्षारपाणिना—"दोहदिनी वा स्यान्नारी शोणितगुल्मिनी" । नत्विह द्वैहृद्यस्य कृतो भेदोऽभिप्रेतः । स हि गर्भहृदयस्य मातृहृदयेन हि सम्बन्धो भवतीति । वचनं हि—"मातृजं त्वस्य हृदयं मातृहृदयेन सम्बद्धं भवति रसवाहिनीभिः । संवाहिनीभिः । तस्मात्तयोर्भक्तिः सम्पद्यते" इति । शोणितगुल्मे च चेतना नास्ति । तेन, नैवंरूपमिह द्वैहृद्यं दोहदम् । तेन, गर्भभ्रान्त्या यत्किंचिदभ्यवहारेच्छादिलक्षणं दोहदं तस्या भवति । असत्यपि विषसम्बन्धे यथा शङ्काविषाद्विषलिङ्गानि भवन्ति । वचनं हि—"शङ्काविषेणोपहताः कुर्वन्ति विषलक्षणम्" इति । चाटालत्वं विस्तृतत्वम् । योनिविस्तारेण च रोमराज्या अपि विस्तरणं वितन्यमानचर्मरोम्णा चैवोपपन्नम् । केवलः स्पन्दत इति नैकदेशेन । गर्भो ह्येकदेशेनापि स्पन्दते । तेन, एतल्लक्षणं गर्भशङ्काव्यावर्त्तकम् । ननु यदुक्तं रक्तगुल्मे—"समगर्भलिङ्गः" इति, तथा "मासे व्यतीते दशमे चिकित्स्यः" इति तदनुपपन्नम् । यतः, गर्भाद्विशिष्टं पिण्डितस्पन्दनं विद्यत एव, तथा, नवत्वं सुखसाध्यताहेतुत्वेनोक्तम् । इह च कथं कालातिक्रमेणोपक्रमणीयत्वमुच्यते । अत्र ब्रूमः—समगर्भलिङ्गस्तावद्बहुरिगर्भसमलिङ्गताभिप्रायेणोक्तः । किंवा, समस्यावैकारिकस्य दशममासिकगर्भस्य लिङ्गानि यस्य स समगर्भलिङ्गः । तेन, वैकारिकसुप्तनागोदरादेर्लक्षणं नेह भवतीति दर्शयति । दशममासचिकित्स्यत्वं चेह व्याधिमहिम्ना बोद्धव्यम् । दशममास एवायं शिथिलीभूतः सन् चिकित्स्यो भवतीति व्याधिप्रभावः । दृष्टा च व्याधिप्रभावकृता कालापेक्षा—"ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् । षडहे षडहे देयम्' इत्यादिषु । यत्तु समगर्भलिङ्गत्वेन गर्भशङ्कानिरासार्थं रक्तगुल्मस्य दशममासापेक्षणम्, तन्न । दशममासादर्वागपि पिण्डितस्पन्दनेन रक्तगुल्मस्यावधारणात् । तथा दशममासादूर्द्ध्वमपि गर्भावस्थानस्य दृष्टत्वेन गर्भशङ्कानपगमाच्च वक्ष्यति हि दशममासादूर्द्ध्वमवस्थानं गर्भस्य, "वैकारिकमतः ऊर्ध्वमवस्थानम्" इति वचनात् ॥ २१ ॥

१ शारीरस्थाने षष्ठाऽध्याये वचनमेतत् । २ दुरंधकारे विद्धस्य केनचिद्दृष्टशंकया । विषोद्वेगो ज्वरश्छर्दिर्मूर्च्छा दाहोऽपिवा भवेत् । ग्लानिर्मोहोऽतिसारो वा तच्छंकाविषमुच्यते ॥ वाग्भटः उत्तरस्थानम् अध्याय ३६.

एषां तु खलु पञ्चानां गुल्मानां प्रागभिनिर्वृत्तेरिमानि पूर्वरूपाणि तद्यथा—अनन्नाभिलपणमरोचकाविपाकावग्निवैषम्यं विदाहो भुक्तस्य विपाककाले चायुक्त्या छर्द्युद्गारौ वातमूत्रपुरीषवेगानामप्रादुर्भावः प्रादुर्भूतानां चाप्रवृत्तिरीषदागमनं वा वातशूलाटोपान्त्रकूजनापरिहर्षणातिवृत्तपुरीषताऽवुभुक्षा दौर्बल्यं सौहित्यस्य चासहत्वमिति गुल्मपूर्वरूपाणि भवन्ति ॥ २२ ॥

तद्यथेत्यादिना पूर्वरूपाण्याह । अयुक्त्येति छर्द्युद्गारकारणमन्तरेण व्याधिप्रभावादेवेत्यर्थः । अतिवृत्तपुरीषता उदावर्त्तः ॥ २२ ॥

सर्वेष्वपि तु खल्वेतेषु गुल्मेषु न कश्चिद्वातादृते सम्भवति गुल्मः ॥ २३ ॥

तेषां सन्निपातजमसाध्यं ज्ञात्वा नोपक्रमेत॥२४॥

एकदोषजे तु यथास्वमारंभं प्रणयेत ॥ २५ ॥

संसृष्टांस्तु साधारणेन कर्मणोपचरेत् यद्वा अन्यदप्यविरुद्धं मन्येत, तदवचारयेद्विभज्य गुरुलाघवमुपद्रवाणां समीक्ष्य गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेज्जघन्यमितरांस्त्वरमाणस्तु विशेषानुपलभ्य गुल्मेष्वात्ययिके कर्मणि वातचिकित्सितं प्रणयेत् स्नेहस्वेदौ वातहरौ स्नेहोपसंहितं च मृदु विरेचनं वस्तींश्चाम्ललवणमधुरांश्च रसान् युक्त्याऽवचारयेत् । मारुते ह्युपशान्ते स्वल्पेनापि प्रयत्नेन शक्य अन्योऽपि दोषो नियन्तुं गुल्मेष्विति ॥ २६ ॥

भवति चात्र ।

गुल्मिनामनिलशान्तिरुपायैः
सर्वशो विधिवदाचरितव्या ।
मारुते ह्यवजितेऽन्यमुदीर्णं
दोषमल्पमपि कर्म निहन्यात् ॥ २७ ॥

संख्यानिमित्तरूपाणि पूर्वरूपमथापि च ।
दृष्टं निदाने गुल्मानामेकदेशश्च कर्मणाम् ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने गुल्मनिदानं नाम तृतीयोऽध्यायः ॥

पित्तादिकृतेष्वपि तु गुल्मेषु सम्प्राप्तिसिद्धस्य वातस्य प्राधान्यमाह—सर्वेष्वपीत्यादि ।—साधारणेनेति संसृष्टोभयदोषप्रत्यनीकेन । यद्वा अन्यदपीति संसर्गे एकदोषोपशमकमपि । अविरुद्धमिति उपद्रवाणां गुरूणामविरुद्धम् । विभज्येति गुरुलाघवं विभज्य । तेन, एकदोषप्रशमनमपि तदेव कर्त्तव्यम् । यद्गुरूपद्रवप्रशमं भवतीति भावः । एतदेवाह—गुरूनित्यादि ।—सर्वगुल्मानां वातमूलत्वेन वातनिरपेक्षचिकित्साविशेषानुपलम्भे वातिकचिकित्सैव त्वरया कर्तव्येत्याह—त्वरमाणस्त्वित्यादि ।—आत्ययिके कर्मणि क्रियमाण इति शेषः । अल्पमपीति कर्मविशेषणम् । संग्रहे "एकदेशश्च कर्मणा"मिति चिकित्सितानाम् ॥ २३—२८ ॥[1]

इति महामहोपाध्याय श्रीमच्चरकचतुराननचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां गुल्मनिदानव्याख्या ॥

---

## चतुर्थोऽध्यायः ।

अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

त्रिदोषकोपनिमित्ता विंशतिः प्रमेहा भवन्ति विकाराश्चापरेऽपरिसंख्येयाः । तत्र यथा त्रिदोषप्रकोपः प्रमेहानभिनिर्वर्तयति तथानुव्याख्यास्यामः३

दक्षाध्वरे गुल्ममनु प्रमेहोत्पादात्प्रमेहाभिधानम्, वचनं हि—"हविःप्राशान्मेहकुष्ठयोर्जन्म" इति । त्रिदोषप्रकोपनिमित्ता इति, सर्वमेहेष्वेव त्रिदोषाः कारणम्, अधिकत्वाच्च श्लैष्मिकादिव्यपदेश इति दर्शयति । सुश्रुतेऽप्युक्तम्—"सर्व एव मेहाः सर्वदोषजाः" इति । विकारा इति प्रमेहलिङ्गोपद्रवरूपाः । किंवा, अन्येऽपि ये केचन त्रिदोषजास्तेऽपि ग्राह्याः ॥ १ ॥ ३ ॥

इह खलु निदानदोषदूष्यविशेषेभ्यो विकारविघातभावाभावप्रतिविशेषा भवन्ति ॥ ४ ॥

इहेत्यादौ निदानादीनां विशेषाः परस्परानुबन्धित्वादग्रेऽग्रे वक्ष्यमाणा ज्ञेयाः । विकाराणां विघातस्य भावोऽभावश्चेति विकारविघातभावाभावौ तयोः प्रतिविशेषा विकारविघातभावाभावप्रतिविशेषाः । तत्र विकाराणां विघाताभावस्य प्रतिविशेषाः—विकाराजननम्, तथा चिरेण च जननम्, तनुविकारजननं वा, असर्वलिङ्गविकारजननं वाऽग्रे वक्ष्यमाणाः । विघातभावप्रतिविशेषास्तु विकाराजननादिविपर्ययेणाग्रे वक्ष्यमाणाः ॥ ४ ॥

---

१ जघन्यं पश्चात्, इतरान् लघूपद्रवान् ।

१ अत्रेदमवधातव्यं सर्वेष्वेवगुल्मेषु वातकोपात् शूलोवततें-पित्तजादौ तु वातजनानाप्रकारोऽपिपित्तादिसंबंधेनतीव्रज्वालादिसहित एव भवति इति शूलोऽपितत्रवातजादिरूपेण व्यपदिष्टोभवति पंचविधः सहजद्वन्द्वजैरष्टविधश्च कफजेत्वामशूलस्यान्तर्भावेनाधिकत्वाभावात् । एतेन गुल्मातिरिक्तः कश्चिदन्यः शूलरोगो नास्तिः । यश्चशूलअपाततएवदृश्यते सवातकर्मविशेषो नच चिरस्थपीडाकरः । एतदभिप्रायेणाचार्येणानेनान्यः शूलो रोगो नोक्तः इति गंगाधरटीका ।

**यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुवध्नन्त्यथवा वा कालप्रकर्षाद्वलीयांसोऽथ वानुवध्नन्ति, न तदा विकाराभिनिर्वृत्तिः, चिराद्वाप्यभिनिर्वर्तन्ते तनवो वा भवन्त्यथवाप्ययथोक्तसर्वलिङ्गाः, विपर्यये विपरीता इति सर्वविकारविघातभावाभावप्रतिविशेषाभिनिर्वृत्तिहेतुर्भवत्युक्तः ॥५॥**

उक्तफक्किकार्थं व्याकरोति—यदेत्यादि ।—परस्परं नानुवध्नन्ति परस्परं प्रतिकूला भवन्ति, अनुवन्धो ह्यनुकूलेऽभिप्रेतः । तत्र तदेव निदानं दोषमनुवध्नाति, यद्भूयःसामान्याद्विरोधेन दोषं दूषयति । दोषस्य दूष्यानुवन्धित्वम्—यद्—दूष्यं व्याधिकरणं सामान्यगुणत्वादिधर्मयोगादविरोधेन दूषयति । तथा, दूष्यस्य च दोषानुवन्धित्वम्—यद्—दोषस्य दूषणं प्रति शिथिलत्वसमानगुणत्वादिनानुकूल्येनावस्थानम् । तथा दोषस्य चेदमेव निदानानुवन्धित्वम्—यद्—निदानस्य व्याधिजननं प्रति समानगुणत्वम् । समानगुणतया हि दोषो निदानस्य व्याधिजननं प्रति अनुकूलो भवति । एतदुदाहरणानां च विपर्ययेणाननुवन्धो बोद्धव्यः । निदानस्य च दोषाननुवन्धः समानासमानगुणयोगात्किंचिद्दोषजनने वोद्धव्यः, सर्वथा दोषवैपरीत्ये तदा दोषजननं प्रति उदासीनत्वेन च निदानस्य निदानत्वमेव स्यात् । जनकं हि निदानमुच्यते । अथवा कालप्रकर्षादिति अनुवध्नन्तीत्यनेन संवन्धः । कालप्रकर्षादनुवध्नन्तीति कालप्रकर्षात्परस्परं निदानादयोऽनुगुणा भवन्ति यदा, तदा विकारा अभिनिर्वर्तन्त इति ज्ञेयम् । यदा परस्परं नानुवध्नन्ति न तदा विकाराभिनिर्वृत्तिर्भवतीति योजनीयम् । कालप्रकर्षाच्चानुवन्धो निदानस्य दोषेण तदा भवति, यदा हेतुविच्छेदं कृत्वा पुनः सेव्यते, काल एव वा चिरेण समानगुणतया हेतुरूपः प्राप्यते इत्यादि तर्क्यम् । अवलीयांसोऽथवाऽनुवध्नन्तीति निदानं यदल्पं भवति तदा स्तोकदोषं करोति । दोषश्च स्तोकः स्तोकं च दूष्यं दूषयतीत्यादि ज्ञेयम् । यदा चावलीयांसोऽनुवध्नन्ति, तदा तनवो वा विकारा भवन्ति, अयथोक्तसर्वलिङ्गा वा भवन्तीति योज्यम् । तनवोऽल्पमात्राः । अयथोक्तसर्वलिङ्गा इति येन प्रकारेण लिङ्गान्युक्तानि, न तेन प्रकारेणापि सर्वलिङ्गानि भवन्तीत्यर्थः । एवमेते निदानादीनामननुवन्धविशेषकृता विकारविघाताभावस्य प्रतिविशेषा उक्ताः । संप्रति निदानादीन् परस्परानुवन्धविशेषकृतान् विकाराणां विघातभावविशेषानाह—विपर्यये विपरीता इति । विपर्यय इति निदानादीनामनुवन्धे तथा शीघ्रानुवन्धे तथा वलवतां चानुवन्धे । विपरीता इति निर्वर्तमाना विकाराः, तथा शीघ्रं निर्वर्तमानास्तथा महान्तो यथोक्तसर्वलिङ्गाश्चेति यथासंख्यं बोध्यम् । उपसंहरति—इतीत्यादि ।—एतच्च प्रकरणं सर्वविकारसाधारणमपि प्रमेहस्य परस्परानुवन्धिभिरेव निदानादिभिर्जन्यं भवतीति ख्यापयितुं प्रमेहनिदाने कृतम् ॥ ५ ॥

**तत्रेमे त्रयो निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहाणामाश्वभिनिर्वृत्तिकराः । तद्यथा—हायनकयवकचीनकोद्दालकनैषधेत्कटमुकुन्दकमहाव्रीहिप्रमोदकसुगन्धकानां नवानामतिवेलमतिप्रमाणेनोपयोगः, तथा सर्पिष्मतां नवहरेणुमाषसूप्यानां ग्राम्यानूपौदकानां च मांसानां शाकतिलपललपिष्टान्नपायससकृशरविलेपीक्षुविकाराणां क्षीरमन्दकदधिद्रवमधुरतरुणप्रायाणामुपयोगो मृजा व्यायामवर्जनं स्वप्नशयनासनप्रसङ्गः यश्च कश्चिद्विधिरन्योऽपि श्लेष्ममेदोमूत्रसञ्जननः, सर्वः स निदानविशेषः ॥ ६ ॥**

संप्रति प्रकृते कफजादिमेहे परस्परानुवन्धिनो निदानादिविशेषानाह—तत्रेत्यादि ।—इह कफ एवाग्रेऽभिधीयते भूरिप्रमेहकर्तृत्वात् । हायनको धान्यविशेषः । अतिवेलमिति पुनः पुनः । हरेणुर्वर्तुलकलायः । तिलतण्डुलमाषकृतः कृशरः । मृजा उद्वर्तनम् । सर्वः स निदानविशेष इति, एवंभूतमेव निदानं प्रमेहकर्तुः श्लेष्मणः कारणमित्यर्थः ॥ ६ ॥

**वहुद्रवः श्लेष्मा दोषविशेषः ॥ ७ ॥**

**वह्ववद्धं मेदोमांसं च शरीरजक्लेदः शुक्रं शोणितं च वसा मज्जा लसीका रसश्चौजःसंख्यात इति दूष्यविशेषाः ॥ ८ ॥**

वहुद्रवः श्लेष्मा दोषविशेष इति वहुद्रव एव कफो मेहजनकः, नाल्पद्रव इति । अवद्धमिति असंहतम् । अत्र तु वहुत्वमघनत्वं च यथायोग्यतया वोद्धव्यम् । तेन, मेदसि मांसे वसामज्ज्ञोश्च द्वितीयमपि, शेषेषु वहुत्वम् । ओजःसंख्यात इति ओजोरूप एव । वक्ष्यति हि प्रमेहचिकित्सिते—"मज्जा रसौजः पिशितंच" इति । दूष्येति वह्ववद्धं मेदआदीन् प्रत्यवमृषति । किंवा, 'संख्याताः' इतिपाठः सुगमः ॥ ७ ॥ ८ ॥

**त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते प्रागतिभूयस्त्वात् । स प्रकुपितः क्षिप्रमेव शरीरे विसृप्तिं लभते । शरीरशैथिल्यात्सविसर्पन् शरीरे मेदसैवादितो मिश्रीभावं गच्छति । मेदसश्चैव वह्ववद्धत्वान्मेदसश्च गुणानां गुणैः समानगुणभूयिष्ठत्वात्स मेदसा मिश्रीभावं गच्छन्दूषयत्येतद्विकृतत्वात् । स विकृतो दुष्टेन मेदसोपहितः शरीरक्लेदमांसाभ्यां संसर्गं गच्छति । क्लेदमांसयोरतिप्रमाणाभिवृद्धत्वात्स मांसे मांसप्रदोषात्पूतिमांसपिडकाः शराविकाकच्छपिकाद्याः संजनयत्यप्रकृतिभूतत्वात्, शरीरक्लेदं पुनः दूषयन् मूत्रत्वेन परिणमयति । मूत्रवहानां स्रोतसां वङ्क्षणवस्तिप्रभवाणां मेदःक्लेदोपहितानि गुरूणि मुखा**

१ निदानं (स्य) दोषजनकं प्रतिसमानगुणत्वं । इति पाठः ॥

न्यासाद्य प्रतिरुध्यते । ततस्तेषां स्थैर्यमसाध्यतां वा जनयति प्रकृतिविकृतिभूतत्वात् ॥ ९ ॥

सन्निपाते मेलके । प्रकोपमापद्यते इति प्रमेहकरणायोद्यतो भवतीति । कुतः प्रमेहकरणायोद्यतो भवतीत्याह—प्रागतिभूयस्त्वात् । प्रागित्युत्पादकालएव । यस्मात्प्रमेहकरणं प्रत्यभिमुखो भूयांश्च कफो भूतः, तत इत्यर्थः । प्रमेहनिदानेन हि कफोऽयं प्रमेहकरणाभिमुखो जनितो भूरिश्च । ततो भूयस्त्वात्, तथा प्रमेहकरणशक्तियोगाच्च तथा प्रकुप्यतीति युक्तम् । विसृप्तिं विसरणम् । मेदसश्च गुणानां गुणैः समानगुणभूयिष्ठत्वादित्यादि ।—मेदसो गुणानां मधुरस्नेहगौरवादीनां श्लेष्मणो गुणैर्गुरुशीतादिभिर्भूरिसामान्यादित्यर्थः । समानं हि समानैर्मिलतीति भावः । विकृतत्वादितिवचनेन, प्रकृतेन श्लेष्मणा संबन्धो मेदोदूषको न भवति, किन्तर्हि विकृतेनैवेति दर्शयति । अतिप्रमाणवृद्धत्वादिति अतिशयितप्रमाणयोगेन वृद्धत्वात् । न गुणातिमात्रेण वृद्धमिह, किन्तर्ह्यवयवोपचयेनेत्यर्थः । पूतिमांसवत्यः पिडकाः पूतिमांसपिडकाः । अप्रकृतिभूतत्वादिति मांसप्रदोषेण नानाविधशराविकादिजनकत्वशक्तित्वादितीह बोद्धव्यम् । तेन, अप्रकृतभूतत्वादितिवचनं हि विशेषार्थत्वान्न पुनरुक्तम् । आसाद्य प्रतिरुध्यत इति गत्वावतिष्ठते । प्रकृतिविकृतिभूतत्वादिति प्रकृतिभूतैर्गुणैः सर्वैरेव विकृतत्वात् । सर्वएव यस्माच्छ्लेष्मणो गुणाविकृतास्तस्मात्प्रकोपप्रकर्षात् स्थिरो भवति, अतिप्रकर्षात्त्वसाध्य इत्यर्थः । किंवा प्रकृतिभूतः श्लेष्मा समाने दूष्ये मेदोवसादौ, विकृतिभूतश्चासमाने शोणितादौ, तेन, समानासमानत्वादित्यर्थः । तथाच समानदूष्यप्राप्त्या बलित्वमसमानदूष्यप्राप्त्या विरुद्धोपक्रमत्वं कफस्य भवति । ततश्च स्थैर्यमसाध्यता वा युक्तयेति मन्तव्यम् ॥ ९ ॥

शरीरक्लेदस्तु श्लेष्ममेदोमिश्रः प्रविशन् मूत्राशयं मूत्रत्वमापद्यमानः श्लैष्मिकैरेभिर्दशभिर्गुणैरुपसृज्यते । वैषम्ययुक्तैः । तद्यथाश्वेतशीतमूर्तपिच्छिलाच्छस्निग्धगुरुप्रसादमधुरसान्द्रमन्दैः, अत्र येन गुणेनैकेनानेकेन वा भूयस्तरमुपसृज्यते, तत्समाख्यं गौणं नामविशेषं प्राप्नोति ॥ १० ॥

ते तु खल्विमे दशप्रमेहा नामविशेषेण भवन्ति, तद्यथा-उदकमेहश्चेक्षुवालिकारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च सिकतामेहश्च शनैर्मेहश्चालालमेहश्चेति ॥११॥

संप्रति यथा कफमेहाः कफगुणयोगादृश भवन्ति, तथा प्राह—शरीरेत्यादि ।—वैषम्यमिह वृद्धिकृतमेव वेदितव्यम् । क्षयरूपवैषम्यस्य एवंरूपव्याध्यजनकत्वात् । वैषम्यएव वृद्धवृद्धतरत्वादिना हानिवृद्धी बोद्धव्ये । तेन, श्वेतादिगुणवृद्धा ये शुक्लमेहादय उक्ताः, तेष्वपीतरे श्लेष्मगुणा हानिवृद्धिरूपवैषम्ययुक्ताः सन्तीत्यर्थः । किंवा वैषम्ये सति क्वचिद्द्वयोश्चक्वचित्त्रयाणां क्वचिच्च चतुर्णां गुणानां वृद्धिर्भवतीति दर्शयति । तेन गुणसंख्योत्कर्षापकर्षाद्धानिवृद्धी ज्ञेये । नचेह श्वेतादिदशगुणयोगात् यथासंख्यं दश प्रमेहाः, किंतु व्यस्तसमस्तगुणयोगाच्च, अतएवाह—"येन गुणेन एकैकेनानेकेन वा" इत्यादि । सान्द्रप्रसादशब्देनैक एव गुणो गणनीयः । सान्द्रमेहव्यपदेशस्तु सान्द्रप्रसादगुणैकदेशोद्भूतत्वेन ज्ञेयः । तत्समाख्यमित्यादौ तत्समाख्यं वा तद्गौणं वा नामविशेषं प्राप्नोतीति योजनीयम् । तद्गुणस्य समा आख्या यस्य तत्समाख्यं नाम, यथा—शीतमेहशुक्रमेहसान्द्रमेहेषु । अत्र हि शीतादिगुणाख्ययैव मेहा व्यपदिश्यन्ते । इतरेषु तु उदकमेहादिषु न श्वेतादिगुणसंज्ञातुल्यं नाम, किंतर्हि श्लेष्मण एव गुणयुक्तोदकादितुल्यत्वेन गुणयोगप्रवृत्तत्वाद्गौणमुदकमेह इति । अच्छसितशीतादिकफगुणयोगाद्गौणमुदकमेह इति नाम भवति । एवमन्यत्राप्यनुसरणीयम् । उदकादयस्त्विह कफगुणमेलकलक्षणार्थाः तत्तत्कफगुणयुक्ता उपात्ताः संज्ञाकरणार्थं विशेषविज्ञानार्था भवन्तीति परस्परभिन्नलक्षणप्रतिपादका इत्यर्थः ॥ १०—११ ॥

ते दश प्रमेहाः साध्याः समानगुणमेदःस्थानकत्वात् कफस्य प्राधान्यात्समक्रियत्वात् ॥ १२ ॥

तत्र श्लोकाः श्लेष्मप्रमेहविज्ञानार्था भवन्ति—
अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ।
श्लेष्मकोपान्नरो मूत्रमुदमेही प्रमेहति ॥ १३ ॥
अत्यर्थमधुरं शीतमीषत्पिच्छिलमाविलम् ।
काण्डेक्षुरससङ्काशं श्लेष्मकोपात्प्रमेहति ॥ १४ ॥
यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने ।
पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम् ॥ १५ ॥
यस्य संहन्यते मूत्रं किंचित्किंचित्प्रसीदति ।
सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः ॥ १६ ॥
शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति ।
पुरुषो कफकोपेन तमाहुः शुक्लमेहिनम् ॥ १७ ॥
शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति यो नरः ।
शुक्रमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ १८ ॥
अत्यर्थशीतमधुरं मूत्रं मेहति यो भृशम् ।
शीतमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ १९ ॥
मूर्तान्मूत्रगतान्दोषानणून्मेहति यो नरः ।
सिकतामेहिनं विद्यान्नरं तं श्लेष्मकोपतः ॥ २० ॥
मन्दं मन्दमवेगंतु कृच्छ्रं यो मूत्रयेच्छनैः ।
शनैर्मेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ २१ ॥
तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति ।
आलालमेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥ २२ ॥

उदकोपममिति उदकवर्णादितुल्यम् । ननु इक्षुवालिका-

तुल्ये मेहे काण्डेक्षुरससङ्काशमिति किमित्युच्यते, इक्षुवालिकाकाण्डेक्ष्वोरर्थान्तरत्वात्। नैवम्, इक्षुवालिकारसस्य तथा काण्डेक्ष्वोरसस्य च एकरूपताप्रतिपादनार्थमुभयोरुपादानम्। किंवा, काण्डेक्षुरसतुल्योऽपि तथा इक्षुवालिकारसतुल्यश्चेक्षुवालिकामेहो भवतीत्युभयोपादानां[1]दर्शयति। संहन्यते स्त्यानीभवति। मूर्तानिति कठिनान्। दोषानिति जातौ वहुवचनम्। येन, दोषोऽत्रैक एव प्रभूतः कफः। तन्तुवद्धं तन्तुवद्दीर्घमित्यर्थः। लालामिवालालं समन्ताल्लालारूपमित्यर्थः। प्रति प्रति मेहं च श्लेष्मकोपत इत्यादिवचनं सुखग्रहणार्थम्। नचेह वाच्यम्—यद् यथा श्लेष्मगुणा दश प्रमेहान् जनयन्ति, न तथा किमित्यपरानपि गुणसंसर्गविकल्पान्तरेण कुर्वन्तीति। यतः भावस्वभावोऽयम्—यथा दृष्ट एव परं कल्प्यते नादृष्टे च। नहि सत्यपि भूतसंसर्गभूयस्त्वे रसभूयस्त्वं भवतीति व्यवस्थितमेव ॥ १२—२२ ॥

**इत्येते दश प्रमेहाः श्लेष्मप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ २३ ॥**

**उष्णाम्ललवणक्षारकटुकाजीर्णभोजनोपसेविनस्तथातितीक्ष्णातापाग्निसन्तापश्रमक्रोधविषमाहारोपसेविनश्च तथात्मकशरीरस्यैव क्षिप्रं पित्तं प्रकोपमापद्यते ॥ २४ ॥**

**तत्प्रकुपितं तथैवानुपूर्व्या प्रमेहानिमान् षट् क्षिप्रतरमभिनिर्वर्त्तयति ॥ २५ ॥**

**तेषामपि च पित्तगुणविशेषेण नामविशेषाः पूर्ववद्युक्ता भवन्ति। तद्यथा—क्षारप्रमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठामेहश्च हारिद्रमेहश्चेति ॥ २६ ॥**

**ते षड्भिरेतैः क्षाराम्ललवणकटुकविस्रोष्णैः पित्तगुणैः पूर्ववद्युक्ता भवन्ति ॥ २७ ॥**

उष्णेत्यादिना पित्तमेहनिदानम्। षट् क्षिप्रतरमिति श्लेष्ममेहापेक्षया। श्लेष्मणोह्यक्षिप्रकारित्वेन क्षिप्रतरोत्पादो नोक्तः। पूर्ववद्युक्ता भवन्तीति श्लेष्मवद्वृद्धिहानियुक्ता एवेत्यर्थः ॥ २३—२७ ॥

**सर्व एव ते याप्याः संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्चेति ॥ २८ ॥**

**तत्र श्लोकाः पित्तप्रमेहविशेषविज्ञानार्था भवन्ति**

**गन्धवर्णरसस्पर्शैर्यथा क्षारस्तथात्मकम्।**
**पित्तकोपान्नरो मूत्रं क्षारमेही प्रमेहति ॥ २९ ॥**
**मसीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति।**
**पित्तस्य परिकोपेण तं विद्यात्कालमेहिनम् ॥ ३० ॥**
**चाषपक्षनिभं मूत्रं मन्दं मेहति यो नरः।**
**पित्तस्य परिकोपेण तं विद्यान्नीलमेहिनम् ॥ ३१ ॥**

[1] उभयोपादानं इति पाठः।

**विस्रं लवणमुष्णं च रक्तं मेहति यो नरः।**
**पित्तस्य परिकोपेण तं विद्याद्रक्तमेहिनम् ॥ ३२ ॥**
**मञ्जिष्ठारूपि योऽजस्रं भृशं विस्रं प्रमेहति।**
**पित्तस्य परिकोपात्तं विद्यान्माञ्जिष्ठमेहिनम् ॥ ३३ ॥**
**हरिद्रोदकसङ्काशं कटुकं यः प्रमेहति।**
**पित्तस्य परिकोपात्तु विद्याद्धारिद्रमेहिनम् ॥ ३४ ॥**

**इत्येते षट् प्रमेहाः पित्तप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ ३५ ॥**

संसृष्टदोषमेदःस्थानत्वादिति सन्निकृष्टं दोषस्य पित्तस्य मेदसश्च स्थानम्। यस्मात्पित्तस्य हि आमाशयः स्थानम्, तथा मेदसोऽपि यत्स्थानं वसावहुलम्, तदप्यामाशयैकदेशएव। तेन दोषदूष्ययोः स्थानप्रत्यासत्त्या दूषणं नित्यं प्रत्यासन्नत्वाद्दुर्जयमिति भावः। किंवा संसृष्टदोषं मेदोरूपं स्थानं यस्य स तथा, एष विरुद्धोपक्रमत्वे हेतुः। तेन, यस्मात्पित्तरूपेण दोषेण संवद्धं मेदोरूपं स्थानम्, तस्माद्विरुद्धोपक्रमता। यद्धि पित्तस्य मधुरशीतादि पथ्यम्, तदपथ्यं मेदसः, यच्च मेदसः कटुकादि पथ्यम्, पित्तस्य तदपथ्यम्। चकाराद्व्याधिप्रभावाच्च याप्यत्वमिति दर्शयति ॥ २८—३५ ॥

**रूक्षकटुककषायतिक्तलघुशीतव्यवायव्यायामवमनविरेचनास्थापनशिरोविरेचनातियोगसन्धारणानशनाभिघातातपोद्वेगशोकशोणितातिसेकजागरणविषमशरीरन्यासानुपसेवमानस्य तथात्मकशरीरस्यैव क्षिप्रं वायुः प्रकोपमापद्यते ॥ ३६ ॥**

**स प्रकुपितस्तथात्मके शरीरे विसर्पन् यदा वसामादाय मूत्रवहानि स्रोतांसि प्रतिपद्यते, तदा वसामेहमभिनिर्वर्तयति। यदा पुनर्मज्जानं मूत्रवस्तावाकर्षति, तदा मज्जमेहमभिनिर्वर्तयति। यदा लसीकां मूत्राशयेऽभिवहन्मूत्रमनुवन्धं च्योतयति, लसीकातिवहुत्वाद्विक्षेपणाच्च वायोः खल्वस्यातिमूत्रप्रवृत्तिसंङ्गं करोति। तदा स मत्त इव गजः क्षरत्यजस्रं मूत्रमवेगम्, तं हस्तिमेहिनमाचक्षते। ओजः पुनर्मधुरस्वभावम्, तद् यदा रौक्ष्याद्वायोः कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहति, तदा मधुमेहं करोति ॥ ३७ ॥**

रूक्षेत्यादि वातमेहस्य निदानम्। मूत्रवस्तावाकर्षति मूत्रवस्तौ स्थित आकर्षति, अर्थान्मूत्रवस्तिमेव नयति। लसीका मांसत्वगन्तरे उदकभागः। वक्ष्यति हि शारीरे—"यन्मांसत्वगन्तरे उदकम्, तल्लसीकाशब्दं लभते" इत्यादि। अनुवन्धमित्यविच्छेदेन। च्योतयतीति पातयति। अथ वायोर्विक्षेपकारित्वेन प्रवर्तकत्वेन कथं मूत्रप्रवृत्तेरन्तरा सङ्गः? यतः, मूत्राशयं रौक्ष्याच्छेदयित्वा रूक्षंच कृत्वा नयत्योजः, स्वमहिम्ना च वायुरोजः कषायं करोति। वातो हि वृद्धः प्रभावात्कषायरसं करोति ॥ ३६—३७ ॥

तानिमांश्चतुरः प्रमेहान्वातजानसाध्यानाचक्षते महात्ययिकत्वाद्विरुद्धोपक्रमत्वात् ॥ ३८ ॥

तेषामपिच पूर्ववद्गुणविशेषेण नामविशेषा भवन्ति, तद्यथा—वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति ॥ ३९ ॥

तत्र श्लोकाः वातप्रमेहविशेषविज्ञानार्था भवन्ति
वसामिश्रं वसाभ च मुहुर्मेहति यो नरः ।
वसामेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४० ॥
मज्जानं सह मूत्रेण मुहुर्मेहति यो नरः ।
मज्जमेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४१ ॥
हस्ती मत्त इवाजस्रं मूत्रं क्षरति यो भृशम् ।
हस्तिमेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४२ ॥
कषायमधुरं पाण्डु रूक्षं मेहति यो नरः ।
वातकोपादसाध्यं तं प्रतीयान्मधुमेहिनम् ॥ ४३ ॥

इत्येते चत्वारः प्रमेहा वातप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ ४४ ॥

महात्ययिकत्वादिति मज्जप्रभृतिसारभूतधातुक्षयकरत्वात् । विरुद्धोपक्रमत्वं तु वायोः स्निग्धादि पथ्यम्, तन्मेदसोऽपथ्यमित्यादि ज्ञेयम् ॥ ३८—४४ ॥

त एवं त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा व्याख्याता भवन्ति ॥ ४५ ॥

त्रयस्तु दोषाः प्रकुपिताः प्रमेहानभिनिर्वर्तयिष्यन्त इमानि पूर्वरूपाणि दर्शयन्ति, तद्यथा—जटिलीभावं केशेषु माधुर्यमास्ये करपादयोः सुप्ततां दाहं मुखतालुकण्ठशोषं पिपासामालस्यं मलंच काये कायच्छिद्रेषूपदेहं परिदाहं सुप्ततां चाङ्गेषु षट्पदपिपीलिकाभिश्च शरीरमूत्राभिसरणं मूत्रे च मूत्रदोषान्विस्रं शरीरगन्धं निद्रां तन्द्राञ्च सर्वकालमिति ॥ ४६ ॥

उपद्रवास्तु खलु प्रमेहिणां तृष्णातीसारज्वरदाहदौर्बल्यारोचकाविपाकाःपूतिमांसपिडका अलजीविद्रध्यादयश्च तत्प्रसङ्गात् भवन्ति ॥ ४७ ॥

तत्र साध्यान्प्रमेहान्संशोधनोपशमनैर्यथार्हमुपपादयंश्चिकित्सेदिति ॥ ४८ ॥

त्रयस्त्विति । त्रयोऽपीत्यर्थः । तेन, सर्वप्रमेहाणामप्येतदेव समानं पूर्वरूपमिति दर्शयति । तत्प्रसङ्गाद्भवन्तीति प्रमेहाद्यनुबन्धाद्भवन्तीत्यर्थः ॥ ४५—४८ ॥

भवन्ति चात्र ॥

गृधुमभ्यवहार्येषु स्नानचंक्रमणद्विषम् ।
प्रमेहः क्षिप्रमभ्येति नीडद्रुममिवाण्डजः ॥ ४९ ॥
मन्दोत्साहमतिस्थूलमतिस्निग्धं महाशनम् ।
मृत्युः प्रमेहरूपेण क्षिप्रमादाय गच्छति ॥ ५० ॥
यस्त्वाहारं शरीरस्य धातुसाम्यकरं नरः ।
सेवते विविधाश्चान्याश्चेष्टाः स सुखमश्नुते ॥ ५१ ॥

यादृशे पुरुषे प्रमेहो भवति प्रायः, तमाह—गृध्नुमित्यादि ।—गृध्नुं लुब्धम् । नीडद्रुमः पक्षिणां वासवृक्षः । मृत्युः प्रमेहरूपेणेति मन्दोत्साहादियुक्ते प्रमेहो जातोऽसाध्यो भवतीति दर्शयति । विविधाश्चान्याश्चेष्टा इति धातुसाम्यकरा इत्यर्थः ॥ ४९—५१ ॥

तत्र श्लोकाः ।

हेतुर्व्याधिविशेषाणां प्रमेहाणां च कारणम् ।
दोषधातुसमायोगो रूपं विविधमेव च ॥ ५२ ॥
दश श्लेष्मकृता यस्मात्प्रमेहाः षट् च पित्तजाः ।
यथा करोति वायुश्च प्रमेहांश्चतुरो बली ॥ ५३ ॥
साध्यासाध्यविशेषाश्च पूर्वरूपाण्युपद्रवाः ।
प्रमेहाणां निदानेऽस्मिन् क्रियासूत्रं च भाषितम् ॥५४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने प्रमेहनिदानं नाम चतुर्थोऽध्यायः ।

संग्रहे व्याधिविशेषाणामिति "इह खलु" इत्यादि ग्रन्थं गृह्णाति । साध्यासाध्यविशेषा इत्यत्राऽसाध्यविशेषत्वेन पित्तजानां याप्यानां ग्रहणम् ॥ ५२—५४ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां प्रमेहनिदानव्याख्या ।

---

## पञ्चमोऽध्यायः ।

अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

सप्त द्रव्याणि कुष्ठानां प्रकृतिमापन्नानि भवन्ति, तद्यथा—त्रयो दोषा वातपित्तश्लेष्माणः प्रकोपणविकृताः, दूष्याश्च शरीरधातवस्त्वङ्मांसशोणितलसीकाः चतुर्द्धा दोषोपघातविकृताः इत्येतत्सप्तानां सप्तधातुकमेवङ्गतमाजननं कुष्ठानामतःप्रभावाण्यभिनिर्वर्त्तमानानि केवलं शरीरमुपतपन्ति ॥ ३ ॥

प्रमेहमनु प्रागुत्पत्तौ कुष्ठनिदानमुच्यते । वचनं हि—"हविःप्राशान्मेहकुष्ठयोः" इति । सप्त द्रव्याणीति,—त्रयो दोषाश्चत्वारि दूष्याणि । प्रकृतिरिति कारणमित्यर्थः । सप्तद्रव्याणां विशेषणं—'प्रकृतिमापन्नानि' इति । किंवा, प्रकृतिविकृतिमापन्नानीति पाठः । तदा प्रकृत्यां कुष्ठकारणेन विकृतिमापन्नानीत्यर्थः । एतेन च यदा कुष्ठजनकहेतुव्यतिरेकेण वातादीनां विकृतिर्भवति, न तदा कुष्ठोत्पादो भवति, किन्तु, विसर्पोत्पाद इति दर्शयति, विसर्पे हि "रक्तं लसीका

त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। सर्वएव प्रकुप्यन्ति विसर्पाणां समुद्भवे" इति वचनादेत एव सप्त विकृताः कारणमित्युक्तम्। यद्यपि कुष्ठविसर्पयोर्दोषदूष्यकृतं साम्यमस्ति, तथापि विसर्पणशीलेन रक्तप्रधानदोषेण विसर्पजन्म, अन्यथा तु कुष्ठजन्मेति व्याधिभेदोत्पत्तिः। अतएव "विविधं सर्पति येन विसर्पस्तेन संज्ञितः" इति। तथा, विशिष्टशोणितवशादेव विसर्पे प्रवला वेदना भवति, तथा, रक्तचिकित्सायाः प्राधान्येनोपदेशाच्च रक्तप्राधान्यं विसर्पे ज्ञेयम्। वचनं हि—"एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः" इति। अन्ये तु ब्रुवते—विसर्पे नावश्यं दोषदूष्यसप्तकदुष्टिः, किंतु, सप्तानां तत्र दुष्टियोग्यतया दृश्यते। कुष्ठे तु सर्वत्र प्रतिनियमेन दुष्टिरिति, यथा कुष्ठारम्भका दोषाः कुप्यन्ति, तथा च दूष्याणि। तदाह—तद्यथेत्यादि।—प्रकोपणविकृता इति कुष्ठनिदानप्रकोपणविकृताः, अन्यथा प्रकोपणवचनमनर्थकं स्यात्, विना प्रकोपणं व्याधिजनकविकृत्यभावात्। दोषोपघात इत्यनेन दोषोपघातादेव धातूनां विकृतिर्भवतीति दर्शयति, न दोषमन्तरा धातवो दूष्यन्तीत्यर्थः। किंवा, कुष्ठकारणानां क्षयवृद्धिमात्ररूपधातूनां विकृतिं निराकृत्य दोषाभिसम्बन्धरूपां दुष्टिं ग्राहयन्ति। सप्तधातुकं सप्तधातुमेलकः। एवंगतमित्युक्तक्रमेण विकृतिं गतम्। आजननं कारणम्। अतःप्रभवाणीत्येतत्कारणभूतानि। अभिनिर्वर्तमानानीति अतिप्रसर्पमाणानि। केवलं कृत्स्नं दूष्यचतुष्टयातिरिक्तमपीत्यर्थः। एतेन, प्रथमोत्पत्तौ कुष्ठे तु चतुर्धातुदुष्टिनियमः, उत्पन्नस्य अस्थिशिरादिदूषणमपि भवतीति दर्शयति। तत्र सुश्रुते कुष्ठस्य प्रथमं त्वगाश्रयस्य पश्चादुत्तरोत्तरधातूनामनुगमनमुक्तम्—"एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः। क्रमेण धातून्व्याप्नोति" इत्यादिना ग्रन्थेन। तदिहाप्यविरुद्धमेव। येन, सर्वकुष्ठेषु प्रथमं त्वच्यवश्यं वैकृतं भवति विशेषेण, पश्चाद्वैशेषिकी दुष्टिः कालप्रकर्षाद्रक्तादिषु भवति। चतुर्धातुदुष्टिश्चेह कुष्ठोत्पादे सामान्यदुष्टयभिप्रायेणोक्ता, वैशेषिके तु दुष्टिस्तेषां क्रमेणैव भवति। वैशेषिकदुष्टिश्चेह "शरीरमुपतपन्ति" इति वचनाद्व्याख्येया। अतएव सुश्रुते वैशेषिकदुष्टयभिप्रायेणैव—"कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रये" इत्यादिना विशिष्टलक्षणमुक्तम्। इह तु या सामान्येन चतुर्धातुदुष्टिरुक्ता, न सा तल्लक्षणयुक्ता, किन्तु कुष्ठोत्पादमात्रज्ञेया। तेन न विरोधः॥ १—३॥

**न च किञ्चिदस्ति कुष्ठमेकदोषप्रकोपनिमित्तम्, अस्ति तु खलु समानप्रकृतीनामपि कुष्ठानां दोषांशांशविकल्पस्थानविभागेन वेदनावर्णसंस्थानप्रभावनामचिकित्सितविशेषः॥ ४॥**

**स सप्तविधोऽष्टादशविधोऽपरिसंख्येयविधो वा भवति। दोषा हि विकल्पनैर्विकल्प्यमाना विकल्पयन्ति विकारानन्यत्रासाध्यभावात्। तेषां विकल्पविकारसंख्यानेऽतिप्रसङ्गमभिसमीक्ष्य सप्तविधमेव कुष्ठविशेषमुपदेक्ष्यामः॥ ५॥**

संप्रति त्रिदोषजन्यत्वेऽपि सर्वकुष्ठानां यथा वातिकादिव्यपदेशो भवति, तदाह—न च किंचिदित्यादि।—समानप्रकृतीनामिति अवान्तरविकल्परहिततुल्यवातादिसप्तकारणानाम्, अवान्तरभेदाभावे हि कारणानां कार्यस्याप्यनेकरूपत्वमेव स्यात्। दोषांशांशविकल्पस्य तथा स्थानस्य च विभागेन च वेदनाविशेषः कुष्ठे भवतीति वाक्यार्थः। दोषाणामंशमंशं प्रति विकल्पोंऽशांशविकल्पः। क्वचिद्वायुः स्वस्य रूक्षांशेन प्रकुपितो भवति क्वचिच्छैत्यांशेनेत्यादि। तथा, दोषदूष्यरूपस्थानविभागेन च वेदनाविशेषो भवति। वचनं हि—"तत्र रसादिस्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयो संभवन्ति" इत्यादि। स्थानंच यद्यपि चतुर्विधदूष्यरूपनियतम्, तथाप्येष दोषस्यैव दूष्ये व्याप्त्यादिकृतः स्थानविभागो ज्ञेयः। तत्र वेदनाविशेषः—"कापालं तोदबहुलम्" इत्यादि। वर्णविशेषः—"काकणन्तिकावर्णम्" इत्यादि। संस्थानविशेषः—"ऋष्यजिह्वासंस्थानम्" इत्यादि। प्रभावविशेषः—'साध्यताऽसाध्यतादि'। नामविशेषः—'कापालः' इत्यादि। यतश्च समानेऽपि कारणे दोषांशांशविकल्पस्थानविभागेन वेदनाविशेषः कुष्ठभेदकोऽस्ति, अतः सप्तविध इत्यादि योजनीयम्। सप्तविध इत्यत्रैव, वक्ष्यमाणमहाकुष्ठभेदेनाष्टादशविधस्तु चिकित्सावक्ष्यमाणभेदेन, अपरिसंख्येयस्तु वेदनाद्यवान्तरभेदेन। कुतोऽपरिसंख्याता एवंविकल्पा भवन्तीत्याह—दोषा हीत्यादि।—विकल्पनैरिति विविधभेदविकल्पनैरंशांशविकल्पादिभिर्विकल्प्यमाना भिद्यमाना विकल्पयन्ति भेदयन्ति, व्याधिकरणदोषभेदात्कार्यस्यापि व्याधेर्भेदो बहुविधो भवतीति भावः। सोऽयं दोषभेदकृतो भेदोऽसाध्ये व्याधौ नेह क्रियते इत्याह—अन्यत्रेत्यादि। असाध्यमिह प्रत्याख्येयमभिप्रेतम्। याप्यस्य भेदोऽसाध्यस्य क्रियत एव यापनार्थम्। एवं मन्यते प्रत्याख्येये व्याधौ सन्नपि दोषकृतो भेदोऽचिकित्स्यत्वेन चिकित्साविशेषाऽप्रवर्तकत्वान्नेह क्रियते, साध्ये तु चिकित्साभेदार्थं क्रियत इति युक्तम्। संप्रतीतरप्रकारत्यागं सहेतुकं दर्शयन्सप्तविधाभिधानं प्रतिजानीते—तेषामित्यादि।—विकल्पैः सर्वविकारकथनं विकल्पविकारसंख्यानम्। अतिप्रसङ्गमिति अत्यभिधानप्रसङ्गम्। ननु, यदि सप्तविधकुष्ठे अपरैकादशचिकित्सावक्ष्यमाणकुष्ठान्तर्भावो भवति, तदा सप्तविधत्वं तथाऽष्टादशविधत्वं चेति विधाद्वयं भवति यथा ज्वराणामेकविधत्वद्विविधत्वादि। तत्र सर्वास्वेव विधासु सर्वान्तर्भावोऽस्ति। न चेह सप्तमहाकुष्ठे क्षुद्रकुष्ठप्रवेशोऽस्ति, किंचैवं क्षुद्राप्रवेशे कथमिहाचार्यो निदाने सप्तकुष्ठाभिधानेन कृती स्यात्। इह तु सप्तविधकुष्ठाभिधानेन एकदोषजद्विदोषजत्रिदोषजकुष्ठाभिधानं कृतम्—"वातेऽधिकतरे कापालकुष्ठम्" इत्यादिना। न चैतत्प्रकारत्रयात्प्रकारान्तरं क्षुद्रकुष्ठानामप्यस्ति। तेन, क्षुद्र-

कुष्ठेषु यत्कुष्ठम्, तद्दोषजं वक्तव्यम् । तस्योक्तदोषलक्षणयुक्तत्वेनावरोधो व्याख्येयः । परं क्षुद्रकुष्ठे महाकुष्ठोक्तदोपलक्षणेनाल्पत्वं भवतीति ज्ञेयम् । अत्र "चर्माख्यमेककुष्ठं तु किटिमं सविपादिकम् । कुष्ठं खलसकं ज्ञेयं प्रायो वातकफात्मकम्" इत्यादि चिकित्सिते वक्ष्यमाणग्रन्थानुरोधात् क्षुद्रकुष्ठान्तर्भावो व्याख्येयः ॥ ४—५ ॥

इह वातादिषु त्रिषु प्रकुपितेषु त्वगादींश्चतुरः प्रदूषयत्सु वातेऽधिकतरे कापालकुष्ठमभिनिर्वर्तते । पित्ते त्वौडुम्बरम् । श्लेष्मणि मण्डलकुष्ठम् । वातपित्तयोर्ऋष्यजिह्वम् । पित्तश्लेष्मणोः पुण्डरीकम् । श्लेष्ममारुतयोः सिध्म । सर्वदोषाभिवृद्धौ काकणकमभिनिर्वर्तते इत्येवमेष सप्तविधः कुष्ठविशेषो भवति । स चैष भूयस्तरतमतः प्रकृतौ विकल्प्यमानायां भूयसीं विकारविकल्पसंख्यामापद्यते ॥ ६ ॥

कुष्ठानां कापालादिसंज्ञाः कपालादिसादृश्यप्रयुक्तास्तथा शास्त्रव्यवहारसिद्धाश्च बोद्धव्याः । नहि सिध्मसंज्ञायामन्वयोऽस्ति । तेन, शास्त्रव्यवहारसिद्धैव सिध्मसंज्ञा । प्रकृतौ विकल्प्यमानायामिति कुष्ठजनककारणे भिद्यमाने । विकल्पसंख्या भेदरूपासंख्या । इह क्षुद्रकुष्ठाभिधानमुक्तन्यायेन महाकुष्ठान्तर्गतत्वादेवेति बोद्धव्यम् ॥ ६ ॥

तत्रेदं सर्वकुष्ठनिदानं समासेनोपदेक्ष्यामः ।— शीतोष्णव्यत्यासमननुपूर्व्योपसेवमानस्य तथा सन्तर्पणापतर्पणाभ्यवहार्यव्यत्यासं च मधुफाणितमत्स्यमूलककाकमाचीश्च सततमतिमात्रमप्यजीर्णेऽन्ने समश्नतः चिलिचिमं च पयसा हायनकयवकचीनकोद्दालककोरदूषप्रायाणि चान्नानि क्षीरदधितक्रकोलकुलत्थमाषातसीकुसुम्भपरुषस्नेहवन्त्येतैश्चातिमात्रं सुहितभक्षितस्य च व्यवायव्यायामसन्तापानत्युपसेवमानस्य भयश्रमसन्तापोपहतस्य सहसा शीतोदकमवतरतो विदग्धं चाहारजातमनुल्लिख्य विदाहीन्यभ्यवहरतश्छर्दिं च प्रतिघ्नतः स्नेहांश्चातिचरतः युगपत् त्रयो दोषाः प्रकोपमापद्यन्ते, त्वगादयश्चत्वारः शैथिल्यमापद्यन्ते, तेषु शिथिलेषु त्रयो दोषाः प्रकुपिताः स्थानमभिगम्यावतिष्ठमानास्तानेव त्वगादीन् दूषयन्तः कुष्ठान्यभिनिर्वर्तयन्ति ७

शीतोष्णव्यत्यासं शीतोष्णपरिवर्तनम् । अननुपूर्व्येति यथोक्तक्रमत्यागेन ।—क्रमत्यागश्चोष्णं निषेव्य सहसा शीतसेवा, तद्विपर्ययश्च, तथा, अनुचिते काले शीतोष्णसेवा । एवं सन्तर्पणापतर्पणाभ्यवहार्यव्यत्यासमपि अनानुपूर्व्योपसेव्यमानस्येति ज्ञेयम् । चिलिचिमस्तन्त्रकृताऽऽत्रेयभद्रकाप्यीये दर्शितो रोहितभेदः । स्थानमधिगम्येति कुष्ठजननानुगुणं शिथिलत्वगादिस्थानं प्राप्य । किंवा, स्थानमपि जनयितव्यकुष्ठशरीरदेशं प्राप्येत्यर्थः । अवतिष्ठमाना इति वचनेन स्थिरा एव दोषाः कुष्ठकरा भवन्ति, न हि सरणशीलास्त इति दर्शयति ॥ ७ ॥

तेषामिमानि पूर्वरूपाणि, तद्यथा—अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता वैवर्ण्यं कण्डूर्निस्तोदः सुप्तता परिदाहः परिहर्षो लोमहर्षः खरत्वमूष्मायनं गौरवं श्वयथुर्वीसर्पागमनमभीक्ष्णं कायच्छिद्रेषूपदेहः पक्वदग्धदष्टक्षतोपस्खलितेष्वतिमात्रं वेदना स्वल्पानामपि च व्रणानान्दुष्टिरसंरोहणं चेति कुष्ठानां पूर्वरूपाणि भवन्ति, तेभ्योऽनन्तरं कुष्ठानि जायन्ते ॥ ८ ॥

तेषामिदं वेदनावर्णसंस्थानप्रभावनामविशेषविज्ञानं भवति—तद्यथा—रूक्षारुणपरुषविषमवसृतखरपर्यन्तानि तनून्युद्वृत्तबहिस्तनूनि सुप्तवत्सुप्तानि हृषितलोमाचितानि निस्तोदबहुलान्यल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानानि आशुभेदीनि जन्तुमन्ति कृष्णारुणकपालवर्णानि कापालकुष्ठानीति विद्यात् ॥ ९ ॥

ताम्राणि ताम्रखररोमराजीभिरवनद्धानि बहलानि बहुबहलरक्तपूयलसीकानि कण्डूक्लेदकोथदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि ससन्तापक्रिमीणि पक्वोडुम्बरफलवर्णान्यौडुम्बरकुष्ठानीति विद्यात् ॥ १० ॥

स्निग्धानि गुरूण्युत्सेधवन्ति श्लक्ष्णस्थिरपीनपर्यन्तानि शुक्लरक्तावभासानि शुक्लरोमराजीसन्तानानि बहुलबहलशुक्लपिच्छिलस्राविणि बहुक्लेदकण्डूक्रिमीणि सक्तगतिसमुत्थानभेदीनि परिमण्डलानि परिमण्डलकुष्ठानि विद्यात् ॥ ११ ॥

परुषाण्यरुणवर्णानि बहिरन्तः श्यावानि नीलपीतताम्रावभासान्याशुगतिसमुत्थानान्यल्पकण्डूक्लेदक्रिमीणि दाहभेदनिस्तोदपाकबहलानि शूकोपहतोपमानवेदनान्युत्सन्नमध्यानि तनुपर्यन्तानि कर्कशपिडकाचितानि दीर्घपरिमण्डलानि ऋष्यजिह्वाकृतीनि ऋष्यजिह्वानीति विद्यात् ॥ १२ ॥

शुक्लरक्तावभासानि रक्तपर्यन्तानि रक्तराजीसन्ततान्युत्सेधवन्ति बहुबहलरक्तपूयलसीकानि कण्डूक्रिमिदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि पुण्डरीकपलाशसंकाशानि पुण्डरीकाणीति विद्यात् ॥ १३ ॥

अस्वेदनादि पूर्वरूपं प्रभावात् । परिहर्षो झिनिझिनिका । उद्वृत्तबहिस्तनूनीति उच्छलीकृतबाह्यदेहानि । सुप्तवत्सुप्तानि अत्यर्थस्पर्शाज्ञानीत्यर्थः । कपालः स्थाल्यादिखण्डः । सक्तानि

चिरभावीनि गत्यादीनि येषां ते तथा। ऋष्यजिह्वलक्षणे वहिरिति कुष्ठपर्यन्ते, अन्तरिति विकृतमध्यमुच्यते। ऋष्यो हरिणविशेषः। पुण्डरीकपलाशशब्देन पद्मपुष्पदलमिह ॥ ८—१३ ॥

**परुषारुणविशीर्णवहिस्तनून्यन्तःस्निग्धानि शुक्लरक्तावभासानि बहून्यल्पवेदनान्यल्पकण्डूदाहपूयलसीकानि लघुसमुत्थानान्यल्पभेदक्रिमीण्यलाबुपुष्पसङ्काशानि सिध्मकुष्ठानीति विद्यात् ॥ १४ ॥**

विशीर्णवहिस्तनूनि इत्यत्र 'तनु' शब्दः प्रदेशे वर्त्तते। तेन, विशीर्णपर्यन्तदेशानीत्यर्थः। सिध्मकुष्ठं यथोक्तलक्षणं सिध्मपुष्पिकाव्यतिरिक्तमेव ब्रुवते। एतत्सिध्मपुष्पिकाभिप्रायेण च सुश्रुते सिध्मकुष्ठं क्षुद्रकुष्ठेषु पठितम्। दद्रु तु सुश्रुते महाकुष्ठे पठितमपीह क्षुद्रकुष्ठे पठितमुत्तरोत्तरधात्वनुप्रवेशाभावात् तथात्यर्थपीडारहितत्वाच्च, सुश्रुते तु तदनुवन्धित्वप्रकर्षान्महाकुष्ठे पठितम् ॥ १४ ॥

**काकणन्तिकावर्णान्यादौ पश्चात्सर्वकुष्ठलिङ्गसमन्वितानि पापीयसा सर्वकुष्ठलिङ्गसंभवेनानेकवर्णानि काकणानीति विद्यात्तान्यसाध्यानि, साध्यानि पुनरितराणि ॥ १५ ॥**

सर्वकुष्ठलिङ्गसमन्वितानीत्येतेनार्थे लब्धे पुनः पापीयसा सर्वकुष्ठलिङ्गसम्भवेनेतिवचनाद्यदेव पापीयःकुष्ठलिङ्गम्, तदेव काकणके भवति नान्यत्रेति दर्शयति। पापीयसेत्यतिपीडाकृता। किंवा, पापीयसेत्यादिपुनर्वचनेन सर्वकुष्ठलिङ्गानां पापारब्धत्वेनासाध्यतामत्यर्थपीडाकर्तृतांच दर्शयति ॥ १५ ॥

**तत्र यदसाध्यम्, तदसाध्यतां नातिवर्त्तते, साध्यं पुनःकिंचित् साध्यतामतिवर्त्तते कदाचिदपचारात्। साध्यानीह षट् काकणकवर्ज्यान्यचिकित्स्यमानान्यपचारतो वा दोषैरभिष्यन्दमानान्यसाध्यतामुपयान्ति ॥ १६ ॥**

**साध्यानामपि ह्युपेक्ष्यमाणानामेषान्त्वङ्मांसशोणितलसीकाकोथक्लेदसंस्वेदजाः क्रिमयोऽभिमूर्च्छन्ति ॥ १७ ॥**

**ते भक्षयन्तस्त्वगादीन् दोषाः पुनर्दूषयन्तइमानुपद्रवान् पृथक् पृथगुत्पादयन्ति—तत्र वातः श्यावारुणवर्णपरुषतामपि च रौक्ष्यशूलतोदव्यधहर्षसङ्कोचायासस्तम्भसुप्तिभेदभङ्गान्, पित्तं पुनर्दाहस्वेदक्लेदकोथकण्डूस्रावपाकरागान्, श्लेष्मा त्वस्य श्वैत्यशैत्यकण्डूस्थैर्यगौरवोत्सेधोपस्नेहोपलेपान्; क्रिमयस्त्वगादींश्चतुरः शिराः स्नायूनि मांसान्यस्थीन्यपि च तरुणान्याददते ॥ १८ ॥**

**अस्यामवस्थायामुपद्रवाः कुष्ठिनं स्पृशन्ति, तद्यथा—प्रस्रवणमङ्गभेदः पतनान्यङ्गावयवानां तृष्णाज्वरातीसारदाहदौर्वल्यारोचकाविपाकाश्च, तद्विधमसाध्यं विद्यादिति ॥ १९ ॥**

भवन्ति चात्र।

**साध्योऽयमिति यः पूर्वं नरो रोगमुपेक्षते।**
**स किंचित् कालमासाद्य मृतएवावबुध्यते ॥ २० ॥**
**यस्तु प्रागेव रोगेभ्यो रोगेषु तरुणेषु च।**
**भेषजं कुरुते सम्यक् स चिरं सुखमश्नुते ॥ २१ ॥**
**यथा स्वल्पेन यत्नेन छिद्यते तरुणस्तरुः।**
**स एवातिप्रवृद्धस्तु छिद्यतेऽति प्रयत्नतः ॥ २२ ॥**
**एवमेव विकारोऽपि तरुणः साध्यते सुखम्।**
**विवृद्धः साध्यते कृच्छ्रादसाध्यो वापि जायते॥२३॥**

तत्र श्लोकः।

**संख्या द्रव्याणि दोषाश्च हेतवः पूर्वलक्षणम्।**
**रूपाण्युपद्रवाश्चोक्ताः कुष्ठानां कौष्ठिके पृथक् २४**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः**

कदाचिदपचारादिति, कदाचिदित्यनेनाग्रे वक्ष्यमाणचिकित्स्यमानतापक्षान्तरं दर्शयति। अपचारतोवेति उत्पन्नेऽपि कुष्ठे निदानं सेवन्ते। अभिष्यन्दमानानीत्यापूर्यमाणानि। दोषाः पुनर्दूषयन्त इति त्वगादीनेव। तरुणानीति कोमलानि नासास्थ्यादीन्याददते भक्षयन्ति। किंचित्कालमिति असाध्यव्याधिकालम्। मृतएवेति मरणोपकण्ठगतः। अवबुध्यत इत्यत्र साध्यव्याध्यपेक्षाफलं मृत्युमिति शेषः ॥ १६—२४ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां कुष्ठनिदानव्याख्या।

---

## षष्ठोऽध्यायः।

**अथातः शोषनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**इह खलु चत्वारि शोषस्यायतनानि, तद्यथा—साहसं सन्धारणं क्षयो विषमाशनमिति ॥ ३ ॥**

**तत्र यदुक्तं साहसं शोषस्यायतनमिति तदनुव्याख्यास्यामः—यदा पुरुषो दुर्वलो हि सन् वलवता सह विगृह्णाति, अतिमहता वा धनुषा व्यायच्छति, जल्पति वातिमात्रमतिमात्रं वा भारमुद्वहति अप्सु वा प्लवते चातिदूरमुत्सादनपदाघातने वातिप्रगाढमासेवते, अतिप्रकृष्टं वाध्वानं द्रुतमभिपतति अभिहन्यते वान्यद्वा किंचिदेवंविधं विषममति-**

मात्रं व्यायामजातमारभते तस्यातिमात्रेण कर्मणोरः क्षण्यते ॥ ४ ॥

ज्वरनिदानोक्तसंबन्धाद्राजयक्ष्मनिदानमुच्यते । आयतनानीति कारणानि । संख्येयसाहसादिनिर्देशादेव संख्यायां लब्धायां 'चत्वारि' इति पुनर्वचनं साहसादीनामवान्तरवलवद्विग्रहादिभेदेऽप्येकजातीयताप्रतिपादनार्थम् । पदाघातनं पश्चाद्युद्वर्तनम् । अतिप्रकृष्टमित्यतिदूरम् ॥ १—४ ॥

तस्योरःक्षतमुपप्लवते वायुः, स तत्रावस्थितः श्लेष्माणमुरःस्थमुपसंगृह्य शोषयन् विहरत्यूर्ध्वमधस्तिर्यक् च, योंऽशस्तस्य शरीरसन्धीनाविशति तेनास्य जृम्भाङ्गमर्दो ज्वरश्चोपजायते यस्त्वामाशयमभ्युपैति, तेन रोगा भवन्ति उरस्या अरोचकश्च, यः कण्ठमभिप्रपद्यते, कण्ठस्तेनोद्ध्वस्यते स्वरश्चावसीदति। यः प्राणवहानि स्रोतांस्यन्वेति, तेन श्वासः प्रतिश्यायश्चोपजायते। यः शिरस्यवतिष्ठते, शिरस्तेनोपहन्यते । ततः क्षणनाच्चैवोरसो विषमगतित्वाच्च वायोः कण्ठस्योद्ध्वंसनात्कासः सततमस्य संजायते, स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति, शोणितागमनाच्चास्य दौर्बल्यमुपजायते, एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति । ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति । तस्मात्पुरुषो मतिमान् बलमात्मनः समीक्ष्य तदनुरूपाणि कर्माण्यारभेत कर्तुम्, बलसमाधानं हि शरीरम्, शरीरमूलश्च पुरुष इति ॥ ५ ॥

भवति चात्र ।

साहसं वर्जयेत्कर्म रक्षन् जीवितमात्मनः ।
जीवन् हि पुरुषस्त्विष्टं कर्मणः फलमश्नुते ॥ ६ ॥

उरःक्षतमुपप्लवते प्राप्नोतीत्यर्थः । उरःस्थमिति स्वभावादेवोरःस्थम् । उरस्या इत्युरोगता हृद्द्रवशूलादयः । आमाशयगतत्वेन चोरस्यरोगकरणादुरसोऽप्यामाशयप्रत्यासन्नत्वमुक्तम् । बलेन सम्यगाधीयते धार्यत इति बलसमाधानं शरीरम् । शरीरमूलश्च पुरुष इति संयोगपुरुष इत्यर्थः ॥५॥६॥

अथ सन्धारणं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषो राजसमीपे भर्तृसमीपे वा गुरोर्वा पादमूले द्यूतसभमन्यं वा सतां समाजं स्त्रीमध्यं वा समनुप्रविश्य यानैर्वाप्युच्चावचैरभियान् भयात्प्रसङ्गाद्धीमत्त्वाद्घृणित्वाद्वा निरुणद्ध्यागतानि वातमूत्रपुरीषाणि, तदा तस्य सन्धारणाद्वायुः प्रकोपमापद्यते, स प्रकुपितः शूलमुपजनयति भिनत्ति पुरीषमुच्छोषयति वा पार्श्वे चातिरुजति अंसौ चावमृद्नाति कण्ठमुरश्चावधमति शिरश्चोपहंति कासं श्वासं ज्वरं स्वरभेदं प्रतिश्यायं चोपजनयति । ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैरुपशुष्यति ॥ ७ ॥

समाजमिति सभाम् । उच्चावचैरिति उच्चनीचैः अभियानिति गच्छन् । भयादित्यादि राजसमीपादिषु यथायोग्यतया बोद्धव्यम् ॥ ७ ॥

तस्मात् पुरुषो मतिमानात्मनः शरीरेष्वेव योगक्षेमकरेषु प्रयतेत विशेषेण, शरीरं ह्यस्य मूलम्, शरीरमूलः पुरुषो भवतीति ॥ ८ ॥

भवति चात्र ।

सर्वमन्यत्परित्यज्य शरीरमनुपालयेत् ।
तदभावे हि भावानां सर्वाभावः शरीरिणामिति॥९॥

क्षयःशोषस्यायतनमिति यदुक्तम्, तदनुव्याख्यास्यामः—यदा पुरुषोऽतिमात्रं शोकचिन्तापरीतहृदयो भवति, ईर्ष्योत्कण्ठाभयक्रोधादिभिर्वा समाविश्यते, कृशो वा सन् रूक्षान्नपानसेवी भवति, दुर्बलप्रकृतिरनाहारोऽल्पाहारो वास्ते; तदा तस्य हृदयस्थायी रसः क्षयमुपैति, स तस्योपक्षयात्संशोषं प्राप्नोति, अप्रतिकाराच्चानुबध्यते यक्ष्मणा, यथोपदेक्ष्यमाणरूपेण ॥ १० ॥

योगेन ये क्षेमकरास्ते योगक्षेमकराः, ते चेह मूत्रपुरीषाविधारणादयः । विशेषेणेतिवचनाच्छरीरेष्वेव विशेषेण यत्नं कुर्यान्मानसयोगक्षेमापेक्षयेति दर्शयति । आत्मन इतिपदं परशरीरयोगक्षेमापेक्षया स्वशरीरयोगक्षेमकरणस्योपादेयतादर्शनार्थम् । अथ कथं मानसयोगक्षेमापेक्षया तथा परशरीरयोगक्षेमापेक्षया स्वशरीरयोगक्षेमः श्रेष्ठ इत्याह—शरीरमित्यादि । स्वशरीरे ह्युपहते परशरीरोपकारस्तथाध्यात्मिकस्तुभचिन्ता च व्याकुला भवतीति भावः । किंवा, योगाः शरीरस्य बलवर्णायुरुपर्कयोगाः, क्षेमाश्चानागतावाधप्रतिषेधास्तेषु । ननु यद्येवमाध्यात्मिकेऽपि भावे शरीरं मूलम्, तत्किं पुरुषोऽप्रधानमेव । नेत्याह—शरीरमूलश्च पुरुष इति । शरीरस्याद्युत्पत्तौ धर्माधर्मसहायो भोक्ता सुखदुःखानामात्मा

१ यस्त्वामाशयमभ्युपैति, तेनास्य वर्चो भिद्यते, यस्तु हृदयमाविशति ते रोगा भवन्त्युरस्याः ।

· यो रसानां तेनास्यारोचकाश्चेत्यधिकः पाठः— क्वचिदस्ति; स च चक्रासम्मत इति नात्र निवेशितः ।

१ निरुणद्ध्यागतान्वातमूत्रपुरीषवेगानिति वाऽन्यः पाठः ।

२ 'स प्रकुपितः' इत्यनन्तरम्, पित्तश्लेष्माणौ समुदीर्योर्ध्वमधस्तिर्यग्विहरति,ततश्चांशविशेषेण शरीरावयवविशेषं प्रविश्य इत्यधिकः पाठः क्वचिद्दृश्यते ॥

मूलं कारणमित्यर्थः । 'मूल'शब्दश्चायं भावप्रधानः । तेन शरीरमूलत्वं यस्यात्मनः 'शरीरमूलः' इति पुंलिङ्गनिर्देश उपपन्नः । सर्वाभाव इति धर्मादिचतुर्वर्गाभाव इत्यर्थः । हृदयस्थायी रस इति धातुस्वरूपोऽन्नरसपोषक इत्यर्थः । अन्ये तु, हृदयस्थायी रस इत्योजो ब्रुवते । यथोपदेक्ष्यमाणरूपेणेति "सन्धयः शिथिलीभवन्ति" इत्यादिग्रन्थवक्ष्यमाणलक्षणेन ॥ ८—१० ॥

यदा वा पुरुषोऽतिहर्षणात् प्रसक्तभावः स्त्रीष्वतिप्रसङ्गमारभते, तस्यातिमात्रप्रसङ्गाद्रेतः क्षयमुपैति। क्षयमपि चोपगच्छति रेतसि यदि मनः स्त्रीभ्यो नैवास्य निवर्तते, अतिप्रवर्तत एव, तस्य चातिप्रणीतसङ्कल्पस्य मैथुनमापद्यमानस्य न च शुक्रं प्रवर्तते अतिमात्रोपक्षीणत्वात्। अथास्य वायुर्व्यायच्छमानशरीरस्यैव धमनीरनुप्रविश्य शोणितवाहिनीस्ताभ्यः शोणितं प्रच्यावयति, तच्छुक्रक्षयात् शुक्रमार्गेण शोणितं प्रवर्तते वातानुसृतलिङ्गम्॥ ११ ॥

अथास्य शुक्रक्षयाच्छोणितप्रवर्तनाच्च सन्धयः शिथिलीभवन्ति, रौक्ष्यमुपजायते, भूयः शरीरं दौर्बल्यमाविशति, वायुः प्रकोपमापद्यते; स प्रकुपितो वशिकं शरीरमनुसर्पन् परिशोषयति मांसशोणिते प्रच्यावयति श्लेष्मपित्ते संरुजति पार्श्वे चावमृद्नात्यंसौ कण्ठमुद्ध्वंसयति शिरः श्लेष्माणमुपक्लेश्य प्रतिपूरयति श्लेष्मणा सन्धींश्च प्रपीडयन् करोत्यङ्गमर्दमरोचकाविपाकौ च पित्तश्लेष्मोत्क्लेशात् प्रतिलोमगत्वाच्च वायुर्ज्वरं कासं श्वासं स्वरभेदं प्रतिश्यायञ्चोपजनयति; ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैःशनैरुपशुष्यति तस्मात् पुरुषो मतिमानात्मनः शरीरमनुरक्षन् शुक्रमनुरक्षेत्। परा ह्येषा फलनिर्वृत्तिराहारस्येति॥१२

भवति चात्र।

आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः।
क्षयो ह्यस्य बहून् रोगान्मरणं वा नियच्छति १३

संप्रति शोषेषु क्षयकारणेषु प्रायः शोषजनकत्वेन प्रधानं शुक्रक्षयं शोषकारणं 'यदा वा' इत्यादिना प्राह । अतिप्रणीतसङ्कल्पस्येति अतिमहता प्रयत्नेन कृतध्वजोच्छ्रायस्य । व्यायच्छमानस्येति [1]व्यायाममाचरतः । वातानुसृतलिङ्गमिति वातलिङ्गयुक्तं दुष्टवातलिङ्गयुक्तमिति यावत् । शरीरं कर्मभूतं दौर्बल्यं कर्तृभूतमाविशतीत्यादि योजना । वशिकमिति शून्यं शुक्रशोणितक्षयात्कृतमित्यर्थः । एतच्च हेतुगर्भविशेषणम् । एतेन, यस्माद्वशिकं शरीरम्, तस्मादनुसर्पतीत्यर्थः । परा फलनिर्वृत्तिरिति श्रेष्ठा आहारफलसम्पत्तिरित्यर्थः । परं धामोत्कृष्टसारम् । उत्कृष्टत्वं च शुक्रस्यातिप्रसादरूपत्वात् । एतच्च शोषकारणेषु केवलशुक्रक्षयोपसंहरणं प्राधान्यादस्य शोषहेतुभावादिति बोद्धव्यम् । रूक्षाद्यन्नपानसेवाजनितोऽपि रक्तादिक्षयो राजयक्ष्मकारणत्वेनोक्तः ॥ ११ ॥ १३ ॥

[1] अत्र प्रकरणानुरोधाद्व्यायाममाचरतः इत्यत्र व्यवायमाचरत इति पाठः समीचीनो भाति.

विषमाशनं शोषस्यायतनमिति यदुक्तम्, तदनुव्याख्यास्यामः—यदा वा पुरुषः पानाशनभक्ष्यलेह्योपयोगान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयविषमानासेवते, तदा तस्य तेभ्यो वातपित्तश्लेष्माणो वैषम्यमापद्यन्ते, ते विषमाः शरीरमनुपसृत्य यदा स्रोतसामयनमुखानि परिवार्यावतिष्ठन्ते, तदा जन्तुर्यद्यदाहारजातमाहरति तत्तदस्य मूत्रपुरीषमेवोपचीयते भूयिष्ठं नान्यस्तथा शरीरधातुः, स पुरीषोपष्टम्भाद्वर्तयति, तस्मात् शुष्यतो विशेषेण पुरीषमनुरक्ष्यं तथा सर्वेषामत्यर्थकृशदुर्बलानाम्। तस्यानाप्यायमानस्य विषमाशनोपचिता दोषाः पृथक् पृथगुपद्रवैर्युञ्जन्तो भूयः शरीरमुपशोषयन्ति, तत्र वातः शूलमङ्गमर्दं कण्ठोद्ध्वंसनं पार्श्वसंरुजनमंसावमर्दनं स्वरभेदं प्रतिश्यायं चोपजनयति, पित्तं पुनर्ज्वरमतीसारमन्तर्दाहं च, श्लेष्मा तु प्रतिश्यायं शिरसो गुरुत्वं कासमरोचकं च, स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति, शोणितगमनाच्चास्य दौर्बल्यमुपजायते । एवमेते विषमाशनोपचिता दोषा राजयक्ष्माणमभिनिर्वर्तयन्ति। स तैरुपशोषणैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात्पुरुषो मतिमान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयादविषमाहारमाहरेदिति ॥ १४ ॥

तत्र श्लोकः।

हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः।
पश्यन् रोगान् बहून् कष्टान् बुद्धिमान् विषमाशनादिति ॥ १५ ॥

प्रकृतिकरणादयो रसविमाने प्रपञ्चनीयाः । अत्र च 'उपशय' शब्देन, उपयोक्ता यो रसविमाने वक्तव्यः, स एव गृह्यते । यतः, तत्रोक्तम्—"उपयोक्ता पुनर्यस्तमाहारमाहरति,यदायत्तमोकसात्म्यम्[1]" इति । अनेन हि तत्रोपयोक्तृपरीक्षया सात्म्यमेव परीक्ष्यत इत्युक्तम् । अयनमुखानीति गतिद्वाराणि । अयतिर्हि गतिः । परिवार्येत्यवरुध्य । तथा सर्वेषामत्यर्थकृशदुर्बलानां पुरीषमनुरक्ष्यमिति योजना । एवमेव

[1] यस्य यदुचिततया सदात्मनायुज्यते तदोकसात्म्यम्.

चार्थं वक्ष्यति—"शोषी मुञ्चति गात्राणि पुरीषस्रंसनादति । सर्वधातुक्षयार्तस्य बलं तस्य हि विड् बलम्" । कासप्रसङ्गादिति कासातिसम्बन्धादित्यर्थः ॥ १४ ॥ १५ ॥

**एतैश्चतुर्भिः शोषस्यायतनैरभ्युपसेवितैर्वातपित्तश्लेष्माण एव प्रकोपमापद्यन्ते । ते प्रकुपिता नानाविधैरुपद्रवैः शरीरमुपशोषयन्ति । तं सर्वरोगाणां कष्टतमत्वाद्राजयक्ष्माणमाचक्षते भिषजः । यस्माद्वा पूर्वमासीद्भगवतः सोमस्योडुराजस्य तस्माद्राजयक्ष्मेति ॥ १६ ॥**

कष्टतमत्वादित्यत्र 'च'कारो लुप्तनिर्दिष्टो द्रष्टव्यः । तेन, कष्टतमत्वाच्च तथा चन्द्रमसः प्रागुत्पन्नत्वाच्चेति हेतुद्वयं योज्यम् । यदा कष्टतमत्वात्तदा 'राजेव यक्ष्मा राजयक्ष्मेति' निरुक्तिर्बोध्या । उडुराजस्येति राजसंज्ञत्वं सोमस्य दर्शयति, ततश्च राज्ञो यक्ष्मा राजयक्ष्मेति निरुक्तिर्भवति ॥ १६ ॥

**तस्येमानि पूर्वरूपाणि भवन्ति, तद्यथा—प्रतिश्यायः क्षवथुरभीक्ष्णं श्लेष्मप्रसेको मुखमाधुर्यमनन्नाभिलाषोऽन्नकाले चायासो दोषदर्शनमदोषेष्वल्पदोषेषु वा पात्रोदकान्नसूपोपदंशपरिवेशकेषु भुक्तवतो हृल्लासस्तथोल्लेखनमाहारस्यान्तरान्तरा मुखस्य पादयोश्च शोषः पाण्योरवेक्षणमत्यर्थमक्ष्णोः श्वेतावभासता चातिमात्रं बाह्वोश्च प्रमाणजिज्ञासा स्त्रीकामताऽतिघृणित्वं बीभत्सदर्शनता चास्य काये स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां शून्यानां च ग्रामनगरनिगमजनपदानां शुष्कदग्धभग्नानां च वनानां कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः संस्पर्शनमधिरोहणं च यानं वा श्वोष्ट्रखरवराहैर्यानं च केशास्थिभस्मतुषाङ्गारराशीनां चाधिरोहणमिति शोषपूर्वरूपाणि भवन्ति ॥ १७ ॥**

पूर्वरूपेषु प्रतिश्यायादिप्रायः कफयुक्तपूर्वरूपोत्पादो वायुनापि प्रधानेन क्रियमाणे शोषे उरःस्थश्लेष्मसंसर्गाद्बोद्धव्यः, यतश्च प्रायेण कफोऽत्र स्थानमहिम्ना प्रकुपितो भवति । तेन, शोषं कफप्रधानलिङ्गत्वेन श्लेष्मरोग इति च ब्रुवते । अदोषेष्विति पात्रादिविशेषणम् । पाण्योश्चावेक्षणादि पूर्वरूपं प्रभावात् । बीभत्सदर्शनता काय इति विवर्णविगन्धत्वादिना । निगमनं नगरविशेषो बहुवसतिजनपदं मण्डलम् । अधिरोहणञ्चेति कृकलासादीनामेव शरीराधिरोहणम् । स्वप्ने श्वोष्ट्रखरगमनञ्चेहादिङ्नियमेन बोद्धव्यम् । तेन रिष्टं न भवति । यत्तु वक्ष्यति—"श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम्" इत्यादि । तद्दक्षिणदिङ्नियतत्वाद्रिष्टत्वं ज्ञेयम्, यत्र रूपं स्वप्नरूपमस्ति राजयक्ष्मोन्मादादौ, तत्रोच्यते, ज्वरादौ त्वविद्यमानत्वान्नोच्यते । यत्तु रिष्टं रिष्टाधिकारे ज्वरादीनां स्वप्नरूपं पूर्वरूपं वक्ष्यति—"प्रेतैः सह पिबन् मद्यम्" इत्यादिना तद्रिष्टमेव ॥ १७ ॥

**अत ऊर्ध्वमेकादशरूपाणि तस्य भवन्ति, तद्यथा—शिरसः प्रतिपूरणं कासः श्वासः स्वरभेदः श्लेष्मणश्छर्दनं शोणितष्ठीवनं पार्श्वसंरोजनं अंसावमर्दो ज्वरोऽतीसारस्तथारोचक इति ॥ १८ ॥**

एकादशरूपाणीतिवचनेन एकादशरूपाण्येव संपूर्णराजयक्ष्मणि भवन्तीति दर्शयति । कासश्वासादयश्च ये एकादशरूपा उदाहरणार्थं व्याख्याताः, न ते प्रतिनियततत्त्वार्थम् । तेन चिकित्सिते वक्ष्यमाणमेकादशरूपचतुष्टयं भिन्नलक्षणं न विरोधि ॥ १८ ॥

**तत्रापरिक्षीणमांसशोणितो बलवानजातारिष्टः सर्वैरपि शोषलिङ्गैरुपद्रुतः साध्यो ज्ञेयः । बलवर्णोपचयोपचितो हि सहत्वाद्व्याध्यौषधबलस्य कामं सुबहुलिङ्गोऽप्यल्पलिङ्ग एव मन्तव्यः ॥ १९ ॥**

अपरिक्षीणबलाभिधानेऽपि बलवानिति पदं सहजबलयुक्तत्वोपदर्शनार्थम् । सहजबलो ह्यनुपरिक्षीणबलोऽपि बलवद्भवतीति भावः । सहत्वाद्व्याध्यौषधस्येति यस्माद्व्याधिबलं तथौषधबलं च सहते । तेन न ताभ्यामभिभूयत इत्यर्थः । अल्पलिङ्ग एवेति अल्पलिङ्गइव सुखसाध्य इत्यर्थः ॥ १९ ॥

**दुर्बलन्त्वतिक्षीणमांसशोणितमल्पलिङ्गमप्यजातारिष्टमपि बहुलिङ्गमेव जातारिष्टमेव विद्यात्तदसहत्वाद्व्याध्यौषधबलस्य तं परिवर्जयेत्, क्षणेन हि प्रादुर्भवन्त्यरिष्टानि, अनिमित्तश्चारिष्टप्रादुर्भाव इति ॥ २० ॥**

**तत्र श्लोकः ।**

**समुत्थानं च लिङ्गं च यः शोषस्यावबुध्यते ।**
**पूर्वरूपं च तत्त्वेन स राज्ञः कर्तुमर्हति ॥ २१ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने शोषनिदानं नाम षष्ठोऽध्यायः ।**

बहुलिङ्गं जातारिष्टं च विद्यादिति बहुलिङ्गमिवासाध्यं तथा जातारिष्टमिव मारकं विद्यादित्यर्थः । ननु, रिष्टं विना मरणं नास्ति । वचनं हि—"अरिष्टं चापि तन्नास्ति यद्विना मरणं भवेत्" इति । तत्कथं अजातारिष्टो जातारिष्ट इवादूरमरणत्वेनेह ज्ञातव्य इत्याह—क्षणेन हीत्यादि । असाध्ये हि रिष्टं भवति । असाध्यता च बलमांसक्षयकृतास्त्येव । तेन, अवश्यं रिष्टेन भवितव्यम् । अजातारिष्टे कारणाऽसेवयाऽरिष्टं भविष्यत्येवाह—

२ तस्मिन्काले पचत्यग्निर्यदन्नं कोष्ठमाश्रितम् । मलीभवति तत्प्रायः कल्प ते किंचिदोजसे ॥ ३९ ॥ तस्मात्पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मणः । सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ॥ ४० ॥ चिकित्सास्थान अध्याय ८ शोषी मुंचति गात्राणि पुरीषस्रंसनादपि । अबलापेक्षिणीं मात्रां किंपुनर्यो विरिच्यते ॥ ८६ ॥

अनिमित्ततश्चारिष्टप्रादुर्भाव इति । न हि रिष्टं दृष्टं किञ्चित्कारणमपेक्षते, किन्त्वनिमित्तत एव भवति । तेन रिष्टानुत्पादे सति नाश्वासः कर्तव्य इत्यर्थः ॥ २० ॥ २१ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां शोषनिदानव्याख्या ।

## सप्तमोऽध्यायः ।

**अथात उन्मादनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**इह खलु पंचोन्मादा भवन्ति, तद्यथा—वातपित्तकफसन्निपातागन्तुनिमित्ताः । तत्र दोषनिमित्ताश्चत्वारः पुरुषाणामेवंविधानां क्षिप्रमभिनिर्वर्तन्ते, तद्यथा—भीरूणामुपक्लिष्टसत्त्वानामुत्सन्नदोषाणां च समलविकृतोपहितानि अनुचितान्याहारजातानि वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जानानां तन्त्रप्रयोगं वा विषममाचरतामन्यां वा शरीरचेष्टां विषमां समाचरतामत्युपक्षीणदेहानां च व्याधिवेगसमुद्भ्रमितानामुपहतमनसां वा कामक्रोधलोभहर्षभयशोकचिन्तोद्वेगादिभिः पुनरभिघाताभ्याहतानां वा मनस्युपहते बुद्धौ च प्रचलितायामभ्युदीर्णा दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि स्रोतांसि आवृत्य जनयन्त्युन्मादम् ॥ ३ ॥**

औत्पादिकं[1] शोषमभिधाय दक्षयज्ञे क्रुद्धानन्तरोत्पन्नमुन्मादं ब्रूते । वचनं हि—"तयोर्हासशोकैरुन्मादापस्माराणाम्" इति । उपक्लिष्टसत्त्वानामिति रजस्तमोभ्यामुपहतसत्त्वानाम् । उत्सन्नदोषाणामिति प्रवृद्धोद्भ्रान्तदोषाणाम् । समलैरशुचिभिर्विकृतैश्चेति वैरोधिकैरुपहितानि मिश्रीकृतानीति समलविकृतोपहितानि । किंवा, समलैर्मलिनैर्विकृतैः कुष्ठव्यङ्गादिभिः परिजनैरुपहितानि उपढौकितानीति समलविकृतोपहितानि । वैषम्ययुक्तेनोपयोगविधिनेति, यः प्रकृतिकरणादिराहारोपयोगविधिर्वक्तव्यः, तेन वैषम्ययुक्तेन, वैषम्यं च प्रकृत्यादीनामशस्तत्वं प्रकृतिगुरुत्वादिभिः कृतं ज्ञेयम् । तन्त्रं शरीरम्, तस्य परिपालनार्थं सद्वृत्तोक्तः प्रयोगः 'शरीरचेष्टा' शब्देन तु गमनादि गृह्यते, तेन न पौनरुक्त्यम् । 'तन्त्र' शब्दः शरीरे वर्तते । यदुक्तम्—"तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्" इति । व्याधिवेगसमुद्भ्रमितानामिति व्याधिबलेनाप्रकृतिस्थितानाम् । उपहतमनसामिति कामादिभिः संबध्यते । भूय इति पुनः पुनः । उपसृत्येति उपगम्य प्रदूष्येति यावत् ॥१॥ ३ ॥

**उन्मादं पुनर्मनोबुद्धिसंज्ञाज्ञानस्मृतिभक्तिशीलचेष्टाहारविभ्रमं विद्यात् ॥ ४ ॥**

उन्मादं प्रत्यात्मलक्षणमाह—उन्मादं पुनरित्यादि ।—विभ्रममिति मनःप्रभृतिभिः प्रत्येकं सम्बध्यते । अत्र मनोविभ्रमाचिन्त्यानर्थान् चिन्तयते, अचिन्त्यांश्च चिन्तयते । उक्तं हि—'मनसश्च चिन्त्यमर्थः' इति । बुद्धिविभ्रमात्तु नित्यमनित्यम्, प्रियञ्चाप्रियं पश्यति । वचनं हि—"विषमाभिनिवेशो नित्यानित्ये प्रियाप्रिये ज्ञेयः, स बुद्धिविभ्रंशः समं वृद्धिहानी पश्यति इति ।" संज्ञा ज्ञानम् तद्विभ्रमादग्न्यादिदाहं न बुध्यते । किंवा, संज्ञा नामोल्लेखज्ञानम् । स्मृतिविभ्रमात्तु न स्मरति, अयथावद्वा स्मरति । भक्तिरिच्छा, तद्विभ्रमाच्च यत्रेच्छा पूर्वमासीत्तत्राऽनिच्छा भवति । शीलविभ्रमात्क्रोधनोऽक्रोधनो वा भवतीति । चेष्टाविभ्रमादनुचितचेष्टो भवति । आचारः शास्त्रशिक्षाकृतो व्यवहारः, तद्विभ्रमादशौचाद्याचरति ॥ ४ ॥

**तस्येमानि पूर्वरूपाणि, तद्यथा—शिरसः शून्यभावः चक्षुषोराकुलता स्वनः कर्णयोरुच्छ्वासस्याधिक्यमास्यसंस्रवणमनन्नाभिलाषोऽरोचकाविपाकौ हृदयग्रहो ध्यानायाससंमोहोद्वेगाश्चास्थाने सततं लोमहर्षो ज्वरश्चाभीक्ष्णमुन्मत्तचित्तत्वमुदर्दित्वमर्दिताकृतिकरणं च व्याधेः स्वप्ने च दर्शनमभीक्ष्णं भ्रान्तचलितानवस्थितानां च रूपाणामप्रशस्तानां च तिलपीडकचक्राधिरोहणं वातकुण्डलिकाभिश्चोन्मथनं निमज्जनं कलुषाणामम्भसामावर्तेषु चक्षुषोश्चापसर्पणमिति दोषनिमित्तानामुन्मादानां पूर्वरूपाणि भवन्ति ॥ ५ ॥**

अस्थाने इत्यविषये । तेन, अध्यानविषये ध्यानम्, असंमोहविषये च मोह इत्यादि ज्ञेयम् । उन्मत्तचित्तत्वमिति उद्भ्रान्ताकृष्टचित्तत्वम् । उदर्दित्वमिति ऊर्ध्वकाये पीडितत्वम् । अर्दिताकृतिकरणमिति अर्दितस्य आकृतिर्वक्रार्द्धवक्रीभावादिलक्षणं तत्करणम् । व्याधेरिति व्याधेर्बुद्ध्यादिभ्रमरूपस्य उन्मादस्य यथोक्तानि पूर्वरूपाणीति योजना । चक्षुषोश्चोपसर्पणमिति चक्षुषोर्व्यपगम इत्यर्थः ॥ ५ ॥

**ततोऽनन्तरमेवमुन्मादाभिनिर्वृत्तिः, तत्रेदमुन्मादविशेषविज्ञानम्, तद्यथा—परिसर्पणमक्षिभ्रुवामोष्ठांसहन्वग्रहस्तपादविक्षेपणमकस्मादनियतानां च सततं गिरामुत्सर्गः फेनागमनमास्यात्, स्मितहसितनृत्यगीतवादित्रप्रयोगाश्चास्थाने वीणावंशशङ्खशम्यातालशब्दानुकरणमसाम्नायानमयानैरलङ्करणमनल-**

१ औपाधिकमिति पाठः. २ रोगाणामाद्योत्पत्तिवर्णनसमर्थनार्थं निदानस्थानस्याष्टमाध्यायस्थं 'तस्मिन्हि' इत्यादिगद्यं टीकाकृता उद्धृतम् तस्मिन्गद्ये "भयत्रासशोकैरुन्मादानां" "विविधभूताशुचिसंस्पर्शादपस्माराणाम्" इति वर्तते तदेव समीचीनम्.

ङ्कारिकैर्द्रव्यैर्लोभोऽभ्यवहार्येषु अलब्धेषु लब्धेषु चावमानस्तीव्रं मात्सर्यं कार्श्यं पारुष्यमुत्पिण्डतारुणाक्षता वातोपशयविपर्यासादनुपशयता चेति वातोन्मादलिङ्गानि ॥ ६ ॥

अमर्षक्रोधसंरम्भाश्चास्थाने शस्त्रलोष्टकाष्ठमुष्टिभिरभिद्रवणं स्वेषां परेषां वा प्रच्छायशीतोदकान्नाभिलाषः सन्तापोऽतिवेलं ताम्रहरितहारिद्रसंरब्धाक्षता पित्तोपशयविपर्यासादनुपशयता चेति पित्तोन्मादलिङ्गानि ॥ ७ ॥

स्थानमेकदेशे तूष्णींभावोऽल्पशः चंक्रमणं लालाशिङ्घाणकास्रस्रवणमनन्नाभिलाषो रहस्कामता बीभत्सत्वं शौचद्वेषः स्वप्ननित्यता श्वयथुरानने शुक्लस्तिमितमलोपदिग्धाक्षता श्लेष्मोपशयविपर्यासादनुपशयिता चेति श्लेष्मोन्मादलिङ्गानि ॥ ८ ॥

त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात्तमसाध्यमाचक्षते कुशलाः ॥ ९ ॥

साध्यानां तु त्रयाणां साधनानि भवन्ति, तद्यथा स्नेहस्वेदवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्मधूपधूमपानांजनावपीडप्रधमनाभ्यङ्गप्रदेहपरिषेकानुलेपनवधबन्धनावरोधनवित्रासनविस्मापनविस्मारणापतर्पणशिराव्यधनानि भोजनविधानं च यथास्वं युक्त्या यच्चान्यदपि किंचिन्निदानविपरीतमौषधम्, कार्यं तत्स्यादिति ॥ १० ॥

तत्र श्लोकः ।

उन्मादान्दोषजान्सम्यक्साधयेद्भिषगुत्तमः ।
अनेन विधियुक्तेन कर्मणा यत्प्रकीर्तितमिति ॥११॥

ततोऽनन्तरमेवेतिवचनात्पूर्वरूपानन्तरं शीघ्रमेवोन्मादो भवतीति दर्शयति । अन्ये रोगा यथा पूर्वरूपे भूते चिरेण भवन्ति, न तथा उन्माद इत्यर्थः । उन्मादविशेषविज्ञानमिति वाताद्युन्मादलिङ्गमित्यर्थः । परिसरणं भ्रमणम् । शम्या-दक्षिणहस्तेन वादनम् । तालस्तु वामहस्तेन वादनम् । यदुक्तं विशाखिना—"शम्या दक्षिणहस्तेन वामहस्तेन तालकः । उभाभ्यां वादनं यत्तु सन्निपातः स उच्यते" इति । असाम्नेत्युच्चैः । अयानैरिति हस्त्यादियानव्यतिरिक्तैः । लब्धेषु चावमान इति प्राप्तेष्वभ्यवहार्येष्वाहार्येष्ववधीरणं च, न केवलमवमानः, किंतु तीव्रं मात्सर्यञ्च, अभ्यवहार्यं लब्ध्वा न किंचिद्दातुमिच्छतीत्यर्थः। वाते उपशय उपशयहेतुस्नेहादिर्वातोपशयः, तस्य विपर्यासो रूक्षादिः, तेनानुपशयिता असुखिता इत्यर्थः । 'च'काराद्वातानुगुणस्नेहाद्युपशयिता च गृह्यते । अमर्ष इत्यादि पित्तोन्मादलिङ्गम् । संरम्भश्चारभटी । स्वेषां स्वीयानाम् । कफोन्मादे रहो विजनम् । अवरोधनं तमोगृहावरोधनादि । विधियुक्तेनेत्युन्मादचिकित्सिते प्रपञ्चवक्ष्यमाणविधियुक्तेनेत्यर्थः ६—११

यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्वरूपलिङ्गविशेषसमन्वितो भवत्युन्मादस्तमागन्तुमाचक्षते, केचित्पुनः पूर्वकृतं कर्माप्रशस्तमिच्छन्ति तस्य निमित्तं प्रज्ञापराध एवेति भगवान्पुनर्वसुरात्रेय उवाच, प्रज्ञापराधो ह्ययं देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचगुरुवृद्धसिद्धाचार्यपूज्यानवमत्याहितान्याचरति, अन्यद्वा किंचित्कर्माप्रशस्तमारभते। तमात्मनाहतमुपघ्नन्तो देवादयः कुर्वन्त्युन्मत्तम् १२

केचित्पुनरित्यादौ 'तस्य निमित्तम्'इतिपदमावृत्य पूर्वेण परेण च योजनीयम् । तत्र प्रज्ञापराध एव तस्य निमित्तमिति ब्रुवताऽप्रशस्तप्राक्तनकर्मजन्यत्वं न क्षिप्यते । यतः, प्राक्तनमपि हि कर्म प्रज्ञापराधजमेव । किंवा, तस्य निमित्तं प्रज्ञापराध एवेत्यनेन, तस्येत्यप्रशस्तकर्मणः प्रज्ञापराध एव कारणमिति दर्श्यते । तेन कर्मजस्य प्रज्ञापराधान्तर्निविष्टत्वमुच्यते । आत्मना हतमित्यात्मना कृतेनाशुभकर्मणा हतम् । उपघ्नन्त इत्यावेशं कुर्वन्तः ॥ १२ ॥

तत्र देवादिप्रकोपनिमित्तेनागन्तून्मादेन पुरस्कृतस्येमानि पूर्वरूपाणि, तद्यथा—देवगोब्राह्मणतपस्विनां हिंसारुचित्वं कोपनत्वं नृशंसाभिप्रायता अरतिरोजोवर्णच्छायाबलवपुषामुपतप्तिः स्वप्ने च देवादिभिरभिभर्त्सनं प्रवर्तनं चेति ततोऽनन्तरमुन्मादाभिनिर्वृत्तिः ॥ १३ ॥

तत्रायमुन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषः, तद्यथा—अवलोकयन्तो देवा जनयन्त्युन्मादम्, गुरुवृद्धसिद्धर्षयोऽभिशपन्तः, पितरो धर्षयन्तः, स्पृशन्तो गन्धर्वाः, समाविशन्तो यक्षा राक्षसास्त्वात्मगन्धमाघ्रापयन्तः, पिशाचाः पुनरधिरुह्य वाहयन्तः ॥ १४ ॥

तस्येमानि रूपाणि, तद्यथा—अत्यात्मबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणज्ञानवचनविज्ञानानि अनियतश्चोन्मादकालः ॥ १५ ॥

पुरस्कृतस्येति अभिशपनीयतया व्यवस्थापितस्य । नृशंसाभिप्रायता परापकाररुचित्वम् । अनोजा इत्योजःकार्यबलादिरहितः । प्रवर्तनं प्रेरणम्, दर्शयन्त इत्यत्रात्मानमिति शेषः । 'अत्यात्म' शब्दो बलादिभिः प्रत्येकमभिसंबध्यते । आत्मानमिति चेति अत्यात्मत्वेनात्मानानुरूपबलादियोगो भवतीत्यर्थः ॥ १३—१५ ॥

उन्मादयिष्यतामपि खलु देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचानामेष्वन्तरेषु गमनीयः पुरुषः, तद्यथा—पापस्य कर्मणः समारम्भे पूर्वकृतस्य वा कर्मणः परिणामकाले एकस्य वा शून्यगृहवासे चतुष्पथाधिष्ठाने वा सन्ध्यावेलायामप्रयतभावे वा

पर्वसन्धिषु वा मिथुनभावे रजस्वलाभिगमने वा विगुणे वाध्ययनबलिमङ्गलहोमप्रयोगे नियमव्रतब्रह्मचर्ये वा महाहवे वा देशकुलपुरविनाशे वा महाग्रहोपगमने वा स्त्रिया वा प्रजननकाले विविधभूताशुचिस्पर्शने वा वमनरुधिरस्रावाशुचेरप्रयतस्य चैत्यदेवायतनाभिगमने वा मांसमधुतिलगुडमद्योच्छिष्टे वा दिग्वाससि वा निशि नगरनिगमचतुष्पथे पवनश्मशानाभिगमने वा द्विजगुरुसुरयतिपूज्याभिधर्षणे वा धर्माख्यानव्यतिक्रमे वान्यस्य कर्मणोऽप्रशस्तस्यारम्भे वा इत्याघातकाला व्याख्याता भवन्ति ॥ १६ ॥

पर्वसन्धिरमावास्या पौर्णमासी च । दिग्वाससीति नग्ने । 'निशि'इत्यादौ पुनश्चतुष्पथवचनं निशि पुनश्चतुष्पथगमनप्रदर्शनार्थम् । एकस्येत्यादौ तु दिवाप्येकस्य चतुष्पथगमनं ब्रुवते । धर्माख्यानव्यतिक्रम इत्यविधिना धर्मप्रकाशने ॥१६॥

त्रिविधं तून्मादकराणां भूतानामुन्मादने प्रयोजनम्, तद्यथा—हिंसारतिरभ्यर्चनं चेति । तेषां तत्प्रयोजनमुन्मत्ताचारविशेषलक्षणैर्विद्यात् । तत्र हिंसार्थमुन्माद्यमानोऽग्निं प्रविशति, अप्सु निमज्जति, स्थानात् श्वभ्रे निपतति, शस्त्रकाष्ठलोष्टमुष्टिभिर्हन्त्यात्मानमन्यच्च प्राणवधार्थमारभते, तमसाध्यं विद्यात्, साध्यावितरौ ॥ १७ ॥

तयोः साधनानि, तद्यथा—मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादीन्येवमेते पञ्चोन्मादा व्याख्याता भवन्ति ॥ १८ ॥

रतिः क्रीडा । अभ्यर्चनं पूजा । उन्मादाचारविशेषलक्षणैर्विद्यादिति उन्मत्तस्याचारविशेषरूपैर्लक्षणैर्हिंसार्थिनोन्मादितं विद्यात् । तत्र हिंसार्थिनोन्मादितो हिंसानुगुणमग्निप्रवेशाद्याचरति । रत्यर्थिना चोन्मादितः क्रीडार्थं प्रचरति । पूजार्थिना गृहीतो पूजां चेष्टते । इह च देवादिवचनेन देवाद्यनुचरा देवादिसधर्माणो ग्राह्याः । देवादयस्तु न मानुषानाविशन्ति । उक्तं हि सुश्रुते—"न ते मनुष्यैः सहसंविशन्ति नवा मनुष्यान् क्वचिदाविशन्ति। ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः" इत्यादि । हिंसार्थिगृहीतस्याऽसाध्यत्वेन तद्विज्ञानार्थं सामान्योक्तान्यपि लक्षणानि श्लक्ष्णग्राहिकया ब्रुवते । तद्यथेत्यादौ गमनं देवतीर्थादिगमनम् ॥ १७ ॥ १८ ॥

ते तु खलु निजागन्तुविशेषेण साध्यासाध्यविशेषेण च प्रविभज्यमानाः पञ्च सन्तो द्वावेव भवतः । तौ परस्परमनुबध्नीतः कदाचिद्यथोक्तहेतुसंसर्गादुभयोः संसृष्टमेव पूर्वरूपं संसृष्टञ्चैव लिङ्गमभिज्ञेयम् । तत्रासाध्यसंयोगं साध्यासाध्यसंयोगं वाऽसाध्यं विद्यात् । साध्यं तु साध्यसंयोगम्,तस्य साधनं साधनसंयोगमेव विद्यादिति ॥ १९ ॥

ताविति तौ निजागन्तू । परस्परमनुबध्नीतः कदाचिदिति न सर्वदा । यथोक्तहेतुसंसर्गादिति निजागन्तुहेतुमेलकात् । तत्रेति निजागन्तुसंसर्गे । असाध्यसंयोगमिति यदा त्रिदोषजोन्मादे हिंसार्थिना देवादिनानुबन्धो भवति,तदा असाध्यसंयोगो भवति असाध्यसाध्यसंयोगस्तु एकदोषोन्मादे हिंसार्थिनोऽन्मादयोगात्तथा हिंसार्थिनोन्मादेहि दोषोन्मादानुबन्धाच्चेत्यादिर्ज्ञेयः।साध्यसंयोगस्य साध्यरूपतयैव साध्यतायां सिद्धायां पुनः 'साध्यम्' इतिवचनं साध्यरूपविकारान्तरसम्बन्धे विकारभूयस्त्वेनासाध्यशङ्काप्रतिषेधार्थम् । साधनसंयोगमेवेति निजागन्तुसाधनमेलकमित्यर्थः ॥ १९ ॥

भवन्ति चात्र ।

नैव देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
न चान्ये स्वयमक्लिष्टमुपक्लिश्यन्ति मानवम् ॥ २० ॥
ये त्वेनमनुवर्तन्ते क्लिश्यमानं स्वकर्मणा ।
न स तद्धेतुकः क्लेशो न ह्यस्ति कृतकृत्यता ॥ २१ ॥

संप्रति देवाद्युन्मादहेतुपरिग्रहार्थं देवेष्वपि कृतमेव कर्म कारणं दर्शयति—नैवेत्यादि ।—'अनुवर्तन्ते' इतिवचनाद्दुष्कृतकर्मप्रेरिता एव देवादयोऽशुभकर्माणमभिनिविशन्तीति दर्शयति । यदि हि एवमेव देवादयः कर्मनिरपेक्षा उन्मत्तं कुर्युः तदा सर्वानेव कुर्युरिति भावः । स तद्धेतुकः क्लेश इति नासौ देवादिकृत उन्माद इत्यर्थः । अथ कथं देवाद्यावेशजनितोऽप्ययं न देवादिकृत इत्याह—नह्यस्ति कृतकृत्यतेति । न यस्मादशुभकर्मणा कृते उन्मादे पुनर्देवादिकृत्यत्वमस्ति, न हि कृतं पुनः क्रियते, देवादयश्च कर्मपराधीना एवेति भावः । किंवा, 'नह्यस्य कृतकृत्यता' इति पाठः । तत्र कृतेनैव प्राक्तनकर्मणा उन्मादितो न कृत्यः करणीयः पुरुषो भवति । अन्यथा, सर्वथा सर्वेषामेवाविशेषेण देवाद्युन्मादः स्यात् । तस्यैवोन्मादः स्यायेनैवोन्मादफलजनकं कर्म कृतम्, सएव देवादिभिः कर्मपराधीनैरभिगम्यते । अनेनाभिप्रायेणाह—नह्यस्य कृतकृत्यता इति । अकृतपापकर्मणो न देवाद्यभिगमनीयतास्तीत्यर्थः । यस्माद्देवादयोऽत्र पराधीनास्तस्माद्देवादयो नोपलभ्याः ॥ २० ॥ २१ ॥

प्रज्ञापराधात्सम्प्राप्ते व्याधौ कर्मज आत्मनः ।
नाभिशंसेद्बुधो देवान्न पितॄन्नापि राक्षसान् ॥ २२ ॥
आत्मानमेव मन्येत कर्तारं सुखदुःखयोः ।
तस्माच्छ्रेयस्करं मार्गं प्रतिपद्येत नो त्रसेत् ॥ २३ ॥
देवादीनामपचितिर्हितानां चोपसेवनम् ।
ते च तेभ्यो विरोधश्च सर्वमायत्तमात्मनि ॥ २४ ॥

तत्र श्लोकः ।

**संख्या निमित्तं द्विविधं लक्षणं साध्यता न च । उन्मादानां निदानेऽस्मिन् क्रियासूत्रं च भाषितमिति ॥ २५ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने उन्मादनिदानं नाम सप्तमोऽध्यायः ।**

न च देवादिभ्यो भेतव्या इत्याह—प्रज्ञापराधादित्यादि । नाभिशंसेदिति।नोपलभेतआत्मानमित्यादौ आत्मैव शुभाशुभकर्मकरणात्सुखदुःखयोर्यथासंख्यं कारणं भवतीति वाक्यार्थः । नो त्रसेदिति देवादिभ्यः, एवमेवामी शुभकर्माणमपि गृह्णन्तीति कृत्वा नो त्रसेत्, अपचितिः पूजा । ते चेत्यादौ ते चेति देवापचितिः हितोपसेवनं च । तेभ्यो विरोधश्चेति तेभ्यो देवादिभ्यो विरोधो यथा भवति अशुभकर्मभ्यः, ततःसर्वमात्मन्यायत्तम्। एतेन, आत्माधीनमेवेदमुन्मादकारणस्य परिवर्जनं परिसेवनं च दर्शयति ॥ २२—२५ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायामुन्मादनिदानव्याख्या ।

---

## अष्टमोऽध्यायः ।

**अथतोऽपस्मारनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**इह खलु चत्वारोऽपस्मारा भवन्ति, तद्यथा—वातपित्तकफसन्निपातनिमित्ताः ॥ ३ ॥**

**त एवंविधानां प्राणभृतां क्षिप्रमभिनिर्वर्तन्ते, तद्यथा—रजस्तमोभ्यामुपहतचेतसामुद्भ्रान्तविषमबहुदोषाणां समलविकृतोपहितान्यशुचीन्यभ्यवहारजातानि वैषम्ययुक्तेन उपयोगविधिनोपयुंजानानां तन्त्रप्रयोगमपि च विषममाचरतामन्याश्च शरीरचेष्टा विषमाः समाचरतामत्युपक्षीणदेहानां वा दोषाः प्रकुपिता रजस्तमोभ्यामुपहतचेतसोऽन्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसृत्य पर्यवतिष्ठन्ते, तथेन्द्रियायतनानि तत्र चावस्थिताः सन्तो यदा हृदयमिन्द्रियायतनानि चेरिताः कामक्रोधभयलोभमोहहर्षशोकचिन्तोद्वेगादिभिः सहसा पूरयन्ति, तदा जन्तुरपस्मरति ॥ ४ ॥**

उन्मादानन्तरं प्रागुत्पत्तौ अपस्मारोत्पादादपस्मारनिदानमुच्यते। चत्वार इति वचनमागन्तुसम्बन्धेऽप्यपस्माराणां चतुष्ट्यत्वप्रतिपादनार्थम् । अपस्मारो हि नोन्मादवत्स्वतन्त्रेणागन्तुना क्रियते । उद्भ्रान्तविषमबहुदोषाणामित्यत्रोद्भ्रान्तत्वेनोन्मादित्वम्, विषमत्वेन कदाचिदपस्मारवेगकर्तृत्वं दर्श्यते । समलेत्यादि उन्मादव्याख्यानतुल्यम् । अत्युपक्षीणदेहानां वेति अत्युपक्षीणदेहत्वादित्यर्थः उन्मादनिदानेऽपि समलविकृतादिग्रन्थे 'अत्युपक्षीणदेहानाम्' इत्युक्तम् । श्रेष्ठतमायतनमिति, अन्योऽपि शरीरदेशोऽन्तरात्मनः स्थानम्, हृदयं तु श्रेष्ठतमम्, तत्रैव चेतना । विशेषेण पूरयन्ति यदा, तदा अपस्मरति अपस्मारवेगयुक्तो भवतीति वाक्यार्थः ॥ १—४ ॥

**अपस्मारं पुनः स्मृतिबुद्धिसत्त्वसंप्लवाद्वीभत्सचेष्टमावस्थिकं तमःप्रवेशमाचक्षते ॥ ५ ॥**

**तस्येमानि पूर्वरूपाणि भवन्ति, तद्यथा—भ्रूव्युदासः सततमक्ष्णोर्वैकृतमशब्दश्रवणं लालासिंघाणप्रस्रवणमनन्नाभिलषणमरोचकाविपाकौ हृदयग्रहः कुक्षेराटोपो दौर्बल्यमङ्गमर्दो मोहस्तमसो दर्शनं मूर्च्छा भ्रमश्चाभीक्ष्णं स्वप्ने च मदनर्तनवेपथुव्यथनव्यधनपतनादीन्यपस्मारपूर्वरूपाणि भवन्ति ॥ ६ ॥**

**ततोऽनन्तरमपस्माराभिनिर्वृत्तिरेव ॥ ७ ॥**

अपस्मारप्रत्यात्मलक्षणमाह—अपस्मारं पुनरित्यादि ।—संप्लवादिति विकृतिगमनात् । वीभत्सा फेनवमनाङ्गभङ्गादिरूपा चेष्टा यस्मिन्, तद्वीभत्सचेष्टम् । आवस्थिकं तमःप्रवेशमिति कादाचित्कं तमःप्रवेशम् । तमःप्रवेश इति तमःप्रवेशोऽज्ञानसाधर्म्यात् । अपस्मारवेगवान् हि तमःप्रवेश इव न किंचिद्बुध्यते । अशब्दश्रवणमिति शब्दविशेषो वातजन्यः श्रूयत इत्यर्थः ॥ ५—७ ॥

**तत्रेदमपस्मारविशेषविज्ञानं भवति, तद्यथा—अभीक्ष्णमपस्मरन्तम्, क्षणेन संज्ञां प्रतिलभमानम्, उत्पिण्डिताक्षम्, असाम्ना विप्रलपन्तम्, उद्वमन्तं फेनम्, अतीवाध्मातग्रीवम्, आविद्धशिरस्कम्, असमस्थितसक्थिपाणिपादमरुणपरुषश्यावनखनयनवदनत्वचम्, विषमविनताङ्गुलिम्, अनवस्थितचपलपरुषरूक्षरूपदर्शिनम्, वातलानुपशयं विपरीतोपशयं वातेनापस्मरन्तं विद्यात् ॥ ८ ॥**

तत्रेदमित्यादि ।—विशेषविज्ञानं वाताद्यपस्मारलिङ्गमित्यर्थः । क्षणेन संज्ञां प्रतिलभमानमिति वातापस्मारे शीघ्रं प्रबोधो भवतीति दर्शयति । आध्मातग्रीवमिति पूरितस्तब्धग्रीवम् । आविद्धशिरस्कमिति वक्रशिरस्कम् । अनवस्थितचपलरूपदर्शनं च पतनकाले ज्ञेयम् । पतितस्तु न बुध्यत एव । एवमन्यत्रापि रूपदर्शनं ज्ञेयम् । सुश्रुतेऽपि पतनकाल एव रूपदर्शनमुक्तम्, यथा—"यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति । ततो मे चित्तनाशः स्यात्सोऽपस्मारोऽनिलात्मकः" इत्यादि ॥ ८ ॥

**अभीक्ष्णमपस्मरन्तम्, क्षणेन संज्ञां प्रतिलभमानम्, अनुकूजन्तम्, आस्फालयन्तं भूमिम्, हरितहारिद्रताम्रनखनयनवदनत्वचम्, रुधिरोक्षितो-**

**ग्रभैरवादीप्तरुषितरूपदर्शिनम् पित्तलानुपशयं विपरीतोपशयं पित्तेनापस्मरन्तं विद्यात् ॥ ९ ॥**

**चिरादपस्मरन्तम्, चिराच्च संज्ञां प्रतिलभमानम्, उत्पतन्तम्, अनतिविकृतचेष्टम्, लालामुद्वमन्तम्, शुक्लनखनयनवदनत्वचम्, शुक्लगुरुरूपदर्शिनम्, श्लेष्मलानुपशयं विपरीतोपशयं श्लेष्मणापस्मरन्तं विद्यात् ॥ १० ॥**

**समवेतलिङ्गमपस्मारं सान्निपातिकं विद्यात्, तमसाध्यमाचक्षते इति चत्वारोऽपस्मारा व्याख्याताः ॥ ११ ॥**

पित्तापस्मारे यद्यपि विशेषलक्षणे क्षणेन संज्ञां प्रतिलभमानमित्युक्तम्, तथापि वातापेक्षया कालप्रकर्षोऽत्र ज्ञेयः। पित्तादपि हि वायुः शीघ्रकारी भवति। उग्रं हिंसकमिव। भैरवं तु अहिंसकमपि भयजनकं श्मशानादि। आदीप्तं ज्वलितम्। चिरादपस्मरन्तमिति भूयसा कालेनापस्मारवेगवन्तम् ॥ ९—११ ॥

**तेषामागन्तुरनुबन्धो भवत्येव कदाचित्, तमुत्तरकालमुपदेक्ष्यामः ॥ १२ ॥**

**तस्य विशेषविज्ञानं यथोक्तलिङ्गैर्लिङ्गाधिक्यमदोषलिङ्गानुरूपं किञ्चित् ॥ १३ ॥**

**सर्वमेवं हितम्, हितान्यपस्मारिभ्यस्तीक्ष्णानि चैव संशोधनान्युपशमनानि च यथास्वं मन्त्रादीनि चागन्तुसंयोगे ॥ १४ ॥**

भवत्येवेत्यत्र 'एव' कारोऽत्यन्तायोगव्यवच्छेदः। यथा—नीलं सरोजं भवत्येव, न च न भवति। 'कदाचित्' पदन्त्वत्यन्तायोगव्यवच्छेदार्थतामेव द्योतयति। एतेन, सर्वापस्मारे भूतसंवन्धो भवति, न च स्वतन्त्रापस्मारो भौतिको भवतीति दर्शयति। उत्तरकालमिति चिकित्सिते। यद्यपि चापस्मारचिकित्सितेऽपि प्रपञ्चो न वक्तव्यः, तथापि तत्रोन्मादविध्यतिदेशादुन्मादोक्तविस्तार एवेति कृत्वा इहोक्तम्,—'तमुत्तरकालमुपदेक्ष्यामः' इति। उक्तं हि—"यस्यानुवन्धन्त्वागन्तुं[1] दोपलिङ्गाधिकाकृतिम्। पश्येत्तस्य भिषक्कुर्यादागन्तून्मादभेषजम्" इति। यथोक्तलिङ्गैरिति पञ्चमीस्थाने तृतीया। तेन, यथोक्तलिङ्गेभ्यो लिङ्गाधिक्यं लिङ्गातिरिक्तत्वम्। तच्चादोषलिङ्गानुरूपं दोषलिङ्गासदृशमित्यर्थः। किंचिदिति न सर्वम्, किंतु स्तोकम्। दोषलिङ्गविलक्षणलिङ्गागन्तुरनुवन्धो भवतीत्यभिप्रायः। एतेन, स्वातन्त्र्येणागन्त्वपस्मारसंभवो न भवतीति दर्शयति। यदि हि स्वतन्त्र एवागन्तुः स्यात्, तदा न स्तोकमागन्तुलिङ्गं स्यात्। 'सर्वमेवं हितम्' इत्यादिना चिकित्सासूत्रमाह। उपशमनानि च हितानीति योजना ॥१२—१४॥

१ यस्य वातपितकफाद्यन्यतमस्यानुबंधम्—संसर्गमागन्तून्मादे दोपलक्षणैः पश्येत् तद्दोषोन्मादप्रत्यनीकं विधिं कुर्यादित्यर्थः.

**तस्मिन् हि दक्षाध्वरोद्ध्वंसे देहिनां दिक्षु विद्रवतामतिसरणप्लवनलङ्घनाद्यैर्देहविक्षोभणैः पुरा गुल्मोत्पत्तिरभूत्, हविष्प्राशान्मेहकुष्ठानाम्, भयोत्रासशोकैरुन्मादानाम्, विविधभूताशुचिसंस्पर्शादपस्माराणाम्, ज्वरस्तु खलु महेश्वरललाटप्रभवः, तत्सन्तापाद्रक्तपित्तम्, अतिव्यवायात्पुनर्नक्षत्रराजस्य राजयक्ष्मेति ॥ १५ ॥**

तत्र श्लोकाः।

**अपस्मारो हि वातेन पित्तेन च कफेन च।**
**चतुर्थः सन्निपातेन प्रत्याख्येयस्तथाविधः ॥ १६ ॥**
**साध्यांस्तु भिषजः प्राज्ञाः साधयन्ति समाहिताः।**
**तीक्ष्णैः संशोधनैश्चैव यथास्वं शमनैरपि ॥ १७ ॥**
**यदा दोषनिमित्तस्य भवत्यागन्तुरन्वयः।**
**तदा साधारणं कर्म प्रवदन्ति भिषग्वराः ॥ १८ ॥**

संप्रत्युक्तानां गदानामुत्पत्तिमाह—तस्मिन्नित्यादि।—यद्यपि च ज्वर एव तत्र प्रथम उत्पन्नस्तथाप्यसौ पृथगेव वहुक्रोधरूप उत्पन्न इति कृत्वा पश्चादुच्यते। गुल्मादयस्तु यज्ञध्वंसानन्तरकालभूता एकसामग्रीजातत्वेन प्रथममुच्यन्ते। ज्वरस्य तु सर्वप्रथमोत्पत्तिर्ज्वरनिदान एवोक्तेति भावः। पुरा इत्यायुत्पत्तौ। ललाटप्रभव इति क्रोधाग्निप्रभव इत्यर्थः। अन्वयोऽनुवन्धः। साधारणमिति दोषप्रत्यनीकं रसायनादि, देवादिप्रत्यनीकं वलिमङ्गलादि ॥ १५—१८ ॥

**सर्वरोगविशेषज्ञः सर्वौषधविशेषवित्।**
**भिषक् सर्वामयान् हन्ति न च मोहं निगच्छति॥१९**
**इत्येतदखिलेनोक्तं निदानस्थानमुत्तमम् ॥ २० ॥**

निदानस्थानोक्तसर्वरोगज्ञानफलमाह—सर्वेत्यादि।—न च मोहं निगच्छतीति निदानस्थानाद्यनुक्तेऽपि प्रमेये सूक्ष्मेऽपि वहुद्रष्टव्यत्वेन न मोहं गच्छति, किंतु तदप्यूहत इत्यर्थः। अखिलेनेति यावन्निदानस्थानतया व्याध्यष्टकं प्रतिज्ञातम् तावदखिलेनोक्तम्। तेन चिकित्सास्थानवक्तव्यनिदानाभिधानान्न न्यूनत्वम्। यच्च ज्वरादिनिदानमपि पुनर्वक्तव्यम् तदस्यैव प्रपञ्च इति भावः ॥ १९ ॥ २० ॥

**निदानार्थकरो रोगो रोगस्याप्युपलभ्यते।**
**तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्यते।**
**रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते।**
**प्लीहाभिवृद्ध्या जठरं जठराच्छोथ एव च।**
**अर्शोभ्यो जठरं दुःखं गुल्मश्चाप्युपजायते।**
**प्रतिश्यायादथो कासः कासात्संजायते क्षयः।**
**क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते ॥ २१ ॥**

सम्प्रति निदानप्रकरणाद्रोगाणामपि केषांचिद्व्याधिं प्रति कारणत्वं यत्सम्भवति, तदनुक्तमाह—निदानार्थेत्यादि।—निदानस्यार्थः प्रयोजनं व्याधिजननम्, तत्करोतीति निदाना-

र्थंकरो व्याधिजनक इति भावः । निदानरूप इति वक्तव्ये यन्नि-दानार्थकर इति ब्रुवते तेन, व्याधिना व्याध्यन्तरे क्रियमाणेऽपि मूलभूतव्याधिजनक एव हेतुः, व्याधिजन्येऽपि व्याधौ मूलव्याधिजननारम्भकापरं निदानमिति दर्शयति । तेन, रोगजन्येऽपि रोगे मूलभूतासात्म्येन्द्रियार्थादि कारणत्रयमेव कारणं भवतीति । न च चतुर्थकारणापत्तिरिति प्रसङ्गो वाच्यः। ज्वरकारणान्येव हि उष्णादीन्यतिमात्राणि ज्वरमभिनिर्वर्त्त्य रक्तपित्तमपि कारणान्तरवर्द्धितशक्तीनि जनयन्तीत्याद्यनुसरणीयम् । गुल्मश्चाप्युपजायते इति अर्शोभ्य एव । कासात्सञ्जायते क्षय इति कासाद्धातुक्षयो जायते, स च धातुक्षयो रोगः शोषाभिधानस्य हेतुरुपलभ्यत इति योजना ॥ २१ ॥

**ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः ।**
**उभयार्थकरा दृष्टास्तथैवैकार्थकारिणः ॥ २२ ॥**

ननु यत्र रोगस्य कारणं रोगो भवति, तत्र किं कारणभूतरोगोऽप्रधानमेवेदमाशङ्क्याह—ते पूर्वमित्यादि ।—ते ज्वरादयो रक्तपित्ताद्युत्पादात्प्राक् पूर्वं केवलाः सन्तः रोगा एव रुजाकर्तृत्वेन स्वयमेव प्रधाना इति, पश्चाद्धेत्वर्थकारिण इति पश्चाद्रक्तपित्ताद्युत्पादका भवन्तीत्यर्थः; प्रकारान्तरमाह—तथैवैकार्थकारिण इति, एकस्यैव हेतोरर्थं कुर्वन्ति एकार्थकारिणः ॥ २२ ॥

**कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ।**
**न प्रशाम्यति चाप्यन्यो हेत्वर्थं कुरुतेऽपि च ॥२३॥**

एतदेव पक्षद्वयं प्रातिलोम्येन विवृणोति—कश्चिद्धीत्यादि ।—अत्र यो हेत्वर्थं व्याधिजननं कृत्वा प्रशाम्यति, स एकार्थकारी; यस्तु हेत्वर्थं व्याध्यन्तरजननं कृत्वापि स्वयमप्यनुवर्त्तते, स उभयार्थकारी; यदा कासं समारभ्यापि स्वयमनुवर्त्तते, तदा प्रतिश्यायः स्वयञ्च रुजाकर्तृत्वेन रोगार्थकरः, कासजनकत्वेन च हेत्वर्थकरश्च भवति; यदा तु कासं जनयित्वा स्वयं निवर्त्तते, तदा कासकाले निवृत्तत्वात् हेत्वर्थमात्रं करोतीत्युदाहार्यम् ॥ २३ ॥

**एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः ।**
**प्रयोगापरिशुद्धत्वात्तथा चान्योऽन्यसंभवात् ॥२४॥**

व्याधिसङ्करा व्याधिमेलकाः । कुतः पुनरेवं[3] भवतीत्याह—प्रयोगेत्यादि ।—प्रयोगापरिशुद्धत्वात्, यथा—आमातीसारे स्तम्भनं कृतं दोषं संस्तभ्य शूलानाहाध्मानादि जनयति । हेत्वन्तरमाह—अन्योऽन्यसम्भवादिति परस्परकारणस्वरूपत्वादित्यर्थः । प्रतिश्यायो हि स्वरूपेणैव कासकारणम्, स च राजयक्ष्मण इत्यादि ज्ञेयम् ॥ २४ ॥

**प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ।**
**नासौ विशुद्धः, शुद्धस्तु शमयेद्यो न कोपयेत् ॥२५॥**

प्रयोगापरिशुद्धिं विवृणोति—प्रयोग इत्यादि ।—न प्रकोपयतीति व्याध्यन्तरं न कुर्यादित्यर्थः । अन्योऽन्यसंभवश्च ज्वरसन्तापाद्रक्तपित्तमुदीर्यत इत्यादिनैवोक्तो न विव्रियते ॥ २५॥

**एको हेतुरनेकस्य तथैकस्यैक एव हि ।**
**व्याधेरेकस्य चानेको बहूनां बहवोऽपि च ॥**
**ज्वरभ्रमप्रलापाद्या दृश्यन्ते रूक्षहेतुजाः ।**
**रूक्षेणैकेन चाप्येको ज्वर एवोपजायते ॥**
**हेतुभिर्बहुभिश्चैको ज्वरो रूक्षादिभिर्भवेत् ।**
**रूक्षादिभिर्ज्वराद्याश्च व्याधयः सम्भवन्ति हि ॥२६॥**

हेतुप्रकरणाद्धेतुधर्मान्तरमाह—एको हेतुरित्यादि ।—एतत्पक्षचतुष्टयोदाहरणान्याह—ज्वर इत्यादि ।—यद्यपि रूक्षं बहूनां कारणम्, तथापि देशकालादिवशात्कदाचिदेकस्यैव ज्वरस्य कारणं भवतीति ज्ञेयम् । रूक्षादिभिरिति रूक्षोष्णादिभिर्लवणादिभिः । ज्वराद्या इति ज्वररक्तपित्तगुल्माद्याः ॥२६॥

**लिङ्गं चैकमनेकस्य तथैवैकस्य लक्ष्यते ।**
**बहून्येकस्य च व्याधेर्बहूनां स्युर्बहूनि च ॥**
**विषमारम्भमूलानां लिङ्गमेकं ज्वरो मतः ।**
**ज्वरस्यैकस्य चाप्येकः सन्तापो लिङ्गमुच्यते ॥**
**विषमारम्भमूलैश्च ज्वर एको निरुच्यते ।**
**लिङ्गैरेतैर्ज्वरश्वासहिक्काद्याः संति चामयाः ॥ २७॥**

**एका शांतिरनेकस्य तथैवैकस्य लक्ष्यते ।**
**व्याधेरेकस्य चानेका बहूनां बह्व्य एव च ॥**
**शांतिरामाशयोत्थानां व्याधीनां लङ्घनक्रिया ।**
**ज्वरस्यैकस्य चाप्येका शांतिर्लङ्घनमुच्यते ॥**
**तथा लघ्वशनाद्याश्च ज्वरस्यैकस्य शान्तयः ।**
**एताश्चैव ज्वरश्वासहिक्कादीनां प्रशान्तयः ॥ २८ ॥**

लिङ्गस्यापि हेतोरिव चातुर्विध्यमाह—लिङ्गमित्यादि ।—तथैवैकस्य लक्ष्यत इति एकं लिङ्गमिति सम्बन्धः । विषमारम्भमूलानामिति विषमारम्भप्रमाणानां विषमारम्भविसर्गित्वमुष्मणो वैषम्यमित्याद्युक्तज्वरलिङ्गानामित्यर्थः । ज्वरमेकं सन्तापात्मकं दृष्ट्वा विषमारम्भविसर्गित्वादयोऽस्य भूता भविष्यन्ति वर्तन्त इति लिङ्ग्यते । ज्वर एको निरुच्यत इति ज्ञायत इत्यर्थः । लिङ्गैरेतैरित्यादि ।—एतैर्विषमारम्भविसर्गित्वाद्यैर्ज्वरादयः संति युक्ता इति शेषः । विषमारम्भादयो हि वातज्वरे तथा वातश्वासे वातहिक्कायां वा यथासम्भवं दृश्यन्त एव । एतच्चातुर्विध्यं चिकित्सायामपि ब्रूते एकेत्यादि ॥ २७—२८ ॥

**सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ।**
**साध्यते कृच्छ्रसाध्यस्तु यत्नेन महता चिरात् ॥२९॥**

चिकित्साभिधानप्रसङ्गेन चिकित्साप्रवृत्तिविषयं साध्यभेदं तथा चिकित्सानिवृत्तिविषयमसाध्यभेदमाह—सुखेत्यादि ।—सुखोपाय इति सुखलभ्यवैद्याद्युपायः । किंवा, सुखोपायः सन्साध्यत्वमल्पेनैव यत्नेनैव साध्यत इत्यर्थः ॥ २९ ॥

**याति नाशेपतां व्याधिरसाध्यो याप्यसंज्ञितः ।**
**परोऽसाध्यः क्रियाः सर्वाः प्रत्याख्येयोऽतिवर्तते ३०**

१ हेतुत्वमिति पाठान्तरम् । २ निदानं कासं इति वंगपाठः; ३ कुतः पुनरेते भवंतीति वाऽन्यः पाठः.

**नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्।**
**पादावचाराद्दैवाद्वा यान्ति भावान्तरं गदाः ॥ ३१ ॥**

याति नाशेपतामिति न सर्वथा निवर्तते । परोऽसाध्य इति याप्यापेक्षया उत्कृष्टोऽसाध्यः । अस्यैव विवरणम्—प्रत्याख्येय इति । क्रियाश्चिकित्साः । भावान्तरमिति सुखसाध्यः कृच्छ्रसाध्यो भवति कृच्छ्रश्च याप्यः, याप्यश्च प्रत्याख्येयो भवति ॥ ३०—३१ ॥

**वृद्धिस्थानक्षयावस्थां रोगाणामुपलक्षयेत् ।**
**सुसूक्ष्मामपि च प्राज्ञो देहाग्निबलचेतसाम् ॥ ३२ ॥**
**व्याध्यवस्थाविशेषान् हि ज्ञात्वा ज्ञात्वा विचक्षणः।**
**तस्यां तस्यामवस्थायां चतुःश्रेयः प्रपद्यते ॥ ३३ ॥**

व्याधेः सुखसाध्यत्वाभिधानप्रसंगेन वृद्ध्याद्यवस्थान्तरमाह—वृद्धीत्यादि । न केवलं रोगाणाम्, किंतु, देहाग्निबलचेतसामपि वृद्धिस्थानक्षयमुपलक्षयेदिति योजना । एतद्व्याध्यवस्थाज्ञानप्रयोजनमाह—व्याध्यवस्थेत्यादि ।—चतुःश्रेय इति चतुश्रेयःकारकं चिकित्सितं प्रपद्यते बुध्यत इत्यर्थः ॥ ३२—३३॥

**प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ।**
**तेषु न त्वरया कुर्याद्देहाग्निबलवित्क्रियाम् ॥**
**प्रयोगैः क्षपयेद्वा तान्सुखं वा कोष्ठमानयेत् ।**
**ज्ञात्वा कोष्ठप्रपन्नांस्तान् यथास्वं तं हरेद्बुधः ॥३४ ॥**

व्याधिप्रकारानभिधाय चिकित्सोपयुक्तान्दोषप्रकारानाह—प्राय इत्यादि ।—तिर्यग्गताश्च दोषा उन्मार्गगतत्वेन न सम्यक् शीघ्रं वा भेषजेन योजयितुं पार्यन्ते । तेन, चिरं क्लेशयन्तीति युक्तम् । देहाग्निबलविदित्यनेन तिर्यग्गतदोषे त्वरया भूरिप्रयोगे भेषजप्रयोगेण क्रियमाणा चिकित्सा देहाग्निबलं च हन्तीति सूचयति । प्रयोगैरिति । अल्पमात्रदीर्घकालप्रयोगैः । सुखं वेति सुखं यथा भवति तथा मलं हरेदित्यर्थः । यच्छोधनं वमनादि तत्रामाशयगते दोषे आसन्नं हरणयोग्यतया भवति, तेन हरेदित्यर्थः ॥ ३४ ॥

**ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानि संग्रहे ।**
**व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः ॥३५॥**

संप्रति निदानेनोक्तानां च व्याधीनां पृथग्व्याधित्वमपि भवतीत्याह—ज्ञानार्थमित्यादि ।—संग्रह इति व्याधिनिदानादिसंग्रहे । ये निदानस्थाने ज्ञानार्थं प्रधानभूतज्वरादिज्ञानार्थं व्याधयः सन्ति, तेऽविपाकाऽरुच्यादयः स्वातन्त्र्येणोत्पाद्यमाना व्याधय एव व्याधित्वेनैव व्यपदेष्टव्या इत्यर्थः । तदात्वे तु लिङ्गानीति, यदा ज्वरादिपरतन्त्रा जायन्तेऽरुच्यादयः, तदा पारतन्त्र्याल्लिङ्गान्येव ते, नामयाः । आमयो हि स्वतन्त्रः स्वचिकित्साप्रशमनीयो भवतीत्यायुर्वेदस्थितिः, ज्वरलिङ्गरूपात्वरुच्यादयो ज्वरचिकित्साप्रशमनीया एवेति भावः ॥३५॥

**विकारः प्रकृतिश्चैव द्वयं सर्वं समासतः ।**
**तद्धेतुवशगं हेतोरभावान्न प्रवर्तते इति ॥ ३६ ॥**

संप्रति निदानाधिकृतस्य हेतोर्विभावमाह—विकार इत्यादि ।—विकारो वैषम्यम् । प्रकृतिः साम्यम् । सर्वमित्यनेन शारीरं भावं वाह्यं च तथाऽऽध्यात्मिकं च त्रयं गृह्णाति । हेतुवशगमिति हेत्वधीनोत्पादात् । एतेन, आरोग्यरूपप्रकृत्यर्थिना साम्यहेतुः सेवनीयः, तथा विकाररूपरोगपरिहारार्थिना च विकारहेतुर्वर्जनीयः । न च वाच्यम्—यद्दध्यादिशोथजनहेतोरुपरमेऽपि तत्तज्जनितदोषादिदर्शनान्मृषैतद्वचनम्—'हेतोरभावान्न प्रवर्तते' इति । यदुपरतेऽपि दध्यादौ दध्यादिजनितो दोषसन्तानः शोथानुजनकस्तत्र प्रवर्तते ॥ ३६ ॥

**तत्र श्लोकाः**

**हेतवः पूर्वरूपाणि रूपाण्युपशयस्तथा ।**
**संप्राप्तिः पूर्वमुत्पत्तिः सूत्रमात्रं चिकित्सितम् ॥**
**ज्वरादीनां विकाराणामष्टानां साध्यता न च ।**
**पृथगेकैकशश्चोक्ता हेतुलिङ्गोपशान्तयः ॥**
**हेतुपर्यायनामानि व्याधीनां लक्षणस्य च ।**
**निदानस्थानमेतावत्संग्रहेणोपदिश्यते इति ॥ ३७ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने अपस्मारनिदानं नामाष्टमोऽध्यायः ।**

**निदानस्थानं समाप्तम् ।**

संग्रहे 'सूत्रमात्रं चिकित्सितम्' इत्यन्तेनापस्माराध्यायार्थसंग्रह उक्त इति बोद्धव्यम् । 'ज्वरादीनाम्' इत्यादिग्रन्थेन तु निदानस्थानोक्तसंग्रहं करोति । यद्यपि ज्वरस्य ज्वरनिदानेऽसाध्यता नोक्ता, तथापि 'अष्टानाम्' इतिपदं "छत्रिणो गच्छंति" इति न्यायेन बोध्यम् । किंवा, अष्टानां हेतुलिङ्गोपशान्तय इति योजनीयम् । असाध्यता यथायोग्यतयैव बोद्धव्या । पृथक्त्वेन चैकैकशश्चेति पृथगेकैकशः । तेन, पृथक्त्वेन सर्वसाधारणहेत्वादयो निदानस्थानादावुक्ताः, तथैवैकशश्च ज्वरादीनां हेतुलिङ्गोपशान्तयः स्वे स्वे अध्याये उक्ताः । अत्र च लिङ्गग्रहणेन पूर्वलिङ्गग्रहणम्, उपशांतिग्रहणेन चोपशयग्रहणम्, सम्प्राप्तेस्तु प्रतिरोगं अभिधानाद्ग्रहणम् व्याख्येयम् । हेतुपर्यायनामानीति "हेतुर्निमित्तम्" इत्यादिना, व्याधिपर्यायनामानीति तथा लक्षणपर्यायनामानीति चाध्यायोक्तान्येव ज्ञेयानि । संप्राप्तेस्तु "संप्राप्तिर्जातिरागतिः" इंति नामकथनं लक्षणप्रयोजकमेव प्रायः, तेन, इह न संगृहीतम् । किंवा, हेतव इत्यादि स्थानसंग्रह एव, अपस्माराध्यायार्थसंग्रहस्तु, स्थानसंग्रहेणैवाव्यवहितत्वेन कृतत्वान्न पृथक्कृतः । तत्र हेतव इत्यादि सर्वरोगे हेत्वादिसंग्रहणम् । अस्मिन्संपर्के पृथक्त्वेनेति ज्वरादीनामिति सम्बध्यते । संग्रहेणेति वचनाच्चिकित्सितप्रपञ्चनीयं निदानं सूचयति । केचिदत्र निदीयते निबध्यते हेत्वादिपञ्चकमनेनेति निदानमिति 'निदान' शब्दव्युत्पत्तिं कुर्वन्ति । 'निदान' शब्देन च गवां दोहनकालनिबन्धनरज्जुरुच्यते । ज्वरनिदाने च निदानशब्दो व्याकृत एव ॥ ३७ ॥

**इति महामहोपध्यायश्रीमच्चरकचतुराननचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायामपस्मारनिदानव्याख्या ।**

**निदानस्थानव्याख्या समाप्ता ।**

# विमानस्थानम् ।

## प्रथमोऽध्यायः ।

अथातो रसविमानं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

इह खलु व्याधीनां निमित्तपूर्वरूपरूपोपशयसंख्याप्राधान्यविधिविकल्पबलकालविशेषाननुप्रविश्यानन्तरं दोषभेषजदेशकालबलशरीराहारसारसात्म्यसत्त्वप्रकृतिवयसां मानमवहितमनसा यथावज्ज्ञेयं भवति भिषजा दोषादिमानज्ञानायत्तत्वात् क्रियायाः । न ह्यमानज्ञो दोषादीनां भिषक् व्याधिनिग्रहसमर्थो भवति । तस्माद्दोषादिमानज्ञानार्थं विमानस्थानमुपदेक्ष्यामोऽग्निवेश ॥ ३ ॥

ओं नमो गणेशाय ॥ निदानज्ञातहेत्वादिपञ्चकस्य चिकित्सोपयोगिताया दोषभेषजादिविशेषज्ञानमपेक्षितं भवत्यऽतो वक्ष्यमाणदोषभेषजादिविशेषज्ञापकं विमानं ब्रूते । तत्रापि च दोषभेषजयोः प्राधान्यात् तद्विशेषज्ञापकं रसविमानं प्रथमं ब्रूते । तत्रापि इमं च स्थानसम्बन्धमध्यायसम्बन्धंच दर्शयिष्यति । विशेषेण मीयते ज्ञायते दोषभेषजाद्यनेनेति विमानं दोषभेषजादीनां प्रभावादिविशेष इत्यर्थः, एवंभूतं विमानमभिधेयतया यत्र तिष्ठति तद्विमानस्थानम् । रसविमानमधिकृत्य कृतोऽध्यायो रसविमानम् । इह खल्वित्यादिना स्थानसम्बन्धमाह । इह सम्प्राप्तिभेदसंख्याप्राधान्यादिग्रहणेनैव सम्प्राप्तिमुपदिशन् संख्यादिभेदेन सर्वेव सम्प्राप्तिः कथिता भवतीति दर्शयति । निमित्तादीनां तु न तादृशोऽल्पग्रन्थो वक्तव्योऽस्ति, येन भेदेन तेऽपीह कथ्यन्ते, अतस्ते सामान्येनोक्ताः । अनुप्रविश्येति बुद्ध्वा । दोषादयः सूत्रस्थान एव प्रपंचिताः । मानमिति प्रभावविशेषः । एतज्ज्ञाने हेतुमाह—दोषादीत्यादि । क्रियाया इति चिकित्सायाः ॥ १—३ ॥

तत्रादौ रसद्रव्यदोषविकारप्रभावान् वक्ष्यामः—रसास्तावत् षट् मधुराम्ललवणकटुतिक्तकषायाः । ते सम्यगुपयुज्यमानाः शरीरं यापयन्ति, मिथ्योपयुज्यमानास्तु खलु दोषप्रकोपनायोपकल्पयन्ति ॥ ४ ॥

दोषाः पुनस्त्रयो वातपित्तश्लेष्माणः । ते प्रकृतिभूताः शरीरोपकारका भवन्ति, विकृतिमापन्नास्तु खलु नानाविधैर्विकारैः शरीरमुपतापयन्ति ॥ ५ ॥

अध्यायार्थं वक्तुं प्रतिजानाति—तत्रादावित्यादि । यद्यपि च दोषभेषजेत्यादौ दोषापेक्षत्वाद्भेषजस्य, दोष आदौ कृतः, तथापीह रसद्रव्यरूपभेषजस्यापेक्षितरोगप्रशमकत्वेन तथा दोषस्यापि रसद्रव्ययोरेव कारणत्वेन भेषजशब्दसूचितेन रसद्रव्ये एवाग्रे कृते, पश्चात्तु दोषग्रहणगृहीतौ दोषविकारौ । प्रकृष्टो भावः प्रभावः शक्तिरित्यर्थः, स चेहाचिन्त्यश्चिन्त्यश्च ग्राह्यः । येन, "तत्र खल्वनेकरसेषु" इत्यादिना द्रव्यविकारयोः प्रभावं रसदोषद्वारा च चिन्त्यमपि वक्ष्यति । यापयन्तीति साम्येनावस्थापयन्ति । 'मिथ्या' शब्द इहातियोगायोगमिथ्यायोगेषु वर्तते । दोषा इति शारीरदोषाः । 'पुनः' शब्दो मानसदोषं व्यावर्तयति ॥ ४—५ ॥

तत्र दोषमेकैकं त्रयस्त्रयो रसा जनयन्ति, त्रयस्त्रयश्चोपशमयन्ति । तद्यथा कटुतिक्तकषाया वातं जनयन्ति, मधुराम्ललवणास्त्वेनं शमयन्ति । कट्वम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायास्त्वेनं शमयन्ति । मधुराम्ललवणाः श्लेष्माणं जनयन्ति, कटुतिक्तकषायास्त्वेनं शमयन्ति ॥ ६ ॥

रसानामसंसृष्टानां कर्माह—तत्रेत्यादि । अनेन च रसकर्मोपदेशेन दोषाणामपि तत्तद्रसोपशमनीयत्वविशेष उक्तो भवति । कटुतिक्तकषाया वातं जनयन्तीति असति परिपन्थिनीति ज्ञेयम्, तेन अर्कागुरुगुडूच्यादीनां तिक्तानामपि वाताऽजनकत्वे न दोषः । तत्रोष्णवीर्यता परिपन्थिनी विद्यते, तेन, न ते वातं जनयन्तीत्याद्यनुसरणीयम् । एनमिति पदेन, यश्च कट्वादिजो वायुस्तमेव मधुरादयः सर्वात्मवैपरीत्यविशेषेण शमयन्तीति दर्शयति । जागरणादिजे हि वायौ जागरणादिविपरीताः स्वप्नादयएव पथ्याः । एवं पित्तश्लेष्मणोरपि 'एनदेनं' शब्दयोस्तात्पर्यं दर्शयति ॥ ६ ॥

रसदोषसन्निपाते तु ये रसा यैर्दोषैः समानगुणाः समानगुणभूयिष्ठा वा, ते तानभिवर्धयन्ति, विपरीतगुणास्तु विपरीतगुणभूयिष्ठा वा शमयन्त्यभ्यस्यमाना इत्येतद्व्यवस्थाहेतोः षट्त्वमुपदिश्यते रसानां परस्परेणासंसृष्टानाम्, त्रित्वं च दोषाणाम् ॥ ७ ॥

अथ कया युक्त्या रसा दोषान् जनयन्ति शमयन्ति चेत्याह—रसदोषेत्यादि । सन्निपात इत्यन्तःशरीरमेलके । 'तु' शब्दो विशेषे, तेन, विपरीतगुणा एव विशेषेण विपरीतगुणभूयिष्ठापे-

---

१ अनुप्रविश्यानन्तरमित्यत्राभिनिविश्येति पाठान्तरम् ॥
२ रसद्रव्यदोषविकारभेषजदेशकालबलशरीरसाराहारसात्म्यसत्वप्रकृतिवयसामितिगंगाधरसंमतः पाठः. ३ रसादीनामित्यपरः पाठः. ४ रसादिमानार्थमित्यपरः पाठः.

१ प्रतिजानीते. २ सन्निपाते.

क्षया शमयन्तीति दर्शयति। रसानांतु यथा उपचाराद्गुणा भवन्ति तदभिहितं "गुणागुणाश्रया नोक्ताः" इत्यादिसूत्रेण। अभ्यस्यमानाः इति न सकृदुपयुज्यमानाः। अथ कस्माद्रसदोषसंसर्गभूयस्त्वं परित्यज्य रसषट्त्वं दोषत्रित्वं च उच्यते? इत्याह—इत्येतदित्यादि। व्यवस्थेति रसदोषसंसर्गप्रपञ्चसंक्षेपः। परस्परेणासंसृष्टानामिति पदं दोषाणामित्यनेनापि योज्यम्॥ ७॥

**संसर्गविकल्पविस्तरो ह्येषामपरिसंख्येयो भवति विकल्पभेदाऽपरिसंख्येयत्वात्॥ ८॥**

रसदोषसंसर्गप्रपञ्चानभिधाने हेतुमाह—संसर्गेत्यादि। यस्मात् संसर्गभेदविस्तरोऽपरिसंख्येयस्तस्मात् षट्त्वं त्रित्वं चोच्यते। विकल्पभेदाऽपरिसंख्येयत्वादिति संसर्गस्य विकल्पस्य भेदो विजातीयप्रकारस्तस्याऽपरिसंख्येयत्वात्। एतेन, यथा रसानामवान्तरव्यक्तिभेदेऽपि मधुरत्वादिसामान्ययोगान्मधुरादिव्यपदेशेन षट्त्वमुच्यते, तथा मधुराम्लमधुरलवणादिसंसर्गाणामपि सत्यप्यवान्तरभेदे सामान्येनोपसंग्रहं कृत्वा त्रिषष्टिसंख्यानियमो भविष्यतीति निरस्यते। यतः, मधुराम्लादिसंसर्गोऽपि विजातीयो मधुरतरमधुरतमादिभेदकृतभेदोऽपरिसंख्येयो भवति। वचनं हि—"रसास्तरतमाभ्यस्ताः संख्यामतिपतन्ति हि" इति॥ ८॥

**तत्र खल्वनेकरसेषु[1] द्रव्येष्वनेकदोषात्मकेषु च विकारेषु रसदोषप्रभावमेकैकत्वेनाभिसमीक्ष्य[2] ततो द्रव्यविकारप्रभावतत्त्वं व्यवस्येत्॥ ९॥**

अथ कथं तर्हि रसानां संसृष्टानां दोषाणां च प्रभावो ज्ञेय इत्याह—तत्र खल्वित्यादि। तत्र चानेकरसद्रव्यस्यानेकदोषविकारस्य च प्रत्येकरसदोषप्रभावमेलकेन प्रभावं कथयन् रससंसर्गदोषसंसर्गयोरपि तादृशमेव प्रभावं कथयति, यतः, रसदोषसंसर्गप्रभावावत्र द्रव्यविकारप्रभावाश्रयित्वाद्रसदोषजद्रव्यविकारप्रभावत्वेनोच्येते। अनेन न्यायेन साक्षादनुक्तोपि एकरसद्रव्यैकदोषविकारयोरपि प्रभावः संसृष्टदोषप्रभावकथनादुक्त एव ज्ञेयः। एकैकत्वेनाभिसमीक्ष्येति प्रत्येकयुक्तरसादिप्रभावेणानेकरसं द्रव्यं अनेकदोषं च विकारं समुदितप्रभावमभिसमीक्ष्य॥ ९॥

**नत्वेवं खलु सर्वत्र। न हि विकृतिविषमसमवेतानां नानात्मकानां द्रव्याणां परस्परेण चोपहतानामन्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसातुं शक्यम्॥ १०॥**

अयं च रसदोषप्रभावद्वारा द्रव्यविकारप्रभावनिश्चयो न सर्वत्र द्रव्ये विकारे चेत्याह—न त्वेवं खलु सर्वत्रेति। अत्रैव हेतुमाह—नहीत्यादिनाध्यवसातुं शक्यमित्यन्तेन। विकृतिविषमसमवेतानामिति विकृतिसमवेतानां तथा विषमसमवेतानाम्। समवेतानामिति मिलितानां रसानां दोषाणां च तत्र रसस्य विकृतिसमवायो यथा। मधुरे तण्डुलीयके, मधुरो हि प्रकृत्या स्नेहगुरुष्यत्वादिकरः, तण्डुलीयके विकृतिसमवेतत्वेन तन्न करोति। विषमसमवेतास्तु तिले कषायकटुतिक्तमधुराः। यदि हीमे रसाः अमात्रया समवेता न स्युस्ततस्तिलोऽपि पित्तश्लेष्महरस्त्रिदोषहरो वा स्यात्, पित्तकफकरस्त्वयम्। तेन, अत्र रसानां क्वचित् कर्तृत्वमकर्तृत्वं च क्वचिदिति वैषम्यमुन्नीयते। "नानात्मकानाम्" इत्यादि हेतुत्रयं तु विकृतिसमवायविषमसमवाययोरेवोपलम्भकम्। तेन, "नानात्मकत्वाद्" इत्यादिभिर्विकृतिसमवायविषमसमवायौ भवतः। नानात्मकानामिति नानारूपहेतुजनितानां, तेन, हेतुबलादेव रसदोषयोर्विकृतो विषमो वा मेलको भवतीत्यर्थः। किंवा, नानात्मकानामिति नानाप्रमाणानाम्। एवं च नानाप्रमाणत्वं विषमसमवाये हेतुः। परस्परेण चोपहतानामित्यन्योन्यमुपघातितगुणानाम्। परस्परगुणोपघातस्तु यद्यपि दोषाणां प्रायो नास्त्येव, तथाप्यदृष्टवशात् क्वचिद्भवतीति ज्ञेयम्। रसानां तु प्रबलेनान्योपघातो भवत्येव। अन्यैश्च विकल्पनैरिति अन्यैश्च भेदकैः। तत्र रसस्य भेदकाः स्वरसकल्कादयः। एकस्यैव हि द्रव्यस्य विकल्पनविशेषेण गुणान्तराणि भवन्ति। दोषस्य तु दूष्यान्तराण्येव[1] गुणान्तरयोगाद्भेदकानि भवन्ति। यदुक्तं,—"स एव कुपितो दोषः समुत्थानविशेषतः। स्थानान्तरगतश्चैव विकारान् कुरुते बहून्"। अस्मिन् व्याख्याने रसानां दोषाणां च यदुत्कर्षापकर्षकृतो विषमसमवायः पृथगुच्यते, स न युज्यते, यतः, विषमसमवाये उत्कृष्टस्य रसस्य तथा दोषस्य चोत्कृष्टा गुणाः अपकृष्टस्य चापकृष्टा गुणा भवन्तीति कृत्वाऽवयवप्रभावानुमानेनैव समुदायप्रभावानुमानं शक्यम्। अथोच्येत—विषममेलके रसस्य दोषस्य च न त एव गुणा उत्कृष्टा अपकृष्टा वा भवन्ति, किंतु गुणान्तरमेव भवति। तत्तर्हि विकृतएवायं समवायो विसदृशकार्यकारणत्वात्। तदेवं दूषणदर्शनादन्यथोच्यते[2]। अत्र द्विविधो मेलको भवति रसानां दोषाणां च प्रकृत्यनुगुणः प्रकृत्यननुगुणश्च, तत्र यो मिलितानां प्रकृतिगुणानुपमर्देन मेलको भवति, स 'प्रकृतिसमसमवाय' शब्देनोच्यते, यस्तु प्राकृतगुणोपमर्देन भवति, स विकृतिविषमसमवायोऽभिधीयते, विकृत्या हेतुभूतया विषमः प्रकृत्यननुगुणः समवायो विकृतिविषमसमवाय इत्यर्थः। विकृतिविषमसमवाये नानात्मकत्वादिहेतुत्रयं यथाविवृतमेव योजनीयम्। यत्तु विकृतिविषमसमवायौ पृथगेव कुर्वन्ति, विषमसमवायस्य वैषम्यतारतम्येनातिबहुप्रपञ्चितत्वात् विषमावयवगुणानुमानं

१ तत्र खनेकरसेष्विति अन्यः पाठः. २ मेकैकद्येनेति द्वितीयः पाठः.

१ स्थानान्तराण्येवेति पाठान्तरम्। २ अन्यथा व्याख्यायत इति पाठान्तरम्।

दुःशक्यमिति कृत्वा तदपि द्रव्यविकारप्रभावेणैव व्यपदिशन्ति ॥ १० ॥

**तथायुक्ते हि समुदाये समुदायप्रभावतत्त्वमेवमेवोपलभ्य ततो रसद्रव्यविकारप्रभावतत्त्वं व्यवस्येत् ॥ ११ ॥**

अथ कथं तर्हि विकृतिविषमसमवायप्रभावज्ञानमित्याह—तथायुक्ते हीत्यादि। तथायुक्ते समुदाय इति विकृतिविषमसमवाये। समुदायप्रभावतत्त्वमिति मेलकप्रभावतत्त्वम्। समघृते हि मधुसर्पिषी सूर्यावर्ताख्ये वा व्याधौ दोषसमुदाये न संयुज्यमानमधुघृतगुणक्रमागतं मारकत्वं, न च वातादिदोषप्रभावगतं सूर्यवृद्धया वर्द्धिष्णुत्वं किं तु संयोगमहिमकृतमेवेत्यर्थः। यच्च गतिद्वयं दोषरसमेलकस्य, तेन, प्रकृतिसमसमवायरूपं सन्निपातं ज्वरनिदाने दोषलिङ्गमेलकेनैवोक्तवान्। यदुक्तं "पृथग्लक्षणसंसर्गाद्वान्द्विकं सान्निपातिकं ज्वरं विद्यात्" इति। यस्तु विकृतिविषमसमवेतो ज्वरस्तस्य, चिकित्सिते—"क्षणे दाहः क्षणे शीतम्" इत्यादिना लक्षणमुक्तम्। न हि श्यावरक्तकोठोत्पत्त्यादि तत्रोक्तं वातादिज्वरे क्वचिदस्ति। एवं रसेऽपि यत्लाम्राते मधुरत्वं प्रकृतिसमसमवेतम्, तल्लाम्रातं मधुरमेतन्मात्रमेवोक्तम्, तेन, मधुरसामान्यगुणागतं तस्य वातहरत्वं पित्तहरत्वमपि लभ्यते। यत्र वार्ताके कटुतिक्तत्वेन वातकरत्वं प्राप्तमपि च विकृतिविषमसमवायात्तन्न भवति। तत्राचार्येण, 'वार्ताकं वातघ्नम्' इत्युक्तमेव। एवमित्यादि तत्तदुदाहरणशास्त्रप्रसूतमनुसरणीयम्। यत्तु प्रकृतिसमसमवायकृतरसदोषगुणद्वारा प्राप्तमपि द्रव्यगुणं विकारलक्षणं च ब्रूते, तत्प्रकर्षार्थं स्पष्टार्थंचेति ज्ञेयम् ॥११॥

**तस्माद्रसप्रभावतश्च द्रव्यप्रभावतश्च दोषप्रभावतश्च विकारप्रभावतश्च तत्त्वमुपदेक्ष्यामः॥ १२ ॥**

उपसंहरति—तस्मादित्यादि। तत्त्वमिति प्रभावतत्त्वम्। यत्तु पूर्वं "तत्रादौ रसद्रव्यदोषविकारप्रकारप्रभावानुपदेक्ष्यामः" इत्यनेन रसादिप्रभावव्याख्यानप्रतिज्ञानं कृतम्, तत्र रसप्रभावानुमानेनैव द्रव्यप्रभावकथनात्, तथा दोषप्रभावेण च विकारप्रभावकथनाच्चरितार्थम्। इह तु विकृतिविषमसमवायात्मके द्रव्ये विकारे वा रसदोषप्रभावानुमानेन न द्रव्यविकारप्रभावानुमानमस्तीति कृत्वा पृथक् पृथग्रसादिप्रभावतत्त्वाभिधानप्रतिज्ञानमिति न पौनरुक्त्यम्। इह द्रव्याणां वीर्यप्रभावविपाकप्रभावौ च द्रव्यप्रभावे रसप्रभावे चान्तर्भावनीयौ। तत्र यौ रसानुगुणौ वीर्यविपाकप्रभावौ, तौ रसे, यौ तु रसक्रमोक्तवीर्यविपाकविपरीतौ वीर्यविपाकौ, तौ द्रव्यप्रभावौ बोद्धव्यौ। उपदेक्ष्यामो निखिलेन तन्त्रेण रसादिप्रभावतत्त्वं पृथगुपदेक्ष्याम इति रसादिप्रभावः प्रपञ्चेन निखिले तन्त्र एव वक्तव्य इत्यर्थः ॥ १२ ॥

१ दुःशकमिति पाठः

**तत्रैष रसद्रव्यदोषविकारप्रभाव उपदिष्टो भवति। द्रव्यप्रभावं पुनरुपदेक्ष्यामः। तैलसर्पिर्मधूनि वातपित्तश्लेष्मप्रशमनार्थानि द्रव्याणि भवन्ति॥ १३ ॥**

सङ्क्षेपाभिधानमेतदेवेति दर्शयन्नाह—तत्रैष इत्यादि। एष इति "रसाः षट्" इत्यादिना "तत्त्वमुपदेक्ष्यामः" इत्यन्तेन ग्रन्थेनोक्त इत्यर्थः। उपदिष्टो भवतीति सङ्क्षेपेण कथितो भवति। अन्ये तु 'तत्रैष रसप्रभाव उद्दिष्टो भवति' इति पठन्ति। अस्मिन् पक्षे द्रव्यदोषविकारप्रभावोऽपि योऽत्रानुदिष्टः सोऽपि रसद्वारा, तेन, रसस्यैव प्रपञ्चाभिहितत्वात्तस्यैवाभिधानमुपसंहरति न द्रव्यादीनामिति ज्ञेयम्। द्रव्यप्रभावमित्यादौ पुनरिति सामान्येन द्रव्यप्रभावकथनात् पुनः श्लक्ष्णग्राहिकतया तैलादिद्रव्यप्रभावं कथयिष्याम इत्यर्थः। प्रशमनार्थानीति प्रशमनप्रयोजनानि ॥ १३ ॥

**तत्र तैलं स्नेहौष्ण्यगौरवोपपन्नत्वाद्वातं जयति सततमभ्यस्यमानम्। वातो हि रौक्ष्यशैत्यलाघवोपपन्नो विरुद्धगुणो भवति। विरुद्धगुणसन्निपाते हि भूयसाल्पमवजीयते। तस्मात्तैलं वातं जयति सततमभ्यस्यमानम् ॥ १४ ॥**

सततमभ्यस्यमानमित्यविच्छेदेनोपयुज्यमानं, विरुद्धगुण इति तैलगुणेभ्यो विपरीतगुणः। विरुद्धगुणसन्निपात इति विरुद्धगुणयोर्मेलके। ननु विरुद्धगुणयोर्मध्ये भूयसाल्पं जीयते, तत्कथं तैलं वातं जयति। न ह्यस्य वातं प्रति भूयस्त्वं युक्तमित्याह—सततमभ्यस्यमानमिति। सततोपयोगेन हि तैलं वातादधिकं भवति, तेन वातं जयतीत्यर्थः ॥ १४ ॥

**सर्पिः खल्वेवमेव पित्तं जयति माधुर्यात् शैत्यान्मन्दत्वाच्च। पित्तं ह्यमधुरमुष्णं तीक्ष्णं च ॥ १५ ॥**

**मधु च श्लेष्माणं जयति रौक्ष्यात्तैक्ष्ण्यात्कषायत्वाच्च। श्लेष्मा हि स्निग्धो मन्दो मधुरश्च ॥ १६ ॥**

**यच्चान्यदपि किञ्चिद्द्रव्यमेवं वातपित्तकफेभ्यो गुणतो विपरीतं विरुद्धम्, तच्चैतान् जयत्यभ्यस्यमानम् ॥ १७ ॥**

सर्पिः खल्वेवमेवेति सर्पिरपि सततमभ्यस्यमानमित्यर्थः। अमधुरमिति रौक्ष्यलाघवाऽऽग्न्यत्वादिना मधुरविपरीतं कटुरसमित्यर्थः। इह च प्रभावशब्देन सामान्येन द्रव्यशक्तिरुच्यते, तेनात्र चिन्त्यशक्तिः, तेन तैलादीनां स्नेहौष्ण्यदिगुणादपि वातादिशमनं द्रव्यप्रभावादेव भवति। सर्पिषि च यद्यपि मधुरो रसः पित्तप्रशमे व्याप्रियते, तथापि माधुर्यशैत्यमन्दत्वैः पित्तशमनं सर्पिःकार्यमेव, तेन, द्रव्यप्रभाव एव वाच्यः।

१ शमयतीति वान्यः पाठः. २ मन्दवीर्यत्वाच्चेति पाठः। ३ विरुद्धमिति क्वचिन्नास्ति।

यदा तु रसद्वारा कार्यं द्रव्यस्य चिन्त्यते, तदा रसप्रभाव इति व्यपदेशो भवति। एवं कषायानुरसे मधुनि समाधानं वाच्यम्। अन्ये तु ब्रुवते—यत्तैलादीनां वातादिशमनत्वं प्रत्यचिन्त्य एव प्रभावोऽयमुच्यते,तत्र च तैलवातयोर्विरुद्धगुणयोर्मेलके तैलमेव वातं जयति, न तु वातस्तैलमिति तैलस्याऽचिन्त्यप्रभावः। एवं सर्पिर्मधुनोरपि पित्तश्लेष्महरणे प्रभावाज्ज्ञेये। एतच्चान्ये नेच्छन्ति। यतस्तैलादीनां "सततमभ्यस्यमानम्" इति पदेनाधिक्यमेव वातादिजयकारणमुक्तम्, तथा, "यच्चान्यदपि किंचिद्द्रव्यम्" इत्यादिग्रन्थेन द्रव्याचिन्त्यप्रभावं परित्यज्य सामान्येन गुणवैपरीत्यमेवाभ्यासाद्वातादिजयहेतुरुच्यते ॥ १५—१७ ॥

**अथ खलु त्रीणि द्रव्याणि नात्युपयुञ्जीताधिकमन्येभ्यो द्रव्येभ्यः तद्यथा—पिप्पली, क्षारं, लवणमिति ॥ १८ ॥**

**पिप्पल्यो हि कटुकाः सत्योमधुरविपाका[1] गुर्व्यो नात्यर्थं स्निग्धोष्णाः प्रक्लेदिन्यः। भेषजाभिमताश्च। ताः सद्यः शुभाशुभकारिण्यो भवन्ति, आपातभद्राः प्रयोगसमसाद्गुण्याद्दोषसंचयानुबन्धाः। सततमुपयुज्यमाना हि गुरुप्रक्लेदित्वाच्छ्लेष्माणमुत्क्लेशयन्ति औष्ण्यात्पित्तम्। न च वातप्रशमनायोपकल्पन्तेऽल्पस्नेहोष्णभावात्। योगवाहिन्यस्तु खलु भवन्ति। तस्मात्पिप्पलीर्नात्युपयुञ्जीत ॥ १९ ॥**

अभ्यस्य द्रव्यं प्रभावोदाहरणार्थमभिधायानभ्यस्यानाह—अथेत्यादि। अधिकमन्येभ्य इति वचनादन्यदपि चित्रकभल्लातकाद्येवंजातीयं नात्युपयोक्तव्यम्, पिप्पल्यादिद्रव्यन्त्वन्येभ्योऽप्यधिकमत्युपयोगे वर्जनीयमिति दर्शयति। "कटुकाः सत्यो मधुरविपाकाः" इत्यादि पिप्पलीगुणकथनं। अनभ्यासप्रयोगे दोषवैपरीत्येन दोषप्रशमनोपदर्शनार्थं तथा अत्यभ्यासाद् "गुरुप्रक्लेदित्वात् श्लेष्माणमुत्क्लेशयन्ति" इत्यादिग्रन्थवक्तव्यदोषकरणयोग्यतोपदर्शनार्थंच "भेषजाभिमताः" इति। सद्य-इति च्छेदः, सद्य इत्यनभ्यासे शुभकारिण्यः, अत्यभ्यासप्रयोगे तु अशुभकारिण्यः। एतदेव शुभाशुभकारित्वं दर्शयति "आपातभद्राः" इत्यादिना। प्रयोगसमसाद्गुण्यादिति समस्य प्रयोगस्य सद्गुणत्वात्, समेऽल्पकाले अल्पमात्रे च पिप्पल्याः प्रयोगे सद्गुणा भवन्तीत्यर्थः। दोषसंचयानुबन्धो ह्युपयोगो यासां ता दोषसंचयानुबन्धाः। एतदेव दोषसंचयानुबन्धत्वं विवृणोति—सततमित्यादि। पिप्पलीधर्मकथनप्रस्तावाद्गुणान्तरमाह—योगवाहिन्यस्त्विति। योगवाहित्वेन कटुकानामपि पिप्पलीनां वृष्यप्रयोगेषु योगः, तथा ज्वरगुल्मकुष्ठहरादिप्रयोगेषु ज्वरादीन् हन्ति पिप्पली। अयंच पिप्पल्यतियोगनिषेधोऽपवादं[1] परित्यज्य ज्ञेयः। तेन, न पिप्पलीरसायनप्रयोगस्तथा गुल्मादिषु वर्द्धमानपिप्पलीप्रयोगो विरोधमावहतीति। उक्ते हि विषये यथोक्तविधानेन निर्दोषा एव पिप्पल्य इति ऋषिवचनादुन्नीयते। अन्ये तु, अन्नसंस्करणे[2] पिप्पल्यादीनामतिप्रयोगो निषिध्यते, न तु स्वातंत्र्येणेति ब्रुवते। स ह्युपयोगोऽतिमात्रत्वेन तथा सततप्रयोगेण चेति ज्ञेयम् ॥ १८—१९॥

**क्षारः पुनरौष्ण्यतैक्ष्ण्यलाघवोपपन्नः क्लेदयत्यादौ पश्चात् विशोधयति[3]। स पचनदहनभेदनार्थमुपयुज्यते। सोऽतिप्रयुज्यमानः केशाक्षिहृदयपुंस्त्वोपघातकरः सम्पद्यते। ये ह्येनं ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते, तेऽप्यान्ध्यषाण्ड्यखालित्यपालित्यभाजो हृदयापकर्तिनश्च भवन्ति। तद्यथा—प्राच्याश्चीनाश्च। तस्मात् क्षारं नात्युपयुञ्जीत ॥ २० ॥**

**लवणं पुनरौष्ण्यतैक्ष्ण्योपपन्नमनतिगुर्वतिस्निग्धमुपक्लेदि विस्रंसनसमर्थमन्नद्रव्यरुचिकरमापातभद्रं प्रयोगसमसाद्गुण्याद्दोषसञ्चयानुबन्धम्। तद्रोचनपाचनोपक्लेदनविस्रंसनार्थमुपयुज्यते। तदत्यर्थमुपयुज्यमानं ग्लानिशैथिल्यदौर्बल्याभिनिर्वृत्तिकरं शरीरस्य भवति। ये ह्येनद्ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते, ते भूयिष्ठं ग्लास्नवः शिथिलमांसशोणिता अपरिक्लेशसहाश्च भवन्ति। तद्यथा—वाह्लीकसौराष्ट्रिकसैन्धवसौवीरकाः। ते हि पयसापि सदा लवणमश्नन्ति। येऽपीह भूमेरत्यूषरा देशास्तेष्वोषधिवीरुद्वनस्पतिवानस्पत्या न जायन्ते, अल्पतेजसो वा भवन्ति, लवणोपहतत्वात्। तस्माल्लवणं नात्युपयुञ्जीत। ये ह्यतिलवणसात्म्याः पुरुषास्तेषामपि खालित्येन्द्रलुप्तपालित्यानि वलयश्चाकाले भवन्ति ॥ २१ ॥**

हृदयापकर्तिन इति हृदयपरिकर्तनरूपवेदनायुक्ताः। ग्लानिर्मांसापचयो हर्षहानिर्वा। न केवलं लवणातियोगः शरीरोपघातकरः, किंतु भूमेरप्युपघातकर इत्याह—येऽपीहेत्यादि। ऊषरा इति लवणप्रधानाः। लवणं नात्युपयुञ्जीतेति ज्ञातिमात्रं लवणं सततमुपयुञ्जीत, अन्नद्रव्यसंस्कारकं तु स्तोकमात्रमभ्यासेनाप्युपयोजनीयमेव। वाह्लीकादिव्यतिरिक्तेऽपि देशे येऽतिलवणमश्नन्ति तेषामपि दोषानाह—ये हीत्यादि। एतेन चान्यत्रापि देशेऽतिमात्रलवणसात्म्यानां लवणाद्युपयोगकृतएव शैथिल्यादिदोष उन्नीयते, न देशस्वभावकृतः ॥ २०—२१ ॥

---

१ सत्योमधुरविपाका इति वाऽन्यः पाठः।

१ अपवादं विशेषविधानम्। २ अन्नसंस्कारेणेति पाठान्तरम्।

३ पश्चादुपशोषयति। दहति। पचति भिनत्ति संघातमितिचापरः पाठः।

**तस्मात्तेषां ततः सात्म्यतः क्रमेणापगमनं श्रेयः । सात्म्यमपि हि क्रमेणोपनिवर्त्त्यमानमदोषमल्पदोषं वा भवति ॥ २२ ॥**

तेषामिति अतिक्षारलवणसात्म्यानां, ततः सात्म्यत इति अतिमात्रक्षारादतिमात्रलवणाच्च सात्म्यात्; क्रमेणेति नवेगान्धारणीयोक्तसात्म्यपरित्यागक्रमेण । इह च सात्म्यशब्देनौकसात्म्यमभिप्रेतम् । अल्पदोषमदोषं चेति पक्षद्वयेऽप्ययं सात्म्यमल्पदोषं भवति, अन्यत्त्वदोषमिति व्यवस्था ॥ २२ ॥

**सात्म्यं नाम तत्, यदात्मन्युपशेते, सात्म्यार्थो ह्युपशयार्थः । तत्त्रिविधं प्रवरावरमध्यविभागेन । सप्तविधं तु रसैकैकत्वेन सर्वरसोपयोगाच्च ॥२३॥**

**तत्र सर्वरसं प्रवरम्, अवरमेकरसम्, मध्यं तु प्रवरावरमध्यस्थम् । तत्रावरमध्याभ्यां सात्म्याभ्यां क्रमेण प्रवरमुपपादयेत् सात्म्यम् । सर्वरसमपि च सात्म्यमुपपन्नः प्रकृत्याद्युपयोक्त्रष्टमानि सर्वाण्याहारविधिविशेषायतनान्यभिसमीक्ष्य हितमेवानुरुध्येत ॥ २४ ॥**

**तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति । तद्यथा—प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि भवन्ति ॥ २५ ॥**

सात्म्यं नामेति ओकसात्म्यं नामेत्यर्थः, उपशयार्थ इति उपशयशब्दाभिधेय इत्यर्थः । तदित्योकसात्म्यम्, त्रिविधमिति प्रवरावरमध्यभेदेन । सप्तविधं तु—एकैकरसेन षट्, संसृष्टरसोपयोगादेकमेवं सप्तविधम् । संसृष्टशब्देन द्विरसादयः षड्रसपर्यन्ता गृह्यन्ते । प्रवरावरमध्यस्थमिति द्विरसादिपंचरसपर्यन्तम् । अवरमध्यमाभ्यां लक्षितः पुरुषः । प्रवरमिति सर्वरसम्, सात्म्यमुपपादयेदभ्यसेदित्यर्थः । क्रमेणेति यथोक्ताभ्यासक्रमेण । उपपादितसर्वरससात्म्येनापि चाहारः प्रशस्तप्रकृत्यादिसम्पन्नैः कर्तव्य इत्याह—सर्वरसमित्यादि । अभिसमीक्ष्येति हिताहितत्वेन विचार्य । हितमेवेति पदेन, यदेव प्रकृत्यादिना हितम्, तदेवानुरुध्येत सेवेतेत्यर्थः । आहारस्य विधिः, प्रकारो विधानं वा इत्याहारविधिः; तस्य विशेषो हितत्वमहितत्वं च, तस्यायतनानि हेतूनित्याहारविधिविशेषायतनानि । आहारप्रकारस्य हितत्वमहितत्वं च प्रकृत्यादिहेतुकमित्यर्थः । उपयोक्ताऽष्टमो येषां तान्युपयोक्त्रष्टमानि ॥ २३–२५॥

**तत्र प्रकृतिरुच्यते स्वभावो यः, स पुनराहारौषधद्रव्याणां स्वाभाविको गुर्वादिगुणयोगः, तद्यथा माषमुद्गयोः शूकरैणयोश्च ॥ २६ ॥**

उक्तानि प्रकृत्यादीनि विभजते—तत्रेत्यादिना, स्वाभाविक इति संस्काराद्यकृतः । माषमुद्गयोरिति प्रकृत्या माषे गुरुत्वं, मुद्गे लघुत्वं, शूकरे गुरुत्वं, एणे च लघुत्वम् ॥ २६ ॥

**करणं पुनः स्वाभाविकानां द्रव्याणामभिसंस्कारः । संस्कारोहि गुणान्तराधानमुच्यते । ते गुणाश्च तोयाग्निसन्निकर्षशौचमन्थनदेशकालवासनभावनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते ॥ २७ ॥**

द्रव्याणामिति वक्तव्ये स्वाभाविकानामिति यत्करोति, तेन उत्पत्तिकाले जनकभूतैः स्वगुणारोपणम्, संस्कारः किंतूत्पन्नस्यैव तोयादिना गुणान्तराधानमिति दर्शयति, तच्च प्राकृतगुणोपमर्देनैव क्रियते । यतो तोयाग्निसन्निकर्षशौचैस्तण्डुलस्थं गौरवमुपहत्य लाघवमन्ने क्रियते । यदुक्तम्—"सुधौतः प्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः" । भावनया च स्वरसादिकृतया स्थितस्यैवामलकादेर्गुणोत्कर्षो भवति, तथा रक्तशाल्यादेर्लघोरपि अग्निसंयोगादिना लाघवं वर्द्धते । मन्थनाद्गुणाधानं यथा 'शोथकृद्दधि शोथघ्नं सस्नेहमपि मन्थनादि'ति । देशेन यथा 'भस्मराशेरधःस्थापये'दित्यादौ । वासनेन गुणाधानं यथा'अपामुत्पलादिवासनेन सुगन्धानुकरणम्'। कालप्रकर्षाद्यथा "पक्षाज्जातरसं पिबेत्" इत्यादि । भाजनेन यथा "त्रैफलेनायसीं पात्रीं कल्केनालेपयेत्" इत्यादौ । आदिग्रहणात्पेषणाभिमंत्रणादि गृह्यते । ननु संस्काराधेयेन गुणेन कथं स्वाभाविकगुणनाशः क्रियताम्, यतः "स्वभावो निष्प्रतिक्रियः" इत्युक्तम् । यदि संस्कारेण स्वाभाविकगुणत्वं प्रतिक्रियते, तदा "स्वभावो निष्प्रतिक्रियः" इति कथम्? ब्रूमः "स्वभावो निष्प्रतिक्रियः" इति स्वभावो भावोत्पत्तौ नान्यथा क्रियते । तेन, जातिसंबन्धं माषादीनां गुरुत्वं न जातौ स्फोटयितुं पार्यते, संस्कारेण तु तदन्यथाकरणमनुमतमेव दृष्टत्वात् । कश्चित्तु गुणो द्रव्याणां संस्कारादिनापि नान्यथा क्रियते, यथा वह्नेरौष्ण्यं वायोश्चलत्वं तैलस्य स्नेह इत्यादि । एते हि यावद्द्रव्यभाविन एव गुणाः । गौरवादयस्तु पुराणधान्यादिष्वप्यपगमदर्शनान्न यावद्द्रव्यभाविनः । उक्तं हि "गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति । गुणान्तरोपघाताद्वा" इति । यत्र तु संस्कारेण व्रीहेर्लाजलक्षणं द्रव्यान्तरमेव जन्यते, तत्र गुणान्तरोत्पादः सुष्ठ्वेव ॥ २७ ॥

**संयोगस्तु द्वयोर्बहूनां वा द्रव्याणां संहतीभावः; स विशेषमारभते, यन्नैकैकशो द्रव्याण्यारभन्ते । तद्यथा—मधुसर्पिषोः मधुमत्स्यपयसां च संयोगः ॥ २८ ॥**

संयोगमाह—संयोगस्त्वित्यादि । स विशेषमारभत इति संयुज्यमानद्रव्यैकदेशेऽदृष्टं कार्यमारभत इत्यर्थः । यन्नैकैकश इति यं विशेषं प्रत्येकमसंयुज्यमानानि द्रव्याणि नारभन्त

१ तदिति पाठान्तरम् । २ सात्म्यमुपपन्नं सर्वाण्याहारविधिविशेषायनान्यभिसमीक्ष्येति पाठोऽन्यः ॥

१ देशकालवशेन भावनादिभिरित्यपरः पाठः.

इत्यर्थः । मधुसर्पिषी हि प्रत्येकममारके मिलिते तु मारके भवतः, क्षीरमत्स्यादिसंयोगश्च कुष्ठादिकरो भवति । संयोगस्त्विह प्राधान्येनैवोपलभ्यमानद्रव्यमेलको विवक्षितः । तेन, भावनादिष्वपि यद्यपि संयोगोऽस्ति, तथापि तत्र भावनाद्रव्याणां प्राधान्येनानुपलब्धेर्न संयोगेन ग्रहणम् ॥ २८ ॥

**राशिस्तु खलु सर्वग्रहपरिग्रहौ मात्राऽमात्रफलविनिश्चयार्थः प्रकृतः । तत्र सर्वस्याहारस्य प्रमाणग्रहणमेकपिण्डेन सर्वग्रहः, परिग्रहः पुनः प्रमाणग्रहणमेकैकत्वेनाहारद्रव्याणाम् । सर्वस्य हि ग्रहः सर्वग्रहः, सर्वतश्च ग्रहः परिग्रह उच्यते ॥ २९ ॥**

राशिः प्रमाणम् । मात्रामात्रफलनिश्चयार्थ इति मात्रावदाहारस्यौषधस्य च यत्फलं शुभम्, अमात्रस्य हीनमात्रस्यातिरिक्तस्य च यत्फलमशुभम् । यदुक्तम् "तस्य ज्ञानार्थमुचितप्रमाणमनुचितप्रमाणं च राशिसंज्ञम् भवति" । सर्वग्रहं विवृणोति तत्रेत्यादि । सर्वस्येति । मिश्रीकृतस्यान्नमांससूपादेरेकपिण्डेन । परिग्रहं विवृणोति—परिग्रहः पुनरित्यादि । एकैकत्वेनेति अन्नस्य कुडवः, सूपस्य पलं, मांसस्य द्विपलमित्याद्यवयवमानपूर्वकं समुदायमानम् । सर्वग्रहे प्रत्यवयवमाननियमो नास्ति । तेन, येन केनचिदाहारेणास्याऽनियतमानेन संपूर्णाहारमात्रानियमनं सर्वग्रहः । एतदेव शब्दव्युत्पत्त्या दर्शयति—"सर्वस्य हि" इत्यादि, सर्वत इति प्रत्येकावयवतः ॥ २९ ॥

**देशः पुनः स्थानम्, द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यं चाचष्टे ॥ ३० ॥**

देशं विभजते—देश इत्यादि । स्थानग्रहणेन चाहारद्रव्यस्य तथा भोक्तुश्च स्थानं दर्शयति । आचष्ट इति द्रव्यस्योत्पत्तिप्रचारादिज्ञानहेतुर्भवति । तत्रोत्पत्त्या—हिमवति स्थाने जातं गुरु भवति, मरौ जातं लघु भवति इत्यादि । प्रचारेण लघुभक्ष्याणां प्राणिनां तथा धन्वप्रचारिणां च बहुक्रियाणां च लाघवं, विपर्यये च गौरवं गृह्यते । देशसात्म्येन च देशविपरीतगुणं सात्म्यं गृह्यते । यथा—आनूपे उष्णरूक्षादि, धन्वनि तु शीतस्निग्धादि । ओकसात्म्यं तु उपयोक्तृग्रहणेन गृहीतम् ॥ ३० ॥

**कालो हि नित्यगश्चावस्थिकश्च, तत्रावस्थिको विकारमपेक्षते, नित्यगस्तु ऋतुसात्म्यापेक्षः ॥३१॥**

नित्यग इत्यहोरात्रादिरूपः । आवस्थिक इति रोगित्ववाल्याद्यवस्थाविशेषित इत्यर्थः । विकारमपेक्षत इति वाल्यादिकृतं तु श्लेष्मादिविकारं ज्वरादिकं चाहारनियमार्थमपेक्षत इत्यर्थः । ऋतुसात्म्यं हि ऋत्वपेक्षितमिति ऋतुसात्म्यापेक्षः ३१

**उपयोगसंस्था तूपयोगनियमः, स जीर्णलक्षणापेक्षः ॥ ३२ ॥**

एवमाहारोपयोगः कर्तव्य एवं न कर्तव्य इत्युपयोगनियमः स जीर्णलक्षणापेक्ष इति प्राधान्येनोक्तः । तेनेह "अजल्पन्नातिद्रुतं नातिविलम्बितम्" इत्याद्यपि उपयोगनियममपेक्षत एव, अजीर्णभोजने तु महांस्त्रिदोषकोपलक्षणो दोषो भवतीत्ययमेवोदाहृतः ॥ ३२ ॥

**उपयोक्ता पुनर्यस्तमाहारमुपयुङ्क्ते, यदायत्तमोकसात्म्यमित्यष्टावाहारविधिविशेषायतनानि भवन्ति ॥ ३३ ॥**

यदायत्तमोकसात्म्यमिति भोक्तृपुरुषापेक्षं ह्यभ्याससात्म्यं भवति कस्यचिद्धि किंचिदेवाभ्यासात्पथ्यमपथ्यं वा सात्म्यं भवति ॥ ३३ ॥

**एषां विशेषाः शुभाशुभफलाः परस्परोपकारका भवन्ति, तान् बुभुत्सेत । बुद्ध्वा च हितेप्सुरेव स्यान्नच मोहात् प्रमादाद्वा प्रियमहितमसुखोदर्कमुपसेव्यमाहारजातमन्यद्वा ॥ ३४ ॥**

एषामित्यादौ शुभफला विशेषा अशुभफलाश्च परस्परोपकारका भवन्तीति ज्ञेयम्, तत्र प्रकृत्या लाघवादिः शुभफलो गुर्वादिश्चाशुभफलः । करणाद्यभिधेयोऽपि विशेषः शास्त्रोक्तः शुभो निषिद्धस्त्वशुभः । देशासात्म्यं निन्दितदेशजादेश्च द्रव्यस्याशुभं फलम् । एवं कालासात्म्यमशुभफलं चा जीर्णभोजनादि, तथा ओकसात्म्यं चाशुभफलमिति ज्ञेयम्, विपरीतं तु शुभफलम् । मोहादित्यज्ञानतः, प्रमादादिति ज्ञात्वा रागादित्यर्थः । प्रियमिति तदात्वमात्रप्रियम् । अहितमित्यस्य विवरणम्—असुखोदर्कमिति । असुखं दुःखरूपं उदर्कमुत्तरकालीनं फलं यस्य स तथा । अन्यद्वेति भेषजविहारादि ॥ ३४ ॥

**तत्रेदमाहारविधिविधानमरोगाणामातुराणामपि केषांचित्काले प्रकृत्यैव हिततमं भुञ्जानानां भवति ॥ ३५ ॥**

तत्रेत्यादाविदमिति वक्ष्यमाणम् । आहारविधिर्विधीयते येनोष्णस्निग्धादिना वक्ष्यमाणेन तदाहारविधिविधानम् । आतुराणां च केषांचिदिति पदेन रक्तपित्तिनां शीतमेव, कफरोगिणामुष्णमेव[2] हितमित्यादि विपर्ययं दर्शयति । केषांचिद्भुञ्जानानामिदमाहारविधिविधानं हिततमं भवतीति योजना । प्रकृत्यैवेति स्वभावेनैव हिततमं वक्ष्याम इति भावः ३५

**उष्णं स्निग्धं मात्रावज्जीर्णे वीर्याविरुद्धमिष्टे देशे इष्टसर्वोपकरणं नातिद्रुतं नातिविलम्बितमजल्पन्नहसंस्तन्मना भुञ्जीतात्मानमभिसमीक्ष्य सम्यक् ३६**

**तस्य साद्गुण्यमुपदेक्ष्यामः—उष्णमश्नीयात् । उष्णं हि भुज्यमानं स्वदते, भुक्तंचाग्निमुदर्यमुदीरयति, क्षिप्रं जरां गच्छति, वातंचानुलोमयति, श्लेष्माणं च परिह्रासयति[3] । तस्मादुष्णमश्नीयात् ॥३७**

---

१ एवं विशेषा इति पाठान्तरम् । २ रूक्षमेवेति पाठान्तरम् । ३ परिशोषयतीति पाठान्तरम् ।

स्निग्धमश्नीयात्—स्निग्धं हि भुज्यमानं स्वदते, भुक्तमुदीर्यमग्निमुदीरयति[1] क्षिप्रं जरां गच्छति, वातमनुलोमयति, दृढीकरोति शरीरोपचयं, बलाभिवृद्धिं चोपजनयति, वर्णप्रसादमपि चाभिनिर्वर्त्तयति तस्मात् स्निग्धमश्नीयात् ॥ ३८ ॥

उष्णमित्यादौ सम्यगिति छेदः। तस्येत्युष्णादिगुणयुक्तस्यान्नस्य। साद्गुण्यमिति प्रशस्तगुणयोगिताम्। परिहासयतीति भिन्नसङ्घातं करोति ॥ ३६—३८ ॥

मात्रावदश्नीयात् मात्रावद्धि भुक्तं वातपित्तकफानपीडयदायुरेव विवर्धयति केवलम्, सुखं गुदमनुपर्येति न चोष्माणमुपहन्ति अव्यथं च परिपाकमेति। तस्मान्मात्रावदश्नीयात् ॥ ३९ ॥

मात्रावदिति प्रशंसायां मतुप्, तेन प्रशस्तमात्रमित्यर्थः। अपीडयदिति अनतिमात्रत्वेन स्वस्थानस्थितं सद्वातादीन् स्थानापीडनादप्रकोपयत्। गुदमनु पर्येतीति परिणतं सदनुरूपतया निःसरतीत्यर्थः। ऊष्माणं वह्निम् ॥ ३९ ॥

जीर्णेऽश्नीयात्—अजीर्णे हि भुञ्जानस्याभ्यवहृतमाहारजातं पूर्वस्याहारस्य रसमपरिणतमुत्तरेणाहाररसेनोपसृजत् सर्वान् दोषान् प्रकोपयत्याशु, जीर्णे तु भुञ्जानस्य स्वस्थानस्थेषु दोषेष्वग्नौ चोदीर्णे जातायां च बुभुक्षायां विवृतेषु च स्रोतसां मुखेषु चोद्गारे विशुद्धे हृदये विशुद्धे वातानुलोम्ये विसृष्टेषु च वातमूत्रपुरीषवेगेष्वभ्यवहृतमाहारजातं सर्वशरीरधातूनप्रदूषयदायुरेवाभिवर्धयति केवलम्। तस्माज्जीर्णेऽश्नीयात् ॥ ४० ॥

वीर्याविरुद्धमश्नीयात्—अविरुद्धवीर्यमश्नन् हि न विरुद्धवीर्याहारजैर्विकारैरयमुपसृज्यते। तस्माद्वीर्याविरुद्धमश्नीयात् ॥ ४१ ॥

पूर्वस्येति दिनान्तरकृतस्य, अपरिणतमित्यसम्यग्जातम्; आहाररसेनेत्याहारपरिणामगतेन मधुरादिना, किंवा आहारजेन रसेन। स्वस्थानस्थेषु दोषेषु इत्यादि जीर्णाहारस्य लक्षणम्। विरुद्धवीर्याहारजैरिति कुष्ठान्ध्यविसर्पाद्यैरात्रेयभद्रकाप्यीयोक्तैः ॥ ४०—४१ ॥

इष्टे देशेऽश्नीयात्[2]—इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति तथेष्टैश्च सर्वोपकरणैः तस्मादिष्टेदेशे तथेष्टसर्वोपकरणं चाश्नीयात् ॥ ४२ ॥

मनोविघातकरैर्भावैरिति त्रिविधकुक्षीये वक्ष्यमाणैः कामादिभिश्चित्तोपतापकैश्चित्तविकारैरित्यर्थः। तथेष्टैश्च सर्वोपकरणैर्भुञ्जानो मनोविघातं न प्राप्नोतीति योजना, अनिष्टभोजनादेर्मनोविघातो भवति ॥ ४२ ॥

नातिद्रुतमश्नीयात्—अतिद्रुतं हि भुञ्जानस्योत्स्नेहनमवसदनं भोजनस्याप्रतिष्ठानं[1] भोज्यदोषसाद्गुण्योपलब्धिश्च न नियता। तस्मान्नातिद्रुतमश्नीयात् ॥ ४३ ॥

नातिविलम्बितमश्नीयात्—अतिविलम्बितं हि भुञ्जानो न तृप्तिमधिगच्छति, बहु च भुङ्क्ते, शीतीभवति चाहारजातं विषमं च पच्यते। तस्मान्नातिविलम्बितमश्नीयात् ॥ ४४ ॥

अजल्पन्नहसन् तन्मना भुञ्जीत—जल्पतो हसतोऽन्यमनसो वा भुञ्जानस्य त एव हि दोषा भवन्ति, ये ह्यतिद्रुतमश्नतः। तस्मादजल्पन्नहसंस्तन्मना भुञ्जीत ॥ ४५ ॥

उत्स्नेहनमुन्मार्गगमनम्, अवसदनमवसादः, अप्रतिष्ठानं हृदयस्थत्वेन कोष्ठाऽप्रवेशः, भोज्यगतानां दोषाणां केशादीनां, साद्गुण्यस्य च स्वादुत्वादेरुपलब्धिर्न नियता भवति कदाचिदुपलभ्यते कदाचिन्नेति। तत्र दोषानुपलब्ध्या सदोषस्यैव भक्षणं, साद्गुण्यानुपलब्ध्या च प्रीत्यभावः। विषमं च पच्यत इति चिरकालभोजनेनाग्निसम्बन्धस्य वैषम्यादिति भावः। ये हि द्रुतमश्नतो दोषा इति उत्स्नेहनादयः ॥ ४३—४५ ॥

आत्मानमभिसमीक्ष्य भुञ्जीत सम्यक्—इदं ममोपशेते इदं नोपशेते इति विदितं ह्यस्यात्मन आत्मसात्म्यं भवति। तस्मादात्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति ॥ ४६ ॥

नोपशेत इतीत्यत्र 'इति' शब्देन सात्म्यासात्म्यविधानोपदर्शकेन विचारफलमोकसात्म्यसेवनं दर्शयति। आत्मन इति पदेनात्मनैवात्मसात्म्यं प्रतिपुरुषं[2] ज्ञायते, न शास्त्रोपदेशेनेति दर्शयति ॥ ४६ ॥

रसान् द्रव्याणि दोषांश्च विकारांश्च प्रभावतः।
वेद यो देशकालौ च शरीरं च स नो भिषक् ॥४७॥

तत्र श्लोकौ।

विमानार्थो रसद्रव्यदोषरोगाः प्रभावतः।
द्रव्याणि नातिसेव्यानि त्रिविधं सात्म्यमेव च ॥४८॥
आहारायतनान्यष्टौ भोज्यसाद्गुण्यमेव च।
विमाने रससंख्याते सर्वमेतत्प्रकाशितमिति ॥४९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने रसविमानं नाम प्रथमोऽध्यायः।

१ भुक्तमौदर्यमग्निमुदीरयतीति पाठान्तरम्।
२ "भोक्तारं विजने रम्ये निःसम्पाते शुभे शुचौ। सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत्" इति सुः सः ॥

१ तत्र स्नेहनस्वादनभोजनस्याप्रतिष्ठानमिति चापरः पाठः।
२ प्रतिपुरुषं व्यक्तिनियतमित्यर्थः।

अध्यायोक्तरसप्रभावादिज्ञानं स्तौति—रसानित्यादि। स नो भिषगिति नोऽस्माकं सम्मत इत्यर्थः । दोषविकारौ च यद्यपि त्रिविधकुक्षीये प्रभावविस्तारेण वक्तव्यौ तथापीह संक्षेपेणोक्तावेव । तेन दोषविकारप्रभावावप्युक्ताविति यदुच्यते, तत्साधु तैलादिद्रव्यत्रयकथनं च द्रव्यप्रभाव इति कृत्वा न संग्रहे पठितम् ॥ ४७—४८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने रसविमानम् ।

## द्वितीयोऽध्यायः ।

अथ त्रिविधकुक्षीयं विमानं व्याख्यास्यामः ॥१॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारस्याहारमुपयुंजानः, तद्यथैकमवकाशांशं मूर्त्तानामाहारविकाराणामेकं द्रवाणामेकं पुनर्वातपित्तश्लेष्मणाम् एतावतीं ह्याहारमात्रामुपयुञ्जानो नामात्राहारजं किंचिदशुभं प्राप्नोति ॥ ३ ॥

रसविमाने राशिरुक्तस्तस्य राशेर्मात्रावत्त्वामात्रावत्त्वस्य। फलप्रपंचदोषविकारप्रपंचं दर्शयितुं त्रिविधकुक्षीयोऽभिधीयते । त्रिविधमिति त्रिप्रकारम् । अवकाशांशमिति कोष्ठावकाशभागम्। आहारस्येत्याहारनिमित्तमित्यर्थः । तेन द्वाववकाशावाहारस्य वक्तव्यौ, एकस्तु दोषाणामिति त्रिविधं वक्ष्यमाणम् । उक्तं दोषावकाशस्थानं हि आहारोपकारकत्वादाहारस्येत्युच्यते दोषावकाशस्थाने हि आहारः दोषैर्दूष्यत इति वक्तव्यम्। किंवा, आहारस्यावकाशांशमासाशयरूपं कुक्षौ वक्ष्यमाणविभागेन त्रिविधं स्थापयेदित्यर्थः । कुक्ष्यंशभागं यथा कर्तव्यमाह तद्यथेत्यादि । मूर्तानामित्याद्यखाद्यानाम्, द्रवाणामिति लेह्यपेयानाम्। इह चांशशब्दो न समविभागे वर्तते किंतु यथोचितविभागे । तेन,मूर्तानां वहुभागो भवतीति ज्ञेयम् । वातपित्तश्लेष्मणां यद्यपि भिन्नानि स्थानानि, तदपि मूर्ताहारादिभागापेक्षया मिलितानां किंचित्स्थानं भवतीत्येकत्वेनाध्यारोप्यात्र''एकम्''इति कृतम् । ननु कुक्ष्यंशविभागेन कृतेऽप्याहारे प्रकृतिगुर्वादिदुष्टद्रव्यजदोषो दृश्यत इत्याह—नामात्राहारजमिति, प्रकृत्यादिदोषकृतं तु प्राप्नोत्येवेत्यर्थः ॥ १—३ ॥

न च केवलं मात्रावत्त्वादेवाहारस्य कृत्स्नमाहारफलसौष्ठवमवाप्तुं शक्यम्, प्रकृत्यादीनामष्टानामाहारविधिविशेषायतनानां विभक्तफलत्वात् ॥४॥ तत्र तावदाहारराशिमधिकृत्य मात्रामात्राफलविनिश्चयार्थः प्रकृतः। एतावानेव ह्याहारराशिविधिविकल्पो यावन्मात्रावत्त्वममात्रावत्त्वं च ॥ ५ ॥

१ मात्रावत्वामात्रावत्वरूपस्येत्यर्थः ।

तत्र मात्रावत्त्वं पूर्वमुद्दिष्टं कुक्ष्यंशविभागेन, तद्भूयो विस्तरेणानुव्याख्यास्यामः । तद्यथा—कुक्षेरप्रपीडनमाहारेण, हृदयस्यानवरोधः, पार्श्वयोरविपाटनम्, अनतिगौरवमुदरस्य, प्रीणनमिन्द्रियाणाम्, क्षुत्पिपासोपरमः, स्थानासनशयनगमनोच्छ्वासप्रश्वासहाससंकथासु च सुखानुवृत्तिः, सायं प्रातश्च सुखेन परिणमनम्, बलवर्णोपचयकरत्वं चेति मात्रावतो लक्षणमाहारस्य भवति[1] ॥ ६ ॥

तदेव स्फारयति—न चेत्यादि । सौष्ठवं सुष्ठुत्वं भाद्रक्यमित्यर्थः । विभक्तफलत्वादिति विभिन्नफलत्वात् । कुक्ष्यंशविभागेनेति "एकमवकाशांशं मूर्तानाम्" इत्यादिना । उद्दिष्टमिति, संक्षेपकथितम् । सायंप्रातश्चेति वचनात्सायंभोजने कृते यदि प्रातः, प्रातश्च कृते यदि सायं सुखेन परिणमनं तथा स्थानासनादिषु सुखानुवृत्तिर्भवति, तदा मात्रावद्भोजनं कृतमिति ज्ञेयम् ॥ ४—६ ॥

अमात्रावत्त्वं पुनर्द्विविधमाचक्षते—हीनमधिकं च । तत्र हीनमात्रमाहारराशिं बलवर्णोपचयक्षयकरमतृप्तिकरमुदावर्तकरमवृष्यमनायुष्यमनौजस्यं शरीरमनोबुद्धीन्द्रियोपघातकरं सारविधमनमलक्ष्म्यावहमशीतेश्च वातविकाराणामायतनमाचक्षते, अतिमात्रं पुनः सर्वदोषप्रकोपणमिच्छन्ति सर्वकुशलाः ॥ ७ ॥

यो हि मूर्तानामाहारविकाराणां सौहित्यं गत्वा पश्चाद्द्रवैस्तृप्तिमापद्यते भूयः, तस्यामाशयगता वातपित्तश्लेष्माणोऽभ्यवहारेणातिमात्रेणातिप्रपीड्यमानाः सर्वे युगपत्प्रकोपमापद्यन्ते । ते प्रकुपितास्तमेवाहारराशिमपरिणतमाविश्य कुक्ष्येकदेशमन्नाश्रिता विष्टम्भयन्तः सहसा वाप्युत्तराधराभ्यां मार्गाभ्यां प्रच्यावयन्तः पृथक् पृथग्विकारानभिनिर्वर्तयन्त्यतिमात्रभोक्तुः ॥ ८ ॥

तत्र वातः शूलानाहाङ्गमर्दमुखशोषमूर्च्छाभ्रमाग्निवैषम्यसिरासङ्कोचनस्तम्भनानि करोति, पित्तं पुनः ज्वरमतीसारमन्तर्दाहं तृष्णामदभ्रमप्रलपनानि, श्लेष्मा तु छर्द्यरोचकाविपाकशीतज्वरालस्यगात्रगौरवाभिनिर्वृत्तिकरः संपद्यते ॥ ९ ॥

१ अपीडनं भवेत् कुक्षेः पार्श्वयोरविपाटनम् । अन्नेन हृदयाबाधो जठरस्य तु गौरवम् । प्रीणनं चक्षुरादीनां शमनं क्षुत्पिपासयोः । उच्छ्वासश्वासहास्यादिकथासु सुखवर्तनम् । सुखेन परिणामः स्यादन्ने भुक्ते दिवा निशि । हु: टी: उ: ।

सारविधमनमिति रोगभिषग्जितीये वक्ष्यमाणत्वक्सारादिविधमनम् । आहारविकाराणामिति करणे सौहित्ययोगात् षष्ठी । द्रवैस्तृप्तिं 'भूयः' पदविशेषणात् अतितृप्तिमित्यर्थः । आमाशयगता इत्यनेन अग्निसहायसमानस्यैव वायोः कोपो भवति, न पक्वाशयगतस्येति दर्शयति । कुक्ष्येकदेशमन्नाश्रिताः सह दूषितेनाहारेणेत्यर्थः ॥ ७—९ ॥

न खलु केवलमतिमात्रमेवाहारराशिमामप्रदोषकरमिच्छन्ति, अपि तु खलु गुरुरूक्षशीतशुष्कद्विष्टविष्टम्भिविदाह्यशुचिविरुद्धानामकाले चान्नपानानामुपसेवनम्। कामक्रोधलोभमोहेर्ष्याह्रीशोकमानोद्वेगभयोपतप्तेन मनसा वा यदन्नपानमुपयुज्यते, तदप्याममेव प्रदूषयति ॥ १० ॥

भवति चात्र ।

मात्रयाप्यभ्यवहृतं पथ्यं चान्नं न जीर्यति ।
चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ११ ॥

तं द्विविधमामप्रदोषमाचक्षते भिषजो विसूचिकामलसकं च ॥ १२ ॥

तत्र विसूचिकामूर्ध्वं चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विद्यात् ॥ १३ ॥

अतिमात्राशनजन्यत्वेनामप्रदोषे वक्तव्ये अन्यतश्च यत आमप्रदोषो भवति तमाह न खल्वित्यादि । कामादिभिर्मनस उपघातः प्रभावादेवान्नं दूषयति । एवमशुच्यप्यन्नमशुचित्वेन ज्ञातं मनस उपघातकत्वादामदूषकं भवति । आमस्यापक्वस्याहारस्य प्रदोषः आमप्रदोषः, आममेव प्रदूषयतीति अत्र कर्मकर्तृत्वे 'अच्,' तेन, दुष्टं भवतीत्यर्थः । किंवा, आममपक्वं सद्दुष्टं दोषसंपर्कात् शरीरं दूषयतीति ज्ञेयम् । द्विविधमित्यादौ अलसकएव दण्डालसकामविषयोरवरोधः । तयोरपि हि दोषो विबद्धमार्गत्वादलसीभूतो भवति ॥ १०—१३ ॥

अलसकमुपदेक्ष्यामः—दुर्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणः स्थिरगुरुबहुरूक्षशीतशुष्कान्नसेविनस्तदन्नपानमनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमतिमात्रप्रलीनमलसत्वान्न बहिर्मुखीभवति, ततश्छर्द्यतीसारवर्ज्यान्यामप्रदोषलिङ्गानि यथोक्तान्यभिदर्शयत्यतिमात्राणि ॥ १४ ॥

"अलसकमुपदेक्ष्यामः" इत्यादिना पुनर्विशेषहेतुः प्रायोऽभिनिर्वर्तक उच्यते, सामान्येन त्वतिमात्राहाररूप उक्त एवेति ज्ञेयम् । अनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमिति दोषद्वयव्यापारवचनाद्वातश्लेष्मणोरलसके प्राधान्यमुच्यते, पित्तन्तु सामान्यवचनसिद्धमप्रधानमस्त्येव तृष्णामदभ्रमादिलिङ्गमिति ज्ञेयम् ॥ १४ ॥

अतिमात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छन्तः कदाचित् केवलमेवास्य शरीरं दण्डवत् स्तम्भयन्ति, ततस्तं दण्डालसकमसाध्यं ब्रुवते । विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरामदोषमामविषमित्याचक्षते भिषजो, विषसदृशलिङ्गत्वात् । तत् परमसाध्यमाशुकारित्वाद् विरुद्धोपक्रमत्वाच्चेति ॥ १५ ॥

तत्र साध्यमामं प्रदुष्टमलसीभूतमुल्लेखयेत् पाययित्वा सलवणमुष्णं च वारि । ततः स्वेदनवर्तिप्रणिधानाभ्यामुपाचरेदुपवासयेच्चैनम् ॥ १६ ॥

प्रदुष्टामबद्धमार्गा इत्यत्रापक्वाहारोऽन्नरसो वा अपक्वआम उच्यते । केवलं कृत्स्नम् । विरुद्धाध्यशनाजीर्णाशनमिति विरुद्धाशनम्, अध्यशनम्, अजीर्णाशनं च, अजीर्णस्यापक्वस्याशनमजीर्णाशनम्, अजीर्णे भोजनस्याध्यशनशब्देन लब्धत्वात् । आमदोषमामविषमाचक्षत इत्यत्र विषसदृशलिङ्ग एवामदोषोऽभिप्रेतः । अतएव 'विषसदृशलिङ्गत्वाद्' इत्युक्तम् । विरुद्धोपक्रमत्वादिति आमापेक्षया यदुष्णं क्रियते, तद्विषविरुद्धम्, यच्च विषापेक्षया शीतं क्रियते, तदामविरुद्धम् । विषसदृशता चामस्यामजननहेतुप्रभावाद्भवति मधुघृतयोग इव विषत्वम्, वर्तिरिति फलवर्तिः ॥ १५—१६ ॥

विसूचिकायां तु लङ्घनमेवाग्रे विरिक्तवच्चानुपूर्वी ॥ १७ ॥

आमप्रदोषेषु त्वन्नकाले जीर्णाहारं पुनर्दोषावलिप्तामाशयं स्तिमितगुरुकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधमग्निसन्धूक्षणार्थं च । नत्वजीर्णाशनम् । आमप्रदोषदुर्बलो ह्यग्निर्युगपद्दोषमौषधमाहारजातञ्चाशक्तः पक्तुम् । अपि चामप्रदोषाहारौषधविभ्रमोऽतिबलवत्त्वादुपरतकायाग्निं सहसैवातुरमबलमतिपातयेत् ॥ १८ ॥

आनुपूर्वीति पेयादिक्रम इत्यर्थः । जीर्णाहारमिति विसूचिकाऽलसकयोरिवाहारस्याजीर्णतां दर्शयति । दोषावलिप्तामाशयस्य स्तिमितकोष्ठत्वादि पुरुषविशेषणमपि लक्षणं ज्ञेयम् । न त्वजीर्णाशनमिति पुनर्निषेधकरणेनाजीर्णाशनेन प्रमादादजीर्णप्रशमनाभिप्रायेण क्रियमाणभेषजस्य महात्ययतां "दुर्बलो ह्यग्नि" इत्यादिना वक्ष्यमाणां दर्शयति ॥ १७—१८ ॥

आमप्रदोषजानां पुनर्विकाराणामपतर्पणेनैवोपरमो भवति, सति त्वनुबन्धे कृतापतर्पणानां व्याधीनां निग्रहे निमित्तविपरीतमपास्यौषधमातङ्कवि-

१ पुनरेवंदोषमामविषमाचक्षत इति पाठान्तरम् । २ छेदनेति पाठान्तरम् । ३ तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् । दोषाच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनमिति चक्रः सः ।

परीतमेवावचारयेत् यथास्वम्। सर्वविकाराणामपि च निग्रहे हेतुव्याधिविपरीतमौषधमिच्छन्ति कुशलाः, तदर्थकारि वा ॥ १९ ॥

विमुक्तामप्रदोषस्य पुनः परिपक्वदोषस्य दीप्ते चाग्नावभ्यङ्गास्थापनानुवासनं विधिवत् स्नेहपानं च युक्त्या प्रयोज्यं प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि विकारांश्च सम्यगिति ॥ २० ॥

कृतापतर्पणानामित्यनेन दोषाणामामताक्षयं सूचयति। सम्यक्कृते ह्यपतर्पणेनामानुबन्धोऽस्ति। ततश्च निरामदोषारब्धे विसूचिकालसकव्यवस्थितशूलज्वरादौ आतङ्कविपरीतं निरामशूलज्वरहरमेव युज्यते। यथास्वमिति यद्यस्य शूलादेरातङ्कविपरीतं तत्तत्र कार्यमित्यर्थः। आतङ्कविपरीतशब्देन च 'तदर्थकारि' गृहीतं मन्तव्यम्। अतएवोत्तरत्र "तदर्थकारि वा" इति सर्वविकारभेषजकथने उपपन्नं भवति। अन्यथा कथमिहानभिहितं 'तदर्थकारि' तत्राप्रस्तुतमुच्यते। विमुक्तामदोषस्येत्यादिनाभ्यङ्गादिविधानं व्याधिजन्यातिदौर्बल्यादिदोपप्रशमनार्थम् ॥ १९—२० ॥

भवन्ति चात्र।

अशितं खादितं पीतं लीढं च क विपच्यते।
एतत्त्वां धीर पृच्छामस्तन्न आचक्ष्व बुद्धिमान् ॥२१॥
इत्यग्निवेशप्रमुखैः शिष्यैः पृष्टः पुनर्वसुः।
आचचक्षे ततस्तेभ्यो यत्राहारो विपच्यते ॥ २२ ॥
नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः।
अशितं खादितं पीतं लीढं चात्र विपच्यते ॥ २३ ॥
आमाशयगतः पाकमाहारः प्राप्य केवलम्।
पक्वः सर्वाश्रयं पश्चाद्धमनीभिः प्रपद्यते ॥ २४ ॥

तत्र श्लोकौ।

तस्य मात्रावतो लिङ्गं फलं चोक्तं यथायथम्।
अमात्रस्य तथा लिङ्गं फलं चोक्तं विभागशः ॥२५॥
आहारविध्यायतनानि चाष्टौ
सम्यक् परीक्ष्यात्महितं विदध्यात्।
अन्यश्च यः कश्चिदिहास्ति मार्गो
हितोपयोगेषु भजेत तं च ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने त्रिविधकुक्षीयविमानं नाम द्वितीयोऽध्यायः।

आमाशयप्रमाणोपदर्शनार्थञ्च पृच्छोत्तरग्रन्थमाह अशितमित्यादि। सर्वाश्रयमिति सर्वशरीरम् अनुक्तविध्युपग्रहार्थमाह अन्यश्चेत्यादि। अन्यश्चेति, ग्रहण्यतिसारादिवक्ष्यमाणमदोषक्षयकरो भेषजरूपो मार्गो इहामप्रदोषे हित इति संबन्धः ॥ ॥ २१—२६ ॥

इति महामहोपाध्याय-चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने त्रिविधकुक्षीयविमानम्।

## तृतीयोऽध्यायः।

अथातो जनपदोद्ध्वंसनीयं विमानं व्याख्यास्यामः॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

द्विविधो हेतुर्व्याधिजनकः प्राणिनां भवति साधारणोऽसाधारणश्च। तत्र साधारणं प्रतिपुरुषनियतं वातादिजननमाहाराद्यभिधाय बहुजनसाधारणवातजलदेशकालरूपमसाधारणरोगकारणमभिधातुं जनपदोद्ध्वंसनीयोऽभिधीयते १—२

जनपदमण्डले पञ्चालक्षेत्रे द्विजातिभिरध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे गङ्गातीरे वनविचारमनुविचरन् शिष्यमग्निवेशमब्रवीत् ॥ ३ ॥

जनपदोपलक्षितं मण्डलं, जनपदमण्डलं, पंचालक्षेत्र इति तस्य विशेषणम्। द्विजातिभिरध्युषित इतिवचनेन महाजनसेवितेऽपि देशे अधर्मवशाज्जनपदोद्ध्वंसो वक्ष्यमाणो भवतीति दर्शयति। पश्चिमे घर्ममास इति ज्यैष्ठे। वनविचारमनुविचरन्निति वनं विचर्य विचर्यानुविचरन्नित्यर्थः ॥ ३ ॥

दृश्यन्ते हि खलु सौम्य! नक्षत्रग्रहचन्द्रसूर्यानिलानलानां दिशां चाप्रकृतिभूतानामृतुवैकारिका भावाः, अचिरादितो भूरपि च न यथावद्रसवीर्यविपाकप्रभावमोषधीनां प्रतिविधास्यति, तद्वियोगाच्चातङ्कप्रायता नियता, तस्मात् प्रागुद्ध्वंसात् प्राक् च भूमेर्विरसीभावादुद्धरध्वं सौम्य! भैषज्यानि यावन्नोपहतरसवीर्यविपाकप्रभावाणि। वयं चैषां रसवीर्यविपाकप्रभावानुपयोक्ष्यामहे, ये चास्माननुकाङ्क्षन्ति, यांश्च वयमनुकाङ्क्षामः। न हि सम्यगुद्धृतेषु सौम्य भैषज्येषु सम्यग्विहितेषु सम्यग्विचारितेषु[1] जनपदोद्ध्वंसकराणां किंचित् प्रतीकारगौरवं भवति[2] ॥ ४ ॥

ऋतुविकाराय भूता ऋतुवैकारिकाः। ऋतुविकारश्चोपलक्षणम्। तेन, जनपदेशवातविकाराय भूता इति मन्तव्यम्। यतो भूम्यादीनामपि विकृतिं वक्ष्यति। किंवा, ऋतवननुरूपा ऋतुवैकारिकाः। तेन, ऋत्वननुरूपलक्षणमेव नक्ष-

१ अनुद्रिक्तामप्रदोपस्येति पाठोऽन्यः.

१ सम्यगवचारितेष्विति पाठान्तरम्।

२ विषादपरिहार्यत्वाद् गरीयः परमर्थविदिति पाठान्तरम्।

त्रादीनां विकृतिरित्युक्तं भवति । ग्रीष्मे हि नक्षत्राणि निर्मलानि भवन्ति, तानि यदि तु तुषारच्छन्नानि ग्रीष्मे भवन्ति, तदा विकृतानि भवन्तीति मन्तव्यम् । भूरपि चेति 'अपि' वचनात् जलानिलौ च ग्राह्यन्ति। तेन, भूस्तावदोषधीनां प्रधानकारणम् सा रसादीन् प्रतिविधास्यति, जलवातावपि चौषधीनांरसादीन् प्रतिविधास्यतइति वचनं भवति। प्रतिविधास्यतीती जनयिष्यति उद्धरध्वमिति बहुवचनं बहुन्तेवासियुक्ताग्निवेशाभिप्रायेण अग्निवेशस्तु प्रधानत्वेनैक एव हि, 'अग्निवेश' इतिपदेन तथा 'सौम्य' इतिपदेन सम्बोध्यते । भेषजोद्धरणन्तु बहुभिरेव कर्तव्यमित्यभिप्रायेण बहुवचनम् । भवति हि प्रधानं संबोध्य गणसंपाद्यक्रियायां बहुवचनम् । यथा—पत्ते युध्यध्वमिति ! अन्ये तु 'सौम्य'पदं भेषजविशेषणं कुर्वन्ति । ये चास्माननुकांक्षन्ति ये चास्मान् भिषजोऽनुकांक्षन्तीत्यर्थः । यांश्चवयमनुकांक्षामश्चिकित्स्यत्वेन । एतेन, ये वैद्यप्रियत्वेन साध्याः । असाध्या हि वैद्यद्विष उक्ताः । व यानिच्छन्ति, ते साध्यरोगा एव । असाध्यान् हि वैद्या नेच्छन्ति । एतेन, येऽन्येऽपि भेषजसाध्या रोगास्ते आसामोषधीनां रसादीनुपयुञ्जन्तीत्यर्थः । यदि, ये असद्वृताः, यांश्च वयं प्रयोजनवशादनुगताः, ते उपयोक्ष्यन्तीति व्याख्यायते, तदा आत्रेयस्य पक्षरागित्वेनाप्तत्वं न संभवतीति "सर्वत्र प्रजायां पितृवत् शरण्यः" इति वचनाच्चास्य नीरागत्वमुक्तम् ॥ ४ ॥

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच उद्धृतानि खलु भगवन् भैषज्यानि सम्यग्विहितानि च सम्यग्विचारचारितानि, अपि तु खलु जनपदोद्ध्वंसनमेकेन व्याधिना युगपदसमानप्रकृत्याहारदेहबलसात्म्यसत्त्ववयसां मनुष्याणां कस्माद्भवतीति ॥ ५ ॥**

उद्धृतानीति वचनमभूते भूतवचेति प्रयोगाद्बोद्धव्यम्, यथा, अचिरकर्तव्ये 'कृतम्' इति वदन्ति । न हि वचनकाल एव ओषधीनामुद्धरणं सम्भवतीति । एकेनेत्येकजातीयेन । असमानप्रकृत्यादीनां समानकारणलाभाभावान्न तुल्यरूपो व्याधिर्भवितुमर्हतीति प्रश्नार्थः ॥ ५ ॥

**तमुवाच भगवानात्रेयः एवमसामान्यानामेभिरप्यग्निवेश ! प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्ये भावाः सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽभिनिर्वर्तमाना जनपदमुद्ध्वंसयन्ति । ते तु खल्विमे भावाः सामान्या जनपदेषु भवन्ति । तद्यथा—वायुरुदकं देशः काल इति ॥ ६ ॥**

**तत्र वातमेवंविधमनारोग्यकरं विद्यात् । तद्यथा यथर्तुविषममतिस्तिमितमतिचलमतिपरुषमतिशीतमत्युष्णमतिरूक्षमत्यभिष्यन्दिनमतिभैरवारावमतिप्रतिहतपरस्परगतिमतिकुण्डलिनमसात्म्यगन्धबाष्पसिकतापांशुधूमोपहतमिति ॥ ७ ॥**

**उदकं तु खल्वत्यर्थविकृतगन्धवर्णरसस्पर्शवत् क्लेदबहुलमपक्रान्तजलचरविहङ्गमुपक्षीणजलाशयमप्रीतिकरमपगतगुणं विद्यात् ॥ ८ ॥**

**देशं पुनर्विकृतवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृपव्यालमशकशलभमक्षिकामूषकोलूकश्माशानिकशकुनिजम्बुकादिभिस्तृणोलूपोपवनवन्तं लताप्रतानादिबहुलमपूर्ववदवपतितं शुष्कनष्टशस्यं धूम्रपवनं प्रध्मातपतत्रिगणमुत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसङ्घमुत्सृष्टनष्टधर्मसत्यलज्जागुणजनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं[1] प्रततोल्कापातनिर्घातभूमिकम्पं अतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं ससम्भ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलमिव चाहितं विद्यात् ॥ ९ ॥**

**कालं तु खलु यथर्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गञ्चाहितं व्यवस्येत् ॥ १० ॥**

**इमानेवंदोषयुक्तांश्चतुरो भावान् जनपदोद्ध्वंसकरान् वदन्ति कुशलाः । अतोऽन्यथाभूतांस्तु हितानाचक्षते ॥ ११ ॥**

**विगुणेष्वपि खल्वेतेषु जनपदोद्ध्वंसनकरेषु भावेषु भेषजेनोपपाद्यमानानामभयं भवति रोगेभ्य इति ॥ १२ ॥**

समानलिङ्गा इति तुल्यलिङ्गाः । यथर्तुविषममिति ऋत्वननुरूपम् । अपगतगुणमिति "जीवनं पिपासाहरम्" इत्याद्युक्तगुणरहितम् । विकृता वर्णादयो यस्य देशस्य तं विकृतवर्णगन्धरसस्पर्शम्; श्माशानिकशकुनिर्गृध्रा अपूर्ववदिति परिचितमप्युपहतत्वेनापूर्वमिव दृश्यते, उत्सृष्टाश्च नष्टाश्च धर्मसत्यलज्जागुणा जनैर्यत्र स तथा, यत्र ये धर्मादियुक्तास्ते उत्सृजन्ति धर्मादीनि, सर्वथा अज्ञा न धर्मादीन्याचरन्ति, तान् प्रति नष्टान्येव धर्मादीनि । गुह्यकाक्रान्तो हि देशो यथा क्रन्दनशब्दबहुलो भवति, तादृशम् ॥ ६—१२ ॥

भवन्ति चात्र ।

**वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम् ।**
**गरीयस्त्वं विशेषेण हेतुमत् संप्रवक्ष्यते ॥ १३ ॥**
**वाताज्जलं जलाद्देशं देशात् कालं स्वभावतः ।**
**विद्याद्दुष्परिहार्यत्वाद्गरीयस्तरमर्थवित् ॥ १४ ॥[2]**

---

१ सततक्षुभितोदीर्णसलिलाशयमिति पाठान्तरम् ।
२ विद्यादपरिहार्यत्वाद् गरीयः परमर्थविदिति पाठान्तरम् ।

वाय्वादिषु यथोक्तानां दोषाणां तु विशेषवित् ।
प्रतीकारस्य सौकर्ये विद्याल्लाघवलक्षणम् ॥ १५ ॥
चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नराः ।
भेषजेनोपपाद्यन्ते न भवन्त्यातुरास्तदा ॥ १६ ॥

वैगुण्यमित्यादिना, दुष्टानां वातादीनां यस्य यदुत्कर्षो येन हेतुना तदाह । स्वभावतो विद्याद्दुष्परिहार्यत्वादिति, स्वभावादेव वातापेक्षया जलं दुष्परिहरं भवति, जलाच्च देशः, देशाच्च कालः; वातो हि निवातदेशसेवया दुष्टः परिह्रियते, न तथा जलम्, तद्धि देहवृत्त्यर्थमवश्यं सेव्यम् । जलमपि च यदि महता प्रयत्नेन परिहर्तुं युज्यते, देशस्तु जलापेक्षया दुष्परिहरो भवति, तद्व्यतिरेकेणावस्थातुमशक्यत्वात् । देशोऽपि यदि देशान्तरगमनेन परिहर्तुं युज्यते, कालस्तु सर्वथा त्यक्तुमशक्य इति सर्वेष्वेव गरीयान् । गरीयः परमिति पाठे, यद्यतः परम्, तत्ततो गरीयो विद्यादिति योजना । एतद्विपर्यये लाघवमाह—वाय्वादिष्वित्यादि । प्रतीकारस्य सौकर्य इति यथोक्तविधया वातादिपरित्यागस्य सुकरत्वेनेत्यर्थः ॥ १३—१६ ॥

येषां न मृत्युसामान्यं सामान्यं न च कर्मणाम् ।
कर्म पंचविधं तेषां भेषजं परमुच्यते ॥ १७ ॥
रसायनानां विधिवच्चोपयोगः प्रशस्यते ।
शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः ॥ १८ ॥
सत्यं भूते दया दानं बलयो देवतार्चनम् ।
सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः ॥
हितं जनपदानां च शिवानामुपसेवनम् ।
सेवनं ब्रह्मचर्यस्य तथैव ब्रह्मचारिणाम् ॥
सङ्कथा धर्मशास्त्राणां महर्षीणां जितात्मनाम् ।
धार्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसंमतैः ॥
इत्येतद्भेषजं प्रोक्तमायुषः परिपालनम् ।
येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे ॥ १९ ॥

येषां न मृत्युसामान्यमिति, न मृत्युजनकदैवसाम्यं येषामस्तीत्यर्थः । सामान्यं न च कर्मणामिति, नच मारककर्मसामान्यं येषामस्तीत्यर्थः । केचिद्धि संभूयैव जन्मान्तरे ग्रामदाहादि कुर्वते स्म, तत्कर्मबलात् संहतमृत्यव एव भवन्ति । किंवा, पृथगपि मारकं कर्म कृतं केषाञ्चिदेककाले विपच्यमानं भवति । तेऽपि समकालमृत्यवो भवन्ति । तत्र 'न मृत्युसामान्यम्', इत्यनेन नोत्पन्नरिष्टत्वादेव केचित् साध्या इति दर्शयति, 'न कर्मसामान्यम्' इत्यनेन केचिच्चाजातरिष्टा अपि नियतमारककर्मवशादसाध्या भवन्तीति दर्शयति । किंवा, 'न मृत्युसामान्यम्' इत्यनेन मारकव्याधिः साधारण उच्यते । 'न कर्मसामान्यम्' इत्यनेन च मारकव्याधिजनकं कर्मोच्यते । पूर्वमुद्धृतैरिति व्यापत्तेः पूर्वं गृहीतैः । गुप्तिर्मन्त्रादिना रक्षा । अनियत इति वचनेन दुर्बलकर्मारब्धोऽपि मृत्युः पार्यत एवैवं प्रतिकर्तुमिति दर्शयति ॥१७—१९॥

इति श्रुत्वा जनपदोद्ध्वंसने कारणान्यात्रेयस्य भगवतः पुनरपि भगवन्तमात्रेयमग्निवेश उवाच—अथ खलु भगवन् कुतो मूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते? येनोपपन्ना जनपदमुद्ध्वंसयन्तीति॥२०॥

तमुवाच भगवानात्रेयः—सर्वेषामप्यग्निवेश! वाय्वादीनां यद्वैगुण्यमुत्पद्यते, तस्य मूलमधर्मः, तन्मूलं वासत्कर्म पूर्वकृतम् । तयोर्योनिः प्रज्ञापराध एव । तद्यथा—यदा देशनगरनिगमजनपदप्रधाना[1] धर्ममुत्क्रम्याधर्मेण प्रजां वर्तयन्ति, तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्धयन्ति । ततः सोऽधर्मः प्रसभं धर्ममन्तर्धत्ते । ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते । तेषां तथान्तर्हितधर्मणामधर्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते । तेन, नापो यथाकालं देवो वर्षति, न वा वर्षति, विकृतं वा वर्षति वाता न सम्यगभिवान्ति । क्षितिर्व्यापद्यते । सलिलान्युपशुष्यन्ति, ओषधयः स्वभावं परिहायापद्यन्ते विकृतिम् । तत उद्ध्वंसन्ते जनपदाः स्पृश्याभ्यवहार्यदोषात् ॥ २१ ॥

कुतो मूलं किंमूलमित्यर्थः । तस्य मूलमधर्म इति ऐहिकाधर्मं दर्शयति । तन्मूलं वेति, तस्य वातादिवैगुण्यस्य मूलं पूर्वकृतं वा कर्म । तेन हि, कोप्यधर्मो जन्मान्तरकृतो वातादिवैगुण्यस्य कारणमिति ब्रुवते । तद्—'यदा देश' इत्यादिना त्वैहिकमेवाधर्मं यद्वक्ष्यति । एतत्तया प्रत्यक्षत्वेन स्फुटसिद्धान्तार्थम्, नतु जन्मान्तरकृताधर्मस्याकारणत्वेनेति ज्ञेयम् । तयोरित्यैहिकजन्मान्तरीययोः । योनिरिति कारणम् । स्पृश्याभ्यवहार्यदोषादिति स्पृश्यस्य व्यजनादेरभ्यवहार्यस्य च कृत्स्नस्य दुष्टत्वात् । एतच्च प्राधान्येन ज्ञेयम् । तेन, दुष्टपवनगन्धदोषेऽपि ज्ञेयम्, असात्म्यगन्धोपि दुष्टवात उक्तः॥२०—२१

तथा शस्त्रप्रभवस्याप्यधर्म एव हेतुर्भवति । तेऽतिप्रवृद्धलोभरोषमोहमाना दुर्बलानवमत्यात्मस्वजनपरोपघाताय शस्त्रेण परस्परमभिक्रामन्ति, परान् वातिक्रामन्ति, परैर्वाभिक्राम्यन्ते ॥ २२ ॥

रक्षोगणादिभिर्वा विविधैर्भूतसङ्घैस्तमधर्ममन्यद्वाप्यपचारान्तरमुपलभ्याभिहन्यन्ते ॥ २३ ॥

शस्त्रप्रभवस्यापीति बहुजनमारकशस्त्रप्रभवस्येत्यर्थः । आत्मस्वजनपरोपघातायेति, आत्मनः स्वजनस्य परस्य चोपघातो भवति प्राय इत्यर्थः । राक्षसाद्युत्सादोपि जनानामधर्मकृत एव भवतीत्याह—रक्षोगणेत्यादि ।—अन्यद्वेत्यधर्मकारणमशौचादीत्यर्थः ॥ २२—२३ ॥

[1] नगरनिगमजनपदप्रधाना नगरादीनामध्यक्षाः । [2] तन्मूलं वेति पाठान्तरंतु न चक्रसम्मतम् ।

तथाभिशापप्रभवस्याप्यधर्म एव हेतुर्भवति । ते लुप्तधर्माणो धर्मादपेता गुरुवृद्धसिद्धर्षिपूज्यानवमत्याहितान्याचरन्ति । ततस्ताः प्रजा गुर्वादिभिरभिशप्ता भस्मतामुपयान्ति प्रागेवानेकपुरुषकुलविनाशाय, नियतप्रत्ययोपलम्भादनियताश्चापरे[1] ॥ २४ ॥

प्रागेवेति झटिति, अनेकपुरुषकुलविनाशायाभिशप्ता भस्मतां यान्तीत्यर्थः । नियतप्रत्ययोपलम्भादनियताश्चापरे भस्मतां यान्तीति योजना । अनियता अनिमित्ता इत्यर्थः । प्रतिनियतपुरुषाभिशापात् प्रतिनियता एव भस्मतां यान्ति सर्वे जना इत्यर्थः ॥ २४ ॥

प्रागपि चाधर्मादृते नाशुभोत्पत्तिरन्यतोऽभूत् । आदिकाले अदितिसुतसमौजसोऽतिवलविपुलप्रभावाः प्रत्यक्षदेवदेवर्षिधर्मयज्ञविधिविधानाः शैलेन्द्रसारसंहतस्थिरशरीराः प्रसन्नवर्णेन्द्रियाः पवनसमजवपराक्रमाश्चारुस्फिचोऽभिरूपप्रमाणाकृतिप्रसादोपचयवन्तः सत्यार्जवानृशंस्यदानदमनियमतपउपवासब्रह्मचर्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुरमितायुषस्तेषामुदारसत्त्वगुणकर्मणामचिन्त्यरसवीर्यविपाकप्रभावगुणसमुदितानि[2] प्रादुर्बभूवुः शस्यानि सर्वगुणसमुदितत्वात् पृथिव्यादीनां कृतयुगस्यादौ ॥ २५ ॥

भ्रश्यति तु कृतयुगे केषाञ्चिदत्यादानात् साम्पन्निकानां शरीरगौरवमासीत् । सत्त्वानां गौरवात् श्रमः, श्रमादालस्यम्, आलस्यात् सञ्चयः, सञ्चयात् परिग्रहः, परिग्रहाल्लोभः प्रादुर्भूतः कृते ॥२६॥

आद्याविर्भावे रोगाणामधर्म एव कारणमित्याह—प्रागपि चेत्यादि ।—यज्ञो यज्ञदेवता । विधिर्यज्ञविधायको वेदः । विधानं यज्ञकर्म । जवो वेगः । परिग्रहो ममता । अमितमित्यातिबहुत्वेनायुर्येषां ते अमितायुषः । सत्ये हि चतुर्वर्षशतायुः । यदुक्तं भगवता व्यासेन—"पुरुषाः सर्वसिद्धाश्च चतुर्वर्षशतायुषः । कृते" इति । सांपन्निकानामीश्वराणाम् । कृत इति कृतयुगस्य शेषे ॥ २५—२६ ॥

ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम् अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचित्तोद्वेगादयः प्रवृत्ताः । ततस्त्रेतायां धर्मपादोऽन्तर्द्धानमगमत् । तस्यान्तर्द्धानात् पृथिव्यादीनां गुणपादप्रणाशोऽभूत् । तत्प्रणाशकृतश्च शस्यानां स्नेहवैमल्यरसवीर्यविपाकप्रभावगुणपादभ्रंशः ततस्तानि प्रजाशरीराणि हीयमानगुणपादैश्चाहारविहारैरयथापूर्वमुपष्टभ्यमानान्यग्निमारुतपरीतानि प्राग्व्याधिभिर्ज्वरादिभिराक्रान्तान्यतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति ॥ २७ ॥

हीयमानगुणैश्चेति, यथा यथा त्रेतायाः क्षयो भवति, तथा तथा आहारविहारगुणपादह्रासो भवन्नास्त इति दर्शयति । विहारो हि धर्मवर्द्धनगुणो भवति, तेन न यथावत् शरीरोपष्टम्भनं करोति । उपष्टभ्यमानानीति धातुसाम्येन पाल्यमानानि ॥ २७ ॥

भवतश्चात्र ।

युगे युगे धर्मपादः क्रमेणानेन हीयते ।
गुणपादश्च भूतानामेवं लोकः प्रलीयते ॥ २८ ॥
संवत्सरशते पूर्णे याति संवत्सरः क्षयम् ।
देहिनामायुषः काले यत्र यन्मानमिष्यते ॥ २९ ॥

संवत्सरशते पूर्णे इति संवत्सरेण शततमेंऽशे पूर्णे । यत्र यन्मानमिष्यत इति यत्र युगे यन्मानमिष्यते, तत्र शततमेंऽशे पूर्णे वर्षे एकः क्षयं याति । तेन, कलौ शतवर्षायुरिति । यदा शततमोंऽशो याति क्षयम्, तदा नवनवतिपरमायुर्भवतीत्याद्यनुसरणीयम् ॥ २८—२९ ॥

इति विकाराणां प्रागुत्पत्तिहेतुरुक्तो भवत्येवंवादिनं भगवन्तमग्निवेश उवाच—किन्नु खलु भगवन् । नियतकालप्रमाणमायुः सर्वं न वेति ॥ ३० ॥

भगवानुवाच—

इहाग्निवेश ! भूतानामायुर्युक्तिमपेक्षते ।
दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् ॥ ३१ ॥
दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदैहिकम् ।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ ३२ ॥
बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः ॥ ३३ ॥
दृष्टं हि त्रिविधं कर्म हीनं मध्यममुत्तमम् ॥ ३४ ॥

युक्तिमपेक्षत इति दैवपुरुषकारयोर्युक्तिमपेक्षते नियतत्वेऽनियतत्वे वेत्यर्थः । बलं चाबलं च बलाबलम्, तत्रायुषो नियतत्वेन बलमनियतत्वेनाऽबलं ज्ञेयम् । यद्यपि पौर्वदैहिकं कर्मास्थिरत्वेन गतम्, तथापि तज्जनितादृष्टस्य विद्यमानत्वात्, तद्द्वारा तत्कर्म कारणं भवत्येवेहजन्मन्यपि । पुरुषकारस्त्विह जन्मन्यपि कृतं कर्म सामान्येनोच्यते । तत्र बलिमङ्गलादि

---

१ नियतप्रत्ययोपलम्भादनियताश्चापरे इत्यत्र नियतप्रत्ययोपलम्भान्नियताश्चापरे, अनियतप्रत्ययोपलम्भादनियताश्चापरे इति पाठान्तरन्तु न चक्रसम्मतम् । २ उदारसत्त्वगुणकर्मणां धर्मोणामचिन्त्यत्वादिति पाठान्तरम् । ३ शरीराणामिति पाठान्तरम् ।

अदृष्टजननत्वाद्याप्रियते, तथा भेषजादि रसरुधिरादिद्वारा ॥ ३०—३४ ॥

**तयोरुदारयोर्युक्तिर्दीर्घस्य च सुखस्य च ।**
**नियतस्यायुषो हेतुर्विपरीतस्य चेतरा ॥**
**मध्यमा मध्यमस्येष्टा, कारणं शृणु चापरम् ॥ ३५ ॥**

उदारयोरिति प्रशस्तत्वेनोत्तमयोः । दीर्घस्येति रसायनादिना शतादपि दीर्घस्य । सुखस्येति नीरोगत्वेन । नियतस्येति युगनियतस्य, कलौ वर्षशतप्रमाणस्येत्यर्थः । शतादर्वाङ्नियतमपीह नियतशब्देनोच्यते, तेन, न तत्र तस्य दैवपुरुषकारजन्यत्वं घटते, तथापि, तस्याऽप्रशस्तदैवपुरुषकारजन्यत्वाद्दैवपुरुषकारजन्यत्वं भवतीति युक्तम् । किंचानियतायुष एव पुरुषा रसायनाधिकारिणो भवन्ति, नियतायुषं प्रति रसायनस्याकिंचित्करत्वात् । रसायनादिकृतं चायुरनियतं प्रशस्तत्वेन प्रशस्तदैवपुरुषकारजन्यं भवतीति युक्तम् । किंवा, दीर्घत्वे सति नियतस्यायुषो हेतुरिति योजना । तेन, युगनियतं च शतवर्षम्, तथा तदधिकं चानियतं महता कर्मणैव क्रियते । पुरुषकारेण तु महतास्य सुखित्वं रोगोपघातात् क्रियते । रसायनेन च जरादिव्याधिप्रतिघातः क्रियते । रसायनलभ्यमप्यायुर्वलवत्कर्मनियतमेवेति भावः । विपरीतस्य दीर्घत्वेनानियतस्य तथा रोगयुक्तत्वेनासुखस्य । इतरेति हीनयोर्दैवपुरुषकारयोर्युक्तिरित्यर्थः । मध्यमा मध्यमस्य दीर्घत्वेनादीर्घत्वेनानियतस्य, तथा सुखासुखत्वेनानियतस्यायुषो मध्यमयोः कर्मणोर्युक्तिरित्यर्थः । कारणमिति दैवपुरुषकारयोः परस्परबाधने उपपत्तिमित्यर्थः ॥ ३५ ॥

**दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ।**
**दैवेन चेतरत्कर्म विशिष्टेनोपहन्यते ॥**
**दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ॥ ३६ ॥**

दैवमित्यादि ।—दुर्बलमायुर्जननं दैवं बलवता मारकेण दृष्टाऽपथ्यभोजनादिना विपरीतमरणकार्यजननादुपहन्यते । विशिष्टेन बलवता, इतरत् कर्म दृष्टं पुरुषकाराख्यम्, उपहन्यते पराभूयते । एतद्दैवकर्तृकदृष्टपराभवदर्शनाद्दैवनियतमेव सर्वमायुरिति केचिन्मन्यन्त इत्याह—दृष्ट्वेत्यादि ।—यदि दृष्टमायुःकारणं स्यात्, न तदा भेषजैः सम्यगुपपादितानां मृत्युः स्यात्, यतश्च सत्यपि चिकित्सिते कर्मवशात्तु मृत्युर्भवति । तेन, यत्रापि चिकित्सा जीवयतीति मन्यन्ते, तत्रापि कर्मैवास्ति जीवनकारणमिति दृष्टशक्तित्वादवधारयाम इति भावः ॥ ३६ ॥

**कर्म किंचित्क्वचित्काले विपाके नियतं महत् ।**
**किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते । इति ३७**

दैवपुरुषकारयोरुभयोरपि बाध्यत्वं दर्शयन्नेकान्तेन नियतायुःपक्षं व्युदस्यति कर्मेत्यादि ।—न क्वचित् कर्म न भवति । यदुच्यते—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इति । किंचित्त्वकालनियतमिति, यथा—इदं मारकं कर्म न तु क्वचित्काले पञ्चविंशवर्षादौ नियतम्; तेन, यस्मिन् काले पुरुषकाराख्यं दृष्टकर्मानुगुणं प्राप्नोति, तस्मिन् काले सहकारिसान्निध्योपबृंहितबलं मारयति, यदा तु दृष्टमपथ्यसेवादि न प्राप्नोति, न तदा मारयति । प्रत्ययैः प्रतिबोध्यत इति दृष्टकारणैरुद्रिक्तं क्रियते । ये तु ब्रुवते—किंचित् कर्म कालनियतम्, यदा पच्यते, तस्मिन् काले पच्यत एवेति कालनियमः । विपाकनियतं तु—इदं कर्म विपच्यत एव, न तु विपच्यत इति न । कालविपाकनियतं तु यथा—इदं कर्म अस्मिन्नेव काले विपच्यत एवेति । एतच्च कालविपाकनियतत्वाद्बलवदुच्यते । एतदेव दृष्टाबाधनीयमिति । तेषां मते, अभुक्तमपि क्षीयते दुर्बलकर्म प्रायश्चित्तादिनेति बोद्धव्यम्, परं विपर्ययेऽपि तदा

१ आहाराचारप्रायश्चित्तादिपुरुषकारस्त्वैहिकफलं दृष्टम्, अदृष्टं च प्रायो जन्मान्तरकृतं शुभाशुभं शरीरादिनिर्वर्तकम्, तदेतद्द्वितयमपि कारणं दृष्टसामर्थ्यात् । तत्र यदा दृष्टमाहारादि शुभमुपचितम्, अदृष्टं च धर्मरूपं शुभमुपचितं भवति, तदा युगनियतवर्षशतरूपस्यायुषः सुखयुक्तस्य च निष्पत्तिः। यदा तु दैवपुरुषकारयोः शुभयोर्मध्यमयोरन्योन्यस्यानुगुणयोर्योगः, तदा मध्यं मध्यमसुखं युगनियतादल्पं भवति। यदा तु हीनयोर्योगः, तदा हि संहीनमसुखायुर्भवति, एवं यदा दैवमशुभम्, पुरुषकारश्चाशुभः, तदाल्पं दुःखबहुलं वाऽयुर्भवति । एवमशुभदैवपुरुषकारयोर्मध्यमतायां हीनतायां वा उदाहरणमूह्यम्, एवं यदा दैवं शुभमुत्तमम्, पुरुषकारस्तु मध्यो हीनो वा, तदापि फलविशेष ऊह्यः । अत्रार्थे चरकः—"इहाग्निवेश ! भूतानामायुर्युक्तिमपेक्षते । दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् । दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदैहिकम् । स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् । बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः । दृष्टं हि त्रिविधं कर्म हीनं मध्यममुत्तमम् । तयोरुदारयोर्युक्तिर्दीर्घस्य च सुखस्य च । नियतस्यायुषो हेतुर्विपरीतस्य चेतरा । मध्यमा मध्यमस्योक्ता विशेषं शृणु चापरम्" इति । अत्र पौर्वदैहिकमिति प्रायेण जन्मान्तरकृतस्यैव इह जन्मनि पाकादुक्तमेतत्, जन्मान्तरकृतं तु ब्रह्मवधादि प्रायो जन्मान्तर एव फलति । नियतस्येति युगनियतस्येति। सु. टी. भा. चक्रः ।

१ यदा तु दैवपुरुषकारयोर्विरोधः, तदा दुर्बलं दैवं पुरुषकारेण बलवता हन्यते, बलवता दैवेन दुर्बलं पुरुषकारं हन्यते । अतएव च दैवेन पुरुषकारं पराभूतं दृष्ट्वा केचित् कर्मवादिनो दैवनियतमेवायुरादिकं वदन्ति, व्यर्थं च पुरुषकारं दैवयुक्तिव्यपाश्रयाहाराचाररूपं वदन्ति । सु. टी. भा. चक्रः ।
२ महदिति बलवदित्यर्थः । ३ किंचिन्न कालनियतमिति पाठान्तरम् । ४ प्रतिबुध्यते इति पाठान्तरम् ।

किंचित्त्वकालविपाकनियतमिति वक्तव्यं स्यात्। किंचित्त्वकालनियतवचनात्त्वकालनियतमिति ॥ ३७ ॥

तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु। निदर्शनमपि चात्रोदाहरिष्यामः—यदि हि नियतकालप्रमाणमायुः सर्वं स्यात्, तदाऽऽयुष्कामानां न मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनाद्याः क्रिया इष्टयश्च प्रयोज्येरन्। नोद्भ्रान्तचण्डचपलगोगजोष्ट्रखरतुरगमहिषादयः पवनादयश्च दुष्टाः परिहार्याः स्युः; न प्रपातगिरिविषमदुर्गाम्बुवेगाः, तथा न प्रमत्तोन्मत्तोद्भ्रान्तचण्डचपलमोहलोभाकुलमतयः, नारयः, न प्रवृद्धोऽग्निर्न च विविधविषाश्रयाः सरीसृपोरगादयः, न साहसम्, नादेशकालचर्या, न नरेन्द्रप्रकोप इत्येवमादयो हि भावा नाभावकराः स्युरायुषः सर्वस्य नियतकालप्रमाणत्वात्। न चानभ्यस्ताकालमरणभयनिवारकाणामकालमरणभयमागच्छेत् प्राणिनाम्, व्यर्थाश्चारम्भकथाप्रयोगबुद्धयः स्युर्महर्षीणां रसायनाधिकारे, नापीन्द्रो नियतायुषं शत्रुं वज्रेणाभिहन्यात्, नाश्विनावार्तं भेषजेनोपपादयेतां, न महर्षयो यथेष्टं आयुस्तपसा प्राप्नुयुः। न च विदितवेदितव्या महर्षयः ससुरेशाः सम्यक् पश्येयुरुपदिशेयुराचरेयुर्वा। अपि च सर्वचक्षुषामेतत् परं—यदैन्द्रं चक्षुः। इदं चास्माकं प्रत्यक्षं यथा—पुरुषसहस्राणामुत्थायोत्थायाहवं कुर्वतामकुर्वतां चातुल्यायुष्ट्वं तथा जातमात्राणामप्रतीकारात् प्रतीकाराच्चाविषविषप्राशिनां चाप्यतुल्यायुष्ट्वम्। न च तुल्यो योगः क्षेम उदपानघटानां चित्रघटानां चोत्सीदताम्। तस्माद्धितोपचारमूलं जीवितम्। अतो विपर्ययान्मृत्युः। अपि च देशकालात्मगुणविपरीतानां कर्मणामाहारविहाराणां च क्रियोपयोगं सम्यक् सर्वातियोगसन्धारणमसन्धारणमुदीर्णानां च गतिमतां साहसानां च वर्जनमारोग्यानुवृत्तौ हेतुमुपलभामहे उपदिशामः सम्यक् पश्यामश्चेति ॥ ३८ ॥

अतःपरमुत्तरमुपसंहरति,—तस्मादित्यादि।—उभयदृष्टत्वादिति दैवस्य पुरुषकारेण तथा पुरुषकारस्य दैवेन बाधदर्शनात्। एकान्तग्रहणमिति नियतमेवायुःसर्वमिति चेत्यर्थः। निदृश्यतेऽभिमतः पक्षः साध्यतेऽनेनेति निदर्शनं युक्तिरित्यर्थः। अत्रेत्यनैकान्तिकपक्षे। यदीत्यादिना प्रकरणेनायुर्जनकस्य दृष्टस्य हेतोः सेवा, तथा आयुर्विरोधकस्य हेतोरसेवा सर्वप्रामाणिकजनानामविवादसिद्धत्वाद्दर्श्यते, सा च, यदि नियतमायुः स्यात्, तदा अकिंचित्करी स्यात्, अनियते त्वायुषि किंचित्करी च स्यात्। तस्मादनियतमप्यायुर्भवतीति भावः। न च सर्वत्रैवादृष्टमेव कारणम्, दृष्टस्यापि तृप्तितादेर्विरेकादिकर्तृत्वं व्यक्तमेव। अदृष्टस्यैव कारणत्वं दृष्टकार्यानुपपत्तेः कल्पनीयम्। तेनादृष्टस्य कारणत्वं दृष्टकारणमूलमित्यर्थः। तेन, न च दृष्टकारणोच्छेदः कल्पयितुमपि पार्यते।

---

१ बलवतोस्तु दैवपुरुषकारयोर्विरोधिनोर्युगपदुपस्थापनं नास्त्येव, विरोधिनां सुखदुःखादीनां यौगपद्येनानुपलंभादेव। बलवत्ता तु दैवाख्यकर्मणी धर्माधर्मरूपस्य कालविपाकनियमाद्भवति। विपर्यये तु अबलवत्त्वं पुरुषकारबाधनीयत्वं च भवति। यदाह चरकः;—"कर्म किंचित् क्वचित् काले विपाके नियतं महत्। किंचित्त्वकालनियतं प्रत्ययैः प्रतिबुध्यते" इति; अत्र त्रिविधो नियमः एकविधश्चानियमः, एवं पक्षचतुष्टयमपि भवति, यथा—"इदं कर्म यदि पच्यते तदा अस्मिन्नेव काले पच्येत, नान्यत्रेति कालनियमः। यथा—इदं कर्म यत्र क्वचित् काले पच्येतैव, न पच्यत इति न, इति विपाकनियमः; एतौ पक्षौ पुरुषकारबाध्यतया शास्त्रविषयौ पाक्षिकस्य नियमस्यासत्वात्। यथा—इदं कर्मास्मिन्नेव काले पच्येतैव इति कालविपाकनियमः, अयमविषयः शास्त्रस्य पुरुषकारानपेक्षत्वात्। यथा—इदं कर्म कुत्रचित् काले प्रत्ययं दृष्टमासाद्य पच्येत, यदि वा न पच्येत, तदपि च प्रायश्चित्तादिपराभूतत्वादेव इति कालविपाकानियमः सर्वथा शास्त्रविषयः। अत्र पक्षचतुष्टये केचिद्वदन्ति—"किंचिन्न कालनियतमिति वदता चरकेण कालानियमरूपो दर्शितः। विपाकानियमस्तु कालमात्रानियमरूपो दर्शितः। एवं कर्मणां विपाकानियमो नास्ति। यदुच्यते—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इति किंतु प्रायश्चित्तेनापि अदत्तफलकर्मक्षयोपदेशात्, तथा, "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति, ज्ञानाग्निना च कर्मक्षयोपदेशाद्विपाकानियमपक्षोऽपि संभवत्येव। तथाच—"न हि कर्म भवेत् किंचित् फलं यस्य न भुज्यते" इति वदता चरकेणापि महतः कर्मणः प्रायश्चित्ताबाधनीयस्य विपाकनियमोऽपि दर्शितो भवति। अलमतिसूक्ष्मगतिकर्मविचारेण शास्त्रस्यारोग्यसाधनाहाराचाररूपपुरुषकारोपदेशकत्वेन प्रयोजनवत्त्वमिति।

सु. टी. भा. चक्र.

१ सर्वचक्षुषां सर्वप्रमाणानामित्यर्थः, एतत्परमभ्रान्तत्वेन श्रेष्ठम् यदैन्द्रं चक्षुः प्रत्यक्षप्रमाणमित्यर्थः। यदैन्द्रमित्यत्र यद्दिव्यमिति पाठान्तरम्। २ विकाराणां चेति पाठान्तरम्। ३ क्रमोपयोगमिति पाठान्तरम्। ४ दृष्टेन कार्यस्यानुपपत्तेरसङ्गतेरसिद्धेरिति यावत्। ५ भेषजं तावदाहाराचाररूपं यस्य दोषस्य विकारस्य वा विपरीतम्, तदसति विरोधके तं शमयतीति दृष्टम्, यथा—कटुकेन श्लेष्मक्षयः, अग्निना शीतप्रशमनम्, आहारेण क्षुदुपशमः; पानीयपानेन पिपासापगमः, एवमादि सामान्येन वृद्धिः विपरीतेन च ह्रास इति दृश्यते। न चात्रापि दृष्टेनैवोपपद्यमाने अदृष्टमेव कारणमिति कल्पना युक्ता। यतो दृष्टेनानुपपद्यमाने कार्ये कारणमदृष्टं

इष्टयो यज्ञाः उरसा अत्यर्थसर्पणशीला उरगाः । आचरेयुर्भेपजमिति शेपः । चक्षुपां परमिति अत्यर्थाऽभ्रान्तत्वेन । अतुल्यायुष्ट्वमिति, ये आहवं कुर्वते, ते शस्त्रेण म्रियन्ते । ये तु न कुर्वते, ते शस्त्रेण प्रायो न म्रियन्ते । प्रतीकारादप्रतीकाराच्चातुल्यायुष्ट्वमिति योजना । न च तुल्यमित्यादौ चित्रघटोऽयं चित्रित एव स्थाप्यते, स हि पानीयवहनादिप्रत्यवायहेत्वभावात् चिरं तिष्ठति । उदपानघटस्तु जलसम्बन्धात् तथा वहनसमये पतनादिना च शीघ्रमुत्सीदति । हितोपचारमूलमपि क्रियोपयोगं सम्यगिति योजना । सर्वातियोगसन्धारणं सर्वातियोगानां वर्जनम् ॥ ३८ ॥

अतः परमग्निवेश उवाच-एवं सत्यनियतकालप्रमाणायुपां भगवन् कथं कालमृत्युरकालमृत्युर्वा भवतीति ॥ ३९ ॥

एवं सतीत्यादि ।—यत्तावत् कालनियतम्, तस्याऽकाले मरणाभावादेव नाकालमृत्युरस्ति । यत्त्वकालनियतम्, तस्यानियतत्वात् कथं कालमृत्युरकालमृत्युर्वा भवति ? अनियते ह्यायुपि कालनियमो नास्ति, नियमाच्चार्वाक् अकालमृत्युरिति तु पृच्छार्थः ॥ ३९ ॥

तमुवाच भगवानात्रेयः—श्रूयतामग्निवेश ! यथा यानसमायुक्तोऽक्षः प्रकृत्यैवाक्षगुणैरुपेतः सर्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छेत्,तथाऽऽयुःशरीरोपगतं वलवत्प्रकृत्या यथावदुपचर्यमाणं स्वप्रमाणक्षयादेवावसानं गच्छति । स मृत्युः काले । यथा च स एवाक्षोऽतिभाराधिष्ठितत्वाद्विपमपथादपथादक्षचक्रभङ्गाद्वाह्यवाहकदोपादणिमोक्षात् पर्यसनादनुपाङ्गाच्चान्तरा व्यसनमापद्यते । तथाऽऽयुरप्ययथावलमारम्भादयथाग्न्यभ्यवहरणाद्विपमाभ्यवहरणाद्विपमशरीरन्यासादतिमैथुनादसत्संश्रयादुदीर्णवेगविनिग्रहात् विधार्यवेगाविधारणाद्भूतविपवाय्वग्न्युपतापादभिघातादाहारप्रतीकारविवर्जनाच्च यावदन्तरा व्यसनमापद्यते । तथानियतायुष अन्तरा अपराधान्निरुध्यध्यन्ते । स मृत्युरकाले । तथा ज्वरादीनप्यातङ्कान्मिथ्योपचरितानकालमृत्यून् पश्याम इति ॥४०॥

यथाकालमिति यावता कालेन प्रत्यवायशून्यस्याक्षस्य क्षयो तस्मिन्नेवेत्यर्थः । स्वप्रमाणक्षयादेवेति युगानुरूपवर्पशतक्षयादित्यर्थः । अपथादिति सर्वथा अमार्गगमनात् । अणिमोक्षादिति कीलमोक्षात् । पर्यसनं परिक्षेपः, अनुपाङ्गादिति स्नेहादानात् । मिथ्योपचारितानित्यसम्यक्चिकित्सितान् अकालमृत्यूनिति अकालमृत्युकरान् ॥ ४० ॥

अथाग्निवेशः पप्रच्छ—किन्नु खलु भगवन् ज्वरितेभ्यः पानीयमुष्णं भूयिष्ठं प्रयच्छन्ति भिपजो न तथा शीतम् । अस्ति च शीतसाध्यो धातुर्ज्वरकर इति ॥ ४१ ॥

संप्रति मिथ्योपचारश्रुत्या उष्णतोयं ज्वरेऽप्याग्नेये मिथ्योपचारः स्यादित्याशङ्क्याह—किंन्वित्यादि ।—शीतसाध्योऽपि धातुः पित्तमुष्णरूपमित्यर्थः । पानीयं यस्मात् सर्वज्वरेभ्यो दीयते । तस्मात् पानीयमेवात्र पृच्छति । उत्सन्नपित्ते प्रवृद्धपित्ते ॥ ४१ ॥

तमुवाच भगवानात्रेयः—ज्वरितस्य कायसमुत्थानदेशकालानभिसमीक्ष्य पाचनार्थं पानीयमुष्णं प्रयच्छन्ति भिपजः ज्वरो ह्यामाशयसमुत्थः । प्रायो भेपजानि चामाशयसमुत्थानां विकाराणां पाचनवमनापतर्पणसमर्थानि भवन्ति । पाचनार्थं च पानीयमुष्णं तस्मादेतज्ज्वरितेभ्यः प्रयच्छन्ति भिपजो भूयिष्ठम् । तच्चैपां पीतं वातमनुलोमयत्ति, अग्निमुदर्यमुदीरयति, क्षिप्रं जरां गच्छति, श्लेष्माणं च परिशोपयति, स्वल्पमपि च पीतं तृष्णाप्रशमनायोपपद्यते, तथा युक्तमपि चैतन्नात्यर्थोत्सन्नपित्ते ज्वरे सदाह्भ्रमप्रलापातिसारे वा प्रदेयम्, उष्णेन हि दाहभ्रमप्रलापातिसारा भूयोऽभिवर्धन्ते, शीतेनोपशाम्यन्तीति ॥ ४२ ॥

भवति चात्र ।

शीतेनोष्णकृतान् रोगान् शमयन्ति भिपग्विदः ।
ये तु शीतकृता रोगास्तेपां चोष्णं भिपग्जितम् ४३

न केवलं ज्वर एव शीतोष्णसमुत्थत्वभेदेन उष्णशीतोपचारः, किंतु सर्वत्रैव व्याधावेवमित्याह—शीतेनेत्यादि ।—भिपजश्च ते ज्ञानवन्तश्चेति भिपग्विदः ॥ ४२—४३ ॥

एवमितरेपामपि व्याधीनां निदानविपरीतमौपधं भवति कार्यम्, यथापतर्पणनिमित्तानां व्याधीनां नान्तरेण पूरणमस्ति शान्तिस्तथा पूरणनिमित्तानां नान्तरेणापतर्पणम् ॥ ४४ ॥

अपतर्पणमपि च त्रिविधं लङ्घनं लङ्घनपाचनं दोषावसेचनं चेति ॥ ४५ ॥

तत्र लङ्घनमल्पदोषाणाम्, लङ्घनेन ह्यग्निमारुतवृद्ध्या वातातपपरीतमिवाल्पमुदकमल्पदोषः प्रशोषमापद्यते ॥ ४६ ॥

लङ्घनपाचनाभ्यां मध्यवलो दोषः सूर्यसन्तापमारुताभ्यां पांशुभस्मावकिरणैरिव चानतिवहूदकं प्रशोषमापद्यते ॥ ४७ ॥

कल्प्यते, दृष्टपराभवेन तु सर्वत्रादृष्टकल्पनं प्रामाणिकमेव । यतः यदेवाऽदृष्टं कारणत्वेनाभिमतम्, तदृष्टयागादिजन्यम् तद्वदेव भेपजं दृष्टरूपं तावत्कचिदस्ति एवं स्वीकर्तव्यमिति ।

सु. टी, भा. चक्रः ।

बहुदोषाणां पुनर्दोषावसेचनमेव कार्यम्, न ह्यभिन्ने केदारसेतौ पल्वलप्रसेकोऽस्ति, तद्वद्दोषावसेचनम् ॥४८॥

न केवलं शीतोष्णसमुत्थयोरेव परं हेतुविपर्ययेण चिकित्सा किन्त्वपतर्पणादिजेऽपि हेतुविपरीतेनेत्याह—एवमित्यादि ।—अपतर्पणसन्तर्पणाभ्यां च सर्वचिकित्सितं गृहीतम् । न ह्यपतर्पणसंतर्पणाभ्यां विना अन्यद्विधानान्तरमस्ति चिकित्सायाः, येन सर्वएवोपक्रमाः सन्तर्पणापतर्पणभेदा एव । अतएव विशेषज्ञानार्थमपतर्पणभेदानाह—अपतर्पणमित्यादि ।—लङ्घनपाचनमितिवचनेन, यत्र पाचनं क्रियते तत्रावश्यं स्तोकमात्रया लङ्घनं क्रियत इति दर्शयति, पाचनकाले हि यदि बृंहणं क्रियते तदा बृंहणेनाग्नेः प्रतिकूलेन पाचनं न स्यादित्यर्थः । अवकिरणरिवेत्यत्र 'इव' शब्दोऽनतिबहूदकमिवेत्येवंरूपो ज्ञेयः । अन्यद्वेति लङ्घनादि बृंहणादि च ॥ ४४—४८ ॥

दोषावसेचनं तु खलु अन्यद्वा भेषजं प्राप्तकालमप्यातुरस्य नैवंविधस्य कुर्यात् । तद्यथा—अनपवादप्रतीकारस्याधनस्यापरिचारकस्य वैद्यमानिनश्चण्डस्यासूयकस्य तीव्रधर्मारुचेरतिक्षीणबलमांसशोणितस्य असाध्यरोगोपहतस्य मुमूर्षुलिङ्गान्वितस्य चेति । एवंविधं ह्यातुरमुपचरन् भिषक् पापीयसाऽयशसा योगं गच्छतीति[२] ॥ ४९ ॥

अनपवादप्रतीकारो वाच्यप्रतीकारः, अधनस्यानुपकरणत्वेन न चिकित्सा पार्यते कर्तुमित्यर्थः, वैद्यमानीत्यभिमानाद्वैद्योपदेशं न करोति । तीव्रधर्मारुचेः प्रतिक्रियायामधर्मो भवति, न च चिकित्सा सिध्यत्यधर्मप्रतिबन्धात्, मुमूर्षुलिङ्गान्वितस्येति रिष्टयुक्तस्य, पापीयसेति पापहेतुना पापजनकेनायशसा ॥ ४९ ॥

भवन्ति चात्र ।

अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः ।
ज्ञेयः स जाङ्गलो देशः स्वल्परोगतमोऽपि[१] च ॥५०॥
प्रचुरोदकवृक्षो यो निवातो दुर्लभातपः ।
अनूपो बहुदोषश्च समः साधारणो मतः ॥ ५१ ॥
तदात्वे चानुबन्धे वा यस्य स्यादशुभं फलम् ।
कर्मणस्तन्न कर्तव्यमेतद्बुद्धिमतां मतम् ॥ ५२ ॥
पूर्वरूपाणि सामान्या हेतवः स्वस्वलक्षणाः ।
देशोद्ध्वंसस्य भैषज्यं हेतूनां मूलमेव च ॥
प्राग्विकारसमुत्पत्तिरायुषश्च क्षयक्रमः ।
मरणं प्रतिभूतानां कालाकालविनिश्चयः ॥
यथा चाकालमरणं यथा युक्तं च भेषजम् ।
सिद्धिं यात्यौषधं येषां न कुर्याद्येन हेतुना ॥

१ अल्पवदिति पाठान्तरम् । २ योगमृच्छतीति पाठान्तरम् ।

तदग्निवेशायात्रेयो निखिलं सर्वमुक्तवान् ।
देशोद्ध्वंसनिमित्तीये विमाने मुनिसत्तमः ॥ ५३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने जनपदोद्ध्वंसनीयो नाम तृतीयोऽध्यायः ।

केचिदल्पोदकद्रुमो यस्त्वित्यादिग्रन्थमत्र पठन्ति । अनुबन्धे वेत्युत्तरकालम् । संग्रहे पूर्वरूपाणीति नक्षत्रादिविकारः, स्वस्वलक्षणाः स्वविकृतिलक्षणाः, तच्च लक्षणम् "तत्र वातमेवंविधम्" इत्यादिना प्रोक्तम् । 'यथायुक्तं च भेषजं सिद्धिं याति' इत्यनेनोष्णपानीयदानोपपत्त्या सर्वं संगृहीतम् ५०–५३

इति महामहोपाध्यायश्रीमच्चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने जनपदोद्ध्वंसनीयविमानम् ॥

## चतुर्थोऽध्यायः ।

अथातस्त्रिविधरोगविशेषविज्ञानीयविमानं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

जनपदोद्ध्वंसनीयेऽविशेषेण सर्वेऽपि रोगा उक्ताः, तेषां विशेषो यथा ज्ञातव्यस्तदुपदेष्टुं त्रिविधरोगविशेषविज्ञानीयोऽभिधीयते ॥ १—२ ॥

त्रिविधं खलु रोगविशेषविज्ञानं भवति, तद्यथा—आप्तोपदेशः प्रत्यक्षमनुमानं चेति ॥ ३ ॥

रोगाणां विशेषो यथा वक्ष्यमाणो ज्ञायते येन, तद्रोगविशेषविज्ञानमुपदेशप्रत्यक्षानुमानरूपं प्रमाणत्रयम् । अत्र तु युक्तेरनुमानान्तर्गतत्वादेव न पृथक्करणम् । एतच्च प्रमाणत्रयं क्वचिद्रोगे मिलितम्, क्वचिद्द्वयम्, क्वचिदेकं परीक्षायां वर्तते । येन, नान्तरे वह्निमान्द्यादौ प्रत्यक्षमवश्यं व्याप्रियते ॥ ३ ॥

तत्राप्तोपदेशो नामाप्तवचनम्, आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनश्च । तेषामेवंगुणयोगाद्यद्वचनम्, तत्प्रमाणम् । अप्रमाणं पुनर्मत्तोन्मत्तमूर्खरक्तदुष्टादुष्टवचनमिति ॥ ४ ॥

तिस्रैषणीये प्रथममनुमानादिलक्षणान्युक्तानि, पुनरिह "तत्रोपदेशो नाम" इत्यादिनाऽऽप्तोपदेशादिलक्षणाभिधानं प्रकरणागतत्वात् क्रियते । प्राकरणिको ह्यर्थोऽनुच्यमानो न्यूनो भवति । अवितर्केत्यादि ।—वितर्कः कथंताऽनिश्चितज्ञानमिति यावत्, स्मृतिः स्मरणज्ञानम् । विभाग एकदेशः । एतद्विपर्ययान्निश्चयेनानुभवेन च कार्त्स्न्येन च ये भावान् जानते, तेऽवितर्कस्मृतिविभागविदः । वितर्कवेदी तु नाप्तः प्रतिपाद्यवस्तुशेषविशेषाविज्ञानात् । स्मृतिज्ञानं च यद्यपि प्रमाणमूलमेव, तथापि वर्तमानलक्षणे स्मृतिज्ञानविषयार्थस्य नावश्यविद्यमानतेति न तत्प्रमाणमिति भावः । किंवा, स्मृतिज्ञानं

स्मृतिशास्त्रजं ज्ञानं गणितज्ञानं च। एतच्च ज्ञानद्वयं साक्षादर्थादर्शकं दुरवबोधेन मिथ्याज्ञानत्वसंभवादप्रमाणमपीति नोपादेयम्। अथ सम्यग्ज्ञानवन्तोऽपि रागादिवशादन्यथा व्याहरन्तीत्याह—निष्प्रीत्युपतापदर्शिन इति, निष्प्रीत्या निरुपतापेन च द्रष्टुं शीलं येषां ते तथा। एतेन यथार्थदर्शी निर्दोषश्चाप्तो भवतीति उक्तं भवति। एवंभूतं चाप्तत्वं कस्यचिद्ब्रह्मादेः सर्वत्रैव भवति। लौकिकस्य तु यस्मिन्नेव तु विषये वितर्कादि न भवति तत्रैवोपदेशः प्रमाणमिति ज्ञेयम्। अप्रमाणं नावश्यं प्रमाणतयाऽवधार्यते रागादिदुष्टत्वादित्यर्थः। दुष्टश्चायमदुष्टश्चेति दुष्टादुष्टः। तेन, पिता हि पुत्रस्य दुष्टोऽप्यदुष्टत्वादाप्त एव भवति। किंवा दुष्टो वञ्चकः॥ ४॥

**प्रत्यक्षं तु खलु तत्, यत् स्वयमिन्द्रियैर्मनसा चोपलभ्यते॥ ५॥**

**अनुमानं खल्वपि तर्को युक्त्यपेक्षः॥ ६॥**

स्वयमिन्द्रियैर्मनसा चेत्यनेन यदात्मनेन्द्रियैश्चक्षुरादिभिरव्यवधानेन गृह्यते रूपादि तत् प्रत्यक्षमिति बाह्यप्रत्यक्षं गृह्णाति। मनसा चेत्यनेन मनसाऽव्यवधानेन यदुपलभ्यते सुखादि, तच्च मानसं प्रत्यक्षं गृह्णाति। तर्कोऽप्रत्यक्षज्ञानम्। युक्तिः सम्बन्धोऽविनाभाव इत्यर्थः। तेनाऽविनाभावजं परोक्षज्ञानमनुमानमित्यर्थः॥ ५—६॥

**त्रिविधेन खल्वनेन ज्ञानसमुदायेन पूर्वं परीक्ष्य रोगं सर्वथा सर्वमथोत्तरकालमध्यवसानमदोषं भवति। न हि ज्ञानावयवेन कृत्स्ने ज्ञेये ज्ञानमुपपद्यते। त्रिविधे त्वस्मिन् ज्ञानसमुदाये पूर्वमाप्तोपदेशाज्ज्ञानम्। ततः प्रत्यक्षानुमानाभ्यां परीक्षोपपद्यते। किं ह्यनुपदिष्टे पूर्वं प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात्। तस्माद्द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं चेति। त्रिविधा वा सहोपदेशेन॥ ७॥**

ज्ञानसमुदायेनेति—ज्ञानसमुदायः प्रमाणसङ्घातस्तेन समुदायेन 'अयमेव रोगः' एवंभूतनिश्चयोऽध्यवसानम्। त्रिविधे त्वित्यादि।—ज्ञायतेऽनेनेति ज्ञानं प्रमाणम्। प्रथममाप्तोपदेशो व्याधिं बोधयति, ततश्चाप्तोपदिष्टं व्याधिं प्रत्यक्षानुमानाभ्यां यथोक्तलिङ्गादिपरीक्षा निश्चिनोति, आगमानुपदिष्टे च व्याधौ अवैद्य इवं न प्रत्यक्षेणानुमानेन च व्याधिमुपलभत इत्याह—किं ह्यनुपदिष्ट इत्यादि।—एवं मन्यते—व्याधिविशेषास्तावद्दुरधिगमनीया नोपदेशमन्तरेण शक्या विज्ञातुम्। येन, अधिगतवैद्यकशास्त्राः प्रतिपादयन्त्येव व्याधिविशेषान्। तस्मादागमेन ये व्याधीनां हेत्वादिविशेषाः प्रतिपादितास्तान्। प्रत्यक्षानुमानाभ्यामुपलभमानो व्याधिं निश्चिनोति, अनुपदेशवांस्त्वनुपलभमानोऽपि हेत्वादिविशेषानशिक्षितवरकुपरीक्षको यथा रत्नानां विशेषं पश्यन्नपि नावधारयति विशेषमिति भावः। ज्ञानवतामित्याप्तोपदेशवताम्। त्रिविधा वेत्यनेन, व्याधिपरीक्षासमये आप्तोपदेशोऽपि व्याप्रियते तथा दुरधिगमस्थानसंश्रयादिप्रतिपत्तौ कोष्ठमृदुदारुणत्वादिपरीक्षायां चातुरवचनरूपाप्तोपदेशोऽपि व्याप्रियत इति दर्शयति॥ ७॥

**तत्रेदमुपदिशन्ति बुद्धिमन्तः रोगमेकैकमेवंप्रकोपणमेवंयोनिमेवमुत्थानमेवमात्मानमेवमधिष्ठानमेवंवेदनमेवंसंस्थानमेवंशब्दस्पर्शरूपरसगन्धमेवमुपद्रवमेवंवृद्धिस्थानक्षयसमन्वितमेवमुदर्कमेवंनामानमेवंयोगं विद्यात्। तस्मिन्निर्यं प्रतीकारार्थप्रवृत्तिरथवा निवृत्तिरित्युपदेशाज्ज्ञायते॥ ८॥**

तत्रेत्यादिनाऽऽप्तोपदेशमाह—प्रकोपणं वायो रूक्षत्वादिहेतुः। योनिर्वातादयः। आत्मा स्वभावः। यथा—रोहिण्या दारुणत्वम्, संन्यासस्य शीघ्रोपक्रमणीयत्वादि। अधिष्ठानं शरीरमवयवा मनश्च। इयं प्रतीकारार्था प्रवृत्तिः। यथा—ज्वरे लङ्घनपाचनाद्यर्था प्रवृत्तिः। निवृत्तिः प्रतीकारार्था। यथा—नवज्वरे दिवास्वप्नस्नानादौ निवृत्तिरित्यादि मन्तव्यम् ८

**प्रत्यक्षतस्तु खलु रोगतत्त्वं बुभुत्सुः सर्वैरिन्द्रियैः सर्वानिन्द्रियार्थानातुरशरीरगतान् परीक्षेतान्यत्र रसज्ञानात्। तद्यथा—॥ ९॥**

**अन्त्रकूजनं सन्धिस्फोटनमङ्गुलीपर्वणां च स्वरविशेषाश्च ये चान्येऽपि केचिच्छरीरोपगताः शब्दाः स्युस्तान् श्रोत्रेण परीक्षेत॥ १०॥**

**वर्णसंस्थानप्रमाणच्छाया शरीरप्रकृतिविकारौ चक्षुर्वैषयिकानि यानि चान्यानि, तानि चक्षुषा परीक्षेत्॥ ११॥**

**रसं तु खल्वातुरशरीरगतमिन्द्रियवैषयिकमप्यनुमानादवगच्छेत्। न ह्यस्य प्रत्यक्षेण ग्रहणमुपपद्यते। तस्मादातुरपरिप्रश्नेनैवातुरमुखरसं विद्यात्। यूकापसर्पणेन त्वस्य शरीरवैरस्यम्। मक्षिकोपसर्पणेन शरीरमाधुर्यम्। लोहितपित्तसन्देहे तु किं धारिलोहितं लोहितपित्तं वेति, श्वकाकभक्षणाद्धारिलोहितमभक्षणाल्लोहितपित्तमित्यनुमातव्यम्। एवमन्यानप्यातुरशरीरगतान् रसाननुमिमीत॥१२॥**

**गन्धांस्तु खलु सर्वशरीरगतानातुरस्य प्रकृतिवैकारिकान् घ्राणेन परीक्षेत॥ १३॥**

**स्पर्शं च पाणिना प्रकृतिविकृतियुक्तमिति प्रत्यक्षतोऽनुमानादुपदेशतश्च परीक्षणमुक्तम्॥ १४॥**

अङ्गुलीपर्वणां च स्फोटनमिति संबन्धः। अन्येऽपि चेति कासहिक्काशब्दादयः। 'यानि चान्यानि' इत्यनेन

१ अवैद्यइवेति पाठान्तरम्।

१ लङ्घनादाविति पाठान्तरम्।

लक्षणप्रभादीनि गृह्यन्ते । यूकापसर्पणेन शरीरवैरस्यमिति, विरसाद्धि शरीराद्यूका अपसर्पन्ति । एवं यूकाद्यनपसर्पणेन प्राकृतरसयुक्तशरीरमनुमातव्यम् । धारिलोहितमिति जीवनलोहितमित्यर्थः । श्वकाकभक्षणादिज्ञेयं यत्, तत् पित्तादुष्टत्वेनाविरसात् श्वादयो भक्षयन्ति, नतु पित्तदुष्टरक्तमिति भावः । अत्र शब्दस्पर्शरूपरसगन्धा इत्युपदेशं कृत्वा शब्दानन्तरं चक्षुर्ग्राह्यं रूपं दर्शयन् शब्दादिपरीक्षायाश्च क्रमनियमाभावं सूचयति ॥ ९—१४ ॥

**इमे तु खल्वन्येऽप्येवमेव भूयोऽनुमानज्ञेया भवन्ति भावाः । तद्यथा—अग्निं जरणशक्त्या, बलं व्यायामशक्त्या, श्रोत्रादीन् शब्दादिग्रहणेन, मनोऽर्थाव्यभिचरणेन, विज्ञानं व्यवसायेन, रजः सङ्गेन, मोहमविज्ञानेन, क्रोधमभिद्रोहेण, शोकं दैन्येन, हर्षमामोदेन, प्रीतिं तोषेण, भयं विषादेन, धैर्यमविषादेन, वीर्यमुत्थानेन, अवस्थानमविभ्रमेण, श्रद्धामभिप्रायेण, मेधां ग्रहणेन, संज्ञां नामग्रहणेन, स्मृतिं स्मरणेन, ह्रियमपत्रपेण, शीलमनुशीलनेन, द्वेषं प्रतिषेधेन, उपधिमनुबन्धेन, धृतिमलौल्येन, वश्यतां विधेयतया, वयोभक्तिसात्म्यव्याधिसमुत्थानानि कालदेशोपशयवेदनाविशेषेण, गूढलिङ्गं व्याधिमुपशयानुपशयाभ्याम्, दोषप्रमाणविशेषमपचारविशेषेण, आयुषः क्षयमरिष्टैः, उपस्थितश्रेयस्त्वं कल्याणाभिनिवेशेन, अमलं सत्त्वमविकारेणेति[2] १५**

**ग्रहण्यास्तु मृदुदारुणत्वं स्वप्नदर्शनमभिप्रायं द्विष्टेष्टसुखदुःखानि चातुरपरिप्रश्नेनैव विद्यादिति १६**

भूयोऽनुमानज्ञेया इत्यनेनानुमानगम्यतया वक्ष्यमाणा केचिदग्निबलादय आतुरोपदेशगम्या भवन्तीति सूचयति । मनोऽर्थाऽव्यभिचरणेनेति सतीन्द्रियाणामर्थनिबन्धे[3] यदिदं[4] । कदाचिच्छब्दं प्रत्येति, कदाचिद्रसमित्याद्ययौगपद्येन सर्वार्थान् प्रत्येति । तेन तु इन्द्रियार्थसंयोगानन्तरमिन्द्रियार्थग्राहकं मन इत्यनुमीयते । ज्ञानं व्यवसायेनेति व्यवसायः प्रवृत्तिः । यथा—पेयजले पानार्था प्रवृत्तिः । तेनानुमीयते जलज्ञानमस्य जातम्, कथमन्यथा ज्ञानकार्यार्थक्रियायां प्रवर्तेत इति । रजःसङ्गेनेति नार्यादिसङ्गेन, तत्कारणरजोऽनुमीयते । अभिद्रोहः परपीडार्थप्रवृत्तिः । दैन्यं रोदनादि । आमोदो गीतवादित्राद्युत्सवकरणम् । तोषो मुखनयनप्रसादादिः । तेन, प्रीतिस्तोषमात्रम्, हर्षस्तु प्रीतिविशेषो मन उद्रेककारक इत्युक्तं भवति । धैर्यं विपद्यपि मनसोऽदैन्यम् । वीर्यमारब्धदुष्करकार्येष्वव्यावृत्तिर्मनसः । उत्थानेनेति क्रियारम्भेण । अवस्थानं स्थिरमतित्वम् । अविभ्रमेणेत्यभ्रान्त्या । श्रद्धामिच्छाम् । अभिप्रायेणेति अभ्यर्थनेन । ग्रहणेनेति ग्रन्थादिधारणेन । स्मृतिमिति स्मृतिजनकं संस्कारम् । स्मरणेनेति तत्कारणं संस्कारोऽनुमीयते; ह्रियमिति लज्जाम् । अपत्रपेणेति लज्जिताकारेण । शीलमिति सहजं वस्तुषु रागम् । अनुशीलनेनेति अनुशीलनं सततशीलनम् । तेन, सततं यमर्थं सेवते तच्छीलोऽयमित्यनुमीयते । प्रतिषेधेनेति व्यावृत्त्या । उपेत्य धीयते इति उपधिश्छद्म इत्यर्थः । अनुबन्धेनेत्युत्तरकालं हि भ्रात्रादिवधेन फलेन ज्ञायते,—यदयमुन्मत्तच्छद्मप्रचारी चन्द्रगुप्त इति । विधेयतयेति विधेयप्रचारेण । वयःप्रभृतीनि व्याधिसमुत्थानान्तानि चत्वारि यथासंख्यं कालादिविशेषेण ज्ञायन्ते । तत्र कालविशेषेण षोडशवर्षादिना वयो बाल्यादि ज्ञायते । देशेन तु भक्तिरिच्छा ज्ञायते, यथा त्वयं मध्यदेशीयस्तेनास्य गोधूममाषादिषु इच्छाऽनुमीयते । यस्माच्चेदमस्योपशेते, तेनेदमस्य सात्म्यमिति ज्ञायते, वेदनाविशेषेण व्याधिसमुत्थानं ज्ञायते, यथा—यस्मादयं सन्तापवेदनावान्, तस्मादस्य ज्वरव्याधिसमुत्थानं भूतमित्यादि ज्ञेयम् । गूढलिङ्गमिति विशेषेण गूढलिङ्गव्याधौ लिङ्गैरेवानवधारिते तु उपशयानुपशयाभ्यां परीक्षा करणीयेति दर्शयति । अपचारविशेषेणेति महतापचारेण भूरिदोषा भवन्ति, स्वल्पेन स्वल्प इति । कल्याणाभिनिवेशेनेति श्रेयस्करमार्गानुष्ठानेन ।—एतदाचरतो निःश्रेयस एव भवति[1] । सत्त्वमिति सत्त्वगुणोद्रेकमविकारेण । परिप्रश्नेन वेतिवचनेन, यद्यपि ग्रहणीमार्दवाद्यनुमानादपि पार्यते ज्ञातुम्, तथाप्यनुमानस्य बुद्धिप्रयासबहुत्वेनातुरपृच्छयैव सुखोपचाररूपतया विद्याद् ग्रहणीमार्दवादीनीति दर्शयति । मृद्वित्यादि ।—अभिप्रायो भोजनादीच्छा । द्विष्टेष्टशब्देन तु द्विष्टेप्सितप्रेप्स्यादिग्रहणम् ॥ १५—१६ ॥

भवन्ति चात्र ।

**आप्ततश्चोपदेशेन प्रत्यक्षकरणेन च ।**
**अनुमानेन च व्याधीन् सम्यग्विद्याद्विचक्षणः ॥१७॥**

**सर्वथा सर्वमालोच्य यथासंभवमर्थवित् ।**
**अथाध्यवस्येत्तत्त्वे च कार्ये च तदनन्तरम् ।**
**कार्यतत्त्वविशेषज्ञः प्रतिपत्तौ न मुह्यति ।**
**अमूढः फलमाप्नोति यदमोहनिमित्तजम् ॥ १८ ॥**

**ज्ञानबुद्धिप्रदीपेन यो नाऽऽविशति तत्त्ववित्[2] ।**
**आतुरस्यान्तरात्मानं न स रोगांश्चिकित्सति ॥१९॥**

तत्र श्लोकौ ।

**सर्वरोगविशेषाणां त्रिविधं ज्ञानसंग्रहम् ।**
**यथा चोपदिशन्त्याप्ताः प्रत्यक्षं गृह्यते यथा ॥**

---

१ ननु पित्तादुष्टं रक्तं विरसत्वाद्भक्षयन्ति श्वादय इत्यभिप्राय इत्यर्थः । २ सत्त्वमधिकारेणेति पाठान्तरम् । ३ सम्बन्धे इति पाठान्तरम् । ४ इदं मन इत्यर्थः ।

१ एतद्व्यभिचरतां निःश्रेयो नैव भवतीति पाठान्तरम् ।
२ योगविदिति पाठान्तरम् ।

**ये यथा चानुमानेन ज्ञेयास्तांश्चाप्युदारधीः ।**
**भावांस्त्रिरोगविज्ञाने विमाने मुनिरुक्तवान् ॥ २० ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते त्रिविधरोगविशेषविज्ञानीयविमानं नाम तृतीयोऽध्यायः ।**

यथासंभवमित्यनेन सर्वत्र परीक्षणीये सर्वप्रमाणासम्भव इति दर्शयति—अथेत्यादि ।—अथ प्रत्येकशब्दादिविषयपरीक्षानन्तरम् । तत्त्वे व्याधितत्त्वे, तथा कार्ये च तत्र साध्ये व्याधौ कर्तव्यलक्षणे । तदनन्तरं अध्यवस्येत्, यदुक्तम्—"तत्त्वं भवति यच्च कार्यं युक्तम्," तत्तावदयं निश्चयं कुर्यादित्यर्थः, अनन्तरमिति अविद्यमानान्तरयोग्यमित्यर्थः । कार्यतत्त्वविशेषाध्यवसायफलमाह—कार्येत्यादि ।—प्रतिपत्तिः कर्मणां यथार्हतयाऽनुष्ठानम् । अमूढ इति प्रतिपत्तावमूढ इत्यर्थः । ज्ञानं शास्त्रं, तत्कृता बुद्धिर्ज्ञानबुद्धिः । आविशति बुद्ध्यावगाहत इत्यर्थः । अन्तरात्मानमिति वैद्यपक्षे अन्तःशरीरम् ॥ १७—२० ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां त्रिविधरोगविशेषविज्ञानीयं विमानम् ।

---

## पञ्चमोऽध्यायः ।

**अथातः स्रोतोविमानं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वस्मिन्नध्याये परीक्षामभिधाय तत्परीक्षणीयं शरीरं दुष्टादुष्टस्रोतोविभागेन वक्तुं स्रोतसां विमानमुच्यते ॥ १ ॥ २ ॥

**यावन्तः पुरुषे मूर्तिमन्तो भावविशेषाः, तावन्त एवास्मिन् स्रोतसां प्रकारविशेषाः । सर्वभावा हि पुरुषे नान्तरेण स्रोतांस्यभिनिर्वर्तन्ते क्षयं वा न गच्छन्ति । स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनि भवन्त्ययनार्थेन ॥ ३ ॥**

मूर्तिमन्त इत्यसर्वगतद्रव्यपरिमाणवन्तः, असर्वगतपरिमाणं हि मूर्तिरुच्यते । भावविशेषा इत्युत्पत्तिमन्तो विशेषाः अत्र हेतुमाह—स्रोतांसीत्यादि ।—खलुशब्दो हेतौ । परिणाममापद्यमानानामिति पूर्वपूर्वरसादिरूपतापरित्यागेनोत्तरोत्तरं रक्तादिरूपतामापद्यमानानाम् । 'अयनार्थेन' इतिवचनान्न स्थिराणां धातूनामभिवाहीनि भवन्ति स्रोतांसि, किंतु देशान्तरप्रापणेनाभिवाहीनि भवन्ति । एवं मन्यते—रक्तस्य वृद्धिः शोणितरूपतया परिणामता रसेन मिलितेन कर्तव्या । स च स्थानान्तरस्थस्य रसस्य रुधिरेण समं मेलको न गमनमार्गं स्रोतःसंज्ञकमन्तरा भवति । एवं तावदभिनिर्वृत्तिः स्रोतःकारणिको धातूनां प्रायो रक्तस्योत्तरधातुपोषकभागपरिणामो भवति । तच्चाप्युत्तरधातुपोषणं नान्तरेण स्रोतो भवति । यश्च रक्ते न्यायः, स सर्वत्र शारीरे भावे । न चान्यस्रोतसा चान्यधातुपुष्टिः सम्भवति, सर्वेषोप्याणां भिन्नदेशत्वात् । न ह्यभिन्नेन स्रोतसा भिन्नदेशवृक्षयोः सेचनमस्ति । मनस्तु यद्यपि नित्यत्वेन न पोष्यं, तथापि तस्येन्द्रियप्रदेशगमनार्थं स्रोतोऽस्त्येव । तच्च मनःप्रभृतीनामतीन्द्रियाणां कृत्स्नमेव शरीरं स्रोतोरूपं वक्ष्यति । दोषाणां तु सर्वशरीरचरत्वेन यथास्थूलस्रोतोऽभिधानेऽपि सर्वस्रोतांस्येव गमनार्थं वक्ष्यन्ते । सूक्ष्मजिज्ञासायां तु वातादीनामपि प्रधानभूता धमन्यः सन्त्येव । यदुक्तं सुश्रुते—"तासां वातवाहिन्यो दशसिरा भवन्ति" इत्यादि । नच चरके सुश्रुत इव धमनीसिरास्रोतसां भेदो विवक्षितः ॥ ३ ॥

**अपि चैके स्रोतसामेव समुदयं पुरुषमिच्छन्ति सर्वगतत्वात्सर्वसरत्वाच्च दोषप्रकोपणप्रशमनानाम् । न त्वेतदेवम् । यस्य च हि स्रोतांसि यच्च वहन्ति यच्चावहन्ति यत्र चावस्थितानि, सर्वं तदन्यत्तेभ्यः ॥ ४ ॥**

सर्वगतत्वादिति स्रोतसां सर्वशरीरावयवगतत्वादित्यर्थः । सर्वसरत्वादित्युत्तरेण संबध्यते । दोषप्रकोपणमपथ्यं दोषप्रशमनं वा पथ्यं सर्वस्मिन् शरीरप्रदेशे दोषरूपं सत् तथा भेषजरूपं सद्गच्छति । तेन सर्वत्र स्रोतो विद्यते । तेन, स्रोतोमयः पुरुष इति पूर्वपक्षं निषेधयति—न त्वित्यादि ।—यस्य हि स्रोतांसि यद्घटितानीत्यर्थः, यच्च वहन्तीति यच्च पुष्यन्तीत्यर्थः, यत्र चावस्थितानीति यत्र मांसादौ संबद्धानीत्यर्थः, तत्सर्वं धमनीभ्योऽन्यत्; तस्मान्न स्रोतोरूप एव पुरुष इत्यर्थः ॥ ४ ॥

**अतिबहुत्वात् खलु केचिदपरिसङ्ख्येयानि आचक्षते स्रोतांसि, परिसङ्ख्येयानि पुनरन्ये । तेषां स्रोतसां यथास्थूलं कतिचित्प्रकारान्मूलतश्च प्रकोपविज्ञानतश्चानुव्याख्यास्यामः, ये भविष्यन्त्यलमनुक्तार्थज्ञानाय ज्ञानवतां विज्ञानाय चाज्ञानवताम् ॥ ५ ॥**

**तद्यथा—प्राणोदकान्नरसरुधिरमांसमेदोऽस्थिमज्जशुक्रमूत्रपुरीषस्वेदवहानीति, वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वस्रोतांस्ययनभूतानि ॥ ६ ॥**

प्रकोपविज्ञानतश्चेति यथा स्रोतसां प्रकोपो विज्ञायते तथा व्याख्यास्याम इति योजना । अनुक्तार्थज्ञानायेत्यनुक्तस्रोतोज्ञानाय । ज्ञानवतामित्यनुक्तार्थज्ञानसमर्थानाम् । ज्ञानवन्तो ह्यनुक्तमपि स्रोतोऽनुमीयते । विज्ञानाय चाज्ञानवतामिति यथोक्तमानज्ञानाय च मन्दबुद्धीनामित्यर्थः ॥ ५—६ ॥

तद्वदतीन्द्रियाणां पुनः सत्वादीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतं च ॥ ७ ॥

तदेतत्स्रोतसां प्रकृतभूतत्वान्न विकारैरुपसृज्यते शरीरम् ॥ ८ ॥

तत्र प्राणवहानां स्रोतसां हृदयं मूलं महास्रोतश्च प्रदुष्टानां खल्वेषामिदं विशेषविज्ञानं भवति । अतिसृष्टमतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसन्तं दृष्ट्वा प्राणवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ९ ॥

तद्वदित्यादि ।—चेतनावच्छरीरमिलनेनाचेतनकेशनखादिप्रदेशं सत्वादिगमने निषेधयति, दोषास्तु तत्रापि यान्तीति अयनभूतमिति मार्गभूतम् । अधिष्ठानभूतमिति स्थानरूपम् । प्राणवहानामिति प्राणसंज्ञकवातवहानाम् । एतच्च प्राणाख्यविशिष्टस्य वायोः विशिष्टस्रोतः । सामान्येन तु वायोः सर्वा एव धमन्य इति न विरोधः । मूलमिति प्रभवस्थानम् । "अतिसृष्टं वा अतिबद्धं वा" इति विकल्पेन बोद्धव्यम्, अतिसृष्टातिबद्धयोरेकत्रासंभवात् । अल्पाल्पं वा तथाऽभीक्ष्णं चेति विकल्पः ॥ ७—९ ॥

उदकवहानां स्रोतसां तालुमूलं क्लोम च । प्रदुष्टानां खल्वेषामिदं विज्ञानं भवति । जिह्वाताल्वोष्ठकण्ठक्लोमशोषं पिपासां चातिप्रवृद्धां दृष्ट्वा भिषगुदकवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्॥१०॥

अन्नवहानां स्रोतसामामाशयमूलं वामं च पार्श्वम् । प्रदुष्टानां खल्वेषां इदं विज्ञानं भवति । अनन्नाभिलषणमरोचकविपाकौ छर्दिं च दृष्ट्वाऽन्नवहानि स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ११ ॥

रसवहानां स्रोतसां हृदयं मूलं दश च धमन्यः। शोणितवहानां स्रोतसां यकृन्मूलं प्लीहा च, मांसवहानां च स्रोतसां स्नायुमूलं त्वक् च। मेदोवहानां स्रोतसां वुक्कौ मूलं वपावहनं च । अस्थिवहानां स्रोतसां मेदोमूलं जघनं च । मज्जावहानां स्रोतसामस्थीनि मूलं सन्धयश्च । शुक्रवहानां स्रोतसां वृषणौ मूलं शेफश्च । प्रदुष्टानां तु खल्वेषां रसादिस्रोतसां विज्ञानान्युक्तानि विविधाशितपीतीयेऽध्याये ॥ १२ ॥

यान्येव हि धातूनां प्रदोषविज्ञानानि, तान्येव यथास्वं धातुस्रोतसाम् ॥ १३ ॥

मूत्रवहानां स्रोतसां वस्तिर्मूलं वङ्क्षणौ च । प्रदुष्टानां खल्वेषामिदं विशेषविज्ञानम्—अतिसृष्टमतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा बहलं सशूलं मूत्रयन्तं दृष्ट्वा मूत्रवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ १४ ॥

पुरीषवहानां स्रोतसां पक्वाशयो मूलं स्थूलगुदश्च । प्रदुष्टानां खल्वेषामिदं विज्ञानम्—कृच्छ्रेणाल्पाल्पं सशूलमतिद्रवमतिग्रथितमतिबहु चोपविशन्तं दृष्ट्वा पुरीषवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ १५ ॥

क्लोम हृदयस्थपिपासास्थानम् । वपावहनं, वपा उदरस्था स्निग्धवर्तिकायामाहुर्जनाः "तैलवर्तिका" इति । सुश्रुते तु "मेदोवहानां मूलं वुक्कौ कटी च" इत्युक्तम् । तदत्रातीन्द्रियार्थदर्शिगम्ये नास्मद्विधानां बुद्धयः प्रभवन्ति । अस्थ्यपि द्रवरूपमस्त्येव स्रोतोवाह्यमिति कृत्वा "अस्थिवहानाम्' इत्युक्तम् । यद्यपि विविधाशितपीतीये रसादीनां दुष्टिलक्षणमुक्तं न रसादिस्रोतसाम्, तथापि रसादिदुष्ट्या रसादिवहधमनीनामपि दुष्टेः साधारणत्वेनोक्तं—"रसादिस्रोतसां विज्ञानान्युक्तानि" इति ।—ये तु ब्रुवते—रसादिदुष्टिरभिन्नैव तद्वहधमनीदुष्टेरिति । तेषां मते, पृथग्धमनीदुष्ट्या धातुदुष्टिं वक्ष्यति "तेषां प्रकोपात्स्थानस्थाश्चैव" इत्यादिना तदनुपपन्नम् धमनीदुष्ट्या तु तद्वाह्यदुष्टिरवश्यं भवतीति कृत्वा धातुदुष्टिलक्षणैरेव इह धमनीदुष्टिरुक्ता, धातुदुष्ट्यनतिरिक्तं तु धमनीदुष्टिलक्षणं "अतिप्रवृत्तिः" इत्यादिनाऽत्रैव वक्ष्यति ॥१०—१५॥

स्वेदवहानां स्रोतसां मेदोमूलं रोमकूपाश्च । प्रदुष्टानां खल्वेषामिदं विज्ञानम्—अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णतामङ्गस्य परिदाहं लोमहर्षञ्च दृष्ट्वा स्वेदवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ १६ ॥

अस्वेदनादिकं स्वेदवहदुष्टिलक्षणं कुष्ठपूर्वरूपेऽप्यस्ति । तेन, यत्रान्यकुष्ठपूर्वरूपदर्शनं भवति, तत्र कुष्ठपूर्वरूपता निश्चेतव्या, एतावन्मात्रलक्षणोदये तु स्वेदवहधमनीनाम् । इह मूलज्ञानं यद्यपि साक्षात्प्रयोजनं नोक्तं, तथापि मूलोपघाताद्वृक्षाणामिव धमनीनां महानुपघातो भवतीति ज्ञेयम्, अतएव सुश्रुते स्रोतोमूलविद्धलक्षणान्युक्तानि ॥ १६ ॥

स्रोतांसि सिरा धमन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानानि आशयाः क्षया निकेताश्चेति शरीरधातवकाशानां लक्ष्यालक्ष्याणां नामानि भवन्ति । तेषां प्रकोपात् स्थानस्थाश्चैव मार्गगाश्चैव शरीरधातवः प्रकोपमापद्यन्ते इतरेषां च प्रकोपादितराणि स्रोतांसि । स्रोतांस्येव धातवश्च धातूनेव प्रदूषयन्ति । प्रदुष्टास्त्वेषां सर्वेषामेव वातपित्तश्लेष्माणो प्रदुष्टा दूषयितारो भवन्ति दोषस्वभावादिति ॥ १७ ॥

स्रोतसां पर्यायानाह—स्रोतांसीत्यादि ।—संवृतासंवृतानी-

लेका संज्ञा, तत्राग्रे संवृतानि मूले संवृतानि । 'स्थानानि' पर्यायान् केचिद्धमनीमूलस्य पर्यायानाचक्षते । अन्ये त्वेतानपि धमनीपर्यायानाहुः, धमन्योऽपि हि रसादिस्थानं भवन्त्येवेति कृत्वा । स्थानस्था इत्याशयस्थाः । मार्गगाश्चेति धमनीभिर्गच्छन्तः । इतरेषांचेत्यादिना विवृणोति[1] । स्रोतांसि धातवश्च दुष्टाः प्रत्यासन्नानि स्रोतांसि धात्वन्तराणि च स्वदोषसंक्रान्त्या दूषयन्तीत्यर्थः । दोषस्वभावादिति दोषाणामेवायं स्वभावो यद्दूषकत्वं न धात्वन्तराणाम् । तेन, धातुना दुष्टिर्धातुदुष्टिर्धातुगतदोषकृतैव ज्ञेया ॥ १७ ॥

भवन्ति चात्र ।

क्षयात्सन्धारणाद्रौक्ष्याद्व्यायामात् क्षुधितस्य च ।
प्राणवाहीनि दुष्यन्ति स्रोतांस्यन्यैश्च दारुणैः ॥ १८ ॥
औष्ण्यादामाद्भयात् पानादतिशुष्कान्नसेवनात् ।
अम्बुवाहीनि दुष्यन्ति तृष्णायाश्चातिपीडनात् ॥१९॥
अतिमात्रस्य चाकाले चाहितस्य च भोजनात् ।
अन्नवाहीनि दुष्यन्ति वैगुण्यात्पावकस्य च ॥ २० ॥
गुरुशीतमतिस्निग्धमतिमात्रं समश्नताम् ।
रसवाहीनि दुष्यन्ति चिन्त्यानांचातिचिन्तनात् २१
विदाहीन्यन्नपानानि स्निग्धोष्णानि द्रवाणि च ।
रक्तवाहीनि दुष्यन्ति भजतां चातपानलौ ॥ २२ ॥
अभिष्यन्दीनि भोज्यानि स्थूलानि च गुरूणि च ।
मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतां दिवा २३
अव्यायामाद्दिवास्वप्नान्मेध्यानांचातिभक्षणात् ।
मेदोवाहीनि दुष्यन्ति वारुण्याश्चातिसेवनात् ॥२४॥
व्यायामादतिसंक्षोभादस्थ्नामतिविघट्टनात् ।
अस्थिवाहीनि दुष्यन्ति वातलानांच सेवनात् ॥२५॥
उत्पेषादत्यभिष्यन्दादभिघातात्प्रपीडनात् ।
मज्जवाहीनि दुष्यन्ति विरुद्धानांच सेवनात् ॥२६॥
अकालयोनिगमनान्निग्रहादतिमैथुनात् ।
शुक्रवाहीनि दुष्यन्ति शस्त्रक्षाराग्निभिस्तथा ॥२७॥
मूत्रितोदकभक्ष्यस्त्रीसेवनान्मूत्रनिग्रहात् ।
मूत्रवाहीनि दुष्यन्ति क्षीणस्याभिक्षतस्य च ॥ २८ ॥
विधारणादत्यशनादजीर्णाध्यशनात्तथा ।
वर्चोवाहीनि दुष्यन्ति दुर्बलाग्नेः कृशस्य च ॥ २९ ॥
व्यायामादतिसन्तापात् शीतोष्णाक्रमसेवनात् ।
स्वेदवाहीनि दुष्यन्ति क्रोधशोकभयैस्तथा ॥ ३० ॥

यथाक्रमस्रोतसां दुष्टिकारणमाह—क्षयादित्यादि—दारुणैरित्यत्र कर्मभिरिति शेषः । गुरूणि च भजतामिति पूर्वोक्तेन संबन्धः । मेध्यानां मेदुराणाम् अकालयोनिगमनादिति अहर्पकालगमनात् तथाऽनुचितयोनौ गमनात् । निग्रहादिति शुक्रवेगनिग्रहात् । मूत्रितेत्यादौ मूत्रवेगयुक्तस्य उदकादिसेवनादिति ज्ञेयम् ॥ १८—३० ॥

आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।
धातुभिर्विगुणश्चापि स्रोतसां स प्रदूषकः ॥ ३१ ॥

आहारश्चेत्यादिना सामान्येन सर्वस्रोतोदुष्टिमाह । दोषगुणैः सम इत्यनेन दोषातिवर्द्धकं दर्शयति । क्षीणाश्च दोषा नान्यदुष्टिं कुर्वन्ति, किं तु स्वयमेव क्षीणलिङ्गा भवन्तीत्यादि वेदितव्यमेव । धातुभिर्विगुण इति धातुविगुणस्वभाव इत्यर्थः, नतु विपरीतगुणो धातुविगुणः । दिवास्वप्नमेध्यादयो हि मेदसा सामान्यगुणा एव मेदोदूषका एवोक्ताः ॥ ३१ ॥

अतिप्रवृत्तिः सङ्गो वा शिराणां ग्रन्थयोऽपि वा ।
विमार्गगमनं वापि स्रोतसां दुष्टिलक्षणम् ॥ ३२ ॥

अतिप्रवृत्तिरित्यादिना सामान्यस्रोतोदुष्टिलक्षणमाह—अतिप्रवृत्तिरिह स्रोतोवाह्यस्य रसादेर्बोद्धव्या । एवं सङ्गोऽपि रसादेर्विमार्गगमनं च, यथा मूत्रवहानां स्रोतसां वस्तिर्मूलमित्यादौ ॥ ३२ ॥

स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥३३॥
प्राणोदकान्नवाहानां दुष्टानां श्वासिकी क्रिया ।
कार्या तृष्णोपशमनी तथैवामप्रदोषिकी ॥ ३४ ॥
विविधाशितपीतीये रसादीनां यदौषधम् ।
रसादिस्रोतसां कुर्यात्तद्यथास्वमुपक्रमम् ॥ ३५ ॥
मूत्रविट्स्वेदवाहानां तु चिकित्सा मौत्रकृच्छ्रिकी ।
तथातिसारिकी कार्या यथा ज्वरचिकित्सिकी ३६

स्वधातुसमवर्णानीति वाह्यधातुतुल्यवर्णानि । प्रतानो लताप्रपञ्चः । प्राणोदकेत्यादिना चिकित्सामाह—प्राणवहानां श्वासिकी, उदकवहानां तृष्णोपशमनी, अन्नवहानामामप्रदोषिकीति बोद्धव्यम् । मूत्रादिवहानामपि त्रयाणां मूत्रकृच्छ्रादयो यथासंख्यं तिस्रश्चिकित्सा ज्ञेयाः ॥ ३३—३६ ॥

तत्र श्लोकाः ।

त्रयोदशानां मूलानि स्रोतसां दुष्टिलक्षणम् ।
सामान्यंनामपर्यायाः कोपनानि परस्परम् ॥
दोषहेतुः पृथक्त्वेन भेषजोद्देश एव च ।
स्रोतोविमाने निर्दिष्टस्तथा चादौ विनिश्चयः ॥३७॥

१ विवरणंतु तत्समानार्थपदान्तरेण तदर्थकथनम्, अत्र तेषामित्यादिना "प्रकोपमापद्यन्ते" इत्यन्तेन कथितार्थं 'इतरेषाम्' इत्यादिना दोषस्वभावादित्यन्तेन समानार्थपदान्तरेण कथयति ।

केवलं विदितं यस्य शरीरं सर्वभावतः ।
शारीराः सर्वरोगाश्च स कर्मसु न मुह्यति ॥ ३८ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने स्रोतोविमानं नाम पञ्चमोऽध्यायः ॥

संग्रहे दुष्टिलक्षणं सामान्यं वाताद्यविशेषितं दुष्टिलक्षणमित्यर्थः । स्रोतोदुष्टिलक्षणानीह वातादिदोषभेदेन नोक्तानीत्यर्थः । वातादिविशेषेण चेह विस्तरभयाद्दुष्टिर्नोक्ता । तेन, वातादिविशेषलिङ्गाधिक्याद्दुष्टिर्निर्णेतव्या । आदौ विनिश्चय इत्यध्यायादौ पुरुषस्य धमनीसयत्वादिवादनिश्चय इत्यर्थः । केवलमित्यादिना अत्रोक्तधमन्यादिभेदेन शरीरज्ञानस्योपादेयतामाह ॥ ३७ ॥ ३८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने स्रोतोविमानम् ।

## षष्ठोऽध्यायः ।

अथातो रोगानीकं विमानं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

द्वे रोगानीके भवतः प्रभावभेदेन साध्यं चासाध्यं च द्वे रोगानीके बलभेदेन मृदु च दारुणं च, द्वे रोगानीके अधिष्ठानभेदेन मनोऽधिष्ठानं शरीराधिष्ठानं च, द्वे रोगानीके निमित्तभेदेन स्वधातुवैषम्यनिमित्तं चागन्तुनिमित्तं च, द्वे रोगानीके आशयभेदेन आमाशयसमुत्थं च पक्वाशयसमुत्थं च । एवमेतत्प्रभावबलाधिष्ठाननिमित्ताशयद्वैधं सद्भेदप्रकृत्यन्तरेण भिद्यमानमथवा सन्धीयमानं स्यादेकत्वं वा बहुत्वं वा । एकत्वं तावदेकमेव रोगानीकं दुःखसामान्यात्[1] बहुत्वं तु दश रोगानीकानि प्रभावभेदादिना भवन्ति, बहुत्वमपि संख्येयं स्यादसंख्येयं वा स्यात् । तत्र संख्येयं तावद्यथोक्तमष्टोदरीये, अपरिसंख्येयं पुनर्यथा—महारोगाध्याये रुग्वर्णसमुत्थानादीनामसंख्येयत्वात् ॥ ३ ॥

पूर्वाध्याये स्रोतोरूपाधिष्ठानभेदेन रोगानभिधाय प्रभावादिभेदेन रोगानभिधातुं रोगानीकं विमानमुच्यते । रोगानीकमिति रोगसमूहः । बलभेदेनेत्यत्र मृद्वल्पबलम्, दारुणं तु महाबलं ज्ञेयम् । दारुणं किंचित्कालानुपातादेव बलवत्त्वान्मारयति । यदुक्तम्—"सन्ति ह्येवंविधा रोगाः साध्या दारुणसम्मताः । ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः", इति । आमाशयसमुत्थत्वेन आमाशयाश्रयिकफपित्तजाः सर्वे गदा गृह्यन्ते । पक्वाशयसमुत्थग्रहणेन सर्वे वातजाः । एवं सर्वविकारावरोधः । द्वैधं सदिति द्वैविध्यं सत् । भेदप्रकृत्यन्तरेणेति भेदकारणान्तरेण । तथापि सन्धीयमाने सति एकीक्रियमाणे एकबुद्धिकारकानुगतधर्मान्तरेणेति बोद्धव्यम् । दुःखसामान्यादिति दुःखकर्तृत्वेन सर्वरोगानुगतेन साधारणेन रूपेण सर्वरोगा एकरूपा भवन्ति । बहुत्वमपीत्युक्तं प्रभावभेदादिकृतत्वादपि बहुत्वमित्यर्थः । संख्येयत्वमष्टोदरीये "अष्टचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे" इत्यादिनोक्तम् । असंख्येयत्वं महारोगाध्याये तु "तत्रतत्र वाऽपरिसंख्येया भवन्ति रुजावर्णस्थानसंस्थाननामभिः" इत्यनेनोक्तम् ॥१-३॥

न च संख्येयाग्रेषु भेदप्रकृत्यन्तरीयेषु विगीतिरित्यतो दोषवती स्यादत्र काचित्प्रतिज्ञा, न चाविगीतिरित्यतः स्याददोषवती । भेत्ता हि भेद्यमन्यथा भिनत्ति, अन्यथा तु पुरुषस्तावद्भिद्यं भेदप्रकृत्यन्तरेण भिन्दन् भेदसंख्याविशेषमापादयत्यनेकधा, न च पूर्वं भेदाग्रमुपहन्ति । समानायामपि खलु भेदप्रकृतौ प्रकृतानुप्रयोगान्तरमपेक्ष्यम् । सन्ति ह्यर्थान्तराणि समानशब्दाभिहितानि । सन्ति चानर्थान्तराणि पर्यायशब्दाभिहितानि । समानो हि रोगशब्दो दोषेषु च व्याधिषु च, दोषा ह्यपि रोगशब्दमातङ्कशब्दं यक्ष्मशब्दं दोषप्रकृतिशब्दं विकारशब्दं च लभन्ते । व्याधयश्च रोगशब्दमातङ्कशब्दं यक्ष्मशब्दं दोषप्रकृतिशब्दं विकारशब्दंच लभन्ते । तत्र दोषेषु चैव व्याधिषु च रोगशब्दः समानः, शेषेषु तु विशेषवान् ॥ ४ ॥

ननु संख्येयत्वमसंख्येयत्वंच विरुद्धावेतौ धर्मौ । तथैकत्वमनेकत्वंचेति विरुद्धौ । तत्कथं विरुद्धत्वेन ख्यातौ धर्मावेकस्मिन् रोगे घटेतामित्याह—न चेत्यादि ।—संख्येयाग्रेष्विति संख्येयरोगपरिमाणेषु अग्रशब्दः परिमाणे वर्तते । तथैकैकस्य भेदाग्रमपरिसंख्येयं भवति, भेदसंख्यारूपं परिमाणमित्यर्थः । भेदप्रकृत्यन्तरीयेष्विति भेदकारणान्तरभवेषु । विरुद्धा गीतिः विगीतिः[1] यथा—एकंचानेकंच तदित्यादिका विरुद्धा गीतिः । अत इति यथोक्तविगीतियोगात्, न दोषवती काचित्प्रतिज्ञा, यथा—'अनेकरूपा ह्यल्परूपा' । अत्रोक्ता स्यादिति योजना । विगीतौ दोषाभावं दर्शयित्वा भेदकारणान्तरकृतायामविगीतावपि दोषो भवतीति दर्शयन्नाह—न चाविगीतिरित्यादि ।—यदि ह्येकं रोगानीकं रुजासामान्यादित्यभिधाय पुनरेकं रोगानीकं प्रभावभेदादित्यविरुद्धा एकताख्यायिकाऽविगीतिः क्रियते, तथापि सा विरुद्धैव स्यात् । यतो न प्रभावभेदेन रोगाणामेकत्वमुपपन्नम्, किं तु द्वैधमेवेति भावः । विगीतौ दोषा-

१ रुक्सामान्यादिति पाठान्तरम् ।

१ विगीतिर्विरुद्धभाषणमित्यर्थः ।

भावे हेतुमाह—भेत्ता हीत्यादि।—भेत्ता पुरुषः, भेद्यं रोगम्। अन्यथा त्वेकत्वादिना भिनत्ति, अन्यथा एकत्वेन पुरुषस्तावत् भेद्यं च अन्यथा भिनत्तीति। अस्यार्थं व्याकरोति भेदप्रकृत्यन्तरेणेत्यादिना; अनेकधेति द्वे रोगानीके तथा दश रोगानीकानीत्यादि। न च पूर्वं भेदाग्रं भेदप्रमाणमुपहन्ति। एवं मन्यते—यद्धर्मयोगविवक्षया एकत्वमुक्तं, तद्धर्मयोगविवक्षयैव यदि बहुत्वमप्युच्यते रोगाणाम्, ततो विरोधो भवति। न हि तदेवैकंचानेकंचेत्युपपन्नम्। यदा तु धर्मान्तरयोगविवक्षया बहुत्वमुच्यते, न तदा विरोधः, बहुत्वाभिधानकाले बहूनामेव रोगधर्माणां विवक्षिततरत्वात्। रोगाणामेकत्वमेकधर्मविषयम्, बहुत्वंच बहुधर्मविषयमिति न विरोधः। ननु यत्रासमानभेदकारणं तत्र कारणान्तरकृतत्वादुक्तन्यायेन विगीतिः साध्वी भवतु, यत्र तु दश रोगानीकानि प्रभावादिद्वैविध्यादुच्यन्ते, तत्र कथं द्वे रोगानीके इति द्वित्वं कृतम्, द्वैविध्यमभिधाय पुनर्द्वित्वाद्भेदेनैव दशत्वमुच्यते। सामान्यो ह्ययं द्विधाशब्दो द्वित्वे दशत्वे च रोगाणां हेतुरित्याह—समानायामपीति, समानशब्दाभिधेयत्वेनापाततः समानायामित्यर्थः। प्रकृतानुप्रयोगान्तरमपेक्ष्यमिति, प्रकृतस्य समानशब्देनाभिहितस्य यद्भेदस्थापकं पश्चात् प्रयोगान्तरम्, तदपेक्षणीयं विगीतिसमानार्थमित्यर्थः। एतेनैतद्दर्शयति—यद्यपि द्विशब्दो रोगप्रभावे तथा रोगबलादौ च समानस्तथाप्येकत्र प्रभावभेदानुप्रयोगान्तरमपेक्ष्य प्रभावद्वैविध्ये वर्तते, तथा बलभेदानुप्रयोगान्तरमपेक्ष्य च द्विशब्दो बलद्वैविध्ये वर्तेत इत्यादि। तदेवोपपादयति—सन्तीत्यादिना। अर्थान्तराणि पर्यायशब्दानभिहिता अर्थाः। तत्रोदाहरणमाह—समानोहीत्यादि।—दोषेषु व्याधिषु च समान उभयवाचकत्वेन तुल्यो रोगशब्दः, तेन, रोगदोषसमानत्वेनाभिधेयसमानानां रोगातङ्कयक्ष्मादिशब्दानां सर्वेषामेव वक्ष्यमाणानां ग्रहणम्। शेषेष्विति हेत्वादिषु, विशेषवानित्यभिधानरूपविशेषवानित्यर्थः॥ ४॥

**तत्र व्याधयोऽपरिसंख्येया भवन्त्यतिबहुत्वात्, दोषास्तु खलु परिसंख्येया भवन्त्यनतिबहुत्वात्। तस्माद्यथाचित्रं विकारा उदाहरणार्थमनवशेषेण च दोषा व्याख्यास्यन्ते। रजस्तमश्च मानसौ दोषौ। तयोर्विकाराः कामक्रोधलोभमोहेर्ष्यामानमदशोकचित्तोद्वेगभयहर्षादयः। वातपित्तश्लेष्माणस्तु खलु शारीरा दोषाः तेषामपि च विकारा ज्वरातीसारशोफशोषश्वासमेहकुष्ठादय इति दोषाश्च केवला व्याख्याताः विकारैकदेशश्च॥ ५॥**

**तत्र तु खल्वेषां द्वयानामपि दोषाणां त्रिविधं प्रकोपणम्, तद्यथा—असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति॥ ६॥**

तत्रापि रोगशब्दाभिधेयतासमानेऽपि दोषे तथा विकारे न परिसंख्येयाऽपरिसंख्येयरूपा विगीतिरस्त्यथचादोष इत्यभिप्रायेणाह—तत्रेत्यादि।—एकैकस्मिन् दोषे बहवो विकारा भवन्तीत्यभिप्रायेण विकारापेक्षया दोषाणामनतिबहुत्वं ज्ञेयम्। यथाचित्रमिति यथाविन्यासम्, तेन, यानेव पूर्वाचार्या विकारानधिकततमत्वेनोक्तवन्तस्तानेव व्याख्यास्यामः। ननु सर्वानशक्यत्वात्। किंवा, यथोचितमिति पाठः। अनवशेषेण च दोषा इत्यनेन दोषा अनतिबहुत्वेनानवशेषेणाप्यभिधातुं शक्यन्त इति प्रकाशयति। तत्र मानसदोषविकारयोरनल्पवक्तव्यतयाऽग्रेऽभिधानम्॥ ५—६॥

**प्रकुपितास्तु खलु प्रकोपणविशेषाद्दूष्यविशेषाच्च विकारविशेषानभिनिर्वर्तयन्त्यपरिसंख्येयान्॥ ७॥**

ननु परिमिताद्दोषरूपात्कारणात् कथमपरिमिता विकारा भवन्तीत्याह—प्रकुपितास्त्वित्यादि।—हेतुविशेषदुष्टो हि सएव दोषो दूष्यान्तरगतश्च विभिन्नशक्तियोगाद्बहून् विकारान् करोतीति युक्तमेव। उक्तं च—"सएव कुपितो दोषः समुत्थानविशेषतः। स्थानान्तरगतश्चैव विकारान् कुरुते बहून्" इति॥ ७॥

**ते विकाराः परस्परमनुवर्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च॥ ८॥**

विकाराणां शारीरमानसानां परस्परं संसर्गमाह—ते विकारा इत्यादि।—अनुवर्तमाना इत्यनेन यदैव ज्वरादयः कामादयो वाऽन्तरत्वेन च चिरकालमनुवर्तन्ते, तदैवानुबध्नन्ति प्रायः। यदा तु स्तोककालावस्थायिनो भवन्ति, न तदा प्रायोऽनुबध्नन्तीत्यर्थः। किं वा, अनुवर्तमानाः परस्परं बलमभिवर्धयन्तः। अत्र च परस्परशब्देन शारीराणां शारीरेण मानसानां मानसेन, शारीराणां मानसेन, मानसानां शारीरेण चानुबन्धो ज्ञेयः॥ ८॥

**नियतस्त्वनुबन्धो रजस्तमसोः परस्परम्, न ह्यरजस्कं तमः-प्रवर्तते[1]॥ ९॥**

**शारीरदोषाणामेकाधिष्ठानीयानां सन्निपातः संसर्गो वा समानगुणत्वात्। दोषा हि दूषणैः समानाः॥ १०॥**

विकारानुबन्धं दर्शयित्वा दोषानुबन्धमाह—नियतस्त्वित्यादि।—शारीरदोषानुबन्धमाह—शारीरेत्यादि।—एकाधिष्ठानीयानामित्यनेनैकशरीराधिष्ठानप्रत्यासत्त्या संसर्गो दोषाणां भवन्तीति दर्शयति। समानगुणत्वादिति। हेतुं विवृणोति दोषा हीत्यादि।—दूषणैरिति हेतुभिः। प्रायो हि शारीराणां वातादीनां समानो हेतुर्भवति। तथा ह्यम्लं लवणं कटु च पित्तं कफं वातं च करोति, तत्राम्लं सकफं पित्तं करोति, लवणं च सपित्तं कफं करोति, कटु तु सवातं पित्तं करोति।—

[1] न ह्यरजस्कतमः प्राय इति पाठान्तरम्।

तथा वसन्तः श्लेष्मकारकोऽप्यादानत्वेन वातपित्ते च करोति, तथा वर्षास्वपि पित्तं चीयमानं शरदि प्रकुप्य कफानुगतमेव कुप्यति । तथा ग्रीष्मो वातचयं रूक्षत्वेन कुर्वन् उष्णत्वेन मनाक् पित्तचयमपि करोतीत्यनुसरणीयम् ॥ ९—१० ॥

**तत्रानुबन्ध्यानुबन्धविशेषः—स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यः, तद्विपरीतलक्षणस्त्वनुबन्धः । अनुबन्ध्यलक्षणसमन्वितास्तत्र यदि दोषा भवन्ति, तत्त्रिकं सन्निपातमाचक्षते, द्वयं वा संसर्गम् । अनुबन्ध्यानुबन्धविशेषकृतस्तु बहुविधो भेदः । एवं एष संज्ञाप्रकृतो भिषजां दोषेषु चैव व्याधिषु च नानाप्रकृतिविशेषव्यूहः ॥ ११ ॥**

एवमेव दोषानुबन्धमनुबन्ध्यानुबन्धेन दर्शयितुमनुबन्ध्यानुबन्धलक्षणमेवाह—अत्रेत्यादि ।—अनुबन्ध्यस्य अनुबन्धस्य च विशेषोऽनुबन्ध्यानुबन्धविशेषः । स्वतन्त्र इति यथोक्तो दोषो लक्षणीयः, स्वतन्त्र इत्यस्यैव विवरणम्—व्यक्तलिङ्ग इत्यादि ।—यथोक्तसमुत्थानप्रशम इति स्वहेतुसमुत्थितः स्वचिकित्सयैव प्रशमनीयः । किं वा, स्वतन्त्र इत्यनेनापि स्वविकारकरणे प्राधान्यमुच्यते, स्वतन्त्रो हि दोषः प्रकोपकाले विकारान् करोति । अस्वतन्त्रस्त्वप्रकोपकाल एव विकारं ज्वरातिसारादिरूपं तथाऽनुबन्ध्यानुबन्धाकारं प्रधानदोषेरितः सन् करोति । तद्विपरीतलक्षण इत्यनेनाव्यक्तलिङ्गोऽस्वहेतुप्रकुपितः परचिकित्साशमनीयश्चानुबन्ध इति लभ्यते, अनुबन्धो ह्यबलवत्त्वेन न लिङ्गं व्यक्तं करोति, तथा परहेतुना किंचिदनुगुणेन प्रकुपितः परचिकित्सयैव किंचिदनुगुणतया शाम्यति। यथा—शरदि श्लेष्मा पित्तहेतुना जलाद्यम्लविपाकेन जन्यते, स च पित्तचिकित्सयैव तिक्तसर्पिरादिकया कफोऽप्यनुगुणतया शाम्यति । द्वयं वानुगुणलक्षणं प्राप्तं संसर्गमाचक्षत इति योजना । अनुबन्ध्यशब्दश्चायं व्यक्तलिङ्गतादिधर्मयुक्ते दोषे वर्तते । तेनाप्रधानानुगमनीये सन्निपाते अनुबन्धाभावेऽप्यनुबन्ध इति व्यपदेशो भवत्येव अनुबन्ध्यानुबन्धरूपसंसर्गविशेषेण कृतः । संज्ञाप्रकृत इत्यनुबन्ध्यानुबन्धसंनिपातसंसर्गज्वरातिसारादिसंज्ञाकृत इत्यर्थः । नानाप्रकृतिविशेषव्यूह इति यथोक्तनानाकारणविशेषकृतो ज्वरातिसारादिरूपो व्याधीनां दोषाणां च समूह इत्यर्थः । भिषजामितिपदेन च वैद्यानामप्येवं समयसिद्धाऽनुबन्ध्यादिसंज्ञेति दर्शयति ॥ ११ ॥

**अग्निषु तु शारीरेषु चतुर्विधो विशेषो बलभेदेन भवति । तद्यथा—तीक्ष्णो मन्दः समो विषम इति । तत्र तीक्ष्णोऽग्निः सर्वापचारसहस्तद्विपरीतलक्षणस्तु मन्दः । समस्तु खल्वपचारतः विकृतिमापद्यते, अनपचारतस्तु प्रकृताववतिष्ठते ।**

१ ग्रन्थोक्त इति पाठान्तरम् । २ कृत इति पाठान्तरम् ।

**समलक्षणविपरीतलक्षणस्तु विषम इत्येते चतुर्विधा भवन्त्यग्नयश्च चतुर्विधानामेव पुरुषाणाम् १२**

**तत्र समवातपित्तश्लेष्मणां प्रकृतिस्थानां समा भवन्त्यग्नयः । वातलानां तु वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः । पित्तलानां तु पित्ताभिभूते ह्यग्न्यधिष्ठाने तीक्ष्णा भवन्त्यग्नयः । श्लेष्माभिभूते ह्यग्न्यधिष्ठाने मन्दा भवन्त्यग्नयः ॥ १३ ॥**

दोषभेदविकारभेदमभिधाय शरीरस्थितेः प्रधानकारणस्याग्नेर्भेदमाह—अग्निष्वित्यादि ।—शारीरेष्विति सामान्यवचनेन सर्वशरीरगतानग्नीन् ग्राहयति, विवरणे तु जठराग्निरेव "तीक्ष्णः सर्वापचारसहः" इत्यादिना यच्चातुर्विध्यमुक्तम्, तज्जठराग्नितीक्ष्णतादिमूलत्वगग्न्यादितीक्ष्णत्वादिरेवेति ज्ञेयम् । वचनं हि—"तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः" इति । यद्यपि समोऽग्निः शस्तत्वेनाग्रेऽभिधातुं युज्यते, तथापि समतश्च तीक्ष्णस्यैव प्राधान्योपदर्शनार्थमिहाग्रेऽभिधानम् । समस्य हि प्राधान्यं निर्विकारत्वेनैव सुस्थितम्, तीक्ष्णः सर्वापचारसहत्वेन प्रधानम् । तेन, तद्विपरीतलक्षणं सिध्यति,—स्वल्पापचारमपि यो न सहते, स मन्द इत्यर्थः । समलक्षणविपरीतलक्षण इति कदाचिद्विषमोऽपचारादपि न विक्रियते, कदाचिद्विक्रियते । समवातपित्तश्लेष्मणामित्युक्तेऽपि 'प्रकृतिस्थानाम्' इतिपदम्, वृद्धानां समवातपित्तश्लेष्मणां प्रतिषेधार्थम् । 'प्रकृति' शब्दस्य कारणाद्यनेकार्थताव्युदासार्थं समवातपित्तश्लेष्मणामिति कृतम् । वाताभिभूतेऽग्न्यधिष्ठान इतिवचनेन वातलानामपि यदेवाग्न्यधिष्ठानोपघातो वातेन क्रियते, तदेव वैषम्यं भवति । एवं पित्ताभिभूत इत्यादावपि व्याख्येयम् ॥ १२—१३ ॥

**तत्र केचिदाहुः—न समवातपित्तश्लेष्माणो जन्तवः सन्ति विषमाहारोपयोगित्वान्मनुष्याणाम्, तस्माच्च वातप्रकृतयः केचित्, केचित् पित्तप्रकृतयः, केचित् पुनः श्लेष्मप्रकृतयो भवन्तीति । तच्चानुपपन्नम्, कस्मात्कारणात् । समवातपित्तश्लेष्माणं ह्यरोगमिच्छन्ति भिषजः, यतः प्रकृतिश्चारोग्यम्,**

१ तन्मूलास्तेहि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ।
इत्यनेन जठराग्निवृद्ध्या त्वगादिद्वादशाग्नीनां वृद्धिः ।
जाठराग्निक्षये तेषां क्षयः । धात्वग्नयः सप्त पंच, भूताग्नयः
एको जाठराग्निरिति त्रयोदशाग्नयः ।
तत्प्रतिबद्धान्येव रंजकादीनि, भूताग्नयो धात्वग्नयश्च.
संग्रहे शारीरस्थानम् अ० ६
भौमाप्याग्नेयवायव्याः पंचोष्माणः सनाभसाः ॥ ५९ ॥
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ६० ॥
वाग्भटशारीर अ० ३.

आरोग्यार्थो च भेषजप्रवृत्तिः, सा चेष्टरूपा। तस्माद्भवन्ति समवातपित्तश्लेष्माणः। न तु खलु सन्ति वातप्रकृतयः पित्तप्रकृतयः श्लेष्मप्रकृतयो वा, तस्य तस्य किल दोषस्य हि आधिक्यभावात्सा सा दोषप्रकृतिरुच्यते मनुष्याणाम्। न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते। तस्मान्नैताः प्रकृतयः सन्ति। सन्ति खलु वातलाः पित्तलाः श्लेष्मलाश्चाऽप्रकृतिस्थास्तु ते ज्ञेयाः। तेषां तु खलु चतुर्विधानां पुरुषाणां चत्वार्यनुप्रणिधानानि श्रेयस्कराणि। तत्र समसर्वधातूनां सर्वाकारसमधिकदोषाणां तु त्रयाणां यथास्वं दोषाधिक्यमभिसमीक्ष्य दोषप्रतिकूलयोगीनि त्रीण्यनुप्रणिधानानि श्रेयस्कराणि भवन्ति यावदग्नेः समीभावात्। समे तु सममेव कार्यम्, एवं चेष्टा भेषजप्रयोगाश्चापरे, तान् विस्तरेणानुव्याख्यास्यामः ॥ १४ ॥

त्रयस्तु पुरुषा भवन्त्यातुराः, ते त्वनातुरास्तन्त्रान्तरीयाणां भिषजाम्। तद्यथा—वातलः पित्तलः श्लेष्मलश्चेति तेषां विशेषविज्ञानं वातलस्य वातनिमित्ताः, पित्तलस्य पित्तनिमित्ताः, श्लेष्मलस्य श्लेष्मनिमित्ता व्याधयः प्रायेण बलवन्तश्च भवन्ति ॥१५॥

विषमाहारोपयोगित्वादिति, नायं पुरुषस्तुलाधारधृतमिवाहारमुपयुङ्क्ते, तेनावश्यमत्र वातादिष्वन्यतमोऽपि दोषो विकृतो भवतीति भावः। "समवातपित्तश्लेष्मणाम्" इत्यादिना, अस्ति तावदारोग्यं पुरुषेषु वैद्यव्यवहारसिद्धमिति दर्शयति। तेन, यादृगिदं दोषाणां कलाकाष्ठादिवैषम्ये परित्यज्याविर्भूतविकाराकारित्वेनादूरान्तरं साम्यमिष्यते तादृगेव प्रकृतावपि साम्यमस्त्येवेति भावः। अन्ये तु वैषम्यं नाद्रियन्त एव व्यपदेश्यरोगाजनकत्वात्। दोषप्रकृतिरिति 'दुष्टदोषभाविता प्रकृतिरित्यर्थः। दोषे प्रवृद्धे प्रतिकूलतया योगीनि दोषप्रतिकूलयोगीनि त्रीणि वातपित्तश्लेष्मप्रतिकूलानि च। समे त्विति समतां गते वह्नौ। यथोचितविधानेन वातप्रकृत्यादीनां सममेवानुप्रणिधानं कर्तव्यम्। एवमित्यनेन प्रकारेण चेष्टाभेषजयोरपि प्रयोगा वातादीनां भवन्ति। ये तु, एवमित्यनेन चतुर्विधेनोक्तेन प्रकारेणेति वदन्ति, ते, समप्रकृतीनां च समव्यायामादिचेष्टा भेषजं च ऋतुचर्याविधेयं वमनादिकारकं सूच्यतेऽनेनेति व्याख्यानयन्ति ॥ १४—१५ ॥

तत्र वातलस्य वातप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं वातः प्रकोपमापद्यते, न तथेतरौ दोषौ स तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय। तस्यावजयनम्—स्नेहस्वेदौ विधियुक्तौ मृदूनि च संशोधनानि स्नेहोष्णमधुराम्ललवणयुक्तानि, तद्वदभ्यवहार्याण्युपनाहनोपवेष्टनोन्मर्दनपरिषेकावगाहनसंवाहनावपीडनवित्रासनविस्मापनविस्मारणानि सुरासवविधानं स्नेहाश्चानेकयोनयो दीपनीयपाचनीयवातहरविरेचनीयोपहिताः, तथा शतपाक्याः सहस्रपाक्याः सर्वशः प्रयोगार्था बस्तयो बस्तिनियमः सुखशीलता चेति ॥ १६ ॥

न तथेतरौ दोषाविति सत्यापि हेतुसेवयेत्यर्थः। अन्यथा वातप्रकोपणसेवया पित्तश्लेष्मणोर्वृद्धिरेव नास्ति। वित्रासनादयो यद्यपि वातकारकास्तथापि वातजनितोन्मादविनाशकत्वेन चोक्ता इति ज्ञेयम्। उन्मादे हि वित्रासनादि भेषजमभिधायोक्तम्—"तेन याति शमं तस्य सर्वतो विप्लुतं मनः" इति। सर्वशः प्रयोगार्था इति पानाभ्यञ्जनबस्त्यादिभिः प्रयोजनीया इत्यर्थः, बस्तिनियम इति बस्तौ यथोक्तनियमसेवेत्यर्थः। किं वा, 'बस्तिनियम' शब्देन सिद्धौ वक्ष्यमाणकर्मकालयोगरूपं बस्तिसंख्यानियमं कर्तव्यतया दर्शयति। वक्ष्यति हि—"त्रिंशन्मताः कर्मसु बस्तियोगाः कालास्ततोऽर्द्धेन" इति; सुखशीलता सततसुखसेवित्वम् ॥ १६ ॥

पित्तलस्यापि पित्तप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं पित्तं प्रकोपमापद्यते, न तथेतरौ दोषौ तदस्य प्रकोपमापन्नं यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय। तस्यावजयनम्—सर्पिष्पानं सर्पिषा च स्नेहनमधश्च दोषहरणं मधुरतिक्तकषायशीतानां चौषधाभ्यवहार्याणामुपयोगो मृदुमधुरसुरभिशीतहृद्यानां गन्धानां चोपसेवा मुक्तामणिहारावलीनां च परमशिशिरवारिसंस्थितानां धारणमुरसा क्षणे क्षणे चाग्र्यचन्दनप्रियङ्गुकालीयमृणालशीतवातवारिभिरुत्पलकुमुदकोकनदसौगन्धिकपद्मानुगतैरभिप्रोक्षणम् श्रुतिसुखमृदुमधुरमनोऽनुगानां च गीतवादित्राणां श्रवणम्, चाभ्युदयानां सुहृद्भिश्च संयोगः संयोगश्चेष्टाभिः स्त्रीभिः शीतोपहितांशुकस्रग्धारिणीभिर्निशाकरांशुशीतप्रवातहर्म्यवासः शैलान्तरपुलिनशिशिरसदनवसनव्यजनपवनसेवनम् रम्याणाञ्चोपवनानां सुखशिशिरसुरभिमारुतोपवातानामुपसेवनम् सेवनं च नलिनोत्पलपद्मकुमुदसौगन्धिकपुण्डरीकशतपत्रहस्तानां सौम्यानां च सर्वभावानामिति ॥ १७ ॥

यथोक्तैरिति महारोगाध्यायोक्तैः। अधश्च दोषहरणमिति विरेचनादित्यर्थः। अग्र्यं चन्दनं धवलचन्दनम्। हस्तानामिति कलापानाम् ॥ १७ ॥

श्लेष्मलस्यापि श्लेष्मप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं श्लेष्मा प्रकोपमापद्यते, न तथेतरौ दोषौ। स तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय। तस्यावजयनम्—विधियुक्तानि तीक्ष्णोष्णानि संशोधनानि रूक्षप्रायाणि

चाभ्यवहार्याणि कटुकतिक्तकषायोपहितानि तथैव धावनलङ्घनप्लवनपरिसरणजागरणानि युद्धव्यवाय-व्यायामोन्मर्दनस्नानोत्सादनानि विशेषतस्तीक्ष्णानां दीर्घकालस्थितानां मद्यानामुपयोगः सर्वशश्चोपवासस्तथोष्णवासः सधूमपानः सुखप्रतिषेधश्च सुखार्थमेवेति ॥ १८ ॥

श्लेष्मविजयार्थं रूक्षस्यैव हितत्वेन रूक्षाणीति वक्तव्ये यद्रूक्षप्रायाणीति करोति, तेनात्यर्थरूक्षानस्य वातानुगुणत्वेन तथा धात्वपोपकत्वेन चासेव्यत्वं दर्शयति । उक्तं हि रसविमाने—"स्निग्धमश्नीयात् स्निग्धभुक्तं हि स्वदते भक्तं चाग्निमुदीरयति" इत्यादि । लङ्घनमुत्प्लुत्यगमनम् । परिसरणं कुण्डलरूपभ्रमणम् । सर्वशश्चोपवास इति सर्वलङ्घनानि । यदुक्तम्—"चतुःप्रकारा संशुद्धिः पिपासा मारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्" इति । उपवासशब्दोऽत्र लङ्घने वर्तते । सुखार्थमित्यायतिसुखार्थम् । सुखप्रतिषेधाद्धि श्लेष्मक्षये भूते श्लेष्मविकाराभावलक्षणं सुखं भवति ॥ १८ ॥

भवति चात्र ।

सर्वरोगविशेषज्ञः सर्वकार्यविशेषवित् ।
सर्वभेषजतत्त्वज्ञो राज्ञः प्राणपतिर्भवेदिति ॥ १९ ॥

तत्र श्लोकाः ।

प्रकृत्यन्तरभेदेन रोगानीकविकल्पनम् ।
परस्पराविरोधश्च सामान्यं रोगदोषयोः ॥
दोषसंख्याविकाराणामेकदोषप्रकोपणम् ।
जरणं प्रति चिन्ता च कायाग्नेर्धुक्षणानि च ॥
नराणां वातलादीनां प्रकृतिस्थापनानि च
रोगानीके विमानेऽस्मिन् व्याहृतानि महर्षिणा ॥२०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने रोगानीकविमानं नाम षष्ठाध्यायः समाप्तः ॥

यथोक्ताध्यायज्ञानादेव स्वयं सर्वरोगाभिज्ञं स्तौति सर्वं इत्यादिना । प्राणान् पाति रक्षतीति प्राणपतिः । संग्रहे जरयतीति जरणो वह्निस्तं प्रति चिन्ता "अग्निषु" इत्यादिना कृता । प्रकृतिस्थापनानीति भेषजानि ॥ १९—२० ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां रोगानीकविमानम् ।

## सप्तमोऽध्यायः ।

अथातो व्याधितरूपीयं विमानं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

द्वौ पुरुषौ व्याधितरूपौ भवतः । तद्यथा—गुरुव्याधित एकः सत्त्वबलशरीरसम्पदुपेतत्वाल्लघुव्याधित इव दृश्यते । लघुव्याधितोऽपरः सत्त्वादीनामधमत्वाद्गुरुव्याधित इव दृश्यते । तयोरकुशलाः केवलं चक्षुषैव रूपं दृष्ट्वाऽध्यवस्यन्तो व्याधिगुरुलाघवे विप्रतिपद्यन्ते ॥ ३ ॥

पूर्वाध्याये व्याधिं प्रतिपाद्य व्याधितस्य पुरुषस्य भेदं चिकित्सोपयोगितया प्रतिपादयितुं तथा तत्प्रसङ्गाच्च क्रिमीन् प्रतिपादयितुं व्याधितरूपीयोऽभिधीयते । द्वाविव्यादौ व्याधिरितो जातो यस्य स व्याधितस्तस्यैव रूपं ययोस्तौ व्याधितरूपौ व्याधितसदृशावित्यर्थः । [1]यो हि गुरुव्याधिः सम्पन्नसत्त्वादिना लघुव्याधिर्दृश्यते, नासावपि लघुना व्याधिना व्याधितः, किं तु गुरुव्याधित एवासौ । तेन, व्याधितरूपाविव्यनेन लघुव्याधियुक्तसदृशो बोद्धव्यः, स तु गुरुणैव व्याधिना व्याधितो-गुरुव्याधिरदूरदर्शिना लघुव्याधिरिव दृश्यते । एवं विपर्यासाल्लघुव्याधितोऽपर इत्यादावपि व्याख्येयम् । अधमत्वादिति अवरत्वादित्यर्थः । चक्षुषैवेति उत्तरज्ञानसाधनोपलक्षणम् । तेन, स्पर्शादिनापि विशेषानवगाहकेनेति बोद्धव्यम् । रूपमिति विरूपम् । अध्यवस्यन्त इति निश्चयं कुर्वन्तः । गुरुलाघवे विप्रतिपद्यन्त इति गुरुलघुत्वे न प्रतिपद्यन्ते ॥ १—३ ॥

नहि ज्ञानावयवेन कृत्स्ने ज्ञेये ज्ञानमुपपद्यते विप्रतिपन्नास्तु खलु रोगज्ञाने उपक्रमयुक्तिज्ञाने विप्रतिपद्यन्ते । ते यदा गुरुव्याधितं लघुव्याधितरूपमासादयन्ति, तदा तमल्पदोषं मत्वा संशोधनकालेऽस्मै मृदुसंशोधनं प्रयच्छन्तो भूय एवास्य दोषानुदीरयन्ति । यदा तु लघुव्याधितरूपमासादयन्ति, तं महादोषं मत्वा संशोधनकालेऽस्मै तीक्ष्णं संशोधनं प्रयच्छन्तो दोषानतिहृत्य शरीरमस्य क्षिण्वन्त्येवमवयवेन ज्ञानस्य कृत्स्ने ज्ञेये ज्ञानमिति मन्यमानाः स्खलन्ति; विदितवेदितव्यास्तु भिषजः सर्वं सर्वथा यथासंभवं परीक्ष्यं परीक्ष्याध्यवस्यन्तो न क्वचिदपि विप्रतिपद्यन्ते यथेष्टमर्थमभिनिर्वर्तयन्ति चेति ॥ ४ ॥

---

[1] गुर्वल्पव्याधिसंस्थानं सत्त्वदेहबलाबलात् ।
दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ॥ ६८ ॥
गुरुं लघुमिति व्याधिं कल्पयंस्तु भिषग्भुवा ।
अल्पदोषाकलनयापथ्ये विप्रतिपद्यते ॥ ६९ ॥
ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजितम् ।
उदीरयेत्तरां रोगान् संशोधनमयोगतः ॥ ७० ॥
शोधनं त्वतियोगेन विपरीतं विपर्यये ।
क्षिणुयान्मलानेव केवलं वपुरस्यति ॥ ७१ ॥ हिंस्यात् ॥
अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ।
तथा युञ्जीत भैषज्यमारोग्याय यथा ध्रुवम् ॥ ७२ ॥
अष्टांगहृदयम् अध्यायः १२

अत्रैव विरुद्धप्रतिपत्तौ हेतुमाह—नहीत्यादि । ज्ञानावयवेनेति एकदेशज्ञानेन । विप्रतिपत्तिफलमाह,—विप्रतिपन्नास्त्वित्यादि ।—उपक्रमस्य भेषजप्रयोगस्य विकारेण समं योजना । उपक्रमयुक्तिः,. तस्याज्ञाने विरुद्धप्रतिपत्तिमन्तो भवन्ति । एतदेव व्याकरोति—ते यदेत्यादि ।—आसादयन्तीति युध्यन्ते । उदीरयन्तीति प्रकोपयन्त्येव परं नत्वल्पबलत्वाद्धरन्तीत्यर्थः । अतिहृत्वेति अतियोगेन हृत्वेत्यर्थः । ज्ञानस्येति ज्ञानसाधनस्य । यथासंभवमिति यानि यत्र ज्ञानसाधनानि भवन्ति, तैस्तत्र । परीक्ष्यं सत्वादि । न क्वचिदपीति गौरवलाघवादौ ॥ ४ ॥

तत्र श्लोकाः ।

सत्वादीनां विकल्पेन व्याधिरूपमथातुरे ।
दृष्ट्वा विप्रतिपद्यन्ते बाला व्याधिबलाबले ॥ ५ ॥
ते भेषजमयोगेन कुर्वन्त्यज्ञानमोहिताः ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥ ६॥
प्राज्ञास्तु सर्वमाज्ञाय परीक्ष्यमिह सर्वथा ।
न स्खलन्ति प्रयोगेषु भेषजानां कदाचन ॥ ७ ॥

एतदेव सुखग्रहणार्थं श्लोकेनाह,—सत्वेत्यादि ।—व्याधिरूपमिति व्याधेर्गतिरूपमित्यर्थः । व्याधितरूपमिति तु पाठः सुगमः । बाला इत्यल्पज्ञाः, अतियोगेनेत्यसम्यग्योगेन । तेनातियोगमिथ्यायोगयोर्ग्रहणं भवति ॥ ५—७ ॥

इति व्याधितरूपाधिकारे श्रुत्वा व्याधितरूपसंख्याग्रसंभवं व्याधितरूपहेतुं विप्रतिपत्तौ च कारणं सापवादं संप्रतिपत्तिकारणं चानपवादं, भगवन्तमात्रेयमग्निवेशोऽतः परं सर्वक्रिमीणां पुरुषसंश्रयाणां समुत्थानस्थानसंस्थानवर्णनामप्रभावचिकित्सितविशेषान् पप्रच्छोपसंगृह्य पादौ ॥ ८ ॥

संप्रति व्याधिगुरुलाघवस्य दुर्ज्ञेयताप्रसङ्गेन दुर्ज्ञेयक्रिमिख्यापकमपि प्रकरणमारभते—व्याधित इत्यादि ।—संख्याग्रसंभवमिति संख्याप्रमाणसंभवमित्यर्थः । अग्रशब्दो परिमाणवाची । व्याधितरूपस्य हेतुः सत्वादिबलवत्त्वाबलवत्त्वे, तत्कृतो विप्रतिपत्तिर्व्याधितरूपहेतुविप्रतिपत्तिस्तत्र । कारणं एकदेशेन ज्ञानम् । सापवादमिति सदोषम् । सम्यक्प्रतिपत्तिः सम्प्रतिपत्तिः ॥ ८ ॥

अथास्मै प्रोवाच भगवानात्रेयः—इह खल्वग्निवेश । विंशतिविधाः क्रिमयः पूर्वमुद्दिष्टा नानाविधेन प्रविभागेनान्यत्र सहजेभ्यः, ते पुनः प्रकृतिभिर्भिद्यमानाश्चतुर्विधास्तद्यथा—पुरीषजाः श्लेष्मजाः शोणितजा मलजाश्चेति ॥ ९ ॥

पूर्वमुद्दिष्टा इत्यष्टोदरीये संज्ञामात्रकथिताः । अन्यत्र सहजेभ्य इत्यनेन शरीरसहजास्त्ववैकारिकाः क्रिमयो विंशतेरप्यधिका भवन्तीति दर्शयति । प्रकृतिभिरिति कारणैः । मलजा इति बाह्यमलजाः ॥ ९ ॥

तत्र मलो बाह्यश्चाभ्यन्तरश्च । तत्र बाह्ये मलेजातान्मलजान् संचक्ष्महे—तेषां समुत्थानम्,—मृजावर्जनम् । स्थानम्,—केशश्मश्रुलोमपक्ष्मवासांसि । संस्थानम्, अणवस्तिलाकृतयो बहुपादाः । वर्णः, कृष्णः शुक्लश्च । नामानि यूकाः पिपीलिकाश्चेति । प्रभावम् कण्डूजननं कोठपिडकाभिनिर्वर्त्तनं च चिकित्सितं त्वेषामपकर्षणं मलोपघातो मलकराणां च भावानामनुपसेवनमिति ॥ १० ॥

शोणितजानां तु खलु कुष्ठैः समानं समुत्थानम् । स्थानम्, रक्तवाहिन्यो धमन्यः । संस्थानम्, अणवो वृत्ताश्चापादाश्च सूक्ष्मत्वाच्चैके भवन्त्यदृश्याः । वर्णः ताम्रः । नामानि,—केशादा लोमादा लोमद्वीपाः सौरसा औडुम्बरा जन्तुमातरश्चेति । प्रभावम्, केशश्मश्रुनखलोमपक्ष्मापध्वंसो व्रणगतानां च हर्षकण्डूतोदसंसर्पणान्यतिवृद्धानां च त्वक्शिरास्नायुमांसतरुणास्थिभक्षणमिति चिकित्सितमप्येषां कुष्ठैः समानम्, तदुत्तरकालमुपदेक्ष्यामः ॥ ११ ॥

श्लेष्मजाः क्षीरगुडतिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहाजीर्णपूतिक्लिन्नसंकीर्णविरुद्धासात्म्यभोजनसमुत्थानाः तेषामामाशयः स्थानम् । प्रवर्द्धमानास्तूर्ध्वमधो वा विसर्पन्त्युभयतो वा । संस्थानवर्णविशेषास्तु श्वेताः पृथुब्रध्नसंस्थानाः केचित्, केचिद्वृत्तपरिणाहा गण्डूपदाकृतयश्च श्वेताः ताम्रावभासाः, केचिदणवो दीर्घास्तन्त्वाकृतयः श्वेताः, तेषां त्रिविधानां श्लेष्मनिमित्तानां क्रिमीणां नामानि उदरादा अन्त्रादा हृदयचराश्चुरवो दर्भपुष्पाः सौगन्धिका महागुदा । इति । प्रभावम् हृल्लास आस्यस्रवणमरोचकाविपाकौ ज्वरो मूर्च्छा जृम्भा क्षवथुरानाहोऽङ्गमर्दश्छर्दिः कार्श्यं पारुष्यमिति१२॥

पिपीलिकां लिक्षां केचिदाहुः । क्रिमीणां संज्ञा स्वशास्त्रव्यवहारसिद्धा देशान्तरप्रसिद्धा च बोद्धव्या । प्रभावमिति स्वशक्तिसंपाद्यमित्यर्थः । हर्षकण्ड्वादयो व्रणदेश एव ज्ञेयाः । परमान्नं पायसम् । संकीर्णभोजनं घृणाविषयमिश्रितव्यञ्जनादिभोजनम् । ब्रध्नो मांसपेशी ॥ १०—१२ ॥

पुरीषजास्तुल्यसमुत्थानाः श्लेष्मजैः, तेषां स्थानम् पक्वाशयः । प्रवर्द्धमानास्त्वधो विसर्पन्ति । यस्य पुनरामाशयाभिमुखाः स्युर्यदन्तरम्, तदन्तरं तस्योद्गारनिश्वासाः पुरीषगन्धिनः स्युः संस्थानवर्णविशेषास्तु सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घा ऊर्णांशुसङ्काशाः केचित्, केचित् पुनः स्थूलवृत्तपरीणाहाः

श्यावनीलहरितपीताः। तेषां नामानि, ककेरुका मकेरुका लेलिहाः सशूलकाः सौसुरादाश्चेति। प्रभावम् पुरीषभेदः कार्श्यं पारुष्यं लोमहर्षाभिनिर्वर्तनं च, त एवास्य गुदमुखं परितुदन्तः कण्डूं चोपजनयन्तो गुदमुखं पर्यासते त एव जातहर्षा गुदनिष्क्रमणमतिवेलं कुर्वन्ति, इत्येष श्लेष्मजानां पुरीषजानां च क्रिमीणां समुत्थानादिविशेषः॥ १३॥

यदन्तरमिति यस्मिन् काले, तदन्तरं तत्कालमेव। ऊर्णांशुसंकाशा इति मेषलोमतुल्याः। पर्यासत इति क्षिपन्ति। किंवा गुदं परिवार्यासते। अतिवेलमिति पुनः पुनः॥१३॥

चिकित्सितं तु खल्वेषां समासेनोपदिश्य पश्चाद्विस्तरेणोपदेक्ष्यामः तत्र सर्वक्रिमीणामपकर्षणमेवादितः कार्यम्, ततः प्रकृतिविघातोऽनन्तरं निदानोक्तानां भावानामनुपसेवनमिति॥ १४॥

तत्रापकर्षणं हस्तेनाभिगृह्य विमृश्योपकरणवतापनयनमनुपकरणेन वा, स्थानगतानां तु क्रिमीणां भेषजेनापकर्षणम्,[1] न्यायतस्तु तच्चतुर्विधम्, तद्यथा—शिरोविरेचनं वमनं विरेचनमास्थापनमित्यपकर्षणविधिः॥ १५॥

प्रकृतिविघातस्त्वेषां कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगो यच्चान्यदपि किंचित् श्लेष्मपुरीषप्रत्यनीकभूतम्, तत् स्यादिति प्रकृतिविघातः॥१६॥

अनन्तरं निदानोक्तानां भावानामनुपसेवनमिति यदुक्तं निदानविधौ, तस्य विसर्जनं तथाप्रायाणां चापरेषां द्रव्याणाम्॥ १७॥

इति लक्षणतश्चिकित्सितमनुव्याख्यातमेतदेव पुनर्विस्तरेणोपदेक्ष्यते—॥ १८॥

अपकर्षणं हस्तादि संशोधनानि च। प्रकृतेः कारणस्य श्लेष्मरूपस्य। विघातः प्रकृतेरित्यर्थः। उपकरणवतेति सन्दंशाद्युपकरणयुक्तेन। तत् स्यादिति विघातः स्यादिति योजना। निदानोक्तानां भावानामनुपसेवनमिति विवरणानुवादः। अस्य विवरणम्—'यदुक्तम्' इत्यादि। तथाप्रायाणामिति श्लेष्मजपुरीषजक्रिमिनिदानसदृशानामित्यर्थः। लक्षणत इति संक्षेपतः संक्षेपो हि विस्तरस्य ग्राहकं लक्षणं भवति॥ १४—१८॥

अथैनं क्रिमिकोष्ठमातुरमग्रे षड्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्यामुपपाद्य श्वोभूते एनं संशोधयितास्मीति क्षीरदधिगुडतिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहसंप्रयुक्तैर्भोज्यैः सायंप्रातरुपपादयेत् समुदीरणार्थं च क्रिमीणां कोष्ठाभिसरणार्थं च भिषक्। अथ व्युष्टायां रजन्यां सुखोषितं सुप्रजीर्णभुक्तं च विज्ञायास्थापनवमनविरेचनैस्तदहरेवोपपादयेत्, उपपादनीयश्चेत्स्यात् सर्वान् परीक्ष्य विशेषान् समीक्ष्य सम्यक्॥ १९॥

कोष्ठाभिसरणार्थमिति क्षीरगुडादिलोभेन देशान्तरं परित्यज्य कोष्ठगमनार्थम्। तदहरेवेत्येकस्मिन् दिने। एतच्चैकदिन एव भूरिकर्मकरणं व्याधिप्रभावाद्बोद्धव्यम्। एतच्चैकाहेन सर्वकरणं यदि शरीरबलादिसंपद्युक्तः पुरुषो भवति, तदैवं परं कर्तव्यम्, नान्यथेत्याह—उपपादनीयश्चेत्स्यादित्यादिना १९

अथ 'आहर' इति ब्रूयात् मूलकसर्षपलशुनकरञ्जशिग्रुमधुशिग्रुकमठखरपुष्पाभूस्तृणसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकानि सर्वाण्यथवा यथालाभं तान्याहृतान्यभिसमीक्ष्य खण्डशश्छेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समावाप्य गोमूत्रेणार्धोदकेनाभ्यासिच्य साधयेत् सततमुद्घट्टयन् दर्व्या। तस्मिन् शीतीभूते तूपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु स्थालीमवतार्य सुपरिपूतं कषायं सुखोष्णं मदनपिप्पलीफलविडङ्गकल्कतैलोपहितं स्वर्जिकालवणितमभ्यासिच्य वस्तौ विधिवदास्थापयेदेनम्। तथाकालर्ककुटजाढकीकुष्ठकैटर्यकषायेण वा, तथा शिग्रुपीलुकुस्तुम्बुरुकटुकासर्षपकषायेण, तथामलकशृङ्गवेरदारुहरिद्रापिचुमर्दकषायेण मदनफलादिसंयोगसंपादितेन त्रिवारं स्थापयेत्॥ २०॥

मधुशिग्रुः शोभांजनम्। अत्र क्वाथ्यद्रव्यजलादिमानं क्वाथपरिभाषया कर्तव्यम्। उपयुक्तभूयिष्ठे प्रक्षीणभूयिष्ठ इत्यर्थः। गतरसेष्वौषधेष्विति जले संक्रान्तरसेषु। अनेन कषायसिद्धिलक्षणेन यावता जलेन पाकेन चौषधानि गतरसानि भवन्ति, तावदेव जलं देयम्, तावांश्च पाकः कर्तव्यः, नावश्यं परिभाषया सर्वत्र क्रमं दर्शयति। परिपूतमिति वस्त्रगालितम्। वस्तौ चरकादिमानं सिद्धौ वक्ष्यमाणेन ज्ञेयम्। अलर्को मन्दारः॥ २०॥

प्रत्यागते च पश्चिमे वस्तौ प्रत्याश्वस्तं तदहरेवोभयतोभागहरं संशोधनं पाययेद्युक्त्या, तस्य विधिरुपदेक्ष्यते मदनफलपिप्पलीकषायस्यार्धाञ्जलिमात्रेण त्रिवृत्कल्काक्षमात्रमालोड्य पातुमस्मै प्रयच्छेत्, तदस्य दोषमुभयतो निर्हरति साधु एवमेव कल्पोक्तानि वमनविरेचनानि संसृज्य पाययेदेनं बुद्ध्या सर्वविशेषानवेक्ष्यमाणो भिषक्॥२१॥

अथैनं सम्यग्विरिक्तं विज्ञायापराह्णे शैखरिककषायेण सुखोष्णेन परिषेचयेत्। तेनैव च कषायेण बाह्याभ्यन्तरान् सर्वोदकार्थान् कारयेत् शश्वत्तदभावे वा कटुतिक्तकषायाणामौषधानां क्वाथैर्मूत्र-

१ अभिमृश्येति पाठान्तरम्।

क्षारैर्वा परिषेचयेत्, परिषिक्तं चैनं निर्वातमागारमनुप्रवेश्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसिद्धेन यवाग्वादिना क्रमेणोपक्रामयेत्। विलेप्याः क्रमागतं चैनमनुवासयेद्विडङ्गतैलेनैकान्तरं द्विस्त्रिर्वा ॥ २२ ॥

यदि पुनरस्यातिप्रवृद्धान् शीर्षादान् क्रिमीन् मन्येत, शिरस्येवाभिसर्पतः कांश्चित्ततः स्नेहस्वेदाभ्यामस्य शिर उपपाद्य विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन ॥ २३ ॥

पश्चिमे तृतीयपुटके। संसृज्येति मिश्रीकृत्य। शैखरिककषायेणेति विडङ्गकषायेण विडङ्गकषायो हि वैद्यकव्यवहारात् शैखरिककषाय उच्यते। विलेप्याः क्रमागतमिति कृतयवाग्वादिक्रममित्यर्थः, अपामार्गतण्डुलादिनेत्यपामार्गतण्डुलीयोक्तेन ॥ २१—२३ ॥

यस्त्वभ्यवहार्यविधिः प्रकृतिविघातायोक्तः क्रिमीणाम्, सोऽनुव्याख्यास्यते,—मूलकपर्णीं समूलाग्रप्रतानामाहृत्य खण्डशश्छेदयित्वा उलूखले क्षोदयित्वा पाणिभ्यां पीडयित्वा रसं गृह्णीयात्, तेन रसेन लोहितशालितण्डुलपिष्टं समालोड्य पूपलिकाः कृत्वा विधूमेष्वङ्गारेषूपकुड्य विडङ्गतैललवणोपहिताः क्रिमिकोष्ठाय भक्षयितुं प्रयच्छेत्, अनन्तरं चाम्लकाञ्जिकमुदश्वित् पिप्पल्यादिपञ्चवर्गसंसृष्टं सलवणमनुपाययेत् ॥ २४ ॥

अनेन कल्पेन मार्कवार्कसहचरनीपनिर्गुण्डीसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकवकुलकुटजसुवर्णक्षीरीस्वरसानामन्यतमस्मिन् कारयेत् पूपलिकाः तथा किलिहीकिराततिक्तकसुवहामलकहरीतकीविभीतकस्वरसेषु कारयेत् पूपलिकाः स्वरसांश्चैतेषामेकैकशो द्वन्द्वशः सर्वशो वा मधुविलिखितान् प्रातरनन्नाय पातुं प्रयच्छेत् २५

मूलकपर्णी शोभाञ्जनम्। उपकुड्येति पाचयित्वा, 'कुड दाहे' इति धातुः पठ्यते। पिप्पल्यादि पञ्चवर्गोऽत्रैव पेयादिक्रमोक्तपञ्चकोलम्। सहचरो झिण्टिकी। मधुविलिखितानिति मधुनालोडितान् ॥ २४—२५ ॥

अथाश्वशकृदाहृत्य महति किलिञ्जके प्रस्तीर्यातपे शोषयित्वोदूखले क्षोदयित्वा दृषदि पुनः श्लक्ष्णानि चूर्णानि कारयित्वा विडङ्गकषायेण त्रिफलाकषायेण वा अष्टकृत्वो दशकृत्वो वा आतपे सुपरिभावितानि भावयित्वा दृषदि पुनः सूक्ष्माणि चूर्णानि कारयित्वा नवे कलशे समावाप्यानुगुप्तं निधापयेत्। तेषां खलु चूर्णानां पाणितलं[1] चूर्णं वा यावद्वा साधु मन्यते, तत् क्षौद्रेण संसृज्य क्रिमिकोष्ठाय लेढुं प्रयच्छेत् ॥२६॥

तथा भल्लातकास्थीन्याहृत्य कलशप्रमाणेन संपोथ्य स्नेहभाविते दृढे कलशे सूक्ष्मानेकच्छिद्रब्रध्ने शरीरमुपवेष्ट्य मृदावलिप्ते समावाप्योलुपेन पिधाय भूमावाकण्ठं निखातस्य स्नेहभावितस्यैव दृढकुंभस्योपरि समारोप्य समन्ताद्गोमयैरुपचित्य दाहयेत्, स यदा जानीयात् साधु दग्धानि गोमयानि विगतस्नेहानि भल्लातकास्थीनीति ततस्तं कुंभमुद्धारयेत्। अथ तस्माद्द्वितीयात् कुंभात्स्नेहमादाय विडङ्गतण्डुलचूर्णैः स्नेहार्द्धमात्रैः प्रतिसंसृज्यातपे सर्वमहः स्थापयित्वा ततोऽस्मै मात्रां प्रयच्छेत् पानाय, तेन साधु विरिच्यते, विरिक्तस्य चानुपूर्वी यथोक्ता ॥ २७ ॥

एवमेव भद्रदारुसरलकाष्ठस्नेहानुपकल्प्य पातुं प्रयच्छेदनुवासयेच्चैनमत एवानुवासनकाले ॥२८॥

अथ 'आहर' इति ब्रूयात्, शारदान्नवांस्तिलान् संपदुपेतान्, तानाहृत्य सुनिष्पूतान्निष्पूय सुशुद्धान् शोधयित्वा विडङ्गकषाये सुखोष्णे निर्वापयेदादोषगमनात्, गतदोषानभिसमीक्ष्य सुप्रलूनान् प्रलुच्य पुनरेव सुनिष्पूतान् निष्पूय सुशुद्धान् शोधयित्वा विडङ्गकषायेण त्रिःसप्तकृत्वः सुपरिभावितान् भावयित्वातपे शोषयित्वोलूखले सङ्क्षुद्य दृषदि पुनः श्लक्ष्णपिष्टान् कारयित्वा द्रोण्यामभ्यवधाय विडङ्गकषायेण मुहुर्मुहुरवसिञ्चन् पाणिमर्दमेव मर्दयेत्। तस्मिन् खलु प्रपीड्यमाने यत्तैलमुदियात्तत्पाणिभ्यां पर्यादाय शुचौ दृढे कलशे समारोप्यानुगुप्तं निधापयेत् ॥ २९ ॥

सुपरीत्यादि।—यथा सुपरिभावितानि भवन्ति, तथा भावयित्वेत्यर्थः। अनुगुप्तमिति वातायनतुगमनीयं कृतरक्षं च यथा भवति। ब्रध्नो गुदः, इह तु कलशाधोभागे। शरीरमुपवेष्ट्येति वेष्टयित्वा। उलुपः पिधानम्। स इति भल्लातकस्नेहसाधकः। द्वितीयादिति अधःस्थात् घटात्। निष्पूयेति मृत्तिकावयवकरान्निचित्य। शोधयित्वेति प्रक्षाल्य। आदोषगमनादित्यत्र तिलदोषगमनं तिलत्वग्लग्नमलादिगमनं ज्ञेयम्। प्रलूच्य निस्तुषीकृत्य। अभ्यवधायेति आरोप्य। पाणिभ्यां पर्यादायेति पाणिलग्नं पुनः पुनर्गृहीत्वा ॥ २६—२९ ॥

अथ 'आहर' इति ब्रूयात्, तिल्वकोद्दालकयोर्द्वौ बिल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विडङ्गकषायेणातोऽर्द्धमात्रौ श्यामात्रिवृतयोरतोऽर्द्धमात्रौ दन्तीद्रवन्त्योरतोऽर्द्धमात्रौ च चव्यचित्रकयोरित्येतं सम्भारं विडङ्गकषायस्यार्द्धाढकमात्रेण प्रतिसंसृज्य

[1] अक्षमात्रम्, अक्षः पिचुः पाणितलम्।

ततस्तैलप्रस्थमावाप्य सर्वमालोड्य महति पर्यगे समासिच्याग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेद्दर्व्या सततमवघट्टयन्। स यदा जानीयाद्विरमति शब्दः प्रशाम्यति च फेनः प्रसादमापद्यते स्नेहो यथास्वं गन्धवर्णरसोत्पत्तिः संवर्तते च भैषज्यमङ्गुलिभ्यां मृद्यमानमनतिमृद्वनतिदारुणमनङ्गुलिग्राहि चेति स कालस्तस्यावतारणाय। ततस्तमवतीर्णं शीतीभूतमहतेन वाससा परिपूय शुचौ दृढे कलशे समासिच्य पिधानेन पिधाय शुक्लेन वस्त्रपट्टेनावच्छाद्य सूत्रेण सुबद्धं सुनिगुप्तं सन्निधापयेत्। ततोऽस्मै मात्रां प्रयच्छेत् पानाय, तेन साधु विरिच्यते सम्यगपहृतदोषस्य चास्यानुपूर्वी यथोक्ता। ततश्चैनमनुवासयेत् अनुवासनकाले एतेनैव पाकविधिना सर्षपातसीकरञ्जकोपातकीस्नेहानुपकल्प्य पाययेत् सर्वविशेषानपेक्ष्यमाणः तेनागदो भवतीति ॥ ३० ॥

इत्येतत् द्वयानां श्लेष्मपुरीषसम्भवानां क्रिमीणां समुत्थानसंस्थानवर्णनामप्रभावचिकित्सितविशेषाः व्याख्याताः सामान्यतः, विशेषतस्त्वल्पमात्रमास्थापनानुवासनानुलोमहरणभूयिष्ठं तेष्वेवौषधेषु पुरीषजानां क्रिमीणां चिकित्सितं कार्यमिति, मात्राधिकं पुनः शिरोविरेचनवमनोपशमनभूयिष्ठं तेष्वेवौषधेषु श्लेष्मजानां क्रिमीणां चिकित्सितं कार्यमिति; एष क्रिमिघ्नो भेषजविधिरनुव्याख्यातो भवति, तमनुतिष्ठता यथास्वहेतुवर्जने प्रयतितव्यम् ॥ ३१ ॥

यथोद्देशमेवमिदं क्रिमिकोष्ठचिकित्सितं यथावदनुव्याख्यातं भवतीति ॥ ३२ ॥

भवन्ति चात्र।

अपकर्षणमेवादौ क्रिमीणां भेषजं स्मृतम्।
ततो विघातः प्रकृतेर्निदानस्य च वर्जनम् ॥
अयमेव विकाराणां सर्वेषामपि निग्रहे।
विधिर्दृष्टस्त्रिधा योऽयं क्रिमीनुद्दिश्य कीर्त्तितः ॥
संशोधनं संशमनं निदानस्य च वर्जनम् ॥
एतावद्भिषजा कार्यं रोगे रोगे यथाविधि ॥ ३३ ॥

तत्र श्लोकौ।

व्याधितौ पुरुषौ ज्ञाऽज्ञौ भिषजौ सप्रयोजनौ।
विंशतिः क्रिमयस्तेषां हेत्वादिः सप्तको गणः।
उक्तो व्याधितरूपीये विमाने परमर्षिणा ॥
शिष्यसंबोधनार्थं च व्याधिप्रशमनाय च ॥ ३४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने व्याधितरूपीयविमानं नाम सप्तमोऽध्यायः।



उद्दालको बहुवारः। बिल्वमात्रौ पलप्रमाणौ। पर्यगः कटाहः। यथास्वमिति यावन्मात्रं यद्द्रव्यं तैलसंस्कारकम्, तदानुरूप्येण वर्णादिसम्पत्तिरित्यर्थः। संवर्तित इति वर्तिवद्भवति। अल्पमात्रमिति आस्थापनानुलोमहरणद्रव्यातिरिक्तं भेषजमल्पमात्रं कर्तव्यमित्यर्थः। एतदेवापकर्षणादि त्रयं रोगान्तरे शब्दान्तरेणोच्यत इत्याह—अयमेवेत्यादि।—अत्र संशोधनमपहरणम्, संशमनं विघातः निदानवर्जनं तु शब्देनापि समानम् ॥ ३०–३४ ॥

इति महामहोपाध्यायश्रीमच्चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां व्याधितरूपीयविमानम् ॥

---

## अष्टमोऽध्यायः।

अथातो रोगभिषग्जितीयं विमानं व्याख्यास्यामः ॥ १ ॥ इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्याये व्याधितरूपभ्रान्तिज्ञानमुक्तम्, तच्च बुद्धिदोषाद्भवति, तेन विशुद्धबुद्ध्युत्पादहेतूनामध्ययनाध्यापनतद्विद्यसम्भाषाणां रोगभिषग्जितीयोभिधीयते। रोगभिषग्जितं चिकित्सितमधिकृत्य कृतोऽध्यायो रोगभिषग्जितीयः। रोगचिकित्साकारित्वं चास्य, चिकित्सोपयुक्तस्य सम्यग्ज्ञानसाधनसाध्यस्याध्ययनविध्यादेः तथा करणकारणदेशाभिधानाद् ज्ञेयम् ॥ १–२ ॥

बुद्धिमानात्मनः कार्यगुरुलाघवे कर्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनात् भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत। विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके, तत्र यन्मन्येत सुमहद्यशस्विधीरपुरुषासेवितमर्थबहुलमाप्तजनस्य पूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसंग्रहक्रमम् स्वाधारमनवपतितशब्दमकष्टशब्दम् पुष्कलाभिधानम् क्रमागतार्थमर्थतत्त्वनिश्चयप्रधानम् सङ्गतार्थमसंकुलप्रकरणमाशुप्रबोधकम् लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम्। शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वम् ॥ ३ ॥

इहाध्ययनविध्यादिषु[1] कर्तव्येषु यादृक् शास्त्रमध्येयम्, तदेवायुर्वेदार्थिपुरुषमुपदर्श्य दर्शयन्नाह—बुद्धिमानित्यादि।—कार्यं कर्तव्यम्, तस्य गौरवं च बहुप्रयाससाध्यत्वेन लाघवं वा स्वल्पप्रयाससाध्यत्वेनेति कार्यगुरुलाघवम्। कर्मफलमिति कार्यफलम्, एतच्च तादात्विकं फलमीप्सितम्। अनुबन्धमिति

---

१ अध्ययनविधादेरिति पाठान्तरम्।

कार्यस्यैवायतीयं फलम् । देशकालाविति कर्तव्यकार्यानुगुणौ देशकालावित्यर्थः । एतत् सर्वं विदित्वा । युक्तिदर्शनादुपपत्तिदर्शनात् । यदि भिषग् भवितुमिच्छुः स्यात्, तदा शास्त्रं तावदादितः परीक्षेत । एवं मन्यते—य आयुर्वेदाध्ययनलक्षणे कार्ये स्वशक्त्यपेक्षया गौरवं मन्यते, स न वर्तते, यश्चायुर्वेदफलेनारोग्यादिना अर्थी न भवति, स च तथा, यश्चानुपादेयायुर्वेदज्ञाने देशे स्थितः, स च तथा, यस्य च वपुषो वार्द्धक्यलक्षणः कालः, स चायुर्वेदाध्ययनान्तगमनाशक्तत्वादेव यथोक्तानुपपत्तिदर्शनाद्भिषग्भवितुं नेच्छति । अतो न तान् प्रति आयुर्वेदशास्त्रपरीक्षा अभ्युपदिशामः । यस्तु यथोक्तविपरीतधर्मयोगी, स चायुर्वेदाध्ययनोपादानाद्भिषग्बुभूषुः शास्त्रं परीक्षेत । विविधानीत्यगुणवन्ति । सुमहद्यशस्वि च धीरपुरुषासेवितं च । किंवा, सुमहद्यशस्विधीरपुरुषैरासेवितमिति विग्रहः । आप्तजनपूजितमिति बहुविधैराप्तैर्यथार्हमनुमतम् । उत्कृष्टमध्यमाल्पबुद्धयः त्रिविधाः शिष्याः । अनपगतपुनरुक्तमिति कर्तव्ये[१] यद्दोषपाठं करोति, तेनाधिकरणवशप्राप्तं यत्करोति, तेनापि पुनरुक्तमदोषं भवति । वचनं हि—"अधिकरणवशाद्दीर्घाद्गुणदोषप्राप्तितोऽर्थसंबन्धात् स्तुत्यर्थं संशयतः शिष्यधियां चातिवृद्ध्यर्थं च । अल्पतोऽन्तरितत्वाद्विशेषणेष्वपि च तन्त्रकृद्भिस्तु । यत्तन्त्रे स्यात् पुनरुक्तं नेष्यते तद्विभाव्य विवरणम्" । स्वाधारमिति शोभनाभिधेयम् । अनवपतितमित्यग्राम्यशब्दम् । अकष्टशब्दमिति अकृच्छ्रोच्चार्यशब्दम्, किंवा, अप्रसिद्धाभिधेयशब्दम् । पुष्कलाभिधानमिति सम्यगर्थसमर्पकवाक्यम् । क्रमागतार्थमिति पारिपाट्यागतार्थम् । सङ्गतार्थमिति प्रतिपादितार्थम् । असङ्कुलप्रकरणमिति मिश्रीभूतप्रकरणम्[२] । लक्षणवदिति आयुर्वेदप्रधानार्थहेतुलिङ्गार्थासाधारणधर्मकथनवत् । किंवा, प्रशस्तशास्त्रलक्षणवत् । उदाहरणवदिति दृष्टान्तवत् ॥ ३ ॥

**ततोऽनन्तरमाचार्यं परीक्षेत, तद्यथा पर्यवदातश्रुतं परिदृष्टकर्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थम्, इत्येवंगुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः संपादयति ॥ ४ ॥**

अध्येतव्यं शास्त्रं परीक्ष्य यस्मात्तत् शास्त्रमध्येतव्यम्, तस्याचार्यस्य परीक्षामाह—तत इत्यादि ।—दक्षमिति अवामबुद्धिम् । उपकरणवन्तमित्यनेनानुपकरणे गुरौ चिकित्सावृत्त्यभावात् कर्मदर्शनं न भवति । अनुपस्कृतविद्यमिति शास्त्रान्तरज्ञानेन नास्त्येवोपस्कृता विद्या यस्य स तथा । यथायुर्वेदज्ञः सन् शास्त्रान्तरेणापि संस्कृतो भवति, स तु नितरामुपादेयः । आर्तव इति यथोचितकालभवः ॥ ४ ॥

**तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्तृवच्चाप्रमत्तः । ततः तत्प्रसादात् कृत्स्नं शास्त्रमधिगम्य शास्त्रस्य दृढतायामभिधानस्य सौष्ठवेऽर्थस्य विज्ञाने वचनशक्तौ च भूयः प्रयतेत सम्यक् ॥ ५ ॥**

अग्न्यादिवद्दृष्टान्तदर्शनेन, येन येन भावेनाग्न्यादयः सेव्यन्ते, तथा तथा गुरुः सेव्यत इति दर्शयति । दृढतायामिति शास्त्रग्रहणस्य स्थैर्ये । अभिधानस्येति शास्त्राभिधानस्य । वचनशक्तौ अर्थकीर्तनसामर्थ्ये ॥ ५ ॥

**तत्रोपाया व्याख्यास्यन्ते—अध्ययनमध्यापनं तद्विद्यसम्भाषेत्युपायाः ॥ ६ ॥**

**तत्रायमध्ययनविधिः—कल्यः कृतक्षणः प्रातरुत्थायोपव्युषं वा कृत्वावश्यकमुपस्पृश्योदकं देवगोब्राह्मणगुरुवृद्धसिद्धाचार्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टो मनःपुरःसरीभिर्वाग्भिः सूत्रमनुपरिक्रामन् पुनः पुनरावर्तयेत्, बुद्ध्वा सम्यगनुप्रविश्यार्थतत्त्वं स्वदोषपरिहारपरदोषप्रमाणार्थमेवं मध्यन्दिनेऽपराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येदित्यध्ययनविधिः ॥६।१ ॥**

तत्रेति शास्त्रदृढतादौ, तद्विद्यसंभाषा तच्छास्त्राध्यायिना सह उद्वाहिका । कल्यो नीरोगः । कृतक्षण इत्यनन्यव्यापारंत्वेनाध्ययनाय कृतकालपरिग्रहः । प्रातर्वा उत्थाय, उपव्युषं वा उत्थायेति योजना । उपव्युषमिति किंचिच्छेषायां रात्रौ । मनःपुरःसरीभिरिति एकाग्रमनःप्रणीताभिः । स्वदोषपरिहारपरदोषप्रमाणार्थमिति स्वकीयाध्ययनदोषपरिहारार्थं परकीयाध्ययनदोषप्रमाणार्थं परकीयाध्ययनदोषज्ञानार्थमित्यर्थः । प्रमीयतेऽनेनेति प्रमाणं ज्ञानमात्रमीप्सितम् । सम्यग् बुद्ध्वार्थतत्त्वम्, बुद्ध्वा चाधीयानो निर्दोषाध्ययनो भवति, सम्यगध्ययनज्ञानाच्च परस्य सदोषमध्ययनं प्रतिपद्यते । इत्यध्ययनविधिरिति पूर्वप्रतिज्ञाताध्ययनविधेरुपसंहरणम्, यथोक्तेन विधिनाऽध्ययनं क्रियमाणं सुसंगृहीतं भवति । दृष्टादृष्टसंपत्त्याध्ययनकालवर्जनम्, वेदाध्ययने निषिद्धमेवात्रापि तज्ज्ञेयम्, इति न विशेषेणोक्तम् ॥ ६ ॥ १ ॥

**अथाध्यापनविधिः अध्यापने कृतबुद्धिराचार्यः शिष्यमादितः परीक्षेत तद्यथा प्रशान्तमार्यप्रकृतिमक्षुद्रकर्माणमृजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठमम्मिणं धृतिमन्तमनहङ्कृतिं मेधाविनं वितर्कस्मृतिसम्पन्नमुदारसत्त्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्त्वाभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतवेशमव्यसनिनं शील-**

१ वक्तव्ये इति पाठान्तरम् । २ मिश्रीकृतप्रकरणमिति पाठान्तरम् ।

शौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नमध्ययनाभिकाममर्थविज्ञाने कर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणमाचार्यं सर्वानुशिष्टिप्रतिकरमनुरक्तमेवंगुणसमुदितमध्याप्यमेवमाहुः ॥ ६।१२ ॥

इह शिष्यगुणेषु ऋजुचक्षुर्मुखनासावंशत्वादयो गुणाः सहजलक्षणत्वेनोपादेयाः । अतोविपरीतलक्षणो हि जडो भवति । तद्विद्यवृत्तमित्यायुर्वेदज्ञाचारम् । निभृतमिति विनीतम् । अनुद्धतमित्यनहङ्कृतम् । अनुरागशब्देनाध्ययनानुराग उच्यते । अनुरक्तमित्यनेन च गुरावनुरक्तत्वमुच्यते । दाक्ष्यं दर्शयित्वाप्यनलसमिति यत् करोति तेन दाक्ष्यादारब्धेऽपि कार्ये बहुप्रयाससाध्येऽनलसमित्याह अनुशिष्टिप्रतिकरमित्याज्ञाकरम् ॥ ६।१२ ॥

एवंविधमध्ययनार्थिनमुपस्थितमारिराधयिषुमनुभाषेत—अथोदगयने शुक्लपक्षे प्रशस्तेऽहनि तिष्यहस्तश्रवणाश्वयुजामन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे कल्याणे च करणे मैत्रे मुहूर्त्ते स्नातः कृतोपवासो मुण्डः कषायवस्त्रसंवीतः समिधोऽग्निमाज्यमुपलेपनमुदकुंभांश्च गन्धहस्तो माल्यदामदीपहिरण्यहेमरजतमणिमुक्ताविद्रुमक्षौमपरिधिकुशलाजसर्षपाक्षतांश्च शुक्लांश्च सुमनसो ग्रथिताऽग्रथितांश्च मेध्यान् भक्ष्यान् गन्धांश्च घृष्टानादायोपतिष्ठस्वेति ॥ ६।१३ ॥

अथ सोऽपि तथा कुर्यात् ॥ ६।१४ ॥

तिष्यः पुष्यनक्षत्रम् । अश्वयुगश्विनी । शशिनि कल्याण इति उक्तनक्षत्रेष्वध्ययनार्थिनो यतः शशी कल्याणकरो भवति, उदित एव शशिन्यध्ययनं कर्तव्यम् । मैत्रे मुहूर्त्त इत्यनुकूले मुहूर्ते, मुहूर्तादयश्च शिवभुजगादयः । मुण्डः कृतवापनः । गन्धेन हस्तः पञ्चाङ्गुली गन्धहस्तः । हिरण्यशब्देनाघटितं हेम गृह्यते, हेमशब्देन च घटितम् । परिधयो हस्तप्रमाणा होमकुण्डचतुःपार्श्वे स्थाप्याः पालाशादिदण्डा उच्यन्ते । अत्र चोपार्जितवस्तुसान्निध्यमेव फलप्रदमिति ऋषिवचनादुन्नीयते, तेन, "अन्योपाहृतमपीष्टगन्धादि नोद्भावनीयम्" ॥ ६।१३ ॥ ६।१४ ॥

तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक्प्रवणे उदक्प्रवणे वा चतुष्किष्कुमात्रं चतुरस्रं स्थण्डिलं गोमयोदकेनोपलिप्तं कुशास्तीर्णं सुपरिहितं परिधिभिश्चतुर्दिशं यथोक्तचन्दनोदकुंभक्षौमहेमहिरण्यमुक्ताविद्रुमालङ्कृतं मेध्यभक्ष्यगन्धशुक्लपुष्पलाजसर्षपाक्षतोपशोभितं कृत्वा तत्र पालाशीभिरैङ्गुदीभिरौडुम्बरीभिर्माधुकीभिर्वा समिद्भिरग्निमुपसमाधाय प्राङ्मुखः शुचिरध्ययनविधिमनुविधाय मधुसर्पिर्भ्यां त्रिस्त्रिर्जुहुयादग्निं आशीःसंप्रयुक्तैर्मन्त्रैर्ब्रह्माणमग्निं धन्वन्तरिं प्रजापतिमश्विनाविन्द्रमृषींश्च सूत्रकारानभिमन्त्रयमाणः पूर्वं स्वाहेति ॥ ६।१५ ॥

शिष्यश्चैनमन्वालभेत हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत् । ततोऽनुपरिक्रम्य ब्राह्मणान् स्वस्ति वाचयेत् भिषजश्चाभिप्रपूजयेत् ॥ ६।१६ ॥

किष्कुरिह हस्तप्रमाणम्, सुपरिहितमिति सुवेष्टितम् । उपधायेत्यारोप्य । जुहुयादित्यध्यापक इत्यभिप्रायः । ब्रह्मादीन् स्वाहेति मन्त्रेण मन्त्रयमाण आचार्यः पूर्वमग्निं जुहुयादिति योजना । तेन ब्रह्मादिऋषिभिराशीःप्रयुक्ताभिर्ब्रह्मणे स्वाहेत्यन्ताभिर्होमः कर्तव्यः । शिष्यश्चैनमन्वालभेतेति शिष्योऽपि गुरुहोमान्तरमेव जुहुयादित्यर्थः ॥ ६।१५ ॥ ६।१६ ॥

अथैनमग्निसकाशे ब्राह्मणसकाशे भिषक्सकाशे चानुशिष्यात् ब्रह्मचारिणाश्मश्रुधारिणा सत्यवादिनाऽमांसादेन मेध्यसेविना निर्मत्सरेणाशस्त्रधारिणा च भवितव्यम्, न च ते मद्वचनात् किञ्चिदकार्यं स्यादन्यत्र राजद्विष्टात् प्राणहराद्विपुलादधर्म्यादनर्थसंप्रयुक्ताद्वाप्यर्थात्, मदर्पणेन मत्प्रधानेन मदधीनेन मत्प्रियहितानुवर्तिना च शश्वद्भवितव्यम्, पुत्रवद्दासवदर्थिवच्चोपचरताऽनुवस्तव्योऽहम्, अनुत्सेकेनावहितेनानन्यमनसा विनीतेनावेक्ष्यावेक्ष्यकारिणानसूयकेन न चानभ्यनुज्ञातेन प्रविचरितव्यम्, अनुज्ञातेन प्रविचरता पूर्वं गुर्वर्थोपान्वाहरणे यथाशक्ति प्रयतितव्यम्, कर्मसिद्धिमर्थसिद्धिं यशोलाभं च प्रेत्य च स्वर्गमिच्छता त्वया गोब्राह्मणमादौ कृत्वा सर्वप्राणभृतां शर्माशासितव्यमहरहरुत्तिष्ठता चोपविशता च सर्वात्मना चातुराणामारोग्ये प्रयतितव्यम्, जीवितहेतोरपि चातुरेभ्यो नाभिद्रोग्धव्यम् । मनसापि च परस्त्रियो नाभिगमनीयाः, तथा सर्वमेव परस्वम्, निभृतवेशपरिच्छदेन भवितव्यम्, अशौण्डेनापापेनापापसहायेन च श्लक्ष्णशुक्लधर्म्यशर्म्यधन्यसत्यहितमितवचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरणसंपत्सु नित्यं यत्नवता न च कदाचिद्राजद्विष्टानां राजद्वेषिणां वा महाजनद्विष्टानां महाजनद्वेषिणां वाप्यौषधमनुविधातव्यम् तथा सर्वेषामत्यर्थविकृतदुष्टदुःखशीलाचारोपचाराणामनपवादप्रतिकाराणां मुमूर्षूणां च तथैवासन्निहितेश्वराणां

प्रवणं निम्नमिति संस्कारतत्त्वे रघुनन्दनेनोक्तम् ।

१ किष्कुर्हस्ते वितस्तौ चेत्यमरः ।

स्त्रीणामनध्यक्षाणां वा, न च कदाचित् स्त्रीदत्तमामिषमादातव्यमननुज्ञातं भर्त्राथवाध्यक्षेण, आतुरकुलं चानुप्रविशता त्वया विदितेनानुमतप्रवेशिना सार्धं पुरुषेण सुसंवीतेनावाक्शिरसा स्मृतिमता स्तिमितेनावेक्ष्यावेक्ष्य मनसा सर्वमाचरता बुद्ध्या सम्यगनुप्रवेष्टव्यम् अनुप्रविश्य च वाङ्मनोबुद्धीन्द्रियाणि न क्वचित्प्रणिधातव्यानि अन्यत्रातुरादातुरोपकारार्थादातुरगतेष्वन्येषु वा भावेषु, न चातुरकुलप्रवृत्तयो बहिर्निश्चारयितव्याः, ह्रसितं चायुषः प्रमाणमातुरस्य न वर्णयितव्यं जानतापि तत्र यत्रोच्यमानमातुरस्यान्यस्य वाप्युपघाताय संपद्यते, विज्ञानवतापि च नात्यर्थमात्मनो ज्ञाने विकत्थितव्यम्, आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्त्येके ॥ ६।७ ॥

ते भवितव्यमिति त्वया भवितव्यम् । प्रविचरितव्यमिति चिकित्सार्थं व्यवहर्तव्यम् । गोब्राह्मणमादौ कृत्वेति प्रथमं गोब्राह्मणादीनां च शर्माऽऽशासितव्यम्, ततश्चेतरेषां प्राणिनाम् । उपविशता चेति च्छेदः । शुण्डा मद्यशाला, तत्प्रचारी शौण्डः । अशौण्डस्तु तदप्रचारी । शुक्लमिव शुक्लम्, निर्दोषत्वादेतद्वचनम् । यत्नवता भवितव्यमिति संबन्धः । राज्ञो द्विष्टो राजद्विष्टः । यस्तु राजानं द्वेष्टि, स राजद्वेषी । आचारस्योपचरणमाचारोपचारः । अनध्यक्षाणां वा न प्रतिकर्तव्यमिति योजना । प्रवृत्तय इति वार्ताः । तत्रेति न वर्णयितव्यमिति संबध्यते । अन्यस्य आतुरपुत्रपित्रादेः । अन्यत्र उदासीने जीवितह्रासकथनं यशस्करमेव, तत्र श्लाघा कर्तव्या । आप्तादपि हीत्यत्राप्तः सत्यवागुच्यते, अन्यत्रापि सत्यमेवाप्तं वक्ष्यति, यथाकालप्राप्तमेव ब्रूयादित्यर्थः ॥६।७॥

न चैव ह्यस्ति सुतरमायुर्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत्, एतच्च कार्यमेवंभूयश्च वृत्तसौष्ठवमनसूयता परेभ्योऽप्यागमयितव्यम् । कृत्स्नो हि लोको बुद्धिमतामाचार्यः । शत्रुश्चाबुद्धिमतामेव । अतश्चाभिसमीक्ष्य बुद्धिमताऽमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौक्यमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यं चेति । अतःपरं इदं ब्रूयात् देवताग्निद्विजातिगुरुवृद्धसिद्धाचार्येषु ते नित्यं सम्यग्वर्तितव्यम् । तेषु ते सम्यग्वर्तमानस्यायमग्निः सर्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युरतोऽन्यथा वर्तमानस्याशिवायेत्येवं ब्रुवति चाचार्ये शिष्यस्तथेति ब्रूयात् । यथोपदेशं च कुर्वन्नध्याप्यो ज्ञेयः अतोऽन्यथा त्वनध्याप्यः । अध्याप्यमध्यापयन् ह्याचार्यो यथोक्तैश्चाध्यापनफलैर्योगमाप्नोत्यन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमात्मानं च युनक्ति इत्युक्तावध्ययनाध्यापनविधी यथावत् ॥ ६।८॥

न चैव हीत्यादि । यस्मादायुर्वेदोऽपि ज्ञातुं न शक्यते प्रायस्तेनायुर्वेदज्ञानार्थमुद्यमं गच्छेत् । अस्मिन्निति दुस्तरे आयुर्वेदे । अनुक्तसद्वृत्तकरणार्थमाह एतच्चेत्यादि ।—एतच्चेति "अथैनमग्निसकाशे" इत्यादिग्रन्थोक्तमनुष्ठेयम् । एवंभूयश्च वृत्तसौष्ठवमिति उक्तसदृशं च साधुवृत्तमित्यर्थः । लौक्यं लोकानुमतम्; 'इति' शब्दोऽवधारणे । तेन, यदेवाऽमित्रस्य धन्यादिगुणयुक्तं वचस्तदेवानुविधातव्यं श्रोतव्यं च । यथोक्तैरिति शास्त्रान्तरेण, न ह्यखिलशास्त्रेऽध्ययनफलं साक्षात् क्वचिदुक्तम् ॥ ६।८ ॥

अध्ययनाध्यापनविधिवत् संभाषाविधिं अत ऊर्ध्वं व्याख्यास्यामः, भिषक् भिषजा सह संभाषेत । तद्विद्यसंभाषा हि ज्ञानाभियोगसंहर्षकरी भवति, वैशारद्यमपि चाभिनिर्वर्तयति वचनशक्तिमपि चाधत्ते यशश्चाभिदीपयति पूर्वश्रुते च सन्देहवतः पुनः श्रवणात् श्रुतसंशयमपकर्षति, श्रुते चासन्देहवतो भूयोऽध्यवसायमभिनिर्वर्तयति अश्रुतमपि च कंचिदर्थं श्रोत्रविषयमापादयति, यद्वाऽऽचार्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातम् तत्परस्परेण सह जल्पन् पिण्डेन विजिगीषुराह संहर्षात् । तस्मात्तद्विद्यसंभाषामभिप्रशंसन्ति कुशलाः ॥ ६।९ ॥

द्विविधा तु खलु तद्विद्यसंभाषा भवति सन्धाय संभाषा विगृह्य संभाषा च ॥ ६।१० ॥

संहर्षः स्पर्द्धा । ज्ञानार्थमभियोगसंहर्षौ करोतीति ज्ञानाभियोगसंहर्षकरी । वैशारद्यमिति परवचनाभिभवपाण्डित्यम्, एतच्च सभायामभ्यासाद्भवति । भूयोऽध्यवसायमिति दृढनिश्चयम् । अथ कथं श्रुतत्वमपि कस्यचिद्गुह्यस्यार्थस्य स्यात्तदाह जल्पन् पिण्डेनेति । पिण्डेनेति सारोद्धारेण । ननु गुह्यश्चेत् सारतस्तत् कथमयं विजिगीषुस्तमाहेत्याह—संहर्षादिति, स्पर्द्धया तु गुह्योऽप्यर्थो विजयार्थमभिधीयत इति भावः । सन्धाय संभाषा, नये 'वादः' इत्युच्यते । विगृह्य सम्भाषा तुल्यव्यक्तिजल्पवितण्डारूपा ज्ञेया ॥ ६।९ ॥ ६।१० ॥

तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नेनाऽकोपनेनानुपस्कृतविद्येनानसूयकेनानुनेयेनानुनयकोविदेन क्लेशक्षमेण प्रियसंभाषणेन च सह सन्धाय संभाषा विधीयते तद्विद्येन सह कथयन् विस्रब्धः कथयेत्, पृच्छेदपि च विस्रब्धः, पृच्छते चास्मै विस्रब्धाय विशदमर्थं ब्रूयात् न च निग्रहभयादुद्विजेत, निगृह्य चैनं न हृष्येत् न च परेषु विक-

१ तृतीयार्थे षष्ठी ।

**त्थेत, न च मोहादेकान्तग्राही स्यात्, न चानुदितमर्थमनुवर्णयेत्। सम्यक् चानुनयेनानुनयेच्च, अननुये च तत्र चावहितः स्यादित्यनुलोमसंभाषाविधिः ॥६।११॥**

तत्रेत्यादिना सन्धाय संभाषाविधिमाह । विस्रब्धः कथयेदिति जल्पवितण्डोक्तनिग्रहाभीतः । कथयेदिति ब्रूयात् । निगृह्य चैनं न हृष्येदिति अनुलोमसंभाषारूपवादे च यानि सम्भवन्ति निग्रहस्थानानि तत्त्वविघातीनि हेत्वाभासापसिद्धान्तानि न्यूनाधिकरूपाणि, तैरपि निगृह्य न हृष्येत् । जल्पोक्तनिग्रहस्थानानि त्वत्र ग्राह्याण्येव । अविदितमिति प्रतिवादिनोऽविदितम् । अनुनयेच्च सम्यगनुनयेनेति संवन्धः । तेन चात्र छलजातिप्रयोगो न कर्तव्य इति शिक्षयति । तत्र चावहितः स्यादिति सम्यगनुनयेऽवधानं कुर्यात् ॥ ६।११ ॥

**अत ऊर्ध्वमितरेण सह विगृह्य संभाषायां जल्पेत् श्रेयसा योगमात्मनः पश्यन् प्रागेव च जल्पाज्जल्पान्तरं परावरान्तरं परिषद्विशेषांश्च सम्यक् परीक्षेत। सम्यक् परीक्षा हि बुद्धिमतां कार्यप्रवृत्तिनिवृत्तिकालौ शंसति। तस्मात् परीक्षामभिप्रशंसन्ति कुशलाः । परीक्षमाणस्तु खलु परावरान्तरमिमान् जल्पकगुणान् श्रेयस्करांश्च दोषवतश्च परीक्षेत सम्यक्, तद्यथाश्रुतं विज्ञानं धारणं प्रतिभानं वचनशक्तिरित्येतान् गुणान् श्रेयस्करानाहुः, इमान् पुनर्दोषवतः तद्यथा कोपनत्वमवैशारद्यं भीरुत्वमधारणत्वमनवहितत्वमिति । एतान् द्वयानपि गुणान् गुरुलाघवतः परस्य चैवात्मनश्च तोलयेत् ॥ ६।१२ ॥**

इतरेणेति अविशिष्टेन । वादैस्तु विशिष्टो गुरुर्ब्रह्मचारी वाधिकृतः, उक्तं हि न्याये—"तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयाद्" इति । सम्भाषेति प्रवृत्तकथोपलक्षणम् । तेन, सा वितण्डेति च ज्ञेयम् । परावरान्तरमिति प्रतिवादिन आत्मनश्च प्रतिभादिविशेषमित्यर्थः । जल्पान्तरमिति सामयिकसर्वार्थादिविशेषितं जल्पविशेषमित्यर्थः ॥ ६।१२ ॥

**तत्र त्रिविधः परः संपद्यते प्रवरः प्रत्यवरः समो वा गुणविनिक्षेपतः, नत्वेव कार्त्स्न्येन। परिषत्तु खलु द्विविधा ज्ञानवती मूढपरिषच्च। सैव द्विविधा सती त्रिविधा पुनरनेन कारणविभागेन सुहृत्परिषदुदासीनपरिषत् प्रतिनिविष्टपरिषच्चेति। तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानप्रतिवचनशक्तिसंपन्नायामपि मूढायां तु न कथंचिन्न केनचित् सह जल्पो विधीयते, मूढायां तु सुहृत्परिषदि उदासीनायां वा ज्ञानविज्ञानवचनशक्तिमन्तरेणाप्यदीप्तयशसा महाजनविद्विष्टेन सह जल्पो विधीयते, तद्विधेन च सह कथयता आविद्धदीर्घसूत्रसंकुलैर्वाक्यदण्डकैः कथयितव्यम्, अतिहृष्टं मुहुर्मुहुरुपहसता परं रूपयता च परिषदमाकारैर्ब्रुवता चास्य वाक्यावकाशो न देयः कष्टशब्दं ब्रुवता वक्तव्यो 'नोच्यते' अथवा पुनः 'हीना ते प्रतिज्ञा' इति। पुनश्चाहूयमानः प्रतिवक्तव्यः 'परिसंवत्सरो भव शिक्षस्व तावत् पर्याप्तमेतावत्ते' सकृदपि परिक्षेपिकं निहतं निहतमाहुरिति नास्य योगः कर्तव्यः। कथञ्चिदप्येवं श्रेयसा सह विगृह्य वक्तव्यमित्याहुरेके। नत्वेवं ज्यायसा सह विग्रहं प्रशंसन्ति कुशलाः ६।१३॥**

गुणविनिःक्षेपत इति उत्कृष्टगुणत्वेन प्रवर इत्यर्थः, प्रत्यवरो हीनगुणः, समगुणः समो [1]वाद्यपेक्षयेत्यर्थः । नत्वेव कार्त्स्न्येनेति न कुलशीलधर्मादिनापि प्रवरादिरिहाभिप्रेत इत्यर्थः । मूढपरिषदित्यत्र मूढेव मूढा किंचित्कृत्ये, सर्वथा मूढायां तु न कश्चिद्ब्रूते । न केनचिदिति नाधमेनापीत्यर्थः । आविद्धं वक्रम् कथयितव्यमिति वक्तव्यम् । उपहसता परमाकारैरिति योजना । तथा परिषदं रूपयता आकारैरिति संवन्धः । कष्टशब्दमिति नातिप्रसिद्धार्थम् । नोच्यत इत्येवं नोच्यत इति वक्तव्यम्, कष्टशब्दस्य ह्यर्थं मूढपरिषन्न जानात्येव । ततश्च कष्टशब्दस्यानर्थकतायाः परिषदं प्राप्य सुखसाध्यत्वमिति भावः । तथा कष्टशब्दं वदंस्त्वेवं वाच्यम् हीना ते प्रतिज्ञेति । परिसंवत्सरोऽध्ययनं स्वयमुपसंस्कृत्य पुनरध्येता पर्याप्तमेतावत्त इति पक्षावसादायेति शेषः । परिक्षेपिकमिति प्रतिक्षेपिकशब्दम् । नास्य योगः कर्तव्य इति न सकृत्पराभूतस्य पक्षस्य पुनः प्रतिक्षेपकहेतुना योगः कर्तव्य इत्यर्थः । कथंचिदित्यादिना श्रेयसा समं विगृह्य संभाषायामेकीयमतमाह, नत्वेवेत्यादिना आत्ममतमाह ६।१३

**प्रत्यवरेण तु सह समानाभिमतेन वा विगृह्य जल्पता सुहृत्परिषदि कथयितव्यम्, अथवाप्युदासीनपरिषदि अवधानश्रवणज्ञानविज्ञानोपधारणवचनशक्तिसंपन्नायां कथयता चावहितेन परस्य साद्गुण्यदोषबलमवेक्षितव्यम् समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत, नास्य तत्र जल्पं योजयेदनाविष्कृतमयोगं कुर्वन्, यत्र त्वेनमवरं मन्येत, तत्रैवैनमाशु निगृह्णीयात् । तत्र खल्विमे प्रत्यवराणामाशु निग्रहे भवन्त्युपायाः, तद्यथा—श्रुतहीनं महता सूत्रपाठेनाभिभवेत्, विज्ञानहीनं पुनः कष्टशब्देन वाक्येन, वाक्यधारणाहीनमाविद्धदीर्घसूत्रसंकुलैर्वाक्यदण्डकैः, प्रतिभाहीनं पुनर्वचनेनैकविधेनानेकार्थवा-**

१ प्रतिवादिरिहाभिप्रेत इति पाठः ।

चिना, वचनशक्तिहीनमर्द्धोक्तस्य वाक्यस्याक्षेपेण, अविशारदमपत्रेपणेन, कोपनमायासनेन, भीरुं वित्रासनेन, अनवहितं नियमनेनेत्येवमेतैरुपायैः परमवरमभिभवेत् शीघ्रम् ॥ ८।११४ ।

तत्र श्लोकौ ।

विगृह्य कथयेद्युक्त्या, युक्तं च न निवारयेत् ।
विगृह्य भाषा तीव्रं हि केषांचिद्द्रोहमावहेत् ॥
नाकार्यमस्ति क्रुद्धस्य नावाच्यमपि विद्यते ।
कुशला नाभिनन्दन्ति कलहं सहिताः सतामिति ८॥
एवं प्रवृत्ते वादे कुर्यात् ॥ ८।११६ ॥

साद्गुण्यस्य विद्यमानगुणतायास्तथा दोषस्य बलं साद्गुण्यदोषबलम् । श्रेष्ठं मन्येतेति यत्र वादविषये प्रतिवादिनमधिकं पश्येदित्यर्थः, तत्र परस्य पुरःसरवादविषये तथा वादो निवर्तनीयः, यथा आविष्कृतः प्रकटीकृतः सभाया नायोगः । तत्र वादो निवृत्तलक्षणो न स्यात् । अनभीष्टविषये तथा वादनिवृत्तिः कर्तव्या यथा कोऽपि न जानात्येवं तत्र वक्तुमक्षममित्यर्थः । तत्रैवेति तत्रैव हीनपक्षे प्रवृत्तं निगृह्णीयादिति योजना । महता सूत्रपाठेनेति श्रुतहीनो ह्यपरिचयाद्दीर्घसूत्रपाठं कर्तुमक्षमः, विज्ञानहीनमिति अज्ञातार्थम् । नानार्थवाचिनेत्यनेकार्थवाचिना । एकविधेनेत्येकविधेन शब्देन प्रतिभाहीनो ह्यनेकार्थं नावधारयति यत् केनाभिप्रायेणायं प्रयुक्तोऽनेन शब्द इति वचनशक्तिहीनोऽर्द्धोक्तवाक्याक्षेपान्न पुनर्वक्तुं क्षमो भवतीति दृष्टम् । अविशारदमित्यदृष्टसभम् । अदृष्टसभो हि हेपणेनातीव लज्जितः सन्न किंचित् प्रतिपद्यते । एवमिति "तद्यथा श्रुतहीनम्" इत्यादिग्रन्थोक्तम् । प्रवृत्ते वादे कुर्यादिति च्छेदः ॥ ८।११४—८।११६ ॥

प्रागेव तावदिदं कर्तुं यतेत सन्धाय पर्षदायनभूतमात्मनः प्रकरणमादेशयितव्यम्, यद्वा परस्य भृशदुर्गं स्यात् पक्षमथवा परस्य भृशं विमुखमानयेत् परिषदि, परिषदि चोपसंहितायामशक्यमस्माभिर्वक्तुम्, एषैव ते परिषद्यथेष्टं यथायोगं यथाभिप्रायं वादं वादमर्यादां च स्थापयिष्यति इत्युक्त्वा तूष्णीमासीत ॥ ८।११७ ॥

तथाऽप्रवृत्ते वादे किं कुर्यादित्याह—प्रागेवेत्यादि ।—अयनभूतमिति अभ्यासान्मार्गीभूतमिव अभ्यस्तमित्यर्थः । परस्य भृशदुर्गमिति प्रतिवादिनोऽविदिततत्वेन दुर्गमिव दुर्गम्, तत् पूर्वं सन्धिततया परिषदादेशयेत् । पक्षान्तरमाह पक्षमथवेत्यादि । परस्य प्रतिवादिनः पक्षं भृशमत्यर्थं सभायां यथा विमुखं भवति, तथा वादं प्रवर्तयेत् । एतेन नास्ति परलोकः, नास्ति कर्मफलमित्यादि यदि परस्य पक्षे भवति, तदैतस्य पक्षस्य स्वाभाविकद्विष्टत्वेन यत्किंचित् स्वपक्षसाधनमुच्यते, तदेव परिषदपि गृह्णातीत्युक्तं भवति । उपसंहितायामिति संहितादियुक्तायां तूष्णीमासीतेति योजना । उपसंहिता हि परिषत् परोक्षेणाभिमततत्वेन उपदर्शितमेव सर्वं करिष्यति, तदलमिहात्यर्थवचनेन माहात्म्यखण्डकेनेति भावः ॥८।११७॥

तत्रेदं वादमर्यादालक्षणं भवति इदं भवति वाच्यमिदमवाच्यमेवं सति पराजितो भवतीति ८।११८

वादमर्यादालक्षणमाह—तत्रेदमित्यादि ।—वादशब्देन चेह विगृह्य पक्षप्रतिपक्षवचनमात्रमुच्यते । सन्धाय संभाषयैव तत्त्वबुभुत्सोर्वाद उक्तः ॥ ८।११८ ॥

इमानि तु खलु पदानि वादमार्गज्ञानार्थमधिगम्यानि भवन्ति, तद्यथा वादो द्रव्यं गुणाः कर्म सामान्यं विशेषः समवायः प्रतिज्ञा स्थापना प्रतिष्ठापना हेतुरुपनयो निगमनमुत्तरं दृष्टान्तः सिद्धान्तः शब्दः प्रत्यक्षमनुमानमैतिह्यमौपम्यं संशयः प्रयोजनं सव्यभिचारं जिज्ञासा व्यवसायः अर्थप्राप्तिः संभवः अनुयोज्यमननुयोज्यमनुयोगः प्रत्यनुयोगो वाक्यदोषो वाक्यप्रशंसा च्छलमहेतुरतीतकालमुपालंभः परिहारः प्रतिज्ञाहानिरभ्यनुज्ञा हेत्वन्तरमर्थान्तरं निग्रहस्थानमिति ॥ ८।११९ ॥

संप्रति वादमार्गज्ञानार्थं वादाभिज्ञेयानि द्रव्यगुणादीन्युपदर्शयन्नाह इमानीत्यादि । भिषजां वादमार्गो भिषग्वादमार्गः। वादादयः स्वयमेवाचार्येणाग्रे विव्रियन्त इति नेह संज्ञाकथने विव्रियन्ते ॥ ८।११९ ॥

तत्र वादो नाम यत्परस्परेण सह शास्त्रपूर्वं विगृह्य कथयति, स वादो द्विविधः संग्रहेण जल्पो जल्पवितण्डा च । तत्र पक्षाश्रितयोर्वचनं जल्पः विपर्ययो वितण्डा । यथा एकस्य पक्षः पुनर्भवोऽस्तीति, नास्तीत्यपरस्य । तौ च हेतुभिः स्वस्वपक्षं स्थापयतः परस्परमुद्भावयतः, एष जल्पः । जल्पविपर्ययो वितण्डा वितण्डा नाम परपक्षे दोषवचनमात्रमेव ॥ ८।१२० ॥

द्रव्यगुणकर्मसामान्यविशेषसमवायाः स्वलक्षणैः श्लोकस्थाने पूर्वमुक्ताः ॥ ८।१२१ ॥

अथ प्रतिज्ञा । प्रतिज्ञा नाम साध्यवचनम् यथा नित्यः पुरुष इति ॥ ८।१२२ ॥

तत्रेत्यादिना वादलक्षणम् । इह 'वाद' शब्देन विगृह्य वादोऽभिप्रेतः, तत्त्वबुभुत्सुवादस्तु सन्धाय सम्भाषयैवोक्तः । शास्त्रपूर्वकमित्यनेनार्थादिकलहवादं निषेधयति । तत्र वादे विगृह्य संभाषारूपत्वादेव छलजातिनिग्रहस्थानानां विजिगीषाप्रवृत्तानां प्रयोगो लभ्यते । पक्षाश्रितयोरिति पक्षं साधयतोरित्यर्थः । तेन, वितण्डायामप्युत्तरवादिनः परपक्षदूषणलक्षणस्य च पक्षोऽस्त्येव, परम्, स्वमतं न साधयतीति भेदः । यथैकस्येत्यादि जल्पोदाहरणम् । परपक्षे दोषवचनमात्रमित्य-

नेन न स्वपक्षसाधनवचनं वैतण्डिकस्येति दर्शयति । पूर्वमुक्ता दीर्घजीवितीये ॥ ६।२०—६।२२ ॥

**अथ स्थापना । स्थापना नाम तस्या एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमैः स्थापना । पूर्वं हि प्रतिज्ञा, पश्चात् स्थापना, किं ह्यप्रतिज्ञातं स्थापयिष्यति, यथा नित्यः पुरुष इति प्रतिज्ञा, हेतुः अकृतकत्वादिति । दृष्टान्तः अकृतकमाकाशम्, तच्च नित्यम् । उपनयः, यथा चाकृतकमाकाशं तथा पुरुषः, निगमनम् तस्मान्नित्य इति ॥ ६।२३ ॥**

**अथ प्रतिष्ठापना प्रतिष्ठापना नाम या परप्रतिज्ञायाः विपरीतार्थस्थापना, यथा अनित्यः पुरुषः इति प्रतिज्ञा, हेतुः ऐन्द्रियकत्वात्, दृष्टान्तः, घटः ऐन्द्रियकः, स चानित्यः । उपनयः, यथा घटः, तथा पुरुषः । निगमनम्, तस्मादनित्य इति ६।२४**

स्थापयति सिद्धमर्थं परं प्रति साधयतीति स्थापना । तच्च साध्यं परं प्रति हेत्वादिभिश्चतुर्भिः क्रियते, प्रतिज्ञापि परं प्रति स्थापना भवति, । यतः, पंचावयवमेवाऽनुमानं करोति, सा त्विह स्थाप्यत्वेनैव लब्धेति न स्थापनायामिहोदाहृता । 'प्रतिष्ठापना' पदं प्रथमं संप्रत्यवसरप्राप्त्या 'प्रतिष्ठापना' इति दर्शयति, द्वितीयं तु 'प्रतिष्ठापना' नामेति 'तस्या एव' इत्यादिना वक्ष्यमाणस्य लक्षणस्योपदर्शनार्थम् । एवं स्थापना नामेत्यादावपि पुनरुक्तस्य प्रयोजनं वाच्यम् । 'प्रतिष्ठापना' पदगतस्य 'प्रति' शब्दस्यार्थं व्याकरोति विपरीतार्थस्थापनेति 'प्रति'शब्दोऽयं विपरीतार्थं इत्यर्थः । इयञ्च प्रतिष्ठापना आन्वीक्षिक्यां प्रकरणसमार्थं हेतुदूषणम् ॥ ६।२३–६।२४ ॥

**अथ हेतुः, हेतुर्नामोपलब्धिकारणम्, तत्प्रत्यक्षमनुमानमैतिह्यमौपम्यमित्येभिर्हेतुभिर्यदुपलभ्यते, तत्तत्त्वम् ॥ ६।२५ ॥**

**उपनयो निगमनं चोक्तं स्थापनाप्रतिष्ठापनाव्याख्यायाम् ॥ ६।२६ ॥**

हेतुश्चाविनाभावलिङ्गवचनं यद्यपि, तथापीह लिङ्गग्राहकाणि प्रत्यक्षादिप्रमाणान्येव यथोक्तहेतुमूलत्वेन 'हेतु'शब्देनाहेति बोद्धव्यम्, अन्यथा पुनः प्रत्यक्षाद्यभिधानं पुनरुक्तं स्यात् । उपलब्धिकारणमिति व्यापकस्य साध्यस्योपलब्धिकारणम् । तत्तत्त्वमिति तल्लिङ्गमित्यर्थः ॥ ६।२५–२६ ॥

**अथ उत्तरम् उत्तरं नाम साधर्म्योपदिष्टे वा हेतौ वैधर्म्यवचनं, वैधर्म्योपदिष्टे वा साधर्म्यवचनं, यथा हेतुसधर्माणो विकाराः । शीतकस्य हि व्याधेर्हेतुसाधर्म्यवचनम् हिमशिशिरवातसंस्पर्शा इति ब्रुवतः परो ब्रूयात् हेतुविधर्माणो विकाराः । यथा शरीरावयवानां दाहौष्ण्यकोथप्रपचने हेतुवैधर्म्यं हिमशिशिरवातसंस्पर्शा इति । एतत्सविपर्ययमुत्तरम् ॥ ६।२७ ॥**

उत्तरमित्यादि । 'उत्तर'शब्देनेह जात्युत्तरमुत्तराभासमीप्सितम् । यतोऽसाधकसाधर्म्यमात्रप्रत्यवस्थानमेवोत्तरविवरणे दर्शयिष्यति । उक्तं च न्याये—"साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति, एतच्च साधर्म्यवैधर्म्योदाहरणार्थम् । तेन, न्यायोक्ता जात्युत्तरा उत्कर्षापकर्षसमुदया अप्युनुक्ता इहैवानुबोद्धव्याः । हेतुसधर्माण इति हेतुसदृशाः । शीतकः शीतम्, हिमशिशिरवातगताः संस्पर्शाः । शीतस्य हेतुभिः साधर्म्यमिति कृत्वा योजना । तेन, हिमादीनां हेतूनां ये शीतस्पर्शास्ते शीतकेऽपीति, संस्पर्शाः साधर्म्यं हेतुविकारयोरिति । परो ब्रूयादिति प्रतिवादी वदेत् । दाहौष्ण्यकोथप्रपचने विकारे इति शेषः, हेतुवैसादृश्यं हेतुवैधर्म्यम् । हिमादिसंस्पर्शाः, हिमादिजन्यशरीरावयवदाहादिविकारस्पर्शे उष्णे विसदृशा इति वाक्यार्थः । एवं तावत् वैधर्म्योक्ते हेतौ विपर्ययावदा हेतुसाम्यमुत्तरं क्रियते, तदा विपर्ययो भवति । एवमेवोदाहरणद्वयं सविपर्ययं सम्पूर्णमुत्तरं भवतीत्यर्थः ॥ ६।२७ ॥

**अथ दृष्टान्तः । दृष्टान्तो नाम यत्र मूर्खविदुषां बुद्धिसाम्यम्, यो वर्ण्यं वर्णयते, यथा अग्निरुष्णो द्रवमुदकं स्थिरा पृथिवी आदित्यः प्रकाशक इति, यथा वा आदित्यः प्रकाशकस्तथा सांख्यवचनं प्रकाशकमिति ॥ ६।२८ ॥**

मूर्खविदुषां बुद्धिसाम्यमित्यनेन लौकिकानां पण्डितानां च योऽर्थोऽविवादसिद्धः, स दृष्टान्तो भवति, न पण्डितमात्रसिद्धः । योऽपि लोकप्रसिद्धो दृष्टान्त उच्यते, स यावन्न प्रतिपाद्यपुरुषं प्रति साध्यते, न तावद्दृष्टान्ततामासादयतीति भावः । अथ बुद्धिसाम्यमात्रे न साध्यसाधर्म्यभावादिष्टत्वात् दृष्टान्तो भवतीत्याह यो वर्ण्यं वर्णयति यः साध्यं साधयतीत्यर्थः । प्रसिद्धसाध्यसाधनसंबन्धश्च दृष्टान्तः साध्यं साधयतीति भावः । अग्न्यादयश्च लोकप्रसिद्धत्वेनोदाहृताः । तेन, एतेषामपि साध्यसाधनोदाहरणमादित्यादिवत् क्वचिद्द्वन्द्वेऽयमयमिवेति दर्शयति ॥ ६।२८ ॥

**अथ सिद्धान्तः सिद्धान्तो नाम यः परीक्षकैर्बहुविधं परीक्षितं हेतुभिः साधयित्वा स्थाप्यते निर्णयः, स सिद्धान्तः, स चोक्तः चतुर्विधः सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्त इति । तत्र सर्वतन्त्रसिद्धान्तो नाम सन्ति निदानानि सन्ति व्याधयः सन्ति सिद्ध्युपायाः साध्यानामिति । प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिंस्तन्त्रे । तत्तत्प्रसिद्धम्, यथा अन्यत्राष्टौ रसाः षडन्यत्र, पंचेन्द्रियाणि यथान्यत्रान्यत्र षडिन्द्रियाणि, वातादिकृताः सर्वविकारा**

यथान्यत्र वातादिकृता भूतकृताश्च प्रसिद्धाः। अधिकरणसिद्धान्तो नाम यस्मिन् यस्मिन्नधिकरणे संस्तूयमाने सिद्धान्यन्यान्यपि अधिकरणानि भवन्ति, यथा न मुक्तः कर्मानुबन्धिकं कुरुते निस्पृहत्वादिति प्रस्तुते सिद्धाः कर्मफलमोक्षपुरुषप्रेत्यभावा भवन्ति । अभ्युपगमसिद्धान्तो नाम सः, यमर्थमसिद्धमपरीक्षितमनुपदिष्टहेतुकं वा वादकालेऽभ्युपगच्छन्ति, भिषजः, तद्यथा द्रव्यं न प्रधानमिति कृत्वा वक्ष्यामः, गुणाः प्रधाना इति कृत्वा वक्ष्यामः इत्येवमादिश्चतुर्विधः सिद्धान्तः ॥ ६।२९ ॥

साध्यसाधनोदाहरणेन बहुविधं परीक्षितं हेतुभिः साधयित्वा स्थाप्यत इत्यस्य विवरणम् । निर्णय इति, निर्णीयत इति निर्णयः । एतच्च सिद्धान्तलक्षणमभ्युपगमसिद्धान्ते नास्ति । तेन, तत्र बुद्धिव्यवस्थितत्वेन चोक्तं सिद्धान्तं ज्ञेयम् । सिद्धान्तं विभजते स चेत्यादि । प्रतितन्त्रसिद्धान्ते षड्रसा अष्टौ रसा इति परस्परविरुद्धेऽपि वादे स्वयुक्तिव्यवस्थापनबलात्तु सिद्धान्तत्वं ज्ञेयम्। यस्मिन्नित्यादौ अधिकरणे इत्यभिधेयप्रधानत्वे । अन्यान्यपीति साक्षादनभिधीयमानान्यपि । अनुबध्नातीति अनुबन्धिकं जन्मान्तरेऽप्यनुगामीत्यर्थः । मुक्त इति प्रत्यासन्नमुक्तिः, सर्वथा मुक्तस्त्वशरीरत्वात् कर्म न करोति । किंवा, अनुबन्धिकं विशेषेणेति । सिद्धा इत्यादि । यदीह कर्मफलं न स्यात्, तदा मुमुक्षुणापि क्रियते । कर्मफलोद्विग्नोह्ययं न तत्कर्म करोति । यदि च मोक्षो न स्यात्, तदा 'मुक्तः' इति वचनं न स्यात्, तथा यदि च पुरुषो न स्यात्, तदा कस्य वा बन्धः, कस्य वा मोक्षः स्यात्तदा कर्मणो जन्मान्तरानुबन्धित्वमनुपपन्नं स्यादिति न युक्तमिति वदता अधिकरणबलादेव सिद्धाः सिद्धान्तत्वेन कर्मफलादयः स्वीकृता भवन्ति। असिद्धमित्यस्य विवरणम् । अपरीक्षितमित्यादि ६।२९

अथ शब्दः। शब्दोनाम वर्णसमाम्नायः, स चतुर्विधः दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र दृष्टार्थः त्रिभिर्हेतुभिर्दोषाः प्रकुप्यन्ति, षड्भिरुपक्रमैश्च प्रशाम्यन्ति, श्रोत्रादिसद्भावे शब्दादिग्रहणमिति । अदृष्टार्थः पुनः अस्ति प्रेत्यभावोऽस्ति मोक्ष इति। सत्यो नाम यथार्थभूतः सन्त्यायुर्वेदोपदेशाः, सन्त्युपायाः साध्यानाम्, सन्त्यारम्भफलानीति । सत्यविपर्ययाच्चानृतः ॥ ६।३० ॥

'शब्दः—' शब्देनेह सङ्केतबलादर्थप्रतीकारवर्णमालोच्यते। आप्तोपदेशशब्दस्तु द्विविधः परमाप्तब्रह्मादिप्रणीतस्तथा लौकिकाप्तप्रणीतश्च । 'ऐतिह्य' शब्देन परमाप्तप्रणीतोऽवरुद्धः, लौकिकाप्तप्रणीतश्च शब्दैकदेशरूपः सत्यप्रकारविहितो ज्ञेयः । वर्णसमाम्नाय इति वर्णमेलक इत्यर्थः । वर्णानां यद्यपि अत्र सहस्थायिनां मेलको नास्ति, तथाप्येकस्मृतिसमानरूपित्वेन । किंवा, पूर्वपूर्वानुभवजनितसंस्कारसहितान्त्यवर्णानुभवारोहेण मेलको ज्ञेयः । दृष्टार्थ इति प्रमाणान्तरोपलब्धियोग्यार्थः । त्रिभिर्हेतुभिरिति प्रज्ञापराधादिभिः । षडुपक्रमा लङ्घनादयो लङ्घनबृंहणीयोक्ताः । एतेषां वाक्यान । मिहैव दृश्यतेऽर्थ इति दृष्टार्थत्वम् । सविपर्ययः—'न सन्त्यायुर्वेदोपदेशाः' इत्यादिर्ज्ञेयः ॥ ६।३० ॥

अथ प्रत्यक्षम्। प्रत्यक्षं नाम तद्यदात्मना पंचेन्द्रियैश्च स्वयमुपलभ्यते, तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः शब्दादयस्त्विन्द्रियप्रत्यक्षाः ॥ ६।३१॥

आत्मनेति मनसा, तेन, अनेन मानसप्रत्यक्षसुखाद्यमवरुध्यते, इन्द्रियैश्चेत्यनेन बाह्यं प्रत्यक्षं गृह्यते । स्वयमुपलभ्यत इति साक्षादुपलभ्यते इति चेन्द्रियव्यापारे सत्यपि यदनुमानविज्ञानम्, तदसाक्षात्कारित्वान्न प्रत्यक्षमिति दर्शयति॥६।३१॥

अथानुमानम् अनुमानं नाम तर्कोयुक्त्यपेक्षः, यथोक्तम्, अग्निं जरणशक्त्या, बलं व्यायामशक्त्या, श्रोत्रादीनि शब्दादिग्रहणेनेत्येवमादि ॥ ६।३२ ॥

अथैतिह्यम् ऐतिह्यं नाम आप्तोपदेशो वेदादि ॥ ६।३३ ॥

तर्कोयुक्त्यपेक्ष इत्यनुमानलक्षणं विविधरोगविज्ञानीय एव व्याकृतम् । अनुमानोदाहरणमाह 'अग्निं जरणशक्त्या' इत्यादिना । अलौकिकाप्तोपदेश 'ऐतिह्य'पदेनोच्यत इत्याह वेदादिरिति ॥ ६।३२ ॥ ६।३३ ॥

अथौपम्यम् औपम्यं नाम यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनम्, यथा दण्डेन दण्डकस्य धनुषा धनुस्तम्भस्येष्वासिनाऽऽरोग्यदस्येति ६।३४

यदन्येनेत्यादौ अन्येनेति प्रसिद्धेन । अन्यस्येत्यप्रसिद्धस्य । सादृश्यमधिकृत्येति सादृश्यं प्रतिपाद्यं संज्ञासंज्ञिसंबन्धं प्रति कारणतया अधिकृत्य, यदा तु भट्टनयेन उपमानं व्याख्येयम्, तदा सादृश्यं प्रतिपाद्यतया अधिकृत्येति योजनीयम्, तेषां 'सादृश्यप्रतिपत्तिः' उपमानार्थः । न्याये च 'संज्ञासंज्ञिसंबन्धप्रतीतिः' उपमानफलम्, तच्च प्रथमव्याख्यानाद्भवति, उक्तं हि तत्र । "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" इति । दण्डेन दण्डकस्येति दण्डेन प्रसिद्धेनाप्रसिद्धस्य दण्डकस्य साधर्म्यमात्रात् श्रुतवान् कुंभकारकदण्डवद्विकारदर्शने सत्यमसौ दण्डसंज्ञो विकार इति प्रत्येति । किंवा, भट्टनयेन, प्रसिद्धं दण्डगतं साधर्म्यमप्रसिद्धदण्डकाख्यविकारसंबन्धितया प्रत्येतीत्येवमन्यत्राप्युदाहरणे ज्ञेयम् । इष्वासिनेति इषुमोक्षकेण, यथा इषुमोक्षकेण लक्ष्येऽनतिविप्रकृष्टे नापराध्यते, तथाऽऽरोग्यदेन वैद्येन वैद्यगुणैरातुरं साधयता ॥ ६।३४ ॥

अथ संशयः संशयो नाम सन्देहलक्षणानुसन्दिग्धेष्वर्थेषु अनिश्चयः, यथा दृष्टा ह्यायुष्यलक्षणोपेताश्चानुपेताश्च तथा सक्रियाश्चाऽक्रियाश्च

पुरुषाः शीघ्रभङ्गाश्चिरजीविनश्च, एतदुभयदृष्टत्वात् संशयः किन्नु खल्वकालमृत्युरस्त्युत नास्तीति ॥ ६॥३५ ॥

सन्देहलक्षणानुसन्दिग्धेष्वर्थेष्वित्यनेन सन्देहयोग्यं विषयं दर्शयति, अनेन च, न्यायोक्तात् "समानानेकधर्मोपपत्तेः" इति वचनात् विषयं संशयस्य च दर्शयति । संशयलक्षणम् । 'अनिश्चयः' इति ज्ञेयम् । अनिश्चयः पाक्षिकविरुद्धधर्मावमर्षकरं ज्ञानम्, यथा "स्थाणुर्वा पुरुषो वा" इति । दृष्टा हीत्यादिना संशयोत्पत्तिसामग्रीमाह, तत्रायुष्यलक्षणोपेतानामक्रियाणां शीघ्रभङ्गे तथा सक्रियाणां च चिरजीवने दृष्टे अकालमृत्युरस्तीति बुद्धिः, एतद्विपर्यये चाकाले मृत्युर्नास्तीति बुद्धिः ॥ ६।३५ ॥

अथ प्रयोजनम् प्रयोजनं नाम यदर्थमारभ्यन्त आरम्भाः, यथा यद्यकालमृत्युरस्ति, ततोऽहमात्मानमायुष्यैरुपचरिष्यामि अनायुष्याणि परिहरिष्यामि, कथं मामकालमृत्युः, प्रसहेतेति ॥६॥३६॥

अथ सव्यभिचारम् सव्यभिचारं नाम यद्व्यभिचरणम्, यथा भवेदिदमौषधं तस्मिन् व्याधौ यौगिकमथवा नेति ॥ ६॥३७ ॥

अथ जिज्ञासा जिज्ञासा नाम परीक्षा, यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते ॥ ६॥३८ ॥

अथ व्यवसायः व्यवसायो नाम निश्चयः, यथा वातिक एवायं व्याधिरिदमेवास्य भेषजमिति ॥ ६॥३९ ॥

अथार्थप्राप्तिः अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेनापरस्यार्थस्यानुक्तस्य सिद्धिः यथा नायं संतर्पणसाध्यो व्याधिरित्युक्ते भवत्यर्थप्राप्तिः अपतर्पणसाध्योऽयमिति, नानेन दिवा भोक्तव्यमित्युक्ते भवत्यर्थप्राप्तिः निशि भोक्तव्यमिति ॥ ६॥४० ॥

यदर्थमिति यन्निमित्तम् । प्रसहेतेति मारयेदित्यर्थः । सव्यभिचारमित्यनैकान्तिकमित्यर्थः । अथवा नेति न भवति । अनैकान्तिकं चात्रौषधं यौगिकत्वायौगिकत्वाभ्यां संशयजनकमेव । तेन, संशयेन सममेकता न शङ्कनीयाऽनैकान्तिकस्य । उत्तरकालमिति इहैव परीक्षा प्रकरणे ।—किंवा, रसायने "भेषजं द्विविधम्" इत्यादिना । अर्थप्राप्तिरित्यर्थापत्तिरित्यर्थः। इह 'उक्तेन' इतिवचनात् श्रुतार्थापत्तिरेव विवक्षिता, दृष्टार्थापत्तिरपि तु एतत्सामान्यत्वेनैव ज्ञेया । इयं चार्थापत्तिरन्यथोपपत्त्या न प्रमाणमिति न प्रमाणप्रकरणे पठिता, या तु दोषरहिता साऽनुमानान्तर्गतैवेति भावः । यो ह्यपतर्पणसाध्योऽपि न स्यात्, तं प्रति 'नायं सन्तर्पणसाध्यः,' इतिवचनमेवासमर्थविशेषणतया न स्यादित्यर्थापत्तिर्नेत्यभिप्रायः, उभयासाध्यो हि 'असाध्यः' इत्येतावदेव वक्तव्यं स्यात् । एवमन्यत्राप्युदाहरणे ज्ञेयम् ॥ ६।३६—६।४० ॥

अथ संभवः संभवो नाम यो यतः संभवति, स तस्य संभवः, यथा षड् धातवो गर्भस्य, व्याधेरहितम्, हितमारोग्यस्येति ॥ ६॥४१ ॥

संभवति विद्यते अस्मिन्निति संभवः, कारणं हि अव्यक्तात्स्वजन्मकार्यमुक्तम्, यथा संभवति खार्यां द्रोण इत्यादि; तत्समानमेतदप्युदाहरणं भवति ॥ ६।४१ ॥

अथानुयोज्यम् अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तम्, तदनुयोज्यमुच्यते सामान्योदाहृतेष्वर्थेषु वा विशेषग्रहणार्थं तद्वाक्यमनुयोज्यम्, यथा संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्योऽयं किंवा विरेचनसाध्य इत्यनुयुज्यते॥ ६॥४२॥

अथाननुयोज्यम् अननुयोज्यं नामातो विपर्ययेण ॥ ६॥४३ ॥

अथानुयोगः अनुयोगो नाम यत्तद्विद्यानां तद्विद्यैरेव सार्द्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नैकदेशो वा ज्ञानविज्ञानवचनप्रतिवचनपरीक्षार्थमादिश्यते । यथा नित्यः पुरुष इति प्रतिज्ञाते, यत्परः, को हेतुरित्याह सोऽनुयोगः ॥ ६॥४४ ॥

अथ प्रत्यनुयोगः प्रत्यनुयोगो नाम अनुयोगस्यानुयोगः यथा अस्यानुयोगस्य पुनः को हेतुरिति ॥ ६॥४५ ॥

अनुयोज्यान्तरमाह सामान्येनेत्यादि । अननुयोज्यमाह अतो विपर्ययेणेति, यथोक्तानुयोज्यप्रकरणस्योदाहरणविपर्ययेण ज्ञेयम् । अनुयोगमाह प्रश्न इति, 'प्रश्नः'इतिशब्देन यथोक्तशास्त्रेण पूर्णप्रश्नो गृह्यते, यथा अत्रैव "तत्र चेद्भिषक् भिषजं पृच्छेद्" इत्यादिना यावदुक्तम्, तत् संपूर्णं ज्ञेयम्, अत्रैव चैकदेशोऽपि प्रश्नस्य ज्ञेयः ॥ ६।४२—६।४५ ॥

अथ वाक्यदोषः वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकं विरुद्धं चेति । तत्र प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं भवतीति । यद्वा बहुपदिष्टहेतुकमेकेन साध्यते हेतुना, तच्च न्यूनम् । एतानि ह्यन्तरेण प्रकृतोऽप्यर्थः प्रणश्येत्[1] अधिकम्, अधिकं नाम यदायुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वाऽप्रतिसंबद्धार्थमुच्यते । यद्वा पुनः प्रतिसंबद्धार्थमपि द्विरभिधीयते, तत्पुनरुक्तदोषादधिकम् । तच्च पुनरुक्तं द्विविधं अर्थपुनरुक्तं शब्दपुनरुक्तं च । तत्रार्थपुनरुक्तं नाम यथा भेषजमौषधं साधनमिति, शब्दपुनरुक्तं नाम पुनर्भेषजं भेषजमिति । अनर्थकम्, अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात्, पञ्चवर्गवन्नचार्थतो गृह्यते । अपार्थकम्,

१ अस्मादिति पाठान्तरम् ।

**अपार्थकं नाम यदर्थवच्च परस्परेण चायुज्यमानार्थकम् । यथा चक्रनक्रवंशवज्रनिशाकरा इति । विरुद्धम्, विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धम्, तत्र दृष्टान्तसिद्धान्तावुक्तौ । समयः पुनर्यथा भवत्यायुर्वैदिकसमयो याज्ञिकसमयो मोक्षशास्त्रिकसमय इति । तत्रायुर्वैदिकसमयः चतुष्पादं भेषजमिति; याज्ञिकसमयः आलभ्याः पशव इति । सर्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयः । तत्र स्वसमयविपरीतमुच्यमानं विरुद्धं भवतीति वाक्यदोषः ६ ॥ ४६ ॥**

**अथ वाक्यप्रशंसा । वाक्यप्रशंसा नाम यथा खल्वस्मिन्नर्थे त्वन्यूनमनधिकमर्थवदनपार्थकमविरुद्धमधिगतपदार्थं चेति यत्तद्वाक्यमननुयोज्यमिति प्रशस्यते ॥ ६।४७ ॥**

वाक्यदोषानुदाहरति वाक्येत्यादि । 'अस्मिन्नर्थः' इतिवचनेन छलहेत्वाभासादिपदगृहीतानपि वाक्यदोषत्वेन दर्शयति । छलादयो हि वाक्यदोषा एव, परं पृथग्गृहीतत्वादिह नोच्यन्ते तथा शास्त्रान्तरोक्ताश्चाऽपसिद्धान्तादयोऽनया भाषया सूच्यन्ते वाक्यदोषाः । यद्वेत्यादौ यदा पुरुषस्य नित्यत्वेऽपि हेतव उक्ता अनादित्वादकृतकत्वान्निर्विकारत्वादिति च, तेषु यदि सकलहेत्वभिधानं प्रतिज्ञाय एकं हेतुं ब्रुवते, तदा प्रतिज्ञार्थस्य न्यूनार्थत्वात् न्यूनं भवतीति ज्ञेयम्, यदा हेतुर्वक्तव्यः, तदा एक एव वक्तव्यो युज्यते, एकस्यापि हेतोः साध्यसाधनसंबन्धात् । तेन, तत्र बहुहेतुकथनमेवाधिकत्वाद्दोष एव भवतीति । प्रकृत इति साध्यत्वेन प्रतिज्ञातः । बार्हस्पत्यमौशनसं च नीतिशास्त्रम् । अप्रतिसंबद्धार्थमित्यनेन, बार्हस्पत्यमपि यदि धनैषणाभिधानप्रसङ्गेन प्रसङ्गागतं भवति, तदा स्तोकक्रमेणोच्यमानमायुर्वेदोपकारकत्वेन नाधिकमिति दर्शयति । पुनरुक्तदोषादिति दोषवतः पुनरुक्तादित्यर्थः । दोषवत्त्वं च यथा पुनरुक्तस्य, तथोक्तमेव । पञ्चवर्गवदिति क ख ग घ ङादिवर्गसमुदायवत्, अत्र त्वभिधेयोऽर्थो न प्रतिभाति । अर्थवदिति प्रत्येकं पदरूपतया[1] प्रसिद्धार्थम् । परस्परेणायुज्यमानमिति वाक्यरूपतयाऽर्थाप्रत्ययिकम् । चक्रमित्यादयो हि शब्दाः क्रियां विना वाक्यरूपार्थानभिधायका इत्यर्थः । विरुद्धे दृष्टान्तविरुद्धं यथा—यथा शीतं जलं तापकं तथा ज्वरोऽपीति । सिद्धान्तविरुद्धं यथा वैद्यो ब्रूते न च भेषजं रोगहरमिति । तथा यद्यप्यायुर्वेदे चतुष्पादमेव भेषजमिति सिद्धान्त एव, तथापि 'चतुष्पाद'संज्ञा समयकृता ज्ञेया। एवं याज्ञिकानाम् 'आलभ्य' संज्ञा समयकृता, तत्र यदि स्वसमयविपरीतमभिदधाति तदा समयविरुद्धो भवति । अननुयोज्यमिति नानुयोगार्हम् ॥ ६।४६ ॥ ६।४७ ॥

१ पररूपतयेति पाठान्तरं तु न समीचीनतया प्रतिभाति ।

**अथ च्छलम् । छलं नाम परिशठमर्थाभासमपार्थकं वाग्वस्तुमात्रमेव । तद्द्विविधं वाक्छलं सामान्यच्छलं च तत्र । वाक्छलं नाम यथा कश्चिद्ब्रूयान्नवतन्त्रोऽयं भिषगिति, भिषग् ब्रूयान्नाहं नवतन्त्र एकतन्त्रोऽहमिति, परो ब्रूयान्नाहं ब्रवीमि नवतन्त्राणि तवेति, अपि तु नवाभ्यस्तं हि ते तन्त्रमिति, भिषक् ब्रूयान्न मया नवाभ्यस्तं तन्त्रं, अनेकधाऽभ्यस्तं मया तन्त्रमिति, एतद्वाक्छलम् । सामान्यच्छलं नाम यथा व्याधिप्रशमनायौषधमित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवानाह, सन् हि रोगः, सदौषधम्, यदि च सत् सत्प्रशमनाय भवति, सन् हि कासः, सन् क्षयः, सत्सामान्यात्कासस्ते क्षयप्रशमनाय भविष्यतीति एतत्सामान्यच्छलम् ॥ ६।४८ ॥**

छलमित्यादि । परिशठमिति वञ्चनाप्रवृत्तम् । अर्थवदिवाभासोऽर्थाभासः । एतदेव विवृणोति—अपार्थकमित्यादि । अपगतसमीचीनार्थत्वेन वाग्वस्तुमात्रमित्यर्थः । छलं ह्यभिप्रेतादर्थादर्थान्तरं परिकल्प्य परवचनोपघाताय प्रतिकल्प्यते । यदुक्तं न्याये "वचनविघातोऽर्थविकल्प उपचारच्छलम्"इति । अत्र वाक्छलमेवोपचारच्छलं न्यायोक्तं संभवति । सामान्यशब्दोक्ते ह्यर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलं, तेन, मञ्चाः क्रोशन्तीति । अत्रापि 'मञ्च'शब्दो मुख्यः सन् मञ्चे वर्तते, उपचारात्तु मञ्चस्थेषु पुरुषेषु 'मञ्च'शब्दो मुख्यः मञ्चशब्दप्रयोगे सति कथमचेतना मञ्चाः क्रोशन्तीति आक्षेपो वाक्छल एव प्रविशतीति भावः । अत्र वाक्छलमित्यादि वाक्यं सामान्यच्छललक्षणसंयुक्तं न्यायोक्तलक्षणमेव ज्ञेयम्, यथासंभवं सामान्यशब्दोक्तेऽर्थे ह्यर्थान्तरस्यापि सामान्ययोगादर्थान्तरकल्पना सामान्यच्छलमिति । सत् सत्प्रशमायेति सता सतः प्रशमः क्रियते इति । त इति तव मत इति कृत्वा वादी पूर्वपक्षं करोति, तेन, अविवक्षितेन सत्त्वसामान्येन प्रत्यवस्थानात् सामान्यच्छलं भवति ॥ ६।४८ ॥

**अथाहेतुः अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसम इति । तत्र प्रकरणसमो नामाहेतुः, यथा अन्यः शरीरादात्मा नित्य इति पक्षे ब्रूयात् यस्मादन्यः शरीरादात्मा, तस्मान्नित्यः । शरीरं ह्यनित्यमतो विधर्मिणा चात्मना भवितव्यमित्येष चाहेतुः । नहि य एव पक्षः, स एव हेतुः । संशयसमो नामाहेतुर्य एव संशयहेतुः स एव संशयच्छेदहेतुः, यथा अयमायुर्वेदैकदेशमाह, किंत्वयं चिकित्सकः स्यान्न वेति संशये परो ब्रूयात् यस्मादयमायुर्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति, न च संशयहेतुं विशेषयति, एष चाहेतुः । न हि य एव संश**

**यहेतुः, स एव संशयच्छेदहेतुः । वर्ण्यसमो नामाहेतुः, यो हेतुर्वर्ण्याविशिष्टः,यथा परो ब्रूयादस्पर्शत्वाद् बुद्धिरनित्या शब्दवदिति, अत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या, तदुभयवर्ण्याविशिष्टत्वाद्वर्ण्यसमोऽप्यहेतुः ॥ ६।४९ ॥**

अहेतुरसाधकहेतुरित्यर्थः[1] । प्रक्रियते साध्यत्वेनाधिक्रियत इति व्युत्पत्त्या प्रकरणं पक्षः, तेन समः प्रकरणसमः । अन्यः शरीरादात्मा नित्य इति प्रतिज्ञायां शरीरादन्यत्वं बोध्यम्, अतो विधर्मिणेति शरीरादनित्याद्विधर्मिणा नित्येनेत्यर्थः। य एव पक्ष इत्यनेनान्यत्वं च शरीरादात्मन इति सिद्धमिति दर्शयति, सति हि नित्यत्वे चेतनाधारस्य शरीरादन्यत्वमपि सिध्यति । चार्वाकपक्षे तु शरीरमेवं चेतनमनित्यं चेति तं प्रत्युभयमपि साध्यम्, न साध्यं साधनं भवति, असिद्धत्वादिति भावः । अयमायुर्वेदैकदेशमाहेति आयुर्वेदैकदेशाभिधानं चिकित्सकाचिकित्सकगमकत्वेन संशयहेतुः, एकदेशकथनं हि शास्त्रानभ्यासेऽपि कुतश्चित् श्रवणादपि भवतीति भावः । न विशेषयतीति न संशयच्छेदहेतुं विशिष्टं दर्शयतीत्यर्थः, एष चाहेतुरिति यथोक्तो हेतुरहेतुः संशयोच्छेदक इत्यर्थः । वर्ण्येन साध्येन दृष्टान्तोऽप्यसिद्धत्वेन सम इति वर्ण्यसमः, वर्ण्यः शब्द इति अस्पर्शत्वयोगादनित्यत्वेन शब्दोऽपि साध्यः । न च साध्यो दृष्टान्तो भवति उभयवर्ण्याविशिष्टत्वादित्युभयत्र दृष्टान्ते वर्ण्ये च वर्ण्यस्य साध्यस्य साध्यत्वेनाविशिष्टत्वादित्यर्थः ॥ ६।४९ ॥

**अथातीतकालम् अतीतकालं नाम यत्पूर्वं वाच्यम्, तत्पश्चादुच्यते, तत्कालातीतत्वादग्राह्यं भवतीति, पूर्वं वा निग्रहप्राप्तमनिगृह्य पक्षान्तरितं पश्चान्निगृहीते तत्तस्यातीतकालत्वान्निग्रहवचनमसमर्थं भवतीति ॥ ६।५० ॥**

**अथोपालंभः उपालंभो नाम हेतोर्दोषवचनम्, यथा पूर्वमहेतवो हेत्वाभासा व्याख्याताः ॥६।५१॥**

**अथ परिहारः परिहारो नाम तस्यैव दोषवचनस्य परिहरणम्, यथा नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते, तस्य चापगमान्नोपलभ्यन्ते तस्मादन्यः शरीरादात्मा नित्यश्चेति ॥ ६।५२ ॥**

**अथ प्रतिज्ञाहानिः प्रतिज्ञाहानिर्नाम सा, पूर्वप्रतिगृहीतां प्रतिज्ञां पर्यनुयुक्तः परित्यजति, यथा प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति, पर्यनुयुक्तस्त्वाह अनित्य इति ॥ ६।५३ ॥**

यत्पूर्वं वाच्यं तत्पश्चादुच्यते इति यथा निगमनमभिधाय पश्चात् प्रतिज्ञोच्यते । निग्रहप्राप्तमिति निग्रहणीयं ज्ञातम् । हेतोर्दोषवचनमित्यनेन कालात्ययापदिष्टासिद्धयोरपीहानुक्तयोर्ग्रहणं कर्तव्यम् । उदाहरणार्थं त्वहेतव उक्ताः । हेतुवदाभासन्त इति हेत्वाभासाः । 'यथा—'नित्यमात्मनि'इत्यादिना प्रकरणसमत्वेनोक्तहेतौ दोषमुद्धरति—नित्यमिति । सर्वदा । जीवलिङ्गानि प्रतिसन्धानस्मरणादीनि । तस्यापगमान्नोपलभ्यन्त इत्यनेन मृतशरीरे चेतनाद्यभावादन्यदेव तत्कारणमुन्नीयते, यदपगमान्न चेतयते मृतशरीरम् । तस्मादन्यत्वमात्मनः सिद्धम् । ततश्च शरीरादन्यत्वात् शरीरविधर्मित्वेन पूर्वव्युत्पादितेन नित्यत्वमपि सिध्यतीत्याह—नित्यश्चेति ॥ ६।५०—६।५३ ॥

**अथाभ्यनुज्ञा अभ्यनुज्ञा नाम य इष्टानिष्टाभ्युपगमः ॥ ६।५४ ॥**

**अथ हेत्वन्तरम् हेत्वन्तरं नाम प्रकृतिहेतौ वाच्ये विकृतिहेतुमाह ॥ ६।५५ ॥**

**अथार्थान्तरम् अर्थान्तरं नाम यथा ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह ॥ ६।५६ ॥**

इष्टानिष्टाभ्युपगमः, यथा भवान् चौर इत्युक्तया दोषं न परिहृत्य, भवानपि चौर इति । एतद्धि वचनं स्वीयमनिष्टचौरत्वं परस्य चेष्टचौरत्वमप्यभ्यनुजानाति । तदेवं वचनं न्याये 'मतानुज्ञा'शब्देनोच्यते ॥ ६।५४—६।५६ ॥

**अथ निग्रहस्थानम् निग्रहस्थानं नाम त्रिरभिहितस्य वाक्यस्यापरिज्ञानं परिषदि विज्ञानवत्यां यद्वा अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः । प्रतिज्ञाहानिरभ्यनुज्ञाकालातीतवचनमहेतवो न्यूनमतिरिक्तं व्यर्थमपार्थकं पुनरुक्तं विरुद्धं हेत्वन्तरमर्थान्तरं निग्रहस्थानम् ॥ ६।५७ ॥**

**इति वादमार्गपदानि यथोद्देशमभिनिर्दिष्टानि भवन्ति ॥ ६।५८ ॥**

निग्रहस्याभिभवस्य स्थानमिव स्थानं कारणमिति निग्रहस्थानम्, परिषदि विज्ञानवत्यामित्यनेन, यदि परिषत् तस्य त्रिरभिहितस्यार्थं विजानाति, प्रतिवादी च न जानाति, तदा तस्य निग्रहस्थानं भवति । अन्यानप्युक्तानेव निग्रहस्थानत्वेनाह—अननुयोज्यस्यानुयोग इत्यादि । एते च व्याकृता एव । अत्र चाप्रतिभादयो न्यायोक्ता अन्तर्भावनीया बुद्धिमद्भिः, आयुर्वेदे तथाविधोपकारकत्वाभावात् तत् प्रपञ्चविषयमपि न प्रपञ्चितम्, न्यायविदां त्वेतदनुक्तमपि सुगममेव, तत्त्ववेदिनां च मनाक् प्रपञ्चोक्तमपि नालं ज्ञानायेत्यलं प्रपञ्चेनेति ॥ ६।५७ ॥ ६।५८ ॥

**वादस्तु खलु भिषजां वर्तमानो वर्तेतायुर्वेद एव नान्यत्र । अत्र हि वाक्यप्रतिवाक्यविस्तराः केवलाश्चोपपत्तयश्च सर्वाधिकरणेषु । ताः सर्वाः समवेक्ष्यावेक्ष्य वाक्यं ब्रूयात्, नाप्रकृतकमशास्त्रमपरीक्षितमसाधकमाकुलमव्यापकं वा सर्वं च**

[1] अहेतुर्न साधकहेतुरित्यर्थ इति पाठान्तरम् ।

**हेतुमद्ब्रूयात्। हेतुमन्तो ह्यकलुषाः सर्व एव वादविग्रहाः चिकित्सिते कारणभूताः प्रशस्तबुद्धिवर्द्धकत्वात्, सर्वारंभसिद्धिं ह्यावहत्यनुपहता बुद्धिः ॥ ७ ॥**

इदनीं यथोक्तवाद एवायुर्वेद आयुर्वेदाध्यायिभिः कर्तव्यः एवंभूतस्यैव वादस्य विवक्षिततत्वं सम्यग्ज्ञानजनकत्वादित्याह—वाद इत्यादि । अथ किमत्र वादविपर्याः सन्तीत्याह— अत्र हीत्यादि । सर्वाधिकरणेषु सन्तीति शेषः । अव्यापकं ब्रूयादिति पूर्वेण सम्बन्धः । वादो विग्रहः शरीरमेव येषां ते वादविग्रहाः जल्पभेदा वितण्डाभेदाश्च । प्रशस्तबुद्धिकर्तृत्वेन कथं वादश्चिकित्सायां भवतीत्याह—सर्वेत्यादिना । न केवलं चिकित्सासिद्धिं करोत्यनुपहता बुद्धिः, किन्तु सर्वारंभसिद्धिं करोतीत्यर्थः ॥ ७ ॥

**इमानि खलु तावदिह कानिचित् प्रकरणानि ब्रूमो भिषजां ज्ञानार्थम्, ज्ञानपूर्वकं कर्मणां समारंभं प्रशंसन्ति कुशलाः। ज्ञात्वा हि कारणकरणकार्ययोनिकार्यफलानुबन्धदेशकालप्रवृत्त्युपायान् सम्यगभिनिवर्तमानः कार्याभिनिर्वृत्ताविष्टफलानुबन्धं कार्यमभिनिर्वर्तयत्यनतिमहता प्रयत्नेन कर्ता ॥ ८ ॥**

संप्रति बुद्धेर्वर्धनकारणतद्विद्यसंभाषाविध्यभिधानप्रसङ्गेणायुर्वेदोपयुक्तकारणकरणाद्यभिधायकान्यपि प्रकरणानि बुद्धिवर्धनान्यभिधातुं प्रतिजानीते—इमानीत्यादि । ज्ञानपूर्वकमिति कर्तृकार्यानुगुणपदार्थज्ञानपूर्वकमित्यर्थः । यानि ज्ञात्वा क्रियमाणं कार्यं साधु भवति, तान्याह—ज्ञात्वेति । अभिनिवर्तमान इत्याभिमुख्येन वर्तमानः । इष्टमतादात्विकं फलमानुबन्धश्च यस्य तदिष्टफलानुबन्धम् ॥ ८ ॥

**तत्र कारणं नाम तद्यत्करोति, स एव हेतुः, स कर्ता ॥ ८।१ ॥**

**करणं पुनस्तद्यदुपकरणायोपकल्पते कर्तुः कार्याभिनिर्वृत्तौ प्रयतमानस्य ॥ ८।२ ॥**

उक्तानि कारणादीनि व्याकरोति—तत्रेत्यादिना । 'यद्' इति 'कारण'प्रत्यवमर्षान्नपुंसकं भवतीति करोति । तेन, इह 'कारण'शब्देन स्वतन्त्रकारणं 'कर्तृ'लक्षणं ब्रुवते । करणं विवृणोति—करणं पुनरित्यादि । उपकरणायेति कर्तुं संपाद्यकार्ये सन्निहितं सहकारितया व्याप्रियते । कार्याभिनिर्वृत्ताविति कार्यनिर्वृत्तिमुद्दिश्य । यतमानस्येति यत्नं कुर्वतः । एतेन यः कार्ये कारणान्तरप्रेरकः, स चात्र कर्ता 'कारण'शब्देनोच्यते, यत्तु कर्त्रधीनव्यापारं साधकतमम्, तत् करणम् । कर्तृत्वं च वै तस्यैव मुख्यम्, यो हि बुद्धिप्रयत्नयुक्तत्वादितरकारणप्रेरको भवति, अचेतने तु कर्तृत्वव्यपदेशः स्वातन्त्र्यविवक्षया भाक्तः ॥ ८।१ ॥ ८।२ ॥

**कार्ययोनिस्तु सा, या विक्रियमाणा कार्यत्वमेवापद्यते ॥ ८।३ ॥**

कार्यस्य योनिः समवायिकारणं कार्ययोनिः । येत्यादि । या योनिः कारणत्वेऽपि विक्रियमाणा रूपान्तरमापद्यमाना कार्यत्वमापद्यते कार्यरूपा भवतीत्यर्थः । तत्र घटस्य मृत्तिका कार्ययोनिः मृदेव ह्यवस्थान्तरप्राप्त्या घटो भवति ॥ ८।३ ॥

**कार्यं तु तद्यस्याभिनिर्वृत्तिमभिसन्धाय प्रवर्तते कर्ता ॥ ८।४ ॥**

**कार्यफलं पुनस्तत्, यत्प्रयोजना कार्याभिनिर्वृत्तिरिष्यते ॥ ८।५ ॥**

**अनुबन्धः खलु सः, यः कर्तारमवश्यमनुबध्नाति कार्यादुत्तरकालं कार्यनिमित्तः शुभो वाप्यशुभो भावः ॥ ८ ॥ ६ ॥**

अभिनिर्वृत्तिमभिसन्धायेति कर्तव्यताबुद्धिं स्थिरीकृत्य । 'कार्यफल'शब्देनेह तादात्विकं कार्यफलं ज्ञेयम्, यथा कुंभकारस्य घटकरणे तन्मूल्यप्राप्तिः । अनुबन्धस्त्वायतीयं फलम्, यथा घटमूल्ये विनियोगः कुटुम्बपोषणादौ । अनुबध्नातीत्युत्तरकालं कर्तारमुपतिष्ठते शुभो वाप्यशुभो वेति,शुभस्य कार्यस्य शुभः, अशुभस्य कार्यस्याशुभः ॥ ८।४—८।६ ॥

**देशस्त्वधिष्ठानम् ॥ ८ ॥ ७ ॥**

**कालः पुनः परिणामः ॥ ८ ॥ ८ ॥**

देशस्त्वधिष्ठानमिति कार्यानुगुणोऽननुगुणो वा आधाररूपो देशः । परिणाम इति परिणामी ऋत्वादिरूपः कालः । तेन नित्यगं कालं निरस्यति, अस्य पूर्वमसाधारणं कार्ये प्रत्यनपेक्षणीयत्वात् ॥ ८।७ ॥ ८।८ ॥

**प्रवृत्तिस्तु खलु चेष्टा कार्यार्था, सैव क्रिया कर्म यत्नः कार्यसमारंभश्च ॥ ८।९ ॥**

**उपायः पुनस्त्रयाणां कारणादीनां सौष्ठवमभिविधानं च सम्यक् कार्यकार्यफलानुबन्धोपायवर्ज्यानाम्, कार्याणामभिनिर्वर्तकः इत्यतस्तूपायः, कृते नोपायार्थोऽस्ति, न च विद्यते तदात्वे, कृताच्चोत्तरकालं फलम्, फलाच्चानुबन्ध इति ॥ ८।१० ॥**

**एतद्दशविधमग्रे परीक्ष्यम्, ततोऽनन्तरं कार्यार्था प्रवृत्तिरिष्टा। तस्माद्भिषकार्यं चिकीर्षुः प्राक्कार्यसमारम्भात्परीक्षया केवलं परीक्ष्यम्, परीक्ष्याथ कर्म समारभेत कर्तुम् ॥ ८।११ ॥**

प्रवृत्तेश्चेष्टादिशब्दाः पर्याया एव लक्षणम् । उपायमाह—उपायः पुनरित्यादि । सौष्ठवमिति । सुष्ठुत्वं कर्त्रादीनां कार्यानुगुणयोगित्वमित्यर्थः । अभिविधानं च सम्यगिति कारणादीनां कार्यानुगुण्येनावस्थानम्, यथा भेषजस्य शिरोविरेचनकारकस्य । तस्य पुनर्नसि च दानं कस्यचित्, कस्यचित् पुनः शिरसि च दानमित्यादि, यथा च पटकारणानां तन्त्वा-

दीनां पटवापनयोग्यतयावस्थानम् । एतच्चोपायरूपं सौष्ठवमभिविधानं च कार्यादित्रिकरहितानां च कारणादीनां ज्ञेयमित्याह—कार्येत्यादि । उपायस्य स्वरूपान्तरमाह—कार्याणामभिनिर्वर्तक इत्यतस्तूपाय इति । असत्युपाये कारणादीनि कार्यं न कुर्वन्तीत्यर्थः । अथ कथं कार्यादिषु उपायत्वं न संभवतीत्याह—कृत इत्यादि । उपायो हि कार्यकारकः, तत्र कृते कार्ये उत्पन्ने नोपायार्थोऽस्ति, न हि कृतं पुनः क्रियते, तेन कार्यगतमप्युपायत्वं न पुनः कार्योत्पादे स्वीकुर्मः । तथा अनुत्पन्ने कार्ये नोपायरूपता भविष्यतीत्याह—न च विद्यते तदात्वे इति, तदात्वे कार्यमिति शेषः, तदात्वे कार्योत्पत्तेः पूर्वं कार्यमेव नास्ति, तेन न तदात्वेऽप्युपायत्वं कार्यस्यास्ति इति । यदा च कार्ये एवोपायत्वं उपायेऽपि उत्तरकालीनत्वेन नास्ति तदा कार्योत्तरकालजयोः फलानुबन्धयोरपि उपायार्थो नास्तीत्याह—कृताचोत्तरकालमित्यादि । उपसंहरति—एतदित्यादि ॥ ८।९—८।११ ॥

**तत्र चेद्भिषग्भिषग्वा भिषजं कश्चिदेवं खलु पृच्छेद् वमनविरेचनास्थापनानुवासनशिरोविरेचनानि प्रयोक्तुकामेन भिषजा कतिविधया परीक्षया कतिविधमेव परीक्ष्यम् कश्चात्र परीक्ष्यविशेषः, कथं च परीक्षितव्यः, किं प्रयोजना च परीक्षा, क्व च वमनादीनां प्रवृत्तिः, क्व च निवृत्तिः, प्रवृत्तिनिवृत्तिलक्षणसंयोगे च किं नैष्ठिकम्, कानि च वमनादीनां भेषजद्रव्याणि उपयोगं गच्छन्तीति॥९॥**

संप्रत्युक्तं कारणादिदशकं वैद्योपयुक्तं भिषगादिदृष्टान्तेन दर्शयितुं 'तत्र चेद्' इत्यादि प्रकरणमारभते—अभिषग्वेति । किंचिदभिषगित्यर्थः । कतिविधं परीक्ष्यमिति कतिप्रकारं परीक्षणीयम् । प्रवृत्तिनिवृत्तिलक्षणसंयोग इति प्रवृत्त्यनुगुणनिवृत्त्यनुगुणयोर्लक्षणयोरेकत्र मेलके । नैष्ठिकमिति निष्ठा निश्चयस्तद्भवं नैष्ठिकं निश्चयेन कर्तव्यमित्यर्थः ॥ ९ ॥

**स एवं पृष्टो यदि मोहयितुमिच्छेत्, ब्रूयादेनम् बहुविधा परीक्षा तथा परीक्ष्यविधिभेदः, कतमेन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षया केन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्य भेदाग्रं भवान् पृच्छत्याख्यायमानम्, नेदानीं भवतोऽन्येन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षयान्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्याभिलषितमर्थं श्रोतुमहमन्येन परीक्षाविधिभेदप्रकृत्यन्तरेणान्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं भित्वान्यथाचक्षाण इच्छां पूरयेयमिति ॥ १० ॥**

यदि मोहयितुमिच्छेदिति यदि विगृह्य संभाषाप्रवृत्तत्वेन मोहयितुमिच्छेदित्यर्थः । तथेति बहुविध इत्यर्थः । विधिरूपो भेदो विधिभेदः, तस्य प्रकृत्यन्तरमिति कारणान्तरम् । भेदाग्रमिति भेदपरिमाणम् । भेदपरिमाणं चेति भेदसंख्यापरिच्छेद एव ज्ञेयः । आख्यायमानमिति च्छेदः । किमर्थं पुनः पृच्छतीत्याकाङ्क्षायामाह—नेदानीमित्यादि । भवतोऽन्यथा श्रोतुमभिलषितमर्थमहमन्यथाऽऽचक्षाणो न भवत इच्छां पूरयेयम् । तेन, त्वमेव तावत् विशेषयित्वा पृच्छेति वाक्यार्थः । यदा तु, 'वेदानीं न पूरयेयम्' इति च पाठः, तदा, वेदानीमित्यग्रे आचक्षाण इच्छां न पूरयेयमिति योजना । किंवा, वेति पूर्वेण युज्यते । तेन, कतमेन विधिभेदप्रकृत्यन्तरेणाख्यायमानं भवानिच्छति, केन वा विधिभेदप्रकृत्यन्तरेणाख्यायमानमिच्छतीति योज्यम् । इदानीमित्यादि तु पूर्ववदाशङ्कायां वचनम्, एतद्विशेषपृच्छकोऽधिकव्याकुलो भवतीति भावः । परीक्ष्यस्यार्थं भवतः श्रोतुमभिलषितमन्यथा आचक्षाण इति योजना ॥ १० ॥

**स यद्युत्तरं ब्रूयात्तत्समीक्ष्योत्तरं वाक्यं स्याद्यथोक्तं प्रतिवचनमवेक्ष्य, सम्यग्यदि तु ब्रूयात्, न चैनं मोहयितुमिच्छेत्, प्राप्तं तु वचनकालं मन्येत, काममस्मै ब्रूयादाप्तमेव निखिलेन ॥ ११ ॥**

तत्समीक्ष्येति तद्वचनं समीक्ष्य यदौपाधिकं[1] भवति, तद् यथोक्तं प्रतिवचनमित्यत्रैवाध्याये विगृह्य संभाषाविधावुक्तम् । अवेक्ष्योत्तरं वाक्यं पक्षान्तरवाक्यम् । पक्षान्तरमाह—सम्यगित्यादि । सम्यग्यदि तु ब्रूयादिति । यदि सन्धाय संभाषां ब्रूयात् । प्राप्तमित्युचितं अनुचिते तु वचनकाले सन्ध्यादौ न वक्तव्यमेव, आप्तमेवेति यथार्थमेवेत्यर्थः ॥ ११ ॥

**द्विविधा खलु परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं च । एतद्धि द्वयमुपदेशश्च परीक्षा स्यात् । एवमेषा द्विविधा परीक्षा, त्रिविधा वा सहोपदेशेन ॥ १२ ॥**

तदेव यथार्थमुत्तरं पूर्वश्लेषेण यथाक्रमेणाह—द्विविधमित्यादि । ज्ञानवतामित्याप्तोपदेशरूपशास्त्रजनितज्ञानवताम् । पक्षान्तरं परीक्षात्रैविध्यमाह—एतद्धीत्यादि । एतच्च परीक्षाया द्वैविध्यं त्रैविध्यं च त्रिविधरोगविशेषविज्ञानीय एव व्याख्यातम् ॥ १२ ॥

**दशविधं तु परीक्ष्यं कारणादि यदुक्तमग्रे, तदिह भिषगादिषु संसार्य सन्दर्शयिष्यामः इह कार्यप्राप्तेः कारणं भिषक्, करणं पुनर्भेषजम्, कार्ययोनिर्धातुवैषम्यम्, कार्यं धातुसाम्यम्, कार्यफलं सुखावाप्तिः, अनुबन्धस्तु खल्वायुः, देशो भूमिरातुरश्च कालः पुनः संवत्सरश्चातुरावस्था च, प्रवृत्तिः प्रतिकर्मसमारंभः उपायस्तु भिषगादीनां सौष्ठवमभिविधानं च सम्यक् । इहाप्यस्योपायस्य विषयः पूर्वेणैवोपायविशेषेण व्याख्यात इति कारणादीनि**

१ यदौपायिकमिति पाठान्तरम् ।

दश दशसु भिषगादिषु संसार्य सन्दर्शितानि तथैवानुपूर्व्या एतद्दशविधं परीक्ष्यमुक्तम् ॥ १३ ॥

भिषगादिषु संसार्येति । भिषगादीनि चोपयुक्तान्युदाहरणानि कृत्वा । धातुवैषम्यमिति, विषमतां गता धातव एव हि विषमामवस्थां परित्यज्य समावस्थामापद्यमाना आरोग्याख्यस्य धातुसाम्यस्य समवायिकारणतया कार्ययोनितामापद्यन्ते । सुखावाप्तिरित्यारोग्यावाप्तिः । उक्तं च—"सुखसंज्ञकमारोग्यम्" इति । आयुश्चानुबन्धरूपम् । यद्यप्येतद्रोगिगतम्, न वैद्यगतम्, तथापि वैद्येन काङ्क्षितत्वाद्वैद्यगतमेव तद्विज्ञेयम् । तेनानुबन्धलक्षणं कर्तारमभिप्रैतीति यदुक्तम्, तदुपपन्नम् । कर्ता ह्यत्र भिषक् । तेनातुरगतमप्यायुर्भिषगपेक्षितत्वेन भिषज एव फलमिति ज्ञेयम् । प्रतिकर्म चिकित्सा । इहाप्यस्य इत्यादि । अत्रापि कार्यफलानुबन्धव्यतिरिक्तानां सौष्ठवमभिविधानं च यथोक्तन्यायेनोपाय इति दर्शयति॥१३॥

तस्य यो यो विशेषो यथा यथा च परीक्षितव्यः, स तथा तथा व्याख्यास्यते ॥ १४ ॥

कारणं भिषगित्युक्तमग्रे, तस्य परीक्षा भिषङ्नाम यो भिषज्यति, यः सूत्रार्थप्रयोगकुशलः,यस्य चायुः सर्वथा विदितम् । यथावत्सर्वधातुसाम्यं चिकीर्षन्नात्मानमेवादितः परीक्षेत गुणेषु[1] गुणतः कार्याभिनिर्वृत्तिं पश्यन् कच्चिदहमस्य कार्यस्याभिनिर्वर्तने समर्थो न वेति तद्यथा; तत्रेमे भिषग्गुणाः, यैरुपपन्नो भिषग्धातुसाम्याभिनिर्वर्तने समर्थो भवति, तद्यथा; पर्यवदातश्रुतता परिदृष्टकर्मता दाक्ष्यं शौचं जितहस्तता उपकरणवत्ता सर्वेन्द्रियोपपन्नता प्रकृतिज्ञता प्रतिपत्तिज्ञता चेति ॥ १४।१ ॥

कश्च परीक्ष्यविशेषः कथं च परीक्षितव्य इति प्रश्नद्वयोत्तरं दातुमाह—तस्येत्यादि । यो यो विशेष इति । कारणादीनां यो यः कर्तृत्वादिः सजातीयाद्वैद्यादेः तथा विजातीयाच्च भेषजादेर्विशेष इत्यर्थः । यथा परीक्षितव्य इत्यस्योदाहरणम्, "कच्चिदहमस्य" इत्येवंग्रन्थवक्ष्यमाणं ज्ञेयम् । भिषज्यति चिकित्सति । सर्वथेति हिताहितसुखदुःखतया । यथावत्सर्वधातुसाम्यमित्यादिना, धातुसाम्यस्य चात्र कारणं भिषक् न केवलं परेण परीक्षणीयः, किन्त्वात्मनाप्यात्मानं स च परीक्षयेदिति दर्शयति । अथ कथमात्मानं परीक्षयेदित्याह—गुणेष्विति । आत्मानं गुणयोगतया परीक्षयेदित्यर्थः । गुणत इति हेतौ पञ्चमी । कच्चिदितीच्छाप्रकाशने । प्रतिपत्तिरुत्पन्नायामापदि झटिति कर्तव्यकरणम् ॥ १४ ॥ १४।१ ॥

करणं पुनर्भेषजम्, भेषजं नाम तद्यदुपकरणायोपकल्पते भिषजो धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य विशेषतश्चोपायान्तेभ्यः । तद्द्विविधं व्यपाश्रयभेदात् दैवव्यपाश्रयं युक्तिव्यपाश्रयं चेति । तत्र दैवव्यपाश्रयम् मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि, युक्तिव्यपाश्रयम् संशोधनोपशमने चेष्टाश्च दृष्टफलाः । एतच्चैव भेषजमङ्गभेदादपि द्विविधं द्रव्यभूतमद्रव्यभूतं च । तत्र यद्द्रव्यभूतम्, तदुपायाभिप्लुतम्, । उपायो नाम भयविस्मापनविस्मारणक्षोभणहर्षणभर्त्सनवधबन्धस्वप्नसंवाहनादिरमूर्तो भावविशेषः यथोक्ताः सिद्ध्युपायाश्चोपायाभिप्लुता इति । यत्तु द्रव्यभूतम् तद्वमनादिषु योगमुपैति, तस्यापीयं परीक्षा इदमेवं प्रकृत्या, एवंगुणमेवंप्रभावमस्मिन् देशे जातमस्मिन्नृतावेवंगृहीतमेवंनिहितमेवमुपस्कृतमनया मात्रया युक्तमस्मिन् व्याधावेवंविधस्य पुरुषस्यैतावन्तं दोषमपकर्षत्युपशमयति वा, यदन्यदपि चैवंविधं भेषजमभूत्तच्चानेन विशेषेण युक्तमिति ॥ १४।२ ॥

विशेषतश्चोपायान्तेभ्य इत्यनेन, कार्ययोनिप्रवृत्तिदेशकालोपायेभ्योऽन्यद्यत्कर्तुरुपकरणं भवतीति तत्करणं इति दर्शयति । कार्ययोनिर्हि लोके विचार्य कर्मतया साधकतमात्करणात् पृथगुच्यते । प्रवृत्त्युपाययोश्च कर्तृकरणादिधर्मत्वेन न करणसंज्ञा । देशकालौ तु न साधकतमौ । तेन, उपायान्तेभ्यो यथोक्तविशेषेण यत् कर्तुरुपकरणं भवति, तत् करणम् । अत्र व्यपाश्रयद्वैविध्ये च सत्त्वावजयोऽपि भेषजमवरुद्धं ज्ञेयम् । सत्त्वावजयो हि दृष्टद्वारोपकारी युक्तिव्यपाश्रये, तथा, अदृष्टद्वारोपकारी तु दैवव्यपाश्रये प्रविशति । अतएवोक्तं युक्तिव्यपाश्रयव्याकरणे "चेष्टाश्च दृष्टफलाः" इति । 'चेष्टा' शब्देन मनश्चेष्टापि 'सत्त्वावजय'लक्षणा गृह्यते । पुनरौषधस्य प्रकारान्तरद्वैविध्यमाह—अङ्गभेदादित्यादि । अङ्गं शरीररूपं स्वरूपमिति यावत् । तेन, स्वरूपभेदादित्यर्थः । द्रव्यभूतं द्रव्यरूपम्, एवमद्रव्यरूपम् । उपायाभिप्लुतमिति उपायव्याप्तं उपायग्रहणगृहीतमिति यावत् । एवमन्ये भयादयोऽमूर्तभावा न साक्षादारोग्यकारणानि भवन्ति, किं तर्हि शरीरस्थितानेव वातादीन् तथा कुर्वन्ति समत्वेनोत्पाद्यमानान् । न ह्यमूर्तानि मूर्तानां शरीरधातूनामुत्पत्तौ समवायिकारणानि भवन्ति, भेषजं तु द्रव्यभूतं समशरीरोत्पादे समवायिकारणं भवत्येव । तेन, द्रव्यस्यारोग्यं प्रति साधकतमत्वं साधु, अमूर्तानां उपायादीनां न भेषजवत् साधकतमत्वमिति कृत्वा द्रव्यजन्य एव धातुसाम्ये तेषामुपायत्वं युक्तम् । एवं सूक्ष्मया बुद्ध्या भयादीनामुपायत्वम्, स्थूलया तु बुद्ध्या भेषजव्यवहारश्चाचार्याभिमतो द्विविधभेषजेऽर्थेऽद्रव्यभूतभयादिग्रहणादुन्नीयते । न केवलमद्रव्यभूतं भेषजमुपायव्याप्तम्, किं तु अन्येऽपि परिचारकग्रहणगृहीता एवेत्याह—यथोक्ताः सिद्ध्युपायाश्चेति ।

[1] गुणिष्विति पाठान्तरम् ।

यथोक्ताः सिद्ध्युपायाश्च परिचारकादयोऽत्र दशविधपरीक्ष्ये तु साक्षादनुक्ता उपायाभिप्लुता एवेत्यर्थः । किं वा उपायाभिप्लुतमिति उपायमिश्रितम् । तत्र भयाद्यमूर्तभेषज एव यथोक्ताश्चोपायाः कारणादिसौष्ठवसम्यगभिविधानरूपा अद्रव्यभूतभेषजपक्षगृहीता इत्यर्थः । तेन, भयादिषु च तथा 'उपाय'शब्दाभिधेयेषु च 'अद्रव्यभूतभेषज'शब्दप्रयोगो भवतीति दर्शयति । ये तु, "उपायान्ताभिप्लुतम्" इति पठन्ति, ते, देशकालावेव 'अद्रव्यभूतभेषजम्' इति वदन्ति । वदन्ति च 'द्रव्य'शब्देन क्वाथकल्काद्युपयोजनीयं द्रव्यं 'द्रव्यम्' उच्यते इति । एतच्च मनोहारि । अनेन चानेनेति साधनभूतेन च 'एवंप्रकृत्या' इत्यादिनोक्तेन तथा साध्येन च 'एवंविधस्य पुरुषस्य' इत्यादिनोक्तेन विशेषेण युक्तमभूदित्यर्थः ॥ १४।१२ ॥

**कार्ययोनिर्धातुवैषम्यं, तस्य लक्षणं विकारागमः परीक्षा त्वस्य विकारप्रकृतेश्चैवोनातिरिक्तलिङ्गविशेषावेक्षणं विकारस्य च साध्यासाध्यमृदुदारुणलिङ्गविशेषावेक्षणमिति ॥ १४।१३ ॥**

तस्य लक्षणं धातुवैषम्यं प्रत्युपपन्नमित्यर्थः । विकारप्रकृतेरिति विकारस्य प्रकृतेर्दोषस्येत्यर्थः ॥ १४।१३ ॥

**कार्यं धातुसाम्यम्, तस्य लक्षणं विकारोपशमः परीक्षा त्वस्य रुगपगमनं स्वरवर्णयोगः शरीरोपचयो बलवृद्धिरभ्यवहार्याभिलाषो रुचिराहारकालेऽभ्यवहृतस्य चाहारस्य सम्यग्जरणं निद्रालाभो यथाकालं वैकारिकाणां च स्वप्नानामदर्शनं सुखेन च प्रतिबोधनं वातमूत्रपुरीषरेतसां मुक्तिश्च सर्वाकारैर्मनोबुद्धीन्द्रियाणां चाव्यापत्तिरिति ॥ १४।१४ ॥**

**कार्यफलं सुखावाप्तिः, तस्य लक्षणं मनोबुद्धीन्द्रियशरीरतुष्टिः ॥ १४।१५ ॥**

**अनुबन्धस्तु खल्वायुः, तस्य लक्षणं प्राणैः सह संयोगः ॥ १४।१६ ॥**

सर्वाकारैरिति सर्वशुभलक्षणैः । सुखावाप्तिरित्यात्मगुणसुखप्राप्तिः । प्राणैः सह संयोग इति प्राणलक्षणवायुना योग इत्यर्थः । तेन 'प्राण'शब्दस्यायुषो भिन्नार्थत्वाल्लक्ष्यलक्षणयोर्भेदः ॥ १४।१४—१४।१६ ॥

**देशस्तु भूमिरातुरश्च ॥ १४।७ ॥**

**तत्र भूमिपरीक्षा आतुरपरिज्ञानहेतोर्वा स्यादौषधपरिज्ञानहेतोर्वा । तत्र तावदियमातुरपरिज्ञानहेतोः । तद्यथा कस्मिन्नयं भूमिदेशे जातः संवृद्धो व्याधितो वेति, तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातमिदं विहारजातमिदमाचारजातमेतद्बलमेवंविधं सत्त्वमेवंविधं सात्म्यं एवंविधो दोषः भक्तिरियं इमे व्याधयो हितमिदमहितमिदमिति प्रायोग्रहणेन । औषधपरिज्ञानहेतोस्तु कल्पेषु भूमिपरीक्षा वक्ष्यते ॥ १४।७।१ ॥**

क्रमप्राप्तं देशमाह देश इत्यादि । 'आतुर'शब्देनेह शङ्क्यमानातुर्यतया स्वस्थवृत्तोपदर्शनीयः स्वस्थोऽपि ग्राह्यः । सोऽपि हि परीक्ष्यत एव स्वस्थवृत्तप्रयोगार्थम् । 'परि'शब्दो विशेषार्थः । तेन, आतुरस्य सकलदेशकृतविशेषेण ज्ञानमातुरपरिज्ञानम् । एवं भेषजपरिज्ञानेऽपि देशकृतविशेषज्ञानं परिज्ञानं बोद्धव्यम् । संवृद्ध इति वर्द्धितः । एवंविधं सात्म्यमित्योकसात्म्यमित्यर्थः । इदं हितमित्यनेन च देशापेक्षया विपरीतगुणसात्म्यं ब्रूते । प्रायोग्रहणेनेतिच्छेदः, प्रायोग्रहणेन न कान्ततः परीक्षेत इति योजना, 'प्रायः'शब्देन च, देशेनाहाराद्यनुमानं निश्चितं किं तु प्रायो भवतीति दर्शयति—कल्पेष्विति । मदनादिकल्पेषु, तत्र यद्यपि प्रथम एव तु कल्पे भूमिपरीक्षा वक्तव्या, तथाप्यत्र कल्पेष्विति यदप्यतिदेशेन कथनात् 'बहुवचनं' कृतम्, तदुत्तरकल्पवक्तव्यान्यपि हि द्रव्याण्यपि यथोक्त एव देशे ग्राह्याणीति दर्शनार्थम् ॥१४।७। १४।७।१ ॥

**आतुरस्तु खलु कार्यदेशः, तस्य परीक्षा आयुषः प्रमाणज्ञानहेतोर्वा स्याद्बलदोषप्रमाणज्ञानहेतोर्वा । तत्र तावदियं बलदोषप्रमाणज्ञानहेतोः दोषप्रमाणानुरूपो हि भेषजप्रमाणविकल्पो बलप्रमाणविशेषापेक्षो भवति, सहसा ह्यतिबलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमभिपातयेत् । न ह्यतिबलान्याग्नेयसौम्यवायवीयान्यौषधान्यग्निक्षारशस्त्रकर्माणि वा शक्यन्तेऽल्पबलैः सोढुम् । अविषह्यातितीक्ष्णवेगत्वाद्धि सद्यःप्राणहराणि स्युः । एतच्चैव कारणमपेक्षमाणा हीनबलमातुरमविषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकैश्चोपचरन्त्यौषधैः, विशेषतश्च नारीः । ता ह्यनवस्थितमृदुवृत्तविक्लवहृदयाः प्रायः सुकुमार्योऽबलाः परसंस्तभ्याश्च ॥ १४।७।२ ॥**

**तथा बलवति बलवद्व्याधिपरिगते स्वल्पमौषधमपरीक्षकप्रयुक्तमसाधकं भवति ॥ १४।७।३ ॥**

भूमिरूपं देशमभिधायातुरमाह—आतुरस्तु खल्वित्यादि । कार्यदेश इति कर्तव्यधातुसाम्याधार इत्यर्थः, बलस्य दोषस्य च प्रमाणं बलदोषप्रमाणम्; इयमित्यग्रे "तस्मादातुरं परीक्षेत," इत्यादिग्रन्थवक्ष्यमाणा । अथ किमर्थं बलदोषपरीक्षा शरीरस्य कर्तव्येति प्रकरणार्थः । बलप्रमाणविशेषापेक्ष इति । यदि बलवच्छरीरं भवति, तदैव दोषप्रमाणापेक्षया महौषधप्रमाणं भवति । विपर्ययेण व्याकरोति । अल्पबले रोगिण्यपरीक्षकप्रयुक्तमेवातिमात्रं भवतीत्युक्तम्, न तु परीक्षकप्रयुक्तम् । सद्यः प्राणहराणि स्युरिति अल्पबल इत्यर्थः । अविषादकरं श-

रीरमनसोरग्लानिकरम्, उत्तरोत्तरं प्रमाणलक्षणगुरुत्वं येषाम्, तैः। तेन, दुर्बले यदि महादोषः, स च भूममात्रभेषजसाध्यस्तथापि तदात्वव्यापत्तिभयान्न सहसा भेषजभूयस्त्वं कर्तव्यम्, किन्तूत्तरोत्तरमभ्यासवशाद्बलमपेक्ष्य भेषजभूयस्त्वं कर्तव्यमिति दर्शयति। अविभ्रमैरिति पाककालेऽप्यविकारिकैः। अनात्ययिकैरिति न महाविपत्तिकरैः। यथोक्तगुणभेषजं विशेषेण स्त्रीणां कर्तव्यमित्याह—विशेषत इत्यादि। 'हृदय'शब्देन हृदयस्थं मन इति ज्ञेयम्। मृदुवृत्तमगम्भीरम्। विक्लवं स्तोकक्लेशाभिभवनीयम्। अनेन च दुर्बलचेतस्त्वमुक्तम्। परसंस्तंभ्याः न स्वयमात्मानं सहवचनात् स्तंभयन्ति। तथेत्यादिनाऽल्पप्रमाणभेषजदोषमाह। 'बलवद्व्याधिपरिगते' इतिवचनेन य एव बलवान् व्याधिर्बलवतः, स एवाल्पभेषजासाध्यः, यस्तु बलवतोऽप्यबलः, सोऽल्पभेषजसाध्य एव ॥ १४।७।२ ॥ १४।७।३ ॥

**तस्मादातुरं परीक्षेत प्रकृतितश्च विकृतितश्च सारतश्च संहननतश्च प्रमाणतश्च सात्म्यतश्च सत्वतश्चाहारशक्तितश्च व्यायामशक्तितश्च वयस्तश्चेति बलप्रमाणविशेषग्रहणहेतोः। तत्र प्रकृत्यादीन् भावाननुव्याख्यास्यामः। तद्यथा शुक्रशोणितप्रकृतिम्, कालगर्भाशयप्रकृतिम्, आतुराहारविहारप्रकृतिम्, महाभूतविकारप्रकृतिं च गर्भशरीरमपेक्षते। एतानि हि येन येन दोषेणाधिकतमेनैकेनानेकेन वा समनुबध्यन्ते, तेन तेन दोषेण गर्भोऽनुबध्यते। ततः सा सा दोषप्रकृतिरुच्यते मनुष्याणां गर्भादिप्रवृत्ता। तस्माद्वातलाः प्रकृत्या केचित्, पित्तलाः केचित्, श्लेष्मलाः केचित्, संसृष्टाः केचित्, समधातवः प्रकृत्या केचित् भवन्ति। तेषां हि लक्षणानि व्याख्यास्यामः॥१४।७।४**

परीक्षाहेतुमभिधाय यथा शरीरं परीक्षणीयं तदाह—तस्मादित्यादि। बलप्रमाणविशेषग्रहणहेतोरित्यत्र देहबलं दोषबलं च सामान्येन गृह्यते। येन, विकृतितः शरीरज्ञानं दोषबलज्ञानहेतोर्भवति, तदेव "प्रकृत्यादीनां विकृतिवर्जानाम्" इत्यादिना वक्ष्यति। किंवा बलं शारीरं बलमेवोच्यते, तत्र च विकृतिबलेनापि शरीरबलं बुध्यत इति कृत्वा इह सामान्येनोक्तम्, उत्तरत्र तु विकृत्या दोषप्रमाणं प्रायो विज्ञायत इति कृत्वा "विकृतिबलत्रैविध्येन दोषबलत्रैविध्यमनुमीयते" इत्युक्तम्। प्रकृतिमिति स्वभावम्। एतानि तु शुक्रादीनि शुक्रशोणिते वा। यादृगवस्थो दोषस्तादृग्गर्भे प्रकृतिर्भवति, -यथा शुक्रशोणितमेलककाले यो दोष उत्कटो भवति, स प्रकृतिमारभते, एवं गर्भाशयस्थश्च दोषः। मातुराहारविहारौ तत्कालीनौ यद्दोषकरणस्वभावौ, सा च प्रकृतिर्गर्भशरीरे भवति। एषु च प्रकृत्यारम्भकेषु कारणेषु यद्बलवद्भवति कारणान्तरबृंहितं च, तदेव प्रकृत्यारम्भकं भवति। कालादयश्च शुक्रशोणितमेव कुर्वन्तः प्रकृतिजनका भवन्तीति। तन्त्रान्तरे शुक्रशोणितगतदोषेणैव प्रकृत्युत्पादो दर्शितः। गर्भादिप्रवृत्तेति गर्भस्यादिमेलके प्रवृत्ता। समैर्दोषैर्वृद्धैर्गर्भजन्मैव न भवति इति विकृतदोषत्रयं प्रकृतेरारंभकमिति ज्ञेयम्। प्रकृतिविकारश्च सूत्रस्थान एव व्याकृतः ॥ १४।७।४ ॥

**श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमन्दस्तिमितगुरुशीतविज्जलाच्छः, तस्य स्नेहात् श्लेष्मलाः स्निग्धाङ्गाः, श्लक्ष्णत्वात् श्लक्ष्णाङ्गाः, मृदुत्वात् दृष्टिसुखसुकुमारावदातगात्राः, माधुर्यात् प्रभूतशुक्रव्यवायापत्याः, सारत्वात् सारसंहतस्थिरशरीराः, सान्द्रत्वादुपचितपरिपूर्णसर्वगात्राः, मन्दत्वान्मन्दचेष्टाहारव्याहाराः, स्तैमित्यादशीघ्रारंभाल्पक्षोभविकाराः, गुरुत्वात् साराधिष्ठितावस्थितगतयः, शैत्यादल्पक्षुत्तृष्णासन्तापस्वेददोषाः, विज्जलत्वात् सुश्लिष्टसारसन्धिबन्धनाः, तथाऽच्छत्वात् प्रसन्नदर्शनाननाः प्रसन्नवर्णस्वराश्च। त एवंगुणयोगात् श्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त ओजस्विन आयुष्मन्तश्च भवन्ति १४।७।५**

मृदुत्वं जलकृतम्, जलं चावदातमिति मृदुत्वादेवावदातत्वम्। 'अशीघ्र'शब्द आरम्भादिभिः प्रत्येकमभिसम्बध्यते। सारगतयो न स्खलन्ति, अधिष्ठितगतयः सर्वेण पादेन महीमाक्रमन्ति। अवस्थितगतयः अवस्थितत्वेन पादगतिर्भवति। प्रसन्ने दर्शनानने यस्य स तथा। वसुमत्त्वादि प्रकृतिरूपं यद्भवति, तत्प्रकृतिभावाज्ज्ञेयम् ॥ १४।७।५ ॥

**पित्तमुष्णं तीक्ष्णं द्रवं विस्रमम्लं कटुकं च। तस्यौष्ण्यात् पित्तला भवन्त्युष्णासहा उष्णमुखाः सुकुमारावदातगात्राः प्रभूतपिप्लुव्यंगतिलकालकाः क्षुत्पिपासावन्तः क्षिप्रवलीपलितखालित्यदोषाः प्रायोमृद्वल्पकपिलश्मश्रुलोमकेशाः, तैक्ष्ण्यात्तीक्ष्णपराक्रमास्तीक्ष्णाग्नयः प्रभूताशनपानाः क्लेशासहिष्णवो दन्दशूकाः, द्रवत्वात् शिथिलमृदुसन्धिमांसाः प्रभूतसृष्टस्वेदमूत्रपुरीषाश्च, विस्रत्वात्पूतिवक्षःकक्षास्यशिरःशरीरगन्धाः, कट्वम्लत्वादल्पशुक्रव्यवायापत्याः त एवंगुणयोगात् पित्तला मध्यबला मध्यायुषो मध्यज्ञानविज्ञानवित्तोपकरणवन्तश्च भवन्ति ॥ ॥ १४।७।६ ॥**

**वातस्तु रूक्षलघुचलबहुशीघ्रशीतपरुषविशदः। तस्य रौक्ष्याद्वातला रूक्षापचितालपशरीराः प्रततरूक्षक्षामभिन्नमन्दसक्तजर्जरस्वराः जागरूकाश्च भवन्ति, लघुत्वाच्च लघुचपलगतिचेष्टाहारव्याहाराः, चलत्वादनवस्थितसन्ध्यक्षिभ्रूहन्वोष्ठजिह्वाशिरःस्कन्धपाणिपादाः, बहुत्वाद्बहुप्रलापकण्डरा-**

सिराप्रतानाः, शीघ्रत्वात् शीघ्रसमारम्भक्षोभविकाराः शीघ्रोत्रासरागविरागाः श्रुतग्राहिणोऽल्पस्मृतयश्च, शैत्यात् शीतासहिष्णवः प्रततशीतकोद्वेपकस्तम्भाः, पारुष्यात्परुषकेशश्मश्रुरोमनखदशनवदनपाणिपादाङ्गाः वैशद्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनश्च भवन्ति, त एवं गुणयोगाद्वातलाः प्रायेणाल्पबलाश्चाल्पायुषश्चाल्पापत्याश्चाल्पसाधनाश्चाधन्याश्च भवन्ति ॥ १४।७।७ ॥

संसर्गात्संसृष्टलक्षणाः ॥ १४।७।८ ॥

दंदशूकाः पुनः पुनर्भक्षणशीलाः। प्रभूताशनस्तु बहुभक्षणत्वेन। पूतिर्विस्रःप्रभृतिषु गन्धो येषां ते तथा। प्रततः प्रसृतः। भिन्नो भग्नपात्रध्वनिसमः। मन्दो हीनः। सक्तो बद्धः। सततसन्धिशब्दगामिन इति सन्धिस्फुटनशब्दवन्तः ॥ १४।७।६—१४।७।८ ॥

सर्वगुणसमुदितास्तु समधातवः इत्येवं प्रकृतितः परीक्षेत ॥ १४।७।९ ॥

विकृतितश्चेति विकृतिरुच्यते विकारः, तत्र विकारं हेतुदोषदूष्यप्रकृतिदेशकालबलविशेषैर्लिङ्गतश्च परीक्षेत, न ह्यन्तरेण हेत्वादीनां बलविशेषं व्याधिबलविशेषोपलब्धिः यस्य हि व्याधेर्दोषदूष्यप्रकृतिदेशकालबलसाम्यं भवति महच्च हेतुलिङ्गबलम्, स व्याधिर्बलवान् भवति, तद्विपर्ययाच्चाल्पबलः, मध्यबलस्तु दोषादीनामन्यतमसामान्याद्धेतुलिङ्गमध्यबलत्वाच्चोपलभ्यते ॥ १४।७।१० ॥

सर्वगुणसमुदिता इति सर्वप्रकृतियुक्ताः प्रशस्तगुणयुक्ताः, यदुक्तं वाग्भटे "समधातुः समस्तासु श्रेष्ठः" इति। यदि च प्रशस्तगुणता न स्यात्, न तदा श्रेष्ठत्वं स्यात्। साम्यस्थिताश्च दोषाः साम्यप्रभावादेव गुणान् परान् कुर्वते, न दोषान् इति ज्ञेयम्। साम्यं भवतीति परस्परतुल्यगुणता भवति। महच्च हेतुलिङ्गबलमिति हेतवो लिङ्गानि च बलवन्ति भूयांसि च। अन्यतमसामान्यादिति दोषादीनां सामान्ये केनचित्, केनचिदसामान्ये सतीत्यर्थः ॥ १४।७।९—१४।७।१० ॥

सारतश्चेति साराण्यष्टौ पुरुषाणां बलमानविशेषज्ञानार्थमुपदिश्यन्ते, तद्यथा . त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्वानि ॥ १४।७।११ ॥

तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगंभीरसुकुमारलोमा सप्रभेव त्वक् त्वक्साराणाम्। सा सारता सुखसौभाग्यैश्वर्योपभोगबुद्धिविद्यारोग्यप्रहर्षणान्यायुश्चानित्वरमाचष्टे ॥ १४।७।११।१ ॥

सारतश्चेत्यादौ 'सार'शब्देन विशुद्धतरो धातुरुच्यते। सुप्रभेति प्रभायुक्ता। त्वक्साराणामितिच्छेदः। तथेयं सारता किं करोतीत्याह—सा सारतेत्यादि। एवमन्यत्रापि सारतेति व्याख्यातव्यम् ॥ १४।७।११—१४।७।११।१ ॥



कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादतलनखललाटमेहनं च स्निग्धरक्तं श्रीमद्भ्राजिष्णु रक्तसाराणाम्। सा सारता सुखमुदग्रतां मेधां मनस्वित्वं सौकुमार्यमनतिबलमक्लेशसहिष्णुत्वमुष्णासहित्वं चाचष्टे ॥ १४।७।११।२ ॥

शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोरःकक्षवक्षःपाणिपादसन्धयः गुरुस्थिरमांसोपचिता मांससाराणाम्। सा सारता क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे ॥ १४।७।११।३ ॥

वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहो मेदःसाराणाम्, सा सारता वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारतामाचष्टे ॥ १४।७।११।४ ॥

पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्वस्थूलाः स्थूलास्थिनखदन्ताश्चास्थिसाराः। ते महोत्साहाः क्रियावन्तः क्लेशसहाः सारस्थिरशरीरा भवन्त्यायुष्मन्तश्च ॥ १४।७।११।५ ॥

तन्वङ्गा[1] बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयश्च मज्जसाराः। ते दीर्घायुषो बलवन्तः श्रुतवित्तविज्ञानापत्यसंमानभाजश्च भवन्ति ॥ १४।७।११।६ ॥

सौम्याः सौम्यप्रेक्षिणश्च क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिचश्च शुक्रसाराः, ते स्त्रीप्रियोपभोगा बलवन्तः सुखैश्वर्यारोग्यवित्तसंमानापत्यभाजश्च भवन्ति १४।७।११।७

स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षाः धीराः समरविक्रान्तयोधिनः त्यक्तविषादास्ववस्थितगतिगम्भीरबुद्धिचेष्टाः कल्याणाभिनिवेशिनश्च सत्वसारास्तेषां स्वलक्षणैरेव गुणा व्याख्याताः ॥ १४।७।११।८ ॥

तत्र सर्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः परमगौरवयुक्ताः[2] क्लेशसहाः सर्वारम्भेष्वात्मनि जातप्रत्ययाः[3] कल्याणाभिनिवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनादस्निग्धगंभीरमहास्वराः सुखैश्वर्यवित्तोपभोगसंमानभाजो मन्दजरसो मन्दविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिरजीविनश्च प्रायो भवन्ति ॥ १४।७।११।९ ॥

१ मृदङ्गा इति पाठान्तरम्। २ परमसुखयुक्ता इति पाठान्तरम्। ३ जातप्रत्याशा इति पाठान्तरम्।

अतो विपरीतास्त्वसाराः ॥ १४।७।११।१० ॥

मध्यानां मध्यैः सारविशेषैर्गुणविशेषा व्याख्याता भवन्ति इति साराण्यष्टौ पुरुषाणां बलप्रमाणविशेषज्ञानार्थानि उपदिष्टानि भवन्ति ॥१४।७।११।११॥

कथं नु शरीरमात्रदर्शनादेव भिषक् मुह्येदयमुपचितत्वाद्बलवानयमल्पबलः कृशत्वादयं महाबलवान् महाशरीरत्वादयमल्पशरीरत्वादल्पबल इति। दृश्यन्ते ह्यल्पशरीराः कृशाश्चैके बलवन्तः, तत्र पिपीलिकाभारहरणवत् सिद्धिरतश्च सारतः परीक्षेत इत्युक्तम् ॥ १४।७।११।१२ ॥

संहननतश्चेति, संहननं सङ्घातः संयोजनमित्येकोऽर्थः, तत्र समसुविभक्तास्थिसुबद्धसन्धिसुनिविष्टमांसशोणितं सुसंहतं शरीरमित्युच्यते। तत्र सुसंहतशरीराः पुरुषा बलवन्तो विपर्ययेणाल्पबलाः, प्रवरावरमध्यत्वात् संहननस्य मध्यबला भवन्ति ॥ १४।७।१३ ॥

श्रीमदिति शोभायुक्तम्। अरत्निः कफोणिका। शिखरदशना शोभनदशनाः। स्त्रीप्रिय उपभोगः संभोगो येषां ते तथा। समरे विक्रम्य योधयन्तीति समरविक्रान्तयोधिनः। अवस्थिता इति परिस्थिताः। तुल्यगुणविस्तीर्णापत्या इति जनितात्मसदृशापत्याः। 'प्रायः'शब्देन नियमनं निषेधयति। मध्यानामिति स्तोकसाराणाम्। मध्यैः सारविशेषैरिति ये यत्र संभवन्ति सारास्तथा सारभूतैरित्यर्थः। उपचितत्वादिति स्थूलत्वात्; महाशरीरत्वादिति अतिप्रमाणशरीरत्वात्; पिपीलिकाभारहरणवदिति स्वल्पाः पिपीलिका यथा सारशरीरत्वेन महान्तं भारं नयन्ति, तथाऽन्ये कृशशरीराश्चेत्यर्थः; सङ्घात इति निबिडसन्धान इत्यर्थः ॥ १४।७।११।१२—१४।७।१३ ॥

प्रमाणतश्चेति, शरीरप्रमाणं पुनर्यथास्वेनाङ्गुलिप्रमाणेनोपदेक्ष्यते उत्सेधविस्तारायामैर्यथाक्रमम्। तत्र पादौ चत्वारि, षट्, चतुर्दशाङ्गुलानि, जङ्घे त्वष्टादशाङ्गुले षोडशाङ्गुलपरिक्षेपे च, जानुनी चतुरङ्गुले षोडशाङ्गुलपरिक्षेपे, त्रिंशदङ्गुलपरिक्षेपावष्टादशाङ्गुलावूरू, षडङ्गुलदीर्घौ वृषणावष्टाङ्गुलपरिणाहौ, शेफः षडङ्गुलदीर्घं पञ्चाङ्गुलपरिणाहम्, द्वादशाङ्गुलिपरिमितो भगः, षोडशाङ्गुलविस्तारा कटी, दशाङ्गुलं बस्तिशिरः, दशाङ्गुलविस्तारं द्वादशाङ्गुलमुदरम्, दशाङ्गुलविस्तीर्णे द्वादशाङ्गुलायामे पार्श्वे, द्वादशाङ्गुलविस्तारं स्तनान्तरम्, द्व्यङ्गुलं स्तनपर्यन्तम्, चतुर्विंशत्यङ्गुलविशालं द्वादशाङ्गुलोत्सेधमुरः, द्व्यङ्गुलं हृदयम्, अष्टाङ्गुलौ स्कन्धौ, षडङ्गुलावंसौ, षोडशाङ्गुला प्रबाहू, पञ्चदशाङ्गुलौ प्रपाणी, हस्तौ दशाङ्गुलौ, कक्षावष्टाङ्गुलौ, त्रिकं द्वादशाङ्गुलोत्सेधम्, अष्टादशाङ्गुलोत्सेधं पृष्ठम्; चतुरङ्गुलोत्सेधा द्वाविंशत्यङ्गुलपरिणाहा शिरोधरा, द्वादशाङ्गुलोत्सेधं चतुर्विंशत्यङ्गुलपरिणाहमाननम्, पञ्चाङ्गुलमास्यम्। चिबुकोष्ठकर्णाक्षिमध्यनासिकाललाटं चतुरङ्गुलम्, षोडशाङ्गुलोत्सेधं द्वात्रिंशदङ्गुलपरिणाहं शिर इति पृथक्त्वेनाङ्गावयवानां मानमुक्तम् केवलं पुनः शरीरमङ्गुलिपर्वाणि चतुरशीतिस्तदायामविस्तारसमं समुच्यते। तत्रायुर्बलमोजःसुखमैश्वर्यं वित्तमिष्टाश्चापरे भावा भवन्त्यायत्ताः प्रमाणवति शरीरे, विपर्ययस्तु हीनेऽधिके वा ॥ १४।७।१४ ॥

प्रमाणतश्चेत्यादिना प्रशस्तं प्रमाणमङ्गावयवानामित्याह; पादौ उत्सेधेन चत्वारि, विस्तारेण षट्, दैर्घ्येण चतुर्दशाङ्गुलानीति यथाक्रमं भवतः; जङ्घा जान्वध उच्यते; परिक्षेपः परिणाहः; जानुजङ्घोरुसन्धिपरिणाहपरिमाणं च यदुच्यते, तन्मध्यस्थानस्य, तेन, सहपरिणाहमानेषु जङ्घादिषु मध्यस्थानमेतत् ज्ञेयम्। कट्या उत्सेधपरिमाणं नोक्तम्, तस्या उत्सेधस्योर्वादिसन्धित्वेन तस्याः पृथगुत्सेधप्रमाणस्याऽविद्यमानत्वात्; प्रबाहुरंसादर्वाक् कफोणिपर्यन्तः। प्रपाणिः कफोण्यधस्तात्। त्रिकमिति गुदस्फिक्कटीकपालार्द्धपर्यन्तम्[1]। चिबुकं च ओष्ठश्च कर्णौ च अक्षिमध्यं च नासिका च ललाटं च प्रति प्रति चतुरङ्गुलम्। षडङ्गुलोत्सेधं शिर इति पृष्ठमनु ग्रीवाया उपरि ज्ञेयम्। केवलमिति पादतलात्प्रभृति शिरःपर्यन्तं चतुरशीत्यङ्गुलं भवति, एवं सार्द्धत्रिहस्तप्रमाणशरीरत्वं स्वहस्तेन शरीरस्य भवति। अत्र च प्रत्यवयवोत्सेधेन चतुरशीत्यङ्गुलादधिकं यत् शरीरं भवति, तदवयवानामवयवान्तरदैर्घ्यानुप्रविष्टानां ग्रहणात् तेन, प्रत्यवयवदैर्घ्यमानेन न चतुरशीत्यङ्गुलं गमनीयं किंतु समुदितमेव शरीरम्। तत्र पादस्याङ्गुलानि चत्वारि, जङ्घाया अष्टादश, जानुनश्चत्वारि, शिरसः षट्, एवं चतुरशीत्यङ्गुलानि घटन्ते। सुश्रुतेन समं योऽत्र मानविरोधः, सोऽत्राङ्गुलिमानभेदात् शमयितव्यः। तत्र हि सविंशमङ्गुलिशतं पुरुषमानमुक्तम्। तेन, तत्राङ्गुलिमानमेवाल्पं ज्ञेयम्। आयामविस्तारसममिति यथोक्तप्रत्यवयवायामविस्तारयुक्तम्। किंवा, यावदायामेन चतुरशीत्यङ्गुलम्, तावद् यदि विस्तृतबाहुद्वयप्रमाणेन विस्तारेण च शरीरं भवति, तदा आयामविस्तारसमं भवति। तत्रेति यथोक्तप्रमाणवति शरीर इति योजनीयम्। हीन इति हीनप्रमाणे। एवमधिक इति अधिकप्रमाणे ॥ १४॥ ७।१४ ॥

सात्म्यतश्चेति, सात्म्यं नाम तद्यत्सातत्येनोपसेव्यमानमुपशेते, तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्वरससात्म्याश्च, ते बलवन्तः क्लेशसहाः

[1] गुदस्फुटकटीकपालार्द्धपर्यन्तमिति पाठान्तरम्।

चिरजीविनश्च भवन्ति, रूक्षसात्म्याः पुनरेकरससात्म्याश्च ये, ते प्रायेणाल्पवलाः क्लेशासहा अल्पायुषोऽल्पसाधानाश्च व्यामिश्रसात्म्यास्तु ये ते मध्यवलाः सात्म्यनिमित्ततो भवन्ति ॥ १४।७।१५ ॥

सात्म्यतश्चेत्यत्र 'सात्म्य'शब्देन औकिकसात्म्यमुच्यते, प्रकृतिसात्म्यादीनां भेषजादिपरीक्षयैव परीक्षितत्वादिति ज्ञेयम् । अल्पसाधना इत्यल्पभेषजाः, एकरससात्म्यानां पञ्चरसा असात्म्यत्वेनापथ्या इति भावः ॥ १४।७।१५ ॥

सत्वतश्चेति, सत्वमुच्यते मनः, तच्छरीरस्य तन्त्रकमात्मसंयोगात्, तत्रिविधं वलभेदेन प्रवरं मध्यमवरं चेति अतश्च प्रवरमध्यावरसत्वा भवन्ति पुरुषाः तत्र प्रवरसत्वाः स्वल्पास्ते सारेपूपदिष्टाः स्वल्पशरीरा ह्यपि ते निजागन्तुनिमित्तासु महतीष्वपि पीडास्वव्यथा[1] दृश्यन्ते सत्त्वगुणवैशेष्यात्; मध्यसत्वास्त्वपरानात्मन्युपनिधाय संस्तम्भयन्त्यात्मनात्मानं परैश्चापि संस्तभ्यन्ते; हीनसत्वास्तु नात्मना नापि परैः सत्ववलं प्रति शक्यन्ते उपस्तम्भयितुम्, महाशरीरा ह्यपि ते स्वल्पानामपि वेदनानामसहा दृश्यन्ते; सन्निहितभयशोकलोभमोहमाना रौद्रभैरवद्विष्टवीभत्सविकृतसङ्कथास्वपि च पशुपुरुषमांसशोणितानि चावेक्ष्य विषादवैवर्ण्यमूर्च्छोन्मादभ्रमप्रपतनानामन्यतममाप्नुवन्त्यथवा मरणमिति ॥ १४।७।१६ ॥

आहारशक्तितश्चेति, आहारशक्तिरभ्यवहरणशक्त्या जरणशक्त्या च परीक्ष्या वलायुषी ह्याहारायत्ते ॥ १४।७।१७ ॥

व्यायामशक्तितश्चेति, व्यायामशक्तिरपि कर्मशक्त्या परीक्ष्या कर्मशक्त्या ह्यनुमीयते वलत्रैविध्यम् ॥ १४।७।१८ ॥

तन्त्रकमिति प्रेरकं धारकं च । ते सारेपूपदिष्टा इति, य एव सत्वसारास्त एव प्रवराः इति ज्ञेया इत्यर्थः । सत्त्वगुणवैशेष्यादिति सत्त्वगुणेन संस्तम्भितवेदनाविकारत्वादव्यथा इव दृश्यन्त इत्यर्थः । परात्मन्युपनिधायेति परं वेदनासहं दृष्ट्वा, 'चेदयं वेदनासहस्तदाहमपि वेदनासहो भवामि' इति कृत्वा वेदनां सहत इत्यर्थः । 'जरणशक्त्या च' इतिवचनात्, यो वहु भुंक्ते परिणमति च, असावाहारशक्तिमानिहोच्यते, न तु गुणपरिमाणोऽत्र गृहीतः । कर्म भारवहनादि, तत्र शक्तिः कर्मशक्तिः ॥ १४।७।१६—१४।७।१८ ॥

वयस्तश्चेति कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था वयोऽभिधीयते तद्वयो यथास्थूलभेदेन त्रिविधम् वालं मध्यं जीर्णमिति, तत्र वालमपरिपक्वधातुमजातव्यञ्जनं सुकुमारमक्लेशसहमसंपूर्णवलं श्लेष्मधातुप्रायमाषोडशवर्षं, विवर्धमानधातुगुणं पुनः प्रायेणानवस्थितसत्वमात्रिंशद्वर्षमुपदिष्टम् मध्यं पुनः समत्वागतवलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानसर्वधातुगुणं वलस्थितमवस्थितमविशीर्यमाणधातुगुणं पित्तधातुप्रायमाषष्टिवर्षमुपदिष्टम् अतःपरं हीयमानधात्विन्द्रियवलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानं भ्रश्यमानधातुगुणं वायुधातुप्रायं क्रमेण जीर्णमुच्यते वर्षशतान्तम्[1] । अस्मिन् काले पुनरधिकोनवर्षशतजीविनो मनुष्याः[2] । तेषां विकृतिवर्जैः प्रकृत्यादिवलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयसस्त्रित्वं विभजेत । एवं प्रकृत्यादीनां विकृतिवर्जानां भावानां प्रवरमध्यावरविभागेन वलविशेषं विभजेत । विकृतिवलत्रैविध्येन तु दोषवलं त्रिविधमनुमीयते । ततो भैषज्यस्य तीक्ष्णमृदुमध्यविभागेन त्रित्वं विभज्य यथादोषं भैषज्यमवचारयेदिति ॥ १४।७।१९ ॥

वयःस्वरूपमाह—कालेत्यादि । कालप्रमाणविशेषापेक्षिणीति कालप्रमाणविशेषेण या गतिर्भवतीत्यर्थः । यथास्थूलभेदेनेतिवचनात्, वालवालतराद्यवस्थाभेदादधिकमपि वयो भवतीति दर्शयति । वालो द्विविधः । अपरिपक्वधातुराषोडशवर्षात्, तथा वर्द्धमानधातुरात्रिंशत्तमात् । तदेतयोर्वालयोरुपयुक्तत्वेन भेदमाह—तत्रेत्यादि । षोडशवर्षीयवालोऽल्पभेषजमृदुभेषजत्वादिना शास्त्रे वक्तव्यः, तदूर्ध्वं वालोऽपि नाल्पभेषजत्वादिना तथोपचर्यते । क्रमेणेति नैकदैव षष्टिवर्षादूर्ध्वं धात्वादिहानिरिति दर्शयति—अस्मिन् काल इति कलौ । अथाधिकवर्षजीविनां कथं वयस्त्रित्वं विभक्तव्यमित्याह—तेषामित्यादि । प्रकृत्याद्या दश परीक्ष्या अत्रैव "प्रकृतिसार" इत्यादिनोक्ताः । तत्र "विकृतिवर्जैः" इत्यनेन विकृतेः परित्यागः कृतः । तेन, प्रकृतिसारादीनां वलविशेषैः प्रवरावरमध्यभेदभिन्नप्रकृत्यादिभेदेन कृतैः प्रवरावरमध्यरूपैरायुषः प्रमाणं प्रवरावराद्युपलभ्य वयस्त्रित्वं विभजनीयम् । एतेन, यस्य प्रकृतिवलमुत्तमं श्लेष्मप्रकृते समप्रकृतेर्वा, तस्यायुर्दीर्घं भवति, हीने तु प्रकृतिवले हीनम् । एवं सारादावपि ज्ञेयम् । एवं च यः प्रकृत्यादीनां सर्वेषामेवोत्तमेन वलेन युक्तः स शताधिकं जीवति । तेन, तस्य विंशतिवर्षाधिकं शतं यद्यायुरुपलभ्यते, तदा पूर्वोक्तवयोविभागानुमानादापद्त्रिंशद्वर्षाणि स वालो भवति, द्विसप्ततिवर्षश्च स मध्यः, शेषे तु वृद्धः । यस्तु प्रकृत्यादीनां मध्यमत्वेनाल्पायुरशीतिवर्षोऽवधार्यते, स पंचविंशतिवर्षाणि वालः,

---

[1] पीडा स्वव्यग्रा इति पाठान्तरम् ।

[1] आवर्षशतमिति पाठान्तरम् । [2] वर्षशतं खल्वायुषः प्रमाणमेतस्मिन् काले सन्ति चाधिकोनवर्षशतजीविनो मनुष्या इति पाठान्तरम् ।

पंचाशतं मध्यः, अतो वृद्ध इत्यादि विभजनीयम् । न केवलं प्रकृत्यादिनाऽऽयुरवधार्यम्, किंतु आयुर्लक्षणैरपि शरीरप्रतिबद्धैः शारीरे वक्तव्यैरित्याह—आयुषो लक्षणतश्चेति । आयुर्लक्षणेनापि वयोऽवधार्य बाल्यादिविभागः कर्तव्य इत्यर्थः, अयं च स्तोकन्यूनाधिकशतायुषां बाल्यादिविभागः कर्तव्यः । येषां तु विंशतिवर्षादि परमायुषोमानम्, न तेषां तदनुमानेन वयोभेदः, ते ह्यप्राप्तमध्यावस्था एव म्रियन्ते । प्रकृत्यादिविभागेन शरीरबलपरीक्षामुक्तामुपसंहरति—एवमित्यादि । दोषबलं तु यथा शरीररूपदेशपरीक्षया परीक्ष्यम्, तदाह—प्रकृतिबलेत्यादि ॥ १४।७।१९ ॥

**आयुषः प्रमाणज्ञानहेतोः पुनरिन्द्रियेषु जातिसूत्रीये च लक्षणान्युपदेक्ष्यन्ते ॥१४।७।२०॥**

शरीरबलदोषबलपरीक्षार्थं शरीरपरीक्षां प्रति ज्ञानमभिधाय पुनरायुःप्रमाणज्ञानार्थं शरीरपरीक्षामतिदिशति—आयुष इत्यादि । इन्द्रियेष्विति इन्द्रियस्थानाध्यायेषु । तत्रेन्द्रिये वर्णादिविकृत्या रिष्टरूपहसितमायुर्ज्ञातव्यम्, जातिसूत्रीये शारीरे च जन्मप्रतिबद्धैर्लक्षणैर्दीर्घायुष्ट्वं ज्ञातव्यम् ॥ १४।७।२० ॥

**कालः पुनः संवत्सरश्चातुरावस्था च, तत्र संवत्सरो द्विधा त्रिधा षोढा द्वादशधा भूयश्चाप्यतः प्रविभज्यते तत्तत्कार्यमभिसमीक्ष्य, तं तु खलु तावत् षोढा प्रविभज्य कार्यमुपदेक्ष्यते हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति । तेषामन्तरेष्वितरे साधारणलक्षणास्त्रय ऋतवः प्रावृट्शरद्वसन्ता इति, प्रावृडिति प्रथमः प्रवृष्टः[1] कालः । तस्यानुबन्धो हि वर्षाः । एवमेते संशोधनमधिकृत्य षट् विभज्यन्ते ऋतवः ॥१४।८॥**

**तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते । निवृत्तिरितरेषु । साधारणलक्षणा हि मन्दशीतोष्णवर्षत्वात् सुखतमाश्च भवन्त्यविकल्पकाश्च शरीरौषधानाम्, इतरे पुनरत्यर्थशीतोष्णवर्षत्वाद्दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानाम् ॥१४।८।१॥**

देशपरीक्षां समाप्य कालपरीक्षामाह—काल इत्यादि । संवत्सरोऽयनभेदेन द्विविधः, शीतोष्णवर्षभेदेन त्रिविधः, ऋतुभेदेन षोढा, मासभेदेन द्वादशधा, पक्षभेदाच्चतुर्विंशतिधा प्रहरादिनाऽनेकधेति ज्ञेयम् । तत्तत् कार्यमित्ययनादिना संपाद्यं कार्यमित्यर्थः । साधारण इति अनतिशीतोष्णवर्षः । प्रावृषं विभजते प्रावृडित्यादि ।—'प्रथमप्रवृष्ट' शब्देनाऽऽषाढश्रावणावुच्येते । एतच्च द्विमासत्वमृतुभेदकमादि कृत्वा शेषमासद्विकेन वर्षादयो यथाक्रमं ज्ञेयाः । अयं च ऋतुक्रमो न रसोत्पत्त्यादौ, किंतु शरीरशोधने प्रवृत्तावेवेति दर्शयता 'संशोधनमधिकृत्य' इत्युक्तम्, एवमेव च क्रमं सिद्धौ वक्ष्यति—"प्रावृट् शुक्रनभौ[1] ज्ञेयौ शरदूर्जसहौ पुनः । तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति" । अस्मिन्नृतुक्रमे शिशिरो नास्ति । ये तु ब्रुवते गङ्गाया दक्षिणकूले वर्षा बहु भवति । तेन, तत्र प्रावृडादिक्रमः, गङ्गोत्तरकूले शीतं बहु भवति । तेन, तत्र हेमन्तशिशिरौ भवतः । उक्तं हि काश्यपेन—यत्—"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम् । तेन प्रावृड्वर्षाख्यौ ऋतू तेषां प्रकल्पितौ । गङ्गाया उत्तरकूले हिमवद्वंशुसङ्गमे । भूयः शीतमतस्तेषां वसन्तशिशिरावृतू" इति । एतच्च न, अत्र 'संशोधनमधिकृत्य' इतिवचनात् । यदि देशकृतोऽयं भेदः स्यात्, तदा तमेव भेदकं ब्रूयात्, न संशोधनम् । तेन, काश्यपोक्तदेशभेदेन प्रावृडादिक्रमो न तावदिहाभिमतः । अविकल्पकाश्च शरीरौषधानामिति, न शरीरस्य कृत्रिमताऽऽपतितगुणेन भेदकास्तथौषधस्य च न प्रमाणोत्कर्षापकर्षभेदकारका इत्यर्थः, विकल्पकाश्च शरीरौषधानामिति यदात्ययिकत्वेनावश्यकर्तव्या भवन्ति वमनादयः, तदौषधस्य कृत्रिमगुणोपधानेन यथावक्ष्यमाणेन, तथा शरीरस्य च विकल्पका भवन्ति ॥ १४।८॥१४।८।१ ॥

**तत्र हेमन्ते ह्यतिमात्रशीतोपहतत्वात् शरीरमसुखोपपन्नं भवत्यतिशीतवाताध्मातमतिदारुणीभूतमावद्धदोषं च भेषजं पुनः संशोधनार्थमुष्णस्वभावं शीतोपहतत्वान्मन्दवीर्यत्वमापद्यते । तस्मात्तयोः संयोगे संशोधनमयोगायोपपद्यते, शरीरमपि च वातोपद्रवाय ॥१४।८।२॥**

**ग्रीष्मे पुनर्भृशोष्णोपहतत्वात् शरीरमसुखोपपन्नं भवत्युष्णवाताध्मातमतिशिथिलमत्यन्तप्रविलीनदोषम्, भेषजं पुनः संशोधनार्थमुष्णस्वभावमुष्णानुगमनात्तीक्ष्णतरत्वमापद्यते । तस्मात्तयोःसंयोगे संशोधनमतियोगायोपपद्यते, शरीरमपि पिपासोपद्रवाय ॥१४।८।३॥**

**वर्षासु तु मेघजलावतते गूढार्कचन्द्रतारे धाराकुले वियति भूमौ पङ्कजलपटलसंवृतायामत्यर्थोपक्लिन्नशरीरेषु भूतेषु विहतस्वभावेषु केवलेष्वौषधग्रामेषु तोयतोयदानुगतमारुतसंसर्गाद्गुरुप्रवृत्तीनि वमनादीनि भवन्ति, गुरुसमुत्थानानि च शरीराणि । तस्माद्वमनादीनां निवृत्तिर्विधीयते वर्षाभागान्तेष्वृतुषु न चेदात्ययिकं कर्म । आत्ययिके पुनः कर्मणि काममृतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन भेषजं संयोगप्रमाणविकल्पेनोपपाद्य प्रमाणवीर्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेनावहितः ॥१४।८।४॥**

१ प्रवृष्टेरिति पाठान्तरम् ।

१ शुचिनभाविति पाठान्तरम् ।

आतुरावस्थास्वपि तु कार्याकार्यं प्रति कालाकालसंज्ञा । तद्यथा । अस्यामवस्थायामस्य भेषजस्याकालः, कालः पुनरन्यस्येति । एतदपि हि भवत्यवस्थाविशेषेण । तस्मादातुरावस्थास्वपि कालाकालसंज्ञा । तस्य परीक्षा मुहुर्मुहुरातुरस्य सर्वावस्थाविशेषावेक्षणं यथावद्भेषजप्रयोगार्थम् । न ह्यतिपतितकालमप्राप्तकालं वा भेषजमुपयुज्यमानं यौगिकं भवति । कालो हि भैषज्यप्रयोगपर्याप्तिमभिनिर्वर्त्तयति ॥ १४।८५ ॥

यथा हेमन्तादिषु दुःखमत्त्वं भवति, तदाह—तत्र हेमन्त इत्यादि । आवद्धदोपमिति अतिवद्धदोषम् । तयोरिति यथोक्तक्रमशरीरभेषजयोः । तोयस्य तोयदानुगतमारुतस्य च संसर्गः । तस्माद् गुरुप्रवृत्तीनीति गुरोर्यथा न सुखकारिणी प्रवृत्तिर्भवति, तथाऽत्रापीत्यर्थः । किंवा वहुप्रतिविधेयप्रवृत्तीनि गुरुप्रवृत्तीनि । गुरुसमुत्थानानीति संशोधनक्लिष्टानि शरीराणि तदा महता प्रयत्नेन चिरेण कालेन प्रकृतिं प्राप्नुवन्तीत्यर्थः । वर्षाभागान्तेष्विति हेमन्तग्रीष्मवर्षासु । हेमन्तादिष्वप्यात्ययिकव्याधौ संशोधनं दर्शयन्नाह—न चेदित्यादि । विकल्प्येति अल्पगुणयुक्तं कृत्वा । कृत्रिमगुणोपधानम् । यथा शीते शीतप्रतीकारार्थमुष्णकरणं, उक्तंचान्यत्र "शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम् । कृत्वा कुर्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्" । कृत्वा प्रतीकारं दर्शयित्वा भेषजप्रतीकारमाह—भेषजमित्यादि । संयोगविकल्पः यथा शीते त्रिवृताया उष्णेन गोमूत्रेणालोडनम् । प्रमाणविकल्पः यथा अयोगप्रतीकारार्थमतिमात्रत्रिवृद्दानमित्यादिकः । अत्र च प्रमाणविकल्पस्तथा कर्त्तव्यः, यथा विरुद्धप्रमाणभेषजमेलकः कालः स्यात्, तथा संयोगविकल्पश्च कर्त्तव्यः, यथा विरुद्धवीर्यभेषजमेलकः कालः स्यादिति दर्शयन्नाह—प्रमाणवीर्यसमं कृत्वेति । आतुरावस्थालक्षणकालमाह—आतुरेत्यादि । तत्रोदाहरणम् नवज्वरे न कषायकालः, अतिक्रान्तषडहे च कषायकाल इत्यादि । भैषज्यप्रयोगपर्याप्तिमिति भेषजप्रयोगसाध्यसिद्धिमित्यर्थः ॥ १४।८२—१४।८५ ॥

प्रवृत्तिस्तु प्रतिकर्मसमारम्भः, तस्य लक्षणम् भिषगातुरौषधपरिचारकाणां क्रियासमायोगः॥१४।९॥

उपायः पुनर्भिषगादीनां सौष्ठवमभिविधानं च सम्यक् । तस्य लक्षणम् । भिषगादीनां यथोक्तगुणसम्पद्देशकालप्रमाणसात्म्यक्रियादिभिश्च[1] सिद्धिकारणैः सम्यगुपपादितस्यौषधस्यावचारणमिति । एवमेते दश परीक्ष्यविशेषाः पृथक् पृथक् परीक्षितव्या भवन्ति ॥ १४।१० ॥

कालमभिधाय क्रमेण प्राप्तां प्रवृत्तिमाह—प्रवृत्तिस्त्वित्यादि । प्रतिकर्म चिकित्सा । परिशिष्टमुपायमाह—उपाय इत्यादि । यथोक्तगुणसम्पदित्यनेन सौष्ठवमुक्तम् । दशेत्यादिना तु सम्यगभिविधानं ब्रूते ॥ १४।९—१४।१० ॥

परीक्षायास्तु खलु प्रयोजनं प्रतिपत्तिज्ञानम् । प्रतिपत्तिर्नाम यो यथा विकारः प्रतिपत्तव्यस्तस्य तथानुष्ठानज्ञानम् ॥ १५ ॥

यत्र तु खलु वमनादीनां प्रवृत्तिर्यत्र च निवृत्तिस्तद्व्यासतः सिद्धिपूत्तरमुपदेक्ष्यते ॥ १६ ॥

प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु गुरुलाघवं सम्प्रधार्य सम्यगध्यवस्येदन्यतरनिष्ठायां । सन्ति हि व्याधयः शास्त्रेषूत्सर्गापवादैरुपक्रमं प्रति निर्दिष्टाः । तस्मात् संप्रधार्य सम्यगध्यवस्येदित्युक्तम् ॥ १७ ॥

किंप्रयोजना परीक्षेत्यस्योत्तरम् परीक्षायास्त्वित्यादि । प्रतिपत्तिशब्दार्थं विभजते यथेत्यादि । प्रतिपत्तव्य इत्यनुष्ठानेन योजयितव्यः । 'क्व च वमनादीनां प्रवृत्तिः, क्व च निवृत्तिः' इत्यस्योत्तरमतिदिशन्नाह यत्र त्वित्यादि । 'प्रवृत्तिलक्षणसंयोगे किं नैष्ठिकम्' इत्यस्योत्तरम् प्रवृत्तीत्यादि । अध्यवस्येदित्यध्यवसायं कुर्यादित्यर्थः । अन्यतरनिष्ठायामित्यन्यतररूपावस्थायां । अत्र गुरुलाघवे ज्ञाते गुरुप्रतिक्रियानिश्चयोऽनुक्तोऽपि ज्ञायते । तेन, शास्त्रान्तरे गुरुव्याधिप्रतीकारनिष्ठायामध्यवसायं कुर्यादिति साक्षान्न कृतम्; एतमेव गुरुव्याधिप्रतीकारं लघुव्याधिव्युत्पादकवचनभङ्ग्यन्तरेणाह सन्ति हीत्यादि । सम्यगध्यवस्येदिति, उत्सर्गलघुं परित्यज्यापवादगुरुमुपक्रम्य तथाऽध्यवस्येत् । "वलवन्तमुपद्रवम्" इत्यादिना हि दुर्वलं परित्यज्य वलवच्चिकित्सामभिधास्यति ॥ १५—१७ ॥

यानि तु खलु वमनादिषु भेषजद्रव्याण्युपयोगं गच्छन्ति, तान्यनुव्याख्यास्यन्ते तद्यथा फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनफलानि, फलजीमूतकेक्ष्वाकुधामार्गवपत्रपुष्पाणि, आरग्वधवृक्षकमदनस्वादुकण्टकपाठापाटलाशार्ङ्गेष्टामूर्वासप्तपर्णनक्तमालपिचुमर्दपटोलसुषवीगुडूचीचित्रकसोमवल्कद्वीपीशिग्रुमूलकाषायैश्च, मधुकमधूककोविदारकर्वुदारनीपविदुलविम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्पीकषायैश्च, एलाहरेणुप्रियङ्गुपृथ्वीकाकुस्तुंवुरुतगरनलदह्रीवेरवालगोपीकषायैश्च, इक्षुकाण्डेक्ष्विक्षुवालिकादर्भपोटगलकालङ्कृतकषायैश्च सुमनासौमनस्यायनीहरिद्रादारुहरिद्रावृश्चीरपु-

[1] यथोक्तगुणसम्पद्भिर्देशकालप्रमाणासात्म्यक्रियादिभिश्चेति-पाठान्तरम् ।

१ क्रमप्राप्तामिति पाठान्तरम् ।

नर्नवामहासहाक्षुद्रसहाकपायैश्च, शाल्मलिशाल्मलिकभद्रपर्ण्यैलपर्ण्युपोदिकोद्दालकधन्वनराजादनोपचित्रागोपीशृङ्गाटिकाकपायैश्च पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसर्पपफाणितक्षीरक्षारलवणोदकैश्च यथालाभं यथेष्टं वाप्युपसंस्कृत्य वर्तिक्रियाचूर्णावलेहस्नेहकषायमांसरसयवागूयूपकाम्बलिकक्षीरोपधेयान्मोदकानन्यांश्च योगान् विविधाननुविधाय यथार्हं वमनार्हाय दद्यात् विधिवद्वमनमिति कल्पसंग्रहो वमनद्रव्याणाम् । कल्पस्त्वेषां विस्तारेणोत्तरकालमुपदेक्ष्यते ॥ १८ ॥

संप्रति कानि च वमनादिषु भेषजद्रव्याणि संयोगं गच्छन्तीत्यस्योत्तरं यानीत्यादि । शार्ङ्गेष्टा[1] गुञ्जा । सोमवल्कः खदिरः । द्वीपी कण्टकारी द्वीपिशत्रुरिति पाठे शतावरी देया । विदुलो वेतसः, शणपुष्पी घण्टारवा, सदापुष्पी रक्तार्कः । कालंकृतो कासमर्दः । पोटगलो होगलः । सुपवी कारवेल्लकः । सुमना जाती । सौमनस्यायनी जातिकलिका, जातिकोपो वा । शाल्मलिको रोहडकः, स्वल्पशाल्मलिर्वा । भद्रपर्णी भादाली । एलापर्णी रास्ना । उद्दालो वहुवारः । गोपी शारिवा । वर्तिक्रिया वर्तिरूपदीर्घभक्ष्यकरणम् । तत्र 'आरग्वधादि' 'मध्वादि' पृथग्वर्गकरणं प्रायः समानगुणतां विच्छेदपाठेन दर्शयितुं कृतम् । कल्पनं कल्पः प्रयोग इत्यर्थः । उत्तरकालमिति कल्पस्थाने ॥ १८ ॥

विरेचनद्रव्याणि तु श्यामात्रिवृत्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनां क्षीरमूलत्वक्पत्रपुष्पफलानि यथायोगं तैस्तैः क्षीरमूलत्वक्पत्रपुष्पफलैर्विक्लिप्ताविक्लिप्तैरजगन्धाश्वगन्धाजशृङ्गीक्षीरिणीनीलिनीक्लीतककपायैश्च, प्रकीर्योदकीर्यामसूरविदलाकम्पिल्लकविडङ्गगवाक्षीकपायैश्च, पीलुपियालमृद्वीकाकाश्मर्यपरूपकवदरदाडिमामलकहरीतकीविभीतकवृश्चीरपुनर्नवाविदारिगन्धादिकपायैश्च, शीधुसुरासौवीरकतुषोदकमैरेयमेदकमदिरामधुमधूदकधान्याम्लकुवलवदरखर्जूरकर्कन्धुसीधुभिश्च दधिदधिमण्डोदश्विद्भिश्च गोमहिष्यजावीनां च क्षीरमूत्रैर्यथालाभं यथेष्टं वाप्युपसंस्कृत्य वर्तिक्रियाचूर्णासवलेहस्नेहकपायमांसरसयूपकाम्बलिकयवागूक्षीरोपधेयान्[2] मोदकानन्यांश्च भक्ष्यप्रकारान् विविधांश्च योगाननुविधाय[1] यथार्हं विरेचनार्हाय दद्याद्विरेचनमिति कल्पसंग्रहो विरेचनद्रव्याणाम् । कल्पस्त्वेषां विस्तरेण यथावदुत्तरकालमुपदेक्ष्यते ॥ १९ ॥

विक्लिप्तिर्द्रव्यान्तरसंयोगः, अविक्लिप्तिः केवलप्रयोगः । तेन, विक्लिप्ताविक्लिप्तैरिति संयुक्तायुक्तैरित्यर्थः । क्षीरिणी दुग्धिका । क्लीतकं यष्टीमधु । मसूरविदला श्यामलता । प्रथमं तु श्यामा श्याममूला त्रिवृदेवोक्ता ॥ १९ ॥

आस्थापनेषु तु भूयिष्ठकल्पानि द्रव्याणि यानि योगमुपयान्ति तेषु तेष्ववस्थान्तरेष्वातुराणाम्, तानि द्रव्याणि नामतो विस्तरेणोपदिश्यमानान्यपरिसंख्येयानि स्युरतिवहुत्वात् । इष्टश्चानतिसंक्षेपविस्तरोपदेशस्तन्त्रे, इष्टं च केवलं ज्ञानम् । तस्माद्रसत एव तान्यनुव्याख्यास्यन्ते । रससंसर्गविकल्पविस्तरो ह्येषामपरिसङ्ख्येयः, समवेतानां रसानामंशांशवलविकल्पातिवहुत्वात् । तस्माद्द्रव्याणां चैकदेशमुदाहरणार्थं रसेष्वनुविभज्य रसैकैकश्येन रसकैवल्येन च नामलक्षणार्थं षडास्थापनस्कन्धाः समूहरसतोऽनुविभज्य व्याख्यास्यन्ते ॥ २० ॥

भूयिष्ठकल्पानीति वहुप्रयोगाण्यभिप्रायप्रयोज्यानि च इष्टश्चानतिसंक्षेपविस्तरोपदेश इत्यनतिसङ्क्षेपविस्तरतः शास्त्रे कथनमिदम्, इष्टं च केवलं ज्ञानमतिसंक्षेपविस्ताराभिधानेऽपि यदुक्तम् "तस्यापि यथा सामान्येनावस्थाज्ञानं भवति, तदपीष्टम्" ग्रन्थकर्तुः श्रोतुश्चेत्यर्थः । तस्माद्रसत एवेति रसं प्राधान्येनोद्दिश्य रसाश्रयद्रव्यस्यानतिसंक्षेपविस्तारोपदेशेनेत्यर्थः । तानीत्यास्थापनोपयोगीनि द्रव्याणि । अत्र च रसद्वारा निर्देशेऽपि रससंसर्गस्यातिवहुत्वेन च कृत्स्नद्रव्यनिर्देशवद्रससंक्षेपता स्यादिति कृत्वा षड्भी रसैर्निर्देशः कर्तव्यः । आस्थापनोपयोगीनि द्रव्याणि दर्शयन्नाह—रसेत्यादि । उदाहरणार्थमिति मधुरादिरसस्याधारभूतस्य द्रव्यस्योदाहरणार्थम् । रसेष्वनुविभज्येति रसेषु मधुरादिषु द्रव्याणामेकदेशमाधारतयोपदिश्येत्यर्थः । रसकैवल्येनेति रससंसर्गत्वेन । नामलक्षणार्थ षडास्थापनस्कन्धा इति साक्षादुक्तानां जीवकादीनां नामार्थम् तथा, अनुक्तानां मधुरादिद्रव्याणां तज्जातीयत्वेन लक्षणेनास्थापनयोगिद्रव्यसमूहा व्याख्यास्यन्त इति । किंवा, नामलक्षणार्थमिति नामज्ञानार्थम् । समूहरसतोऽनुविभज्येति अनुक्तं च मधुरादिरसतया निर्दिश्येत्यर्थः ॥ २० ॥

यत्तु षड्विधमास्थापनमेकरसमित्याचक्षते भिषजस्तद्दुर्लभतमं[2] संसृष्टरसभूयिष्ठत्वाद्द्रव्याणाम् । तस्मान्मधुराणि च मधुरप्रायाणि च मधुरविपा-

---

१ शार्ङ्गेष्टा काकजङ्घा विकसवनीति लोके, काकमाचीत्यन्ये, अन्येतु शार्ङ्गेष्टा काकतिक्ता गौरवर्तुलावगुण्ठितफला चिरपोटिकेति प्रसिद्धा; झझरपकेति पूर्वदेशे, काकादनीत्यपरे सा च गुञ्जेति प्रसिद्धेति निघंटुः । शार्ङ्गेष्टा काकजङ्घाकाइञ्चीतिख्यातेति भाषायां । २ क्षीरोपभ्रेयानिति पाठान्तरम् ।

१ भक्ष्यप्रकारान् यथोक्ताननुविधायेति पाठान्तरम् । २ दुर्लभतरमिति पाठान्तरम् ।

कानि च मधुरप्रभावानि च मधुरस्कन्धे मधुराण्येव कृत्वोपदेक्ष्यन्ते तथेतराणि द्रव्याण्यपि । तद्यथा जीवकर्षभकौ जीवन्ती वीरा तामलकी काकोली क्षीरकाकोली भीरु मुद्गपर्णी माषपर्णी शालपर्णी पृश्निपर्ण्यसनपर्णी मधुपर्णी मेदा महामेदा दारुकर्कटशृङ्गी शृङ्गाटिका छिन्नरुहा च्छत्रातिच्छत्रा श्रावणीमहाश्रावणीअलम्बुषासहदेवाविश्वदेवाशुक्लाक्षीरशुक्लाबलातिबलाविदारीक्षीरविदारीक्षुद्रसहामहासहाऋष्यगन्धाऽश्वगन्धावृश्चीरपुनर्नवाबृहती कण्टकारिकोरुबुकमोरटश्वदंष्ट्रा संहर्षा शतावरी शतपुष्पा मधुकपुष्पी यष्टीमधु मधूलिका मृद्वीकाखर्जूरपरूषकाऽऽत्मगुप्ता पुष्करबीज कशेरु राजकशेरु राजादन कतकेङ्गुदकाश्मर्यशीतपाक्योदनपाकी तालखर्जूरमस्तकेक्षिक्षुवालिका दर्भकुशकाशशालि गुन्द्रेत्कटकशरमूल राजक्षवकर्ष्यप्रोक्ता द्वारदा भारद्वाजी वनत्रपुष्यभीरुपत्री हंसपादी काकनासिका कुलिङ्गाक्षी क्षीरवल्ली कपोलवल्ली कपोतवल्ली सोमवल्ली गोपवल्ली मधुवल्ली चेति, एषामेवंविधानामन्येषां च मधुरवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समारोप्य पयसार्धोदकेनाभ्यासिच्य साधयेद्दर्व्या सततमुपघट्टयंस्तदुपयुक्तभूयिष्ठेऽम्भसि, गतरसेष्वौषधेषु पयसि चानुपदग्धे स्थालीमपहृत्य सुपरिपूतं पयः सुखोष्णं घृततैललवणवसामज्जफाणितोपहितं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात् । शीतं तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे विधिवद्दद्यादिति मधुरस्कन्धः ॥ २०११ ॥

अयं च मधुरादिरसेन द्रव्यगणनिर्देशः, मधुरादिरसेन मधुरादिरसद्रव्यगणनिर्देशो मधुराद्येकरसस्यैव द्रव्यस्य संग्रहो यथा परैराख्यायते, तथाऽस्माभिरपीष्यते, किंतु, यदपि रसान्तरे सत्यपि मधुरादिप्रधानम्, यद्वा द्रव्यं मधुरादिकार्यकारि विपाकप्रभावात्, तदपि मधुरादिगण एवास्माभिः पठनीयमिति दर्शयन्नाह—यस्त्वित्यादि । आस्थाप्यतेऽनेनेत्यास्थापनं जीवकादि द्रव्यम् । एकरसमिति शुद्धैकरसम् । मधुरप्रायाणीत्युत्कृष्टमधुररसानीति । एवमम्लस्कन्धादिष्वम्लादीन्यपि बोध्यानीति. 'तथेतराणि' इतिपदेन दर्शयति । भीरु जालान्धरं शाकम् । असनपर्णी अपराजिता । मधुपर्णी विकङ्कतम् । छत्रा कोकिलाक्षः । अतिच्छत्रा अरुणकोकिलाक्षः । महाश्रावण्यलम्बुषा । शुक्ला शर्करा । क्षीरशुक्ला त्रिवृत् । क्षुद्रसहा कुमारी । ऋष्यगन्धा ऋष्यजाङ्गलकी, बलाभेदो वा । मोरटं मूर्वा । संहर्षा वन्दाकः । मधुकपुष्पी मधुकभेदः । मधूलिका मर्कटहस्ततृणम् । राजादनं वेन्नुलिकीति ख्यातम् । कशेरुः चिञ्चोडकः । राजकशेरुः कशेरुभेदः । शीतपाकी शीतला । ओदनपाकी नीलझिंटी । ऋष्यप्रोक्ता बलाभेदः । द्वारदा शाकतरुः । भारद्वाजी वनकार्पासी । वनत्रपुषी बृहत्फला गोडुंबा । अभीरुपत्री शतावरीभेदः । कुलिङ्गाक्षी पेटिका, कुलिङ्गापाठपक्षे उचटा । क्षीरवल्ली क्षीरलता । कपोलवल्ली कवडभेजु इति ख्याता । कपोतवल्ली सूक्ष्मैला । सोमवल्ली सोमलता । गोपवल्ली अनन्तमूलम् । मधुवल्ली यष्टीमधुभेदः ॥ २०११ ॥

आम्राम्रातकलिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलबदरदाडिममातुलुङ्गगण्डीराऽऽमलकनन्दीतकशीतकतिन्तिडीकदन्तशठैरावतककोशाम्रधन्वनानां फलानि, पत्राणि चाम्रातकाश्मन्तकचाङ्गेरीणां च चतुर्विधानां चाम्लिकानाम्, द्वयोश्च कोलयोश्चामशुष्कयोर्द्वयोश्चैव शुष्काम्लिकयोर्ग्राम्यारण्ययोश्चासवद्रव्याणि च सुरासौवीरकतुषोदकमैरेयमेदकमदिरामधुशुक्तशीधुदधिदधिमण्डोदश्विद्धान्याम्लादीनि च, एषामेवंविधानामन्येषां चाम्लवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा द्रवैः स्थिराण्यवसिच्य साधयित्वोपसंस्कृत्य यथावत्तैलवसामस्तुमज्जलवणफाणितोपहितं सुखोष्णं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यादिति अम्लस्कन्धः ॥ २०१२ ॥

अम्लस्कन्दे नन्दीतकः कर्परनन्दी । शीतकोऽम्बुलोठकः । ऐरावतो नागरङ्गम्; अम्लिका कन्दप्रधाना कामरूपे प्रसिद्धा, अम्लिकाभेद एवेत्याहुः । द्वयोश्चेत्यादि । द्रवैः स्थिराणीति द्रवमज्जनात् स्थिरभूतानीत्यर्थः ॥ २०१२ ॥

सैन्धवसौवर्चलकालविड्पाक्यानूपकूप्यवालुकैलमौलकसामुद्ररोमकौद्भिदौषरपाटेयकपांशुजान्येवंप्रकाराणि चान्यानि लवणवर्गपरिसंख्यातानि, एतान्यम्लोपहितान्युष्णोदकोपहितानि वा स्नेहवन्ति सुखोष्णं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यादिति लवणस्कन्धः ॥ २०१३ ॥

पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचव्यचित्रकशृङ्गवेरमरिचाजमोदार्द्रकविडङ्गतुंबुरुपीलुतेजोस्विन्यैलाकुष्ठभल्लातकास्थिहिङ्गुकिलिममूलकसर्षपलशुनकरञ्जशिग्रुकमधुरशिग्रुकखरपुष्पभूस्तृणसुमुखसुरसकुठेरकार्जकगण्डीरकालमालकपर्णासक्षवकफणिज्जकक्षारमूत्रपित्तानामेवंविधानां चान्येषां कटुकवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि ख-

ण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा गोमूत्रेण सह साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यादिति कटुकस्कन्धः ॥ २०।४ ॥

चन्दननलदकृतमालनक्तमालनिंबतुंबुरुकुटजहरिद्रादारुहरिद्रामुस्तमूर्वाकिराततिक्तककटुकरोहिणीत्रायमाणाकारवेल्लिकाकरीर-करवीरकेबुककठिल्लकवृषमण्डूकपर्णीकर्कोटकवार्ताकुकर्कशकाककमाचीकाकोडुम्बरिकासुपव्यतिविषापटोलकुलकपाठागुडूचीवेत्राग्रवेतसविकङ्कतसोमवल्कसप्तपर्णसुमनार्कावल्गुजवचातगरागुरुवालकोशीराणामेवम्विधानां चान्येषां तिक्तवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यात् । शीतं तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे विधिज्ञो विधिवद्दद्यादिति तिक्तस्कन्धः ॥ २०।५ ॥

प्रियङ्ग्वनन्ताम्रास्थिअम्बष्ठकीकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मपद्मकेशरजम्ब्वाम्रत्वक्प्लक्षवटकपीतनोडुम्बराश्वत्थभल्लातकाश्मन्तकशिरीषपुष्पशिंशपासोमवल्कतिन्दुकपियालवदरखदिरसप्तपर्णाऽश्वकर्णस्यन्दनार्जुनारिमेदैलवालुकपरिपेलवकदम्बशल्लकीजिङ्गिनीकाशकशेरुकराजकशेरुकट्फलवंशपद्मकाशोकशालधवसर्जभूर्जशणखरपुष्पापुरशमीमाठीकवरकतुङ्गाऽजकर्णस्फूर्जकविभीतककुम्भीपुष्करवीजविसमृणालतालखर्जूरतरूणानामेवंविधानां चान्येषां कषायवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यादिति । शीतं तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे विधिज्ञो विधिवद्दद्यादिति कषायस्कन्धः ॥ २०।६ ॥

कूप्यादयो लवणभेदा देशान्तरप्रसिद्धाः । तेन, देशान्तरीयास्तदर्था ज्ञातव्याः । रोमको रुमानदीभवः । तेजस्विनी तेजोवती । किलिमं देवदारु । तिक्तवर्गे कर्कशः पटोलभेदः । कषायवर्गे सप्तपर्णः पियालसालः । परिपेलवं कैवर्तमुस्तकम् । जिङ्गिनी स्वनामख्याता । माठीको देवदारुः । अजकर्णः शालभेदः । कुम्भी कुम्भीक इति ख्याता । विसं करहाटः[1] । मृणालं मृणालनाडिका । तालखर्जूरतरुणामिति तालखर्जूरवृक्षाणामित्यर्थः । तत्र च स्कन्धेषु यद्द्रव्यं स्कन्धद्वये पठ्यते, तदुभययुक्तत्वेन उभयत्रापि योगीति ज्ञेयम् ॥२०।३—२०।६॥

१ वरेति पाठान्तरम् ।

तत्र श्लोकाः ।

षड्वर्गाः परिसंख्याता य एते रसभेदतः ।
आस्थापनमभिप्रेत्य तान्विद्यात्सार्वयौगिकान् ॥२०।७॥
सर्वशो हि प्रणिहिताः सर्वरोगेषु जानता ।
सर्वान् रोगान्नियच्छन्ति येभ्य आस्थापनं हितम् ॥२०।८॥

सार्वयौगिकानिति सर्वेष्वास्थापनसाध्येषु रोगेषु वातव्याधिज्वरगुल्मादिषु यथोक्तदोषसंवन्धे सति यौगिकानित्यर्थः । एतदेव विवृणोति—सर्वशो हीत्यादि । सर्वश इति समस्तवर्गेणार्धवर्गेण यथालाभेन वा ॥ २०।७—२०।८ ॥

येषां येषां प्रशान्त्यर्थं ये ये न परिकीर्त्तिताः ।
द्रव्यवर्गा विकाराणां तेषां ते परिकोपनाः ॥ २०।९ ॥
इति षडास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्याताः ॥ २०।१० ॥

इदानीं सर्ववर्गाणां सर्वास्थापनसाध्यरोगेषु यौगिकत्वं यदुक्तम्, तत्र ज्वरे कटुकवर्गेणास्थापनं पित्तकरत्वात् ज्वरं वर्धयति, कफमेव हरति । तेन, दोषविशेषेणास्थापनविशेषार्थं सर्वगणानां यौगिकत्वमेतदुक्तम्, किंतु सामान्येन सर्वास्थापनरोगहितत्वम्[2], दोषविशेषेषु तु तत्राननुगुणवर्गस्य प्रयोगस्य निषेध एवेति दर्शयन्नाह—येषामित्यादि । येषामिति वातादिविकाराणामुक्तानामिह । तत्र वातहरस्कन्धः न कफप्रशान्त्यर्थमुक्तः । तेन, कफवर्धकः । एवमम्लादिवर्गेष्वपि ज्ञेयम् । किंवा, सार्वयौगिकानित्यनेनोक्तानां वर्गाणां समासव्यासयोगेन सकलास्थापनसाध्यरोगहरत्वमुच्यते, न प्रत्येकम् । प्रत्येकं तु वर्गाणां साध्यत्वेनानुक्तरोगकर्मत्वमुच्यते 'तेषाम्' इत्यादिना ॥ २०।९—२०।१०॥

तेभ्यो भिषग्बुद्धिमान् परिसंख्यातमपि यद्यद्द्रव्यमयौगिकं मन्येत, तत्तदपकर्षयेत्, यद्यच्चानुक्तमपि यौगिकं वा मन्येत, तत्तद्विदध्यात् । वर्गमपि वर्गेणोपसंसृजेदेकमेकेनानेकेन वा युक्तिं प्रमाणीकृत्य । प्रचरणमिव भिक्षुकस्य[3] । वीजमिव कर्षकस्य । सूत्रं बुद्धिमतामल्पमप्यनल्पज्ञानायतनं भवति । तस्माद्बुद्धिमतामूहापोहविसर्गः[4] । मन्दबुद्धेस्तु यथोक्ता-

१ 'ह्रस्वहठः' इत्यसमीचीनः पाठः लिपिकारप्रामादिकः । तेन, तमुपेक्ष्यात्र 'करहाटः शिफाकन्दः' इत्यमरवचनमनुसृत्य 'करहाटः' इति साधीयान् पाठः प्रकल्प्य संनिवेशितः । अतोऽत्र विसं करहाटः पद्ममूलमित्यर्थोऽवसेयः । २ रोगहरत्वमिति पाठान्तरम् । ३ ब्राह्मणस्येति पाठान्तरम् । ४ वितर्क इति पाठान्तरम् ।

नुगमनमेव श्रेयः । यथोक्तं हि मार्गमनुगच्छन् भिषक् संसाधयति वा कार्यमनतिमहत्त्वाद्वा निपातयत्यनतिह्रस्वत्वादुदाहरणस्येति ॥ २०।११ ॥

संप्रत्युक्तवर्गेषु व्याध्यादिपर्यालोचनया—यौगिकत्वमपेक्ष्य यौगिकप्रक्षेपमयौगिकोद्धरणं च दर्शयन्नाह—तेभ्य इत्यादि । 'बुद्धिमान्' इतिपदेन, बुद्धिमतैव प्रक्षेपोद्धारौ गणे कर्तव्यौ, नाल्पबुद्धीनां तदूहापोहकरणे सामर्थ्यमिति दर्शयति—युक्तिं प्रमाणीकृत्येति । ऊहं प्रमाणीकृत्येत्यर्थः । प्रचरणं भिक्षामूलं तण्डुलादि पात्रस्थम् । ननु मन्दबुद्धेः कथं यथोक्तानुगमनम् ? यथोक्तमयौगिकमूहेन बुद्धिमन्तः प्रपद्यन्ते, तत्रैव तन्मन्दधीः प्रयुञ्जानो न कथमनर्थमावहेदित्याह—यथोक्तं हीत्यादि । अनतिमहत्त्वाद्वा निपातयतीत्यनेन, मन्दबुद्धिर्यथोक्तमाचरति ऊहं विना, न चातिव्यापद्भवतीति दर्शयति । यतः शास्त्रे हि यो विधिर्यत्रोक्तः, स प्रायो यौगिक एव भवति तत्र, तत्रापि शरीरादिभेदेन यौगिकः, तत्रापि स्तोकमात्रेण यौगिक इत्यर्थः । अनतिह्रस्वत्वादुदाहरणस्येति शास्त्रे उदाहरणस्य विधेरनतिसङ्क्षेपादित्यर्थः । एतेन स्तोकं रोगसाधनोदाहरणं स्यात्, ऊह्यमेव वा भवतु, तदा मन्दबुद्धिः साक्षादुदाहरणविषयाज्ञानात् स्वयं ऊहाक्षमत्वाच्च न रोगशान्तिलक्षणं कार्यं कर्तुं क्षमः स्यात् । यतो ह्युदाहरणानि बहूनि । तेन तैरेवोदाहरणात्मकप्रयोगैस्तत्साध्यत्वेनोक्तव्याधीन् साधयतीति युक्तम् । इमौ चावापोद्धारौ गणेषु मध्ये गणोक्तद्रव्ये प्रायो ज्ञेयौ । यदुक्तं सुश्रुते—"गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौगिकम् । तदुद्धरेत्प्रक्षिपेत्तु यन्मन्येद्यौगिकं तु तद्" इति । ये तु संयोगमहिम्ना कार्यकारकाः प्रयोगा अगस्त्यहरीतक्यादयः, तेष्वावापोद्धारौ न कर्तव्यौ । एवमेव चार्थमभिप्रेत्योक्तं सुश्रुते "एष चागमसिद्धत्वात्तथैव फलदर्शनात् । मन्त्रवत्संप्रयोक्तव्यो न मीमांस्यः कथंचन" ॥ २०।११ ॥

अतःपरमनुवासनद्रव्याण्यनुव्याख्यास्यन्ते । अनुवासनं तु स्नेह एव । स्नेहस्तु द्विविधः स्थावरात्मको जङ्गमात्मकश्च, तत्र स्थावरात्मकः स्नेहः तैलमतैलं च । तद्द्वयं तैलमेव कृत्वोपदिश्यते, सर्वतस्तैलप्राधान्यात् । जङ्गमात्मकस्तु वसा मज्जा सर्पिरिति । तेषां तु तैलवसामज्जसर्पिषां यथापूर्वं श्रेष्ठं वातश्लेष्मविकारेष्वनुवासनीयेषु, यथोत्तरं तु पित्तविकारेषु, सर्वएव वा सर्वविकारेष्वपि च योगमुपयान्ति संस्कारविशेषादिति ॥ २१ ॥

क्रमप्राप्तमनुवासनद्रव्यमाह—अतःपरमित्यादि । तत्र तैलमिति तैलभूतं सर्षपस्नेहादि । तैलप्राधान्यादिति स्थावरस्नेहेषु तिलतैलस्यैव प्राधान्याद् । एतेन तैले यो विधिः, स सार्षपादौ बोद्धव्यः, 'तैल'शब्देन तु सार्षपादीनामिह ग्रहणम् । तिलभवस्नेहस्य प्राधान्यप्रख्यापनार्थं 'तैल'शब्देन सार्षपादीनां ग्रहणं भवत्येव । यदुक्तं सुश्रुते "निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" इति ॥ २१ ॥

शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीमरिचविडङ्गशिग्रुशिरीषतुम्बुरुपिल्वजाज्यजमोदावार्ताकीपृथ्वीकैलाहरेणुकाफलानि च, सुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकहरिद्राशृङ्गवेरमूलकलशुनतर्कारीसर्षपपत्राणि च, अर्कालर्ककुष्ठनागदन्तीवचाभार्गीश्वेताज्योतिष्मतीगवाक्षीगण्डीरपुष्पीवृश्चिकालीवयस्थातिविषामूलानि च, हरिद्राशृङ्गवेरमूलकलशुनकन्दाश्च, लोध्रमदनसप्तपर्णनिम्बार्कपुष्पाणि च, देवदार्वगुरुसरलशल्लकीजिङ्गिन्यसनहिङ्गुनिर्यासाश्च, तेजोवतीवराङ्गेङ्गुदीशोभाञ्जनकबृहतीकण्टकारिकात्वच इति शिरोविरेचनं सप्तविधं फलपत्रमूलकन्दपुष्पनिर्यासत्वगाश्रयभेदात् । लवणकटुतिक्तकषायाणि चेन्द्रियोपशयानि तथापराण्यनुक्तान्यपि द्रव्याणि यथायोगविहितानि शिरोविरेचनार्थमुपदिश्यन्ते इति ॥२२

पारिशेष्याच्छिरोविरेचनान्याह—शिरोविरेचनेत्यादि । फलानि चेति 'च'कारेण तदुक्तं द्रव्यमज्जोपयोगं च दर्शयति । तेन शिग्रोर्वक्ष्यमाणे त्वगुपयोगश्च भवति । एवमन्यत्राप्युदाहार्यम् । सुमुखादयः पर्णासभेदाः । गण्डीरपुष्पी शमठः । वयस्था ब्राह्मी । वराङ्गं गूढत्वक् । इन्द्रियोपशयानीत्यनेन, यानि लवणादीनि नेन्द्रियोपघातकानि, तान्येव शिरोविरेचने योज्यानि तथापराणीति मधुराम्लकषायाणि शिरोविरेचने यौगिकानि ॥ २२ ॥

अथ श्लोकाः ।

लक्षणाचार्यशिष्याणां परीक्षाकारणं च यत् ।
अध्येयाध्यापनविधिः संभाषाविधिरेव च ॥
षड्भिरूनानि पञ्चाशद्वादमार्गपदानि च ।
पदानि दश चान्यानि कारणादीनि तत्त्वतः ॥
संप्रश्नश्च परीक्षादिर्नवको वमनादिषु ।
भिषग्जितीये रोगाणां विमाने संप्रकाशितः ॥२३॥

संग्रहे लक्षणाचार्यशिष्याणामिति शास्त्राचार्यशिष्याणां परीक्षा । लक्षणं हि शास्त्रमुच्यते । कारणं च यदिति शास्त्रादिपरीक्षाकारणं च यदित्यर्थः, "एतदेवंभूतं शास्त्रममलइवादित्यः" इत्यादिशास्त्रपरीक्षाकारणम् । आचार्यपरीक्षाकारणम् "एवंविधो ह्याचार्यः" इत्यादि । शिष्यपरीक्षाकारणं तु "अध्याप्यमध्यापयन् ह्याचार्यः" इत्यादि । अध्येयमध्येतव्यम्, तस्य विधिरध्ययनविधिरेव ॥ २३ ॥

बहुविधमिदमुक्तमर्थजातम्
बहुविधवाक्यविचित्रमर्थकान्तम्।
बहुविधशुभशब्दसन्धियुक्तम्
बहुविधवादनिषूदनं परेषाम्॥ २४॥
इमां मतिं बहुविधहेतुसंश्रयाम्
विजज्ञिवान्परमतवादसूदनीम्।
न सज्जते परवचनावमर्दनै-
र्न शक्यते परवचनैश्च मर्दितुम्॥ २५॥
दोषादीनां तु भावानाम् सर्वेषामेव हेतुमत्।
मानात् सम्यग्विमानानि निरुक्तानि विभागशः २६
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
रोगभिषग्जितीयविमानं नामाष्टमोऽध्यायः॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
अनेनावधिना स्थानं विमानानां समर्थितम्॥

इदमुक्तमर्थजातमिति लक्षणाचार्यशिष्यपरीक्षारूपमर्थजा, तमुक्तम्। अर्थकान्तमिति यथा संबद्धार्थतादिना गुणेन कमनीयार्थं भवति तथोक्तमित्यर्थः। शब्दस्य वाक्ययोजनं शब्दसन्धिः। दोषादीनामित्यादिना विमानस्थानार्थं संग्रहं करोति। हेतुमदित्युपपत्तिमद्यथा भवति, तथा दोषादिमानादित्यर्थः, निरुक्तानीति निरुह्योक्तानि। निरुक्तिश्च दोषादयो विशेषेण मीयन्त एभिरिति विमानानि॥ २४–२६॥

इति महामहोपाध्याय श्रीमच्चरकचतुराननचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां रोगभिषग्जितीयविमानव्याख्या॥

इति श्रीमच्चरकचतुराननचक्रपाणिदत्तविरचितायुर्वेददीपिकायां चरकतात्पर्यटीकायां विमानस्थानव्याख्या समाप्ता॥

# शारीरस्थानम् ।

## प्रथमोऽध्यायः ।

अथातः कतिधापुरुषीयं शारीरं व्याख्यास्यामः॥१॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

अग्निवेश उवाच—

कतिधा पुरुषो धीमन्! धातुभेदेन भिद्यते ।
पुरुषः कारणं कस्मात् प्रभवः पुरुषस्य कः ॥ १ ॥
किमज्ञो ज्ञः स नित्यः किं किमनित्यो निदर्शितः ।
प्रकृतिः का विकाराः के किं लिङ्गं पुरुषस्य च ॥२॥
निष्क्रियं च स्वतन्त्रं च वशिनं सर्वगं विभुम् ।
वदन्त्यात्मानमात्मज्ञाः क्षेत्रज्ञं साक्षिणं तथा ॥ ३ ॥
निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथम् ।
स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायते ॥ ४ ॥
वशी यद्यसुखैः कस्माद्भावैराक्रम्यते बलात् ।
सर्वाः सर्वगतत्वाच्च वेदनाः किं न वेत्ति सः ॥ ५ ॥
न पश्यति विभुः कस्मात् शैलकुड्यतिरस्कृतम् ।
क्षेत्रज्ञः क्षेत्रमथवा किं पूर्वमिति संशयः ॥ ६ ॥
ज्ञेयं क्षेत्रं विना पूर्वं क्षेत्रज्ञो हि न युज्यते ।
क्षेत्रं च यदि पूर्वं स्यात् क्षेत्रज्ञः स्यादशाश्वतः ॥७॥
साक्षिभूतश्च कस्यायं कर्ता ह्यन्यो न विद्यते ।
स्यात्कथं चाविकारस्य विशेषो वेदनाकृतः ॥ ८ ॥
अथ चार्तस्य भगवंस्तिसृणां कांश्चिकित्सति ।
अतीतां वेदनां वैद्यो वर्तमानां भविष्यतीम् ॥ ९ ॥
भविष्यन्त्या असंप्राप्तिरतीताया अनागमः ।
सांप्रतिक्या अपि स्थानं नास्त्यतः संशयो ह्यतः॥१०॥
कारणं वेदनानां किं किमधिष्ठानमुच्यते ।
क चैता वेदनाः सर्वा निवृत्तिं यान्त्यशेषतः ॥ ११ ॥
सर्ववित् सर्वसंन्यासी सर्वसंयोगनिःसृतः ।
एकः प्रशान्तो भूतात्मा कैर्लिङ्गैरुपलभ्यते ॥ १२ ॥
इत्यग्निवेशस्य वचः श्रुत्वा मतिमतां वरः ।
सर्वं यथावत् प्रोवाच प्रशान्तात्मा पुनर्वसुः ॥ १३ ॥

निदानस्थाने ज्ञातहेत्वादिना तथा विमाने प्रतीतरसदोषमानेन कर्तव्यचिकित्साधिकरणं शरीरं ज्ञातव्यं भवति । यतोऽप्रतिपन्नेऽशेषविशेषतः शरीरे न शरीरविज्ञानाधीना चिकित्सा साध्वी भवति । अतः शरीरं कारणोत्पत्तिस्थितिवृद्ध्यादिविशेषैः प्रतिपादयितुं शारीरं स्थानमुच्यते । अत्रापि चात्यन्तदुःखोपरममोक्षकारणचिकित्सोपयुक्तपुरुषभेदादिप्रतिपादकतया प्रधानत्वेन कतिधापुरुषीयोऽध्यायोऽभिधीयते । कतिधेति कतिप्रकारः । पुरुषइत्यनेन चाविशेषेण पुरुषशब्दाभिधेयोऽर्थोऽभिधीयते । यतः "खादयश्चेतनाषष्ठा" इत्यादिना, तथा "चतुर्विंशतिकभेदभिन्नश्च कर्मपुरुष एव शरीरी वाच्यः ।" "चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः" इत्यनेनात्मैव शरीररहितः पुरुषशब्दार्थत्वेन वाच्यः । पुरुषधारणाद्धातुः । तेन, धातुभेदेनेति पुरुषधारणार्थभेदेन । धीमन्निति विशेषेण य एव धीमान्, स एव पुरुषभेदादिकमिमं[1] वक्ष्यमाणं सुसूक्ष्मं वक्तुं समर्थ इति दर्शयति । पुरुषः कारणं कस्मादिति कस्माद्धेतोः पुरुषः संसारे प्रधानं स्थायिकारणमित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । योनिष्विति जातिषु । सर्वा इति परपुरुषगता अपि[2] । क्षेत्रज्ञ आत्मा । क्षेत्रमव्यक्तवर्जितं सर्वं वक्ष्यमाणम् । ज्ञेयमित्यादि ।—असति क्षेत्रे क्षेत्रज्ञानाभावान्न क्षेत्रज्ञत्वमुपपद्यते इति भावः[3] । साक्षिभूत इति साक्षिसदृशः । विशेषो वेदनाकृत इति पुत्रादिज्ञानरूपवेदनाजनितो हर्षादिविशेष इत्यर्थः । तिसृणामिति अतीतानागतवर्तमानानां दुःखरूपाणां मध्ये कां चिकित्सति । अतीतामित्यादौ 'किं'शब्दोऽध्याहार्यः । तेन, किमतीतां चिकित्सति, किं वर्तमानाम्, किंवा भविष्यतीमिति योज्यम्[4] । स्थानं नास्तीति क्षणिकत्वेन चिकित्सायाः प्रवृत्तियोग्यकालावस्थानं नास्ति । वेदनानां कारणमधिष्ठानं च यद्यपि दीर्घञ्जीवितीयेऽप्युक्तम् । तथापीह प्रकरणवशाद्विशेषप्रतीत्याकाङ्क्षया च विशिष्टैः[5] पुनः प्रश्नाः । प्रश्नार्थाश्चामी उत्तरतन्त्रेणाचार्येण[6] प्रपञ्चनीया इति तत्रैव व्याकरणीयाः ॥ १—१३ ॥

खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः ।
चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः ॥ १४ ॥

खादय इत्यादि ।—खादयः "खं वायुरग्निरापः क्षितिस्तथा" इति वक्ष्यमाणाः, चेतनाषष्ठी इत्यत्रैव 'चेतना' शब्देन चेतनाधारः समनस्क आत्मा गृह्यते । खादिग्रहणेन चेन्द्रियाणि खादिमयान्यवरुद्धानि । अयं च [7]वैशेषिकदर्शनपरिगृहीतः चिकित्साशास्त्रविषयः[8] पुरुषः । अयमेव "पञ्चमहाभूतशरीरिसमवायः पुरुषः" इत्यनेन सुश्रुतेनाप्युक्तः । स्मृत इति परिभाषया[9] पूर्वाचार्याणामप्ययं 'पुरुष'शब्दवाच्योऽभिप्रेतो नासत्कल्पित इति दर्शयति । पुरि शरीरे शेते इति व्युत्पत्त्या य आत्मा 'पुरुष'शब्देनोच्यते, तमाह चेत-

---

१ भेदादिकमिदमिति पाठान्तरम् । २ सर्वपुरुषगता अपीति पाठान्तरम् । ३ इत्यर्थ इति पाठान्तरम् । ४ वर्तमानामित्यादि योज्यमिति पाठान्तरम् । ५ शिष्यस्येति पाठान्तरम् । ६ उत्तरग्रन्थ एवाचार्येणेति पाठान्तरम् । ७ वैशेषिकदर्शने पंचमहाभूतानि समनस्क आत्मा इति षट्केन पुरुषः संज्ञाभवतीत्याशयः । ८ चिकित्साशास्त्रविहित इति पाठान्तरम् । ९ भाषयेति पाठान्तरम् ।

नेत्यादि। अत्र 'पुरुषः' इति कर्तव्ये यत्—'पुरुषसंज्ञकः' इति करोति, तेन चेतनाधातुरूपः पुरुषश्चिकित्सायामनभिप्रेतः, किंतु शास्त्रान्तरव्यवहारानुरोधादिहाप्ययं 'पुरुष'शब्देन संज्ञित इति दर्शयति, चिकित्साविषयस्तु षड्धातुक एव पुरुषः। अतएव तत्र 'संज्ञित'ग्रहणं न कृतम्। अयं च 'पुरुष'शब्दो गवादावपि षड्धातुसमुदाये यद्यपि वर्तते, तथापि सर्वप्रधाने नर एव विशेषेण वर्तते। तेन नातिप्रसिद्धो गवादौ 'पुरुष'शब्दः ॥ १४ ॥

**पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः।**
**मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी ॥ १५ ॥**

षड्धातुरूपमेव पुरुषं पुनः सांख्यदर्शनभेदाच्चतुर्विंशतिकभेदेनाह—पुनश्चेत्यादि। चतुर्विंशतिकमेव विभजते—मन इत्यादि। यद्यपि पञ्चविंशतितत्त्वमयोऽयं पुरुषः सांख्यैरुच्यते, यदाह—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति। तथापीह प्रकृतिव्यतिरिक्तं चोदासीनं पुरुषमव्यक्तत्वसाधर्म्यादव्यक्तायां प्रकृतावेव प्रक्षिप्य 'अव्यक्त'शब्देनैव गृह्णाति। तेन चतुर्विंशतिकपुरुष इत्यविरुद्धम्। उदासीनस्य हि सूक्ष्मस्य भेदप्रतिपादनमिहानतिप्रयोजनमिति न कृतम्। दशेन्द्रियाणीति पञ्चकर्मेन्द्रियाणि। अष्टधातुकीति खादिपञ्चकबुद्ध्यव्यक्ताहङ्काररूपा। वक्ष्यति हि "खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः" इति ॥ १५ ॥

**लक्षणं मनसो ज्ञानस्याभावो भाव एव वा।**
**सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्तते ॥ १६ ॥**
**वैवृत्यान्मनसो ज्ञानं सान्निध्यात्तच्च वर्तते।**
**अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ ॥ १७ ॥**

अत्र चतुर्विंशतिके प्रथमोद्दिष्टं मनोलक्षयितुमाह—लक्षणमित्यादि। यथा ज्ञानस्याभावो ज्ञानस्य भावश्च मनोगमको भवति, तदाह—सतीत्यादि। वैवृत्यान्मनस इति इन्द्रियेणाऽसंयोगात्, सान्निध्यादिति इन्द्रियेण मनसः संबन्धात्। एवंमन्यते—यदा युगपदिन्द्रियार्था इन्द्रियैः संयुज्यन्ते तदा क्वचिदिन्द्रियार्थे ज्ञानं भवति, क्वचिन्न भवतीति दृष्टम्। तेन, इमौ ज्ञानभावाभावौ ज्ञानकारणान्तरं दर्शयतः, यच्च तत्कारणान्तरम्, तन्मनः। तत्कारणं मनोरूपं यद्यात्मवद्युगपत् सर्वेन्द्रियव्यापकं स्वीक्रियते किंवा, अनेकसंख्यामिन्द्रियवत् स्वीक्रियते, तदा पुनरपि युगपदिन्द्रियार्थसम्बन्धे पञ्चभिर्ज्ञानैर्भवितव्यं विभुना वा मनसा, अनेकैर्वा मनोभिर्युगपदधिष्ठितत्वादिन्द्रियाणाम्। न च भवन्ति युगपज्ज्ञानानि। तस्माद्युगपज्ज्ञानानुदयाल्लिङ्गान्मनोऽणुरूपमेकं च सिध्यतीत्याह—अणुत्वमित्यादि ॥ १६—१७ ॥

१ वक्तव्य इति पाठान्तरम्। २ मूलप्रकृतिः सर्वजनिका प्रकृतिरजन्या तथाचाजन्यत्वेसति जनकत्वं प्रकृतित्वम्। महत्तत्त्वाहंकारपंचतन्मात्राणि प्रकृतिविकृतयः। तत्वविभाजकोपाध्यवच्छिन्नजनकत्वेसति जन्याइत्यर्थः। एकादशेन्द्रियाणि पंचाकाशादीनिमहाभूतानिच विकार इति। तत्वविभाजकोपाध्यवच्छिनाजनकत्वे सतिजन्यइत्यर्थः। पुरुषस्तत्सर्वभोक्ता न प्रकृतिर्नविकृतिः अजनकत्वेसति अजन्य इत्यर्थः। सांख्यकारिकाया नारायणतीर्थकृताटीका।

**चिन्त्यं विचार्यमूह्यं च ध्येयं सङ्कल्प्यमेव च।**
**यत्किंचिन्मनसो ज्ञेयं तत्सर्वं ह्यर्थसंज्ञकम् ॥ १८ ॥**
**इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः।**
**ऊहो विचारश्च ततः परं बुद्धिः प्रवर्तते ॥ १९ ॥**

मनोगुणमभिधाय मनोविषयमाह—चिन्त्यमित्यादि। चिन्त्यं कर्तव्यतयाऽकर्तव्यतया यन्मनसा चिन्त्यते। विचार्यमुपपत्त्यनुपपत्तिभ्यां यद्विमृश्यते। ऊह्यं च यत् संभावनया ऊह्यते 'एवमेतद्भवति' इति। ध्येयं भावनाज्ञानविषयम्। सङ्कल्प्यं गुणवत्तया दोषवत्तया वा वाऽवधारणविषयम्। यत् किञ्चिदित्यनेन सुखाद्यनुक्तविषयावरोधः। मनसो ज्ञेयमिति इन्द्रियनिरपेक्षमनोग्राह्यम्। एते च मनोऽर्थाः शब्दादिरूपा एव। तेन षष्ठार्थकल्पनया न चतुर्विंशतिसंख्यातिरेकः। सुखादयस्तु शब्दादिव्यतिरिक्ता मनोऽर्था बुद्धिभेदग्रहणेनैव ग्राह्याः। मनोविषयमभिधाय मनःकर्माह—इन्द्रियेत्यादि। इन्द्रियाभिग्रह इन्द्रियाधिष्ठानं मनसः कर्म, तथा स्वस्य निग्रहो मनसः कर्म। मनो ह्यनिष्टविषयप्रवृत्तं मनसैव नियम्यते। मनश्च गुणान्तरयुक्तं सद्विषयान्तरान्नियमयतीत्याहुरेके। यदुक्तम्—'विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते। नियन्तुमहितादर्थाद्धृतिर्हि नियमात्मिका" इति। तेन, धृत्या कारणभूतया मन आत्मानं नियमयतीति न स्वात्मनि क्रियाविरोधः। मनःकर्मान्तरमाह—ऊहो विचारश्चेति, अत्रोह आलोचनज्ञानं निर्विकल्पम्, विचारः सङ्कल्पनं हेयोपादेयतया विकल्पनम्। चतुर्विधं हि विकल्पकारणं सांख्या मन्यन्ते[२]।—तत्र वाह्यमिन्द्रियरूपम्, आभ्यन्तरं तु मनोऽहङ्कारो बुद्धिश्चेति त्रितयम्।—तत्रेन्द्रियाण्यालोचयन्ति निर्विकल्पेन गृह्णन्तीत्यर्थः, मनस्तु सङ्कल्पयति हेयोपादेयतया सङ्कल्पयतीत्यर्थः, अहङ्कारोऽभिमन्यते 'ममेदमहमत्राधिकृतः' इति मन्यत इत्यर्थः, बुद्धिरध्यवस्यति त्यजाम्येनं दोषवन्तमुपाददाम्येनं गुणवन्तमित्यध्यवसायं करोतीत्यर्थः। ऊहस्तु यद्यपि वाह्यचक्षुरादिकर्म, तथापि मनोऽधिष्ठानमस्तीति मनःकर्मतयोक्तः। वचनं हि "सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्। तस्मा-

१ एवमेतद्भविष्यतीति पाठान्तरम्। २ रूपादिषु पंचानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पंचानाम् ॥ २८ ॥ स्वालक्षण्यं वृत्तिस्त्रयस्य सैषाभवत्यसामान्या। युगपच्चतुष्टयस्य हि वृत्तिः क्रमशश्च तस्य निर्दिष्टा। सांख्यकारिका।

त्रिविधं करणं द्वारिद्वाराणि शेषाणि" इति । ततः परं बुद्धिः प्रवर्तत इति ऊहविचारानन्तरं बुद्धिरध्यवसायं करोतीत्यर्थः । अहङ्कारव्यापारश्चाभिमननमिहानुक्तोऽपि बुद्धिव्यापारेणैव सूचितो ज्ञेयः । बुद्धिर्हि लजाम्येनमुपाददामीति वाऽध्यवसायं कुर्वती अहङ्काराभिमत एव विषये भवति । तेन बुद्धिव्यापारेणैवाऽहङ्कारव्यापारो गृह्यते । बुद्धौ हि सर्वकरणव्यापारार्पणं भवति । यदुक्तम् "एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः । कृत्स्नं पुरुषार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" १८—१९

**इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते ।**
**कल्प्यते मनसाप्यूर्ध्वं गुणतो दोषतो यथा ॥ २० ॥**
**जायते विषये तत्र या बुद्धिर्निश्चयात्मिका ।**
**व्यवस्यति तथा वक्तुं कर्तुं वा बुद्धिपूर्वकम् ॥ २१ ॥**

एतदेवोहविचारपूर्वकत्वं बुद्धेर्विवृणोति—इन्द्रियेणेत्यादि । गृह्यते इति ऊहमात्रेण निर्विकल्पेन गृह्यते । गुणत इत्युपादेयतया । दोषत इति हेयतया । बुद्ध्यध्यवसायं विवृणोति—जायत इत्यादि । विषये तत्रेति मनसा कल्पिते विषये । निश्चयात्मिकेति स्थिरस्वरूपाऽध्यवसायरूपेत्यर्थः । व्यवस्यतीत्यनुष्ठानं करोति उद्युक्तो भवतीत्यर्थः । बुद्ध्यध्यवसितमर्थं वक्तुं कर्तुं वाऽनुतिष्ठतीति यावत् । बुद्धिपूर्वकमित्येनेन, यदेव बुद्धिपूर्वकमनुष्ठानम्, तदेवैवंविधं भवति, नोन्मत्ताद्यनुष्ठानमिति दर्शयति ॥ २०—२१ ॥

**एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि तु ।**
**पञ्च कर्मानुमेयानि येभ्यो बुद्धिः प्रवर्तते ॥ २२ ॥**

मनोऽभिधायेन्द्रियाण्यभिधत्ते, अत्रापि ज्यायस्त्वाद् बुद्धीन्द्रियाणि प्रागाह—एकैकेत्यादि । खादीनां मध्ये एकैकेन भूतेन युक्तानीन्द्रियाणि पञ्च चक्षुरादीनि । 'एकैकाधिक'पदेन, पञ्चापि पाञ्चभौतिकानि, परन्तु चक्षुषि तेजोऽधिकमित्याद्युक्तं सूचयति । कर्मानुमेयानीति कार्यानुमेयानि । कार्यं चक्षुर्बुद्ध्यादि । येभ्यो बुद्धिः प्रवर्तत इति, यानि बुद्धीन्द्रियाणि, तानीमानि पञ्चेति दर्शयति । यद्यपि च सांख्ये आहङ्कारिकाणीन्द्रियाणि, यदुक्तम्—"सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्" इति, तथापि मतभेदाद्भौतिकत्वमिन्द्रियाणां ज्ञेयम् । किंवा, औपचारिकमेतद् भौतिकत्वमिन्द्रियाणां ज्ञेयम् । उपचारबीजं च यद्गुणभूयिष्ठं यदिन्द्रियं गृह्णाति, तत्तद्भूयिष्ठमुच्यते । चक्षुस्तेजो गृह्णाति, तेन तैजसमुच्यते इत्यादि ज्ञेयम् ॥ २२ ॥

**हस्तौ पादौ गुदोपस्थे जिह्वेन्द्रियमथापि वा ।**
**कर्मेन्द्रियाणि पञ्चैव पादौ गमनकर्मणि ॥ २३ ॥**
**पायूपस्थौ विसर्गार्थौ हस्तौ ग्रहणधारणे ।**
**जिह्वा वागिन्द्रियं वाक् च सत्या ज्योतिस्तमोऽनृता ॥**

अथ कर्मेन्द्रियाण्याह—हस्तावित्यादि । हस्तावेकं पादौ चैकमिन्द्रियमेकरूपकर्मकर्तृतया । गुदोपस्थे चैकैकम् । वाच उपादानहानार्थं भेदमाह—वाक् चेत्यादि । ज्योतिरिव ज्योतिः धर्मैककर्तृत्वेन उभयलोकप्रकाशकारित्वात् । एतद्विपर्ययेण तमः अनृता सत्यविपर्ययेणेति ॥ २३।२४ ॥

**महाभूतानि खं वायुरग्निरापः क्षितिस्तथा ।**
**शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥२५॥**

संप्रति उद्देशक्रमानुरोधादभिधातव्यार्थानां प्रकृतिग्रहणगृहीतपञ्चभूतपञ्चगुणतया पराधीनत्वादष्टधातुप्रकृतिगृहीतादिभूतान्येव तावदाह—महाभूतानीत्यादि । शब्दादयो यथासंख्यं खादीनां नैसर्गिका गुणा ज्ञेयाः । यस्तु गुणोत्कर्षोऽभिधातव्यः, स हि अनुप्रविष्टभूतसंबन्धादेव । तेन, पृथिव्यां चतुर्भूतप्रवेशात्पञ्चगुणत्वम् । एवं जलादावपि चतुर्गुणत्वादि ज्ञेयम् ॥ २५ ॥

**तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे ।**
**पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः ॥ २६ ॥**

नैसर्गिकं गुणमभिधाय भूतान्तरप्रवेशकृतं गुणमाह—तेषामित्यादि । एकगुणः पूर्व इति पूर्वो धातुस्वरूपः शब्दैकगुणः । पुंलिङ्गता च खादीनां धातुरूपता बुद्धिस्थीकृतत्वात्, उक्तं हि "खादयश्चेतनाषष्ठा धातवः" इति । यथा यथा च परत्वम्, तथा तथा च गुणवृद्धिः यथासंख्यम् । ननु एतावताप्येकगुणत्वद्विगुणत्वादि न नियमेन ज्ञायते को गुणः क भूत इत्याह—पूर्व इत्यादि ।—गुणिषु खादिषु धातुषु पूर्वो गुणः क्रमेण यथासंख्यं वर्तते, न केवलं पूर्वैः, किंतु पूर्व-

१ सांप्रतं त्रयोदशसु कारणेषु केषाञ्चित् प्रधानभावं सहेतुकमाह—सान्तःकरणेत्यादि । द्वारि प्रधानम् । शेषाणि करणानि बाह्येन्द्रियाणि, तैरुपनीतं सर्वं विषयं समनोऽहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति, तस्माद्बाह्येन्द्रियाणि द्वाराणि, द्वारवती च सान्तःकरणा बुद्धिरितीति वाचस्पतिमिश्रेण तत्त्वकौमुद्यां व्याख्यातेयं कारिका । २ न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये अप्यहङ्कारमनसी द्वारिणी, ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह—एत इत्यादि । यथाहि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति, विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायाम्, तदिदमुक्तम्, "पुरुषार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" इति । बाह्येन्द्रियमनोऽहङ्काराश्च गुणविशेषा गुणानां सत्त्वरजस्तमसां विकाराः, ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः, यथा वर्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपः, एवमेते गुणविशेषा इति योजनेति वाचस्पतिमिश्रः । ३ अनुतिष्ठतीत्यर्थं इति पाठान्तरम् ।

१ बुद्धिस्थीकारादिति पाठान्तरम् । २ द्विगुणत्वादीति पाठान्तरम् ।

स्यापि यो गुणः, स च पूर्वगुण उत्तरे भूते वर्तते। तेन खे पूर्वे पूर्वः शब्दगुणो वर्तते। वायौ तु स्पर्शः क्रमप्राप्तः पूर्वो भवति, पूर्वगुणश्च शब्द इति द्विगुणत्वम्। एवमग्न्यादौ च ज्ञेयम्। गन्धस्तूत्तरगुणान्तराभावान्न पूर्वो भवति, तथापि "गन्धश्च तद्गुणाः" इति ग्रन्थे 'तद्गुणाः' इतिपदापेक्षया गन्धस्य पूर्वत्वं कल्पनीयम्। किंवा, पूर्व इति छत्रिणो गच्छन्तीतिन्यायेनोक्तम्, तेन अपूर्वोऽपि गन्धः क्रमागतः पृथिव्यां ज्ञेयः॥ २६॥

**खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्।**
**आकाशस्याऽप्रतीघातो दृष्टं लिङ्गं यथाक्रमम्॥२७॥**
**लक्षणं सर्वमेवैतत्स्पर्शनेन्द्रियगोचरम्।**
**स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्ययः॥ २८॥**

भूतानामसाधारणं लक्षणमाह—खरेत्यादि। अप्रतीघातोऽप्रतिहननं अस्पर्शत्वमिति यावत्, स्पर्शवद्धि गतिविघातकं भवति, नाकाशः, अस्पर्शवत्त्वात्। सर्वमेवैतदिति खरत्वादि। स्पर्शनेन्द्रियगोचरमिति स्पर्शनेन्द्रियज्ञेयम्। कथमेतत् सर्वं स्पर्शनेन्द्रियज्ञेयमित्याह—स्पर्शनेत्यादि। सविपर्यय इति संस्पर्शाभाव इत्यर्थः। यदिन्द्रियं यद्गृह्णाति, तत्तस्याभावमपि गृह्णाति। तेन, आकाशस्यास्पर्शत्वं स्पर्शेन्द्रियग्राह्यमिति युक्तम्। द्रवत्वं चलत्वं च सांख्यमते स्पर्शनग्राह्यत्वात् स्थूलभूतवातधर्मः स्पर्श एव। यद्धि स्पर्शनेन गृह्यते, तत्सर्वं स्पर्शो महाभूतवातपरिणाम एव। एतानि खादीनि च सूक्ष्माणि तन्मात्ररूपाणि ज्ञेयानि।[२] स्थूलभूतानि तु खादीनि तत्र विशेषतया सूक्ष्मरूपाणि च तन्मात्राण्यविशेषतयोक्तानि। वचनं हि "तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः। एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च"[३] इति; तेन इहापि खादीनि 'तन्मात्र'शब्देनोक्तानि सूक्ष्मत्वेन[१] बोद्धव्यानि॥ २८॥

**गुणाः शरीरे गुणिनां निर्दिष्टाश्चिह्नमेव च।**
**अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः॥२९॥**

भूतानां सूक्ष्माणां शरीरस्थानां लिङ्गान्तराण्याह—गुणा इत्यादि। गुणाः शब्दादयः। गुणिनामिति सूक्ष्मरूपभूतानामेव। गुणग्रहणात्[२] शब्दादयश्च व्यक्ताः सूक्ष्माणां शरीरस्थानां भूतानां लक्षणं भवन्तीति वाक्यार्थः॥

अर्थानाह—अर्था इत्यादि। 'अर्थ'शब्देन तु ये शब्दादयो विशेषास्ते स्थूलखादिरूपा एव ज्ञेयाः। तेन आकाशपरिणाम एव शब्दः, वातपरिणामः स्पर्श इत्यादि ज्ञेयम्[३]। शब्दादिग्रहणे आकाशादिग्रहणं यत्, तत् आकाशादिपरिणामएव शब्दादय इत्युक्तमेव। एतेन यच्छ्रोत्रग्राह्यम्, तत् सर्वमाकाशं शब्दश्च। यत् स्पर्शेन गृह्यते, तत् सर्वं वायुः स्पर्शश्चेत्यादि ज्ञेयम्॥ २९॥

**या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्तते।**
**याति सा तेन निर्देशं मनसा च मनोभवा॥ ३०॥**

संप्रति प्रकृतिगणसंविष्टायाः[४] बुद्धेरुपदर्शनार्थं तस्या बुद्धेर्वृत्तिभेदात्[५] ज्ञानविशेषरूपाण्याह—येत्यादि। यदिन्द्रियमाश्रित्य इति यदिन्द्रियप्रणालिकामाश्रित्य महच्छब्दाख्यस्य बुद्धितत्त्वस्य वृत्तिविशेषरूपाणि ज्ञानानीन्द्रियप्रणालिकया भवन्ति, तदिन्द्रियजन्यत्वेनैव तानि व्यपदिश्यन्ते चक्षुर्बुद्धिः श्रोत्रबुद्धिरित्यादीनि। मनोभवा च बुद्धिश्चिन्त्यादिविषया मनसा निर्दिश्यते मनोबुद्धिरिति व्यपदिश्यत इति॥ ३०॥

**भेदात् कार्येन्द्रियार्थानां बह्व्यो वै बुद्धयः स्मृताः।**
**आत्मेन्द्रियमनोर्थानामेकैकसन्निकर्षजाः॥ ३१॥**
**अङ्गुल्यङ्गुष्ठतलजस्तन्त्रीवीणानखोद्भवः।**
**दृष्टः शब्दो यथा बुद्धिर्दृष्टा संयोगजा तथा॥ ३२॥**
**बुद्धीन्द्रियमनोर्थानां विद्याद्योगधरं परम्।**
**चतुर्विंशक इत्येष राशिः पुरुषसंज्ञकः॥ ३३॥**

इन्द्रियमनोभेदेन षट्त्वं[६] बुद्धीनां प्रतिपाद्य बुद्धिबहुत्वं प्राह—भेदादित्यादि। कार्यस्य इन्द्रियार्थस्य च भेदात् तत्

---

१ यथालोके छत्रिणोगच्छन्तीतिप्रयोगे सपरिवारेराज्ञि गच्छति छत्र्यछत्रिसमुदाये छत्रिशब्दो वर्तते एकसमूहवाहित्वेन तथा च पृथिव्याः गन्धगुणस्य अपूर्वत्वेपि चतुर्णांपूर्वभूतानां पूर्वत्वेन पृथिव्यां संयोगोभवति पूर्वगुणसमुदायवहुत्वेन अपूर्वस्यापि छत्रिन्यायेन समावेशः। २ स्थूलभूतानि तु खादीनि विकारतया तथोक्तानि, तथा प्रकृतिवर्गे सूक्ष्मरूपा तन्मात्रा उक्ता इति पाठान्तरं तु न समीचीनतया प्रतिभाति। ३ तदेवं कारणानि विभज्य विशेषाऽविशेषान् विभजते—तन्मात्राणीत्यादि। शब्दादितन्मात्राणि सूक्ष्माणि न चैषां शान्तत्वादिरस्ति उपभोगयोग्योऽविशेष इति मात्राशब्दार्थः। अविशेषानुक्त्वाविशेषान् वक्तुमुत्पत्तिमेषामाह तेभ्यस्तन्मात्रेभ्यः यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यः भूतानि आकाशानिलानलसलिलावनिरूपाणि पञ्च, पञ्चभ्यस्तन्मात्रेभ्यः। अस्त्वेषां भूतानामुत्पत्तिर्विशेषत्वे किमायातमित्यत आह एते स्मृता विशेषाः, कुतः, शान्ता घोराश्च मूढाश्च। 'च' एको हेतौ, द्वितीयः समुच्चये, यस्मादाकाशादिषु स्थूलेषु सत्वप्रधानतया केचिच्छान्ताः सुखाः प्रसन्ना लघवः। केचिद्रजःप्रधानतया घोरा दुःखा अनवस्थिताः। केचित्तमःप्रधानतया मूढा विषमा गुरवः। तेऽमी परस्परव्यावृत्ता अनुभूयमाना विशेषा इति स्थूला इति चोच्यन्ते। तन्मात्राणि तु अस्मादादिभिः परस्परव्यावृत्तानि नानुभूयन्त इत्यविशेषा इति सूक्ष्मा इति चोच्यन्ते इति वाचस्पतिमिश्रः।

१ सूक्ष्माणीति पाठान्तरम्। २ एतद्ग्रहणादिति पाठान्तरम्। ३ दर्शनमिति पाठान्तरम्। ४ प्रकृतिगणप्रविष्टाया इति पाठान्तरम्। ५ वृत्तिभेदज्ञानविशेषरूपाण्याहेति पाठान्तरम्। ६ षट्कमिति पाठान्तरम्।

संबन्धेन भिद्यमाना बह्वयो बुद्धयो भवन्ति, कार्य सुखदुःखभेदाः। सुखदुःखप्रपञ्चेन हि तत्कार्येण कारणं ज्ञानमपि बहु भवति॥

इदानीं सर्वबाह्यज्ञानसाधनमाह—आत्मेत्यादि। आत्मा अव्यक्तम्। एकैकेति प्रत्येकम्। बुद्धेरनेकात्मादिमेलकजन्यत्वे दृष्टान्तमाह अङ्गुल्यादि। तेन दृष्टान्तेन शब्दद्वयमाह। अङ्गुल्यङ्गुष्ठतलजशब्द एकः। अयं चाङ्गुष्ठयन्त्रितमध्यमाङ्गुल्याः करेण संयोगाज्जायमानशब्द उच्यते, तन्त्री वीणाशब्द एकः। अन्येत्वेकमेवाङ्गुल्यादिजं वीणाशब्दं वर्णयन्ति। एतेन, यथा शब्दो अङ्गुल्याद्यन्यतमवैकल्येऽपि न भवति, तथा बुद्धिरप्यात्मादीनामन्यतमवैकल्येऽपि न भवतीति दर्शयति। अत्र च बुद्धिवृत्तीनां ज्ञानानां कथनैरहङ्कारोऽपि सूचित एव। यतः, अहङ्कारोपजीवितैवात्मादिसंवलितेयं बुद्धिः 'अहं पश्यामि' इत्यादिरूपा भवति। तेन, बुद्धेरहङ्कारस्य चोक्तत्वात् परमव्यक्तं कार्यद्वारा स्वीक्रियते—बुद्धीत्यादि। परमित्यव्यक्तम्, बुद्ध्यादीनां योगं मेलकं धरतीति योगधरम्। अव्यक्तं हि प्रकृतिरूपं पुरुषार्थप्रवृत्तम्, बुद्ध्यादिमेलकं भोगसम्पादकं सृजति। एवं व्युत्पादितं चतुर्विंशतिकमुपसंहरति चतुर्विंशक इत्यादि। यदि वा कर्मेन्द्रियाण्यभिधाय, "महाभूतानि" इत्यादिना अर्थ एवाश्रयभूतकथनेनोच्यते। "या यदिन्द्रियमाश्रित्य" इत्यादिना तु स्फुटोपलभ्यमाना बुद्धिवृत्तिभेदा उच्यन्ते। बुद्ध्यहङ्कारतन्मात्राण्यव्यक्तानि तु सूक्ष्माणि नोक्तानि, तानि सर्वाण्येव "बुद्धीन्द्रियमनोऽर्थानाम्" इत्यादि ग्रन्थे 'पर'शब्देनोच्यन्ते। तेन, योगधरं परमित्यनेन मूलप्रकृतिस्तथा प्रकृतिविकृतयश्च महदादयः सप्तोच्यन्ते। एवं चतुर्विंशतिकोराशिर्भवति। परत्वं च विकारापेक्षया प्रकृतीनामुपपन्नमेव॥ ३१—३३॥

**रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान्।**
**ताभ्यां निराकृताभ्यां तु सत्त्ववृद्ध्या निवर्त्तते॥३४॥**

संप्रत्येवं पुरुषस्य सकारणं संसरणं मोक्षहेतुंचाह—रज इत्यादि। संयोगोऽयमिति चतुर्विंशतिराशिरूपोमेलकः। ताभ्यामिति रजस्तमोभ्याम्। सत्त्ववृद्ध्या कारणभूतया रजस्तमोनिवृत्त्या पुरुषरूपः संयोगो निवर्तते मोक्षो भवतीत्यर्थः। सत्त्वं वृद्धं विशुद्धज्ञानजननात् रजस्तमसौ संसारकारणे विजित्य प्रकृतिपुरुषविवेकज्ञानात् मोक्षमावहति॥ ३४॥

**अत्र कर्म फलं चात्र ज्ञानं चात्र प्रतिष्ठितम्।**
**अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता॥ ३५॥**
**एवं यो वेद तत्त्वेन स वेद प्रलयोदयौ।**
**पारंपर्यं चिकित्सां च ज्ञातव्यं यच्च किंचन॥ ३६॥**

पुनश्चतुर्विंशतिकरूपे पुरुषे कर्मफलानि दर्शयन् दोषहीने पुरुषे कर्मफलाद्यभावमर्थाद्दर्शयति अत्रेत्यादि। फलं अत्रेति यथोक्तसमुदायपुरुषे। कर्मेत्यदृष्टम्। फलमित्यदृष्टफलम्। स्वता ममताज्ञानम्। यद्यपि चतुर्विंशतिकतत्त्वातिरिक्तस्योदासीनस्यैव चेतना, तथापि तच्चेतनया प्रकृतिरपि चेतनामापद्य चेतनैव भवतीति युक्तमत्र 'ज्ञानम्' इति। वचनं हि "तस्मात् तत्संयोगादचेतनंचेतनावदिव लिङ्गम्। प्रलयोदयाविति जीवितमरणे। पारंपर्यमिति शरीरपरंपराम्। चिकित्सा चेति नैष्ठिकी आत्यन्तिकदुःखेषु चिकित्सा मोक्षसाधना ज्ञातव्या। किंचनेत्यनेनानुक्तमपि कृत्स्नं ज्ञेयमवरुणद्धि॥३५।३६॥

**भास्तमः सत्यमनृतं वेदाः कर्म शुभाशुभम्।**
**न स्युः कर्त्ता च बोद्धा च पुरुषो न भवेद्यदि॥३७॥**
**नाश्रयो न सुखं नार्तिर्न गतिर्नागतिर्न वाक्।**
**न विज्ञानं न शास्त्राणि न जन्म मरणं न च॥३८॥**
**न बन्धो न च मोक्षः स्यात् पुरुषो न भवेद्यदि।**
**कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः॥ ३९॥**
**न चेत् कारणमात्मा स्याद्भादयः स्युरहेतुकाः।**
**न चैषु संभवेत् ज्ञानं न च तैः स्यात् प्रयोजनम्॥४०॥**

"पुरुषः कारणं कस्माद्" इति प्रश्नस्योत्तरं भास्तम इत्यादि। भाः प्रतिभा। तमो मोहः। पुरुष इव प्रकरणे आत्माभिप्रेतः। आश्रयः शरीरम्। गतिश्च प्रयोजनानुसन्धानाद्भवति। एवमागतेरपि। कारणं पुरुषस्तस्मादिति भास्तमादौ कारणं पुरुष इत्यर्थः। एतदेव भाआदिकारणत्वमात्मन इत्याह—न चेदित्यादि। एवं मन्यते भास्तमसी धर्माधर्मजन्ये धर्माधर्मौ चासत्यात्मनि निराश्रयौ न भवितुमर्हतः। तथा सत्यं धर्मजनकतया उपादेयम्, अनृतं चाधर्मजनकतयानुपादेयम्। एतच्चात्मनि स्थिरेऽसति धर्माधर्मजनकत्वं नास्ति। ततश्च सत्यासत्यभेदोऽप्यकिञ्चित्करत्वान्नास्ति। एवं शुभाशुभकर्मण्यपि वाच्यम्, तथा कर्ता च कारणप्रतिसन्धाता न भवति, प्रतिसन्धातुरात्मनोऽभावादित्यर्थः, तथा बोद्धा च पूर्वापरावस्थाप्रतिसन्धातैव भवति। शरीरं चात्मनो भोगायतनं नात्मानं विना भवति। एवं सुखादावप्यात्मनः कारणत्वमुन्नेयम्। विज्ञानं शास्त्रार्थज्ञानम्, शास्त्राणि प्रतिसन्धात्रात्मनैव कृतानि। न चैषु संभवेज्ज्ञानमिति आत्मानं ज्ञातारं विना न भादिष्वज्ञानेषु ज्ञानं भवेत्, ज्ञातुरात्मनोऽभावादित्यर्थः। न च तैः स्यात् प्रयोजनमिति, भादीनामात्मार्थत्वे-

१ सत्त्ववृद्ध्येति पाठान्तरम्।

१ स्यादेतत् प्रमाणेन कर्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धम्। तदेतस्मिन् मते नावकल्पते, चेतनस्याकर्तृत्वात् कर्तुश्चाचैतन्यादित्यत आह—तस्मादित्यादि। यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्माद्भ्रान्तिरियमित्यर्थः। लिङ्गं महदादि सूक्ष्मपर्यन्तं लयं गच्छति, भ्रान्तिबीजम् तत्संयोगस्तत्सन्निधानमिति। वाचस्पतिमिश्रः। २ कर्ता वेदितेति पाठान्तरम्।

नासत्यात्मनि भावुत्पत्तेः प्रयोजनं न स्यात्, प्रयोजनाभावाच्चोत्पादो न स्यात्, सर्वेषामेव हि भावानामात्मस्थौ धर्माधर्मौ पुरुषभोगोत्पादकौ, असति भोक्तरि भोज्येनापि न भवितव्यम् कारणाभावात् ॥ ३७—४० ॥

**कृतं मृद्दण्डचक्रैश्च कुम्भकाराहते घटम्।**
**कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम् ॥ ४१ ॥**
**यो वदेत्स वदेद्देहं सम्भूयकरणैः कृतम्।**
**विना कर्तारमज्ञानाद्युक्त्यागमवहिष्कृतः ॥ ४२ ॥**
**कारणं पुरुषः सर्वैः प्रमाणैरुपलभ्यते।**
**येभ्यः प्रमेयं सर्वेभ्य आगमेभ्यः प्रमीयते ॥ ४३ ॥**
**न ते तत्सदृशास्त्वन्ये पारंपर्यसमुत्थिताः।**
**सारूप्याद्ये त एवेति निर्दिश्यन्ते नवा नवाः ॥ ४४ ॥**
**भावास्तेषां समुदयो निरीशः सत्त्वसंज्ञकः।**
**कर्ता भोक्ता न स पुमानिति केचिद्व्यवस्थिताः ॥ ४५ ॥**

आत्मानं विना शरीरानुत्पादे दृष्टान्तद्वयं प्रमेयगौरवादाह—कृतं मृद्दण्डेत्यादि। संभूयकरणैः कृतमित्यात्मनिरपेक्षैर्भूतैः कृतमित्यर्थः। युक्त्या अनुमानरूपया, आगमेन च रहितो युक्त्यागमवहिष्कृतः। प्रत्यक्षं चात्र नोक्तम्, तस्यात्मानं प्रति प्रायोऽयोग्यत्वात् ॥

सर्वैः प्रमाणैरिति प्रत्यक्षादिभिः। येभ्य इति करणएवाऽपादानविवक्षया पञ्चमी। आगमयन्ति बोधयन्तीति आगमाः प्रमाणान्येव। अन्ये त्वागमप्रमाणाभ्यां शास्त्राण्येव ब्रुवते ॥

निरात्मवादिमतमुत्थापयति—न ते इत्यादि। अस्मिन् शरीरे ते क एव पृथिवीजलादयो भावाः, ये त एवेति व्यपदिश्यन्ते। ते न भवन्ति पूर्वानुभूता नानुभवन्तीत्यर्थः। यदि ते न भवन्ति, कथं तर्हि 'ते' इत्यभिज्ञानमित्याह तत्सदृशास्त्वन्ये पूर्वसदृशा इत्यर्थः। पारंपर्यसमुत्थिता इति सदृशसन्तानव्यवस्थिताः। सारूप्यादिति सदृशरूपत्वात्। तेषां समुदय इति क्षणभङ्गिनां मेलक इत्यर्थः। निरीश इति स्थाय्यात्मरहितः। सत्वसंज्ञक इति प्राणिसंज्ञकः। केचिदिति वौद्धाः। वौद्धा हि निरात्मकं क्षणिकज्ञानादिसमुदायमात्रं शरीरमिच्छन्ति। अभिसन्धानं च क्षणिकानामपि ज्ञानानां कार्यकारणभावाच्चैव सन्तताविच्छन्ति ॥ ४१—४५ ॥

**तेषामन्यैः कृतस्यान्ये भावा भावैर्न वा फलम्।**
**भुञ्जते सदृशाः प्राप्तं यैरात्मा नोपदिश्यते ॥ ४६ ॥**

एतद्दूषयति—तेषामित्यादि। तेषां ज्ञानसन्तानवादिनाम्, अन्येन कृतस्यौदनपाकादेः फलमन्नादि अन्ये भुञ्जत इति प्राप्नोति। एतच्चासङ्गतम्। यतः फलं भोक्ष्यामीति कृत्वा भाविफलप्रत्याशया प्रवृत्तिर्युक्ता, न त्वन्यस्य भोग्यतां फलस्य पश्यन् कश्चित् प्रवर्तते, योऽपि सूपकारादिः परार्थं प्रवर्तते, सोऽपि परार्थेन स्वार्थं साधयितुकाम एवेति भावः ॥ ४६ ॥

**करणान्यान्यता दृष्टा कर्तुः कर्ता स एव तु।**
**कर्ता हि करणैर्युक्तः कारणं सर्वकर्मणाम् ॥ ४७ ॥**

परमतं दूषयित्वा स्वमतमाह—करणेत्यादि। करणस्य शरीरस्य परिणामिनोऽन्योन्यता दृष्टा। कर्ता चात्मा, सएव न विनाशीत्यर्थः। अत्रैव दृष्टान्तमाह—कर्ता हीत्यादि। यथाऽनेकशिल्पवित् कर्ता करणैर्वासो आयसीसंज्ञकयन्त्रादिभिः काष्ठपाटनलौहघटनादि करोति, तथाऽऽत्मापीहेत्यर्थः ॥ ४७ ॥

**निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये।**
**भग्नानां न पुनर्भावः कृतं नान्यमुपैति च ॥ ४८ ॥**
**मतं तत्त्वविदामेतद्यस्मात्तस्मात् स कारणम्।**
**क्रियोपभोगे भूतानां नित्यः पुरुषसंज्ञकः ॥ ४९ ॥**

अथायमात्मसद्भावः स्थिरोऽस्तु, शरीरारम्भकाणां का गतिरित्याह—निमेषेत्यादि। भावानामिति शरीरादिभावानाम्। अत्यय इति विनाशे, शरीरस्य स्वाग्निपच्यमानस्य[1] निमेषकालादपि शीघ्रं विनाशो भवतीत्यर्थः। अमीषां च भावानां भग्नानां न पुनर्भावः पुनरागमनं नास्तीति। तेन, येन शरीरेण यत् कृतम्, तच्छरीरं तत् फलं न प्राप्नोतीत्युक्तं भवति। अथ मा भवत्वेवम्। ततः किमित्याह कृतं कर्म यागादि न फलरूपतयाऽन्यमुपैति। एवं सति देवदत्तेन कृतेन शुभकर्मणा न यज्ञदत्तादयोऽपि सुखभाजः स्युः, तस्मात् क्षणभङ्गिशरीरादतिरिक्तः[2] कर्मकर्ता तत्फलभोक्ता चास्तीतिभावः। क्रियोपभोग इति क्रियायां तत्फलभोगेपि। भूतानामिति प्राणिनाम् ॥ ४८—४९ ॥

**अहङ्कारः फलं कर्म देहान्तरगतिः स्मृतिः।**
**विद्यते सति भूतानां कारणे देहमन्तरा ॥ ५० ॥**

आत्मसद्भावे हेत्वन्तरमाह अहङ्कार—इत्यादि। एतेऽहङ्कारादयः स्थिर एव परमात्मनि सन्ति पूर्वापरकालावस्थायिवस्तुधर्मत्वादिति भावः। देहमन्तरेति देहं विना देहातिरिक्तकालेऽप्यहङ्कारो भवतीत्यर्थः ॥ ५० ॥

**प्रभवो न ह्यनादित्वाद्विद्यते परमात्मनः।**
**पुरुषो राशिसंज्ञस्तु मोहेच्छाद्वेषकर्मजः ॥ ५१ ॥**

"प्रभवः पुरुषस्य कः" इत्यस्योत्तरम् अनादीत्यादि। प्रभवः कारणम्। राशिसंज्ञक इति षड्धातुरूपसमुदायश्चतुर्विंशतिराशिरूपः। मोहेच्छाद्वेषजनितकर्मजो मोहेच्छाद्वेषकर्मजः। मोहाद्धि भावेषु इच्छा द्वेषश्च भवति, ततः प्रवृत्तिः, प्रवृत्तेर्धर्माधर्मौ, तौ च शरीरं जनयतो भोगार्थम् ॥ ५१ ॥

---

१ शरीरस्यानुपच्यमानस्येति पाठान्तरम्। २ क्षणभावशरीरादतिरिक्त इति पाठान्तरम्।

**आत्मा ज्ञः करणैर्योगात् ज्ञानं त्वस्य प्रवर्तते ।**
**करणानामवैमल्यादयोगाद्वा न वर्तते ॥ ५२ ॥**
**पश्यतोऽपि यथाऽऽदर्शे संक्लिष्टे नास्ति दर्शनम् ।**
**तत्त्वं जले वा कलुषे चेतस्युपहते तथा ॥ ५३ ॥**

"किमज्ञो ज्ञः" इत्यस्योत्तरम् आत्मेत्यादि । करणानीह मनोबुद्धीन्द्रियाणि । न वर्तते ज्ञानमिति योजना । ननु यद्ययमात्मा ज्ञः, तत् किमित्यस्य सर्वज्ञानं न भवतीत्याह—पश्यतोऽपीति चक्षुष्मतोऽपीत्यर्थः । तत्त्वमिति दर्शनविशेषणम् । तेन, म्लाने दर्पणे जले वा दर्शनं भवदप्ययथार्थग्राहितया न तत्त्वरूपं भवतीत्यर्थः । चेतसीत्युपलक्षणम् । तेन, चक्षुरादावप्युपहत इति ज्ञेयम् ॥ ५२—५३ ॥

**करणानि मनो बुद्धिर्बुद्धिकर्मेन्द्रियाणि च ।**
**कर्तुः संयोगजं कर्म वेदना बुद्धिरेव च ॥ ५४ ॥**
**नैकः प्रवर्तते कर्तुं भूतात्मा नाश्नुते फलम् ।**
**संयोगाद्वर्तते सर्वं तमृते नास्ति किञ्चन ॥ ५५ ॥**

प्रकरणप्रस्तावात् ज्ञानं कर्मणि वेदनायां च यावत्करणमात्मनस्तदाह—करणानीत्यादि । संयोगजमिति कर्मणा वेदनया बुद्ध्या च योज्यम् । नाश्नुते फलमेक इति योज्यम् । एक इति निष्करणः । संयोगाद्वर्तत इति करणसमुदायादुत्पद्यते । तमृत इति संयोगं विना ॥ ५४—५५ ॥

**न ह्येको वर्तते भावो वर्तते नाप्यहेतुकः ।**
**शीघ्रगत्वात्स्वभावात्त्वभावो न व्यतिवर्तते ॥ ५६ ॥**

अत्रैव सामग्रीजन्यत्वे सर्वकार्याणामुपपत्तिमाह—नह्येक इत्यादि । एको भावः कारणरूपः सहकारिकारणान्तररहितो न कार्यकरणे वर्तत इत्यर्थः । एवं तावदेककारणं कार्यं न वर्तते । कार्यं च हेतुं विना न भवतीत्याह—वर्तते नाप्यहेतुक इति, हेतुं विना उत्पत्तिधर्मो न वर्तते न भवतीत्यर्थः । तेन, करणयुक्तात्मजन्यं कार्यं न केवलादात्मनो हेतुरूपाद्भवतीत्युक्तं भवति । अथ हेतुं विना चेद्भावो न भवतीति, तत् किमभावेऽपि शारीराणां भावानां हेत्वपेक्षा, न वेत्याह—शीघ्रगेत्यादि । शीघ्रगत्वात्स्वभावात्क्षितोऽभावो न स्वभावं व्यतिवर्तते 'शीघ्रगत्व' स्वभावं न त्यजतीत्यर्थः । तेन, अहेतुक एवाभावो भवति, भावस्तु सहेतुकः । उक्तं हि "उत्पत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम्" इति । किंवा, शीघ्रगत्वादस्थिरत्वादभावो नावस्थान्तरमात्मनाशं प्रति गच्छतीति ग्रन्थार्थः ॥ ५६ ॥

**अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः ।**
**सदकारणवन्नित्यं दृष्टं हेतुजमन्यथा ॥ ५७ ॥**

"स नित्यः किमनित्यः" इत्यस्योत्तरम् अनादिरित्यादि । अनादिः पुरुषोऽव्यक्तरूपत्वादात्मशब्दाभिधेयः। विपरीत इत्यादिमान् राशिरूपः पुरुष इत्यर्थः । अत्रैवानादेर्नित्यत्वे शास्त्रान्तरसंमतिमप्याह—सदित्यादि । सदिति त्रिविधसमये प्रमाणगम्यभावरूपम्[१] । एतेन, प्रागभावस्याकारणवतोऽप्यभावरूपतयाऽनित्यत्वं न व्यभिचारकम्[२] । हेतुजमन्यदपि भावरूपमिति योजनीयम् । तेन, हेतुजस्यापि प्रध्वंसस्य विनाशित्वं परिहृतं भवति ॥ ५७ ॥

**तदेव भावादग्राह्यं नित्यत्वं न कुतश्चन ।**
**भावात्, ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा ॥५८॥**
**अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः ।**
**तस्माद्यदन्यत्तद्व्यक्तम्, वक्ष्यते चापरं द्वयम् ॥५९॥**
**व्यक्तं चैन्द्रियकं चैव गृह्यते तद्यदिन्द्रियैः ।**
**अतोऽन्यत्पुनरव्यक्तं लिङ्गग्राह्यमतीन्द्रियम् ॥ ६० ॥**

अथ किं तन्नित्यत्वमित्याह—तदेवेत्यादि । भावादुत्पत्तिधर्मकात् तन्नित्यत्वं न कुतोऽपि भावाद्भवति । नित्यत्वं हि न कुतोऽपि भवति । ततश्चात्मनो भावं प्रति निरपेक्षत्वात् सर्वेभ्यो भावेभ्योऽप्यग्रे नित्यत्वं सदेव । तदेवंभूतं नित्यमव्यक्तं ज्ञेयम् । अचिन्त्यमित्यव्यक्तविशेषणम् । अव्यक्तं च मूलप्रकृतिः । व्यक्तमन्यथेति प्रकृतेरन्यतमत्कार्यं[३] महदादिकमनित्यम् । आकाशमपि विकाररूपतयाऽनित्यमेव । उदासीनपुरुषस्तु नित्य एवाव्यक्तशब्देनैव लक्षित इत्युक्तमेव ॥

पुनः प्रकारान्तरेण व्यक्ताऽव्यक्तार्थमाह—वक्ष्यत इत्यादि । अपरं द्वयमिति प्रकारान्तरं व्यक्ताऽव्यक्तद्वयम् । लिङ्गग्राह्यमित्यनुमानग्राह्यम् । अतीन्द्रियमित्यनेन चेन्द्रियग्रहणायोग्यं यत् केनापि शब्दादिलिङ्गेन गृह्यते, तदव्यक्तम् । किन्तु यन्नित्यानुमेयं मनोऽहङ्कारादि तदेवाव्यक्तम् ॥ ५८—६० ॥

**खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः ।**
**भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडश ॥ ६१ ॥**
**बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।**
**समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः ॥६२॥**

"प्रकृतिः का विकाराः के" इत्यस्योत्तरम् खादीनीत्यादि । खादीनि सूक्ष्मभूतखादीनि तन्मात्रशब्दाभिधेयानि । बुद्धिर्महच्छब्दाभिधेया । अव्यक्तं मूलप्रकृतिः । अहङ्कारो बुद्धिविकारः, स च त्रिविधो भूतादिस्तैजसो वैकारिकश्च । भूतानां स्थावरजङ्गमानां प्रकृतिर्भूतप्रकृतिः । तत्र चाव्यक्तं प्रकृतिरेव परम् । बुद्ध्यादयस्तु स्वकारणविकृतिरूपा अपि स्वकार्यापेक्षया प्रकृतिरूपा इह प्रकृतित्वेनोक्ताः । यदुक्तम् "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति । विकारानाह विकारा इत्यादि । 'एव'शब्दो भिन्नक्रमाऽवधारणे, तेन, विकार एव षोडश परं न प्रकृतयः । बुद्धेरिन्द्रियाणि बुद्धीन्द्रियाणि । पञ्चार्था इति स्थूलाः आकाशादयः शब्दादिरूपाः, गुणगुणिनः परमार्थतो भेदो नास्त्येवास्मिन् दर्शने ॥ ६१—६२ ॥

---

१ विधिविषयप्रमाणगम्यस्वरूपमिति पाठान्तरम् । २ व्यभिचारिकमिति पाठान्तरम् । ३ प्रकृतेरन्यतरकार्यमिति पाठान्तरम् ।

**इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम् ।
अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः ॥ ६३ ॥**

एतमेव प्रकृतिविकारसमूहं क्षेत्रक्षेत्रज्ञभेदेन विभजते—इतीत्यादि । अव्यक्तवर्जितमिति प्रकृत्युदासीनवर्जितम्, प्रकृतेश्चोदासीनपुरुषचैतन्येन चैतन्यमस्त्येव ॥ ६३ ॥

**जायते बुद्धिरव्यक्ताद्बुद्ध्याहमिति मन्यते ।
परं खादीन्यहङ्काराद्दुत्पद्यन्ते यथाक्रमम् ॥ ६४ ॥
ततः सम्पूर्णसर्वाङ्गो जातोऽभ्युदित उच्यते ।
पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ॥ ६५ ॥**

संप्रति महाप्रलयानन्तरं यथाऽऽदिसर्गे बुद्ध्याद्युत्पादो भवति, तदाह—जायत इत्यादि । बुद्ध्याहमिति मन्यत इति बुद्धेर्जातेनाहङ्कारेणाहमिति मन्यत इत्यर्थः । खादीनीति खादीनि सूक्ष्माणि तन्मात्ररूपाणि तथैकादशेन्द्रियाणि । वचनं हि "प्रकृतेर्महान् महतोऽहङ्कारस्तस्माद्गणश्च षोडशकः" इति । यथाक्रममिति तस्मादहङ्काराद्दुत्पद्यते क्रमेण, तत्र वैकृतात्सात्त्विकादहङ्कारात्तैजससहायादेकादशेन्द्रियाणि भवन्ति, भूतादेस्त्वहङ्कारात्तामसात्तैजससहायात्पञ्चतन्मात्राणि । यदुक्तम् "सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" इति । तत इति आहङ्कारिककार्यानन्तरं तन्मात्रेभ्य उत्पन्नस्थूलभूतसंबन्धात् । सम्पूर्णसर्वाङ्गो जात इति आदिसर्गो जातः ॥ ६४—६५ ॥

**अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।
रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्तते ॥ ६६ ॥**

एवमादिसर्गे प्रकृतेर्महदादिसर्गं दर्शयित्वा महाप्रलये प्रकृतावव्यक्तरूपायां बुद्ध्यादीनां लयमाह—पुरुष इत्यादि । इष्टैर्भावैरिति पुरुषस्य भोगार्थमिष्टैर्बुद्ध्यादिभिः । अन्ये तु एवंभूतसर्गमत्र जन्मनि, बुद्ध्यादिवियोगं च मरणे ब्रुवते । तन्न, जन्ममरणयोर्बुद्ध्यादीनां विद्यमानत्वात् । उक्तं हि—"अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न विमुक्तपूर्वः । नैवेन्द्रियैर्नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः" इति । तथान्यत्राप्युक्तम्—"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" इति[1] । तस्मात् महाप्रलय एव प्रकृतौ लयः, तदादिसर्ग एव प्रकृतेर्महदादिसृष्टिरिति । एतदेव प्रपञ्चं लयं च प्रकृतेराह—अव्यक्तादित्यादि । अव्यक्तादिति प्रकृतेः, व्यक्ततामिति महदादिमहाभूतपर्यन्तप्रपञ्चरूपतां याति । व्यक्तान्महदादिमहाभूतपर्यन्तप्रपञ्चाद्यवस्थातः पुनरव्यक्तरूपतां याति । जगन्महाप्रलये हि महाभूतानि तन्मात्रेषु लयं यान्ति । तन्मात्राणि तथेन्द्रियाणि चाऽहङ्कारे लयं यान्ति, अहङ्कारो बुद्धौ, बुद्धिश्च प्रकृताविति लयक्रमः । अयं च लयक्रमो मोक्षेऽपि भवति । परंतु तं पुरुषं प्रति पुनः सर्गं[1] नारभते प्रकृतिः ॥ ६६ ॥

**येषां द्वन्द्वे परासक्तिरहङ्कारपराश्च ये ।
उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा ॥ ६७ ॥**

अयं संसारः कुतो भवतीत्याह रज इत्यादि । आविष्टो युक्तः । चक्रवत् परिवर्तत इति पुनः पुनर्लयसर्गाभ्यां युज्यते । द्वन्द्व इति रजस्तमोरूपे मिथुने, अहङ्कारपरा इति अहङ्कारान्ममेदमित्यादि मिथ्याज्ञानपराः । उदयप्रलयौ जन्ममरणे, किंवा, लयसर्गौ । अतोऽन्यथेति रागद्वेषविमुक्ता निरहङ्काराश्च ये, तेषां नोदयप्रलयौ भवतः ॥ ६७ ॥

**प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।
इन्द्रियान्तरसञ्चारः प्रेरणं धारणं च यत् ॥ ६८ ॥
देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।
दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥ ६९ ॥
इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥ ७० ॥
यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि जीवतः ।
न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः ॥ ७१ ॥
शरीरं हि गते तस्मिन् शून्यागारमचेतनम् ।
पञ्चभूतावशेषत्वात् पञ्चत्वं गतमुच्यते ॥ ७२ ॥
अचेतनं क्रियावच्च मनश्चेतयिता परः ।
युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ७२**

"किं लिङ्गं पुरुषस्य च" इत्यस्योत्तरम् प्राणापानावित्यादि प्राणापानावुच्छ्वासनिःश्वासौ । निमेषाद्या इति 'आद्य' शब्दग्रहणेन उन्मेषाद्या प्रेक्षणविशेषा गृह्यन्ते । मनसो गतिरिति

१ सूक्ष्मशरीरं विभजते—पूर्वोत्पन्नमित्यादि । प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । असक्तमव्याहतं शिलामप्यनुविशति, नियतं आ चादिसर्गात् आ च महाप्रलयादवतिष्ठते, महदादि सूक्ष्मपर्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रापर्यन्तम्, एषां समुदायः सूक्ष्मशरीरम् । शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः । नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेण इत्यत आह—संसरतीति, उपात्तमुपात्तं षाट्कौशिकशरीरं जहाति, हायं हायञ्चोपादत्ते, कस्मात्? निरुपभोगं यतः, षाट्कौशिकं शरीरं विना सूक्ष्मं शरीरं निरुपभोगम्, तस्मात् संसरति । ननु धर्माधर्मनिमित्तः संसारः, न च सूक्ष्मशरीरस्यास्ति तद्योगः, तत्कथं संसरतीत्याह भावैरधिवासितम्, धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावास्तदन्विता बुद्धिः, तदन्वितं च सूक्ष्मशरीरम्, तदपि भावैरधिवासितम्, यथा सुरभिचम्पकसम्पर्काद्वस्त्रं तदामोदवासितं भवति, तस्माद्भावैरधिवासितत्वात्संसरति । कस्मात् पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठति? इत्याह लिङ्गम्, लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति भाव इति वाचस्पतिमिश्रः तत्त्वकौमुद्याम् ।

१ सङ्गमिति पाठान्तरम् ।

मनसा पाटलिपुत्रादिगमनरूपा । इन्द्रियान्तरसञ्चारोऽपि मनस एव, यथा चक्षुः परित्यज्य मनः स्पर्शनमधितिष्ठतीत्यादि, प्रेरणं च तथा धारणं च मनस एवेति ज्ञेयम् । देशान्तरगतिः स्वप्न इति छेदः । पञ्चत्वग्रहणं मरणज्ञानम् । सव्येनावगम इति सव्येनाक्ष्णा, स एवायं दक्षिणाक्षिदृष्टो घट इत्यवगम इत्यर्थः । चेतना ज्ञानमात्रम् । बुद्धिस्तूहापोहज्ञानम् । अथ कथमेतान्यात्मानं गमयन्तीत्याह—यस्मादित्यादि । जीवत इति पञ्चभूतातिरिक्तात्मसंयुक्तस्य । पञ्चत्वं तु यद्यपि जीवतो न भवति, किंतु, मृतस्यैव, तथापि पञ्चत्वं मृतशरीरे दृश्यमानं विपर्ययात् पञ्चत्वाभावाद् जीवच्छरीरलिङ्गं भवतीति ज्ञेयम् । अत्रैवोदाहृताश्च प्राणापानादयो न भूतमात्रे भवन्ति, निरात्मकेष्विष्टकमृतशरीरादिष्वदर्शनात् । न च मन एव भूतातिरिक्तात्मा भवितुमर्हति । यतस्तस्यापि करणरूपस्य प्रेरणादर्थं ज्ञानं[1] कर्तव्यम् । नापीन्द्रियाण्यात्मत्वेन स्वीकर्तुं पार्यन्ते । यतः, तथा सति इन्द्रियाणीन्द्रियान्तरोपलब्धार्थं न प्रतिसन्धातुं समर्थानि भवन्ति । अस्ति चेन्द्रियान्तरोपलब्धार्थप्रतिसन्धानम्, यथा सुरभिचन्दनं स्पृशामि । तस्मान्मनइन्द्रियभूतातिरिक्तात्मा तिष्ठतीति ज्ञेयम् । अत्र यद्यपि 'बुद्धि'-शब्देन चेतना धृतिस्मृत्यहङ्काराः प्राप्यन्त एव, तथापि बुद्धिप्रकरणत्वेन पृथक्पृथगात्मकत्वेन पुनः पुनः पृथगुपात्ताः । तथाहि चेतनागुणत्वेन चेतना खादिभूतातिरिक्तधर्मेणात्मानं गमयति[3] । धृतिस्तु नियमात्मिका नियन्तारमात्मानं गमयति । बुद्धिस्तु ऊहापोहयोरेकं कारणं गमयत्यात्मानम् । स्मृतिस्तु पूर्वानुभूतार्थस्मरणकर्तारं स्थायिनमात्मानं गमयतीत्यनुसरणीयम् । आत्माधिष्ठानाभावे शरीरे प्राणाद्यभावमाह—शरीरमित्यादि । शून्यागारमिव शून्यागारं यथाऽधिष्ठातृशून्यम्, एवं मृतशरीरमपि । षड्धातुकं शरीरम्, तत्र षष्ठे आत्मनि गते पञ्चभूतात्मकं शरीरं भवति, तेन, पञ्चत्वं गतमुच्यते ॥ ७३ ॥

**चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते ।**
**अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥ ७४ ॥**

"निष्क्रियस्य क्रिया तस्य कथम्" इत्यस्योत्तरम्—अचेतनमित्यादि । चेतयिता पर इति पर आत्मा चेतयिता परं न तु साक्षात् क्रियावान् । ननु यद्येवं कथं तस्य क्रियेत्याह—युक्तस्येत्यादि । आत्माधिष्ठितस्यैव मनसः क्रिया उपचारादात्मनः क्रियेत्युच्यते इत्यर्थः । एतदेवोपपादयति—चेतनेत्यादि । चेतनेन ह्यात्मनाधिष्ठितं मनः क्रियासु प्रवर्तते, चेतनानधिष्ठितं तु मनः क्रियासु न प्रवर्तते । तेन यत्कृता सा क्रिया, स एव क्रियावानिति व्यपदेष्टुं युज्यते । नत्वचेतनं मनः, तत्पराधीनक्रियत्वेन[1] परमार्थतः क्रियावदपि कर्तृत्वेन नोच्यत इति वाक्यार्थः । नोच्यते कर्त्रिति शेषः ॥ ७४ ॥

**यथास्वेनात्मनात्मानं नयति सर्वयोनिषु ।**
**प्राणैस्तन्त्रयते प्राणी नह्यन्योऽस्त्यस्य तन्त्रकः ॥७५॥**

संप्रति स्वतन्त्रत्वेऽप्यनिष्टयोनिषु गमनं प्राणाक्षिप्तं समादधाति यथास्वेनेत्यादि । सर्वासु नरगोहस्तिकीटादियोनिषु । प्राणैस्तन्त्रयते प्राणयोजयति, आत्मनैवायं धर्माधर्मसहायेनात्मानं सर्वयोनिषु नयति, न परप्रेरितो याति, यतोऽन्यः पुरुषोऽस्य प्रेरको नास्ति ईश्वराभावात् । किंवा सत्यपि ईश्वरे तस्यापि कर्मपराधीनत्वात् । इदमेव चास्यानिष्टयोनिगमने स्वातन्त्र्यम् यद् अनिष्टयोनिगमनहेत्वनिष्टकारणे स्वातन्त्र्यम्, अनिष्टकारणारब्धस्वकर्मणैवायमनिच्छन्नपि[2] नीयत इत्यनिष्टयोनिगमनं भवति । स्वातन्त्र्यं च यथोक्तं भवति ॥ ७५ ॥

**वशी तत् कुरुते कर्म यत् कृत्वा फलमश्नुते ।**
**वशी चेतः समाधत्ते वशी सर्वं निरस्यति ॥ ७६ ॥**

"वशी यद्यसुखैः कस्माद्भावैराक्राम्यत" इत्यस्योत्तरम् वशीत्यादि । वशी स्वेच्छाधीनप्रवृत्तिः इष्टेऽनिष्टे वात्मा, तेन, वशी सन्नयं तानि कर्माणि करोति शुभान्यशुभानि वा आपातफलरागाद्, यानि कृत्वा तत्कर्मप्रभावात् शुभेनाशुभेन वा योगमाप्नोति । एतेन, कर्तव्ये कर्मण्यस्य वशित्वम्, कृतकर्मफलं त्वस्यानिच्छतोऽपि भवति । तेन, तत्प्रति नास्य वशित्वम् । अन्यदपि वशित्वफलमाह—वशी चेतः समाधत्त इति । अनिष्टेऽर्थे वशी सन्नयं मनो निवर्तयति । यदि ह्ययं वशी न स्यात्, न मनो निवर्तयितुं शक्नुयात् । अपरमपि वशित्वगमकं कर्माह वशी सर्वं निरस्यतीति । वशी सन्नयं मोक्षार्थप्रवृत्तः सर्वारम्भं शुभाशुभफलं त्यजतीत्यर्थः । इह 'स्वतन्त्रः' परात्मना ईश्वरादिना प्रेरितप्रवृत्तिरुच्यते । वशी तु स्वयमपि प्रवर्तमान इच्छावशात् प्रवर्तते, न प्रेरितप्रवृत्तिरूपत्वेन ईप्सिते वर्तते इति स्वातन्त्र्यवशित्वयोर्भेदः ॥ ७६ ॥

**देही सर्वगतो ह्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये ।**
**सर्वाः सर्वाश्रयस्थास्तु नात्माऽतो वेत्ति वेदनाः ७७**

"सर्वाः सर्वगतत्वाच्च वेदनाः किं न वेत्ति सः" इत्यस्योत्तरमाह—देहीत्यादि । सर्वगत इति सर्वगतोऽपि । संस्पर्शनेन्द्रिय इति संस्पर्शयुक्ते शरीरे वेदनाः सुखदुःखरूपा वेत्ति, सर्वाश्रयस्थास्तु न वेत्तीति योजना । यस्मात्सर्वगतोऽयमात्मा स्वकीय एव स्पर्शनवति शरीरे परं वेदना वेत्ति । तेन, सर्वाश्रयस्थाः सर्ववेदना न वेत्तीति वाक्यार्थः । सर्वाश्रयस्था इति सर्वपरशरीरगताः । परशरीरे चात्मा स्वकर्मोपार्जितेन्द्रियाभावाद्विद्यमानोऽपि न लभते सुखदुःखे । स्वे स्वे शरीर

१ प्रेरणादात्मज्ञानमिति पाठान्तरम् । २ तथा सति इन्द्रियाणि यज्ञदत्तोपलब्धार्थं देवदत्तेऽपीति पाठान्तरम् । ३ तथापि चेतनागुणत्वेन खादिभूतातिरिक्तधर्मेणात्मानं गमयतीति पाठान्तरम् ।

१ तत्पराधीनक्रियत्वेनेत्यत्र तदिति मनः । २ अधर्मकारणारब्धस्वकर्मणैवायमनिच्छन्नपीति पाठान्तरम् ।

इति वक्तव्ये, यत्संस्पर्शनेन्द्रिये इति करोति, तेन, स्वशरीरेऽपि केशनखादौ स्पर्शनेन्द्रियं नास्ति, तत्र नात्मा किंचिदुपलभत इति दर्शयति ॥ ७७ ॥

**विभुत्वमतएवास्य यस्मात्सर्वगतो महान् ।**
**मनसश्च समाधानात्पश्यत्यात्मा तिरस्कृतम् ॥७८॥**
**नित्यानुबन्धं मनसा देहकर्मानुपातिना ।**
**सर्वयोनिगतं विद्यादेकयोनावपि स्थितम् ॥ ७९ ॥**

"न पश्यति विभुः कस्माद्" इत्यादिप्रश्नस्योत्तरं वक्तुं प्रवृत्तो विभुत्वसाधकार्थगुणहेतुप्राप्त्या विभुत्वमेव तावदात्मनः साधयति—विभुत्वमित्यादि । विभुत्वं सर्वगतपरिमाणयोगित्वम् । अतएवेत्युक्तसर्वगतत्वात् । एतदेव स्पष्टार्थं साक्षाद्ब्रूते यस्मादित्यादि । सर्वगतत्वं सर्वतोऽप्युपलभ्यमानत्वेन सर्वगताकाशादिपरिमाणस्याप्यस्ति, तेन, तद्व्यवच्छेदार्थं 'महान्' इति पदम्, महापरिमाणयोगिद्रव्यं विभुरुच्यत इति फलति । विभुत्वं व्युत्पाद्य कुड्यादितिरोहितात्मज्ञानं नैकान्तं भवतीति दर्शयन्नाह—मनस इत्यादि । समाधानं समाधिः । अनेन, योगिनः समाधिबलात् तिरोहितमपि पश्यन्तीति दर्शयति । ये तु तिरोहितं न पश्यन्ति, तत्राप्युपपत्तिमाह—नित्येत्यादि । सर्वयोनिगतमप्यात्मानं मनसानुबन्धगतं एकयोनावपि स्थितं विद्यादिति योज्यम् । देहानुवर्तकेन कर्मणा अनुपात आत्मना संबन्धो यस्य, तेन मनसा देहकर्मानुपातिना । एतेन, यद्यप्यात्मा कुड्यादितिरोहितस्तथापि यदस्योपलब्धिसाधनं मनः, तस्यैकस्मिन्नेव शरीरे व्यवस्थितस्य व्यवधानात् "न पश्यत्ययं तिरस्कृतम्" इत्युक्तं भवति ॥ ७८—७९ ॥

**आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकम् ।**
**अनादित्वात्तयोरस्मात् किं पूर्वमिति नोच्यते ॥८०॥**

"क्षेत्रज्ञः क्षेत्रमथवा" इत्यादिप्रश्नस्योत्तरम्—अनादिरित्यादि । क्षेत्रपारंपर्यमिति क्षेत्रस्याव्यक्तवर्जितस्य महदादित्रयोविंशतिकस्य परम्परासन्ततेरनादित्वेनैव 'क्षेत्रक्षेत्रज्ञयोरिदं प्रथमम्' इति व्यपदेशो नैव भवतीत्यर्थः । ननु यदि क्षेत्रपरंपराप्यनादिस्तदाऽऽत्मवदुच्छेदं नाप्नोति, यदनादितन्नित्यं भवति, यथाऽऽत्मेति दृष्टम् । ब्रूमः—अनादित्वेऽपि यत्स्वरूपेणैवानादि, तन्नोच्छिद्यते, यथा आत्मा । यत्तु उच्छित्तिधर्मकं बुद्ध्यादि, तदुच्छिद्यत एव, सन्तानस्तु परमार्थतः सन्तानिभ्योऽतिरिक्तं नास्त्येव, यदनादिः स्यात् । तेन, सन्तानवादित्वं भाक्तमेव । किञ्चैवम्भूतस्य बुद्ध्यादिसन्तानस्योच्छेदे मोक्षप्रतिपादक आगम एव प्रमाणत्वेन ज्ञेयः ॥ ८० ॥

**ज्ञः साक्षीत्युच्यते नाज्ञः साक्षी ह्यात्मा यतः स्मृतः।**
**सर्वे भावा हि सर्वेषां भूतानामात्मसाक्षिकाः ॥८१॥**

"साक्षिभूतश्च कस्यायम्" इत्यस्योत्तरम् ज्ञ इत्यादि । ज्ञो ज्ञानवान् साक्षीति लोके कथ्यते, नत्वज्ञः पाषाणादिः । तेन, न, ज्ञत्वेनासत्यन्यस्मिन् कर्तरि 'साक्षी' इत्युच्यते इति वाक्यार्थः । सर्वेषामिति खादीनाम्, सर्वे भावा इति भूतधर्मा दर्शनयोग्याः । आत्मसाक्षिका इति आत्मोपलभ्यमानाः ॥८१॥

**नैकः कदाचिद्भूतात्मा लक्षणैरुपलभ्यते ।**
**विशेषोऽनुपलभ्यस्य तस्य नैकस्य विद्यते ॥ ८२ ॥**
**संयोगपुरुषस्येष्टो विशेषो वेदनाकृतः ।**
**वेदना यत्र नियता विशेषस्तत्र तत्कृतः ॥ ८३ ॥**

"कथञ्चाविकारस्य" इत्यादिप्रश्नस्योत्तरम् नैक इत्यादि । अविकारस्य परमात्मनो वेदनाकृतो विशेषो नास्त्येव, यत्र तु वेदनाकृतो विशेषः, स राशिरूपः परमात्मव्यतिरिक्त एवेति वाक्यार्थः । भूतानामधिष्ठाता आत्मा, भूतात्मा, अयमेको भूतव्यतिरिक्तो न लक्षणैः प्राणापानादिभिरुक्तैरुपलभ्यते । कुतो नोपलभ्यत इत्याह—विशेष इति । एकस्य भूतरहितस्य, यदाऽऽत्मनो विशेषो वेदनादिर्नोपलभ्यत एव, तेन, अनुपलब्धिरेवात्र प्रमाणमित्यर्थः । संयोगपुरुषश्चतुर्विंशतिकः । नन्वेवमपि चतुर्विंशत्यन्तर्निविष्टस्य भूतात्मनो वेदनाकृतविशेषेण भवितव्यम्, यतः, समुदायधर्मः समुदायिनामेव भवति, यथा माषराशेर्गुरुत्वं प्रत्येकं माषाणामेव गौरवेण भवतीत्याह वेदनेत्यादि । वेदना सुखदुःखरूपा । यत्र बुद्ध्यादिसमूहे नियता व्यवस्थिता वेदना, तत्कृतो दैन्यहर्षादिविशेषोऽपि तत्रैव नियतः, तत्रैव बुद्ध्यादिराशौ वर्तते, नात्मनीतिभावः । बुद्ध्यादिगतेनैव गुणत्रयपरिणामरूपेण सुखदुःखादिना सुखदुःखादिमानेवायमात्मा, तदसम्बन्धान्न सुखदुःखादिमान् भवति[1] ॥ ८२—८३ ॥

**चिकित्सति भिषक् सर्वाः त्रिकाला वेदना इति ।**
**यया युक्त्या वदन्त्येके सा युक्तिरुपधार्यताम् ॥ ८४ ॥**
**पुनस्तच्छिरसः शूलं ज्वरः स पुनरागतः ।**
**पुनः स कासो बलवांश्छर्दिः सा पुनरागता ॥८५॥**
**एभिः प्रसिद्धवचनैरतीतागमनं मतम् ।**
**कालश्चायमतीतानामार्तीनां पुनरागतः ॥ ८६ ॥**
**तमर्तिकालमुद्दिश्य भेषजं यत् प्रयुज्यते ।**
**अतीतानां प्रशमनं वेदनानां तदुच्यते ॥ ८७ ॥**
**आपस्ताः पुनरायाता याभिः शस्यं पुरा हतम् ।**
**यथा प्रक्रियते सेतुः प्रतिकर्म तथाश्रये ॥ ८८ ॥**
**पूर्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम् ।**
**या क्रिया क्रियते सा च वेदनां हन्त्यनागताम् ८९**
**पारंपर्यानुबन्धस्तु दुःखानां विनिवर्तते ।**
**सुखहेतूपचारेण सुखं चापि प्रवर्तते ॥ ९० ॥**
**न समा यान्ति वैषम्यं विषमाः समतां न च ।**
**हेतुभिः सदृशा नित्यं जायन्ते देहधातवः ॥ ९१ ॥**

---

१ बुद्ध्यादिगतेनैवेत्यादिर्भवतीत्यन्तः पाठस्तु लिपिकारप्रमादिकृतत्वेनाधिकतया प्रतिभाति ।

**युक्तिमेतां पुरस्कृत्य त्रिकालां वेदनां भिषक् ।**
**हन्तीत्युक्त्वाचिकित्सातुनैष्ठिकी या विनोपधाम् ९२**

"अथवार्तस्य" इत्यादिप्रश्नस्योत्तरमाह—चिकित्सतीत्यादि । अतीतवेदनाचिकित्सा न मुख्या, किंतु लोकसिद्धोपचारेणोच्यत इति वाक्यार्थः । प्रसिद्धवचनैरिति लोकप्रसिद्धवचनैः । प्रतिकर्म चिकित्सा । आश्रय इति शरीरे । पूर्वरूपमित्यादिना, अनागतवेदनाचिकित्सां समर्थयते । पूर्वरूपं यद्यपि भविष्यतामेव भवति रोगाणाम्, तथापि 'भविष्यताम्' इति पदेन, भूतेपि व्याधौ यानि रूपाणि भवन्ति, तानि निराकरोति । उक्तं हि—"प्राक्सन्तापादपि चैनं सन्तापार्त्तमनुवध्नन्ति" इत्यनेन रोगावस्थायामपि पूर्वरूपसद्भावः । एवमतीतानागतवेदनाचिकित्सा व्युत्पादिता । वर्तमानचिकित्सामपि दर्शयन् पारमार्थिकं मतमाह—पारम्पर्येत्यादि । पारम्पर्यानुवन्धः सन्तानन्यायेनानुवन्धः । दुःखानामिति रोगाणाम् । सुखहेतूपचारेण इत्यारोग्यहेतुचिकित्सासेवया । सुखमित्यारोग्यम् । एवं मन्यते यत् चिकित्सा सुखहेतुः सेव्यते, तदा दुःखहेतुसेवाभावात् दुःखं नोत्पद्यते, उत्पन्नं च दुःखं रोगरूपं क्षणभङ्गित्वेन स्वयमेव नश्यति । सुखहेतुसान्निध्यात् सुखमारोग्यमुत्पद्यते । तेन, चिकित्सया अनागतं दुःखं हेतुप्रतिवन्धान्निरुध्यते सुखं च जन्यते इति सिद्धान्तः[1] । एतदेवाह न समा इत्यादि ।—समाश्च विषमाश्च क्षणभङ्गित्वस्वभावान्न वैषम्यावस्थां साम्यावस्थां वा यान्तीत्यर्थः । हेतुभिः सदृशा इति समहेतोः समाः, अथ विषमहेतोश्च विषमाः । एतच्चिकित्साप्राभृतीयेऽध्याये प्रपञ्चितमेव । चिकित्साप्रस्तावेन सकलदुःखहारिणीं चिकित्सां मोक्षफलामाह–चिकित्सा त्वित्यादि । निष्ठा अत्यन्तदुःखमोक्षरूपा, तदर्थं भूता नैष्ठिकी । विनोपधामिति तृष्णां विना तृष्णाशून्या प्रवृत्तिः मोक्षफला भवतीत्यर्थः ॥ ९२ ॥

**उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः ।**
**त्यागः सर्वोपधानां च सर्वदुःखव्यपोहकः ॥ ९३ ॥**
**कोपकारो यथा ह्यंशूनुपादत्ते वधप्रदान् ।**
**उपादत्ते तथार्थेभ्यः तृष्णामज्ञः सदातुरः ॥ ९४ ॥**
**यस्त्वग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्त्तते ।**
**अनारम्भादसंयोगात्तं योगं नोपतिष्ठते ॥ ९५ ॥**

परो हेतुरिति मूलकारणम् । दुःखरूपेणैव दुःखाश्रयः शरीरम् । भोगतृष्णया हि प्रवर्तमानो धर्माधर्मान् दुःखशरीरोत्पादकानुपादत्ते । सर्वोपधात्यागात्तु न रागद्वेषाभ्यां क्वचित् प्रवर्तते । अप्रवर्तमानश्च न धर्माधर्मानुपादत्ते, एवमनागतधर्माधर्मोपरमः । उपात्तधर्माधर्मयोस्तु अनुरागशून्यस्योपभोगादेव क्षयः[2] । तेन, सर्वथा कर्मक्षयात् दुःखशरीराभाव इति भावः । अत्रैव तृष्णायां दुःखकारणत्वे दृष्टान्तमाह—कोपकारइत्यादि । कोपकारः स्वनामप्रसिद्धः कीटः । सदातुर इति सदा संसारदुःखगृहीतः । अनारम्भादिति रागद्वेषपूर्वकारम्भविरहात् । असंयोगादिति आरम्भशून्यत्वेन धर्माधर्मोच्छेदकृतात् शरीरासंयोगात् । शरीराभावे च निराश्रयमकारणकं दुःखं[1] । न भवतीति भावः ॥ ९३—९५ ॥

**धीधृतिस्मृतिविभ्रंशः संप्राप्तिः कालकर्मणाम् ।**
**असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः ॥ ९६ ॥**

"कारणं वेदनानां किम्" इत्यस्योत्तरमाह—धीधृतीत्यादि । अयंचार्थः प्रकरणागतत्वादुच्यमानो न पुनरुक्ततामावहतीति । धीधृतिस्मृतयः पुनः प्रज्ञाभेदाः । एते च शिष्यव्युत्पत्त्यर्थं प्रज्ञाभेदत्वेनान्यथा व्युत्पादयता इहोच्यन्ते । संप्राप्तिः कालकर्मणामिति कालस्य संप्राप्तिस्तथा कर्मणश्च संप्राप्तिः । कर्मसंप्राप्तिः पच्यमानकर्मयोगः । कालसंप्राप्तिग्रहणेन चेह ये कालव्यक्तास्ते गृह्यन्ते, नावश्यं कालजन्याः । यतः स्वाभाविकानपि कालजन्यान् तथा तृतीयकादीनप्यासात्म्येन्द्रियार्थादिजन्यान् कालजत्वेनैवेहाभिधास्यति । कर्मजास्तु प्रज्ञापराधजन्या एवेह कर्मजन्यत्वेन विशेषेण शिष्यव्युत्पत्तिनिमित्तं पृथक् क्रियन्ते, कालव्यक्तत्वेन कर्मजा इह कालसंप्राप्तिजन्येष्वेव रोद्धव्याः । प्रज्ञापराधावरोधाश्च यथा कर्मजानाम्, तथा प्रथमाध्याय एवोक्तम् । किंचाचार्येणोन्मादनिदाने स्वयमेवोक्तम् यत् "प्रज्ञापराधात् संभूते व्याधौ कर्मज आत्मनः" इत्यादि, तथा जनपदोद्ध्वंसनीये च विमाने पुनरुक्तम् "वाय्वादीनां च वैगुण्यमुत्पद्यते, तस्य मूलमधर्मस्तन्मूलं वा पूर्वकृतं कर्म, तयोर्योनिः प्रज्ञापराध एव" इति । तस्मादिह 'संप्राप्तिः कालकर्मणाम्' इत्यनेन कालजन्या गदा नोच्यन्ते किंतु कालव्यक्ताः ॥ ९६ ॥

**विषमाभिनिवेशो यो नित्यानित्ये हिताहिते ।**
**ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥ ९७ ॥**

धीविभ्रंशं विवृणोति—विषमेत्यादि । विषमाभिनिवेशोऽयथाभूतत्वेनाध्यवसानम् नित्येऽनित्यमिति । एवं हितेऽहितमहिते च हितमिति या बुद्धिः, स बुद्धिभ्रंशः । अथ कथमयं बुद्धिविभ्रंशशब्देनोच्यत इत्याह "समं बुद्धिर्हि पश्यति" उचिता बुद्धिः समं यथाभूतं यस्मात् पश्यति, तस्मादसमदर्शनं बुद्धिविभ्रंश उचित एवेत्यर्थः ॥ ९७ ॥

**विषयप्रवणं सत्त्वं धृतिभ्रंशान्न शक्यते ।**
**नियन्तुमहितादर्थाद्धृतिर्हि नियमात्मिका ॥ ९८ ॥**

धृतिभ्रंशमाह विषयेत्यादि । विषयप्रवणं विषयेषु सक्तम् । नियन्तुमिति व्यावर्तयितुम् । धृतिर्हि नियमात्मिकेति, यस्मात् धृतिरकार्यप्रसक्तं मनो निवर्तयति स्वरूपेण, तस्मान्मनोनियमं कर्तुमशक्ता धृतिः स्वकर्मभ्रष्टा भवतीत्यर्थः ॥ ९८ ॥

---

१ हेतुप्रतिवन्धान्निषिध्यते सुखं च कल्प्यते इति सिद्धान्त इति पाठान्तरम् । २ उपात्तधर्माधर्मयोरनुरागद्वेषशून्योपभोगादेव क्षय इति पाठान्तरम् ।

१ शरीराभावे निराश्रयकारणदुःखमिति पाठान्तरम् ।

तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः ।
भ्रश्यते स स्मृतिभ्रंशः स्मर्तव्यं हि स्मृतौ स्थितम् ९९

स्मृतिभ्रंशं विवेचयति—तत्त्वेत्यादि । तत्त्वज्ञाने स्मृतिर्यस्य भ्रश्यत इति योजना । 'स्मर्तव्यं हि स्मृतौ स्थितम्' इति स्मर्तव्यत्वेन संमतस्याऽर्थस्य स्मरणं प्रशस्तस्मृतिधर्मः । तत्र तत्त्वज्ञानस्य शिष्टानां स्मर्तव्यत्वेन स्मर्तव्यस्य यदस्मरणम्, तत् स्मृत्यपराधाद्भवतीत्यर्थः ॥ ९९ ॥

धीधृतिस्मृतिविभ्रंशः कर्म यत्कुरुतेऽशुभम् ।
प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपणम् ॥ १००॥
उदीरणं गतिमतामुदीर्णानां च निग्रहः ।
सेवनं साहसानां च नारीणां चातिसेवनम् ॥१०१॥
कर्म कालातिपातश्च मिथ्यारम्भश्च कर्मणाम् ।
विनयाचारलोपश्च पूज्यानां चाभिधर्षणम् ॥ १०२॥
ज्ञातानां स्वयमर्थानामहितानां निषेवणम् ।
परमौन्मादिकानां च प्रत्ययानां निषेवणम् ॥ १०३॥
अकालादेशसञ्चारौ मैत्री संक्लिष्टकर्मभिः ।
इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्जनम् ॥ १०४ ॥
ईर्ष्यामानभयक्रोधलोभमोहमदभ्रमाः ।
तज्जं वा कर्म यत् क्लिष्टं यद्वा तद्देहकर्म च ॥ १०५॥
यच्चान्यदीदृशं कर्म रजोमोहसमुत्थितम् ।
प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् ॥ १०६॥

एवं बुद्ध्यादिभ्रंशत्रयरूपप्रज्ञापराधत्वेन दर्शयन्नाह धीत्यादि । 'सर्वदोष' शब्देन वातादयो रजस्तमसी च गृह्यते । कर्मकालातिपातश्चिकित्साकालातिवर्तनम् । मिथ्यारम्भ इति मिथ्यायोगः, अयोगातियोगमिथ्यायोगरूपः । विनयाचारलोपेनैव प्राप्तमपि यत् पुनः पूज्यानामभिधर्षणाद्यभिधीयते, तद्विशेषेण प्रकोपख्यापनार्थमुदाहरणार्थं च । संक्लिष्टकर्मभिरिति पतितैः । क्लिष्टमिति निन्दितम् ॥ १००—१०६ ॥

बुद्ध्या विषमविज्ञानं विषमं च प्रवर्त्तनम् ।
प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत् ॥१०७॥

संक्षेपेण प्रज्ञापराधं दर्शयन्नाह—बुद्ध्येत्यादि । विषममित्यनुचितम्, विषमं विज्ञानं स्वरूपत एव प्रज्ञापराधः । विषमप्रवर्त्तनं च 'प्रज्ञापराध' शब्देनोच्यते । मनसो गोचरं तदिति, तद्विषमप्रवर्तनं विषमज्ञानं च मनःकार्यं प्रज्ञाविषयत्वेन मनसो गोचरमित्यर्थः । विषमप्रर्तनं च मनसो गोचरत्वेन उपचारादुक्तम्, विसदृशमनोविषयज्ञानाद्विषमवाग्देहप्रवृत्तिरपि भवति ॥ १०७ ॥

निर्दिष्टा कालसंप्राप्तिर्व्याधीनां व्याधिसंग्रहे ।
चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा ॥ १०८ ॥
मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः ।
जीर्णभुक्तप्रजीर्णान्नकालाकालस्थितिश्च या ॥ १०९
पूर्वमध्यापराह्णाश्च रात्र्या यामास्त्रयश्च ये ।
तेषु कालेषु नियता ये रोगास्ते च कालजाः ॥११०॥

व्याधीनां कालसंप्राप्तिमाह—निर्दिष्टेत्यादि । व्याधिसंग्रह इति कियन्तःशिरसीये "चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम् । भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु" इत्यनेन यथा ग्रुदाहरणेन च । तेन, कालसंप्राप्तिर्व्याधीनां चयप्रकोपप्रशमाः पित्तादीनां पुरा निर्दिष्टा इति योज्यम् । उदाहरणान्तरमाह—मिथ्येत्यादि । जीर्णादौ जीर्णाद्यवस्थात्रयविशिष्टस्यान्नस्य कालः, तथा, अन्नस्याकालोऽजीर्णाद्यवस्थालक्षितः । प्रजीर्णं च विदग्धम् । रात्रेर्यामास्त्रयश्च य इति, त्रयो भागाः पूर्वरात्रमध्यरात्रपररात्ररूपाः, न तु यामः प्रहर इति ज्ञेयम् । अन्यत्रापि च भागत्रये यामविभागं कृत्वा अभिधानशास्त्रे त्रियामा निशाऽभिधीयते । तेषु कालेष्विति जीर्णान्नकालादिषु जीर्णे अपराह्णे रात्रिशेषे च वातिका गदाः, भुक्तमात्रे पूर्वाह्णे पूर्वरात्रे च कफजा गदाः, प्रजीर्णे मध्याह्ने मध्यरात्रे च पित्तजा गदा नियता रोगा ज्ञेयाः । अन्नाकाले चाजीर्णलक्षणे भोजनात् त्रयो दोषा भवन्तीति ज्ञेयम् । किंवा, जीर्णभुक्तप्रजीर्णान्नकाला इतिच्छेदः, ते च जीर्णाद्यवस्थायुक्तान्नकालाः पूर्ववदेव ज्ञेयाः, तथा 'कालस्थितिश्च या' इति योजना, 'कालस्थिति'शब्देन बाल्यादिवयस्त्रैविध्यमुच्यते । तत्र बाल्ये श्लैष्मिका यौवने पैत्तिका वार्द्धक्ये वातिका गदा वर्द्धन्त इति ज्ञेयम् ॥ १०८—११० ॥

अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ ।
स्वे स्वे काले प्रवर्तन्ते काले ह्येषां बलागमः ॥१११॥

विषमज्वरानपि कालविशेषप्रवर्तमानत्वेन कालजे दर्शयन्नाह—अन्येद्युष्क इत्यादि । द्व्यहग्राही चतुर्थकविपर्ययः । वक्ष्यति हि "विषमज्वर एवान्यश्चतुर्थकविपर्ययः । मध्येऽहनी ज्वरयत्यादावन्ते च मुञ्चति" । कथं स्वकीय एव काले प्रवर्तनमित्याह—काले ह्येषां बलागम इति । उक्त एवं काले यस्माद् बलवन्तो भवन्ति, तस्मात् तत्रैव सञ्जातबलाः सन्तो व्यज्यन्त इत्यर्थः ॥ १११ ॥

एते चान्ये च ये केचित्कालजा विविधा गदाः ।
अनागते चिकित्स्यास्ते बलकालौ विजानता॥११२॥

एतेषां चिकित्साकालक्रममाह[1]—एते चेत्यादि । 'अन्ये च' इत्यनेनान्येऽपि कालविशेषप्रादुर्भाविनः शोथकुष्ठादीन् सूचयति ॥ ११२ ॥

कालस्य परिणामेन जरामृत्युनिमित्तजाः ।
रोगाः स्वाभाविका दृष्टाः स्वभावोनिष्प्रतिक्रियः११३

स्वाभाविकानपि कालपरिणामव्यज्यमानतया इह कालजेऽवरोधयितुमाह—कालस्येत्यादि । जरामृत्युरूपान्निमित्ताज्जाता

१ चिकित्साक्रममाहेति ।

जरामृत्युनिमित्तजाः, 'मृत्यु' शब्देनेह युगानुरूपायुःपर्यवसानभवः कालमृत्युर्ग्राह्यः । किंवा, जरामृत्योर्यन्निमित्तम्-तस्माज्जाता जरामृत्युनिमित्तजाः, जरामृत्युनिमित्तं च प्राणिनां साधारणं देहनिवर्तकभूतस्वभावोऽदृष्टं च । अथ स्वाभाविकानां का चिकित्सेत्याह—स्वभावो निष्प्रतिक्रिय इति । साधारणचिकित्सया रसायनवर्जं जरा न प्रतिक्रियते, रसायनेन तु प्रतिक्रियत एव । तेन, "अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा" इत्यादिरसायनप्रयोगेण समं न विरोधः । किंवा, स्वाभाविका जराद्यो रसायनजनितप्रकर्षादुत्तरकालं पुनरवश्यं भवतीति निष्प्रतिक्रियत्वेनोक्ता ॥ ११३ ॥

**निर्दिष्टं दैवशब्देन कर्म यत् पौर्वदेहिकम् ।**
**हेतुस्तदपि कालेन रोगाणामुपलभ्यते ॥ ११४ ॥**

संप्रति कर्मसंप्राप्तिकृतमपि गदं कालविशेषव्यज्यमानतया दर्शयन्नाह—निर्दिष्टमित्यादि । कालेनेति पच्यमानतालक्षितेन कालेन युक्तं सत् कर्म कारणं भवतीत्यर्थः ॥ ११४ ॥

**न हि कर्म महत् किञ्चित् फलं यस्य न भुज्यते ।**
**क्रियाघ्नाः कर्मजा रोगाः प्रशमं यान्ति तत्क्षयात् ११५**

कर्मणः फलसंबन्धिनियममाह—न हीत्यादि । 'महत्' इति विशेषणेन किञ्चित् महत् कर्म प्रायश्चित्तबाधनीयफलं ददात्यपि फलमिति दर्शयति । कर्मजानामचिकित्स्यत्वमाह—क्रियाघ्ना इत्यादि । तत्क्षयादिति कर्मक्षयात् । कर्मक्षयश्च कर्मफलोपभोगादेव भवति ॥ ११५ ॥

**अत्युग्रशब्दश्रवणात् श्रवणात् सर्वशो न च ।**
**शब्दानां चातिहीनानां भवन्ति श्रवणाज्जडाः ॥११६**
**परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः ।**
**शब्दैः श्रवणसंयोगो मिथ्यायोगः स उच्यते ॥११७**
**असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च ।**
**स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः ॥११८॥**
**यो भूतविषवातानामकालेनागतश्च यः ।**
**स्नेहशीतोष्णसंस्पर्शो मिथ्यायोगः स उच्यते ॥११९**

क्रमागतमसात्म्येन्द्रियार्थसंयोगं विवृणोति—अत्युग्रेत्यादि । सर्वशो न वेति सर्वथोग्रशब्दाश्रवणात् । स्पृश्यानामिति स्पृश्यत्वेनोक्तानां शास्त्रेऽभ्यङ्गोत्सादनादीनाम् । भूताः सविपक्रिमिपिशाचादयः । यो भूतविषवातानां संस्पर्शः, तथाऽकालेनागतः स्नेहशीतोष्णसंस्पर्शश्चेति योजना । तत्राकाले स्नेहसंस्पर्शो यथा अजीर्णे कफवृद्धिकाले अभ्यङ्गस्पर्श उष्णे चोष्णस्पर्शोऽकालेनागतो ज्ञेयः ॥ ११६—११९ ॥

**रूपाणां भास्वतां दृष्टिर्विनश्यति हि दर्शनात् ।**
**दर्शनाच्चातिसूक्ष्माणां सर्वशश्चाप्यदर्शनात् ॥ १२०॥**
**द्विष्टभैरवबीभत्सदूरातिश्लिष्टदर्शनात् ।**
**तामसानां च रूपाणां मिथ्यासंयोग उच्यते ॥१२१॥**
**अल्पादानमनादानमोकसात्म्यादिभिश्च यत् ।**
**रसानां विषमादानमल्पादानं च दूषणम् ॥ १२२ ॥**
**अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम् ।**
**असेवनं सर्वशश्च घ्राणेन्द्रियविनाशनम् ॥ १२३ ॥**
**पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्तवः ।**
**तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ॥ १२४॥**
**इत्यसात्म्येन्द्रियसंयोगस्त्रिविधो दोषकोपनः ।**

सर्वशश्चाप्यदर्शनमिति भास्वतां सूक्ष्माणां च सर्वथाऽदर्शनात् । अतिश्लिष्टमिति नेत्रप्रत्यासन्नम् । तामसानां रूपाणां च दर्शनात् विनश्यति दृष्टिरिति संबन्धः । मिथ्यायोगः स इति द्विष्टभैरवादिरूपः । अतिसूक्ष्मदर्शनं च मिथ्यायोग एव ज्ञेयः । ओकसात्म्यादिभिरिति विषमादानमिति सम्बन्धः । ओकसात्म्यादिवैषम्ये राशिदोषवर्जप्रकृत्यादिसप्तकदोषा ग्रहीतव्याः । त्रिविध इति अयोगातियोगमिथ्यायोगरूपः ॥ १२२—१२४ ॥

**असात्म्यमिति तद्विद्याद्यन्न याति सहात्मताम् १२५**
**मिथ्यातिहीनयोगेभ्यो यो व्याधिरुपजायते ।**
**शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियकः स्मृतः १२६**

असात्म्यत्वं दर्शयति—असात्म्यमित्यादि । सहेति मिलितं शरीरेण । आत्मतामाविष्कृततरूपतां न याति । एतेन, यदुपयुक्तं प्राकृतरूपोपघातकं भवति, तदसात्म्यमिति । इत्थमसात्म्यार्थजस्य व्याधेरिन्द्रियद्वारभूतत्वेनैन्द्रियकत्वं दर्शयन्नाह—मिथ्येत्यादि । हीनयोगेनेहाऽयोगो ग्राह्यः । ऐन्द्रियक इति इन्द्रियद्वारभूतः ॥ १२५—१२६ ॥

**वेदनानामसात्म्यानामित्येते हेतवः स्मृताः ।**
**सुखहेतुः समस्त्वेकः समयोगः सुदुर्लभः ॥ १२७॥**

दुःखरूपवेदनाहेतुं प्रपञ्च्योक्तमुपसंहरति वेदनानामित्यादि । असात्म्यानामिति दुःखानाम् । अथ सुखरूपवेदनाहेतुः क इत्याह—सुखेत्यादि । समयोग इति कालबुद्धीन्द्रियार्थानां सम्यग्योगः । सुदुर्लभ इति कालादिसम्यग्योगस्य विरहत्वेन सुदुर्लभत्वात् । प्रायो हि कालादीनां मध्ये अन्यतरेणाप्ययोगादिना पुरुषः संबध्यते । तेन च नित्यातुराएव पुरुषा भवन्ति, 'अनातुरारोगानामयादि' स्वस्थव्यपदेशः पुरुषाणां क्रियत इति भावः ॥ १२७ ॥

**नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य हेतवः ।**
**हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्विधः ॥ १२८ ॥**
**सन्तीन्द्रियाणि सन्त्यर्था योगो न च न चास्ति रुक् ।**
**न सुखं कारणं तस्माद्योग एव चतुर्विधः ॥ १२९ ॥**

संप्रति सम्यग्योगस्योपादेयतां दर्शयितुमयोगादीनां हेयतां दर्शयितुं योगमेव चतुर्विधं कारणत्वेन दर्शयन्नाह—नेन्द्रियाणीत्यादि । ननु कथमिन्द्रियार्थयोः सुखदुःखकारणत्वेनोपल-

भ्यमानयोरप्यकारणत्वमित्याह—सन्तीत्यादि। योगो न चेति इन्द्रियार्थयोः संबन्धो न च, न सुखमितिच्छेदः । इन्द्रियार्थयोर्योगाभावे अकारणत्वेन, सति तु योगे कारणत्वेन योगएवान्वयव्यतिरेकाभ्यां कारणमवधार्यत इति भावः। अयं च योग इन्द्रियार्थावधिकृत्य स्पष्टत्वेनोक्तः । तेन, प्रज्ञाकालयोरपि बोद्धव्यः। एतच्चेन्द्रियमर्थं चानुपादेयं कृत्वा चतुर्विधयोगस्य कारणत्वं योगानामेव हेयोपादेयत्वेन दर्शनार्थं कृतम् ॥ १२८ ॥ १२९ ॥

**नात्मेन्द्रियमनोबुद्धिगोचरं कर्म वा विना।**
**सुखदुःखं यथा यच्च बोद्धव्यं तत्तथोच्यते ॥ १३० ॥**

परमार्थतस्त्वात्मेन्द्रियमनोबुद्ध्यर्थादृष्टान्येव तथायुक्तानि सुखदुःखकारणानीति दर्शयन्नाह—नात्मेत्यादि । गोचर इन्द्रियार्थः। कर्म अदृष्टम्। तत्र आत्मानं विना नोष्णादौ सुखदुःखे भवतः । इन्द्रियादीनां च सुखदुःखकारणत्वं स्पष्टमेव। कर्मापि च शुभं सुखकारणम्, अशुभं च दुःखकारणम्। यद्यात्मादय एव कारणम्, तत् किमर्थं कालायोगातियोगादय इहोच्यन्त इत्याह—यथेत्यादि । यद् बोद्धव्यं सुखदुःखं यथा बोद्धव्यं कार्यवशात् भवति, तथैवोच्यते नान्यथा, सात्म्याऽसात्म्येन्द्रियार्थजन्यत्वेन सुखदुःखे प्रतीयमाने चिकित्सायामुपयुक्ते भवतः, नात्मादिजन्यत्वेन । आत्मादिजन्यत्वेनेह सुखदुःखे अभिधीयेते, न ह्यात्मादयः सुखदुःखहेतुतया प्रतिपद्यन्ते, किन्त्वसात्म्येन्द्रियार्थयोगादय एव दुःखहेतवस्त्वज्यन्ते, सुखहेतवः सात्म्येन्द्रियार्थयोगादयस्तूपादीयन्ते इति भावः ॥१३०॥

**स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च।**
**द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः ॥ १३१॥**

इदानीं सकलकारणव्यापकं योगं व्युत्पादयितुमैन्द्रियकं मानसस्पर्शं दर्शयितुमाह—स्पर्शनेन्द्रियसंस्पर्श इति। अर्थेनेन्द्रियाणां संबन्धः स्पर्शनेन्द्रियकृतो भवति, चक्षुरादीन्यपि स्पृष्टमेवार्थं जनयन्ति, यदि ह्यस्पृष्टमेव चक्षुः श्रोत्रं घ्राणं वा वेत्ति, तदा विदूरमपि गृह्णाति। तस्मात् स्पृष्टत्वमिन्द्रियाणां प्रतिपद्यते, मानसस्तु स्पर्शश्चिन्त्यादिना अर्थेन समं सूक्ष्मोऽस्त्येव, येन मनः किञ्चिदेव चिन्तयति, न सर्वम्। तेन, यन्मनसा स्पृश्यते, तदेव मनो गृह्णातीति स्थितिः १३१

**इच्छाद्वेषात्मिका तृष्णा सुखदुःखात्प्रवर्तते ।**
**तृष्णा च सुखदुःखानां कारणं पुनरुच्यते ॥ १३२॥**
**उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान्।**
**स्पृश्यते नानुपादाने नास्पृष्टो वेत्ति वेदनाः ॥ १३३**

सुखदुःखोत्पत्तिक्रममाह—इच्छेत्यादि । सुखादिच्छारूपा तृष्णा, दुःखाच्च द्वेषरूपा तृष्णा[2] प्रवर्तते। इयं चोत्पन्नतृष्णा ईप्सितेऽर्थे प्रवर्तयन्ती द्विष्टे च निवर्तयन्ती, प्रवृत्तिनिवृत्तिविषयस्य सुखदुःखहेतुतामपेक्ष्य सुखदुःखे जनयतीति वाक्यार्थः। यथोक्ततृष्णायाः सुखदुःखहेतुत्वं दर्शयन्नाह—उपादत्ते हीत्यादि। वेदनाश्रयसंज्ञकानिति वेदनाकारणत्वेनोक्तान् कालाद्ययोगादिरूपान्। अथ तृष्णा चेत् सुखदुःखकारणम्, तत् किमिन्द्रियार्थेनापरेण कारणेनेत्याह स्पृश्यत इत्यादि। अनुपादान इति अविद्यमानार्थरूपे स्पर्शकारणे, अर्थं विना नार्थस्य स्पर्शो भवति। अथ न भवत्वर्थस्पर्शस्ततः किमित्याह 'नास्पृष्टो वेत्ति वेदना' इति, अर्थस्पर्शशून्यः सन् न सुखदुःखे अनुत्पन्नत्वादेव वेत्तीत्यर्थः ॥ १३२ ॥ १३३ ॥

**वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः।**
**केशलोमनखाग्रान्नमलद्रवगुणैर्विना ॥ १३४ ॥**

वेदनानां किमधिष्ठानमित्यस्योत्तरमाह वेदनानामित्यादि। देहः सेन्द्रिय इत्यनेन निरिन्द्रियो देहो केशलोमादिको निरस्तः । तदेव स्पष्टार्थं विवृणोति केशेत्यादि । किंवा, इन्द्रियाण्यपि प्राधान्यख्यापनार्थं पृथग् वेदनाश्रयत्वेन सेन्द्रियग्रहणेनोच्यन्ते । वेदनाया देहेन्द्रियगतत्वं तदाधारत्वेन प्रतीयमानत्वाज्ज्ञेयम् । द्रवं मूत्रम् । गुणाः शब्दादयः। शरीरगता एते हि केशादयो न वेदनाधारा इत्यनुभव एव प्रमाणम्। या तु मूत्रपुरीषगता वेदना ग्रहणीमूत्रकृच्छ्रादौ वक्तव्या, सा मूत्रपुरीषाधारशरीरप्रदेशस्यैव बोध्या ॥ १३४॥

**योगे मोक्षे च सर्वासां वेदनानामवर्तनम्।**
**मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः ॥ १३५॥**

क्व चैता वेदनाः सर्वा इत्यस्योत्तरम् योग इत्यादि। योगः "अनारंभाद्" इत्यादिग्रन्थे वक्ष्यमाणः । मोक्षोऽत्यन्तशरीरोच्छेदः। निःशेषेति न पुनर्भवति। एतेन, योगे न निवृत्ता वेदना भवतीति सूचयति । मोक्षप्रवर्तक इति मोक्षकारणम्। किंवा, 'योगमोक्षौ निवर्तकौ' इति पाठः, तदा, अस्मिन् पक्षे यद्यपि योगमोक्षयोर्वेदनानिवर्तकत्वं 'योगे मोक्षे च' इत्यादिना श्लोकार्द्धेनोक्तम्, तथापि योगमोक्षयोरिह कर्तृतया वेदनानिवृत्तिं दर्शयति, इति न पौनरुक्त्यम् ॥ १३५॥

**आत्मेन्द्रियमनोर्थानां सन्निकर्षात्प्रवर्तते ।**
**सुखदुःखमनारम्भादात्मस्थे मनसि स्थिरे ॥ १३६॥**
**निवर्तते तदुभयं वशित्वं चोपजायते ।**
**सशरीरस्य योगज्ञास्तद्योगमृषयो विदुः॥ १३७ ॥**

यथा योगो वेदनानिवर्तको भवति, यश्च योगस्तमाह—आत्मेत्यादि। अनारंभादिति विषयोपादानार्थं मनसोऽनवस्थानात्। आत्मस्थे मनसीति विषये निवृत्ते केवलात्मज्ञानस्थे। स्थिर इत्यचले आत्मज्ञानप्रसक्त एवेति यावत्। तदुभयमिति सुखदुःखम्। योगधर्मान्तरसंप्राप्तिमाह—वशित्वमित्यादि। वशित्वं वक्ष्यमाणमष्टविधमैश्वर्यबलम्। 'सशरीरस्य' इतिपदेन शरीरेण सहैव वशित्वं भवतीति दर्शयति ॥ ८७॥

१ कार्यमिति पाठान्तरम्। २ जिहासा तृष्णेति पाठान्तरम्।

**आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।**
**दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥१३८॥**
**इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।**
**शुद्धसत्वसमाधानात्तत्सर्वमुपजायते ॥ १३९ ॥**

आवेश इत्यादि । आवेशः परपुरप्रवेशः । चेतसो ज्ञानमिति परचित्तज्ञानम् । अर्थानां छन्दतः क्रियेति अर्थानां छन्दतः करणम् । दृष्टिरतीन्द्रियदर्शनम् । श्रोत्रमतीन्द्रियश्रवणम् । स्मृतिः सर्वभावतत्त्वस्मरणम् । कान्तिरमानुषी कान्तिः । इष्टतश्चाप्यदर्शनमिति यदेच्छति तदा दर्शनयोग्य एव न दृश्यते, यदा चेच्छति तदा दृश्यते । किंवा, आवेशश्चेतस इति परचेतसः प्रवेशः, ज्ञानमिति सर्वमतीतानागतादिज्ञानम् । शेषं पूर्ववत् । ऐश्वरमिति योगप्रभावादुपात्तैश्वर्यकृतम् । शुद्धसत्वसमाधानादिति नीरजस्तमस्कस्य मनस आत्मनि सम्यगाधानात् ॥ १३८ ॥ १३९ ॥

**मोक्षो रजस्तमोऽभावात् बलवत्कर्मसंक्षयात् ।**
**वियोगः कर्मसंयोगैरपुनर्भव उच्यते ॥ १४० ॥**

अथ कथं मोक्षो भवति, कश्चेत्याह—मोक्ष इत्यादि । बलवत्कर्मसंक्षयादिति अवश्यभोक्तव्यफलस्य कर्मणः क्षयात् । सर्वसंयोगैरिति सर्वैरात्मसंबन्धिभिः शरीरबुद्ध्यहङ्कारादिभिः । न पुनः शरीरादिसंबन्धो भवतीत्यपुनर्भवः[१] ॥ १४० ॥

**सतामुपासनं सम्यगसतां परिवर्जनम् ।**
**व्रतचर्योपवासश्च नियमाश्च पृथग्विधाः ॥ १४१ ॥**
**धारणं धर्मशास्त्राणां विज्ञानं विजने रतिः ।**
**विषयेष्वरतिर्मोक्षे व्यवसायः परा धृतिः ॥ १४२ ॥**
**कर्मणामसमारम्भः कृतानां च परिक्षयः ।**
**नैष्कर्म्यमनहङ्कारः संयोगे भयदर्शनम् ॥ १४३ ॥**
**मनोबुद्धिसमाधानमर्थतत्त्वपरीक्षणम् ।**
**तत्त्वस्मृतेरुपस्थानात् सर्वमेतत्प्रवर्तते ॥ १४४ ॥**

प्रस्तावान्मोक्षोपायमाह—सतामित्यादि । परा धृतिरिति चलितमनोनियमनम् । कर्मणामसमारंभ इति अनागतधर्माधर्मसाधनानामकरणम् । कृतानां च परिक्षय इति जन्मान्तरैः कृतानां कर्मणां फलोपभोगात् परिक्षयः । नैष्कर्म्यं संसारनिष्क्रमणेच्छा । अनहङ्कार इति ममेदमहमस्मीत्यादिबुद्धिवर्जनम् । संयोग इति आत्मशरीरादिसंयोगे । मनोबुद्धिसमाधानमिति मनोबुद्ध्योरात्मनि समाधानम् । सर्वमेतदिति "कर्मणामसमारंभः" इत्याद्युक्तम् । तत्त्वस्मृतिरात्मादीनां यथाभूतानुस्मरणम्, सा च, आत्मा शरीराद्यनुपकार्यः शरीरादयश्च तदधीनभावा[२] इत्यादिकस्मरणरूपतया स्मृतिः ॥१४१॥१४४॥

**स्मृतिः सत्सेवनाद्यैश्च धृत्यन्तैरुपलभ्यते ।**
**स्मृत्वा स्वभावं भावानां स्मरन् दुःखात् प्रमुच्यते ४५**

अथ स्मृतिः कथं दुःखप्रमोक्षे कारणमित्याह—स्मृत्वेत्यादि[१] । स्वभावमिति प्रत्यात्मनियतरूपम् । गुरुवचनाद्धि प्रथमप्रतिपन्नमात्मादीनां रूपं परस्परभिन्नं परस्परानुपकारकत्वेन व्यवस्थितं स्मरन् न क्वचिदपि प्रवर्तते, अप्रवर्तमानश्च न दुःखेन प्रकृतिजन्येन युज्यत इत्यर्थः ॥ १४५ ॥

**वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपजायते ।**
**निमित्तरूपग्रहणात् सादृश्यात् सविपर्ययात् ॥१४६**
**सत्वानुबन्धादभ्यासाज्ज्ञानयोगात्पुनः श्रुतात् ।**
**दृष्टश्रुतानुभूतानां स्मरणात्स्मृतिरुच्यते ॥ १४७ ॥**

इदानीं स्मृतिप्रस्तावात् स्मृतिकारणान्याह—वक्ष्यन्त इत्यादि । निमित्तग्रहणं कारणज्ञानम्, कारणं हि दृष्ट्वा कार्यं स्मरति । रूपग्रहणमाकारग्रहणम् । यथा—वने गवयं दृष्ट्वा गां स्मरति। सादृश्याद् यथा पितुः सदृशं पुरुषं दृष्ट्वा पितरं स्मरति । सविपर्ययादिति अत्यर्थवैसादृश्यादपि स्मरणं भवति । यथा—अत्यर्थकुरूपं दृष्ट्वा अत्यर्थसुरूपं स्मरति प्रतियोगिनम् । सत्वानुबन्धादिति मनसः प्रणिधानात्, स्मर्तव्यस्मरणाय प्रणिहितमनाः स्मर्तव्यं स्मरति । अभ्यासादिति अभ्यस्तमर्थमभ्यासबलादेव स्मरति । ज्ञानयोगादिति तत्त्वज्ञानयोगात् । उपजाततत्त्वज्ञाने हि तद्बलादेव सर्वं स्मरति । पुनःश्रुतादिति श्रुतोऽप्यर्थः विस्मृतः पुनरेकदेशं श्रुत्वा स्मर्यते । स्मृतिकारणमभिधाय स्मृतिरूपमाह—दृष्टेत्यादि ।—दृष्टं प्रत्यक्षोपलक्षणम् । श्रुतं त्वागमप्रतीतम्[२] । तेन, सर्वपूर्वानुभूतावरोधः । क्वचित् 'स्मरणं स्मृतिरुच्यते' इति पाठः, तत्रापि नार्थभेदः ॥ १४६ ॥ १४७ ॥

**एतत्तदेकमयनं मुक्तैर्मोक्षस्य दर्शितम् ।**
**तत्त्वस्मृतिबलं, येन गता न पुनरागताः ॥ १४८ ॥**
**अयनं पुनराख्यातमेतद्योगस्य योगिभिः ।**
**संख्यातधर्मैः सांख्यैश्च मुक्तैर्मोक्षस्य चायनम् ॥१४९**

एवं स्मृतिं सामान्येन प्रतिपाद्य तत्त्वस्मृतेर्मोक्षसाधकत्वं दर्शयन्नाह—एतदित्यादि । एकमयनमिति श्रेष्ठः[३] पन्थाः । मुक्तैरिति जीवन्मुक्तैरिति ज्ञेयम्, सर्वथा मुक्तानां शरीराभावेनोपदर्शकत्वाभावात् । तत्स्मृतिबलमिति तत्त्वस्मृतिरूपबलम् । किंवा, तत्त्वस्मृतिर्बलं यत्र मोक्षसाधनमार्गे, तत्तत्त्वस्मृतिबलमिति । येनेति, येन यथा । गता इति मोक्षं गताः । न पुनरागता इति मुक्तिं याता न पुनरागच्छन्ति ॥१४८॥१४९॥

१ न पुनः शरीरादिसम्बन्धित्वेन भवन्नपुनर्भव इति पाठान्तरम् ।
२ तदधीनभावा इति तदन्वयव्यतिरेका इत्यर्थः ।

१ स्मृत्वेति पाठान्तरम् । २ श्रुतित्वागमप्रतिपादकमिति पाठान्तरम् । ३ श्रेयःपन्था इति पाठान्तरम् ।

सर्वं कारणवद्दुःखमस्वं चानित्यमेव च ।
न चात्मकृतकं तद्धि तत्र चोत्पद्यते स्वता ॥ १५० ॥
यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यथा ।
नैतन्मम च विज्ञाय ज्ञः सर्वमतिवर्त्तते ॥ १५१ ॥

इदानीं सङ्क्षेपेण संसारहेतुमज्ञानम्, तथा मोक्षहेतुं च सम्यग् ज्ञानं दर्शयन्नाह—सर्वमित्यादि । सर्वं कारणवदिति सर्वमुत्पद्यमानं बुद्ध्यहङ्कारशरीरादि । दुःखमिति दुःखहेतुरेव । अस्वमिति सर्वं कारणवदेवात्मव्यतिरिक्तं परमार्थतः । न चात्मकृतकमिति न चात्मनोदासीनेन कृतम् । तत्रेति कारणवति बुद्धिशरीरादौ । स्वतेति ममता 'ममेयं बुद्धिः' इत्यादिरूपा । अथ कियन्तं कालमियं भ्रान्त्या स्वतोत्पद्यते इत्याह —यावदित्यादि । सत्या बुद्धिः सम्यग् ज्ञानम् । यया सत्यया बुद्ध्या । नैतद् बुद्ध्याद्यहं, किंतु भिन्न एवाहम्, तथा नैतद् बुद्ध्यादि मम, किंतु प्रकृतेः प्रपञ्च इति विज्ञाय । ज्ञस्तत्त्वसाक्षात्कारवान् । सर्वमतिवर्त्तत इति सर्वं बुद्ध्यादि त्यजति ॥ १५० ॥ १५१ ॥

तस्मिंश्चरमसंन्यासे समूलाः सर्ववेदनाः ।
असंज्ञाज्ञानविज्ञाना निवृत्तिं यान्त्यशेषतः ॥ १५२ ॥

चरमसंन्यास इति पश्चाद्भाविसकलकर्मसंन्यासे । प्रथमं हि मोक्षोपयोगित्वेन गुरुवचनात् क्रियासंन्यासः कृत एव, परं स्वानुभवविरक्तेन[2] न कृतः, अभ्यासादुद्भूतेन[3] साक्षाद्दृष्टभावस्वभावेन यः सर्वसन्न्यासः क्रियते, तत्र समूलाः सर्ववेदनाज्ञानादयश्च शरीरोपरमादेवोपरमन्ते । समूला इति सकारणाः, कारणं च बुद्ध्यादयः । संज्ञा आलोचनं निर्विकल्पकम् । ज्ञानं सविकल्पकम् । विज्ञानं बुद्ध्यवसायः । किंवा, संज्ञया नामोल्लेखेन ज्ञानम्, विज्ञानं शास्त्रज्ञानम् । तत्त्वज्ञानमपि हि मोक्षं जनयित्वा निवर्तत एव कारणाभावात् ॥ १५२ ॥

अतःपरं ब्रह्मभूतो भूतात्मा नोपलभ्यते ।
निःसृतः सर्वभावेभ्यश्चिह्नं यस्य न विद्यते ॥ १५३ ॥
गतिर्ब्रह्मविदां चात्र नाज्ञस्तज्ज्ञातुमर्हति ॥ १५४ ॥

अत्र श्लोकः ॥

प्रश्नाः पुरुषमाश्रित्य त्रयोविंशतिरुत्तमाः ।
कतिधापुरुषीयेऽस्मिन्निर्णीतास्तत्त्वदर्शिना ॥ १५५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने कतिधापुरुषीयो नाम प्रथमोऽध्यायः ।

'सर्वविद्' इत्यादिप्रश्नस्योत्तरम् अतःपरमित्यादि । ब्रह्मभूत इति प्रकृत्यादिरहितः । 'चिह्नं यस्य न विद्यते' इत्यनेन, मुक्तात्मनः प्राणापानाद्यात्मलिङ्गाभावाद्गमकं चिह्नं नास्त्येवेति दर्शयति । न क्षरत्यन्यथात्वं न गच्छतीत्यक्षरम् । अविद्यमानं लक्षणं यस्येत्यलक्षणम् । एतस्यैव मोक्षस्येतरपुरुषाऽज्ञेयतां दर्शयति—ज्ञेयमित्यादि । ब्रह्मविदामेवात्र मनः प्रत्येति, नाज्ञानामहङ्कारादिगृहीतानामित्यर्थः संग्रहो व्यक्तः ॥१५३॥१५५॥

इति श्रीमच्चरकचतुराननचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शारीरस्थाने कतिधापुरुषीयव्याख्या ।

---

## द्वितीयोऽध्यायः ।

अथातोऽतुल्यगोत्रीयं शारीरं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
अतुल्यगोत्रस्य रजःक्षयान्ते
रहो विसृष्टं मिथुनीकृतस्य ।
किं स्याच्चतुष्पात्प्रभवं च षड्भ्यो
यत् स्त्रीषु गर्भत्वमुपैति पुंसः ॥ ३ ॥

पूर्वाध्याये शरीरस्यादिसर्ग आध्यात्मिकनैष्ठिकमोक्षरूपचिकित्सायुक्त उक्तः, संप्रति गर्भादिसर्गमभिधातुमतुल्यगोत्रीयोऽभिधीयते[1] । अतुल्यगोत्रस्येति स्त्रिया अतुल्यगोत्रस्य पुंसः । तुल्यगोत्रीयके हि मैथुनेऽधर्मो भवति धर्मशास्त्रेषु निषिद्धत्वात् । रजःक्षयान्ते इति रजःप्रवृत्त्यन्ते । 'अन्ते' इतिपदेन रजःप्रवृत्त्यहं निषेधयति । रहोविसृष्टमिति विजने विसृष्टम् । शुक्रविसृष्टये विजनएव प्रतिबन्धकलज्जाभावात् सम्यग् भवतीति 'रहः' इत्यनेन दर्शयति । मिथुनीकृतस्येत्यनेन सम्यङ्मैथुनप्रयोगं दर्शयति, विपरीतसुरतादींश्च निषेधति । चतुष्पादषट्प्रभवत्वे उत्तरग्रन्थे व्यक्ते । अयं च शिष्यप्रश्नतया निवेशितोग्रन्थः अज्ञशिष्यार्थाचार्यसन्मतिमात्रार्थो ज्ञेयः । तेन, यः शिष्यश्चतुष्पदां विशेषं जानाति, स कथं 'शुक्र'शब्दाभिधेयं वेत्तीति न वाच्यम् ॥ १—३ ॥

शुक्रं तदस्य प्रवदन्ति धीरा
यद्धीयते गर्भसमुद्भवाय ।
वाय्वग्निभूम्यब्गुणपादवत्तत्
षड्भ्यो रसेभ्यः प्रभवश्च तस्य ॥ ४ ॥

प्रश्नस्योत्तरं—शुक्रमित्यादि । धीयत आरोप्यत इत्यर्थः । वाय्वादिपादवति वक्तव्ये यद् 'गुण' पदमधिकं करोति, तेन, प्रशस्तगुणवतामेव वाय्वादीनां विशुद्धशुक्रारम्भकत्वमिति दर्शयति । वाय्वादिषु शुक्रारम्भकेषु 'पाद' व्यपदेशेन सर्वेषां तुल्यशुक्रारम्भकत्वं दर्शयति । आकाशं तु यद्यपि शुक्रे पाञ्चभौतिकेऽस्ति, तथापि न पुरुषशरीरान्निर्गत्य गर्भाशयं गच्छति, किंतु भूतचतुष्टयमेव क्रियावद् याति, आकाशं तु व्यापकमेव

---

१ दर्शयितुमाहेति पाठान्तरम् । २ श्रद्धानुभवविरक्तेनेति पाठान्तरम् । ३ अभ्यासादुद्भूतबलेनेति पाठान्तरम् ।

१ गर्भस्यादिरूपमभिधातुमतुल्यगोत्रीयोऽभिधीयत इति पाठान्तरम् ।

तत्रागतेन शुक्रेण संवर्द्धं भवति । तेन, आकाशस्य गमनाभावादिह गर्भाशयगमनाभिधानप्रस्तावे शुक्रगतत्वेनानभिधानम् । अन्यत्रापि च भूतानां गमनप्रस्तावे आकाशं परित्यक्तमेव । यथा—"भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहाद्" इति । शुक्रं च षड्रसाहारोत्पन्नमेव विशुद्धं भवतीति कृत्वोक्तम् 'षड्भ्यो रसेभ्यः' इत्यादि । यत्तु मधुरस्य शुक्रजनकत्वमम्लादीनां च शुक्रविघातकत्वमुच्यते, तदत्यर्थोपयोगादिति ज्ञेयम् ॥ ४ ॥

संपूर्णदेहः समये सुखं च
गर्भः कथं केन च जायते स्त्री ।
गर्भं चिराद्विन्दति सप्रजापि
भूत्वाऽथवा नश्यति केन गर्भः ॥ ५ ॥

'संपूर्णदेहः कथं जायते' इत्येकः प्रश्नः, 'समये कथं जायते' इति द्वितीयः, 'सुखं कथं जायते' इति तृतीयः । सप्रजापि इत्यवन्ध्याऽपि सती कथं चिरेण गर्भं विन्दति ॥५॥

शुक्रासृगात्माशयकालसम्पद्
यस्योपचारश्च हितैस्तथान्नैः[1] ।
गर्भश्च काले च सुखी सुखं च
संजायते संपरिपूर्णदेहः ॥ ६ ॥

पञ्चानां प्रश्नानामुत्तरं शुक्रेत्यादि । 'संपत्' शब्दः शुक्रादिभिः प्रत्येकमभिसंबध्यते । शुक्रासृगाशयानामुष्णत्वं संपद्, आत्मनस्तु शुक्रशोणितयोगाधिष्ठातुः शुभजीवकर्मयुक्तत्वं संपत्, कालस्य त्वनतितीक्ष्णत्वादि संपत्, उपचारो गर्भिण्युपचारः । काल इति नवमे दशमे च मासे । यदुक्तम् "कालः पुनर्नवमं माससुपादायादशमाद्" इति । सुखीति व्याधिना केनचिन्न ग्रस्तः । सुखमित्यक्लेशेन ॥ ६ ॥

योनिप्रदोषान्मनसोऽभितापात्
शुक्रासृगाहारविहारदोषात् ।
अकालयोगाद्बलसङ्क्षयाच्च
गर्भं चिराद्विन्दति सप्रजापि ॥ ७ ॥
असृङ्निरुद्धं[2] पवनेन नार्या
गर्भं व्यवस्यन्त्यबुधाः कदाचित् ।
गर्भस्य रूपं हि करोति तस्या-
स्तदस्रमस्रावि विवर्द्धमानम् ॥ ८ ॥
तदग्निसूर्यश्रमशोक[3]रोगै-
रुष्णान्नपानैरथवाऽप्रवृत्तम् ।
दृष्ट्वासृगेवं न च गर्भसंज्ञं
केचिन्नरा भूतहृतं वदन्ति ॥ ९ ॥

अकालयोगादिति ऋतुकालातिक्रमेण पुरुषेण संयोगात्, ऋतुकालश्च षोडशरात्रं यावत् । यदुक्तं "षोडश दिवसा ऋतुकालः" इति । सुश्रुते तु द्वादशरात्रं ऋतुकाल उक्तः । 'भूत्वाऽथवा नश्यति केन गर्भः' इत्यस्योत्तरम् असृगित्यादि । पवनेनेति रुष्टपवनेन । कृते असृङ्निरोधे गर्भभ्रमोभवतीत्याह गर्भस्य रूपं इत्यादि । गर्भाशये हि विवर्द्धमानं रुधिरं प्रभा—वात् गर्भलिङ्गानि कानिचिद्दर्शयतीत्यर्थः । असृगेवमिति असृगेव परम् । न च गर्भसंज्ञमिति न गर्भं ग्रन्थाद्याकारकम् ॥ ७—९ ॥

ओजोऽशनानां रजनीचराणा-
माहारहेतोर्न शरीरमिष्टम् ।
गर्भं हरेयुर्यदि ते न मातु-
र्लब्धावकाशा न हरेयुरोजः ॥ १० ॥

भूतेन गर्भाहरणे हेतुमाह—ओजोशनानामित्यादि । ओजोऽष्टबिन्दुकमश्नातीत्योजोशनाः । यदि त्वोजोऽशना अपि गर्भं हरेयुस्तदा मातुर्नितरामाहारभूतमोजो लब्धावकाशत्वेन हरेयुः । लब्धावकाशा इति प्राप्तगर्भिण्यभिगमनकारणाः॥१०॥

कन्यां सुतं वा सहितौ पृथग्वा[1]
सुतौ सुते वा तनयान्बहून्वा ।
कस्मात् प्रसूते सुचिरेण गर्भम्
एकोऽभिवृद्धिं च यमेऽभ्युपैति ॥ ११ ॥

कन्यामित्यादि प्रश्नाष्टकम् । कन्यां कथं प्रसूत इति प्रथमः, सुतं पृथग् वेति द्वितीयः, सहितौ कन्यासुतौ वेति तृतीयः, सुतौ सहितौ इति चतुर्थः, सुते सहिते इति पञ्चमः, तनयान् बहून् वेति षष्ठः, सुचिरात् कथं स्त्री प्रसूत इति सप्तमः, यमे युग्मे कथमेकोऽभिवृद्धिमभ्युपैतीत्यष्टमः ॥ ११ ॥

रक्तेन कन्यामधिकेन पुत्रं
शुक्रेण तेन द्विविधीकृतेन ।
बीजेन कन्यां च सुतं च सूते
यथास्वबीजान्यतराधिकेन ॥ १२ ॥
शुक्राधिकं द्वैधमुपैति बीजं
यस्याः सुतौ सा सहितौ प्रसूते ।
रक्ताधिकं वा यदि भेदमेति
द्विधा सुते सा सहिते प्रसूते ॥ १३ ॥
भिनत्ति यावद्बहुधा प्रपन्नः
शुक्रार्तवं वायुरतिप्रवृद्धः ।
तावन्त्यपत्यानि यथाविभागं
कर्मात्मकान्यस्ववशात्प्रसूते ॥ १४ ॥
आहारमाप्नोति यदा न गर्भः
शोषं समाप्नोति परिस्रुतिं वा ।

---

१ हितैस्तथार्थैरिति पाठान्तरम् । २ विरुद्धमिति पाठान्तरम् ।
३ तदग्निसूर्यश्रमरोषशोकैरिति पाठान्तरम् ।

१ पृथग्वेति पाठान्तरम् ।

तं स्त्री प्रसूते सुचिरेण गर्भं
पुष्टो यदा वर्षगणैरपि स्यात्[1] ॥ १५ ॥
कर्मात्मकत्वाद्विषमांशभेदात्
शुक्रासृजोर्वृद्धिमुपैति कुक्षौ ।
एकोऽधिको न्यूनतरो द्वितीय
एवं यमेऽप्यभ्यधिको विशेषः ॥ १६ ॥

रक्तेनेत्याद्युत्तरम् । अधिकेनेति पदं रक्तेन शुक्रेण च योजनीयम् । द्विविधीकृतेन द्विखण्डीकृतेन । यथा स्ववीजान्यतरे भागेऽधिकं यत्, तेन वीजेन । एतेन, यदि द्विविधे भागे एकत्र रक्तमधिकम्, अपरत्र शुक्रम्, एष विभागो भवति, तदा सुतौ भवत इत्युक्तं भवति । यावद्बहुधा भिनत्तीति यावतीं वहुसंख्यां करोतीति चतुःपञ्चादिरूपाम् । प्रपन्न आगतः शुक्रार्तवं वायुरिति संवन्धः । यथाविभागमिति यथा शुक्ररक्तविभागो भवति, तथा कन्याः सुताश्च स्ववीजाधिक्यापेक्षया भवन्तीति । कर्मात्मकानि अस्ववशात् कर्माधीनत्वेन । आहारमित्यादौ गार्भिण्या आहारप्राप्त्या गर्भस्याहारप्राप्तिः । शुक्रासृजोर्यः स्थूलसूक्ष्मरूपो विषमांशभेदो भवति, स तु जायमानगर्भकर्मवशादेव भवतीत्याह कर्मात्मकत्वादिति ॥१२–१६॥

कस्माद्द्विरेताः पवनेन्द्रियो वा
संस्कारवाही नरनारिषण्डः ।
वक्री तथेर्ष्याभिरतिः कथं वा
सञ्जायते वातिकषण्डको वा ॥ १७ ॥
वीजात् समांशादुपतप्तवीजात्
स्त्रीपुंसलिङ्गी भवति द्विरेताः ।
शुक्राशयं गर्भगतस्य हत्वा[2]
करोति वायुः पवनेन्द्रियत्वम् ॥ १८ ॥
शुक्राशयद्वारविघट्टनेन
संस्कारवाहं[3] कुरुतेऽनिलश्च ।
मन्दाल्पवीजाववलावहर्षौ
क्लीवौ च हेतुर्विकृतिद्वयस्य ॥ १९ ॥
मातुर्व्यवायप्रतिघेन वक्री
स्याद्वीजदौर्वल्यतया पितुश्च ।
ईर्ष्याभिभूतावपि मन्दहर्षा-
वीर्ष्यारतेरेव वदन्ति हेतुम् ॥ २० ॥
वाय्वग्निदोषाद्वृषणौ तु यस्य
नाशं गतौ वातिकषण्डकः सः ।
इत्येवमष्टौ विकृतिप्रकाराः
कर्मात्मकानामुपलक्षणीयाः ॥ २१ ॥

कस्मादित्यादि प्रश्नाष्टकम् । नरषण्डो नारिषण्डश्च नरनारिषण्डौ । वीजादिति शुक्रशोणितात् । उपतप्तवीजादिति उपतप्तवीजजनकवीजभावात् । स्त्रीपुंसलिङ्गीति स्त्रीपुरुषसाधारणनासिकाचक्षुरादिलिङ्गयुक्तः, यानि तु स्त्रीपुंसयोरसाधारणान्युपस्थध्वजस्तनश्मश्रुप्रभृतीनि, तानि चास्य न भवन्तीति । असाधारणानि लिङ्गानि वृद्धेन शुक्रेण रक्तेन वा जन्यानि । इह समरक्तशुक्रारब्धे तु नास्त्यन्यतरवृद्धिरिति नोपस्थध्वजादिविशेषलिङ्गभवनम् । द्विधा स्त्रीत्वपुरुषत्वोपजनकत्वे स्थितं रेतो यस्य स द्विरेताः । किंवा, स्त्रीपुंसलिङ्गीति स्त्रीपुंसयोर्यल्लिङ्गमुपस्थध्वजरूपम्, तद्युक्तएव स्त्रीपुरुषलिङ्गी उत्तरकालभावीन्यस्य स्तनशुक्रप्रभृतीनि न भवन्ति । अस्मिन् पक्षे वीजोपतापेनोत्तरकालभाविस्तनादिप्रतिवन्धः कर्मवशादेवेति ब्रुवते । किंवा, उपस्थध्वजौ यौ, तौ गर्भसमकालमेव भवतः, स्तनादि तूत्तरकालभावितया दुर्वलम्, वीजोपतापेनापि न वलवतोरुपस्थध्वजयोर्वाधः, किंतु दुर्वलानामेव स्तनादीनामिति । यत्र समांशे शुक्रशोणिते भवतः, तत्र संयोगमहिम्नैव वीजांशे तापो भवतीति ज्ञेयम् । पवनेन्द्रियं विवृणोति—शुक्राशयमित्यादि । शुक्राशयं शुक्रस्थानम् । पवनेन्द्रियत्वं पवनशुक्रत्वम् । शुक्रहीनपवनस्य चेदं शुक्रत्वम् यद् व्यवायकाले शुक्रसदृशरूपतया प्रवर्तनम् तद्वायुरेव परं व्यवायकाले याति । शुक्राशयद्वारेत्यादि संस्कारवाहिविवरणम् । द्वारविघट्टनेनेति द्वारदूषणेन । संस्कारेण वाजीकरणादिना परं यस्य शुक्रमदुष्टद्वारं सत् प्रवर्तते स संस्कारवाहः । अत्र च संस्कारवाहेन, सुश्रुतोक्ता आसेक्यसौगन्धिककुम्भीका अन्तर्भावनीयाः । यतः, एतेऽपि संस्कारविशेषेणापि शुक्रं त्यजन्ति, यदुक्तं तत्र "पित्रोरत्यल्पवीर्यत्वादासेक्यः पुरुषो भवेत्[1] । स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् । यः पूतियोन्यां जायेत स सौगन्धिकसंज्ञकः । स योनिशेफसोर्गन्धमाघ्राय लभते वलम्[2] । स्वे गुदेऽब्रह्मचर्याद्यः स्त्रीषु पुम्वत् प्रवर्तते । कुम्भीकः स तु...

१ अत्रार्थे वाग्भटेन—"पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत नैव वा" इत्युक्तम् । व्याख्यातं च निवन्धकारेण अन्यथाऽन्यप्रकारेण पूर्वोक्तविपर्ययेण रूक्षात्मना सेवितेन मातुराहाररसेनाल्पेन पुष्टश्चेतनामात्रावशेष एव वत्सरसन्दोहैः कृच्छ्राज्जायेत कष्टेन योनितो निष्क्रामेत नैव वेति अथवा यावज्जीवं गार्भिण्या कुक्षावेवावसीदेन्न ततो निष्क्रामेत् कुक्षावेवावतिष्ठते इति । २ गत्वेति पाठान्तरम् । ३ संस्कारवाहादिकरोति वायुरिति पाठान्तरम् ।

१ पित्रोर्मातापित्रोः । आसेक्यः पुरुषो जायते । स शुक्रं प्राश्येति, स पुरुषोऽन्यपुरुषान्निजमुखेन व्यवायं कारयित्वा तत्र सिक्तं [illegible] प्राश्यास्वाद्य । ध्वजोच्छ्रायं लिङ्गोत्थानम् । आसेक्यनामाऽयं षण्डो मुखयोन्यपरपर्याय इति वृन्दटीकायां श्रीकण्ठदत्तः । २ य इत्याद्यस्यार्थः योनिशेफसोर्गन्धमाघ्राय शिङ्घयित्वा । अयं सौगन्धिकनामा षण्डो नासायोन्यपरपर्याय इति वृन्दटीकायां श्रीकण्ठदत्तः ।

विज्ञेयः" इति; मन्देत्यादि । मन्दवेगमल्पवीजं ययोस्तौ । तथा अवलाविति निसर्गवलरहितौ । अहर्षाविति अनुत्साहौ । क्लीवाविति दुष्टवीजौ । अत्र यथोक्तगुणा स्त्री स्त्रीपण्डस्य, यथोक्तगुणः पुरुषस्तु पुरुषपण्डस्य हेतुरिति विज्ञेयम् । एतौ त्ववीजौ ज्ञेयौ, यदुक्तं सुश्रुते "अशुक्रस्त्वेव पण्डकः" इति । मातुर्व्यवायप्रतिघेनेति व्यवायकाले विषमाङ्गन्यासेन । प्रतिष्टितं यस्य शुक्रं गर्भाशयं नियमान्नोपैति स 'वक्री' त्युच्यते । वीजदौर्वल्यतया पितुर्वक्री स्यादिति योजना । परव्यवायं दृष्ट्वा प्राप्तध्वजोच्छ्रायो व्यवायासक्तो भवति, स ईर्ष्यारतिः । यदुक्तं सुश्रुते "दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्तते । ईर्षकः स तु विज्ञेयः" इति । कर्मात्मकानामितिपदेन, एते क्लैव्यभेदाः प्राक्तनकर्मवलादेव प्रायो भवन्तीति दर्शयति[3] ॥१७॥२१॥

गर्भस्य सद्योऽनुगतस्य कुक्षौ
स्त्रीपुंनपुंसामुदरस्थितानाम् ।
किं लक्षणं कारणमिष्यते किं
सरूपतां येन च यात्यपत्यम् ॥ २२ ॥

गर्भस्येत्यादिपञ्चप्रश्नः । सद्योऽनुगतस्येति सद्योगृहीतस्य । कारणमित्यादि । कारणं किं तत्, येन कारणेन सरूपतां सादृश्यमपत्यं गर्भो यातीत्यर्थः । अयं च पञ्चमः प्रश्नः ॥ २२ ॥

निष्ठीविका गौरवमङ्गसाद-
स्तन्द्राप्रहर्षौ हृदयव्यथा च ।
तृप्तिश्च वीजग्रहणं च योन्यां
गर्भस्य सद्योऽनुगतस्य लिङ्गम् ॥ २३ ॥
सव्याङ्गचेष्टा पुरुषार्थिनी स्त्री
स्त्रीस्वप्नपानाशनशीलचेष्टा ।
सव्यात्तगर्भा[1] न च वृत्तगर्भा
सव्यप्रदुग्धा स्त्रियमेव सूते ॥ २४ ॥
पुत्रं त्वतो लिङ्गविपर्ययेण
व्यामिश्रलिङ्गां प्रकृतिं तृतीयाम् ।
गर्भोपपत्तौ तु मनः स्त्रिया यं
जन्तुं व्रजेत्तत्सदृशं प्रसूते ॥ २५ ॥
गर्भस्य चत्वारि चतुर्विधानि
भूतानि मातापितृसंभवानि ।
आहारजान्यात्मकृतानि चैव
सर्वस्य सर्वाणि भवन्ति देहे ॥ २६ ॥
तेषां विशेषाद्वलवन्ति यानि
भवन्ति मातापितृकर्मजानि ।
तानि व्यवस्येत् सदृशत्वलिङ्गं[2]
सत्वं यथानूकमपि व्यवस्येत् ॥ २७ ॥

वीजग्रहणं शुक्रस्य ग्रहणम् । स्त्रीस्वप्नेत्यादि । स्त्रीविहिता स्वप्नपानाशनशीलचेष्टा । सव्येन पार्श्वेन आत्तो गृहीतो गर्भो यया सा सव्यात्तगर्भा । किंवा, सव्याङ्गगर्भेति पाठः । न च वृत्तगर्भेति दीर्घगर्भेत्यर्थः । सव्यस्तने प्रकृष्टं दुग्धं यस्याः सा सव्यप्रदुग्धा । व्यामिश्रलिङ्गा च 'सव्यदक्षिणादिचेष्टा' इत्यादिना ज्ञेया । प्रकृतिं तृतीयामिति नपुंसकम् । गर्भोपपत्ताविस्यादिना सारूप्यमाह । गर्भोपपत्तौ वीजग्रहणकाले मनो यं जन्तुं व्रजेत् यं प्राणिनं मनसा ध्यायेत् । एतच्च वीजग्रहणकालीनं मनसानुध्यानं प्रभावादेव चिन्त्यमानसदृशमपत्यं करोतीति ज्ञेयम् । किंवा, तत्कालीनचिन्तयैव वीजं चिन्त्यमानसदृशारम्भशक्तिकं क्रियते । दृष्टश्च मानसानामपि भावानां भूतविशेषकरणे शक्तिविशेषः । यथा सङ्कल्पः शुक्रोदीरणं करोति, तथा दोहदाप्राप्तौ तच्चिन्तया गर्भविकृतिः, ईर्ष्याभयादीनामोजःशुक्रक्षयकर्तृत्वमित्यादि । एतदेव च सादृश्यकारणं पश्यता पुनर्वक्तव्यम्, "यथा—या या यथाविधं पुत्रमाशासीदित्युपादाय सा सा तांस्तान् जनपदान् मनसानुक्रमेद्" इति । जन्त्वनुध्यानं सादृश्यकारणमभिधाय सादृश्यकारणान्तरमाह गर्भस्येत्यादि । चत्वारीति निर्विशेषमाकाशं वर्जयित्वा भूतानि । चतुर्विधानीति विवृणोति मातेत्यादि । मातृसंभवानि रक्तगतानि, पितृसंभवानि शुक्रगतानि । आहारजानि तु शुक्रशोणितोत्तरकालं मातुराहारसंभूतरसजानि ।

---

१ यः पुरुषः स्वे गुदे स्वकीयपायावब्रह्मचर्यादन्यपुरुषपार्श्वाद्व्यवायं कारयित्वा पश्चात् स्त्रीषु विषये पुमानिव प्रवर्तते पुरुषवद्व्यवायं करोति, स कुम्भीकनामा पण्डो ज्ञेयः । अन्ये तु प्रथमं स्त्रीषु विषये तासामेव स्वकीयगुदविवरे पशुवत् पृष्ठभागे शिथिलेनैव मेहनेन प्रवर्तते । किंनिमित्तमेतदित्याह—ब्रह्मचर्यात् क्लैव्यवशात्संजातप्रवृत्तित्वात् । ततश्चानया विप्रकृत्या ध्वजोच्छ्राये सञ्जाते स एव स्त्रीषु पुरुषवत् प्रवर्तते, स कुम्भीकनामा नपुंसकभेदः, गुदयोनिरयम् । अस्योत्पत्तिहेतुः शास्त्रान्तरे वर्णितो यथा "माता व्यवायं प्रति चेच्च वक्रा स्याद्वीजदौर्वल्यतया पितुश्च" । गयी तु कुम्भीकोत्पत्तिहेतौ काश्यपोक्तं श्लोकमाह यथा "अरजस्कां यदा नारीं श्लेष्मरेता व्रजेदृतौ । अन्यसक्ता भवेत्प्रीतिर्जायते कुम्भकस्तदा" इति वृन्दमाधवटीकायां श्रीकण्ठदत्तः । २ दृष्टियोनिरयमीर्षकापरपर्यायः । अत्रापि तन्त्रान्तरे पठितो हेतुर्यथा "ईर्ष्याभिभूतावपि मन्दहर्षावीर्ष्यारतेरेव वदन्ति हेतुम्" इति वृ. टी. श्री. । ३ सुश्रुतोक्तपञ्चमपण्डलक्षणमत्र संस्कारवाहानन्तर्भावनीयतया चक्रेणोपेक्षितमपि अवश्यज्ञातव्यतया सन्निवेश्यते । यथा—यो भार्यायामृतौ मोहादङ्गनेव प्रवर्तते । ततः स्त्रीचेष्टिताकारो जायते पण्डसंज्ञित" इति । व्याख्यातं च श्रीकण्ठदत्तेन यथा—यः पुमान् मोहवशादृतौ भार्यायां विषयेऽङ्गनावदुत्तानो भूत्वा व्यवहरति, तत्र स्त्रीचेष्टिताकारः पण्डो जायते । स पुमान् स्त्र्याकृतिः स्त्रीचेष्टितश्च स्त्रीवदधोभूतः स्वमेढ्स्योर्द्धप्रदेशेऽपरपुरुषाद्वीर्यच्युतिं कारयति ।

१ सव्याङ्गगर्भा इति पाठान्तरम् । २ सदृशत्वहेतुमिति पाठान्तरम् ।

आत्मकृतानीति आत्मप्रतिबद्धकर्मवशप्रसूतानि ज्ञेयानि । तत्र शुभकर्मणा सदृशरूपजनकानि, अशुभकर्मणा तु विसदृशरूपजनकानीति ज्ञेयम् । यानि त्वात्मनि सूक्ष्माणि भूतानि आतिवाहिकरूपाणि, तानि सर्वसाधारणत्वेनाविशेषसादृश्यकारणानीति नेह बोद्धव्यानि । तत्र एवं चतुर्विधानां सादृश्ये किं सादृश्यकारणम् किंभूतं वेत्याह तेषामित्यादि । 'विशेषाद्' इतिपदेन सर्वाण्येव सादृश्यकारणानि भवन्ति, किंतु यानि बलवन्ति, तानि विशेषाद्भूयिष्ठसादृश्यं जनयन्तीति दर्शयति । अत्र चाहारभूतानां प्राक्तनकर्मापेक्षयैव सादृश्यकारणत्वं भवतीति कृत्वा नाहारजानां ग्रहणं कृतम्, तेन कर्मजेष्वेवाहारजातानामवरोधो ज्ञेयः । पूर्वं तु 'आहारजानि' इति पदेन तेषां विद्यमानतामात्रमुक्तं ज्ञेयम् । किंवा, मातृजादीनि हि मात्रादिभिः सदृशं कुर्वन्ति नत्वाहारजातानि आहारसदृशं कुर्वन्ति । तेन, तेषामिहानुपादानम् । तथा खुत्तराध्याये "यानि खल्वस्य रसजानि" इत्यादिना प्राणानुबन्धादीनि वक्तव्यानि, न च तानि सादृश्यरूपतयेह भवितुमर्हन्तीतीह नोक्तानि सादृश्यहेतुमभिधाय मनःसादृश्यहेतुमाह सत्वमित्यादि । अनूकं प्राक्तनाऽव्यवहिता देहजातिः । तेन, यथानूकमिति यो देवशरीरादव्यवधानेनागत्य भवति, स देवसत्वो भवति, यः पशुशरीरादेति, स पशुसत्वो भवतीत्यादि । 'अपि'शब्दात् कर्मसंबन्धं जातिसंबन्धं च दर्शयति । तेन, कर्मवशादेव सत्वं राजसं तामसं सात्विकं भवति, तथा, मातृपादिजात्यनुरूपं च भवति ॥ २३—२७ ॥

कस्मात्प्रजां स्त्री विकृतां प्रसूते
हीनाधिकाङ्गीं विकलेन्द्रियां च ।
देहात्कथं देहमुपैति चान्य-
मात्मा सदा कैरनुवध्यते च ॥ २८ ॥
वीजात्मकर्माशयकालदोषै-
र्मातुस्तथाहारविहारदोषैः ।
कुर्वन्ति दोषा विविधानि दुष्टाः
संस्थानवर्णेन्द्रियवैकृतानि ॥ २९ ॥
वर्षासु काष्ठाश्मघनाम्बुवेगा-
स्तरोः सरित्स्रोतसि संस्थितस्य ।
यथैव कुर्युर्विकृतिं तथैव
गर्भस्य कुक्षौ नियतस्य दोषाः ॥ ३० ॥

कस्मादित्यादिना विकलेन्द्रियांचेत्यन्तेन एकः प्रश्नः । तत्र 'विकृताम्' इत्यस्य विवरणम् हीनेत्यादि । देहादित्यादि द्वितीयः । सदा कैरनुवध्यते इति तृतीयः । ये तु 'विकृताम्' इतिपदेन कुरूपाम्, 'हीनाधिकाङ्गीम्' इतिपदेन च हीनाङ्गादिरूपामेव कुरूपातिरिक्तां वदन्ति । तेषां मते प्रश्नभेदः स्यात्, तथा, अध्यायान्ते च वक्ष्यमाणसंख्याऽतिरिक्ता भवति । आत्मीयकर्म आत्मकर्म । आशयो गर्भाशयः । दोषो वैगुण्यम् । अश्मघनानि पाषाणखण्डाः । वेगाः काष्ठादीनां त्रयाणाम् ॥ २८–३० ॥

भूतैश्चतुर्भिः सहितः सुसूक्ष्मै-
र्मनोजवो देहमुपैति देहात् ।
कर्मात्मकत्वान्न तु तस्य दृश्यं
दिव्यं विना दर्शनमस्ति रूपम् ॥ ३१ ॥

द्वितीयप्रश्नस्योत्तरम् भूतैरित्यादि । सुसूक्ष्मैरित्यनेन चातीन्द्रियत्वं दर्शयति । आकाशस्येहाक्रियत्वेन मनोगतिरेव भूतसहिता 'गति' शब्देनोच्यत इति दर्शितं भवति, देहादिति म्रियमाणदेहात् । देहमित्युत्पद्यमानदेहम् । कर्मात्मकत्वादिति कर्माधीनत्वात् । तेन, कर्म धर्माधर्मरूपं[1] यदेनं भोगार्थं नयति, तदेव देहमुपयातीत्युक्तं भवति । अथ गच्छन् किमित्ययं नोपलभ्यते म्रियमाणपुरुषादित्याह नत्वित्यादि । तस्यात्मन आतिवाहिकशरीरयुक्तस्य दृश्यं रूपं नास्तीति सूक्ष्मरूपत्वादिति भावः । अथ किं सर्वे एवैनं न पश्यन्तीत्याह दिव्यं विना दर्शनमिति । दिव्यं दर्शनं दिव्यचक्षुः । तेन, योगिन एव पश्यन्त्येनमिति दर्शयति ॥ ३१ ॥

स सर्वगः सर्वशरीरभृच्च
स विश्वकर्मा स च विश्वरूपः ।
स चेतना धातुरतीन्द्रियश्च
स नित्ययुक् सानुशयः स एव[3] ॥ ३२ ॥

अस्यैवातिवाहिकशरीरयुक्तस्यात्मनो धर्मान्तराण्याह स सर्वग इत्यादि । सर्वशरीरभृदिति सर्वशरीराणि भर्तुं योग्यः । विश्वकर्मकरणक्षमो विश्वकर्मा; विश्वरूपतां च नरपश्वादिशरीररूपतया कर्मवशाद्व्रजत इति विश्वरूपः । नित्यं बुद्ध्यादिभिर्युज्यत इति नित्ययुक् । सहानुशयेन रागादिना वर्तत इति सानुशयः ॥ ३२ ॥

रसात्ममातापितृसंभवानि
भूतानि विद्याद्दश षट् च देहे ।
चत्वारि तत्रात्मनि संश्रितानि
स्थितस्तथात्मा च चतुर्षु तेषु ॥ ३३ ॥

आतिवाहिकशरीररूपभूतचतुष्टयव्यापकत्वकरणार्थं शरीरे यानि संभवन्ति भूतानि, तान्येवाह—रसात्मेत्यादि । एतानि भूतानि सारूप्यहेतुप्रस्तावोक्तान्यपि प्रकरणवशात्तथा वक्तव्यरजःशुक्राद्यनुक्तप्रतिपादनार्थं च पुनरुच्यन्ते । आत्मनि संश्रितानीति आत्मकर्मणाऽऽत्मन्यातिवाहिकदेहरूपतया यानि बद्धानि । स्थितस्तथात्मेति तेषु देहान्तरादिक्रियार्थं स्थितः ।

---

१ धर्मरूपमिति पाठान्तरम् । २ "उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितं । विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः" इति श्रीगीतोपनिषदुक्तेः दिव्यचक्षुर्ज्ञानचक्षुरिति बोध्यम् । ३ एक इति पाठान्तरम् ।

या गतिर्देहान्तरादिनाऽऽत्मनः, सा तद्भूतव्यवस्थितस्योच्यते, न व्यापकस्य तस्य सर्वत्र सर्वगतत्वादित्यर्थः ॥ ३३ ॥

**भूतानि मातापितृसंभवानि**
**रजश्च शुक्रं च वदन्ति गर्भे ।**
**आप्यायते शुक्रमसृक् च भूतै-**
**र्यैस्तानि भूतानि रसोद्भवानि ॥ ३४ ॥**

मातापितृसम्भवानीति रजश्च शुक्रमिति यथासंख्यं मातापितृसम्भवानीति ॥ ३४ ॥

**भूतानि चत्वारि तु कर्मजानि**
**यान्यात्मलीनानि विशन्ति गर्भम् ।**
**सबीजधर्मा ह्यपरापराणि**
**देहान्तराण्यात्मनि याति याति ॥ ३५ ॥**

आत्मलीनानीति नित्यात्मसम्बद्धानि । आत्मलीनभूतानां धर्मान्तरमाह—स बीजधर्मीत्यादि । आत्मलीनभूतसन्तानो बीजस्वरूपः, बीजं हि स्वसदृशमङ्कुरं करोति । तेन, अयमप्यात्मलीनो भूतसन्तानः सदृशं देहरूपं भूतान्तरसङ्गं कुर्वन् बीजधर्मो भवति । सा बीजधर्मिणीति वा पाठः, तदा सा भूतसन्ततिरित्यध्याहार्यम् । आत्मनीति मनोयुक्तात्मनि । यातीति गच्छति सति । याति गच्छति देहान्तराणीति योजना । आत्मनश्च गमनं मनोगमनमेव । परापराणीति वा पाठः । तदा पराणि श्रेष्ठानि देवादिशरीराणि, अपराणि अश्रेष्ठानि क्रियादिशरीराणीति योजनीयम् ॥ ३५ ॥

**रूपाद्धि रूपप्रभवः प्रसिद्धः**
**कर्मात्मकानां मनसो मनस्तः ।**
**भवन्ति ये त्वाकृतिबुद्धिभेदा**
**रजस्तमस्तत्र च कर्म हेतुः ॥ ३६ ॥**

नन्वपरिदृश्यमाना भूतचतुष्टयी मनःप्रवृत्तिरुक्ता किमर्थं स्वीकर्तव्या, यतः परिदृश्यमानमेवेदं पाञ्चभौतिकं शरीरं शुक्रशोणितकारणमस्तु, इत्याह—रूपाद्धीत्यादि । रूप्यत इति रूपं भौतिकं शरीरम् । तेन, अभौतिकाच्छरीरात् भौतिकं शरीरं भवतीत्यागमप्रसिद्धम् । तेन, आगमादेव सांख्यदर्शनरूपादातिवाहिकशरीरात् तदुक्तं शरीरमुत्पद्यते इति वाक्यार्थः । यद्यपि शुक्ररजसी कारणे, तथापि यदैवातिवाहिकं सूक्ष्मभूतरूपशरीरं प्राप्नुतः, तदैव ते शरीरं जनयतः, नान्यदा । यदि शुक्रशोणितमातिवाहिकशरीरनिरपेक्षं गर्भं जनयति, तदा जीवाधिष्ठानेन जनयेत्, न तु जनयति । तस्मादात्मस्थसूक्ष्मभूतादेव बीजरूपात् शुक्रशोणितयुक्ताद्गर्भजन्मेति । एतच्चात्मस्थभूतं मातापितृजभूतेन समं शरीरकारणं कर्मवशादेव भवतीत्याह—कर्मेति । कर्मात्मकानामिति कर्मकारणकानाम्; किंवा रूपवत्तन्तुभ्यो रूपवान् पट उत्पद्यते इति प्रसिद्धम् । तेन, आतिवाहिकशरीरादेव शरीरेण भवितव्यम्, कारणसदृशं कार्यं भवति । ततश्चात्मधर्मित्वं सूक्ष्माणामात्मस्थितभावानां सिद्धमिति भावः । अथ मनः सात्त्विकराजसतामसभेदाद्भिन्नं कुतस्तत्र पुरुषे भवतीत्याह मनसो मनस्त इति, पूर्वजन्मन्यवस्थितं यादृक् मनः, तस्मादिह जन्मन्यपि तादृगेव मनो भवति । उक्तञ्चान्यत्र "जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तच्चैवाभ्यस्यते पुनः" इति । तत्रापि मनउत्पत्तौ 'कर्मात्मकानाम्' इति योज्यम् । तेन, कर्मवशादेव मनोभेदो भवति । नन्वेवं सति आत्मस्थसूक्ष्मभूतात्मरूपकारूपत्वेनैकरूपेणैव शरीरेण सर्वप्राणिनां भवितव्यमित्याह—भवन्तीत्यादि । आकृतिः संस्थानम् । रजस्तमसी अनेकतरतमादिभेदभिन्ने तथा कर्म चानेकविधा भिन्नम्, सत्यभिन्ने सूक्ष्मभूतरूपकारणे भेदकारणं न भवतीत्यर्थः ॥ ३६ ॥

**अतीन्द्रियैस्तैरतिसूक्ष्मरूपै-**
**रात्मा कदाचिन्न वियुक्तरूपः ।**
**न कर्मणा नैव मनोमतिभ्यां**
**न चाप्यहङ्कारविकारदोषैः ॥ ३७ ॥**
**रजस्तमोभ्यां हि मनोऽनुबद्धं**
**ज्ञानाद्विना तत्र हि सर्वदोषाः ।**
**गतिप्रवृत्त्योस्तु निमित्तमुक्तं**
**मनः सदोषं बलवच्च कर्म ॥ ३८ ॥**

आत्मा सदा कैरनुबध्यत इत्यस्योत्तरम्—अतीन्द्रियैरिति । बीजधर्मित्वेनोक्तैः । अहङ्कारविकारा एव दोषाः । अयं सूक्ष्मभूताद्यनुबन्धो मनस एवेत्याह—रज इत्यादि । रजस्तमोभ्यां मनः सर्वैर्भूतादिभिरनुबद्धं भवति । अत्रैव हेतुः ज्ञानादित्यादि । ज्ञानादिति तत्त्वज्ञानात् तत्त्वज्ञानं विना मनः सर्वैर्दोषैर्युक्तं भवति । तत्त्वज्ञानात्तु निर्दोषं भवतीत्याह सदोषत्वे मनसः किं भवतीत्याह—गतीत्यादि । गतिर्देहान्तरगमनम् । प्रवृत्तिर्धर्माधर्मक्रियासु प्रवृत्तिः । सदोषत्वे मनःसंसारहेतुर्भवतीति वाक्यार्थः । गतिप्रवृत्त्योर्हेत्वन्तरमाह—बलवच्च कर्मेत्यादि । बलवदिति नियमविपाकम् । फलवदिति वा पाठः, तथापि स एवार्थः नियतं कर्मफलं कर्मबलादेव भवति । अत्र प्रश्नोत्तरेषु यदधिकमुच्यते 'गतिप्रवृत्त्योः' इत्यादिना, तत्प्रकरणवशादेव ज्ञेयम् ॥ ३७ ॥ ३८ ॥

**रोगाः कुतः संशमनं किमेषां**
**हर्षस्य शोकस्य च किं निमित्तम् ।**
**शरीरसत्त्वप्रभवा विकाराः**
**कथं न शान्ताः पुनरापतेयुः ॥ ३९ ॥**

'रोगाः कुतः' इत्येकः प्रश्नः । 'संशमनं किम्' इति द्वितीयः । 'हर्षस्य किं निमित्तम्' इति तृतीयः । 'शोकस्य किं निमित्तम्' इति चतुर्थः । 'शरीरसत्त्वप्रभवा विकाराः कथं न शान्ताः पुनरापतेयुः' इति पञ्चमः । एवं संग्रहवक्ष्यमाणं षट्त्रिंशकं प्रश्नानां पूर्यते ॥ ३९ ॥

---

१ बोध्यमिति पाठान्तरम् ।

प्रज्ञापराधो विषमास्तथार्था
हेतुस्तृतीयः परिणामकालः ।
सर्वामयानां त्रिविधा च शान्ति-
र्ज्ञानार्थकाला-समयोगयुक्ताः ॥ ४० ॥

प्रज्ञापराधादयः प्रकरणवशात् पुनरुच्यन्ते । परिणामकाल इति कालपरिणाम इत्यर्थः ॥ ४० ॥

धर्म्याः क्रिया हर्षनिमित्तमुक्ता-
स्ततोऽन्यथा शोकवशं नयन्ति ।
शरीरसत्वप्रभवास्तु रोगा-
स्तयोरवृत्त्या न भवन्ति भूयः ॥ ४१ ॥

धर्म्या धर्मसाधनाः, ताश्च हर्षकारणधर्मकर्तृत्वेन कारणं भवति । ततोऽन्यथेति अधर्म्याः क्रियाः । तयोरवृत्त्येति शरीरमनसोः सन्तानोच्छेदात् । मोक्षे हि शरीरमनसी निवर्तेते । ततः सर्वथा रोगसन्ताननिवृत्तिर्भवति ॥ ४१ ॥

रूपस्य सत्वस्य च सन्ततिर्या
नोक्तस्तदादिर्नहि सोऽस्ति कश्चित् ।
तयोरवृत्तिः क्रियते पराभ्याम्
धृतिस्मृतिभ्यां परया धिया च ॥ ४२ ॥

ननु यद्यस्य निवृत्तिर्भवति, तदादिमद्भवति, तत् किं शरीरमनःसन्ततिरादिमती, येन तस्या निवृत्तिर्वास्तविकी रोगनिवृत्तिकारणमुच्यते इत्याह—रूपस्येत्यादि । रूपस्य शरीरस्य । रूपं हि शरीरं रूप्यमाणत्वेन 'रूप' शब्देनोच्यते, यथा । "रूपाद्धि रूपप्रभवः" इत्यत्रोक्तम् । नोक्त इत्यागमेषु । कुतो नोक्त इत्याह—न हि सोऽस्तीति । न हि सोऽस्ति न स्वभावादेवेति नोक्त इत्यर्थः । अथ येयमनादिमती शरीरमनःसन्ततिः, तत् कथं तस्या निवृत्तिरित्याह—तयोरित्यादि । तयोरिति शरीरसत्वयोः सन्तन्यमानयोः । पराभ्यामिति श्रेष्ठाभ्याम् । धृत्यादयस्तु यथा मोक्षकारणम्, तथोक्तं कतिधापुरुषीये । अनादिरपि च शरीरसन्ततिर्यथा विनश्यति, तथा च तत्रैवोक्तम् ॥ ४२ ॥

सत्याश्रये वा द्विविधे यथोक्ते
पूर्वं गदेभ्यः प्रतिकर्म नित्यम् ।
जितेन्द्रियं नानुतपन्ति[1] रोगा-
स्तत्कालयुक्तं यदि नास्ति दैवम् ॥ ४३ ॥

प्रकारान्तरेण शारीरमानसरोगाणां चिकित्सां शास्त्रे व्यवहियमाणामाह—सत्येत्यादि । आश्रयशब्देन शरीरमनसी गृह्येते । पूर्वं गदेभ्य इत्यनुत्पन्नेष्वेव रूपेषु । प्रतिकर्म नित्यमनागतचिकित्सा नित्यम् । जितेन्द्रियमित्यनेन च रोगहेतुप्रज्ञापराधासात्म्येन्द्रियार्थवर्जनं दर्शयति, प्रतिकर्मनित्यतया-त्वाशक्यपरिहारकालकृतदोषचिकित्सां दर्शयति । तत्कालयुक्तमिति तत्कालावश्यं रोगकर्तृतया पच्यमानम् । एतेन, बलवद्दैवमवश्यं रोगं ददातीति दर्शयति ॥ ४३ ॥

दैवं पुरा यत्कृतमुच्यते तत्
तत्पौरुषं यत्त्विह कर्म दृष्टम् ।
प्रवृत्तिहेतुर्विषमः स दृष्टो
निवृत्तिहेतुर्हि समः स एव ॥ ४४ ॥

प्रकरणाद्दैवाख्यं कर्म तदनुषङ्गं च पुरुषकारमप्याह—दैवमित्यादि । तेन, प्रकरणाल्लभ्यमानतया जनपदोद्ध्वंसनीयोक्तकर्मलक्षणेन समं न पौनरुक्त्यम् । पुरेति जन्मान्तरे । इहेति इह जन्मनि । प्रवृत्तिहेतुरिति रोगप्रवृत्तिहेतुः । विषम इति अधर्मरूपं दैवम्, रोगजनकश्च पुरुषकारः । समस्तु दैवं धर्मरूपम्, रोगपरिपन्थी च पुरुषकारः । स इति पुंलिङ्गनिर्देशस्तु कर्मणि धर्माधर्मरूपतया तथा पुरुषकारस्य प्रत्यवमर्शाज्ज्ञेयः । अन्ये तु "प्रवृत्तिहेतुः" इत्यनेन संसारप्रवृत्तिहेतुरिति, तथा "निवृत्तिहेतुः" इत्यनेन मोक्षहेतुरिति च वर्णयन्ति ॥ ४४ ॥

हैमन्तिकं दोषचयं वसन्ते
प्रवाहयन् ग्रैष्मिकमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान्न जातु[1] ॥ ४५ ॥

अथ कालकृतदोषनिमित्तरोगपरिहारस्य प्रतिकर्मणः कर्तव्यतामाह—हैमन्तिकमित्यादि । वसन्त इति चैत्रे । अभ्रकाल इति श्रावणे । घनात्यय इति मार्गशीर्षे । यदुक्तम्—"माधवप्रथमे मासि[2] इत्यादिना "प्रवाहयेत्" इत्यन्वेन यथा योग्यतया वमनादिनेति ज्ञेयम् ॥ ४५ ॥

नरो हिताहारविहारसेवी
समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥ ४६ ॥
मतिर्वचः कर्म सुखानुबन्धं[3]
सत्वं विधेयं विशदा च बुद्धिः ।
ज्ञानं तपस्तत्परता च योगे
यस्यास्ति तं नानुतपन्ति रोगाः । इति ॥४७॥

तत्र श्लोकः ।

इहाग्निवेशस्य महार्थयुक्तं
षट्त्रिंशकं प्रश्नगणं महर्षिः ।
अतुल्यगोत्रे भगवान् यथाव-
न्निर्णीतवान् ज्ञानविवर्धनार्थम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते अतुल्यगोत्रीयशारीरं नाम द्वितीयोऽध्यायः ॥

१ नानुपहन्तीति नानुपतन्तीति च पाठान्तरद्वयम् ।

१ जन्तुरिति पाठान्तरम् । २ माधवो वैशाखस्तस्य प्रथमश्चैत्रे इत्यर्थः । ३ सुखानुबन्धीति पाठान्तरम् ।

हेत्वितररोगाभावकारणमाह—नर इत्यादि । सम इति भूतेषु समचित्तः । सुखानुबन्धमिति लिङ्गविपरिणामान्मत्या वचसा च योज्यम् । तेन चात्मनः कर्माण्युत्तरकालीनसुखफलानि शुभानि गृह्यन्ते । सत्वं विधेयं स्वायत्तं मनः । विशदा बुद्धिरिति न कलुषा बुद्धिः । बुद्धिश्चेह ऊहापोहवती विवक्षिता । मतिस्तु स्मृतिचिन्तादि । ज्ञानं तत्त्वज्ञानम् । शेषं सुगममिति ॥ ४६—४८ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायामतुल्यगोत्रीयशारीरव्याख्या ॥

---

## तृतीयोऽध्यायः ।

**अथातः खुड्डीकां गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याये शुक्रशोणिते गर्भकारणत्वेनोक्ते, न तु कृत्स्नं गर्भकारणमुक्तम्, अतः सम्पूर्णगर्भकारणाभिधानार्थं खुड्डिकागर्भावक्रान्तिरुच्यते । खुड्डिकामित्यल्पाम् । गर्भस्यावक्रान्तिर्मेलक उत्पत्तिरिति यावत् ॥ १—२ ॥

**पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्ग ऋतुकाले, यदा चानयोस्तथैव युक्ते च संसर्गे शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतं जीवोऽवक्रामति सत्वसम्प्रयोगात्तदा गर्भोऽभिनिर्वर्तते, स सात्म्यरसोपयोगादरोगोऽभिवर्द्धते सम्यगुपचारैश्चोपचर्यमाणस्ततः प्राप्तकालः सर्वेन्द्रियोपपन्नः परिपूर्णशरीरो बलवर्णसत्वसंहननसम्पदुपेतः सुखेन जायते समुदयादेषां भावानाम्—मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च अस्ति च खलु सत्वमौपपादुकमिति होवाच भगवानात्रेयः ॥ ३ ॥**

पुरुषस्येत्यादि ।—'अनुपहतरेतसः' इति शब्देनैव 'पुरुषस्य' इति लभ्यते । यतः पुरुषस्यैव रेतसो गर्भजनकत्वमुक्तम् । तेन, 'पुरुषस्य' इति पदेन, य एव सम्पूर्णधातुः 'पुरुष'शब्देन वाच्यो बालव्यतिरिक्तः, तं ग्राहयति । 'स्त्रियाश्च' इति पदमर्थलब्धं सत् यौवनवतीं स्त्रियं लम्भयति । संसर्गो मैथुनम् । ऋतौ पुष्पदर्शने प्रशस्तकालः ऋतुकालः । तेन ऋतुमात्रमादित्र्यहं निषेधयति । यतः 'रजस्वलाभिगमनमलक्ष्मीमुखानाम्' इत्यादिना त्र्यहं निषेधः । आर्त्तवदर्शनंच शरदादृतुसाधर्म्याद् 'ऋतु' शब्देनोच्यते । यथा—ऋतावुप्तानि बीजानि प्ररोहन्ति, तथा आर्त्तवदर्शनात् ऋतौ शुक्ररूपं बीजमुप्तमिति ऋतुसाधर्म्यम् । न केवलमेवम्भूतः संसर्गरूप एव गर्भकारणम्, किंवा जीवाधिष्ठाने सतीत्याह—यदेत्यादि ।—तथा युक्त इति अदुष्टरेतसः पुरुषस्य अदुष्टयोन्यादेः स्त्रियाश्च संसर्गे । अयं चार्थः 'पुरुषस्य' इत्यादिनैव लब्धोऽपि पुनः 'शुक्रशोणितसंसर्गम्' इत्यादिग्रन्थे वक्ष्यमाणोऽपि कर्मविध्यर्थमनूद्यते तेन, न पौनरुक्त्यम् । किंवा, 'पुरुषस्य' इत्यादिना पूर्वं, मैथुनात् प्रागनुपहतरेतस्त्वाद्युक्तम्, 'तथा युक्ते च' इत्यनेन मैथुनसमयेऽपि शुक्रयोन्यादीनामदुष्टिरुच्यते । मैथुनकाले हि ईर्ष्यादिना शुक्रदुष्टिः सम्भाव्यते । शुक्रशोणितसंसर्गमिति शुक्रशोणितमेलकम् । 'अन्तः' इत्यनेन गर्भाशयबाह्यगतं संसर्गमकारणं गर्भस्य निषेधयति । 'जीव' शब्देन चेतना धातुरात्मा, नत्वात्मा व्यापकः । तत्कथमयमवक्रामतीत्याह—सत्वेत्यादि ।—सत्वसंप्रयोगादिति मनोगमनादित्यर्थः । तद् यथोक्तम्—"युक्तस्य मनसा तस्य निर्दिशन्ति मनःक्रिया" इति । यद्यप्यात्मा विभुत्वेन सर्वगतत्वेन न याति तथापि यत्रास्य कर्मवशान्मनो याति, तत्रैव चैतन्योपलब्धेरात्मापि 'गतः' इति व्यपदिश्यत इति भावः । अथैवमुत्पन्नो गर्भः कथमभिवर्द्धते, कथं वा जायत इत्याह—सम्यगुपचारैरिति, गर्भहितकरैरित्यर्थः । प्राप्तकाल इति प्राप्तप्रसवकालः, प्रसवकालो नवमदशममासौ । परिपूर्णशरीर इति अव्यङ्गोपचितदेहः[1] । सम्पच्छब्दो बलादिभिः प्रत्येकमभिसम्बध्यते । समुदायादिति सम्यङ्मेलकात् । 'एषाम्' इत्यनेन, पुरुषस्येत्यादिग्रन्थोक्तान् रेतआर्त्तवबीजसत्वसात्म्यरससम्यगुपचारान् प्रत्यवमृशति । एतदेव समुदायप्रभवत्वं गर्भस्य प्रत्येकं मात्रादिगर्भकारणमुत्पादनेन दर्शयन्नाह—मातृजश्चेत्यादि ।—सात्म्यजश्चेत्यत्र 'सात्म्यशब्देन रसव्यतिरिक्तं रूपादि, उपचाराच्च सात्म्या ग्राह्याः । सात्म्यरसस्तु 'रस' इत्यनेनैव गृहीतः । औपपादुकमिति आत्मनः शरीरान्तरसम्बन्धोत्पादकम् । एतच्च व्याकृतमेव पूर्वम्, तत्र यद्यपि 'पुरुषस्यानुपहतरेतसः' इत्यनेन पितैव प्रथममुक्तः, तथापि मातृप्रथमतां दर्शयितुं 'मातृजश्चायम्' इति प्रथमं कृतम्, अत्र माता च गर्भे प्रधानं कारणम् । येन आसेकात् प्रभृति प्रसवपर्यन्तं मातुरेव गुणदोषावत्र विदधाति गर्भः प्रथमतस्तु पुरुषस्य मैथुनस्वातन्त्र्यात् तथा शरीरधारकप्रधानास्थिकारणत्वाच्चाग्रेऽभिधानं कृतम् ॥ ३ ॥

**नेति भरद्वाजः, किं कारणम्,—न हि माता न पिता नात्मा न सात्म्यं न पानाशनभक्ष्यलेह्योपयोगा गर्भं जनयन्ति, न च परलोकादेत्य गर्भं सत्वमवक्रामति ॥ ४ ॥**

**यदि हि मातापितरौ गर्भं जनयेताम्, भूयस्यः स्त्रियः पुमांसश्च भूयांसः पुत्रकामाः, ते सर्वे पुत्रजन्माभिसन्धाय मैथुनधर्ममापद्यमानाः पुत्रानेव जनयेयुर्दुहितॄर्वा दुहितृकामाः, न तु काश्चित् स्त्रियः केचिद्वा पुरुषा निरपत्याः स्युरपत्यकामा वा परिदेवेरन् ॥ ५ ॥**

---

१ सर्वाङ्गोपचितदेह इति पाठान्तरम् ।

पूर्वपक्षोद्धारेण सिद्धान्तं ग्राहयितुं मात्रादिकारणानामकारणत्वं भरद्वाजः प्रतिजानीते—नेतीति। यदि हीत्यादिना, मात्रादीनामकारणत्वे हेतुं ब्रूते। किंवा, अनेनैव मात्रादीनामकारणत्वं भरद्वाजेन प्रतिज्ञातम्। 'तत् किं कारणम्' इति हेतुप्रश्नः। ततः नहि'माता'इत्यादि हेतुकथनम्। अस्य चायमर्थः—यतः—मात्रादयो गर्भकारणत्वेन प्रत्यक्षा गृह्यन्ते। ततः, न मात्रादयो गर्भकारणम्। यदि हीत्यादिना तु उपपत्तिविरोधोऽपि मात्राद्यकारणत्वे नास्तीति दर्शयति। तेन, न पौनरुक्त्यम्। मैथुनधर्मो व्यवायः। पुत्रकामाः पुत्रानेव जनयेयुः, दुहितृकामा दुहितॄर्वा जनयेयुरिति योजना। नतु काश्चित् स्त्रिय इत्यत्र मैथुनमापद्यमाना एव स्त्रियः पुरुषाश्च न परिदेवेरन् वेति योजना। मातापित्रधीनत्वेन गर्भस्य यदैवेच्छन्त्यपत्यम्, तदैव मैथुनमापद्यमानाः सापत्याः स्युः। ततश्च सर्वापत्यत्वे न केचित् परिदेवेरन्नित्यर्थः॥ ४—५॥

**न चात्माऽऽत्मानं जनयति यदि ह्यात्माऽऽत्मानं जनयेज्जातो वा जनयेदात्मानमजातो वा, तच्चोभयथाप्ययुक्तम् न हि जातो जनयति सत्त्वात्, नचाजातो जनयत्यसत्त्वात् तस्मादुभयथाप्यनुपपत्तिः। तिष्ठतु तावदेतत्, यद्ययमात्मात्मानं शक्तो जनयितुं स्यात्, नत्वेनमिष्टास्वेव कथं योनिषु जनयेद्वशिनमप्रतिहतगतिं कामरूपिणं तेजोबलजववर्णसत्वसंहननसमुदितमजरसमरुजममरम् एवंविधं ह्यात्मात्मानमिच्छत्यतो वा भूयः॥ ६॥**

आत्मजत्वं गर्भस्य निषेधयति—न चात्मेत्यादि।—आत्मानं न जनयतीत्यर्थः। सत्त्वादिति जन्यस्यात्मनो विद्यमानत्वात्, न च विद्यमानो जन्यते इत्यर्थः। असत्त्वादिति कारणभूतस्यात्मनोऽजातपक्षेऽसत्वान्न कारणत्वमुपपन्नमित्यर्थः।अत्रैव दूषणान्तरमाह—तिष्ठत्वित्यादि।—योनिष्विति जातिषु अतो वा भूय इति यथोक्तगुणयुक्तादप्यधिकं शुक्रादिपरमर्द्धितुल्यमित्यर्थः॥ ६॥

**असात्म्यजश्चायं गर्भः यदि हि सात्म्यजः, स्यात्, तर्हि सात्म्यसेविनामेवैकान्तेन प्रजा स्यात्, असात्म्यसेविनश्च निखिलेनानपत्याः स्युः, तच्चोभयमुभयत्रैव दृश्यते॥ ७॥**

**अरसजश्चायं गर्भः यदि हि रसजः स्यात्, न केचित् स्त्रीपुरुषेष्वनपत्याः स्युः, न हि कश्चिदस्त्येषाम्, यो रसान्नोपयुङ्क्ते श्रेष्ठरसोपयोगिनां चेद्गर्भा जायन्ते इत्यतोऽभिप्रेतम्, इत्येवं सत्याजौरभ्रमार्गमायूरगोक्षीरदधिघृतमधुतैलसैन्धवेक्षुरसमुद्गशालिभृतानामेवैकान्तेन प्रजा स्यात्, श्यामाकोद्रवकोद्दालककोरदूषककन्दमूलभक्षाश्च निखिलेनानपत्याः स्युः, तच्चोभयमुभयत्र दृश्यते॥ ८॥**

१ योज्यमिति पाठान्तरम्।

तच्चोभयमिति सप्रजत्वमनपत्यत्वं च। उभयत्रेति सात्म्यसेविन्यसात्म्यसेविन्यपि। यो रसान्नोपयुङ्क्ते इति, रसश्चेत् गर्भकारणम्, तं च सर्व एव स्त्रीपुरुषाः सेवन्ते। तेन, सर्व एव सापत्याः स्युरिति भावः। अथ रसजो गर्भ इत्यस्य 'श्रेष्ठरसः' इत्यर्थो वर्ण्यते, तत्रापि दूषणान्तरमाह—श्रेष्ठमित्यादि। ॥ ७—८॥

**न खल्वपि परलोकादेत्य सत्वं गर्भमवक्रामति यदि ह्येनमवक्रामेत्, नास्य किञ्चित् पौर्वदेहिकं स्यादविदितमदृष्टं वा, न च किञ्चिदपि स्मरति॥९॥**

**तस्मादेतद्ब्रूमहे—अमातृजश्चायं गर्भः अपितृजश्चानात्मजश्चासात्म्यजश्चारसजश्च, न चास्ति सत्वमौपपादुकमिति होवाच भरद्वाजः॥ १०॥**

"अस्ति च सत्वमौपपादुकम्" इति यदुक्तम्, तद्दूषयति—न खल्वपीत्यादि। पौर्वदेहिकमिति पूर्वदेहानुभूतम्। अविदितमदृष्टं वेति इह जन्मनि पूर्वदेहानुभूतं नाविदितमदृष्टं वा स्यात्, विदितं प्रत्यक्षव्यतिरिक्तप्रमाणोपलब्धम्, दृष्टं प्रत्यक्षोपलब्धम्, एतद्विपर्ययादविदितमदृष्टंच विज्ञेयम्। न च किञ्चिदपि स्मरतीति नच पूर्वजन्मानुभूतं स्मरतीत्यर्थः। एवं मन्यते—यन् मनः पौर्वदेहिकमनुभवति, तच्चेह जन्मन्यप्यनुवर्तते, यथा यत् तेन जन्मान्तरानुभूतम्, तदिहजन्मन्यपि तथैव स्मरति। यथा—देवदत्तो बाल्यानुभूतं यौवने स्मरति न चायं तथा स्मरति। तेन न पूर्वापरजन्मन्येकं सत्वमिति। तस्मादित्यादिना दूषणदूषितमित्यर्थं पुनर्निगमे दर्शयति॥९—१०॥

**नेति भगवानात्रेयः, सर्वेभ्य एभ्यो भावेभ्यः समुदितेभ्यो गर्भोऽभिनिर्वर्तते॥ ११॥**

भरद्वाजानुमतं आत्रेयवचसा दूषयति—नेतीत्यादि। समुदितेभ्य इति वचनात् प्रत्येकं मात्रादीनामितरकारणनिरपेक्षाणां गर्भकारणत्वं निषेधयति। तेन, मात्रादिसान्निध्येऽपि गर्भकारणान्तरजीवावक्रमाद्यभावाद् गर्भानुत्पादो युक्त एव नच सामग्रीजन्ये कार्ये एकदेशस्याजनकत्वेनाकारणत्वम्। एवं सति तन्तूनामपि पटकारणानां कारणान्तरासान्निध्ये पटाजनकत्वेनाकारणत्वं स्यादिति भावः। इदमेव मात्रादिजन्यत्वं गर्भस्य यत्—मात्रादिव्यतिरेकेणानुत्पद्यमानत्वम्॥११

**मातृजश्चायं गर्भः न हि मातुर्विना गर्भोत्पत्तिः स्यात्, नच जन्म जरायुजानाम्, यानि खल्वस्य गर्भस्य मातृजानि यानि चास्य मातृतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः,—तद्यथा—त्वक् च लोहितं च मांसं च मेदश्च नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधानं चामाशयश्च पक्वाशयश्चोत्तरगुदश्चाधरगुदश्च क्षुद्रान्त्रं च स्थूलान्त्रं च वपा च वपावहनंचेति मातृजानि॥ १२॥**

एवंविधमेव मातुस्तावत् कारणत्वमाह—'मातृजश्चायं गर्भः' इति, गर्भोत्पत्तौ मातुः कारणत्वं दर्शयित्वा जरायोरपि जन्मनि कारणत्वमाह—जन्मेत्यादि। जरायुरमरा, येन वेष्टिता मनुष्यादयः प्रजायन्ते । जरायुणा वेष्टिता जायन्ते इति जरायुजा मनुष्यादयः । संस्वेदजानां मशकादीनां उद्भिज्जादीनां भेकादीनां च मातरं विनापि जन्म भवति । अण्डजानामपि च यद्यपि माता कारणं भवत्येव जन्मनि, तथापि जरायुजमातुरस्येह प्रकरणेऽभिप्रेतत्वेनाण्डजान् विहाय 'जरायुजानाम्' इति कृतम् । किंवा, जरायुजस्याभिव्यक्तिरूपे जन्मनि यावदभिव्यक्ति यथा माता कारणं भवति, न तथा अण्डजे । तत्र हि जन्मादावण्डोत्पत्तिः । तत्रैव हि माता कारणम्, न जन्मन्यभिव्यक्तिरूपे । यत्तु 'पितरं विना न जरायुजानां जन्म' इति वक्ष्यति तज्जरायुजोत्पादे पितुरवश्यापेक्षणीयत्वोपदर्शनार्थम् । अण्डजास्तु मत्स्यादयः पितरं विनापि ऋतुविशेषप्राप्त्यैव भवन्तीति भावः । मातृजानीत्यस्य विवरणम्—यान्यस्य मातृतः संभवतः संभवन्तीति संभवतो गर्भस्य यानि मातृत इति मातुरागतात् शोणितात् संभवन्त्युत्पद्यन्ते, तानि मातृजानि त्वगादीनि अनुव्याख्यास्याम इति योजना । एवमन्यत्रापि यानि त्वित्यादिग्रन्थो व्याख्येयः । मातृजत्वं च त्वगादीनामागमगम्यमेव । पुरीषाधानं पक्वाशयः । उत्तरगुदाधरगुदौ गुदोत्तराधरभागौ । वपावहनं तैलवर्त्तिकेति ख्यातम् ॥ १२ ॥

**पितृजश्चायं गर्भः, नहि पितुर्ऋते गर्भोत्पत्तिः स्यात् नच जन्म जरायुजानाम् यानि खल्वस्य गर्भस्य पितृजानि यानि चास्य पितृतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः—तद्यथा,—केशश्मश्रुनखलोमदन्तास्थिसिरास्नायुधमन्यः शुक्रमिति पितृजानि ॥ १३ ॥**

शुक्रमिति विच्छिद्य पाठेन, शुक्रस्य सर्वधातुसारस्योपादेयतां दर्शयति ॥ १३ ॥

**आत्मजश्चायं गर्भो गर्भात्मा ह्यन्तरात्मा यः, तं जीव इत्याचक्षते, शाश्वतमरुजमजरममरमक्षयमभेद्यमच्छेद्यमलोठ्यं[1] विश्वरूपं विश्वकर्माणमव्यक्तमनादिमनिधनमक्षरमपि, स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मानम्, आत्मसंज्ञा हि गर्भे, तस्य पुनरात्मनो जन्मानादित्वान्नोपपद्यते । तस्मादजात एव गर्भं जनयत्यजातो ह्ययमजातं गर्भं जनयति स चैव गर्भः कालान्तरेण बालयुवस्थविरतां प्राप्नोति, स यस्यां यस्यामवस्थायां वर्त्तते, तस्यां तस्यां जातो भवति । या त्वस्य पुरस्कृता, तस्यां जनिष्यमाणश्च । तस्मात् स एव जातश्चाजातश्च युगपद्भवति, यस्मिंश्चैतदुभयं संभवति जातत्वं जनिष्यमाणत्वं च, स च जातो जन्यते, स चैवानागतेष्ववस्थान्तरेष्वजातो जनयत्यात्मनात्मानम् । सतो ह्यवस्थान्तरगमनमात्रमेव हि जन्म चोच्यते तत्र तत्र वयसि तस्यां तस्यामवस्थायाम्, यथा सतामेव शुक्रशोणितजीवानां प्राक्संयोगाद्गर्भत्वं न भवति, तच्च संयोगाद्भवति, यथा सतस्तस्यैव पुरुषस्य प्रागपत्यात्पितृत्वं न भवति, तच्चापत्याद्भवति, तथा सतस्तस्यैव गर्भस्य तस्यां तस्यामवस्थायां जातत्वमजातत्वं चोच्यते ॥ १४ ॥**

आत्मज इत्यादिना आत्मजत्वं व्युत्पादयति । 'अन्तरात्मोच्यते' इत्यनेन, गर्भकारणभूतमात्मानं षड्धातुसमुदायवद् 'आत्म'शब्दाभिधेयाद् व्यावर्तयति । आचक्षत इति आगमेषु । शाश्वतादिशब्दैर्ब्रुवते वृद्धाः, अलोठ्यमित्यलोभ्यम्। गर्भत्वेन जनयत्यात्मानमिति गर्भस्वरूपो यः षड्धातुरात्मा, तं जनयतीत्यर्थः । गर्भस्यात्मशब्दाभिधेयतामाह—'आत्मसंज्ञा हि गर्भे' इति । तस्येत्यनेन परमात्मानं न जनयति । तस्यानादित्वाज्जन्म नोपपद्यते । तस्मादजात एवायमजातं गर्भं जनयतीति पक्षोऽत्र योज्यः । अथाजातः सन् गर्भावस्थरूपयोर्जात उच्यते । एवमजातत्वं जातत्वं चात्मनि द्वयमपि व्यपदिश्यते । एतदेवात्मनि जातत्वमजातत्वं च दर्शयितुं दृष्टान्तार्थं गर्भ एव जातत्वमजातत्वं दर्शयति,—स चैवेत्यादि ।—पुरस्कृतेत्यग्रे भविष्यन्ती । यथा बालस्य युवत्वावस्थाऽजाता जन्यत इति च, तथा, अजातो जनयत्यात्मात्मानमिति च शब्दप्रयोगसमर्थनमात्रमेतद् विवक्षाभेदात् बोद्धव्यम् । अनेन चात्मावस्थाभेदकृतजातत्वसमर्थनेन 'जातो वा' इत्यादिग्रन्थकृतपूर्वपक्षः शब्दप्रयोगसमर्थनतया परिहृतः । परमार्थतस्तु नित्यत्वेनाजात एवात्मा आत्मनोऽजातावस्थां गर्भादिरूपां जनयति । तेन, नासतः कारणत्वम्, सतो वा जन्यत्वमिति पक्षः स्थिर एव । सतो हीत्यादिना सत्कार्यपक्षं सांख्यमतं दर्शयति । किंवा, वयोभेदेन जन्म, तदेवावस्थान्तरगमनमिति दर्शयति । तस्यां तस्यामवस्थायामिति च्छेदः । पितृत्वमिति पितृत्वेन व्यपदिश्यत इत्यर्थः ॥ १४ ॥

**न खलु गर्भस्य मातुर्न पितुर्नात्मनः सर्वभावेषु यथेष्टकारित्वमस्ति, ते किंचित् स्ववशात् कुर्वन्ति, किंचित् कर्मवशात् क्वचिच्चैषां करणशक्तिर्भवति, क्वचिन्न भवति। यत्र सत्वादिकरणसंपत् तत्र यथाबलमेव यथेष्टकारित्वमतोऽन्यथा विपर्ययः। न च करणदोषादकरणमात्मा संभवति गर्भजनने, दृष्टं चेष्टयोनिरैश्वर्यं मोक्षश्चात्मविद्भिरात्मायत्तम् । नह्यन्यः सुखदुःखयोः कर्त्ता, न चान्यतो गर्भो जायते जायमानः, नचाङ्कुरोत्पत्तिरबीजात् ॥ १५ ॥**

[1] मलेह्यमिति पाठान्तरम् ।

**यानि तु खल्वस्य गर्भस्यात्मजानि यानि चास्यात्मतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः—तद्यथा—तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मनइन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृतिस्वरवर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेत्यात्मजानि १६**

यदुक्तम्,—यद्यात्मा आत्मानं जनयति, तदा वशित्वादिगुणयुक्तं जनयेदिति। तत्रोत्तरमाह—न खल्वित्यादि।—गर्भस्य सर्वभावे न मात्रादीनां यथेष्टकारित्वमिति योज्यम्। अत्र च यद्यप्यात्मैव प्रकृतः, तथापि तुल्यसमाधानत्वेन मातापितरावपि व्युत्पादितौ। यतो ह्यात्मनः सर्वभावेषु यथेष्टकारित्वेन इष्टयोनिगमनादिप्रसक्तिः समाधीयते, तथा मातापित्रोरपि यथेष्टकारित्वेन पुत्रानेव जनयेयुरित्यादिपूर्वपक्षः परिहृतो भवति। अथ कुत एवात्मादीनां यथेष्टकारित्वं क्वचिन्न भवतीत्याह—किंचिदित्यादि। किंचिदिति न सर्वम्। अत्र मातापितरौ स्ववशौ मैथुनं गर्भकारणं सात्म्यरससेवादिकं चाचरतः, गर्भस्य जीवाधिष्ठानादौ तु कर्माधीने परवशौ। तथा, आत्मापि गर्भस्य चैतन्ये तथा धर्माधर्मक्रियानुष्ठाने स्ववशः, कर्मजन्ये इष्टयोन्यादिगमने धर्माधर्मपराधीन एव। तेन, कर्माधीनेऽपि विषये न मात्रादीनां यथेष्टकारित्वम्। यथेष्टकारित्वमपि मात्रादीनां क्वचिद्दर्शयन्नाह—क्वचिच्चैषामित्यादि।—करणमुपकरणं साधनोपाय इति यावत्। सत्वं मनआदि प्रधानं येषाम्, तानि सत्वादीनि मनइन्द्रियशुक्रशोणितादीनि। यथावलमिति यथाकर्म,'वल'शब्देनेहादृष्टमुच्यते। एतेन, यत्र मात्रादीनां पुत्रेच्छायामिष्टयोनिषु गमनादिकरणशक्तिर्भवति, कर्म चानुगुणं भवति, तत्रेप्सितपुत्रादिष्विष्टयोनिगमनादि कार्यं भवति, यदि तत्र विशुद्धशुक्रः पुरुषो भवति स्त्री च विशुद्धयोन्याश्रयत्वादिगुणयुक्ता, पुत्रजननं च कर्म तयोर्वलवत्, तदा पुत्रजन्माभिसन्धाय मैथुनमापद्यमानौ ईप्सितं पुत्रं जनयतः, तथा आत्माऽपि विशुद्धसत्वादिगुणयुक्तः शुभकर्मवान् तत्काले इष्टां योनिमनुध्यायति, तदाभीष्टयोनिगमनं सम्पादयत्यात्मन इत्यादि यथेष्टकारित्वोदाहरणं ज्ञेयम्। अतोऽन्यथा इति सत्वादिकरणाशक्तौ विगुणे च दैवे विपर्यय इति न यथेष्टकारित्वम्। किंवा, क्वचिच्च मैथुनादौ पित्रादीनां स्ववशत्वम्। तत् किमिति जीवोपक्रमादावपि न स्ववशत्वमेषां भवति? इत्याह—क्वचिच्चैषामित्यादि।—क्वचिदेव कार्ये यस्मात् किञ्चित् करणं मात्रादीनां शक्तम्, न सर्वत्र। तेन, सर्वेष्वेव गर्भस्य भावेषु न शक्तमिति भावः। यत्रापि चैते मात्रादयः स्ववशाः सन्तः कुर्वन्ति, तत्रापि स्वीयस्वीयकरणायुक्ता एव कुर्वन्तीत्याह—यत्र सत्वेत्यादि।—यथावलमिति यथाशक्ति। अनेन च मात्रादयो गर्भस्य येषु विशेषेषु शक्ताः, तेषु सत्वादिकरणसम्पत्तौ यथेष्टकारिणो भवन्ति, नाशक्यविषये उपहतोपकरणा वा यथेष्टकारिणो भवन्तीति दर्शयति। अतोऽन्यथा विपर्यय इत्यस्य चार्थोऽग्रे व्याकृतः। ननु सत्वादिकरणदोषाच्चेदयमात्मा गर्भं न जनयति तथाविधं हन्त तर्ह्यकारणमेवायमात्मा, कारणं हि यत् भवति, तत् करोत्येव कार्यमित्याह—नचेत्यादि।—करणदोषादकुर्वन् गर्भं कदाचिदात्मा न गर्भजनने कारणं भवतीति न, अपितु भवत्येव कारणम्, एवं मन्यते—मृदाद्यभावात् घटमकुर्वन्नपि कुम्भकारः कारणमेव घटस्य भवति घटजननशक्तियुक्तत्वात्, तथा आत्मापि करणदोषादकुर्वन्नपि तथाविधं गर्भं तज्जननशक्तत्वेन भूयोदृष्टत्वात् कारणमेव भवति। तथेष्टयोनिगमने प्रसक्तिरपि प्रोद्भाविता, आत्मनः कारणत्वेन सा क्वचिद्भवतीत्यपि दर्शयन्नाह—दृष्टश्चेत्यादि।—आत्माधीना योनिः पुरुषं प्रति इष्टा योनिः, तथा, ऐश्वर्यादयश्चात्माधीना दृष्टाः, यथोक्तम् कतिधा पुरुषीये—"आवेशश्चेतसो ज्ञानम्" इत्यादिना। आत्मनः कारणत्वे हेत्वन्तरमाह—नह्यन्य इत्यादि।—हि यस्मादात्मनोऽन्यः सुखदुःखयोः कर्त्ता नास्ति, अत आत्मैव सुखदुःखसाधनेन्द्रियकर्मशरीरादिकर्त्ता। तेन आत्मा कारणं गर्भस्य सुखदुःखाद्याधारस्येति भावः। अथ भूतान्येव कस्मात् संयोगवशात् चेतनासुखादिकारणानि न भवन्तीत्याह—नचान्यत इत्यादि।—अन्यत इति विजातीयात्। जायमानः इत्युत्पद्यमानः। सदृशमेव कारणात् कार्यमुत्पद्यते। येन, न शणस्याङ्कुरोत्पत्तिर्नारिकेलत्वीजादिति कार्यत्वेनाभिमताङ्कुरस्य वीजादुत्पत्तिः। तेन, गर्भस्य यच्चैतन्यं तदचेतनेभ्यो न भवति किंतु चेतनाधातोरात्मन एवेति दर्शयति। एवमात्मजत्वं गर्भस्य व्युत्पाद्यात्मजान् विशेषानाह—यानीत्यादि।—प्रेरणं धारणं चेन्द्रियाणामेव, अत्र च तत्तद्देवादिपश्वादियोनिगमनपरत्वे धर्माधर्मजन्ये धर्माधर्मस्यापि जनकत्वेनात्मैव मूलकारणमुच्यते। आत्मज्ञानप्राणापानादौ तु मनःकारणत्वेऽप्यात्मैव व्यवधानेन कारणम्॥ १५—१६॥

**सात्म्यजश्चायं गर्भः न ह्यसात्म्यसेवित्वमन्तरेण स्त्रीपुरुषयोर्वन्ध्यत्वमस्ति गर्भेषु वाप्यनिष्टो भावः, यावत् खल्वसात्म्यसेविनां स्त्रीपुरुषाणां त्रयो दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न शुक्रशोणितगर्भाशयोपघातायोपपद्यन्ते, तावत् समर्था गर्भजननाय भवन्ति। सात्म्यसेविनां पुनः स्त्रीपुरुषाणामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले सन्निपतितानां जीवस्यानवक्रमणाद्गर्भा न प्रादुर्भवन्ति। न हि केवलं सात्म्यज एवायं गर्भः, समुदयोऽत्र कारणमुच्यते। यानि खल्वस्य गर्भस्य सात्म्यजानि, यानि चास्य सात्म्यतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः तद्यथा—आरोग्यमनालस्यमलोलुपत्वमि-**

---

१ अस्य टीकाग्रंथस्य संगतिः का?

न्द्रियप्रसादः स्वरवर्णवीजसंपत्प्रहर्षभूयस्त्वं चेति सात्म्यजानि ॥ १७ ॥

सात्म्यजश्चेत्यादिना सात्म्यजत्वं व्युत्पादयति, असात्म्यसेवां गर्भोपघातिनीं दर्शयन् सात्म्यसेवाया गर्भं प्रति कारणत्वं दृढयति सात्म्यसेविनामपि प्रभाववलोत्पत्तिं दर्शयन् "असात्म्यसेविनश्च निखिलेनानपत्याः स्युः" इति पूर्वपक्षं परिहरति सात्म्यसेविनां पुनरित्यादिना तु ग्रन्थेन 'सात्म्यसेविनामेकान्तेन प्रजा स्यात्' इति यदुक्तम् तत्परिहरति।—सन्निपतितानामिति व्यवायमापन्नानाम् । अत्र स्वरवर्णौ सात्म्यजत्वेनोक्तौ तेन, द्वावप्यत्रकारणमिति ज्ञेयम् ॥ १७ ॥

रसजश्चायं गर्भः। न हि रसादृते मातुः प्राणयात्रापि स्यात्, किं पुनर्गर्भजन्म, न चैवमसम्यगुपयुज्यमाना रसा गर्भमभिनिर्वर्तयन्ति । न च केवलं सम्यगुपयोगादेव रसानां गर्भाभिनिर्वृत्तिर्भवति, समुदयोऽप्यत्र कारणमुच्यते । यानि तु खल्वस्य गर्भस्य रसजानि, यानि चास्य रसतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः—तद्यथा—शरीरस्याभिनिर्वृत्तिरभिवृद्धिः प्राणानुवन्धस्तृप्तिः पुष्टिरुत्साहश्चेति रसजानि ॥ १८ ॥

प्राणयात्रापि स्यादिति गर्भाधारभूताया मातुरपि प्राणस्थितिरित्यर्थः । न चैवमसम्यगुपयुज्यमाना इत्यादिना, 'असात्म्यरसोपयोगस्य गर्भोपघातित्वं दर्शयति । असात्म्यरसोपयोगिनां प्रभावेण जननं यत्, तदसात्म्यसेविप्रजाभवनन्यायतुल्यमिति नेह पुनर्दर्शितम् । समुदयोऽप्यत्र कारणमित्यनेन तुल्यसम्यग्रससेविनां चापत्यभवने कारणं धर्मादि दर्शयति । अभिनिर्वृत्तिरङ्गप्रत्यङ्गव्यक्तता । प्राणानुवन्ध इति वलानुवन्धः । पुष्टिरुपचयः । वृद्धिस्तु दैर्घ्येण वृद्धिः । उत्साहो वलम् । 'इति'शब्दः प्रकारे । तेन, एवंप्रकाराण्यन्यान्यपि वर्णादीनि रसजानीति दर्शयति । एवं पूर्वत्रापि 'इति' शब्दो व्याख्येयः। यदा तु 'इति'शब्दश्च परिसमाप्त्यर्थः, तदाप्याविष्कृता रसजानां परिसमाप्तिर्ज्ञेया । तेन, अनाविष्कृता वर्णादयोऽपि रसजा लभ्यन्ते ॥ १८ ॥

अस्ति खल्वपि सत्वमुपपादुकम्, यज्जीवं स्पृक्शरीरेणाभिसंवध्नाति यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते भक्तिर्विपर्यस्यते सर्वेन्द्रियाण्युपतप्यन्ते वलं हीयते, व्याधय आप्यायन्ते यस्माद्धीनः प्राणान् जहाति, यदिन्द्रियाणामभिग्राहकं च मन इत्यभिधीयते, तत्त्रिविधमाख्यायते—शुद्धं राजसं तामसमिति। येनास्य खलु प्रयतः भूयिष्ठम्, तेन द्वितीयायां वा जातौ संप्रयोगो भवति, यदा तु तेनैव शुद्धेन संयुज्यते, तदा जातेरतिक्रान्ताया अपि स्मरति। स्मार्तं हि ज्ञानमात्मनस्तस्यैव मनसोऽनुवन्धादनुवर्तते, यस्यानुवृत्तिं पुरस्कृत्य पुरुषो जातिस्मर इत्युच्यते इति सत्वमुक्तम्। यानि खल्वस्य गर्भस्य सत्वजानि, यान्यस्य सत्वतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः । तद्यथा—भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्यं शौर्यं भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं मार्दवं गांभीर्यमनवस्थितत्वमित्येवमादयश्चान्ये, ते सत्वविकाराः,तानुत्तरकालं सत्वभेदमधिकृत्योपदेक्ष्याम इति सत्वजानि । नानाविधानि खलु सत्वानि, तान्येकपुरुषे भवन्ति, न च भवन्त्येककालम्, एकं तु प्रायोवृत्त्याह ॥ १९ ॥

अस्तीत्यादिना मनस औपपादुकमाक्षिप्तं समादधाति । 'अपि' शब्दोऽवधारणे, अत्र च 'यज्जीवं स्पृक्शरीरेणाभिसंवध्नाति' इत्यादिना मनसो धर्मकथनमेवौपपादुकसाधनं भवति, मनोव्यतिरेकेणैतदुच्यमानधर्माणामसिद्धेः । नित्यमात्मानं स्पृशतीति स्पृक । शरीरमातिवाहिकशरीरम् । तेन, स्पृक्शरीरेण कारणभूतेन जीवमात्मरूपमभिसम्वध्नाति भोगायतनशरीरेणेति शेषः । आतिवाहिकशरीरसद्भावश्च "भूतैश्चतुर्भिः सहितः" इत्यनेन प्रतिपादितः । किंवा, 'जीवमात्मानं स्पृक्शरीरेण' इति स्पर्शवता शरीरेण यन्मनोऽभिसंवध्नाति तदुपपादुकमस्तीति योजना । एवं मन्यते—यदि मनोऽत्रात्मनः शरीरसंवन्धे न स्वीक्रियते, तदा व्यापकत्वादात्मनः सर्वत्रैवोपलब्ध्या भवितव्यम् । न च भवति । तथा यत्र स्पर्शवति शरीरे मनः प्रतिवद्धं भवति तत्रैवायं सुखाद्युपलभते । 'स्पृग्' विशेषणेन शरीरस्य मूत्रनखकेशादौ मनोगमनाभावादात्मनोऽनुपलब्धिं दर्शयति । अपगमनपुरस्कृत इति देहान्तरगमनापायमुखे । भक्तिरिच्छा । यस्माद्धीन इति मनसा त्यक्तः । येनेति यथाभूतेन सात्त्विकेन राजसेन तामसेन वा मनसा मनो भूयिष्ठमित्यभिप्रायः । द्वितीयायां वा जाताविति द्वितीयजन्मनि, जन्मान्तरे यादृशं मनः, तादृशमेव जन्मान्तरे प्रायोभवतीत्यर्थः । केचित्तु, 'तेन न द्वितीयायाम्' इति पठन्ति । अत्रापि प्रायो द्वितीये जन्मनि तुल्येन मनसा योगो न भवति, कदाचित्तु भवतीत्यर्थः । यदुक्तम्—'नास्य किंचित् पौर्वदेहिकमविदितं स्यादि'ति, तत् पौर्वदेहिकं ज्ञानं क्वचिद्भवतीति दर्शयन्नाह—यदा त्वित्यादि । शुद्धेनेति विशुद्धसत्त्वगुणेन । तस्यैवेति, वक्ष्यमाणेन यस्येत्यनेन संवध्यते । योनियन्त्रपीडायामपि हि उद्भूतेन तमसा विश्रुतं मनो नातिक्रान्तजन्मगतं स्मरति यस्तूद्भूतसत्त्वस्तमसा नाभिभूयते, स स्मरत्येवातिक्रान्तजन्मानुभूतमिति भावः । पुरस्कृत्येति कारणत्वेनावधार्य । अयं च मनोधर्मसमूह इन्द्रियोपक्रमोक्तोऽपि पुनरिह प्रकरणवशादुच्यमानो न पुनरुक्त-

१ प्रायोऽनुवृत्त्येति पाठान्तरम्। २ तस्मान्यत्र स्पर्शवति शरीरे कर्मेति पाठान्तरम् ।

दोषमावहति। यद्यपि सत्वस्य गर्भजनकत्वं साक्षान्नोक्तम्, तथापि सत्वस्य यदुपपादुकत्वं गर्भं प्रति, तेनैव सत्वस्य गर्भजनकत्वं प्रतिज्ञातं मन्तव्यम्। तेन, यानि खल्वस्य गर्भस्य सत्वजानि' इत्यादिना गर्भे सत्वजभावकथनमुपपन्नमेव गर्भकारणत्वकथनमपि च। सत्वस्योपपादुकत्वभापया कारणत्वं यदुक्तम्, तद्देहान्तरगमनरूपधर्मस्य गर्भकारणत्वातिरिक्तस्य प्रतिपादनीयम्। नानाविधानीति नानाविधसात्त्विकराजसतामसवृत्तिभिन्नानि। तान्येकपुरुषे भवन्तीत्यनेन, एकएव पुरुषः कदाचिद्धर्मक्रियायां सात्त्विको भवति, कदाचित् कामचिन्तायां राजसः, कदाचिन्मोहे तमोमय इति दर्शयति। एकदैव सात्त्विकादयो धर्मा न भवन्ति, किंतु पर्यायेण भवन्ति। ननु यद्येकपुरुष एव सर्वे सात्त्विकादयो भवन्ति, तत्कथमयं सात्त्विक इत्यादिव्यपदेशा भवन्तीत्याह। एकंत्वित्यादि। प्रायोवृत्त्येति भूयिष्ठा यस्य सात्त्विकवृत्तयो भवन्ति स सात्त्विकः, यस्य राजस्यो वृत्तयो भवन्ति स राजस उच्यते इत्यादि। एतदेव पूर्वमुक्तम्,—'यद्गुणं चाभीक्ष्णं पुरुषमनुवर्तते सत्वम्, तद्गुणमेवोपदिशन्ति बाहुल्यानुशयात् इति ॥ १९ ॥

**एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदयादभिनिर्वर्तते गर्भो यथा कूटागारं नानाद्रव्यसमुदायाद्यथा वा रथो नानारथाङ्गसमुदायात्। तस्मादेतदवोचाम—मातृजश्चायंगर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्चाऽस्ति च सत्वमुपपादुकमितीति होवाच भगवानात्रेयः ॥ २० ॥**

एवं मात्रादिकारणव्युत्पादनेन गर्भस्य समुदायप्रभवतां व्युत्पादितां दृष्टान्तेन द्रढयन्नाह—एवमयमित्यादि। कूटागारं वर्तुलाकारं गृहं जैन्ताकस्वेदप्रतिपादितम्। अन्ये तु वस्त्रादिकृतं संचारगृहं कूटागारमाहुः। अत्र प्रकरणे, यद्यपि मात्रादीनां सर्वेषां समुदितानामेव गर्भं प्रति कारणत्वम्, तथापि मातापित्रात्मसत्वानि विहाय सात्म्यरसयोरेव कारणत्वव्युत्पादने यत्—'समुदायोऽप्यत्र कारणम्' इत्युक्तम्। तत्रैवं मन्यते अत्र यथा मात्रादयश्चत्वारोऽवश्यं गर्भप्रतिपादकभूताः, न तथा सात्म्यो रसो वा। येन, शुक्रशोणितसत्वात्मसंसर्गादेव गर्भो भवति, नावश्यं गर्भमेलके सात्म्यरसयोरपेक्षा, गर्भमेलकोत्तरकालं सात्म्यरसाभ्यां गर्भस्य पुष्ट्यादयो जन्यन्ते। तेन, सात्म्ये रसे चावश्यं समुदायमपेक्ष्यं दर्शयति। यत्रैव 'समुदायोप्यत्र कारणम्' इत्युक्तम्, मात्रादयस्तु परस्परसमुदायमपेक्षमाणा अपि नावश्यं सात्म्यरससमुदायमादिगर्भमेलकेऽपेक्षन्त इति पुनस्तत्र समुदायापेक्षित्वं नोक्तम्। 'समुदायादेषां भावानाम्' इत्यनेन ग्रन्थेन, यत्परस्परसमुदायापेक्षित्वं मात्रादीनां चतुर्णाम्, तदुक्तमेव। यद्यपि गर्भं प्रत्यविशेषेण सात्म्यरसयोरपि कारणत्वम्, 'सात्म्यजश्चायं[1] रसजश्चायम्' इत्यनेनोक्तम्, तद्गर्भमेलकोत्तरकालं कारणत्वेन, तथा मातापित्रोरपि विशुद्धशुक्रशोणितोत्पादहेतुतया पारंपर्येण कारणत्वादिति ज्ञेयम् ॥ २० ॥

**भरद्वाज उवाच—यद्ययमेषां नानाविधानां गर्भकराणामेव भावानां समुदायादभिनिर्वर्तते गर्भः, कथमयं सन्धीयते, यदि सन्धीयते, कस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते, मनुष्यश्च मनुष्यप्रभव उच्यते। तत्र चेदिष्टमेतद्यस्मान्मनुष्यो मनुष्यप्रभवः। तस्मादेव मनुष्यविग्रहेण जायते, यथा गौर्गोप्रभवः, यथा चाश्वोऽश्वप्रभव इत्येवं सति यदुक्तमग्रे समुदयात्मक इति तदयुक्तम्। यदि च मनुष्यो मनुष्यप्रभवः, कस्माज्जडान्धकुब्जमूकवामनमिन्मिणव्यङ्गोन्मत्तकुष्ठिकिलासिभ्यो जाताः पितृसदृशरूपा न भवन्ति। अथात्रापि बुद्धिरेवं स्यात्—स्वेनैवायमात्मा चक्षुषा रूपाणि वेत्ति, श्रोत्रेण शब्दान्, घ्राणेन गन्धान्, रसनेन रसान्, स्पर्शनेन स्पर्शान्, बुद्ध्या बोद्धव्यमित्यनेन हेतुना न जडादिभ्यो जाताः पितृसदृशा भवन्ति। अत्रापि प्रतिज्ञादोषः स्यात्, एवमुक्ते ह्यात्मा सत्स्विन्द्रियेषु ज्ञः स्यादसत्स्वज्ञः। यत्र चैतदुभयं संभवति,—ज्ञत्वमज्ञत्वं च, सविकारश्चात्मा। यदि च दर्शनादिभिरात्मा विषयान् वेत्ति, निरिन्द्रियो दर्शनादिविरहादज्ञः स्यात्, अज्ञत्वादकारणम्, अकारणत्वाच्च नात्मेति वाग्वस्तुमात्रमेतद्वचनमनर्थं स्यादिति होवाच भरद्वाजः ॥ २१ ॥**

पुनर्भरद्वाजः पृच्छति—यद्ययमित्यादि।—कथं सन्धीयत इति कया परिपाट्या मिलतीत्यर्थः। मनुष्यविग्रहेण जायत इति मनुष्यजातौ कस्मान्मनुष्यविग्रहेणैव जायत इत्यर्थः। 'समुदायात्मकः' इति यदुक्तम्, तदयुक्तमित्यत्र मात्राद्यतिरिक्तजातिकथनेन तथा जातेरेव मनुष्यादिरूपाया बलवत्कारणत्वेन यथोक्तमात्रादिसमुदायप्रभवत्वं न युक्तमिति भावः। दूषणान्तरमाह—यदि चेत्यादि।—जडो जडबुद्धिः। मिन्मिणः सानुनासिकः। पितृसदृशरूपाः इत्यत्र 'पितृ' शब्देन मा, तापितरौ ग्राह्यौ। कारणसदृशरूपत्वेन च चेन्मनुष्या भवन्ति ते जडादिरूपकारणजाता अपि कारणसदृशत्वेन जडरूपाः स्युरिति भावः। अत्र जडादिबहूदाहरणकरणं पक्षस्य बहूदाहरणसिद्धत्वेन दृढत्वप्रतिपादनार्थम्। कृतं पूर्वपक्षसमाधानमा-

२ गर्भसत्वजननमिति पाठान्तरम्। २ प्रतिपादनार्थम्? ३ प्रायोऽनुवृत्त्येति पाठान्तरम्। ४ भूयिष्ठं यस्य सत्त्वमनुवर्तते इति पाठान्तरम्।

१ आत्मजश्चायमित्यसमीचीनः पाठः।

शङ्कते—अथात्रेत्यादि ।—स्वेनैवेति आत्मकर्मोपार्जितेनैव । तेन, इन्द्रियाणि यस्मादात्मजान्युक्तानि, न तु मातापितृरूपमनुष्यजन्यानि, ततश्च पित्रोरिन्द्रियं प्रत्यकारणत्वे न तदिन्द्रियसदृशानीन्द्रियाण्यपेक्ष्यैव भवन्तीति भावः । स्वेनैवेत्यादि श्रोत्रादिभिरभिसम्बध्यते । जडादिभिर्जाता इत्यत्र 'आदि शब्दः प्रकारवाची। तेन, कुब्जकुष्ठ्यादीनां ग्रहणम्। कुब्जत्वकुष्ठाद्याधारभूतं हि शरीरं नात्मजम्, किंतु मातापितृजमेव । ततश्च कुब्जादिजातस्य कुब्जादिप्रसङ्गेनैवापकृततत्वं तदवस्थमेव। आशङ्कितं समाधानं दूषयति–अत्रापीत्यादि ।—प्रतिज्ञादोषः स्यादिति, 'आत्मा ज्ञः' इत्यादिना आत्मनो ज्ञत्वप्रतिज्ञायाः, तथा, 'निर्विकारः परस्त्वात्मा' इत्यादिना निर्विकारत्वप्रतिज्ञायाः कृताया दोषः स्यादिति भावः । असत्स्वज्ञ इत्यनेन, कदाचिदज्ञत्वात् प्रतिज्ञात'ज्ञत्वम्' व्याहतम्,इन्द्रियाधीनत्वेन ज्ञत्वमात्मनः पराधीनं सन्न वास्तवं स्यादिति भावः। यत्रेत्यादिना सविकारत्वं साधयति । ज्ञत्वपरित्यागेनाज्ञत्वे प्रकृतेरयथाभूतत्वेन विकारो भवतीति भावः। सविकार इति 'विकारवान्' इत्यर्थो मतुब्लोपाज्ज्ञेयः। आत्मन इन्द्रियाधीनत्वेन ज्ञत्वे दूषणान्तरमाह—यदि चेत्यादि।—अज्ञत्वादकारणमिति, अज्ञत्वादकारणं शरीरप्रेरणादौ न कारणं स्यादित्यर्थः। अकारणत्वाच्च नात्मेति शरीरप्रेरणादौ बुद्धिनिष्पाद्येऽकारणत्वाद् या चेतनाचेतनपञ्चभूतातिरिक्ता चैतन्यधार्यात्मशब्दवाच्या इत्यर्थः । वाग्वस्तुमात्रमित्यर्थरहितशब्दमात्रमेतत्—यदुच्यते—आत्मा स्वेन चक्षुषा रूपं पश्यतीत्यादि ॥ २१ ॥

**आत्रेय उवाच—पुरस्तादेतत् प्रतिज्ञातम्—सत्वं जीवं स्पृक्शरीरेणाभिसंबध्नातीति । यस्मात्तु समुदयप्रभवः सन् स गर्भो मनुष्यविग्रहेण जायते, मनुष्यो मनुष्यप्रभव इत्युच्यते, तद्वक्ष्यामः—॥२२॥**

आत्रेयः समादधाति—पुरस्तादित्यादि ।—एतच्च 'कथमयं सन्धीयते' इत्यस्योत्तरम् । सत्वं शुक्रार्त्तवसन्धानकारणमित्यर्थः ॥ २२ ॥

**भूतानां चतुर्विधा योनिर्भवति,—जराय्वण्डस्वेदोद्भिदः। तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसंख्येयभेदा भवति भूतानामाकृतिविशेषापरिसंख्येयत्वात् ॥ २३ ॥**

भूतानामिति प्राणिनाम् । योनिर्जातिः । यद्यपि 'योनि'-शब्दः कारणवचनः, तथापि, जराय्वादिरूपयोनिजाता अपि जराय्वादय एवोच्यन्ते कार्ये कारणोपचारात् । आकृतिः संस्थानम्, तस्या विशेषाः परस्परविसदृशाकृतय एव नरकरितुरगादिरूपाः ॥ २३ ॥

१ अज्ञत्वात् कालपूर्वशरीरप्रेरणादाविति पाठान्तरम् ।

**तत्र जरायुजानामण्डजानां प्राणिनामेते यां यां गर्भकरा भावा योनिमापद्यन्ते, तस्यां तस्यां योनौ तथा तथा रूपा भवन्ति, तद्यथा—कनकरजतताम्रत्रपुसीसकान्यासिच्यमानानि तेषु तेषु मधूच्छिष्टविग्रहेषु। ते यदा मनुष्यबिम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते, तस्मात् समुदयात्मकः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यश्च मनुष्यप्रभव उच्यते तद्योनित्वात् ॥ २४ ॥**

संभावियोनिभेदं दर्शयित्वा यथा योग्यानुकारो भवति, तदाह—तत्रेत्यादि । गर्भेत्यादि ।—गर्भकरा भावाः शुक्रादयः । मधूच्छिष्टविग्रहेष्विति सिक्थकेन मृत्तिकायां निर्मितसञ्चकरूपविग्रहेषु । मनुष्यबिम्बमिति मनुष्याकारं सिक्थककृतसञ्चकम् । कनकादिबहुद्रव्योदाहरणम्, यथा कनकादीनां बहूनामपि मनुष्यसञ्चकसिक्थकस्थानां मनुष्याकृतिजनकत्वम्, तथा शुक्रादीनामपि बहूनां मनुष्ययोनिपतितानां मनुष्यविग्रहकर्तृत्वमिति साधर्म्योदाहरणार्थम् । समुदायात्मकः सन्निति यद्यपि समुदायजन्यः, तथापि योनिरूपकारणमहिम्ना स्वयोनिसदृश एव भवति, नान्ययोनिसदृशः। न च कारणधर्मः पर्यनुयोगमर्हति । तेन, शुक्रादिसमुदायोऽपि कारणं भवति, मातापितरौ विशेषेण गर्भस्य सजातीयत्वे कारणं भवत इति न कदाचित् क्षतिः । तद्योनित्वादिति विशेषेण मनुष्यस्य कारणत्वात् ॥ २४ ॥

**यच्चोक्तम्—यदि च मनुष्यो मनुष्यप्रभवः, कस्मान्न जडादिभ्यो जाताः पितृसदृशरूपा भवन्तीति, तत्रोच्यते—यस्य यस्यावयवस्य बीजे बीजभाग उपतप्तो भवति, तस्य तस्यावयवस्य विकृतिरुपजायते, नोपजायते चानुपतापात्। तस्मादुभयोपपत्तिरप्यत्र । सर्वस्य चात्मजानीन्द्रियाणि, तेषां भावाभावहेतुर्दैवम्। तस्मान्नैकान्ततो जडादिभ्यो जाताः पितृसदृशरूपा भवन्ति ॥ २५ ॥**

बीज इति शुक्रशोणिते । बीजस्याङ्गप्रत्यङ्गनिर्वर्त्तको भागो बीजभावः । उभयोपपत्तिरप्यत्रेति पितृसदृशा भवन्ति न भवन्ति चेत्यर्थः । आत्मजानीति आत्मप्रतिबद्धकर्मजानि[१] । भावाभावहेतुर्दैवमिति[२] इन्द्रियभावे इन्द्रियजनकं शुभम्, इन्द्रियाभावे चाशुभं दैवं हेतुरित्यर्थः । उपसंहरति तस्मादित्यादि ।—एवं मन्यते—मनुष्यबीजं हि प्रत्यङ्गबीजभागसमुदायात्मकं स्वसदृशप्रत्यङ्गसमुदायरूपपुरुषजनकम् । आत्मजानि[३] इन्द्रियाणि च भोगसाधनानि आत्मप्रतिबद्धकर्माधीनानि[४] । तेन, पिता यदि

१ आत्मकर्मप्रतिबद्धकर्म्मजानीति पाठान्तरम् । २ भावाभावे हेतुर्दैवमिति पाठान्तरम् । ३ इन्द्रियजानीति पाठान्तरम् । ४ स्वार्थप्रतिबद्धकर्माधीनानीति पाठान्तरम् ।

कुष्ठ्यपि भवति, बीजं न दुष्टं भवति कुष्ठाधानत्वगादिजनकम्, ततो निष्कुष्ठान्येव त्वगादीन्यनुपतप्तत्वगादिबीजात् सदृशानि जायन्ते, यदा त्वतिवृद्धकुष्ठतया पित्रोर्बीजमपि कुष्ठजनकदोष दुष्टं भवति, तदा दुष्टत्वगादिबीजभागात् कुष्ठदुष्टैव त्वग् जायते । यदुक्तम्,—"दम्पत्योः कुष्ठबाहुल्याज्ज्ञेयं तदपि कुष्ठितम्" इति । एवं कुष्ठिनो यदि हेतुबलाद् बीजे कुष्ठजनको दोषो भवति, तदा कुष्ठिनोऽपि कुष्ठवदपत्यं भवति । अन्धत्वादाविन्द्रियोपघातरूपे दुर्दैवमेव कारणम् । तच्चान्धापत्येऽप्यवश्यमस्ति । तेन, यदाऽन्धेऽपत्येऽप्येवं पितृपूपघातकमशुभं भवति तदा काकतालीयन्यायादन्धजातोऽप्यन्धो दृश्यते । एवं कुब्जादौ जडादौ च व्याख्येयम् ॥ २५ ॥

**न चात्मा सत्स्विन्द्रियेष्वसत्सु वा भवत्यज्ञः । न ह्यसत्वः कदाचिदात्मा सत्वविशेषाच्चोपलभ्यते ज्ञानविशेष इति ॥ २६ ॥**

या चाज्ञत्वप्रसक्तिरात्मन्युक्ता, तत्राह—न चेत्यादि ।—इन्द्रियभावे तथेन्द्रियाभावेऽपि नित्यं ज्ञानवानेवात्मा इति प्रतिज्ञार्थः[2] । न ह्यसत्वः कदाचिदित्यत्र 'हि' शब्दो हेतौ । तेन, यस्मात् सर्वदा समनस्क एवात्मा । तेन, बाह्येन्द्रियाभावेऽप्यन्तःकरणमनोयोगात् नित्यमात्मा मनःकरणको ज्ञानवानेवायमित्यर्थः । यत्त्वेतद्बाह्यविषयगतं ज्ञानम्, तत् सत्वस्येन्द्रियाधिष्ठानविशेषाद्भवति । तेन, इन्द्रियभावे इन्द्रियजन्यं विशिष्टं ज्ञानं भवति । यत्तु केवलमनोजन्यमात्मज्ञानम्, तद् भवत्येव सर्वदा । तस्मायन्नित्यभावि मनोसन्निधिमात्रजन्यमात्मज्ञानम्, तत्सदैवास्ति ॥ २६ ॥

**भवति चात्र ॥**

**न कर्तुरिन्द्रियाभावात्कार्यज्ञानं प्रवर्तते**
**या क्रिया वर्त्तते भावैः[3] सा विना तैर्न वर्त्तते ॥२७॥**
**जानन्नपि मृदोऽभावात् कुंभकृन्न प्रवर्त्तते ।**

न चास्य ज्ञानजननशक्तिः पराहता भवतीत्याशयेनाह—न कर्तुरित्यादि ।—कार्यज्ञानमिति कार्यप्रवृत्तिजनकबाह्यविषयज्ञानम् । तेन, निर्विषयं ज्ञानमात्मन इन्द्रियाभावे भवतीति सूचयति । भावैरित्यत्र 'यैः' इति शेषः । वर्तते उत्पद्यते । अत्रैव दृष्टान्तमाह—जानन्नपीत्यादि ।—घटं कर्तुं जानन्नपीत्यादि योज्यम् । मृदो मृत्तिकाया अभावात् ॥ २७॥

**श्रूयतां चेदमध्यात्ममात्मज्ञानबलं महत् ॥ २८ ॥**
**इन्द्रियाणि च[4] संक्षिप्य मनः संक्षिप्य चञ्चलम् ॥**
**प्रविश्याध्यात्ममात्मज्ञः स्वे ज्ञाने पर्यवस्थितः ॥२९॥**

आत्मनो ज्ञत्वे साधनान्तरमाह—श्रूयतामित्यादि ।—आत्मानमधि अध्यात्मम्, तद्भवमध्यात्मम् । आत्मनो ज्ञानस्य बलमात्मज्ञानबलम् । संक्षिप्येति विषयेभ्यो व्यावर्त्त्य मनः संक्षिप्येति मनोऽप्यात्मव्यतिरिक्तविषयान्निगृह्य । चञ्चलमिति स्वभावः । स्वे ज्ञान इति आत्मज्ञाने । सर्वभावान् परीक्षत इति विनापीन्द्रियैः समाधिबलादेव यस्मात् सर्वज्ञो भवति। तस्माज्ज्ञस्वभाव एव निरिन्द्रियोऽप्यात्मा ॥ २८—२९ ॥

**सर्वत्रावहितज्ञानः[1] सर्वभावान् परीक्षते ।**
**गृह्णीष्व चेदमपरं[2] भरद्वाज विनिर्णयम् ॥ ३० ॥**
**निवृत्तेन्द्रियवाक्चेष्टः सुप्तः स्वप्नगतान् यदा ।**
**विषयान् सुखदुःखे च वेत्ति नाज्ञोऽप्यतः स्मृतः ॥३१**
**आत्मज्ञानादृते चैकं ज्ञानं किञ्चिन्न वर्त्तते ।**
**न ह्येको वर्तते भावो वर्त्तते नाप्यहेतुकः ॥ ३२ ॥**

अपरमपि लौकिकं निरिन्द्रियस्य ज्ञानसद्भावोदाहरणमाह गृह्णीष्वेत्यादि । स्वप्नगतान् स्वप्नदर्शनावस्थायां प्राप्तान् । आत्मज्ञानविषयज्ञानयोर्विशेषमाह—आत्मेत्यादि ।—आत्मज्ञानात् नित्यात् विना । किञ्चिज्ज्ञानं विषयजम् । एकमसहायम् । न वर्त्तते इन्द्रियादिकारणरूपसहायं विना नोत्पद्यते । आत्मज्ञानं च नित्यमेव सांख्येऽप्युक्तम्[3]—"चिच्छक्तिरपरिणामिनी" इत्यादिना "आत्मनः" इत्यन्तेन । अत्रोपपत्तिमाह—न ह्येको वर्तते भाव इति, भाव उत्पत्तिधर्मा एकः सन् कारणरहितः सन्न वर्तते । तेनोपपद्यते। तथा भावः कारणजन्यत्वे सत्यपि अहेतुक इति अकर्तृको न वर्त्तते किंतु कुम्भकाराधिष्ठितान्येव मृच्चक्रादीनि प्रवर्त्तन्ते । तस्माद्विषयज्ञानान्यपि इन्द्रियमनोऽर्थैस्तथा चात्मना जन्यन्त इति भावः॥ ३०—३२ ॥

**तस्माज्ज्ञः प्रकृतिश्चात्मा द्रष्टा कारणमेव च ।**
**सर्वमेतद्भरद्वाज निर्णीतं जहि संशयमिति ॥ ३३ ॥**

उपसंहरति—तस्मादित्यादि । अत्र चात्मनो ज्ञत्वाज्ञत्वं प्रसक्तोपपादितम् । सविकारणत्वमात्मनः नित्यज्ञानबलसाधनेन[4] परिहृतमिति न पृथक् परिहृतम् । 'भरद्वाज' शब्देनेह नात्रेयगुरुरुच्यते, किंतु अन्य एव भरद्वाजगोत्रः कश्चित् । तेन संशयच्छेदनमात्रेयेणोपपन्नमेव ॥ ३३ ॥

**तत्र श्लोकौ ॥**

**हेतुर्गर्भस्य निर्वृत्तौ वृद्धौ जन्मनि चैव यः ।**
**पुनर्वसुमतिर्या च भरद्वाजमतिश्च या ॥ ३४ ॥**
**प्रतिज्ञाप्रतिषेधश्च विशदश्चात्मनिर्णयः ।**
**गर्भावक्रान्तिमुद्दिश्य खुड्डीका तत् प्रकाशितम् ३५**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते खुड्डीकागर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥**

---

१ तच्च नचात्मापत्येष्ववश्यमस्तीति पाठान्तरम् । २ प्रतिज्ञातार्थ इति पाठान्तरम् । ३ यैः क्रिया वर्तते या त्विति पाठान्तरम् । ४ देहेन्द्रियाणीति पाठान्तरम् ।

१ सर्वत्रावहतज्ञानस्तथा सर्वत्राविहितज्ञान इति पाठान्तरद्वयम् । २ वेदमपरमिति पाठान्तरम् । ३ सांख्ये प्रोक्तमिति पाठान्तरम् । ४ नित्यज्ञानवत्त्वसाधनेनेति पाठान्तरम् ।

संग्रहे 'हेतु' शब्दो गर्भादिषु जन्मान्तेषु संबध्यते । प्रतिज्ञानिषेधो भरद्वाजकृतो ज्ञेयः । तत् साधनंच यदात्रेयस्य, तद्विशदश्चात्मनिर्णयः' इत्यनेनोक्तम् । 'तदिति सामान्येन मात्रादि प्रत्यवमर्षयन्नपुंसकम् ॥ ३४—३५ ॥

इति महामहोपाध्यायश्रीमचरकचतुराननचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां खुड्डीकागर्भावक्रान्तिव्याख्या ।

---

## चतुर्थोऽध्यायः ।

**अथातो महतीं गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**यतश्चः गर्भः संभवति यस्मिंश्च गर्भसंज्ञा यद्विकारश्च गर्भो यया चानुपूर्व्याऽभिनिर्वर्त्तते कुक्षौ यश्चास्य वृद्धिहेतुर्यतश्चास्याऽजन्म भवति यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति यतश्च कार्त्स्न्येनाविनश्यन्विकृतिमापद्यते, तदनुव्याख्यास्यामः॥३॥**

खुड्डीकागर्भावक्रान्तिप्रपञ्चत्वान्महत्या गर्भावक्रान्तेरनन्तरमभिधानम् । यत इति यतः कारणात् । यद्विकार इति यन्मय इत्यर्थः । ययाऽऽनुपूर्व्या येनानुक्रमेणेत्यर्थः । कार्त्स्न्येनाविनश्यन्निति मरणमगच्छन्निति ॥ १—३ ॥

**मातृतः पितृत आत्मतः सात्म्यतो रसतः सत्त्वत इत्येतेभ्यो भावेभ्यः समुदितेभ्यो गर्भः संभवति तस्य ये येऽवयवा यतो यतः संभवतः संभवन्ति, तान् विभज्य मातृजादीनवयवान् पृथक् पृथगुक्तमग्रे ॥ ४ ॥**

'मातृतः' इत्यादिना 'संभवति' इत्यन्तेन चोक्तं च मातृजादय एव प्रोक्ता इति वाक्यार्थः फलति । अयं च वाक्यार्थो यद्यपि पूर्वाध्याय एवोक्तः "मातृजश्चायम्" इत्यादिना, तथापि प्रश्नक्रमविशुद्ध्यनुरोधात्[1] पुनरिह कृतः । येन, प्रथमं कारणम्, तदनु कार्यरूपो धर्मोऽभिधेय इति क्रमेण[2] प्रश्नः शोभते ॥ ४ ॥

**शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति ॥ ५ ॥**

यत्तु "शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतम्" इत्यादिना, 'गर्भोऽभिनिर्वर्त्तते' इत्यन्तेनोक्तम्, तत्र, अयमसौ 'गर्भ' शब्दाभिधेयोऽर्थ इति नाभिहितमेव । तेन, न गर्भसंज्ञाऽभिधेयार्थव्याकरणं पुनरुक्तमेव । कुक्षिगत इति कुक्ष्येकदेशगतगर्भाशयगते । संयोग इति सम्यग्योगे । तेन, जीवस्यातिवाहिकशरीरेण योगः संगृह्यते, नत्वात्मनो व्यापकत्वेन यो योगो गर्भजनकः । एवंभूतसंयोगो यद्यपि कुक्षावेव भवति, तथापि सिद्धमेवार्थं शिष्यं प्रतिपादयितुं 'कुक्षिगते' इतिपदं कृतम् ॥ ५ ॥

**गर्भस्तु खल्वन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः। एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधात्वधिष्ठानभूतः । स ह्यस्य षष्ठो धातुरुक्तः ॥ ६ ॥**

गर्भस्त्वित्यादि ।—गर्भारम्भकाण्यपि भूम्यादीनि परित्यज्यान्तरिक्षमादौ कृतं वक्ष्यमाणभूतग्रहणानुरोधात् । वक्ष्यति हि—"सोऽन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते" इत्यादि । चेतनाधिष्ठानभूत इति आत्मनो भोगायतनस्वरूप इत्यर्थः । 'चेतना'शब्देन आत्मोच्यते । किंवा, 'भूत'शब्दः सादृश्ये, चेतनाधिष्ठानमिव शरीरमित्यर्थः । ननु परमार्थतोनिराश्रयस्यात्मनो भोगायतनत्वव्यतिरेकेण[1] शरीरमाश्रयो भवति । अनया युक्त्येति अनया भूतविकाररूपया[2] योजनया पञ्चमहाभूतसमुदायात्मको भवति,अनया युक्त्या कतिधापुरुषीयोक्तश्चतुर्विंशतिको[3] भवति, तथा मातृजादिरूपचिन्तया मात्रादिसमुदायात्मको भवतीत्यर्थः । न चैतेषां पक्षाणां विरोधोऽस्ति । यतः, मातृजादिव्यपदेशेऽपि पञ्चमहाभूतविकारत्वमविरुद्धमेव, येन, मातृजादयोऽप्यस्य महाभूतविकारा एव । उक्तं हि— "रसात्ममातापितृसम्भवानि । भूतानि विद्याद्दश षट् च देहे" इति । चतुर्विंशतिकत्वेऽपि च पञ्चमहाभूतात्मकरूपतैव तत्र प्रपञ्चिता । स हीत्यादि । अस्येति गर्भस्य ॥ ६ ॥

**यया चानुपूर्व्याभिनिर्वर्त्तते कुक्षौ, तदनुव्याख्यास्यामः—गते पुराणे रजसि नवे चावस्थिते शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुमतीमाचक्ष्महे । तया सह तथाभूतया यदा पुमानव्यापन्नबीजो मिश्रीभावं गच्छति, तदा तस्य हर्षोदुदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात् सम्भवति । स तथा हर्षभूतेनात्मनोदीरितश्चाऽधिष्ठितश्च बीजरूपो धातुः पुरुषशरीरादभिनिष्पत्योचितेन पथा गर्भाशयमनुप्रविश्यार्त्तवेन संसर्गमेति ॥ ७ ॥**

गत इति निवृत्ते । पुराण इति ऋतुकालातिक्रमसञ्चिते । नवे चावस्थित इतिवचनेन नवेऽप्यनवस्थिते गर्भकारणत्वं नास्तीति दर्शयति । शुद्धस्नातामित्यनेन शुद्धस्नातैव स्त्री गम्या नाऽस्नाता, अशुद्धत्वादिति दर्शयति । 'स्त्रायत्यस्यां गर्भ' इति स्त्री । अनेन वन्ध्यां निरस्यति । ऋतुमतीमित्यत्र प्रशंसायां मतुप् । तया सहेति तया स्त्रिया । तथाभूतयेति तादृग्-

---

१ प्रश्नक्रमानुरोधादिति पाठान्तरम् । २ गर्भोऽभिधेय इति क्रमेणेति पाठान्तरम् ।

१ भोगायतनव्यतिरेके इति पाठान्तरम् । २ कृतविकाररूपयेति पाठान्तरम् । ३ कतिधापुरुषीयोक्तया चतुर्विंशतिक इति पाठान्तरम्

तुयुक्त्या । हर्षः प्रीतिविशेषः । तेनोदीरितः प्रेरितः । पर इति सारः, किंवा, परकालोत्पन्नः परः । शुक्रं हि सर्वधातुभ्यः परमुत्पद्यते । शरीरधात्वात्मा इति शरीरधातुरूपः । शुक्रभूत इति शुक्रस्वरूप एवाङ्गादङ्गात् संभवति व्यज्यते । तेन, नाङ्गेभ्यः शुक्रमुत्पद्यते, किंतु शुक्ररूपतयैव स्थितं व्यज्यते । वचनं हि—"सर्वत्रानुगतं देहे शुक्रम्" इति । हर्षभूतेनेति, हर्षरूपेणात्मना उदीरितश्चाधिष्ठितश्चेत्यनेन, उदीरणकाले तथा निःसरणकालेऽपि हर्षमयाधिष्ठानं शुक्रस्य गर्भाशयप्राप्तिकारणं दर्शयति । यदि शुक्रप्रवृत्तिकाले पुरुषो हर्षरहितः स्यात्, न तदा सम्यक् शुक्रप्रवृत्तिः तथा वेगविघातान्न गर्भाशयप्रवृत्तिर्भवति । बीजरूपोधातुर्बीजधातुः शुक्रमिति । संसर्गं सम्यङ्मूर्च्छनम् ॥ ७ ॥

**तत्र पूर्वं चेतना धातुः सत्त्वकरणो गुणग्रहणाय प्रवर्त्तते, सहि हेतुः कारणं निमित्तमक्षरं कर्त्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्मा विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यः गुणी ग्रहणं प्रधानमव्यक्तं जीवोज्ञः पुद्गलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति। स गुणोपादानकालेऽन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते, प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूतः सत्त्वोपादानः पूर्वतरमाकाशं सृजति, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः, तथा देहग्रहणेऽपि प्रवर्त्तमानः पूर्वतरमाकाशमेवोपादत्ते, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः सर्वमपि तु खल्वेतद्गुणोपादानमणुना कालेन भवति ॥ ८ ॥**

सत्त्वं मनःकरणं यस्य स सत्त्वकरणः । आत्मा निष्क्रियत्वेन क्रियावता मनसा यत्कार्यं करोति, तच्च कार्यं मनसा क्रियमाणमप्यचेतनेन चेतनावत आत्मन एवोच्यते । वचनं हि—"चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते" । गुणग्रहणायेत्यत्र 'गुण'शब्देन गुणगुणिनोरभेदोपचारात् गुणवन्ति भूतान्युच्यन्ते । किंवा, गुणोऽप्रधानम्, प्रधानं चात्मा, तद्व्यतिरिक्तानि च भूतानि गुणाः । कस्मादात्मा भूतानि गृह्णात्यप्रधानरूपाणीत्याशङ्कायामात्मनः प्राधान्यख्यापकान् पर्यायानाह—स हीत्यादि । न क्षरतीत्यक्षरम् । गुणी भूतरूपगुणवानित्यर्थः । गृह्णाति भूतानीति ग्रहणम् । एतैः पर्यायैरात्मनोऽभिधेयस्येतरपदार्थोपकार्यत्वेनाश्रयत्वं प्रसिद्धं दर्श्यते । पूर्वतरं प्रथममेव । अन्येभ्यो गुणेभ्य इति वाय्वादिभ्यः । अत्र गर्भे भूतग्रहणक्रमे दृष्टान्तमाह—यथेत्यादि ।—प्रलयस्य महाप्रलयस्यात्यये इति सर्गे इत्यर्थः, सिसृक्षुरिति स्रष्टुमिच्छुः । भूतानि आकाशादीनि । सत्त्वोपादान इति मनःकरणः । महाप्रलये हि विकारस्य प्रकृतौ लयात् प्रकृतिपुरुषावेव परमव्यक्तरूपौ तिष्ठतः । ततश्च सर्गारम्भे प्रकृतेर्महदादिः प्रपञ्च उत्पद्यते क्रमेण । तत्र प्रथममाकाशमुत्पद्यते, ततो वाय्वादीनि व्यक्तानीति सांख्यसिद्धान्तः । आकाशस्य जन्यत्वं सांख्यमतेनैव ज्ञेयम् । देहग्रहणेऽपीति गर्भस्वरूपग्रहणेऽपीति । उपादत्त इति शुक्रशोणितगतमाकाशमाकाशमयतया स्वीकरोति। व्यक्ततरगुणानिति आकाशमेकगुणमपेक्ष्य शब्दस्पर्शगुणो वायुर्व्यक्ततरः, तमपेक्ष्य शब्दस्पर्शरूपगुणं तेजोव्यक्ततरमित्यादि । अयंच भूतग्रहणक्रम आगमसिद्ध एव, नात्र युक्तिस्तथाविधा हृदयङ्गमाऽस्ति । एतच्च भूतग्रहणं लघुनैव कालेन भवतीति दर्शयन्नाह—सर्वमित्यादि ।—॥ ८ ॥

**स तु सर्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः सर्वधातुकलनीकृतः खेटभूतो भवत्यव्यक्तविग्रहः सदसद्भूताङ्गावयवः ॥ ९ ॥**

**द्वितीये मासि घनः संपद्यते पिण्डः पेश्यर्बुदं वा । तत्र घनः पुरुषः, स्त्री पेशी, अर्बुदं नपुंसकम् ॥ १० ॥**

सर्वधातुकलनीकृत इति अव्यक्तसर्वधातुतया कलनीकृतः । 'धातु' शब्देन च भूतान्युच्यन्ते । किंवा, रसादिधातुबीजानि । खेटः श्लेष्मा । तेन, खेटभूत इति श्लेष्मभूत इत्यर्थः । अव्यक्तविग्रह इत्यस्य विवरणम्—सदसद्भूताङ्गावयव इति, विद्यमानाविद्यमानाङ्गावयव इत्यर्थः ।—अङ्गानां च बीजरूपस्थितत्वे सत्त्वम्, अव्यक्तभावाच्चासत्त्वम् । किंच सदसद्भूताङ्गावयवो घनः संपद्यते इति योजना । घनः कठिनः । पिण्डो ग्रन्थ्याकारः । पेशी दीर्घमांसपेश्याकारा । अर्बुदं वर्तुलोन्नतम् ॥ ९—१० ॥

**तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्ते ॥ ११ ॥**

अङ्गानि शिरःप्रभृतीनि, तदवयवाश्चेत्यङ्गावयवाः । यौगपद्येनेति वचनेन "कुमारस्य शिरःपूर्वमभिनिर्वर्त्तते" इत्यादिवक्ष्यमाणान्येकीयमतानि निषेधयति । यौगपद्येन हि सर्वाङ्गनिर्वृत्तिरिति सिद्धान्तः ॥ ११ ॥

**तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्वमुक्ता यथावत्, महाभूतविकारप्रविभागेन त्विदानीमस्य तांश्चैवाङ्गावयवान् कांश्चित् पर्यायान्तरेणापरांश्चानुव्याख्यास्यामः,—मातृजादयोऽप्यस्य महाभूतविकारा एव, तत्रास्याकाशात्मकं शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विरेकश्च । वाय्वात्मकं स्पर्शः स्पर्शनं च रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च**

१ परेणोत्पद्यते इति पाठान्तरम् । २ हर्षरूपतया वा तेनेति पाठान्तरम् । ३ बोधयितेति पाठान्तरम् ।

१ अव्यक्तविग्रह इत्यस्य ग्रहणमिति पाठान्तरम् । २ विवेकश्चेति पाठान्तरम् ।

**शारीर्यः । अग्न्यात्मकं रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यञ्च । अबात्मकं रसो रसनं शैत्यं मार्दवं स्नेहः क्लेदश्च । पृथिव्यात्मकं गन्धो घ्राणं गौरवं स्थैर्यं मूर्तिश्च ॥ १२ ॥**

केचिदिति न सर्वे । तत्र मातृजाद्यङ्गकथनेन शब्दादयो ये इह भूतविकारत्वेन वक्ष्यन्ते, ते न सर्वे प्रोक्ताः, किंच केचिदेव त्वगादयः । पर्यायान्तरेणेतिवचनात्, ये मातृजादयः "त्वक् च लोहितं च" इत्यादिनोक्ताः, त इह न साक्षाद्वक्तव्याः, किंतु ये त्वग्गता मूर्तिस्नेहमार्दवादयः, ते भूतजन्यत्वेनोच्यमानास्त्वचोऽभिधायका भवन्ति । एवं शोणितगतभूतविकारकथनेन शोणितकथनं ज्ञेयम् । त्वगादयो भूतविकारा वक्ष्यमाणा इति विकारसमुदायरूपा एव । अङ्गानां च मातृजरूपेण यदभिधानम्, तत् मात्रधीनत्वप्रतीत्यर्थम् । पुनश्चेह भूतजन्यत्वेनाभिधानमङ्गानां क्षये वा वृद्धौ वा सत्यां तत्कारणभूतोपयोगप्रतिषेधाभ्यां वृद्धिक्षयजननज्ञानार्थम् ।—यदङ्गं यद्भूतप्रभवम्, तदङ्गं तद्भूतप्रधानेन द्रव्येण वर्द्धते, क्षीयते च तद्विपरीतेन । लाघवं यद्यपि वायौ पठन्ति,—"रूक्षः शीतो लघुश्चैव" इत्यादिना, तथापि, आकाशाल्लाघवं प्रधानं ज्ञेयम्, तेन, इहाकाशविकारे पठन्ति । आकाशं हि अत्यर्थसूक्ष्मत्वाच्चातिलघु । विरेको विच्छेदः । धातुव्यूहनं धातुरचना धातुवर्द्धनं च । दृश्यतेऽनेनेति दर्शनं चक्षुरिन्द्रियम् । मूर्तिः काठिन्यम् ॥ १२ ॥

**एवमयं लोकसंमितः पुरुषः—यावन्तो हि लोके भावविशेषाः, तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके इति बुधास्त्वेवं द्रष्टुमिच्छन्ति ॥ १३ ॥**

एतद्भूतविकारमयत्वं शरीरस्य लोकमयस्य चेति यज्ज्ञानम्[१] तन्मोक्षस्यापि परमाभीष्टस्य कारणं भवतीति लोकसाम्यं दर्शयन्नाह—एवमेयमित्यादि ।—एवमयमिति, पञ्चभूतविकारमयत्वेन लोकसंमित इति लोकतुल्यः । इह च भूतविकारमयत्वं च यच्छरीरस्योक्तम्, तेन, भूतविकारमयत्वमधिकृत्य सादृश्यमुक्तम् । लोकपुरुषयोः साम्यमाध्यात्मिकम्, लोकपुरुषयोः साम्यं पुरुषविचये वक्तव्यम्, तदपीहानुक्तमपि "यावन्तो हि" इतिविशेषणाभिधानेन सूचितं ज्ञेयम् । तेन, यावन्तो भावविशेषा आध्यात्मिका वा अन्तरात्मसत्वाहङ्कारादयो भौतिका वा मूत्रक्लेदादयः, ते पुरुषगता लोकेनापि समाना इति ज्ञेयम् । एतच्च लोकपुरुषयोः साम्यं पुरुषविचये वक्तव्यं भविष्यति । एतच्च लोकपुरुषयोः साम्यकथनं मुमुक्षूणामेवोपयुक्तमिति दर्शयन्नाह—बुधास्त्वेवमित्यादि ।—बुधाः सम्यग्ज्ञानवन्तो मोक्षयुक्ता इति यावत् । लोकपुरुषसाम्यकथनं च मोक्षार्थमेवेति पुरुषविचये स्वयमेव वक्ष्यति ॥ १३ ॥

१ लोकमयस्य न ज्ञातं यन्नेति पाठस्तु न समीचीनतया प्रतिभाति ।

**एवमस्येन्द्रियाण्यङ्गावयवाश्च यौगपद्येनाभिनिर्वर्त्तन्ते अन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते, तद्यथा—दन्ता व्यञ्जनानि व्यक्तीभावः तथा युक्तानि चापराण्येषा प्रकृतिः । विकृतिः पुनरतोऽन्यथा सन्ति खल्वस्मिन् गर्भे केचिच्च नित्या भावाः, सन्ति चानित्याः केचित् । तस्य य एवाङ्गावयवाः सन्तिष्ठन्ते, तएव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति । तत्र स्त्रीपुरुषयोर्ये वैशेषिका भावाः प्रधानसंश्रया गुणसंश्रयाश्च, तेषां यतो भूयस्त्वं ततोऽन्यतरभावः तद्यथा—क्लैव्यं भीरुत्वमवैशारद्यमनवस्थानमधोगुरुत्वमसहनं शैथिल्यं मार्दवं तथा युक्तानि चापराणिस्त्रीकराणि । अतो विपरीतानि पुरुषकराणि, उभयभागावयवा नपुंसककराणि ॥ १४ ॥**

प्रकृतिं तृतीयमासभवामिन्द्रियाद्यङ्गाभिनिर्वृत्तिमुपसंहरति एवमस्येत्यादि । युगपदेव[१] यौगपद्यमित्यभिधानं इन्द्रियैरपि सर्वाङ्गाभिनिर्वृत्तेः समकालतोपदर्शनार्थम् । किं दन्तादयोऽपि तृतीयमासे भवन्तीत्याशङ्क्याह—अन्यत्रेत्यादि । व्यञ्जनानि श्मश्रुस्तनादीनि । व्यक्तीभावः शुक्ररजसोराविर्भावः । तथा युक्तानीति जातोत्तरकालत्वेन स्थूलमांसादीनि । एषा प्रकृतिरिति इन्द्रियाण्यङ्गानि च युगपद् भवन्ति, दन्तादयश्च जातस्यापि चिरेण भवन्तीत्येवंरूपो मनुष्यस्वभाव इत्यर्थः । अन्यथेति कदाचित् सदन्त एव जायते इत्यादिका विकृतिर्मनुष्यस्य । कस्माद्दन्तादयो गर्भादिजायमानत्वेन नित्यत्वेन नोच्यन्त इत्याह सन्तीत्यादि ।—'खलु' शब्दो हेतौ । नित्या इति यावच्छरीरभाविनः करचरणादयः अनित्याश्च न यावच्छरीरभाविनो दन्तादयः । एतेन, अनित्यस्वभावाद्दन्तादीनां—गर्भादिजायमानत्वान्न नित्यत्वम् । विकृतिरिति अनित्यत्वयुक्तमित्यर्थः । अथ नित्यानित्येषु मध्ये के स्त्र्यादि लिङ्गं बिभ्रतीत्याह—तस्येत्यादि —सन्तिष्ठन्त इति यावच्छरीरं तिष्ठन्ति नित्याः सन्तीति यावत् । एतेन, य एव नित्या उपस्थादयः, त एव स्त्रीलिङ्गतां पुंलिङ्गतां वा बिभ्रति । तत्रोपस्थरूपो नित्यो भावः स्त्रीलिङ्गं शेफश्च, उपस्थलिङ्गाकाररहितं च रन्ध्रमात्रं नपुंसकलिङ्गं भवति । किंवा, स्त्रिया यल्लिङ्गं स्तनादि, पुरुषस्य वा श्मश्रुप्रभृति, नपुंसकस्य वा स्त्रीपुंसमानाकारत्वं जातोत्तरकालभावि, तदपि, य एव नित्या भावा उरःकपोलप्रभृतयः, त एव कालवशाद्बिभ्रतीति वाक्यार्थः । उर एव हि स्तनारम्भकबीजयुक्तं स्त्रिया उत्तरकालं स्तनवद्भवति । एवं कपोल एव श्मश्रुबीजयुक्तः श्मश्रुवान् भवति । न तद्युक्तम् ।—यतः, स्तनश्मश्रुप्रभृतीनां बीजंचेदस्ति शरीरे, तत् किं गर्भात् प्रभृति स्तनादि न जायत इति चेत् ? न, यतः बीजमहिमाऽयम्, य उत्तरकाल एव कार्यं करोति । अथवा, न पतितमपि

१ युगपद्भवमिति पाठान्तरम् ।

धान्यादिबीजं प्रस्तारे[1] वाऽङ्कुरं जनयति । न च स्वभावमुपालम्भमर्हति । यदैवाङ्गावयवाः सन्ति, तदैव स्त्र्यादिलिङ्गं विभ्रतीत्यादिपाठपक्षे तु व्यक्त एवार्थः । अथ कुमारे शुक्रादौ कारणे स्त्र्यादिविशेषो भवतीत्याह—वैशेषिका इति, वैशेषिका विशिष्टाः परस्परव्यावृत्ता इति यावत्।प्रधानसंश्रया इति आत्मसंश्रयाः। गुणसंश्रया इति शुक्रशोणितगतभूतसंश्रयाः। गुणशब्देन हि भूतान्युच्यन्ते । 'यतः' इति सप्तम्यां तसिः। तेन, यस्मिन् वैशेषिकभावे भूयस्त्वं दैववशाद्भवति, ततो भावादन्यतरस्य स्त्रीरूपस्य पुंरूपस्य वा गर्भस्य उत्पत्तिर्भवति । यदि स्त्रीकरा भावा क्लैब्यादयो भूयांसो भवन्ति, तदा स्त्री जायते, विपर्यये पुमानित्यर्थः । अवैशारद्यं मोहः । शैथिल्यमनिबिडसंयोगता, यथा—दृढशणतन्तुविरलवापितपटस्य शैथिल्यम् मार्दवं तु निबिडसंयोगस्यादि सहजावयवमार्दवम्, यथा—पट्टसूत्रे निरन्तरवापितपटस्य[2] मृदुत्वम् । क्लैब्यायनवस्थानपर्यन्तं प्रधानसंश्रयम्, शेषं गुणसंश्रयम् । तथा युक्तानीत्यनेन, योनिबीजभागादीनि ग्राहयति । एतेन, अधोगुरुत्वादयो रक्ताधिक एव भवन्तीति ज्ञेयम् । तेन, "रक्तेन कन्यामधिकेन" इति यदुक्तम्, तदनेन समं न विरुद्धं भवति । विपरीतान्यक्लैव्यादीनित्यर्थः । उभयभागावयवा इति स्त्रीपुरुषकारका अवयवाः। नपुंसककराणीति नपुंसकनिर्देशोऽव्यक्तगुणाभिप्रायेण । तेन, प्रथमं नपुंसककराणीति अव्यक्तगुणसन्देहाभिप्रायेण प्रयुक्तम्, ततः कानि तानीत्यपेक्षया विशेषपरिग्रहादुभयभागावयवा इति पुंलिङ्गेन निर्देशो ज्ञेयः ॥ १४॥

**तस्य यत्कालमेवेन्द्रियाणि सन्तिष्ठन्ते, तत्कालमेव चेतसि वेदनानिबन्धं प्राप्नोति । तस्मात्तदा प्रभृति गर्भः स्पन्दते प्रार्थयते च, तद्द्वैहृदयमाचक्षते वृद्धाः । मातृजं चास्य हृदयं मातृहृदयेन संबद्धं भवति रसवाहिनीभिः संवाहिनीभिः । तस्मात्तयोस्ताभिर्भक्तिः संपद्यते । तच्चैव कारणमवेक्षमाणा न द्वैहृदयस्य विमानितं गर्भमिच्छन्ति कर्त्तुम् । विमानने ह्यस्य दृश्यते विनाशो विकृतिर्वा । समानयोगक्षेमा हि माता तदा गर्भेण केषुचिदर्थेषु । तस्मात् प्रियहिताभ्यां गर्भिणीं विशेषेणोपचरन्ति कुशलाः ॥ १५ ॥**

सन्तिष्ठन्त इति अभिनिर्वर्त्तन्ते । वेदना सुखदुःखोपलब्धिः। निबन्धं प्राप्नोतीतीन्द्रियोदयादेव समकालमेव सुखदुःखज्ञो भवतीति वाक्यार्थः । तस्मादिति सुखदुःखसम्बन्धात्, सुखोत्पादनार्थं दुःखपरिहारार्थं च स्पन्दते चलति,तथा प्रार्थयते च सुखहेतून् जन्मान्तरानुभूतानित्यर्थः[3]। तद्गर्भप्रार्थनायुक्तं मातृहृदयं द्वैहृदयम् । वृद्धा इति ज्ञानवृद्धा आचक्षते । द्विहृदयस्य भावात् द्वैहृदयम्—मातृहृदयं गर्भहृदयेन समं हृदयद्वयं भवति । ननु गर्भहृदयेन समं हृदयद्वयं भवति । कथं गर्भहृदयं सम्बद्धं भवतीत्याह—मातृजमिति, मातृकारणकार्त्तवजम् । रसवाहिनीभिरिति गर्भपोषणार्थाभिः मातृहृदयगर्भनाडीप्रतिबद्धाभी रसवाहिनीभिः । एतेन, यद् गर्भः प्रार्थयते, तत् प्रार्थनया रसवाहिनीभिः हृदयमागतया मातापि तावत् प्रार्थनावती भवति एवं मातृप्रार्थनयापि गर्भः प्रार्थनावान् भवति। तयोरिति मातृगर्भयोः। भक्तिरिच्छा।आभिरिति रसवाहिनीभिः। स्पन्दत इति मातृहृदयाद्गर्भहृदयमित्यर्थः । गर्भस्य विनाशो विकृतिर्वेति—महता इच्छाविघातेन विनाशः, स्वल्पेन च विकृतिः किंवा गर्भेच्छापूर्विका मातुरिच्छा, तद्विघातेन विनाशो गर्भस्य, सा हीच्छा विहता साक्षाद्गर्भसम्बन्धितया सुकुमारतरं गर्भं वातप्रकोपाद्विनाशयति । या तु मातुरिच्छा विहता, सा मातरि वातक्षोभं जनयतीति समानयोगक्षेमे गर्भेऽपि मनाग्विकृतिजननाद्विकृतिं जनयति । एतदेव दर्शयति—समानयोगक्षेमा हीत्यादि ।—योगः सुखहेतुयोगः क्षेमः प्रत्यवायपरिहारः, एतौ योगक्षेमौ मातुर्गर्भेण समानौ भवतः । केषुचिदर्थेष्वितिवचनादतुल्ययोगक्षेमता च क्वचिद्भवतीति दर्शयति । तेन, नावश्यं मातुर्विकाराः क्षुदादयो गर्भे विकृतिमावहन्ति, गर्भस्य वा मातरीति । गर्भिणीं विशेषेणेतिवचनादगर्भिण्यपि स्त्री ऋतुकाले प्रियहितोपचारणीया । यदुक्तम्—"सहचर्य्यश्चैनां प्रियहिताभ्यां सततमुपचरेयुः" इत्यादि ॥ १५ ॥

**तस्या गर्भापत्तेर्द्वैहृदयस्य च विज्ञानार्थं लिङ्गानि समासेनोपदेक्ष्यामः । उपचारसाधनं ह्यस्याज्ञाने दोषः । ज्ञानं च लिङ्गतः । तस्मादिष्टो लिङ्गोपदेशः, तद्यथा—आर्त्तवादर्शनमास्यसंस्रवणमनन्नाभिलापः छर्दिररोचकोऽम्लकामता च विशेषेण, श्रद्धाप्रणयनश्चोच्चावचेषु भावेषु, गुरुगात्रत्वम्, चक्षुषो ग्लानिः, स्तनयोः स्तन्यमोष्ठस्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थम्, श्वयथुः पादयोरीपल्लोमराज्या योन्याश्च चाटालत्वमिति गर्भे पर्यागते रूपाणि भवन्ति ॥ १६ ॥**

**सा यद्यदिच्छेत्तत्तदस्यै दद्यादन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः ॥ १७ ॥**

उपचारसाधनं यथोचितोपचारकरणम् । अस्येति गृहीतस्य गर्भस्य तथा द्वैहृदयस्य च । तत्र गृहीतगर्भोपचारो[4] यथा—"शङ्किता चेत् गर्भमापन्ना क्षीरमनुपस्कृतं काले काले पिबेत्" इत्यादि । द्विहृदयोपचारश्चात्रैव वक्ष्यति । ज्ञानमिह गर्भस्य द्विहृदयस्य च ज्ञानम् । अम्लकामता विशेषेणेति च्छेदः । श्रद्धा इच्छा । उच्चावचेष्विति उच्चनीचेषु, भक्षणीयत्वेन कृतेषु

१ प्रस्तारस्तृणवनम् । २ निरन्तरवापितकर्म पटस्येति पाठान्तरम् ।
३ जन्मान्तरानुभूतानीत्यर्थ इति पाठान्तरम् ।

१ गर्भे इति पाठान्तरम् । २ गृहीतोपचार इति पाठान्तरम् ।

चाकृतेषु चेलर्थः। ईषत् पादयोः श्वयथुः । चाटालत्वं सविक्षतत्वम् । तेन एतानि च लक्षणानि तृतीयमासयुक्तानि च द्वैहृदयस्य च लिङ्गानि भवन्तीति ज्ञेयम् ॥ १६—१७ ॥

**गर्भोपघातकरास्त्विमे भावाः, तद्यथा—सर्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टा । इमांश्चान्यानुपदिशन्ति वृद्धाः। देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृयान्न मदकराणि चाद्यान्यभ्यवहरेन्न यानमधिरोहेन्न मांसमश्नीयात् सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत्, यच्चान्यदपि किञ्चित् स्त्रियो विद्युः ॥ १८ ॥**

दारुणाश्चेष्टाः व्यवायादिकाः । देवतारक्षोऽनुचरेभ्यः परिरक्षणम् । यदित्यादि ।—यच्चान्यत् स्त्रियः गर्भकालासेव्यत्वेन विद्युः, तदपि वर्जयेत् । वदन्ति हि स्त्रियः—"न गर्भिणी कूपमवलोकयेत्, न नदीपारं यायात्" इत्यादि । वृद्धस्त्रीवचनमप्यागममूलमेव, इह तु विस्तरभयान्न दर्शितमिति भावः ॥ १८ ॥

**तीव्रायां तु खलु प्रार्थनायां काममहितमप्यस्यै हितोपहितं दद्यात् प्रार्थनाविनयनार्थमिति । प्रार्थनासन्धारणाद्धि वायुः कुपितोऽन्तःशरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्यात् ॥१९॥**

प्रार्थना इति याञ्चा, तस्यास्तु तीव्रत्वं बलवदिच्छाजन्यमेव । हितोपहितमिति हितेन युक्तम् । किंवा, कल्पनया हितम् । प्रार्थनाया विनयनं विस्फोटनम्, तदर्थम् । स्फोटना च प्रार्थितलाभेनैवापयाति । प्रार्थनाऽविनयने दोषमाह—प्रार्थनेत्यादि ।—प्रार्थनायाः सम्यग्धारणं प्रार्थनासन्धारणम् । एतच्च स्तोकक्रमेणापि प्रार्थनादाने सति भवति, यथोक्तविधिना वा हितदाने सति इच्छा मनाक् समग्रा वा खण्डिता भवति । इच्छाविघातश्च मनःक्षोभकरभयादिकर्तृत्वाद्[२] वातप्रकोपको भवति । आपद्यमानस्येत्यनेन गर्भस्याततरुणत्वेन मनागपि वातक्षोभासहत्वं दर्शयति । वैरूप्यविनाशविकल्पस्तु वातप्रकोपप्रकर्षापकर्षकृतो ज्ञेयः ॥ १९ ॥

**चतुर्थे मासि स्थिरत्वमापद्यते गर्भः । तस्मात्तदा गर्भिणी गुरुगात्रत्वमधिकमापद्यते विशेषेण ॥२०॥**

तृतीयमासानुपूर्वीकथनप्रस्तावागतं गर्भस्य विशेषमभिधाय क्रमागतां चतुर्थमासानुपूर्वीमाह—चतुर्थ इत्यादि ।—स्थिरत्वमिति निविडत्वम् । अतएव निविडेन गुरुतरेण गर्भेणाक्रान्ता गर्भिणी गुरुगात्रा भवतीति युक्तम् ॥ २० ॥

**पञ्चमे मासि गर्भस्य मांसशोणितोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः । तस्मात्तदा गर्भिणी कार्श्यमापद्यते विशेषेण ॥ २१ ॥**

अधिकमन्येभ्य इत्यनेन मासान्तरेष्वपि स्तोकक्रमेण मांसादिवृद्धिं जनयति । येन शारीरेण भावेन गर्भ उपचीयते, तेन गर्भिणी हीयते इति युक्तमेव । यतः, गर्भमांसादिपोषणेनैव क्षीण आहाररसो[१] न मातुर्मांसादि सम्यक् पोषयति॥२१॥

**षष्ठे मासि गर्भस्य बलवर्णोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः । तस्मात्तदा गर्भिणी बलवर्णहानिमापद्यते विशेषेण ॥ २२ ॥**

बलवर्णयोरुपचयो बलवर्णोपचयः । किंवा, उपचयो धातुपुष्टिः, सर्वभावैरिति मांसशोणितादिभिः ॥ २२ ॥

**सप्तमे मासि गर्भः सर्वैर्भावैराप्यायते सहसा । तस्मात् तदा गर्भिणी सर्वाकारैः क्लान्ततमा भवति ॥ २३ ॥**

सप्तमे गर्भ आप्यायते, पूर्वेषु तु मासेषु न सर्वैः । युगपदिति शेषः । सर्वाकारैरिति सर्वमांसशोणितादिजन्यरूपैः । क्लान्ततमेति हीनतमा ॥ २३ ॥

**अष्टमे मासि गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिः संवाहिनीभिर्मुहुर्मुहुरोजः परस्परत आददाते गर्भस्यासंपूर्णत्वात् । तस्मात्तदा गर्भिणी मुहुर्मुहुर्मुदा युक्ता भवति मुहुर्मुहुश्च म्लाना तथा गर्भः, तस्मात्तदा गर्भस्य जन्मव्यापत्तिमद्भवत्योजसोऽनवस्थितत्वात् । तं चैवार्थमभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः ॥ २४ ॥**

अष्टम इत्यादि ।—रसवाहिनीभिरिति मातृहृदये गर्भनाड्यांच सम्बद्धाभीरसवाहिनीभिः । परस्परत ओज आददाते इति मातुरोजोगर्भ आदत्ते, गर्भस्य चौजो माता आदत्ते । ओजोऽनवस्थाने हेतुमाह—गर्भस्यासम्पूर्णत्वादिति, यस्माद्गर्भोऽसम्पूर्णः, तस्मादनिष्पन्नाश्रयं[२] गर्भौजोऽनवस्थितं भवति । मातुरोजो गर्भं गच्छतीति यदुच्यते, तद्गर्भौज एव मातृसम्बद्धं सन्मात्रोज इति व्यपदिश्यते । गर्भस्यासम्पूर्णत्वादिति हेतुः । सम्पूर्णत्वे मातृदेहतस्तस्योजसो गमने असङ्गतिः स्यात्, तथा, यथा गर्भौजसो मातर्यवस्थानसमये जन्म गर्भमरणकरं भवति, तथा मातुरोजसो गर्भावस्थाने सति यद् गर्भजन्म, तत्र मातुरपि मरणं स्यात् । न चैतदिष्टम् । येनोभयथापि गर्भस्यैवात्र मरणमुच्यते, न मातुः, "तदा गर्भस्य जन्म व्यापत्तिमद् भवति" इतिवचनेन । जतूकर्णेऽपि, अष्टमेऽपि जन्म गर्भविनाशायैव न मातुर्दर्शितम् । यदुक्तम्—"स्त्रीगर्भावन्योन्यस्य ओजसी हरतोऽष्टमे । तस्मात्तदा सूतिका गर्भविनाशायैव" इति । अन्ये तु वर्णयन्ति—यत्—"सत्यपि मातुरोजसो गर्भगमने जन्मादृष्टवशादेव गर्भस्यैव मरणाय भवति, न मातुः" । सुश्रुतव्याख्यातारस्तु—"अष्टममासे

१ सवासादिका इति पाठान्तरम्। २ मनःक्षोभकरभयवत्त्वादिति पाठान्तरम्।

१ क्षीण आहाररसे इति पाठान्तरम्। २ यस्मादनिष्पन्दाश्रयमिति पाठान्तरम्।

नैर्ऋतभागत्वाच्च गर्भस्य सत्यप्योजोऽनवस्थाने तुल्ये गर्भस्यैव नाशो न मातुः" इति वर्णयन्ति । गर्भिणी मुहुर्मुहुर्मुदा युक्ता भवतीति गर्भौजोयोगात् हर्षयुक्ता भवति, ओजोविगमात्तु मुहुर्मुहुर्ग्लाना भवतीति योज्यम् । तथा गर्भ इति गर्भिणीवद्गर्भोऽपि मुहुर्मुहुर्मुदायुक्तो भवति, मुहुर्मुहुर्ग्लानो भवति । तस्मादिति पूर्वोक्तं गर्भव्यापत्तिहेतुं साक्षाद्गूते । ओजसोऽनवस्थितत्वादिति । एतच्च व्याकृतमेव । अष्टममासस्य विशेषान्तरमाह—तच्चैवेत्यादि।—तच्चैवार्थमिति गर्भव्यापत्तियुक्तमर्थम्। अगण्यमिति न गणनया गर्भिण्यां प्रतिपादनीयम् । यदि हि गर्भिणी गण्यमानमष्टमं मासं गर्भजन्म व्यापत्तिकरं शृणुयात्। ततो भीता स्यात्, तद्भयाच्च गर्भस्य वातक्षोभात् व्यापत् स्यादिति भावः ॥ २४ ॥

**तस्मिन्नेकदिवसातिक्रान्तेऽपि नवमं मासमुपादाय कालमित्याहुरादशमान्मासादेतावान् कालः वैकारिकमतः परं कुक्षौ स्थानं गर्भस्य ॥ २५ ॥**

**एवमनयानुपूर्व्याभिनिर्वर्त्तते कुक्षौ ॥ २६ ॥**

तस्मिन्निति अष्टमे मासि । 'आदशमाद् इतिवचनं प्रशस्ततरप्रसवकालाभिप्रायेण । सुश्रुते द्वादशमासपर्यन्तं सम्यक्प्रसवकालाभिधानं स्तोकदोषयोरेकादशद्वादशमासयोरेवाल्पदोषत्वेनाऽदोषपक्ष एव निःक्षेपाद् वोद्धव्यम्। दत्तमुत्तरमुपसंहरति—एवमित्यादि ॥ २५—२६ ॥

**मात्रादीनांतु खलु गर्भकराणां भावानां सम्पदस्तथा वृत्तस्य सौष्ठवान्मातृतश्चैवोपस्नेहोपस्वेदाभ्यां कालपरिणामात् स्वभावसंसिद्धेश्च कुक्षौ वृद्धिं प्राप्नोति ॥ २७ ॥**

'यश्चास्य वृद्धिहेतुः' इति प्रश्नस्योत्तरम्—मात्रादीनांतु इत्यादि ।—'आदि'ग्रहणात् पित्रात्मसात्म्यसत्वानि "मातृजश्चायं पितृजश्चायम्" इत्यादिग्रन्थोक्तानि गृह्यन्ते । वृत्तस्य मातुराचाररूपस्य सौष्ठवं श्रेष्ठत्वं वृत्तसौष्ठवम् । 'मातृतः' इतिपदं वृत्तसौष्ठवेन तथा उपस्नेहोपस्वेदाभ्यां च सम्बध्यते । रससात्म्यसौष्ठवंतु मात्रादिसम्पदा लब्धमेव । उपस्नेहो धातुनिष्पन्नसम्बन्धः । उपस्वेदः शरीरस्योष्मणा परं गर्भस्य स्वेदनम् । उपस्वेदश्च गर्भवृद्धिकरो भवत्येव । यथा—अण्डजानां पक्षतेरुपस्वेदनं वृद्धिकरं दृष्टम् । कालपरिणामादिति यथा यथा कालप्रकर्षः, तथा तथा वर्द्धते गर्भः । वृद्धिहेत्वन्तरमाह | स्वभावसंसिद्धेश्चेति, स्वभावेनैव कर्मजन्येन गर्भो भवति वर्द्धिष्णुरित्यर्थः । कर्मणा हि भोगलक्षणशरीरनिर्वर्तकेनारभ्यमाणं गर्भशरीरं वर्द्धिष्णुस्वभावमेवारब्धम्,तेन वर्द्धत एव॥२७॥

**मात्रादीनां तु खलु गर्भकराणां भावानां व्यापत्तिनिमित्तमस्याऽजन्म भवति ॥ २८ ॥**

"कुतश्चास्याजन्म भवति" इत्यस्योत्तरम्,—मात्रेत्यादि । —व्यापत्तिनिमित्तमिति व्यापत्तिकारणम्, तत्र मातुर्व्यापच्छोणितगर्भाशयादिदुष्टिः, पितुर्व्यापच्छुक्रदुष्टिरित्याद्यनुसरणीयम् ॥ २८ ॥

**ये ह्यस्य कुक्षौ वृद्धिहेतुसमाख्याता भावास्तेषां विपर्ययादुदरे विनाशमापद्यतेऽथवाप्यचिरजातः ॥ २९ ॥**

"यतश्च जायमानः" इत्यादिप्रश्नस्योत्तरम्—ये ह्यस्येत्यादि ।—वृद्धिहेतुसमाख्याता भावाः, "मात्रादीनांतु खलु गर्भकराणां भावानां सम्पदः" इत्यादिग्रन्थोक्ताः । अथवाप्यचिरजात इति यदा मात्रादीनां सर्वथा दोषवत्त्वे विपर्ययोऽपि भवति, तदा विनाशमापद्यते गर्भः । यदा तेषां दोषवत्ताया असम्यग्विपर्ययो भवति, तदा अचिरजातो व्यापद्यत इति ज्ञेयम् ॥ २९ ॥

**यतस्तु कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते, तदनुव्याख्यास्यामः ॥ ३० ॥**

अवशिष्टस्य प्रश्नस्योत्तरं दर्शयितुमाह—यतस्त्वित्यादि।—अविनश्यन्नित्यत्र विनाशेन विकृतिरभिप्रेता, विकृतावपि 'विनाश'शब्दो दृष्टः । यथा—असच्छीलत्वेन विकृते पुरुषे 'विनष्टोऽयम्' इति व्यपदेशः । एवं च सत्येकदेशेनापि विकृतौ 'विनाश'शब्ददर्शने 'कार्त्स्न्येन' इति विशेषणं युक्तं भवति ॥ ३० ॥

**यदा स्त्रिया दोषप्रकोपणोक्तान्यासेवमानाया दोषाः प्रकुपिताः शरीरमुपसर्पन्तः शोणितगर्भाशयावुपपद्यन्ते न तु कार्त्स्न्येन न शोणितगर्भाशयौ दूषयन्ति, तदेयं गर्भं लभते स्त्री । यदा गर्भस्य तस्य मातृजानामवयवानामन्यतमो विकृतिमापद्यत एकोऽथवानेके । यस्य यस्य ह्यवयवस्य वीजे वीजभागे वा दोषाः प्रकोपमापद्यन्ते, तदा तं तमवयवं विकृतिराविशति । यदा ह्यस्याः शोणिते गर्भाशयवीजभागः प्रदोषमापद्यते, तदा वन्ध्यां जनयति । यदा पुनरस्याः शोणिते गर्भाशयवीजभागावयवः प्रदोषमापद्यते, तदा पूतिप्रजां जनयति । यदा त्वस्याः शोणिते गर्भाशयवीजभागावयवः स्त्रीकराणांच शरीरवीजभागानामेकदेशः प्रदोषमापद्यते, तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं रान्तां[1] नाम जनयति, तां स्त्रीव्यापदमाचक्षते ॥ ३१ ॥**

दोषप्रकोपणेनैव दोषप्रकोपणसेवायां लब्धायां पुनः दोषप्रकोपणोक्तान्यसेवमानायाः' इति पदम्, दोषाणां स्वहेतुसेवया न वलवन्तं प्रकोपं दर्शयितुम्, परहेतुसेवयापि हि स्तो-

१ अत ऊर्ध्वमवस्थानमिति पाठान्तरम् ।

१ वार्त्ता, राण्डेति च पाठान्तरद्वयम्।

क्रमान्नया अनुबन्धरूपो दोषकोपो भवति । यथा—अम्लेन पित्तं जन्यमानं श्लेष्मोपगतं जन्यते । 'नतु कात्स्न्येन दूषयन्ति' इति वचनेन, कात्स्न्येन दुष्ट्या गर्भजन्मैव न भवतीति दर्शयति । मातृजानामिति त्वग्लोहितादीनाम् । अन्यतम इति जातावेकवचनम् । तत्रैकोऽप्यवयवोऽन्यतमः, तथा अनेकेऽवयवाः 'अन्यतम'शब्देन प्रोक्ताः । अतएवैकोऽवयवानेक इत्यन्यतमविवरणमुपपन्नं[1] भवति । अन्यथा तु 'अन्यतम'पदेन एकस्यैवावयवस्य गृहीतत्वात् 'अनेक' इति करणमसङ्गतं स्यात् । कुतः पुनरेकस्यानेकस्य वा विकृतिर्भवतीत्याह—यस्येत्यादि ।—वीज इति कृत्स्न एवारम्भके । वीजभागे वेत्यवयववीजस्यैकदेशे । एतां विकृतिमेव स्फुटग्राहिकतया वक्तुमाह—यदेत्यादि ।—शोणित इत्यार्त्तवे । गर्भाशयजनको वीजभागो गर्भाशयवीजभागः, शोणितगतगर्भाशयवीजभागो गर्भाशयवीजभागः । किंवा, गर्भाशयस्य तथा वीजभागस्य चार्त्तवरूपस्य जनकः । गर्भाशयार्त्तवे च मातृजावयवमध्ये पतिते शोणितजन्ये एव । तेन, आर्त्तवेतरवीजभागस्य दुष्टिरुपपन्ना । आर्त्तवं च यद्यपि द्वादशवर्षादूर्ध्वं व्यज्यते, तथापि आर्त्तवोत्पत्तिर्गर्भकाल एव[2] भवति । येन सतामार्त्तवदन्तश्मश्रुप्रभृतीनां काले व्यक्तिर्भवति । तेन, आर्त्तवारम्भकस्यापि वीजस्य गर्भकाले प्रदोष उपपन्नः[3] । प्रदोष इत्यत्र 'प्र'शब्देन दुष्टिप्रकर्षं प्रकृष्ट[4]वन्ध्यतारूपकार्यजनकं दर्शयति । गर्भाशयस्य तथाऽऽर्त्तवस्य चोपघातेन स्त्रिया वन्ध्यत्वं व्यक्तमेव । गर्भाशयवीजभागावयव इत्यत्रापि पूर्ववद्व्याख्येयम् । 'अवयवशब्देन तु गर्भाशयस्य चार्त्तवस्य चैकदेश इहोच्यते । पूतिप्रजामिति म्रियमाणापत्यम् । अन्ये तु क्लिन्नाङ्गप्रत्यङ्गां पूतिमाहुः । स्त्रीकराणां शरीरवीजभागानामिति स्त्रीव्यञ्जकस्तनोपस्थलोमराज्यादिजनकवीजभागानाम्[5] । अस्त्रियमित्यसंपूर्णलक्षणाम् । रान्ता नामेति 'रान्ता'संज्ञा शास्त्रसमयकृता । स्त्रीनिमित्तार्त्तवदोषकृतव्यापत् स्त्रीव्यापत् । एवं तां पुरुषव्यापदमाचक्षते इत्यत्रापि पुरुषव्यापद्व्याख्येया ॥ ३१ ॥

**एवमेव पुरुषस्य यदा वीजे वीजभागः प्रदोषमापद्यते, तदा वन्ध्यं जनयति । यदा पुनरस्य वीजे वीजभागावयवः प्रदोषमापद्यते, तदा पूतिप्रजां जनयति । यदा त्वस्य वीजे वीजभागावयवः पुरुषकराणां च शरीरवीजभागानामेकदेशः प्रदोषमापद्यते-तदा पुरुषाकृतिभूयिष्ठमपुरुषं तृणपूत्रिकं[6] नाम जनयति, तां पुरुषव्यापदमाचक्षते ॥ ३२ ॥**

वीज इति शुक्रे । शुक्ररूपवीजजनको भागो वीजभागः । इह वन्ध्यमित्यनेन पुरुषवन्ध्यं ब्रूते, इह तु पूतिप्रजाव्याख्या पूर्ववत् । अपुरुषमिति असमस्तपुरुषलक्षणयुक्तम् । 'तृणपुत्रिक' संज्ञापि शास्त्रसमयसिद्धैव । रान्तातृणपुत्रिकयोर्व्यवायेच्छा परं भवति, नतु व्यवायसामर्थ्यमिति ब्रुवते ॥ ३२ ॥

**एतेन मातृजानां पितृजानां चावयवानां विकृतिव्याख्यानेन सात्म्यजानां रसजानां सत्वजानां चावयवानां विकृतिर्व्याख्याता ॥ ३३ ॥**

एवं मातापितृजावयवविकृतिं व्याख्याय सात्म्यरससत्वजावयवविकृतिव्यपदेशार्थमाह—एतेनेत्यादि ।—सात्म्यविभ्रमात्तु सात्म्यजानामारोग्यानालस्यादीनामन्यतमेन हीयते । एवं रससत्वयोरप्युन्नेयम् ॥ ३३ ॥

**निर्विकारः परस्त्वात्मा सर्वभूतानां निर्विशेषसत्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः ॥ ३४ ॥**

आत्मजोऽप्ययं गर्भ उक्तः, तत् कथमिह तद्विकृत्या विकृतिर्गर्भस्य नोच्यत इत्याह—निर्विकार इत्यादि ।—पर इत्यनेन मनःशरीरादिसमुदायादात्मानं व्यवच्छिनत्ति । सर्वभूतानां निर्विशेष इति, सर्वेषु भूतेषु वर्त्तमानोऽप्ययं परमात्मा तुल्यएव । यस्तु तत्र सुखदुःखादिविशेष[1] उपलभ्यते, स शरीरविशेषस्य तथा मनोविशेषस्य च सुखदुःखादिविशेषकारणस्य विशेषादुपलभ्यते । एतदेव 'शरीरसत्वयोस्तु' इत्यादिनोक्तम् । सुखादयस्तु न परमात्मविकाराः, किंतु धर्मा एवेति दर्शितमेव । यानि चात्मजत्वेन गर्भे "तासु तासु योनिषु उत्पत्तिः" इत्यादिना ग्रन्थेनात्मजानि दर्शितानि, तान्यपि परमात्मविकारा न भवन्ति, किंतु सत्त्वरजस्तमःप्रबलतारूपविकारजमनोजन्यधर्माधर्मजन्यान्येव । तेन, सूक्ष्मचिन्तायामात्मजान्यपि यान्युक्तानि, तानि सत्वजान्येव । ततश्चेहात्मजावयवविकारोऽपि सत्वजावयवविकार एव बोद्धव्य इति भावः ॥ ३४ ॥

**तत्र त्रयः शरीरदोषा वातपित्तश्लेष्माणः, ते शरीरं दूषयन्ति । द्वौ पुनः सत्वदोषौ रजस्तमश्च, तौ सत्वं दूषयतः । ताभ्यां च सत्वशरीराभ्यां दुष्टाभ्यां विकृतिरुपजायते, नोपजायते चाप्रदुष्टाभ्याम् ॥ ३५ ॥**

'शरीरसत्वयोस्तु' इत्यादिना शरीरमनसी दुःखरूपविकारेऽपि कारणमुक्ते । तत्रैव च यैर्दोषैः शरीरम्, मनश्च याभ्यां दोषाभ्यां युक्तम् दुःखकारणम् भवति, तानाह–तत्र त्रय इत्यादि ।–विकृतिरुपजायत्त इति शारीरमानसरोगरूपं जायते ॥ ३५ ॥

**तत्र शरीरं योनिविशेषाच्चतुर्विधमुक्तमग्रे ॥ ३६ ॥**

संप्रति, 'शरीरसत्वयोस्तु विशेषाद् इत्यनेन दर्शितान्

---

१ इत्यन्तमविकरणमुपपन्नमिति पाठान्तरम् । २ कालोत्पत्तिर्गर्भकाल एवेति पाठान्तरम् । ३ उत्पन्न इति पाठान्तरम् । ४ प्रकृष्टवदिति पाठान्तरम् । ५ स्तनलोमराज्यादिजनकवीजभागानामिति पाठान्तरम् । ६ तृणपुलिकमिति पाठान्तरम् ।

१ भूतज्ञानादिविशेष इति पाठान्तरम् ।

शारीरसत्वविशेषानेवाह तत्रेत्यादि । चतुर्विधमिति जरायुजाण्डजोद्भिज्जस्वेदजम् । 'अग्रे' इति खुड्डिकायाम् ॥ ३६ ॥

त्रिविधं खलु सत्वं शुद्धं राजसं तामसमिति । तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात् । राजसं सदोषमाख्यातं रोषांशत्वात् । तामसमपि सदोषमाख्यातं मोहांशत्वात् । तेषां तु त्रयाणामपि सत्वानामेकैकस्य भेदाग्रमपरिसङ्ख्येयं तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च, शरीरमपि सत्वमनुविधीयते सत्वंच शरीरम् । तस्मात्कतिचित्सत्वभेदाननूकाभिनिर्देशेन निदर्शनार्थमनुव्याख्यास्यामः—॥ ३७ ॥

कल्याणांशत्वादिति शुभरूपांशत्वात् । मनो हि कल्याणभागरोषभागमोहभागैस्त्रिभागम् । तत्र रोषांशतमोंऽशौ सदोषौ अधर्मरूपतया । भेदाग्रमिति भेदप्रमाणम् । तरतमयोगादिति शुचितरशुचितममनोभेदयोगात् । शरीरविशेषाः । बालयुवशरीरादिविशेषा योनिविशेषास्तु मनुष्यपश्वादिजातिविशेषाः । किंवा, शरीरस्य नरपश्वादिजातिविशेषाः । शरीरयोनिविशेषाः, तेभ्यः । अथ शरीरभेदाद्वा कथं मनोभेदो भवतीत्याह—अन्योन्यानुविधानाच्च । एतदेव विभजते शरीरमपीत्यादि ।—सत्वानुरूपं शरीरं भवति, यदि शुद्धसत्वं भवति, तदा देवादिशरीरं भवति इत्यादि, तथा शरीरानुरूपं च सत्वं भवति । यथा—पशुशरीरे तामसम्, मनुष्यशरीरे राजसम्, देवशरीरे सात्विकमिति ज्ञेयम् । किंवा, अन्योन्यानुविधानादिति सत्वरजस्तमसां परस्परानुविधानादित्यर्थः । अस्मिन् पक्षे शरीरं ह्यपि 'सत्वमनुविधीयते' इत्यादिना व्यवहितमपि शरीरानुविधानं मनसो दुर्बोधत्वात् व्याख्येयम् । सत्वभेदानिति मनोभेदान् । अनूकाभिनिर्देशेन सादृश्यनिर्देशेन ॥ ३७ ॥

तद्यथा—शुचिं सत्याभिसन्धं जितात्मानं संविभागिनं ज्ञानविज्ञानवचनप्रतिवचनसम्पन्नं स्मृतिमन्तं कामक्रोधलोभमानमोहेर्ष्याहर्षामर्षापेतं समं सर्वभूतेषु ब्राह्मं विद्यात् ॥ ३८ ॥

इज्याध्ययनव्रतहोमब्रह्मचर्यपरमतिथिव्रतमुपशान्तमदमानरागद्वेषमोहलोभरोषं प्रतिवचनविज्ञानोपधारणशक्तिसम्पन्नमार्षं विद्यात् ॥ ३९ ॥

ऐश्वर्यवन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं तेजसोपेतमक्लिष्टकर्माणं दीर्घदर्शिनं धर्मार्थकामाभिरतमैन्द्रं विद्यात् ॥ ४० ॥

लेखास्थवृत्तं प्राप्तकारिणमसंप्रहार्यमुत्थानवन्तं स्मृतिमन्तमैश्वर्यलम्भिनं व्यपगतरागद्वेषमोहं याम्यं विद्यात् ॥ ४१ ॥

शूरं धीरं शुचिमशुचिद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्माणं स्थानकोपप्रसादं वारुणं विद्यात् ॥ ४२ ॥

स्थानमानोपभोगपरिवारोपसम्पन्नं धर्मार्थकामनित्यं शुचिं सुखविहारं स्थानकोपप्रसादं कौवेरं विद्यात् ॥ ४३ ॥

प्रियनृत्यगीतवादित्रोल्लापश्लोकाख्यायिकेतिहासपुराणेषु कुशलं गन्धमाल्यानुलेपनवसनस्त्रीविहारनित्यमनसूयकं गान्धर्वं विद्यात् ॥ ४४ ॥

इत्येवं शुद्धस्य सत्वस्य सप्तविधं भेदांशं विद्यात् कल्याणांशत्वात्, तत्संयोगात्तु ब्राह्ममत्यन्तशुद्धं व्यवस्येत् ॥ ४५ ॥

संविभागिनमिति सम्यक्फलविभजनशीलम् । अतिथौ यथोचितसपर्यादिकयुक्तम्[1] व्रतमाचरतीति अतिथिव्रतः । लेखा कर्त्तव्याकर्त्तव्यमर्यादा तत्र स्थितं वृत्तं यस्य स लेखास्थवृत्तः, तमलङ्घितकर्त्तव्याकर्त्तव्यमित्यर्थः । असंप्रहार्यमित्यशक्यवारणम् । ऐश्वर्यं लभत इति ऐश्वर्यलम्भी । स्थाने उचिते कोपः प्रसादश्च यस्य, स स्थानकोपप्रसादः । सुखविहारमिति सुखक्रीडम् । उल्लापः स्तोत्रम् । विहारः क्रीडा, किंवा, स्त्रीभिः समं विहरणं स्त्रीविहारः । गान्धर्वमिति गान्धर्वसत्वम् । एवं ब्राह्ममित्यादावपि ज्ञेयम् । एवंच ब्राह्मादिभिः सत्ववाचकैः पदैरेवं प्रत्यवमृष्टैः सत्वस्य सप्तविधभेदकथनं समानकारणादुपपन्नं भवति । शुद्धस्येति सत्त्वगुणबहुलस्य[3]; अथ कथमेते ब्राह्मादयः शुद्धसत्वस्यैव भेदा इत्याह कल्याणांशत्वादिति । तत्-संयोगादिति कल्याणांशस्य सम्यग्योगात् ॥ ३८–४५ ॥

शूरं चण्डमसूयकमैश्वर्यवन्तमौपधिकं रौद्रमननुक्रोशमात्मपूजकमासुरं विद्यात् ॥ ४६ ॥

अमर्षणमनुबन्धकोपं छिद्रप्रहारिणं क्रूरमाहारातिमात्ररुचिमामिषप्रियतमं स्वप्नायासबहुलमीर्ष्युं राक्षसं विद्यात् ॥ ४७ ॥

महाशनं स्त्रैणं स्त्रीरहस्कामम[4]शुचिं शुचिद्वेषिणं भीरुं भीषयितारं विकृतविहाराहारशीलं पैशाचं विद्यात् ॥ ४८ ॥

क्रुद्धशूरमक्रुद्धभीरुं तीक्ष्णमायासबहुलं संत्रस्तगोचरमाहारविहारपरं सार्पं विद्यात् ॥ ४९ ॥

आहारकाममतिदुःखशीलाचारोपचारमसूयकमसंविभागिनमतिलोलुपमकर्मशीलं प्रैतं विद्यात् ॥

अनुषक्तकाममजस्रमाहारविहारपरमनवस्थितममर्षणमसञ्चयं शाकुनं विद्यात् ॥ ५१ ॥

१ परिचारसम्पन्नमिति पाठान्तरम् । २ यथोचितेन मर्यादादिकयुक्तमिति पाठान्तरम् । ३ शुद्धगुणबहुलस्येति पाठान्तरम् । ४ महालसमिति पाठान्तरम् ।

औपधिकमिति छद्मानुचारिणम् । अननुक्रोशमिलननुनेयम् । स्त्रिया समं रहसि स्थातुमिच्छतीति स्त्रीरहस्कामः । क्रुद्धशूरमक्रुद्धभीरुमिति क्रोधे सति शूरं, अक्रोधे सति भीरुम्। गोचरशब्देन अचिरभाविविषये प्रचारो लक्ष्यते, तेन, त्रस्तगोचरमिति त्रस्तविषयप्रचारम् । पिशाचादभिन्न एव यथोक्ताचारः प्रेतः, तेन, प्रेतमपि सत्वं पृथगुक्तम् । सरणशीलमिति गमनशीलम् । बुद्ध्यादीनि ऊहापोहविचारस्मृत्यादीनि उक्तानि ॥ ४६-५१ ॥

इत्येवं राजसस्य सत्वस्य षड्विधं भेदांशं विद्यात् रोषांशत्वात् ॥ ५२ ॥

निरलङ्करिष्णुममेधसं जुगुप्सिताचाराहारमैथुनपरं स्वप्नशीलं पाशवं विद्यात् ॥ ५३ ॥

भीरुमबुधमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधं सरणशीलं तोयकामं मात्स्यं विद्यात् ॥ ५४ ॥

अलसं केवलमभिनिविष्टमाहारे सर्वबुद्ध्या हीनं वानस्पत्यं विद्यात् ॥ ५५ ॥

इत्येवं तामसस्य सत्वस्य त्रिविधं भेदांशं विद्यान्मोहांशत्वात् ॥ ५६ ॥

इत्यपरिसंख्येयभेदानां त्रयाणामपि सत्वानां भेदैकदेशो व्याख्यातः शुद्धस्य सत्वस्य सप्तविधो ब्रह्मर्षिशक्रयमवरुणकुवेरगन्धर्वसत्वानुकारेण, राजसस्य षड्विधो दैत्यपिशाचराक्षससर्पप्रेतशकुनिसत्वानुकारेण, तामसस्य त्रिविधः पशुमत्स्यवनस्पतिसत्वानुकारेण, कथंच यथासत्वमुपचारः स्यादिति ॥ ५७ ॥

सुखसरणार्थं शुद्धादिभेदेन बन्धीकृत्य सत्वभेदानाह—शुद्धस्येत्यादि ।—वनस्पतिसत्वानुकारेणेत्यन्तो ग्रन्थो भेदैकदेशो व्याख्यात इत्यन्ते योजनीयः क्रियान्तराभावात् । एते च सत्वभेदाः प्रायेण भवन्ति मानुषेष्विति कृत्वा एत एवोदाहरणार्थमुक्ताः । एवमनुक्ता अपि शूकरव्याघ्रादिसत्वानुकारेण सत्वभेदा बोद्धव्या एवेति दर्शयन्नाह—कथं नाम यथासत्वं प्राणिमनोभिर्मनुष्याणामुपचारः स्यादित्येतदर्थमुदाहरणरूपा अमी सत्वभेदा व्याख्याता इति वाक्यार्थः ५२-५७

केवलश्चायमुद्देशः यथोद्देशमभिनिर्दिष्टो भवति गर्भावक्रान्तिसंप्रयुक्तः, तस्य चार्थस्य विज्ञाने सामर्थ्यं गर्भकराणां च भावानामनुसमाधिर्विघातश्च विघातकराणां भावानामिति ॥ ५८ ॥

यथाप्रतिज्ञं वाक्यार्थमुपसंहरति-केवल इत्यादि ।—केवलः कृत्स्नः । उद्देश इति 'यत्र गर्भे' इत्यादिग्रन्थकृतः । यथोद्देशमिति उद्देशक्रमानतिक्रमेण । सामर्थ्यमिति प्रयोजनम् । अनुसमाधिरनुष्ठानम् । विघातो वर्जनम् । विघातकराणामिति गर्भविघातकराणाम् ॥ ५८ ॥

तत्र श्लोकाः ॥

निमित्तमात्मा प्रकृतिर्वृद्धिः कुक्षौ क्रमेण च ।
वृद्धिहेतुश्च गर्भस्य पञ्चार्थाः शुभसंज्ञिताः ॥ ५९ ॥
अजन्मनि च यो हेतुर्विनाशे विकृतावपि ।
इमांस्त्रीनशुभान् भावानाहुर्गर्भविघातकान् ॥ ६० ॥
शुभाशुभसमाख्यातानष्टौ भावानिमान् भिषक् ।
सर्वथा वेद यः सर्वान् स राज्ञः कर्तुमर्हति ॥
अवाप्त्युपायान् गर्भस्य स एवं ज्ञातुमर्हति ।
ये च गर्भविघातोक्ता भावास्तांश्चाप्युदारधीः ॥ ६१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने महतीगर्भावक्रान्तिशारीरं नाम चतुर्थोऽध्यायः ।

अथैतेषु मध्ये के ते गर्भस्य शुभाः, ये गर्भेऽनुष्टेया इत्याह—निमित्तमित्यादि ॥ ५९—६१ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां महती गर्भावक्रान्तिव्याख्या ।

---

## पञ्चमोऽध्यायः ।

अथातः पुरुषविचयं शारीरं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाऽध्यायेऽभिहितं "यावन्तो हि लोके भावास्तावन्तः पुरुषे' इति, तच्च न प्रपञ्चितं बहुवाच्यत्वात् । अतः प्रपञ्चाभिधानार्थं पुरुषविचयं ब्रूते । पुरुषविचयनं लोकसामान्येन[1] पुरुषविचयः, तमधिकृत्य कृतोऽध्यायः पुरुषविचयः ॥ १—२॥

पुरुषोऽयं लोकसंमित इत्युवाच भगवान् पुनर्वसुरात्रेयः—यावन्तो हि लोके भावविशेषाः तावन्तः पुरुषे यावन्तः पुरुषे तावन्तो लोके इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—नैतावता वाक्येनोक्तं वाक्यार्थमवगाहामहे, भगवता बुद्ध्या भूयस्तरमनुव्याख्यायमानं शुश्रूषामहे इति ॥ ३ ॥
तमुवाच भगवानात्रेयः—॥ ४ ॥

अपरिसंख्येया लोकपुरुषावयवविशेषास्तेषां यथास्थूलं भावान् सामान्यमभिप्रेत्योदाहरिष्यामः, तानेकमना निबोध सम्यगुपवर्ण्यमानानग्निवेश ! षड्धातवः समुदिताः 'पुरुषं' इति शब्दं लभन्ते,

१ बुद्ध्यानुव्याख्यातमिति पाठान्तरम् ।

१ लोकसाम्येनेति पाठान्तरम् ।

तद्यथा—पृथिव्यापस्तेजोवायुराकाशं ब्रह्म चाव्यक्तमित्येत एव च षड्धातवः समुदिताः पुरुष इति शब्दं लभन्ते ॥ ५ ॥

संमितस्तुल्यः। लोकसंमितत्वमेव विभजते—यावन्तोहीत्यादि।—भगवता बुद्ध्याऽनुव्याख्यायमानमिति योजना। लोकस्य तरुतृणपश्वादिरूपा अवयवाः, तथा पुरुषस्य च स्नायुकण्डराधमन्यादिरूपा अवयवा अपरिसंख्येयाः। तेन, अकात्स्न्यर्याभिधानम्। अतो ये ये लोकपुरुषयोः स्थूला अवयवाः, ते ते सामान्यप्रतिपादनार्थमुच्यन्त इति वाक्यार्थः। ब्रह्मणो विवरणम्—'अव्यक्तं' इति ॥ ३—५ ॥

तस्य पुरुषस्य पृथिवी मूर्तिरापः क्लेदस्तेजोऽभिसन्तापो वायुः प्राणो वियच्छुषिराणि ब्रह्मान्तरात्मा। यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः, ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्वम्, यस्त्विन्द्रो लोके पुरुषेऽहङ्कारः सः, आदित्यस्त्वादानम्, रुद्रो रोषः, सोमः प्रसादः, वसवः सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थाश्च, तमो मोहः, ज्योतिर्ज्ञानम्, यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानम्, यथा कृतयुगमेवं बाल्यम्, यथा त्रेता तथा यौवनम्, यथा द्वापरं तथा स्थाविर्यम्, यथा कलिरेवमातुर्यम्, यथा युगान्तस्तथा मरणमित्येवमनुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणामग्निवेश सामान्यं विद्यात् ॥ ६ ॥

इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच ॥७॥

तस्येत्यादिना पुरुषे षड्धातून् दर्शयति। मूर्तिः काठिन्यम्। लोके षड्धातवो व्यक्ता एवेति न विवेचिताः। ब्राह्मीति आत्मविशेषजगत्स्रष्टुर्विभूतिः। प्रजापतिर्दक्षनामा। आदानं ग्रहणम्। आदित्योऽप्यादददातीति, आदानमप्यादित्यः। इह च मनुप्रभृतिषु प्राजापत्यादिरूपता आगमसिद्धैव ज्ञेया। सर्वेन्द्रियार्था विश्वेदेवा एव। सर्गादिरिति प्रलयानन्तरः कालः अनुक्तानामित्यनेन मतिर्बृहस्पतिः, कामो गन्धर्व इत्यादि। सामान्यं तुल्यम् ॥ ६—७ ॥

एवमेतत् सर्वमनपवादं यथोक्तं भगवता लोकपुरुषयोः सामान्यम्। किन्त्वस्य सामान्योपदेशस्य प्रयोजनमिति ॥ ८ ॥

भगवानुवाच—कथमग्निवेश सर्वलोकमात्मन्यात्मानं च सर्वलोके सममनुपश्यतः सत्याबुद्धिः समुत्पत्स्यते इति। सर्वलोकं ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः कर्त्ता नान्य इति। कर्मात्मकत्वाच्च हेत्वादिभिर्युक्तः सर्वलोकोऽहमिति विदित्वा ज्ञानं पूर्वमुत्थास्यतेऽपवर्गायेति, तत्र संयोगापेक्षी लोकशब्दः। षड्धातुसमुदायो हि सामान्यतः सर्वलोकः ॥ ९ ॥

अनपवादमित्यव्यवधानम्[1]। किन्त्वस्येत्यादि।—आयुर्वेदे किमप्येतत् साम्यकथने प्रयोजनमित्यर्थः। कथं सत्या बुद्धिरुत्पत्स्यते इति अस्यां योजनायां किंचास्याः प्रयोजनमिति शेषो ज्ञेयः। यथा च लोकपुरुषसाम्यं सत्यबुद्धिजनकं भवति, तदाह—सर्वलोकं हीत्यादि।—आत्मनि पश्यत इति आत्मनोऽभेदेन पश्यतः। 'आत्म' शब्देन षड्धातुसमुदायात्मकः पुरुष इहोच्यते। तेन, यत्किंचिल्लोकगतं सुखदुःखजनकम्, तदप्यात्मस्वरूपमित्यनेन बाह्यलोकभूतमपि आत्मकृतमेव वैषयिकं नित्यदुःखानुयुक्तम्[2] हेयं सुखम्, तथा, निसर्गाद्वैर्यं दुःखं च पश्यन् रागद्वेषनिर्मुक्तः सन् सत्यज्ञानवान् भवतीति भावः। अथ सत्यज्ञानस्यापि किं प्रयोजनमित्याह—कर्मेत्यादि।—लोकपुरुषसाम्यज्ञानेऽपि सत्यज्ञानस्यादावपवर्गानुष्ठानं[3] प्रयोजनमिति वाक्यार्थः। अत्र कर्मात्मकत्वादिति कर्माधीनत्वात्, हेत्वादयोऽग्रे वक्ष्यमाणाः कर्मवशः सन् हेत्वादिभिर्युक्तोऽयमात्मा प्रवर्त्तते, कर्म, तत्त्वज्ञानात् प्रवृत्त्युपरमे सति कारणाभावान्नोपपद्यते। उक्तंच—"कर्म त्यक्तप्रवृत्तेस्तु[4] तत्त्वज्ञानाद्धि क्षीयते। नोपभोगाद्" इति। तदात्यन्तिककर्मक्षयात् आत्यन्तिककर्मफलाभावरूपो मोक्षो भवतीति भावः। संयोगापेक्षीति षड्धातुमेलके पुरुषरूपे वर्तते इत्यर्थः। 'लोक' शब्देनेह प्रकरणे लोकत इति कृत्वा पुरुष एवोच्यते जनजगद्रूपो लोकः। यतः, हेत्वादयो येऽत्र कर्मपरवशत्वेन लोके वक्तव्याः, ते पुरुष एव संभवन्ति। 'सर्व' शब्देन सर्वप्राणिनो ग्राहयति ॥ ८—९ ॥

तस्य हेतुरुत्पत्तिर्वृद्धिरुपप्लवो वियोगश्च।—तत्र हेतुरुत्पत्तिकारणम्। उत्पत्तिर्जन्म। वृद्धिराप्यायनम्। उपप्लवो दुःखागमः। षड्धातुविभागो वियोगः, स जीवापगमः, स प्राणनिरोधः स भङ्गः स लोकस्वभावः। तस्य मूलं सर्वोपप्लवानां च प्रवृत्तिः। निवृत्तिरुपरमः। प्रवृत्तिर्दुःखम्, निवृत्तिः सुखमिति यज्ज्ञानमुत्पद्यते, तत्सत्यम्, तस्य हेतुः सर्वलोकसामान्यज्ञानमेतत्प्रयोजनं सामान्योपदेशस्येति ॥ १० ॥

हेत्वादिपञ्चकं निर्दिश्य विभजते—तस्य हेतुरित्यादि।—तस्य मूलमिति तस्य जीवापगमस्य कारणम्। सर्वोपप्लवानां चेति सर्वसुखदुःखानाम्। प्रवृत्तिः रागद्वेषमूला प्रवृत्तिः।

---

१ अव्यवधानमित्यतिरोहितार्थमित्यर्थः। २ नित्यदुःखानुस्यूतमिति पाठान्तरम्। ३ तस्य ज्ञानस्याप्यपवर्गानुष्ठानम्, निसर्गस्याप्यपवर्गानुष्ठानमिति पाठान्तरद्वयम्। ४ कर्मत्यक्तस्याद्दृष्टस्येति पाठान्तरम्।

निवृत्तिरिति अप्रवृत्तिः । 'उपरम' शब्दस्तस्येत्यनेन संबध्यते, तथा सर्वोपप्लवानां चेत्यनेन संबध्यते । दुःखानां चोपरमो निवृत्तिकृत एव, निवृत्तिजन्यत्वेन च कार्यकारणयोरभेदोपचारादुपरमोऽपि निवृत्तिर्यः शब्दसामानाधिकरण्येनोच्यते । प्रवृत्तिर्दुःखमिति च कार्यकारणयोरभेदोपचाराद्बोद्धव्यम् । सत्यज्ञानस्वरूपमाहे इति यज्ज्ञानमित्यादि । इतीति पूर्वप्रत्यव मर्षकम् । एतस्मिन् सत्यज्ञाने लोकपुरुषसामान्यज्ञानस्य हेतुत्वं दर्शयन्नाह–तस्येत्यादि ।–॥ १० ॥

**अथाग्निवेश उवाच—किंमूला भगवन् ! प्रवृत्तिर्निवृत्तौ वा उपाय इति ॥ ११ ॥**

**भगवानुवाच—मोहेच्छाद्वेषकर्ममूला प्रवृत्तिः, तज्जा ह्यहङ्कारसङ्गसंशयाभिसंप्लवाभ्यवपातविप्रत्ययाऽविशेषानुपायास्तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुषमवतत्यैवोत्तिष्ठन्ति । यैरभिभूतो न सत्तामतिवर्त्तते । तत्रैवं जातिरूपवित्तवृत्तबुद्धिशीलविद्याभिजनवयोवीर्यप्रभावसम्पन्नोऽहमित्यहङ्कारः । यन्मनोवाक्कायकर्म नापवर्गाय, स सङ्गः । कर्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति वा नेति संशयः । सर्वावस्थास्वनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रियबुद्धिविशेषराशिरिति ग्रहणमभिसंप्लवः । मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्य चाहमित्यभ्यवपातः । कार्याकार्यहिताहितशुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः । ज्ञाज्ञयोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्त्योश्च सामान्यदर्शनमविशेषः । प्रोक्षणानशनाग्निहोत्रत्रिःसवनाभ्युक्षणावाहनायाचनसलिलहुताशनप्रवेशादयः समारम्भाः प्रोच्यन्ते ह्यनुपायाः । एवमयमधीधृतिस्मृतिरहङ्काराभिनिविष्टः सक्तः ससंशयोऽभिसंप्लुतबुद्धिरभ्यवपतितोऽन्यथादृष्टिरविशेषग्राही विमार्गगतिर्निवासवृक्षः सत्वशरीरदोषमूलानां सर्वदुःखानां भवति । एवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्त्तते प्रवृत्तिम्, सा च मूलमघस्य ॥ १२ ॥**

प्रवृत्तेः संसाररूपायाः, तथा निवृत्तेर्मोक्षरूपायाः कारणमुपायं च पृच्छति—किं मूलेत्यादि ।—मोहेत्याद्युत्तरम् । मोहेच्छाद्वेषकर्ममूलेति मोहान्मिथ्याज्ञानस्वरूपादिच्छाद्वेषौ, तयोश्च धर्माधर्मरूपं कर्म, तच्च मूलं संसारस्येत्यर्थः । कथमिति मोहादयः संसारकारणमित्याह—तज्जा हीत्यादि ।–अत्र चाहङ्कारादौ यथा योग्यतया मोहादीनां कारणत्वं ज्ञेयम् । अहङ्कारादयश्चाष्टावग्रे वक्ष्यमाणा ज्ञेयाः। अवतत्येति व्याप्येति न सत्तामतिवर्तते इति प्रवृत्तिहेतुं नातिक्रामति । अत्रोक्तमहङ्कारं विवृणोति—तत्रैवमित्यादि ।—जात्यादिभिः प्रभावान्तैः सम्पन्न उत्कृष्टोहमिति ज्ञानमहङ्कारः । यदित्यादि सङ्गविवरणम् । कर्मफलादयः सन्ति न वेति यज्ज्ञानम्, तत् संशयः । अभिसंप्लवमाह—सर्वेत्यादि ।—आत्मनोऽभिमत आत्मना आत्मन्यभिसंप्लव आत्मना आत्मगोचरता[1] आत्मबुद्धिरित्यर्थः । सर्वावस्थास्विति सर्वासु शरीरावस्थासु ज्ञातसमुदायरूप एवाहमस्मीति यज्ज्ञानम् तदिह ज्ञेयम् । परमात्मनस्तु सर्वावस्थाशून्यत्वमिति यज्ज्ञानम्, तत् सम्यग्ज्ञानमेव । एवमहं स्रष्टाऽहं स्वभावसंसिद्ध इत्यत्रापि शरीरवानेवाहङ्कारविषयो ज्ञेयः । अहं शरीरेन्द्रियबुद्धिविशेषराशिरित्यत्र शरीरादिष्वचेतनेष्वहङ्कारास्पदत्वेन चेतनाभिमानो[2] विरुद्ध इति ज्ञेयम् । ममेत्यादिना अभ्यवपातमाह, अभ्यवपातः परात्मता[3], अनात्मीयेन ममता कार्येत्यादिना विप्रत्ययं ब्रूते । विपरीताभिनिवेशो विपर्ययेण ज्ञानम्, यथा—कार्ये अकार्यमकार्ये कार्यमित्यादि । ज्ञाज्ञयोरित्यादिना अविशेषमाह । अविशेषो विशेषाप्रतीतिः विप्रत्ययस्तु विशेषाणां विपर्ययेण ग्रहणमिति भेदः । प्रोक्षणेत्यादिना अनुपायमाह—अनुपाया इति अन्योपायाः[4] सन्तोऽपि परमपुरुषार्थे मोक्षे अनुपायाः । त्रिःसवनं त्रिः सम्यक् स्नानम् । सम्प्रति, अहङ्कारादीनां धीधृतिस्मृतिविभ्रंशमूलत्वेनाधीधृतिस्मृत्यभिधानपूर्वकं संसाररूपनित्यानुबन्धशरीरमानसदुःखकारणत्वं व्युत्पादितमहङ्कारादीनां संक्षिप्याप्याह एवमित्यादिना निवासवृक्ष इव निवासवृक्षः तेन, यथा निवासवृक्षः पक्षिणां नित्यमाश्रयो भवति, एवमहंकारादियुक्तोऽपि रोगसं निवासो भवतीति दर्शयति । भ्राम्यमाण इति पुनः पुनरपि शरीरान्तराणि नीयमानः नातिवर्तते प्रवृत्तिमिति संसारं न त्यजति एवं मोहेच्छाजन्यकर्ममूलतां प्रवृत्तेर्दर्शयित्वा प्रवृत्तेरपि कर्मकारणतामाह—सा च मूलमघस्येति, प्रवृत्तिरपि धर्माधर्मरूपस्य मूलम् इह च धर्माधर्मावविशेषेण संसारदुःखकारणतया 'अघ' शब्देनोक्तौ ॥ ११ ॥ १२ ॥

**निवृत्तिरपवर्गः तत्परं प्रशान्तं तत्तदक्षरं तद्ब्रह्म स मोक्षः । तत्र मुमुक्षूणामुदयनानि व्याख्यास्यामः ।— तत्र लोकदोषदर्शिनो मुमुक्षोरादित एवाचार्याभिगमनं तस्योपदेशानुष्ठानमग्नेरेवोपचर्या धर्मशास्त्रान्तगमनं[5] तदर्थावबोधस्तेनावष्टम्भः तत्र यथोक्ता क्रिया सतामुपासनमसतां परिवर्जनमसङ्गतिर्दुर्जनेन सत्यं सर्वभूतहितमपरुषमनतिकाले परीक्ष्य वचनं सर्वप्राणिषु चात्मनीवावेक्षा सर्वासामस्मरणमसङ्कल्पनमप्रार्थनमनभिभाषणं च स्त्रीणां सर्वपरिग्र-**

१ तेनेति पाठान्तरम् । २ तेषु ज्ञानरूपमाहेति पाठान्तरम् । ३ यजनयाजनयाचनेति पाठान्तरम् ।

१ आत्मगोचरतयेति पाठान्तरम् । २ चेतनामिधानमित्यसमीचीनं पाठान्तरम् । ३ परगात्मता इति पाठान्तरम् । ४ अज्ञोपाया इति पाठान्तरम् । ५ धर्मशास्त्रानुगमनमिति पाठान्तरम् ।

हत्यागः कौपीनं प्रच्छादनार्थं धातुरागनिवसनं कन्थासीवनहेतोः सूचीपिप्पलकं शौचाधानहेतोः जलकुण्डिका दण्डधारणं भैक्ष्यचर्यार्थं पात्रं प्राणधारणार्थमेककालमग्राम्यो यथोपपन्नोऽभ्यवहारः श्रमापनयनार्थं शीर्णशुष्कपर्णतृणास्तरणोपधानं ध्यानहेतोः कायनिबन्धनं वनेष्वनिकेतवासः तन्द्रानिद्रालस्यादिकर्मवर्जनं इन्द्रियार्थेष्वनुरागोपतापनिग्रहः सुप्तस्थितगतप्रेक्षिताहारविहारप्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृतिपूर्विका प्रवृत्तिः सत्कारस्तुतिगर्हावमानक्षमत्वं क्षुत्पिपासायासश्रमशीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वं शोकदैन्यमानोद्वेगमदलोभरागेर्ष्याभयक्रोधादिभिरसंचलनमहङ्कारादिपूपसर्गसंज्ञा[1] लोकपुरुषयोः सर्गादिसामान्यावेक्षणं कार्यकालात्ययभयं योगारम्भे सततमनिर्वेदः सत्त्वोत्साहोऽपवर्गाय धीधृतिस्मृतिबलाधानं नियमनमिन्द्रियाणां चेतसि चेतस आत्मन्यात्मनश्च धातुभेदेन शरीरावयवसंख्यानमभीक्ष्णं सर्वं कारणवद्दुःखमस्वमनित्यमित्यवगमः[2] सर्वप्रवृत्तिष्वघसंज्ञा[3] सर्वसंन्यासेषु सुखमित्यभिनिवेशः, एष मार्गोऽपवर्गाय, अतोऽन्यथा वध्यत इत्युदयनानि व्याख्यातानि ॥ १३ ॥

संप्रति निवृत्तावुपायं वक्तुं निवृत्तिमेव तावदुपादेयताप्रतिपादकपर्यायैराह—निवृत्तिरित्यादि ।—उदित्यर्थं मोक्ष इति, उदयनानि हि मोक्षोपाया इत्यर्थः । लोकदोषदर्शिन इति हेतुगर्भविशेषणम् । तेन, नित्यं दुःखाक्रान्तलोकदर्शनाद्विरक्तस्य सत इति दर्शयति । आचार्य- इह मोक्षशास्त्रोपदेष्टा । तेनावष्टम्भ इति शास्त्रावबोधेन धैर्यं करणीयम्, मनागपि तत्र कथंता न कर्तव्या इत्यर्थः । यथोक्ता क्रिया कर्तव्या इति शेषः । आत्मनीवावेक्षा चेति यथा आत्मन्यकार्यताबुद्धिस्तथा सर्वप्राणिषु कर्तव्या । असङ्कल्पनमित्यभावनम् । प्रच्छादनार्थं कटिवेष्टनार्थम् । किंवा, कौपीनार्थं प्रच्छादनार्थं च । सूचीपिप्पलकं सूचीस्थापनपात्रम् । भैक्ष्यचर्यार्थं पात्रं भिक्षापात्रमित्यर्थः । प्राणयात्रार्थमित्यनेन यावन्मात्रेणाहारेण प्राणयात्रा भवति, तावन्मात्र आहारः कर्तव्यः, न तु रागादिति दर्शयति । एवं श्रमापनयनार्थमित्यादावपि तावन्मात्रप्रयोजनता व्याख्येया । कायनिबन्धनं योगपट्टम् । अनिकेतवास इति अगृहवासः । एतेन, वनेऽपि न गृहं कृत्वा स्थातव्यमिति दर्शयति । इन्द्रियार्थेषु गन्धादिषु अनुरागस्य तथोपतापस्य द्वेषरूपस्य निग्रहः कर्तव्यः । स्मृतिपूर्विका प्रवृत्तिरिति कोऽहम्, किमर्थं रागत्यागादिकमारभ्यते इत्यादि स्मर्तव्यमित्यर्थः । सत्कारः पूजा, सत्कारे स्तुतौ च सत्यामहृष्टत्वम् । यथा गर्हायामवमाने च समदर्शित्वम्, तथा सत्कारादिष्वपि ज्ञेयम् । क्षुधादिषु चानुद्वेगः क्षुधादिसहत्वम् । असंवसनमसंवासः । अहंकारादयोऽष्टाविहैवोक्ताः । उपसर्गसंज्ञेति अनर्थहेतुत्वभावना । लोकपुरुषयोः सर्गादिसामान्यावेक्षणमिति यथा इहैव लोकपुरुषयोरादिसर्गतः प्रकृतिसामान्यमुक्तम्, तथाऽवेक्षणमित्यर्थः । कार्यकालात्ययभयमिति मोक्षानुगुणकर्तव्यस्य कालातिपातभयं[2] करणीयम् । नियमनमिन्द्रियाणां चेतसि इन्द्रियाणि बाह्यविषयनिवृत्तानि मनस्येव नियतानि कर्तव्यानि । चेतसश्चिन्त्यादिविषयेभ्यो व्यावृत्तस्य परमात्मन्यात्मज्ञानार्थं नियमनं कर्तव्यम् । आत्मनश्चात्मनि नियमनमिति योजना । तेन, आत्मापीन्द्रियादिविषयेभ्यो व्यावर्त्यात्मनि मन्तव्यः । धातुभेदेन शरीरावयवसंख्यानमिति शरीरस्य रसमलरक्ताद्यादिरूपतया ज्ञानम् । शरीरं हि रसमलरक्ताद्यादिरूपतया भाव्यमानं वैराग्यहेतुर्भवति, यथा—"मज्जास्था रजसा प्लीहा यकृता शकृतापि च । पूर्णाः स्नायुशिरा याः स्युस्ताः स्त्रियश्चर्मवेशिकाः" इत्यादिका वैराग्यभावना । कारणवदित्यनेन, नित्यात्मव्यतिरिक्तं सर्वमनित्यं दर्शयति । दुःखमिति दुःखहेतुः अस्वमिति आत्मव्यतिरिक्तमनात्मीयं च । सर्वसंन्यासेष्विति सर्वप्रवृत्त्युपरमेषु ॥ १३ ॥

भवन्ति चात्र।

एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति ।
मृज्यमाण इवादर्शस्तैलचेलकरादिभिः[3] ॥१४॥

ग्रहांबुदरजोधूमनीहारैरसमावृतम् ।
यथार्कमण्डलं भाति भाति सत्त्वं तथाऽमलम् ॥१५॥

ज्वलत्यात्मनि संरुद्धं तत्सत्त्वं संवृतायने ।
शुद्धः स्थिरः प्रसन्नार्चिर्दीपो दीपाशये यथा ॥१६॥

अविमलमिति क्रियाविशेषणम् । ग्रहो राहुः । सत्वस्य पंचैवेन्द्रियाणि ज्ञानावरकाणि भवन्तीति कृत्वा सूर्यस्यापि पञ्चैव ग्रहादयश्चावरका उक्ताः । ज्वलतीति केवलात्मज्ञानजनकत्वेन प्रकाशते । आत्मनि संरुद्धमिति इन्द्रियेभ्यो व्यावृत्यात्मनियतम् । संवृतायन इति आत्मपक्षेऽपि संवृतेन्द्रियरूपच्छिद्रमात्मनि ज्ञेयम् । दीपाशयो दीपधारिका गृहं वा ॥ १६॥

शुद्धसत्वस्य या शुद्धा सत्या बुद्धिः प्रवर्त्तते ।
यया भिनत्त्यतिबलं महामोहमयं तमः ॥ १७ ॥
सर्वभावस्वभावज्ञो यया भवति निःस्पृहः ।
योगं यया साधयते सांख्यः संपद्यते यया ॥१८॥

१ अहङ्कारादिपूपसर्गसंज्ञेति पाठान्तरम् । २ अभ्युपगम इति पाठान्तरम् । ३ असंवसनमसंवास इति पाठान्तरम् ।

१ दुःखसंज्ञेति पाठान्तरम् । २ कालाभिघातभयमिति पाठान्तरम् । ३ कचादिभिरिति पाठान्तरम् ।

यया नोपैत्यहङ्कारं नोपास्ते कारणं यया।
यया नालम्बते किंचित्सर्वं संन्यस्यते यया ॥१९॥
याति ब्रह्म यया नित्यमजरं शान्तमव्ययम्[१]।
विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानं च सा मता॥२०॥

शुद्धसत्वमभिधाय तज्जन्यां मोक्षसाधनत्वेनात्यर्थोपादेयां सत्यां बुद्धिं विविधैरुपयुक्तैः स्वरूपैराह—शुद्धेत्यादि।—महामोहोऽहमादिमिथ्याज्ञानम्। निस्पृह इति उपादित्साजिहासाशून्यः। योगमिति विषयव्यावृत्तस्य मनस आत्मन्येव परं योगम्। संख्या तत्त्वज्ञानम्, तया वर्तत इति सांख्यः। नोपास्ते कारणमिति न सुखदुःखकारणं सेवते। नालंबते किंचिदिति क्वचिदप्यास्थानं न करोति। संन्यस्यत इति सर्वेष्वोदासीनो भवति। ब्रह्मेति मोक्षः। विद्या सिद्ध्यादयश्च यद्यपि ज्ञानविशेषेऽपि प्रसिद्धाः, तथापीह प्रकरणात् तत्सज्ञानपरा एव ज्ञेयाः ॥ १७—२० ॥

लोकेविततमात्मानं लोकं चात्मनि पश्यतः।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥२१॥

लोकविततमात्मानमिति लोकरूपमात्मानम्, तथा लोकं चात्मनि शरीरात्मरूपमेलकरूपे व्यवस्थितमिति शेषः पश्यतः। परावरदृश इति परमात्मानम्, अवराण्यात्मव्यतिरिक्तानि प्रकृत्यादीनि यः पश्यति, तस्य परावरदृशः। 'ज्ञानमूला' इत्यनेन मोहमूलामस्थिरां शान्तिं निरस्यतीति ॥ २१ ॥

पश्यतः सर्वभावान् हि सर्वावस्थासु सर्वदा।
ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते[२] ॥ २२ ॥

अथ जीवन्मुक्तस्य किमिति सुखदुःखहेतुधर्माधर्मसंयोगो न भवतीत्याह—पश्यत इत्यादि।—पश्यत इति पश्यतएव परं न तु रज्यतो नापि द्विषत इत्यर्थः। ब्रह्मभूतस्येति ब्रह्मभूतस्य जीवन्मुक्तस्येति व्याख्येयम्। सर्वथा मुक्ते हि ज्ञानमपि नास्ति। तेन, पश्यत इति न स्यात्। संयोग इति धर्माधर्मसम्बन्धः ॥ २२ ॥

नात्मनः करणाभावाल्लिङ्गमप्युपलभ्यते।
स सर्वकरणायोगान्मुक्त[३] इत्यभिधीयते ॥ २३ ॥

अथ मुक्तात्मनः किं लक्षणमित्याह—नेत्यादि।—आत्मन इति मुक्तात्मनः। करणाभावादिति मनःप्रभृतिकरणाभावात्। उक्तं हि—"करणानि मनोबुद्धिर्बुद्धिकर्मेन्द्रियाणि च" इति, मनःप्रभृत्यभावाच्च शरीराभावोऽप्यर्थलब्ध एव। सर्वाभावाच्चात्मनि किमपि लक्षणं नास्ति, स्वरूपेण चात्माऽतीन्द्रिय एव। तेन, नात्मनोऽभावान्नोपलभ्यते, तल्लिङ्गानामभावादेव नोपलभ्यत इति भावः[४] ॥ २३ ॥

१ शान्तमक्षरमिति पाठान्तरम्। २शुद्धस्योपयुज्यत इति पाठान्तरम्। ३ सर्वकारणत्यागादिति पाठान्तरम्। ४ तेन आत्माऽभावान्नोपलभ्यो तल्लिङ्गान्यपि अभावादेव नोपलभ्यन्त इति भाव इति पाठान्तरम्।

विपापं विरजः शान्तं परमक्षरमव्ययम्।
अमृतं ब्रह्म निर्वाणं पर्यायैः शान्तिरुच्यते ॥ २४ ॥
एतत्तत्सौम्य विज्ञानं यज्ज्ञात्वा मुक्तसंशयाः।
मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहाः ॥२५॥ इति

तत्र श्लोकौ

सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च।
सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च ॥ २६ ॥
शुद्धसत्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी।
विचये पुरुषस्योक्ता निष्ठा च परमर्षिणा ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने पुरुषविचयशारीरं नाम पञ्चमोऽध्यायः।

विपापमित्यादिना मोक्षस्वरूपप्रकाशकान् पर्यायानाह—यज्ज्ञात्वेति ज्ञानं प्राप्येत्यर्थः। किंवा, गुणप्रकाशकत्वात् ज्ञानमपि ज्ञेयं भवतीति बोद्धव्यम्। संग्रहे शुद्धसत्वसमाधानमित्यनेन, 'एतैरविमलम्' इत्यादिना 'दीपाशये यथा' इत्यन्तेन ग्रन्थेनोक्तार्थः संगृहीतः। 'शुद्धसत्वस्य' इत्यादिना सत्या बुद्धिरुक्ता। नैष्ठिकी मोक्षसाधिका। निष्ठा मोक्षः ॥ २४—२७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां पुरुषविचयव्याख्या।

## षष्ठोऽध्यायः।

अथातः शरीरविचयं शारीरं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

शरीरविचयः शरीरोपकारार्थमिष्यते। ज्ञात्वा हि शरीरतत्त्वं शरीरोपकारकरेषु भावेषु ज्ञानमुत्पद्यते। तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः ॥३॥

पुरुषविचयं मोक्षोपयुक्तत्वेन पुरुषोपकारकमभिधाय व्याक्रियमाणचिकित्सोपयुक्तं शरीरोपकारकं शरीरविचयं ब्रूते। शरीरस्य विचयनं विचयः शरीरस्य प्रविभागेन ज्ञानमित्यर्थः। शरीरोपकारार्थमिति शरीरारोग्यार्थम्। अथ कथं शरीरज्ञानं शरीरोपकारकमित्याह—ज्ञात्वा हीत्यादि।—शरीरस्य रक्तादिरूपस्य स्वभावरूपं तत्वं ज्ञात्वैव इदमस्य वृद्धस्य धातोरसामान्यगुणतयाऽवर्द्धकत्वेनोपकारकमिति, तथोक्तविपर्ययाच्चापकारकमिति ज्ञेयम्। ज्ञायते उपकार्यते शरीरतत्त्वमनेनेति वाक्यार्थः ॥ १—३ ॥

तत्र शरीरं नाम चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकं समयोगवाहि। यदा

१ दुर्ज्ञानमिति पाठान्तरम्।

ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदा क्लेशं विनाशं वा प्राप्नोति । वैषम्यगमनं हि पुनर्धातूनां वृद्धिह्रासगमनमकार्त्स्न्येन प्रकृत्या च ॥ ४ ॥

समुदितस्यैव शरीरस्य स्वरूपमाह—तत्रेत्यादि ।—'चेतना'शब्देन ज्ञानकारणं आत्मोच्यते । 'भूत'शब्द उपमाने । तेन, चेतनाया आत्मसम्बन्धिन्या शरीरएवोपलम्भादात्मनः शरीरमधिष्ठानमिति भवति । परमार्थस्तु चेतनाश्रय आत्मा आत्मा च निराश्रय एव, किंवा, चेतनस्यात्मनोऽधिष्ठानभूतमिति चेतनाधिष्ठानभूतमिति । पञ्चानां महाभूतानां विकारा रसादयः शरीरारम्भकाः, तेषां समुदायो मेलकः । स आत्मा स्वरूपं यस्य तत्तथा । 'समुदाय' शब्देन च समुदायारम्भका धातव एवोच्यन्ते । तेन, न संयोगमात्रस्य शरीरत्वप्रसक्तिः । किंवा, समुदायः संयोग एवोच्यताम्, तथा समुदाय आत्मा कारणं यस्य शरीरस्य द्रव्यरूपस्य तत् पञ्चमहाभूतविकारसमुदायात्मकं शरीरमेव । समेनोचितप्रमाणेन धातूनां मेलकेन समयोगतया[१] वहतीति समयोगवाहि । यदा तु धातूनां न्यूनातिरिक्तत्वेन विषमो मेलको भवति, तदा असमयोगवाहीति[२] दर्शयन्नाह—यदा हीत्यादि ।—लघुना वैषम्येण रोगमात्रजनकेन क्लेशम्, महता दुःसाध्यरोगजनकेन वैषम्येण विनाशं मरणं प्राप्नोतीति शरीरम् । अथ किं तत् वैषम्यमित्याह—वैषम्यगमनमिति, वैषम्यगमनं वैषम्यावस्थाप्राप्तिः । वैषम्यमेव[३] कादाचित्कमित्यर्थः, यदि हि वैषम्यमेव ब्रुवते, तदा सहजसिद्धमपि धातूनां यत् न्यूनातिरिक्तत्वेन वैषम्यम्, तदपि गृह्यते । तेन, 'गमन'पदप्रक्षेपात् सहजं वैषम्यं परित्यज्य प्रमाणापेक्षं कदाचिदुत्पद्यमानं वैषम्यं दर्शयति । वृद्धिह्रासगमनं चेह व्यस्तसमस्तवैषम्यं ज्ञेयं वृद्धिह्रासस्यैव विशेषाभावात् । अकार्त्स्न्येन प्रकृत्या चेति अकार्त्स्न्येनेति एकदेशेन, प्रकृत्येति सकलेन स्वभावेन । तेन च, रसादीनां चाशेषेण वृद्धिह्रासौ तथा अकार्त्स्न्येन वृद्धिह्रासौ उपसंगृहीतौ भवतः । अन्ये तु, 'अकार्त्स्न्येन' इतिपदं क्लेशं विनाशं प्राप्नोतीत्यनेन योजयति । तेन, यदापि धातवो वैषम्यमापद्यन्ते, तदापि न क्लेशविनाशौ भवतः, अकार्त्स्न्येन इतिपदेन क्लेशविनाशव्यभिचारस्य विहितत्वाच्च । दृष्टं चैतत् यथा—वृष्यप्रयोगात् शुक्रवृद्धौ सत्यामपि न क्लेशविनाशौ भवतः, तथा बालस्य वर्द्धमानधातोरपि गुणएव परं दृश्यते । तच्च नाति साधु । यतः, बालस्य वर्द्धमानधातोरपि वयोऽनुरूपाः प्राकृतमानस्थिता एव धातवो भवन्ति, तेन, न ते प्राकृतमाना वृद्धा उच्यन्ते । या तु वृष्यप्रयोगजा शुक्रवृद्धिः, सा यदि विकारकारिका न भवति, तदा तु प्राकृतमानान्तर्गता । एवं एतदेव धातूनां प्राकृतमानम्,—यद्विकारकारि । अञ्जल्यादिमानं तु ग्रन्थान्तरेणाभिहितमपि नित्यपरोक्षतया पुनः स्वाभाविकधातुलक्षणैरेव ज्ञातव्यम् । तस्माच्छुक्रस्य यावती वृद्धिरदोषा, तावती प्राकृतमानावस्थारूपैव । प्राकृतमानातिरिक्तौ चेह वृद्धिह्रासौ 'वैषम्यगमन' शब्देनोच्येते । तस्मादाद्यैव व्याख्या । यस्मादेवं केवलं वृद्धिह्रासगमनमेव वैषम्यगमनम् । किंतु प्रकृत्या च वैषम्यगमनं धातूनां भवतीति व्याख्या न भवति । तथाहि—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये" इत्यादौ प्रकृतिस्थस्य दोषस्य विकारकर्तृत्वमुच्यते, विकारकरस्य दोषस्य प्रकृतिस्थताऽपि वैषम्यानुक्रियाकारित्वेन 'वैषम्य'शब्देनोच्यते । तदपि नातिसुन्दरम् । येन, प्रदेशान्तरेष्वपि त्रिविधां गतिं प्रतिपद्य प्रकृतिस्थता धातूनां निर्विकार एवोक्ता, यथा—"क्षीणा जहाति लिङ्गं स्वं समाः स्वं कर्म कुर्वते । दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम्" तथा "विकारो धातुवैषम्यम्" "विकारो दुःखमेव च" एवमादिषु । यत्तु "प्रकृतिस्थं यदा पित्तम्" इत्यादि स्वमानावस्थितस्य पित्तस्य विकारकरत्वम्, तच्छरीरप्रदेशान्तरनीतस्य पित्तादेस्तु तत्प्रदेशवृद्धस्यैव विकारकर्तृत्वम् । स्वमानस्थितोऽपि दोषः प्रदेशान्तरं नीतः सन् प्रदेशस्थदोषापेक्षया वृद्धएव भवति । तत्रापि वृद्धस्यैव विकारकर्तृत्वम्, प्रपञ्चितश्चार्थस्तत्रैव ग्रन्थे । यत्राऽपि स्वमानस्थितानां रक्तादीनां वातादिदुष्ट्या विकारकर्तृत्वम्, तत्रापि वातादय एव वृद्धाः प्राधान्येन विकारकारकाः, रक्तादयोऽपि तद्दुष्टिदोषसंबन्धात् हीनस्वगुणा वृद्धस्वगुणा वा भवन्ति, ततो गुणहानिवृद्धिभ्यां वृद्धिह्रासौ दूष्येऽपि तिष्ठत एवेति न प्रकृतिस्थस्य विकारकारित्वमिति पश्यामः ॥ ४ ॥

यौगपद्येन तु विरोधिनां धातूनां वृद्धिह्रासौ भवतः । यद्धि यस्य धातोर्वृद्धिकरं तत्ततो विपरीतगुणस्य धातोः प्रत्यवायकरं सम्पद्यते ॥ ५ ॥

उपयुक्तभेषजेन यथा वृद्धिह्रासौ भवतः । तदाह—यौगपद्येनेत्यादि ।—विरोधिनामिति परस्परविरुद्धगुणानाम् । तदेवोपपादनं दर्शयति—यद्धीत्यादि ।—यद्धि भेषजम्,—यथा क्षीरं कफशुक्रादिवृद्धिकरम् । तत्तु पित्तरक्तादेः प्रत्यवायकरं भवति ह्रासकरं भवतीत्यर्थः । विपरीतस्येति कर्तव्ये यत्—विपरीतगुणस्येति करोति । तेन जातिवैपरीत्याद् गुणवैपरीत्यमेव ह्रासकारणं प्राधान्येन दर्शयति । तेन, गोमूत्रं द्रवत्वसाजात्यात् समानमपि कटूष्णरूक्षादिगुणयोगात् कफस्यापि हारकमेव ॥ ५ ॥

तदेव तस्मात् भेषजं सम्यगुपचर्यमाणं[१] युगपन्न्यूनातिरिक्तानां धातूनां साम्यकरं भवत्यधिकमपकर्षति न्यूनमाप्याययति ॥ ६ ॥

---

१ सम्यग्योगतयेति पाठान्तरम् । २ असम्यग्वहतीति पाठान्तरम् । ३ वैषम्यमित्येवमिति पाठान्तरम् ।

१ सम्यगवचार्यमानमिति पाठान्तरम् ।

उपपादितयौगपद्येन धातूनां वृद्धिह्रासगमनमुपसंहरन्नाह— तदेवेत्यादि ।—सम्यगुपचर्यमाणमित्यनेन उचितमात्रादियोगं तथा साम्यावाप्तावधिकभेषजप्रयोगं दर्शयति । मात्रादिविगुणं हि भेषजं न उचितां क्रियां करोति ।—यथा वृद्धस्य कफस्य क्षीणस्यापि पित्तस्य क्षयवृद्धिभ्यां सामान्यं समुपयुज्यते कट्वादि । तत् साम्यापातोत्तरकालमप्युपयुज्यमानं पित्तवृद्ध्या कफक्षयेण च पुनर्वैषम्यमावहति । तस्मात्तद्दोषाणां व्यावृत्त्यर्थं सम्यगुपचर्यमाणमिति कृतम् । ननु पूर्वोक्तभेषजेन विरोधिनां वृद्धिह्रासौ भवतः । उपसंहारे तु धातूनां साम्यकरं भेषजं भवतीत्युच्यते । तत्कथं साम्यभेद इत्याशंक्य वृद्धिह्रासकरमेव धातुसाम्यकरं भवतीति दर्शयन्नाह—अधिकमपकर्षति, न्यूनमाप्याययतीति । एवं भूतंच धातुसाम्यकरणम् । यत्रैव विरोधिनां वृद्धिह्रासौ विधेते । तत्रैव ज्ञेयम् । न सर्वत्र । तेन यत्र वृद्धिरेव परं दोषाणां न क्षयः । तत्र यथा वृद्धस्य दोषस्य क्षयाधानमुक्तम् । न तथा क्षीणस्य वर्द्धनमिति ज्ञेयम् ॥ ६ ॥

**एतावदेव हि भैषज्यप्रयोगे फलमिष्टं स्वस्थवृत्तानुष्ठाने च यावद्धातूनां साम्यं स्यात् । स्वस्था ह्यपि धातूनां साम्यानुग्रहार्थमेव कुशला रसगुणानाहारविकारांश्च पर्यायेणेच्छन्त्युपयोक्तुं सात्म्यसमाज्ञातानेकप्रकारभूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरसमाज्ञातया चेष्टया सममिच्छन्ति कर्तुम् ॥ ७ ॥**

उक्तधातुसाम्योपादेयतां दर्शयितुं भेषजप्रयोगस्य तथा स्वस्थवृत्तानुष्ठानस्य धातुसाम्यातिरिक्तं फलं निषेधयन्नाह—एतावदेवेत्यादि ।—'एतावदेव' इत्यनेन वक्ष्यमाणधातुसाम्यं प्रत्यवमृशति । धातुसाम्यात्मको हि भेषजसाध्यो न धातुसाम्यादतिरिच्यते । तथा, स्वस्थस्योजस्करत्वम् । रसायनेनापि धातुसाम्यमेव विशुद्धमाधीयते । तेन, धातुसाम्यादतिरिक्तमायुर्वेदसाध्यं नास्तीति भावः । उक्तंच—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" इति । ननु स्वस्थे धातुसाम्यं सिद्धमेव । न च सिद्धं साध्यते । स्वस्थनिष्ठवृत्तानुष्ठानेऽपि धातुसाम्यमेव फलमित्याह—स्वस्था ह्यपीत्यादि ।—साम्यानुग्रहार्थमिति स्वस्था एव साम्यस्य परापरसात्म्योत्पादेन परिपालनार्थम् । रसा मधुरादयः । गुणा गुर्वादयः । आहारविकाराः खाद्यलेह्या यवाग्वादयः । पर्यायेणेति उचितेन क्रमेण । स च क्रमः । यथा—मधुरमुपयुज्य तज्जन्यकफवृद्ध्यादिप्रतिबन्धार्थं कट्वाद्युपयोज्यमित्यादिरसक्रमः । तथा गुरुमुपयुज्य तत्कार्यप्रतिबन्धार्थं लघूपयोगः । इत्येवंप्रकारो लघुगुरूपयोगक्रमः । आहारविकारेऽपि यवाग्वाद्युपयुज्य तत् पाकार्थं पेयाद्युपयोग इत्यादिकः क्रमः । 'गुण' शब्देन च रसा अपि प्राप्यन्ते । तथापि रसाः प्राधान्यात् पृथगुक्ताः । सात्म्यसमाज्ञातानिति 'रसगुणान्' इत्यस्य तथा 'आहारविकारांश्च' इत्यस्य विशेषणम् । सात्म्याश्च ते अभ्यासेन तथा समत्वेन स्वाभाविकपथ्यत्वेनाज्ञाता इति सात्म्यसमाज्ञाताः । 'सम'शब्देनात्र पथ्यमुच्यते । किंवा सर्वदा सात्म्यत्वेन समाज्ञाताः सात्म्यसमाज्ञाताः । तेन असात्म्यानामुपयोगमेव प्रतिक्षिपति । यच्च तावत् रसादयः पर्यायेणोपयुज्यते तत्साधु । यत्र त्वेकप्रकारा एव रसादयः कुतश्चिद्धेतोरभ्यस्यन्ते । तत्र को विधिरित्याह ।—एकप्रकारेत्यादि ।—तत्रोपयुक्तैकप्रकाररसादिभूयिष्ठाद् रसादेर्विपरीतमेव करोतीति तद्विपरीतकरी समाज्ञाता चेष्टा । तया चेष्टया समं कर्तुमिच्छन्तीति । एकप्रकारभूयिष्ठाद्युपयोगेनाधीयमानवैषम्यशरीरं समधातुं कर्तुमिच्छन्ति । एतदुदाहरणम्—यथा—मधुरप्रकारभूयिष्ठं च आहारप्रकारमुपयुञ्जीत । तस्य मधुरसमानकफादिवृद्धिमाशंक्य कफादिक्षयकरी व्यायामादिचेष्टा तया सामान्यमाधीयते । किम्वा, तद्विपरीतकरी च, तथा, समत्वेन च आज्ञाता या चेष्टा । सा तद्विपरीतकरसमाज्ञाता । तेन क्रियमाणमतियोगादि निषेधयति ॥ ७ ॥

**देशकालात्मगुणविपरीतानां हि कर्मणामाहारविकाराणांच क्रियोपयोगः सम्यक् सर्वातियोगसन्धारणमसन्धारणमुदीर्णानांच गतिमतां साहसानांच वर्जनं स्वस्थवृत्तमेतावद्धातूनां साम्यानुग्रहार्थमुपदिश्यते ॥ ८ ॥**

सम्प्रति प्रस्तावागतं स्वस्थवृत्तं समासेनाह—देशेत्यादि ।—देशादिभिः 'गुण'शब्दः सम्बध्यते । 'आत्म'शब्देनेह शरीरमुच्यते । देशविपरीतं कर्म यथा—मरौ स्वप्नः । कालविपरीतं कर्म यथा—वसन्ते व्यायामः, आत्मविपरीतं कर्म यथा—स्थूलशरीरे व्यायामजागरणादि । एवमाहारप्रभेदाश्च कालादिविपरीता उन्नेयाः । कर्मणां सम्यक्क्रियोपयोगस्तथा आहारविकाराणां सम्यक् क्रियोपयोगः । मिथ्यायोगायोगरूपोऽप्यतियोगो ज्ञेयः । तेन, सर्वेषां कालबुद्धीन्द्रियार्थमिथ्यायोगादीनां वर्जनं सर्वातियोगसन्धारणम् । कालमिथ्यायोगादेस्तु दुष्परिहरस्य प्रतिक्रिययैव वर्जनम् । गतिमतामिति पुरीषादीनां बहिर्गमनशीलानाम् । साहसानामयथाबलानाम् ॥ ८ ॥

**धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वाप्याहारविहारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति ह्रासंतु विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वाप्यभ्यस्यमानैः ॥ ९ ॥**

अथ रसादिधातूनां वृद्धिह्रासावुक्तौ । तौ सात्म्याहाराभ्यां क्रियेते तद्दर्शयितुमाह–धातव इत्यादि ।—'शारीराः' इति पदेनाध्यात्मिकान् बुद्ध्यादीन् व्यवच्छिनत्ति । यतः न बुद्ध्यादयः समानगुणवचनाद्यावर्त्तन्ते[1], असमानगुणानाक्रामन्ति । समान एव परं गुणो यस्य तत्समानगुणम् ।—यथा–मांसं मांसस्य समानगुणभूयिष्ठम् । यदल्पसमानगुणम् । यथा—

१ वर्त्तन्त इति पाठान्तरम् ।

शुक्रस्य क्षीरम् । क्षीरस्यातिद्रवत्वात् शुक्रेऽल्पसमानगुणम् । अभ्यस्यमानैरित्यनेन सकृदुपयोगाद् वृद्धिं ह्रासंच निषेधयति । विपरीता एव परं गुणा यस्य तद्विपरीतगुणम् । अल्पसमानगुणं तु विपरीतगुणभूयिष्ठम् ॥ ९ ॥

तत्रेमे शरीरधातुगुणाः संख्यासामर्थ्यकरास्तद्यथा—गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवाः । तेषु ये गुरवः, ते गुरुभिराहारगुणैरभ्यस्यमानैराप्यायन्ते लघवश्च ह्रसन्ति । लघवस्तु लघुभिराप्यायन्ते, गुरवश्च ह्रसन्ति । एवमेव सर्वधातुगुणानां सामान्ययोगाद्वृद्धिर्विपर्ययाद्ध्रासः । तस्मान्मांसमाप्यायते मांसेन भूयस्तरमन्येभ्यः शरीरधातुभ्यः । तथा लोहितं लोहितेनैव । मेदो मेदसा । वसा वसया । अस्थि तरुणास्थ्ना । मज्जा मज्ज्ञा । शुक्रं शुक्रेण । गर्भस्त्वामगर्भेण ॥ १० ॥

अथ के ते शरीरधातुगुणाः । ये तेषां गुणैः समानाश्चोच्यन्त इत्याह—तत्रेत्यादि । शरीरधातुगुणा इति विशेषणप्रस्तुतत्वेनानभिधेयात्मगुणान् बुद्ध्यादीन् निरस्यति । परादयस्तु यद्यपि शरीरधातुगुणा भवन्ति तथापि ते वृद्धिं ह्रासं च प्रति अनतिप्रयोजनत्वादिहानुक्ताः । रसस्तु प्रधानत्वेन प्रकरणानन्तरोक्त एवेति नेहोक्तः । स्पर्शस्तु शीतोष्णसंगृहीत एव । शब्दरूपगन्धास्तु वृद्धौ ह्रासे च नातिप्रयोजना इति नोक्ताः । संख्या ज्ञानं गणना वा । तत्र सामर्थ्यं कुर्वन्तीति संख्यासामर्थ्यकराः । एते हि गुर्वादयो ज्ञाता विंशतिगुर्वादयो भवन्तीति यदङ्गानां संख्यासामर्थ्यरूपम् । तत् कुर्वन्ति गुरुलघ्वादयः । परस्परविपर्ययात्मकान् द्वन्द्वान् दशगुणान् दर्शयित्वा तेषां च द्रव्यसम्बन्धानां श्रृङ्गग्राहिकतया कर्माह—तेष्वित्यादि । लघवश्च ह्रसन्तीति च्छेदः । शेषशीतादिगुणानां वृद्धिमतिदेशेनाह—एवमित्यादि ।—सामान्ययोगानिति समानैकरूपार्थयोगान् । तच्च सामान्यं सर्वथा समानगुणजातिरूपं भवति । यथा—पोष्यपोषकयोर्मांसयोः । क्वचिद्विजातीयगुणा एव पोष्यपोषकवृत्तयो भवन्ति । यथा—क्षीरशुक्रयोः । तत्रात्यर्थवृद्धिकर्तृत्वेन प्रथमं जातिरूपमेव सामान्यं सर्वगुणसामान्ययुक्तमुदाहरति—तस्मादित्यादि ।—भूयस्तरमन्येभ्य इत्यनेन, मांसेन मांसगुणभूयिष्ठतया रक्तादिवृद्धिरपि क्रियते, भूयसी तु सामान्ययोगान्मांसस्य वृद्धिः क्रियत इति दर्शयति । लोहितं लोहितेनैवेत्येवमादौ "भूयस्तरमन्येभ्यः' इत्यनुवर्त्तनीयम् । गर्भस्त्वामगर्भेणेत्यत्र आमगर्भेणाण्डादिरूपेण समुदितानां मांसादीनां साम्यनिष्पन्नानां वृद्धिरुच्यते ॥ १० ॥

यत्र त्वेवंलक्षणेन सामान्येन सामान्यवतामाहारविकाराणामसान्निध्यं स्यात् सन्निहितानां वाप्ययुक्तत्वान्नोपयोगो घृणित्वादन्यस्माद्वा कारणात् । स च धातुरभिवर्द्धयितव्यः स्यात् । तस्य ये समानगुणाः स्युराहारविकारा असेव्याश्च । तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामप्याहारविकाराणामुपयोगः स्यात् । तद्यथा—शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धसमाख्यातानां चापरेषां द्रव्याणाम् । मूत्रक्षये पुनरिक्षुरसवारुणीमण्डः द्रवमधुराम्ललवणोपक्लेदिनाम् । पुरीषक्षये कुल्माषमाषकुष्कुण्डाऽजमध्ययवशाकधान्याम्लानाम् । वातक्षये कटुकतिक्तकषायरूक्षलघुशीतानाम् । पित्तक्षयेऽम्ललवणकटुकक्षारोष्णतीक्ष्णानाम् । श्लेष्मक्षये स्निग्धगुरुमधुरसान्द्रपिच्छिलानां द्रव्याणाम् । कर्मापि यद्यस्य धातोर्वृद्धिकरम् । तत्तदा सेव्यम् । एवमन्येषामपि शरीरधातूनां सामान्यविपर्ययाभ्यां वृद्धिह्रासौ यथाकालं कार्याविति सर्वधातूनामेकैकशोऽतिदेशतश्च वृद्धिह्रासकराणि व्याख्यातानि भवन्ति ॥ ११ ॥

सम्प्रति समानगुणभूयिष्ठेन विजातीयेन वृद्धिमाह—यत्रेत्यादि ।—एवं लक्षणेनेति तुल्यजातिरूपेण । उक्तार्थं[1] विवृणोति—घृणित्वादित्यादि ।—अन्यस्माद्वा कारणादित्यभक्ष्यामगर्भशुक्रादिभक्षणजन्याधर्मतया । तत्रेत्यनेन असन्निहितान् घृणया कारणान्तरेण च सन्निहितानप्यसेव्यान् प्रत्यवमृषति । अन्यप्रकृतीनामिति विजातीयानाम् । अत्रोदाहरणमाह—तद्यथेत्यादि ।—शुक्रे क्षीणे यदि शुक्रान्तरं न प्राप्यते । प्राप्तं वा घृणादिवशान्न प्रयोज्यं स्यात् । तदा समानगुणभूयिष्ठानां क्षीरादीनामुपयोगः कर्तव्य इत्यर्थः । मूत्रादावपि घृणादिना स्वजातिप्रयोगविषये समानगुणभूयिष्ठमाह—मूत्रेत्यादि ।—कुष्कुण्डं पलालादिच्छत्रिका । अजमध्यं छागान्तरादि । द्रव्याणामुपयोग इति योजना । आहारं वृद्धिकरमभिधाय विहारमपि वृद्धिकरमाह—कर्मेत्यादि ।—'कर्म' शब्देनेहास्यचिन्तादयोऽपि गृह्यन्ते । कर्म तु प्रायः प्रभावादेव वृद्धिकरं भवतीति कृत्वाऽत्र समानगुणतापरिग्रहो न कृतः । साक्षादनुक्तानामपि धातूनामुक्तन्यायानुसारेण वृद्धिह्रासकारणमिति दर्शयति—एवमित्यादि ।—यथाकालमिति क्रियाकालानामनतिपातेन । उक्तं प्रकरणमुपसंहरति—इति सर्वेत्यादि ।—एकैकश इत्यनेन । 'मांसमाप्यायते मांसेन' इत्यादिनोक्तं गृह्णाति । अतिदेशतश्चेत्यनेन । "एवमन्येषामपि धातूनाम्" इत्यादिनोक्तं गृह्णाति ॥ ११ ॥

---

१ अनुक्तार्थमिति पाठान्तरम् ।

**कार्त्स्न्येन शरीरवृद्धिकरास्त्विमे भावाः—कालयोगः स्वभावसंसिद्धिराहारसौष्ठवमविघातश्चेति ॥ १२ ॥**

वृद्धिप्रस्तावात् सर्वशरीरवृद्धिकरानाह—कार्त्स्न्येनेत्यादि ।—कालयोग इति वृद्धिकारकयौवनादिकालयोगः । यौवनादौ हि सप्तदशवत्सरादिकाललक्षणे कालमहिम्नैव वृद्धिर्भवति । 'स्वभाव' शब्देनादृष्टमुच्यते । तेन स्वभावसंसिद्धशरीरवृद्धिहेतुरदृष्टम् । आहारसौष्ठवमित्याहारसम्पत् । अविघातश्चेति शरीरवृद्धिविघातकरातिव्यवायमनोघातादिविरहः ॥ १२ ॥

**वलवृद्धिकरास्त्विमे भावा भवन्ति । तद्यथा—वलवत्पुरुषदेशे जन्म वलवत्पुरुषे काले च । सुखश्च कालयोगो वीजक्षेत्रगुणसम्पच्चाहारसम्पच्च शरीरसम्पच्च सात्म्यसम्पच्च सत्वसम्पच्च स्वभावसंसिद्धिश्च यौवनंच कर्म संहर्षश्चेति ॥ १३ ॥**

वृद्धिप्रस्तावाच्च वलवृद्धिकरान् भावानाह—वलेत्यादि ।—देशमहिम्ना वलवन्तः पुरुषा यस्मिन् । हेमन्ते शिशिरे वा काले जायमानस्य वलं जनयति । सुखश्च कालयोग इति साधारणकालयोगः । वीजस्य शुक्रस्य तथा क्षेत्रस्यार्तवगर्भाशयरूपस्य गुणानां प्रशस्तधर्माणां सम्पत् वीजक्षेत्रगुणसम्पत्। अत्र वीजक्षेत्रयोर्निर्दोषतापि सम्पत् स्यात् । तेन निर्दोषातिरिक्तस्य सारत्वादिवीजक्षेत्रगुणप्राप्त्यर्थं 'गुण'ग्रहणं ज्ञेयम् । सत्वसम्पच्चेति सत्वसम्पदापि शारीरं वलं भवतीति ज्ञेयम् । वचनं हि—"शरीरं ह्यपि सत्वमनुविधीयते" इति । स्वभावसंसिद्धिर्वलजनककर्मसंसिद्धिः । कर्म व्यायामादि कर्मेत्यर्थः । व्यायामादिकर्माभ्यासान्निजं वलं भवति ॥ १३ ॥

**आहारपरिणामकरास्त्विमे भावा भवन्ति । तद्यथा—ऊष्मा वायुः क्लेदः स्नेहः कालः समयोगश्चेति[2] ॥ १४ ॥**

प्रशस्तगुणाभिधानप्रस्तावादाहारपरिणामस्यापि प्रशस्तस्य हेतुमाह—आहारेत्यादि ।—काल इति पाककालो निशाऽवसानादिरूपः । समयोग इत्याहारस्य प्रकृत्याद्यष्टाहारविधिविशेषात् सम्यग्योगः ॥ १४ ॥

**तत्र तु खल्वेषामूष्मादीनामाहारपरिणामकराणां भावानामिमे कर्मविशेषा भवन्ति । तद्यथा—ऊष्मा पचति, वायुरपकर्षति । क्लेदः शैथिल्यमापादयति, स्नेहो मार्दवं जनयति, कालः पर्य्याप्तिमभिनिर्वर्त्तयति, समयोगस्त्वेषां परिणामधातुसाम्यकरः सम्पद्यते ॥ १५ ॥**

तत्र चाहारपरिणामकरेषु ऊष्मैव साक्षात् पाके व्याप्रियते । वाय्वादयस्तु तस्य पचतः सहायताव्यापारविशेषेण सहायतां यान्तीति दर्शयन्नाह—तत्रेत्यादि ।—वायुरपकर्षतीति ऊष्मस्थानाद् विदूरस्थितमन्यमूष्मसमीपं नयति ।—यदुक्तम्—"अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति" इति । वायुरपकर्षतीत्युपलक्षणम् । तेन, अग्न्युत्तेजनमपि समानाख्यस्य वायोर्वोद्धव्यम् । उक्तं हि—"समानेनावधूतोऽग्निः पचति" इति । पर्याप्तिमिति पाके निष्पत्तिम् । सत्यपि ऊष्मादिव्यापारे कालवशादेव पाको भवति । नोष्मादिव्यापारमात्रादिति भावः । समयोगस्त्वेषामिति एषामाहारद्रव्याणां प्रकृत्यादीनां यः समयोगः । स परिणामकरो धातुसाम्यकरश्च भवति । यदा हि प्रकृत्यादिविरुद्ध आहारो भवति । तदा प्रकृत्यादिदोषादेव न सम्यक् परिणामकरो भवति । एतदूष्मादिव्यापारप्रतिपादकं ग्रन्थान्तरम्[1] —यथा—"अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति । तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् । समानेनावधूतोऽग्निरुदर्यः पवनेन तु । काले पक्वं समं सम्यक् पचत्यायुर्विवृद्धये" इति ॥ १५ ॥

**परिणामतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथास्वमविरुद्धाः । विरुद्धाश्च विहन्युर्विहताश्च विरोधिभिः शरीरम् ॥ १६ ॥**

अथ कया परिपाट्या परिणाममापद्यमान आहारो धातुसाम्यकरो भवतीत्याह—परिणामत इत्यादि सर्वमाननिर्द्देशेन यो यथा यथा आहारांशः परिणमते स तथा तथा शरीरगुणरूपतां याति । न कृत्स्नाहारपरिणाममपेक्षत इति दर्शयति । यथास्वमविरुद्धा इति य आहारगुणा यस्मिन् शरीरगुणेऽविरुद्धाः तएव तद्रूपतां नयन्ति । यथा—आहारस्य कठिनो भागो मांसास्थ्यादिकठिनभागपोषको भवति । द्रवांशस्तु शोणितादिरूपो भवति इत्यादि । विरुद्धास्तु विहन्युरिति शरीरगुणविरुद्धास्तु आहारगुणा विरुद्धान् गुणान् विहन्युर्ह्रासयेयुरित्यर्थः । अथ ते शरीरगुणा आहारगुणविहताः सन्तः किं कुर्वन्तीत्याह—विहतास्तु विरोधिभिः शरीरं विहन्युरिति योजना । विरोधिभिरिति विपरीतैराहारगुणैर्विहता इति क्षयं नीताः किंवा, विरोधिभिरिति यथा—दुग्धमत्स्यादिविरुद्धाहारैर्विहताः शरीरं हन्युः । 'च' कारात्, विरुद्धगुणैश्च क्षयं नीताः शरीरं हन्युरिति दर्शयति ॥ १६ ॥

---

१ शरीरपुष्टिकरास्त्विमे इति पाठान्तरम् । २ संयोगश्चेति पाठान्तरम् ।

१ आदानकर्मा प्राणः अन्नं कोष्ठं प्रकर्षति, तदन्नं द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतं समानवायुनोत्तेजितो जाठराग्निः आयुर्वृद्धये समं काले पचति इति संवंधः

अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् । द्रवैर्विभिन्नसंघातं नीतं स्नेहेन मार्दवम् ॥ १ ॥

संधुक्षितः समानेन पचत्यामाशयस्थितम् । औदर्योऽग्निर्यथा-वाह्यः स्थालीस्थं तोयतंडुलम् ॥ २ ॥ अष्टांगहृदयशारीरस्थानम् अध्यायः ३ ।

**शरीरगुणाः पुनर्द्विविधाः संग्रहेण—मलभूताः प्रसादभूताश्च । तत्र मलभूतास्ते, ये शरीरस्य बाधकराः स्युः । तद्यथा—शरीरच्छिद्रेषूपदेहाः पृथग्जन्मानो बहिर्मुखाः परिपक्काश्च धातवः प्रकुपिताश्च वातपित्तश्लेष्माणो ये चान्येऽपि केचित् शरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते, सर्वांस्तान्मले सञ्चक्ष्महे । इतरांस्तु प्रसादे । गुर्वादींश्च द्रवान्तान् गुणभेदेन । रसादींश्च शुक्रान्तान् द्रव्यभेदेन ॥ १७ ॥**

अथ कतिप्रकारास्ते शरीरगुणा इत्याह—शरीरेत्यादि ।—संग्रहेण संक्षेपेण । तेन विस्तरेण धातूपधात्वादिविभागेन बहवश्च भवन्ति । 'भूत' शब्दः स्वरूपे । बाधकरा इति पीडाकरा इत्यर्थः । पृथग्जन्मान इति पीडाकारकाः शिङ्घाणकादिभेदेन नानारूपाः । 'बहिर्मुखाः' इत्यनेन य एव च्छिद्रमलाः प्रभूततया बहिर्निःसरणाभिमुखाः, त एव पीडाकर्तृत्वेन मलाख्याः । ये तु उपलेपमात्रकारका गुणकर्तृतया न ते मलाख्याः । परिपक्वाश्च धातव इति पाकात् पूयतां गताश्च शोणितादयो मलाख्याः । किंवा अपक्वाश्चेति पाठः । तदा समधातवो मलाख्या इति ज्ञेयम् । कुपिताश्चेति पदेन वातादयः सामान्येन क्षीणा वृद्धा वा गृह्यन्ते । विकृतिमात्रं हि वातादीनां कोपः । ये चान्येऽपीत्यादिना विमार्गगतान् पीडाकारकान् शरीरधातून् तथाऽजीर्णादीन् ग्राहयन्ति । मल इति एकवचनं जातौ । इतरानिति स्वमानस्थितपुरीषवातादीन् । पुरीषवातादयोऽपि शरीरावष्टम्भकाः प्रसाद एव गुणकर्तृत्वात् । शरीरगतान् मलप्रसादभावानभिधाय पुनर्गुणद्रव्यभेदानाह—गुर्वादींश्चेत्यादि ।—गुर्वादयो द्रवान्ताः पश्चादुक्ता एव । अत्र च ये मला उपधातवश्च नोक्ताः ते गुर्वादिगुणाधारत्वेन ग्राह्याः । किम्वा इतरांस्तु निर्बाधकरान् मलादीन् प्रसादे सञ्चक्ष्महे । तथा गुर्वादींश्च तथा रसादींश्च निर्विकारान् द्रव्यगुणरूपान् प्रसादे सञ्चक्ष्महे इति व्याख्येयम् ॥ १७ ॥

**तेषां सर्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषस्वभावात् । वातादीनां पुनर्धात्वन्तरे कालान्तरे प्रदुष्टानां विविधाशितपीतीयेऽध्याये विज्ञानान्युक्तानि । एतावत्येव दुष्टदोषगतिर्यावत् स्पर्शहीनात् । शरीरधातूनां प्रकृतिभूतानां तु खलु वातादीनां फलमारोग्यम् । तस्मादेषां प्रकृतिभावे प्रयतितव्यं बुद्धिमद्भिरिति ॥ १८ ॥**

**भवति चात्र ॥**

**शरीरं सर्वथा सर्वं सर्वदा वेद यो भिषक् ।**
**आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदमिति ॥१९॥**

१ शरीरधातव इति पाठान्तरम् ।

अथ यदेतत् पुरीषादीनां मलत्वम् तद्दूषणाय भवति । तेन, तेषां दूषकत्वे हेतुमाह—तेषामित्यादि ।—तेषामिति पुरीषादीनां रसादीनां च । दुष्टा इति स्वहेतूपचिताः । क्षीणास्तु नानादुष्टिं दोषाः कुर्वन्तीति प्रतिपादितमेव । अथ धात्वन्तराश्रयिणां वातादीनां दुष्टानां किन्तल्लक्षणम् । येन ज्ञातव्या इत्याह—वातादीनामित्यादि ।—विज्ञानानीति लक्षणानि । ननु रसाद्याश्रयदुष्टवातादिलक्षणं तावत् विविधाशितपीतीये चोक्तम् । केशमूत्रनखाद्याश्रयदुष्टिलक्षणं तु यदत्र नोक्तम् तत् कथं ज्ञेयमित्याह—एतावत्येवेत्यादि ।—केशादौ दुष्टानामपि वातादीनां गतिर्नास्तीति वाक्यार्थः । यावत् संस्पर्शनादिति स्पर्शनेन्द्रियव्याप्यत्वेन शरीरधातूनां दूषणे स्पर्शनेन्द्रियपर्यन्तमेव दुष्टदोषगतिर्भवति । तेन न केशादिषु दुष्टदोषगतिः । यत्तु पलितादिकेशे मूत्रे नखे वा पुष्पम् । तत् स्पर्शवच्छरीरस्थितेनैव दोषेण कृतम् । न पुनर्नखमूत्रकेशेष्वपि स्वमार्गचारी दोषः प्रचरतीति ब्रुवते । वयंतु ब्रूमः—विविधाशितपीतीयोक्तदुष्ट्या सर्वदुष्ट्युपसंग्रहो भवतीति दर्शयन्नाह—एतावत्येवेत्यादि ।—यावत् संस्पर्शनादिति कृत्स्नसम्बधात् । तेन, शरीरधातूनां यावत् स्पर्शनाद्दुष्टदोषगतिर्भवति । सा एतावत्येव सा सर्वा विविधाशितपीतीयोक्तैव न ततोऽधिका दुष्टिर्देहस्यास्ति । तत्र हि "मलानाश्रित्य दुष्टास्तु भेदशोऽथ प्रदूषणम्" इति ग्रन्थेन कृत्स्नग्रहणात् केशनखौ च मलौ गृहीतावेव । एतेन, नखाग्रकेशाग्रगतेन दोषेणैव कृतं भवेत् । अथ दुष्टा वातादयो दुष्टिलक्षणानि कुर्वन्ति । प्रकृतिस्थास्तु किं कुर्वन्तीत्याह—प्रकृतिभूतानामित्यादि ।—सम्प्रत्युक्तप्रकरणजन्यशरीरज्ञानस्य फलमाह—शरीरमित्यादि ॥ १८—१९ ॥

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—श्रुतमेतद्यदुक्तं भगवता शरीराधिकारे वचः । किन्नु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्त्तते कुक्षौ । कुतो मुखः कथं चान्तर्गतस्तिष्ठति । किमाहारश्च वर्त्तयति कथंभूतश्च निष्क्रामति । कैश्चायमाहारोपचारैर्जातः सद्यो हन्यते । जातस्तु कैरव्याधिरभिवर्द्धते । किंचास्य देवादिप्रकोपनिमित्ताधिकाराः संभवन्ति आहोस्विन्न, किञ्चास्य कालाकालमृत्य्वोर्भावाभावयोर्भगवानध्यवस्यति, किञ्चास्य परमायुः, कानि चास्य परमायुषो निमित्तानीति॥२०॥**

शरीरविचायकं प्रकरणं समाप्य गर्भशरीरविचायकं प्रकरणमारभते,—एवंवादिनमित्यादि ।—कुक्षावित्यन्तेन एकः प्रश्नः । कुतोमुखः कथञ्चान्तर्गतस्तिष्ठतीति द्वितीयः । निष्क्रामतीत्यन्तेन तृतीयः । कैश्चायमाहारोपचारैर्जातः सद्यो हन्यत इति चतुर्थः । कैरव्याधिरभिवर्द्धत इति पञ्चमः । आहोस्विन्ने-

१ कथंचास्येति पाठान्तरम् ।

त्यन्तः षष्ठः । शेषं प्रश्नत्रयं पूर्वप्रश्नद्वयस्य व्यवच्छेदमेव । एवं नव प्रश्नाः । अध्यवस्यतीति निश्चिनोति ॥ २० ॥

**तमेवमुक्तवन्तमग्निवेशं भगवान् पुनर्वसुरात्रेय उवाच—पूर्वमुक्तमेतद्गर्भावक्रान्तौ यथायमभिनिर्वर्त्तते कुक्षौ, यच्चास्य यदा सन्तिष्ठतेऽङ्गजातम् । विप्रतिवादास्त्वत्र बहुविधाः सूत्रकारिणामृषीणां सन्ति, सर्वेषां तानपि निबोधोच्यमानान् ।—शिरःपूर्वमभिनिर्वर्त्तते कुक्षाविति कुमारशिरा भरद्वाजः पश्यति सर्वेन्द्रियाणां तदधिष्ठानमिति कृत्वा । हृदयमिति काङ्कायनो वाह्लीकभिषक् चेतनाधिष्ठानत्वात् । नाभिरिति भद्रकाप्य आहारगम इति कृत्वा । पक्काशयगुदमिति भद्रशौनको मारुताधिष्ठानत्वात् । हस्तपादमिति वडिशस्तत्करणत्वात् पुरुषस्य । इन्द्रियाणीति जनको वैदेहस्तान्यस्य बुद्ध्यधिष्ठानानीति कृत्वा । परोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः । सर्वाङ्गाभिनिर्वृत्तिर्युगपदिति धन्वन्तरिः । तदुपपन्नं सिद्धत्वात् । सर्वाङ्गानां तस्य हृदयं मूलमधिष्ठानञ्च केषाञ्चिद्भावानाम्, नच तस्मात् पूर्वाभिनिर्वृत्तिरेषाम्, तस्माद्धृदयप्रभृतीनां सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तिः । सर्वभावा ह्यन्योन्यप्रतिवद्धाः । तस्माद्यथाभूतदर्शनं साधु ॥ २१ ॥**

यथाक्रममुत्तराण्याह—पूर्वमित्यादि ।—पूर्वमुक्तमिति,—यच्चास्य यदा सन्तिष्ठते अङ्गजातम् । तदपि गर्भावक्रान्तौ "एवमस्य युगपदिन्द्रियाणि अङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्ते । अन्यत्र तेभ्यः । येऽस्य जातस्योत्तरकालं जायन्ते" इत्यादिना ग्रन्थेनोक्तम् । यद्यपि 'कथमभिनिर्वर्तते कुक्षौ' । इति नेह पृष्टम् तथापि, अभिनिर्वृत्तिक्रमोपदर्शनेन । "किन्तु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्तते" इति प्रश्नस्य यथोक्तोत्पादक्रमोपदर्शनादुत्तरं भवतीति मुनिनोक्तम्,—'उक्तमेतत् गर्भावक्रान्तौ यथाऽयमभिनिर्वर्तते कुक्षौ' इति । उक्तामपि युगपदङ्गाभिनिर्वृत्तिं मतान्तरोद्धारेण स्थिरं कर्तुमाह—विप्रतिवादास्त्वत्रेत्यादि'।—पक्काशयश्च गुदंचेति पक्काशयगुदम् । किम्वा पक्काशयसमीपस्थगुदं पक्काशयगुदं उत्तरगुदमित्यर्थः । इन्द्रियाणीति इन्द्रियाधिष्ठानानि नयनगोलकादीनि । तदुपपन्नमिति । प्रतिज्ञाभिहितार्थस्य युगपदङ्गाभिनिर्वृत्तिरूपस्य सिद्धत्वादिति हेत्वर्थः प्रतिज्ञार्थादभिन्न एव । ये तु, तुल्यकालाभिनिर्वृत्तत्वादिति पठन्ति तेषां हेत्वर्थो व्यक्तत्वादभिन्न एव । येन, उत्तरकालमपि सर्वाङ्गानां युगपद्वृद्धिदर्शनम् । समानकालवर्द्धमानानां फलानां समकालमेव जन्मानुमीयते । असमानकालजातानां न समानकालसमा वृद्धिर्भवति । पूर्वपीणां[1] मतानि हृदयपूर्वाभिनिर्वृत्तिर्दूषणेनैव समानन्यायाद्दूषयन्नाह—सर्वाङ्गानां तस्येत्यादि ।—मूलमिव मूलम् । तदुपघातेन सर्वाङ्गोपघातात् । अधिष्ठानमित्याश्रयः । तत्रौजःप्रभृतीनामधिष्ठानं हृदयञ्च भवति । न च तस्मात् पूर्वाभिनिर्वृत्तिरिति तस्याऽधिष्ठानमूलत्वात् । नानधिष्ठानानांच पूर्वाभिनिर्वृत्तिर्भवति । यदि हि मूलं कारणमिह मतं स्यात् । तदा कार्येभ्योऽङ्गेभ्यश्च प्राक् हृदयं स्यात् । न चेहाङ्गानां हृदयं कारणम् । किन्तु प्रधानम् । प्राधान्यञ्च तदुपघातेन सर्वोपघातादिति । यश्चाप्याश्रयाश्रयिभावः । स चापि सहोत्पन्नानामेव । हृदयं तदाश्रितौजःप्रभृतीनां प्रधानं भवतीति भावः । तदेवं चेत् हृदयस्य प्रधानस्य पूर्वोत्पादो नास्ति । तदा शिरःप्रभृतीनामपि पूर्वोत्पादो नास्त्येवेति कृत्वोपसंहरन्नाह—एषां तस्मादित्यादि ।—युगपदभिनिर्वृत्तौ हेत्वन्तरमाह—सर्वभावा हीत्यादि ।—भावा इति शरीरभावाः । अन्योन्यप्रतिवद्धा इति । यस्मात् सर्वभावाः परस्परप्रतिवद्धा एव सिरास्नाय्वादिभिर्जायन्ते । तेन, समाननिबन्धना युगपदेव भवन्ति । यथाभूतदर्शनमिति यथात्मदर्शनम्, तच्च धन्वन्तरिमतमेव ॥ २१ ॥

**गर्भस्तु खलु मातुः पृष्ठाभिमुख ऊर्ध्वशिराः सङ्कुच्याङ्गान्यास्तेऽन्तःकुक्षौ[2] ॥ २२ ॥**

**व्यपगतपिपासाबुभुक्षणः खलु गर्भः परतन्त्रवृत्तिः, मातरमाश्रित्य वर्त्तयत्युपस्नेहोपस्वेदाभ्यां गर्भस्तु सदसद्भूताङ्गावयवः, तदनन्तरं ह्यस्य लोमकूपायनैरुपस्नेहः कश्चिन्नाभिनाड्ययनैः । नाभ्यां ह्यस्य नाडी प्रसक्ता । सा नाभ्यां चापरा । अपरा चास्य मातुः प्रसक्ता हृदये, मातृहृदयं ह्यस्य तामपरामभिसंप्लवते सिराभिः स्यन्दमानाभिः[3] स तस्य रसः बलवर्णकरः सम्पद्यते, स च सर्वरसवानाहारः स्त्रिया ह्यापन्नगर्भायास्त्रिधा रसः प्रतिपद्यते स्वशरीरपुष्ट्ये स्तन्याय गर्भवृद्धये च । स तेनाहारेणोपष्टब्धः परतन्त्रवृत्तिर्मातरमाश्रित्य वर्त्तयत्यन्तर्गतः ॥ २३ ॥**

गर्भस्त्वित्यादि द्वितीयप्रश्नस्योत्तरम् । 'व्यपगत' इत्यादि "किमाहारश्च वर्तयति" इति प्रश्नस्योत्तरम् । परतन्त्रवृत्तिरिति मात्राधीनवृत्तिः । एतदेव विवृणोति—मातरमित्यादि ।—उपस्नेहो निस्यन्दः; सदसद्भूताङ्गावयव इतिच्छेदः । तदनन्तरमित्यङ्गप्रत्यङ्गवृत्तौ सत्याम् । नाभिसक्ता नाडी नाभिनाडी । अयनैरिति मार्गैः । अपरा गर्भस्य नाभिनाडीप्रतिवद्धा 'अमरा' इति ख्याता । अभिसंप्लवते इति प्राप्नोति । एतच्चापरादिजन्म गर्भादृष्टवशाद्भवति ॥ २२—२३ ॥

---

१ हृदयपूर्वाणामिति पाठान्तरम् ।

१ यथार्थदर्शनमिति पाठान्तरम् । २ सङ्कुच्याङ्गान्यास्ते जरायुवृतः कुक्षाविति पाठान्तरम् । ३ संस्पन्दमानाभिरिति पाठान्तरम् ।

स चोपस्थितकाले जन्मनि प्रसूते मारुतयोगात् परिवृत्त्यावाक्शिरा निष्क्रामत्यपत्यपथेन । एषा प्रकृतिर्विकृतिः पुनरतोऽन्यथा । परं ततः स्वतन्त्रवृत्तिर्भवति ॥ २४ ॥

कथंभूतो निष्क्रामतीत्यस्योत्तरम्—स चोपस्थितकाल इत्यादि।—उपस्थितकाल इति प्रत्यासन्नकाले । विकृतिरतोऽन्यथेति निर्गत्य चरणेनापि निर्गमो भवतीति दर्शयति । स्वतन्त्रवृत्तिर्भवतीति स्वयंकृतेन स्तन्यपानादिना वर्तते । न गर्भस्थ इव मातुरेवाहारेण परं वर्तत इत्यर्थः ॥ २४ ॥

तस्याहारोपचारौ जातिसूत्रीयोपदिष्टावविकारकरौ चाभिवृद्धिकरौ भवतः ॥ २५ ॥

ताभ्यामेव च विपमाभ्यां जातः सद्यो हन्येत[3] तरुरिवाचिरव्यपारोपितो वातातपाभ्यामप्रतिष्ठितमूलः ॥ २६ ॥

'कैश्चायम्' इत्यादिप्रश्नस्योत्तरम्—तस्येत्यादि।—'जातिसूत्रीयोपदिष्टौ' इत्यनागतावेक्षणेनानागते भूतवत्प्रयोगाद्बोद्धव्यम् । व्यपारोपितस्तत्तद्धात्यारोपितः ॥ २५ ॥ २६ ॥

आप्तोपदेशादद्भुतरूपदर्शनात्समुत्थानलिङ्गचिकित्सितविशेषाच्चादोषप्रकोपानुरूपा देवादिप्रकोपनिमित्ता विकाराः समुपलभ्यन्ते ॥ २७ ॥

किञ्चास्येत्यादिप्रश्नस्योत्तरम्—आप्तोपदेशादित्यादि ।—आप्तोपदेश इति कुमारतन्त्रोपदेशो ब्रह्मादिप्रणीतः । तत्र हि कुमाराणां देवादिनिमित्तविकाराः प्रतिपाद्यन्ते । देवादिग्रहणेन च तदनुचरा अपि गृह्यन्ते । स्कन्दग्रहादयः सुश्रुतोक्ता देवादयश्चाष्टौ । यदुक्तम्—'देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः । तथैव रक्षांसि पिशाचजातिरेषोऽष्टको देवगणो ग्रहाः स्युः" इति । अनुमानमप्यत्राह—अद्भुतेत्यादि ।—अद्भुत आश्चर्यमिति यावत् । अद्भुतरूपदर्शनादिना यद्भवति । तच्चामानुपबलशोभादि ज्ञेयम् । एतद्धि दोषाजन्यत्वाद् देवादिकारणं गमयति । समुत्थानादिविशेष आगन्तूनामागन्तुविकारेषु स्फुट एव । अदोषप्रकोपानुरूपा इति दोषप्रकोपजन्यरोगविधर्माणः ॥ २७ ॥

कालाकालमृत्योस्तु खलु भावाभावयोरिदमध्यवसितं नः—यः कश्चिन् म्रियते, स काल एव म्रियते। न हि कालच्छिद्रमस्तीत्येके। तच्चासम्यक्। न ह्यच्छिद्रता सच्छिद्रता वा कालस्योपपद्यते कालस्वलक्षणस्वभावात् । तथाहुरपरे—यो यदा म्रियते, स तस्य नियतो मृत्युकालः, स सर्वभूतानां सत्यः समक्रियत्वादिति । एतदपि चान्यथार्थग्रहणम् । न हि कश्चिन्न म्रियत इति समक्रियः । कालः पुनरायुषः प्रमाणमधिकृत्योच्यते । तस्य सर्वभावा यथास्वं नियतकाला भविष्यन्ति, तच्च नोपपद्यते । प्रत्यक्षं ह्यकालाहारवचनकर्मणां फलमनिष्टम् विपर्यये चेष्टम्, प्रत्यक्षतश्चोपलभ्यते कालाकालव्यक्तिस्तासु तास्ववस्थासु तं तमर्थमभिसमीक्ष्य । तद्यथा—कालोऽयमस्य व्याधेराहारस्यौषधस्य प्रतिकर्मणो विसर्गस्याकालो वेति । लोकेऽप्येतद्भवति—काले देवो वर्षत्यकाले देवो वर्षति काले शीतमकाले शीतं काले तपत्यकाले तपति काले पुष्पफलमकाले पुष्पफलमिति । तस्मादुभयमस्ति काले मृत्युरकाले च । नैकान्तिकम् । यदि ह्यकाले मृत्युर्न स्यान्नियतकालप्रमाणमायुः सर्वं स्यात् । एवं गते हिताहितज्ञानमकारणं स्यात्, प्रत्यक्षानुमानोपदेशाश्चाप्रमाणानि स्युर्ये प्रमाणभूताः सर्वतन्त्रेषु । यैरायुष्याण्यनायुष्याणि चोपलभ्यन्ते । वाग्वस्तुमात्रमेतद्वादमृषयो मन्यन्ते—यदुच्यते नाकालमृत्युरस्तीति ॥ २८ ॥

कालाकालेत्यादौ 'इदमध्यवसितम्' इत्यनेन प्रकरणव्यवस्थापनीयत्वम् । 'तस्मादुभयमस्ति काले मृत्युरकाले च' इति ग्रन्थे वक्ष्यमाणं प्रत्यवमृषति । एकीयमतमाह—यः कश्चिदित्यादि ।—न हि काले छिद्रमस्तीति कालविहितः कश्चिदवकाशोऽस्तीति यं कालशून्यमवकाशमासाद्याकाले मृत्युः स्यादिति भावः । एतद्दूषयति तच्चेत्यादिना । सान्तरं यदवयविद्रव्यम् तत् सच्छिद्रमित्युच्यते । यच्च निरन्तरम् तदच्छिद्रम् । तेन कालस्य निरवयवस्य सच्छिद्रताऽच्छिद्रता वा न संभवति । तेन यदुच्यते—"कालस्याच्छिद्रत्वान्नाकाले मृत्युरस्ति" इति तदयुक्तमिति भावः । यत्त्वकालमृत्युव्यापकत्वेन कालस्योपचरितच्छिद्रत्वम् । तदुत्तरवक्ष्यमाणैकजातीयमतदूषणेनैव दूषितम् । कालस्वलक्षणस्वभावादिति कालस्वलक्षणे सच्छिद्रताया अच्छिद्रतायाश्चाभावादित्यर्थः । एकीयमतान्तरमाह—तथाहुरित्यादि ।—यो यदा म्रियते स एव तस्य नियतो मृत्युकाल इति कथं ज्ञायते इत्याह—कालः सर्वभूतानां सत्यः समक्रियत्वादिति । यस्मात् कालः सर्वभूतानामविशेषेण मारकतया समक्रियः । न रागात् किंचिद्भूतं मारयति । न द्वेषाद्वा किंचित्तु । किन्तु सर्वाण्येव हन्ति । तेन सर्वभूतानामयं सत्यो रागद्वेषशून्य इत्यर्थः । ततश्च रागद्वेषशून्यतया उचित एव परं मारयति । नानुचित इति भावः । दूषयति एतदपीत्यादिना । न न हि कश्चिन्न म्रियत इति

१ परिवृत्यावाक्शिरा इति पाठान्तरम् । २ परन्त्वत इति पाठान्तरम् । ३ हन्यते इति पाठान्तरम् ।

१ तस्येत्यादेः पूर्वम् "यस्य चेष्टम्, यो यदा म्रियते, स तस्य नियतो मृत्युकाल" इति क्वचिदधिकः पाठः । २ तदुत्तरवक्ष्यमाणैकीयमतदूषणेनैव दूषितमिति पाठान्तरम् ।

कृत्वा समक्रियः कालो भवत्येव । न तु शतवर्षलक्षणमायुःप्रमाणमधिकृत्य भवता समक्रियः कालोऽभिधीयते । यदि हि शतवर्षायुःप्रमाणेऽपि समक्रियः स्यात् तेन शतवर्षाद्वा पूर्वं न केचिन्म्रियेरन् । दृश्यते चैतत् । तस्मादेवम्भूतसमक्रियत्वेन कालस्य शतवर्षायुःप्राप्तेरर्वाङ्मरणम् 'कालमृत्यु'शब्दाभिधेयमिहायुर्वेदे । तन्निरस्तं भवतीति भावः । अकालमृत्युप्रतिषेधे दूषणमाह—तस्येत्यादि ।—सर्वभावा इति मृत्युव्यतिरिक्ता अप्याहारवचनादयः । प्रत्यक्षमिति सुव्यक्तं प्रमाणेनेत्यर्थः । कालाकालव्यक्तिस्तासु तास्विति तास्ता अवस्थास्तं तं व्याध्याहारादिकमर्थं बुद्धिस्थीकृत्य 'कालाकाल' शब्देनोच्यन्त इत्यर्थः । अत्र तृतीयदिनयुक्तायां तृतीयकज्वरं प्रति कालोऽयमस्येति व्यपदिश्यते । विपर्यये चाकाल इति व्यपदेशः । तथा ग्लान्यादिमुक्तायां शरीरावस्थायामाहाररूपमर्थमुद्दिश्य कालोऽयमाहारस्येति ज्ञानं भवति । विपर्यये चाकालमित्युदाहरणमुन्नेयम् । विसर्गस्येति व्याधिमोक्षस्य । इह प्रकरणे 'काल' शब्देनोचितः कालोऽभिधीयते । 'अकाल' शब्देनानुचितः कालः । न तु कालविग्रहः । सिद्धान्तमुपसंहरति तस्मादित्यादि ।—नैकान्तिकमिति कालमृत्युरेव परं भवति । किंवा अकालमृत्युरेव परं भवतीत्यैकान्तिकपक्षो नास्ति । अकालमृत्योरभावपक्षे दूषणमाह,—यदि हीत्यादि ।—हिताहितज्ञानमकालमृत्युप्रतिषेधार्थं विधीयते । एवं[1] चेदकालमृत्युर्नास्ति तदा हिताहितज्ञानं निष्प्रयोजनं स्यात् । प्रत्यक्षानुमानोपदेशा अप्रमाणानि स्युरिति । आयुर्वेदसम्बन्धाः प्रत्यक्षादयः आयुर्वेदार्थदर्शकाः आयुष्यानायुष्यार्थाभावादप्रमाणभूताः स्युरिति भावः । दूषितपक्षं निःसारतया दर्शयन्नाह—वागित्यादि ॥ २८ ॥

**वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले ॥ २९ ॥ तस्य निमित्तं प्रकृतिगुणात्मसम्पत्सात्म्योपसेवनं चेति ॥ ३० ॥**

"किंचास्य परमायुः" इत्यस्य प्रश्नस्योत्तरमाह—वर्षशतमिति । अस्मिन् काले कलौ । शेषप्रश्नस्योत्तरम्—तस्येत्यादि ।—प्रकृतिगुणात्मसम्पदिति प्रकृतिसंपत् । गुणसंपत् । आत्मसंपत् । तत्र प्रकृतिसंपत्[2] । समवातादिप्रकृतिता । समप्रकृतिर्हि चिरायुर्भवति । गुणसंपत्तु सारसंहननादिभिरायुष्यलक्षणैर्योगः किंवा या प्रकृतेर्मातृपित्राद्युपकरणस्य गुणसंपत् सा प्रकृतिगुणसंपत् । आत्मनस्तु चिरायुष्ट्वकारणधर्मयुक्तता सम्पत् ॥ २९—३० ॥

**तत्र श्लोकाः ।**

**शरीरं यद्यथा तच्च वर्त्तते क्लिष्टमामयैः ।**
**यथा क्लेशं विनाशं च याति ये चास्य धातवः ॥३१॥**

१ स एवेति पाठान्तरम् ।　२ यथावच्चेति पाठान्तरम् ।

**वृद्धिह्रासौ यथा तेषां क्षीणानामौषधं च यत् ।**
**देहवृद्धिकरा भावा बलवृद्धिकराश्च ये ॥ ३२ ॥**
**परिणामकरा भावा या च तेषां पृथक् क्रिया ।**
**मलाख्याः सम्प्रसादाख्या धातवः प्रश्न एव च ३३**
**नवको निर्णयश्चास्य विधिवत् सम्प्रकाशितः ।**
**तथ्यः शरीरविचये शारीरे परमर्षिणा ॥ ३४ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शरीरविचयशारीरं नाम षष्ठोऽध्यायः ।**

संग्रहे 'ये चास्य धातवः' इत्यनेन, 'मांसं मांसेन वर्द्धते' इत्यादौ धातुरूपेणोक्तमांसादीनां संग्रहोऽयमिति वदन्ति । 'वृद्धिह्रासौ यथा तेषाम्' इत्यनेन'धातवः पुनः'इत्यादिग्रन्थार्थं गृह्णाति । 'क्षीणानामौषधं यद्' इति 'मांसमाप्यायते मांसेन' इत्यादि संगृह्णाति । 'या च तेषां पृथक् क्रिया' इत्यनेन । तेषामाहारपरिणामकराणामूष्मप्रभृतीनां पृथक्कर्मणां यदुक्तम्,—तद्यथा—'ऊष्मा पचति' इत्यादिना । तद्गृह्यते ॥ ३१—३४ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शरीरविचयशारीरव्याख्या ।

## सप्तमोऽध्यायः ।

**अथातः शरीरसंख्याशारीरं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**शरीरसंख्यामवयवशः शरीरं विभज्य सर्वशरीरसंख्यानप्रमाणज्ञानहेतोर्भगवन्तमात्रेयमग्निवेशः पप्रच्छ ॥ ३ ॥**

पूर्वाध्याये धातुभेदेन शरीरमभिधाय एतदेव शरीरमवयवसंख्याभेदेन प्रतिपादयितुं शरीरसंख्या उच्यन्ते । अवयवसंख्यानप्रमाणभेदेन च शरीरज्ञानं प्राधान्येन साक्षात् साधनं चिकित्सोपयुक्तं करिष्यतीति अध्यायान्ते 'शरीरसंख्यां यो वेद' इत्यादि । अवयवशः शरीरं विभज्य शरीरसंख्यां पप्रच्छेति योजना । पृच्छाप्रयोजनमाह ।—सर्वशरीरसंख्यानप्रमाणज्ञानहेतोरिति ।—संख्यानस्य प्रमाणमियत्ता संख्यानप्रमाणम् । तच्च 'षड्द्वादश' इत्यादि ग्रन्थवाच्यम् । किंवा संख्यानं च प्रमाणं च संख्यानप्रमाणम् । अत्र 'षट्त्वचः' इत्यादि संख्यानम् । 'दशोदकाञ्जलयः' इत्यादि शरीरावयवप्रमाणम् । किंवा संख्यानामप्रमाणज्ञानहेतोरिति पाठः । तत्र संख्यानप्रमाणस्य दत्तमेवोदाहरणम् । नामज्ञानं तु 'एकजिह्विका' इत्यादिग्रन्थे भवतीति व्याख्यानयन्ति ॥१—३॥

**तमुवाच भगवानात्रेयः—शृणु मत्तोऽग्निवेश । सर्वशरीरमाचक्षाणस्य यथाप्रश्नमेकमना यथावत् ।**

शरीरे षट् त्वचः। तद्यथा—उदकधरा। द्वितीया त्वसृग्धरा, तृतीया सिध्मकिलाससम्भवाधिष्ठाना। चतुर्थी दद्रूकुष्ठसम्भवाधिष्ठाना, पञ्चमी अलजीविद्रधीसम्भवाधिष्ठाना। षष्ठी तु यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति। यां चाप्यधिष्ठायारूंषि जायन्ते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीति षट् त्वचः। एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ॥ ४ ॥

आचक्षाणस्येत्यत्र 'मतम्' इति शेषः। तेन सर्वं शरीरमाचक्षाणस्य मे मतः शृण्विति योजना। ततश्च 'नटस्य शृणोति' इतिवदनुपयोगे षष्ठी शृण्वित्यनेन। मतान्तरमप्यस्ति शरीरावयवसंख्यान इति सूचयति। ततश्च सुश्रुते—"सप्त त्वचस्त्रीण्यस्थ्नां शतानि" इत्यादिना यद्धि प्रतिपादितं संख्याविरुद्धमुच्यते। तच्छल्यशास्त्रोपयुक्तमतभेदादिति दर्शयति। यदुक्तं सुश्रुते—"त्रीणि सषष्टीनि शतान्यस्थ्नां वेदविदो भाषन्ते। शल्यतन्त्रे तु त्रीण्येव शतानि"। अनेन वचनेन योन्योऽपि त्वगादिसंख्याभेदश्चरकसुश्रुतयोः स्वतन्त्रोपयुक्तसंख्योपादानाच्चोन्नेयः। सिध्मकिलाससम्भवाधिष्ठानेति सिध्मकिलासौ यतो दोषात् संभवतः। तस्य दोषस्याधिष्ठानभूता। एवमुत्तरत्रापि व्याख्येयम्। ताम्यतीत्यस्य विवरणम्—'अन्ध इव तमः प्रविशति' इति। किंवा ताम्यतीति तमोयुक्तभावश्चेष्टते। अरूंषीति व्रणानि। पर्वस्विति अवयवसन्धिषु ॥ ४ ॥

तत्रा[2]यं शरीरस्याङ्गविभागः, तद्यथा—द्वौ बाहू द्वे सक्थिनी शिरोग्रीवमन्तराधिरिति षडङ्गमङ्गम् ॥ ५ ॥

त्रीणि षष्ठानि शतान्यस्थ्नां सह दन्तनखेन[3] तद्यथा—द्वात्रिंशद्दन्ताः द्वात्रिंशद्दन्तोलूखलानि विंशतिर्नखाः षष्टिः पाणिपादाङ्गुल्यस्थीनि विंशतिः पाणिपादशलाकाः चत्वारि पादशलाकाधिष्ठानानि द्वे पार्ष्ण्योरस्थिनी चत्वारः पादयोर्गुल्फाः द्वौ मणिकौ हस्तयोः चत्वार्यरत्न्योरस्थीनि चत्वारि जङ्घयोर्द्वे द्वे जानुकपालिके द्वावूरुनलकौ द्वौ बाहुनलकौ द्वावंसौ द्वे अंशफलके द्वावक्षकौ एकं जत्रु द्वे तालुपके द्वे श्रोणिफलके एकं भगास्थि पञ्चचत्वारिंशत् पृष्ठगतान्यस्थीनि पञ्चदश ग्रीवायां चतुर्दशोरसि द्वयोः पार्श्वयोश्चतुर्विंशतिः पार्श्वयोस्तावन्ति चैव स्थालकानि तावन्ति चैवस्थालकार्बुदानि एकं हन्वस्थि द्वे हनूमूलबन्धने,एकास्थि नासिकागण्डकूटललाटं द्वौ शङ्खौ चत्वारि शिरःकपालानीति एवं त्रीणि षष्ठानि शतान्यस्थ्नां सह दन्तनखेनेति ॥ ६ ॥

पञ्चेन्द्रियाधिष्ठानानि, तद्यथा—त्वग्जिह्वा नासिकाक्षिणी कर्णौ च पञ्च बुद्धीन्द्रियाणि, तद्यथा—स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रमिति। पञ्चकर्मेन्द्रियाणि, तद्यथा—हस्तौ पादौ पायुरुपस्थो जिह्वा चेति ॥ ७ ॥

हृदयं चेतनाधिष्ठानमेकम् ॥ ८ ॥

षडङ्गतामुक्तां शरीरस्य विभजते—तत्रायमित्यादि।—शिरश्च ग्रीवा च शिरोग्रीवम्। एतच्चैक्यं विवक्षया[1] ज्ञेयम्। अन्तराधिर्मध्यम्। षष्ठानीति षष्ठ्यधिकानि। दन्तैपूलूखलम्। यत्राश्रिता दन्ताः। यद्यपि नखा विविधाशितपीतीये मलभागपोष्यत्वेन मले एव प्रक्षिप्ताः। तथापीहास्थितारूपयोगस्यापि विद्यमानत्वादस्थिगणनायां पतिताः। प्रत्यङ्गुलि पर्वत्रयम्। तेन विंशत्यङ्गुलिगतमस्थ्नां विंशतित्रयं भवति। वृद्धाङ्गुष्ठे यद्धस्तपादप्रविष्टम्। तत् तृतीयं पर्व ज्ञेयम्। वृद्धाङ्गुष्ठाशलाका अपि स्वल्पप्रमाणा ज्ञेयाः। अङ्गुलीनां शलाका यत्र लग्नाः तत्र शलाकाङ्गुष्ठाधिष्ठानम्। जानु जङ्घोर्वोः सन्धिः। अक्षाविवाक्षकौ। जत्रुसन्धेः कीलकौ। तालुपके ताल्वस्थिनी। भगास्थि अभिमुखं कटीसन्धानकारकं तिर्यगस्थि। स्थालकानीति पर्शुकानां मूलस्थानलग्नानि। स्थालकार्बुदानि तु पर्शुकामूलान्यर्बुदाकाराण्यस्थीनि। नासिकागण्डकूटललाटानामेकमूलत्वादेकमेवास्थि गणनीयम्। ये तु पृथगङ्गानि पठन्ति तेषाम् नासागन्धकूटललाटानां त्रयाणां त्रीण्येवास्थीनि एकत्वेन तु संख्यापूरणम्। अक्षिणी कर्णौ च पृथक्त्वेऽपि[2] एकैकेन्द्रियाधिष्ठानत्वेनैकत्वेन ग्राह्ये। एवं हस्तौ पादौ च एकतया ग्राह्यौ ॥ ५–८ ॥

दश प्राणायतनानि तद्यथा—मूर्द्धा कण्ठो हृदयं नाभिर्गुदबस्तिरोजः शुक्रं शोणितं मांसमिति। तेषु षट् पूर्वाणि मर्मसंख्यातानि ॥ ९ ॥

इह दशप्राणायतनेषु दशप्राणायतनीयोक्तौ शङ्खौ परित्यज्य नाभिं मांसंच गृहीतम्। तेन नाभिमांसयोरपि प्राणायतनत्वं तथा शङ्खयोश्च। पाठद्वयं[3]दर्शनाद्बोद्धव्यम्। यदुक्तम्—दशप्राणायतनीये—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः। शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्" इति ॥ ९ ॥

पञ्चदश कोष्ठाङ्गानि, तद्यथा—नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च बस्तिश्च पुरीषाधारश्चामाशयश्च पक्वाशयश्चोत्तरगुदं च अधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपावहनं चेति ॥ १० ॥

---

१ १॥५९॥२ आख्यातोपयोगे ।१।४।२९। नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्, उपाध्यायादधीते, उपयोगे किं नटस्य गाथां शृणोतीति सि. कौ.। २ अथेति पाठान्तरम्। ३ दन्तोलूखलनखैरिति पाठान्तरम्।

१ विवक्षयामिति पाठान्तरम्। २ पृथगुक्तेऽपीति पाठान्तरम्। ३ दशप्राणायतनीये 'शङ्खौ' अत्र च 'नाभिः मांसंच' इति पाठद्वयम्।

षट्पञ्चाशत् प्रत्यङ्गानि षट्स्वङ्गेषूपनिबद्धानि, यानि यान्यपरिसंख्यातानि पूर्वमङ्गेषु परिसंख्यायमानेषु । तानि तान्यन्यैः पर्यायैः प्रकाश्यानि भवन्ति, तद्यथा—द्वे जङ्घापिण्डिके, द्वे ऊरुपिण्डिके । द्वौ स्फिचौ । द्वौ वृषणौ । एकं शेफः । द्वे उखे । द्वौ वङ्क्षणौ । द्वौ कुकुन्दरौ । एकं वस्तिशीर्षम् । एकमुदरम् । द्वौ स्तनौ । द्वौ श्लेष्मभुवौ । द्वे वाहुपिण्डिके । चिवुकमेकम् । द्वावोष्ठौ । द्वे सृक्किण्यौ । द्वौ दन्तवेष्टकौ । एकं तालु । एका गलशुण्डिका । द्वे उपजिह्विके । एका गोजिह्विका । द्वौ गण्डौ । द्वे कर्णशष्कुलिके । द्वौ कर्णपुत्रकौ । द्वे अक्षिकूटे । चत्वारि अक्षिवर्त्मानि द्वे अक्षिकनीनिके । द्वे भ्रुवौ । एकोऽवटुः । चत्वारि पाणिपादहृदयानि ॥ ११ ॥

नव महान्ति छिद्राणि, सप्त शिरसि द्वे चाधः । एतावद्दृश्यं शक्यमभिनिर्देष्टुम् ॥ १२ ॥

क्लोमपिपासास्थानम् । वस्तिः मूत्रस्थानम् उत्तरगुदम्—यत्र पुरीषमवतिष्ठते । येन तु पुरीषं निष्क्रामति तदधरगुदस्थानम् 'तैलवर्त्तिका' इति ख्यातम् । षट्पञ्चाशत् प्रत्यङ्गानीति तद्यथा—द्वे जङ्घापिण्डिके इत्यादिग्रन्थवक्ष्यमाणानि । यानीत्यादि—यानि यानि वक्ष्यमाणानि षट्पञ्चाशत् प्रत्यङ्गानि पूर्वमङ्गेषु हस्तादिषु षट्सु परिसंख्यायमानेषु अपरिसंख्यातानि तान्यन्यैः पर्यायैः प्रकाश्यानि भवन्तीति योजना । पर्यायाश्च 'जङ्घापिण्डिकादयः' शब्दा एव । एतेन हस्तादिषडङ्गकथनेनैव तदाश्रिता अपि जङ्घापिण्डिकादय उक्ता एव । सम्प्रति तु अवयवविशेषव्यवहारार्थं जङ्घापिण्डिकादयः पृथगुक्ता इति वाक्यार्थः । पूर्वमङ्गेष्वितिस्थाने पूर्वमन्येष्विति पाठः । तथापि 'अन्य'शब्देन हस्तादीनि षडङ्गानि ग्राह्याणि । उखे इति कक्षस्य पार्श्वयोर्निम्नभागौ । कुकुन्दरौ स्फिचोरुपरि उन्नतौ भागौ । वस्तिशीर्षं नाभेरधः । श्लेष्मभुवौ कण्ठपार्श्वयोर्व्यवस्थितौ कठिनौ भागौ । सृक्किण्यौ वदनान्ते । द्वे उपजिह्विके इति जिह्वाया अधोगता जिह्वा । तथा उपरिगता ग्राह्या । एका गोजिह्विकेति गौर्वाक् । तस्याः कारणभूता जिह्वा । तेन, वचनकारणभूता प्रधानभूता जिह्वैव गृह्यते । कर्णशष्कुलिके कर्णगतावर्तकौ । कर्णपुत्रकौ तु द्वौ कर्णावेव । अक्षिकूटके अक्षिगोलके । द्वे अक्षिकनीनिके इत्यत्र 'कनीनिका' शब्देन नासया सममक्षिसन्धिरभिधीयते । अवटुर्घाटा । चत्वारि पाणिपादहृदयानीति पाण्योः पादयोश्च तलानि मध्यानि चत्वारीत्यर्थः । एतावतैव षट्पञ्चाशत् प्रत्यङ्गानि पूर्यन्ते । नव महान्ति छिद्राणीति व्याकरोति—सप्त शिरसि द्वे चाध

इति एतावत्त्वगादि दृश्यं प्रायः प्रत्यक्षविषय इत्यर्थः ॥ १०—१२ ॥

अनिर्देश्यमतः परं तर्क्यमेव तद्यथा—नवस्नायुशतानि, सप्तसिराशतानि । द्वे धमनीशते । चत्वारि पेशीशतानि । सप्तोत्तरं मर्मशतम् । द्वे सन्धिशते । एकोनत्रिंशत् सहस्राणि नव च शतानि षट्पञ्चाशत्कानि सिराधमनीनामणुशः प्रविभज्यमानानां मुखाग्रपरिमाणम् । तावन्ति चैव केशश्मश्रुलोमानीत्येतद्यथावत्संख्यातं त्वक्प्रभृति दृश्यम् । तर्क्यमतः परम् । एतदुभयमपि न विकल्प्यते प्रकृतिभावात् शरीरस्य ॥ १३ ॥

अतःपरं तर्क्यमेवेति अतस्त्वगादेः परं यत् स्नाय्वादि तत् प्रायस्तर्क्यमेव । अनुमानगम्यमेवेत्यर्थः । यद्यपि स्नाय्वाद्यपि प्रत्यक्षं भवति । तथापीह वक्ष्यमाणसंख्यायुक्तं सर्वं स्नाय्वादि न प्रत्यक्षेण सुकरग्रहणमिति 'तर्क्यम्' इत्युक्तम् । स्नाय्वादिभेदानेवाह—नवस्नायुशतानीत्यादि ।—अणुशः प्रविभज्यमानानामिति अणुभावानां भेदेन भिद्यमानानाम् । मुखाग्रपरिमाणमिति मुखरूपस्य परिमाणम् । अत्र यान्येव सप्तशिराशतानि धमनीशतद्वयंचोक्तानि । तान्येव सूक्ष्मप्रतानाश्च भेदगणनया एकोनत्रिंशत् सहस्राणि नवशतानि षट्पञ्चाशत्कानि । स्थूलगणनत्वे पूर्वशिरासंख्या धमन्यन्तर्भवतीति न विरोधः । तावन्ति चैव केशश्मश्रुलोमानीति एकोनत्रिंशत्सहस्राणि नवशतानि षट्पञ्चाशत्कानि केशश्मश्रुलोम्नां भवन्तीत्यर्थः । एतच्च केशादिसंख्यानं स्थूलशिरागतकेशादिविभागेन ज्ञेयम् । सूक्ष्मसूक्ष्मविभागे तु केशादीनां बहुत्वमपि शास्त्रान्तरोक्तं भवतीति ज्ञेयम् । एतत्त्वक्प्रभृति दृश्यम् । तर्क्यंच स्नाय्वादि यथावत् संख्यातमिति योजना । सम्प्रति तथोक्तं त्वगादीनां मानं प्रकृतिस्थे शरीरे न व्यभिचरतीति दर्शयन्नाह—एतदुभयमिति दृश्यं तर्क्यंच । प्रकृतिभावादिति अविकृतत्वात् शरीरस्य । यत्र तु शरीरं विकृतं भवति । तत्र यथोक्तत्वगादिमानमपि विकृतं भवतीति भावः ॥ १३ ॥

यत्त्वञ्जलिसंख्येयं तदुपदेक्ष्यामः, तत्परं प्रमाणमभिज्ञेयम्, तच्च वृद्धिह्रासयोगि तर्क्यमेव, तद्यथा—दशोदकस्याञ्जलयः शरीरे स्वेनाञ्जलिप्रमाणेन यत्तत् प्रच्यवमानं पुरीषमनुवध्नात्यतियोगेन तथा मूत्रं रुधिरमन्यश्चां शरीरधातून् । यत्तत्सर्वशरीरचरं वाह्या त्वग्बिभर्त्ति । यत्तु त्वगन्तरे व्रणगतं 'लसिका'शब्दं लभते । यच्चोष्मणानुवद्धं लोमकूपेभ्यो निष्पतत् 'स्वेद' शब्दमवाप्नोति । तदुदकं दशाञ्जलिप्रमाणम् । नवाञ्जलयः पूर्वस्याहारपरिणामधातोः यं तं रस इत्याचक्षते । अष्टौ शोणि-

१ जङ्घादिष्विति पाठान्तरम् ।

१ पञ्चेति पाठान्तरम् । २ एकोनत्रिंशच्छतेति पाठान्तरम् ।

स्य । सप्त पुरीषस्य । षट् श्लेष्मणः । पञ्च पित्तस्य । चत्वारो मूत्रस्य । त्रयो वसायाः । द्वौ मेदसः । एको मज्जायाः । मस्तिष्कस्य अर्द्धाञ्जलिः । शुक्रस्य तावदेव प्रमाणम् । तावदेव श्लेष्मणश्चौजस इत्येतच्छरीरतत्त्वमुक्तं ॥ १४ ॥

ननु यथा प्रकृतिस्थे शरीरे यथोक्तं मानं त्वगादि न व्यभिचरति, तथा किं प्रकृतिस्थे शरीरे तदुदकाद्यपि यथोक्तं मानं न व्यभिचरतीत्याह—यत्त्वञ्जलीत्यादि ।—यत्तु उदकादि अञ्जलिसंख्येयमग्रे वक्ष्यमाणम् । तदुदकादेः परं प्रमाणम् ॥ १४ ॥

तत्र यद्विशेषतः स्थूलं स्थिरं मूर्त्तिमद्गुरुखरकठिनमङ्गं नखास्थिदन्तवेष्टमांसचर्मवर्चःकेशश्मश्रुलोमकण्डरादि, तत्पार्थिवं गन्धो घ्राणं च । यद्द्रवसरमन्दस्निग्धमृदुपिच्छिलरसरुधिरवसाकफपित्तमूत्रस्वेदादि, तदाप्यं रसो रसनं च । यत् पित्तमूष्मा यो या च भाः शरीरे, तत्सर्वमाग्नेयं रूपं दर्शनं च । यदुच्छ्वासप्रश्वासोन्मेषनिमेषाकुञ्चनप्रसारणगमनप्रेरणधारणादि, तद्वायवीयं स्पर्शः स्पर्शनं च । यद्विविक्तमुच्यते, महान्ति चाणूनि स्रोतांसि, तदान्तरीक्ष्यं शब्दः श्रोत्रं च । यत् प्रयोक्तृ तत् प्रधानं बुद्धिर्मनश्चेति शरीरावयवसंख्या यथास्थूलभेदेनावयवानां निर्दिष्टा । शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्त्यतिबहुत्वादतिसौक्ष्म्यादतीन्द्रियत्वाच्च ॥ १५ ॥

तेषां संयोगविभागे परमाणूनां कारणं वायुः कर्म स्वभावश्च ॥ १६ ॥

अतिसौक्ष्म्यादिति अतिसूक्ष्मबुद्धिबोध्यत्वात् । अतीन्द्रियत्वंच परमाणूनां स्वभावसिद्धमेवास्मदादीन् प्रति । यत्तु सूक्ष्ममतीन्द्रियं वा तत् परिसंख्यातुं नितरामेव दुष्करं भवतीति युक्तं हेतुत्रयमपरिसंख्याने । अथैते विषयकलिताः परमाणवः कथं शरीरे संयुज्यन्ते । शरीरविनाशेऽपि वियुज्यन्ते इत्याह—तेषामित्यादि ।—ननु यदि वायुः कारणं परमाणूनां संयोगविभागे । तत् किमिति करोतीत्याह—कर्म स्वभावश्चेति न केवलो वायुः किन्तु कर्मस्वभावपरिगृहीत एव । तेन संयोगे कर्मणा स्वभावेन च वायुः परिगृहीतो भवति । तथा वियोगे परमाणूनाम् शरीरविनाशं जनयतीत्यर्थः ॥ १५ ॥ १६ ॥

तदेतत् शरीरं संख्यातमनेकावयवं दृष्टं एकत्वेन सङ्गः । पृथक्त्वेनापवर्गः । तत्र प्रधानमसक्तं सर्वसन्ताननिवृत्तौ[2] निवर्त्तते इति ॥ १७ ॥

१ दन्तनखरास्थीति पाठान्तरम् । २ सर्वसत्त्वेति पाठान्तरम् ।

इदानीं शरीरसंख्यानफलमाह—तदेतदित्यादि ।—परमार्थतोऽनेकावयवमपि तच्छरीरं संख्याने मोहादेकत्वेन दृष्टं सत् सङ्गहेतुर्भवतीत्यर्थः । एकत्वेन हि शरीरं पश्यन् तदुपकाराय प्रवर्त्तमानो रागद्वेषाभ्यां सक्तो भवति । अपवर्ग इत्यपवर्गहेतुरित्यर्थः । शरीरंतु पृथगवयवेन भाव्यमानं न ममताऽऽस्पदं भवति । ममताऽभावाच्च न तदुपकारकापकारकेषु रागद्वेषौ भवतः । तदभावाच्च प्रवृत्त्युपरमे[1] सति धर्माधर्माभावादपवर्गो भवतीत्यर्थः । शरीरसंख्याने यथा मोक्षो भवति तदाह—तत्रेत्यादि ।—प्रधानमात्मा । तत्रेति शरीरपृथक्त्वाभावनायाम् । असक्तमिति यथोक्तक्रमेण रागद्वेषरहितम् । सर्वसन्तानाभिनिर्वृत्ताविति सर्वत्रोपकारके वाऽपकारके च भावे आस्थानिवृत्तौ सत्याम् । निवर्तते इति संसारे निवर्तते ॥१७॥

तत्र श्लोकौ ॥

शरीरसंख्यां यो वेद सर्वावयवशो भिषक् ।
तदज्ञाननिमित्तेन स मोहेन न युज्यते ॥ १८ ॥
अमूढो मोहमूलैश्च न दोषैरभिभूयते[2] ।
निर्दोषो निःस्पृहः शान्तः प्रशाम्यत्यपुनर्भवः ॥१९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरसंख्याशारीरं नाम सप्तमोऽध्यायः ।

इममेव गद्योक्तमर्थं श्लोकेनाह—शरीरेत्यादि ।—तदज्ञाननिमित्तेनेति शरीरैकरूपतारूपमिथ्याज्ञानजन्येन । मोहेनेति 'अहं स्थिरशरीरी एको ममेदमुपकारकम्' इत्यादिमोहेन मोहमूलैरिति मोहकारणकैः दोषैरिति रागद्वेषैः निर्दोषत्वेन निस्पृहो भवति । रागद्वेषमूला हीच्छा तदभावान्न भवति । निस्पृहश्च सन् सर्वक्रियोपरमात् शान्तो भवति[3] शान्तश्च सन् प्रशाम्यति संसरणे विश्राम्यति । ततश्च नास्य पुनर्भवो जन्मरूपो भवतीति ॥ १८—१९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शरीरसंख्याशारीरव्याख्या ।

## अष्टमोऽध्यायः ।

अथातो जातिसूत्रीयं शारीरं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

स्त्रीपुंसयोरव्यापन्नशुक्रशोणितगर्भाशययोः श्रेयसीं प्रजामिच्छतोस्तदर्थाभिनिर्वृत्तिकरं कर्मोपदेक्ष्यामः ॥ ३ ॥

सम्प्रति पारिशेष्यात् जातिसूत्रीयमुच्यते । 'जाति' शब्देन जन्मकारणमुच्यते । तस्य सूत्रं जन्मोपायकथनसूत्रम् ।

१ प्रकृत्युपरमे इति पाठान्तरम् । २ रागदोषैरिति पाठान्तरम् ।
३ निष्क्रियश्च सन् सर्वक्रियोपक्रान्तो भवतीत्यसमीचीनं पाठान्तरम् ।

तदधिकृत्य कृतोऽध्यायः । स्त्रीपुंसयोरिति क्रमनिर्देशं कृत्वा 'अव्यापन्नशोणितगर्भाशयशुक्रयो'रिति निर्देशो यथाक्रमानुरोधात् यद्यपि युज्यते । तथाप्यत्र 'शुक्रं' पूर्वं नियच्छति इति न्यायमाश्रित्य क्रमभेदेन निर्देशः । श्रेयसीं प्रजामिच्छतोरित्यत्र श्रेयसी प्रजा गुणवान् पुत्रो गुणवती च कन्याभिप्रेता । यतः अत्र कन्योत्पादविधानं लेशतः करिष्यति । तेन निर्गुणयोः कन्यापुत्रयोस्तथा नपुंसकस्य चाश्रेयस्त्वेन व्युदासः । अन्ये पुत्रमेव श्रेयसीं प्रजामाहुः । यतः, अत्र सर्वम् पुत्रमेवोद्दिश्य विधानं प्रायः करिष्यति । तदर्थाभिनिर्वृत्तिकरमिति श्रेयःप्रजारूपप्रयोजननिष्पादकम् ॥ १—३ ॥

अथाप्येतौ स्त्रीपुंसौ स्नेहस्वेदाभ्यामुपपाद्य वमनविरेचनाभ्यां संशोध्य क्रमेण प्रकृतिमापादयेत्। संशुद्धौ चास्थापनानुवासनाभ्यामुपाचरेत् । उपाचरेच्च मधुरौषधसंस्कृताभ्यां घृतक्षीराभ्यां पुरुषं स्त्रियं तु तैलमाषाभ्याम्॥ ४ ॥

अथापीत्यादौ 'अथ' शब्दोऽधिकारे। 'अपि' शब्दो विशेषार्थः। तेन व्यापन्नशुक्रशोणितगर्भाशययोरपि स्त्रीपुंसयोः श्रेयःप्रजाजनकगुणाधानार्थं स्नेहादिकर्मकरणमिति दर्शयति। यद्यपि 'एतौ इति पदेनैवाधिकृतौ स्त्रीपुंसौ लब्धौ तथापि पुनर्यतः स्त्रीपुंसौ स्नेहनादिवक्ष्यमाणकर्मणा योज्यौ इति दर्शयति। क्रमेणेति पेयादिक्रमेण । स च क्रमः वमने पृथक् प्रदेशान्तरोक्तक्रमन्यायेन बोद्धव्यः । पुनः 'संशुद्धौ च' इति वचनात् सम्यक् शुद्धयोरेवास्थापनानुवासने कर्तव्ये नाऽसम्यक्शुद्धयोरिति दर्शयति। 'मधुरौषध'शब्देन मधुरौषधग्रहणं मधुरस्य विशेषेण शुक्रवृद्धिकरत्वात् । अन्ये तु 'मधुरौषध' शब्देन जीवनीयगणमिच्छन्ति ॥ ४ ॥

ततः पुष्पात् प्रभृति त्रिरात्रमासीत ब्रह्मचारिण्यधःशायिनी पाणिभ्यामन्नमजर्जरात् पात्राद्भुञ्जाना च। न च काञ्चिन्मृजामापद्येत। ततश्चतुर्थेऽहन्येनामुत्साद्य सशिरस्कं स्नापयित्वा शुक्लानि वासांस्याच्छादयेत् पुरुषं च । ततः शुक्लवाससौ स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसेतामिति ब्रूयात् ॥ ५ ॥

स्नानात् प्रभृति युग्मेष्वहःसु संवसेतां पुत्रकामौ, अयुग्मेषु दुहितृकामौ। नच न्युब्जां पार्श्वगतां वा संसेवेत। न्युब्जाया वातो बलवान् स योनिं पीडयति, पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा संच्युतोऽपिदधाति गर्भाशयम् । वामे पित्तं पार्श्वे तस्याः पीडितं विदहति रक्तशुक्रम्। तस्मादुत्ताना बीजं गृह्णीयात्। तस्या हि यथास्थानमवतिष्ठन्ते दोषाः। पर्याप्ते चैनां शीतोदकेन परिषिञ्चेत् । तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्त्ता क्रुद्धाऽन्यं च पुमांसमिच्छन्ती मैथुने चातिकामा वा न गर्भं धत्ते। विगुणां वा प्रजां जनयति । अतिबालामतिवृद्धां दीर्घरोगिणीमन्येन वा विकारेणोपसृष्टां वर्जयेत्। पुरुषेऽप्येत एव दोषाः। अतः सर्वदोषवर्जितौ स्त्रीपुरुषौ संसृज्येयातां। सञ्जातहर्षौ मैथुने चानुकूलाविष्टगन्धं स्वास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनमशित्वा नात्यशितौ । दक्षिणपादेन पुमान्, स्त्री वामेनारोहेत् ॥ ६ ॥

१ गर्भमिति पाठान्तरम्। २ सञ्च्युतः पिदधातीति पाठान्तरम्। ३ तदा हीति पाठान्तरम्। ४ चाभिकामेति पाठान्तरम्।

पुष्पादित्यार्तवदर्शनात् । ब्रह्मचारिणीति अधःशायिनीति च त्रिरात्रमित्यनेन सम्बध्यते । स्नानात् प्रभृतीति संवसेतामित्यनेन संबध्यते। तेन स्नानात्प्रभृति मैथुनं विधीयते । न तु स्नानदिनात् प्रभृति पुत्रकामयोर्युग्मदिनविधानात्। युग्मदिनं तु प्रथमदिनात् प्रभृत्येव गणनीयम् । यदुक्तं हारीते— 'चतुर्थीषष्ठ्यष्टमीद्वादशीषु गुणवन्तमायुष्मन्तं पुत्रं जनयति। पञ्चमीनवम्येकादशीषु कन्या गुणवतीः । सप्तम्यां दुर्भगां कन्यामिति । न्युब्जामित्यधोमुखीम्। पर्याप्ते समाप्ते मैथुने। मैथुने चातिकामेति निवृत्तेच्छेऽपि पुरुषे मैथुनमिच्छन्ती । अन्येन वा विकारेणेति कुष्ठादिजुगुप्सितेन रोगेण । आरोहेत् शयनमिति संबन्धः ॥ ५ ॥ ६ ॥

तत्र मन्त्रं प्रयुञ्जीत—अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेदिति "ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ। भगोऽथ मित्रावरुणौ पुत्रं वीरं दधातु मे" इत्युक्त्वा संवसेताम्। सा चेदेवमाशासीत—बृहन्तमवदातं हर्यक्षमोजस्विनं शुचिं सत्वसंपन्नं पुत्रमिच्छेयमिति ॥ ७ ॥

'अहिरसीत्यादि दधातु मे' इत्यन्तो मन्त्रः । हर्यक्षं सिंहविक्रमम्। तेनोपादेयमेवेत्याह—इच्छेयमिति। इच्छेयमित्यनेकार्थत्वाद्धातूनां लभेयमित्यर्थः। तेन 'आशासीत' इत्यस्य 'इच्छेयम्' इत्यनेन न पौनरुक्त्यमिति व्याख्यानयन्ति ॥७॥

शुद्धस्नानात् प्रभृत्यस्यै मन्थमवदातयवानां मधुसर्पिर्भ्यां संसृज्य श्वेताया गोः सरूपवत्सायाः पयसालोड्य राजते कांस्ये वा पात्रे काले काले सप्ताहं सततं प्रयच्छेत् पानाय । प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिर्भिः पयोभिर्वा संसृज्य भुञ्जीत ॥ ८ ॥

काले काल इति सायंप्रातः । अत्र च मन्थपानस्य तथा

३ आहरसि विहरसीति पाठान्तरम्। ४ धाता त्वा दधात्विति पाठान्तरम्।

शालियवान्नभोजनस्य च विहितत्वादुभावपि मात्रया काले करणीयौ ॥ ८ ॥

तथा सायमवदातशरणशयनासनयानवसनभूषणा च स्यात्। सायम्प्रातश्च शश्वत् श्वेतं महान्तं वृषभमाजानेयं हरिचन्दनाङ्गदं पश्येत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत। सौम्याकृतिवचनोपचारचेष्टांश्च स्त्रीपुरुषानितरानपि चेन्द्रियार्थानवदातान् पश्येत्। सहचर्यश्चैनां प्रियहिताभ्यां सततमुपचरेयुः। तथा भर्ता न च मिश्रीभावमापद्येयातामित्यनेन विधिना सप्तरात्रं स्थित्वाष्टमेऽहन्याप्लुत्य सशिरस्का भर्त्रा सहाऽऽहतानि वस्त्राण्याच्छादयेदवदातानि। अवदाताश्च स्रजो भूषणानि विभृयात् ॥ ९ ॥

शरणं गृहम्। आजानेयमुत्तमकुलजम्। 'हरिचन्दन'शब्देन श्वेतचन्दनं विवक्षितम्। 'हरि'शब्दस्यानेकार्थत्वात् 'हरि'शब्देन श्वेतस्यैव ग्रहणं प्रशस्तत्वात्। अङ्गदोऽङ्गरागः। किम्वा अङ्गदो वाहुभूषणम्। पश्येदित्युपलभेत। तेन श्रोत्रमनोभ्यामपि अवदातत्वग्रहणं लभ्यते ॥ ९ ॥

तत ऋत्विक् प्रागुत्तरस्यां दिश्यगारस्य प्राक्प्रवणमुदक्प्रवणं वा देशमभिसमीक्ष्य गोमयोदकाभ्यां स्थण्डिलमुपलिप्य प्रोक्ष्य चोदकेन वेदीमस्मिन्स्थापयेत्। तां पश्चिमेनानाहतवस्त्रसञ्चये श्वेतर्षभे वाप्यजिन उपविशेत् ब्राह्मणप्रयुक्तः, राजन्यप्रयुक्तस्तु वैयाघ्रे चर्मण्यानडुहे वा। वैश्यप्रयुक्तस्तु रौरवे वास्ते वा। तत्रोपविष्टः पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय कुशैः परिस्तीर्य परिधिभिश्च परिधाय लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपाकिरेत्। तत्र प्रणीयोदपात्रं पवित्रं पूतमुपसंस्कृत्य सर्पिराज्यार्थं यथोक्तवर्णानाजानेयादीन् समन्ततः स्थापयेत्। ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमुपविश्यानुलभेत सह भर्त्रा यथेष्टं पुत्रमाशासाना। ततस्त्वस्या आशासानाया ऋत्विक् प्रजापतिमभिनिर्दिश्य योनौ तस्याः कामपरिपूरणार्थं काम्यामिष्टिं निर्वपेद्विष्णुर्योनिं कल्पयत्वित्यनयर्चा ततश्चैवाज्येन स्थालीपाकमभिघार्य त्रिर्जुहुयात् यथाम्नायं चोपमन्त्रितमुदपात्रं तस्यै दद्यात् सर्वोदकार्थान् कुरुष्वेति ॥ १० ॥

ततः समाप्ते कर्मणि पूर्वं दक्षिणपादमभिहरन्ती प्रदक्षिणमग्निमनु परिक्रामेत्। ततो ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्राऽऽज्यशेषं प्राश्नीयात् पूर्वं पुमान्। पश्चात् स्त्री। नचोच्छिष्टमवशेषयेत्। ततस्तौ सह संवसेतामष्टरात्रम्। तथाविधपरिच्छदावेव स्याताम्। तथेष्टपुत्रं जनयेताम् ॥ ११ ॥

या तु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महावाहुं च पुत्रमाशासीत। या वा कृष्णं कृष्णमृदुकेशं शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम्। एषोऽनयोरपि होमविधिः। किन्तु परिवर्हवर्जं स्यात्। पुत्रवर्णानुरूपस्तु यथाशीः परिवर्होऽन्यः कार्यः ॥१२॥

शूद्रा तु नमस्कारमेव कुर्यात् देवाग्निद्विजगुरुतपस्विसिद्धेभ्यः ॥ १३ ॥

या या च यथाविधं पुत्रमाशासीत, तस्यास्तस्यास्तां तां पुत्राशिषमनुनिशम्य तांस्तान् जनपदान्मनसानुपरिक्रामयेत्। ताननुपरिक्रम्य या या येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत सा सा तेषां तेषां जनपदानामाहारविहारोपचारपरिच्छदाननुविधत्स्वेति वाच्या स्यादित्येतत् सर्वं पुत्राशिषां समृद्धिकरं कर्म व्याख्यातं भवति ॥१४॥

स्थण्डिलं पूजनस्थानम्। वेदीं पिण्डिकाम्। तां पश्चिमेनेति वेदिकायाः पश्चिमे श्वेतर्षभ अजिने श्वेतवृषभचर्मणीत्यर्थः; ब्राह्मणप्रयुक्त इति यदि ब्राह्मणेन पुत्रेष्ट्यर्थं वा प्रयुक्तः स्यात्। तदा ऋत्विक् श्वेतवस्त्रसञ्चये श्वेतवृषभचर्मणि वा उपविशेत्। राजन्यप्रयुक्तस्तु वैयाघ्रे चर्मण्युपविशेदिति शेषः। रुरुर्हरिणविशेषः। परिधिभिरिति चतुर्भिः पलाशवृहद्दण्डैः। परिधायेति वेष्टयित्वा परिहितान्येव। पूतं मन्त्रपूतम्। तच्चोदपात्रविशेषणम्। उपसंस्कृत्येति तदुदपात्रमेव संस्कारमन्त्रैरुपसंस्कृत्य। सर्पिराज्यार्थमिति नवनीतं घृतार्थम्। किम्वा सर्पिर्घृतमेव आज्यार्थमिति मन्त्रपूतघृतकरणार्थम्। 'आज्य' शब्देन मन्त्राभिमन्त्रितं[1] घृतमुच्यते। पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमिति यथा पूर्वेणाग्निर्वामे च ब्राह्मणो भवति तथेत्यर्थः। अनुलभेतेति ऋत्विक्प्रयुक्ता ऋत्विग्विधानमनुकुर्यादित्यर्थः। प्रजापतिमभिनिर्दिश्येति ब्रह्माणमभिमन्त्र्य। योनौ कामपूरणार्थमग्नाविष्टिं निर्वपेदिति कुर्यात्। इष्टिर्योनिशोधिका। इष्टिसाधिका ऋक्। पाकमिति चरुम्। अभिघार्येति मिश्रीकृत्य यथाम्नायमिति यथावेदम्। किन्तु परिवर्हवर्जमिति परिवर्हः शयनासनपुष्पादिपरिच्छदः। तेन यथाविधा पुत्रेच्छा तथावर्णपरिवर्हः कर्तव्य इति वाक्यार्थः। शूद्राविधानमाह—शूद्रा त्वित्यादि।—नमस्कारमेव कुर्यादिति शूद्राया मन्त्रे होमे वाऽनधिकारात् नमस्कारमात्रकरणम् ॥ १०—१४ ॥

न तु खलु केवलमेतदेव कर्म वर्णवैशेष्यकरं भवति। अपि खलु तेजोधातुरप्युदकान्तरिक्षधातुप्रायोऽवदातवर्णकरः। पृथिवीवायुधातुप्रायः कृष्णवर्णकरः। समसर्वधातुप्रायः श्यामवर्णकरः ॥ १५ ॥

१ मन्त्रादिभिर्मन्त्रितमिति पाठान्तरम्।

सत्ववैशेष्यकराणि पुनस्तेषां तेषां प्राणिनां मातापितृसत्वान्यन्तर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोचितं च कर्म सत्वविशेषाभ्यासश्चेति ॥ १६ ॥

वर्णविशेषकरं हेत्वन्तरमाह—न तु खल्वित्यादि। तेजोधातुः कृष्णवर्णे श्यामवर्णे च वर्तते। वर्णविशेषहेतुमभिधाय सत्वभेदहेतुमाह—सत्वेत्यादि।—मातापितृसत्वानीति मातापित्रनुकारेण सत्वानि प्रायः प्रभावादेव भवन्ति। अन्तर्वत्नी गर्भिणी। श्रुतयश्चाभीक्ष्णमिति यथा गर्भिणी गीतादि[1] शृणोति, तथा सत्वमपत्यं जनयति। स्वोचितं च कर्मेति गर्भोपार्जितं कर्म स्वबलानुरूपं सत्वं जनयति। सत्वविशेषाभ्यासश्चेति यथाविधं सत्वं पुरुषोऽभ्यस्यति जन्मान्तरे। तत्सत्व एव जायते। वचनं हि—"जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तच्चाप्यभ्यस्यते पुनः" इति ॥ १५ ॥ १६ ॥

यथोक्तेनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोः मिथीभावमापन्नयोः शुक्रं शोणितेन सह समेत्याऽव्यापन्नमव्यापन्नेन योनावनुपहतायामप्रदुष्टे गर्भाशये गर्भमभिनिर्वर्त्तयत्येकान्तेन। तद्यथा—निर्मले वाससि सुपरिकल्पिते रञ्जनं समुदितगुणं उपनिपातादेव रागमभिनिर्वर्त्तयति। तद्वत्। यथा वा क्षीरं दध्नाभिषुतमभिपवणाद्विहाय स्वभावमापद्यते दधिभावम्। शुक्रं तद्वत् ॥ १७ ॥

सम्प्रति गर्भोत्पत्तिक्रममाह—यथोक्तेनेत्यादि।—यथोक्तेन विधिनेति पञ्चकर्मादिनोक्तेनेति। रञ्जनं रागद्रव्यम्। दध्यभिषुतमिति दध्ना स्तोकमात्रेण मिश्रितम्। आपद्यते दधिभावमिति दधित्वमापद्यते। तद्वदिति यथा क्षीरं दधि भवति रञ्जनं रागो वा भवति तथा शुक्रं गर्भमभिनिर्वर्त्तयति। शुक्रं यथोक्तशुक्रमित्यर्थः ॥ १७ ॥

एवमभिनिर्वर्त्तमानगर्भस्य स्त्रीपुरुषत्वे हेतुः पूर्वमुक्तः ॥ १८ ॥

यथा हि बीजमनुपतप्तमुप्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्वा व्रीहित्वं यवो वा यवत्वम्। तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागमनुविधीयेते ॥ १९ ॥

संप्रति स्त्रीपुरुषत्वे च रक्ताधिकत्वं शुक्राधिकत्वं च पूर्वोक्तं हेतुमनूद्य वैदिकं पुत्रजनकं विधानान्तरं वक्तुमाह—एवमित्यादि।—यथोक्तं हेतुविभागमनुविधीयत इति "रक्तेन कन्यामधिकेन पुत्रम्। शुक्रेण" इत्यादि ग्रन्थोक्तभागं स्त्रीपुरुषजनकमनुविधीयते ॥ १८—१९ ॥

तयोः कर्मणा वेदोक्तेन विवर्तनमुपदिश्यते प्राग्व्यक्तीभावात् प्रयुक्तेन सम्यक्। कर्मणां हि देशकालसम्पदुपेतानां नियतमिष्टफलत्वं तथेतरेषामितरत्वम्। तस्मादापन्नगर्भां स्त्रियमभिसमीक्ष्य प्राग् व्यक्तीभावात् गर्भस्य पुंसवनमस्यै दद्यात्,—गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गेऽनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां सम्पदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्ये पिबेत्, तथाऽपरान् जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं वाप्युपसंस्कृत्य पयसा, कुड्यकीटकं मत्स्यकोद्रञ्चोदकाञ्जलौ प्रक्षिप्य पुष्ये पिबेत्। तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णानणुप्रमाणान् दध्नि पयसि उदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण। पुष्येणैव च पिष्टस्य पच्यमानस्योष्माणमुपाघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहल्यामुपरि विधाय दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुनेति पुंसवनानि। यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा पुंसवनमिष्टं तच्चानुष्ठेयम् ॥ २० ॥

वेदोक्तेनायुर्वेदोक्तेन। प्राग्व्यक्तीभावादिति यावन्न स्त्रीत्वं पुंस्त्वं वा गर्भस्य व्यक्तं भवति। तावदेव तद्वक्ष्यमाणं कर्म लिङ्गपरिवृत्तिकरं[1] भवति। व्यक्तिस्तु द्वितीयमासे भवति। यदुक्तम्—"द्वितीये मासे घनः संपद्यते," इति। किंवा तृतीये मासे अङ्गप्रत्यङ्गाभिव्यक्तीभावो ज्ञेयः। द्वितीये तु मासे ग्रन्थ्यादिरूपगर्भप्रत्यङ्गव्यक्तीभावो न वक्तव्यः। तेन वक्ष्यमाणं कर्म मासद्वयं यावत्कर्त्तव्यम्। प्रयुक्तेनेति पूर्वेण संबध्यते। नियतं निश्चितम्। तथेतरेषामितरत्वमिति देशकालविगुणानामनिष्टकारणत्वानिश्चयमित्यर्थः। पुंसवनमिति पुंस्त्वकारकं कर्म। गोष्ठो गवां विश्रामस्थानम्। अतः स्थानादिविशेषपरिग्रहएव फलदो भवतीति वचनादुन्नीयते। नात्र तादृशा युक्तयः प्रभवन्ति'धान्यमाष' शब्देन व्रीहिमाषं ग्राहयन्ति। सुवर्णमाषञ्च व्यावर्त्तयन्ति। गौरसर्षपः श्वेतसर्षपः। 'पुष्येणेति पुष्यनक्षत्रेण। यथेष्टमित्यनेन द्विशस्त्रिशो वा पिबेदित्यपि दर्शयति। कुड्यकीटः 'कवडिगणा' इति ख्यातः। किम्वा ज्येष्ठी कुड्यकीटः। जतूकर्णेऽप्यत्र 'भित्तिमत्स्यः' इति पठ्यते। भित्तिमत्स्यशब्देन च पाश्चात्ये 'ज्येष्ठी' उच्यते। मत्स्यकोद्रः मत्स्यहा मत्स्यकेति ख्यातः। देहली गृहद्वाराधःकाष्ठम् तत्रोपरि विधाय शिर इति शेषः। किम्वा आत्मानमेव देहल्यामुपरि विधायेति मन्तव्यम्। यदुक्तं जतूकर्णे—"देहल्यामासीना" इति ॥ २० ॥

अत ऊर्ध्वं गर्भास्थापनानि व्याख्यास्यामः।

ऐन्द्रीब्राह्मीशतवीर्यासहस्रवीर्याऽमोघाऽव्यथाशिवाऽरिष्टावाट्यपुष्पीविष्वक्सेनकान्तेत्येतासा-

१ गीतादीति पाठान्तरम्।

१ लिङ्गपरावृत्तिकमिति पाठान्तरम्।

मोषधीनां शिरसा दक्षिणेन पाणिना धारणम् । एताभिश्चैव सिद्धस्य पयसः सर्पिषो वा पानम् । एताभिश्चैव पुष्ये पुष्ये स्नानम् । सदा च ताः समालभेत । तथा सर्वासां जीवनीयोक्तानामोषधीनां सदोपयोगस्तैस्तैरुपयोगविधिभिरिति गर्भस्थापनानि ॥ २१ ॥

सम्प्रति स्थितस्य गर्भस्य गर्भोपघातकप्रभावखण्डकत्वेन यत् पुनः स्थितिकारकम्, तद्गर्भस्थापनमुच्यते अत ऊर्ध्वमित्यादिना । ऐन्द्री गोरक्षकर्कटी । शतवीर्यासहस्रवीर्ये दूर्वाद्वयम् । अमोघा पाटला । अव्यथा गुडूची । अरिष्टा कटुरोहिणी । वाट्यपुष्पी पीतबला । विष्वक्सेनकान्ता प्रियङ्गुः । बालस्याऽचिरजातस्यापि 'गर्भ'व्यपदेशो भवतीति । तेन कुक्षेर्बहिरपि मरणसम्भवे 'अन्तःकुक्षेः' विशेषणमुपपन्नम् ॥ २१ ॥

गर्भोपघातकरास्त्विमे भावाः, तद्यथा—उत्कटुकविषमकठिनासनसेविन्या वातमूत्रपुरीषवेगानुपरुन्धत्या दारुणानुचितव्यायामसेविन्यास्तीक्ष्णोष्णातिमात्रसेविन्याः प्रमिताशनसेविन्या गर्भो म्रियतेऽन्तःकुक्षेर्वा अकाले स्रंसते शोषी भवति वा । तथाभिघातप्रपीडनैः श्वभ्रकूपप्रपातोद्देशावलोकनैर्वाऽभीक्ष्णं मातुः प्रपतत्यकाले । तथाऽतिमात्रसंक्षोभिभिर्यानैरप्रियातिमात्रश्रवणैर्वा प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्टयति । विवृतशायिनी नक्तंचारिणी चोन्मत्तं जनयत्यपस्मारिणं पुनः कलिकलहशीला । व्यवायशीला दुर्वपुषमह्रीकं स्त्रैणं वा । शोकनित्या भीतमपचितमल्पायुषं वा । अभिध्यात्री परोपतापिनमीर्ष्युं स्त्रैणं वा । स्तेनाऽत्यायासबहुलमतिद्रोहिणमकर्मशीलं वा । अमर्षणा चण्डमौपधिकमसूयकं वा । स्वप्ननित्या तन्द्रालुमबुधं अल्पाग्निं वा । मद्यनित्या पिपासालुमल्पस्मृतिमनवस्थितं वा । गोधामांसप्राया शार्करिणमश्मरिणं शनैर्मेहिनं वा । वराहमांसप्राया रक्ताक्षं क्रथनमनतिपरुषरोमाणं वा । मत्स्यमांसनित्या चिरनिमेषं स्तब्धाक्षं वा । मधुरनित्या प्रमेहिनं मूकमतिस्थूलं वा । अम्लनित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा । लवणनित्या शीघ्रवलीपलितं खालित्यरोगिणं वा । कटुकनित्या दुर्बलमल्पशुक्रमनपत्यं वा । तिक्तनित्या शोषिणमबलमपचितं वा । कषायनित्या श्यावमानाहिनमुदावर्त्तिनं वा । यद्यच्च यस्य यस्य व्याधेर्निदानमुक्तम् तत्तदासेवमानान्तर्वत्नी तद्विकारबहुलमपत्यं जनयति । पितृजास्तु शुक्रदोषा मातृजैरपचारैर्व्याख्याता इति गर्भोपघातकरा भावा भवन्त्युक्ताः । तस्मादहितानाहारविहारान् प्रजासम्पदमिच्छन्ती स्त्री विशेषेण वर्जयेत् । साध्वाचारा चात्मानमुपचरेद्धिताभ्यामाहारविहाराभ्याम् ॥ २२ ॥

१ सदा चैताभिरिति पाठान्तरम् । २ गोधामांसप्रियेति पाठान्तरम् ।

प्रततोत्तानशायिनी उत्तानशयनशीला । विवृते अनावृते । विवृते तु शायिनी तथा नक्तञ्चारिणी च रक्षःप्रभृतिभूताभिगमनीया भवति । ततश्च भूतैरभिभूतो गर्भ उन्मत्तो भवतीति युक्तम् । कलिर्वाचा । कलहस्तु शारीरकलहः । स्त्रैणं स्त्रीवशम् । अभिध्यात्री मनसा द्रोहणशीला । औपधिकं शाठ्यप्रचारिणम् । क्रथनमकस्मादुच्छ्वासावरोधम् । मधुरनित्येति गर्भिणीविहितं क्षीरं विहायान्यमधुराण्यनुसेविनी बोद्धव्या । क्षीरस्य विहितत्वेन प्राशस्त्यम् । तत्र सात्म्यानामपि रसानामत्यर्थोपयोगे दोषमभिधाय यत् पुनर्मद्यादीनामत्यर्थसेवने पृथग् दोषं ब्रूते, तत् प्रभावस्य दोषविशेषाभिधानार्थमिति ज्ञेयम् । यद्वस्तुसेवया ये च विकारा गर्भस्योचितनिदाना दृश्यन्ते ते तावदुचितोत्पादाएव । यथा—निद्रातिसेवया तन्द्रालुः । अम्लेन रक्तपित्तादियुक्त इत्यादि । ये तु हेतुसदृशविकारा गर्भस्य दृश्यंते । यथा गोमांसेन शर्कराश्मरीत्यादि । तेऽपि द्रव्यप्रभावादेव ज्ञेयाः । यद्यपि गर्भग्रहणात् प्रागपि स्त्रियापि अपथ्यसेवाऽऽर्त्तवदुष्टिद्वारा गर्भे विकारं जनयति । तथा पुरुषस्यापथ्यसेवा शुक्रदुष्टिद्वारा गर्भे दुष्टिं जनयतीति इहैव "पितृजास्तु" इत्यादिना ग्रन्थे वक्तव्यम् । तथापि गृहीतगर्भायाएव स्त्रिया अपचारविशेषेणाव्यवधानाद्गर्भदुष्टिकरा भवन्तीति कृत्वा 'तत्तदासेवमानाऽन्तर्वत्नीत्याद्युक्तम् । मातृजैरपचारैर्व्याख्याता इति यथा मातुरपचारानुरूपा गर्भव्याधयो भवन्ति । एवं पितुरपि व्यवायात् प्रागपचारेणेह शुक्रदुष्ट्यपचारानुरूपा व्याधयो भवन्तीत्यर्थः । 'स्त्री विशेषेण' इत्यनेन पुरुषोऽपि वर्जयेदिति दर्शयति । साध्वाचारेति मङ्गलाचारशीला ॥ २२ ॥

व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायैरौषधाहारोपचारैरुपचरेत् । न चास्या वमनविरेचनशिरोविरेचनानि प्रयोजयेत् । न रक्तमवसेचयेत् । सर्वकालं वा नास्थापनमनुवासनं वा कुर्यादन्यत्राऽऽत्ययिकाद्व्याधेः । अष्टमं मासमुपादाय वमनादिसाध्येषु पुनर्विकारेष्वात्ययिकेषु मृदुभिर्वमनादिभिस्तदर्थकारिभिर्वोपचारः स्यात् । पूर्णमिव तैलपात्रमसंक्षोभयताऽन्तर्वत्नी भवत्युपचर्या ॥ २३ ॥

सा चेदपचाराद् द्वयोस्त्रिषु वा मासेषु पुष्पं पश्येन्नास्या गर्भः स्थास्यतीति विद्यात् । अजातसारा हि तस्मिन् काले भवन्ति गर्भाः ॥ २४ ॥

सा चेच्चतुष्प्रभृतिषु मासेषु क्रोधशोकेर्ष्याभयत्रासव्यवायव्यायामसंक्षोभसंधारणविषमासनश-

यन्नस्यानक्षुत्पिपासातियोगात् कदाहाराद्वा पुष्पं पश्येत्, तस्या गर्भस्थापनविधिमुपदेक्ष्यामः, पुष्पदर्शनादेवैनां ब्रूयात्—शयनं तावन्मृदुसुखशिशिरास्तरणसंस्तीर्णमीषदवनतशिरस्कं प्रतिपद्यस्वेति। ततो यष्टीमधुकसर्पिर्भ्यां परमशिशिरवारिसंस्थिताभ्यां पिचुमाप्लाव्योपस्थसमीपे स्थापयेत्तस्यास्तथा शतधौतसहस्रधौताभ्यां सर्पिर्भ्यामधोनाभेः सर्वतः प्रदिह्यात्। गव्येन चैनां पयसा सुशीतेन मधुकाम्बुना वा न्यग्रोधादिकषायेण वा परिषेचयेदधोनाभेः। उदकं वा सुशीतमवगाहयेत्। क्षीरिणां च कषायद्रुमाणां स्वरसपरिपीतानि चेलानि ग्राहयेत्। न्यग्रोधादिशुङ्गासिद्धयोर्वा क्षीरसर्पिषोः पिचुं ग्राहयेत्। अतश्चैवाक्षमात्रं प्राशयेत्। प्राशयेद्वा केवलमेव क्षीरसर्पिः। पद्मोत्पलकुमुदकिञ्जल्कांश्चास्यै समधुशर्करान् लेहार्थं दद्यात्। शृङ्गाटकपुष्करबीजकशेरुकान् भक्षणार्थं गन्धप्रियङ्गुसितोत्पलशालूकोदुम्बरशलाटुन्यग्रोधशुङ्गानि वा पाययेत्तेनामाजेन पयसा। पयसा चैनां बलातिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेन समधुशर्करं रक्तशालीनामोदनं मृदुमधुरशीतलं भोजयेत्। लावकपिञ्जलकुरङ्गशम्बरशशहरिणैणकालपुच्छकरसेन वा घृतसलिलसिद्धेन सुखशिशिरोपवातदेशस्थां भोजयेत्। क्रोधशोकायासव्यवायव्यायामेभ्यश्चाभिरक्षेत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत। तथाऽस्या गर्भस्तिष्ठति ॥ २५ ॥

मृदुभिर्वमनादिभिरिति मृदुद्रव्यगतैरल्पमात्रैश्च वमनादिभिरित्यर्थः। तदर्थकारिभिर्वेति यथा वमनार्थकारि निष्ठीवनम्। विरेचनानुकारिणी फलवर्तिरित्यादिभिरुपचारः कर्तव्यः। संधारणं वेगसंधारणम्। कदाहारः कुत्सिताहारः। शिशिरं शीतम्। यष्टीमधुकसिद्धं सर्पिः यष्टीमधुकसर्पिः। चेलानि ग्राहयेदित्यत्र योनिमिति शेषः। अतश्चैवेति न्यग्रोधादिशुङ्गात्। किम्वा क्षीरसर्पिष इत्यस्मिन् पाठे क्षीरोत्थितं सर्पिः क्षीरसर्पिः ॥ २३—२५ ॥

यस्याः पुनरामान्वयात् पुष्पदर्शनं स्यात्। प्रायस्तत्तस्या गर्भबाधकं भवति विरुद्धोपक्रमत्वात्तयोः। यस्याः पुनरुष्णतीक्ष्णोपयोगाद्गर्भिण्या महति गर्भे जातसारे पुष्पदर्शनं स्यादन्यो वा योनिस्रावः तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात्। स कालमवतिष्ठतेऽतिमात्रम्। तमुपविष्टकइत्याचक्षते केचित्। उपवासव्रतकर्मपरायाः पुनः कदाहारायाः स्नेहद्वेषिण्या वातप्रकोपणोक्तान्यासेवमानाया गर्भो न वृद्धिं प्राप्नोति परिशुष्कत्वात्। सचापि कालमवतिष्ठतेऽतिमात्रम्, अतिमात्रस्पन्दनश्च भवति। तन्नागोदर इत्याचक्षते ॥ २६ ॥

आमान्वयादिति आमजनकहेतोः सकाशादित्यर्थः। विरुद्धोपक्रमत्वादिति गर्भस्रावे हि स्तंभनं कर्तव्यम्। तच्च शीतं मृदु मधुरञ्च। तच्चैतदामविरुद्धमामजनकत्वादिति विरुद्धोपक्रमता। अन्योवेति आर्तवलक्षणव्यतिरिक्तः। अत्रापि केचिदित्युक्तम्। तथाप्यप्रतिषेधादाचार्यस्यापि एतत्संमतं किञ्चिद्विशेषमिति ॥ २६ ॥

नार्यास्तयोरुभयोरपि चिकित्सितविशेषमुपदेक्ष्यामः—भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धानां सर्पिषामुपयोगः। नागोदरे तु योनिव्यापन्निर्दिष्टं पयसामामगर्भाणां च गर्भवृद्धिकराणां तथा सम्भोजनमेतैरेव च सिद्धैश्च घृतादिभिः सुभिक्षाया अभीक्ष्णं यानवाहनावमार्जनजृम्भणैरुपपादनमिति ॥ २७ ॥

यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते, तां श्येनमत्स्यगवयशिखिताम्रचूडतित्तिरीणामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूतसर्पिषा मूलकयूषेण वा रक्तशालीनामोदनं मृदुमधुरशीतलं भोजयेत्। तैलाभ्यङ्गेन चास्या अभीक्ष्णमुदरवंक्षणोरुकटीपार्श्वपृष्ठप्रदेशानीषदुष्णेनोपचरेत्। यस्याः पुनरुदावर्त्तविबन्धः स्यादष्टमे मासे न चानुवासनसाध्यं मन्येत ततस्तस्यास्तद्विकारप्रशमनमुपकल्पयेन्निरूहम्। उदावर्त्तो ह्युपेक्षितः सहसा सगर्भां गर्भिणीं गर्भमथवातिपातयेत्। तत्र वीरणशालिकुशकाशेक्षुवालिकावेतसपरिव्याधमूलानां भूतीकानन्ताकाश्मर्यपरूषकमधुकमृद्वीकानांच पयसार्द्धोदकेनोद्गमय्य रसं पियालबिभीतकमज्जतिलकल्कसंप्रयुक्तमीषल्लवणमनत्युष्णं निरूहं दद्यात्। व्यपगतविबन्धां चैनां सुखसलिलपरिषिक्ताङ्गीं स्थैर्यकरमविदाहिनमाहारंभुक्तवतीं सायं मधुकसिद्धेन तैलेनानुवासयेत्। न्युब्जां त्वेनामास्थापनानुवासनाभ्यामुपचरेत् ॥ २८ ॥

अत्र 'विशेष' शब्देन गर्भव्याध्यन्तरापेक्षया चिकित्सितविशेषो ज्ञेयः; उपविष्टकनागोदरयोस्तु विशिष्टैवेह चिकित्सा वक्तव्या। किम्वा 'यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते' इत्यादिना योऽवस्थायां विशेषो वक्तव्यः तमपेक्ष्योक्तं चिकित्सितविशेष इति। भौतिकं भूतोपयुक्तहितं वचागुग्गुल्वादि। किम्वा महापैशाचिकादिघृतं वक्ष्यमाणं द्रव्यम्।

१ शुङ्गानीति पाठान्तरम्।

सुभिक्षाया इति बुभुक्षायाः । न चानुवासनसाध्यं मन्येत इति सामत्वादुदावर्तस्येति नानुवासनसाध्यो भवतीति ज्ञेयम् । तद्विकारप्रशमनमिति उदावर्तप्रशमनमित्यर्थः । उदावर्तप्रशमनं निरूहमाह—तत्रेत्यादि ।—परिव्याधो वेतसभेदः । उद्गमय्य रसमिति क्वाथं निःक्वाथ्य । क्वाथादिपरिमाणं च निरूहपरिमाणपरिभाषयैव कर्तव्यम् । न्युब्जामित्यधोमुखीम् ॥ २७ ॥ २८ ॥

यस्याः पुनरतिमात्रदोषोपचयाद्वा तीक्ष्णोष्णातिमात्रसेवनाद्वा वातमूत्रपुरीषवेगधारणैर्वा विषमासनशयनस्थानसंपीडनाभिघातैर्वा क्रोधशोकेर्ष्याभयत्रासादिभिर्वा साहसैर्वा परैः कर्मभिरन्तःकुक्षेर्गर्भो म्रियते । तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः शूलमधिकमुपजायते । न चाव्यः प्रादुर्भवन्ति । योनिर्न प्रस्रवत्यक्षिणी चास्याः स्रस्ते भवतः । ताम्यति । व्यथते । भ्रमते । श्वसित्यरतिबहुला च भवति । न चास्या वेगप्रादुर्भावो यथावदुपलभ्यते इत्येवंलक्षणां स्त्रियं मृतगर्भेयमिति विद्यात् ॥ २९ ॥

तस्य गर्भशल्यस्य जरायुपातनकर्म संशमनमित्येके । मन्त्रादिकर्माथर्ववेदविहितमित्येके । परिदृष्टकर्मणा शल्यहर्त्रा हरणमित्येके । व्यपगतगर्भशल्यां तु स्त्रियमामगर्भां सुराशीध्वरिष्टमधुमदिरासवानामन्यतममग्रे सामर्थ्यतः पाययेत् गर्भकोष्ठशुद्ध्यर्थमार्तिविस्मरणार्थं प्रहर्षणार्थं च, अतःपरं संप्रीणनैर्बलानुरक्षिभिरस्नेहसम्प्रयुक्तैर्यवाग्वादिभिर्वा तत्कालयोगिभिराहारैरुपचरेत् दोषधातुक्लेदविशोषणमात्रं कालम् । अतःपरं स्नेहपानैर्बस्तिभिराहारविधिभिश्च दीपनीयजीवनीयबृंहणीयमधुरवातहरसमाख्यातैरुपचरेत् । परिपक्वगर्भशल्यायाः पुनर्विमुक्तगर्भशल्यायास्तदहरेव स्नेहोपचारः स्यात् ३०

अश्मान्तर्गतमिवेति अन्तर्गतप्रस्तरमिवेत्यर्थः । आवी प्रसवकालशूलम् । 'एके' इति वचनेन अप्रतिषेधेन च दुश्चिकित्स्यव्याधेर्जरायुपातनकर्मादीनां त्रयाणामपि मृतगर्भापहरणं प्रति सम्यक्साधनता नास्तीति दर्शयति । दोषधातुक्लेदविशोषणमात्रं कालमित्यनेन दोषधातुक्लेदविशोषणावधितां यथोक्तक्रमस्य दर्शयति ॥ २९ ॥ ३० ॥

परमतो निर्विकारमाप्यायमानस्य गर्भस्य मासे मासे कर्मोपदेक्ष्यामः ।—प्रथमे मासे शङ्कित चेद्—गर्भमापन्ना, क्षीरमनुपस्कृतं मात्रावच्छीतं काले काले पिबेद्न्तर्वत्नी । सात्म्यमेव च पुनर्भोजनं सायं प्रातश्च भुञ्जीत । द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धम् । तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य । चतुर्थे मासे क्षीरनवनीतमक्षमात्रमश्नीयात् । पञ्चमे मासे क्षीरसर्पिः । षष्ठे मासे क्षीरसर्पिः मधुरौषधसिद्धम् । तदेव सप्तमे मासे । तत्र गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते । तन्नेति भगवानात्रेयः । किन्तु गर्भोत्पीडनाद्धि वातपित्तश्लेष्माण उरः प्राप्य विदहन्ति । ततः कण्डूरुपजायते कण्डूमूला किक्किसावाप्तिः । तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रं काले कालेऽस्यै दद्यात् । चन्दनमृणालकल्कैश्चास्याः स्तनोदरं विमृद्गीयात् शिरीषधातकीसर्षपमधूकचूर्णैः कुटजार्जकबीजमुस्तहरिद्राकल्कैर्वा निम्बकोलकसुरसमञ्जिष्ठाकल्कैर्वा पृषतहरिणशशरुधिरयुतया त्रिफलया वा । करवीरपत्रकसिद्धेन वा तैलेनाभ्यङ्गः । परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसा । जातकण्डूश्च कण्डूयनं वर्जयेत् त्वग्भेदवैरूप्यपरिहारार्थम्, असह्यायां तु कण्ड्वामुन्मर्दनोद्घर्षणाभ्यां परिहारः स्यात् । मधुरमाहारजातं वातहरमल्पमस्नेहलवणमल्पोदकानुपानं भुञ्जीत । अष्टमे तु मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत् । नेति भद्रकाप्यः । पैङ्गल्याबाधो हि अस्या गर्भमागच्छेदिति । अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान् पुनर्वसुरात्रेयः । न त्वेवैतन्न कार्यम् । एवं कुर्वती ह्यरोगाऽरोगबलवर्णस्वरसंहननसंपदुपेतं ज्ञातीनां श्रेष्ठमपत्यं जनयति । नवमे तु खल्वेनां मासे मधुरौषधसिद्धेन तैलेनानुवासयेत् । अतश्चैवास्यास्तैलपिचुं योनौ प्रणयेत् गर्भस्थानमार्गस्नेहनार्थम् । यदिदं कर्म प्रथमं मासं समुपादायोपदिष्टमानवममासात् । तेन गर्भिण्यां गर्भसमये गर्भधारणे कुक्षिकटीपार्श्वपृष्ठं मृदु भवति । वातश्चानुलोमः सम्पद्यते, मूत्रपुरीषे च प्रकृतिभूते सुखेन मार्गावापद्येते । चर्मनखानि च मार्दवमुपयान्ति । बलवर्णौ चोपचीयेते पुत्रं चेष्टं संपदुपेतं सुखिनं सुखेनैषा काले प्रजायते इति ॥ ३१ ॥

गर्भस्य प्रतिमासिकं कर्माह—परमत इत्यादि ।—तन्नेति भगवानात्रेय इति युगपदेव तृतीये मासेऽङ्गप्रत्यङ्गनिष्पत्तेः केशा अपि तदैव जाताः क्रमेण वर्द्धन्ते । न सप्तमे मास इति भावः । अथ कथं तर्हि सप्तमे विशेषेण कण्डूर्भवतीत्याह—गर्भोत्पीडनाद्धीत्यादि—किक्किसश्चर्मविदरणम् । स्तनावुदरं च स्तनोदरम् । कोलं बदरी । परिहारः कण्ड्वा इति शेषः । पैङ्गल्यं पिङ्गलनेत्रता । सा च यद्यपि पित्तकृता ।

१ बृंहणैरिति पाठान्तरम् ।

यदुक्तं शालाक्ये "पित्तेऽल्यर्थप्रदुष्टे तु नेत्रयोः पिङ्गला स्मृता" इति । तथापीह अष्टममासीयगर्भे क्षीरयवागवाहारसम्भवप्रभावादेव पैङ्गल्यं भवतीति ज्ञेयम् । न त्वेवैतन्न कार्यमिति पैङ्गल्यस्याल्पदोषत्वादुत्तरकालं सुकरप्रतिक्रियत्वाच्च क्षीरयवागूसेवनमिति भावः । अतश्चैवेति मधुरौषधसिद्धतैलात् । प्रजायते इति गर्भधारिण्या अनेन कर्मणा पुत्रजन्मैव व्याकृतं भवतीति ॥ ३१ ॥

प्राक् चैवास्या नवममासात् सूतिकागारं कारयेदपहृतास्थिशर्कराकपाले देशे प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा बैल्वानां काष्ठानां तैन्दुकैङ्गुदकानां भल्लातकानां वारणानां खादिराणां वा । यानि चान्यान्यपि ब्राह्मणाः शंसेयुरथर्ववेदविदः । तद्वसनालेपनाच्छादनापिधानसंपदुपेतं वास्तुविद्याहृदययोगाग्निसलिलोदूखलवर्चःस्थानस्नानभूमिमहानसमृतुसुखं च सेवयेत् ॥ ३२ ॥

पुत्रं प्रसूते यत्र गर्भिणी प्रसूता च यत्र प्रतिष्ठति तत् सूतिकागारमुच्यते । वारणस्त्वगावरणं वा । तत् सेवयेदिति सम्बन्धः । वसनं वस्त्रम् । आच्छादनमास्तरणम् । अपिधानं कपाटः । वास्तुविद्याहृदयं वास्तुविद्यातत्त्वम् । तद्योगादग्न्यादीनां स्थानं यत्र तद्गृहम् । वास्तुविन्मतेन विभक्तमग्न्यादिस्थानं तद्गृहं कर्तव्यमित्यर्थः । वर्तमानर्तुमपेक्ष्य सुखमृतुसुखम् ॥ ३२ ॥

तत्र सर्पिस्तैलमधुसैन्धवसौवर्चलकालविड्गविडङ्गकुष्ठकिलिमनागरपिप्पलीपिप्पलीमूलहस्तिपिप्पलीमण्डूकपिप्पलीलाङ्गलीवचाचव्यचित्रकचिरबिल्वहिङ्गुसर्षपलशुनकतककणकणिकानीपातसीवल्वजभूर्जकुलत्थमैरेयसुरासवाः सन्निहिताः स्युः । तथाऽश्मानौ द्वौ द्वे च कुण्डमुसले द्वे उदूखले खरवृषभश्च द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ शस्त्राणि च तीक्ष्णायसानि द्वौ च बिल्वमयौ पर्यङ्कौ तैन्दुकैङ्गुदानि च काष्ठान्यग्निसन्धुक्षणानि । स्त्रियश्च बह्व्यो बहुशः प्रजाताः हार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तविषादाः क्लेशसहिन्योऽभिमताः, ब्राह्मणाश्चाथर्ववेदविदो यच्चान्यदपि तत्र समर्थं मन्येत । यच्चान्यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धाः । तत्कार्यम् । ततः प्रवृत्ते नवमे मासे पुण्येऽहनि प्रशस्तनक्षत्रयोगमुपगते प्रशस्ते भगवति शशिनि कल्याणकरणे मैत्रे मुहूर्त्ते शान्तिं कृत्वा गोब्राह्मणमग्निमुदकं चादौ प्रवेश्य गोभ्यस्तृणोदकं मधुलाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान् सुमनसो नान्दीमुखानि च फलानीष्टानि दत्त्वोदकपूर्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्ति वाचयेत् । ततः पुण्याहशब्देन गोब्राह्मणमनुवर्त्तमाना प्रदक्षिणं प्रविशेत् सूतिकागारम् । तत्रस्था च प्रसवकालं प्रतीक्षेत ॥ ३३ ॥

तस्यास्तु खल्विमानि लिङ्गानि प्रजननकालमभितो भवन्ति । तद्यथा—क्लमो गात्राणां ग्लानिराननस्याक्ष्णोर्विमुक्तबन्धनत्वमिव[1] कुक्षेरवस्रंसनमधोगुरुत्वं वंक्षणवस्तिकटीकुक्षिपार्श्वपृष्ठनिस्तोदो योनेः प्रस्रवणमनन्नाभिलाषश्चेति । ततोऽनन्तरमावीनां प्रादुर्भावः प्रसेकश्च गर्भोदकस्य ॥ ३४ ॥

सर्पिस्तैलादीनामत्र गृहे स्थापनीयानां व्यक्त एव तावदुपयोगः । बहुत्वेन येषां तु न वक्तव्यः । तेषामप्ययमुपयोग उन्नेयः । किलिमं देवदारु । कणः कुण्डक इति ख्यातः । कणिका तु कुण्डकात् स्थूला तण्डुला येन कुब्ज्यन्ते, तन्मुसलम् । कुण्डमुसले इति हस्तमुपले । किम्वा चण्डमुपले इति पाठः तदा गुरुतरमुपले इत्यर्थः । सूच्याकारौ पिप्पलकौ सूचीपिप्पलकौ । किम्वा सूची यत्र स्थाप्यते स सूचीपिप्पलकः । पर्यङ्कः खट्वा । समर्थं मन्ये इति कार्यमिति शेषः । शान्तिं कृत्वेति शान्तिहोमं कृत्वा । नान्दीमुखानि च फलानि नांदीमुखश्राद्धोपहितानि फलानि । किम्वा नान्दी मुरजः । तन्मुखाकृतीनि फलानि खर्जूरादीनि । पुण्याहशब्दो मङ्गलशब्दः । प्रदक्षिणं यथा भवति तथा समनुवर्तमाना ॥ ३३ ॥ ३४ ॥

आवीप्रादुर्भावे तु भूमौ शयनं विदध्यात् मृद्वास्तरणोपपन्नम् । तदध्यासीत सा । तां ताः समन्ततः परिवार्य यथोक्तगुणाः स्त्रियः पर्युपासीरन्नाश्वासयन्त्यो वाग्भिर्ग्राहिणीभिः सान्त्वनीयाभिः ॥ ३५ ॥

सा चेदावीभिः संक्लिश्यमाना न प्रजायेताऽथैनां ब्रूयात्—'उत्तिष्ठ, मुषलमन्यतरत् गृहीष्वानेन तदुलूखलं धान्यपूर्णं मुहुर्मुहुरभिजहि मुहुर्मुहुरवजृम्भस्व चंक्रमस्व चान्तरान्तरा' इत्येवमुपदिशन्त्येके । तन्नेत्याह भगवानात्रेयः । दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते । विशेषतश्च प्रजननकाले प्रचलितसर्वधातुदोषायाः सुकुमार्या नार्या मुषलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्याद्दुष्प्रतीकारतमा च तस्मिन् काले विशेषेण भवति गर्भिणी । तस्मात् मुषलग्रहणं परिहार्यमृषयो मन्यन्ते । जृम्भणं चंक्रमणं च पुनरनुष्ठेयमिति । अथास्यै दद्यात्

१ अक्ष्णोः शैथिल्यं विमुक्तबन्धनत्वमिव वक्षस इति पाठान्तरम् ।

कुष्ठेलालाङ्गलिकीवचाचित्रकचिरविल्वचव्यचूर्ण-मुपघ्रातुम् । सा तत्र मुहुर्मुहुरुपजिघ्रेत् । तथा भूर्जपत्रधूमं शिंशपाधूमं वा । तस्याश्चान्तरान्तरा कटीपार्श्वपृष्ठसक्थिदेशानीषदुष्णेन तैलेनाभ्यज्या-नुसुखमेवमृद्नीयादित्यनेन कर्मणा गर्भोऽवाक्प्रति-पद्यते ॥ ३६ ॥

स यदा जानीयाद्विमुच्य हृदयमुदरमस्यास्त्वा-विशति वस्तिशिरोऽवगृह्णाति । त्वरयन्त्येनामाव्यः। परिवर्त्ततेऽधो गर्भ इति । अस्यामवस्थायां पर्य-ङ्कमेनामारोप्य प्रवाहितुमुपक्रामयेत् । कर्णेचास्या मन्त्रमिममनुकूला स्त्री जपेत्,

'क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु वैशल्यं च दिशन्तु ते॥३७
प्रसुष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने ! ।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम्' इति॥३८

उपदिष्टार्थाभिधायिनी वागग्राहणीया । अवजृम्भस्वेति गात्राणि प्रसारय । अन्तरं लब्ध्वेति हेतुमासाद्य । यद्यपि मुसलग्रहणं निषिद्धम् । तथाप्युत्तरकाले द्वारे मुपलस्थापनं वक्तव्यमिति साधु मुसलोपादानम् ॥ ३५—३८॥

ताश्चैनां यथोक्तगुणाः स्त्रियोऽनुशिष्युरनाग-ताऽऽवीर्मा प्रवाहिष्ठाः । या ह्यनागताऽऽवीः प्रवाहते । व्यर्थमेवास्यास्तत्कर्म भवति । प्रजा चा-स्या अविकृता विकृतिमापन्ना वा श्वासकासशो-षप्लीहप्रसक्ता भवति । यथा हि क्षवथूद्गारवा-तमूत्रपुरीषवेगान् प्रयतमानोऽप्यप्राप्तकालान्न ल-भते कृच्छ्रेण वाप्यवाप्नोति । तथानागतकालं गर्भमपि प्रवाहमाणा । यथा चैषामेव क्षवथ्वा-दीनां सन्धारणमुपघातायोपपद्यते । तथा प्राप्त-कालस्य गर्भस्याप्रवाहणम् । सा यथानिर्देशं कुरुष्वेति वक्तव्या । तथा च कुर्वती शनैः पूर्वं प्रवाहेत । ततोऽनन्तरं बलवत्तरम् । तस्यां प्र-वाहमाणायां स्त्रियः शब्दं कुर्युः—'प्रजाता प्र-जाता धन्यं धन्यं पुत्रम्' इति । तथास्या हर्षेणाप्या-यन्ते प्राणाः ॥ ३९ ॥

सुनिर्धूतमिति क्रियाविशेषणम् । आकोटयेदिति पीडयेत् । वालकृता वेणी वालवेणी । वल्वजयूपो वल्वजक्वाथः । मण्डू-कपिप्पली मण्डूपकर्णी । किंवा मण्डूको मण्डूपकर्णी । पिप्पली पिप्पल्येव तयोः वल्वजयूपादौ सूक्ष्मैलादीनां पानं विधीयते। खरवृषभश्चण्डवलीवर्दः ॥ ३९ ॥

१ अनुसुखमिति पाठान्तरम् । २ अर्वागिति पाठान्तरम् । ३ इन्द्र इति पाठान्तरम् । ४ प्रसुवेति पाठान्तरम् ।

यदा च प्रजाता स्यात्तदैवैनामवेक्षेत—काचि-दस्याः अपरा प्रपन्नाऽप्रपन्ना वेति । तस्याश्चे-दपरा न प्रपन्ना स्यादथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवन्निपीड्य स-व्येन पृष्ठत उपसंगृह्य सुनिर्धूतं निर्धुनुयात् । अथास्याः पादपार्ष्ण्या श्रोणीमाकोटयेत् । तस्याः स्फिचावुपसंगृह्य सुपीडितम् पीडयेत् । अथास्या वालवेण्या कण्ठतालु परिस्पृशेत् । भूर्जपत्रका-चमणिसर्पनिर्मोकधूमैश्चास्या योनिं धूपयेत् । कुष्ठ-तालीसकल्कं वल्वजयूपे मैरेयसुरामण्डे तीक्ष्णे कौलत्थे वा मण्डूकपिप्पलीसम्पाके वा संप्लाव्य पाययेत्तैनाम् । तथा सूक्ष्मैला किलिमकुष्ठनागरवि-डङ्गपिप्पलीकालागुरुचव्यचित्रकोपकुञ्चिकाकल्कं खरवृषभस्य वा जीवतो दक्षिणं कर्णमुत्कृत्य दृषदि जर्जरीकृत्य वल्वजयूपादीनामाप्लावनानाम-न्यतमस्मिन् प्रक्षिप्याप्लाव्य मुहूर्त्तस्थितमुद्धृत्य तदा-प्लावनं पाययेत्तैनाम् । शतपुष्पाकुष्ठमदनहिङ्गुसि-द्धस्य चैनां तैलस्य पिचुं ग्राहयेत् ॥ ४० ॥

अतश्चैवानुवासयेद् । एतैरेव चाप्लावनैः फल-जीमूतेक्ष्वाकुधामार्गवकुटजकृतवेधनहस्तिपिप्पल्यु-पहितैरास्थापयेत् । तदास्थापनमस्याः सह वात-मूत्रपुरीषैर्निर्हरत्यपरामासक्तां वायोरेवाप्रतिलोम-गत्वात् । अन्यान्यपि हि वातमूत्रपुरीषाणि वहि-र्गमनशीलानि सज्जन्ति ॥ ४१ ॥

तस्यास्तु खल्वपरायाः प्रपतनार्थे कर्मणि क्रिय-माणे जातमात्रस्यैव कुमारस्य कार्याण्येतानि कर्माणि भवन्ति । तद्यथा—अश्मनोः संघट्टनं कर्णयोर्मूले । शीतोदकेनोष्णोदकेन वा सुखेन परिषेकः । तथा संक्लेशविहतान् प्राणान् पुनर्ल-भेत । कृष्णकपालिकाशूर्पेण चैनमभिनिष्पुनीयुः यद्यचेष्टः स्यात् यावत् प्राणानां प्रत्यागमनम् । ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानो-दकग्रहणाभ्यामुपपादयेत् ॥ ४२ ॥

एतैरेवेति वल्वजादियूपैः सज्जन्ति वहिर्गमनशीलानि पुरी-षादीनि अभ्यन्तरदेशे संसक्तानि भवन्ति । शीतोदकेन चो-ष्णोदकेनेति ऋतुभेदेन ज्ञेयः । ग्रीष्मकाले शीतोदकेन शीतकाले तु उष्णोदकेनेत्यर्थः । संक्लेशविहतानिति योनिरन्ध्रपीडितादिक्ले-शपराहतान् । कृष्णकपालिका ईषिकेति । तत्कृतशूर्पैः कृष्णक-पालिकाशूर्पैः तेन निष्पन्नवायुं वीजयेयुरित्यर्थः । अथ कियन्तं कालं तद्वीजनमित्याह—यावत् प्राणानां प्रत्यागमनमिति । उदकग्रहणं मलमार्गशौचम् । उपधानमावरणम् । तच्चेहाङ्गुल्याः कार्पासपिचुनैव ॥ ४०—४२ ॥

अथास्य तालवोष्ठकण्ठजिह्वाप्रमार्जनमारभेताङ्गुल्या सुपरिलिखितनखया सुप्रक्षालितोपधानकार्पासपिचुमत्या प्रथमं प्रमार्जितास्यस्यास्य च शिरस्तालु कार्पासपिचुना स्नेहगर्भेण प्रतिच्छादयेत्। ततोऽस्यानन्तरं सैन्धवोपहितेन सर्पिषा कार्यं प्रच्छर्दनम् ॥ ४३ ॥

अथ नाड्यास्तस्य कल्पनविधिमुपदेक्ष्यामः—नाभिबन्धनात् प्रभृत्यष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्मराजतायसानां छेदनानामन्यतमेनार्द्धधारेण छेदयेत्ताम् । अग्रे सूत्रेणोपनिबध्य कण्ठेऽस्य शिथिलमवसृजेत् । तस्य चेन्नाभिः पच्येत । तां लोध्रमधुकप्रियङ्गुसुरदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यञ्ज्यादेषामेव तैलौषधानां चूर्णेनावचूर्णयेदिति नाडीकल्पनविधिरुक्तः सम्यक् ॥ ४४ ॥

अष्टाङ्गुलमभिज्ञानं कृत्वेति अष्टाङ्गुलं चिह्नं कृत्वा । अर्धधारस्तिर्यग्धारः शस्त्रविशेषः । तामिति छिन्नावशिष्टाङ्गुलां नाडीम् । कण्ठेऽवसृजेदिति नाड्यग्रबद्धं सूत्रं कुमारस्य कण्ठे निबध्नीयात् ॥ ४३ ॥ ४४ ॥

असम्यक् कल्पने हि नाड्या आयामव्यायामोत्तुण्डिकापिण्डलिकाविनामिकाविजृम्भिकाबाधेभ्यो भयम् । तत्राविदाहिभिर्वातपित्तप्रशमनैरभ्यंगोत्सादनपरिषेकैः सर्पिर्भिश्चोपक्रमेत गुरुलाघवमभिसमीक्ष्य ॥ ४५ ॥

नाड्या अधिककल्पने दोषमाह—असम्यगित्यादि ।—आयामो दैर्घ्यम् । व्यायामो विस्तारः । ताभ्यां तुण्डिका आयामव्यायामोत्तुण्डिका दीर्घपीनत्वयुतेत्यर्थः । पिण्डलिका तु परिमण्डलयुता । विनामिका अन्तःच्छूना मध्यनिम्ना । विजृम्भिका तु मुहुर्मुहुर्वृद्धिमती । गुरुलाघवमवेक्ष्येति नाडीपाककारकपित्ते तथा वाते चायामव्यायामोत्तुण्डिकादिविकारचतुष्टयकारके यो दोषो गुरुः । स उपकर्तव्यस्त्वरयेत्यर्थः ॥ ४५ ॥

ततोऽनन्तरं जातकर्म कुमारस्य कार्यम् । तद्यथा—मधुसर्पिषी मन्त्रोपमन्त्रिते यथाम्नायं प्रथमं प्राशितुं दद्यात् । स्तनमत ऊर्ध्वमेतेनैव विधिना—दक्षिणं पातुं पुरस्तात् प्रयच्छेत् । अथातः शीर्षतः स्थापयेदुदकुम्भं मन्त्रोपमन्त्रितम् । अथास्य रक्षां विदध्यात्—आदनीखदिरकर्कन्धुपीलुपरूषकशाखाभिरस्य गृहं समन्ततः परिवारयेत् । सर्वतश्च सूतिकागारस्य सर्षपातसीकणकणीकाः प्रकिरेयुः । तथा तण्डुलबलिहोमः सततमुभयतः कालं क्रियेताऽऽनामकर्मणो द्वारे च मुषलं देहलीमनुतिरश्चीनं न्यस्तं कुर्याद्वचाकुष्ठक्षौमकहिङ्गुसर्षपातसीलशुनकणकणिकानां रक्षोघ्नसमाख्यातानां चौषधीनां पोट्टलिकं बद्ध्वा सूतिकागारस्योत्तरदेहल्यामासजेत् । तथा सूतिकायाः कण्ठे सपुत्रायाः स्थाल्युदककुम्भपर्यङ्केष्वपि तथैव च । द्वयोर्द्वारपक्षयोः कणकाम्लेन्धनवानग्निस्तिन्दुककाष्ठेन्धनश्चाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात् । स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजागृयुः दशाहं द्वादशाहं वानुपरतप्रदानमङ्गलाशीः स्तुतिगीतवादित्रमन्नपानविशदमनुरक्तप्रहृष्टजनसंपूर्णञ्च तद्वेश्म कार्यम् । ब्राह्मणश्चाथर्ववेदवित् सततमुभयतः कालं शान्तिं जुहुयात् स्वस्त्ययनार्थं कुमारस्य तथा सूतिकाया इत्येतद्रक्षाविधानमुक्तम् ॥ ४६ ॥

स जातमात्रस्य वेदोक्तं कर्म जातकर्म । यथाम्नायमिति यथागमं मन्त्रोपमन्त्रिते । एतेनैव विधानेन स्तनमभिमन्त्रितं पाययेदित्यर्थः । आदनी घोषकभेदः । तण्डुलबलिहोमः कियत्कालं कर्तव्य इत्याह—आनामकर्मण इति । दशाहं यावदित्यर्थः । दशाहे तु नामकर्म भविष्यतीति । जतूकर्णेऽप्युक्तम्—"तण्डुलबलिहोमो द्विकालमादशमाहम्" इति । 'रक्षोघ्नसमाख्यातानाम्' इत्यनेन गुग्गुल्वादीन् ग्राहयति । उत्तरदेहल्यामिति द्वारोपरि । अन्ये तु देहलीं द्वाराधःकाष्ठमाहुः ॥ ४६ ॥

सूतिकां तु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्म्यीभावमभिसमीक्ष्य पिप्पलीमूलचव्यचित्रकशृंगवेरचूर्णसहितम् । स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा । तथा तस्या न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात् । जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां द्रवां मात्रशः पाययेतोभयतः कालमच्छेन चोष्णोदकेन च परिषेचयेत् प्राक् स्नेहयवागूपानाभ्याम् । एवं पञ्चरात्रं सप्तरात्रं वानुपाल्य ततः क्रमेणाप्याययेत् स्वस्थवृत्तमेतावत् सूतिकायाः ॥ ४७ ॥

कुमारस्य जातकर्माभिधाय सूतिकायाः कर्तव्यमाह—सूतिकांत्वित्यादि ।—बुभुक्षितामित्यनेन यावता कालेन बुभुक्षिता भवति । तदा स्नेहपानं कर्तव्यम् । परमया शक्त्येति उत्तमया शक्त्या लक्षिता स्नेहं पिबेत् । यावता स्नेहेन बलविरोधो न भवति तावन्मात्रं स्नेहं पिबेदित्यध्याहृतम् । सात्म्यीभावमभिसमीक्ष्येति सर्पिरादिषु यद्यस्याः सात्म्यम् । तत् तस्यै देयम् । अच्छेनेति निर्मलेन । उभयतः कालमिति पदं

१ तस्या इति पाठान्तरम् । २ अथास्येति पाठान्तरम् ।

उष्णोदकेन परिषेचयेदित्यनेन योज्यम् । तदेव कालद्वयमाह—प्रागित्यादि ।—पौर्वाह्णिकस्नेहपाने परिषेकं कारयितव्यम् । तथा जीर्णे स्नेहे परिषेचितां यवागूः पाययितव्येत्यर्थः अयं तु व्यवहारोऽनूपदेशे प्रबलकफत्वात् प्राणिनाम् । न जाङ्गलादिदेशव्यवहार इति ॥ ४७ ॥

तस्यास्तु खलु यो व्याधिरुत्पद्यते। स कृच्छ्रसाध्यो भवत्यसाध्यो वा गर्भवृद्धिक्षयितशिथिलसर्वशरीरधातुत्वात् प्रवाहणवेदनाक्लेदनरक्तनिःस्रुतिविशेषशून्यशरीरत्वाच्च । तस्मात्तां यथोक्तेन विधिनोपचरेत् । भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यंगोत्सादनपरिषेकावगाहनान्नपानविधिर्विशेषतश्चोपचरेद्विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति ॥ ४८ ॥

सूतिकाया मिथ्योपचारेण व्याधिर्भवन् कृच्छ्रसाध्योऽसाध्यो वा भवति तथा दर्शयन् यथोक्तक्रमस्यावधानेन कर्तव्यतां दर्शयितुमाह—तस्यास्त्वित्यादि ।—गर्भवृद्ध्या धात्वन्तरापोषणेन क्षयिताश्च शिथिलीकृताश्च सर्वे धातवो यस्याः सा तथा । यथा गर्भव्यपगम एव तावच्छरीरशून्यत्वे हेतुः । तथा प्रवाहणवेदनाक्लेदरक्तनिःस्रुतिविशेषो हेतुरित्याह—प्रवाहणेत्यादि ।—यथोक्तेनेति स्नेहपानादिना । एतेन यथोक्तविधिकरणमेव दुश्चिकित्स्यस्य सूतिकाव्याधेश्च निदानवर्जनमुत्तमं भेषजमिति दर्शयति । यदुत्पन्नव्याधौ विहितं भेषजम् । तत् प्रायो न सिध्यतीति कृत्वा नेहोक्तम् । भौतिकं भूतहरम् ॥ ४८ ॥

दशमे त्वहनि सपुत्रा स्त्री सर्वगन्धौषधैर्गौरसर्षपैश्च स्नाता लघ्वाहतशुचिवस्त्रं परिधार्य[2] पवित्रेष्टलघुविचित्रभूषणवतीच संस्पृश्य मङ्गलान्युचितामर्चयित्वा च देवतां शिखिनः शुक्लवाससोऽव्यङ्गांश्च ब्राह्मणान् स्वस्ति वाचयित्वा कुमारमाहतानाञ्च वाससां सञ्चये च प्राक्शिरसमुदक्शिरसं वा संवेश्य देवतापूर्वं द्विजातिभ्यः प्रणमतीत्युक्त्वा कुमारस्य पिता नक्षत्रदेवतायुक्तं नाम कारयेत् । ( द्वे नामनी कारयेत् नाक्षत्रिकं नामाभिप्रायिकं च । तत्राभिप्रायिकं घोषवदाद्यन्त्यस्थान्तं ऊष्मान्तं वा वृद्धत्रिपुरुषाननूकमनवप्रतिष्ठितम् । नाक्षत्रिकं तु नक्षत्रदेवतासमानाख्यं ) द्व्यक्षरं चतुरक्षरं वा ॥ ४९ ॥

उचितामिति या यस्या देवता सदा पूज्या तामर्चयित्वा । शिखिन इति पावकान् । किम्वा शिखा चूडा तद्वतो ब्राह्मणानगुण्ठान् । नक्षत्रदेवतायुक्तमिति, यस्मिन् नक्षत्रे कुमारो जातः तस्य नक्षत्रस्य या तु देवता तस्या नाम कर्तव्यमित्यर्थः । किम्वा 'द्वे नामनी कारयेत् नाक्षत्रिकं आभिप्रायिकं च । इत्यादिपाठः । घोषवदित्यादि विशेषणम् । घोषा वर्गचतुर्था 'घझढधभाः, अन्त्यस्था 'यरलवाः'; 'शषसा' ऊष्माणः ॥ ४९ ॥

वृत्ते च नामकर्मणि कुमारं परीक्षितुमुपक्रामेदायुषः प्रमाणज्ञानहेतोः । तत्रेमानि आयुष्मतां कुमाराणां लक्षणानि—तद्यथा—एकैकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते । स्थिरा बहला त्वक् प्रकृत्या । प्रकृतिसम्पन्नमीषत्प्रमाणातिवृत्तमनुरूपमातपत्रोपमं शिरः । व्यूढं दृढं समं सुश्लिष्टशङ्खसन्ध्यूर्ध्वव्यञ्जनमुपचितं वलिनमर्द्धचन्द्राकृतिललाटम् । बहलौ विपुलसमपीठौ नीचैर्वृद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुत्रकौ महाच्छिद्रौ कर्णावीषत्प्रलम्बिन्यौ । असंगते समे संहते महत्यौ भ्रुवौ । समे समाहितदर्शने व्यक्तभागविभागे बलवती तेजसोपपन्ने स्वाङ्गोपाङ्गे चक्षुषी । ऋज्वी महोच्छ्वासा वंशसम्पन्नेषदवनताग्रा नासिका । महदृजुसुनिविष्टदन्तमास्यम् । आयामविस्तारोपपन्ना श्लक्ष्णा तन्वी प्रकृतिवर्णयुक्ता जिह्वा । श्लक्ष्णं युक्तोपचयमूष्मोपपन्नं रक्तं तालु, महानदीनः स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः। नातिस्थूलौ नातिकृशावास्यप्रच्छादनौ रक्तावोष्ठौ । महत्यौ हनू । वृत्ता नातिमहती ग्रीवा । व्यूढमुपचितमुरः । गूढं जत्रु पृष्ठवंशश्च । विप्रकृष्टान्तरौ स्तनौ । असंपातिनी स्थिरे पार्श्वे । वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च । महदुपचितं पाणिपादम् । स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गा कूर्माकाराः करजाः। प्रदक्षिणावर्त्ता सोत्सङ्गा च नाभिः। उरस्त्रिभागहीना समा समुपचितमांसा कटी । वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचौ । अनुपूर्ववृत्तौ उपचययुक्तावूरू । नात्युपचिते नात्यपचिते एणीपदे प्रगूढसिरास्थिसन्धी जङ्घे । नात्युपचितौ नात्यपचितौ गुल्फौ । पूर्वोपदिष्टगुणौ पादौ कूर्माकारौ । प्रकृतियुक्तानि वातमूत्रपुरीषाणि तथा स्वप्नजागरणायासस्मितरुदितस्तनग्रहणानि । यच्च किञ्चिदन्यदपि अनुक्तमस्ति तदपि सर्वं प्रकृतियुक्तमिष्टम् । विपरीतं पुनरनिष्टमिति दीर्घायुर्लक्षणानि ॥ ५० ॥

नामकर्मणीति नामकरणसमयक्रियमाणहोमादिकर्मणि नामैव वा कर्म । स्थिरेत्यश्लथा । ईषत्प्रमाणातिवृत्तं शिर

१ दशम्यां निश्यतीतायामिति पाठान्तरम् । २ लघ्वहतवस्त्रपरिहितेति पाठान्तरम् ।

इति उत्सर्गापवादन्यायेन बोद्धव्यम् । तेन यदुक्तं पूर्वम्—"पञ्चाङ्गुलोत्सेधं द्वात्रिंशदङ्गुलपरिणाहं शिरः" एतच्चाभिधायोक्तम्—"तत्रायुर्बलमित्यादि यावत्प्रमाणवति शरीरे । विपर्ययस्तु हीनेऽधिके वा" इति । एतद्वचनादपवादभूतमप्यतीव प्रशस्तं भवतीति ज्ञेयम् । "एवं महदुपचितं पाणिपादम्" इत्यत्रापि व्याख्येयम् । अनुरूपमित्यनेन शरीरानुरूपतां शिरसो दर्शयन् उक्तलक्षणादनतिवृद्धिं शिरसो दर्शयति । अतिवृद्धं शरीराननुरूपं भवति, तच्चाप्रशस्तमेव । उर्ध्वव्यञ्जनमिति उर्ध्वरेखात्रयरूपलक्षणयुक्तम् । जतूकर्णे हि त्रिरेखं ललाटमुक्तम् । नीचैर्बद्धाविति अनुद्धूतौ सन्तावनुक्रमवृद्धौ । व्यक्तभागविभागे इति प्रव्यक्तकृष्णशुक्लविभागे । शोभनानि वर्त्मादीनि अङ्गानि अपाङ्गे च ययोस्ते स्वाङ्गोपाङ्गे । अत्र 'अङ्ग'ग्रहणेनैव नेत्रस्यापाङ्गस्य लब्धस्यापि पुनः करणं विशेषेणापाङ्गशोभोपदर्शनार्थम् । आस्यप्रच्छादनौ सुखावरकौ । पृष्ठवंशश्च गूढ इति योजनीयम् । असम्पातिनी सुनिर्गतकक्षे । एणीपदे इति एणीजङ्घासदृशे । प्रकृतियुक्तानीति । न बहूनि नात्यल्पानि च प्रकृतियुक्तमिति देहानुरूपम् ॥ ५० ॥

**अतो धात्रीपरीक्षामुपदेक्ष्यामः ।**

**अथ ब्रूयात् धात्रीमानयेति समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गामव्यसनामविरूपामविजुगुप्सां देशजातीयामक्षुद्रां अक्षुद्रकर्मणि कुले जातां वत्सलां जीवद्वत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामनन्यावशायिनीं कुशूलोपचारां शुचिमशुचिद्वेषिणीं स्तनस्तन्यसम्पदुपेतामिति ॥ ५१ ॥**

समानवर्णामिति तुल्यजातीयाम्; 'यौवनस्थां' इत्यनेन, बालावृद्धे बालावृद्धयोरसम्पूर्णाङ्गक्षीणधातुत्वेन निरस्यति । निभृतामिति विनीताम् । अविरूपामिति अविकृतावयवाम् । अव्यङ्गामिति अहीनाङ्गीम् । देशजातीयां समानदेशजाम् । अनन्यावशायिनीमिति शूद्रस्य हि सवर्णत्वे चाण्डालादिस्त्री च प्रशस्ता । सा न निषिध्यते । ब्राह्मणादीनामसवर्णत्वेनैव सा निरस्ता । किम्वा ब्राह्मणादीनामपि पतितब्राह्मणादि 'अनन्यावशायिनीम्' इतिशब्देन क्षिप्यते । युक्तपिप्पलकाविति उच्चैस्तरवृन्तौ ॥ ५१ ॥

**तत्रेयं स्तनसम्पत्—नात्यूर्ध्वौ नातिलम्बावनतिकृशावनतिपीनौ युक्तपिप्पलकौ सुखप्रपानौ चेति स्तनसम्पत् ॥ ५२ ॥**

**स्तन्यसम्पत्तु प्रकृतवर्णगन्धरसस्पर्शमुदपात्रेऽपदुह्यमानमुदकं व्येति प्रकृतिभूतत्वात्तत् पुष्टिकरमारोग्यकरं चेति स्तन्यसम्पत् ॥ ५३ ॥**

**अतोऽन्यथा व्यापन्नं ज्ञेयम्,—तस्य विशेषाः—श्यावारुणवर्णं कषायानुरसं विशदमनतिलक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघ्वतृप्तिकरं कर्षणं वातविकाराणां कर्तृ वातोपसृष्टं क्षीरमभिज्ञेयम् । कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णं पित्तविकाराणां कर्तृ पित्तोपसृष्टं क्षीरमभिज्ञेयम् । अत्यर्थशुक्लमतिमाधुर्योपपन्नं लवणानुरसं घृततैलवसामज्जागन्धि पिच्छिलं तन्तुमदुदपात्रेऽवसीदच्छ्लेष्मविकाराणां कर्तृ श्लेष्मोपसृष्टं क्षीरमभिज्ञेयम् ॥ ५४ ॥**

उदकं व्येतीति उदकं विशेषेण एति प्राप्नोतीत्यर्थः । उदके विसर्पेत् क्षीरं प्रशस्तमिति । वातादिदुष्टक्षीरलक्षणान्याह—श्यावेत्यादि ।—लवणानुरसमिति श्लेष्मदुष्टक्षीरदोषदूष्यसंमूर्च्छनप्रभावाज्ज्ञेयम्, येन, श्लेष्मदुष्टे लवणरसता भवति; एतत्पृथक्लक्षणयोगाच्च द्वन्द्वसन्निपातदुष्टिरप्युन्नेया ॥ ५२—५४ ॥

**एषां त्रयाणामपि क्षीरदोषाणां प्रतिप्रतिविशेषमभिसमीक्ष्य यथास्वं यथादोषं च वमनविरेचनास्थापनानुवासनानि विभज्य कृतानि प्रशमनाय । पानाशनाय विधिस्तु दुष्टक्षीराया यवगोधूमशालिषष्टिकमुद्गहरेणुककुलत्थसुरासौवीरकतुषोदकमैरेयमेदकलशुनकरञ्जप्रायः । क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद्विधानं कार्यं स्यात् । पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तकटुकरोहिणीशारिवाकषायाणांच पानं प्रशस्यते । तथान्येषां तिक्तकषायकटुकमधुराणां द्रव्याणां प्रयोग इति क्षीरविकारविशेषानभिसमीक्ष्य मात्रां कालं चेति क्षीरविशोधनानि ॥ ५५ ॥**

**क्षीरजननानि तु मद्यानि सीधुवर्ज्यानि ग्राम्यानूपौदकानि शाकधान्यमांसानि द्रवमधुराम्ललवणभूयिष्ठाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानं चानायासश्चेति । वीरणषष्टिशालिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटमूलककषायाणांच पानमिति क्षीरजननानि ॥ ५६ ॥**

**धात्री तु यदा स्वादुबहुशुद्धदुग्धा स्यात्तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधायैन्द्रीं ब्राह्मीं शतवीर्यां सहस्रवीर्याममोघामव्यथां शिवामरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तां वा बिभ्रत्योषधिं कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत् इति धात्रीकर्म ॥ ५७ ॥**

चिकित्सामाह—एषामित्यादि ।—प्रतिप्रतिविशेषमभिसमीक्ष्येति प्रतिप्रतिवातादीनां कोष्ठाश्रयित्वोदीर्णत्वादिशोधनानुगुणविशेषमिति चिह्नविशेषादपि धात्रीमपेक्ष्य वमनादीनां बहुत्वाल्पत्वविशेषः कर्तव्य इत्यर्थः । तत्तद्विधानं कार्यं स्यादिति सम्बद्धदोषप्रतिकूलमाहारविधानं कार्यं स्यात् । कषायाणामिति बहुवचनात् व्यस्तसमस्तानां कषाया गृह्यन्ते । क्षीरिण्यश्च दुग्धिकाकलम्बिकादयो दृश्यमानक्षीराः । अमोघादयोऽनन्तरं व्याकृताः । अव्यथा गुडूची ॥ ५५—५७ ॥

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः—वास्तुविद्याकुशलः प्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतपशुदंष्ट्रिमूषिकपतङ्गं सुसंविभक्तसलिलोलूखलमूत्रवर्चस्कस्थानस्नानभूमिमहानसमृतुसुखं यथर्त्तुशयनासनास्तरणसम्पन्नं कुर्यात् तथा सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्तजनसम्पूर्णमिति कुमारागारविधिः ॥ ५८ ॥

शयनासनास्तरणप्रावरणानि कुमारस्य मृदुलघुशुचिसुगन्धीनि स्युः स्वेदमलजन्तुमन्ति मूत्रपुरीषोपसृष्टानि च वर्ज्यानि स्युः असति सम्भवेऽन्येषां तान्येव च सुप्रक्षालितोपधूपितानि शुद्धशुष्काण्युपयोगं गच्छेयुः ॥ ५९ ॥

सुप्रक्षालितोपधूपितानीति सुधौतोत्तरप्रच्छादनानि। शुद्धशुष्काणीति धौतान्यपि यदा मलादिरागेणापि रहितानि भवन्ति शुष्काणि च तदैवोपयोज्यानि। सुधौतं ह्यार्द्रमपि स्यात् तथा गाढरागमलादिभावितं धौतमप्यशुद्धं स्यात् तस्मादुक्तम्—शुद्धशुष्काणीति ॥ ५८ ॥ ५९ ॥

धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानां च यवसर्षपातसीहिङ्गुगुग्गुलुवचाचोरकवयःस्थागोलोमीजटिलापलङ्कशाशोकरोहिणीसर्पनिर्मोकाणि घृतयुक्तानि स्युः ॥ ६० ॥

मणयश्च धारणीयाः कुमारस्य खड्गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्यस्त्वग्राणि गृहीतानि स्युः मन्त्राद्याश्चौषधयो जीवकर्षभकौ च यानि चान्यान्यपि ब्राह्मणाः प्रशंसेयुरथर्ववेदविदः ॥ ६१ ॥

क्रीडनकानि खल्वस्य विचित्राणि घोषवन्त्यभिरामाणि चागुरूणि चातीक्ष्णाग्राणि चानास्यप्रवेशीनि चाप्राणहराण्यवित्रासनानि स्युः॥६२॥

वयःस्था ब्राह्मी, गोलोमी श्वेतदूर्वा। जटिला मांसी। अग्राणि धारणीयानि स्युरिति योजना। उक्तं हि जतूकर्णे—"रुरुखड्गादीनां जीवतां दक्षिणशृङ्गाग्राणि निकृत्तानि धारयेत्"। जीवकर्षभकौ प्रजास्थापनोक्तौ। मन्त्राश्चाथर्ववेदोक्ता ऐन्द्राद्या दश ॥ ६०—६२ ॥

न ह्यस्य वित्रासनं साधु। तस्मात्तस्मिन् रुदत्यभुञ्जाने वाऽन्यत्र वाविधेयतां गच्छति। राक्षसपिशाचपूतनाद्यानां नामानि चाह्वयता कुमारस्य वित्रासनार्थं नामग्रहणं न कार्यं स्यात् ॥ ६३ ॥

यदि त्वातुर्यं किञ्चित् कुमारमागच्छेत्। तत्प्रकृतिनिमित्तपूर्वरूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्वविशेषानातुरौषधदेशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनं मधुरमृदुलघुसुरभिशीतशङ्करं कर्म प्रवर्त्तयन्। एवंसात्म्या हि कुमारा भवन्ति। तथा ते शर्म लभन्तेऽचिराय। अरोगेष्वरोगवृत्तमातिष्ठेत्[1] देशकालात्मगुणविपर्ययेण वर्तमानः क्रमेणासात्म्यानि परिवर्ज्योपयुञ्जानः सर्वाण्यहितानि वर्जयेत्। तथा बलवर्णशरीरायुषां सम्पदमवाप्नोतीति ॥ ६४ ॥

तदित्यादौ प्रकृतिर्वातादयः। निमित्तं बाह्यं रूक्षादि साक्षाद् वातादिकारणम्। सर्वविशेषानित्यादौ 'आतुर'शब्देनातुर्यहेतुर्व्याधिर्गृह्यते। 'आश्रय'शब्देन तु शरीरम्। शं कल्याणं करोतीति शङ्करम्। देशकालेत्यादौ 'आत्म'शब्देन शरीरमुच्यते। तेन देशस्य तथा कालस्य शरीरस्य च यो गुणः शीतादिः। शुद्धिपरिहाराचारादिसेवायां वर्तमानः स्वस्थवृत्तं कुर्यात्। अन्यत्रापि स्वस्थवृत्ते प्रोक्तम्,—देशकालादिगुणविपरीताहारविहाराः सात्म्या भवन्तीति। क्रमेण नवेगान्धारणीयोक्तेन "उचितादहिताद्धीमान् क्रमशो विरमेन्नरः" इत्यादिस्वस्थवृत्तोक्तेन क्रमेणोपयुञ्जान इत्यर्थः। तथा, वस्त्वन्तरसात्म्यसेवायामपि[2] बालश्चैवमेव भवतीति व्याख्यानम्। स्वस्थवृत्ताचरणफलमाह तथेत्यादि ॥ ६३ ॥ ६४ ॥

एवमेनं कुमारमायौवनप्राप्तेर्धर्मार्थकौशलागमनाच्चानुपालयेदिति ॥ ६५ ॥

पुत्राशिषां समृद्धिकरं कर्म व्याख्यातम्। तदाचरन् यथोक्तैर्विधिभिः पूजां यथेष्टं लभतेऽनसूयक इति ॥ ६६ ॥

तत्र श्लोकौ ॥

पुत्राशिषां कर्म समृद्धिकारकम्
यदुक्तमेतन्महदर्थसंहितम्।
तदाचरञ्ज्ञो विधिभिर्यथा तथा ॥
पूजां यथेष्टं लभतेऽनसूयकः ॥ ६७ ॥

शरीरं चिन्त्यते सर्वं दैवमानुषसम्पदा।
सर्वभावैर्यतस्तस्मात् शारीरं स्थानमुच्यते ॥६७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने
जातिसूत्रीयशारीरं नामाष्टमोऽध्यायः।

पुत्राशिषां समृद्धिकरमिति पुत्रप्रार्थनानुरूपफलकरमित्यर्थः। पुत्राशिषामित्यध्यायार्थसंग्रहश्लोकः। 'ज्ञः' इति पुरुषविशेषणं प्राधान्यात् कृतम्। तेन पूजामेव लभते। पुत्रस्यात्यन्तप्राधान्यं वहतीत्यनसूयकः। शारीरस्थानशब्दव्युत्पत्तिदर्शकं श्लोकं पठन्ति—शरीरमित्यादि।—तच्च व्यक्तार्थमेव ॥६५—६७॥

इतिमहामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां
जातिसूत्रीयशारीरव्याख्या।

शारीरस्थानव्याख्या सम्पूर्णा।

---

१ चिराय रोगवेऽरोगवृत्तमातिष्ठेदिति पाठान्तरम्। २ धात्वन्तरसात्म्यसेवायामपीति पाठान्तरम्।

# इन्द्रियस्थानम् ।

## प्रथमोऽध्यायः ।

अथातो वर्णस्वरीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

शारीरे चिकित्साधिकरणं शरीरं प्रतिपाद्य चिकित्सा वक्तव्या, सा च साध्यरोगे वक्तव्या नासाध्यरोगे यदुक्तं "स्वार्थविद्यायशोहानिमुपक्रोशमसंग्रहम् । प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत्" इति । न च रिष्टप्रतिपत्तिमन्तरा-साध्यत्वप्रतिपत्तिरिति रिष्टप्रतिपादकमिन्द्रियस्थानमेव चिकित्सास्थानात् प्रागुच्यते । तस्यान्तगतस्य लिङ्गं रिष्टाख्यमिन्द्रियम् । यदुक्तं व्याकरणे "इन्द्रियमिन्द्रलिङ्गम्" इत्यादि । तस्येन्द्रियस्य स्थानमिन्द्रियस्थानम् । अत्रापि चेन्द्रियस्थाने वक्तव्ये व्यक्ततररिष्टाभिधायकतया वर्णस्वरीयमिन्द्रियमुच्यते । अत्र हि यानि रिष्टानि वक्तव्यानि । तानीतररिष्टेभ्यश्चक्षुरादिग्राह्यतया व्यक्ततमानि । वर्णस्वरावधिकृत्य कृतो वर्णस्वरीयः । इन्द्रियस्य रिष्टरूपस्य प्रतिपादकोऽध्याय इन्द्रियस्तं व्याख्यास्यामः । एवमन्यत्रापि पुष्पितकमिन्द्रियमित्यादावपि इन्द्रियविशेषणं व्याख्येयम् ॥ १ ॥ २ ॥

इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रंच घ्राणश्च रसनंच स्पर्शनंच सत्वंच भक्तिश्च शौचंच शीलंचाचारश्च स्मृतिश्चाकृतिश्च बलंच ग्लानिश्च तन्द्रा चारम्भश्च गौरवंच लाघवंच गुणाश्चाहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च व्याधिपूर्वरूपंच वेदनाश्चोपद्रवाश्च छाया च प्रतिच्छाया च स्वप्नदर्शनंच दूताधिकारश्च पथि चौत्पातिकाश्चातुरकुले भावावस्था च भेषजसंवृत्तिश्च भेषजविकारयुक्तिश्चेति परीक्ष्याणि प्रत्यक्षानुमानोपदेशैरायुषः प्रमाणविशेषं जिज्ञासमानेन भिषजा ॥ ३ ॥

तत्र तु खल्वेषां परीक्ष्याणां कानिचित् पुरुषमनाश्रितानि कानिचित् पुरुषसंश्रयाणि ॥ ४ ॥

तत्र यानि पुरुषमनाश्रितानि तान्युपदेशतश्च युक्तितश्च परीक्षेत । पुरुषसंश्रयाणि पुनः प्रकृतितश्च विकृतितश्च ॥ ५ ॥

इन्द्रियस्थानप्रतिपाद्यं कृत्स्नं विषयमाह—इहेत्यादि ।—इहेन्द्रियस्थाने । 'खलु' शब्दो वाक्यालङ्कारे । इह यद्यपीन्द्रियाण्येव विषयवर्णादिग्राहकतया अग्रे वक्तुं युज्यते, तथापि तेषामतीन्द्रियत्वेन न तदाश्रयरिष्टानां व्यक्तत्वम् । तेन, प्रव्यक्तानि वर्णादीन्येवेति प्रव्यक्तरिष्टाधिकरणान्यग्रेऽभिधीयन्ते वर्णादिष्वपि च यथा व्यक्तत्वं तथा पूर्वनिपातः । मेघादिशब्दस्तु यद्यपि वर्णादपि व्यक्तस्तथापि शब्दविशेष एवेह[1] चात्मादिसम्पाद्यः 'स्वर'शब्दाभिधेयो रिष्टाधिकरणत्वेनाभिमतः । स च वर्णापेक्षयाऽव्यक्त एव । इहेत्यादावसमासेन वर्णादीनां प्रत्येकमपि रिष्टाधिकरणत्वं दर्शयति समासे हि समुदायस्य रिष्टाधिकरणकतया परीक्षितव्यत्वं शङ्केत । वर्णशब्देन च वर्णसहचरिताश्चक्षुर्ग्राह्या रौक्ष्यादयोऽपि गृह्यन्ते । अतएव वर्णप्रस्ताव एव वक्ष्यति—यत्—'वर्णग्रहणेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः' इति । स्वरादिग्रहणेन च स्वराद्यभावोऽपि गृह्यते तेन अङ्गुलिपर्वशब्दाभावगन्धाभावादयो रिष्टान्यवरुध्यन्ते । स्पर्शग्रहणेन च स्पर्शोपलभ्यकाठिन्याद्यवरोधः । सत्वं मनः । सत्वविकृतेरुदाहरणम्—यथा—"औत्सुक्यं भजते सत्वं चेतोभीराविशत्यपि" इत्यादि । भक्तिरिच्छा । शीलं सहजवृत्तम् । आचारः शास्त्रशिक्षाकृतो व्यवहारः । भक्त्यादयो यद्यपि सत्वविकारत्वेन सत्वग्रहणेनैव लभ्यन्ते । यदुक्तम्—"भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागोऽमात्सर्यं भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितत्वमित्येवमादयः सत्वविकाराः" इति । तथापि, भक्त्यादीनामपि पृथगरिष्टाधिकरणत्वेन इह पृथक्करणम् । निद्रादौर्बल्यात्तन्द्रेति 'तन्द्रा'शब्देन निद्रोच्यते । अत्र च रिष्टमुक्तम् । यथा—"निद्रा नित्या भवति न वा" इति । आरम्भ इति अरिष्टव्याध्युत्पादारम्भः । यदुक्तम्,—"श्वयथुर्यस्य कुक्षिस्थो हस्तपादं प्रधावति" इत्यादि । गौरवेरिष्टं यथा—निष्ठ्यूतंच पुरीषंच रेतश्चाम्भसि मज्जति" इत्यादि लाघवे रिष्टं—गुरूणामङ्गानां लाघवं ज्ञेयम् गुणरिष्टं यथा—"गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः । विपर्यासेन लक्ष्यन्ते स्थानेष्वन्येषु तद्विधाः" इति । आहाररिष्टं यथा—'आहारमुपयुञ्जानो भिषजा सूपकल्पितम्" इत्यादि । आहारपरिणामरिष्टं यथा—'दुर्बलो बहु भुङ्क्ते प्रागभुक्तवान्नमातुरः । अल्पमूत्रपुरीषश्च" इति । उपाय उपगमनं व्याधिमेलक इत्यर्थः । यदुक्तम्—"सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः । विश्लेषणंच सन्धीनाम्" इति । व्याध्यपगमनमपायः । यदुक्तम्—"यं नरं सहसा रोगो दुर्बलं परिमुञ्चति" इत्यादि । व्याधिश्चेति व्याधिरेव रिष्टं यथा—"वाताष्ठीला सुसंवृत्ता दारुणा हृदि तिष्ठति" इति । छाया भौतिकी पञ्चरूपा । प्रतिच्छाया तु देहछायावत् नेत्रकुमारिकापि प्रतिच्छायारूपापि गृहीतव्या । अयंच छायादिभेदः पन्नरूपीयेन्द्रिये दर्शयितव्यः । आतुरकुले भावावस्थारिष्टं यथा—"अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च । भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति" इत्यादि । भेषजसंवृत्तौ रिष्टं यथा—"यमुद्दिश्यातुरं वैद्यः संवर्त्तयितुमौष-

---

[1] वर्णविशेष एवेहेति पाठान्तरम्.

धम् । यतमानो न शक्नोति दुर्लभं तस्य जीवितम्" । भेषजस्य विकारेण समं या युक्तिः । तत्र रिष्टं यथा—"विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् । न सिध्यत्यौषधं यस्य तस्य नास्ति चिकित्सितम्" । शेषे बहुरिष्टोदाहरणमुक्तम् । इति समासौ । प्रत्यक्षपूर्वकत्वात् सर्वप्रमाणानामिहादौ प्रत्यक्षं कृतम् । यद्यपि वर्णादय आयुर्लक्षणप्रतिपादिता दीर्घायुःप्रमाणजिज्ञासायामपि परीक्ष्यन्ते । तथापीहगुणारिष्टप्रकरणे आयुःप्रमाणाविशेषज्ञानार्थमिवं परीक्षणीयाः । अत उक्तम्—'प्रमाणविशेषं जिज्ञासमानेन इति । पुरुषमनाश्रितानि दूतायाश्रयाणि रिष्टानि । युक्तितश्चेत्यनुमानत इत्यर्थः । अत्र युक्तेरपि रिष्टत्वाऽवधारणे क्षमत्वात् । प्रत्यक्षं हि दूतादीनां स्वरूपमात्रं गृह्णाति । रिष्टं तु दूतादीनामागमादेव ज्ञायते । पुरुषाश्रयिवर्णादिगतरिष्टग्रहणे तु प्रत्यक्षमपि तत्तदरिष्टविशेषग्रहणे तत्तद्विशेषेण व्याप्रियत इति मत्वा तत्प्रतिषिद्धम् । अनुमानं तु । रिष्टत्वेन प्रतिपादितमनिमित्तत्वादिति धर्मविचारे व्याप्रियते । एवं सर्वत्र प्रकृतितश्चेति । विकृतिज्ञानहेतुतया प्रकृतिरिष्टज्ञाने व्याप्रियते । यत् प्रकृतिज्ञानाधीनं विकृतिज्ञानं भवति । परीक्षा त्वत्राधिकृतप्रसिद्धेः प्रत्यक्षादिभिरेव ज्ञेया ॥ ३—५ ॥

**तत्र प्रकृतिर्जातिप्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता च । जातिकुलदेशकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति ॥ ६ ॥**

प्रकृतिं विभजते—तत्रेत्यादि । जातिप्रसक्ता यथा—ब्राह्मणजातौ शौचम् । कुलप्रसक्ता यथा—किञ्चिदेव कुलं शुच्याचारवद्भवति । देशानुपातिनी यथा—अन्तर्वेदिवासिनः शुचयो भवन्ति । कालानुपातिनी यथा—कृतयुगे शौचम् । वयोऽनुपातिनी, यथा—बाल्येऽशौचम् । प्रत्यात्मनियता यथा—कश्चिदेव पुरुषः प्रकृत्या शुचिर्भवति इत्याद्युदाहरणीयम् । कुतः पुनर्जात्यादिनियता प्रकृतिर्भवतीत्यत्र हेतुमाह—जातिकुलेत्यादि ।—ते ते भावविशेषा इति शुचित्वाशौचादयः ॥ ६ ॥

**विकृतिः पुनर्लक्षणनिमित्ता च लक्ष्यनिमित्ता च निमित्तानुरूपा च ॥ ७ ॥**

**तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति दैवात् । लक्षणानि हि कानिचित् शरीरोपनिबद्धानि भवन्ति । यानि हि तस्मिंस्तस्मिन् काले तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति ॥ ७ । १ ॥**

**लक्ष्यनिमित्ता तु सा । यस्या उपलभ्यते निमित्तम् । यथोक्तं निदानेषु ॥ ७ । २ ॥**

रिष्टाधिकाराधिकृतां विकृतिं विवेचयितुं सर्वामेव विकृतिभेदानाह—विकृतिरित्यादि ।—हेतुभूतानीति हेतुसदृशानि । तेन दैवमेव नखरेखापद्मादिसामुद्रिकोक्तलक्षणयुक्ते शरीरे राज्यधनवधबन्धनादिरूपविकृतिप्राप्तौ हेतुः । लक्षणानि तु दैवनिमित्तानि बोधकमात्राणि, अतएव दैवादित्युक्तं दैवकर्तृत्वं चात्रोच्यते । विकृतिमुत्पादयन्तीत्यत्रापि दैवादिति योजनीयं । तेन, दैवबलादेव लक्षणानां राज्यधनवधबन्धनादिरूपविकृतिकर्तृत्वम् । तस्मिंस्तस्मिन् काल इत्यनेन लक्षणसूचिताऽदृष्टपाककाले नियतत्वं विकृतेर्दर्शयति । लक्षणसूचिताश्च राज्याद्य इह पुरुषस्य कदाचिद्भवन्तोऽस्वाभाविका एवेति कृत्वा विकृतिशब्देनोच्यन्ते । यथोक्तं निदानेष्विति—यथा—रूक्षादिसेवया वातादिप्रकोपरूपा विकृतिर्निदानोक्तेत्यर्थः ७ ॥ ७।१ ॥ ७।२ ॥

**निमित्तानुरूपा तु निमित्तार्थकारिणी या । तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां प्रेतलिङ्गानुरूपाम् । यामायुषोऽन्तगतस्य ज्ञानार्थमुपदिशन्ति धीराः । यामधिकृत्य पुरुषसंश्रयाणि मुमूर्षतां लक्षणान्युपदेक्ष्यामः इत्युद्देशः । तं विस्तरेणानुव्याख्यास्यामः ॥ ७ । ३ ॥**

निमित्तानुरूपेति निमित्तसदृशी । तदेव स्फारयति—निमित्तार्थकारिणीति—निमित्तस्य यो अर्थः कार्यजननरूपः कार्यबोधनरूपो वा तमनुकरोतीति निमित्तार्थानुकारिणी । रिष्टाख्या हि विकृतिर्मरणे । तस्यैव बोधने वा निमित्तं भवति । अपरमपि "अनिमित्ताम्" इत्यनन्तरमस्य विशेषणं कथयिष्यति । रिष्टस्य हि न रौक्ष्यादिना शरीरसम्बन्धादि निमित्तमुपलभ्यते । यद्वा, आयुःक्षयरूपं यन्निमित्तं तद्विद्यमानमपि नान्यैरुपलभ्यते । किन्तु तदेव रिष्टादुन्नीयते । तेन, अव्यक्तनिमित्तत्वमिहानिमित्तत्वं ज्ञेयम् । अत्र गतायुष्ट्वमेव सकलपुरुषसंश्रितरिष्टव्यापकं कारणं साधु । यत्तु वक्ष्यति—"क्रियापथमतिक्रान्ताः केवलं देहमाश्रिताः । चिह्नं कुर्वन्ति यद्दोषास्तदरिष्टं प्रचक्षते" इति तद्दूतादिगतरिष्टव्यापकतया पुरुषाश्रयिरिष्टमात्राभिप्रायेण ज्ञेयम् । आयुषः प्रमाणज्ञानस्येति आयुःशेषप्रमाणज्ञानस्येत्यर्थः । भूय इति अत्यर्थम् । तेनात्यर्थमायुःक्षयनिमित्तां प्रत्यासन्नायुःक्षयजन्यामिति यावत् यामिति क्षीणायुःकार्याम् । प्रेतलिङ्गानुरूपामिति प्रेतसदृशीम् । "मला दन्तेषु जायन्ते प्रेताकृतिरुदीर्यते" इत्यादिग्रन्थवक्ष्यमाणाम् । इमां हि विकृतिमायुषोऽन्तर्गतस्य ज्ञानार्थं वदन्ति । या त्वन्या प्रेतलिङ्गानुरूपा वर्णाश्रया । सा नात्यर्थं प्रत्यासन्नमरणबोधिका । तेन सा नात्यर्थक्षीणायुःकार्येत्यर्थः । एवं 'भूयश्च' इत्यादिना 'धीराः' इत्यन्तेन निमित्तानुरूपविकृतिविशेषस्य कार्यविशेषं मरणलक्षणमभिधाय पुनः सामान्येनानिमित्ततया धर्मान्तरमाह—यामधिकृत्येत्यादि ।—'पुरुषसंश्रयाणि' इति विशेषणेन पुरुषानाश्रितदूतादिरिष्टे नाव-

१ आयुःप्रमाणावशेषज्ञानार्थमेवेति पाठान्तरम् ।

श्यमननिमित्तताऽस्तीति दर्शयति । यतो दूताधिकारादौ यानि रिष्टानि तानि दृश्यमाननिमित्तान्यप्यागमादेव रिष्टत्वेनावधार्यन्ते । यथा—"मुक्तकेशेऽथवा नग्ने रुदत्यप्रलयेऽथवा । भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत्" । अत्र भिषजा मुक्तकेशवचनाद्दृश्यतएव कारणम् । तथा दूतागमने चातुरस्य प्रेरणादि कारणमस्त्येव । तेनाऽनिमित्तश्च आतुराश्रयि रिष्टमेव अन्ये तु, एवंभूतवैद्यदूतसमागमः परिहर्तव्यत्वेन ज्ञातः सन् यदा दैवाद्भवति, तदा दैवनिमित्तः सन् रिष्टं भवति । तेन, सर्वरिष्टव्यापिकैवेयम् निमित्तता । 'भूयश्च' इत्यादिग्रन्थेन तु प्रेतलिङ्गानुरूपां विकृतिं भूयो आयुषोऽन्तर्गतस्य ज्ञानार्थमुपदिशन्ति इति न तथा पुरुषसंश्रयान् भूय उपदेक्ष्यन्ते । पुरुषानाश्रयाणि तु स्वल्पग्रन्थेनोपदेक्ष्यन्ते इति व्याख्यानयन्ति । इत्युद्देश इति इन्द्रियस्थानार्थो ज्ञेय इत्यर्थः ॥ ७।३ ॥

**तत्रादित एव वर्णाधिकारः । तद्यथा—कृष्णः कृष्णश्यामः श्यामावदातोऽवदातश्चेति प्रकृतिवर्णाः शरीरस्य भवन्ति । यांश्चापरानुपेक्षमाणो विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः ॥ ८ ॥**

प्रकृतिज्ञानान्तरीयकत्वाद्विकृतिज्ञानस्य प्रकृतिवर्णानेव तावदाह—कृष्ण इत्यादि ।—अवदातो गौरः । इह च प्रायेण ये वर्णाः प्रकृत्या भवन्ति, ते प्रकृतिवर्णा उच्यन्ते । ये तु प्रायेण विकृत्या भवन्ति, ते विकृतिवर्णा उच्यन्ते इति ज्ञेयम् । तेन प्रकृतिवर्णा अपि कदाचिद्विकृतिवर्णा भवन्ति, तथा विकृतिवर्णा अपि जन्मप्रभृतिजायमानतया कदाचिदपि प्रकृतिवर्णा भवन्तीति ज्ञेयम् । अनुक्तप्रकृतिवर्णातिदेशार्थमाह—यांश्चेत्यादि । उपेत्य ईक्षमाण इत्युपेक्षमाणः । अनूकत इति सादृश्यतः । अनेन च 'कृष्णश्यामादिवर्णशब्देन निर्दिश्यमानान् विद्यादिति योजना ॥ ८ ॥

**नीलश्यामताम्रहरितशुक्लाश्च वर्णाः शरीरस्य वैकारिका भवन्ति । यांश्चापरानुपेक्षमाणो विद्यात् । प्राग्विकृतानभूत्वोत्पन्नानिति प्रकृतिविकृतिवर्णा भवन्त्युक्ताः ॥ ९ ॥**

नीलेत्यादिना विकृतिजायमानतया विकृतिवर्णानाह । इह 'अपरान्' इति वचनेन विकृतिवर्णसङ्करजा वर्णा ज्ञेयाः । विकृतिवर्णान्तरमाह—प्रागित्यादि ।—प्राग्विकृतानिति पूर्ववर्णादन्यथाभूतानित्यर्थः । तेनापि, येन श्यामेन सता रसायनयोगाद्गौरवर्णत्वं प्राप्तम् । स च त्यक्तरसायनः कालवशात् पुनः श्यामवर्णो भवति । तस्यापि पूर्वगौरवर्णाद्विकृतिः श्यामवर्णो भवन् रिष्टं स्यादित्याह—अभूत्वोत्पन्नानिति । तेन नायं दोषः । अत्र हि पूर्वभूत एव वर्णः पुनर्भवति । तेन न रिष्टम् ॥ ९ ॥

**तत्र प्रकृतिवर्णमर्धशरीरे विकृतिवर्णमर्धशरीरे द्वावपि वर्णौ मर्यादाविभक्तौ दृष्ट्वा यदेव सव्यदक्षिणविभागेन यदेव पूर्वपश्चिमविभागेन यदुत्तराधरविभागेन यदन्तर्विभागेनातुरस्य रिष्टमिति विद्यात् ॥ १० ॥**

**एवमेव वर्णभेदो मुखेऽप्यन्यत्र वर्तमानो मरणाय भवति ॥ ११ ॥**

मर्यादाविभक्ताविति समसीमान्तरस्थापितौ पूर्वपश्चिमविभागेनेति अभिमुखपृष्ठभागेनेत्यर्थः । अन्तर्विभागेनेति अत्रान्तर्गतौ वर्णौ मुखनासाकर्णश्रोत्रान्तर्गततया ज्ञेयः । अन्यत्रेति अवान्तरे हस्तपादादौ ॥ १० ॥ ११ ॥

**वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः॥१२॥**

**तथा पिप्लुव्यङ्गतिलकालकपिडकानामानने जन्मातुरस्यैवमेवाप्रशस्तं विद्यात् ॥ १३ ॥**

**नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिष्वपि च वैकारिकोत्थानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णेन्द्रियेषु लक्षणमायुषः क्षयस्य ॥ १४ ॥**

वर्णभेदेनेति यथा वर्णविभागेन रिष्टम्, तथापि ग्लान्यादिविभागेनेत्यपीत्यर्थः । हर्ष इह उपचयो ज्ञेयः । मानसहर्षस्येह चाक्षुषाधिकारेऽसङ्गतत्वात् । तथेत्यादौ पिप्लुप्रभृतीनामपि वर्णवत् सव्यदक्षिणादिविभागेन जन्म रिष्टं भवति । एतदेव 'जन्म' शब्देनोच्यते । नखेत्यादौ बलहान्याद्यभावे सति न रिष्टम् ॥ १२–१४ ॥

**यच्चान्यदपि किंचिद्वर्णवैकृतमभूतपूर्वं सहसोत्पद्येतानिमित्तमेव हीयमानातुरस्य शश्वत् । तद्रिष्टम् ॥ १५ ॥**

यच्चेत्यादिना अनुक्तवर्णरिष्टं गृह्णाति । अभूतपूर्वमिति पूर्वव्याकृतरसायनविहितवर्णप्रादुर्भावव्युदासार्थम् । सहसोत्पद्यत इत्यनेन रिष्टानां शीघ्रस्वभावं दर्शयति । अनिमित्तमिति पूर्वोक्तार्थमेव । हीयमानस्य शश्वदिति स्वभावकथनम् । रिष्टोत्पत्त्या हीयमानता शश्वदवश्यं भवति ॥ १५ ॥

इति वर्णाधिकारः ।

**स्वराधिकारस्तु—हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोतजर्जरानुकाराः प्रकृतिस्वरा भवन्ति । यांश्चापरानुपेक्षमाणोऽपि विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः ॥ १६ ॥**

क्रमागतं स्वरमाह स्वरेत्यादि ।—जर्जरो वाद्यभाण्डविशेषः । यांश्चेत्यादि पूर्ववत् ॥ १६ ॥

**एडककलग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णास्त्वातुराणां स्वरा वैकारिका भवन्ति । यांश्चापरानुपेक्षमाणोऽपि विद्यात् प्राग्विकृतानभूत्वोत्पन्नानिति प्रकृतिविकृतिस्वरा व्याख्याताः ॥ १७ ॥**

१ प्रकृतिमिति पाठान्तरम्,

तत्र प्रकृतिवैकारिकाणां स्वराणामाश्वभिनिर्वृत्तिः स्वरानेकत्वमेकस्य चानेकत्वमप्रशस्तम् ॥ १८ ॥

इति स्वराधिकारः ॥

इति वर्णस्वराधिकारौ यथावदुक्तौ मुमूर्षुताज्ञानार्थमिति ।

एडको मेषः । किम्वा अनड्वान् । कलः सूक्ष्मः । ग्रस्तः सर्वथानुच्चारः । क्षामो रूक्षः दीनो दुःखोच्चार्यमाणस्वरः । अनुकीर्णः उपर्युपर्युच्चार्यमाणः । प्रकृतेर्वैकारिका अन्यथा भूता इति प्रकृतिवैकारिकाः । स्वरानेकत्वमिति कदाचिदेव एडकस्वरत्वं कदाचित् कलस्वरत्वमित्यादि । एकस्य चानेकत्वमिति एकस्यैव स्वरस्य चानेकत्वमिति प्रतिभाति । अनिमित्तमिति सम्बध्यते ॥ १७ ॥ १८ ॥

तत्र श्लोकाः ॥

यस्य वैकारिको वर्णः शरीर उपपद्यते ।
अर्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः ।
नीलं वा यदि वा श्यावं ताम्रं वा यदिवारुणम्॥१९॥
मुखार्धमन्यथावर्णं मुखार्धेऽरिष्टमुच्यते ॥ २० ॥
स्नेहो मुखार्धे सुव्यक्तो रौक्ष्यमर्धमुखे भृशम् ।
ग्लानिरर्धे तथा हर्षो मुखार्धे प्रेतलक्षणम् ॥ २१ ॥
तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः ।
आतुरस्याऽऽशु जायन्ते मुखे प्राणान् मुमुक्षतः॥२२
पुष्पाणि नखदन्ते वा पङ्को वा दन्तसंश्रितः ।
चूर्णको वापि दन्तेषु लक्षणं मरणस्य तत् ॥ २३ ॥

अयमेवार्थो गद्योक्तः स्पष्टार्थं सुखग्रहणार्थञ्च श्लोकेनोच्यते यस्येत्यादिना । तिलका इत्यादौ मुख इति मुखे तथा मुखाभ्यन्तरे ॥ १९–२३ ॥

ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ।
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत् ॥ २४ ॥
यस्य नीलावुभावोष्ठौ पक्वजाम्बवसन्निभौ ।
मुमूर्षुरिति तं विद्यान्नरो धीरो गतायुषम् ॥ २५ ॥
एको वा यदि वाऽनेको यस्य वैकारिकः स्वरः ।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः ॥ २६ ॥
यच्चान्यदपि किञ्चित् स्याद् वैकृतं स्वरवर्णयोः ।
बलमांसविहीनस्य तत् सर्वं मरणोदयम् ॥ २७ ॥
इति वर्णस्वरावुक्तौ लक्षणार्थं मुमूर्षताम् ।
यस्तौ सम्यग्विजानाति नायुर्ज्ञाने स मुह्यति ॥ २८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने वर्णस्वरीयेन्द्रियं नाम प्रथमोऽध्यायः ।

ओष्ठाविति द्विवचनमुक्त्वापि यद् 'उभौ' इति करोति । तेन सकलौष्ठव्याप्तिं दर्शयति । मुमूर्षुरित्युक्त्वापि यत् गतायुषमिति करोति । तेन रिष्टयुक्तो मुमूर्षुर्गतायुरिति दर्शयति । अजातरिष्टस्तु प्रतिक्रियाभावात् मुमूर्षुर्गतायुरपि भवति । मरणोदयमिति मरणकारणमिति ज्ञानार्थम् ॥ २४—२८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां वर्णस्वरीयेन्द्रियव्याख्या ।

---

## द्वितीयोऽध्यायः ।

अथातः पुष्पितकमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति स्माह भगवानात्रेयः ॥ २ ॥
पुष्पं यथा पूर्वरूपं फलस्येह भविष्यतः ।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः ॥ ३ ॥

वर्णस्वरानन्तरं गन्धस्य कृतत्वान्निर्दिष्टत्वाच्च तदाश्रयिरिष्टप्रतिपादकं पुष्पितकमुच्यते—पुष्पं यथेत्यादि ।—प्रकरणार्थो यद्यपि सकलेन्द्रियसाधारणतया प्रथमाध्याय एव वक्तुं युज्यते तथापीह पुष्पानुकारेण गन्धाश्रयिरिष्टस्य[1] वाच्यत्वात् पुष्पं प्रकृतम् । तत् प्रसङ्गाच्च रिष्टस्य पुष्पधर्माख्यापकमपि[2] प्रकरणमिहोच्यते । पुष्पं यथेत्यादौ अव्यभिचरितफलसम्बन्धमेव पुष्पम् । अतएव अप्येवंत्वित्यादिना फलपुष्पयोः परस्परव्यभिचारं दर्शयति पुष्पफलदृष्टान्तेन रिष्टमरणयोर्दुर्बोधत्वात् ॥ १—३ ॥

अप्येवंतु भवेत् पुष्पं फलेनाननुबन्धि[3] यत् ।
फलंचापि भवेत् किञ्चित् यस्य पुष्पं न पूर्वजम्[4]॥४॥

ननु पुष्पफलव्यभिचारमपि शिष्यो गृह्णीयादिति तन्निरासार्थमाह—अप्येवमित्यादि ।—फलेनाननुबन्धीति । यथा—वेतसपुष्पम् । यस्य पुष्पं न पूर्वजमपि शाखादेव फलम् । जातस्येति सम्पूर्णस्य । किञ्चिदुदिते ह्यरिष्टेऽसम्पूर्णे नावश्यं मृत्युः । अन्ये तु जातस्य नियतस्येति वर्णयन्ति । 'द्विविधं हि रिष्टं—नियतंचानियतंच । तत्र नियतम् "मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः" इत्यादि । अनियतम् , यथा—"संशयप्राप्तमात्रे यो मन्यते तस्य जीवितम् । अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते" इति । तथाऽनियतारिष्टाभिप्रायेणैव सुश्रुतेऽप्युक्तम्—"ध्रुवं त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः । रसायनतपोजप्यतत्परैर्वा निवार्यते" । एतच्चाऽन्ये न मन्यन्ते, आचार्येण[5] रिष्टमरणयोरव्यभिचारस्य महता प्रयत्नेन दर्शितत्वात् । 'संशयप्राप्तम्' इति वचनं मरणप्रतिपादकमेवाचार्येण भङ्ग्यन्तरेणोक्तम् । यथाऽऽचार्यस्यारिष्टार्थस्तथा तद्ग्रन्थ एव व्याख्यास्यामः । यत्तु रसायना-

---

१ गन्धान्वयिरिष्टस्येति पाठान्तरम् । २ पुष्पधर्मिताख्यापकमपीति पाठान्तरम् । ३ फलेनाननुबन्ध इति पाठान्तरम् । ४ जायत इति पाठान्तरम् । ५ विपर्ययेणेति पाठान्तरम् ।

दिसार्थ्यत्वं रिष्टस्य तदनुमतमेव । रसायनमहेश्वरप्रसादादयो हि सर्वलोकमर्यादामपि हन्तुं क्षमाः । तेन तद्व्यभिचारमपेक्ष्येह ग्रन्थः क्रियते । महेश्वरो हि भस्मीभूतं कामं पुनर्जीवयति स्म । तपसा च रामेण मृतोऽपि विप्रपुत्रः पुनर्जीवित इत्याद्यनुसरणीयम् । अन्ये तु कालमृतावेव । रिष्टपूर्वकं मरणं भवतीति वर्णयन्ति । वदन्ति च "यद्यकालमृत्यौ रिष्टं भवति तदा वर्णायं मृत्युपदं रिष्टं तत् विफलं स्यात् । येन कालमृत्युरुचिताचरणेऽपि परं मृत्युर्भवति । तत्र रिष्टे जाते यद्युचिता क्रिया क्रियते । मृत्युर्भवितुमर्हति । तेन कालगतमेव रिष्टम्" इति । तच्च न अविशेषेण कालाकालमरणे रिष्टसद्भावनियमात् । अकालमृत्यौ च कालमृत्यौ च यदैव क्रियापथमतिक्रान्तोऽपचारजनितो व्याधिर्भवति, तदेवं परं रिष्टं भवति । अतएवोक्तम्— "क्षणेनैव रिष्टाः प्रादुर्भवन्ति" इति यश्चैनं न स्वीकरोति । तस्य नियततायुपोऽपचारजन्यव्याधेरसाध्यता कदापि न स्यात् । येन यथापचारजा दोषा अतिशयप्रमादादसाध्यव्याधिजनका भवन्ति । तथा मरणपूर्वरिष्टजनका अपि भवन्ति ॥ ४ ॥

**नत्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।**
**मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम् ॥ ५ ॥**
**मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता ।**
**अरिष्टं वाप्यसंबुद्धमेतत्प्रज्ञापराधजम् ॥ ६ ॥**

यत्र कुत्रचित् रिष्टमरणव्यभिचारिलिङ्गज्ञानं भवति । तद्भ्रान्तमिति दर्शयन्नाह—मिथ्येत्यादि ।—अरिष्टाभमिति अरिष्टसदृशम् । मिथ्यादृष्टमिति रिष्टत्वेन ज्ञातम् । एतदेवारिष्टे रिष्टज्ञानं प्रज्ञापराधजम् । तथा रिष्टमपि सूक्ष्मरूपतया मारके व्याधावसम्बन्धं भवति । एतदपि प्रज्ञापराधजं मिथ्याज्ञानम् । तेन रिष्टे यत्र सत्यपि मरणं न भवतीति च ज्ञानं भ्रान्तम् । तथा रिष्टं विनापि क्वचिन्मरणं भवतीति ज्ञानं भ्रान्तम् । ततश्च सिद्धोऽव्यभिचारो मरणरिष्टयोरिति वाक्यार्थः ॥५॥६॥

**ज्ञानसम्बोधनार्थं तु लिङ्गैर्मरणपूर्वजैः ।**
**पुष्पितानुपदेक्ष्यामो नरान् बहुविधैर्बहून् ॥ ७ ॥**

ज्ञायते मरणमनेनेति ज्ञानं रिष्टम्, तस्य सम्बोधनं ज्ञानसम्बोधनम् । मरणपूर्वकैरिति मरणपूर्वभाविभिः; पुष्पिता यथा वृक्षादयो गन्धवन्तो भवन्ति तथारिष्टगन्धप्रयुक्ता ये भवन्ति ते पुष्पिताः तान् पुष्पितान् । बहुविधैर्लिङ्गैर्बहून्पुष्पितानिति योजना ॥ ७ ॥

१ बाध्यत्वमिति पाठान्तरम् । २ रिपुपुत्रः पुनर्जीवित इति पाठान्तरम् । ३ इत्याद्यनुकरणीयमिति पाठान्तरम् । ४ कालमृत्युरेवेति पाठान्तरम् । ५ यत्रेति पाठान्तरम् । ६ तेनेति पाठान्तरम् । ७ मरणपूर्वरूपरिष्टजनका इति पाठान्तरम् । ८ बहुविधान् बहूनिति पाठान्तरम् ।



**नानापुष्पोपमो गन्धो यस्य भाति दिवानिशम् ।**
**पुष्पितस्य वनस्येव नानाद्रुमलतावतः ॥ ८ ॥**
**तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः ।**
**स ना संवत्सरादेहं जहातीति विनिश्चयः ॥ ९ ॥**

वनस्येत्युक्तेऽपि यन्नानाद्रुमलतावत इति करोति । तेन भिन्नजातीयं वनं ग्राहयति । वनं हि स्वजातीयवृक्षाणामपि स्यात् । यथा—चम्पकवनमशोकवनमित्यादि । नानात्वंच पुष्पाणामेकजातीयानामपि कलिकाद्यवस्थाभेदादपि स्यात् । तस्मात् साधु विशेषणम्,—'नानाद्रुमलतावतः' इति । मरणलक्षणैर्यथोक्तैर्गन्धैस्तैः पुष्पितकमाहुरित्यादि योज्यम् । सम्वत्सरादिति सम्वत्सराभ्यन्तरे ॥ ८ ॥ ९ ॥

**एवमेकैकशः पुष्पैर्यस्य गन्धो समो भवेत् ।**
**इष्टैर्वा यदिवाऽनिष्टैः स च पुष्पितमुच्यते ॥ १० ॥**
**समासेनाशुभान्गन्धानेकत्वेनाथवा पुनः ।**
**आजिघ्रेद्यस्य गात्रे तु तं विद्यात्पुष्पितं भिषक् ॥ ११ ॥**
**आप्लुतानाप्लुता काये यस्य गन्धाः शुभाशुभाः ।**
**व्यत्यासेनाऽनिमित्ताः स्युः स च पुष्पित उच्यते ॥ १२**
**तद्यथा चन्दनं कुष्ठं तगरागुरुणी मधु ।**
**माल्यं मूत्रपुरीषे च मृतानि कुणपानि च ॥ १३ ॥**
**ये चान्ये विविधात्मानो गन्धा विविधयोनयः ।**
**तेऽप्यनेनानुमानेन ज्ञेया विकृतितां गताः ॥ १४ ॥**
**इदंचाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम् ।**
**वक्ष्यामो यदभिज्ञाय भिषङ्मरणमादिशेत् ॥ १५ ॥**
**वियोनिर्विदूरो गन्धो यस्य गात्रे तु जायते ।**
**इष्टो वा यदि वाऽनिष्टो न स जीवति तां समाम् ॥ १६ ॥**

एवमिति दिवानिशम् । समासेनेत्यादि पुष्पव्यतिरिक्तशवाद्यशुभगन्धयोगेनापि 'पुष्पितत्वं' परिभाष्यते इति शेषः । समासेनेति मेलकेन । आप्लुतेत्यादौ आप्लुतानाप्लुतत्वविशेषव्यत्यासश्च शुभाशुभगन्धानांच ज्ञेयः । पुष्पितत्वाभिधानं च यत्र यत्र, तत्र तत्र सम्वत्सरान्तं जीवितं पूर्ववचनाद्भवति । तद्यथेत्यादिना शुभाशुभद्रव्याण्याह । मृतानीति मानुषव्यतिरिक्तानि गवादीनि मृतानि । कुणपानि मानुषशरीराणि । "विविधयोनयः" इत्यनेन नानाद्रव्यकृतधूपवर्त्यादिगन्धान् ग्राहयति । विविधात्मान इत्यनेन तु अकृत्रिमनानाद्रव्यगन्धा उच्यन्ते । अनेनानुमानेनेति "आप्लुत" इत्यादिग्रन्थोक्तरिष्टानुसारेण । अतिदेशार्थमिति अनुक्तज्ञानार्थम् । वियोनिरिति निर्हेतुकः । विदूर इति स्थायी ॥ १०—१६ ॥

**एतावद्गन्धविज्ञानं रसज्ञानमतःपरम् ।**
**आतुराणां शरीरेषु वक्ष्यते विधिपूर्वकम् ॥ १७ ॥**
**यो रसः प्रकृतिस्थानां नराणां देहसम्भवः ।**
**स एषां चरमे काले विकारं भजते द्वयम् ॥ १८ ॥**

१ वातीति पाठान्तरम् । २ स्वयमिति पाठान्तरम् ।

कश्चिदेवास्यवैरस्यमत्यर्थमुपपद्यते ।
स्वादुत्वमपरश्चापि विपुलं भजते रसः ॥ १९ ॥
तमनेनानुमानेन विद्याद्विकृतितां गतम् ।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥ २० ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
विरसादपसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥ २१ ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वशः॥२२॥इति

वैरस्यमिति अनिष्टरसताम् । कथमित्याक्षेपे । तेन न कथमपीत्यर्थः । अवाप्नुयादिति जानीयात् । अत्यर्थरसिकमिति अतिस्वादुरसम् । कालपक्वस्येति पूर्णकालस्य । सर्वश इति सर्वगात्रेषु ॥ १७—२२ ॥

तत्र श्लोकः ॥

सामान्येन मयोक्तानि लिङ्गानि रसगन्धयोः ।
पुष्पितस्य नरस्यैतत्फलं मरणमादिशेत् ॥ २३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते पुष्पितकेन्द्रियं नाम द्वितीयोऽध्यायः ।

संग्रहश्लोके सामान्येन पुष्पितस्येति वचनात् रसरिष्टेऽपि पुष्पितत्वमस्य विवक्षितम् । तेन रसरिष्टेऽपि संवत्सराभ्यन्तरे मरणमिति फलति ॥ २३ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायां पुष्पितकेन्द्रियव्याख्या ॥

---

## तृतीयोऽध्यायः ।

अथातः परिमर्शनीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक् ।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेऽप्यपि विधीयते ॥ ३ ॥

स्पर्शप्राधान्येनैवाऽऽतुरस्यायुषः[१] प्रमाणविशेषं[२] जिज्ञासुः प्रकृतिस्थेन पाणिना शरीरमस्य केवलं स्पृशेत् । विमर्शयेद्वाऽन्येन । परिमृशता तु खल्वातुरशरीरमिमे भावास्तत्र तत्र बोद्धव्या भवन्ति ।—तद्यथा—सततं स्पन्दमानानां शरीरदेशानां स्तम्भः। नित्योष्मणां शीतभावः । मृदूनां दारुणत्वम् । श्लक्ष्णानां खरत्वम् । स्थूलानां वृषणादीनां सतामसद्भावः । सन्धीनां स्रंसभ्रंशधावनानि । मांसशोणितयोर्वीतीभावो दारुणत्वम् । स्वेदानुबन्धः । स्तम्भो वा । यच्चान्यदपि किञ्चिदीदृशं स्पर्शानां लक्षणमनिमित्तं स्यादिति लक्षणानां संग्रहः स्पर्शानाम् । तद्यासतोऽनुव्याख्यास्यामः—॥ ४ ॥

इन्द्रियार्थानां रिष्टपारिशेष्यात् स्पर्शगतारिष्टाभिधायकं परिमर्शनीयमिन्द्रियमुच्यते । इममेव चाध्यायसम्बन्धं दर्शयन्नाह—वर्णे स्वरे चेत्यादि ।—स्पर्शेनेति वक्तव्ये यत्—'स्पर्शप्राधान्येनैव' इति करोति । तेन अस्पर्शग्राह्यमपि चक्षुर्लोहितत्वादि रिष्टमिह स्पर्शपरीक्ष्यमध्ये वक्तव्यमिति दर्शयति । अत्र च वृषणादीनां सतामिति ज्ञेयं स्थूलावयवानां रिष्टेऽप्यभावदर्शनात् । भ्रंशोऽपि गमनम् । धावनं तु पार्श्वतो गमनम् । वीतीभावोऽतिक्षीणत्वमिति । लक्षणमनिमित्तमिति मरणलक्षणम् । स्पर्शानामिति च्छेदः ॥ १—४ ॥

तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्श्वपृष्ठपिण्डिकापाणिग्रीवाताल्वोष्ठललाटं स्विन्नं शीतं स्तब्धं दारुणं वीतमांसशोणितं वा स्यात् । परासुरयं पुरुषो न चिरात् कालं मरिष्यतीति विद्यात् ॥ ५ ॥

तस्य चेत् परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवङ्क्षणगुदवृषणमेढ्रनाभ्यंसस्तनमणिकपर्शुकाहनुनासिकाकर्णाक्षिभ्रूशङ्खादीनि व्यस्तानि च्युतानि वा स्थानेभ्यः स्कन्नानि, परासुरयं पुरुषोऽचिरात्कालं मरिष्यतीति विद्यात् ॥ ६ ॥

तथाऽस्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलिगणंच लक्षयेत् ॥ ७ ॥

तस्य चेदुच्छ्वासोऽतिदीर्घो ह्रस्वो वा स्यात्, परासुरिति विद्यात् ॥ ८ ॥

तस्य चेन्मन्ये परिमृश्यमाने न स्पन्देयाताम् । परासुरिति विद्यात् ॥ ९ ॥

तस्य चेद्दन्ताः परिकीर्णाः श्वेता जातशर्कराः स्युः । परासुरिति विद्यात् ॥ १० ॥

पृष्ठपिण्डिका पृष्ठवंशः । पृथक्त्वेनेति एकैकत्वेन । मणिकं करबाहुसन्धिः । मन्ये गलपार्श्वगते धमन्यौ । उच्छ्वासदैर्घ्यह्रासौ नासाग्रदत्तकरस्पर्शादुपलभ्येते । परिकीर्णा इति मललिप्ताः । श्वेतत्वं चक्षुर्ग्राह्यमपि स्पर्शपरीक्षणीयं दन्तधर्मप्रस्तावादुच्यते ॥ ५—१० ॥

तस्य चेत् पक्ष्माणि जटाबद्धानि स्युः । परासुरिति विद्यात् ॥ ११ ॥

तस्य चेच्चक्षुषी प्रकृतिहीने विकृतियुक्ते—अत्युत्पिण्डिते । अतिप्रविष्टे । अतिजिह्मे । अतिविषमे अतिमुक्तबन्धने । अतिप्रस्रुते । सततोन्मिषिते । निमिषोन्मेषातिवृत्ते । विभ्रान्तदृष्टिके विपरीतदृष्टिके । हीनदृष्टिके । नकुलान्धे । कपोतान्धे अलातवर्णे ।

१ स्पर्शप्रामाण्येति पाठान्तरम् । २ प्रमाणावशेषमिति पाठान्तरम् ।

कृष्णपीतनीलश्यावताम्रहरितशुक्लवैकारिकाणां वर्णानामन्यतमेनातिप्लुते स्याताम्। तदा परासुरिति विद्यात्॥ १२॥

चक्षुषी प्रकृतिहीने विकृतियुक्ते इति सामान्यवचनम्। तस्य विवरणम्—अत्युत्पिण्डिते इत्यादि।—अत्युत्पिण्डिते इति अत्यर्थनिर्गते। अतिजिह्मे अतिकुटिले। अतिविषमे इति एकं संवृतमपरं विस्तृतमिति। निमेषोन्मेषक्रियया अत्यर्थं वर्त्तते इति निमेषोन्मेषातिवृत्ते। विपरीतदृष्टिके इति व्यस्तदृष्टिके[1]। किंवा विपरीतदृष्टिके अन्यथाग्राहिणी। हीनदृष्टिके अदूरदर्शिनी। नष्टदृष्टिके वा। नकुलान्धकपोतान्धलक्षणग्रस्तः—नकुलान्धस्तु रूपाणि दिवा शुक्लानि पश्यति। कपोतान्धस्तु रूपाणि दिवा कृष्णानि पश्यति। अलातस्तु तमाङ्गारः। इह चक्षुर्गतारिष्टाभिधानप्रस्तावादस्पर्शग्राह्यमपि चक्षुषोरलातवर्णत्वादिकमुच्यते॥ ११॥ १२॥

तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन्। न च वेदयेयुः। तं परासुरिति विद्यात्॥ १३॥

शुक्ला वा स्युः। परासुरिति विद्यात्॥ १४॥

तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युः। परासुरिति विद्यात्॥ १५॥

अथास्याङ्गुलीरायच्छेत्तस्य चेदङ्गुल्य आयम्यमाना न स्फोटेयुः। परासुरिति विद्यात्॥ १६॥

भवति चात्र॥

एतान् स्पृश्यान् बहून् भावान्यः स्पृशन्नवबुध्यते।
आतुरे न स सम्मोहमायुर्ज्ञानस्य गच्छति॥ १७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने परिमर्शनीयेन्द्रियं नाम तृतीयोऽध्यायः॥

उदरानुगताः शिरास्त्विह स्पर्शनग्राह्या भवन्तीति उक्ताः। तत्प्रसङ्गाच्चक्षुर्ग्राह्याः शिरावर्णा अप्युक्ताः। आयच्छेदिति स्फोटयेत्। नखाङ्गुलिगतारिष्टपरीक्षायांतु स्पर्शोऽपि व्याप्रियत एवेति कृत्वा तदरिष्टमपीहोक्तम्। एतान् स्पृश्यानिति बाहुल्यादुक्तम्। एवं स्पृशन्नित्येतदपि बाहुल्यादुक्तम्। 'अज्ञानस्यैव' पाठपक्षे षष्ठी सम्बन्धविवक्षायाम्॥ १२-१७॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तप्रणीतायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायां परिमर्शनीयेन्द्रियव्याख्या।

## चतुर्थोऽध्यायः

अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित्।
ज्ञातुमिच्छन् भिषग्ज्ञानमायुषस्तन्निबोधत॥ ३॥
अनुमानात्परीक्षेत दर्शनादीनि तत्त्वतः।
अद्धा हि विदितं ज्ञानमिन्द्रियाणामतीन्द्रियम्॥४॥

उद्देशक्रमानुरोधादिन्द्रियगोचरारिष्टाभिधानार्थमिन्द्रियानीकमुच्यते। इन्द्रियाणामनीकं समूहमधिकृत्य कृतमिन्द्रियानीकम्। दर्शनं चक्षुः। दर्शनादीनि चक्षुरादीनि पञ्चेन्द्रियाणि। इन्द्रियाणां परीक्षा न प्रत्यक्षेणेत्याह—अद्धाहीत्यादि।—अद्धेति अवितथम्। अतीन्द्रियत्वादनुमानेनैव परीक्षणमिति वाक्यार्थः॥ १-४॥

स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसंश्रयम्[1]।
आलक्ष्येतानिमित्तेन लक्षणं मरणस्य तत्॥ ५॥
इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम्।
तदेव तु पुनर्भूयो विस्तरेण निबोधत॥ ६॥

स्वस्थेभ्य इति प्रकृतिस्थेभ्य इन्द्रियेभ्यः। उत्पन्नमिति शेषः। इन्द्रियसंश्रयमिति बाह्येन्द्रियजन्यम्। अनिमित्तेनेति विकृतज्ञानजनकबाह्यहेतुव्यतिरेकेण[2]॥ इन्द्रियगतविकृतज्ञानजनकदोषनिरासस्तु 'स्वस्थेभ्यः' इति विशेषणेनैव कृतः। अशुभोदयमिति मरणकारणम्। 'पुनः'शब्दः प्रकाशने। यथा—"दोषाः पुनस्त्रयः" 'भूयः'शब्दः पुनःपुनरर्थे। किम्वा, 'भूयः'शब्दो महदर्थः। तेन, 'पुनर्भूयः' शब्दयोर्भिन्नार्थत्वम्॥ ५॥ ६॥

घनीभूतमिवाकाशमाकाशमिव मेदिनीम्।
विगीतं ह्युभयं ह्येतत् पश्यन् मरणमृच्छति॥ ७॥

घनीभूतमिति कठिनतां गतम्। तेन, 'भूत'शब्दो गतार्थे यथा उपधानीभूतम्। तेन, 'इव'शब्दश्चोपमाने भवति। घनीमन्ये पृथिवीं वदन्ति। तेन घनीभूतं वीरूपतां यातम्। आकाशमिव मेदिनीमिति शून्यरूपां मेदिनीम्। विगीतमिति विपरीतत्वेन ज्ञातम्। "उभयम्" इत्यनेन यौगपद्येन पृथिव्याकाशविपरीतोपलम्भो नैकैकत्वेन रिष्टम्[3]। अयंचारिष्टमहिमा—यथा—एवंरूपमेव रिष्टं भवति एवमप्युक्तारिष्टेषु तथा तयोरुत्पादः स्वमहिम्नैव ज्ञेयः। एतानि चारिष्टानि सामान्येनैवेन्द्रियाऽरिष्टाभिधायकप्रकरणलब्धान्यपि प्रायोभावित्वेन शृङ्गग्राहिकतयाऽभिधीयन्ते॥ ७॥

यस्य दर्शनमायाति मारुतोऽम्बरगोचरः।
अग्निर्नायाति चादीप्तस्तस्यायुःक्षयमादिशेत्॥ ८॥

दर्शनमिति चक्षुर्गोचरताम्। अम्बरगोचर इत्यनेन अधिष्ठात्रीदेवतारूपवातदर्शनं निषेधयति। एतेन एष वायुरित्या-

१ न्यस्तदृष्टिके इत्यनन्तरं विसंवृतदृष्टिमण्डले इत्यधिकः पाठः क्वचिदस्ति।

१ ज्ञानमिन्द्रियसंम्भवमिति पाठान्तरम्. २ प्रकृतिज्ञानजनकबाह्यहेतुव्यतिरेकेणेति पाठस्तु नातिसमीचीनतया प्रतिभाति। ३ विपरीतोपलम्भो रिष्टमिति पाठान्तरम्.

कारवानिति मारुतप्रलक्षज्ञानमरिष्टम्। नायाति दर्शनमिति सम्बन्धः ॥ ८ ॥

**जले सुविमले जालमजालावततं तथा।**
**स्थिरे गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते ॥९॥**

स्थिर इति स्थिरे। गच्छति वहमाने। येषु चेह रिष्टेषु मरणकालनियमो नोक्तस्तत्र सम्वत्सरमवधिर्भवति। ततः परेण हि रिष्टे मरणानभिधानात् ॥ ९ ॥

**जाग्रत् पश्यति यः प्रेतान् रक्षांसि विविधानि वा।**
**अन्यद्वाप्यद्भुतं किञ्चिन्न स जीवितुमर्हति ॥ १० ॥**
**योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम्।**
**कृष्णं वा यदि वा शुक्लं निशां व्रजति सप्तमीम् ॥११**

प्रेतानित्यादिवहुवचनान्नैकप्रेतादिदर्शनं रिष्टमिति भावः। प्रकृतिवर्णस्थमिति वैवर्ण्यविकृत्यादिकारकसविषान्नवर्णादिविरहेण स्वीय एव लोहितकपिले वर्णे व्यवस्थितम्। सप्तमीं निशां व्रजति। तेनाष्टमाहान्मरणम् ॥ १० ॥ ११ ॥

**मरीचीनसतो मेघान्मेघान्वाप्यसतोऽम्बरे।**
**विद्युतो वा विना मेघात्पश्यन् मरणमृच्छति ॥१२॥**

मरीचीनसत इत्यत्र प्रकरणात् 'मरीचि'शब्देन मेघद्युतिरुच्यते। मरीचीनां विशेषणम्—'असतः' इति। विद्युतो वा विना मेघादिति। अपभ्रान्तच्छटा एव सदा मेघसंवन्धोपलभ्यमाना विद्युत इति। ता हि न विना मेघदर्शनमपि कदाचित् स्वस्थैरुपलभ्यन्ते ॥ १२ ॥

**मृन्मयीमिव यः पात्रीं कृष्णाम्वरसमावृताम्।**
**आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥१३॥**
**अपर्वणि यदा पश्येत् सूर्याचन्द्रमसोर्ग्रहम्।**
**अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम्१४**
**नष्टं सूर्यमहश्चन्द्रमनग्नौ धूममुत्थितम्।**
**अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १५ ॥**
**प्रभावतः प्रभाहीनान्निष्प्रभान्वा प्रभावतः।**
**नरा विलिङ्गान् पश्यन्ति भावान् भावान् जिहासवः**
**व्याकृतीनि विवर्णानि विसंख्योपगतानि च।**
**विनिमित्तानि पश्यन्ति रूपाण्यायुःक्षये नराः ॥१७॥**
**यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति।**
**तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् ॥ १८ ॥**

शुद्धमिति मेघाद्यनन्तरितम्। रात्राविव्यनेन दिवा वह्निनिष्प्रभत्वदर्शनमरिष्टं नैवेति दर्शयति। विलिङ्गानिति विगतसहजलिङ्गान्। तेन प्रभाव्यतिरिक्ताज्ञानादिलिङ्गविपर्ययो रिष्टं भवति। भावानिति प्राणान्। किम्वा महापञ्चभूतानि शरीररूपाणि। व्याकृतीनीति विविधाकृतीनि। विवर्णानीति विरुद्धवर्णानि। विसंख्योपगतानीति विगतसंख्यायुक्तानि विनिमित्तानीति व्याकृत्यादौ विगतनिमित्तानि व्याकृत्यादिकारकहेतुव्यतिरेकेण व्याकृत्यादियुक्तरूपदर्शनमरिष्टमित्यर्थः। रूपाणीति रूपवन्ति द्रव्याणि ॥ १३—१८ ॥

१ अप्रभाविति पाठान्तरम्।

**अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते।**
**द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥ १९ ॥**
**संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः।**
**न शृणोति गतायुं तं बुद्धिमान् परिवर्जयेत् ॥२०॥**
**विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम्।**
**न वा तान् सर्वशो विद्यात्तं विद्याद्विगतायुषम् ॥२१॥**
**यो रसान्न विजानाति न वा जानाति तत्त्वतः।**
**मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥ २२ ॥**
**उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि च दारुणान्**
**स्पृश्यान् स्पृष्ट्वा ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥ २३॥**

अशब्दस्येत्यादिना श्रोत्रारिष्टमाह,—ज्वालाया शब्द इव शब्दो ज्वालाशब्दस्तम्। विपर्ययेणेत्यादिना घ्राणारिष्टमुच्यते। न वा तान् सर्वशो विद्यादिति सर्वथैव गन्धाञ्छुभानशुभान्वा न वेत्ति। तत्त्वत इति स्वकीयेन रूपेण। 'मुखपाक'शब्दः पित्तादिदोषोपलक्षणम्। तेन, पित्तदुष्टरसनाऽन्यथात्वग्राहकस्य व्युदासोऽवरुध्यते। पक्वमिति सम्पूर्णायुःकालम्। ततोऽन्यत्वमिति उष्णे शीतत्वम्। श्लक्ष्णे खरत्वमित्यादि मन्यते ॥ १९—२३ ॥

**अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम्।**
**इन्द्रियैरधिकं पश्यन् पञ्चत्वमधिगच्छति ॥ २४ ॥**
**इन्द्रियाणामृते दृष्टेरिन्द्रियार्थानदोषजान्।**
**नरः पश्यति यः कश्चिदिन्द्रियैर्न स जीवति ॥२५॥**

सम्प्रति सर्वेन्द्रियरिष्टं सामान्येन ब्रूते—अन्तरेणेत्यादि। —अन्तरेणेति विना। योगमित्यस्य विशेषणं विधिपूर्वकमित्यनेन यथाविधिकृतस्यैव योगस्यातीन्द्रियज्ञाने समर्थत्वम्। अधिकमिति अस्मदादीन्द्रियाविषयम्। पञ्चत्वमिति मरणम्। दृष्टिरुपलब्धिः। या दृष्टिरुपचारादुच्यते, तेन ऋते दृष्टेरिति उपलब्धिं विना ततश्चेन्द्रियाणामुपलब्धिशक्तिं विना य इन्द्रियैरुपलब्धुमशक्यान्पश्येदिन्द्रियैः। न स जीवति। अदोषजानित्यनेन च दोषजस्वभावादिन्द्रियाशक्यार्थग्रहणं निराकरोति। यथा—अङ्गुलियन्त्रितं चक्षुर्वातदुष्टयाऽऽसन्नवस्तुद्वयमिन्द्रियाविषयं पश्यति। यथा—पित्तदुष्टरसनं ह्यम्लं न मधुरं प्रत्येतीत्यादि वोध्यम् ॥ २४ ॥ २५ ॥

**स्वस्थाः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतम्।**
**पश्यन्ति येऽसद्वहुशः तेषां मरणमादिशेत् ॥ २६ ॥**

१ इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान्न पश्यति। विपर्ययेण यो विद्यात्तंविद्याद्विगतायुषमिति पाठान्तरम्। २ पश्यन्ति ये सुवहुशस्तान् गतायुष आदिशेदिति पाठान्तरम्।

तत्र श्लोकः ॥

एतदिन्द्रियविज्ञानं यः पश्यति यथातथम् ।
मरणं जीवितं चैव स भिषक् ज्ञातुमर्हति ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने इन्द्रियानीकं नाम चतुर्थोऽध्यायः ॥

स्वस्था इत्यविकृतेन्द्रियमनसः । प्रज्ञाविपर्यासैरिति शेषीभूतार्थप्रभावकृतः प्रज्ञाविपर्यासः । असदिति अयथाभूतम् । बहुश इत्यनेन सकृद्दर्शनस्य नारिष्टत्वम् । इन्द्रियविज्ञानं इन्द्रियगतरिष्टज्ञानम् । जीवितज्ञानञ्चेह रिष्टशून्येन्द्रियज्ञाने सति भवतीति ज्ञेयम् ॥ २६ ॥ २७ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायामिन्द्रियानीकेन्द्रियव्याख्या ॥

## पञ्चमोऽध्यायः

अथातः पूर्वरूपीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।
भिन्नाभिन्नानि वक्ष्यामो भिषजां ज्ञानवृद्धये ॥ ३ ॥
पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥
अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् ।
विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम् ॥ ४ ॥

इन्द्रियगतरिष्टमभिधाय सत्वादीनामग्रे सूचितानामरिष्टमग्रेवक्तुं युज्यते । तत्त्वल्पवक्तव्यत्वात्तदुल्लङ्घ्य बहुवक्तव्यं पूर्वरूपरिष्टमभिधातुं पूर्वरूपीयोऽभिधीयते । प्रथमाध्याय एव तु सत्वादीनामग्रेऽभिधानमिन्द्रियैः समं बुद्धिसाधनत्वादिप्रसङ्गागतं ज्ञेयम् । व्याधिस्तु यद्यपि बहुत्वेन वक्तव्यः कतमानिशरीरीयेऽग्रेसूत्रितश्च । तथापि पूर्वरूपपूर्वकत्वात्[1] व्याधेः पूर्वं पूर्वरूपमिह । सूत्रे त्वग्रे व्याधिवचनेन । पूर्वरूपात् व्याधेः पूर्वरूपबोध्यत्वं[2] । प्राधान्यं दर्शयति । भिन्नाभिन्नानीति साधारणासाधारणानि । तत्र "पूर्वरूपाणि" इत्यादिना "तस्यापि मरणं ध्रुवम्" इत्यन्तेन सर्वव्याधिरिष्टं साधारणमुक्तम् । "पूर्वरूपैकदेशस्तु" इत्यादिना तु प्रतिव्याधिभिन्नपूर्वरूपारिष्टमुच्यते । अन्ये तु भिन्नाभिन्नानीति उक्तानुक्तानीति ब्रुवते तत्र ज्वरादिपूर्वरूपाण्युक्तानि । श्वभिरुष्ट्रैः खरैरित्यादि तु पूर्वरूपमनुक्तम् । सर्वाणीति समस्तानि । अतिमात्रयेति अत्युल्बणत्वेन । ज्वरपुरःसर इति ज्वरान्तरभावी एतेन कल्पेनेत्यनेन सर्वाणि चातिमात्रया चेति दर्शयति ॥१—४॥

पूर्वरूपैकदेशांस्तु वक्ष्यामोऽन्यान् सुदारुणान् ।
ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥ ५ ॥
बलं च हीयते यस्य प्रतिश्यायश्च वर्द्धते ।
तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते ॥ ६ ॥
श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्मा तमाविश्य न जीवन्तवसृज्यते[1] ॥ ७ ॥
प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।
स घोरं ज्वरमासाद्य न जीवेन्न च मुच्यते ॥ ८ ॥
लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥ ९ ॥
रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥ १० ॥

रोगाननुबध्नन्तीति रोगेण पश्चाद्भाविना अवश्यं युज्यन्ते मृत्युर्यैरनुबध्यते इति यै रोगैरनुबध्यते । एतेनैतत् फलति— ज्वरिणो तैर्व्याधिभिर्नियतसंबन्धा अवश्यं मारका भवन्तीत्यर्थः । "श्वभिरुष्ट्रैः खरैः" इत्यादि शोपनिदानेऽप्युक्तम् । तेन, दक्षिणदिशा गमनं विशेषितमेतदरिष्टम् । अन्तिकादिति समीपात् । रक्तं प्राप्येति रक्तपित्तं प्राप्य । सीदति म्रियते ॥ ५—१० ॥

शूलाटोपान्त्रकूजाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥ ११ ॥
लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥ १२ ॥
कायेऽल्पमपि संस्पृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम् ॥ १३ ॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥ १४ ॥
स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्यन्ति मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते ॥ १५ ॥
स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबन् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ १६ ॥

आटोपः कुक्षौ शब्दवद्वातभ्रमणम् । गृह्यते अनेनेति ग्रहो लिङ्गमित्यर्थः । संस्पृष्टमिति शस्त्रतृणादिसंस्पृष्टम् । यद्यपि "स्नातानुलिप्तगात्रे" इत्यादि 'स्नातानुलिप्तस्य' इत्यादिनोक्तम् तथापीह प्रमेहेण मरणोपदर्शनार्थं पुनरुच्यते । तत्र च यदा प्रमेहपूर्वरूपान्तराणि भवन्ति । एतच्च लक्षणं भवति, भवति तदा प्रमेहेण मृत्युः । यदा प्रमेहपूर्वरूपाणि न भवन्ति । तदा येन केनापि व्याधिना मृत्युर्ज्ञेयः ॥ ११—१६ ॥

ध्यानायासौ तथोद्वेगौ मोहश्चास्थानसम्भवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥ १७ ॥

---

[1] पूर्वरूपत्वादिति पाठान्तरम् । [2] सूत्रे त्वग्रे व्याधिवचने पूर्वरूपत्वात् व्याधेः पर्वरूपबोधस्येति पाठान्तरम् ।

[1] स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चतीति पाठान्तरम् ।

आहारद्वेषिणं पश्यन् लुप्तचित्तमुदर्दितम्।
विद्याद्धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥ १८ ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम्।
मूर्च्छापिपासाबहुलं हन्त्युन्मादः शरीरिणाम्॥१९॥
नृत्यन् रक्षोगणैः सार्कं यः स्वप्नेऽम्भसि सीदति।
स प्राप्य भृशमुन्मादं याति लोकमतः परम्॥ २०॥
असत्तमः पश्यति यः श्रृणोत्यप्यसतः स्वरान्।
बहून् बहुविधान् जाग्रत् सोऽपस्मारेण वध्यते॥२१॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम्।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २२ ॥
स्तभ्येते प्रतिबुद्धस्य हनू मन्ये तथाक्षिणी।
यस्य तं बहिरायामो गृहीत्वा हन्त्यसंशयम् ॥२३॥
शष्कुलीरप्यपूपान् वै स्वप्ने खादति यो नरः।
स चेत्तादृक्[1] छर्दयति प्रतिबुद्धो न जीवति ॥ २४ ॥

उदर्दितमिति उदर्दयुक्तम् । यद्वा, उदर्दितं[2] मृदुवातार्दितम्। आविध्येति अधःशिरसं कृत्वा । तादृगिति अपूपशष्कुलीरूपम् ॥ १७—२४ ॥

एतानि पूर्वरूपाणि यः सम्यगवबुध्यते।
स एषामनुबधं च फलं च ज्ञातुमर्हति ॥ २५ ॥
य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत्।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥२६॥

एषामनुबन्धमिति एतत्पूर्वरूपोत्तरकालभाविनं व्याधिम्। फलञ्चैषां मृत्युरूपम् । क्लेशाय महतेऽपि वेत्यत्रारोगिणां क्लेशाय महत इति बोध्यम् । रोगिणांतु मरणायैव। यत उत्तरत्रोपसंहारे "इत्येते दारुणाः स्वप्नाः" इत्यादौ यथोक्तमेव विभागं करिष्यति ॥ २५ ॥ २६ ॥

यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः।
वयांसि च विलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः॥२७॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्यते।
रक्षःप्रेतपिशाचस्त्रीचण्डालद्रविडान्ध्रकैः[3]॥ २८ ॥
वंशवेत्रलतापाशतृणकण्टकसङ्कटे।
संसज्जति हि यः स्वप्ने यो गच्छन्[4] प्रपतत्यपि ॥२९॥
भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि।
श्मशानायतनश्वभ्रे स्वप्ने यः प्रविशत्यपि ॥ ३० ॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसावृते।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः ॥ ३१ ॥
स्नेहपानं तथाभ्यङ्गः प्रच्छर्दनविरेचने।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ ॥ ३२ ॥

उपानद्युगनाशश्च प्रपातः पांशुचर्मणोः[1]।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥ ३३ ॥
दन्तचन्द्रार्कनक्षत्रदेवतादीपचक्षुषाम्[2]।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥ ३४ ॥
रक्तपुष्पं वनं भूमिं पापकर्मालयाञ्चिताम्।
गुहान्धकारसम्बाधं स्वप्ने यः प्रविशत्यपि ॥ ३५ ॥
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम्।
दारुणामटवीं स्वप्ने कपियुक्तेन याति वा ॥ ३६ ॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम्।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥३७॥
कृष्णा पापा निराचारा दीर्घकेशनखस्तनी।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ ३८ ॥
इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम्।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ॥ ३९ ॥

वयांसीति पक्षिणः । गृध्रादिकाकाद्यैः परिवार्यत इतिसम्बन्धः। संसज्जतीति संयुक्तो भवति । किम्वा, प्रमुह्यतीति वा पाठः । तत्र प्रमुह्यतीति वंशादिसङ्कटे लग्नः सन् निर्गममार्गमासादयति । प्रपतत्यपीति भूमावित्यादिना योज्यम् । पांशूपधानायामिति धूलिसंयुक्तायाम् । किंवा, भूमावित्यादि प्रविशतीत्यनेन योज्यम् । उपानत् उपानद्गौ। रक्तपुष्पमिति वनविशेषणम् । गुहान्धकारसम्बाधमिति गुहान्धकाररूपं कष्टकारकम्। दिग्वासा नग्नः सन् । कपियुक्तेन यानेनेति शेषः । कश्चिदेव प्रमुच्यत इत्यरोगान्प्रति नैतत् स्वप्नानामरिष्टत्वम्। तेन, अरोगेष्वेतेषां मरणव्यभिचारेण नारिष्टत्वं वक्ष्यति ॥ २७—३९ ॥

मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणान् ४०
नातिप्रसुप्तः पुरुषः सफलानफलानपि।
इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा ॥ ४१ ।

यथैतत् स्वप्नदर्शनं भवति । तदाह—मनोवहानामित्यादि ।—मनोवहानि स्रोतांसि यद्यपि पृथङ्नोक्तानि तथापि मनसः केवलमेवेदं शरीरमयनभूतं इत्यभिधानात् सर्वशरीरस्रोतांसि गृह्यन्ते। विशेषेण तु हृदयाश्रितत्वान्मनसस्तदाश्रिता दश धमन्यो मनोवहा अभिधीयन्ते। त्रिभिरिति त्रिभिरपीत्यर्थः। तेन, पृथक् चापि दोषैः पूरणं ज्ञेयम्। नातिप्रसुप्त इति नातिनिद्राभिभूत-इत्यर्थः । इन्द्रियेशेनेति इन्द्रियप्रेरकेण ॥ ४० ॥ ४१ ॥

दृष्टं श्रुतानुभूतंच प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः ॥ ४२ ॥

१ मज्जतीति पाठान्तरम् । २ उदर्दितमिति पाठान्तरम्। ३ द्रविडान्धकैरिति द्रमडादिकैरिति च पाठान्तरम्। ४ लगतीति पाठान्तरम्।

१ पदचर्मणोरिति पाठान्तरम् २ चन्द्रतारार्कनक्षत्रेति पाठान्तरम्।

स्वप्नानां फलवत्त्वञ्चोक्त्वा स्वप्नप्रकारानाह—दृष्टमित्यादि।—दृष्टमिति चक्षुषा । अनुभूतन्तु शेषेन्द्रियज्ञातम्। कल्पितमिति मनसा भावितम्। प्रार्थितं याञ्चाविषयकृतम्। भाविकमिति भाविशुभाशुभफलसूचकम् । दोषजमिति उल्वणवातादिदोषजन्यम् ॥ ४२ ॥

**तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत्।**
**दिवास्वप्नमतिह्रस्वमतिदीर्घं तथैव च ॥ ४३ ॥**
**दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत्।**
**न स्वपेद्यः पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ४४ ॥**
**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः।**
**पश्येत्सौम्यं शुभाकारं तस्य विद्यात् शुभं फलम्॥४५॥**

**तत्र श्लोकः।**

**पूर्वरूपाण्यथ स्वप्नान्य इमान्वेत्ति दारुणान्।**
**न स मोहादसाध्येषु कर्माण्यारभते भिषक् ॥ ४६ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने पूर्वरूपीयेन्द्रियं नाम पञ्चमोऽध्यायः ॥**

पूर्वं दृष्टादिकल्पितान्तं पञ्चविधस्वप्नमफलं फलशून्यत्वादिति पारिशेष्याद्भाविकं दोषजन्यञ्च सफलम् । तत्र भाविकं शुभाशुभरूपतया शुभाशुभफलप्रदम् । यत्तु दोषजन्यं तद्दोषप्रकोपजन्यव्याधिरूपफलसूचकतया सफलम् । अफलस्वप्नान्तरमाह—दिवास्वप्नमित्यादि—दिवादृष्टं सर्वं स्वप्नम्; तथा रात्रिदृष्टञ्चातिदीर्घमतिह्रस्वञ्च स्वप्नमफलं विद्यात् । अत्र चाध्याये येषामेव स्वप्नरूपरिष्टसम्भवः । त एवोक्ताः। तेन ग्रहण्यादीनां किमिति न स्वप्नारिष्टानि। इत्यादि न वाच्यम् । तत्र रिष्टासम्भवादेवानभिधानं ज्ञेयम् । "दृष्टः प्रथमयामेयः" इत्यादिग्रन्थं केचिदत्र पठन्ति । स व्यक्तार्थ एव ॥ ४२—४६

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायां पूर्वरूपीयव्याख्या।

---

## षष्ठोऽध्यायः ।

**अथातः कतमानिशरीरीयमिन्द्रियं व्याख्यास्यामः १**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**कतमानि शरीराणि व्याधिमन्ति महामुने!।**
**यानि वैद्यः परिहरेत्येषु कर्म न सिद्ध्यति ॥ ३ ॥**
**इत्यात्रेयोऽग्निवेशेन प्रश्नं पृष्टः सुदुर्वचम्।**
**आचचक्षे यथा तस्मै भगवांस्तन्निबोधत ॥ ४**
**यस्य वै भाषमाणस्य रुजत्यूर्ध्वमुरो भृशम्।**
**अन्नं च च्यवते भुक्तं स्थितं चापि न जीर्यति ॥ ५॥**
**बलंच हीयते यस्य तृष्णा चाभिप्रवर्धते ।**
**जायते हृदि शूलंच तं भिषक् परिवर्जयेत् ॥ ६ ॥**

संप्रति पूर्वरूपीयानन्तरं भाविव्याध्याश्रयारिष्टाभिधानार्थं कतमानिशरीरीयमिन्द्रियमुच्यते । कतमानि शरीराण्यधिकृत्य कृतं कतमानिशरीरीयम्। प्रश्नमिति पृच्छाविषयम्। ऊर्ध्वमुर इति ऊर्ध्वभाग इत्यर्थः । एतदध्यायप्रतिपाद्यानाञ्चासाध्यव्याधीनां मरणसूचकेनारिष्टेन समं मरणसूचकतया साधर्म्यादरिष्टानामपि व्याधीनामभिधानमिह ब्रूते। यदि एत एवासाध्यव्याधयो मरणपूर्वरूपतया रिष्टरूपा एव भवन्ति। तथापि न कदाचित् क्षतिः। तेनारिष्टाधिकारादरिष्टत्वमेव एतदध्यायवाच्यानामपि व्याधीनामिच्छामः १—६

**हिक्का गम्भीरजा यस्य शोणितंचातिसार्यते ।**
**न तस्मै भेषजं दद्यात् स्मरन्नात्रेयशासनम् ॥ ७ ॥**
**आनाहश्चातिसारश्च यमेतौ दुर्बलं नरम्।**
**व्याविशतो रोगौ दुर्लभं तस्य जीवितम् ॥८॥**
**आनाहश्चैव तृष्णा च यमेतौ दुर्बलं नरम्।**
**विशतो विजहत्येनं प्राणा नातिचिरान्नरम् ॥ ९ ॥**
**ज्वरः पौर्वाह्णिको यस्य शुष्कः कासश्च दारुणः।**
**बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ १० ॥**

गम्भीरजा इति गम्भीरनाभ्यादिदेशजा न तु गम्भीरा। तस्याः स्वरूपासाध्यत्वेनोक्तत्वात् । 'शोणितञ्चातिसार्यते' इति विशेषणमनर्थकं स्यात्। व्याधितमित्यनेन हि रक्तातिसारारिष्टव्याधिगृहीतमिति दर्शयति। आनाहातिसारयो रोगत्वेनापि 'रोग' विशेषणं विशेषेण रुजाकर्तृत्वोपदर्शनार्थम्। इहाऽलभ्य एव जीविते'दुर्लभम्' इत्युक्तम्। यदाह—सर्वथाऽलभ्यं दुर्लभमिति। अन्ये तु 'दुर्लभभाषया'अनियतं मरणे रिष्टमिति ब्रुवते। एवम् "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" इत्यादावपि व्याख्यानयन्ति। अनियतरिष्टता स्वरसतस्त्वस्वामिः पुष्पितक एवोक्ता । "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" इत्यस्य चार्थं यस्यश्यावनिमित्तीये वक्ष्यामः ॥ ७-१० ॥

**यस्य मूत्रं पुरीषं च ग्रथितं संप्रवर्त्तते ।**
**निरूष्मणो जठरिणः श्वसनो न स जीवति ॥ ११ ॥**
**श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति ।**
**ज्ञातिसङ्घं स संक्लेश्य तेन रोगेण हन्यते ॥ १२ ॥**

---

१ "हिक्कते यः प्रवृद्धन्तु कृशो दीनमना नरः । जर्जरेणोरसा कृच्छ्रं गम्भीरमनुनादयन् । संजृम्भन् संक्षिपंश्चैव तथाऽङ्गानि प्रसारयन्। पार्श्वे चोभे समा यस्य कूजन् स्तम्भरुगर्दितः। नाभेः पक्वाशयाद्वापि हिक्का चास्योपजायते। क्षोभयन्ति भृशं देहं नमयन्ती च ताम्यतः। रुणद्ध्युच्छ्वासमार्गं तु प्रभ्रष्टबलचेतसः। गम्भीरनामा सा तस्य हिक्का प्राणान्तिकी मता" इति चिकित्सास्थानोक्तत्वात्।

मूत्रं ग्रथितमिति घनीभूतं ज्ञेयम् । ज्ञातिसंघं स संक्लेश्येतिवचनेन चिरमस्य रोगोऽनुवर्त्तते । ततः प्रत्याशया ज्ञातयस्तत्प्रतीकारार्थं क्लिश्यन्ति । ततस्तु म्रियत एव न प्रतिकर्तुं पार्यते ॥ ११ ॥ १२ ॥

**श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ।**
**सीदतश्चाप्युभे जंघे तं भिषक् परिवर्जयेत् ॥ १३ ॥**
**शूनहस्तं शूनपादं शूनगुह्योदरं नरम् ।**
**हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥ १४ ॥**
**उरोयुक्तो बहुश्लेष्मा नीलः पीतः सलोहितः ।**
**सततं च्यवते यस्य दूरात्तं परिवर्जयेत् ॥ १५ ॥**
**हृष्टरोमा सान्द्रमूत्रः शूनः कासज्वरार्दितः ।**
**क्षीणमांसो नरो दूराद्वर्ज्यो वैद्येन जानता ॥ १६ ॥**
**त्रयः प्रकुपिता यस्य दोषाः कष्टाभिलक्षिताः ।**
**कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥१७॥**
**ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।**
**दुर्बलस्य विशेषेण नरस्यान्ताय कल्पते ॥ १८ ॥**
**पाण्डुरश्च कृशोऽत्यर्थं तृष्णयाभिपरिप्लुतः ।**
**डम्बरी कुपितोच्छ्वासः प्रत्याख्येयो विजानता ॥१९॥**

पिण्डिक इति जङ्घमांसपिण्डिके । उरोयुक्त इति उरोभवत्वेन रोगोऽनुमीयमानः । कष्टाभिलक्षिता इति दुरुपक्रमत्वेन ज्ञाताः । किंवा कोष्ठाभिलक्षिता इति पाठः, स व्यक्त एव डम्बरी स्तब्धाक्षावलोकी किंवा । डम्बरी संरम्भवान् । कुपित उच्छ्वासो यस्य स कुपितोच्छ्वासः ॥ १३—१९ ॥

**हनुमन्याग्रहस्तृष्णा बलहासोऽतिमात्रया ।**
**प्राणाश्चोरसि वर्त्तन्ते यस्य तं परिवर्जयेत् ॥ २० ॥**

प्राणाश्चोरसि वर्त्तन्त इति वायव उरसि प्रकुपिता वहन्ति । यदि तु जीवितं प्राणा इहोच्यन्ते, तदा तस्योरसि वर्त्तन्ते । मृत एव पुरुषो भवति । ततश्च तस्मिन् काले रिष्टेनासाध्यतां ज्ञात्वा रोगिपरित्यागे वैद्यस्याप्रसिद्धिर्भवत्येवेति कृत्वा प्राणा वायव इहोच्यन्ते इति ब्रुवते । वयन्तु ब्रूमः—सद्योमरणीयारिष्टवदेतत् प्रत्यासन्नमृत्युगमकमेव भविष्यतीति ॥ २० ॥

**ताम्यत्यायच्छते शर्म न किञ्चिदपि विन्दति ।**
**क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः ॥ २१ ॥**
**विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम् ।**
**वर्धन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥ २२ ॥**
**बलं विज्ञानमारोग्यं ग्रहणी मांसशोणितम् ।**
**एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स हन्यते ॥ २३ ॥**
**आरोग्यं हीयते यस्य प्रकृतिः परिहीयते ।**
**सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ २४ ॥**

**तत्र श्लोकः ।**

**इत्येतानि शरीराणि व्याधिमन्ति विवर्जयेत् ।**
**न ह्येषु धीराः पश्यन्ति सिद्धिं काञ्चिदुपक्रमादिति ॥२५**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने कतमानिशरीरीयेन्द्रियं नाम षष्ठोऽध्यायः ॥**

आयच्छते अङ्गानि क्षिपति विरुद्धयोनय इति परस्परविरुद्धधर्माणः । विरुद्धयोनयोऽपि खल्पतयैकभूततया वा अविरुद्धोपक्रमा अपि भवन्तीत्यत उक्तं विरुद्धोपक्रमा इति आरोग्यं हीयत इति अत्रोक्तरोगव्यतिरिक्तरोगवृध्या आरोग्यहानिर्बोध्या । प्रकृतिः परिहीयत इति स्वभावसुशीलत्वादिरूपं क्षीयते । किंवा, प्रकृतिर्जन्मप्रतिबद्धश्लेष्मप्रकृत्यादिरूपा हीयते ॥ २१—२५ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायां कतमानिशरीरीयेन्द्रियव्याख्या ॥

## सप्तमोऽध्यायः ।

**अथातः पन्नरूपीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

व्याधिरूपानन्तरं वेदनोपद्रवौ सत्त्वस्वप्नौ च पूर्वाध्याये एव "शूलाटोपान्त्रकूजश्च" इत्यादिना रिष्टरूपावुक्तावेवेति कृत्वा छायाप्रतिच्छायारूपारिष्टस्य क्रमप्राप्तस्याभिधायकं पन्नरूपीयमुच्यते । पन्नरूपामधिकृत्य कृतं पन्नरूपीयम् ॥ १ ॥ २ ॥

**दृष्ट्वा यस्य विजानीयात् पन्नरूपां कुमारिकाम् ।**
**प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥ ३ ॥**

पन्नरूपामिति नष्टरूपाम् । कुमारिकामिति पुरुषान्तरनयनगतां कुमारिकाम् । किंवा आतुरनयनगतामेव । यदुक्तं हारीते—"अदर्शनमसंघाते नेत्रे नष्टकुमारिके" इति । प्रतिच्छायामयीमिति प्रतिच्छायारूपाम् ॥ ३ ॥

**ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।**
**अङ्गेषु विकृता यस्य छाया प्रेतस्तथैव सः ॥ ४ ॥**

अन्यत्रापि छायाविकृतिमाह—ज्योत्स्नेत्यादि ।—अङ्गेषु विकृतेति शिरोबाहुजङ्घादिष्वधिकरणभूतेषु प्रतिच्छाया यस्य विकृता भवतीत्यर्थः । तेन व्यस्तसमस्ताङ्गविकृता छाया गृह्यते । अन्ये तु,—विभक्तिविपरिणामादङ्गानामिति व्याख्यानयन्ति । तथा च सुगम एवार्थः ॥ ४ ॥

---

१ जङ्घे इति पाठान्तरम् । २ पाण्डूदरश्चेति पाठान्तरम् । ३ शुष्ककासज्वरार्दित इति पाठान्तरम् । ४ विकारा यस्य वर्द्धन्ते इति पाठान्तरम् । ५ मांससारिणीति पाठान्तरम् ।

१ विकारा यस्य वर्द्धन्ते इति पाठान्तरम् । २ परस्परविरुद्धकर्माण इति पाठान्तरम् । ३ व्यधिकरणभूतेष्विति पाठान्तरम् ।

छिन्ना भिन्नाकुला च्छाया हीना वाप्यधिकापि वा।
नष्टा तन्वी द्विधा च्छिन्नाऽविकृता विशिराश्चया॥५॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः।
सर्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः॥ ६॥

एतानेव छायाविकृतिभेदानाह—छिन्नेत्यादि।—आकुलेति अनिश्चितप्रतिबिम्बा अविकृता विकृता विकृतानुकारिणी। यद्यप्यरिष्टाधिकारे अनिमित्तमेव यद्भवति, तदरिष्टमुक्तम्। तथापि पुनः स्पष्टार्थम्, 'नचेल्लक्ष्यनिमित्तजा, इत्युक्तम् ॥५॥६॥

संस्थानेन प्रमाणेन वर्णेन प्रभया तथा।
छाया विवर्त्तते यस्य स्वस्थेऽपि प्रेत एव सः॥ ७॥

संप्रति छायारूपं सामान्येन दर्शयन् छायाश्रयारिष्टमाह—संस्थानेनेत्यादि।—एतच्च—प्रतिच्छायायाः समानं सूत्रम्। तत्र संस्थानेन प्रमाणेन छायायाः प्रतिच्छायायाः स्वरूपकथनं तथा वर्णेन प्रभया च छायायाः स्वरूपकथनम्। संस्थानेन प्रमाणेन च सदृशी छाया प्रतिच्छाया ज्ञेया। वर्णेन प्रभया च लक्षिता वर्णप्रभाश्रयाऽग्रे वक्ष्यमाणा पञ्चविधा ज्ञेया। अत्र यत्तदोर्नित्याभिसम्बन्धात्सा इत्यप्याहार्यते। तेन संस्थानादिभिर्या छाया प्रतिच्छायरूपा। सा यस्य विवर्त्तते अन्यथा भवति, स प्रेत एवेति योजना॥ ७॥

संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च सा।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम्॥ ८॥
प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु।
छाया या सा प्रतिच्छाया च्छाया वर्णप्रभाश्रया॥९॥

प्रतिछायाकारभूते संस्थानप्रमाणे एव विवृणोति संस्थानमित्यादि—आकृतिराकारः। प्रतीत्यादि—प्रतिच्छायाविवरणम्। 'छाया वर्णप्रभाश्रया' इत्यादि तु छायाविवरणं भविष्यति। प्रतिप्रमाणसंस्थानमित्यत्र प्रति सादृश्ये। तेन प्रमाणसदृशी, संस्थानसदृशी। प्रमाणसंस्थानसदृशतया जलादिषु या छाया, सा प्रतिच्छाया। छाया तु या पञ्चविधा सा वर्णप्रभाश्रया वर्णप्रभासहचरितोपलभ्यत इत्यर्थः॥८॥९॥

खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः।
नाभसी निर्मला नीला सस्नेहा सप्रभेव च॥ १०॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया॥ ११॥
शुद्धवैदूर्यविमला सुस्निग्धा चाम्भसी मता[2]।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी
वायवी गर्हिता त्वासां चतस्रः स्युः सुखोदयाः[3]।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा॥ १२॥

खादीनामित्यादिना छायां विभजते। सप्रभेति दीप्ताभा। वायवी गर्हितेति वायवी रिष्टे प्रायो भवति। यस्य जन्मप्रभृति वायवी, स चापि प्रभूतक्लेशभाग्भवतीति एतदेवाह—वायवीत्यादि।—विनाशायेति अकस्मादुत्पन्ना विनाशाय, सहजा तु वायवी क्लेशायेति ज्ञेयम्॥ १०—१३॥

स्यात्तैजसी प्रभा सर्वा सा तु सप्तविधा स्मृता।
रक्ता पीता सिता श्यावा हरिता पाण्डुराऽसिता॥१४
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः।
ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः[1]॥१५॥

संप्रति छायाश्रयत्वेन वर्णभेद उक्तः, तत्र वर्णभेदास्तदरिष्टंच प्रथमाध्याय एवोक्तम्। प्रभायास्तु भेदं रिष्टंचाह—तैजसीत्यादि।—प्रभा च यद्यपि प्रथमाध्याय एव संग्रहेणोक्ता। तथापि तत्र च्छायाश्रयत्वेन न वर्णभेदा उक्ताः। तत्र वर्णभेदास्तदरिष्टंच प्रथमाध्याये संग्रहेणोक्तास्तथापि छायाश्रयत्वेन न तत्र सूचिता इति ज्ञेयम्। अशुभोदया इत्यकस्मादुत्पादे मरणोदयाः, सहजोत्पादे तु बहुदुःखरूपा अशुभोदया इति ज्ञेयम्॥ १४॥ १५॥

वर्णमाक्रामति छाया भास्तु वर्णप्रकाशिनी।
आसन्ना लक्ष्यते च्छाया भाः प्रकृष्टा प्रकाशते॥१६॥

प्रभाछाययोर्दुर्लक्षणत्वेन भेदकं लक्षणमाह—वर्णमिति। वर्णमाक्रामतीति छायाक्रान्तो वर्णो नोपलभ्यते सम्यक्। आसन्ना लक्ष्यते छाया। यथा—चित्रगता छाया प्रत्यासन्नैव लक्ष्यते। भाः प्रकृष्टा प्रकाशते। यथा—मणिमौक्तिकादीनां प्रभा दूरादुपलभ्यत इत्यर्थः॥ १६॥

नाऽच्छायो नाऽप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु।
नृणां शुभाशुभोत्पत्तिं काले छायाः प्रभाश्रयाः॥१७॥
कामलाक्ष्णोर्मुखं पूर्णं गण्डयोर्मुक्तमांसता[2]।
सन्त्रासः चोष्णगात्रं च यस्य तं परिवर्जयेत्॥१८॥
उत्थाप्यमानः शयनात् प्रमोहं याति यो नरः।
मुहुर्मुहुर्न सप्ताहं स जीवति विकत्थनः॥ १९॥
संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः।
व्यापन्ना ग्रहणी प्रायः सोऽर्द्धमासं न जीवति॥२०॥

विशेषा इति छायाप्रभयोः शुभाशुभरूपविशेषाः। चिह्नयन्तीति गमयन्ति। काल इति परिपाककाले। कामलाक्ष्णोरिति कामलिन इव पीताक्षत्वम्। विकत्थन इति निन्दापरः। संसृष्टा इति परस्परसंबद्धाः। किम्वा संसृष्टदोषजन्याः प्रतिलोमानुलोमगा इति अधोमार्गोर्ध्वमार्गगताः। व्यापन्ना ग्रहणीति च्छेदः। किम्वा, व्यापन्ना ग्रहणी यस्य स व्यापन्नग्रहणीति पाठः। प्रायशोऽर्ध्वं मासं न जीवति इत्यनेनार्द्धमासमतिक्रम्यापि मरणं भवति। न तु मरणव्यभिचारः॥ १७-२०॥

१ विस्तृता चेति पाठान्तरम्। २ शुभेति पाठान्तरम्। ३ अकस्मात्तूद्भूतेति पाठान्तरम्।

१ अकस्मात्तूद्भूतेति पाठान्तरम्। २ शङ्खयोर्मुक्तमांसतेति पाठान्तरम्।

उपरुद्धस्य रोगेण कर्षितस्याल्पमश्नतः ।
बहुमूत्रपुरीषं स्याद्यस्य तं परिवर्जयेत् ॥ २१ ॥
दुर्बलो बहु भुङ्क्ते यः प्रागभुक्त्वान्नमाश्रितः ।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥ २२ ॥
इष्टंच गुणसम्पन्नमन्नमश्नाति यो नरः ।
शश्वच्च बलवर्णाभ्यां हीयते न स जीवति ॥ २३ ॥
प्रकूजति प्रश्वसिति शिथिलं, चातिसार्यते ।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति॥२४॥
ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः ।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः ॥ २५ ॥

प्रागभुक्त्वेति अदुर्बलः स न भुक्तवेलत्यर्थः । पूर्वदिनेषु बहु भुङ्क्ते इत्यर्थः । इष्टमिति इष्टरसम् । गुणसम्पन्नमिति पथ्यम् । शिथिलमिति पूर्वेण संबध्यते । तेन श्लथ इव प्रकूजति । प्रश्वसितीत्यन्तः श्वासं नयति । व्याविद्धमिति कुटिलम् ॥ २१—२५ ॥

ऊर्ध्वं च यः प्रश्वसिति श्लेष्मणा चाभिभूयते ।
हीनवर्णबलाहारो यो नरो न स जीवति ॥ २६ ॥
ऊर्ध्वाग्रे नयने यस्य मन्ये चानतकम्पने ।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति॥२७॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ ।
शूली प्रद्वेष्टि चाप्यन्नं तस्मिन् कर्म न सिध्यति॥२८॥
व्यावृत्तमूर्धजिह्वास्यो भ्रुवौ यस्य च विच्युते ।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव सः ॥ २९ ॥
शेफश्चात्यर्थमुत्सिक्तं निःसृतौ वृषणौ भृशम् ।
अतश्चैव विपर्यासो विकृत्या प्रेतलक्षणम् ॥ ३० ॥
निचितं यस्य मांसं स्यात्त्वगस्थिष्वेव दृश्यते ।
क्षीणस्नानश्नतस्तस्य मासमायुः परं भवेत् ॥ ३१ ॥

अत्र श्लोकः ।

इदं लिङ्गमरिष्टाख्यमनेकमभिजज्ञिवान् ।
आयुर्वेदविदित्याख्यां लभते कुशलो जनः ॥ ३२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने पन्नरूपीयमिन्द्रियं नाम सप्तमोऽध्यायः ।

ऊर्ध्वाग्र इति ऊर्ध्वमुखे । आरतकम्पने अविश्रान्तकम्पने । उत्सिक्तमिति अन्तःप्रविष्टम् । अतश्चैवं विपर्यास इति शेफोऽतिनिःसृतः। वृषणौ चापि प्रविष्टौ । विकृत्येति स्वभावं विना। तेन स्वभावोत्सिक्तशेफादि न रिष्टम् । किन्त्वनिमित्तं कादाचित्कं तदेव तावद्रिष्टम् । निचितमिति क्षीणं 'नि'शब्दस्य प्रतिषेधार्थत्वात् । एवंच तथा मांसं क्षीणं भवति । यथा त्वगस्थिष्वेव लग्ना दृश्यते । किम्वा निचितमुपचितं मांसं स्यात् । त्वगस्थिष्वेव दृश्यते त्वगस्थिमात्रावशेषो वा भवतीति यावत् ॥ २६—३२ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायां पन्नरूपीयव्याख्या ॥

१ प्राग्भुक्तादन्नमातुर इति पाठान्तरम् ।

---

## अष्टमोऽध्यायः ।

अथातोऽवाक्शिरसीयमिन्द्रियं व्याख्यास्यामः॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत्।
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम्॥३॥
जटीभूतानि पक्ष्माणि दृष्टिश्चापि निगूह्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥ ४ ॥
यस्य शूनानि वर्त्मानि न समायान्ति शुष्यतः ।
चक्षुषी चोपदिह्येते यथा प्रेतस्तथैव सः ॥ ५ ॥
भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्त्तकान् बहून् ।
असजानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत्॥ ६ ॥
त्र्यहमेतेन जीवन्ति लक्षणेनातुरा नराः ।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते ॥ ७ ॥

उक्तानुक्तपरिग्राहकेऽध्यायद्वये वक्तव्ये छायारिष्टाभिधायकलसाधर्म्यादवाक्शिरसीयोऽभिधीयते । अवाक्शिरा इति ऊर्द्धपादः । एतच्छायाप्रकरणवक्तव्यमपि शीघ्रमारकत्वख्यापनार्थमिह शीघ्रमारकरिष्टेष्वपि पठितम् । अत्र ह्यरिष्टानि त्र्यहादिमारकाणि वक्तव्यानि । समायान्तीति न परस्परं मिलन्ति असजानकृतानिति प्रयत्नेनाकृतान् ॥ १—७ ॥

आयस्योत्पाटितान् केशान् यो नरो नावबुध्यते ।
अनातुरो वा रोगी वा षड्रात्रं नातिवर्त्तते ॥ ८ ॥
यस्य केशा निरभ्यङ्गा दृश्यन्तेऽभ्यक्तसन्निभाः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ ९ ॥

आयस्येति बलादाकृष्य । यद्यपि "मृतस्य केशलोमानि" इत्यादिनैव । तदरिष्टमित्युक्तम् । तथापीहातुरस्वस्थविषयप्रतिपादनार्थमभिधानम् । किञ्च तत्र 'प्रच्यवेरन्' इति पदेन केशानामनुत्पाटनमुक्तम् । नेह तथेति विशेषः ॥ ८ ॥ ९ ॥

ग्लायते नासिकावंशः पृथुत्वं यस्य गच्छति ।
अशूनः शूनसङ्काशः प्रत्याख्येयः स जानता ॥ १० ॥
अत्यर्थविवृता यस्य यस्य चात्यर्थसंवृता ।
जिह्मा वा परिशुष्का वा नासिका न स जीवति॥११॥

१ क्षीणस्नानश्नतो यस्य मांसमुपचितं स्यात्, तस्य आयुः मासं परं भवति; अथवा क्षीणस्नानश्नतो यस्य त्वगस्थिष्वेव लग्ना दृश्यते तस्यापि आयुः मासं परं भवतीति पक्षान्तराभिप्रायः ।

मुखं शब्दश्रवावोष्ठौ शुक्लश्यावातिलोहितौ ।
विकृत्या यस्य वा नीलौ न स रोगाद्विमुच्यते ॥१२॥

ग्लायत इति दौर्बल्यं भजते । अशून इति परमार्थतोऽशूनः । विवृतेति निर्गताः । संवृतेति प्रविष्टा । शब्दश्रवौ कर्णौ । विकृत्येति सहजं विना तथा हेतुं विनेत्यर्थः १०—१२

अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।
विकृत्या न स रोगं तं विहायारोग्यमश्नुते ॥ १३ ॥
स्तब्धा निश्चेतना गुर्वी कण्टकोपचिता भृशम् ।
श्यावा शुष्काथवा शूना प्रेतजिह्वा विसर्पिणी॥१४॥
दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निःश्वस्य ताम्यति ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ १५ ॥
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम् ।
भवत्यायुःक्षये क्रूरमथवाति भवेन्मृदु ॥ १६ ॥
घट्टयञ्जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ १७ ॥
दन्तैश्छिन्दन्नखाग्राणि नखैश्छिन्दञ्छिरोरुहान् ।
काष्ठेन भूमिं विलिखन्न रोगात्परिमुच्यते ॥ १८ ॥
दन्तान्खादति यो जाग्रदसाम्ना विरुदन्हसन् ।
विजानाति न चेद्दुःखं न स रोगाद्विमुच्यते ॥१९॥
मुहुर्हसन् मुहुः क्ष्वेडन्शय्यां पादेन हन्ति यः ।
उच्चैश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ २० ॥

अस्थिवच्छ्वेता अस्थिश्वेता । विसर्पिणी वहिर्निर्गता । निःश्वस्येति अन्तरोच्छ्वासं नीला । अपास्यति मुहुरिति मुखमाक्षिपति । असाम्ना इति उच्चैः । छिद्राणीति नासाकर्णाक्षिस्रोतांसि ॥ १३—२० ॥

यैर्विन्दति पुरा भावैः समेतैः परमां रतिम् ।
तैरेवारममाणस्य ग्लास्नोर्मरणमादिशेत् ॥ २१ ॥
न बिभर्त्ति शिरोग्रीवां न पृष्ठं भारमात्मनः ।
न हनूपिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥ २२ ॥
सहसा ज्वरसन्तापः तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ २३ ॥
गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ २४ ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च ।
आयुष्यन्तं गते जन्तोर्बलं च परिहीयते ॥ २५ ॥
शिरो विक्षिपते कृच्छ्रान्मुञ्चयित्वा प्रपाणिकौ ।
ललाटप्रच्युतस्वेदो मुमूर्षुश्च्युतबन्धनः ॥ २६ ॥

तत्र श्लोकः ॥

इमानि लिङ्गानि नरेषु बुद्धिमान्
निशामयेतावहितो मुमूर्षुषु[1] ।
क्षणेन भूत्वा ह्युपयान्ति कानिचि-
न्न चाफलं लिङ्गमिहास्ति किञ्चन ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने अवाक्शिरसीयमिन्द्रियं नामाष्टमोऽध्यायः ।

ग्लास्नोरिति क्षीयमाणस्य भारमात्मन इति ऊर्ध्वशरीरम् । पृष्ठमिति शरीराधोभागः । गोसर्ग इति प्रत्यूषे । लेपज्वरः स्वल्पशीतयुक्तः कफज्वरः । कृच्छ्रादित्यशीघ्रं मुञ्चयित्वा प्रपाणिकौ मणिबन्धादूर्ध्वं कूर्परपर्यन्तं शिरो विक्षिपति ॥ २१—२७ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानव्याख्यायामवाक्शिरसीयव्याख्या ॥

## नवमोऽध्यायः ।

अथातो यस्य श्यावनिमित्तीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने ।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता ॥ ३ ॥

यस्य श्यावनिमित्तीयोऽपि उक्तानुक्तरिष्टाभिधायकतया उच्यते । 'यस्य श्याव'शब्देन लक्षणेन, 'यस्य श्याव' इत्यादिग्रन्थोक्तं रिष्टं ग्राह्यम् । तेन, यस्यश्यावरूपनिमित्तं रिष्टमधिकृत्य कृतोऽध्यायः यस्यश्यावनिमित्तीयः ॥ १—३ ॥

निःसंज्ञः परिशुष्कास्यः संमूढो[1] व्याधिभिश्च यः
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ ४ ॥
हरिताश्च सिरा यस्य लोमकूपाश्च संवृताः ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ ५ ॥
शरीरान्ताश्च शोभन्ते शरीरं चोपशुष्यति ।
बलं च हीयते यस्य राजयक्ष्मा हिनस्ति तम् ॥ ६ ॥
अंसाभितापो हिक्का च छर्दनं शोणितस्य च ।
आनाहः पार्श्वशूलं च भवत्यन्ताय शोषिणः ॥ ७ ॥
वातव्याधिरपस्मारी कुष्ठी शोफी तथोदरी ।
गुल्मी च मधुमेही च राजयक्ष्मी[2] च यो नरः ॥ ८ ॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति ।
अन्येष्वपि विकारेषु तान् भिषक् परिवर्जयेत् ॥ ९ ॥
विरेचनहृतानाहो यस्तृष्णानुगतो नरः ।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः ॥ १० ॥

१ विभावयेतावहितो मुहुर्मुहुरिति पाठान्तरम् ।

१ संविद्ध इति पाठान्तरम् । २ रक्तीति पाठान्तरम् ।

पेयं पातुं न शक्नोति कण्ठस्य च मुखस्य च।
उरसश्च विशुष्कत्वाद्यो नरो न स जीवति ॥ ११ ॥
स्वरस्य दुर्बलीभावं हानिं च बलवर्णयोः।
रोगवृद्धिमयुक्तेन दृष्ट्वा मरणमादिशेत् ॥ १२ ॥
ऊर्ध्वश्वासङ्गतोष्माणं शूलोपहतवङ्क्षणम्।
शर्म चानधिगच्छन्तं बुद्धिमान्परिवर्जयेत् ॥ १३ ॥

समृद्ध उपचितः। शरीरान्ता हस्तपादादयः। शोभन्त इति राजन्ते। किम्वा शोभायुक्ता इव भवन्ति। वात एव व्याधिर्यस्य रोगिणः स वातव्याधिः। तानिति बलमांसक्षय-युक्तान्। विरेचनहृत आनाहो यस्य स तथा। अयुक्तेनेत्यनु-चितरूपेण ॥ ४—१३ ॥

अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः।
श्रोतारं चाप्यशब्दस्य दूरतः परिवर्जयेत् ॥ १४ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १५ ॥
अथ चेज्ज्ञातयस्तस्य याचेरन् प्रणिपाततः।
रसेनाद्यादिति ब्रूयान्नास्य कुर्याद्विशोधनम् ॥ १६ ॥
मासेन चेन्न दृश्येत विशेषस्तस्य शोभनः।
रसैश्चान्यैर्बहुविधैर्दुर्लभं तस्य जीवितम् ॥ १७ ॥
निष्ठ्यूतं च पुरीषं च रेतश्चाम्भसि मज्जति।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥ १८ ॥

अपस्वरमिति विकृतस्वरं यथा भवति तथा भाषमाणम्। किं भाषमाणमित्याह—मरणमात्मन इति। मरिष्यामि मरिष्यामीति भाषमाणमित्यर्थः। श्रोतारं चेत्यादिरिष्टानन्तरं 'संशयप्राप्तमात्रेयः' इत्यादि अनियतारिष्टतया आत्रेयस्यात्र मरणं प्रति सन्देह इति ब्रूते। तत्र नारिष्टस्य मरणाव्यभि-चारित्वमाचार्येण प्रयत्नेनोक्तम्। व्युत्पादितं चास्माभिः। किञ्च न च वीतसंशयस्यात्रेयस्य संशयोऽस्ति। तेन शिष्यव्यु-त्पत्त्यर्थमाचार्यः संशयं दर्शयति। तथा निर्णयं करोति।—यथा, "दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद्द्विविधो वि-चारः" इत्यादौ संशयं दर्शयित्वा निर्णयं दर्शितवान्। तथा अत्रापि दुर्बलस्येह रोगमुक्तौ रिष्टं वा स्यात्। सर्वथा सन्तर्प-णाद्यधिक्ष्यो वा स्यादिति सन्देहः। अरिष्टपक्षे तु मरणम्। तत्र 'अथ चेत्' इत्यादिना परीक्षामारभते। परीक्षां च मासादिना विशेषादालभ्य रिष्टत्वावधारणं भवतीति सुव्य-वस्थोऽयं ग्रन्थः। दुर्लभमित्यप्राप्यम् ॥ १४—१८ ॥

निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक्।
तच्च सीदत्यपः प्राप्य न स जीवितुमर्हति ॥ १९ ॥
पित्तमूष्मानुगं यस्य शङ्खौ प्राप्य विमूर्च्छति।
स रोगः शङ्खको नाम्ना चिरात्राद्धन्ति जीवितम् ॥ २० ॥
सफेनं रुधिरं यस्य मुहुरास्यात्प्रमुच्यते।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयः स तादृशः ॥ २१ ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः।
यस्यातुरस्य लक्ष्यन्ते त्रीन्पक्षान्न स जीवति ॥ २२ ॥

तत्र श्लोकौ ॥

विज्ञानानि मनुष्याणां मरणे प्रत्युपस्थिते।
भवन्त्येतानि सम्पश्येदन्यान्येवंविधानि च ॥ २३ ॥
तानि सर्वाणि लक्ष्यन्ते न तु सर्वाणि मानवम्।
विशन्ति विनशिष्यन्तं तस्माद्बोध्यानि सर्वत इति ॥ २४

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने यस्यश्यावनिमित्तीयेन्द्रियं नाम नवमोऽध्यायः ॥

निष्ठ्यूत इत्यादौ बहुविधवर्णयोगः पूर्वारिष्टाद्विशेषः। सीदतीति मज्जति। 'पित्तम्' इत्यादिना सूत्रस्थानोक्तोऽपि शङ्खक इह मरणसूचकतया रिष्टत्वेनोच्यते। विज्ञानानीति लक्षणानि नयनादिवैकृतानि ज्ञेयानि। सर्वाणि लक्ष्यन्त इति नाना-पुरुषेषु लक्ष्यन्ते। न तु सर्वाणि मानवं विशन्तीति न एकं पुरुषं सर्वाणि विशन्तीति ॥ १९—२४ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायु-र्वेददीपिकायां चरकतात्पर्यटीकायां यस्यश्याव-निमित्तीयेन्द्रियव्याख्या ॥

## दशमोऽध्यायः।

अथातः सद्योमरणीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
सद्यस्तितिक्षतः प्राणाँल्लक्षणानि पृथक् पृथक्।
अग्निवेश! प्रवक्ष्यामि संस्पृष्टो यैर्न जीवति ॥ ३ ॥
वाताष्ठीला सुसंवृत्ता तिष्ठन्ती दारुणा हृदि।
तृष्णयाभिपरीतस्य सद्यो मुष्णाति जीवितम् ॥ ४ ॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम्।
वायुः शरीरे विचरन्सद्यो मुष्णाति जीवितम् ॥ ५ ॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः।
तस्य हिक्काकरो रोगः सद्योमुष्णाति जीवितम् ॥ ६ ॥
क्षीणशोणितमांसस्य वायुरूर्ध्वगतिश्चरन्।
उभे मन्ये समा यस्य सद्यो मुष्णाति जीवितम् ॥ ७ ॥

---

१ पेयं पातुं न स शक्नोति शुष्कत्वादास्यकण्ठयोः। उरसश्च विव-द्धत्वाद्यो नरो न स जीवतीति पाठान्तरम्। २ रोगवृद्धिमयुक्तया चेति पाठान्तरम्। ३ प्रणिपातवदिति पाठान्तरम्। ४ नास्मै दद्याद्विरेचनमिति पाठान्तरम्।

१ तच्च सीदेत् पयः प्राप्य दुर्लभं तस्य जीवितमिति पाठान्तरम्। २ विमुप्यत इति पाठान्तरम्।

व्यवहितमरणप्रतिपादकमरिष्टमभिधाय प्रत्यासन्नमरणप्रतिपादकरिष्टयुक्तः सद्योमरणीयोऽभिधीयते । 'सद्यः' शब्देनेह केचित् सप्तरात्रमिच्छन्ति । अपरे त्रिरात्रम् । तितिक्षत इति तितिक्षत इव । प्राणानां प्रियत्वेन स्वयं हननायोग्यत्वात् । पिण्डिके इति जङ्घापिण्डिके ॥ १—७ ॥

गुदं नाभिं चान्तरेण गृह्णाति सहसाऽनिलः ।
कृशस्य वंक्षणौ गृह्णन् सद्यो मुष्णाति जीवितम् ॥८॥
त्रितस्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्यायताक्षस्य सद्यो मुष्णाति जीवितम् ॥९॥
हृदयं च गुदं चोभे गृहीत्वा मारुतो बली ।
दुर्बलस्य विशेषेण सद्योमुष्णाति जीवितम् ॥ १० ॥
वंक्षणं च गुदं चोभे गृहीत्वा मारुतो बली ।
श्वासं सञ्जनयञ्जन्तोः सद्यो मुष्णाति जीवितम् ॥११॥
नाभिं मूत्रं वस्तिशीर्षं पुरीषंचापि मारुतः ।
प्रच्छिन्नं जनयच्छूलं सद्यो मुष्णाति जीवितम् ॥१२॥
भिद्येते वंक्षणौ यस्य वातशूलैः समन्ततः ।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥१३॥
आप्लुतं मारुतेनेह शरीरं यस्य केवलम् ।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥१४॥
शरीरं शोफितं यस्य वातशोफेन देहिनः ।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥१५॥
आमाशयसमुत्थाना यस्य स्यात्परिकर्त्तिका ।
तृष्णा गुदग्रहश्चोग्रः सद्यो जह्यात् स जीवितम् ॥१६॥

गुदं नाभिं चान्तरेणेति गुदनाभिमध्ये । हृदयं गृहीत्वेति हृदयं सविकारेण प्राप्येति । वस्तिशीर्षमिति वस्त्यूर्ध्वभागम् । प्रच्छिन्नमिति प्रच्छिन्नमिव प्रच्छिन्नं छेदनाकारवेदनायुक्तत्वात् । आप्लुतमिति व्याप्तम् । शोफितमिति शोफयुक्तम् । परिकर्त्तिका परिकर्त्तनाकारा वेदना ॥ ८—१६ ॥

पक्वाशयमधिष्ठाय हत्वा संज्ञां च मारुतः ।
कण्ठे घुर्घुरकं कृत्वा सद्यो हरति जीवितम् ॥१७॥
दन्ताः कर्दमदिग्धाभाः मुखं चूर्णकसन्निभम् ।
सिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ॥१८॥
तृष्णाश्वासशिरोरोगमोहदौर्बल्यकूजनैः ।
स्पृष्टः प्राणाञ्जहात्याशु शकृद्भेदेन चातुर इति ॥१९॥

तत्र श्लोकः ॥

एतानि खलु लिङ्गानि यः सम्यगवबुध्यते ।
स जीवितं च मर्त्यानां मरणञ्चावबुध्यते ॥ २० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सद्योमरणीयेन्द्रियं नाम दशमोऽध्यायः समाप्तः ।

घुर्घुरकमिति घुर्घुरकमित्याकारशब्दः । स कफात्मकेन श्वासेन भवति । मुखं चूर्णकसन्निभं श्वैत्यात् । सिप्रायन्त इति सिप्रानदीवत् स्वेदप्रादुर्भावादाचरन्तीति सिप्रायन्ते । किंवा सिप्रायन्त इति शिथिलीभवन्ति । अनेकार्थत्वाद्धातूनाम् । स जीवितं चावबुध्यत इति यथोक्तरिष्टाभावेन जीवितं बुध्यते । तेन, रिष्टसद्भावेन च मरणं बुध्यत इति ॥ १७—२० ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सद्योमरणीयेन्द्रियव्याख्या ॥

## एकादशोऽध्यायः ।

अथातोऽणुज्योतीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
अणुज्योतिरनेकाग्रो दुश्छायो दुर्मना सदा ।
रतिं न लभते याति परलोकं समान्तरम् ॥ ३ ॥

सद्यःकालनियतं रिष्टमभिधाय कालविशेषनियतारिष्टाभिधायकमणुज्योतीयमुच्यते । अणुज्योतिश्चेह यथाश्रुतं रोगं वर्जयित्वा संज्ञायामनुक्रियते । ज्योतिः सकलशरीरान्तर्गतं तेजः । अणुज्योतिर्मन्दाग्निः । अनेकाग्रो व्याकुलचित्तः । दुर्मना इत्यनेन मनोदौर्बल्यमित्युच्यते । तेन न पौनरुक्त्यम् । समान्तरमिति समामध्ये ॥ १—३ ॥

बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।
लोकान्तरगतः पिण्डं भुङ्क्ते संवत्सरेण सः ॥ ४ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धती ।
संवत्सरान्ते जन्तुः स संपश्यति महत्तमः ॥ ५ ॥
विकृत्या विनिमित्तं यः शोभामुपचयं धनम् ।
प्राप्नोत्यतो वा विभ्रंशं समान्तं न स जीवति ॥ ६ ॥

बलिमिति वायसानां विधिवद्दत्तमन्नम् । महत्तम इति मरणरूपं तमः । विकृत्येति प्रसिद्धं धनादिकारणं विना । विनिमित्तमिति शरीरसम्बन्धधनादिसूचकलक्षणं विना कस्मिंश्च काले धनादि तदुपचयो वा भवति । तच्चानिमित्तलक्षणत्वादरिष्टं प्रथमाध्याय एवोक्तम् । उपचयमिति शरीर एवोपचयम् । अतो विभ्रंशमिति शोभाद्यभावम् ॥ ४—६ ॥

भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ।
षडेतानि निवर्त्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ७ ॥

भक्तिरिच्छा । अहेतुकमिति क्रियाविशेषणम् । संख्येयनिर्देशादेव षट्त्वं प्राप्तम् । पुनः 'षड्' इति पदं षण्णां समुदितानामेव निवृत्तिररिष्टमिति दर्शयितुम् ॥ ७ ॥

धमनीनामपूर्वाणां जालमत्यर्थशोभनम् ।
ललाटे दृश्यते यस्य षण्मासान्न स जीवति ॥ ८ ॥
लेखाभिश्चन्द्रवक्राभिर्ललाटमुपचीयते ।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत् ॥ ९ ॥

१ पक्वाशयसमुत्थानेति पाठान्तरम् ।

शरीरकम्पः संमोहो गतिर्वचनमेव च ।
मत्तस्येवोपलभ्यन्ते यस्य मासं न जीवति ॥ १० ॥
रेतोमूत्रपुरीषाणि यस्य मज्जन्ति चाम्भसि ।
स मासात् स्वजनद्वेष्टा मृत्युवारिणि मज्जति ॥ ११ ॥

जालमिति जालाकारम् । वक्राभिरिति वालचन्द्रवक्राभिः । रेत इत्याद्यरिष्टम् । 'निष्ठ्यूतं च पुरीषम्' इत्यादिना यद्यप्युक्तम् । तथापीह समासवचनात् समुदितानामेव रेतःप्रभृतीनां मज्जनं स्वजनद्वेषे सति मारकं भवतीति ज्ञेयम् ॥ ८—११ ॥

हस्तपादं मुखं चोभे विशेषाद्यस्य शुष्यतः ।
शुष्यते वा विना दाहात् स च मासं न जीवति १२
ललाटे मूर्ध्नि वस्तौ च नीला यस्य प्रकाशते ।
राजी वालेन्दुकुटिला न स जीवितुमर्हति ॥ १३ ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पद्याशु विनश्यन्ति न चिरात् स विनश्यति ॥१४॥
ग्रीवावमर्दो बलवान्जिह्वाश्वयथुरेव च ।
ब्रध्नास्यगलपाकश्च यस्य पक्षं तमादिशेत् ॥ १५ ॥
संभ्रमोऽतिप्रलापोऽतिभेदोऽस्थ्नामतिदारुणः[1] ।
कालपाशपरीतस्य त्रयमेतत् प्रवर्त्तते ॥ १६ ॥
प्रमुह्य[2] लुञ्चयेत्केशान्परिगृह्णात्यतीव च ।
नरः स्वस्थवदाहारमबलः कालचोदितः ॥ १७ ॥

'उभे' इति वचनं मुखात् हस्तादिशोषमिति दर्शयति । प्रवालकृतगुडिकावदाभासन्त इति प्रवालगुडिकाभासाः । कालपाशपरीतस्येति शीघ्रं मरिष्यतः । परिगृह्णाति स्वस्थवदाहारमिति योजना । अबलः सन् स्वस्थवदाहारमत्यर्थं करोतीत्यर्थः ॥ १२—१७ ॥

समीपे चक्षुषोः कृत्वा मृगयेताङ्गुलीकरम् ।
स्मयतेऽपि च कालान्ध ऊर्ध्वगानिमिषेक्षणः ॥१८॥
शयनादासनादङ्गात्काष्ठात् कुड्यादथापि वा ।
असन्मृगयते किञ्चित् स मुह्यन् कालचोदितः ॥१९॥

समीप इत्यादि ।—चक्षुःसमीपेऽङ्गुलीकरं कृत्वा तत्पश्यन् अङ्गुलीकरं च मृगयते प्रार्थयते । स्मयते विस्मितो भवति । ऊर्ध्वगमनिमिषं च ईक्षणं यस्य स तथा सन्मृगयते । अविद्यमानं शयनासनादि मृगयते प्रार्थयते ॥ १८ ॥ १९ ॥

अहास्यहासी संमुह्यन् प्रलेढि दशनच्छदौ ।
शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥ २० ॥
आह्वयन्तं समीपस्थं स्वजनं जनमेव वा ।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥ २१ ॥
अयोगमतियोगं वा शरीरे मतिमान् भिषक् ।
खादीनां युगपद्दृष्ट्वा भेषजं नावचारयेत् ॥ २२ ॥

१ पर्वभेदश्च दारुण इति पाठान्तरम् । २ प्रमुह्यन् सञ्चयन्निति पाठान्तरम् ।

अहास्यहासी इति अहास्यविषये हास्यवान् । दशनच्छदौ ओष्ठौ । 'शीत' शब्दः उच्छ्वासान्तैः संबध्यते । जनमिति गोवलीवर्दन्यायेन स्वजनम् । खादीनामिति खादिकार्याणां श्रोत्रादीनां योग्यविषयाग्रहणमयोगः ॥ २०—२२ ॥

अतिप्रवृद्ध्या रोगाणां मनसश्च बलक्षयात् ।
वासमुत्सृजति क्षिप्रं शरीरे देहसंज्ञकम् ॥ २३ ॥
वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम् ।
हीयतेऽसुक्षये निद्रा नित्या भवति वा न वा ॥२४॥

वासमिव वासं शरीरमात्मनो गृहमिव भवति । न वा भवतीति सर्वथा न भवतीत्यर्थः ॥ २३ ॥ २४ ॥

भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ।
वशगाः सर्व एवैते बोद्धव्याः समवर्त्तिनः ॥ २५ ॥
एतेषु रोगः क्रमते भेषजं प्रतिहन्यते ।
नैषामन्नानि भुंजीत नचोदकमपि स्पृशेत् ॥ २६ ॥

समवर्त्तिन इति यमस्य । अन्ये तु 'समवर्त्तिन्' शब्देन कालमृत्युं ब्रुवते । 'च' शब्देनोक्तवक्ष्यमाणसकलारिष्टग्रहणं कुर्वन्ति । तेन, सर्वमेव रिष्टं कालमृत्योः परं भवतीति रिष्टं वर्णयन्ति । अत्र च द्वेषमनु रोगक्रमणम् । निष्फलो भेषजप्रयोगश्चापि स्यादित्याह—एतेष्वित्यादि ।—भेषजं प्रतिहन्यत इति, सम्यक् कृतमपि भेषजं हन्यत इत्यर्थः । नैषामन्नानि भुञ्जीत इति प्रायेण तदन्नस्यारिष्टत्वात् । एवमुदकप्रतिषेधेऽपि बोध्यम् ॥ २५ ॥ २६ ॥

पादाः समेताश्चत्वारः सम्पन्नाः साधकैर्गुणैः ।
व्यर्था गतायुषो द्रव्यं विना नास्ति गुणोदय इति२७

पादा भेषजादयः । साधकैर्गुणैरिति[1] श्रुतेः पर्यवदातत्वमित्यादिभिः षोडशगुणैः संपन्नाः । कस्माद्वैद्यादयो गतायुषो रोगान्न साधयन्तीत्याह—द्रव्यं विना नास्ति गुणोदय इति । द्रव्यं कारणं विना आरोग्यलक्षणो गुणोदयो नास्ति । कारणं चेहारोग्योत्पत्तौ अगतायुष्ट्वम् । तच्च नास्तीति भावः ॥ २७ ॥

परीक्ष्यमायुर्भिषजा नीरुजस्यातुरस्य च ।
आयुर्ज्ञानफलं कृत्स्नमायुर्ह्यनुवर्त्तते[2] ॥ २८ ॥

तत्र श्लोकः ॥

क्रियापथमतिक्रान्ताः केवलं देहमाप्लुताः ।
चिह्नं कुर्वन्ति तद्दोषा यदरिष्टं निरुच्यते ॥ २९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते अणुज्योतीयेन्द्रियं नामैकादशोऽध्यायः ।

आयुर्ज्ञानफलं विद्यमानायुषि भेषजदानात् । रिष्टलक्षणमाह—क्रियापथमतिक्रान्ता इत्यादि । आप्लुता इति गताः ।

१ साधनैर्गुणैरिति पाठान्तरम् । २ विद्यमानमविद्यमानं च द्विविधमायुस्तस्य ज्ञानम्, तत्र विद्यमानायुषो ज्ञाने भेषजदानादेव आयुषो रक्षणं भवतीत्यतः साधूक्तमायुर्ज्ञानफलमायुरिति ।

दूतादिगतरिष्टलक्षणमेतन्न भवति । किन्तु शरीररिष्टलक्षणम् । तेन व्याप्तिर्लक्षणस्य वाच्या । सर्वरिष्टव्यापकं तु लक्षणम् । यथा—अन्तर्गतस्य लिङ्गमिति तच्च 'इन्द्रिय' पदेनैवोक्तमिति । प्रथमाध्याय एव 'इन्द्रिय' पदव्याख्या प्रोक्ता । ननु निर्निमित्तं रिष्टमित्युक्तम् । इह दोषजन्यत्वं रिष्टानामुच्यत इति न कथं विरोधः । निर्निमित्तत्वं ह्यनुपलभ्यमाननिमित्तता । तस्मान्न विरोधः ॥ २८ ॥ २९ ॥

इति चरकचतुराननश्रीमचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामणुज्योतीयेन्द्रियव्याख्या ॥

---

## द्वादशोऽध्यायः ।

अथातो गोमयचूर्णीयमिन्द्रियं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
यस्य गोमयचूर्णाभं चूर्णं मूर्धनि जायते ।
सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥ ३ ॥
निकषन्निव यः पादौ च्युतांसः परिधावति ।
विकृत्या न स लोकेऽस्मिंश्चिरं वसति मानवः ॥४॥
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ।
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ॥ ५ ॥

पारिशेष्याद्गोमयचूर्णीयमुच्यते । चूर्णमित्यस्य विशेषणं सस्नेहमिति । निकषन्निवेति घर्षन्निव । विकृत्येत्यनेन पादाद्यवघर्षणादि निषेधयति । 'पूर्वमुरः शुष्यति' इत्यभिधानादेव शेषगात्रार्द्रतायां लब्धायां पुनः 'आर्द्रेषु सर्वगात्रेषु' इति वचनात् विशेषेणापरगात्राणामार्द्रतां दर्शयति ॥ १—५ ॥

यमुद्दिश्यातुरं वैद्यः संवर्त्तयितुमौषधम्[३] ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥ ६ ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम्॥७॥
आहारमुपयुञ्जानो भिषजा सूपकल्पितम् ।
यः फलं तस्य नाप्नोति दुर्लभं तस्य जीवितम् ॥८॥

यमुद्दिश्येति यस्यार्थे । सिद्धमित्यनेन रूपेण बहुशो ज्ञातम् । 'आहारम्' इत्यावरिष्टं रोगविषयम् । तेन 'इष्टं च गुणसंपन्नम्' । इत्यादिग्रन्थोक्तेन स्वस्थविषयेणारिष्टेन समं न पौनरुक्त्यम् ॥ ६—८ ॥

दूताधिकारे वक्ष्यामो लक्षणानि मुमूर्षताम् ।
यानि दृष्ट्वा भिषक् प्राज्ञः प्रत्याख्यायादसंशयम्॥९॥

मुक्तकेशेऽथवा नग्ने रुदत्यप्रयतेऽथवा[१] ।
भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत् ॥ १० ॥
सुप्ते भिषजि ये दूताः छिन्दत्यपि च भिन्दति ।
आगच्छन्ति भिषक् तेषां न भर्त्तारमनुव्रजेत् ॥११॥
जुहुत्यग्निं तथा पिण्डं पितृभ्यो निर्वपत्यपि ।
वैद्ये दूताय आयान्ति ते घ्नन्ति प्रजिघांसवः ॥१२॥

अप्रयत इति अपवित्रे । सुप्त इत्यादि । न भर्त्तारमिति न दूतप्रेषकमातुरमित्यर्थः । न प्रजिघांसवश्च भवन्ति । न च शक्त्या दूता घ्नन्ति । अथो प्रजिघांसवो घ्नन्तीति चोक्तम् । दूताश्च यद्यपि रोगिहितमिच्छन्ति । तथापि यथाऽऽतुरस्य विनाशो भवति तथा दैवप्रेरिताः सन्तः आगच्छन्तो दूताः प्रजिघांसव इव तथा घ्नन्तीवेति कृत्वा प्रजिघांसवो घ्नन्तीत्युच्यते । तेन 'इव' शब्दो लुप्तनिर्दिष्टो द्रष्टव्यः ॥९—१२॥

कथयत्यप्रशस्तानि चिन्तयत्यथवा पुनः ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ १३ ॥
मृतदग्धविनष्टानि भजति व्याहरत्यपि ।
अप्रशस्तानि चान्यानि वैद्ये दूता मुमूर्षताम् ॥ १४ ॥
विकारसामान्यगुणे देशे कालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १५ ॥

चिन्तयत्यप्रशस्तानीति सम्बन्धः । व्याहरत्यपि वैद्ये मृतदग्धविनष्टानीति योजना । विकारसामान्यगुणो देशो यथा रक्तपित्ते ज्वलनसन्निहितो देशः । विकारसामान्यगुणः कालो यथा रक्तपित्ते मध्याह्न इत्यादि ज्ञेयम् ॥ १३—१५ ॥

दीनभीतद्रुतत्रस्तां मलिनामसतीं स्त्रियम् ।
त्रीन् व्याकृतांश्च पण्डांश्च दूतान्विद्यान्मुमूर्षताम्॥१६
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा ।
संप्रेक्ष्य चोग्रकर्माणं न वैद्यो गन्तुमर्हति ॥ १७ ॥
आतुरार्थमनुप्राप्तं खरोष्ट्ररथवाहनम् ।
दूतं दृष्ट्वा भिषग्विद्यादातुरस्य पराभवम् ॥ १८ ॥
पलालबुसमसीसास्थिकेशलोमनखद्विजान्[२] ।
मार्जनीं मुसलं शूर्पमुपानच्चर्म विच्युतम् ॥ १९ ॥
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्टमश्म च ।
तत्पूर्वदर्शने दूता व्याहरन्ति मुमूर्षताम् ॥ २० ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ २१ ॥
तथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा ॥ २२ ॥
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ।
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान्॥२३॥

---

१ अन्तर्गतस्येति पाठान्तरम् । २ सद्भावान्नेति न समीचीनं पाठान्तरम् । ३ सम्पादयितुमौषधमिति पाठान्तरम् ।

१ व्यजल्पयतेऽथवेति पाठान्तरम् । २ पलालबुषमांसास्थिकेशलोमनखद्विजानिति पाठान्तरम् ।

स्पर्शो वा विपुलः क्रूरो यद्वान्यदशुभं भवेत्।
तत्पूर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ॥२४॥

त्रीनिति त्रिसंख्या एव दूता अप्रशस्ताः। षण्डा नपुंसकाः। अङ्गव्यसनी छिन्ननासादिः। उग्रकर्मा मारणाद्यकार्यप्रवृत्तः। पलालेत्यादौ तृणकाष्ठादि परिस्पृशो दूताः। तत्पूर्वदर्शन इति वैद्यपूर्वदर्शने पलालबुपादीनि स्पृशन्तो व्याहरन्तीति योजना। प्रेतालङ्कारमेव न्यस्तं पश्येत् यस्मिंस्तं च नानुव्रजेदिति सम्बन्धः। तद्वादीनि भिन्नादिवादीनि। तीव्र इति इन्द्रियोद्वेजकः। स्पर्शो विपुलो यथा तीव्रोग्रादिस्पर्शः। तत्पूर्वमिति दूतवचनात् पूर्वम्। अभितो वाक्यमिति सर्वभूतकालवचनम्[1]। व्याहृतमिति आतुरावस्थाकथनम्॥१६—२४

दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत्॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम्।
पथ्यातुरकुलानांच वक्ष्याम्यौत्पातिकं पुनः॥ २५॥
अवक्षुतमथोत्क्रुष्टं स्खलनं पतनं तथा।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम्॥ २६॥
वस्त्रोष्णीषोत्तरासङ्गच्छत्रोपानद्युगाश्रयम्।
व्यसनं दर्शनं चापि मृतव्यसनिनां तथा॥ २७॥
चैत्यध्वजपताकानां पूर्णानां[2] पतनानि च।
हतानिष्टप्रवादाश्च भूषणं भस्मपांशुभिः॥ २८॥
पथिच्छेदो विडालेन शुना सर्पेण वा पुनः।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति॥२९॥
शयनासनयानानामुत्तानानां प्रदर्शनम्।
इत्येतान्यप्रशस्तानि सर्वाण्याहुर्मनीषिणः॥ ३०॥
एतानि पथि वैद्येन पश्यतातुरवेश्मनि।
शृण्वता च न गन्तव्यं तदागारं विपश्चिता॥ ३१॥
इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम्॥
इमामपि च बुध्येत गृहावस्थां मुमूर्षताम्॥ ३२॥

औत्पातिकमिति अरिष्टसूचकनिमित्तम्। अवक्षुतं छिक्का। उत्क्रुष्टं संत्रस्तरुतम्। प्रतिषेधो मा गच्छ इत्येवंरूपः। व्यसनं वस्त्रादीनां यत् स्फुटनादि। व्यसनीति व्यङ्गः। कलहवान् वा। पूर्णाः पूर्णकुम्भादयः। भूषणं भस्मपांशुभिरिति भस्मपांश्ववकिरणम्। पथिच्छेद इति विडालादिभिर्मार्गलङ्घनम्। मृगद्विजाः क्रूराः शृगालगृध्रादयः। दीप्ता दिक्। यस्यां सूर्यो वर्त्तते। किम्वा, दक्षिणा दिक् दीप्तोच्यते। शयनं खट्वादि। आसनं पीठादि॥ २४—३२॥

प्रवेशे पूर्णकुम्भाग्निमृद्बीजफलसर्पिषाम्।
वृषब्राह्मणरत्नान्नदेवतानां विनिर्गतिम्॥ ३३॥

अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च।
भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति॥ ३४॥
छिन्नभिन्नावदग्धानि भग्नानि मृदितानि च।
दुर्बलानि च सेवन्ते मुमूर्षोर्वेश्मिका जनाः॥ ३५॥
शयनं वसनं यानमन्यं चापि परिच्छदम्।
प्रेतवच्चास्य कुर्वन्ति सुहृदः प्रेत एव सः॥ ३६॥
अन्नं व्यापद्यतेऽत्यर्थं ज्योतिश्चैवोपशाम्यति।
निवाते सेन्धनं यस्य तस्य नास्ति चिकित्सितम् ३७
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितं इति॥३८॥

विशिखानीति खण्डितानि। किम्वा, विशिकानीति पाठः, तदा शून्यानीत्यर्थः। वेश्मिका जना इति गृहप्रतिष्ठिता जनाः। प्रेतवत् मृतस्य यथा क्रियते तथा। 'सुहृदः' इतिवचनेनासुहृद्भिर्द्वेषादमङ्गलार्थं कृतं प्रेतवत् शयनादि निषेधयति। ज्योतिरग्निः। निवाते सेन्धनश्च सन्यदि निर्वाति ततोरिष्टम्। अमत्राणीति शरावस्थाल्यादीनि॥ ३३—३८॥

भवन्ति चात्र।

यद्वादशभिरध्यायैर्व्यासतः परिकीर्त्तितम्।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत्॥ ३९॥
तत्समासेन वक्ष्यामः पर्यायान्तरमाश्रितम्।
पर्यायवचनं ह्यर्थविज्ञानायोपपद्यते॥ ४०॥
इत्यर्थं पुनरेवेयं विवक्षा नो विधीयते॥ ४१॥
तस्मिन्नेवाधिकारे यत् पूर्वमेवाभिशब्दितम्।
वसतां चरमं कालं शरीरेषु शरीरिणाम्॥ ४२॥

संप्रति द्वादशाध्यायोक्तं रिष्टं दुरधिगमार्थं संग्रहेण स्पष्टीकरणार्थमाह—द्वादशभिरित्यादि।—पर्यायान्तरमाश्रितमिति संज्ञान्तरेण कीर्तितम्। अर्थविज्ञानायेति पूर्वाभिधानात् शब्दस्यानेकार्थाभिधायित्वादिना यत्र सन्देहो मिथ्याज्ञानं वा भवति। तस्य शब्दान्तरेणाभिधानादुक्तार्थो भवतीति॥ ३९—४२॥

अभ्युग्राणां विनाशाय देहेभ्यः प्रविवत्सताम्।
इष्टांस्तितिक्षतां प्राणान्कान्तं वासं जिहासताम् ४३
तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्।
विनाशायेह रूपाणि यान्यवस्थान्तराणि च॥४४॥
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम्॥४५॥
प्राणाः समुपतप्यन्ते विज्ञानमुपरुध्यते।
वमन्ति बलमङ्गानि चेष्टा व्युपरमन्ति च॥ ४६॥
इन्द्रियाणि विनश्यन्ति खिलीभवति चेतना।
औत्सुक्यं भजते सत्वं चेतोभीराविशत्यपि॥४७॥
स्मृतिस्त्यजति मेधा च ह्रीश्रियौ चापसर्पतः।
उपप्लवन्ते पाप्मान ओजस्तेजश्च नश्यति॥ ४८॥

[1] सर्वभूतकालवचनमित्यनन्तरं वाक्यमित्यधिकः पाठो दृश्यते क्वचित्। [2] चूर्णानामिति पाठान्तरम्।

शीलं व्यावर्त्ततेऽत्यर्थं भक्तिश्च परिवर्त्तते।
विक्रियन्ते प्रतिच्छायाश्छायाश्च विकृतिं प्रति॥४९॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगुपक्षयम्॥५०॥
ऊष्माणः प्रलयं यान्ति विश्लेषं यान्ति सन्धयः।
गन्धा विकृततां यान्ति भेदं वर्णस्वरौ तथा॥५१॥
वैवर्ण्यं भजते कायः कायच्छिद्रं विशुष्यति।
धूमः सञ्जायते मूर्ध्नि दारुणाख्यश्च चूर्णकः॥५२॥
सततस्पन्दना देशाः शरीरे येऽभिलक्षिताः।
ते स्तम्भानुगताः सर्वे न चलन्ति कथंचन॥५३॥
गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः।
विपर्यासेन वर्त्तन्ते स्थानेष्वन्येषु तद्विधाः॥५४॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते।
जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्धनि॥५५॥
भेषजानि न संवृत्तिं प्राप्नुवन्ति यथारुचि।
यानि चाप्युपपद्यन्ते तेषां वीर्यं न सिध्यति॥५६॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः।
क्षिप्रं समभिवर्त्तन्ते प्रतिहत्य बलौजसी॥५७॥
शब्दः स्पर्शो रसो रूपं गंधश्चेष्टा विचिन्तितम्।
उत्पद्यन्तेऽशुभान्येव प्रतिकर्मप्रवृत्तिषु॥५८॥
दृश्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते।
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते॥५९॥
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्द्धते।
कृत्स्नमौत्पातिकं घोरमरिष्टमुपलक्ष्यते॥६०॥

अभ्युद्यतानामिति अभ्युद्गतानाम्। प्रविवत्सतामिति प्रवस्तुमुद्यतानाम्। 'कान्तं वासम्' इत्यनेन सर्वप्राणिनामेव सर्वावस्थासु शरीरं काम्यं भवतीति दर्शयति। स्वकान्तमपि शरीररूपं वासं जीवितं वा बलादेव कर्मणा त्यज्यमानमपि इहोपचारात् 'इव' शब्दलोपाद्वा स्वतन्त्रेण निर्दिश्यते—यथा जिहासतामिति तथा तितिक्षतामिति। तन्त्रं शरीरम्। तस्य यन्त्रं शिरास्नाय्वादिरूपं तन्त्रयन्त्रम्। तमोऽन्त्यमिति मरणरूपं तमः। विनाशायेह रूपाणीति प्राणसमुपतापादीनि। खिलीभवतीति अपथग्राहिणी भवति। पाप्मान इति पापजनितरोगाः। अधर्माश्च क्रियाः। छायाश्च विकृतिं प्रतीति गच्छन्तीति शेषः। तेन प्रत्येकं छाया विकृतिं गच्छतीत्यर्थः। धूमः संजायते मूर्ध्नीति प्रकृतं वाष्पनिर्गमं विना बहलो धूम इति। दारुणाख्यश्च चूर्णक इति "यस्य गोमयचूर्णाभम्" इत्यादिग्रन्थोक्तश्चूर्णकः। स्थानेष्वन्येषु तद्विधा इति शरीरान्तरदेशेषु। बहुवचनेन स्नेहादयो विपर्यासेन वर्त्तन्त इत्यर्थः। संवृत्तिमिति निष्पत्तिम्। उपपद्यन्ते सिध्यन्ति। नानाप्रकृतय इति परस्परं विरुद्धस्वभावाः। क्रिया इति प्रतिक्रियाः। प्रतिकर्मप्रवृत्तिश्चिकित्साप्रवृत्तिः। औत्पातिकमिति आकस्मिकम्। तस्य विशेषणमरिष्टमिति। तेन अरिष्टमौत्पातिकमिति फलति॥४३—६०॥

इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम्॥
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम्।
मरणायेह रूपाणि पश्यतापि भिषग्विदा॥६१॥
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम्।
पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातकम्॥६२॥
आतुरस्य भवेद्दुःखमथवान्यस्य कस्यचित्।
अब्रुवन्मरणं तस्य नैनमिच्छेच्चिकित्सितुम्॥६३॥

संप्रति ज्ञातस्य रिष्टस्य यथार्हप्रकाश्यत्वम्। तदाह—मरणायेत्यादि—आतुरस्योपघातकमिति योज्यम्। भवेद्दुःखमन्यस्येति संबन्धः॥६१—६३॥

यस्य पश्येद्विनाशाय लिङ्गानि कुशलो भिषक्।
लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता॥६४॥
लिङ्गान्यारोग्यमागन्तु वक्तव्यं भिषजा ध्रुवम्।
दूतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः॥६५॥

हन्त मरणं चेदातुरस्य भावि नोच्यते। तत् किमारोग्यमपि भावि न वक्तव्यमेवेत्याह—लिङ्गेभ्य इत्यादि।—मरणमाख्यापयन्तीति मरणाख्याः। तेभ्यो विपरीतानि आरोग्यसूचकानि। आगन्त्विति पश्चात्कालभावि। दूतैरौत्पातिकैरिति।—औत्पातिकैर्भावैः शुभसूचनार्थमकस्मादुत्पन्नैर्भावैः। सामान्येन शुभाशुभसूचकं यदकस्मादुद्भवति तदौत्पातिकमुच्यते। द्रव्यसंपत्तिलक्षणैरित्यन्ते आरोग्यमागन्तु वक्तव्यमिति योजना॥६४॥६५॥

आतुराचारशीलेष्टद्रव्यसम्पत्तिलक्षणैः।
स्वाचारं हृष्टमव्यङ्गं यशस्यं शुक्लवाससम्॥६६॥
अमुण्डमजटं दूतं जातिवेशक्रियासमम्।
अनुष्ट्रखरयानस्थमसन्ध्यास्वग्रहेषु च॥६७॥
अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु च।
विना चतुर्थीं नवमीं विना रिक्तां चतुर्दशीम्॥६८॥
मध्याह्नं चार्धरात्रं च भूकम्पं राहुदर्शनम्।
विना देशमशस्तं च शस्तौत्पातिकलक्षणम्॥६९॥

शुभलक्षणं स्वाचारमित्यादिना ब्रुवते। अमुण्डमिति सशिखकृतवपनोऽभिप्रेतः। जात्यादिभिरातुरेण सह समो जातिवेशक्रियासमः। अग्रहेष्विति अप्रशस्तस्थानस्थितक्रूरग्रहानधिष्ठितेष्वित्यर्थः। अदारुणेषु नक्षत्रेषु अनुग्रेषु ध्रुवेषु चेति। दारुणानीति तीक्ष्णानि। यदुवाच वराहः—"मूलाशिवाशक्रभुजगाधिपानि तीक्ष्णानि" इति,—शिवाऽऽर्द्रा। शक्रो ज्येष्ठा। भुजगाधिपमाश्लेषा। उग्राणि च वराहोक्तानि यथा—"उग्राणि पूर्वभरणीपित्र्याणि" इति। पूर्वाणि—पूर्वाफाल्गुनी, प्रतिक्रियाः।

१ त्रीण्युत्तराणि तेभ्यो रोहिण्यश्च ध्रुवाणीति वृ० सं० उत्तराणि उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदम्।

पूर्वाषाढा पूर्वाभाद्रपदम् । पित्र्यं मघा । वराहोक्तदारुणादीनि नक्षत्राणि वर्जयित्वाऽन्येषु नक्षत्रेषु दूता आगताः शुभा भवन्ति । रिक्तामिति चतुर्थ्यादिविशेषणम् । चतुर्थी नवमी चतुर्दशी रिक्तोच्यते । तथा रिक्तेति विशेषणेन चतुर्थ्यादीनां निष्फलत्वसूचनेन कर्मारम्भं प्रत्यनुपादेयतोपदिश्यते । शस्तमौत्पातिकमाकस्मिकं लक्षणं यस्य तच्छस्तौत्पातिकलक्षणम् ॥ ६६—६९ ॥

दूतं प्रशस्तमव्यग्रं निर्दिशेदागतं भिषक् ।
दध्यक्षतद्विजातीनां वृषभाणां नृपस्य च ॥ ७० ॥
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ।
सुरध्वजपताकानां फलानां यावकस्य च ॥ ७१ ॥
कन्यापुंवर्धमानानां बद्धस्यैकपशोस्तथा ।
पृथिव्या उद्धृतायाश्च वह्नेः प्रोज्ज्वलितस्य च ॥७२॥
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ।
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ॥ ७३ ॥
नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रियास्तथा ।
जीवञ्जीवकसिद्धार्थसारसप्रियवादिनाम् ॥ ७४ ॥
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ।
मत्स्याजद्विजशङ्खानां प्रियङ्गूनां घृतस्य च ॥ ७५ ॥
रोचिष्कादर्शसिद्धानां रोचनायाश्च दर्शनम् ।
गन्धः सुरभिवर्णश्च सुशुक्लो मधुरो रसः ॥ ७६ ॥
मृगपक्षिमनुष्याणां प्रशस्ताश्च गिरः शुभाः ।
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ॥ ७७ ॥
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः ।
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ७८ ॥

दध्यक्षतेत्यादिना मार्गादिषु प्रशस्तदर्शनान्याह । सुरध्वजः शक्रध्वजः । कन्यापुंवर्धमानानामिति । अङ्कारोपिताः कुमार्यः कुमाराश्च वर्द्धमानाः । पुरुषोत्तमवत्समानः । अन्ये तु वर्धमानाः शरावा इत्याहुः । ते चालेपनादिना मण्डिता इति बोद्धव्यम् । एकपशुः श्रेष्ठपशुरित्यर्थः । शकटस्य पूर्णस्य नृभिरिति संबन्धः । वडवायाः स्त्रियाश्च सवत्साया इति योजना । जीवञ्जीवकः पक्षी प्रसिद्धः । प्रियवादी चातकः ॥ ७०—७८ ॥

पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम् ।
मङ्गलाचारसम्पन्नः सातुरो वैश्मिको जनः ॥ ७९ ॥
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ।
धनैश्वर्यसुखावाप्तिरिष्टलम्भः सुखेन च ॥ ८० ॥
द्रव्याणां तत्र योग्यानां योजनासिद्धिरेव च ।
गृहप्रासादशैलानां नागानामृषभस्य च ॥ ८१ ॥
हयानां पुरुषाणां च स्वप्ने समधिरोहणम् ।
सोमार्काग्निद्विजातीनां गवां नृणां पयस्विनाम् ॥८२॥
अर्णवानां प्रतरणं वृद्धिः सम्बाधनिःसृतिः ।
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ॥ ८३ ॥
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ।
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः ॥ ८४ ॥

---

१ अस्मिन् दूतस्य नक्षत्रागमनोपदेशे शुभाशुभकथनप्रसंगात्सूचितान्यस्वस्थनक्षत्रनिमित्तजन्यरिष्टारिष्टमिहोद्दंकयते । यद्यपि वाग्भटाचार्येण वृद्धवाग्भटे निदानस्थानेऽस्य सन्निवेशनं कृतं तथापि शुभाशुभसूचकत्वात्तथा च नियतफलत्वादिह रिष्टप्रकरणेऽस्य निवेशोपि युक्त इति मत्वोद्धरणं कृतम्—

आधानजन्मनिधनप्रत्यराख्यविपत्करे ।
नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा ॥
ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तते ।
भरणीषु च पंचाहात्सप्ताहात्कृत्तिकासु च ॥
त्रिःसप्तरात्रादथवा रोहिण्यामष्टरात्रतः ।
एकादशाद्वा दिवसान्मृगे षण्नवरात्रयोः ॥
पंचाहान्मृत्युरार्द्रायां त्रिपक्षे संशयोऽथवा ।
पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात् ॥
दिवसात्सप्तविंशाहाद्व्यहात्सप्ताहतोऽथवा ।
पुष्याश्लेषासु मरणं चिरेणाऽपि मघासु तु ॥
अवश्यं स्वास्थ्यमाप्नोति द्वादशाहान्न चेन्मृतः ।
फाल्गुन्योः पूर्वयोर्मृत्युरन्ययोस्तु दिनेऽष्टमे ॥
नवमे ह्येकविंशे वा ज्वरः सौम्यत्वमृच्छति ।
हस्तेऽह्नि सप्तमे शांतिश्चित्रायामष्टमेऽथवा ॥
पुनश्चित्रागमे स्वातौ दशाहादथवा त्रिभिः ।
पक्षैर्मृत्युं विशाखासु द्वाविंशेऽहनि निर्दिशेत् ॥
नवमेऽह्नि न चेच्छांतिर्मैत्रे मृत्युस्ततः परं ।
ज्येष्ठायां पंचमे मृत्युरूर्ध्वं वा द्वादशात्सुखं ॥
स्वास्थ्यं दशाहान्मूले न त्रिःसप्ताहेऽथवा गते ।
पूर्वाषाढासु नवमे ततोऽन्यासु तु मासतः ॥
अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवं ।
ज्वरस्तु श्रवणे याति शांतिमेकादशाहतः ॥
आज्येष्ठाहाद्धनिष्ठासु द्वादशाद्वारुणेषु तु ।
षडहे द्वादशाहे वा मृत्युर्भद्रपदासु तु ॥
उत्तरासु द्विसप्ताहात्प्रशमो रेवतीषु च ।
चतुरात्रेऽष्टरात्रे वा क्षेममित्याह हारितः ॥

---

१ आधानं जन्मनक्षत्राद्दशमं नक्षत्रं, निधनं जन्मनक्षत्रात्सप्तमं नक्षत्रं, प्रत्यरः पंचमंनक्षत्रं, विपत्करं तृतीयं नक्षत्रं, जन्मनक्षत्रादिति सर्वत्रानुवर्तनीयं. २ पूर्वा. ३ उत्तरा. ४ अनुराधायां. ५ शततारका. ६ पूर्वाभाद्रपदा. ७ उत्तराभाद्रपदा. ८ आधानजन्मनिधनेतिविशेषनियमः ज्वरस्तु जातः षड्रात्रादिति सामान्यनियमः तेन विशेषेण सामान्यस्यापवादाद्यत्सामान्यं शुभफलदमपि नक्षत्रं विशेषेणार्तस्य जन्मतो दशमं वा सप्तमं पंचमं तृतीयं वा समापतितं चेदशुभफलदं स्यादिति विशेषः तेन शुभफलदमप्यशुभफलदं जातमित्यसम्यगवलोकनेन श्रद्धाव्यामोहो माभवत्वसदेतच्छास्त्रमिति.

स्वप्ने सुमनसां चैव शुक्लानां दर्शनं शुभम् ।
अश्वगोरथयानं च यानं पूर्वोत्तरेण च ॥ ८५ ॥

योजनायां सत्यां सिद्धिः योजनासिद्धिः । संबाधनिःसृतिः सङ्कटनिस्तरणं । द्विषतां चावमर्दनमित्यन्तं स्वप्नेन ज्ञेयम् ॥ ७९—८५ ॥

रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ।
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ॥ ८६ ॥
साध्यत्वं न च निर्वेदस्तदारोग्यस्य लक्षणम् ।
आरोग्याद्बलमायुश्च सुखं च लभते महत् ॥ ८७ ॥

सत्त्वस्य गुणस्य लक्षणैः सह संयोगः सत्त्वलक्षणसंयोगः । न च निर्वेद इत्यात्मन्यनवज्ञा इत्यर्थः ॥ ८६—८७ ॥

इष्टांश्चाप्यपरान् भावान् पुरुषः शुभलक्षणान् ।

तत्र श्लोकः ॥

उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम् ॥ ८८ ॥
दूतस्वप्नान्तरोत्पातयुक्तिसिद्धिव्यपाश्रयम् ।

भवति चात्र ॥

इतीदमुक्तं प्रकृतं यथा तथा
तदन्ववेक्ष्यं सततं भिषग्विदा ।
तथा हि सिद्धिं च यशश्च शाश्वतं
स सिद्धकर्मा लभते धनानि च ॥ ८९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने गोमयचूर्णीयेन्द्रियं नाम द्वादशोऽध्यायः ।

इत्यग्निवेशकृते तंन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थानं सम्पूर्णम् ।

उक्तमित्याद्यध्यायसंग्रहः । दूतादिषु पृथक्कारणारोग्यलक्षणमिह नोक्तं व्यक्तमेव । युक्त्याश्रयं मरणलक्षणं यथा—'यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम्' इत्यादिग्रन्थोक्तम् । सिद्ध्याश्रयं मरणलक्षणं यथा—'विज्ञातम्' इत्यादिग्रन्थोक्तम् । आरोग्यलक्षणं युक्त्याश्रयं सिद्ध्याश्रयं च यथा—'इष्टालम्भः सुखेन च' इति ग्रन्थोक्तम् । इतीत्यादिनेन्द्रियस्थानोक्तं प्रमेयजातं महाफलत्वेनावश्यबोध्यतयोपदर्शयन्नुपसंहरति ॥ ८८—८९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायामिन्द्रियस्थाने गोमयचूर्णीयेन्द्रियव्याख्या ।

# चिकित्सितस्थानम् ।

## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

**अथातोऽभयामलकीयं रसायनपादं व्याख्यास्यामः१**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वस्थानोक्तलक्षणाभावेनावधारितायुष्मद्भावेन[1] चिकित्सा-धर्मार्थयशस्करी कर्त्तव्येत्यनन्तरं चिकित्साभिधायकं स्थान-मुच्यते । रसायनवाजीकरणसाधनमिति यथा चिकित्सोच्यते, तथान्तरमेव वक्ष्यति । तत्राऽपि ज्वरादिचिकित्सायाः प्राक् रसायनवाजीकरणयोर्महाफलत्वेनादावभिधानम् तयोरपि र-सायनमेव वर्षसहस्रायुष्ट्वादिकारणतया महाफलमिति तदभि-धीयते, तत्राऽपि चाभयामलकीयश्चिकित्सास्थानार्थसूत्राभि-धायकतयाऽग्रेऽभिधीयते ॥१-२॥

**चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।**
**प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥**
**विद्याद्भेषजनामानि, भेषजं द्विविधं च तत् ॥ ३ ॥**

तत्रादौ व्यवहारार्थं स्थानाभिधेयस्य भेषजस्य पर्यायानाह—चिकित्सितमित्यादि ।—करोति चैवमादौ प्रधानाभिधेयपर्या-याभिधानम्, यथा निदाने—हेतुरूपादिपर्यायकथनम् । एतच्च पर्यायाभिधानं प्राधान्येन चतुष्पादस्यैव भेषजस्य यदु-क्तम्—"चतुष्पादं षोडशकलं भेषजमिति भिषजो भाषन्ते" । एवमुक्तभेषजाङ्गरूपतया तु स्थावरजङ्गमरूपद्रव्यस्य भेषजस्य भेषजत्वमेवावान्तरस्य व्यवहारकृतं ज्ञेयम् । 'प्रायश्चित्तम्' इति भेषजसंज्ञा प्रायश्चित्तवद्भेषजस्याऽधर्मकार्यव्याधिहरत्वेन ॥३॥

**स्वस्थस्योर्जस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत् ४**

द्वैविध्यं विवृणोति—स्वस्थस्येत्यादि । किञ्चिदिति न सर्वम् स्वस्थत्वेन व्यवह्रियमाणस्य पुंसो जरादिस्वाभाविकव्याधिहर-त्वेन तथाऽप्रहर्षव्ययायक्षयित्वानुपचितशुक्रत्वाद्यप्रशस्तशारीर-भावहरत्वेन 'ऊर्जः' प्रशस्तं भावमादधातीति स्वस्थस्योर्ज-स्करम् 'आर्त्तस्य रोगनुद्' इति विशेषणेन ज्वरादिनाऽऽर्त्तस्य ज्वरादिहरम् 'रोगनुद्' इति वचनेनैवाऽऽर्त्तविशेषणतायां लब्धायां यद् 'आर्त्तस्य' इति करोति, तेन, सहजजरादिकृतां पीडामनुद्वेजिकां परित्यज्य ज्वरादिनाऽस्वाभाविकेन रोगेण पीडितस्येति दर्शयति ॥ ४ ॥

१ पूर्वस्थानोक्तलक्षणाभावेनावधारितायुष्मद्भावेनेतिपूर्वस्थानोक्ता-नामरिष्टाख्यानां लक्षणानामभावेन, अवधारित आयुष्मद्भावो येन-तेन निश्चितायुष्मद्भावेन भिषजेत्यर्थः ।

**अभेषजं च द्विविधं बाधनं सानुबाधनम् ॥ ५ ॥**

भेषजप्रसङ्गादभेषजद्वैविध्यमाह—अभेषजमित्यादि ।—बाधनमिह तदात्वमात्रबाधकम्, यथा—स्वल्पमपथ्यम् सा-नुबाधनं च दीर्घकालावस्थायिकुष्ठादिविकारकारि ॥ ५ ॥

**स्वस्थस्योर्जस्करं यत्तु तद्वृष्यं तद्रसायनम् ।**
**प्रायः, प्रायेण रोगाणां द्वितीयं प्रशमे मतम् ।**
**'प्रायः'शब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत् ॥ ६ ॥**

द्विविधं भेषजमुक्तं विभजते,—स्वस्थेत्यादि ।—'तद्वृष्यं तद्रसायनं प्रायः' इति च्छेदः तद्वृष्यं प्रायो भवति तथा रसायनं तत् प्रायो भवति आर्त्तस्य रोगहरं यद्बाहुल्येन, तत् स्वस्थोर्जस्करमुच्यते, यत्तु द्वितीयमार्त्तरोगहरम्, तत् प्रायेण ज्वरादिशमनं रसायनं वाजीकरणं च भवति, यथा—क्षतक्षी-णोक्तं सर्पिर्गुडादि रसायनं वृष्यं च भवति, तथा पाण्डुरोगोक्तो योगराजो रसायनत्वेनोक्तः, तथा कासाधिकारेऽगस्त्यहरीतकी रसायनत्वेनोक्तेत्याद्यनुसरणीयम्, रसायनोक्तानां च ज्वरादि-हरत्वमत्र सुव्यक्तमेव रसायनग्रन्थेष्वनुब्रुवते यद्व्याधिहरम्, तद्रसायनम् किन्तु शरीरसंयोगदार्ढ्यादीर्घायुःकर्तृत्वसाधारणध-र्मयोगादुपचरितं[1] व्याधिहराणां रसायनत्वमिहोच्यते इति । ननु यदि स्वस्थोर्जस्करमपि व्याधिहरं व्याधिहरं च स्वस्थोर्जस्करम् तत् किं 'किञ्चिद्' इति पदेन भेषजकर्मव्यवस्थादर्शकेन क्रिय-ताम् ? ब्रूमः—बाहुल्येन स्वस्थोर्जस्करत्वं व्याधिहरत्वं च व्यवस्थाप्यते, नचेह सर्वार्तिरोगहरस्य स्वस्थोर्जस्करत्वमिति प्रतिज्ञायते, येन, पाठासप्तकादीनामपि रसायनत्वम् साधा-रणशक्तित्वादार्त्तरोगहरत्वेन यदुच्यते, तदपि रसायनं वाजी-करणं च भवतीति लवमात्रोपदर्शनं क्रियते, तत् स्वस्थार्त्तयो-रुभयार्थकर्तृत्वम् 'प्रायः'[2] शब्दतात्पर्यं विवृणोति—प्राय इ-त्यादि ।—विशेषार्थ इति बाहुल्यार्थ इत्यर्थः ॥ ६ ॥

**दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।**
**प्रभावर्णस्वरौदार्यं देहेन्द्रियबलं परम् ॥ ७ ॥**
**वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात् ।**
**लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥८॥**

रसायनकार्यमाह—दीर्घमित्यादि ।—प्रभादीनां त्रयाणा-मौदार्यं योजनीयम् । वाक्सिद्धिः—यदुच्यते तदवश्यं भव-तीत्यर्थः । प्रणतिर्लोकवन्द्यता कथमेतद्रसायनेन क्रियत इत्याह-लाभेत्यादि ।—रसादिग्रहणेन स्मृत्यादयोऽपि गृह्यन्ते ॥ ७ ॥ ८ ॥

१ उपचरिते इति पाठान्तरम् । २ प्रायेणेत्यादीति पाठान्तरम् ।

अपत्यसन्तानकरं यत्सद्यः संप्रहर्षणम्।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः॥ ९॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते।
जीर्यतोऽप्यक्षयं शुक्रं फलवद्येन दृश्यते॥ १०॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान्।
भवत्यर्च्यो बहुमतः प्रजानां सुबहुप्रजाः॥ ११॥
सन्तानमूलं येनेह प्रेत्य चानन्त्यमश्नुते।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत्॥ १२॥

वाजीकरणकार्यमाह—अपत्येत्यादि।—अपत्यसन्तानोऽपत्यपरम्परा, तेन, पुत्रपौत्रकरमित्यर्थः, वाजीकरणजनितात् शुक्राज्जातः पुत्रः पुत्रजननसमर्थो भवतीत्यर्थः। अतिप्रियत्वं चेष्टोपचितशुक्रतया निरन्तरव्यवायकर्तृत्वात्, यदुक्तम्,—"विरूपमपि योद्धारं नूनमिच्छन्ति पार्थिवाः। व्यवायव्यायतं नूनं धृष्टं पतिमिव स्त्रियः" उपचीयत इति पुष्टिं प्राप्नोति अक्षयमिवाक्षयम् फलवदिति गर्भजनकम् चैत्यो देवतायतनम् अर्चणीयोऽर्च्यः आनन्त्यमिवानन्त्यं दीर्घसन्तानतामित्यर्थः॥९—१२॥

स्वस्थस्योर्जस्करं त्वेतद्द्विविधं प्रोक्तमौषधम्।
यद्व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते॥ १३॥
चिकित्सितार्थं एतावान् विकाराणां यदौषधम्।
रसायनविधिश्चाग्रे वाजीकरणमेव च॥ १४॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात्।
तदसेव्यं निषेव्यं तु प्रवक्ष्यामि यदौषधम्॥ १५॥

चिकित्सित इति ज्वरादिचिकित्सिते ननु रसायनवाजीकरणे अपि ज्वरादिचिकित्सिते एव, तत् किं विशिष्योच्यते—'वक्ष्यते तच्चिकित्सिते' इत्यादि, सत्यम्;—रसायनं वाजीकरणं च ज्वरादिव्याधिहरत्वात् 'चिकित्सित'शब्देनोच्यत इति अथ व्याधिहरत्वाच्चिकित्सिते वक्तव्यत्वाच, रसायनवाजीकरणे क्व नु वक्तव्ये इत्याह—रसायनेत्यादि। विधिर्विधानं रसायनाभिधानमित्यर्थः। अथ इत्यनन्तरम् वाजीकरणं चाग्रेऽभिधास्यत इति शेषः। अभेषजमपि पूर्वोद्दिष्टं विवृणोति—अभेषजमित्यादि।—विपरीतं रोगजननलक्षणार्थकारि॥१३—१५॥

रसायनानां द्विविधं प्रयोगमृषयो विदुः।
कुटीप्रावेशिकं चैव वातातपिकमेव च॥ १६॥
कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम्॥ १७॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे।
दिशि पूर्वोत्तरस्यां तु सुभूमौ कारयेत् कुटीम्॥१८॥

१ अर्घणीयस्तुत्य इति पाठान्तरम्। २ चिकित्सार्थं इति पाठान्तरम्। ३ क्व नेति पाठान्तरम्।

विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम्।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम्॥१९॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम्।
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम्॥ २०॥
अथोदगयने शुक्ले तिथिनक्षत्रपूजिते।
मुहूर्त्तकरणोपेते प्रशस्ते कृतवापनः॥ २१॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः।
विधूय मानसान् दोषान् मैत्रीं भूतेषु चिन्तयन्॥२२॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम्।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम्॥२३॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः।
रसायनं प्रयुञ्जीत तत्प्रवक्ष्यामि शोधनम्॥ २४॥

कुटीप्रवेशेन यत् क्रियते, तत् कुटीप्रावेशिकम्। वातातपसेवयाऽपि यत् क्रियते, तद्वातातपिकम्। त्रिगर्भा प्रथममेकं गृहम्, तस्याभ्यन्तरे द्वितीयम्, एवं त्रिगर्भास्त्रयोगर्भा अन्तराणि यस्यां सा सूक्ष्मलोचनामिति अल्पाहारजालिकाम् शुक्ले शुक्लपक्षे। सज्जा वैद्यादयः स्थिता यस्याः सा तथा। नक्षत्रपूजित इति शुभनक्षत्रयोगात् पूजिते। कृतवापन इति कृतक्षौरः। मानसान् दोषानिति कामक्रोधादीन्। संशोधनैरिति वमनविरेचनास्थापनशिरोविरेचनैः। सुखीत्यरोगः। जातबल इति संशोधनायासहतबलतया संसर्जनादिक्रमेण पुनर्जातबलः। यद्यपीह संशोधनैरिति बहुवचनप्रयोगात् सर्वाण्येव संशोधनानि संमतानि, तथापीह रसायने विशेषेण यौगिकहरीतक्यादिप्रयोग एवोक्तः, अन्ये तु हरीतक्यादिप्रयोगेणैव संशोधनं कर्तव्यमित्याहुः। संशोधनैरिति बहुवचनं पुनर्यावच्छुद्धेर्हरीतक्यादिप्रयोगस्यैव करणं दर्शयति॥ १६—२४॥

हरीतकीनां चूर्णानि सैन्धवामलके गुडम्।
वचां विडङ्गं रजनीं पिप्पलीं विश्वभेषजम्॥ २५॥
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः।
तेन शुद्धशरीराय कृतसंसर्जनाय च॥ २६॥
त्रिरात्रं यावकं दद्यात्पञ्चाहं वापि सर्पिषा।
सप्ताहं वा पुराणस्य यावच्छुद्धेस्तु वर्चसः॥ २७॥
शुद्धकोष्ठं तु तं ज्ञात्वा रसायनमुपाचरेत्।
वयःप्रकृतिसात्म्यज्ञो यौगिकं तस्य यद्भवेत्॥ २८॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम्।
दोषानुलोमिनीं लघ्वीं विद्याद्दीपनपाचनीम्॥२९॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम्।
सर्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम्॥ ३०॥
कुष्ठं गुल्ममुदावर्तं शोषं पाण्ड्वामयं मदम्।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम्॥ ३१॥

१ सूक्ष्मगवाक्षामित्यरुणः। २ सूक्ष्मगवाक्षामित्यरुणः।

हृद्रोगं सशिरोरोगमतीसारमरोचकम्।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम् ॥ ३२ ॥
कफप्रसेकं वैस्वर्य्यं वैवर्ण्यं कामलां क्रिमीन्।
श्वयथुं तमकं छर्दिं क्लैव्यमङ्गावसादनम् ॥ ३३ ॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः।
स्मृतिबुद्धिप्रमोहं च जयेत् शीघ्रं हरीतकी ॥ ३४ ॥
अजीर्णिनो रूक्षभुजः स्त्रीसङ्गविषकर्षिताः।
सेवेरन्नभयामेते क्षुत्तृष्णोष्णार्दिताश्च ये ॥ ३५ ॥
तान् गुणांस्तानि कर्माणि विद्यादामलकीष्वपि।
यान्युक्तानि हरीतक्या वीर्यस्य तु विपर्य्ययः ॥ ३६ ॥
अतश्चामृतकल्पानि विद्यात्कर्मभिरीदृशैः।
हरीतकीनां शस्यानि भिषगामलकस्य च ॥ ३७ ॥

यावकमिति यवान्नम् त्रिरात्रादिविकल्पत्रयं हीनमध्योत्तमशुद्धिविषयम् यद्यपि द्रव्यान्तराणि दशवर्षशतायुष्कररसायनाधिकृतानि सन्ति तथापि हरीतक्यामलकयोरेव रोगहरत्वायुष्करत्वरूपोभयधर्मयोगादध्यायादौ गुणकर्मभ्यामुच्यते तत्रापि "यद्यपि आमलकं वयस्थापनानाम्" इत्युक्तम्, तथापि रोगहरत्वे हरीतक्येवोत्कर्षवतीति कृत्वा हरीतक्यग्रेऽभिहिता। हरीतक्यादिषु पञ्चरसत्वाद्युत्पादोऽदृष्टवशाद्भूतसन्निवेशविशेषप्रभावकृतः तेन, नात्रोपपत्तयः क्रमन्ते। शिवामिति कल्याणकारिणीं प्रशस्तगुणयुक्तत्वात् सर्वरोगप्रशमनीमिति संयोगसंस्कारादिना सर्वरोगहरत्वमभिधायापि कुष्ठादिहन्तृत्वाभिधानं विशेषेण कुष्ठादिहन्तृत्वोपदर्शनार्थम् प्रवर्त्तकत्वेऽप्यतीसारग्रहणीहरत्वं विरुद्धदोषप्रवर्तकतया ज्ञेयम्, यदुक्तम्— "स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते। अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत्" इति। बुद्धिस्मृतिप्रदत्वमभिधायापि स्मृतिबुद्धिप्रमोहहरत्वाभिधानं तत्र विशिष्टशक्त्युपदर्शनार्थम्। 'वीर्यस्य विपर्ययः' इत्यनेनामलकस्य शीतवीर्यत्वमुक्तम्। शस्यानीति अस्थिरहितानि फलानि ॥२५—३७॥

ओषधीनां परा भूमिर्हिमवान् शैलसत्तमः।
तस्मात्फलानि तज्जानि ग्राहयेत्कालजानि तु ॥३८॥
आपूर्णरसवीर्याणि काले काले यथाविधि।
आदित्यपवनच्छायासलिलप्रीणितानि च ॥ ३९ ॥
यान्यजग्धान्यपूतीनि निर्व्रणान्यगदानि च।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म चोत्तमम् ॥४०॥

यद्यपि "हिमवानौषधभूमीनाम्" इत्युक्तम्, तथापि रसायने हिमवतः प्रभावेणैवमेव भेषजानि ग्राह्याणीति दर्शयितुम्, 'ओषधीनाम्' इत्याद्यभिधानम्। काले काले इति फलपाककालमित्यर्थः। यथाविधीति यथा भेषजग्रहणं मङ्गलदेवतार्चनादिपूर्वकम्, तथाऽवश्यं रसायनं कर्तव्यम्। अगदानीत्यनेन पवनदहनाद्यदोषं फलस्य दर्शयति ॥३८—४०॥

पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान्।
हरीतकीसहस्रं च त्रिगुणामलकं नवम् ॥ ४१ ॥
विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम्।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् ॥ ४२ ॥
बिल्वाग्निमन्थश्योनाकं काश्मर्य्यमथ पाटलाम्।
पुनर्नवा शूर्पपर्ण्यौ बलामेरण्डमेव च ॥ ४३ ॥
जीवकर्षभकौ मेदाः जीवन्तीं सशतावरीम्।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च ॥ ४४ ॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत्।
भागान् यथोक्तांस्तत्सर्वं साध्यं दशगुणेऽम्भसि ४५
दशभागावशेषं तु पूतं तं ग्राहयेद्रसम्।
हरीतकीश्च ताः सर्वाः सर्वाण्यामलकानि च ॥४६॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कूर्चनैः।
विनीय तस्मिन्निर्यूहे चूर्णानीमानि दापयेत् ॥ ४७ ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च।
मुस्तानां सविडङ्गानां चन्दनागुरुणोस्तथा ॥ ४८ ॥
मधुकस्य हरिद्राया वचायाः कनकस्य च।
भागांश्चतुष्पलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा ४९
सितोपलासहस्रं तु चूर्णितं तुलयाधिकम्।
तैलस्य चाढकं तत्र दद्यात्त्रीणि च सर्पिषः ॥ ५० ॥
साध्यमौडुम्बरे पात्रे तत्सर्वं मृदुनाग्निना।
ज्ञात्वा लेहमदग्धं च शीतं क्षौद्रेण संसृजेत् ॥५१॥
क्षौद्रप्रमाणं स्नेहार्धं तत्सर्वं घृतभाजने।
तिष्ठेत्संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत् ॥५२॥
या नोपरुन्ध्यादाहारमेकं मात्रा जरां प्रति।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ ५३ ॥
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः।
रसायनमिदं प्राश्य बभूवुरमितायुषः ॥ ५४ ॥
मुक्त्वा जीर्णवपुश्चाग्र्यमवापुस्तरुणं वयः।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः ॥ ५५ ॥
मेधास्मृतिबलोपेताश्चिररात्रं तपोधनाः।
ब्राह्मं तपो ब्रह्मचर्यं चेरुश्चात्यन्तनिश्चयाः ॥ ५६ ॥
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत्।
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते ॥ ५७ ॥
इति ब्राह्मरसायनप्रयोगः ॥

पञ्चानामित्यादौ प्रतिद्रव्यं दशाक्षग्रहणम्, उक्तं हि जतूकर्णे—"इति पञ्चपञ्चमूलानि, तेषां प्रतिद्रव्यं दशपलानि" इति। हरीतकीसहस्रमिति हरीतकीफलसहस्रम्। सूर्पपर्ण्यौ मुद्गमाषपर्ण्यौ। वीरा जालन्धरं शाकम् कूर्चनं जर्जरीयकरणसाधनं शिलापुत्रकमूषलादि। विनीयेति प्रक्षिप्य। प्लवः कैवर्त्तमुस्तकम्। कनकं नागकेशरम्। त्वक् गुडत्वक्। औडु-

१ प्राप्येति पाठान्तरम्।

ज्वर इति तान्नवे । स्नेहार्धमिति सर्पिस्तैलार्धम् । एकमनपराह्णिकमाहारम् ॥४१—५७॥

यथोक्तगुणानामामलकानां सहस्रं पिष्टस्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत् तदामलकसहस्रं स्वरसपरिपीतं स्थिरापुनर्नवाजीवन्तीनागबलाब्रह्मसुवर्चलामण्डूकपर्णीशतावरीशङ्खपुष्पीपिप्पलीवचाविडङ्गस्वयंगुप्ताऽमृताचन्दनागुरुमधुकमधूकपुष्पोत्पलपद्ममालतीयुवतीयूथिकाचूर्णाष्टभागसंयुक्तं पुनर्नागबलासहस्रपलस्वरसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेत् अन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्ववेदविदा,पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसंयुक्तमर्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबलमभिसमीक्ष्य जीर्णे च षष्टिकं पयसा ससर्पिष्कमुपसेव्यमानो यथोक्तान् गुणान् समश्नुते इति ॥ ५८ ॥

भवति चात्र ॥

इदं रसायनं ब्राह्मं महर्षिगणसेवितम् ।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः ॥ ५९ ॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः ।
श्रुतं धारयते सत्त्वमार्षं चास्य प्रवर्त्तते ॥ ६० ॥
धरणीधरसारश्च वायुना समविक्रमः ।
स भवत्यविषं चास्य गात्रे सम्पद्यते विषम् ॥ ६१ ॥

इति ब्राह्मरसायनम् ।

पिष्टस्वेदनविधिनेति यथा पिष्टकं तोयपरिपूरितपात्रोपरिदत्तं तृणादिसंस्थितं स्वेद्यते, तथा तत्स्वेदनीयमित्यर्थः । स्वरसपरिपीतमिति स्वरसभावितम् । ब्रह्मसुवर्चलाद्यौषधान्यायुर्वेदसमुत्थानीये वक्ष्यमाणानि । युवतिर्नवमालिका । अष्टमो भागोऽष्टभागः । क्षुद्रगुडाकृतिमिति फाणिताकृतिम् । अर्द्धकर्षवृद्धेति अर्द्धकर्षात्प्रवृत्ति वर्धयेत् । यथोक्तविधिनेति कुटीप्रावेशिकेन विधिना । यथोक्तान् गुणानिति पूर्वप्रयोगफलश्रुतिपठितान् । धरणीधरसार इति; धरणीधराः पर्वताः, तेषां सारो लौहम्, तद्वत्सार इत्यर्थः । अविषमिति अविषमविकारि ॥५८—६१॥

द्वितीयो योगः ।

बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटलिर्बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ ६२ ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरुः ।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी ॥ ६३ ॥
मुस्तं पुनर्नवा मेदा एला चन्दनमुत्पलम् ।
विदारी वृषमूलानि काकोली काकनासिका ॥६४॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ।
पञ्च दद्यात्तदैकत्र जलद्रोणे विपाचयेत् ॥ ६५ ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् ।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥ ६६ ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्धतुलां भिषक् ।
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत् ॥६७॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् ।
चतुष्पलं तुगाक्षीर्याः पिप्पलीद्विपलं तथा ॥ ६८ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात् ।
इत्ययं च्यवनप्राशः परमुक्तं रसायनम् ॥ ६९ ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते ।
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्द्धनः ॥ ७० ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति ॥ ७१ ॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम् ।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत्पुनर्युवा ॥ ७२ ॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं बलमिन्द्रियाणाम् ।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं
वर्णप्रसादं पवनानुलोम्यम् ॥ ७३ ॥
रसायनस्यास्य नरः प्रसादा-
ल्लभेत जीर्णोऽपि कुटीप्रवेशात् ।
जराकृतं रूपमपास्य सर्वं
बिभर्ति रूपं नवयौवनस्य ॥ ७४ ॥

इति च्यवनप्राशः ॥

पर्ण्यश्चतस्र इति शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी । तामलकी भूम्यामलकी । काकनासा वासाफलका, काकतुण्डक इत्यन्ये । गतरसत्वमिह द्रव्याणां चतुर्भागस्थितजले भवति । निष्कुलमिति निरस्थि । तैलसर्पिषोरिति समासनिर्देशादुभाभ्यामेव द्वादशपलानि पृथक् पृथक् मत्स्यण्डिका खण्डसंहतिः । अत्र षट्पलत्वेन समयोरपि मधुसर्पिषोर्द्रव्यान्तरयुक्तत्वेनाऽविरुद्धम् ॥ ६२ ॥ ७४ ॥

अथामलकहरीतकीनामामलकीविभीतकानां हरीतकीविभीतकानामामलकहरीतकीविभीतकानां वा पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलके स्विन्नानामकुलकानां पलसहस्रमुलूखले संपोथ्य दधिघृतमधुपललतैलशर्करासम्प्रयुक्तं भक्षयेदनन्नभुग् यथोक्तेन विधिना, तस्यान्ते यवाग्वादिभिः प्रत्यवस्थापनमभ्यङ्गोत्सादनं सर्पिषा यवचूर्णैश्च, अपि च रसायनप्रयोगप्रकर्षो द्विस्तावदग्निबलमभिसमीक्ष्य प्रतिभोजनं यूषेण पयसा वा षष्टिकः सस-

१ प्रयोगाल्लभेतेति पाठान्तरम् ।

पिष्कोऽतःपरं यथासुखविहारः कामभक्ष्यः स्यात्, अनेन प्रयोगेण ऋषयः पुनर्युवत्वमवापुः, बभूवुश्चानेकवर्षशतजीविनो निर्विकाराः परं शरीरबुद्धीन्द्रियबलसमुदिताः चेरुश्चात्यन्तनिष्ठंतपः ॥ ७५ ॥

इति चतुर्थामलकरसायनम् ॥

कुकूलकः करीपाग्निः । अकुलकानामिति अनस्थ्नाम् । दध्यादीनामत्र मानं नोक्तम्, तेन,—प्रधानस्य चूर्णस्य दध्यादिभिर्मिलितैः समानमानत्वम् । पललं तिलचूर्णम् । किंवा प्रत्येकमेव दध्यादीनां चूर्णसमत्वम् । 'भक्षयेद्' इति वचनं लेह्येऽपि अल्पाभ्यवहरणमात्रार्थत्वमुपपन्नम् । अनन्नभुगिति सर्वथाऽऽहारान्तराभुक् । तस्मान्त इति, एतत्प्रयोगपरित्यागकाले[1] प्रत्यवस्थापनमिति यवाग्वादिक्रमविशेषणम्, तेन, प्रयोगान्ते यदा अभ्यग्न्युत्सादनं कर्तव्यम्, तदा यवाग्वादिक्रमेणेत्युक्तस्यार्थस्य प्रत्यवस्थापनं क्रियत इत्यर्थः । यूषेण पयसा वेति विकल्पोऽग्निबलापेक्षया ॥७५॥

हरीतक्यामलकविभीतकपञ्चपञ्चमूलनिर्यूहे पिप्पलीमधुकमधूकककाकोलीक्षीरकाकोल्यात्मगुप्ताजीवकर्षभकक्षीरशुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन, क्षीराष्टगुणसंप्रयुक्तेन च सर्पिष्कुम्भं साधयित्वा प्रयुञ्जानोऽग्निबलसमां मात्रां च जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमुष्णोदकानुपानमश्नन् जराव्याधिपाप्माभिचारव्यपगतभयः शरीरेन्द्रियबुद्धिबलमतुलमुपलभ्याप्रतिहतसर्वारम्भः परमायुरवाप्नुयात् ॥ ७६ ॥

इति पञ्चमामलकरसायनम् ॥

अत्र हरीतक्यादौ क्षीरशुक्लाः क्षीरविदारिका; अत्र हरीतक्यादिक्वाथस्य त्वेकभागः, क्षीरस्याष्टौ भागाः । सर्पिष एको भागः । कुम्भो द्रोणद्वयम् । वचनं हि—"द्रोणस्तु द्विगुणः सूर्पो विज्ञेयः कुम्भ एव च" ॥ ७६ ॥

हरीतक्यामलकविभीतकहरिद्रास्थिराबलाविडङ्गामृतवल्लीविश्वभेषजमधुकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधुशर्कराभ्यामपि च सन्नीयामलकस्वरसशतपलपरिपीतमामलकचूर्णमयश्चूर्णचतुर्भागसंप्रयुक्तं पाणितलमात्रं प्रातः प्रातः प्राश्य यथोक्तेन विधिना सायं मुद्गयूषेण पयसा वा सर्पिष्कशालिषष्टिकमश्नीयात्, त्रिवर्षं प्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति, श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति विषमविषी भवति गात्रे गात्रमश्मवत्स्थिरीभवति, अदृश्यो भूतानां भवति ॥७७॥

भवन्ति चात्र ॥

यथाऽमराणाममृतं यथा भोगवतां सुधा ।
तथाऽभवन्महर्षीणां रसायनविधिः पुरा ॥ ७८ ॥
न जरां न च दौर्बल्यं नातुर्यं निधनं न च ।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा ॥ ७९ ॥
न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते ।
गतिं सदेवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथेति चाक्षयमिति[1] ॥ ८० ॥

तत्र श्लोकः ॥

अभयामलकीयेऽस्मिन् षड्योगाः परिकीर्त्तिताः ।
रसायनानां सिद्धानामायुर्यैरनुवर्त्तते ॥ ८१ ॥

इत्यग्निवेशकृततन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थानेऽभयामलकीयो नाम रसायनपादः प्रथमः ।

अमृतवल्ली गूडूची । सोमवल्को विट्खदिरः । क्षीरसर्पिर्मधुशर्कराणामयश्चूर्णस्य चतुर्थभागः, यत एतदयश्चूर्णचतुर्थभागः, अतएवास्मिन् प्रयोगे जतूकर्णेन, "अयश्चूर्णपादयुक्तम्" इति कृतम् । अमराणाममृतं जरादिहरं नागानां च सुधा जरामरणहरीत्युभयोपादानं दृष्टान्ते ब्रह्म मोक्षः । मोक्षसाधनत्वंचेह रसायनविशुद्धसत्वकर्तृतयोच्यते । अभयेत्यादिना सन्देहनिरासार्थमुक्तप्रयोगसंख्यां दर्शयति । एवमन्यत्रापि संख्याप्रणयनमन्ते ज्ञेयम् ॥ ७७—८१ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायामभयामलकीयरसायनपादव्याख्या ।

---

## द्वितीयः पादः ।

अथातः प्राणकामीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिवापरमदितिसुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रातन्द्राश्रमक्लमालस्यदौर्बल्यापहरमनिलकफपित्तसाम्यकरं स्थैर्यकरमबद्धमांसहरमन्तरग्निसन्धुक्षणं प्रभावर्णस्वरोत्तमकरं रसायनविधानम्, अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुर्नारीणां चेष्टतमाबभूवुः स्थिरसमसुविभक्तमांसाः सुसंहतस्थिरशरीराः सुप्रसन्नबलवर्णेन्द्रियाः सर्वत्राप्रतिहतपराक्रमाः क्लेशसहाश्च सर्व-

---

[1] एतत्प्रयोगपरित्यागकामइति पाठान्तरम् । [2] वचेति पाठान्तरम् ।

[1] चाक्षरमितीति पाठान्तरम् ।

शरीरदोषा भवन्ति ग्राम्याहारात् अम्ललवणकटुकक्षारशुष्कशाकमांसतिलपललपिष्टान्नभोजिनां विरूढनवशूकशमीधान्यविरुद्धाऽसात्म्यरूक्षक्षाराभिष्यन्दिभोजिनां क्लिन्नगुरुपूतिपर्युषितभोजिनां विषमाध्यशनप्रायाणां दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोधशोकलोभायासबहुलानामतोनिमित्तं हि शिथिलीभवन्ति मांसानि, विमुच्यन्ते सन्धयः, विदह्यते रक्तम्, विष्यन्दते चानल्पं मेदः, न सन्धीयतेऽस्थिषु मज्जा, शुक्रं न प्रवर्त्तते, क्षयमुपैत्योजः स एवंभूतो ग्लायति सीदति, निद्रातन्द्रालस्यसमन्वितोऽनारतमाशु चैव निरुत्साहः श्वसिति, असमर्थश्चेष्टानां शारीरमानसानाम्, नष्टस्मृतिबुद्धिच्छायो रोगाणामधिष्ठानभूतो न सर्वमायुरवाप्नोति तस्मादेतान् दोषानवेक्षमाणः सर्वान् यथोक्तानहितानपास्याऽऽहारविहारान् रसायनानि प्रयोक्तुमर्हतीत्युक्त्वा भगवान् पुनर्वसुरात्रेय उवाच—॥ ३॥

पूर्वपादे ह्यामलकरसायनान्युक्तानि, इहाप्यामलकरसायनानि सन्तीति प्राणकामीयमनन्तरमुच्यते । 'प्राणकाम' शब्दमधिकृत्य कृतमिति प्राणकामीयम् । निद्राहरत्वं रसायनस्य वैकारिकनिद्राहरत्वेन, किंवा, देववत् सर्वदा प्रबुद्धो निद्रारहितो भवति । तन्द्रालक्षणं तन्त्रान्तरे—"इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः । निद्रार्तस्येव यस्यैते तस्य तन्द्रां विनिर्दिशेद्" इति । अवद्धमांसमनिविडमांसम् । उत्तमानि प्रभादीनि करोतीति प्रभावर्णस्वरोत्तमकरम् । एवं जातीयकश्च पूर्वनिपातानियमोऽप्रतिबन्धेन चरके अस्ति मयूरव्यंसकादिपाठे द्रष्टव्यः । 'अनेन हि' इत्यादिना पुरावृत्तिकथनेन, रसायनानि वक्ष्यमाणानि प्रवृत्त्यर्थं स्तौति । रसायनप्रयोगे वर्जनीयं ग्राम्याहारादिदूषणत्वेन निर्दिशन्नाह—सर्वे इत्यादि ।—तिलः । सुचूर्णितस्तिलः । पललं तिलचूर्णम् । अतो निमित्तमिति ग्राम्याहारादिकारणकम् । शुक्रं न प्रवर्तत इति नोत्पद्यते शुक्रमित्यर्थः ॥१—३॥

आमलकानां सुभूमिजानां कालजानामनुपहतगन्धवर्णरसानामापूर्णरसप्रमाणवीर्याणां स्वरसेन पुनर्नवाकल्कसंप्रयुक्तेन सर्पिषः साधयेदाढकम्, अतः परं विदारीस्वरसेन जीवन्तीकल्कसंप्रयुक्तेन, अतः परं चतुर्गुणेन पयसा बलातिबलाकषायेण शतावरीकल्कसंयुक्तेन, अनेन क्रमेणैकेकं शतपाकं सहस्रपाकं वा शर्कराक्षौद्रचतुर्भागसंप्रयुक्तं सौवर्णे राजते मार्त्तिके वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत्, तद्यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत्, जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् । अस्य त्रिवर्षप्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति, श्रुतमवतिष्ठते, सर्वामयाः प्रशाम्यन्ति, अप्रतिहतगतिः स्त्रीष्वपत्यवान् भवतीति ॥ ४ ॥

भवति चात्र ॥

बृहच्छरीरं गिरिसारसारं
स्थिरेन्द्रियं चातिबलेन्द्रियं च ।
अधृष्यमन्यैरतिकान्तरूपं[१]
प्रशस्तिपूजासुखचित्तभाक् च ॥ ५ ॥
बलं महद्वर्णविशुद्धिरग्र्या
स्वरो घनौघस्तनितानुकारी ।
भवत्यपत्यं विपुलं स्थिरं च
समश्नतो योगमिमं नरस्येति ॥ ६ ॥

एकैकशः शतपाकमित्यर्थः । एकैकपाकसाधनं पृथक् कर्तव्यम् । तेन, त्रिशतधा पाको भवति । अत्र च कल्कोपलेपादिनोपक्षीणमपि यदवशिष्टं भवति, तदेव ग्राह्यं वचनवलात् । सौवर्णादिपात्रेषु यथापूर्वं वरगुणत्वम्, अन्यथा समानगुणत्वे सर्वेषां मृत्पात्रस्य सुलभत्वे अतिदुर्लभं सौवर्णपात्रं नोपदिशेदिति । यथोक्तेन विधिनेति कुटीप्रावेशिकेन । गिरिसारो लोहम् ॥४—६॥

आमलकघृतम् ॥

आमलकसहस्रं पिप्पलीसहस्रसंप्रयुक्तं पलाशतरुणक्षारोदकोत्तरं तिष्ठेत्, तदनुगतक्षारोदकमनातपशुष्कमनस्थिचूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय शर्कराचूर्णचतुर्भागसम्प्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेः । तस्योत्तरकालमग्निबलसमा मात्रा पौर्वाह्णिकः प्रयोगसात्म्यापेक्षश्चाहारविधिनाऽपराह्णिकस्तस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ७ ॥

पलाशतरुणः तरुणपलाशः । अनेन बालवृद्धपलाशवर्जनमुच्यते । क्षारोदकोत्तरमिति, यथा क्षारोदकमामलकोपरि भवति, तथा कर्तव्यमिति दर्शयति । चतुर्भागः पादः । समानं पूर्वेणेति पूर्वयोगफलश्रुत्यैतदपि युक्तमित्यर्थः ॥ ७ ॥

आमलकालेहः ॥

आमलकचूर्णाढकमेकविंशतिरात्रमामलकसहस्रस्वरसपरिपीतं मधुघृताढकाभ्यां द्वाभ्यामेकीकृतमष्टभागपिप्पलीकं शर्कराचूर्णचतुर्भागसंप्रयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात्तद्वर्षान्ते सात्म्यापेक्षी प्रयोजयेदस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८ ॥

१ अदृश्यमन्यैरतिकान्तरूपमिति पाठान्तरम् ।

आमलकावलेहः ॥

विडङ्गतण्डुलचूर्णानामाढकमाढकं पिप्पलीतण्डुलानामध्यर्धाढकं सितोपलासर्पिस्तैलमध्वाढकैः षड्भिरेकीकृतं घृतभाजनस्थं प्रावृषि भस्मराशाविति सर्वं समानं पूर्वेण यावदाशीः ॥ ९ ॥

विडङ्गावलेहः ॥

यथोक्तगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्, तानि सुस्विन्नशीतान्युद्धृतकुलकान्यापोथ्याढकेन पिप्पलीचूर्णानामाढकेन च विडङ्गतण्डुलचूर्णानामध्यर्धेन चाढकेन शर्कराया द्वाभ्यां द्वाभ्यामाढकाभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढे घृतभाविते कुम्भे स्थापयेदेकविंशतिरात्रमत ऊर्ध्वं प्रयोगः, अस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ १० ॥

वर्षान्ते वर्षाकालान्ते। यावदाशीरिति आशीः फलश्रुतिः। तेन 'तद्वर्षान्ते' इत्यादिग्रन्थयोगविधानसमानं पूर्वेणेति पूर्वयोगफलश्रुतिपर्यन्तं पूर्वयोगेन समानमित्यर्थः ॥८—१०॥

आमलकावलेहः ॥

धन्वनि कुशास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्निदोषे कर्षणवल्मीकश्मशानचैत्योपरावसथवर्जिते देशे यथर्तुसुखपवनसलिलादित्यसेविते जातान्यनिह्नेऽनुपहतान्यनाध्यारूढान्यबालान्यजीर्णान्यधिगतवीर्याणि शीर्णपुराणपर्णान्यसञ्जातान्यपर्णानि[1] तपसि तपस्ये वा मासे शुचिः प्रयतः कृतदेवार्चनः स्वस्ति वाचयित्वा द्विजातीन् चले सुमुहूर्ते नागबलामूलान्युद्धरेत्, तेषां सुप्रक्षालितानां त्वक्पिण्डमाम्रमात्रं अक्षमात्रं वा श्लक्ष्णपिष्टमालोड्य पयसा प्रातः प्रयोजयेत् चूर्णीकृतानि वा पिबेत् पयसा, मधुसर्पिर्भ्यां वा संयोज्य भक्षयेत्, जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् संवत्सरप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ११ ॥

धन्वनीति जाङ्गलदेशे, कर्षणं हलादिना। अनध्यारूढानीति न महता पार्श्वस्थेन वृक्षेणाक्रान्तानि। तपसि माघे। तपस्य इति फाल्गुने। चले सुमुहूर्ते इति इन्द्रे मुहूर्ते। आम्रमात्रमिति पलपरिमाणम् ॥ ११ ॥

नागबलारसायनम् ॥

बलातिबलाचन्दनागुरुधवतिनिशखदिरशिंशपासनस्वरसाः पुनर्नवान्ताश्चौषधयो दश नागबलया व्याख्याताः। स्वरसानामलाभे त्वयं स्वरसविधिः—चूर्णानामाढकमाढकमुदकस्याहोरात्रस्थितं मृदितपूतं स्वरसवत्प्रयोज्यम् ॥ १२ ॥

पुनर्नवान्ता दश पञ्चविरेचनशताश्रितीये।—"अमृताभया धात्री मुक्ताश्रेयसी[1] श्वेतातिरसा मण्डूकपर्णी स्थिरा पुनर्नवा" इति सर्वा वयःस्थापनोक्ताः। नागबलया व्याख्याता इति नागबलावत्तेषामपि प्रयोगः। बलादीनां स्वरसेनैव विधानम्। नागबलावद्भोजनादिकं ज्ञेयम्। स्वरसालाभेऽनुकल्पमाह—स्वरसानामित्यादि ॥ १२ ॥

भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्ले[2] माषपल्ले वा निधापयेत्, तानि चतुर्मासस्थितानि सहे सहस्ये वा मासे प्रयोक्तुमारभेत शीतस्निग्धमधुरोपस्कृतशरीरः। पूर्वं दशभल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत्, तेषां रसमष्टभागावशिष्टं पूतं सपयस्कं पिबेत् सर्पिषान्तर्मुखमभ्यज्य। तान्येकैकभल्लातकोत्कर्षापकर्षेण दशभल्लातकान्यात्रिंशतः प्रयोज्यानि नातःपरमुत्कर्षः प्रयोगविधानेन सहस्रपरो भल्लातकप्रयोगः, जीर्णे सर्पिषा पयसा शालिषष्टिकाशनमुपचारः, प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः, तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ १३ ॥

शुचिर्ज्येष्ठः। शुक्रस्त्वाषाढः। सहोऽग्रहायणः, सहस्यः पौषः, एतच्च भल्लातकं मासचतुष्टयस्थितं यवपल्लादौ, उद्धृतमात्रं[3] न प्रयोज्यम्, किंतु शीतल एव काले, शीतगुणयुक्ते शरीरे च। मुखदाहपरिहारार्थं सर्पिषान्तर्मुखमभ्यज्येति। नातःपरमिति त्रिंशतः परेण प्रयोगो न भल्लातकस्य। सहस्रपरो भल्लातकप्रयोग इति उपयुक्तभल्लातकसंपूर्णं यदा सहस्रं पूर्यते, तदैवोपरमः कर्तव्यः, सहस्रादर्वागपि च प्रयोगपरित्यागः प्रकृत्याद्यपेक्षया भवत्येव, सहस्रसंख्यापूरणं चेहैकेन वर्धनह्रासक्रमेण भवति, तेन पुनर्वृत्त्या च त्रिंशत्पर्यन्तम्। तदा हि भल्लातकप्रयोगेऽभ्यासेन चास्य सहस्रसंख्यापूर्णं भवति, अनया रीत्या परित्यागः कर्तव्यः। अन्ये त्वत्र सुश्रुत अर्शश्चिकित्सितोक्तशतपर्यन्तं भल्लातकप्रयोगेण समं विरोधं पश्यन्तः सुश्रुतप्रयोगस्याप्यन्यथा व्याख्यानेन त्रिंशत्कमात्रं प्रयोगमिच्छन्ति। तच्च व्याख्यानं नातिसङ्गतम्, किंच सहस्रद्वयस्य तत्रोपयोगो विहितः, अत्र सहस्रपर्यन्तः प्रयोगः। तेन व्याधिविषयोऽन्यएव प्रयोगः, अयं तु रसायनविषयः ॥ १३ ॥

१ असञ्जातफलानीति पाठान्तरम्।

१ जीवन्तीति क्वचित् पाठान्तरम्। २ यवपर्णादाविति पाठान्तरम्। ३ उद्धतमात्रमिति पाठान्तरम्।

भल्लातकक्षीरम् ॥

भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठं निखातस्य स्नेहभावितस्य दृढस्योपरि कुम्भस्यारोप्योडुपेनापिधाय कृष्णमृत्तिकावलिप्तं गोमयाग्निभिरुपस्वेदयेत्तेषां यः स्वरसः कुम्भं प्रपद्येत, तमष्टभागमधुसम्प्रयुक्तं द्विगुणघृतमद्यात्, तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ १४ ॥

भल्लातकक्षौद्रम् ॥

भल्लातकतैलपात्रं सपयस्कं मधुकेन कल्केनाक्षमात्रेण शतपाकं कुर्यात्, समानं पूर्वेण ॥ १५ ॥

पिष्टस्वेदनं तत्, यत्रस्थं पिष्टकमुपस्वेद्यते, तदुपरि पिधानमात्रम्। तस्य सन्धिलेपो न कार्यः, अन्यथोपरिस्थस्य भल्लातकस्य तापाच्छिद्रात् स्नेहो नाधो याति। भल्लातकतैलमिति अनन्तरोक्तविधानेन गृहीतो भल्लातकस्नेहः ॥ १४—१५ ॥

भल्लातकतैलम् ॥

भल्लातकसर्पिर्भल्लातकक्षीरं भल्लातकक्षौद्रं गुडभल्लातकं भल्लातकयूपो भल्लातकतैलं भल्लातकपललं भल्लातकसक्तवो भल्लातकलवणं भल्लातकतर्पणमिति भल्लातकविधानमुक्तं भवतीति ॥ १६ ॥

भल्लातकसर्पिरित्यादयो दशप्रयोगाः। अत्र च यथायोग्यतया भल्लातकसर्पिरादीनां संस्कारः संयोगश्च ज्ञेयः। यदुक्तं जतूकर्णे —"भल्लातकसंयुक्तसंस्कृतानि च घृतक्षीरक्षौद्रगुडपिष्टयूपतैलसक्तुलवणतर्पणानि" इति एवंच सर्पिःक्षीरयूपतैलानां संस्कारो यथान्यायं भल्लातकेन। क्षौद्रपललसक्तुतर्पणानां भल्लातकेन योगः। गुडलवणयोस्तु संस्कारः। संयोगो वा तैले। लवणसंस्कारपक्षे हि लवणसमं भल्लातकमन्तर्धूमदग्धं ग्राह्यम्। अन्ये तु सर्पिरादीनां सर्वेषामेव भल्लातकेन संस्कारं व्याख्यानयन्ति। इह सक्तुप्रयोगो द्रवोत्तरत्वादिविशेषेण कर्मणा भेदनीयः ॥ १६ ॥

भवन्ति चात्र ॥

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥
एते दशविधास्त्वेषां प्रयोगाः परिकीर्तिताः।
रोगप्रकृतिसात्म्यज्ञस्तान् प्रयोगान् प्रकल्पयेत् ॥
कफजो न स रोगोऽस्ति न विबन्धोस्ति कश्चन।
यन्न भल्लातकं हन्यात् शीघ्रं मेधाग्निवर्धनम् ॥
प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ॥
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥
ब्राह्मं तपो ब्रह्मचर्यमध्यात्मध्यानमेव च।
दीर्घायुषो यथाकामं संभृत्य त्रिदिवं गताः ॥

१ ज्ञानमिति पाठान्तरम्।

तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः।
रसायनविधिः सेव्यो विधिवत्सुसमाहितैरिति ॥ १७ ॥

तत्र श्लोकः ॥

रसायनानां संयोगाः सिद्धा भूतहितैषिणा।
निर्दिष्टाः प्राणकामीये सप्तत्रिंशन्महर्षिणेति ॥१८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने प्राणकामीयो नाम रसायनपादो द्वितीयः ॥

अग्निसमानीति दाहस्फोटकर्तृतया। संभृत्येति निष्पाद्य। पादानुसंग्रहे सप्तत्रिंशत्प्रयोगा उक्ताः। तत्र बलादिभिरष्टाभिः, पुनर्नवान्तैश्च दशभिरष्टादशप्रयोगाः। अपरे त्वामलकघृतादयो व्यक्ता एव ॥१७—१८॥

इति महामहोपाध्यायचरकचतुराननश्रीमचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां प्राणकामीयरसायनपादव्याख्या।

## तृतीयः पादः।

अथातः करप्रचितीयं रसायनपादं व्याख्यास्यामः १
इति ह स्माह भगवानात्रेयः ॥ २ ॥

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां पुनः माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढकमेकं ग्राहयेत्, अथ जीवनीयानां बृंहणीयानां स्तन्यजननानां वयःस्थापनानां षड्विरेचनशताश्रितीयोक्तानामौषधगणानां चन्दनागुरुधवतिनिशखदिरशिंशपासनसाराणां चाणुशःक्षिप्तानामभयाविभीतकपिप्पलीवचाचव्यचित्रकविडङ्गानां समस्तानामामलकमेकं दशगुणेनाम्भसा साधयेत्, तस्मिन्नामलकावशेषे रसे सुपूते तान्यामलकचूर्णानि दत्वा गोमयाग्निभिर्वंशविदलशरतेजनाग्निभिर्वा साधयेद्यावदपनयाद्रसस्य, तमनुपदग्धमुपहृत्यायसीषु पात्रीष्वास्तीर्य शोषयेत्, सुशुष्कं कृष्णाजिनस्योपरि दृषदि श्लक्ष्णपिष्टमयःस्थाल्यां निधापयेत्, सम्यक् तच्चूर्णमयश्चूर्णाष्टभागसम्प्रयुक्तं मधुसर्पिर्भ्यामग्निबलमभिसमीक्ष्य प्रयोजयेदिति ॥ ३ ॥

तत्र श्लोकाः।

एतद्रसायनं पूर्वं वसिष्ठः कश्यपोऽङ्गिराः।
जमदग्निर्भरद्वाजो भृगुरन्ये च तद्विधाः ॥
प्रयुज्य प्रयता मुक्ताः श्रमव्याधिजराभयात्।
यावदैच्छंस्तपस्तेपुस्तत्प्रभावान्महाबलाः ॥ ४ ॥

आमलकायसब्राह्मरसायनम् ॥ (१)

आमलकरसायनत्वसाम्यादनन्तरं करप्रचितीयमुच्यते। 'करप्रचितानाम्' इतिपदं स्वयंपतितग्रहणं निषेधयति। माघे फाल्गुने वेतिग्रहणवचनात् तथैव गृहीतानामित्यधिकार इत्यागमादुन्नीयते। स्वरस इहामलकस्यैव भवत्यधिकारात्। शाकी वृहत्पत्रस्तरुः। क्षिप्तानामिति च्छिन्नानाम्। इह गोमयाग्न्याद्युपकरणाऽनियमेनैव शक्त्युत्कर्षो भवतीति ऋषिवचनादुन्नीयते। यदुक्तं—"ऋषयस्त्वेव जानन्ति योगसंयोगजं फलम्" इति। एवमन्यत्रापि इतिकर्तव्यताऽनियमो व्याख्येयः। कृष्णाजिनस्येति कृष्णसाराजिनस्य ॥ १—४ ॥

**तपसा ब्रह्मचर्येण ध्यानेन प्रशमेन च।**
**रसायनविधानेन कालयुक्तेन चायुषा ॥**
**स्थिता महर्षयः पूर्वं, नहि किञ्चिद्रसायनम्।**
**ग्राम्यानामन्यकार्याणां सिध्यत्यप्रयतात्मनाम् ॥**
**इदं रसायनं चक्रे ब्रह्मा वार्षसाहस्रिकम्।**
**जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदम् ॥ ५ ॥**

सम्प्रति रसायनस्य तपोब्रह्मचर्यध्यानादियुक्तस्यैव महाफलत्वं भवतीति दर्शयन्नाह—तपसेत्यादि।—कालयुक्तेन चायुषेति अनियतकालयुक्तेन चायुषेत्यर्थः, नियतकालायुषं प्रति तु न रसायनं फलवदित्युक्तमेव। स्थिता इति दीर्घकालजीविनः। विपर्ययेण तपःप्रभृतिविरहे रसायनस्याऽफलतामाह—न हीत्यादि ॥ ५ ॥

**संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत्सदा।**
**सावित्रीं मनसा ध्यायन् ब्रह्मचारी यतेन्द्रियः ॥**
**संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम्।**
**त्र्यहोपवासी शुक्लस्य[1] प्रविश्यामलकीवनम् ॥**
**बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम्।**
**गृहीत्वा पाणिना तिष्ठेज्जपन् ब्रह्मामृतागमात् ॥**
**तदा ह्यवश्यममृतं वसत्यामलके क्षणम्।**
**शर्करामधुकल्पानि स्नेहवन्ति मृदूनि च ॥**
**भवन्त्यमृतसंयोगात्तानि यावन्ति भक्षयेत्।**
**जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः ॥**
**सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः।**
**स्वयं चास्योपतिष्ठन्ते श्रीर्वेदवाक्यरूपिणी ॥ ६ ॥**

केवलामलकरसायनम् ॥ (२)

ब्रह्मचारित्वेनेन्द्रियनियमे लब्धेऽपि 'यतेन्द्रिय' पदसम्बन्ध इन्द्रियनियमातिशयोपदर्शनार्थः। पौषादिषु संवत्सरान्तत्वं नियमाद्दिनगणनमारभ्य वर्षपूरणेन ज्ञेयम्। फल्गुनीमित्यस्यान्ते प्राप्येति शेषः। "न द्रुममारोहेद्" इत्यस्य, इह 'आरुह्य द्रुमम्' इति वचनेनापवादः। जपन् ब्रह्मेति ओंकारं जपन्। अमृतागमादिति अमृतागमपर्यन्तम्। सौहित्यमेषामिति करणे षष्ठी। वेदवाक्यरूपिणीति तदधिष्ठात्री देवता ॥ ६ ॥

[1] शुक्लश्चेति पाठान्तरम्।

**त्रिफालाया रसे मूत्रे गवां क्षारे च लावणे।**
**क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च ॥**
**तीक्ष्णायसस्य पत्राणि वह्निवर्णानि साधयेत्।**
**चतुरङ्गुलदीर्घाणि तिलोत्सेधतनूनि[1] च ॥**
**ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।**
**तानि चूर्णानि मधुना रसेनामलकस्य च ॥**
**युक्तानि लेहवत्कुम्भे स्थितानि घृतभाविते।**
**संवत्सरं निधेयानि यवपल्ले तदेव च ॥**
**दद्यादालोडनं मासे सर्वत्रालोडयन् बुधः।**
**संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा ॥**
**प्रातः प्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम्।**
**एष एव च लौहानां प्रयोगः संप्रकीर्तितः ॥**
**अनेनैव विधानेन हेम्नश्च रजतस्य च।**
**आयुःप्रकर्षकृत्सिद्धः प्रयोगः सर्वरोगनुत् ॥**
**नाभिघातैर्नचातङ्कैर्जरया[2] न च मृत्युना।**
**स धृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः ॥**
**धीमान् यशस्वी वाक्सिद्धः श्रुतधारी महाधनः[3]**
**भवेत्समां प्रयुञ्जानो नरो लौहरसायनम् ॥ ७ ॥**

लौहादिरसायनम् ॥ (३)

क्षार इति परिस्राविणि क्षारोदके। क्षारे लावण इति ज्योतिष्मत्याः क्षारे। साधयेदिति निर्वापयेत्। तदेवेत्यामलकरसम्। 'लौहानाम्' इत्यनेनैव लौहान्तर्निविष्टयोः सुवर्णरजतयोः ग्राह्ययोर्ग्रहणे सिद्धे पुनस्तयोर्वचनं तयोर्विशेषेणादरोपदर्शनार्थम्। रसायनप्रभावादेव महाधनत्वमिति ज्ञेयम् ॥ ७ ॥

**ऐन्द्रीमत्स्याख्यको ब्राह्मी वचा ब्रह्मसुवर्चला ॥**
**पिप्पल्यो लवणं हेम शङ्खपुष्पी विषं घृतम्।**
**एषां त्रियवकान् भागान् हेमसर्पिर्विषैर्विना ॥**
**द्वौ यवौ तत्र हेम्नस्तु तिलं दद्याद्विषस्य च।**
**सर्पिषश्च पलं दद्यात्तदैकध्यं प्रयोजयेत् ॥**
**घृतप्रभूतं सक्षौद्रं जीर्णे चान्नं प्रशस्यते ॥**
**जराव्याधिप्रशमनं स्मृतिमेधाकरं परम् ॥**
**आयुष्यं पौष्टिकं धन्यं स्वरवर्णप्रसादनम्।**
**परमोजस्करं चैतत् सिद्धमेतद्रसायनम् ॥**
**नैनं प्रसहते कृत्या नालक्ष्मीर्न विषं न रुक्।**
**श्वित्रं सकुष्ठं जठराणि गुल्माः**
**प्लीहा पुराणो विषमज्वरश्च।**
**मेधास्मृतिज्ञानहराश्च रोगाः**
**शाम्यन्त्यनेनातिबलाश्च वाताः ॥ ८ ॥**

ऐन्द्रीरसायनम् ॥ (४)

[1] तिलोत्सेधसमानीति पाठान्तरम्। [2] सबाध्य इति पाठान्तरम्। [3] महाबल इति पाठान्तरम्।

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण च शङ्खपुष्पी ॥ ९ ॥

मेधाकररसायनानि ॥ (५)

मत्स्याख्यको मच्छुरिति[1] लोके ख्यातः । अन्ये तु ऐन्द्रीभेदं मत्स्याख्यकमाहुः । त्रियवकानिति त्रियवप्रमाणतुल्यान् । घृतप्रभृतमित्यत्रविशेषणं कृत्वाभिचारः । मण्डूकपर्ण्या इत्यादयश्चत्वारो योगाः ॥ ८—९ ॥

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ १० ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ।
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ॥
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयान् ।
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोफं गुल्मं वातबलासकम् ॥ ११ ॥

पिप्पलीरसायनम् ॥ (६)

पञ्चेत्यादौ संख्याव्यतिक्रमेणानुक्तसंख्यानामपि पिप्पलीनामुपयोगं सूचयति । यद्यपि "त्रीण्यपि द्रव्याणि नात्युपयुञ्जीत पिप्पलीक्षारलवणानि" इत्युक्तम्, तथापीह द्रव्यान्तरसंयुक्तानां पिप्पलीनामभ्यासे न विरुद्धम् । किंवा, उक्तपिप्पलीरसायनव्यतिरेकेणोत्सर्गापवादन्यायात् स निषेधो ज्ञेयः । किंशुकः पलाशः ॥ १०—११ ॥

क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ।
वर्धयेत् पयसा सार्धं तथा चापनयेत् पुनः ।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ।
पिष्टास्ता बलिभिः सेव्याः शृता मध्यबलैर्नरैः ।
चूर्णीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ।
दशपैप्पलिकः श्रेष्ठो मध्यमः षट्प्रकीर्तितः ।
प्रयोगोऽयं त्रिपर्यन्तः स कनीयान् स चाबलैः ।
बृंहणं स्वर्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ १२ ॥

पिप्पलीवर्धमानं रसायनम् ॥ (७)

पिप्पलीवर्धमानमाह—क्रमवृद्ध्येत्यादि । दशपिप्पल्यो यत्र वर्धन्ते, तद्दिनं दशपिप्पलिकम्, तेन प्रत्यहं दशपिप्पल्यो वर्द्धनीया इत्यर्थः, ततश्चोनविंशतिदिनैर्वृद्धिहानिक्रमेणैकेनैव सहस्रं पूर्णं भवति । चूर्णीकृता इत्यत्र शीतीकृता वा पाठः । पिप्पलीवर्द्धमानक्रमयुक्तमुत्कृष्टं दर्शयन्नपरमपि वर्द्धमानक्रमद्वयं मध्यमत्वावरत्वाभ्यामाह—दशेत्यादि ।—प्रकीर्तित इति षड्वृद्ध्या पूर्वाचार्यैरुक्तः । त्रिपर्यन्त इत्यस्यान्ते पिप्पलीत्रयावस्थानात् पिप्पलीत्रिकेणैव वृद्धिर्भवति, ततो दशपिप्पलीके दशैवान्ते भवन्ति ॥ १२ ॥

जरणान्तेऽभयामेकां प्राग्भुक्ते द्वे विभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां[2] चत्वार्यामलकानि च ।
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ १३ ॥

त्रिफलानां रसायनम् ॥ (८)

त्रिफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाप्लुतम् ।
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम् ॥१४

त्रिफलारसायनम् ॥ (९)

मधुकेन तुगाक्षीर्या पिप्पल्या क्षौद्रसर्पिषा ।
त्रिफला सितया चापि युक्ता सिद्धं रसायनम् ॥१५॥

त्रिफलारसायनम् ॥ (१०)

सर्वलौहैः सुवर्णेन वचया मधुसर्पिषा ।
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ।
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा ।
भवत्यायुःप्रदा धन्या जरारोगनिबर्हणी ॥ १६ ॥

त्रिफलारसायनम् ॥ (११)

जरणान्त इत्यादौ मधुसर्पिर्भ्यामिति अभयां विभीतके आमलकानीत्यनेन च युज्यते । मधुकेत्यादिरेकः प्रयोगः । सर्वलौहैरित्याद्यपरः । 'लौहैः' इत्युक्ते सुवर्णे प्राप्ते 'सुवर्णेन' इतिपदं लौहत्वेनास्य प्रसिद्धस्य ग्रहणनिषेधार्थम् ॥१३—१६॥

अनम्लं च कषायं च कटु पाके शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ।
हेम्नश्च रजतात्ताम्राद्वरात् कृष्णायसादपि ।
रसायनं तद्विधिभिस्तद्वृष्यं तच्च रोगनुत् ।
वातपित्तकफघ्नैश्च निर्यूहैस्तत्सुभावितम् ।
वीर्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥ १७ ॥

शिलाजतुरसायनं दर्शयितुं शिलाजतुनोऽभ्यर्हितस्य गुणानेव तावदाह—अनम्लमित्यादि ।—वरादिति श्रेष्ठात् । सुश्रुते यद्यपि त्रपुसीसम्भवं प्रक्षिप्य षड्विधशिलाजतुसामान्येन रोगे रसायनाधिकारे चोक्तम्, तथापीह रसायनाधिकारे तदधिकृतचतुर्विधमेवोक्तम् ॥ १७ ॥

[1] मत्स्याक्षको मच्छोरिति पाठान्तरम् । [2] मधुसर्पिर्भ्यामिति पाठान्तरम् । [3] बल्यमिति पाठान्तरम् ।

प्रक्षिप्तोद्धृतमप्येनं पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥ १८ ॥
पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह ।
तत्पीतं पयसा दद्याद्दीर्घमायुःसुखान्वितम् ।
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ।
मेधास्मृतिकरं धन्यं क्षीराशी तत्प्रयोजयेत् ।
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः ।
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ।
पलमर्द्धपलं कर्षो मात्रा तस्य त्रिधा मता ॥ १९ ॥

शिलाजतुभावनाविधिमाह—प्रक्षिप्तेत्यादि ।—प्रक्षिप्तानन्तरमुद्धृतं प्रक्षिप्तोद्धृतम् । लौहैः सहेति भागानियमे लोहसमानभागता शिलाजतुनः । प्रयोगः सप्तसप्ताहा इति सप्तसप्ताहव्यापकप्रयोग इत्यर्थः, एवं त्रयश्चैकश्च सप्तक इत्यपि बोद्धव्यम् ॥ १८—१९ ॥

जातेर्विशेषं सविधिं तस्य वक्ष्याम्यतःपरम् ।
हेमाद्याः सूर्यसन्तप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदुमृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥ २० ॥
मधुरश्च सतिक्तश्च जपापुष्पनिभश्च यः ।
कटुर्विपाके शीतश्च स सुवर्णस्य निस्रवः ॥ २१ ॥
रूप्यस्य कटुकः श्वेतः शीतः स्वादु विपच्यते ।
ताम्रस्य बर्हिकण्ठाभस्तिक्तोष्णः पच्यते कटु ॥ २२ ॥
यस्तु गुग्गुलुकाभासस्तिक्तको लवणान्वितः ।
कटुर्विपाके शीतश्च सर्वश्रेष्ठः स चायसः ॥ २३ ॥
गोमूत्रगन्धयः सर्वे सर्वकर्मसु यौगिकाः ।
रसायनप्रयोगेषु पश्चिमस्तु विशिष्यते ।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ।
विशेषतः प्रशस्यन्ते मला हेमादिधातुजाः ॥ २४ ॥

सविधिमिति विधानसहितम् । शिलाजतुविधानं च यथाक्रमं "वातपित्ते" इत्यादि ग्रन्थेन वक्तव्यम् । हेमादिशब्देनेह हेमादिसम्भवस्थानभूतशिलोच्यते । यतः न साक्षात् सुवर्णादिभ्य एव शिलाजतु भवति । मृत्स्नं मसृणम्, अच्छं स्वच्छम् । यस्तु रूप्यभवे कटुरसे विरुद्धो स्वादुः पाक उक्तः । स उत्सर्गापवादन्यायेन ज्ञेयः । उष्णस्य ताम्रभवस्य तथा त्रयाणां च शीतत्वयुक्तानामत्युष्णशीतवीर्यताया अवकाशो नास्ति, यतः, सामान्यगुणकथने 'नात्युष्णशीतम्' इतिपदेन, उष्णस्य शीतस्य च वीर्यस्य प्रकर्षो निषिध्यते । तेन, नात्युष्णशीतत्वं विधीयते । ततश्च शिलाजतुनि वीर्यं शीतं उष्णं वाऽभिहितमपि न बलवद्भवतीति लभ्यते ॥ २०—२४ ॥

शिलाजतुप्रयोगेषु विदाहीनि गुरूणि[1] च ।
वर्जयेत्सर्वकालं तु कुलत्थान्[1] परिवर्जयेत् ॥
ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम् ।
लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते ॥ २५ ॥
पयांसि तक्राणि रसाः सयूषा-
स्तोयं समूत्रा विविधाः कषायाः ।
आलोडनार्थं गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्यम् ॥ २६ ॥
न सोऽस्ति रोगो भुवि साध्यरूपः
शिलाह्वयं यन्न जयेत्प्रसह्य ।
तत्कालयोगैर्विधिभिः प्रयुक्तं
स्वस्थस्य चोर्जां विपुलां ददाति ॥ २७ ॥

शिलाजतुरसायनम् ।

अत्र श्लोकः ॥

करप्रचितिके पादे दश षट् च महर्षिणा ।
रसायनानां सिद्धानां संयोगाः समुदाहृताः ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने करप्रचितिको नाम रसायनपादस्तृतीयः ॥

शिलाजतुप्रयोगेष्विति बहुवचनालोचनाद्भेदेन प्रयोगभेदो बुद्धिस्थीकृत्य ज्ञेयः । शिलाजतुप्रयोगे गुरुनिषेधेऽपि विशेषवचनात्क्षीरादिप्रयोगः । सर्वकालमिति यावद्रसायनाहिता गुणाः सन्ति । केचित्तु यावज्जीवं कुलत्थस्यैव वर्जनमाहुर्ग्रन्थान्तरोक्तम्—"यावज्जीवितं कुलत्थांश्च विवर्जयेत्" इति । शिलाजतुप्रयोगं स्तौति—न सोऽस्तीत्यादि ॥ २५—२८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां करप्रचितीयरसायनपादव्याख्या ।

---

## चतुर्थः पादः ।

अथात आयुर्वेदसमुत्थानीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

ऋषयः खलु कदाचित् शालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टाश्च नातिकल्याः प्रायेण बभूवुः । ते सर्वासामितिकर्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतमात्मदोषं मत्वा पूर्वनिवासमपगतग्राम्यदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममरगन्धर्वकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभवमतिशरण्यं हिम-

---

१ गुरुरिति पाठान्तरम् ।

१ कुलत्थानिति पाठान्तरम् । २ शक्तानीति पाठान्तरम् ।

वन्तममराधिपाभिगुप्तं जग्मुर्भृग्वङ्गिरोऽत्रिवसिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतमप्रभृतयो महर्षयः, तानिन्द्रः सहस्रदृगमरगुरुवरोऽब्रवीत्—३

आयुर्वेदसमुत्थानीयो नाम रसायनपादः पारिशेष्यादुच्यते । आयुर्वेदसमुत्थानमस्मिन्नस्तीति मत्वर्थे 'छ'प्रत्ययेणायुर्वेदसमुत्थानीयः । शालीनत्वं यायावरत्वं च कर्षणकर्मविशेषाऽपरिग्रहात् । सम्प्रत्यमनु उपयुज्यन्त इति साम्प्रतिकाः । नातिकल्या इति नातिनीरोगाः । इतिकर्तव्यता व्यापारः । इन्द्रपर्यायकथनं स्तुत्यर्थम्, स्तुतिश्चेयमिन्द्रस्यायुर्वेदप्रकाशकत्वात् ॥ १—३ ॥

स्वागतम्, ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति मनोग्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यं च ग्राम्यवासकृतमसुखमसुखानुबन्धं च, ग्राम्यो हि वासो मूलमशस्तानां तत्कृतः पुण्यकृद्भिरनुग्रहः प्रजानाम् स्वशरीरमवेक्षितुं कालः, कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणामात्मनः प्रजानां चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रायच्छतां, प्रजापतिरश्विभ्यां च, प्रजापतये ब्रह्मा प्रजानामल्पमायुर्जराव्याधिबहुलमसुखमसुखानुबन्धमल्पत्वादल्पतपोदमनियमदानाध्ययनसंचयं मत्वा पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनं ऊर्जस्करममृतं शिवं शरण्यमुदात्तं मत्तः श्रोतुमर्हथोपधारयितुं प्रकाशयितुं च प्रजानुग्रहार्थमार्षं ब्रह्मचर्यं प्रति मैत्रींकारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षय्यं कर्मेति ॥ ४ ॥

खिला आयुर्वेदोक्तारोग्यसाधनधर्मादिसाधनप्रकाशानुग्रहः कृत एवेत्यर्थः । 'अयम्' शब्द उभाभ्यां शब्दाभ्यां योजनीयः । प्रजापतये ब्रह्मेति च्छेदः । मल्पायुर्मत्त्वेति योजना । अल्पत्वादायुष इति शेषः । तपःप्रभृतीनां सञ्चयोऽस्मिन्नायुषि तत् तथा । 'प्रति' मैत्र्यादिभिः प्रत्येकं संबध्यते । 'अथ' शब्दश्चाधिकारे । मैत्रीकारुण्यमधिकृत्य य ब्रह्मा प्रजापतयेऽदात्, तं तुमर्हथेति[1] योजना । यद्यपि च ऋषिभिर्भरद्वाजद्वारापि दधिगतायुर्वेदः, तथापि ग्रामवासकृतमनोग्लान्या न स्फुटार्थो वर्त्तत इति शङ्कया पुनरिन्द्रस्तमुपादिशति । श्राविणी अलम्बुषा शीतपुष्पा । अतिच्छत्रा मधुरिका ॥४–

तच्छ्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः प्रहृष्टाश्च तद्वचनमभिननन्दुश्चेति ॥ ५ ॥

अथेन्द्रः तदायुर्वेदामृतमृषिभ्यः संक्रम्योवाचैतत्सर्वमनुष्ठेयम्, अयं च कालो रसायनानां दिव्याश्चौषधयो हिमवत्प्रभवाः प्राप्तवीर्याः, तद्यथा ऐन्द्री ब्राह्मी पयस्या क्षीरपुष्पी श्रावणी महाश्रावणी शतावरी विदारी जीवन्ती पुनर्नवा नागबला स्थिरा वचा, छत्रातिच्छत्रा मेदा महामेदा जीवनीयाश्चान्याः पयसा प्रयुक्ताः षण्मासात्परमायुर्वयस्तरुणमनामयत्वं स्वरवर्णसम्पदामुपचयं मेधास्मृतिमुत्तमबलमिष्टांश्चापरान् भावानावहन्ति सिद्धाः ॥ ६ ॥

## इन्द्रोक्तं रसायनम् ।

असुखानुबन्धमिति रोगरूपमसुखमनुबध्नातीत्यसुखानुबन्धम्[2] । मूलमिति कारणम् । कृतः प्रजानुग्रह इति ग्रामे

ब्रह्मसुवर्चला नामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा, आदित्यपर्णी नामौषधिर्या सूर्यकान्तेति विज्ञायते, सुवर्णक्षीरा सूर्यमण्डलाकारपुष्पी, नारी नामौषधिरश्वबलेति विज्ञायते या बल्वजसदृशपत्रा, काष्ठगोधा नामौषधिर्गोधाकारा, सर्पा नामौषधिः सर्पाकारा, सोमो नामौषधिराजः पञ्चदशपर्वा[2] स सोम इव हीयते वर्द्धते च, पद्मा नामौषधिः पद्माकारा पद्मरक्ता पद्मगन्धा च, अजा नामौषधिरजशृङ्गीति विज्ञायते, नीला नामौषधिस्तु नीलक्षीरपुष्पी लताप्रतानबहुला इत्यासामष्टानामोषधीनां यां यामेवोपलभेत, तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां दिग्वासाः शयीत, तत्र प्रलीयते षण्मासेन पुनःपुनः सम्भवति, तस्याजं पयः प्रत्यवस्थापनम्; षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः, स्वयंचास्य सर्ववाचो गतानि प्रादुर्भवन्ति दिव्यं चास्य चक्षुः श्रोत्रं भवति गतिर्योजनसहस्रं दशवर्षसहस्राण्यायुरनुपद्रवं चेति ॥ ७ ॥

ब्रह्मसुवर्चलाप्रभृतयोऽत्रोक्तलक्षणा दिव्यौषधयो नातिप्रसिद्धाः । आदित्यपर्णी सूर्यावर्तमेव देशविशेषजातं केचिद्वर्णयन्ति । अश्वबलेति ज्ञायत इति ऋषिभिरेवानेन नाम्ना ज्ञायते, न लौकिकैर्लोकाऽप्रसिद्धत्वात् । सोम इव वर्द्धते हीयत इति यथा सोमवृद्धिक्षयौ, तथा तत्कालमेव तस्य वृद्धिक्षयौ भवतः । प्रलीयत इति द्रुतो भवति । अन्ये तु मूर्च्छतीति वर्णयन्ति । प्रत्यवस्थापनमिति आहारसेवायां योज्यमित्यर्थः । सर्ववाचो गतानि सर्ववाक्यविशेषाः ॥ ७ ॥

१ सुव इति पाठान्तरम् । २ रोगरूपमनर्थमनुबध्नातीत्यसुखानुबन्धमिति पाठान्तरम् ।

१ अर्हतेति पाठान्तरम् । २ पञ्चदशपर्ण इति पाठान्तरम् ।

भवन्ति चात्र ।

दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः ।
शक्यः सोढुमशक्यस्तु स्यात् सोढुमकृतात्मभिः ८
ओषधीनां प्रभावेण तिष्ठतां स्वे च वर्त्मनि ।
भवतां निखिलं श्रेयः सर्वमेवोपपत्स्यते ॥ ९ ॥
वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः ।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः १०

एतद्दिव्यं रसायनमृषिभिस्त्वद्विधैर्वा सेव्यमिति दर्शयन्नाह—दिव्यानामित्यादि ।—विषयाभिजा इति स्वोचितपुण्यदेशे जाता इत्यर्थः, अपुण्ये तु देशे दिव्यौषधिजन्मैव न भवति, भवन्त्योऽपि निर्वीर्या भवन्तीति भावः ॥ ८—१० ॥

तासु[२] क्षेत्रगुणैस्तेषां मध्यमेन च कर्मणा[१] ।
मृदुवीर्यतया तासां विधिर्ज्ञेयः स एव तु ॥ ११ ॥
पर्येष्टुं ताः प्रयोक्तुं वा ये समर्थाः सुखार्थिनः ।
रसायनविधिस्तेषामयमन्यः प्रशस्यते ॥ १२ ॥

सम्प्रति ब्रह्मसुवर्चलादीनां यथा मृदुवीर्यत्वं भवति, तदाह—तास्वित्यादि ।—क्षेत्रगुणैरिति हिमालयादिप्रशस्तदेशव्यतिरिक्तक्षेत्रधर्मैः । तेषामिति ऋषिव्यतिरिक्तानां वानप्रस्थादीनाम् । मध्यमेन च कर्मणेति असम्यक्प्रयोगेण । किंवा, अनतिमहाद्दष्टेन ॥ ११—१२ ॥

वल्यानां जीवनीयानां बृंहणीयाश्च या दश ।
वयसः स्थापनानां च खदिरस्यासनस्य च ॥ १३ ॥
खर्जूराणां मधूकानां मुस्तानामुत्पलस्य च ।
मृद्वीकानां विडङ्गानां वचायाश्चित्रकस्य च ॥ १३ ॥
शतावर्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च ।
ऋद्ध्या नागबलायाश्च द्वारदाया धवस्य च ॥ १४ ॥
त्रिफलाकण्टकार्योश्च विदार्याश्चन्दनस्य च ।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥ १५ ॥
रसाः पृथक् पृथग्ग्राह्याः पलाशक्षार एव च ।
एषां पलोन्मितान् भागान् पयो गव्यं चतुर्गुणम् १६
द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः ।
तत्साध्यं सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥ १७ ॥
तत्रामलकचूर्णानामाढकं शतभावितम् ।
स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥ १८ ॥
शर्कराचूर्णपात्रं च प्रस्थमेकं प्रदापयेत् ।
तुगाक्षीर्याः सपिप्पल्याः स्थाप्यं संमूर्च्छितं च तत्
सुचौक्षे मार्तिके कुंभे मासार्धं घृतभाविते ।
मात्रामग्निसमां तस्य तत ऊर्ध्वं प्रयोजयेत् ॥ २० ॥
हेमताम्रप्रवालानामयसः स्फटिकस्य च ।
मुक्तावैदूर्यशङ्खानां चूर्णानां रजतस्य च ॥ २१ ॥

१ कर्मणीति पाठान्तरम् । २ तास्विति पाठान्तरम् ।

प्रक्षिप्य षोडशीं मात्रां विहायायासमैथुनम् ।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ २२ ॥
सर्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम् ।
सत्त्वस्मृतिशरीराग्निबुद्धीन्द्रियबलप्रदम् ॥ २३ ॥
परमूर्जस्करं चैव वर्णस्वरकरं तथा ।
विषालक्ष्मीप्रशमनं सर्ववाचोगतप्रदम् ॥ २४ ॥

सिद्धार्थतां चाभिनवं वयश्च
प्रजाप्रियत्वं च यशश्च लोके ।
प्रयोक्तुमिच्छद्भिरिदं यथाव-
द्रसायनं ब्राह्ममुदारवीर्यम् ॥ २५ ॥

इन्द्रोक्तरसायनम् ।

वल्यानामित्यादौ जोङ्गकमगुरु । द्वारदा शाकतरुः, कपिकच्छुर्वा । श्रीपर्णी गाम्भारी । पलाशक्षारः पलाशक्षारोदकम् । सुचौक्षइति सुविशुद्धे । अग्निसमामिति वह्न्यनुरूपाम् । षोडशीमात्रामिति आमलकादिचूर्णयुक्तघृतापेक्षया षोडशभागो हेमादिचूर्णग्राह्यः ॥ १३—२५ ॥

समर्थानामरोगाणां धीमतां नियतात्मनाम् ।
कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ॥ २६ ॥
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः ।
ताभ्यां श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥२७॥
रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥२८॥
सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात् ।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥ २९ ॥
जप[१]शौचपरं धीरं दाननित्यं तपस्विनम् ।
देवगोब्राह्मणाचार्यगुरुवृद्धार्चने रतम् ॥ ३० ॥
आनृशंस्यपरं नित्यं नित्यं करुणवेदिनम् ।
समजागरणस्वप्ननित्यं क्षीरघृताशिनम् ॥ ३१ ॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम् ।
शस्ताचारमसंकीर्णमध्यात्मप्रवणेन्द्रियम् ॥ ३२ ॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम् ।
धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥ ३३ ॥
गुणैरेतैः समुदितः प्रयुङ्क्ते यो रसायनम् ।
रसायनगुणान् सर्वान्यथोक्तान् स समश्नुते ॥ ३४ ॥

आचाररसायनम् ।

कुटीप्रावेशिकरसायनविषयान् वातातपिकरसायनविषयांश्च पुरुषानाह—समर्थानामित्यादि ।—क्षणिनामिति व्यापारकरणं प्रति स्वतन्त्राणाम् । सूर्यमारुतसेवयाऽपि क्रियत इति सौर्यमारुतिकः । सामान्येन रसायनविषयपुरुषगुणानुक्त्वा विशेषेण गुणानाह—सत्यवादिनमित्यादि ।—क-

१ जपेति पाठान्तरम् ।

रुणया सत्वानि पश्यतीति करुणवेदी। असङ्कीर्णः कुलजः। नित्ययोगेन रसायनप्रयोगो यस्य स नित्यरसायनः ॥२६–३४॥

यथास्थूलमनिर्वाह्य दोषान् शारीरमानसान्।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ ३५ ॥
योगा ह्यायुःप्रकर्षार्था जरारोगनिवर्हणाः।
मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम् ॥ ३६ ॥
तदेतन्न भवेद्वाच्यं सर्वमेव हतात्मसु।
अरुजेभ्योऽद्विजातिभ्यः शुश्रूषा येषु नास्ति च ३७

शुद्ध्यैव प्रयतात्मतायां लब्धायां पुनस्तदभिधानमितरमानसगुणेषु प्रयतात्मताया अभ्यर्हिततोपदर्शनार्थम्। अरुजेभ्योऽद्विजातिभ्यः शुश्रूषा येषु पुरुषेषु नास्ति, तेषु चैतन्न वाच्यमिति योजना ॥ ३५—३७ ॥

ये रसायनसंयोगा वृष्या योगाश्च ये मताः।
यच्चौषधं विकाराणां सर्वं तद्वैद्यसंश्रयम् ॥ ३८ ॥
प्राणाचार्यं बुधस्तस्माद्धीमन्तं वेदपारगम्।
अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥ ३९ ॥
अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ।
दक्षस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥४०॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥४१॥
चिकित्सितः शशी ताभ्यां गृहीतो राजयक्ष्मणा।
सोमाभिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥४२॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥ ४३ ॥
एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥ ४४ ॥
ग्रहाः स्तोत्राणि मन्त्राणि तथा नाना हवींषि च।
धूम्राश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥४५॥
प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते।
सौत्रामण्यां च भगवानश्विभ्यां सह मोदते ॥ ४६ ॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः।
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः ॥४७॥
अजरैरमरैस्तावद्विबुधैः साधिपैर्ध्रुवैः।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥ ४८ ॥

संप्रति, रसायनादिसिद्धिर्वैद्याधीना, तेन वैद्यस्तुतिमारभते —य इत्यादि।—प्राणाचार्यमित्यत्रप्राणिवर्यमिति वा पाठः, तत्रप्राणिनां वर्यः श्रेष्ठः प्राणिवर्यः। यज्ञं वहत इति यज्ञवाहौ। तद्यज्ञवाहत्वमेव दर्शयति दक्षस्य हीत्यादि।—पूष्णः सूर्यस्य। भगोऽपि सूर्यभेदः। सोमाभिपतित इति सोमाभिपातनरोगेण[1] पीडित इत्यर्थः। अतिपचित इति वा पाठः, तत्राप्यतिपचनेन सोमपानातियोगं दर्शयति। ग्रहाः सोमपानपात्राणि। स्तोत्राणि स्तवाः स्तावकवाचः। शस्त्राणीति कृत्वा केचित्, शस्यतेऽनेनेति सामगव्यतिरिक्तं स्तोत्रमाहुः। शस्त्राणि अस्त्राण्येव, वषट्युक्तानि शस्त्राणि च यज्ञे कल्प्यन्त एव। धूम्राश्च पशव इति धूम्रवर्णपशवः, एवंवर्णाश्च पशवः श्रेष्ठा भवन्ति। सवन इति यज्ञस्थाने। सौत्रामणी यज्ञविशेषः। अतिशक्तित इति निजशक्तेरप्यतिरेकेण ॥३८—४८॥

मृत्युव्याधिजरावश्यैर्दुःखप्रायैः सुखार्थिभिः।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥४९॥
शीलवान्मतिमान् युक्तो द्विजातिः शास्त्रपारगः।
प्राणिभिर्गुरुवत्पूज्यः प्राणाचार्यः स हि स्मृतः ॥५०॥
विद्यासमाप्तौ भिषजो द्वितीया जातिरुच्यते।
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥ ५१ ॥
विद्यासमाप्तौ ब्राह्मं वा सत्वमार्षमथापि वा।
ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यो द्विजः स्मृतः ॥५२॥
नाभिध्यायेन्न चाक्रोशेदहितं न समाचरेत्।
प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनित्वरम् ॥ ५३ ॥

वैद्यशब्दद्विजशब्दयोः प्रवृत्तिनिमित्तमाह—विद्येत्यादि।—तेन, विद्यायोगाद् वैद्यत्वं तथा विद्यासमाप्तिलक्षणजन्मना द्विजत्वं भवतीत्युक्तं भवति। ब्राह्मं वा आर्षं वा इति विकल्पो वैद्यविशेषाभिप्रायाद्भवति, तयोर्यो नैष्ठिकचिकित्सार्थः, तस्य ब्राह्मम्, इतरस्य तु लोकानुग्राहिण आर्षमिति ज्ञेया ॥ ४९—५३ ॥

चिकित्सितस्तु संश्रुत्य यो वाऽसंश्रुत्य मानवः।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥ ५४॥
भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान्।
आबाधेभ्यो हि संरक्षेदिच्छन् धर्ममनुत्तमम्[2] ॥५५॥
धर्मार्थं नार्थकामार्थमायुर्वेदो महर्षिभिः।
प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम् ॥ ५६ ॥
नार्थार्थं नापि कामार्थमथ भूतदयां प्रति।
वर्त्तते यश्चिकित्सायां स सर्वमतिवर्त्तते ॥ ५७ ॥
कुर्वते ये तु वृत्त्यर्थं चिकित्सा पण्यविक्रयम्।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥ ५८ ॥
दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम्।
छित्त्वा वैवस्वतान् पाशान् जीवितं च प्रयच्छति ५९

[1] सोमाभिपातयोगेनेति पाठान्तरम्। [2] आयुरनुत्तममिति पाठान्तरम्।

धर्मार्थसदृशस्तस्य दाता नेहोपलभ्यते ।
न हि जीवितदानाद्धि दानमन्यद्विशिष्यते ॥ ६० ॥
परो भूतदया धर्म इति मत्वा चिकित्सया ।
वर्त्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते ॥६१॥ इति

तत्र श्लोकौ ॥

आयुर्वेदसमुत्थानं दिव्यौषधिविधिं शुभम् ।
अमृताल्पान्तरगुणं सिद्धं रत्नरसायनम् ॥ ६२ ॥
सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः ।
आयुर्वेदसमुत्थाने तत्सर्वं सम्प्रकाशितम् ॥ ६३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने रसायनाध्याये आयुर्वेदसमुत्थानीयो नाम रसायनपादश्चतुर्थः ।

समाप्तश्चायं रसायनाध्यायः ।

संश्रुत्येति प्रतिज्ञाय । चिकित्सैव पण्यं विक्रेतव्यमिति चिकित्सापण्यम् । ते हित्वेत्यादौ धर्मार्थं क्रियमाणचिकित्सा महाफलत्वेन काञ्चनराशितुल्या इतरा त्वसारकल्पा पांशुराशितुल्या । वैवस्वतक्षयमिति यमगृहम् । संग्रहे रत्नरसायनमिति हेमादिरत्नसंयुक्तं रसायनम् । आयुर्वेदसमुत्थानं प्रकाशितया दिव्यौषधिविध्यादि यदुवाच ब्रह्मचारिभ्योऽमरेश्वरः, तत्प्रकाशितमिति योजना ॥ ५४—६३ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामायुर्वेदसमुत्थानीयरसायनपादव्याख्या ।

समाप्तश्चायं रसायनाध्यायः ।

---

## द्वितीयोऽध्यायः ।

### प्रथमः पादः ।

अथातः संयोगशरमूलीयं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

स्वस्थोजस्करसामान्यात् रसायनमनु वाजीकरणं वाच्यम्, तत्रापि वाजीकरणे प्रवृत्त्युपदर्शकप्रकरणयुक्तत्वादादौ संयोगशरमूलीय उच्यते । संयोगः शरमूलानामस्मिन्नस्तीति संयोगशरमूलीयः ॥ १—२ ॥

वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान् ।
तदायत्तौ हि धर्मार्थौ प्रीतिश्च यश एव च ॥ ३ ॥

अवाजी वाजीवात्यर्थं मैथुने शक्तः क्रियते येन, तद्वाजीकरणम् । उक्तं हि—"वाजीवातिवलो येन यात्यप्रतिहतः स्त्रियम्" इत्यादि । अन्विच्छेदिति रसायनान्महाफलात् तदपेक्षयाऽल्पफलं वाजीकरणं पश्चादिच्छेत् । 'पुरुषः' इति पदेन तरुणपुरुषग्राहिणा बालवृद्धौ निषिद्धव्यवायौ निराकरोति । उक्तं हि—"अतिबालोऽह्यसम्पूर्णसर्वधातुः स्त्रियो व्रजन् । उपतप्येत सहसा तडागमिव काजलम् ॥ शुष्कं रूक्षं यथा काष्ठं जन्तुदग्धं विजर्जरम् । स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियो व्रजन् ।" इति । 'नित्यम्' इत्यनेन, न रसायनवत् सकृत्प्रयोगो वृष्यस्य, किन्त्वाहारवत् सर्वदा सर्वोऽपि प्रयोग इति दर्शयति । आत्मवानित्यनेन, दुरात्मनो[1] वृष्यकरणं निषेधति । स हि वृष्ययोगादुपचितधातुः सन्नगम्यागमनमपि कुर्यात् । धर्मादयो वृष्यायत्ता एव यथा भवन्ति तदाह—पुत्रस्येत्यादि ।—आयतनं कारणम् । एते गुणा इति धर्मादयः, वृष्यप्रयोगजनितः पुत्रो धर्मादीन् पितुः सम्पादयतीत्यर्थः । वाजीकरणं यथेहोक्तम्; तदृतुकाले यथाविधिकृतमैथुनप्रधान्येनाभिप्रेतम्, तेन, तिस्रैषणीये "त्रय उपस्तम्भाः" इत्यादिग्रन्थेन ब्रह्मचर्यं यदुक्तम्, तदृतुकाले यथाविधिकृतमैथुनाप्रतिषेधकमिति न विरोधः ॥३॥

पुत्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः ।
वाजीकरणमग्र्यं च क्षेत्रं स्त्री या प्रहर्षिणी ॥ ४ ॥
इष्टा ह्येकैकशोऽप्यर्था परं प्रीतिकरा स्मृताः ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन व्यवस्थिताः ॥ ५ ॥
रूपाश्रयो हीन्द्रियार्थो यः स प्रीतिजननोऽधिकम् ।
स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ॥ ६ ॥
धर्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ।
सुरूपा यौवनस्था या लक्षणैर्या विभूषिता ॥ ७ ॥
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ।

सर्ववाजीकरणेभ्यः प्रधानरूपं वाजीकरणमाह—वाजीत्यादि ।—क्षेत्रमिव क्षेत्रम्, तत्र शुक्ररूपबीजप्ररोहणात् । अर्था इति शब्दादयः, ते च स्त्रीगताधररसकलविकृतरूपादयः प्रसिद्धा एव । धर्मार्थौ स्त्रीष्विति सहैव पत्न्या धर्मश्चर्य इत्याद्युपदेशाद्धर्मः, तथाऽनुरक्ता स्त्री, गृहिणी अर्थरक्षणादि करोतीत्यर्थं इत्यर्थः । स्त्रिया लक्ष्म्याः संयोगे धनसम्पद्भवतीति स्त्रीषु लक्ष्मीः प्रतिष्ठितेत्यर्थः । वश्या आयत्ता । शिक्षितेति कामशास्त्रोक्तगीतवादित्रलास्यादिचतुष्पष्टिकलाशिक्षिता ॥ ४—७ ॥

नानाभक्त्या तु लोकस्य दैवयोगाच्च योषिताम् ॥८॥
तं तं प्राप्य निवर्त्तन्ते नरं रूपादयो गुणाः ।
वयोरूपमृजाहावैर्या यस्य परमाङ्गना ॥ ९ ॥
प्रविशत्याशु हृदयं दैवाद्वा कर्मणोऽपि वा ।
हृदयोत्सवरूपा या या समानमनःशया ॥ १० ॥

---

[1] दुरात्मनेति पाठान्तरम् ।

समानसत्वा या वश्या या यस्य प्रीयते प्रियैः ।
या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः ॥ ११ ॥
यया विमुक्तो निस्त्रीकमरतिर्मन्यते जगत् ।
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः ॥ १२ ॥
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ।
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम् ॥ १३ ॥
अपूर्वामिव यां याति नित्यं हर्षातिवेगतः ।
गत्वा गत्वापि बहुशो यां तृप्तिं नैव गच्छति ॥ १४ ॥
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ।
अतुल्यगोत्रां वृष्यां च प्रहृष्टां निरुपद्रवाम् ॥ १५ ॥
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः ।
अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ॥ १६ ॥

रूपादिव्यतिरेकेणापि कर्मवशाद्वृष्या स्त्री भवतीति दर्शयन्नाह—नानेत्यादि ।—दैवयोगादिति प्राक्तनकर्मवशात् । निवर्तन्त इति निष्पन्नाः सम्पद्यन्ते । हावो नरं प्रति स्त्रीणां शृङ्गारचेष्टाविशेषः । उक्तं च भरतेन—"प्रकाशरूपकं सत्वं सत्वोत्थवाः समुद्गताः । तेभ्यो हावादिनिष्पत्तिरित्याहुः परमर्षयः" इति । दैवादिति प्राक्तनकर्मणः । कर्मण इति ऐहिकात् प्रीतिकरणादिकर्मणः । मनःशयः कामः । पाशभूतेति मनइन्द्रियबन्धहेतुत्वात् । 'नानाभावा हि मानवाः' इत्यनेन, रूपादिगुणयोगेन न सर्वपुरुषान् प्रति स्त्रीणां प्रियत्वमिति दर्शयति ॥ ८—१६ ॥

अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ।
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ॥ १७ ॥
निष्प्रजस्तृणपूलीति ज्ञातव्या पुरुषाकृतिः ।
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ॥ १८ ॥
बहुमूर्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥ १९ ॥
मङ्गल्योऽयं प्रशस्योऽयं धन्योऽयं वीर्यवानयम् ।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजाः ॥ २० ॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विपुलं कुलम् ।
यशोलोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिताः ॥ २१ ॥
तस्मादपत्यमन्विच्छन् गुणांश्चापत्यसंश्रितान् ।
वाजीकरणनित्यः स्यादिच्छेत् कामसुखानि च ॥ २२ ॥
उपभोगसुखान् सिद्धान् वीर्यापत्यविवर्द्धनान् ।
वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम् ॥ २३ ॥

१ विभव इति पाठान्तरम् । २ स्यान्निच्छेदिति पाठान्तरम् ।

सम्प्रति वृष्यप्रयोगसाध्यपुत्रस्योपादेयतां दर्शयन्नाह—अच्छाय इत्यादि । एकशाख इत्येकस्वरूप इत्यर्थः । चित्रलिखितदीपश्चित्रदीपः । अधातुर्धातुसन्निभ इति सुवर्णादिवदाभासते यो जातुसकङ्कणादिः । पूलि नपुंसकधर्मित्वात् । तृणपुरुषाकृतिरिति परिभाषया पुरुषार्थक्रियाविरहित्वं दर्शयति । कामसुखानि चेत्यनेन पुत्रोत्पादातिरिक्तं नातिश्लाघ्यं फलं दर्शयति । कामसुखानि हि ऐहिकान्येव परं न पुत्रवदुभयलोकोपकारकाणि । उपभोगेन मैथुनेन सुखं कुर्वन्तीत्युपभोगसुखाः । किंवा, उपभोक्तुं सुखाः उपभोगसुखाः । वीर्यं शुक्रम् ॥ १७—२३ ॥

शरमूलेक्षुमूलानि काण्डेक्षुः सेक्षुवालिका ।
शतावरी पयस्या च विदारी कण्टकारिका ॥ २४ ॥
जीवन्ती जीवको मेदा वीरा ऋषभकौ बला ।
ऋद्धिर्गोक्षुरकं रास्ना आत्मगुप्ता पुनर्नवा ॥ २५ ॥
एषां त्रिपलिकान् भागान् माषाणामाढकं नवम् ।
विपाचयेज्जलद्रोणे चतुर्भागं च शोषयेत् ॥ २६ ॥
तत्र पेष्याणि मधुकं द्राक्षा फल्गुनि पिप्पली ।
आत्मगुप्ता मधूकानि खर्जूराणि शतावरी ॥ २७ ॥
विदार्यामलकेक्षूणां रसस्य च पृथक् पृथक् ।
सर्पिषश्चाढकं दद्यात् क्षीरद्रोणं च तद्भिषक् ॥ २८ ॥
साधयेत् घृतशेषं च सुपूतं योजयेत् पुनः ।
शर्करायास्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैः पृथक् ॥ २९ ॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च ।
त्वगेलाकेशराणां च चूर्णैरर्द्धपलोन्मितैः ॥ ३० ॥
मधुनः कुडवाभ्यां च द्वाभ्यां तत्कारयेत् भिषक् ।
पलिका गुलिकास्त्यानास्ता यथाग्नि प्रयोजयेत् ॥ ३१ ॥
एष वृष्यः परो योगो वृंहणो बलवर्द्धनः ।
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाम् ॥ ३२ ॥

वृंहणीगुडिका ।

माषाणामात्मगुप्ताया बीजानामाढकं नवम् ।
जीवकर्षभकौ वीरां मेदामृद्धिं शतावरीम् ॥ ३३ ॥
मधुकं चाश्वगन्धां च साधयेत् कुडवोन्मिताम् ।
रसे तस्मिन् घृतप्रस्थं गव्यं दशगुणं पयः ॥ ३४ ॥
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च ।
दत्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत् ॥ ३५ ॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक् ।
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत्पलम् ॥ ३६ ॥
पलं पूर्वमतो लीढा ततोऽन्नमुपयोजयेत् ।
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ॥ ३७ ॥

वाजीकरणघृतम् ।

शर्करा माषविदलास्तुगाक्षीरीपयोघृतम्।
गोधूमचूर्णषष्ठानि सर्पिष्युत्कारिकां पचेत् ॥ ३८ ॥
तां नातिपक्वां मृदितां कौक्कुटे मधुरे रसे।
सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः ॥ ३९ ॥
एष पिण्डरसो वृष्यः पौष्टिको बलवर्द्धनः।
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत्।
शिखितित्तिरिहंसानामेवं पिण्डरसो मतः ॥ ४० ॥

वाजीकरणपिण्डरसाः।

काण्डेक्षुर्बृहदीक्षुरः। वंशरोचना तुगाक्षीरी, अन्ये वंशरोचनानुकारि पार्थिवद्रव्यतालैधीति वदंति। स्त्याना इति घनाः। द्वितीयप्रयोगे रस इति क्वाथे। उत्कारिका मूषिकोत्कारा (?)। शिखितित्तिरिहंसानां व्यस्तसमस्तानां पिण्डरसाः ॥ ३४—४० ॥

घृतं माषान् सबस्ताण्डान् साधयेन्माहिषे रसे।
भर्जयेत्तं रसं पूतं फलाम्लं नवसर्पिषि ॥ ४१ ॥
ईषत्सलवणं युक्तं धान्यजीरकनागरैः।
एष वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥ ४२ ॥

वृष्यमाहिषरसः।

चटकांस्तित्तिरिरसे तित्तिरीन् कौक्कुटे रसे।
कुक्कुटान् बार्हिणरसे हांसे बार्हिणमेव च।
नवसर्पिषि सन्तप्तान् फलाम्लान् कारयेद्रसान्।
मधुरान् वा यथासात्म्यं गन्धाढ्यान् बलवर्द्धनान् ॥

वृष्यरसाः।

तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत्पयः।
न तस्य बलशैथिल्यं स्यान्न शुक्रक्षयो निशि ॥ ४४ ॥
माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम्।
पयः पिबति रात्रिं स कृत्स्नां जागर्त्ति वेगवान् ४५
न ना स्वपिति रात्रिषु नित्यं स्तब्धेन शेफसा।
तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ॥ ४६ ॥
निःस्राव्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत्।
हंसबर्हिणदक्षाणामेवमण्डानि भक्षयेत् ॥ ४७ ॥

तत्र श्लोकौ।

वाजीकरणसामर्थ्यं क्षेत्रं स्त्री यस्य चैव या।
ये दोषा निरपत्यानां गुणाः पुत्रवतां च ये ॥ ४८ ॥

१ प्रक्षिपेच्छीत इति पाठान्तरम्। २ इवोदीर्णबल इति पाठान्तरम्। ३ तालधीक्षीति पाठान्तरम्। ४ 'लिङ्गशैथिल्यमिति' पाठान्तरम्। ५ निस्तब्धेनेति पाठान्तरम्।

दश पञ्च च संयोगा वीर्यापत्यविवर्द्धनाः।
उक्तास्ते शरमूलीये पादे पुष्टिबलप्रदा इति ॥ ४९ ॥

भवतश्चात्र।

स्रोतःसु शुद्धेष्वमले शरीरे
वृष्यं यदा नामितमत्ति काले।
वृषायते तेन परं मनुष्य-
स्तद्बृंहणं चैव बलप्रदं च ॥ ५० ॥
तस्मात् पुरा शोधनमेव कार्यं
बलानुरूपं न हि वृष्ययोगाः।
सिध्यन्ति देहे मलिने प्रयुक्ताः
क्लिष्टे यथा वाससि रागयोगाः ॥ ५१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने वाजीकरणाध्याये संयोगशरमूलीयो नाम वाजीकरणपादः प्रथमः।

निशीत्यनेन, सकलनिशां मैथुनेऽपीति दर्शयति। हंसेति हंसबर्हिदक्षाणामण्डादिप्रयोगाः यद्यपि भिन्नाः, तथापि प्रयोगापेक्षया एक एवायं प्रयोगः। एवं संग्रहोक्ताः हंसबर्हिदक्षाणामेकप्रयोगेण पञ्चदशप्रयोगाः पूर्यन्ते। संग्रहे यस्य चैव येति यस्य या वृष्येत्यर्थः। वृष्ययोगाश्च शुद्धदेहैरेव कर्तव्या इति दर्शयन्नाह—स्रोतस्त्वीत्यादि।—नामितमिति मितिमिति यावत्। क्लिष्ट इति म्लाने ॥ ४१—५१ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां वाजीकरणाध्यायव्याख्यायां संयोगशरमूलीयपादव्याख्या।

---

## द्वितीयः पादः।

अथात आसिक्तक्षीरिकं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

आसिक्तक्षीरमापूर्णमशुष्कं शुद्धषष्टिकम्।
उदूखले समापोथ्य पीडयेत् क्षीरमर्दितम् ॥ ३ ॥
क्षुण्णं विमर्दितं क्षीरे पीडयेत् सुसमाहितः।
गृहीत्वा तं रसं पूतं गव्येन पयसा सह ॥ ४ ॥
बीजानामात्मगुप्ताया धान्यमाषरसेन च।
बलायाः शूर्पपर्ण्योश्च जीवन्त्या जीवकस्य च ॥ ५ ॥
ऋद्ध्यर्षभककाकोली श्वदंष्ट्रा मधुकस्य च।
शतावर्या विदार्याश्च द्राक्षाखर्जूरयोरपि ॥ ६ ॥

१ क्लिष्ट इति पाठान्तरम्। २ ऋषभस्य च काकोलीमधुकानां रसेन चेति पाठान्तरम्।

संयुक्तं मात्रया वैद्यः साधयेत्तत्र चावपेत् ।
तुगाक्षीर्याः समापाणां शालीनां षष्टिकस्य च ॥ ७ ॥
गोधूमानां च चूर्णानि यैः स सान्द्रीभवेद्रसः ।
सान्द्रीभूतं च कुर्यात्तु प्रततमधुशर्करम् ॥ ८ ॥
गुलिका बदरैस्तुल्यास्ताश्च सर्पिषि भर्जयेत् ।
ता यथाग्नि प्रयुञ्जानः क्षीरमांसरसाशनः ॥
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमक्षयम् ॥ ९ ॥

अपत्यकरा षष्टिकादिगुडिका ।

आसिक्तक्षीरवृष्याभिधानप्रसङ्गात् पादार्थस्य विशिष्टसम्बन्धावयवतयोच्यते—आसिक्तक्षीरी, तत्र स्वार्थिकः 'क' प्रत्ययः । किंवा, ठक्प्रत्ययेन "वैशेषिक" शब्दवत् आसिक्तक्षीरिक इति साधनीयम् । आसिक्तक्षीरमिति क्षीरसेकवृद्धम् । यदुक्तं जतूकर्णे—'क्षीरसेकवृद्धषष्टिकं पक्वम्' इत्यादि । शुद्धषष्टिकमिति गौरषष्टिकम् । मात्रा बलादिरसानां तुल्यमानता । किंवा, 'मात्रा' शब्दस्याल्पवचनत्वाद्बलादिरसमल्पमात्रम् । प्रक्षेपचूर्णप्रमाणमाह—यैः स सान्द्रीभवेद्रस इति यावता तेन चूर्णेन रसस्य सान्द्रता भवति, तावन्मात्रं चूर्णं ग्राह्यम् । प्रततत्वं मधुशर्करयोर्यावताऽत्यर्थमधुरत्वं स्यात्तावज्ज्ञेयम् । अत्र च प्रयोगमहिम्नैव मधुयुक्तस्यापि प्रयोगस्य भर्जनक्रियायामग्निसंयोगो न विरोधमावहति । तथा हि सुश्रुतेऽपि त्रिफलायस्कृतौ मधुनोऽग्निसम्बन्धो भवत्येव । आत्मजमिति हर्षभूतात्मजं शुक्रमिति यावत् ॥ १—९ ॥

कानां सहंसानां दक्षाणां शिखिनां तथा ।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत् ॥ १० ॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि ।
षष्टिकानां च चूर्णानि चूर्णं गोधूमकस्य च ॥ ११ ॥
एभिः पूपलिकाः कार्याः शष्कुल्यो वर्तिकास्तथा ।
पूपा धानाश्च विविधा भक्ष्याश्चान्ये पृथग्विधाः १२
एषां प्रयोगाद्भक्ष्याणां स्तब्धेनापूर्णरेतसा ।
शेफसा वाजिवद्याति यावदिच्छं स्त्रियो नरः ॥ १३ ॥

वृष्यभक्ष्याः ।

आत्मगुप्ताफलं माषान् खर्जूराणि शतावरी ।
शृङ्गाटकानि मृद्वीकां साधयेत् प्रसृतोन्मिताम् ॥ १४
क्षीरप्रस्थं जलप्रस्थं एतत् प्रस्थावशेषितम् ।
शुद्धेन वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥ १५ ॥
शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च ।
तत् पाययेत सक्षौद्रं षष्टिकान्नं च भोजयेत् ॥ १६ ॥

१ प्रभूतमधुशर्करमिति पाठान्तरम् । २ साधयेदिति पाठान्तरम् । ३ पादान्तस्येति पाठान्तरम् ।

जरापरीतोऽप्यबलो योगेनानेन विन्दति ।
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति ॥ १७ ॥

अपत्यकरः स्वरसः ।

खर्जूरीमस्तकं माषान् पयस्यां च शतावरीम् ।
खर्जूराणि मधूकानि मृद्वीकामजडाफलम् ॥ १८ ॥
पलोन्मितानि मतिमान् साधयेत् सलिलाढके ।
तेन पादावशेषेण क्षीरप्रस्थं विपाचयेत् ॥ १९ ॥
क्षीरशेषेण तेनाद्याद् घृताढ्यं षष्टिकौदनम् ।
सशर्करेण संयोग एष वृष्यः परं स्मृतः ॥ २० ॥

वृष्यक्षीरयोगः ।

दक्षः कुक्कुटः । शुक्राणीति यद्यप्युक्तम्, तथापि चटकादिशुक्रस्य ग्रहणस्याशक्यत्वात् समानगुणानि तदण्डान्यपीह गृह्यन्ते । वर्तिका वर्त्याकारा भक्ष्याः । अयं तुल्यद्रव्यतया विविधभक्ष्यरूपोऽप्येक एव योगः । अजडा शूकशिम्बी ॥ १०—२० ॥

जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम् ।
खर्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम् ॥ २१ ॥
शृङ्गाटकं विदारीं च नवं सर्पिः पयो जलम् ।
सिद्धं घृतावशेषं तच्छर्कराक्षौद्रपादिकम् ॥ २२ ॥
षष्टिकान्नेन संयुक्तमुपयोज्यं यथाबलम् ।
वृष्यं बल्यं च वर्ण्यं च कण्ठ्यं बृंहणमुत्तमम् ॥ २३ ॥

वृष्यघृतम् ।

दध्नः शरं शरच्चन्द्रसन्निभं दोषवर्जितम् ।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्याश्च बुद्धिमान् ॥ २४ ॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे ।
मार्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने ॥ २५ ॥
पिबेन्मात्रां रसालायास्तं भुक्त्वा षष्टिकौदनम् ।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥ २६ ॥

वृष्यो दधिशरप्रयोगः ।

जीवकेत्यादौ विदार्यन्तैः कल्कैः क्षीरजलाभ्यां घृतं साधनीयम् । युक्तेति यथा कटुत्वाद्यधिकं न भवति, तथा मरिचादियोगः कर्तव्यः मार्जितमिति सुघृष्टम् । रसालालक्षणम्,—"सचातुर्जातकाजाजिसगुडार्द्रकनागरम् । रसाला स्यात् शिखरिणी सुघृष्टं सशरं दधि" इति ॥ २१—२६ ॥

चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम् ।
शर्करामधुसंयुक्तं प्रयुञ्जानो वृषायते ॥ २७ ॥

वृष्यः षष्टिकौदनप्रयोगः ।

१ कुण्डे इति पाठान्तरम् ।

तप्ते सर्पिषि नक्राण्डं ताम्रचूडाण्डमिश्रितम् ।
युक्तं षष्टिकचूर्णेन सर्पिषाभिनवेन च ॥ २८ ॥
पक्त्वा पूपलिकाः खादेद्वारुणीमण्डपो नरः ।
य इच्छेदश्ववद्गन्तुं प्रसेक्तुं गजवच्च यः ॥ २९ ॥

वृष्यपूपलिकाः ।

भवन्ति चात्र ।

आसिक्तक्षीरिके पादे ये योगाः परिकीर्त्तिताः ।
अप्रावपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥ ३० ॥
एतैः प्रयोगैर्विधिवद्वपुष्मान्
स्नेहोपपन्नो बलवर्णयुक्तः
हर्षान्वितो वाजिवदष्टवर्षो
भवेत् समर्थश्च वराङ्गनासु ॥ ३१ ॥
यद्यच्च किञ्चिन्मनसः प्रियं स्यात्
रम्या वनान्ताः पुलिनानि शैलाः ।
इष्टाः स्त्रियो भूषणगन्धमाल्यम्
प्रिया वयस्याश्च तदत्र योग्यम् ॥ ३२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने वाजीकरणाध्याये आसिक्तक्षीरिको नाम वाजीकरणपादो द्वितीयः ।

चन्द्रांशुकल्पमिति अत्यर्थशुक्लम् । पौरुषार्थिभिरिति शुक्रार्थिभिः । अत्र योग्यमिति वृष्यप्रयोगसमर्थम् ॥ २७—३२ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां वाजीकरणाध्यायव्याख्यायामासिक्तक्षीरिकवाजीकरणपादव्याख्या ।

---

## तृतीयः पादः ।

अथातो माषपर्णभृतीयं
वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

माषपर्णभृतां धेनुं गृष्टिं पुष्टां चतुःस्तनीम् ।
समानवर्णवत्सां च जीवद्वत्सां च बुद्धिमान् ॥ ३ ॥
रोहिणीमथवा कृष्णामूर्ध्वशृङ्गीमदारुणाम् ।
इक्ष्वादामर्जुनादां वा सान्द्रक्षीरां च धारयेत् ॥४॥
केवलं तु पयस्तस्याः शृतं वाऽशृतमेव वा ।
शर्कराक्षौद्रसर्पिर्भिर्युक्तं तद्वृष्यमुत्तमम् ॥ ५ ॥

वृष्यकेवलक्षीरयोगाः ।

शुक्लैर्जीवनीयैश्च बृंहणैर्बलवर्द्धनैः ।
क्षीरसञ्जननैश्चैव पयः सिद्धं पृथक् पृथक् ॥ ६ ॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम् ॥ ७ ॥

वृष्यक्षीरप्रयोगः ।

माषपर्णभृतीयसम्बन्धोऽपि पूर्ववत् । गृष्टिमेकवारप्रसूताम् । चतुस्तनीमित्यनेन सम्पूर्णचतुस्तनीं दर्शयति । रोहिणीमिति लोहितवर्णाम्, ऊर्ध्वशृङ्गत्वं विशुद्धबहुक्षीराया एव भवतीति वचनाज्ज्ञेयम् । इक्ष्वादेति इक्षुदण्डभक्षा । अर्जुनादा अर्जुनवृक्षपत्रभक्षा । इक्ष्वादा वा अर्जुनादा वा माषपर्णभृता चेति विकल्पत्रयम् । पयः शृतमशृतं चेति योगौ । शर्कराक्षौद्रसर्पिर्भिर्युक्तं तदिति तृतीयः । एतत्प्रयोगोऽपि जतूकर्णे— "तस्याः क्षीरं शर्कराक्षौद्रयुक्तं वा केवलं शृतमशृतं वा" इति । पर्यायेणेति पृथक् पृथक् प्रयोक्तव्यम्, तेन, "पञ्च येऽमी गणाः" इत्यादिग्रन्थोक्तयोगाः ॥ १—७ ॥

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
माषान् श्वदंष्ट्रां क्षीरीकां गोधूमान् शालिषष्टिकान् ॥
पयस्यर्द्धोदके पक्त्वा कार्षिकानाढकोन्मिते ।
विवर्जयेत् पयःशेषं तत् पूतं क्षौद्रसर्पिषा ॥ ९ ॥
युक्तं सशर्करं पीत्वा वृद्धः साप्ततिकोऽपि वा ।
विपुलं लभतेऽपत्यं युवेव च स हृष्यति ॥ १० ॥

अपत्यकरक्षीरयोगाः ।

मण्डलैर्जातरूपस्य तस्या एव पयः शृतम् ।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम् ॥ ११ ॥

अपत्यजननक्षीरयोगः ।

विवर्जयेदिति मेदादिकल्कं वर्जयेत् । वृद्धः सप्ततेरर्वागिति ज्ञेयम् । साप्ततिकस्य तु यद्यपि शुक्रनिवृत्तिरुक्ता, तथापि वृष्यप्रभावाद्भवतीति विज्ञेयम् । जातरूपस्येति सुवर्णस्य । मण्डलरूपाऽऽकृतिरिह सुवर्णस्य प्रभावाद्वृष्यप्रयोगोपकारिणी भवतीति वचनाज्ज्ञेयम् । तस्या एवेति माषपर्णभृतधेन्वाः ॥ ८—११ ॥

त्रिंशत् सुपिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः ।
भृष्टाः सशर्कराक्षौद्राः क्षीरधारावदोहिताः ॥ १२ ॥
पीत्वा यथाबलं चोर्ध्वं षष्टिकं क्षीरसर्पिषा ।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति ना क्षरत् १३

अपत्यजननक्षीरयोगः ।

---

१ वीर्योपपन्न इति पाठान्तरम् ।

१ शर्कराक्षौद्रयुक्तमिति पाठान्तरम् । २ सिद्धानिति पाठान्तरम् । ३ पलमिति पाठान्तरम् ।

श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे ।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥ १४ ॥
वृष्यपायसप्रयोगः ।

प्रकुञ्चं पलम् । क्षीरधारावदोहिता इति पिप्पलीकल्काद्युपरि क्षीरधारावदोहः कर्त्तव्यः । क्षीरं च तावद्दोह्यम्, यावता पानयोग्याः पिप्पल्यः भवन्ति ॥ १२—१४ ॥

फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम् ।
कुडवश्चूर्णितानां स्यात् स्वयंगुप्ताफलस्य च ॥ १५ ॥
कुडवश्चैव माषानां द्वौ द्वौ च तिलमुद्गयोः ।
गोधूमशालिचूर्णानां कुडवः कुडवो भवेत् ॥ १६ ॥
सर्पिषः कुडवश्चैकस्तत् सर्वं क्षीरसंयुतम् ।
पक्त्वा पूपलिकाः खादेद्बह्वयः स्युर्यस्य योषितः१७
वृष्यपूपलिकाः ।

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुत्तमम् ॥ १८ ॥
वृष्यं शतावरीघृतम् ।

फलानामित्यादि ।—फलानामिति जीवनीयानामित्यादीनां त्रयाणां प्रत्येकमभिसम्बध्यते । जीवनीयानामिति षट्कषायवर्गोक्तानां जीवकर्षभादीनां दशानाम्, स्निग्धानामिति स्नेहोपगानां मृद्वीकादीनां दशानां सप्तककषायवर्गोक्तानाम् । तथा रुचिकारिणामिति चतुष्ककषायवर्गोक्तानामाम्रादीनां हृद्यानां दशानामिति, एषां जीवनीयप्रभृतीनां फलानां चूर्णितानां मिलित्वा कुडवो ग्राह्यः । अन्यदतिरोहितार्थम् । तथा ह्ययं प्रयोगो जतूकर्णे च पठ्यते—"द्राक्षाखर्ज्जूरमाषाजडागोधूमशालिघृतानां कुडवः, तिलमुद्गौ द्विकौडविकौ चूर्णयित्वा" इत्यादि । घृतं शतावरीत्यादौ शर्करादीनां प्रक्षेपणम्, अन्यतो दृष्टन्यायात् घृतस्य प्रास्थिकत्वम् ॥ १५—१८ ॥

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमांशिकम् ।
प्रयुङ्क्ते यः पयश्चानु नित्यवेगः स ना भवेत् ॥१९॥
वृष्यमधुकयोगः ।

घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥ २० ॥
कृतैककृत्याः सिद्धार्था ये चान्योऽन्यानुवर्तिनः ।
कलासु कुशलास्तुल्याः सत्त्वेन वयसा च ये ॥२१॥
कुलमाहात्म्यदाक्षिण्यशीलशौचसमन्विताः ।
ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः ॥२२॥
ये तुल्यशीला ये भक्ता ये प्रिया ये प्रियंवदाः ।
तैर्नरः सह विस्रब्धः सुवयस्यो वृषायते ॥ २३ ॥
अभ्यङ्गोत्सादनस्नानगन्धमाल्यविभूषणैः ।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः ॥ २४ ॥
विहङ्गानां रुतैरिष्टैः स्त्रीणां चाभरणस्वनैः ।
संवाहनैर्वरस्त्रीणामिष्टानां च वृषायते ॥ २५ ॥

कर्षमित्यादिकान्तपञ्चदश प्रयोगाः । 'घृतक्षीराशनः' इत्यादिना तु वृष्यत्वार्चिताहाराभिधानम् । नित्यमित्यनेन व्यवायनित्यतया शुक्रमार्गानवरोधेन व्यवायशक्तिं दर्शयति । कृतमेकं कृत्यं यैस्ते तथा, एतच्च अन्योऽन्यार्थरागकारणम् । सिद्धार्था इति सिद्धसाध्याः । कृतार्था ह्यव्याकुलमनसः कामक्षमाः । वृषायत इत्युपचितप्रवृत्त्युन्मुखशुक्रो भवति १९–२५

मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः ।
जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च ॥ २६ ॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः ।
उन्नतिर्नीलमेघानां रम्यचन्द्रोदया निशाः ॥ २७ ॥
वायवः सुखसंस्पर्शाः कुमुदाकरगन्धिनः ।
रतिभोगक्षमा रात्रीः सङ्कोचाऽगुरुवल्लभाः ॥ २८ ॥

'मत्तद्विरेफाचरिताः' इत्यादि 'गृहाणि च' इत्यन्तं योग्यतया ऋतुविभागेनानुक्तमपि ग्रीष्म एव ज्ञेयम् । तथा मेघानामित्यन्तं प्रावृषि, तथा 'गन्धिनः' इत्यन्तं शरदि, 'वल्लभाः' इत्यन्तं च विधानं हेमन्तशिशिरयोर्ज्ञेयम् । सङ्कोचं कुङ्कुमम्, सङ्कोचागुरुणोः समालभनार्थं वल्लभा यासु निशासु तास्तथा ॥ २६—२८ ॥

सुखाः सहायाः परपुष्टजुष्टाः
फुल्ला वनान्ता विशदान्नपानाः ।
गान्धर्वशब्दाश्च सुगन्धयोगाः
सत्त्वं विशालं निरुपद्रवं च ॥ २९ ॥
सिद्धार्थता चाभिनवश्च कामः
स्त्री चायुधं सर्वमिहात्मजस्य ।
वयो नवं जातमदश्च कालो
हर्षस्य योनिः परमा नराणामिति ॥ ३० ॥

तत्र श्लोकः ।

प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च ।
माषपर्णभृतीयेऽस्मिन् पादे शुक्रबलप्रदाः ॥ ३१ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने द्वितीयाध्याये माषपर्णभृतीयो नाम वाजीकरणपादस्तृतीयः ।

१ सर्पिषः कुडवश्चैव क्षीरेण मृदितंच यदिति पाठान्तरम् । २ घृतक्षौद्रसमन्वितमिति पाठान्तरम् । ३ पयोऽनुपानं यो लिह्यादिति पाठान्तरम् । ४ वपुषेति पाठान्तरम् ।

१ परपुष्टघुष्टा इति पाठान्तरम् । २ सगन्धमाल्यां इति पाठान्तरम् । ३ पुष्टिबलप्रदा इति पाठान्तरम् ।

सुखा इत्यादिग्रन्थविधानं वसन्ताभिप्रायाभिधानमन्यत्राप्यविरुद्धम्; आत्मजस्येति मन्मथस्य; जातमदः कालो वसन्तादिः ॥ २९—३१ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां वाजीकरणाध्यायव्याख्यायां मापपर्णभृतीयपादव्याख्या ।

## चतुर्थः पादः ।

अथातः पुमान्जातबलादिकं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पुमान् यथा जातबलो यावदिच्छं स्त्रियो व्रजेत् ।
यथा चापत्यवान् सद्यो भवेत् तदुपदेक्ष्यते ॥ ३ ॥
न हि जातबलाः सर्वे नराश्चापत्यभागिनः ।
बृहच्छरीरा बलिनः सन्ति नारीषु दुर्बलाः ॥ ४ ॥
सन्ति चाल्पबलाः स्त्रीषु बलवन्तो बहुप्रजाः ।
प्रकृत्या चाबलाः सन्ति सन्ति चामयदुर्बलाः ॥५॥
नराश्चटकवत् केचित् व्रजन्ति बहुशः स्त्रियम् ।
गजवच्च प्रसिञ्चन्ति केचिन्न बहुगामिनः ॥ ६ ॥
कालयोगबलाः केचित् केचिदभ्यसनध्रुवाः ।
केचित् प्रयत्नैर्वाह्यन्ते वृषाः केचित् स्वभावतः ॥७॥
तस्मात् प्रयोगान् वक्ष्यामो दुर्बलानां बलप्रदान् ।
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान् ॥ ८ ॥
पूर्वं शुद्धशरीराणां निरूहाननुवासनान् ।
बलापेक्षी प्रयुञ्जीत शुक्रापत्यविवर्द्धनान् ॥ ९ ॥
घृततैलरसक्षीरशर्करामधुसंयुताः ।
बस्तयः संविधातव्याः क्षीरमांसरसाशिनाम् ॥१०॥

पारिशेष्यात् पुमान्जातबलादिकमुच्यते, पुमान्जातबलादयः शब्दा अस्मिन् विद्यन्ते इति पुमान्जातबलादिकः आसिक्तक्षीरिकवच्छब्दसिद्धिः । जातबलत्वे सत्यपि नावश्यमतिभोगित्वं भवतीति कृत्वा 'यथा जातबलः' इत्युक्तेऽपि 'यथा चापत्यवान् भवति' इत्युक्तम्, तदेव शुक्रचिह्नं स्फोटयति—न हीत्यादि ।—'न हि जातबलाः सर्वे' इत्येकः पक्षः, तथा 'नापत्यभागिनः सर्वे' इति द्वितीयः पक्षो ज्ञेयः । एतच्छुक्रबलप्रसङ्गादपरानपि शुक्रबलविशेषानाह—बृहच्छरीरा इत्यादि ।—अल्पबला अल्पशरीरा एते च शुक्रसारत्वेन नारीषु बहुप्रजा भवन्ति । गजवच्च प्रसिञ्चन्तीति शुक्रं बहु विसृजन्ति । कालयोगेन हेमन्तादिकालसम्बन्धेन व्यवाये बलवन्तो भवन्तीति कालयोगबलाः । अभ्यसनध्रुवा इति व्यवायाभ्यासेन व्यवायसमर्था भवन्ति । एवं प्रयत्नैर्भवन्तीति । निरूहानुवासनाभिधाना बस्तयः ॥१-१०॥

पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे ।
कोलवद्गुलिकाः कृत्वा तप्ते सर्पिषि वर्तयेत् ॥ ११ ॥
वर्तनैस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे ।
घृताढ्ये गन्धपिशुने दधिदाडिमसारिके ॥ १२ ॥
यथा न भिन्द्याद्गुलिकास्तथा तं साधयेद्रसम् ।
तं पिबन् भक्षयंस्ताश्च लभते शुक्रमक्षयम् ॥ १३ ॥

वृष्या मांसगुडिकाः

मांसानामेवमन्येषां मेध्यानां कारयेद्भिषक् ।
गुलिकाः सरसास्तासां प्रयोगः शुक्रवर्द्धनः ॥ १४ ॥
माषानङ्कुरितान् शुद्धान् वितुषान् साजडाफलान् ।
घृताढ्ये माहिषरसे दधिदाडिमसारिके ॥ १५ ॥
प्रक्षिपेन्मानया युक्तान् धान्यजीरकनागरैः ।
भुक्तः पीतश्च स रसः कुरुते शुक्रमक्षयम् ॥ १६ ॥

वृष्यो माहिषरसः ।

आर्द्राणि मत्स्यमांसानि भृष्टाश्च शफरीश्च वा ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् १७

वृष्यघृतभृष्टमत्स्यमांसानि ।

घृतभृष्टान् रसे च्छागे रोहितान् फलसारिके ।
अनुपीतरसान् स्निग्धानपत्यार्थी प्रयोजयेत् ॥ १८ ॥

गर्भाधानकरो योगः ।

वर्तनस्तम्भिता इति वर्तनेन कठिनीकृताः । दधिदाडिमसाराभ्यां संस्कृतं दधिदाडिमसारिकम् । दाडिमसारश्च दाडिमरसम् । मांसानामित्यादि ।—अतिदेशयोगो द्वितीयः । मेध्यानामिति मेदुराणाम् । अजडा शुक्रशिम्बी । मुक्तः पीतश्चेति पूर्वयोगवत् । घनभागस्य भोजनम्, द्रवस्य पानं ज्ञेयम् । 'मत्स्य'शब्देन प्रधानकल्पनया रोहितं वदन्ति । फलसारिक इति दाडिमामलकादिफलसारसंस्कृतम् ॥ ११—१८ ॥

१ वसन्ताभिप्रायविहितमप्यविरुद्धमिति पाठान्तरम् । २ कामेति पाठान्तरम् । ३ शुद्धशरीराणमिति पाठान्तरम् । ४ शुक्रापत्यादिवर्धनानिति पाठान्तरम् । ५ शुक्रबलमिति पाठान्तरम् ।

१ भर्जयेदिति पाठान्तरम् । २ भर्जनेति पाठान्तरम् । ३ पक्केति पाठान्तरम् । ४ शुक्रवर्धनमिति पाठान्तरम् । ५ सिद्धानपत्यार्थीति पाठान्तरम् । ६ वेति पाठान्तरम् । ७ प्रधानकल्पतयेति पाठान्तरम् ।

कुट्टकं[1] मत्स्यमांसानां हिङ्गुसैन्धवधान्यकैः ।
युक्तं गोधूमचूर्णेन घृते पूपलिकाः पचेत् ॥ १९ ॥
माहिषे च रसे मत्स्यान् स्निग्धाम्ललवणान् पचेत् ।
रसे चानुगते मत्स्यान् पोथयेत्तत्र चावपेत् ॥ २० ॥
मरिचं जीरकं धान्यमल्पं हिङ्गु नवं घृतम् ।
माषपूपलिकानां तद्गर्भार्थमुपकल्पयेत् ॥ २१ ॥
एतौ पूपलिकायोगौ बृंहणौ बलवर्द्धनौ ।
हर्षसौभाग्यजननौ परं शुक्राभिवर्धनौ ॥ २२ ॥

वृष्यौ पूपलिकायोगौ ।

माषात्मगुप्तागोधूमशालिषष्टिकषष्टिकम् ।
शर्करायाः विदार्याश्च चूर्णमिक्षुरकस्य च ॥ २३ ॥
संयोज्यो मसृणे क्षीरे घृते पूपलिकाः पचेत् ।
पयोऽनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां परम् ॥ २४ ॥

वृष्या माषादिपूपलिकाः ।

शर्करायास्तुलैका स्यादेका गव्यस्य सर्पिषः ।
प्रस्थो विदार्याश्चूर्णस्य पिप्पल्याः प्रस्थ एव च ॥ २५ ॥
अर्द्धाढकं तुगाक्षीर्याः क्षौद्रस्याभिनवस्य च ।
तत्सर्वं मूर्च्छितं तिष्ठेन्मार्तिके घृतभाजने ॥ २६ ॥
मात्रामग्निसमां तस्य प्रातः प्रातः प्रयोजयेत् ।
एष वृष्यः परं योगः कण्ठ्यो बृंहण एव च ॥ २७ ॥

वृष्ययोगः ।

शतावर्या विदार्याश्च तथा माषात्मगुप्तयोः ।
श्वदंष्ट्रायाश्च निष्क्वाथं जलेषु च पृथक् पृथक्[3] ॥ २८ ॥
साधयित्वा घृतप्रस्थं पयस्याष्टगुणे पुनः ।
शर्करामधुसंयुक्तमपत्यार्थी प्रयोजयेत् ॥ २९ ॥

अपत्यकरं घृतम् ।

कुट्टकमिति कुट्टनेनाणुशः कृतम् । इक्षुरकः कोकिलाक्षः । शर्करामधुसंयुक्तमित्यत्र प्रक्षेपन्यायात् पादिकत्वं शर्करामधुनोः ॥ १९—२९ ॥

घृतपात्रं शतगुणे विदारीस्वरसे पचेत् ।
सिद्धं पुनः शतगुणे गव्ये पयसि साधयेत् ॥ ३० ॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्येक्षुरसस्य च ।
पिप्पल्याः साजडायाश्च भागैः पादांशिकैर्युतम् ॥ ३१ ॥
गुलिकाः कारयेद्वैद्यो यथा स्थूलमुदुम्बरम् ।
तासां प्रयोगात् पुरुषः कुलिङ्ग इव हृष्यति ॥ ३२ ॥

वृष्यगुटिकाः ।

सितोपलापलशतं ततोऽर्द्धं नवसर्पिषः ।
क्षौद्रपादेन संयुक्तं साधयेज्जलपादिकम् ॥ ३३ ॥
सान्द्रं गोधूमचूर्णानां पादं स्तीर्णे शिलातले ।
शुचौ श्लक्ष्णे समुत्कीर्य मर्दनेनोपपादयेत् ॥ ३४ ॥
शुद्धा उत्कारिकाः कार्याः चन्द्रमण्डलसन्निभाः ।
तासां प्रयोगाद्बहुवन्नारीः सन्तर्पयेन्नरः ॥ ३५ ॥

वृष्योत्कारिका ।

पादांशिकैरिति घृतापेक्षया पादप्रमाणैः । समुत्कीर्येति विस्तीर्य । उत्कारिकाः कार्या इत्यत्र पुनःपाकेनैवोत्कारिकाकरणम् ॥ ३०—३५ ॥

यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥ ३६ ॥
द्रव्यैरेवंविधैस्तस्माद्भावितः प्रमदां व्रजेत् ।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ ३७ ॥
गत्वा स्नात्वा पयः पीत्वा रसं चानुशयीत ना ।
तथाऽस्याप्यायते भूयः शुक्रं च बलमेव च ॥ ३८ ॥
यथा मुकुलपुष्पस्य सुगन्धो नोपलभ्यते ।
लभ्यते तद्विकाशाच्च तथा शुक्रं हि देहिनाम् ॥ ३९ ॥
नर्ते वै षोडशाद्वर्षात् सप्तत्याः परतो नच ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥ ४० ॥
अतिबालो ह्यसम्पूर्णसर्वधातुः स्त्रियो व्रजन् ।
उपतप्येत सहसा तडागमिव काजलम् ॥ ४१ ॥
शुष्कं रूक्षं यथा काष्ठं जन्तुदग्धं विजर्जरम् ॥ ४१ ॥
स्पृष्टमाशु विशीर्येत तथा वृद्धस्त्रियो व्रजन् ॥ ४२ ॥
जरया चिन्तया शुक्रं व्याधिभिः कर्मकर्षणात् ।
क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥ ४३ ॥
क्षयाद्भयादविश्रम्भाच्छोकात् स्त्रीदोषदर्शनात् ।
नारीणामरसज्ञत्वादविचारादसेवनात् ॥ ४४ ॥
तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते ।
देहसत्त्वबलापेक्षी हर्षः शक्तिश्च हर्षजा ॥ ४५ ॥

अनुक्तवाजीकरणं संग्रहन्नाह—यत्किञ्चिदित्यादि ।—भावित इति वचनात् प्रयोगेण शरीरभावनायां सत्यां स्त्रीसेवा सम्भवतीति दर्शयति । आत्मवेगेनेति सङ्कल्पजातेनात्मवेगेन । बालस्य तडागदृष्टान्तेन, शुक्रं शुष्यति न पुनरपि शुक्रसद्भावं कफप्राधान्यं च दर्शयति । वृद्धस्य तु जन्तुजग्धत्वादिदृष्टान्तेन न विनष्टस्य पुनर्भावं शुक्रस्य तथाऽभूयिष्ठतां दर्शयति । ननु तृप्तस्य शरीरबलं भवत्येव, तत् किं तृप्तस्य स्त्रियो गन्तुमसामर्थ्यमित्याह—देह इत्यादि ।—एतेन सत्यपि तृप्तिजनितबले क्षयादिना देहमनसोरुपहतत्वाद् हर्षो न भवति, हर्षाभावाद् व्यवायशक्तिर्न भवतीत्युक्तं भवति ॥ ३६—४५ ॥

रस इक्षौ यथा दध्नि सर्पिस्तैलं तिले यथा ।
सर्वत्रानुगतं देहे शुक्रं संस्पर्शने तथा ॥ ४६ ॥
तत् स्त्रीपुरुषसंयोगे चेष्टासंकल्पपीडनात् ।
शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात् पटादिव ॥ ४७ ॥

१ कुट्टितमिति पाठान्तरम् । २ वल्य इति पाठान्तरम् ।
३ निष्क्वाथे नल्वनेषु पृथक् पृथगिति पाठान्तरम् ।

हर्षात्तर्षात्सरत्वाच्च पैच्छिल्याद्गौरवादपि।
अणुप्रवणभावाच्च द्रुतत्वान्मारुतस्य च॥
अष्टाभ्य एभ्य हेतुभ्यः शुक्रं देहात् प्रसिच्यते॥४८॥

सम्प्रति, सम्भवति शुक्रं यथा देहे, स्थितं यथा च प्रवर्तते, तदाह—रस इत्यादि।—इक्ष्वादिदृष्टान्तत्रयेणानतिप्रयत्नाल्पप्रयत्नमहाप्रयत्नप्रवाह्यशुक्रान् पुरुषान् यथाक्रमं दर्शयति। संस्पर्शन इति संस्पर्शनवति, तेन केशादौ संस्पर्शनाव्याप्तेः शुक्रमपि नास्तीति दर्शयति। स्त्रीपुरुषसंयोगो मिश्रीभावः। चेष्टा व्यवायचेष्टा। सङ्कल्पो योषिदनुरागः। पीडनं नारीपुरुषयोः परस्परसंमूर्च्छनम्। अत्र च नारीपुरुषसंयोगः प्रधानं कारणम्। तत्सहकारीणि चेष्टादीनि। आर्द्रपटदृष्टान्तेनाश्रयानुपघातेन शुक्रस्रवणं दर्शयति। अपरमपि शुक्रप्रवृत्तिहेतुमाह।—हर्षादित्यादि–हर्षः सङ्कल्पपूर्वकशुक्रोद्रेकध्वजोच्छ्रायादिकारीच्छा। तर्षो वनिताभिलापः। सरत्वम् स्थैर्यम्। अणुप्रवणभावोऽणुत्वे सति वहिर्निर्गमनस्वभावम्। द्रुतत्वान्मारुतस्य चेति शुक्रप्रेरकस्य वायोरभिद्रवणशीलत्वादित्यर्थः। एते च यद्यपि हेतवस्तथापि प्राधान्यात् प्रथमप्रतिपादितस्त्रीपुरुषसंयोगादिरूपहेतूनां समष्टौ नैवाऽमी गणिताः॥ ४६—४८॥

चरतो विश्वरूपस्य रूपद्रव्यं यदुच्यते॥
वहलं मधुरं स्निग्धं अविस्रं गुरुपिच्छिलम्॥ ४९॥

चरत इति नानामानुषपश्वादिजातिषु भ्रमतः। विश्वरूपस्येत्यात्मनः। तथा ह्यात्मपर्यायेषूक्तम्,—"स विश्वकर्म्मा स च विश्वरूप" इति। रूपद्रव्यमिति प्राक्तनकारणम्। एतेन, अव्यक्तस्यात्मनो व्यक्तशरीरनिर्वृत्तौ शुक्रं हेतुरित्युक्तं भवति। शुक्रंचेह प्रकरणागतत्वेनोक्तम्। तेन, आर्तवमप्यात्मनोरूपद्रव्यं ज्ञेयम्।—प्रशस्तशुक्रगुणानाह—वहलमित्यादि॥४९॥

शुक्रं वहु च यच्छुक्रं वलवत्तदसंशयम्॥
येन नारीषु सामर्थ्यं वाजीवल्लभते नरः।
व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् इति॥५०॥

तत्र श्लोकौ॥

हेतुर्योगोपदेशस्य योगा द्वादश चोत्तमाः।
यत्पूर्वं मैथुनात् सेव्यं सेव्यं यन्मैथुनादनु॥ ५१॥
यदा न सेव्याः प्रमदाः कृत्स्नः शुक्रविनिश्चयः।
निरुक्तं चेह निर्दिष्टं पुमान्जातवलादिके॥ ५२॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने द्वितीयाध्याये पुमान्जातवलादिको नाम वाजीकरणपादश्चतुर्थः।
समाप्तो वाजीकरणाध्यायः।

'वाजीकरण' शव्दनिरुक्तिमाह—येनेत्यादि।—व्रजेच्चाभ्यधिकमिति पुनःपुनर्गच्छेत्, व्यज्यत इति वा पाठः, तत्रापि भूयो गमनेन नारीषु पुंस्त्वेन व्यज्यते। व्यज्यादिति पाठेऽपि स एवार्थो विद्वद्भिः सुचिन्तनीयः। अनेन निरुक्तेन त्रिविधमपि वृष्यमवरुध्यते, यथा—शुक्रवृद्धिकरं मापादि, तथा स्रुतिकरं सङ्कल्पादि, शुक्रस्रुतिवृद्धिकरं क्षीरादि। यदुक्तमन्यत्र—"शुक्रस्रुतिकरं किंचित् किंचिच्छुक्रविवर्द्धनम्। स्रुतिवृद्धिकरं किंचित् त्रिविधं वृष्यमुच्यते"। त्रिविधमपि हीदं व्यवाये वलवत्त्वं पुनःपुनर्व्यवायशक्तिं च करोति। हेतुरित्यादि।—संग्रहो व्यक्तः॥ ५०॥ ५२॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चिकित्सितस्थानव्याख्यायां पुमान्जातवलादिकवाजीकरणपादव्याख्या॥
वाजीकरणाध्यायव्याख्या समाप्ता॥

---

## तृतीयोऽध्यायः।

अथातो ज्वरचिकित्सितं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

स्वस्थोर्जस्करमभिधाय व्याधिनिर्घातकरचिकित्सितवक्तव्यत्वेन सर्वरोगप्रधानत्वेन ज्वरस्यैवादौ चिकित्सितमुच्यते, ज्वरस्य च यथा प्राधान्यम्, तथाऽत्रैव वक्ष्यति। ज्वरचिकित्सिताभिधायकाध्यायो ज्वरचिकित्सितमुच्यते, अभिधानाभिधेययोरभेदोपचारात्। एवमुत्तराध्यायेष्वपि व्याख्येयम्॥ १॥ २॥

विज्वरं ज्वरसन्देहं पर्यपृच्छत् पुनर्वसुम्।
विविक्ते शान्तमासीनमग्निवेशः कृताञ्जलिः॥ ३॥

विज्वरमिति, 'विज्वर'शव्दो नीरोगोपदर्शकः, यतः 'ज्वर'शव्देन चात्र गदसामान्ये रोगोऽभिमतः। नीरोगत्वेनेह रोगप्रशमनपृच्छां श्रुत्वा यतो गुरुर्व्रवीति—"ज्वरो विकारो रोगश्च" इत्यादि। ज्वरसन्देहमिति ज्वरनिदानोक्तातिरिक्तज्वरधर्मविषयं सन्देहम्। विविक्त इत्यादिना, एवं गुरवः प्रष्टव्या इति दर्शयति॥ ३॥

देहेन्द्रियमनस्तापी सर्वरोगाग्रजो वली।
ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा॥ ४॥
तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये।
प्रकृतिं च प्रवृत्तिं च प्रभावं कारणानि च॥ ५॥
पूर्वरूपमधिष्ठानं वलकालात्मलक्षणम्।
व्यासतो विधिभेदाच्च पृथग्भिन्नस्य चाकृतिम्॥ ६॥
लिङ्गमामस्य जीर्णस्य सौषधं च क्रियाक्रियाम्।
विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक् पृथक्॥ ७॥
ज्वरावशिष्टो[1] रक्ष्यश्च यावत्कालं यतो यतः।
प्रशान्तः कारणैर्यैश्च पुनरावर्तते ज्वरः॥ ८॥

---

१ ज्वरावसृष्ट इति पाठान्तरम्।

**याश्चापि पुनरावृत्तिं क्रियाः प्रशमयन्ति तम्।**
**जगद्धितार्थं तत्सर्वं भगवन्! वक्तुमर्हसि ॥ ९ ॥**
**तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत्।**
**ज्वराधिकारे यद्वाच्यं तत् सौम्य! निखिलं शृणु॥१०**

देहेन्द्रियमनस्तापीत्यादि हेतुगर्भं ज्वरप्रधानत्वे विशेषणम्, केचिद्देहमात्रतापिनोऽर्बुदादयः, केचिन्मनस्तापिन एवाऽस्मित्वाभिनिवेशादयः, केचिदिन्द्रियतापिन एव तिमिरादयः, अयंतु त्रितयतापी, वक्ष्यति हि—"ज्वरेणाविशता भूतं न हि किंचिन्न तप्यते", तत्र शरीरतापित्वं सन्तापादिना, मन इन्द्रियतापित्वं च 'वैचित्त्यम्' इत्यादिना वक्ष्यति। सर्वरोगाग्रज इति शारीरसर्वरोगाग्रजः । मानसास्तु रोगा ज्वरादेः प्रागवस्थिता एव सत्ययुगादावपि । बलित्वं चास्य भूरिविकारकर्तृत्वात्। प्रधानत्वं च देहमनस्तापित्वादिधर्मयोगात्। प्राणिसपत्नस्येति मारकत्वेन प्राणिशत्रोः ध्रुवस्यैत्वद्यम्भाविनः। प्रलयोदये मरणे जन्मनि। अत्र च तमोरूपो ज्वरो ज्ञेयः। वक्ष्यति हि—"ज्वरप्रभावो जन्मादौ निधने च महत्तमः" इति। प्रकृत्यादयः समस्ताध्यायव्याकरणीया यथावसरं व्याख्येयाः। बलं च कालश्चात्मलक्षणं चेति बलकालात्मलक्षणमिति द्वन्द्वः। व्यासतो विधिभेदाच्चेति प्रपञ्चेन विधिभेदात्। यत इति योग्यो व्यवायादिभ्यो रक्ष्यः द्वितीयो 'यतः'शब्दो येन हेतुना रक्षणीय इत्यर्थः। 'जगद्धितार्थम्' इत्यनेन, यच्च श्रुत्वा जगद्धितं चिकित्साप्रवर्तनं करिष्यामीत्यग्निवेशः कारुणिकतां शिष्यगुणेषूपादेयामात्मनो दर्शयति ॥ ४—१० ॥

**ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च।**
**एकोऽर्थो नामपर्यायैर्विविधैरभिधीयते ॥ ११ ॥**
**तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः।**
**देहिनं न हि निर्दोषं ज्वरः समुपसेवते ॥ १२ ॥**

ज्वरो विकार इत्यादिर्निर्देशग्रन्थः। ज्वरो विकार इत्यादि प्रश्नग्रन्थसूचितस्यापि पर्यायकथनं वृत्तमेव, तथापि पुनः प्रकरणवशादभिधानमिति न पुनरुक्तदोष इति ब्रुवते। किंवा ज्वरस्यैवाधिकृतस्यैतत्पर्यायकथनम्। विकारादयश्च यद्यपि सामान्येन रोगाभिधायिनः, तथापि प्रकरणाज्ज्वर एव विशिष्टे व्याधौ ते। तस्मिंश्च व्याख्याने ज्वरादिपर्यायाभिधेयरूपा विकृतिः, 'ज्वरो विकारः' इत्यादिना उच्यते इति नापि पुनरुक्तिशङ्का। 'नाम' शब्दः प्रकाशने, तेन, एकोऽर्थो नाम ज्वरलक्षणो रोगलक्षणो वा पर्यायैरुच्यत इत्यर्थः। पर्याया एकार्थाभिधायिनो भिन्नजातीयाः शब्दाः, किंवा, नामपर्यायैरिति नामरूपैः पर्यायैर्व्यवह्रियमाणैः पर्यायैरित्यर्थः। यतः पर्यायो व्यवह्रियमाणोऽपि भवति, यथा, आयुषि नित्यगानुबन्धशब्दरूपौ पर्यायावुक्तौ। 'प्रकृति' शब्देनेह स्वभावः, तथा यत्कारणमयं कार्यं भवति, तदुच्यते। तत्र प्रत्यासन्नकारणरूपां प्रकृतिमाह—तस्येत्यादि।—उद्दिष्टेति संक्षेपादभिहिता। दोषाणां ज्वरप्रकृतित्वे हेतुमाह—देहिनमित्यादि।—सर्वदोषाऽव्यभिचाराज्ज्वरस्य दोषप्रकृतित्वं सिद्धमिति भावः। 'देहि' शब्देन शरीरवान् पुरुषोऽभिप्रेतः, न केवल आत्मा, तस्य निर्विकारत्वात्। 'समुपसेवते' इति भाषया भूतविशेषरूपस्य ज्वरस्यावेशं दर्शयति। विग्रहश्च ज्वरस्य स्वतन्त्रे वक्तव्य एव,—'ज्वरस्त्रिपादस्त्रिशिराः' इत्यादिनोक्तः ॥ ११ ॥ १२ ॥

**क्षयस्तमो ज्वरः पाप्मा मृत्युश्चोक्ता यमात्मकाः।**
**पञ्चत्वप्रत्ययान्नृणां क्लिश्यतां स्वेन कर्मणा ॥ १३ ॥**
**इत्यस्य प्रकृतिः प्रोक्ता, प्रवृत्तिस्तु परिग्रहात्।**
**निदाने पूर्वमुद्दिष्टा रुद्रकोपाच्च दारुणात् ॥ १४ ॥**

स्वभावरूपां ज्वरप्रकृतिमाह—क्षय इत्यादि।—देहक्षयहेतुत्वात् क्षयः, मोहकर्तृत्वात्तमः, पापनिर्वर्त्यत्वात् पाप्मा, मृत्युकारणत्वात् मृत्युर्ज्वर एवोच्यते। अत्र च 'उक्ताः' इति, तथा 'यमात्मकाः' इति बहुवचनमेकस्मिन्नर्थे ज्वरे क्षयकर्तृत्वादिधर्मभेदविवक्षया ज्ञेयम्। यमात्मका इति यमस्वरूपाः। यमो हि यथा मारकः, तथामी मारका इत्यतो यमात्मका इत्यर्थः। किंवा यमात्मजा इति पाठः। अत्रापि यमपुत्रत्वेन पितृसमानक्रियाकर्तृत्वमुच्यते। किंच क्षयादयः स्वनामप्रसिद्धा यमस्वरूपा भिन्ना एव ज्वरात्, इह ज्वरस्य तु यमात्मकत्वाभिधानप्रसङ्गात् तेऽप्युच्यन्ते। अस्मिन् व्याख्याने 'मृत्यु'शब्देन मृत्युसूचकं रिष्टमुच्यते। यतः, मृत्युरेव न मृत्युकरो भवति। यमात्मकत्वे हेतुमाह—'पञ्चत्वप्रत्ययान्नृणां क्लिश्यतां स्वेन कर्मणा' इति। एतेन, यथा यमः स्वकर्मक्लिश्यमानानां प्राणिनां पञ्चत्वे हेतुर्भवति, तथा क्षयादयोऽपि प्राक्तनकर्मणा क्लिश्यमानान् मारयन्तीत्यर्थः। पञ्चत्वप्रत्यया इति वा पाठः, तथापि स एवार्थो ज्ञेयः। क्रमागतां प्रवृत्तिमाह—प्रवृत्तिस्त्वित्यादि।—प्रवृत्तिः प्रथमाविर्भावः। परिग्रहादिति जनपदोद्ध्वंसनीये "भ्रश्यति तु कृतयुगे" इत्यादिना परिग्रहात् ज्वरादिप्रवृत्तिमुक्तां स्मारयति। तथा रुद्रकोपाद्दारुणाया प्रवृत्तिर्ज्वरस्य, सा निदाने पूर्वमुद्दिष्टा,—"ज्वरस्तु खलु महेश्वरकोपप्रभवः" इति ग्रन्थेन निदाने संक्षेपेणोक्तेत्यर्थः। 'पूर्वम्' इति पदेन, रुद्रकोपप्रभवा प्रथमा, परिग्रहप्रभवा तु द्वितीया प्रवृत्तिरिति दर्शयति ॥ १३ ॥ १४ ॥

**द्वितीये हि युगे शर्वमक्रोधव्रतमास्थितम्।**
**दिव्यं सहस्रं वर्षाणामसुरा अभिदुद्रुवुः ॥ १५ ॥**
**तपोविघ्नाशनान् कर्तुं तपोविघ्नं महात्मनाम्।**
**पश्यन् समर्थश्चोपेक्षांचक्रे दक्षः प्रजापतिः ॥ १६ ॥**

---

१ पुनरावृत्तमिति समीचीनं पाठान्तरम्। २ विग्रहमनस्तापित्वादीति पाठान्तरम्।

१ नेय इति पाठान्तरम्। २ रुद्र इति न समीचीनं पाठान्तरम्।

पुनर्माहेश्वरं भागं ध्रुवं दक्षः प्रजापतिः ।
यज्ञे न कल्पयामास प्रोच्यमानः सुरैरपि ॥ १७ ॥
ऋचः पशुपतेर्याश्च शैव्य आहुतयश्च याः ।
याश्चसिद्धिप्रदास्ताभिर्हीनं चैव स इष्टवान् ॥ १८ ॥
अथोत्तीर्णव्रतो देवो बुद्ध्वा दक्षव्यतिक्रमम् ।
रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ॥ १९ ॥
सृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान् प्रभुः ।
बालं क्रोधाग्निसन्तप्तमसृजत् सत्रनाशनम् ॥ २० ॥
ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ।
दाहव्यथापरीताश्च भ्रान्ता भूतगणा दिशः ॥ २१ ॥
अथेश्वरं देवगणः सह सप्तर्षिभिर्विभुम् ।
तमृग्भिरस्तुवद्यावच्छैवे भावे शिवः स्थितः ॥२२॥
शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ।
भिया भस्मप्रहरणस्त्रिशिरा नवलोचनः ॥ २३ ॥
ज्वालामालाकुलो रौद्रो ह्रस्वजङ्घोदरः क्रमात् ॥
क्रोधाग्निरुक्तवान् देवमहं किंकरवाणि ते ॥ २४ ॥
तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि ।
जन्मादौ निधने च त्वमपचारान्तरेषु च[२] ॥ २५ ॥

यतश्च परिग्रहभवत्वं विस्तरोक्तम्, रुद्रकोपभवत्वं च संक्षेपोक्तम् । अतः, रुद्रकोपोद्भवत्वमेव विवृणोति—द्वितीय इत्यादि ।—विना क्रोधं चर्यते यत्, तदक्रोधम् । तपोविघ्नाशनास्तपोविघ्नोपजीविनः, ध्रुवमित्यवश्यदेयम् । सत्रनाशनमिति यज्ञनाशनम् । शैव इति कल्याणकरे । अपचारान्तरेष्विति ज्वरनिदानसेवासु । अत्र च सत्ययुगेऽपि जन्ममरणयोर्मोहरूपज्वरस्य विद्यमानत्वात् द्वितीययुगेऽपि जन्ममरणयोर्भवनमपि न ज्वरस्यानुपपन्नम् । तेन, अत्र जन्मादौ निधने च व्यवस्थितः । स इदानीमपचारान्तरेषु भविष्यसीति योजनीयम् । किंवा, सत्ययुगे च जन्ममरणयोर्मोहरूपज्वरो निष्कल्मषाणां पुरुषाणां नासीदेवेति मन्तव्यम् । कल्याणकरस्वरूपस्यापि शिवस्य प्राणिपीडाकरज्वरविसर्गः प्राणिनामेवाधर्मप्रभावादवश्योपभोग्यां पीडां सृजतीति मन्तव्यम् ॥ १५—२५ ॥

सन्तापः सारुचिस्तृष्णा साङ्गमर्दो हृदि व्यथा ॥
ज्वरप्रभावो जन्मादौ निधने च महत्तमः ॥ २६ ॥

सन्ताप इत्यादिना प्रभावमाह । प्रभावश्चात्रौपाधिका शक्तिरुच्यते । सन्तापादीनां प्रभावव्यपदेशः । यतश्चायं रोगप्रभावः, ततः, वातश्लेष्मकृतेऽपि ज्वरेऽनुष्णरूपस्तापो भवति, तथा जन्मादौ निधने च महत्तमोरूपत्वं ज्वरप्रभाव इत्यर्थः । प्रकृतिश्चेत्यादिना प्रकरणसंग्रहं करोति, 'इत्यस्य प्रकृतिः प्रोक्ता' इत्यनेन प्रस्तावसंग्रहं कृतः, अध्यायान्ते लध्यायार्थसंग्रहं करिष्यति । एतच्च पुनःपुनः संग्रहकरणं तन्त्रधर्मत्वात् प्रशिष्यबुद्धिसमाधानार्थं कृतं ज्ञेयम् ॥ २६ ॥

प्रकृतिश्च प्रवृत्तिश्च प्रभावश्च प्रदर्शितः ॥
निदाने कारणान्यष्टौ पूर्वोक्तानि विभागशः ॥ २७ ॥

निदान इत्यादिना कारणमाह, अष्टौ कारणानीति रूक्षादयस्त्रयो ज्वरारम्भकवातादिकर्तृत्वेनोक्ताः, तथा 'यथोक्तानां हेतूनां मिश्रीभावात्' इत्यादिना तु द्वन्द्वानां सन्निपातस्य च कारणमुक्तम्, तथा आगन्तूनां कारणं तत्र कण्ठरवेणैवोक्तम् । अन्ये तु वातादीनेव ज्वरारम्भकसम्प्राप्तिप्राप्तान् "इह खलु अष्टाभ्यः कारणेभ्यो ज्वरः सञ्जातः" इत्यादिग्रन्थेन निदानोक्तानि 'कारणानि' इति पदेन ग्राहयन्ति, 'प्रकृति' शब्देन तु बीजभूता अव्यवहितसम्बद्धा दोषा गृह्यन्ते रूक्षादयस्तु दोषप्रकोपकारणभूता न ज्वरकारणानीति वदन्ति तस्मिन् पक्षे रूक्षादीनां ज्वरे हेतुभूतानामिहाग्रहणं स्यात्, रूक्षादीनां तु ज्वरे हेतुत्वं दोषप्रकोपावान्तरव्यापारत्वेन भवत्येव, यथा—योगस्य स्वर्गकर्तृत्वोक्तं । द्विविधं च कारणं रोगाणाम्—व्यवहितं रूक्षादि, प्रत्यासन्नं च दोषा इति शास्त्रसिद्धान्त एव । 'निदाने' इति पदेनैव पूर्वत्वे लब्धे 'पूर्वोक्तानि इति पदमिह वक्तव्यज्वरनिदानव्युदासार्थम् ॥ २७ ॥

आलस्यं नयने सास्रे जृम्भणं गौरवं क्रमः ।
ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ ॥ २८ ॥
अविपाकास्यवैरस्ये हानिश्च बलवर्णयोः ।
शीलवैकृतमल्पं च ज्वरलक्षणमग्रजम् ॥ २९ ॥
केवलं समनस्कं च ज्वराधिष्ठानमुच्यते ।
शरीरं बलकालस्तु निदाने सम्प्रदर्शितः ॥ ३० ॥

यद्यपि निदानेऽपि पूर्वरूपाण्युक्तानि, तथापीह प्रकरणवशात् यानि प्रायः प्रादुर्भवन्ति, तानि पठ्यन्ते आलस्यमित्यादि—केवलमिति कृत्स्नम्, तेन बाह्येन्द्रियाणामप्यवरोधः । अनेन देहमनसी अप्यवश्यं ज्वरेण ताप्येते इत्युक्तम् । बलस्याभिवृद्धिलक्षणस्य ज्वराभ्यागमनलक्षणस्य वा कालो बलकालः, स च निदाने "दिवसान्ते धर्मान्ते जरणान्ते वा ज्वरागमनमभिवृद्धिर्वा" इत्येवम्प्रकारग्रन्थेनोक्तः ॥ २८—३० ॥

ज्वरप्रत्यात्मिकं लिङ्गं सन्तापो देहमानसः ।
ज्वरेणाऽऽविशता भूतं न हि किञ्चिन्न तप्यते ॥ ३१ ॥

ज्वरप्रत्यात्मिकं लिङ्गमित्यादिनाऽऽत्मलक्षणमाह । आत्मलिङ्गमित्यव्यभिचारिलक्षणम् । इह 'सन्ताप'शब्देन, सामान्येन पीडा वक्तव्या, सा च देहविशेषणाभिधानात् तापलक्षणैव भवति, मनसि तु तथा चेन्द्रियेषु देहगुणहीनेषु वैचित्त्यादिरूपा "वैचित्यम्" इत्यादिग्रन्थवक्तव्या ज्ञेया ज्वरप्रभावे सन्तापोऽचिन्त्यकार्यतयोक्तः, इह तु ज्वराव्यभिचारित्वेनेति विशेषः । अन्ये तु अरुच्यादियुक्तः सन्तापस्य प्रत्यात्मलक्ष-

१ सङ्केति पाठान्तरम् । २ अपि चावान्तरेषु चेति पाठान्तरम् ।

णत्वे हेतुमाह—ज्वरेणेत्यादि । 'भूत'शब्देन सर्वप्राणिन उच्यन्ते । ततश्च ज्वरेण भूतमाविशता न किश्चिन् मनुष्यादि न तप्यत किन्तु तप्यत एव, ततो ज्वराभिचारितया ज्वरलक्षणमेव तदुपपन्नमिति भावः । अत्र पक्षे गजादिष्वपि 'कूटपाकलादि' शब्दाभिधेयेषु ज्वरेष्वन्तर्दाहरूपा वेदना भवतीति ज्ञेयम् । किंवा, अत्र देहसन्तापमनःसन्तापौ मिलितौ वा पर्यायेण वा ज्वरात्मलिङ्गं भवेताम्, न तावत् पर्यायेण, तथा हि सति क्वचिज्ज्वरे देहसन्तापः क्वचिज्ज्वरे मनःसन्ताप एव भवतीति वाच्यम्, ततश्चानयोर्व्यभिचाराप्राव्यभिचारिलिङ्गत्वम् । तस्मान्मिलितावेव देहमनःसन्तापावात्मलक्षणं ज्वरस्येति वाच्यम् । एवं व्यवस्थिते कस्मात् सर्वज्वरेषु देहमनस्तापौ भवत इत्याह—ज्वरेणेत्यादि ।—ज्वरेण भूतमाविशता नहि किञ्चिच्छरीरं मनो वा न तप्यते, किन्तु तप्यत एव, अतो देहमनस्तापः सर्वज्वरेषूपपन्न इत्यर्थः । अस्मिंश्च पक्षे शारीरमानसज्वरभेदोपदर्शने "शारीरो जायते पूर्वं देहे" इत्यादिना शारीरस्य यद्देहमात्राश्रयत्वं मानसस्य यन्मनोमात्राश्रयत्वं वक्तव्यम्, तत् सूक्ष्मकालाभिप्रायेण, तस्मिंश्च सूक्ष्मकाले ज्वर उभयतापकोऽप्यनन्तरोत्पद्यमानोभयतापित्वधर्मापेक्षया भवत्येव देहमनस्तापी, यथा प्रथमक्षणोत्पन्नं द्रव्यं निर्गुणम्, अनन्तरोत्पद्यमानं सगुणं द्रव्यमुक्तं[1] द्रव्यलक्षणे ॥ ३१ ॥

**द्विविधो विधिभेदेन ज्वरः शारीरमानसः ।**
**पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव वा ॥ ३२ ॥**
**अन्तर्वेगो बहिर्वेगो द्विविधः पुनरुच्यते ।**
**प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च ॥ ३३ ॥**
**पुनः पञ्चविधो दृष्टो दोषकालबलाबलात् ।**
**सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ३४ ॥**
**पुनराश्रयभेदेन धातूनां सप्तधा मतः ।**
**भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः ॥ ३५ ॥**

द्विविध इत्यादिना विधिभेदमाह—एते च भेदा विवरणे व्यक्ता भवन्ति । सोम्य इति शीतकारणारम्भत्वेन सोमदेवताकः, आग्नेयोऽप्युष्णकारणारम्भत्वेनाग्निदेवताकः । पुनः पञ्चविधो दृष्ट इत्यत्र न पञ्चविधेन भेदेन सर्वज्वरव्याप्तिः यतः प्रायशः सन्निपाते न दृष्टः, पञ्चविधो ज्वर इति च वक्ष्यति । ततश्च केवलवातादिज्वराणां न सन्ततादिभेदेन ग्रहणम्, तथा सन्ततादीनां कालनियमो वक्तव्यः, ततश्च ये कालाऽनियताः ते सन्ततादिभिन्ना एव । तस्माद्दोषकालबलाबलाद्ये ज्वरा भवन्ति, ते पञ्चद्विधा एवेति वाक्यार्थः । दोषकालबलाबलादिति दोषकृतात् कालबलाबलात् । कालबलाबले ज्वरकालप्रकर्षाप्रकर्षौ । तत्र सन्तते ज्वरे बलवता दोषेण सप्ताहादिप्रकृष्टत्वाद्बलवान् कालो नियम्यते, सततके तु सन्ततकालापेक्षया हीनबलेन दोषेणाबलो ज्वरकालः । स ह्यहोरात्रे द्विकालेनात्र व्यापको भवति । तथा अयमेव सततज्वरकालो हीनबलकालाऽन्येद्युष्काऽपेक्षया बलवान् भवति । एवमन्येद्युष्कादिज्वरकालोऽपि व्याख्येयः[1] किंवा, दोषकालो दुष्टिकालः ज्वरकाल इत्यर्थः, अस्य बलाबलात् प्रकर्षाप्रकर्षादित्यर्थः । कालप्रकर्षाप्रकर्षनियमाश्च व्याख्याता एव । अन्ये तु, दोषश्च कालश्च दोषकालौ, तयोर्बलाबलादिति वदन्ति । तत्र दोषबलात् कालबलाच्च सन्ततो भवति यदुक्तम्—"कालदूष्यप्रकृतिभिर्दोषकालबलं च विवरणग्रन्थेनोक्तम्, तथा दोषस्याबलत्वं च सप्रलीनीकतया सततकादिषु भवति, तथा ज्वरवेगविगमे च सततकादौ कालस्याबलत्वं भवति । अत्र पक्षे दोषकालबलाबलाभ्यां सर्वज्वरा व्याप्यन्ते । ततश्च सन्ततादिपञ्चज्वरनियमो दुर्घटः स्यात् । अन्ये तु व्युत्क्रमाभिधानेन 'दोषबलाबलकालात्' इति कृत्वा व्याख्यानयन्ति । एतच्चाशब्दं व्याख्यानम् । तृतीयकचतुर्थकाविति समासनिर्देशेन तृतीयचतुर्थकयोरागन्त्वनुबन्धत्वादि साधारणधर्मयोगितां दर्शयति ॥ ३२—३५ ॥

**शारीरो जायते पूर्वं देहे मनसि मानसः ।**
**वैचित्त्यमरतिर्ग्लानिर्मनसस्तापलक्षणम् ॥**
**इन्द्रियाणां च वैकृत्यं ज्ञेयं[2] सन्तापलक्षणम् ॥ ३६ ॥**

"पृथग्भिन्नस्य चाकृतिम्" इति प्रश्नस्य क्रमागतमुत्तरं शारीर इत्यादि ।—पूर्वमिति वचनादुत्तरकालं शारीरो ज्वरो मनस्यपि भवति, एवं मनस्युत्पादानन्तरं देहेऽपि भवतीति ज्ञेयम् । एवंच यद्यपि सर्वज्वराणां देहमनोऽधिष्ठानत्वम्, तथापि यो देहाश्रयो प्रथमं शरीरदोषेण बलवता प्रारब्धः स्यात्, स तद्दोषचिकित्सयैव चिकित्स्यः, एवं मानसोऽपि मानसदोषचिकित्स्य इति दर्शयितुं शारीरमानसभेदोपदर्शनं साधु । ननु शारीरस्य ज्वरस्य सन्तापलक्षणं व्यक्तम्, मानसस्य तु ज्वरस्य कथं सन्तापः, यत्तस्य लक्षणं भवतीत्याह—वैचित्त्यमित्यादि ।—वैचित्त्यादयो 'मानससन्ताप' शब्देनोच्यन्ते, 'ताप' शब्दस्य 'पीडा'वचनत्वादित्यर्थः । मनस्तापप्रस्तावेन, 'देहेन्द्रियमनस्तापी' इत्यत्र य इन्द्रियतापो ज्वरस्योक्तः, स च व्याचक्ष्यते—इन्द्रियाणां चेत्यादि । वैकृत्यमिति स्वभावान्यत्वम्, तच्चार्थाग्रहणाद्यनुमेयम् ॥ ३६ ॥

**वातपित्तात्मकः शीतमुष्णं वातकफात्मकः ।**
**इच्छत्युभयमेतत्तु ज्वरो व्यामिश्रलक्षणः ॥ ३७ ॥**

सौम्याग्नेयभेदयोः प्रतिलोमव्याख्याक्रमेण विवरणम् ।—वातपित्तात्मक इत्यादि ।—वातपित्तात्मक इति वातपित्तकारणकः । अत्र च केवलवातारब्धः, तथा केवलकफारब्धश्च शीतस्वभावकारणतया सौम्येनोष्णमिच्छति, तथा वा-

[1] यावदुक्तमितिपाठान्तरम् ।

[1] एवमन्येद्युष्काद्यपि व्याख्येयमिति पाठान्तरम्. [2] देह इति पाठान्तरम् ।

तकफात्मकोऽप्युपलभ्यते। तथा केवलपित्तात्मकोऽप्याग्नेयत्वादनुष्णाभिप्राय इति व्यक्तम्। तेन, इदानीं वातपित्तात्मकः शीतेन वातेन पित्तेन चोष्णेन कृतः, तस्य दुरुपपन्नायामाग्नेयतायां ब्रुवते।—वातपित्तात्मक इति। एवं व्यवस्थितवातपित्तज्वरे चेद्वायुः संयोगमहिम्ना विपरीतानुकारी दृष्टः, तत्कफसंयुक्तोऽपि वायुः किं विपरीतमर्थं करोतीत्याशङ्क्याह—उष्णं वातकफात्मक इति। वातकफात्मको विशेषेणोष्णमिच्छतीत्यर्थः। व्यामिश्रलक्षणमिति उक्तव्यामिश्रदोषलक्षणज्वरव्यतिरिक्तः कफपैत्तिकः, सान्निपातिकश्च, स चोष्णशीताभिप्रायतया सौम्याग्नेयज्वरद्वयातिरिक्त एव ज्वरः यथा—अङ्गुलीद्वयव्यतिरिक्तं त्र्यङ्गुलम्। एवं शारीरमानसमिश्रीभावेऽपि चिन्तनीयम्। ज्वर इच्छतीति वचनं ज्वरयुक्तपुरुषेच्छाया ज्वरे उपचाराज्ज्ञेयम्॥ ३७॥

**योगवाहः परं वायुः संयोगादुभयार्थकृत्।**
**दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्॥३८॥**
**अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनम्भ्रमः।**
**सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः॥ ३९॥**
**अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत्॥**
**सन्तापोऽभ्यधिको बाह्यस्तृष्णादीनां च मार्दवम्।**
**बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च॥ ४०॥**

वातपित्तज्वरे शीताभिप्रायतामुपपादयितुं वायोर्योगवाहितामाह—योगवाह इत्यादि—योगाद्योगिनो गुणं वहतीति योगवाहः। परमत्यर्थम्। संयोगादिति उष्णेन शीतेन च संयोगात्। उभयार्थकृदिति यथासंख्यमिह उष्णशीतार्थकारी। एतदेव विभजते—दाहकृदित्यादि।—'पित्तेन' इति वक्तव्ये यत् 'तेजसा' इति करोति, तेन, वह्निनाप्यातपादिना युक्तो वायुर्दाहं करोतीति लोकप्रसिद्धमर्थं दृष्टान्तार्थं सूचयति। शीतकारित्वं तु वायोः शीतत्वेनैव यत् सिद्धम्, तत् सोमरूपकफपानीयादियोगाद्विशेषेण भवतीति ज्ञेयम्। अन्तर्दाह इत्यादिना अन्तर्वेगबहिर्वेगविवरणम्॥ ३८—४०॥

**प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः॥**
**उष्णमुष्णेन संवृद्धं पित्तं शरदि कुप्यति॥ ४१॥**
**चितः शीते कफश्चैव वसन्ते समुदीर्यते॥**
**वर्षास्वम्लविपाकाभिरद्भिरोषधिभिस्तथा॥ ४२॥**
**सञ्चितं पित्तमुत्क्लिष्टं[१] शरद्यादित्यतेजसा॥**
**ज्वरं सञ्जनयत्याशु तस्य चानुबलः कफः॥ ४३॥**

प्राकृत इत्यादिना प्रकरणेन प्राकृतवैकृतविवरणम्। तत्रेह कालस्वभावप्रकुपितदोषः प्रकृतिरुच्यते, तज्जातीयाच्च दोषादुद्भूतो ज्वरः प्राकृत उच्यते। यद्वक्ष्यति—"कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः" इति। एवमपि वर्षाकालप्रकृतिभूतेन कृतो ज्वरः प्राकृतः स्यादिति तन्निषेधायाह—'सुखसाध्यस्तु वसन्तशरदुद्भवः' इति 'तु' शब्दोऽवधारणे। तेन, य एव सुखसाध्यो वसन्तशरदुद्भवः प्राकृतः, स एवेह 'प्राकृत'शब्देनोच्यत इत्यर्थः। वर्षाकालभववातिकस्तु न सुखसाध्य इति, तेन नासौ प्राकृत उच्यते। प्राकृतवैकृतसंज्ञाव्यवहारो हि यथाक्रमं सुखसाध्यासाध्यबोधप्रयोजनकः। तद्यदि कृच्छ्रेऽपि वातजे प्राकृतत्वं स्यात्, तदा किं प्राकृतव्यवहारेण। यतश्च वसन्तशरदुद्भवावेव प्राकृतौ, तेन, तयोरेव, 'उष्णम्' इत्यादिना ग्रन्थेन विवरणं प्रपञ्चेन करिष्यति, न वातिकस्येति। अत्रार्थे जतूकर्णे—"सौम्याग्नेयावुष्णशीतकामौ, जीर्णस्त्रयोदशे दिवसे, वसन्तशरदोः प्राकृतोऽन्यत्र वैकृत." इति। यद्यपि वसन्तजः पूर्वमुक्तः, तथापि प्रतिलोमव्याख्यया, 'उष्णम्' इत्यादिना शरदुद्भवं निर्दिशति। उष्णं पित्तं चितं वर्षासु शरद्युदीर्णेनातपेन कुप्यतीति विज्ञेयम्; शीत इति हेमन्ते। उष्णमित्यादिना निर्दिष्टस्य वर्षास्वित्यादि भाष्यम्। ननु यदि वर्षास्वम्लविपाकित्वं सर्वासामोषधीनाम्, तदा प्रतिद्रव्याभिहितविपाकस्याऽव्यवस्था स्यात्, तस्य कालवशेनाम्लत्वदर्शनात्। मैवम्, यथा निष्ठापाकेन यन्मधुरं द्रव्यम्, तद्यथाऽऽवस्थिकेन पाकेनाऽम्लं भवति, यदुक्तम्,—"परन्तु पच्यमानस्य विदग्धस्याम्लभावता" इत्यादिना, तथेहापि कालमहिम्नाऽम्लविपाकित्वमपि भविष्यति, एवम्, हेमन्ते यन्मधुरपाकित्वमोषधीनाम्, तत्रापि व्याख्येयम्। अन्ये तु, वर्षासु वह्निमान्द्याद्विदाहननिमित्तमोषधीनामम्लविपाकित्वमिति ब्रुवते। यदुक्तम्—"वर्षासु विदहत्यन्नं तथा सर्वमेवाम्लं प्रायो ह्यस्य विदह्यते" इति। एवमपि तैर्हेमन्तेन मधुरपाकित्वमुक्तमेव। तस्मात् कालमहिम्नैव पाकान्तरमोषधीनां साधु। आश्विति पित्तस्याशुकारित्वाच्छीघ्रं जनयति। अनुबल इति अनुबन्धरूपः कफो भवति। एवं ज्वरस्य लङ्घनीयतामाह—प्रकृत्यैवेत्यादि।—विसर्गस्य प्रकृत्येति विसर्गरूपकालजया प्रकृत्या सौम्यादिरूपयाऽनशनाद्भयं न भवति। विसर्गो हि सौम्यः स्निग्धः, तत्र बलवन्तः पुरुषाश्च। तेन, तत्रोत्पन्नो ज्वर आमाशयसमुत्पन्नत्वेन लङ्घनार्हो लङ्घनीय एव। किंवा, प्रकृत्यैव विसर्गाच्चेति पाठः। तदा प्रकृत्येति ज्वरकारणेन कफपित्तरूपेण लङ्घनहेतुना, तथा विसर्गाच्च कालाल्लङ्घने भयं नास्ति। उक्तं हि—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति॥४१—४३॥

**प्रकृत्यैव विसर्गस्य तत्र नानशनाद्भयम्॥**
**अद्भिरोषधिभिश्चैव मधुराभिश्चितः कफः॥ ४४॥**
**हेमन्ते, सूर्यसन्तप्तः स वसन्ते प्रकुप्यति॥**
**वसन्ते श्लेष्मणा तस्माज्ज्वरः समुपजायते॥**
**आदानमध्ये तस्यापि वातपित्तं भवेदनु॥ ४५॥**

हेमन्ते चितः कफो वसन्ते कुप्यतीति युक्तमेव, यतः, दोषचयादिक्रमः शिशिरे नास्त्येवाऽऽदानमध्ये। तस्यापि वातपित्तं भवेदन्विति तस्यापि वसन्ते कफज्वरस्य वातपि-

१ पित्तमुद्रिक्तमिति पाठान्तरम्।

त्तमनु अनुबन्धरूपं भवेत्, तदा वसन्तादौ दुर्बलं वातपित्तम्, मध्ये तु मध्यम्, अन्ते तु प्रबलं भवति । एवं शरद्यपि कफो भवति ॥ ४४ ॥ ४५ ॥

**आदावन्ते च मध्ये च बुद्धा दोषबलाबलम् ।**
**शरद्वसन्तयोर्विद्वान् ज्वरस्य प्रतिकारयेत् ॥ ४६ ॥**
**कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः ॥**
**प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः ॥ ४७ ॥**

तदैतान् विशेषान् बुद्ध्वा चिकित्सा कर्तव्येति दर्शयन्नाह—आदानमित्यादि ।—शरद्वसन्तयोरादौ मध्ये चान्ते च ज्वरस्य दोषबलाबलं बुद्ध्वेति योजना । कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वर इति प्राकृतज्वराधिकारपरिभाषा । कालप्रकृतिमिति कालस्वभावसम्बन्धं दोषम्; उद्दिश्येति कारणत्वेन लक्ष्यीकृत्य । नन्वेवमपि वर्षाकालप्रकृतिना वातेन कृतो ज्वरः प्राकृतः स्यादित्याह—प्रायेणाऽनिलजो दुःख इति, अनिलजो ज्वरो वातप्रकृतिसमानोऽपि दुःखो भवति विरुद्धोपक्रमत्वात् । यतः, ज्वरस्यामाशयोत्थत्वेन लङ्घनादि पथ्यम्, तच्च वायोरपथ्यमिति विरुद्धोपक्रमत्वाद्दुःखत्वेन न प्राकृतत्वं वातिकस्य । यतः, प्राकृतत्वेऽपि यः सुखसाध्यः, स एव प्राकृत उच्यत इति भावः । एवं तावत् सर्वो वातजो वैकृतः, तथा वसन्तशरद्व्यतिरिक्तकालभवः कफजस्तथा पैत्तिकोऽपि वैकृत एवेति दर्शयन्नाह—कालेष्वन्येषु वैकृत इति । कफजः पित्तज इति शेषः । अथ वैकृतस्य ज्वरस्य को हेतुरित्याह—हेतव इत्यादि ।—अन्ये तु ब्रुवते—वर्षाकाले वातजोऽपि प्राकृतः, किन्त्वयं कृच्छ्रः, वसन्तशरदुद्भवस्तु प्राकृतः सुखसाध्यो भवतीति विशेषः । तथाच वाग्भटेन, "प्राकृतश्चानिलोद्भवः" इति कृतमिति ॥ ४६ ॥ ४७ ॥

**हेतवो विविधास्तस्य निदाने संप्रदर्शिताः ॥**
**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ४८ ॥**

बलवत्स्वित्यादिना साध्यज्वरविवरणम् । ज्वरोपद्रवा यद्यपि साक्षान्न पठिताः, तथापि सामान्योपद्रव उक्तलक्षणयुक्ता रोगाः । इह यदुक्तम्—"उपद्रवस्तु खलु रोगो रोगान्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा रोगात् पश्चाज्जायत इत्युपद्रवसंज्ञः" इति । तन्त्रान्तरे—"हिक्काश्वासकासतृष्णाच्छर्द्यतीसारमूर्च्छाङ्गभेदारोचककृच्छ्रविङ्कृता वेति । दशोपद्रवा ज्वरमुपद्रवन्ति" इत्युक्ताः ॥ ४८ ॥

**हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ।**
**ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥ ४९ ॥**

बलिभिर्बहुभिश्च हेतुभिर्जातो बहुलक्षण एव भविष्यति, तत् किं 'बहुलक्षणः' इति पदेन । उच्यते—पुरुषाभिबलादिविशेषेण दोषहेतवो यथोक्तदोषगुणा वापि न बहुलक्षणं रोगं कुर्वन्ति, तथा सम्प्राप्तिविशेषाभावाच्च न बहुलक्षणत्वं भवति, यदुक्तम्—"एकं द्वौ त्रीन् बहून् वापि देहे धात्वादियोगतः । दर्शयन्ति विकारांस्तु कुपिताः पवनादयः" इति । शीघ्रमित्युत्पन्नमात्र एव ॥ ४९ ॥

**सप्ताहाद्वा दशाहाद्वा द्वादशाहात्तथैव च ।**
**सप्रलापभ्रमश्वासः तीक्ष्णो हन्याज्ज्वरो नरम् ॥ ५० ॥**

सप्ताहाद्वेत्यादि ।—सप्ताहाद्वातोत्तरः सप्रलापभ्रमश्वासस्तीक्ष्णो हन्ति । एवंगुण एव पैत्तिको दशाहात्, तथैवं गुण एव कफजो द्वादशाहाद्धन्ति शीघ्रतमशीघ्रतरशीघ्रविकारकारित्वाद्वातपित्तकफानामिति वर्णयन्ति । 'वा'शब्दो विकल्पार्थः, तेन, सप्ताहादिष्वपि अर्वागपि ज्वरेण लहननं लक्ष्यते । अन्ये तु सप्ताहात् सप्रलापः, दशाहात् सभ्रमः, द्वादशाहात् सश्वासो हन्तीति व्याख्यानयन्ति ॥ ५० ॥

**ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः ।**
**असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः[1] ॥ ५१ ॥**

गम्भीरोऽन्तर्वेगः, किंवा, गम्भीरधातुस्थः । दैर्घरात्रिको दीर्घकालानुबन्धी, किंवा, दीर्घां रात्रिं मरणरूपां करोतीति दैर्घरात्रिकः ॥ ५१ ॥

**स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः ।**
**सर्वगात्रानुगास्तब्धा ज्वरं कुर्वन्ति सन्ततम् ॥ ५२ ॥**
**दशाहं द्वादशाहं वा सप्ताहं वा सुदुःसहः ।**
**स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ॥ ५३ ॥**
**कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् ।**
**निष्प्रत्यनीकं कुरुते तस्माज्ज्ञेयः सुदुःसहः ॥ ५४ ॥**
**यथा धातुं तथा मूत्रं पुरीषं चानिलादयः ।**
**युगपच्चानुपद्यन्ते[4] नियमात् सन्तते ज्वरे ॥ ५५ ॥**
**स शुद्ध्या वाप्यशुद्ध्या वा रसादीनामशेषतः ।**
**सप्ताहादिषु कालेषु प्रशमं याति हन्ति वा ॥ ५६ ॥**
**यदा तु नातिशुध्यन्ति न वा शुध्यन्ति सर्वशः ।**
**द्वादशैते समुद्दिष्टा सन्ततस्याश्रयास्तदा ॥ ५७ ॥**

---

१ अनुपद्रव इति ज्वरस्योपद्रवाः कासादयः—यदुक्तं तन्त्रान्तरे "कासो मूर्च्छाऽरुचिश्छर्दिस्तृष्णातीसारविड्ग्रहाः । हिक्काश्वासाङ्गभेदाश्च ज्वरस्योपद्रवा दश" इति विजयरक्षितः ।

१ केशसीमन्तकृदिति, अकस्मात् केशेषु सीमन्तान् यः करोति उक्तं हि तन्त्रान्तरे—"केशाः सीमन्तिनो यस्य संक्षिप्ते वितते भ्रुवौ । लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे" इति विजयरक्षितः ।
२ गम्भीरोऽन्तर्धातुस्थः, अथवा गम्भीरः, यत्र वातादीनां निश्चयो न शक्यते कर्तुम् अन्ये त्वाहुः—गम्भीरोऽन्तर्वेग इति विजयरक्षितः ।
३ दैर्घरात्रिक इति दीर्घरात्रानुबन्धीति जेज्जटः, दीर्घां मरणरूपां रात्रिमनुवर्तत इति दैर्घरात्रिक इति चक्र इति विजयरक्षितः ।
४ अनुपद्यन्तेऽनुगच्छन्ति ।

विसर्गं द्वादशे कृत्वा दिवसे व्यक्तलक्षणम् ।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥ ५८ ॥
इति बुद्ध्वा ज्वरं वैद्य उपक्रामेत्तु सन्ततम् ।
क्रियाक्रमविधौ युक्तः प्रायः प्रागपतर्पणैः ॥ ५९ ॥

स्रोतोभिरित्यादिना सन्ततादिभेदमाह । गुरव इति वृद्धाः; दशाहमित्यादि ।—दशाहादीन् वाप्य सुदुःसहो भवतीति शेषः । शीघ्रमिति दशाहादय एव प्रभूततरकालान्तराऽपेक्षया 'शीघ्र' शब्दवाच्याः । दशाहादिविकल्पश्च यथाक्रमं पित्तकफानिलोत्तरसन्निपातारब्धत्वात् सन्ततज्वरस्य ज्ञेयः । यदुक्तमन्यत्रापि—"पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् । हन्ति विमुञ्चति वा आशु ज्वरोष्मा धातुमलपाकात्" । तथा "दशद्वादशसप्ताहैः पित्तश्लेष्मानिलाधिकः । दग्धोष्मणा धातुमलान् हन्ति मुञ्चति वा ज्वरः" इति । हननमोचनविकल्पस्तु रसादीनामप्यशुद्ध्या शुद्ध्या च वक्तव्यः । कस्मादेवमयं दुःसहः शीघ्रकारी सन्ततो भवतीत्याह—काल इत्यादि ।—कालो वर्षादिः, दूष्यो रसादिः, प्रकृतिर्देहप्रकृतिः श्लेष्मप्रकृत्यादिका । ननु कालादितुल्यता दोषस्य कदाचिदेव सम्भवति, यथा—वसन्ते श्लेष्मप्रकृतौ मेदसि[3], दूष्ये कफो दोषः, एवं शरदि पित्तमपि ज्ञेयम्, इतरेषां तु त्रिदोषादीनां कालादितुल्यत्वं दुष्प्राप्यम्[4] । अतस्तत्कृतसन्ततः कथं भवतु, सन्ततश्च द्वादशाश्रयत्वेन त्रिदोषज एव वक्तव्यः । उच्यते—'तुल्यः' इत्यभिधायापि यत् 'निष्प्रत्यनीकः' इति करोति, तेन, कालाद्यनुगुणत्वमेव कालादितुल्यतां स्फोरयति । कालादीनां चासमानानामपि बलवता दोषेण परिगृहीतानां प्रतीपार्थकरणासामर्थ्येनानुगुणतैव भवति । यथा—बलवतो राज्ञो हृदयेन प्रतिकूला अपि विपक्षा राजानोऽनुगुणा एव भवन्ति । किञ्च, त्रिदोषारब्ध एवास्मन्मते सन्ततः, तत्र चान्यतरं दोषं प्रति प्रतिकूलकालादीनां तुल्यत्वं सम्भवत्येव । 'तस्माज्ज्ञेयः सुदुःसहः' इत्यतोऽनन्तरं "यथा-धातुम्" इत्यादि पठन्ति । इतश्च, 'प्रायः प्रागपतर्पणैः' इत्यन्तं पठित्वा 'रक्ताश्रयः' इत्यादिना सततकादिलक्षणं पठन्ति । अन्ये तु—"सुदुःसहः" इति पठित्वा सततान्येद्युष्कलक्षणे पठन्ति, तदनु "यथा धातुम्" इत्यादिग्रन्थम्, ततः पुनराचार्यान्तरमतेन अन्येद्युष्कादिज्वरत्रयलक्षणं पठन्ति तत्र प्रथमपाठक्रमे 'यथा धातुम्' इत्यादिना 'सन्ततः स्यात्' इत्यादिक्रमं ब्रुवते । धातुमिति रसादिधातुसप्तकम् । रसदुष्ट्यभिधानेन, विशेषेणं रसदुष्टिर्ज्ञेया । यथेति येन प्रकारेण । युगपदित्येककालम् । अनुपद्यन्त इति सर्वानेव धात्वादीन् सर्वे एव दोषाश्चानुपद्यन्ते । स शुद्ध्या वेत्यादि ।—सन्ततः, यदा सर्वे रसादयः सर्वथा विशुद्धा भवन्ति, तदा प्रशाम्यति सप्ताहादिषु, यदा रसादयः सर्वे सर्वथा वाऽविशुद्धा भवन्ति, तदा हन्तीत्यर्थः । अथ यदा स्तोका शुद्धिस्तदा का विधेत्याह—यदा त्वित्यादि ।—नातिशुध्यन्तीति सर्वे एव नातिशुद्धा भवन्ति सावशेषदोषा भवन्तीत्यर्थः । न वा शुध्यन्ति सर्वश इति रसादिषु मध्ये कतिचित् शुध्यन्ति, कतिचिच्चाविशुद्धा निवर्तन्ते[2] इत्यर्थः । द्वादशेति सप्तधातवः त्रयो दोषा मूत्रं पुरीषञ्च । दोषाणां चेह शुद्धिः प्रकृतिगमनेन ज्ञेया । द्वादशाश्रयत्वेन सन्ततस्यैकदोषारब्धत्वं यदुच्यते, तन्निरस्तमेव ज्ञेयम् । विसर्गमिति परित्यागम् । विसर्गस्वरूपमाह—अव्यक्तलक्षणमिति, अव्यक्तं लक्षणं यस्य, तमव्यक्तलक्षणं विसर्गम् । एतेन, तदापि ज्वरे लीनस्यैव परं लक्षणानि तस्य व्यक्तानि न भवन्तीति दर्शयन्ति, तदनु त्रयोदशदिनादारभ्य दीर्घकालमनुवर्त्तते । ततो दुर्लभोपशमो भवतीति युक्त इत्युक्तम् । एभिर्धात्वादिद्वादशाश्रयित्वदशाहादिव्यापकत्वादिभिर्धर्मैः सन्ततो भिन्न एव वातादिज्वरेभ्यः कालनियमेन द्वित्रिदिनेषु व्यवच्छेदेनानुसक्तेभ्यः । यत्तु तन्त्रान्तरे "तथा सन्तत एवान्यः स्वल्पदुर्बलकारणः । एकदोषो द्विदोषो वा स्वल्पोपद्रवलक्षणः । अतुल्यदूष्यप्रकृतिः" इत्यादिना ग्रन्थेनोच्यते, स तस्मादन्य एवेति तन्त्रान्तरेऽपि 'अन्य'शब्दप्रयोगात् प्रतिपादितमिति न विरोधः ॥ ५२—५९ ॥

रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम् ।
सप्रत्यनीकैः[3] कुरुते कालवृद्धिक्षयात्मकम् ॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ॥ ६० ॥

सततकं विवृणोति—रक्तधात्वाश्रय इत्यादि ।—'प्रायः' ग्रहणात् सततको रक्तव्यतिरिक्तमांसं मांसादिधातुमपि आश्रयत इति दर्शयति । सप्रत्यनीक इति कालादिषु मध्य अन्यतमो प्रत्यनीकः । कालवृद्धिक्षयात्मकमिति स्वोचिते काले वृद्धिक्षयोचितकाले वृद्धिः क्षयश्च यस्य, स कालवृद्धिक्षयात्मा । तेन, दोषानुगुणे काले ज्वरो भवति, दोषानुगुणकालव्यतिरिक्ते च काले क्षयो भवति । ज्वरस्य कालप्रकृतिदूष्याणां मध्ये अन्यतमाद्बलप्राप्तौ सत्यामपि दोषसम्प्राप्तिमहिम्ना हि कालः प्रधान इति नियमो ज्ञेयः ॥ ६० ॥

कालप्रकृतिदूष्याणां प्राप्यैवान्यतमाद्बलम् ।
दोषो मेदोवहा रुद्ध्वा नाडीरन्येद्युकं ज्वरम् ॥ ६१ ॥
सप्रत्यनीकः कुरुते एककालमहर्निशि ॥
दोषोऽस्थिमज्जगः कुर्यात्तृतीयकचतुर्थकौ ॥ ६२ ॥

१ सन्ततं समुपाचरेदिति पाठान्तरम् । २ पित्तश्लेष्मानिलवृद्ध्या दशद्वादशाहसप्ताहात् । हन्ति विमुञ्चति वा त्रिदोषजो धातुमलपाकात्" इति पाठान्तरम् । ३ श्लेष्मप्रकृतिर्मेदसीति पाठान्तरम् । ४ दुष्प्राप्तमिति पाठान्तरम् ।

१ रसदुष्ट्यभिधानत्वविशेषेणेति पाठान्तरम् । २ वर्तन्त इति पाठान्तरम् । ३ स प्रत्यनीकमिति पाठान्तरम् ।

**गतिर्ध्वेकान्तरान्येद्युर्दोषस्योक्तान्यथा परैः ।**
**रक्तमेवाभिसंसृज्य कुर्यादन्येद्युकं ज्वरम् ॥ ६३ ॥**
**मांसस्रोतांस्यनुसृतो जनयेत्तु तृतीयकम् ।**
**ज्वरं दोषः संसृतो हि मेदोमार्गं चतुर्थकम् ॥ ६४ ॥**
**अन्येद्युष्कः प्रतिदिनं दिनं हित्वा तृतीयकः ।**
**दिनद्वयं यो विश्राम्य प्रत्येति स चतुर्थकः ॥ ६५ ॥**

मेदोवहा इत्यत्र मेदोवहनाडीरोधादेव मेदोदुष्टिर्ज्ञेया । उक्तं हि—"तेषां स्रोतसां रोधात् स्थानस्थाश्चैव मार्गगाश्च दोषाः प्रकोपमापद्यन्ते" इति । मांसस्रोतांस्यनुसृतः' इत्यादि तृतीयकचतुर्थकलक्षणं केचित् पठन्ति । अत्रापि स्रोतोदुष्ट्या धातुदुष्टिरवगन्तव्या । ये तु तृतीयकचतुर्थकयोर्दूष्यप्रतिपादकं ग्रन्थं न पठन्ति, तेषां तन्त्रान्तरप्रत्ययाद्दूष्यावरोधः । तृतीयकचतुर्थकसंज्ञयैव तृतीयदिनचतुर्थदिनभावित्वं ज्ञेयम् ६१–६५

**अधिशेते यथा भूमिं वीजं काले च रोहति ।**
**अधिशेते तथा धातुं दोषः काले च कुप्यति ॥६६॥**
**स वृद्धिं वलकालं च प्राप्य दोषस्तृतीयकम् ।**
**चतुर्थकं च कुरुते प्रत्यनीकवलक्षयात् ॥ ६७ ॥**

ज्वराणां विच्छेदाभ्यासे दृष्टान्तमाह—अधिशेत इत्यादि —अधिशेत इत्यधिष्ठाय तिष्ठति । धातुमिति सततकादिदूष्यत्वेन पठितं रक्तादिधातुम् । काल इति स्वकाले । यदि स्वकाले ज्वरं करोति दोषः, तदा तृतीयकचतुर्थकयोः किमिति विश्रामदिनेऽपि दोषानुगुणे पूर्वाह्लादिकाले न करोतीत्याह—स वृद्धिंचेत्यादि ।—न केवलं कालमात्रमपेक्षते, किन्तु वृद्धिमप्यपेक्षते तृतीयकादिकरणे दोषः । सा च वृद्धिस्तृतीयके त्र्यहेण, चतुर्थके चतुरहेणैव भवतीति भावः । प्रत्यनीकस्य कालप्रकृत्यादेर्दोषविरुद्धस्य वलक्षयः । तेन, दोषवृद्ध्या यदा प्रत्यनीकस्य क्षयो भवति, तदा ज्वरयतीत्यर्थः ॥ ६६ ॥ ६७ ॥

**कृत्वा वेगं गतवलाः स्वे स्वे स्थाने[1] व्यवस्थिताः ।**
**पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः ॥ ६८ ॥**

अथ सततकादौ यथा वृद्धो दोषो ज्वरवेगं जनयति, तस्य यथोपशमो भवति, तदाह—कृत्वेत्यादि ।—सततकादौ दोषा वेगं कृत्वा गतवला भवन्ति, गतवलाश्च पुनः स्वे स्वे रक्तादौ स्थाने स्थिता भवन्ति, पुनस्त एव वृद्धाः स्वे काले ज्वरयन्ति । अत्र च ऋत्वादिहेत्वन्तरे रक्तादिधातूनामुत्तरोत्तरं गत्वा दोषो यदा सूक्ष्मस्रोतांसि याति, तदा तदाश्रयिज्वरो ज्वरपरावृत्तिश्च भवति । ऋतुवलाद्यथा—वातोत्तरसततको वर्षाकालजः प्रत्यनीकां शरदं प्राप्यान्येद्युष्कादिरूपो भवति, अहोरात्रवलावलात् कालविशेषप्राप्तिर्यथा—वसन्तस्य मध्येषु अहोरात्रेषु वातिकश्चातुर्थको जातो यः, स वसन्तस्य पश्चिमान्यहोरात्राणि प्राप्य वलवान् तृतीयकादिरूपो भवति, तथोक्तदिनेष्वेव श्लैष्मिकः सततको जातः शेषदिनेषु श्लेष्मप्रत्यनीकेषु अन्येद्युष्कादिरूपो जायते । दोषवलाद्दुष्टहेतुसेवाभूतात् ज्वरपरावृत्तिश्च व्यक्तैव । मनोवलात् सततज्वरो मनोनिवृत्त्यादीनां अन्येद्युष्कादिज्वरवान् भवति । मनोदौर्वल्याद्भयादिना, चतुर्थकादिज्वरो तृतीयकादिज्वरवान् भवति । कर्मवशात् ज्वरपरावृत्तौ—शुभकर्मणा, दुःसहो यो ज्वरः, परावृत्त्या सुखः स भवति । पापकर्मणा, सुखो यः, स दुःसहदुःखकरज्वरो भवतीति ज्ञेयम् । एते पञ्चापि ज्वराः

१ श्लेष्मस्थान इति पाठान्तरं तु नातिसमीचीनतया प्रतिभाति ।

१ एषां च ज्वराणामृत्वादिहेत्वन्तरलाभादन्यथाभावोऽपि दृश्यते तद्यथा—सन्ततः स्वरूपं त्यक्त्वा सततकादीनामन्यतमत्वं प्रतिपद्यते, तथा चतुर्थकस्तृतीयकादिरूपत्वम् । यदाह चरकः, "ऋत्वहोरात्रदोषाणां मनसश्च वलावलात् । कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते" इति अस्यार्थः—वलावलादिति ऋत्वादिमनोऽन्तेन सम्वध्यते, वलंचावलंच वलावलम् । 'अर्थ'शब्दः प्राक्तनकर्मवाची । तं तं कालं सततकाद्युक्तं ज्वरः प्रपद्यते इति योजना । उदाहरणं च—ऋत्वहोरात्रवलावलाद्यथा—यदा निदाघोत्पन्नो वातप्रधानश्चतुर्थको वर्षासमयमाप्नोति, तदा तेनर्तुनाऽऽप्यायितवलस्तृतीयकान्तानां सन्ततकादीनामन्यतमत्वं प्राप्नोत्युत्कर्षात् । एवं वर्षासु समुत्पन्नः सन्ततः शरदं प्राप्यापकृष्टवलः सततकादीनामन्यत्वमेत्यपकर्षापकर्षौ ऋतुकृतौ व्याख्येयौ । 'अहोरात्र'शब्देन कतिपयान्यहोरात्राणि गृह्यन्ते, न ह्येकस्मिन्नहोरात्रे सन्ततादीनामुत्कर्षापकर्षाभ्यामन्यथाभाव उपपद्यते, किन्तु कतिपयैरेव । यदा वर्षाशरद्वसन्तप्रारम्भे वातादयो ज्वरं चतुर्थकमारभन्ते, तदा मध्यानि कतिपयदिनान्यवाप्य स एव तृतीयपूर्वकत्वेन विपरिणमत उत्कर्षात् अपकर्षात्तु यदान्त्यानि दिनान्याप्नोति, तदा सन्ततो वातारब्धः प्रावृषः, पित्तारब्धः शरदो वसन्तस्य च श्लेष्मारब्धः प्रतनुकत्वाद्दोषस्य सततकादीनामन्यतमत्वेन विपरिणमत इति । दोषवलावलाद्यथा—यदा सततकादीनामन्यतमकारी दोषः श्लेष्मा मधुरस्निग्धादीन् दिवास्वप्नादींश्च हेतुनाप्नोति, तदा सततं करोति । एवं वातपित्तयोरप्युदाहार्यम् । मनोवलावलाद्यथा—यदा सन्ततज्वरो सत्त्वगुणोद्रेकात् प्रहर्षावष्टम्भवहुलो भवति, तदा सततकादीनामन्यतमत्वं प्राप्नोति । यदा चतुर्थकज्वरो तमोगुणभूयिष्ठत्वाद्विषादादिभिरभिभूयते, तदा तृतीयकादीनामन्यतमो भवति, "विषादो रोगवर्द्धनानाम्" इत्यागमात् । अन्ये तु, 'मनः'शब्देन वुद्धिं व्याख्यानयन्ति, कारणे कार्योपचारात् । तस्याश्च वलावलम्, यथा—यदा चतुर्थकज्वरी प्रज्ञापराधाद्देवतादीनभिभूयाहितान्याचरति, तदा तृतीयकपूर्वेषामन्यतमत्वमाप्नोति, यदा तु शुद्धसत्त्वोत्कर्षाद्विवेकिन्या वुद्ध्या युक्तः स्यात्तदा शुभानि देवताराधनेष्टिवल्युपहारादीनाचरति, तदा सन्ततज्वरो सततकादीनामन्यतमत्वं प्राप्नोति । अर्थवशाद्यथा—सन्ततज्वरिणोऽपि यदि चतुर्थकवेदनीयं कर्म स्यात्तदा सन्ततोऽपि चतुर्थकत्वेन विपरिणमते, अथ चतुर्थकादिज्वराविष्टस्य यदि तत्कालपरिपाकिकर्म वलीयो भवति, तदा सन्ततत्वेन परिणमते, एतच्च कर्मवशत्वं ऋत्वहोरात्रदोषवलावलेष्वपि वोद्धव्यम्, तदनन्तरं तन्निर्देशादितीति निदानटीकायां विजयरक्षितः ।

केषाञ्चिद्विषमज्वरत्वेन संमताः। तथाहि—विषमत्वं विषमकालत्वेन भवति; यदुक्तमन्यत्र—"विषमो विषमारम्भः क्रियाकालोऽनुषङ्गवान्" इति। सन्तते तु द्वादशाहविसर्गेण त्रयोदशाहे पुनरनुबन्धात् कालवैषम्यमस्ति, तेन सोऽपि विषम इति, अन्ये तु, सन्ततं परित्यज्य सततकादींश्चतुरो विषमज्वरानिच्छन्ति। यतः, सन्तते कालवैषम्यं तादृशं नास्ति। उक्तञ्च खरनादेन—"ज्वराः पञ्च मयोक्ता ये पूर्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमा ज्वराः" इति। अन्ये तु—तृतीयकचतुर्थकावेव विषमौ।—विषमाणां चिरेण चोत्पादात्। यदाह दारुवाहः—"सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च। दोषो रक्तादिमार्गेषु शनैरल्पं चिरेण यत्। याति देहं न वा शेषं भूयिष्ठं प्रतिपद्यते। क्रमायत्तेन विच्छिन्नसन्तापो लक्ष्यते ज्वरे" इत्याहुः ॥६८॥

**कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः।**
**वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः॥६९॥**
**चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः।**
**जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसम्भवः ७०**

दोषोद्रेकविशेषेण तृतीयकप्रभावमाह—कफपित्तादित्यादि।—पृष्ठमभीति पृष्ठात् पृष्ठग्राहीत्यर्थः। किंवा, पृष्ठादिति ल्यब्लोपे पञ्चमी, तेन, पृष्ठमधिष्ठायेत्यर्थः। जङ्घाभ्यां पूर्वमिति जङ्घयोः प्रथमं पीडां करोति। अत्र च न पित्तप्रधानः पैत्तिकश्चतुर्थकः पित्तग्रसीवद्भवत्येवाऽनभिधानादिति मन्तव्यम्, हारीते तु पित्तजन्यत्वं यदुक्तम्, तदनुबन्धरूपपित्तजन्यत्वं प्रभावाकर्तृत्वान्न हि चतुर्थकप्रभावाभ्युपगमविरोधि ॥ ६९ ॥ ७० ॥

**विषमज्वर एवान्यश्चतुर्थकविपर्ययः।**
**त्रिविधो धातुरेकैको द्विधातुस्थः करोत्ययम् ॥७१॥**

सम्प्रति मध्येऽहनि ज्वरयत्यादावन्ते च यो मुञ्चति, स चातुर्थकविपर्ययत्वेन चातुर्थकग्रहणगृहीत एवेति दर्शयन्नाह—विषम इत्यादि।—त्रिविधो धातुरिति वातादिः। द्विधातुस्थ इति अस्थिमज्जगतः। अयं च विषमज्वर एवेति सामान्येनोक्तम्, तथापि चातुर्थकस्य प्रकाररूपविषमज्वर एवेति मन्तव्यम्। अत्र तन्त्रान्तरम्—"अस्थिमज्जगतश्चान्यश्चातुर्थकविपर्ययः। त्र्यहाद्द्व्यहं ज्वरयति आदावन्ते च मुञ्चति" इति ॥ ७१ ॥

**प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः।**
**सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः॥७२॥**

चतुर्थकविपर्ययेण संयुक्तपञ्चविधज्वराणां समानं धर्ममाह—प्रायश इत्यादि। प्रायशोग्रहणात् सततकादीनां द्वन्द्वादिजन्मत्वमपि सूचयति। ननु यदि सन्निपातारब्धत्वमेषाम्, तर्हि यदुच्यते—चातुर्थके श्लैष्मिकत्वादि, तत् कथमित्याह—सन्निपाते तु यो भूयानित्यादि।—जतूकर्णेऽपि तृतीयकचातुर्थकविपर्ययाद्युक्तत्वाभिहितम्—"विषमज्वरास्त्रिदोषजत्वेऽप्यधिकदोषलब्धाख्याः" इति ॥ ७२ ॥

**ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात्।**
**कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥ ७३ ॥**
**गुरुत्वं दैन्यमुद्वेगः[1] सदनं छर्द्यरोचकौ।**
**रसस्थिते बहिस्तापः साङ्गमर्दो विजृम्भणम्[2] ॥७४॥**
**रक्तोत्थाः[3] पिडकास्तृष्णा सरक्तं ष्ठीवनं मुहुः।**
**दाहरागभ्रम[4]मदप्रलापा रक्तसंस्थिते ॥ ७५ ॥**
**अन्तर्दाहः सतृण्मोहः[5] सग्लानिः सृष्टविट्कता।**
**दौर्गन्ध्यं गात्रविक्षेपो[6] ज्वरे मांसस्थिते भवेत्[7]॥७६॥**
**स्वेदस्तीव्रा पिपासा च प्रलापो वम्यभीक्ष्णशः[8]।**
**स्वगन्धस्यासहत्वं च मेदस्थे ग्लान्यरोचकौ ॥७७॥**
**विरेकवमने चोभे सास्थिभेदं[9] प्रकूजनम्[10]।**
**विक्षेपणं च गात्राणां श्वासः स्याच्चास्थिगे ज्वरे[11] ७८**
**हिक्का श्वासस्तथा कासः तमसश्चातिदर्शनम्[12]।**
**मर्मच्छेदो बहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ॥ ७९ ॥**

१ शैत्यमुद्वेग इति पाठान्तरम्। २ उक्तवातादिज्वराणां धातुविशेषदूष्यतयाऽधिकलक्षणानि भवन्ति, यदुक्तम्—"वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा। तथा तेषां भिषग्ब्रूयाद्रसादिष्वपि बुद्धिमान्" इति। एतदभिधानञ्च रसादिधात्वविरोधेन वातादिचिकित्साकरणार्थम्। अतस्तानाह—गुरुत्वेत्यादि।—हृदयोत्क्लेशः हृदयस्थितस्य दोषस्य उपस्थितवमनत्वमिव रसस्य हृदयस्थत्वात्, 'रसस्थे' इत्यनेन विशेषेणात्र रसो दूष्यः सर्वेषामेव ज्वराणां रसानुगत्वात्। दैन्यं क्लान्तचित्तत्वमिति विजयरक्षितः। ३ रक्तोष्ट इति पाठान्तरम्। ४ श्रमेति पाठान्तरम्। ५ अन्तर्दाहोषिका तृष्णेति, तथा पिण्टिकोद्वेष्टनं तृष्णेति पाठान्तरम्। ६ उष्मान्तर्दाहविक्षेपाविति पाठान्तरम्। ७ पिण्डिका जान्वधोजङ्घामांसपिण्डस्तस्या उद्वेष्टनं दण्डादिना पीडनेनेव वेदना पिण्डिकोद्वेष्टनम् एवमन्यत्रापि। सृष्टमूत्रपुरीषता प्रवर्तमानमूत्रपुरीषता उष्मा बहिः एतच्च विशेषपरम्, प्रायः सर्वज्वरेषु तथाभावात् "उष्मान्तर्दाहविक्षेपौ" इति पाठान्तरे—उष्मान्तः अन्तर्दाह इत्यर्थः। विक्षेपो हस्तादिचालनमिति विजयरक्षितः। ८ प्रलापोऽरत्यभीक्ष्णश इति पाठान्तरम्। भृशं स्वेद इति धर्मस्य मेदोमलत्वात्, तद्विकृत्यैव दौर्गन्ध्यं गात्रे। असहिष्णुता वेदनाया असहिष्णुत्वम् क्रोधनत्वमिति कार्तिक इति विजयरक्षितः। ९ सास्थिभेदाङ्गकूजनमिति पाठान्तरम्। १० भेदो भङ्गवत् पीडेत्यर्थः परपदार्थेषु प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, यथा—अग्निर्माणवकः एवमन्यत्रापि भेदादौ द्रष्टव्यम् कूजनमस्फुटध्वनि 'कुञ्चनम्' इति पाठान्तरेऽस्थानमेव सङ्कोच इत्यर्थः। ११ मेहेति पाठान्तरम्। १२ तमःप्रवेशनं अन्धकारप्रविष्टस्येव सम्वित्तिः। महाश्वासः श्वासाधिकारे वक्ष्यमाणलक्षणः, 'मर्म'शब्देन हृदयमुच्यते प्राधान्यादिति कार्तिकः, तस्य च्छेद इव मर्मच्छेदः इति विजयरक्षितः।

शुक्रस्थानगतः शुक्रमोक्षं कृत्वा विनाश्य च ।
प्राणवाय्वग्निसोमैश्च सार्धं गच्छत्यसौ विभुः ॥८०॥
रसरक्ताश्रितः साध्यो मेदोमांसगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थो नैव सिध्यति ॥८१॥

सम्प्रति सन्ततज्वर एव यथा सततकादिरूपो भवति, तथा सततकादयः सन्तततादिरूपा भवन्ति, तदाह—ऋत्वहोरात्रेत्यादि ।—बलाबलादिति—मनोऽन्तेन सम्बध्यते, बलश्चाबलश्च बलाबलम् । ऋत्वादीनां बलात् तथा ऋत्वाद्यबलाज्ज्वरस्तं तं सतताद्विज्वरोक्तं कालं प्रतिपद्यते, तत्र ऋतुबलादयो वर्षाभूतश्चतुर्थकः, स शरदं प्राप्य बलवान् तृतीयकादिर्भवति । अर्थवशादिति कर्मवशात् यथोक्तदिने च ज्वरयतीति ब्रुवते ॥ ७३—८१ ॥

हेतुभिर्लक्षणैः सिद्धैः[2] पूर्वमष्टविधो ज्वरः ।
समासेनोपदिष्टस्य व्यासतः शृणु लक्षणम् ॥ ८२ ॥
शिरोरुक् पर्वणां भेदो दाहो रोम्णां प्रहर्षणम् ।
कण्ठास्यशोषो वमथुस्तृष्णा मूर्च्छा भ्रमोऽरुचिः[3]॥८३
स्वप्ननाशोऽतिवाग्जृम्भा वातपित्तज्वराकृतिः ।
शीतको गौरवं तन्द्रा स्तैमित्यं पर्वणां च रुक् ॥८४॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ८५ ॥
मुहुर्दाहो मुहुः शीतं स्वेदस्तम्भो मुहुर्मुहुः ।
मोहः कासोऽरुचिस्तृष्णा श्लेष्मपित्तप्रवर्त्तनम्॥८६॥
लिप्ततिक्तास्यता तन्द्रा श्लेष्मपित्तज्वराकृतिः ।
इत्येतद्द्वन्द्वजाः प्रोक्ताः सन्निपातज उच्यते ॥ ८७ ॥

सम्प्रति अष्टविधज्वराकृतौ वक्तव्यमाह—हेतुभिरित्यादि—हेतवोऽपि ज्वरविशेषगमकत्वेनाकृतिरूपा भवन्त्येवेति कृत्वा हेतुकथनमपि यत् कृतम्, तदप्युचितम् । पूर्वमिति निदाने—"समासेनोपदिष्टस्य" इत्यादिना ये निदाने द्वान्द्विकसान्निपातिकागन्तवः समासेनोक्ताः, तेषामिह विस्तरेण लक्षणं शृणिवति । ये पुनरेकदोषजन्या वातज्वरादयः, ते तत्रैव प्रपञ्चेनोक्ता इति नेह पुनर्वक्तव्याः । भ्रमो येन चक्रस्थितमिवात्मानं मन्यते । किंवा भ्रमो भ्रान्तिः । शीतकः शीतपित्तम् । स्तैमित्यमिति वस्त्रावगुण्ठितत्वमिव । सन्तापो मध्यवेग इति नातितीव्रः सन्तापः । स्वेदस्तम्भ इति स्वेदाप्रवर्त्तनम् ॥ ८२—८७ ॥

सन्निपातज्वरस्योर्द्धं त्रयोदशविधस्य हि ।
प्राक्सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ८८॥
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक्[1] ।
वातपित्तोल्वणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥ ८९ ॥
शैत्यं कासोऽरुचिस्तन्द्रापिपासादाहरुग्व्यथाः ।
वातश्लेष्मोल्वणे व्याधौ लिङ्गं पित्तावरे विदुः ॥९०॥

सन्निपातज्वरस्योर्द्धमित्यत्र 'उर्द्ध' शब्देनाधिकवाचिना, प्रकृतिसमसमवायारब्धसन्निपातज्वराद्यानि विकृतिविषमसमवायारब्धज्वरस्य लक्षणानि, तानि वक्ष्यामीत्यर्थः । केचिद्व्याख्यानयन्ति—यत्—सास्रावकलुषनिर्भुग्नलोचनत्वादीह वक्तव्यम्, न तत् पृथग्वातादिज्वरलक्षणमेलके भवति; किंतु विकृतिविषमसमवायारब्धज्वरसंयोगमहिम्ना भवतीति । वयं तु ब्रूमः—यदि 'ऊर्द्ध' शब्देन विकृतिविषमसमवायारब्धज्वरलक्षणाभिधानमिह प्रतिज्ञायते, तदा यत् प्रत्येकदोषलक्षणमेलकेनोपपन्नं लक्षणम्—"क्षणे दाहः क्षणे शीतम्" इत्यादि, तदिहानभिहितं स्यात्, सामान्येन यान्यत्र प्रायः प्रादुर्भवन्ति, तानि विकृतिविषमसमवायारब्धानि तथा प्रकृतिसमसमवायारब्धानि च लक्षणान्युच्यन्ते ॥ ८८–९० ॥

छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ।
मन्दवाते व्यवस्यन्ते लिङ्गं पित्तकफोल्वणे ॥ ९१ ॥
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः ।
वातोल्वणे स्याद्द्व्यनुगे तृष्णा कण्ठास्यशोषता ॥९२॥
रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः ।
मूर्छा चेति त्रिदोषे स्याल्लिङ्गं पित्तगरीयसि ॥ ९३ ॥
आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः[2] ।
कफोल्वणं सन्निपातं तन्द्राकासेन चादिशेत् ॥९४॥
प्रतिश्या छर्दिरालस्यं तन्द्रा रुच्यग्निमार्दवम् ।
हीनवाते पित्तमध्ये चिह्नं श्लेष्माधिके मतम् ॥९५॥
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः ।
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ ९६ ॥
शिरोरुग्वेपथुः श्वासः प्रलापश्छर्द्यरोचकाः ।
हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ॥ ९७ ॥
शीतको गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ।
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ॥९८॥
श्वासकासप्रतिश्याया मुखशोषोऽतिपार्श्वरुक् ।
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम् ॥ ९९ ॥
वर्चोभेदोऽग्निदौर्बल्यं[3] तृष्णा दाहोऽरुचिर्भ्रमः ।
कफहीने वातमध्ये लिङ्गं पित्ताधिके विदुः ॥१००॥

१ चिरादिति पाठान्तरम् । शुक्रञ्च तत्स्थानञ्चेति शुक्रस्थानम्, ननु शुक्रस्य स्थानम् । शुक्रस्य सर्वदेहगतत्वेन नियतस्थानासम्भवादिति यदुक्तम्—"यथा पयसि सर्पिस्तु गुडश्चेक्षुरसे यथा । शरीरेषु तथा नृणां शुक्रं विद्याद्भिषग्वरैः" इति । 'विशेषत' इति पदेन शुक्रस्य बाहुल्यं विसर्गः अन्यस्यापि रक्तादेरिति वदन्तीति विजयरक्षितः । २ हेतुभिर्लक्षणैश्चोक्त इति पाठान्तरम् । ३ भ्रमोऽरतिरिति पाठान्तरम् ।

१ क्रमः इति पाठान्तरम् । २ आलस्यारुचिहृल्लासवमिदाहतृषाभ्रमैरिति पाठान्तरम् । ३ पर्वभेदोऽग्निदौर्बल्यमिति पाठान्तरम् ।

सन्निपातज्वरस्योर्द्ध्वमतो वक्ष्यामि लक्षणम्।
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ॥१०१॥
सास्रावे कलुषे रक्ते निर्भुग्ने चापि दर्शने।
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ॥१०२॥
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः।
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥१०३॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च।
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा १०४॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः।
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ॥ १०५॥
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम्।
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः १०६

अत ऊर्द्ध्वमिति पदस्य घातः परेणेत्यर्थः। निर्भुग्ने इति अतिकुटिले। परिदग्धा दग्धवत् कृष्णवर्णा खरस्पर्शा गोजिह्वावत्। स्रस्ताङ्गता निःसहावयवता। ष्ठीवनं रक्तस्य पित्तस्य वा मुखेन स्वल्पोद्गिरणम्। शिरसो लोठनमिति इतस्ततो नयनम्, कृशत्वं नातिगात्राणां दोषपूर्णत्वेन। प्रततं निरन्तरम्। कोठो भाद्धकीये—"वरटीदष्टसङ्काशः कण्डूयमानो लोहितोऽसकफपित्तात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" इति। मूकत्वं मन्दवचनत्वम्, अवचनता वा ॥ ९१—१०६॥

दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्त्वतोऽन्यथा ॥

सन्निपातस्यासाध्यताकृच्छ्रसाध्यतालक्षणमाह—दोष इत्यादि। अत्र 'दोष'शब्दो विबद्धोपपदात् मले वर्त्तते। आहारापाकान्नष्टेऽग्नावित्यर्थः। सर्वाणि च सम्पूर्णानि बलीयांसि लक्षणानि यस्य स सर्वसम्पूर्णलक्षणः। असाध्यकृच्छ्रसाध्याभिधानेन सुखसाध्यो न भवतीति दर्शितम्। यदुक्तम्—"सन्निपातो दुःश्चिकित्स्यानां" इति, तथा च भाद्धकिना—"मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता" इति ॥१०७॥

निदाने त्रिविधा प्रोक्ता या पृथग्जज्वराकृतिः।
संसर्गसन्निपातानां तया चोक्तं स्वलक्षणम् ॥१०८॥

निदान इत्यादि।—ज्वरनिदाने प्रोक्ता—"तत्र यथोक्तानां लिङ्गानाम्" इत्यादिना ग्रन्थेन प्रागुक्तेत्यर्थः, पुनः प्रकरणागतत्वादुच्यन्त इति न पौनरुक्त्यम्। तया चोक्तं स्वलक्षणमिति तया द्वन्द्वरूपया द्वन्द्वलक्षणं तथा सन्निपातरूपया सन्निपातलक्षणमित्यर्थः ॥ १०८॥

आगन्तुरष्टमो यस्तु स निर्दिष्टश्चतुर्विधः।
अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः ॥१०९॥
शस्त्रलोष्टकशाकाष्ठमुष्ट्यरत्नितलद्विजैः।
तद्विधैश्च हते गात्रे ज्वरः स्यादभिघातजः ॥११०॥
तत्राभिघातजे वायुः प्रायो रक्तं प्रदूषयन्।
सव्यथाशोफवैवर्ण्यं करोति सरुजं ज्वरम् ॥ १११॥

आगन्तुं चतुर्विधं विभजन्नाह—आगन्तुरित्यादि।—कशा सार इति। ख्याता। अत्र मुष्टिः 'कील' इति ख्यातः। हते अभिहते। प्रायो रक्तमिति अत्यर्थं रक्तं दूषयन् मांसादि चाल्पं दूषयतीत्यर्थः। यद्यपि निदानेऽपि "तत्राभिघातजेन वायुना दुष्टशोणिताधिष्ठानेन" इत्युक्तम्, तथापीह रक्तस्य साक्षाद्दुष्टिः, तथा मांसादीनां मनाग्दुष्टिरुच्यत इति विशेषः ॥ १०९—१११॥

कामशोकभयक्रोधैरभिसक्तस्य यो ज्वरः।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ॥ ११२॥
कामशोकभयाद्वायुः क्रोधात् पित्तं, त्रयो मलाः।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः ॥११३॥
भूताधिकारे व्याख्यातं तदष्टविधलक्षणम्।
विषवृक्षानिलस्पर्शात्तथान्यैर्विषसम्भवैः ॥ ११४॥
अभिषक्तस्य चाप्याहुर्ज्वरमेकेऽभिषङ्गजम्।
चिकित्सया विषघ्न्यैव प्रशमं लभते नरः ॥ ११५॥

अभिषङ्गज्वरेषु दोषविशेषमाह—कामेत्यादि। ननु निदाने—"अभिषङ्गजः पुनर्वातपित्ताभ्यामनुबध्यते" इत्युक्तम्, तत् किमिह भूताभिषङ्गजस्य त्रिदोषानुबन्धः, उच्यते—न तत्र कामाद्यभिषङ्गजे यः प्रायो भवति, तदभिप्रायेणोक्तम्—"वातपित्ताभ्यामनुबध्यते" इति, कामादिकेषु हि क्वचिद्वातः, क्वचित् पित्तमिति वातपित्तानुबन्धो ज्ञेयः। भूतसामान्यलक्षण इति देवस्वरूपादयोऽष्टौ उन्मादे अष्टौ भूता उक्ताः, तेषां मध्ये आवेशकर्तृभूतस्य यल्लक्षणम्, तेन समान्यत्र दोषलक्षणानि भूतज्वरे भवन्ति ' अत्र काश्मीराः विषवृक्षानिलस्पर्शेत्यादिग्रन्थं विषज्वराभिधायकं पठन्ति। तेन, विषजोऽप्यभिषङ्गज एव प्रविशति। ये तु न पठन्ति, तन्मतेऽप्यभिषङ्गज एव विषौषधिगन्धजस्याप्यवरोधः। अन्ये तु विषजं विषजनितपित्तकृतत्वेन दोषज एव क्षिपन्ति ॥ ११२—११५

अभिचाराभिशापाभ्यां सिद्धानां यः प्रवर्त्तते।
सन्निपातज्वरो घोरः स विज्ञेयः सुदुःसहः ॥११६॥
सन्निपातज्वरस्योक्तं लिङ्गं यत्तस्य तत् स्मृतम्।
चित्तेन्द्रियशरीराणामार्त्तयोऽन्याश्च नैकशः ॥११७॥
प्रयोगन्त्वभिचारस्य दृष्ट्वा शापस्य चैव हि
स्वयं श्रुत्वानुमानेन लक्ष्यते प्रशमेन वा ॥ ११८॥
वैविध्यादभिचारस्य शापस्य च तदात्मके।
यथाकर्म प्रयोगेण लक्षणं स्यात् पृथग्विधम् ॥११९॥
ध्याननिःश्वासबहुलं लिंगं कामज्वरे स्मृतम्।
शोकजे वाष्पबहुलं त्रासप्रायं भयज्वरे ॥ १२०॥

१ कशा अश्वादेश्चालनार्थं ताडनसाधने पदार्थे (कोडा, चाबुक) इति। २ प्रयोगस्त्वभिचारस्येति पाठान्तरम्।

क्रोधजे बहुसंरम्भं भूतावेशे त्वमानुषम् ।
मूर्च्छामोहमदग्लानिभूयिष्ठं विषसम्भवे ॥ १२१ ॥
केषाञ्चिदेषां लिङ्गानां सन्तापो जायते पुरः ।
पश्चात्तुल्यं तु केषाञ्चिदेषु कामज्वरादिषु ॥ १२२ ॥
कामादिजानामुद्दिष्टं ज्वराणां यद्विशेषणम् ।
कामादिजानां रोगाणामन्येषामपि तत् स्मृतम् १२३

अभिचारो हिंसार्थाथर्वमन्त्रहोमादिः । अभिशापो अभिशपनमेव । सिद्धा मन्त्रौषधतपःशमादिसिद्धाः । 'सन्निपातज्वरस्योक्तम्' इत्यादिग्रन्थमत्र काश्मीराः पठन्ति, स च नातिप्रसिद्धः ॥ ११६—१२३ ॥

ते पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ।
हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः ॥१२४॥
मनस्यभिहते पूर्वं कामाद्यैर्न तथा बलम् ।
ज्वरः प्राप्नोति वाताद्यैर्देहो यावन्न दूष्यति ॥ १२५॥
देहे वाभिहते पूर्वं वाताद्यैर्न तथा बलम् ।
ज्वरः प्राप्नोति कामाद्यैर्मनो यावन्न दूष्यति ॥ १२६॥

आगन्तोर्निजाद्भेदकं धर्ममाह—ते पूर्वमित्यादि—केवला इति निजदोषरहिताः निजैरिति निजदोषलक्षणैः । हेत्वौषधविशिष्टाश्चेति निजाज्ज्वराद्विशिष्टहेतवो विशिष्टौषधाश्च भवन्ति । तत्र विशिष्टो हेतुरभिघातादिः, भेषजञ्च परिषेकमन्त्रादि ॥ १२४—१२६ ॥

संसृष्टाः सन्निपतिताः पृथग्वा कुपिता मलाः ।
रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च ॥१२७॥
स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम् ।
स्रोतांसि रुध्वा संप्राप्ताः केवलं देहमुल्बणाः॥१२८॥
सन्तापमधिकं देहे जनयन्ति नरस्तदा ।
भवत्यत्युष्णसर्वाङ्गो ज्वरितस्तेन चोच्यते ॥ १२९ ॥

संसृष्टा इत्यादिना सर्वज्वरसाधारणसम्प्राप्तिं ब्रूते । सम्प्राप्तिरपि हि सर्वज्वराणामाकृतिरेव, तेन नोत्सूत्रमस्याभिधानम् । किंवा, क्रमप्राप्ते सामज्वरलक्षणे वक्तव्येऽरुच्यादीनां सामज्वरलक्षणानामुत्पादे उपपत्तिं दर्शयितुं संप्राप्तिरुच्यते । संसृष्टा इति युग्मभूताः । सन्निपतिता इति त्रयो मिलिताः । [1]पक्तिमिति पक्तिहेतुतया जाठराग्निं ब्रूते । स्थानादिति ग्रहण्याः, ग्रहणी जाठराग्निस्थानम् । स्वेनेति दोषोष्मणा, तेनेति जाठराग्न्यूष्मणा । देहोष्मण इति सकलदेहचारिणः प्राकृतोष्मणः । वातश्लेष्मणोस्तु यद्यपि पित्तवदुष्मा नास्ति, तथापि तयोर्भूतत्वे उष्मा योऽस्ति, स इह ग्राह्यः । वक्तव्यं हि ग्रहण्यध्याये—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" इति । किंवा, तेनेति दिव्यरूपज्वराधिष्ठानप्रभावकृतं दोषाणामुष्माणं ग्राहयति । किंवा, ज्वरसामान्यसम्प्राप्तिप्राप्तपित्तोष्माणं निर्दिशयति । सर्वत्र हि ज्वरे पित्तमवश्यं भवति, यदुक्तम्—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना" इति । केवलमिति स्तम् ॥ १२७—१२९ ॥

स्रोतसां संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति
स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे
अरुचिश्चाविपाकश्च गुरुत्वमुदरस्य च ।
हृदयस्याविशुद्धिश्च तन्द्रा चालस्यमेव च ॥ १३
ज्वरोऽविसर्गी बलवान् दोषाणामप्रवर्तनम् ।
लालाप्रसेको हृल्लासो क्षुन्नाशो विरसं मुखम् १३
स्तब्धसुप्तगुरुत्वं च गात्राणां बहुमूत्रता ।
न विड्जीर्णा न च ग्लानिर्ज्वरस्यामस्य लक्षणम्१३३
ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ १३४ ॥

स्वेदं ना नाधिगच्छतीत्यत्र प्राय इति योज्यं क्वचिज्ज्वरे स्वेदस्याप्यभिहितत्वात् । 'ना' इति पुरुषः । अविसर्गीति नित्यानुषक्तः । दोषाणामिति मलसम्बन्धानां दोषाणाम् । अप्रवर्तनमविसर्गः । क्षुन्नाश इति बुभुक्षाऽभावः । न विड्जीर्णेति न पुरीषं पक्वम् । न ग्लानिरिति न क्षीणमांसता ॥ १३०—१३४ ॥

क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥ १३५ ॥

क्षुत्क्षामतेत्यादिना निरामज्वरलक्षणमाह—अत्र च क्षुदादयो दोषपाकाद्भवन्तो विनाप्यष्टाहं निरामदोषारब्धज्वरलक्षणं भवति । अष्टाहस्तु क्षुदादीन् विना दोषपाके सत्यपि भेषजदानयोग्यं ज्वरस्य व्याधेर्निरामतां ब्रूते, अतएव "पाचनं शमनीयं वा कषायं पाययेत्तु तम्" इति विकल्पद्वयेन, यदाष्टाहक्षुधादिदोषपाकलक्षणानुदयः, तदा दोषपाकार्थं पाचनीयं देयम्, अथ क्षुधादिसमुदयोऽपि जातः, तदा शमनीयं देयम्, सर्वथा निरामस्य ज्वरस्य एतामेव सर्वथानिरामतामुपदिशति । खरनादेनोक्तम्—यत्—"न च निःसृततैवैका निरामज्वरलक्षणम् । चिरादपि हि पच्यन्ते सन्निपातज्वरे मलाः । सप्तरात्रातिवृद्धिं च क्षामतादिस्वलक्षणम् । तस्मादेतद्द्वयं दृष्ट्वा निरामज्वरमादिशेत्" इति । अष्टाहादर्वाग्दोषपाकजनितक्षुदादिदर्शनान्निरामता सुश्रुतेनाष्टाहादर्वाग्भेषजदानं दर्शयता प्रतिपादिता । यदुक्तम्—"अर्वागपि च देयं स्यात् भेषजं दोषपाकतः" इति । तस्मात् क्षुदादयोऽष्टाहश्च लक्षणं यथोक्तन्यायाज्ज्ञेयम् ॥ १३५ ॥

नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम् ।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥ १३६ ॥

"औषधञ्च क्रियाक्रमम्" इत्यनेन यद्यप्यौषधमादावुक्तम्, तथापि तस्य क्रियाक्रमविशेषणतया औषधमतिक्रम्य 'नव-

१ विशदमिति पाठान्तरम्.

ज्वर' इत्यादिना क्रियाक्रमं ब्रूते । ( क्रियायाश्चिकित्सायाः क्रमः परिपाटी ) । तत्राप्यहितस्यैव प्रथमं निषेधः । 'अन्न' शब्देन गुर्वन्नमभिधत्ते । हारीतेन हि—"नवज्वरे व्यायामादि प्रत्येकं दोषकोपनम् । गुर्वन्नभोजनञ्चापि विष्टम्भी दोषकोपनम्" इत्युक्तम् । कषायांश्चेति जातौ बहुवचनम् । तेन, कषायं वर्जयेदित्यर्थः । उक्तं ह्यत्र जतुकर्णेन—"कषायरसगुरूष्णस्निग्धान्नस्नानाभ्यङ्गान् नवज्वरे वर्जयेत्" इति ॥ १३६ ॥

**ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ।**
**क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥ १३७ ॥**

ज्वर इत्यादौ 'लङ्घन' शब्देनेहानशनं विवक्षितम् । "चतुःप्रकारा संशुद्धिः" इत्यादिना लङ्घनबृंहणीये दशविधमेव लङ्घनमुक्तम्, तथापि तेषामिहावस्थाविशेषेण विनियोगाल्लङ्घनमेवेति नियमोऽपवादविषयं त्यक्त्वा समुन्नियमानावधारणे ज्ञेयः । यथा—"नरञ्च नारायणमेव योभौ सुतौ तु तौ संजनयाम्बभुव" इत्यत्र । तेन, अवस्थायां वमनमपि भवति वक्ष्यमाणम् । यत्तु लङ्घनबृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वरं पठित्वा उक्तम्—"पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" इति, तत्र भेषजप्रयोगस्यादौ पाचनं कर्तव्यमिति ब्रूते, न ज्वरादौ, तेन, इहादौ लङ्घनाभिधानं न विरुध्यते । हारीते, तु "पित्तश्लेष्मविशुद्ध्यर्थं कुर्याद्वमनमादितः" इति यदुक्तम्, तत् "कफप्रधानान्" इत्यादिवक्ष्यमाणावस्थायां ज्ञेयम् । 'क्षय' शब्देन धातुक्षयकृतं ज्वरम् किंवा, राजयक्ष्मज्वरं गृह्णाति । 'अनिल' शब्देन निरामानिलग्रहणम्, किंवा, 'क्षयानिल' शब्देन धातुक्षयकुपितानिलग्रहणम् । यदुक्तम्—'वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति । यस्तु मार्गावरणेन वायुः कुप्यति, स आवरकधर्मितया प्रायेण सामो भवति, तत्र च लङ्घनं मात्रया कर्तव्यमेव । यदुक्तम्—"सामे वातेऽपि लङ्घनं कुर्यादेव मलपक्त्यर्थं युक्त्या, तत्तु यथा कफे" इति । अनिलज्वरमुक्त्वापि कामादिज्वराभिधानम्, कालान्तरेण वातसम्बन्धो भवति । तेन, प्रथममपि वातासम्बन्धे कामादिज्वराणामलङ्घनीयत्वोपदर्शनार्थम् १३७

**लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले ।**
**विज्वरत्वं लघुत्वंच क्षुच्चैवास्योपजायते ॥ १३८ ॥**
**प्राणाऽविरोधिना चैनं लङ्घनेनोपपादयेत् ।**
**बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ १३९ ॥**

लङ्घनफलमाह—लङ्घनेनेत्यादि ।—प्राणाविरोधिनेति बलाविरोधिना, विरोधश्चातिक्षयकरत्वेनेहोच्यते । आरोग्यं बलवत एव भवतीति बलाधिष्ठानमारोग्यमुक्तम् । 'यत्' इत्यारोग्यं प्रत्यवमृशति ॥ १३८ ॥ १३९ ॥

**लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ।**
**पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥ १४० ॥**

प्रकृतस्य लङ्घनस्य पाचनतां दर्शयन्नपरानपि स्वेदादीनि पाचनान्याह—लङ्घनमित्यादि ।—काल इत्यष्टाहः । तिक्तको रसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः, स्वतन्त्रभेषजप्रयोगस्तरुणे निषिद्ध एव । उक्तं च,—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" इति । 'अविपक्वानां दोषाणाम्' इति कृत्वापि 'तरुणे ज्वरे' इति यत् करोति, तेन, अष्टाहादूर्द्ध्वमतरुणे ज्वरे अपक्वेषु दोषेषु प्राधान्येन कषायपानं पाचनमधिकृतम्, न लङ्घनादय इति दर्शयति ॥ १४० ॥

**तृष्यते सलिलं चोष्णं दद्याद्वातकफज्वरे ।**
**मद्योत्थे पैत्तिके वाथ शीतलं तिक्तकैः शृतम् १४१**
**दीपनं पाचनञ्चैव ज्वरघ्नमुभयं हि तत् ।**
**स्रोतसां शोधनं बल्यं रुचिस्वेदकरं शिवम् ॥१४२॥**

लङ्घनादिकाले एव अवस्थाविशेषे देयं[3] जलमाह—तृष्यत इत्यादि ।—वातकफज्वर इति वातज्वरे, कफज्वरे वातकफज्वरे च । मद्योत्थे कफादिज्वरेऽपि शीतलं जलं ज्ञेयम् । तिक्तकैः शृतमिति वक्ष्यमाणमुस्तादिभिः शृतम् । उभयमित्युष्णं तथा तिक्तकशृतशीतं च । त्रिदोषकफपित्तज्वरयोस्तु यद्यपीह पानीयं नोक्तं; तथापि सामान्येन विमानस्थाने

१ आमाशयसमुत्थानां पूर्वं लङ्घनमौषधमित्युक्तं । ज्वरोऽप्यामाशयसमुत्थः, अतस्तत्र लङ्घनमुपदिशति ज्वरे लङ्घनमित्यादि । यद्यपि लङ्घनबृंहणीये "चतुःप्रकारा संशुद्धिः" इत्यादिना दशविधमेव लङ्घनमुक्तम्, तथापि व्यायामप्रवातयोर्वर्जनीयत्वेनैवोक्तत्वात् संशोधनादीनाञ्चावस्थाविशेषनियतत्वात् पारिशेष्यादत्रोपवास एव "लङ्घन" शब्देनोच्यते । अतएव लङ्घनमेवेत्येवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते तेन, ज्वरस्य पूर्वरूपे यल्लघ्वशनादिविधानम्, तस्य न निषेधः वाग्भटेनापि "स्नानाभ्यङ्गप्रदेहांश्च परिशेषंच लङ्घनम्" इत्यनेन नवज्वरे अनशनरूपलङ्घनापेक्षया परिशेषलङ्घनप्रतिषेधं कुर्वता संशोधनादिरूपं लङ्घनं निषिध्यते किंवा, चरकेण निदानस्थाने "हितं लघ्वशनमपतर्पणं वा" इति यदुक्तं, तत् पूर्वरूपावस्थायां व्यक्तायांतु लङ्घनमेवेत्येवकारेण लघ्वशनमपि निषिध्यते इति ज्ञेयम् । ननु लङ्घनबृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वरं पठित्वा उक्तं "पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" इति, इह तु लङ्घनमेवादावित्यतो विरोधः । नैवं, तद्भेषजप्रयोगस्यादौ पाचनम्, न तु ज्वरस्यादावित्यवगम्यते । किंवा, आदावेव लङ्घनं कार्यमिति योज्यं, तेन, जीर्णज्वरे न लङ्घनं कार्यमिति बोधयति । उक्तं हि वाग्भटे "शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् । नेष्यते तेष्वभिहितं शमनं यन्न कर्षणम्" इति । हारीतेन तु "पित्तश्लेष्माविशुद्ध्यर्थं कुर्याद्वमनमादितः"इति । यदुक्तम्, तत्, "कफप्रधानान्" इत्यादिवक्ष्यमाणावस्थायां ज्ञेयमिति शिवदासः ।

१ लाघवंच शरीरस्य क्षुच्चैवास्योपजायते इति पाठान्तरम् । २ वातकफात्मके इति पाठान्तरम् । ३ अवस्थादेयमिति पाठान्तरम् ।

यदुक्तम्—"किन्तु खलु ज्वरितेभ्यः पानीयमुष्णं प्रयच्छन्ति" इत्यादिना, तत्प्रामाण्यादुष्णमेव जलं देयम्, वातपैत्तिके तु ज्वरे अत्यर्थदाहादिकारके शीतलमेव देयमित्यपि विगान एव "अत्यर्थोत्सन्नपित्ते" इत्यादिना ग्रन्थेन सूचितम् १४१॥१४२

**मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।**
**शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥१४३॥**

मुस्तेत्यादिः पानीयसाधकः[1] पडङ्गप्रयोगः। अत्र शुण्ठी अतिक्ता चाऽऽमाशयदुष्टिकारकज्वरहितत्वाद्विहिता; अत्र 'शृतशीतं जलं दद्यात्' इति जलसंस्कारश्रुते क्वाथपरिभाषया न क्वाथकरणम्, किंतु संस्कारकपरिभाषया। परिभाषा च स्वतन्त्रानुक्ताऽपि वृद्धव्यवहारसिद्धा प्रमाणीभूतैव।—सा च "शदम्बु, शृतशीताम्बु पडङ्गादि प्रयुज्यते। कर्पमात्रं ततो द्रव्यं[2] साधयेत् प्रास्थिकेऽम्भसि। अर्धशृतं प्रयोक्तव्यं पाने पेयादिसम्विधौ" इति, परिभाषार्थश्च व्यक्त एव ॥ १४३ ॥

**कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान्।**
**बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत् ॥१४४॥**

अविशेषेण तरुणातरुणज्वरेऽवस्थाविधेयं वमनमाह—कफप्रधानानित्यादि।—कफः प्रधानो येषाम्, ते कफप्रधानाः। उत्क्लिष्टानिति हृल्लासादिना वहिर्गमनोन्मुखान्। आमाशयस्थितानित्यनेन सर्वशरीरं परित्यज्यामाशयगमनं दर्शयति। ज्वरकरानित्यनेन, ज्वरकरान् हि दोषानेवंविधानेव नवज्वरे वमनैर्हरेत्, नान्यथेति दर्शयति। काल इति यथोक्तायामवस्थायाम्। वमनैरिति वहुवचनैः प्रकृत्याद्यपेक्षया वहूनां वमनप्रयोगाणां प्रयोगं दर्शयति। वम्यानामित्यनेन, अवम्यगर्भिण्यादिपु वमनं निपेधयति। अत्र च वमने स्वयमेवोत्क्लिष्टत्वाद्दोपस्य दोपोत्क्लेशप्रयोजनकौ स्नेहस्वेदौ न क्रियेतेऽल्पौ वा क्रियेते ॥ १४४ ॥

**अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।**
**हृद्रोगं श्वासमानाहं मोहञ्च जनयेत् भृशम्[3] ॥१४५॥**
**सर्वदेहानुगा सामा धातुस्था असुनिर्हराः[4]।**
**दोषाः फलेभ्य आमेभ्यः स्वरसा इव सात्ययाः १४६**

उक्तावस्थाव्यतिरेकेण वमने दोषमाह—अनुपस्थितेत्यादि—सर्वदेहानुगा इति सूक्ष्मशिरात्वगाद्यनुगताः। सामा इति सामत्वेन स्त्यानाः प्रवलाश्च। धातुस्था इति धातुपु अत्यन्तानुप्रवेशव्यवस्थिताः। न सुखेन निर्ह्रियन्ते इति असुनिर्हराः। किं वा, असून् प्राणान् निर्हरन्तीति असुनिर्हराः। अत्रार्थे फलानामित्यादिना दृष्टान्तमाह—आमानां फलानां यथा स्वरसा निर्हरणे सात्यया भवन्ति, तथा यथोक्ता अपि दोषा इत्यर्थः, सात्यया इति अत्ययदाः ॥१४५॥१४६॥

१ पाचनीयसाधक इति पाठान्तरन्तु नातिमनोरमम्। २ द्रव्यमिति पाठान्तरम्। ३ कासं च कुरुते भृशमिति पाठान्तरम्। ४ दुःखनिर्हरा इति पाठान्तरम्।

**वमितं लङ्घितं काले यवागूभिरुपाचरेत्।**
**यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ १४७ ॥**
**यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः।**
**तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥१४८॥**
**ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः।**
**वातमूत्रपुरीषाणां दोषाणाञ्चानुलोमनाः[1] ॥ १४९ ॥**
**स्वेदनाय द्रवौष्ण्यत्वाद्द्रवत्वाच्चट्प्रशान्तये।**
**आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥१५०॥**
**ज्वरघ्यो ज्वरसात्म्यत्वात्[2] तस्मात्पेयाभिरादितः[3]।**
**ज्वरानुपचरेद्धीमानृते मद्यसमुत्थितान् ॥ १५१ ॥**
**मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके।**
**ऊर्ध्वगे रक्तपित्ते च यवागूर्न हिता ज्वरे[4] ॥ १५२ ॥**

वमनलङ्घनयोरनन्तरं यद्विधेयम्, तदाह—वमितमित्यादि।—वमितं लङ्घितमिति, अवस्थावशात् कदाचिद्वमितं कदाचिल्लङ्घितं कदाचिच्च वमितं लङ्घितम्। वमनानन्तरं हि यदा सम्यग्विशुद्धिर्न भूता, तदा तदहर्लङ्घनमपि क्रियते। काल इत्यन्नदानयोग्ये काले। यथास्वौषधसिद्धाभिरिति यथास्वौषधं यस्यां यवाग्वां यद्भेषजं पिप्पलीनागरादि वक्तव्यम्, तत्सिद्धाभिः। किंवा, यस्मिंश्च ज्वरे यद्भेषजं पाचनं च वक्तव्यम्, तत्सिद्धाभिः। उक्तं हि सुश्रुते—"अन्नकाले हिता पेया यथास्वं पाचनैः कृता" इति यथास्वं यथास्वमिति वीप्सायामव्ययीभावः। मण्डपूर्वाभिरिति मण्डप्रधानाभिः[5]। तत्र प्रथमं मण्डं पीत्वा तदनु घनभागो योज्यैः। यावज्ज्वरमृदुभावादिति यावज्ज्वरस्य दोषपाकात् तीक्ष्णता निवर्तते। अतिज्वरे मृदुभावेऽपि पडहं यावत्। अयं च षडहः किं पेयादिनात् प्रभृति भवतु, आहोस्विज्ज्वरोत्पाददिनादिति पक्षद्वयमुत्तरत्र "ज्वरितं षडहेऽतीते" इत्यत्र निर्लोचयिष्यामः। स्वेदनायेत्यादौ भवन्तीति शेषः। ज्वरसात्म्यत्वमभिधाय यवागूनामविषयं ज्वरितमाह—ऋत इति। ऋते मद्यसमुत्थितानिति मद्यकारणे ज्वरे निषेधः। तथा मदात्ययेऽपि व्याधौ, मद्यनित्ये मद्यपे अन्यहेतुजोऽपि यो ज्वरः, तथा ग्रीष्मे, तथा पित्तकफाधिके यो ज्वरः, तथोर्ध्वरक्तपित्तिनो यो ज्वरः, तेषु सर्वेषु पेया न देया। इह मदात्ययादीनां पेयार्हेषु जातोऽपि ज्वरः पेयानर्हः। 'पित्तकफाधिके' इत्यनेन पित्तकफयोरति-

१ विवन्धस्यानुलोमिकाः इति पाठान्तरम्। २ रससात्म्यत्वादिति पाठान्तरम्। ३ तस्मात्पूर्वं समाचरेदिति पाठान्तरम्। ४ यवागूभिर्ज्वरान् वृद्धानृत इति पाठान्तरम्। ५ मण्डपूर्वाभिरादित इति मण्डः पूर्वः प्रधानोऽच्छतया यासां ताभिरित्यर्थः एतेन, पेयाया ग्रहणम्, तस्या एव वहुद्रवत्वेन मण्डप्रधानत्वात्, विलेप्यास्तु निरासः तस्या अल्पद्रवत्वेन मण्डप्रधानत्वाभावात् अन्ये तु,—मण्डः पूर्वः प्रधानाभ्यवहार्यो यासां ता इत्याहुः तेन, प्रथमं स्वच्छभागं खादित्वा ततो घनभागः खाद्य इत्यर्थ इति शिवदासः।

मात्रोद्गमे सति पेयाया अदानं बोधयति । तेन, कफजे ज्वरे पित्तजे ज्वरेऽनुद्धूतदोषे पेया दातव्या । तथा हि तन्त्रान्तरे— "कफजेऽपि यदा क्षीणो लङ्घनादिक्रमात् कफः । शस्ता एव यवाग्वस्तु तत्र पित्तेऽप्ययं क्रमः" इति । तथाऽत्रैव— "पैत्तिके वाथ शीतां मधुयुतां पिबेद्यवागूम्" इत्यनेन पित्तेऽपि यवागूं वक्ष्यति । यदुक्तम्—"पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम् । तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी" इति हारीतेनोक्तम्, तदतिवृद्धकफविषयं ज्ञेयम् । अन्ये तु मिलितपित्तकफाधिके पुरुषे यवागूप्रतिषेधमिच्छन्ति । यदि तु 'ऊर्द्ध्वगे कफपित्ते च' इति पाठस्तदा, वातज्वरिणोऽपि ऊर्द्ध्वगं कफपित्तं वमनेन नायाति स्वयम्, तदापि पेया न देयेत्यर्थः, सुश्रुते तु "कफपित्तपरीतस्य ऊर्ध्वास्त्रक्पित्तिनस्तथा[1] । मद्यनित्यस्य न हिता यवागूः" इत्युक्तम् । तेन, ऊर्द्ध्वगे रक्तपित्ते' इति पाठो युक्तः ॥ १४७—१५२ ॥

**तत्र तर्पणमेवाग्रे प्रयोज्यं[2] लाजशक्तुभिः ।**
**ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥ १५३ ॥**

"ऊर्द्ध्वगे तर्पणपूर्वम्" इति वचसा यावगूं बाधित्वा ऊर्ध्वगे रक्तपित्ते तर्पणं यद्यपि विहितमेव, तथापि, ऊर्द्ध्वगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमविधानम् । एतत् तर्पणं तोयपरिप्लुताः सक्तवः । ज्वरापहाणि फलानि द्राक्षादाडिमादीनि । वचनं हि—"द्राक्षादाडिमखर्जूरपियालैः सपरूषकैः । तर्पणार्हेषु कर्तव्यं तर्पणं ज्वरनाशनम्" इति ॥ १५३ ॥

**ततः सात्म्यबलापेक्षी भोजयेज्जीर्णतर्पणम् ।**
**तनुना मुद्गयूषेण जाङ्गलानां रसेन वा ॥ १५४ ॥**
**अन्नकालेषु चाप्यस्मै विधेयं दन्तधावनम् ।**
**योऽस्य वक्त्ररसस्तस्माद्विपरीतं प्रियं च यत् ॥१५५॥**
**तदस्य मुखवैशद्यं प्रकाङ्क्षां चान्नपानयोः ।**
**धत्ते रसविशेषाणामभिज्ञत्वं करोति यत् ॥१५६॥**
**विशोध्य द्रुमशाखाग्रैरास्यं प्रक्षाल्य चासकृत् ।**
**मस्त्विक्षुरसमद्याद्यैर्यथाहारमवाप्नुयात् ॥ १५७ ॥**

जीर्णं तर्पणं यस्य तं जीर्णतर्पणम् । मुद्गयूषस्य जाङ्गलरसस्य विकल्पः सात्म्यबलापेक्षश्च ज्ञेयः । दुर्बलो हि दुर्बलाग्निः प्रायो भवति, तस्य मुद्गयूषो लघुत्वेन देयः, इतरस्य तु जाङ्गलो रसः ॥ १५४—१५७ ॥

**पाचनं शमनीयं वा कषायं पाययेत्तु तम् ।**
**ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् ॥ १५८ ॥**

सम्प्रति कषायपानविषयमाह—पाचनमित्यादि—पाचनमित्यामदोषपाचनम् । शमनीयमिति पक्वदोषोपशमनम् । एतच्च विकल्पद्वयं योग्यतया यथाक्रममामदोषविषयं तथा पक्वदोषविषयं ज्ञेयम् । षडहेऽतीत इति ज्वराहादारभ्य षडहेऽतिक्रान्ते, अतः सप्तमेऽहनि लघ्वन्नं मात्रया स्वरूपेण च यत्, तत्प्रतिभोजितं ज्वरितमष्टमेऽहनि कषायं पाययेदिति वाक्यार्थः। एवं च पूर्वोक्ताष्टाहकृतनिरामताव्यवस्थया पाचनस्य वा उपयोग उपपन्नो भवति । ननु पेयाप्रयोगे "यावज्ज्वरमृदुभावात् षडहे वा विचक्षणः" इत्युक्तम्, ततश्च पेययैव तावत् षडहो व्याप्यते, पूर्वं च 'ज्वरादौ लङ्घनमुक्तम्, तच्चानिर्दिष्टकालमपि 'लङ्घनेन क्षयं नीते' इत्यादिग्रन्थोक्तलङ्घितफलं यावता कालेन भवति, तावत्कालं कर्तव्यम् । हारीतेन तु कालोऽपि दर्शितः, यथा—"लङ्घनं लङ्घनीयानां कुर्याद्दोषानुरूपतः । त्रिरात्रमेकरात्रं वा षड्रात्रमथवा ज्वरे" इति । तेन, ज्वरलङ्घनदिने तथा षडहेनैव समं ज्वराहादारभ्याष्टाहातिक्रमोऽपि भवति, ततश्च ज्वराहादारभ्याष्टाहे पाचनशमनीयकषायो भवतु । तस्मात् पेयाप्रयोगषडहेऽतीते "पाचनं शमनीयं वा कषायं पाययेत्" इत्यभिप्रायः । तथा "ज्वरे पेयां कषायांश्च सर्पिः क्षीरं विरेचनम् । षडहे षडहे देयं वीक्ष्य दोषबलाबले" इत्यनेन ग्रन्थेनापि पेयाप्रयोगषडहादूर्ध्वं कषायषडह उक्तः । न तु ज्वरोत्पादादिषडहादूर्ध्वम् । अत्र ब्रूमः—"यावज्ज्वरमृदुभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाददिनादारभ्य षडहपर्यन्तं पेयाप्रयोग उच्यते, पेया ज्वरे प्राधान्येन दोषपाचनार्थं प्रयुज्यते । यदुक्तम्,—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः । पाचनान्यविपक्कानां दोषाणां तरुणे ज्वरे" इति । लङ्घनादिपाचनीयत्वं दोषाणामष्टाहादर्वागेव, अष्टाहादूर्ध्वं तु कषायेणैव पाचनमुक्तम् । तत्र लङ्घनीये वातज्वरे आदिदिनप्रभृति पेया षडहमपि प्राप्नोति, एकद्वित्रिदिनलङ्घिते ज्वरे पेया पञ्चचतुस्त्रिदिनप्रयोगेण ज्वरदिनादारभ्य षडहपर्यन्तं कर्तव्या । यत्र तु दोषाणामपि सामतया तरुणवातज्वरे लङ्घनमेव षड्रात्रादिक्रमेण वा क्रियते, तत्र प्रादेशिके विधौ नायं पेयाषड्रात्रनियम औत्सर्गिकः प्रवर्तते । किञ्चातिमात्रलङ्घनप्रयोगे पेया न दोषपाचनार्थं क्रियते, भूरिलङ्घनक्षपिताग्नेः सन्धुक्षणार्थम्, तत्र अग्निसन्धुक्षणे जाते पुनरौषधपानमेव भवति । "ज्वरे पेया कषायांश्च," इत्यादौ पेया समानकार्याणां लङ्घनादीनामुपलक्षणभूता, यतश्च, पेया यत्र प्रतिषिद्धा मद्योत्थज्वरादौ तत्र तर्पणादिक्रमेणापि षडहो ग्राह्यः । तेन, प्रथमषडहे उत्सर्गतो लङ्घनादि पाचनं कर्तव्यमिति पेया षडहे देयेति वचनमुच्यते । तथाहि सुश्रुते— "लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते । तदा तं मुखवैरस्यतृष्णाऽरोचकनाशनैः । कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्" इत्युक्त्वा कषायपानकालनियमे प्रोक्तम्— "सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम्" इत्यादि । ततश्च लङ्घनादिषडहेऽतिक्रान्ते सप्तरात्राद्भेषजदानं सुश्रुतेनाख्याप्या-

१ ग्रीष्मेऽस्रक्पित्तिनस्तथेति पाठान्तरम् । २ प्रदेयमिति पाठान्तरम् ।

१ लङ्घनान्त इति पाठान्तरम् ।

ऽप्रतिषेधादनुमतमेव । तथा चरके "लङ्घनं स्वेदनम्" इत्यादिना तरुणज्वरे लङ्घनादि विहितम्। तरुणता ज्वरस्य सप्ताहमात्रं भवति । यदुक्तं पुष्कलावते—"आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः । मध्यं द्वादशरात्रं तु पुराणमत उत्तरम्" इति । सप्ताहादूर्ध्वमतरुणे ज्वरे उत्सर्गतस्तावत् लङ्घनपेयादि न विहितमेव । चरकेणापि तथा हारीतेनापि लङ्घनाच्छोदकमुस्तादिजलपानपेयाभिधानानन्तरमुक्तम्—"एतां क्रियां प्रयुञ्जीत षड्रात्रात् सप्तमेऽहनि । पिबेत् कषायसंयोगान् ज्वरघ्नान् सिद्धसाधितान्" इति । तथा खरनादेनापि—"लङ्घितालङ्घितं तस्मात् वामितं वा ज्वरार्दितं । तत्सात्म्यत्वादतस्तस्मिन्नादौ ज्वरमुपाचरेत् । यवागूभिर्यथादोषम्" इत्यादि । जतूकर्णेनापि यवाग्वादिक्रमं चाभिधायोक्तम्—"इति षड्रात्रिकः प्रोक्तो नवज्वरहरो विधिः । ततः परं पाचनीयं शमनं वा ज्वरे हितम्" इति । तन्त्रान्तरे च यदेतत् सप्तमेऽहनि कषायपानविधानम्, तत् षडहे विहितकषायपानेन समं ज्वरदिनारब्धत्वान्न विरोध इति मन्तव्यमिति, तस्माज्ज्वराहादारभ्य षडहेऽतीते लघ्वन्नप्रतिभोजिते कषायपानं तथा षडहेऽतीते यवागूपचार इति ज्वरे पेया कषायांश्चेत्यादय उत्सर्गविषयः, तेनैषां क्वचिद्बाधनमपि भवतीति युक्तमेव ॥ १५८ ॥

**स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम् ।**
**दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणे ज्वरे १५९**
**न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते ।**
**यः कषायः कषायः स्यात् स वर्ज्यस्तरुणज्वरे १६०**

सम्प्रति 'कषाय'शब्दसामान्येन नवज्वरनिषिद्धकषायस्य महात्ययकारकस्य नवज्वरे प्रयोगे दोषमाह—स्तभ्यन्त इत्यादि ।—स्तभ्यन्त इति अविचलितधर्माणो भवन्ति । न विपच्यन्त इति चिरेणापि न सुखं पच्यन्ते । स्तम्भित्वादिति स्तम्भनस्वभावत्वात् । उक्तं हि—"कषायः स्तम्भनः शीतः" इति । अयमर्थो हारीतेऽप्युक्तः,—"न कषायं प्रशंसन्ति नराणां तरुणे ज्वरे । कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः" इति । पूर्वं षड्विरेचनशताश्रितीये पञ्चरसकृतेष्वपि स्वरसादिषु 'कषाय' शब्द उक्तः । तदिह यदि 'कषाय' शब्देन सामान्येन मधुरादिकृतानां स्वरसादीनां प्रतिषेधः स्यात् तदा षडङ्गपानीयस्य पञ्चविधकल्पनायामवरोधनिवेशनीयस्य तथा यवागूसाधनार्थस्य च पाठेन तत्तद्द्रव्यस्य निषेधस्स्यात् । येन, षडङ्गस्य यवागूसाधनद्रव्यस्य च प्रयोगोऽत्र पञ्चविधकल्पनायामन्तर्भावनीयः । भेषजप्रयोगस्य पञ्चविधकल्पनार्थस्यान्तर्भावात् अतः सर्वकल्पनाकषायप्रतिषेधो मा स्यादित्याह—न त्वित्यादि ।—ननु कल्पनमुद्दिश्येति स्वरसकल्कशृतशीतफाण्टरूपकल्पनं लक्ष्यीकृत्य; यः कषायः कषायः' इति, यैः कषायैरामलकादिभिः स्वरसादिरूपः कषायः, स निषिध्यत इत्यर्थः । न चानेन कषायरसकृतस्वरसादिनिषेधेन मधुरादिकृतस्वरसादीनां तरुणज्वरे प्रयोगो भवति । स्वरसादिभेषजस्यातिगुरोस्तरुणज्वरेऽविधानात् । तेन, कषायकषायप्रतिषेधेन तिक्तद्रव्यकृतषडङ्गादिकल्पनाकषायस्य विहितस्याऽविरोधः साध्यते, न तु अविहितस्वरसादिविधानं क्रियते । स्वरसादिगुरुभेषजस्य तरुणज्वरे निषेधवचनम्,—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" । अन्ये तु ब्रुवते—यत्—षड्रात्रात् परतः सप्तमे दिवसे कषायदानं विहितम्,—"पाचनं शमनीयञ्च" इत्यादिना स्वतन्त्रेण, तत्र सप्तमे दिवसे तरुण एव ज्वरो भवति, तरुणे च ज्वरे कषायपानं निषिद्धमिति विरोधं पश्यन् मधुरादिद्रव्यकृतकषायस्य सप्तमेऽहनि अप्रतिषेधः, कषायकषायस्य तु सप्तमेऽह्नि प्रतिषेध इत्युपदर्शनार्थं 'न तु कल्पनम्' इत्यादि कृतम्, ततश्च ज्वरादिषडहे सर्वकषायप्रतिषेध एव, सप्तमदिवसप्राप्ते तु तरुणे कषायद्रव्यमात्रप्रतिषेध इति वाक्यार्थो भवति ॥ १५९—१६० ॥

**यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः ।**
**दशाहं यावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ॥ १६१ ॥**

यवागूत्तरकालं भोजनसाधनमाह—यूषैरित्यादि ।—यदि कफप्रबलता बलवदग्निश्च[1], तदा यूषैः, वातप्राबल्ये तु दुर्बलत्वे च रसैरिति व्यवस्था । अम्लविकल्पोऽपि सात्म्यापेक्षयाऽग्न्यपेक्षया च ज्ञेयः । वक्ष्यति हि—"मन्दाग्नयेऽम्लसात्म्याय तत्स्तोकमपि कल्पयेत्" इति । अम्लश्चात्र ज्वरघ्नदाडिमाद्येव कार्यम् । लघ्विति मात्रालघु प्रकृतिलघु च रक्तशाल्यादिकम् ॥ १६१ ॥

**अत ऊर्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे ।**
**परिपक्केषु दोषेषु सर्पिष्पानं यथामृतम् ॥ १६२ ॥**

दशाहात् परतः प्रायः कर्तव्यमाह—अत इत्यादि ।—कफे मन्दे ज्वर इति मन्दकफे । यदि कफो नास्त्येव दोषरूपः, तदा सर्पिष्पानं कर्तव्यमित्यर्थः । परिपक्केष्विति सर्वथा पक्केषु । सर्पिरिति वक्तव्ये 'सर्पिष्पान'ग्रहणेनानुवासनाभ्यङ्गादिना सर्पिष उपयोगमस्मिन् काले निषेधयति । अनुवासनाभ्यङ्गौ हि पश्चात्कालवक्तव्यौ । इयं च मन्दकफवातपित्तोत्तरस्वरूपावस्था प्रायेण दशाहादूर्ध्वं कालमहिम्नैव सर्वज्वरे व्यक्ता भवति, यथा—वृद्धे पुरुषे प्रबलवातत्वम्, तरुणज्वरे सामदोषता, तथाऽऽमाशयसमुत्थे कफप्रबलत्वं भवति, तथैव दशाहादुत्तरं लङ्घनादिना कफः क्षीणो भवति, ज्वरसन्तापेन च रूक्षेण धातुशोषणाच्च वातपित्ते वर्द्धेते । यत्तु पेयाकषायसर्पिःक्षीरविरेचनानां षडहेदेयत्वम्, तत् प्रायिकम् । तेन, दशाहादूर्ध्वं द्वितीयषडह एवावस्थाविशेषप्राप्तौ सर्पिर्दानं न विरोधि ॥ १६२ ॥

---

१ बलग्लानिश्चेति पाठान्तरम् ॥

**निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।**
**न सर्पिः पाययेद्वैद्यः शमनैस्तमुपाचरेत् ॥ १६३ ॥**
**यावल्लघुत्वादशनं दद्यान्मांसरसेन च ।**
**बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत् ॥ १६४ ॥**

उक्तसर्पिष्पानापवादविषयमाह—निर्दशाहमित्यादि ।—निर्गतो दशाहो निर्दशाहः । अलङ्घितमिति असञ्जातलङ्घितलक्षणम्, इयञ्चावस्था प्रबलसामदोषारब्धत्वाज्ज्वरस्य तथाऽसम्यगुपचाराच्च भवतीति ज्ञेयम् । शमनैस्तु कफोत्तरमलङ्घितञ्चोपाचरेत् । यावल्लघुत्वादिति च्छेदः । लघुत्वे तु जाते यावत् कफोत्तरताऽलङ्घिता च नापयाति । न तदा सर्पिष्पानमेवानुवृत्तं कर्तव्यमित्यर्थः । यावदिति यावल्लघुत्वात् लघुत्वपर्यन्तं शमनैरुपाचरेत्, लघुत्वे सति सर्पिषः पानम् । अथवा यावत्तावत् नित्ययोगित्वात्, लघुत्वात् यावल्लघुत्वपर्यन्तं शमनैरुपाचरेत्, तावन्मांसरसेनाशनं निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि देयमित्याहुः—अशनं दद्यान्मांसरसेनेति । ननु कफोत्तरेऽलंघितेऽपि निर्दशाहज्वरे मांसरसेन किमर्थमेवाशनं कफविरुद्धं देयमित्याह—बलं हीत्यादि ।—बलकृच्च तदिति मांसरसेनाशनं बलकारकमित्यर्थः ॥ १६३ ॥ १६४ ॥

**दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् ।**
**बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥ १६५ ॥**

दाहेत्यादिना क्षीरावस्थामाह । बद्धप्रच्युतदोषं वेत्यत्र बद्धदोषत्वमप्रवर्तमानदोषत्वम्, प्रच्युतदोषत्वं तु स्तोकेन प्रवर्तमानदोषत्वम्, तत्र क्षीरं तावत् बद्धप्रवर्तकं भवति, तथा प्रच्युतेऽपि विविधदोषप्रवर्तकतयोपकारकं भवति, अतएव क्षीरगुणेषु—"पुरीषे ग्रथिते पथ्यमतीसारे तथा स्मृतम्" इत्युक्तम् । किंवा, बद्धदोषे गव्यं क्षीरं सरत्वाद्देयम्, प्रच्युते तु संग्राहित्वाच्छागं देयम् ॥ १६५ ॥

**क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः ।**
**अक्षीणबलमांसाग्नेः शमयेत्तं विरेचनैः ॥ १६६ ॥**

'आभिः क्रियाभिर्यदा न प्रशमं याति ज्वरस्तदा विरेचनैः शमयेत्' इति भाषया विरेचनबहुव्यापत्तिकतया इतरकर्मासिद्धावेव कर्तव्यतां दर्शयति । विरेचनैरिति बहुवचनम्, विरेचनप्रयोगविवरणे वमनविरेचनयोगांश्चाभिधास्यतीति १६६

**ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।**
**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥१६७॥**
**निरूहो बलमग्निं च विज्वरत्वं मुदं रुचिम् ।**
**परिपक्केषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ॥ १६८ ॥**

ज्वरेणाक्षीणस्य शोधनमुक्त्वा ज्वरक्षीणस्य शोधनमाह—ज्वरक्षीणस्येत्यादि ।—पयसा वेति पयःपानेन । पयस्त्वनुलोमकतया दोषहरं भवति, अनुलोमकत्वं च विरेचनत्वेन न व्यवह्रियत इति विरेचनादेयत्वे क्षीरं युक्तम् । अत्र क्षीरस्य पूर्वोक्तविपर्ययेणैव गुणानां लब्धत्वादवशिष्टं निरूहगुणमाह—निरूह इत्यादि ॥ १६७ ॥ १६८ ॥

**पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् ।**
**स्रंसनं, त्रीन्मलान् वस्तिर्हरेत् पक्वाशयस्थितान् १६९**

विरेचनास्थापनयोर्दोषभेदेन च विषयमाह—पित्तमित्यादि । वमनस्य तु दोषभेदेन स्थानेन च विषयः "कफप्रधानान्" इत्यादिनैवोक्त इति नेह पुनरुच्यते, परं पूर्वमवस्थाविहितं वमनं स्वयमुत्क्लिष्टदोषे ज्ञेयम्, एतच्च जीर्णज्वरविहितं वमनं स्नेहस्वेदाभ्यां दोषमुत्क्लेश्य कर्तव्यमिति विशेषः । पित्ताशय आमाशयाधोभाग एव । स्रंसनमिति च्छेदः ॥१६९॥

**ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये ।**
**रूक्षबद्धपुरीषाणां प्रदद्यादनुवासनम् ॥ १७० ॥**
**गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ।**
**जीर्णज्वरे रुचिकरं कुर्यान्मूर्द्धविरेचनम् ॥ १७१ ॥**

अनुवासनविषयमाह—ज्वर इत्यादि—प्रकरणागतायामपि पुराणतायां 'पुराणे' इति पदमत्यर्थपुराणतामाह । गौरव इत्यादिना शिरोविरेचनविषयमाह । शिरस इति पूर्वेणोत्तरेण च योज्यम् । इन्द्रियाणां विबद्धत्वं स्वविषयप्रवृत्तिरहितत्वम् ॥ १७० ॥ १७१ ॥

**अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सावगाहनान् ।**
**विभज्य शीतोष्णतया कुर्याज्जीर्णे ज्वरे भिषक् १७२**
**तैराशु हि शमं याति बहिर्मार्गगतो ज्वरः ।**
**लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ १७३ ॥**

अन्तःपरिमार्जनमभिधाय बहिःपरिमार्जनमाह—अभ्यङ्गांश्चेत्यादि । प्रदेहः सामान्येन बहलोऽबहलश्च गृह्यते । ये तु सुश्रुतमतेन बहलं विशोषिणं प्रदेहं ग्राहयन्ति, तन्मतेन दाहप्रशमने न लेपोऽपि बहलः कर्तव्यः स्यात्, स च तनुरेव कर्तव्यः । उक्तं हि—"श्लक्ष्णपिष्टघनो लेपश्चन्दनस्यापि दाहकृत्" इत्यादि । विभज्येति शीतोष्णकृतमिति, उष्णाभिप्रायं शीताभिप्रायं च विभज्य यथासंख्यं शीतकृतं तथोष्णकृतम्, वक्ष्यति हि—"अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत् । यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम्" इति । शीतोष्णता च द्रव्यमहिम्ना संस्कारेण च ज्ञेया ॥ १७२॥ १७३ ॥

**धूपनाञ्जनयोगैश्च यान्ति जीर्णज्वराः शमम् ।**
**त्वङ्मात्रशेषा येषां च भवन्त्यागन्तुरन्वयः ॥१७४॥**

१ कषायैस्तामुपाचरेदिति पाठान्तरम् ।
२ बलं ह्यलं दोषहरं परं तच्च बलप्रदमिति पाठान्तरम् ।
३ प्रबलसामावस्थाबज्ज्वरस्येति पाठान्तरम् ।

लङ्घमात्रशेषा इति धात्वन्तरत्यागेन लङ्घमात्रावस्थितदोषजन्याः । येषां वाऽऽगन्तुर्भूतरूपोऽन्वयः कारणं भवति ज्वराणाम्, ते धूपादिना शमं यान्ति ॥ १७४ ॥

इति क्रियाक्रमः सिद्धो ज्वरघ्नः संप्रकाशितः ।
येषान्त्वेष क्रमस्तानि द्रव्याण्यूर्ध्वमतः शृणु ॥१७५॥
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ १७६ ॥

क्रमप्राप्तौषधप्रश्नस्योत्तरमाह—येषामित्यादि ।—"रक्तशाल्यादयः शस्ताः शालयः षष्टिकैः सह" इति केचित् पठन्ति, पुनरुक्त'शालयः' इति पदेन यवकादीनां निरासः क्रियते । केचित्तु "रक्तशाल्यादयः शस्ताः पुराणाः" इति पठन्ति, तत्र यद्यपि "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते" इत्युक्तमेव, तथापि प्रमादादपुराणग्रहणनिषेधार्थं 'पुराणाः' इति पदम् ॥ १७५ ॥ १७६ ॥

लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ।
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥१७७॥
अम्लाभिलाषी तामेव दाडिमाम्लां सनागराम् ।
सृष्टविट् पैत्तिको वाथ शीतां मधुयुतां पिबेत् १७८
पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोरुजि ।
श्वदंष्ट्राकण्टकारिभ्यां सिद्धां ज्वरहरां पिबेत् १७९
ज्वरातिसारी पेयां वा पिबेत्साम्लां शृतां नरः ।
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥ १८० ॥
शृतां विदारीगन्धाद्यैर्दीपनीं स्वेदनीं नरः ।
कासी श्वासी च हिक्की च यवागूं ज्वरितः पिबेत् ॥
विबद्धवर्चाः सयवां पिप्पल्यामलकैः शृताम् ।
सर्पिष्मतीं पिबेत् पेयां ज्वरी दोषानुलोमनीम् ॥१८२
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ।
मृद्वीकापिप्पलीमूलचव्यामलकनागरैः ॥ १८३ ॥
पिबेत् सबिल्वां पेयां वा ज्वरे सपरिकर्तिके ।
बलावृक्षाम्लकोलाम्लकलशीधावनीशृताम् ॥१८४॥
अस्वेदनिद्रस्तृष्णार्तः पिबेत् पेयां सशर्कराम् ।
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम् ॥ १८५ ॥

लाजपेयामित्यादिकाः दश यवाग्वः, तत्र प्रथमा श्लेष्मघ्नीति हरिश्चन्द्रः । किंवा, लाजपेयां सुखजरामित्येका, तथा पिप्पलीनागरैः शृतामिति द्वितीया, एवं शेषाभिः सहैकादश पेयाः । सनागरां सृष्टविट् पिबेदिति योजना, सनागरामेव शीतां मधुयुतां पिबेत् पैत्तिक इत्यपरा । शुण्ठ्यास्तु मधुरपाकित्वेन पाचनत्वेन च पित्ते प्रयोगः । इह विदारीगन्धाद्यं पञ्चमूलम् । सयवामिति पदेन षष्टितण्डुलकार्या पिबेदिति । सबिल्वामित्यादिना धावनीशृतामित्यन्तेनैका यवागूः । परिकर्तिका परिकर्तिकाकारा वेदना । कलशी सिंहपुच्छम् । धावनी कण्टकारी । अत्र च यवागूनां साधनद्रव्यजलतण्डुलपरिमाणे वृद्धवैद्यव्यवहाराः पूजिताः प्रमाणीकर्तव्याः । अत्राग्निवेशसंहितायामधीयते "क्वाथ्यद्रव्याञ्जलिं शुष्कं श्रपयित्वा जलाढके । पादशेषेण तेनास्य यवागूरुपकल्पयेत् । कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलं । विनीय पाचयेद् युक्त्या वारिप्रस्थेन चापराम्" इति । अपरामिति क्वाथसाध्ययवाग्वा उक्तया भिन्नां कल्कसाध्यामित्यर्थः । एवं च 'कल्क' पदेन, या तत्र यवागूसाधनपरिभाषा, सा

१ तथापि प्रमादादतिनवस्य तथातिपुराणस्य ग्रहणं मा भूदित्येतदर्थं पुराणा इत्युक्तमिति शिवदासः ॥ तथाप्यतिपुराणनिषेधार्थं पुराणा इति पदमिति श्रीकण्ठदीक्षितः ॥ २ पिप्पलीनागरैः शृतामित्यन्तेनैकार्थः ॥

१ अर्धशृतेन तेनाथ यवाग्वाद्युपकल्पयेदिति पाठान्तरम् । क्वाथ्येत्यादि अस्यार्थः—अञ्जलिः पलचतुष्टयं श्रपयित्वा जलाढके द्रवद्वैगुण्यात् जलस्य षोडशशरावे । द्रव्यं तावद्द्विविधं वीर्यप्रधानं रसप्रधानं च, तत्र आद्यं भेषजद्रव्यम्, द्वितीयं पुनराहारद्रव्यं मांसादि, तत्र रसप्रधानद्रव्याभिप्रायेणैव चतुःपलद्रव्याभिधानमत्र ज्ञेयम्, तेन, परिभाषेयम् "सिद्धावराहनिर्यूहे यवागूर्बृंहणी मता" इत्यादि यवागूविषया बोध्या । वृद्धस्तु, "वृद्धवैद्याः पलं द्रव्यं श्रपयित्वाढकेऽम्भसि । भेषजस्यातिबाहुल्यात् कदाचिदरुचिर्भवेत्" इति जेज्जटः व्याहृतमेव वृद्धव्यवहारं निजपद्येन लिखितवानिति शिवदासः । २ कल्कसाध्ययवागूसाधनार्थं परिभाषामाह—कर्षार्द्धं वेत्यादि ।—कर्षार्द्धं वेति कर्षार्द्धं प्रत्येकम्, त्रिविधं हि भेषजद्रव्यम् वीर्यभेदात्—तीक्ष्णवीर्यं यथा—शुण्ठ्यादि, मध्यवीर्यं बिल्वाग्निमन्थादि, मृदुवीर्यमामलकादि, तत्र कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणम् । तेन, तीक्ष्णद्रव्यमात्रस्यैव कर्षप्रमाणमिति ज्ञापितम्, कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षणम् । तेन अन्यस्यापि मृदुवीर्यद्रव्यामलकादेः पलप्रमाणमिति ज्ञापयति । एतेन, तीक्ष्णमृदुद्रव्ययोः कर्षपलमानव्यवस्थया मध्यवीर्यस्य बिल्वाग्निमन्थादेरनुक्तमप्यर्द्धपलमानं सामर्थ्यादेव ज्ञेयम् । यत् पुनर्मध्यवीर्यस्य षडङ्गादेः कर्षप्रमाणमुक्तम्, तन्मन्दानलपुरुषाभिप्रायेणेत्युक्तमेव । विनीयेति कल्कीकृत्य, प्रक्षिप्येति वा । अपरामित्यन्याम्, अन्यत्वं च कषायसाध्ययवागूमपेक्ष्य । तेन, कल्कसाध्यामित्यर्थः । एवंच तीक्ष्णद्रव्यापेक्षया कर्षप्रमाणम्, मृदुद्रव्यापेक्षयार्द्धपलप्रमाणद्रव्यं विनीय कल्कसाध्यां यवागूं वारिप्रस्थेन द्रवद्वैगुण्याच्छरावचतुष्टयमानेन साधयेदिति योजना । ननु प्रबलानलबलादौ पुरुषे बहुयवाग्वादि विधेयम्, तत्र कथं वारिप्रस्थेन यवागूसाधनं भविष्यति; इत्याह—युक्त्येति । एतेन, यत्र उत्तमबलानले बहुयवागूर्विधेया, तत्र युक्त्या जलप्रस्थद्वयं त्रयं वा तण्डुलानुरूपं दत्त्वा यवागूं साधयेत्, अल्पबलानले तु वारिप्रस्थेनेत्यर्थः । अपरामिति पाठे यूषादीनिति । तेन पेयासाधनरीत्या यूषादयोऽपि साधनीया इति प्रतिपादितमिति ॥ शिवदासः ।

इहाऽपि द्रव्यपलकल्केन यवागूसाधनमुपदिशतानुमतैव, तथापि जीवन्त्यादियवाग्वामष्टाभिर्द्रव्यैः पलप्रमाणैः साधनमुक्तम्। यत्तु तत्र वृक्षाम्लयुक्तेत्याद्युक्तम्, तदम्लतामात्रार्थं वृक्षाम्लदानम्, न तदष्टमापकप्रमाणम्, किंवा, तदस्याष्टमापकमानप्रमाणमस्तु, तथाप्यदूरार्थं इतरार्थतया कल्कपलसाधनोपदेशिका परिभाषानुमतैव भवत्यष्टमापकाधिकपलकल्कसाधनोपदेशेन, उक्तं हि—"जीवन्त्यजाजीपुष्कराह्वैः सकारवीदीप्यकबिल्वमध्यैः। सयावशूकैर्बदरप्रमाणैर्वृक्षाम्लयुक्ता घृततैलभृष्टा। अर्शोऽतिसारानिलगुल्मशोफहृद्रोगमन्दाग्निहिता यवागूः। या कल्कसाध्या विधिनैव तेन सिद्धा भवेत् सापि हितार्थिना च" इति। तस्मादेतद् यवागूमानलिङ्गदर्शनात् कल्कपलसाध्ययवाग्वभिधायिका परिभाषाऽनुमतैव, तदन्यातत्सहचरिता कर्षार्द्धकणाद्युण्ठीमानदर्शिकाऽनुमतैव। क्वाथसाध्ययवाग्वादिद्रव्यमाने तु वृद्धव्यवहारपूजितेयं परिभाषा—"यदप्सु शृतशीतासु षडङ्गादिप्रयुज्यते। कर्षमात्रं ततो दत्त्वा साधयेत् प्रास्थिकेऽम्भसि। अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति। 'आदि' शब्देनात्र यूषरसादिग्रहणम्। "क्वाथ्यद्रव्याञ्जलिं क्षुण्णम्" इत्यादिपरिभाषायास्तथाऽनुक्तपरिभाषायाश्च कर्तव्यव्यवस्था तथा सकलयवागूसाधनतण्डुलजलादिमानव्यवस्थाव्यभिचारश्चापामार्गतण्डुलीय एव निर्लोचितोऽनुसरणीयः॥ १७७—१८५॥

**मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान्।**
**यूषार्थे यूषसात्म्यानां ज्वरितानां प्रकल्पयेत्॥१८६॥**
**पटोलपत्रं सफलं कुलकं पापचेलिकाम्।**
**कर्कोटकं कठिल्लकं विद्यात् शाकं ज्वरे हितम् १८७**
**लावान् कपिञ्जलानेणांश्चकोरानुपचक्रकान्।**
**कुरङ्गान् कालपुच्छांश्च हरिणान् पृषतान् शशान्१८८**
**कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्त्तकान्।**
**प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान्॥१८९॥**
**ईषदम्लाननम्लान् वा रसान् काले विचक्षणः।**
**गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः १९०**
**लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्।**
**भिषङ्मात्राविकल्पज्ञो दद्यात्तानपि कालवित् १९१**

मुद्गानित्यादि ज्वरहितयूषद्रव्यसंग्रहः। यूषकरणमिति यवागूसाधनवत्। मुद्गः स्वनामप्रसिद्धः। कुलकं कारवेल्लकम्। पापचेलिका पाठाशाकम्। कठिल्लकं रक्तपुनर्नवा। कपिञ्जलो गौरतित्तिरिः, एणः कृष्णसारः उपचक्रकश्चकोरः। कालपुच्छो हरिणविशेषः। हरिणस्ताम्रवर्णः। पृषतो विन्दुचित्रितो हरिणः। रसकरणस्य शास्त्रम्—"पलानि द्वादशप्रस्थे घनेऽथ तनुके तु षट्। मांसस्य वटकं कुर्यात् पलमच्छतरे रसे" इति। यत्र तु मांसस्य द्रव्यान्तरेण साधनम्, तत्र यवागूवत् साधनं व्याख्येयम्। "मात्राविकल्पज्ञः"[1] इत्यनेन, तावत्या मात्रया तेन च संस्कृतेन विकल्पेनानुष्णलघुलावादयो देयाः। येन गौरवादग्निवधमुष्णत्वाद्वा ज्वरावृत्तिं न जनयन्तीति दर्शयति॥ १८६—१९१॥

**घर्माम्बु चानुपानार्थं तृषिताय प्रदापयेत्।**
**मद्यं वा मद्यसात्म्याय यथादोषं यथाबलम्॥१९२॥**
**गुरूष्णस्निग्धमधुरान् कषायांश्च नवज्वरे।**
**आहारान् दोषपक्त्यर्थं प्रायशः परिवर्जयेत्॥१९३॥**
**अनुपानक्रमः सिद्धो ज्वरघ्नः संप्रकाशितः।**
**अत ऊर्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः॥१९४॥**

घर्माम्बु उष्णाम्बु, घर्माम्ब्वादिश्लोकं शोधनार्थं वदन्ति, अनुपानव्यवस्थायामुष्णपानीयमद्ययोरहितत्वं पूर्वमुक्तमेवेति तदुपादानम्, तथाच तन्त्रान्तरे—"ज्वरे पिबेदनूष्णाम्बु मद्यसात्म्यस्तु यो भवेत्। तस्मै दोषबलं दृष्ट्वा युक्त्या मद्यं विधीयते" इति। गुरूष्णेत्यादिना गुरूष्णाद्यनिषेधः, पूर्वन्तु कषायनिषेधो यद्यपि सामान्येन कृतः, तथापीहान्नप्रतिषेधप्रस्तावादभ्यर्हितप्रतिषेधश्च पुनः क्रियते॥ १९२—१९४॥

**पाक्यं शीतकषायं वा मुस्तपर्पटकं पिबेत्।**
**सनागरं पर्पटकं पिबेद्वा सदुरालभम्॥ १९५॥**
**किराततिक्तकं मुस्तं गुडूचीं विश्वभेषजम्।**
**पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये॥ १९६॥**
**ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः।**
**तृष्णाऽरुचिप्रशमना मुखवैरस्यनाशनाः॥ १९७॥**

पाक्यमिति शृतम्। शीतकषायस्तु द्रव्यं संक्षुण्णमुष्णोदके प्रक्षिप्य निशास्थितम्। अत्र शीतकषायपरिभाषा—"द्रव्यादापोथिताततोये प्रतप्ते निशि संस्थितात्। कषायोऽभिनिर्याति स शीतः समुदाहृतः" इति। अत्रापि यद्यपि द्रव्यस्य पानीयस्य च मानं नोक्तम्, तथापि क्वाथद्रव्यसमं द्रव्यं ग्राह्यम्, पानीयं तु यावन्मानः पेयः क्वाथो भवति, तावन्मानं ग्राह्यम्, नह्यत्र पानीयं क्वाथद्रववद्ग्राह्यं बाहुल्यतः पानाशक्यत्वात्। किंवा, परिभाषयैव जलं देयम्।—षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः। आप्लुतं भेषजपलं रसाख्यया पलद्वयम्"। शीतकषायः स्वल्पवीर्यतया शैत्यगुणयोगाच्चाल्पदोषे दाहाभिभूते च देयः। पर्पटकं सदुरालभं वेति तृतीयो योगो मन्दाग्निपित्तकफे। किराततिक्तादिश्चतुर्थो वातकफे। पाठादिश्च पित्ते। किराततिक्तादिनैव मेलके सति पाठासप्तकं जतूकर्णप्रत्ययात् कफपित्ते तदिति। उक्तं हि तत्र—भूनिम्बघनगुडूचीशुण्ठ्युदीच्योशीराह्वयपाठाः" इति। अत्र क्वाथकरणे द्रव्यादिमानस्यानुक्तत्वान्न्यायतो मानव्यवस्था, तत्रेह यद्यपि क्वाथसंविधानं विशेषेण नोक्तम्, तथापि

[1] मात्राविकल्पज्ञ इति विकल्पो विशिष्टकल्पना संस्कार इत्यर्थः। तेन तावती मात्रा कर्तव्या तादृशः संस्कारः कार्यः, यथा लघुत्वानुष्णत्वे भवत इत्यर्थः॥ शिवदासः.

व्याधितरूपीये क्वाथकरणसंविधानमुक्तम् , "छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यसिच्येत्" इत्यादिना "गतरसेष्वौषधेषु स्थालीमवतार्य परिपूतं कषायम्" इत्यन्तेन, तदेव सर्वकषायकरणसंविधानं ज्ञेयम् । अत्र हि यद्यपि क्वाथ्यद्रव्यमानं तथा द्रवमानं स्थाप्यकषायमानं नोक्तम्, तथापि यावद्द्रव्यं यावता जलेन पक्कं सत् गतरसं भवति, तावति जले तावद्द्रव्यं देयमिति लभ्यते, तथा यावता क्वाथशेषेण गतरसान्यौषधानि भवन्ति, तावान् क्वाथः स्थाप्यत इति च लभ्यते, एतच्चौषधानां गतरसत्वं द्रवभागत्रयक्षयादेव भवतीति दृश्यते, तेन, चतुर्भागावशिष्टता सर्वक्वाथे विशेषवचनं विना कर्तव्या । क्वाथार्थजलदानं तु द्रव्यापेक्षया भवति । अत्र मृदुनि द्रव्ये चतुर्गुणेन जलेन, कठिनेऽष्टगुणेन, कठिनतरे षोडशगुणेन पाके सति चतुर्भागावशेषे गतरसत्वं भवति, तथा मृदुन्यल्पे द्रव्ये भूरिजलं दीयते, स्तोकेन जलेन क्वाथ्यद्रव्यस्य गतरसत्वाभावात् । तेन, कर्षादारभ्य पलपर्यन्तक्वाथ्ये मृदुन्यपि षोडशगुणं जलं दीयते, पलादूर्ध्वंतु कुडवपर्यन्तमष्टगुणं दीयते । तदेवमनिर्दिष्टद्रव्यजलशेषमानेनाप्याचार्येण गतरसत्वादिकाभिधानात् सर्वकषायद्रव्यादिपरिमाणमुक्तं स्यात् , यदि हि द्रव्यादीनां नियतं प्रमाणं ब्रूयात् , तदा द्रव्यापेक्षया तथा स्नेहसाधनापेक्षया च यद्भिन्नं परिमाणं तद्गृहीतं स्यात् । यदर्थाभिधायिका स्वतन्त्रान्तरे परिभाषा लिख्यते पातव्यकषाये कृष्णात्रेयेण—"क्वाथ्यद्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितम्" इति । अन्यत्राप्युक्तम्—"क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते" इति, यथा "कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम् । ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत्" इति । सुश्रुते च स्नेहादिक्वाथपरिभाषा—"चतुर्गुणेनाष्टगुणेन षोडशगुणेनाम्भसा अभ्यासिच्य चतुर्भागावशिष्टं क्वाथयित्वाऽवतारयेत्" । इत्यादिपाठभेदाच्चतुर्गुणाष्टगुणषोडशगुणजलदायिकाः श्रूयन्ते, ताः कठिनादिद्रव्यभेदाद्बोद्धव्याः । यदुक्तम्—"मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं तथा । कठिनात् कठिनतरे देयं षोडशिकं जलम्" । एवं तन्त्रान्तरपरिभाषायां च व्यवस्था कर्तव्या । अग्निवेशे हि श्रूयते—"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम् । पादशेषं च कर्तव्यमेष क्वाथविधिः स्मृतः । चतुर्गुणेनाम्भसा वा द्वितीयः समुदाहृतः" इति, मध्यविधयाष्टगुणत्वमपि पानीयस्य लभ्यते, तेनाप्युक्तम्—"द्रव्याणां मध्यपाकार्थं यत्र मात्रा न दर्शिता । पादांशादौषधात्तत्र जलं दद्याच्चतुर्गुणम् । चतुर्भागावशिष्टं च कषायं कारयेद्भिषक्" इति । एवमन्या अपि तन्त्रान्तरपरिभाषाऽविरोधता ज्ञेया । अत्रैव यदेतद्व्याधितरूपीये कषायकरणमुद्दिष्टम्, तन्निरूढाधिकारे तद्विशिष्टार्थविषयमेव । तथाविधकषायकरणं नान्यत्र, यथा बलातैले—"बलाशतं गुडूच्याश्च पादं रास्नाष्टभागिकम् । जलाढकशते पक्त्वा" इत्याद्युक्तं मानं न क्वाथान्तरे याति, किन्तु तत्रैव नियतम् । मैवम्, विषयविशेषविहितोऽपि विधिर्विषयान्तरेऽपि, वृद्धवैद्यव्यवहारानुमत्या तथा तन्त्रान्तरपरिभाषासंवादेन च विषयतन्त्रे दृष्ट्वा समानत्वेनैव व्यवस्थाप्यते, यथा इक्ष्वाकुकल्पे उक्तम्—"यावत् स्यात्तन्तुमत्तोये पतितं तु न शीर्यते" इत्यादि स्नेहपाकलक्षणं विषयविशेषोक्तं विषयान्तरेऽपि साधारणं भवति । अत्र पेयक्वाथमात्राऽपि तु तया नोक्ता, तस्याः पुरुषाद्यपेक्षया नानात्वात् , सामान्येन च यदुक्तम्—दोषप्रमाणानुरूपा हि भैषज्यप्रमाणविकल्पो बलप्रमाणविशेषापेक्षो भवति" । इति एतेन, यावन्मात्रमौषधं बलाग्न्याद्यपेक्षयोपपद्यते यस्य पुरुषस्य, किं न भवति तावन्मात्रमौषधं तस्य देयमित्युक्तं स्यात् । उक्तञ्चान्यत्र—"मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः । व्याधिं द्रव्यं च कोष्ठं च वीक्ष्य मात्रां प्रयोजयेत्" इति । तत्राह—यावन्ती मध्यपुरुषाभिप्रायेण मात्रा भवति, सा स्वतन्त्रे पूर्वं सूचितैव ।—"पलं कसेरुबीजस्य श्रपयित्वा रसं पिबेत्" इत्यादिना, तथा पटोलाद्येऽपि "पलमेषां सहचूर्णितानां कल्केन तद्दोषहरं पिबेत्" इत्यादिना । सुश्रुतेऽप्युक्तम्—"व्याध्यादिषु तु साध्येषु क्वाथस्याञ्जलिरिष्यते" इति, रसे क्वाथे षोडशपलस्य पादशेषितायां च चतुःपलरूपोऽञ्जलिरेव भवति । दारुकोऽप्याह—"जघन्या द्विपला प्रोक्ता मात्रा मध्या चतुःपला । उत्तमा षट्पला प्रोक्ता क्वाथस्नेहौषधेषु च" इति । ननु अन्यत्रोक्तम्—"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमा । जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च" इति । एताश्च दूरान्तरार्था बलाग्न्यादिमाने व्यवह्रियमाणेव परिभाषा । अन्यच्चिन्त्यते—यदेतच्चतुर्गुणत्वादिना जलमुक्तम्, तत् किं कृतद्वैगुण्यं सर्वत्र ग्रहीतव्यम्, उक्तं हि—"शुष्कद्रव्येष्विदं मानं द्विगुणं तु द्रवाऽऽर्द्रयोः" इति, मैवं सुनिषण्णकादेर्घृतद्रव्यस्य द्वाविंशपलपरिमाणे द्रवप्रस्थे सिद्धेऽपि यदयम्—"त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः' इति जतूकर्णे । तेन, तन्त्रान्तरे परिभाषाऽनुमतं कुडवादावेव माने द्वैगुण्यं भवति । कृते च पूर्वमाने तु द्रवार्द्राणां द्वैगुण्यं नास्तीति दर्शयति । येन, पूर्वपरिभाषयैव द्वैगुण्ये लब्धे यत् पुनर्द्वात्रिंशत्पलप्रस्थकीर्तनम्, तत् पूर्वपरिभाषाऽव्यभिचारे सति क्वचिद्द्वैगुण्यं वा व्यर्थम् । तेन, रक्तिकादौ तत्परिभाषार्थव्यभिचारस्तन्त्रान्तरप्रमाणादुन्नीयते ।—तथा चाऽऽत्रेयः—द्विगुणं कुडवादौ न शुष्के मानं द्रवस्य तु । आर्द्रस्याल्पवीर्यत्वाज्ज्ञेयमन्यत्र तत् समम्" इति । तथा जतूकर्णेऽप्युक्तम्—"आर्द्राणां च द्रवाणां च द्विगुणाः कुडवादयः" इति, अन्यत्राप्युक्तम्—"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत् । शुष्के द्रवार्द्रयोश्चैव तुल्यं मानं प्रकीर्तितम्" इति । एवञ्च कुडवादिमानयोग्यस्यापि यत्र द्रव्यस्य पलोल्लेखमानं

१. अपहरेदिति पाठान्तरम्.

१ प्रतीति पाठान्तरम् ।

गृह्यते, तत्रापि न द्वैगुण्यम् । तेन "रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत्" इत्यादिषु पलोल्लेखेन जलं गृह्यमाणं न द्विगुणं भवति । क्वचित् पलोल्लेखमानविधानेऽपि तन्त्रान्तरदर्शनात् कुडवादिविवक्षां कृत्वा पलोल्लेखागतेऽपि द्वैगुण्ये भवति । यथा क्षतक्षीणचिकित्सिते "मधुकाष्टपलं द्राक्षाप्रस्थक्वाथः" इत्यादिना यः प्रयोग उक्तः, स जतूकर्णे "द्राक्षाया मधुकस्यार्धप्रस्थः क्वाथः" इत्यादिना ग्रन्थेन पठितः । तेन, जतूकर्णे मधुकस्यार्धप्रस्थोल्लेखपाठात् कृतद्विगुणमेव जलं देयम् । अन्ये तु, 'कुडवादाविति अतद्गुणसंविज्ञानबहुव्रीहिणा कुडवे न द्वैगुण्यमस्ति' इति ब्रुवते । ततश्च सुश्रुते, "स्नेहकुडवे साध्ये भेषजपलकल्कमिष्टम्" इत्युक्तम्, तत् कुडवे स्नेहचतुःपले भेषजपलं भवतीति कृत्वा स्नेहप्रस्थेऽष्टपलकल्कदानव्यवहार उपपन्नः । यदि तु कुडवेनाऽष्टौ पलानि स्नेहस्य गृह्यन्ते, तदा प्रस्थे चतुःपलकल्कदानं च व्यवहारसिद्धं स्यात्, एतन्नातिसाधीयम् । यतस्तत्रैव स्नेहकुडवे साध्ये क्वाथ्यद्रव्यप्रस्थो विधेय इत्युक्तम्, तत्र यदि कुडवेन स्नेहपलचतुष्टयं गृह्यते, तदा चतुःपले स्नेहे षोडशपलक्वाथ्यग्रहणं स्यात्, न च तथा व्यवहरति, क्वाथ्यषोडशपलं हि अष्टपले स्नेह एव गृह्यते । तस्मादसाधकमेतत् कुडवाद्वैगुण्यस्येति द्वैगुण्यं कुडवे युक्तम् । यथाऽगस्त्यहरीतक्यां मधुना कुडवं यदिहोक्तम्, तत्तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते । तथा तन्त्रान्तरे—"त्रायमाणा चतुःपलं दशकेऽम्भसि शोषिते । कुडवे कुडवान् सर्पिः क्षीरधात्रीरसान् पचेत्" इति श्रूयते । तत्र यदि, चतुःपलः कुडवः स्यात्, तदा चरकोक्तत्रायमाणाघृतेन सह विरोधः स्यात्, उक्तं हि—"जले दशगुणे साध्यं त्रायमाणाचतुःपलम्" इत्यादि, यावत् "रसस्यामलकानां च क्षीरस्य च घृतस्य च । पलानि पृथगष्टौ च दत्त्वा सम्यग्विपाचयेत्" इति । अन्यत्राप्युक्तम्—"आर्द्रद्रव्यद्रवद्रव्यपलैरष्टाभिरेव च । शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः" इति । तस्मात् कुडवद्वैगुण्यं साधु । आर्द्रद्वैगुण्ये तु, येषां द्रव्याणां शुष्काणामुपयोग उक्तः, तेषामार्द्रप्रयोगे द्वैगुण्यं भवति । ये तु नित्यमार्द्रा एवोपयुज्यन्ते, न तेषां द्वैगुण्यम्,—यदुक्तम्—वासाकुटजकूष्माण्डशतपत्री सहामृता । प्रसारण्यश्वगन्धा च शतपुष्पा सहाचरा । नित्यमार्द्रा प्रयोक्तव्या न तेषां द्विगुणं भवेत्" इति । एतत् सर्वं पेयाक्वाथप्रसङ्गेनोक्तं स्नेहपाकेऽपि चिन्तनीयम् । स्नेहपाके तु स्नेहात् पादिकः कल्को देयः, तथाहि वक्ष्यति । तन्त्रान्तरे च "जलस्नेहौषधानां तु प्रमाणं यत्र नेरितम् । तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम्" इति । चतुर्गुण एव स्नेहो द्रवत्वेऽपि न द्वैगुण्यात् कल्कादष्टगुणो भवति । अन्यत्राप्युक्तम्—"क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः" इति । यत्तु अष्टपल एव स्नेहे कल्कस्य पलमानम्, तदाममसिद्धमपि न व्यवह्रियते, उक्तं हि कृष्णात्रेये—"स्नेहस्य कुडवं तत्र पचेत् कल्कपलेन तु" इति । तथा सुश्रुतेऽपि स्नेहकुडवे कल्कपलमुक्तम् । तदेतदल्पकल्कसाध्यत्वं स्नेहस्य खरसेनाष्टगुणसाध्ये स्नेहे व्यवस्थापनीयम् । द्रव्यस्य हि ससारत्वनिःसारत्वाभ्यां कल्कस्याल्पत्वभूयस्त्वे दृष्टे । यदुक्तं सोनकवचनमनुवदता वाग्भटेन—"स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथखरसैः क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्" इति । ( तथा "शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः । कल्काढ्यत्वात् पुष्पकल्कं प्रशंसन्ति चतुःपलम्" इति । अत्र स्नेहप्रस्थापेक्षया चतुःपलं कल्कं स्नेहादष्टमभाग एव भवतीत्यादिविशेषवचनेन "कल्कश्च स्नेहपादिकः" इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति । ) भवन्तु, अलमतिप्रपञ्चेन, सर्वथा व्यवहारानुगतमेव सर्वं प्रमाणीकर्तव्यम् ॥१९५–१९७॥

**कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।**
**पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी ॥ १९८ ॥**
**निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।**
**किराततिक्तममृता चन्दनं विश्वभेषजम् ॥ १९९ ॥**
**गुडूच्यामलकं मुस्तमर्धश्लोकसमापनाः ।**
**कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ॥२००॥**

पञ्च पञ्चविधं ज्वरमिति यथासंख्यं सन्ततादिषु कलिङ्गादयो ज्ञेयाः । अन्ये तु पञ्चसु पञ्चैव योगिकानाहुः ॥ १९८—२०० ॥

**वत्सकारग्वधं पाठां षड्ग्रन्थां कटुरोहिणीम् ।**
**मूर्वां सातिविषां निम्बं पटोलं धन्वयासकम् २०१**
**वचां मुस्तमुशीराणि मधूकं त्रिफलां बलाम् ।**
**पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ॥ २०२ ॥**
**मधूकमुस्तमृद्वीकाकाश्मर्याणि परूषकम् ।**
**त्रायमाणामुशीराणि त्रिफलां कटुरोहिणीम् ॥**
**पीत्वा निशिस्थितं जन्तुर्ज्वरात् शीघ्रं विमुच्यते २०३**

---

१ तत्प्रत्ययाच्चेहापि मधुकाष्टपलोल्लेखविहितेऽपि क्वाथ्ये कुडवद्वयविवक्षया कृतद्वैगुण्यमेव जलं देयमिति । शिवदासः ।

१ स्नेहाभ्यवस्थापनीयमिति पाठान्तरम् । २ शीघ्रमिति पाठान्तरं त्वसमीचीनतया प्रतिभाति । ३ विषमज्वरचिकित्सामाह—कलिङ्गका इत्यादि । एते पंच योगाः पञ्चसु सन्ततसततकान्येद्युष्कतृतीयचतुर्थकेषु यथासंख्यं ज्ञेयाः । अन्ये तु सर्व एव योगाः सर्वत्राहुः तत्र यथासंख्यमेव युक्तम्,–सततोल्लेखेन पटोलादियोगेन तथा निम्बादेश्चान्येद्युष्कोल्लेखेन गुडूच्यादेश्च चातुर्थकोल्लेखेन क्षारपाणौ दृष्टत्वादिति शिवदासः । ४ त्रायमाणेत्यादि विमुच्यत इत्यन्तं योगानन्तरम्—बृहत्यौ वत्सकं मुस्तं देवदारु महौषधम् । कोलवल्ली च योगोऽयं सन्निपातज्वरापह इत्यधिको योगः क्वचिद्दृश्यते । कोलवल्ली गजपिप्पली ।

बृहत्यौ वत्सकं मुस्तं देवदारु महौषधम् ।
कोलवल्ली च योगोऽयं संनिपातज्वरापहः ॥२०४॥
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ।
विबद्धदोषो ज्वरितः कषायं सगुडं पिबेत् ॥२०५॥

वत्सकारग्वधमित्यादिवलामित्यन्तं केचित् योगत्रयं केचिदेकमेवयोगं वदन्ति। निशिस्थितमिति शीतकषायम्। जातीत्यादौ जातीपल्लवाः। सगुडं पिबेदित्यत्र गुडस्य प्रक्षेप्यत्वेन क्वाथ्यद्रव्यापेक्षया पादिकत्वम्। एवमन्यत्रापि प्रक्षेपे बोद्धव्यम् ॥२०१—२०५॥

त्रिफलां त्रायमाणं च मृद्वीकां कटुरोहिणीम्।
पित्तश्लेष्महरस्त्वेषः कषायो ह्यानुलोमिकः।
त्रिवृताशर्करायुक्तः पित्तश्लेष्मज्वरापहः ॥ २०६ ॥
शटी पुष्करमूलं च व्याघ्री शृङ्गी दुरालभा
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥ २०७ ॥
एष शट्यादिको वर्गः संनिपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्तिश्वासतन्द्रासु शस्यते ॥ २०८ ॥
बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा।
वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥२०९॥
बृहत्यादिर्गणः प्रोक्तः संनिपातज्वरापहः।
कासादिषु च सर्वेषु दद्यात्सोपद्रवेषु च ॥ २१० ॥

अत्र कषायप्रकरणागतत्वात्सन्निपातचिकित्सावसरमप्युल्लङ्घ्य सन्निपातहरौ शठीबृहत्यादिप्रयोगौ पठति २०६–२१०

कषायाश्च यवाग्वश्च पिपासाज्वरनाशनाः।
निर्दिष्टा भेषजाध्याये भिषक्तानपि योजयेत् ॥२११॥

भेषजाध्याये भेषजचतुष्केऽपि अधीयते, अस्मिन्नर्था इति कृत्वा अध्यायशब्दो वर्तत एव। योगमात्रेण तु षड्विरेचनशताश्रितीयेध्याये ज्वरघ्नतृष्णाघ्नौ महाकषायौ प्रोक्तौ। तयोश्च प्रत्येकद्रव्यकृताः कषाया बहवो भवन्तीति कषाया इति बहुवचनम् ॥ यवाग्वाश्च अपामार्गतण्डुलीये प्रोक्ताः ॥ २११ ॥

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् २१२
रूक्षं तेजो ज्वरकरं तेजसा रूक्षितस्य च।
यः स्यादनुबलो धातुः स्नेहसाध्यः स चानिलः२१३

इदानीं सर्पिःप्रयोगानभिधातुं सर्पिषो विषयमाह—ज्वरा इत्यादि। वमनैरित्यनेनेहावस्थाविधेयवमनप्रयोगान् दर्शयति। लङ्घनवचनेन च लङ्घनसमानकालाः स्वेदादयो गृह्यन्ते। रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि सामतानुबन्धात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति तत्र सर्पिर्न दातव्यमिति दर्शयति। अत्र कषायैरिति असमासनिर्देशेन व्यस्तैः समस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिःपानं कर्तव्यमिति दर्शयति। नत्वविशेषेण सर्वज्वरेषु काषायानन्तरं सर्पिरुच्यते तत्कथमुपपन्नं भवतीत्याह—रूक्षं तेज इत्यादि। तत्र तेजःशब्दोऽपि पित्तानलस्नेहशक्तिद्युतिषु ग्रीष्मे च वर्तते। तथापीह तेजःशब्देनोष्माभिधीयते। तेन रूक्षस्वरूप ऊष्मा सर्वत्र ज्वरकर इत्युक्तं भवति। स चोष्मा आमाशयविक्षिप्तस्य त्वाग्नेः। तथा देहभवो ज्वरप्रभावकृतश्च ज्वररूपो ज्ञेयः। यदुक्तं—"स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम्। संतापमधिकं बाह्ये जनयन्ती"त्यादि। अयंच ऊष्मा सूक्ष्मविचारेण यद्यपि पित्तस्य भवति यदुक्तं—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विनापित्तं च स्नेहतीक्ष्णोष्ण"मित्यादिना ग्रन्थेन स्निग्धमुक्तं। तथाप्यवस्थावशात् पित्तं निरामं सन्निःस्नेहं भवति। स्नेहश्च पित्तगुणो द्रवयोगनिमित्तको न सांसिद्धिकः। तेन स्नेहापगमः पित्तस्योल्वत एवावस्थायाम्। तेन निःस्नेहपित्तस्योष्मा रूक्ष एव भवति। इयंच व्याध्यावस्था व्याधिप्रभावादेव जीर्णावस्थायां भवति। यथा मदात्ययस्यान्ते वातपित्तत्वं यदुक्तम् "पित्तमारुतपर्यन्तः प्रायेण हि मदात्यय" इति। क्षारपाणिनाप्युक्तम्—"ज्वरोष्मणा रूक्षितेषु धातुषु बलवान् मारुतो ज्वरानुबन्धं विषमज्वराणां योऽन्यतमं कुर्या"दित्यादि। तत्र रूक्षेण ज्वरेण तेजसा ज्वरकालसंबन्धात् रूक्षितस्य ज्वरिणो यो योऽनुबन्धो धातुरनिलः स्यात् स च स्नेहसाध्य इति सर्पिःकृतस्नेहगुणसाध्य इत्यर्थः। चकाराद्रूक्षं तेजो यज्ज्वरकरं तदपि सर्पिःकृतस्नेहवध्य इति समुच्चिनोति। धातुरिति विशेषणेन वायोर्धारणात्मकता उच्यते। ततश्च धारणात्मकस्य वायोः प्रकोपो महात्यय इति सूचयति। अनु पश्चाद्बलं भवति यस्य सोऽनुबलः। एतेन सर्वज्वरेषु कषायादिना द्वादशाहेन च कालेन कफांशविक्षये सति ज्वरोष्मा वृद्धो भवति। तद्विरूक्षणाच्च वायुरपि वृद्धो भवति। अत्र ज्वरोष्मणि पित्तधर्मे सर्पिस्तावत् शैत्याद्विहितं भवतीति प्रसिद्धत्वान्नोक्तम्। स्नेहांशेनैव तु सर्पिर्यथा पित्तोष्माणं ज्वरकरं रूक्षस्वरूपं तथा वातं च स्नेहाच्छमयति। तद्रूक्षं तेज इत्यादिना श्लोकेनोक्तं भवति। अन्येतु तेजःशब्देनेह पित्तमेव ग्राहयन्ति। पित्तं हि द्विविधं सद्रवं निद्रवं च। यत्सद्रवं तत्स्नेहम्। यत्तु लंघनादिना क्षपितोष्णभागेन निर्हरं तद्रूक्षं भवति। यदिह रूक्षं तेज इत्यनेन गृह्यते तदा यः स्यादनुबलो धातुरित्यनेनानुबन्धरूपं कफं ग्राहयन्ति। ततोऽनुबन्धः कफो रूक्षं पित्तं वातश्च स्नेहसाध्यो भवतीत्यर्थः। स्नेहशब्देन च प्रकरणात्सर्पिरुच्यते। सर्पिश्च कफजित्संस्काराद्भवति यदुक्तं—"घृतं तुल्यगुणं दोषं संस्काराज्जयते कफम्। अत ऊर्ध्वं कफे मन्दे"त्यादिना त्रिष्वपि दोषेषु सर्पिःप्रयोगोऽनुमतः। तदिहापि त्रय एव दोषा यथोक्तव्याख्यया सर्पिर्विषयाः प्रतिपादिता भवन्तीति। अस्माकं तु पूर्वं एव व्याख्याने स्वरसः अन्ये तु रूक्षे तेजो ज्वरकरमिति पठन्ति। तद्रूक्ष इति कषायादिभी रूक्षीकृतशरीर इति ज्ञेयम्। शेषं च पूर्ववत्। अयं च पाठः। पूर्वटीकाकृद्भिर्भीसदत्तस्वामिदासआषाढवर्मप्रभृतिभिर्व्याख्यात-

त्वात्र प्रतिक्षेपणीयः खरणादेनापि समानोऽयं पाठः । उक्तं हि तत्र "कषायपानाद्वमनाल्लंघनाल्लघुभोजनात् । रूक्षितानां ज्वरो मोक्षे सर्पिःपानमुदीक्ष्यते ॥ रूक्षतेजोऽधिके देहे"त्यादिना ॥ २१२—२१३ ॥

**कषायाः सर्व एवैते सर्पिषा सह योजिताः ।**
**प्रयोज्या ज्वरशान्त्यर्थमग्निसंधुक्षणाः शिवाः ॥२१४॥**

संप्रति सर्पिःसिद्धिराह—कषाया इत्यादि । य एते ज्वरघ्ना उक्तास्ते सर्पिषा सह योजिताः सर्पिःसाधनत्वेन प्रयुक्ताः प्रयोज्याः यथोक्तकषायद्रव्यैः । स्वविषय एव सर्पिषा साधयित्वा प्रयोज्यमिति वाक्यार्थः । अन्ये तु काषायाणां सर्पिषा मिश्रीकृतानामनेन वचसा प्रयोगमिच्छन्ति ॥ २१४ ॥

**पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।**
**कलिङ्गमुस्तामलकी शारिवातिविषा स्थिरा ॥२१५॥**
**द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका ।**
**सिद्धमेतैर्घृतं सद्यो जीर्णज्वरमपोहति ॥ २१६ ॥**
**क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।**
**अंसाभितापमग्निं च विषमं संनियच्छति ॥२१७॥**

पिप्पल्य इति । पिप्पल्यादौ घृते पिप्पल्यादीनां विशेषानुक्ते कषायत्वं कल्कत्वमेके ब्रुवन्ति । अन्ये तु कल्कत्वमेवेच्छन्ति । द्रवकार्यं तु द्रवस्यानुक्तत्वात्तोयेनैव कर्तव्यम् । "द्रवकार्ये त्वनुक्ते तु सर्वत्र सलिलं स्मृत"मिति वचनात् । ननु यत्र कल्कत्वेन द्रव्यश्रुतिः द्रवश्च न श्रुतः तत्र जलं ग्रहीतव्यम् । यथा—"त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात्पले । सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानले पिबे"दिति । यत्र तु कषायत्वं कल्कत्वं वा नोक्तं तत्र क्वाथकल्कावेव कर्तव्यौ । "कल्कक्वाथावनिर्देशे गणात्तस्मात्प्रयोजये"दिति एवंसुश्रुतोक्तपरिभाषा हीयं गणविषया एव गणात्तस्मात्प्रयोजयेदिति वचनात् । नच पिप्पल्यादयोऽमी गणत्वेनोक्ताः । गणोऽपि यत्राधिकरणेन श्रुतः तत्रैव क्वाथकल्ककरणम् । यदुक्तमन्यत्र—"यत्राधिकरणेनोक्तिर्गणस्य स्नेहसंविधौ । तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिने" इति । किंच समान्येन द्रव्यस्य स्नेहसाधनाभिधाने यदि कल्ककषायत्वं स्यात्तदा बलातैलादौ "बलाकषायकल्काभ्यां तैलं क्षीरं समं पचे"दिति । न कुर्यात्कल्ककषाययोरुपादानम् । सामान्यसाधनवचनेनैव लब्धत्वात् । तस्मात्कल्कमात्रेणैव पिप्पल्यादिद्रव्यं जलं चतुर्गुणं देयम् एवमन्यत्रापि बोद्धव्यम् । अत्रच पक्तव्यघृतस्य प्रमाणानिर्देशादव्यवस्थितमानमेव सर्पिरिच्छातः पक्तव्यम् । यत्र तु प्रस्थादिमाननिर्देशं करोति तत्र तावन्मात्रेणैव स्नेहोपायो रोगोपशमाय भवतीति ज्ञेयम् । तथाहि वातव्याध्यादौ उभयस्नेहसाध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति । प्रपौण्डरीकनस्ययोगितया कुडवमानं स्नेहं वक्ष्यति । कुष्ठोक्ततिक्तकषट्पलादौ अल्पपाकसंविधानेन पक्वस्य घृतस्य कार्यकर्तृत्वं भवतीति भेषजप्रभावदर्शी महर्षिर्बोधयति । तत्र यदि कुष्ठस्य दीर्घरोगतया सतिक्तषट्पलकेन प्रयोजनम् । तदा पुनः पुनः षट्पलमानं पक्तव्यं घृतं "यथा कुर्वति स उपाय" इति वचनात् । एवं अगस्त्यहरीतक्यादावपि प्रतिनियतमानकं घृतप्रयोजनं वाच्यम् । तस्माद्यादृच्छिकं क्वचिदाचार्यस्य मानाभिधानमनभिधानं च । तामलकी भूम्यामलकीति ख्याता । हलीमकं कामलाभेदम् । संनियच्छति समीकरोति ॥ २१५—२१७ ॥

**वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ।**
**पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥ २१८ ॥**
**पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ।**
**कल्कीकृतैश्च विपचेद्घृतं जीर्णज्वरापहम् ॥ २१९ ॥**
**इति वासाद्यं घृतम् ।**

घृते क्वाथस्य परिमाणं नोक्तम् । तथापि द्विगुण एव क्वाथो ग्राह्यः स्नेहपाके चतुर्गुणएवोक्तम् । "स्नेहाच्चतुर्गुणं तोय"मिति वचनात् जलशब्दस्य द्रवोपलक्षणत्वम् । अत्र च द्वाभ्यामपि चतुर्गुणमिति परिभाषया यद्यपि क्षीरं कषायवद्द्विगुणं लभ्यते तथापि त्रिविधशिष्यबुद्धिहिताय स्पष्टार्थं क्षीरद्वैगुण्याभिधानं ब्रुवते । तत्र क्षीरस्य मानानुक्तौ "क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात्स्नेहसमं क्षीरं कल्कश्च स्नेहपादिक"इति वचनात् । क्षीरस्य द्रवान्तरसत्त्वेऽपि स्नेहसमत्वमेवस्यात् । ततश्च कषायभागत्रयं क्षीरं चैकभागमिति कृत्वा द्वाभ्यामपि चातुर्गुण्यम् । चातुर्गुण्यमिति परिभाषा स्यात् तस्मात्कर्तव्यक्षीराद्वैगुण्यं वचनम् । अन्ये तु—द्वाभ्यामपि चातुर्गुण्यमिति परिभाषया प्रत्येकमेव द्रव्येण चातुर्गुण्यमिच्छन्ति । ततश्च कषायस्य चातुर्गुण्यं क्षीरस्य द्वैगुण्यं भवति । तत्र एकेनापि "चातुर्गुण्यं द्वाभ्यामपि चातुर्गुण्यं त्रिभिरपि चातुर्गुण्यं चतुर्भिः सम"मिति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहचातुर्गुण्यमेव द्रव्यस्योक्तम् । अतो द्वाभ्यां त्रिभिरपि तथा चातुर्गुण्यं कर्तव्यं यथास्नेहाच्चतुर्गुणं स्यात् । तच्च मिलित्वैव चातुर्गुण्यं भवति न प्रत्येकं चतुर्गुणद्रवपरिभाषा । पंचप्रसृति द्रवसान्निध्ये विशेषवचनाद्बाध्यते । वचनं हि—"पंचप्रसृति यत्र स्युःर्द्रवाणि स्नेहसन्निधौ । तत्र स्नेहसमान्याहुरर्वाक् स्याच्च चतुर्गुण-मिति ॥ २१८—२१९ ॥

**बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ।**
**निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥२२०॥**
**कृत्वा कषायं पेष्यार्थे दद्यात्तामलकीं शटीम् ।**
**द्राक्षां पुष्करमूलं च मेदामामलकानि च ॥ २२१ ॥**
**घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।**
**क्षयकासशिरःशूलपार्श्वशूलांसतापनुत् ॥ २२२ ॥**
**इति बलाद्यं घृतम् ।**

बलाख्ये घृतेऽपि क्वाथपयसोः पूर्वोक्तक्वाथक्षीरसाहचर्यात्प्रत्येकं द्विगुणत्वं ज्ञेयम् ॥ २२०—२२२ ॥

ज्वरिभ्यो बहुदोषेभ्य ऊर्ध्वं चाधश्च बुद्धिमान् ।
दद्यात्संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २२३ ॥
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा ।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये ॥ २२४ ॥

इति ज्वरहरं वमनम्

क्षौद्राम्बुना रसेनेक्षोरथवा लवणाम्बुना ।
ज्वरे प्रच्छर्दनं शस्तं मद्यैर्वा तर्पणेन वा ॥ २२५ ॥
मृद्वीकामलकानां वा रसं प्रच्छर्दनं पिबेत् ।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥ २२६ ॥
लिह्याद्वा त्रैवृतं चूर्णं संयुक्तं मधुसर्पिषा ।
पिबेद्वा क्षौद्रमांसार्द्रं सघृतं त्रिफलारसम् ॥२२७॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् २२८
ज्वराद्विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम् ।
पयोऽनुपानमुष्णं वा पीत्वा द्राक्षारसं नरः ॥२२९॥

संप्रति क्रमसूचितवमनविरेचनयोगानाह—ज्वरिभ्य इत्यादिना बहुदोषेभ्य इत्यनेन अल्पदोषेषु संशोधनं निषिद्धमिति स्फोरयति । काल इति यथोक्तवमनविरेचनयोग्यज्वरावस्थायाम् । कल्प इति कल्पस्थाने । मदनपिप्पलीयुक्तं कफे, कालिङ्गयुक्तं पित्तश्लेष्मणि मधूकयुक्तं तु दाहशान्त्यै क्षौद्रयोगान्मधुरीकृतं क्षौद्राम्बु प्रच्छर्दनमिति विरेचनमवाप्येति उपयोज्यम् ॥ २२३—२२९ ॥

कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलशृतं पयः ॥२३०॥
एरण्डमूलोत्क्वथितं ज्वरात्सपरिकर्तिकात् ।
पयो विमुच्यते पीत्वा तद्वद्बिल्वशलाटुभिः ॥२३१॥
त्रिकण्टकबलाव्याघ्रीगुडनागरसाधितम् ।
वर्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥ २३२ ॥
सनागरं समृद्वीकं सघृतक्षौद्रशर्करम् ।
शृतं पयः सखर्जूरं पिपासाज्वरनाशनम् ॥ २३३ ॥
चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः ।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् २३४
"जीर्णज्वराणां सर्वेषां पयः प्रशमनं परम् ।
पेयं तदुष्णं शीतं वा यथास्वं भेषजैः शृतम् ॥२३५॥

पाठक्रमागतक्षीरप्रयोगानाह—कासादित्यादि । अत्र पञ्चमूल्यादिद्रव्यस्य तथा क्षीरस्य पानीयस्य च मानानुक्तौ वृद्धवैद्यव्यवहारसिद्धया परिभाषया मानकल्पना यदुक्तं—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः"इति । एतच्च द्रव्यस्यार्धपलं क्षीरं पलचतुष्टयं । पानीयं पलानि षोडश दत्वा क्षीरावशेषः पाकः कर्तव्यः । एवं प्रकारा मानव्यवस्था । न तु अत्र माषपर्णी तृतीया । "मेदां पयस्यां जीवन्तीं विदारीं कण्ठकारिकां । माषान् श्वदंष्ट्रां क्षीरिकां गोधूमांश्छालिपष्टिकाम् । पयस्यर्धोदके पक्त्वा कार्षिकानाढकोन्मिते । विवर्तयेत्क्षीरशेष"मित्यादिना क्षीरद्रव्यादिमानमुक्तम् । तत्तत्रैव विषये ज्ञेयम् । तन्त्रान्तरपरिभाषागृहीतत्वादस्य मानस्य । प्रदेशान्तरयोगोक्तं हि मानं तदेव प्रदेशान्तरेऽपि मानलिङ्गं भवति यत्परिभाषानुगतम् । परिभाषान्तरबाधकं मानं यथा—"शुद्धशुष्करसोनस्य चतुःपलं क्षीरोदकेऽष्टगुणे पचेत् क्षीरशेषं च पाचयेत् ।" तन्त्रान्तरे । एवमन्यदपि यत्परिभाषामानकथनं तत्तत्रैव प्रयोगे व्यवस्थितं ज्ञेयम् ॥ उष्णशीतं च विकल्पः इच्छाविशेषः । प्रबले वाते उष्णं पित्तेऽतिबले शीतम् ॥ २३०—२३५ ॥

प्रयोजयेज्ज्वरहरान्निरूहान्सानुवासनान् ।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २३६ ॥
पटोलारिष्टपत्राणि सोशीरश्चतुरङ्गुलः ।
ह्रीबेरं रोहिणं तिक्ताश्वदंष्ट्रामदनानि च ॥ २३७ ॥
स्थिरा बला च तत्सर्वं पयस्यर्धोदके शृतम् ।
क्षीरावशेषं निर्यूहं संयुक्तं मधुसर्पिषा ॥ २३८ ॥
कल्कैर्मदनमुस्तानां पिप्पल्या मधुकस्य च ।
वत्सकस्य च संयुक्तं वस्तिं दद्याज्ज्वरापहम् ॥२३९॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु ।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः ॥२४०॥
आरग्वधमुशीराणि मदनस्य फलानि च ।
चतस्रः पर्णिनीश्चैव निर्यूहमुपकल्पयेत् ॥ २४१ ॥
प्रियङ्गुर्मदनं मुस्तं शताह्वा मधुयष्टिका ।
कल्कः सर्पिर्गुडः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः ॥२४२॥

निरूहविधौ ज्वरहराविति वचनेन ज्वरहरैर्द्रव्यैर्निरूहानुवासनकल्पनां दर्शयति । पयस्यर्धोदके शृतमिति वचनेन क्षीरतुल्यस्य जलस्य ग्रहणमर्धशब्दस्य समविभागवचनत्वाज्ज्ञेयम् । अत्रच क्वाथकल्कस्नेहादिमानव्यवस्थितिः स्थाने वक्तव्येव बोद्धव्या ॥ २३६—२४२ ॥

गुडूचीं त्रायमाणां च चन्दनं मधुकं वृषम् ।
स्थिरां बलां पृश्निपर्णीं मदनं चेति साधयेत् ॥२४३॥
रसं जाङ्गलमांसस्य रसेन सहितं भिषक् ।
पिप्पलीफलमुस्तानां कल्केन मधुकस्य च ॥ २४४ ॥
ईषत्सलवणं युक्त्या निरूहं मधुसर्पिषा ।
ज्वरप्रशमनं दद्याद्बलस्वेदरुचिप्रदम् ॥ २४५ ॥

गुडूच्यादौ साधयेद्रसमिति क्वाथं कुर्यात् । ईषत्सलवणमिति ईषत्क्षौद्रसर्पिषा युक्तमिति योज्यम् ॥ २४३—२४५ ॥

जीवन्तीं मधुकं मेदां पिप्पलीं मरिचं वचाम् ।
ऋद्धिं रास्नां बलां विश्वं शतपुष्पां शतावरीम् २४६
पिष्ट्वा क्षीरं जलं सर्पिस्तैलं च विपचेद्भिषक् ।
अनुवासनिकं स्नेहमेतद्विद्याज्ज्वरापहम् ॥ २४७ ॥
पटोलपिचुमर्दाभ्यां गुडूच्या मधुकेन च ।
मदनैश्च शृतः स्नेहो ज्वरघ्नमनुवासनम् ॥ २४८ ॥

चन्दनागुरुकाश्मर्यपटोलमधुकोत्पलैः ।
सिद्धः स्नेहो ज्वरहरः स्नेहवस्तिः प्रयुज्यते ॥२४९॥

जीवन्तीमित्याद्यनुवासनम् । क्षीरं स्नेहसमं जलं तु त्रिगुणमिति स्नेहाच्चातुर्गुण्यं द्रवस्य कार्यम् ॥ २४६—२४९ ॥

यदुक्तं भेषजाध्याये विमाने रोगभेषजे ।
शिरोविरेचनं कुर्याद्युक्तिज्ञस्तज्ज्वरापहम् ॥ २५० ॥
यच्च नावनिकं तैलं याश्च प्राग्धूमवर्तयः ।
मात्राशितीये निर्दिष्टाः प्रयोज्यास्ता ज्वरेष्वपि २५१
अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत् ।
यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम् २५२
सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम् ।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक् ॥ २५३ ॥"

यदुक्तमित्यादिना शिरोविरेचनद्रव्यमाह—भेषजाध्याये इत्यपामार्गतण्डुलीये ॥ यच्चनावनिकं तैलमिति अणुतैलम् ॥ अभ्यङ्गांश्चेत्यादिना क्रमागतं बहिःपरिमार्जनमाह—यथाभिलापमिति यथेच्छं शीतोष्णं विभज्येति शीतसमुत्थं ज्वरमुष्णसमुत्थं ज्वरं विभज्य तत्र शीतसमुत्थे उष्णाभ्यङ्गादयः । उष्णे च शीताः कर्तव्याः ॥ अत्र च प्रतिलोमव्याख्यया शीताभिप्रायिणोऽभ्यंगादीनाह—सहस्रेति सहस्रशब्दो विपुलार्थः तेनानेकधा धौतं सर्पिरित्यर्थः ॥ २५०—२५३ ॥

अथ चन्दनाद्यं तैलमुपदेक्ष्यामः । चन्दनशैलेयभद्राश्रयकालानुसार्यकालीयकपद्मापद्मकोशीरशारिवामधुकप्रपौण्डरीकनागपुष्पोदीच्यवन्यपद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रबिसमृणालशालूकशैवालकशेरुकानन्ताकुशकाशेक्षुदर्भशरनलशालिमूलजम्बुवेत्रवेतसवानीरगुन्द्राककुभाशनाश्वकर्णस्यन्दनवातपोथशालतालधवतिनिशखदिरकदरकदम्बकाश्मर्यफलसर्जप्लक्षवटकपीतनोदुम्बराश्वत्थन्यग्रोधधातकीदूर्वोत्कण्टकशृङ्गाटकमञ्जिष्ठाज्योतिष्मतीपुष्करबीजक्रौञ्चादनबदरीकोविदारकदलीसंवर्तकारिष्टशतपर्वाशीतकुम्भिकाशतावरीश्रीपर्णीश्रावणीमहाश्रावणीरोहिणीशीतपाक्योदनपाकीकालावलापयस्याविदारीजीवकर्षभमेदामहामेदामधुरस्रष्यप्रोक्तातृणशून्यमोचरसाटरूषकवकुलकुटजपटोलनिम्बशाल्मलीनारिकेलखर्जूरमृद्वीकाप्रियालप्रियङ्गुधन्वनात्मगुप्तामधुकानामन्येषां च शीतवीर्याणां यथालाभमौषधानां कषायं कारयेत् । तेन कषायेण द्विगुणितपयसा तेषामेव च कल्केन कषायार्धमात्रं मृद्वग्निना साधयेत्तैलम् । एतत्तैलं सद्योदाहं ज्वरमपनयत्येतैरेव चौषधैः सुश्लक्ष्णपिष्टैः सुशीतैः प्रदेहं कारयेत् । एतैरेव च शृतशीतं सलिलमवगाहपरिषेकार्थं प्रयुञ्जीत ॥ २५४ ॥

मध्वारनालक्षीरदधिघृतसलिलसेकावगाहाश्च सद्योदाहज्वरमपनयन्ति शीतस्पर्शत्वादिति ॥ २५५

सूचितं चन्दनाद्यं तैलं ब्रूते अथेति । अथशब्दोधिकारे । चन्दनाद्येन द्रव्येण संसक्तं तैलं चन्दनाद्यमुच्यते । चन्दनं बहुचन्दनं भद्रश्रियं श्वेतचन्दनं, कालानुसार्यशीतला, नलिनं पद्मभेदः, मृणालं चेतसः सुगन्धि, अश्वकर्णः शालभेदः । प्ररोहो वटः, ज्योतिष्मती कांगणिका, संवर्तको विभीतकः, शतपर्वा श्वेतदूर्वा, शीतकुम्भिका काष्ठपाटला, महाश्रावणी अलम्बुषा, स्थूलफला शीतपाकी गन्धदूर्वा यथालाभमित्यादिना दुःखप्राप्यभेषजपरित्यागेनापि । चन्दनादिपाकं दर्शयति द्विगुणपयस्सिक्काथे तेनैव द्विगुणपयसा क्काथेन । अत्र कल्कमानानिर्देशेऽपि स्नेहपादिकत्वं कल्कस्य ।'कल्कश्च स्नेहपादिकः' इति वचनात् । अत्र यद्यपि तैलमुष्णं घृतंच शीतलं शीतंच दाहप्रशमने प्रशस्तम् । तथापि सूक्ष्ममार्गानुसारितया व्यवायितया तथा सर्शनात्कफवातहरतया तैलमेवाभ्यङ्गेऽधिकृतं न घृतम् । अन्ये घृतादपि तैलं संस्कारवाहितरमितिकृत्वा तैलमेवोक्तमिति ब्रुवते । ननु चंदनाद्यमिति किं ? तर्हि संज्ञाकरणेन किं प्रदेशान्तरे व्यवहार इति । इति चैत्रः । विनापि संज्ञाकरणे प्रदेशान्तरे यौगिकसंज्ञाव्यवहारो दृष्टः यथा—'षट्पलं पाययेत्सर्पिः तथा वासाघृतं दधिकं च पिबेदिति' एवं कृतायामपि संज्ञायां व्यवहारो न दृश्यते । यथाह्येतत्पारुषिकं सर्पिरिति व्यवहारो न दृश्यते, एवं परूषकादिसंज्ञया शास्त्रे व्यवहारो नास्ति, तथापि तद्विधानां वैद्यानां तथाविधो व्यवहारो भविष्यति एतदर्थं संज्ञाकरणम् । संज्ञानांच प्रयोगकथनसमयेऽकरणेऽपि योगसिद्धा संज्ञा भवति । एवमन्यत्रापि संज्ञाकरणे व्याख्येयम् । अश्लक्ष्णपिष्टमिति वचनेन श्लक्ष्णपिष्टलेपस्य दाहकर्तृतां सूचयति यदुक्तं—"श्लक्ष्णपिष्टघनो लेपश्चन्दनस्यापि दाहकृत् । त्वगोष्मणोस्तथा रोधाच्छीतकृत्त्वन्यथाऽगुरोः" ॥२५४।२५५॥

भवन्ति चात्र ।

पौष्करेषु सुशीतेषु पद्मोत्पलदलेषु च ।
कह्लाराणां च पत्रेषु क्षौमेषु विमलेषु च ॥ २५६ ॥
चन्दनोदकशीतेषु सुप्याद्दाहार्दितः सुखम् ।
हिमाम्बुसिक्ते सदने शीते धारागृहेऽपि वा ॥२५७॥
हेमशङ्खप्रवालानां मणीनां मौक्तिकस्य च ।
चन्दनोदकशीतानां संस्पर्शानुरसान्स्पृशेत् ॥२५८॥
स्रग्भिर्नीलोत्पलैः पद्मैर्व्यजनैर्विविधैरपि ।
शीतवातावहैर्व्यज्येच्चन्दनोदकवर्षिभिः ॥ २५९ ॥
नद्यस्तडागाः पद्मिन्यो ह्रदाश्च विमलोदकाः ।
अवगाहे हिता दाहतृष्णाग्लानिज्वरापहाः ॥ २६० ॥
प्रियाः प्रदक्षिणाचाराः प्रमदाश्चन्दनोक्षिताः ।
सान्त्वयेयुः परैः कामैर्मणिमौक्तिकभूषणाः ॥२६१॥
शीतानि चान्नपानानि शीतान्युपवनानि च ।
वायवश्चन्द्रपादाश्च शीतदाहज्वरापहाः ॥ २६२ ॥

"संसर्गानुरसान्स्पृशे"दिति वचनात्,। चिरं धारयेदिति वचनात्। चन्द्रपादा इति शीता इति विशेषेण चन्द्रपादानां सर्वदा शीतत्वात्। चन्द्रपादा अपि उष्णकाले उष्णसंपर्कादुष्णा भवन्ति तन्निरासार्थं शीता इति ॥ २५६-२६२ ॥

अथोष्णाभिप्रायिणां ज्वरितानामभ्यङ्गादीनुपक्रमानुपदेक्ष्यामः। अगुरुकुष्ठतगरपत्रनलदशैलेयध्यामकहरेणुकास्थौणेयकक्षेमिकैलावराङ्गदपुरतमालपत्रभूतीकरोहिषसरलशल्लकीदेवदार्वग्निमन्थबिल्वस्योनाककाश्मर्यपाटलापुनर्नवावृश्चीरकण्टकारीबृहतीशालिपर्णीपृश्निपर्णीमाषपर्णीमुद्गपर्णीगोक्षुरकैरण्डशोभाञ्जनकवरुणार्कचिरिबिल्वतिल्वकशटीपुष्करमूलशुण्डीरोरुबूकपत्तुराक्षीवाश्मान्तकशिग्रुमातुलुङ्गमूळपर्णीपीलुकमूलपर्णीतिलपर्णीमेषशृङ्गीहिंस्रादन्तशठैरावतकभल्लातकास्फोतकण्डीरात्मजकैषीकाकरञ्जधान्यकाजमोदपृथ्वीकासुमुखसुरसकुठेरककण्डीरकालमालकपर्णासक्षवकफणिज्झकभूस्तृणशृङ्गवेरपिप्पलीसर्षपाश्वगन्धारास्नारुहारोहावचाबलातिबलागुडूचीशतपुष्पाशीतवल्लीनाकुलीगन्धनाकुलीश्वेताज्योतिष्मतीचित्रकाध्यण्डाम्लचाङ्गेरीबदरकुलत्थमाषाणामेवंविधानामन्येषां चोष्णवीर्याणां यथालाभमौषधानां कषायं कारयेत्तेन कषायेण तेषामेव च कल्केन सुरासौवीरकतुषोदकमैरेयमेदकदधिमण्डारनालकट्वरप्रतिविनीतेन तैलपात्रं विपाचयेत्। तेन सुखोष्णेन तैलेनोष्णाभिप्रायिणं ज्वरितमभ्यञ्ज्यात्। तथा शीतज्वरः प्रशाम्यति तैरेव चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत्। एतेषामेव च सुखोष्णमुत्क्वाथमवगाहनपरिषेकार्थं प्रयुञ्जीत ज्वरप्रशमार्थमिति ॥ २६३ ॥

इति शीतज्वरे अगुर्वादितैलम्।

क्षेमकश्चोरकः, रोहिषो वामकर्पूरः, शिग्रुः शोभांजनः, मूषकपर्णी तिलपर्णी, मोरटा मूर्वेत्यन्ये, कण्डीरः रामठभेदः। सहि जलस्थलभेदाद्द्विविधः। आत्मजा पुत्रंजराख्याता, ईषिकाम्बष्ठा, सुमुखादयो रुहा वृक्षरुहा रोहाञ्जलिकारिका, शीतपर्णी वृक्षफल, बुका गन्धनाकुली रास्नाभेदः, अन्येषां चेत्यनेन रोगभिषग्जितीयोक्तोष्णद्रव्याणि ग्राहयन्ति। सौवीरतुषोदके त्रिवृत्कल्के वक्ष्यमाणे। मैरेयं सुराकृतभेदो जगलः। कट्वरं सस्नेहदधिद्रवः। अत्र कषायाणि द्रवद्रव्याणि स्नेहसमानि प्रत्येकं कर्तव्यानि यदुक्तं—"पञ्चप्रसृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहु" रिति ॥ २६३ ॥

भवन्ति चात्र।

"त्रयोदशविधः स्वेदः स्वेदाध्याये निदर्शितः।
मात्राकालविदा युक्तः स च शीतज्वरापहः ॥२६४॥
सा कुटी तच्च शयनं तच्चाच्छादनं ज्वरम्।
शीतं प्रशमयन्त्याशु धूपाश्चागुरुजा घनाः ॥ २६५ ॥
पवित्रचारुगात्राश्च तरुण्यो यौवनोष्मणा।
आश्लेषाच्छमयन्त्याशु प्रमदाः शिशिरज्वरम् २६६
स्वेदनान्यन्नपानानि वातश्लेष्महराणि च।
शीतज्वरं जयन्त्याशु संसर्गबलयोजनात् ॥ २६७ ॥

स्वेदाध्याये त्रयोदशविधस्योक्तत्वात्पुनस्त्रयोदशविधवचनं सर्वेषामेव करणार्थम्। अधिकाग्निस्वेदनिषेधार्थम्। त्रयोदशस्वेदान्तर्गतापि कुटी विशेषेण महितत्वात्पृथगुक्ता तद्वच्छयनं कुटीपरिकरतया प्रतिपादितं शयनम्। एवमाच्छादनमपि। एतच्च शयनाच्छादनं पृथगप्यत्र हितमिति पृथक्पाठं दर्शयति। घना इति बहलाः। स्वेदनानि उष्णानि कुक्कुटमदिराकुलत्थादीनि। संसर्गबलयोजनादित्यत्र अनन्तरोक्त एवोष्णाभिप्रायः। ज्वरकरो वातकफसंसर्गः संसर्गशब्देन गृह्यते तेन वातकफसंसर्गे वातो बलवान् तदा गुरूष्णस्निग्धभूयिष्ठमनुपानं, यदा कफो बलवांस्तदा उष्णरूक्षप्रायं विधेयमित्यर्थः। अयं च वातकफजो ज्वरो विशेषेण वायोर्योगवाहितया शीतो भवतीति कृत्वेहोक्तः। तेन केवलवातजः शीताभिप्रायेणैव ॥ २६३-२६७ ॥

वातजे श्रमजे चैव पुराणे क्षतजे ज्वरे।
लङ्घनं न हितं विद्याच्छमनैस्तानुपाचरेत् ॥ २६८ ॥
विक्षिप्यामाशयोष्माणं यस्माद्गत्वा रसं नृणाम्।
ज्वरं कुर्वन्ति दोषास्तु हीयतेऽग्निबलं ततः ॥२६९॥
यथा प्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि।
न पचत्योदनं सम्यगनिलप्रेरितो बहिः ॥ २७० ॥
पक्तिस्थानात्तदा दोषैरूष्मा क्षिप्तो बहिर्नृणाम्।
न पचत्यभ्यवहृतं कृच्छ्रात्पचति वा लघु ॥ २७१ ॥
अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः।
सप्ताहेन हि पच्यन्ते सर्वधातुगता मलाः ॥ २७२ ॥
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि।
उदीर्णदोषस्त्वल्पाग्निरश्नन्गुरु विशेषतः ॥ २७३ ॥
मुच्यते सहसा प्राणैश्चिरं क्लिश्यति वा नरः।
एतस्मात्कारणाद्विद्वान्वातिकेऽप्यादितो ज्वरे २७४
नाति गुर्वति वा स्निग्धं भोजयेत्सहसा नरम्।
ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम् ॥२७५॥
कुर्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान्।
पाययित्वा कषायं च भोजयेद्रसभोजनम् ॥ २७६ ॥
जीर्णज्वरहरं कुर्यात्सर्वशश्चाप्युपक्रमम्।
श्लेष्मलानामवातानां ज्वरोऽनुष्णो कफाधिकः २७७

**परिपाकं न सप्ताहेनापि याति मृदूष्मणाम्।**
**तं क्रमेण यथोक्तेन लङ्घनाल्पाशनादिना ॥ २७८ ॥**
**आदशाहमुपक्रम्य कषायाद्यैरुपाचरेत्।**
**सामा ये ये च कफजाः कफपित्तज्वराश्च ये ॥२७९**
**लङ्घनं लङ्घनीयोक्तं तेषु कार्यं प्रति प्रति।**
**वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ॥ २८० ॥**

संप्रति वातजादीनां ज्वराणां पूर्वं लङ्घनं निषिद्धं तेषां चिकित्साविशेषमाह–वातज इत्यादि । शमनैरिति कषायसर्पिःपानादिभिः शमनैः ॥ संप्रति वातजादीनामप्यवस्थायां लङ्घनं, तथा कफजादीनामपि स्वरूपेणैव सामान्येन लाघवकरं लङ्घनमाह—सामा इत्यादि । सामा इत्यनेनापि वातिकस्यापि सामान्यलङ्घनीयत्वं न केवलं निरामपित्तस्य, सामपित्तस्य ब्रुवते । उक्तं ह्यन्यत्र—सामे वातेऽपि लङ्घनमिति । कफजे तु निरामेऽपि लङ्घनं शस्यते । कफपित्तजशब्देन कफयुक्तपित्तस्यैव लङ्घनीयत्वं न केवलं निरामपित्तस्य । सामपित्तस्य तु आमक्षयार्थं लङ्घनं शस्यत एव । यदुक्तमन्यत्र—सामे पित्तेऽपि लङ्घनं कुर्यादिति । यदुक्तं—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" । तदपि सामत्वेन । लङ्घनीयोक्तवचनेन लङ्घनबृंहणीयोक्तं दशविधं लङ्घनं अवस्थानिषिद्धवमनादि सर्वथा निषिद्धव्यायामादिरहितं च ग्राह्यम् ॥ पूर्वं यद्वमनादीत्युक्तं तत्संसृष्टज्वरेषु दोषेषु कफाधिक्येन । संप्रति तु एकैकदोषजे वमनैश्चेत्यादिना वमनादीनि प्राहेति न पौनरुक्त्यम् ॥ २६८—२८० ॥

**ज्वरानुपचरेद्धीमान्कफपित्तानिलोद्भवान्।**
**संसृष्टान्सन्निपतितान्बुद्ध्वा तरतमैः समैः ॥ २८१ ॥**
**ज्वरान्दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत्।**
**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ॥ २८२ ॥**
**कफस्थानानुपूर्व्या वा संनिपातज्वरं जयेत्।**
**संनिपातज्वरस्यान्ते कर्णमूले सुदारुणः ॥ २८३ ॥**

संसर्गसन्निपातचिकित्सासूत्रमाह—संसृष्टानित्यादि । तरतमैः समैरिति । संसर्गे एकोल्वणे उल्वणतरः । सन्निपाते च वृद्धतरवृद्धतमदोषमध्ये दोषानुसारेणैव । तथा द्युल्वणतरेऽपि सन्निपाते द्वौ दोषौ तरेणापि ज्ञेयौ । वृद्धवृद्धतरवृद्धतमदोषे त्रिदोषेऽत्यर्थवृद्धा दोषास्तमैर्ज्ञेयाः । येन त्रिषु तम इति यदुक्तं तत्त्रिषु मध्ये एकस्य प्रकर्षावधारणं भवति । यदा तु त्रिषु द्वौ प्रकृष्टौ विवक्षितौ तदा एकप्रकृष्टापेक्षया तर इत्यस्यैव विषयः समैस्तु समदोषसंसर्गः सन्निपातश्च ज्ञेयः । दोषक्रमापेक्षीत्यनेन सकलदोषगतवृद्धवृद्धतरत्वादिविशेषैश्चिकित्सितोपयुक्तत्वं युक्तम् । क्रमापेक्षीत्यनेन च ज्वरितचिकित्सितलङ्घनादिक्रमापेक्षा दृश्यते । यथोक्तैरौषधैरिति लङ्घनाद्यञ्जनपर्यन्तम् । ननु त्रिदोषजे ज्वरे चिकित्सा नोपपद्यते । यतो न त्रिदोषशमनं प्रायो द्रव्यं भवति । यद्धि वातस्य पथ्यं तत् श्लेष्मणोऽपथ्यं, यत्पित्ते पथ्यं तच्च प्रायः श्लेष्मण्यपथ्यम् । यद्वा तिक्तकषायं कफपित्तहरं तद्वातकरम् । यच्च मधुरं वातपित्तहरं तत्कफकरम् । यत्तु त्रिदोषहरमामलकादि तत्स्तोकं प्रतिनियतरोगविषयं च । नावश्यं ज्वरयौगिकम् । सन्निपातश्चायं महात्ययः । तत्कथमस्य चिकित्सा कर्तव्येत्याह—वर्धनेनेत्यादि । पञ्चविधप्रकारोऽत्र सन्निपातो भवति । "द्युल्वणैकोल्वणैः षड्स्युर्हीनमध्याधिकैश्च षडि"त्यादिना, तत्र स्वमानक्षीणेषु सन्निपातेषु ज्वरारम्भकं नास्ति । क्षीणा हि दोषा हानिमात्रविकाराः स्वं लिङ्गमधिकं कर्तुं न समर्थाः । शेषेषु तु त्रयोदशसु त्रिदोषहरद्रव्यसौकर्याभावात् । अभ्यर्हितदोषापेक्षया चिकित्सोच्यते । गत्यन्तराभावात्तत्र वर्द्धनेनैकदोषस्येत्यनेनैकदोषस्य वर्द्धनेनापीत्यर्थः । एकशब्देन च त्रिदोषे वृद्धस्यापेक्षा न वृद्धतरवृद्धतमयोस्तयोर्हि अतिवृद्धयोर्वर्द्धनेनातिमात्रवृद्ध्यात्याहितमेव स्यात् । वर्द्धनेनैकदोषस्येत्यनेन वर्द्धनं वृद्धतरवृद्धतमदोषक्षपणकेनैकदोषवर्द्धनम् । यथा वृद्धे कफे वृद्धतरयोश्च वातपित्तयोर्मधुरम् । तद्धि वृद्धतरवातापेक्षया कफं क्षीणं वर्द्धयदपि ज्वरं वलवद्दोषहन्तृतया हरति । तथा वृद्धे कफे वृद्धतरे च वाते वृद्धतमे च पित्ते मधुरप्रयोगो ज्ञेयः । एवमुदाहरणान्तराणि ज्ञेयानि । अतो वर्द्धनेनैकदोषस्येत्यनेन द्युल्वणानां त्रयाणां तथा हीनमध्याधिकदोषाणां सन्निपातानां चिकित्सा क्षपणेनैकदोषस्येत्यनेन च क्षीणद्वयसंवर्द्धकमपि यन्महात्ययं वृद्धतरवृद्धतमदोषक्षयकं भवति तद्धेयजं कर्तव्यम् । वृद्धतमो ह्यप्रकृतः । अप्रकृतः सद्यो हन्ति । तत्प्रक्रियायां च क्षीणयोर्वृद्धिरल्पा, सा क्रमेण प्रतिकर्तव्येति भावः । अनेनैकोल्वणास्त्रयः सन्निपाताश्चिकित्सिताः । अस्मिन्नर्थे तन्त्रान्तरं "न्यूनैकदोषसंवृद्धिरेकवृद्धं तयोरपि । सन्निपाते तु कर्तव्यं सन्निपातवशेन तु" ॥ परिशिष्टे सन्निपातचिकित्सामाह—कफस्थानानुपूर्व्या इति । वा शब्दो व्यवस्थितविकल्पवाची कफस्थानानुपूर्व्या जयेदिति प्रथमं कफस्थानमामाशयः । आमाशयोर्ध्वभाग इति । आनुपूर्वी अनुक्रमः । स्थानग्रहणेन स्थानिनः कफस्यापि ग्रहणम् । कफस्तु साक्षान्नोक्तः । तत्स्थानस्यैवामाशयस्य ज्वरारम्भकदोषेण दुष्टस्य चिकित्स्यत्वोपदर्शनार्थम् । उक्तं हि—ज्वरो ह्यामाशयसमुद्भव इति । एवं च सामापि दोषा ज्वरारंभका यस्मादामाशयं विशेषेण दूषयित्वा ज्वरं कुर्वन्ति तस्मात्स्थानानुगुणैव ज्वरे प्रथमा चिकित्सा कर्तव्या । स्थानिदोषापेक्षया स्थानमेव प्रथमं चिकित्स्यम् । यदुक्तं—"स्थानं जयेद्धि पूर्वमिति" । तस्य कफस्थानस्य लङ्घनपाचनादिक्रिया ज्वरे प्रथमं प्रतिपादिताः क्रियन्त एव । एतच्च यद्यपि सर्वज्वरपरिभाषासाधारणं चिकित्सितं, तथापि सन्निपाते वलवत्तरवातचिकित्सापूर्वज्वरचिकित्साप्रसक्तिस्तन्निरासार्थं सन्निपाते प्रोच्यते । ज्वरादन्यत्र सन्निपाते समे एव वातः पूर्वं चिकित्स्यते, उक्तं हि—"वातस्यानुजयेत्पित्तं, पित्तस्यानुजयेत्कफम्" ।

इति कफस्थानानुपूर्व्या चिकित्सिते क्रियमाणे यो दोष उल्वणो भवति तत्र "वर्द्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य च" इति चिकित्सा कार्या। एतदेव भेदेनोक्तं "सन्निपाते ज्वरे पूर्वं कुर्यादामकफापहम्। पश्चाच्छ्लेष्मणि संक्षीणे शमयेत्पित्तमारुताविति"। अन्ये तु कफस्थानमामाशयरूपं स्थानं यस्य तत्कफस्थानं पित्तमिति पश्चात्पदलोपादुष्ट्रमुखवद्बहुव्रीहिर्वदन्ति ततः पित्तानुपूर्व्या जयेदित्यर्थः। तदर्थानुवादकं च सुश्रुते वचनं पठन्ति—"शमयेत्पित्तमेवादौ ज्वरेषु समवायिषु। दुर्निवारतरं तद्धि ज्वरार्तेषु विशेषत" इति। तन्नैवं हि सुविस्पष्टार्थं पित्तानुपूर्व्यैवमेव। सुश्रुतवचनं च जीर्णत्रिदोषाभिप्रायेण ज्ञेयम्। एतच्च प्रथमोत्पन्नसन्निपातज्वरचिकित्सितं कफस्थानानुपूर्व्या ज्ञेयम्। ये तु कफस्थानं चेति द्वन्द्वं कुर्वते तेषां मतेन कफस्यामाशयस्य ज्वरस्थानस्य पूर्वं जयः कर्तव्य इत्यर्थः। स च षष्ठीतत्पुरुषेण स्थानस्यामाशयस्य स्थानी कफापेक्षया क्रियमाणे चिकित्सिते समुपलभ्यत एवेति नार्थविरोधः। इयं चैकदोषवर्द्धनादिरूपा सन्निपातचिकित्सा यद्यप्यविशुद्धा यदुक्तं—"प्रयोगः शमयेद्व्याधिं योन्यमन्यदुदीरयेत्। नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत्" इति, तथापि सन्निपातचिकित्सायां गत्यन्तरासंभवे सति अल्पदोषबहुगुणतया क्रियत इति ज्ञेयमन्ये तु वर्द्धच्छेदने इत्यस्माद्वर्द्धनेनेति साधयन्ति। वर्द्धनशब्देन च मूलच्छेदकारकं संशोधनमुच्यते। एकग्रहणेन च न युगपद्वातादीनां वस्त्यादिशोधनं कर्तव्यम् किंत्वेकेनेति दर्शयति। क्षपणेनोच्छ्रितस्येत्यनेन संशोधनविषये संशमनमुच्यते। शेषस्य तु व्याख्या पूर्ववत्। अनेन श्लोकेन त्रयोदशविधसन्निपातज्वरचिकित्सितमुक्तं भवति। क्षीणवृद्धदोषविकल्पकृत् षड्विधसन्निपाते तु यो ज्वरस्तत्र स्वमानक्षीणस्य ज्वरानारम्भकत्वेन। तेन न केवलं तत्र वृद्धस्य दोषद्वयस्य वैकस्य वृद्धस्य ज्वरारम्भकस्य वा चिकित्सा कर्तव्या। किंतु स्वमानक्षीणवर्द्धनमपि तत्र कर्तव्यं भवतीति स्वमानक्षीणद्वादशसन्निपातस्य ज्वरारम्भकत्वमेव॥२८१-२८३

**शोथः संजायते तेन कश्चिदेव प्रमुच्यते।**
**रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत्॥ २८४॥**
**प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः।**
**शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरः कस्य न शाम्यति॥२८५॥**

सन्निपातप्रस्तावादत्र त्रिशोथीयोक्तशोधनमनूद्य चिकित्सामाह—सन्निपातेत्यादि। कश्चिदेव प्रमुच्यते इत्यनेन दारुणत्वमस्य दर्शयति। "सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः। ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः"॥ किंवासाध्य एवैवंप्रायो भवति। कश्चित्कृच्छ्रसाध्य इति। ननु त्रिशोथीये ज्वरान्ते दुर्जयः शोफः संजायतेत्यनेनान्तकर्तृत्वमुक्तम्। इह तु कश्चिदेव प्रमुच्यत इति कथनं, न विरोधः। मैवं, तत्रापि दुर्जयो भवतीत्यर्थेन न विरोधः॥ २८४॥२८५

**शाखानुसारी रक्तस्य सोऽवसेकात्प्रशाम्यति।**
**वीसर्पेणाभिघातेन यश्च विस्फोटकैर्ज्वरः॥ २८६॥**
**तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत्।**
**दौर्बल्याद्देहधातूनां ज्वरो जीर्णोऽनुवर्तते॥ २८७॥**

शाखानुसारीत्यत्र यद्यपि शाखा रक्तादयो धातव इत्युक्तं तथापीह रक्तदूषको विशेषेण ज्वरो ज्ञेयः। रक्ताश्रये एव दोषे रक्तमोक्षस्य विशेषेण समुक्तत्वाद्रक्तमोक्षस्थानं च बाहुमध्यं ज्ञेयम्। यदुक्तमन्यत्र—"शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति। शाखानुसारि तस्याशु मुञ्चेद्बाह्वोः क्रमाच्छिरा" इति, शीतोष्णसेवावचनं तु सकलदोषानुरूपचिकित्साक्रमे सति रक्तदुष्ट्यैव प्रायो ज्वरानुबन्धो भवतीति दर्शयति॥ विकारान्तरानुबन्धज्वरचिकित्सामाह—विसर्पेणेत्यादि। कफोत्तरश्च पित्तोत्तरश्चेति कृत्वैकशेषात्कफपित्तोत्तरत्वं ज्ञेयम्। कफपित्तयोः प्रत्येकं मिलितयोरुत्तरत्वं ज्ञेयम्। तेनामूर्धगे पित्ते देयमेव सर्पिः। दौर्बल्यादित्यादौ देहग्रहणेनात्मादिषु व्यावृत्तिः रसादिषु धातुशब्दं प्रवर्तयति। रसादय एव हि विशेषेण देहधारकाः॥ २८६॥२८७॥

**बल्यैः सबृंहणैस्तस्मादाहारैस्तमुपाचरेत्।**
**कर्म साधारणं कुर्यात्तृतीयकचतुर्थके॥ २८८॥**
**आगन्तुरनुबन्धी हि प्रायशो विषमज्वरे।**
**वातप्रधानं सर्पिर्भिर्बस्तिभिः सानुवासनैः॥ २८९॥**
**स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम्।**
**विरेचनेन पयसा सर्पिषा संस्कृतेन च॥ २९०॥**
**विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत्।**
**वमनं पाचनं रूक्षमन्नपानं विलङ्घनम्॥ २९१॥**
**कषायोष्णं च विषमे ज्वरे शस्तं कफोत्तरे।**
**योगाः पराः प्रवक्ष्यन्ते विषमज्वरनाशनाः॥२९२॥**
**प्रयोक्तव्या मतिमता दोषादीन्प्रविभज्य ये।**
**सुरा समण्डा पानार्थे भक्ष्यार्थे चरणायुधाः॥ २९३॥**
**तित्तिरिश्च मयूरश्च प्रयोज्यो विषमज्वरे।**
**पिबेद्वा षट्पलं सर्पिरभयां वा प्रयोजयेत्॥ २९४॥**

बृंहणं पुष्टिजननम्॥ भूतानुबन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह—कर्मेत्यादि। कर्मसाधारणमिति भूतानुबन्धे दोषे च साधारणी चिकित्सा। दैवव्यपाश्रयाद्बलिमङ्गलादिरूपा युक्तिव्यपाश्रयाद्दोषानुरूपकषायपानादिरूपा। विषमज्वरशब्देन तृतीयचतुर्थकावेवाभिमतौ, न चतुर्थकविपर्ययौ॥ तिक्तशीतैरन्नपानैर्भेषजैश्चेति विज्ञेयम्। कषायोष्णमिति उष्णकषायाः। दोषादीन्प्रविभज्येति दोषकालदेशप्रकृत्यादीनपेक्ष्य यद्यत्र यौगिकं तत्तत्र कार्यमित्यर्थः॥ षट्पलमिति गुल्मे वक्ष्यमाणं॥ २८८—२९४॥

त्रिफलायाः कषायं वा गुडूच्या रसमेव वा ।
नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम्॥२९५॥
पिबेज्ज्वरागमे युक्त्या स्नेहस्वेदोपपादितः ।
सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत्पुनः ॥२९६॥
उपयुज्यान्नपानं वा प्रभूतं पुनरुल्लिखेत् ।
सान्नं मद्यं प्रभूतं वा पीत्वा स्वप्याज्ज्वरागमे ॥ २९७

नीलिनी नीलिका ॥ नीलिन्यादिविरेचनयोगो ज्वरागमनदिने विरेकात्कार्यकरो भवति प्रभावात् ॥ महती मात्राहोरात्रपरिणमनीया । अन्यत्र तु पट्पलिमात्रा महतीमात्रोक्ता । अन्यत्र तु, अन्येद्युष्को ग्रहग्राही तृतीयकचतुर्थकौ, इत्यारभ्य यावदनागते चिकित्सान्ते बलकालं विजानतेत्यन्तेन वेगदिनात्प्राग्या चिकित्सोक्ता सेह वमनादिव्यतिरिक्ता ज्ञेया । वमनादयस्त्विह प्रकोपदिने क्रियमाणाः प्रकुपितस्य दोषस्य कोष्ठमागतस्य सम्यक्सिद्धा भवन्तीति कृत्वा क्रियन्ते इति ज्ञेयम् ॥ २९५—२९७ ॥

आस्थापनं यापनं वा कारयेद्विषमज्वरे ।
पयसा वृषदंशस्य शकृद्वा तदहः पिबेत् ॥ २९८ ॥
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ।
पिप्पल्यास्त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः ॥२९९॥
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे ।
लशुनस्य सतैलस्य प्राग्भक्तमुपसेवनम् ॥ ३०० ॥
मेध्यानामुष्णवीर्याणामामिषाणां च भक्षणम् ।
हिङ्गुतुल्यानुवैयाघ्रीवसा नस्यं ससैन्धवा ॥ ३०१ ॥
पुराणसर्पिः सिंहस्य वसा तद्वत्ससैन्धवा ।
सैन्धवं पिप्पलीनां च तण्डुलाः समनःशिलाः॥३०२॥
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे ।
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ॥ ३०३ ॥
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ।
ये धूमा धूपनं यच्च नावनं चाञ्जनं च यत् ॥ ३०४ ॥
मनोविकारे व्याख्यातं कार्यं तद्विषमज्वरे ।
मणीनामौषधीनां च मङ्गल्यानां विषस्य च ॥ ३०५॥
धारणादगदानां च सेवनान्न भवेज्ज्वरः ।
सोमं सानुचरं देवं समातृगणमीश्वरम् ॥ ३०६ ॥

सान्नं मद्यं प्रभूतं पीत्वा पुनरुल्लिखेदिति योजना । तथा पीत्वा मद्यं सान्नं तदहः स्वपेदिति योजना ॥ यापना मुस्तादिका वस्तयस्त्रयो वक्ष्यमाणाः । वृषदंशो विडालः । वृषस्येत्यत्र शकृतः संबन्धः ॥ मेध्यानामिति मेदुराणां किंवा पवित्राणां । व्याघ्रीत्यत्र लिङ्गमेव प्रयोजकं वचनादुन्नीयते । सिंहव्याघ्र एव वदन्ति ॥ नेत्राञ्जनमिति मनोविकारेति उन्मादेऽपस्मारे । अगदानां च सेवनादिति योजना ॥ २९८—३०६ ॥

पूजयन्प्रयतः शीघ्रं मुच्यते विषमज्वरात् ।
विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ॥ ३०७ ॥
स्तुवन्नामसहस्रेण ज्वरान्सर्वानपोहति ।
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ॥ ३०८ ॥
गङ्गां मरुद्गणांश्चेष्ट्वा पूजयञ्जयति ज्वरान् ।
भक्त्या मातापितॄणां च गुरूणां पूजनेन च ॥३०९ ॥
ब्रह्मचर्येण तपसा सत्येन नियमेन च ।
जपहोमप्रदानेन वेदानां श्रवणेन च ॥ ३१० ॥
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च ।
ज्वरे रसस्थे वमनमुपवासं च कारयेत् ॥ ३११ ॥
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ।
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ॥ ३१२॥
अस्थिमज्जगते देया निरूहाः सानुवासनाः ।
शापाभिचाराद्भूतानामभिषङ्गाच्च यो ज्वरः ॥३१३॥

दैवव्यपाश्रयचिकित्सामाह—सोममिति सहोमयेति सोमं । सानुचरमिति नन्द्यादिगणयुक्तम् । समातृगणमिति समातृसमूहम् । प्रयतः पवित्रः । सहस्रमूर्धमिति सहस्रमूर्धा वेदप्रतिपादितं, नामसहस्रेणेत्यादि महाभारतोक्तनामसहस्रेण । इष्ट्वेति यज्ञेन ॥ ३०७-३१३ ॥

दैवव्यपाश्रयं तत्र सर्वमौषधमिष्यते ।
अभिघातज्वरो नश्येत्पानाभ्यङ्गेन सर्पिषः ॥ ३१४ ॥
रक्तावसेकैर्मद्यैश्च सात्म्यैर्मांसरसौदनैः ।
सानाहो मद्यसात्म्यानां मदिरारसभोजनैः ॥ ३१५॥
क्षतानां व्रणितानां च क्षतव्रणचिकित्सया ।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥ ३१६ ॥
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ।
काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैः शाम्यति ह्याशु ज्वरः क्रोधसमुत्थितः ३१७
कामात्क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः ।
याति ताभ्यामुभाभ्यां च भयशोकसमुत्थितः॥३१८॥
ज्वरकालं च वेगं च चिन्तयञ्ज्वर्यते तु यः ।
तस्येष्टैस्तु विचित्रैश्च विषयैर्नाशयेत्स्मृतिम् ॥३१९॥

शापादित्यादिनागन्तुज्वरचिकित्सामाह—नश्येदिति । प्रशाम्यतीत्यर्थः । सानाहेति अभिघातज्वर एव सानाहः । क्षतानामिति व्रणक्षतानां । क्षतचिकित्सया व्रणिनां ज्वरोऽपैतीत्यर्थः । अयं ह्युपद्रवरूपो ज्वरो मूलव्याधिचिकित्सयैव शाम्यतीति भावः । वायोः प्रशमनेनेति कामादिज्वरेषु वातानुबन्धादुत्पन्नवायुप्रशमनम् । सद्वाक्यैरिति शोभनैर्वचनैः । कामादीनां प्रतिद्वन्द्वेन चिकित्सामाह—कामादित्यादि । ज्वरकालचिन्ताजोऽपि ज्वरः कामादिमानसापचाराद्भवतीति तच्चिकित्सामाह—ज्वरकालेत्यादि ॥ ३१४-३१९

ज्वरप्रमोक्षे पुरुषः कूजन्वमति चेष्टते ।
श्वसन्विवर्णः स्विन्नाङ्गो वेपते लीयते मुहुः ॥३२०॥
प्रलपत्युष्णसर्वाङ्गः शीताङ्गश्च भवत्यपि ।
विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्ष्यते ॥ ३२१ ॥
सदोषशब्दं च शकृद्द्रवं स्रवति वेगवत् ।
लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः ॥३२२
बहुदोषस्य बलवान्प्रायेणाभिनवो ज्वरः ।
सत्क्रिया दोषपक्त्या चेद्विमुञ्चति सुदारुणम् ॥३२३
कृत्वा दोषवशाद्वेगं क्रमाद्दुपरमन्ति ये ।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥३२४॥

संप्रलोपधमभिधाय विमुच्यत इति प्रश्नस्योत्तरमाह—ज्वरप्रमोक्षेत्यादि । लीयत इति शीतांगश्च भवत्युष्णो वा । सदोषशब्दमिति सदोषशब्दम् । तानि च लक्षणानि सन्निपातज्वरे एव भवन्तीति ज्ञेयम् नान्यत्र । अत एव बहुदोषस्य बलिन इत्यादि ग्रन्थे केचित्पठन्ति । एतानि लक्षणानि ज्वरमोक्षकाले क्षीणेनापि दोषेण क्रियन्ते । यथा निर्वाप्यता प्रदीपेनालोको महान्क्रियते ॥ ३२०–३२४ ॥

विगतक्लमसंतापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वेन विद्यात्पुरुषमज्वरम् ॥ ३२५ ॥
सज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च ।
असात्म्यान्यन्नपानानि विरुद्धानि विवर्जयेत् ॥३२६॥
व्यवायमतिचेष्टाश्च स्नानमत्यशनानि च ।
तथा ज्वरः शमं याति प्रशान्तो जायते न च ॥३२७॥
व्यायामं च व्यवायं च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान्भवेत् ॥ ३२८ ॥

संप्रति प्रशान्तज्वरलक्षणस्योत्तरम् । विगत इत्यादि । प्रकृतिसत्त्वेनेति सहजसत्वेन ज्वरावशिष्टो रक्ष्यश्च यावत्कालं यतो यत इति प्रश्नोस्योत्तरं, सज्वरेत्यादि । ज्वरः प्रशाम्यति तथा प्रशान्तो जायते न चेत्यनेन यत इति प्रश्नस्य ज्वरमुक्तसेव्यहेतुप्रश्नरूपस्योत्तरं ज्ञेयं व्यवायमिति । चेष्टां चेत्यत्र व्यायामं कृत्वापि पुनर्व्यायामं च व्यवायं चेति पाठेन व्यवायस्यात्यन्तनिषेधोच्यते । अन्ये तु प्रमादपाठ एवायमित्याहुः । स्नानमूर्जस्करमपि प्रभावाज्ज्वरं प्रस्रानयति । यदुक्तमन्यत्र—"स्नानमाशु ज्वरं कुर्याज्ज्वरमुक्तस्य देहिनः । तस्मान्मुक्तज्वरे स्नानं विषवत्परिवर्जयेदिति" ॥ ३२५—३२८ ॥

असंजातबलो यस्तु ज्वरमुक्तो निषेवते ।
वर्ज्यमेतन्नवस्तस्य पुनरावर्तते ज्वरः ॥ ३२९ ॥
दुर्हृतेषु च दोषेषु यस्य वा विनिवर्तते ।
स्वल्पेनाप्यपचारेण तस्य व्यावर्तते पुनः ॥ ३३० ॥
चिरकालपरिक्लिष्टं दुर्बलं दीनचेतसम् ।
अचिरेणैव कालेन स हन्ति पुनरागतः ॥ ३३१ ॥
अथवापि परीपाकं धातुष्वेव क्रमान्मलाः ।
यान्ति ज्वरमकुर्वन्तस्ते तथाप्यपकुर्वते ॥ ३३२ ॥
दीनतां श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम् ।
कण्डूरुत्कोठपिडकाः कुर्वन्त्यग्निं च ते मृदुम् ॥३३३॥
एवमन्येऽपि च गदा व्यावर्तन्ते पुनर्गताः ।
अनिर्घातेन दोषाणामल्पैरप्यहितैर्नृणाम् ॥ ३३४ ॥
निवृत्तेऽपि ज्वरे तस्माद्यथावस्थं यथाबलम् ।
यथाप्राणं हरेद्दोषं प्रयोगैर्वा शमं नयेत् ॥ ३३५ ॥
मृदुभिः शोधनैः शुद्धिर्यापना बस्तयो हिताः ।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः ॥३३६॥
अभ्यङ्गोद्वर्तनस्नानधूपनाभ्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्तघृतानि च ॥ ३३७ ॥
गुर्वभिष्यन्द्यसात्म्यानां भोजनात्पुनरागते ।
लङ्घनोष्णोपचारादिः क्रमः कार्यश्च पूर्ववत् ॥३३८॥
किराततिक्तकं तिक्ता मुस्तं पर्पटकोऽमृता ।
घ्नन्ति पीतानि चाभ्यासात्पुनरावर्तकं ज्वरम् ॥३३९॥

अनन्तरमसंजातबलो यस्त्वित्यादि ग्रंथं काश्मीराः पठंति । तेन प्रकृत्यादिसूत्रेणास्य ग्रंथस्यानुगुणं प्रश्नग्रंथं पठंति ॥ ३२९—३३९ ॥

तस्यां तस्यामवस्थायां ज्वरितानां विचक्षणः ।
ज्वरक्रियाक्रमापेक्षी कुर्यात्तत्र चिकित्सितम् ॥३४०॥
रोगराट् सर्वभूतानामन्तकृद्दारुणो ज्वरः ।
तस्माद्विशेषतस्तस्य यतेत प्रशमे भिषक् ॥ ३४१ ॥"

उक्तानुक्तचिकित्सापरिग्रहार्थमाह—तस्यामित्यादि । ज्वरचिकित्सायां ज्वरं चिकित्सितुमाह—रोगराडित्यादि ॥ ३४० ॥ ३४१ ॥

इति । भवति चात्र ।
यथाक्रमं यथाप्रश्नमुक्तं ज्वरचिकित्सितम् ।
अत्रिजेनाग्निवेशाय भूतानां हितमिच्छता ॥ ३४२ ॥

इति चरकसंहितायां चिकित्सितस्थाने तृतीयोऽध्यायः समाप्तः ३

यथाक्रममिति संग्रहश्लोकः । भूतानां हितकाम्ययेत्यनेन सर्वभूतहितेयं चिकित्सेति दर्शयति ॥ ३४२ ॥

इति चक्रदत्तकृतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां ज्वरचिकित्सिताध्यायः तृतीयः समाप्तः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

**अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः ।**
**विहरन्तं जितात्मानं पञ्चगङ्गे पुनर्वसुम् ।**
**प्रणम्योवाच निर्मोहमग्निवेशोऽग्निवर्चसम् ॥ १ ॥**
**भगवन् रक्तपित्तस्य हेतुरुक्तः सलक्षणः ।**
**वक्तव्यं यत्परं तस्य वक्तुमर्हसि तद्गुरो ॥ २ ॥**

व्याध्युत्पत्तौ ज्वरसंतापाद्रक्तपित्तोत्पत्ते ज्वरचिकित्सितमनु-रक्तपित्तचिकित्सितमभिधीयते ॥ पञ्चगङ्गो देशविशेषः । वक्तव्यं यत्परमिति रक्तपित्तलक्षणातिरिक्तं चिकित्सितमित्यर्थः ॥ १ ॥ २ ॥

गुरुरुवाच ।

**"महागदं महावीर्यमग्निवच्छीघ्रकारि च ।**
**हेतुलक्षणविच्छीघ्रं रक्तपित्तमुपाचरेत् ॥ ३ ॥**
**तस्योष्णं तीक्ष्णमम्लं च कटूनि लवणानि च ।**
**घर्मश्चान्नविदाहश्च हेतुः पूर्वं निदर्शितः ॥ ४ ॥**

निदाने यद्यपि रक्तपित्तस्य हेतुलक्षणानि प्रतिपादितानि तथापीह चिकित्सापरिकरतया प्रकरणवशाद्धेतवः संक्षेपेण लक्षणानि च प्रायः प्रादुर्भावीनि कथ्यन्ते । घर्म आतपः । अन्नविदाहस्तु स्वरूपविदाहिद्रव्यभक्षणाद्भवति, तथा पित्तेनान्नवहस्रोतसो दुष्टत्वादविदाहिभोजनेनापि भवति । यदुक्तमन्यत्र—'स्रोतस्यन्नवहे पित्तं पक्तौ वायुस्तु तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते'ति ॥ ३ ॥ ४ ॥

**तैर्हेतुभिः समुद्दिष्टं पित्तं रक्तं प्रपद्यते ।**
**तद्योनित्वात्प्रपन्नं च वर्धते तत्प्रदूषयेत् ॥ ५ ॥**
**तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते ।**
**स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति ॥ ६ ॥**

हेतुभिरित्यादिना संप्राप्तिमाह—रक्तं प्रपद्यते रक्तं गच्छतीत्यर्थः । यद्यपि पित्तं स्वेदोरसोलसीकारुधिरमामाशयश्च पित्तस्थानानि तत्राप्यामाशयो विशेषेण पित्तस्थानमिति वचनेन स्वभावादेव रक्तं याति । तथापि रक्तपित्तसंप्राप्तौ प्रधानस्थानादामाशयरूपात्पित्तस्य रक्तगमनं ज्ञेयं । रक्तगमनं च पित्तस्य संप्राप्तिमहिम्ना भवति । तद्योनित्वादिति हेतुः । रक्तप्रयातस्य पित्तस्य वर्धनं ज्ञेयं । तेन तस्माद्रक्तयोनि पित्तं रक्तं प्राप्य वर्धत इत्यर्थः । उक्तं हि—'असृजः पित्तं कफ'मिति । तदिति । रक्तं प्रदूषयेद्द्रवो धातुरिति द्रवरूपोंऽशः । धातोर्धातोरिति मांसादेः, स्विद्यतः, प्रसिच्यतेऽतिक्षरति, तेन पित्तोष्मा स्विद्यमानो धातुभ्यश्च्युतेन धातुरूपेण धातुयुक्तं सपित्तं भूयोऽतितरां गच्छतीति योजना ॥ ५ ॥ ६ ॥

**संयोगाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः ।**
**रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥ ७ ॥**
**प्लीहानं च यकृच्चैव तदधिष्ठाय वर्तते ।**
**स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम् ॥८॥**

रक्तपित्तसंज्ञानिमित्तमाह—संयोगादित्यादि । रक्तस्य संयोगात्तथा रक्तस्य दूषणात्तथा रक्तस्य गंधवर्णयोः पित्ते सामान्याद्रक्तपित्तमिति वाक्यार्थः । रक्तपित्तस्य स्थानमाह—प्लीहानं चेत्यादि । वर्तत एत्यूर्ध्वमधश्च याति । वर्धत इति वा पाठः । कस्मात्प्लीहि वर्धत इत्याह—स्रोतांसीत्यादि । यस्माद्रक्तस्यापि यकृत्प्लीहानो एव मुख्यं स्थानं तेन रक्तसंयोगान्निष्पन्नस्य रक्तपित्तस्य तदेव स्थानमिति भावः ॥ ७ ॥ ८ ॥

**सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ।**
**श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ९ ॥**
**रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् ।**
**मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥ १० ॥**

तस्य दोषसंबन्धविशेषेण लिंगान्याह—सान्द्रमित्यादि । कषायवदाभा यस्य तत्कषायाभम् । पाटलमित्यर्थः । कृष्णस्य वस्त्रादेः ससारागन्धकादिभिर्मसृणीकृतस्य यो वर्णः स मेचकः । ननु पित्तमेव रक्तपित्तमित्युक्तं तत्कथं पैत्तिकं भवतीत्युच्यते । सामान्यसंप्राप्तौ पित्तमेव रक्तपित्तनिर्वर्तकं । यथा सर्वगुल्मेषु वायुः । यथा सर्वज्वरेषु पित्तमारम्भकं तदेव यदोल्वणेन कफेन स्वलक्षणकारिणा युक्तं रक्तपित्तकरं भवति, तदा सामान्यसंप्राप्तिसंप्राप्तं पित्तमुत्सृज्य श्लेष्मणैव स्वलक्षणकारिणा व्यपदिश्यते श्लैष्मिकं रक्तपित्तमिति । यथा श्लैष्मिके गुल्मे सामान्यसंप्राप्त्यागतं वातं परित्यज्य श्लेष्मणैव व्यपदेशो भवत्येवं वातिकेऽपि रक्तपित्ते व्याख्येयम् । यत्तु कफवातविरहितेन केवलेनैव पित्तेन बलवज्जनितं रक्तपित्तं पैत्तिकरक्तपित्तलक्षणं भवति तत्पैत्तिकं रक्तपित्तमित्युच्यते । लक्षणेनैव दोषव्यपदेशो भवति । तेन यद्दोषजनितं रक्तपित्तं भवति तत्तद्दोषजमिति व्यपदिश्यते । श्लैष्मिकादिरक्तपित्तापेक्षया पैत्तिके रक्तपित्तेऽत्युल्वणं पित्तं भवति । यतस्तत्रैव पित्तं स्वलक्षणानि करोति, नान्यत्र एवं व्यवस्थिते यदुच्यते केवलपैत्तिकस्य रक्तपित्तस्य मार्गो नास्ति । यतो वातरक्तमधो याति कफरक्तमूर्ध्वमिति तदपि न । यतः पैत्तिकस्याप्यूर्ध्वगमनमधोगमनं भवेत् । परं पैत्तिकं यदूर्ध्वं याति तन्मार्गमहिम्ना कफसंयुक्तं भवति । यच्चाधो याति तद्वातस्थानसंबंधात् वातानुगतं भवति । मार्गसंबंधानुगतश्च दोषस्वलक्षणकारकत्वान्नानुबंधः । तेन पैत्तिके रक्तपित्तत्वमपि एकदोषानुगं साध्यमित्यादिवचनेषु न गृह्यते । यतः स्वतंत्रो व्यक्तलिंगश्च दोषानुबन्ध्यः । तद्विपरीतस्तु अनुबंधस्तेन यथोक्तलक्षणकारिणा दोषेणानुबंधेन वातिकत्वादिव्यपदेशो रक्तपित्तेषु । न मार्गसंबंधानुगतेन लक्षण-

कारिणानुबंधरूपेणेति । अन्ये तु प्रदेशांतरचितेन पित्तेन यदोत्तरकालं रक्तपित्तस्य संबंधो भवति तदैव पैत्तिकं रक्तपित्तं भवतीति ब्रुवते ॥ ९—१० ॥

**संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सांनिपातिकम् ।**
**एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥ ११ ॥**
**यत्त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत् ।**
**व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ १२ ॥**

संप्रति साध्यासाध्यविभागमाह—एकेत्यादि । एकदोषानुगमित्युक्तैकदोषलक्षणयुक्तम् । एवं त्रिदोषमपि ज्ञेयम् । ननु मार्गसंबंधानुगतमपि दोषं प्रक्षिप्य द्विदोषत्वं त्रिदोषत्वं वा गणनीयम् । तथाहि केवलं रक्तपित्तं न स्यादेव । तथा संप्राप्तिसंप्राप्तं दोषं गृहीत्वा मार्गसंबंधानुगतेन वायुना कफेन वा योगाद्द्विदोषजत्वमेव सर्वदा स्यान्नैकदोषानुगं साध्यमिति यदुक्तं तत्स्यात् । तस्माद्यथोक्तमेव साधु । मंदाग्नेरतिवेगवदिति पृथगेवासाध्यलक्षणं । तथा व्याधिभिः क्षीणदेहस्येति पृथगेव ॥ ११ ॥ १२ ॥

**गतिरूर्ध्वमधश्चैव रक्तपित्तस्य दर्शिता ।**
**ऊर्ध्वाः सप्तविधद्वारा द्विद्वारा त्वधरा गतिः ॥ १३ ॥**
**सप्तच्छिद्राणि शिरसि द्वे चाधः साध्यमूर्ध्वगम् ।**
**याप्यं त्वधोगमं मार्गौ द्वावसाध्यं प्रपद्यते ॥ १४ ॥**
**यदा तु सर्वछिद्रेभ्यो रोमकूपेभ्य एव च ।**
**वर्तते तामसङ्ख्येयां गतिं तस्याहुरन्तिकीम् ॥ १५ ॥**
**यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्तते ।**
**तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च ॥ १६ ॥**
**संसृष्टं कफवाताभ्यां कण्ठे सज्जति चापि यत् ।**
**यच्चाप्युपद्रवैः सर्वैर्यथोक्तैः समभिद्रुतम् ॥ १७ ॥**
**हारिद्रनीलहरितताम्रैर्वर्णैरुपद्रुतम् ।**
**क्षीणस्य कासमानस्य यच्च तच्च न सिध्यति ॥ १८ ॥**
**यद्द्विदोषानुगं यद्वा शान्तं शान्तं प्रकुप्यति ।**
**मार्गान्मार्गं चरेद्यद्वा याप्यं पित्तमसृक् च तत् ॥ १९ ॥**

गतिकृतं साध्यादिभेदं दर्शयितुं गतिभेदमेवाह—गतिरूर्ध्वमित्यादि । गतिप्रकारांतरमप्यसाध्यमाह सप्तच्छिद्रेत्यादि । यच्चोभयाभ्यामित्यादिना कृष्णमतीव चेत्यंतेनासाध्यतालक्षणमाह—अत्र मार्गाभ्यामित्यनेन यौगपद्येन मार्गप्रवृत्तिर्व्यवस्थिता । किंतु प्रत्येकं मार्गद्वयप्रवृत्तस्य साध्यत्वं पूर्वमेवोक्तत्वात् । कुणपगन्धेनेति शवगन्धेन । कण्ठे सज्जतीति कण्ठाद्बहिर्न याति । यथोक्तैरिति निदानोक्तैस्तदाह उपद्रवाः खलु दौर्बल्यारोचकादयः स्वरभेदान्तोक्ताः । हारिद्रवर्णादिभिर्युक्तं क्षीणस्य कासिनो न सिध्यतीति सिद्धम् । यद्द्विदोषानुगमित्यनेनानुबंधरूपदोषद्वययोगाद्याप्यत्वमुच्यते यत्पूर्वं द्विदोषजं याप्यमित्युक्तं तदनुबंधिदोषद्वयजन्याभिप्रायेणेति न पौनरुक्त्यम् । मार्गान्मार्गं चरेदिति ऊर्ध्वगं मुखं परित्यज्य नासां यातीत्यादिरूपं ज्ञेयं । ऊर्ध्वगस्य त्वधोगमनेऽधोगत्वाद्याप्यत्वं भवति । अधोगं मार्गांतरमगच्छदपि स्वत एव याप्यम् । तस्मादूर्ध्वाधोमार्गपरिवर्तोऽत्र विवक्षितः ॥ १३—१९ ॥

**एकमार्गं बलवतो नातिवेगं नवोत्थितम् ।**
**रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥ २० ॥**

एकमार्गमित्यादिना साध्यलक्षणम्—एकमार्गमिति । सामान्यवचनेऽप्यूर्ध्वमार्ग एव पूर्वं लभ्यते । अधोगस्यैकमार्गगस्यापि याप्यत्वान्न ग्रहणं । सुखे काले इति हेमंते शिशिरे च । अत्र मार्गेण तथादोषेण तथालक्षणेन साध्यासाध्ययाप्यभेदाः पृथगुक्ताः । अत्र च साध्यलक्षणयाप्यलक्षणमेलके याप्यत्वमेव । याप्यासाध्यमेलकेऽसाध्यत्वमेव । यथा एकदोषं यदधोगतं तदेकदोषत्वात्साध्यम् । किन्त्वधोगतत्वाद्याप्यम् । यत्त्रिदोषमधोगतमधोगतत्वेन याप्यं किंतु त्रिदोषत्वादसाध्यमेवेति ज्ञेयम् । यदुक्तं—"नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यता'मिति । 'साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथेति' च ॥ २० ॥

**स्निग्धोष्णमुष्णरूक्षं च रक्तपित्तस्य कारणम् ।**
**अधोगस्योत्तरं प्रायः पूर्वं स्यादूर्ध्वगस्य तु ॥ २१ ॥**
**ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ।**
**द्विमार्गं कफवाताभ्यामुभाभ्यामनुबध्यते ॥ २२ ॥**
**अक्षीणबलमांसस्य रक्तपित्तं यदश्नतः ।**
**तद्दोषदुष्टमुत्क्लिष्टं नादौ स्तम्भनमर्हति ॥ २३ ॥**
**गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम् ।**
**गुल्मं प्लीहानमानाहं किलासं कृच्छ्रमूत्रताम् ॥ २४ ॥**
**कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम् ।**
**बुद्धीन्द्रियोपरोधं च कुर्यात्स्तम्भितमादितः ॥ २५ ॥**
**तस्मादुपेक्ष्यं बलिनो बलदोषविचारिणा ।**
**रक्तपित्तं प्रथमतः प्रवृद्धं सिद्धिमिच्छता ॥ २६ ॥**
**प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम् ।**
**वृद्धिं प्रयाति पित्तासृक्तस्माल्लङ्घनमादितः ॥ २७ ॥**

स्निग्धोष्णमित्यादिं निदानोक्तमपि प्रायिकत्वाद्विशेषोपदर्शनार्थं पुनरिहोच्यते । प्रायःशब्देन कदाचिद्रूक्षोष्णमपि उत्तरमूर्ध्वगस्य हेतुर्भवति । तथा स्निग्धोष्णमपि अधोगस्येति दर्शयति । एवं च निदानमार्गानियमे सति मार्गो दोषानुबंधत्वं निदानं प्रसमीक्ष्य च इत्यत्र मार्गादि पंच पठितुं यदि अधोगे इह रूक्षोष्णमेव परं हेतुः स्यात्तस्मादधोगेऽपि स्निग्धोष्णं कदाचित्कारणं भवति । स्निग्धकृतश्च कफोऽपि अधोगे भवति । एवमूर्ध्वगेऽपि चिंतनीयं । ऊर्ध्वगं कफसंसृष्टमित्यादावपि प्रायः शब्दसंबंधाद्व्यभिचारो ज्ञेयः । अश्नतेत्यनेन संतर्पणोत्थितं दर्शयति । उत्क्लिष्टमिति प्रवृत्त्युन्मुखम् दोषरूपमलाश्रितं । बलदोषविचारिणेति—यदैव बलहासं संपश्यति हीनदोषत्वं वा तदैव स्तंभनं कार्यम् ॥ २१—२७ ॥

मार्गदोषानुबन्धं च निदानं प्रसमीक्ष्य च।
लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्॥ २८॥
ह्रीवेरचन्दनोशीरमुस्तपर्पटकैः शृतम्।
केवलं शृतशीतं वा दद्यात्तोयं पिपासवे॥ २९॥
ऊर्ध्वगे तर्पणं पूर्वं पेयां पूर्वमधोगते।
कालसात्म्यानुबन्धज्ञो दद्यात्प्रकृतिकल्पवित्॥३०॥
जलं खर्जूरमृद्वीकामधूकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थे सशर्करम्॥ ३१॥
तर्पणं सघृतक्षौद्रं लाजाचूर्णैः प्रयोजयेत्।
ऊर्ध्वगं रक्तपित्तं तत्पीतं काले व्यपोहति॥ ३२॥
मन्दाग्नेरम्लसात्म्याय तत्साम्लमपि कल्पयेत्।
दाडिमामलकैर्विद्वादम्लार्थं चानुदापयेत्॥ ३३॥

संप्रति कृत्स्नं लंघनहेतुमाह—मार्गेत्यादि। तत्रोर्ध्वमार्गः, सामं पित्तं, कफश्च दोषः, स्निग्धोष्णं निदानं लंघनप्रयोजकम्। तद्व्यतिरिक्तं तु मार्गादि भोजनं, तर्पणं वा प्रयोजयेदिति। तर्पयतीति तर्पणमशनम्। यवागूतर्पणं वा ग्राह्यम्। ये तु सक्तुतर्पणं ग्राहयन्ति तेषां यवागूदानपक्षो न संगृहीतः स्यात्। केवलमिति ह्रीवेरादिरहितं। जलमेवैकं केवलमौषधद्वेषिणे पुरुषाय देयम्। पूर्वमिति पदेन पश्चाद्बलह्रासकारकं निषेधयति। कालो हेमंतादिः। अनुबंधो दोषानुबंधः। प्रकृतिः स्वाभाविकी द्रव्याणां गुरुलाघवादिकल्पना कल्पनं संस्कार इत्यर्थः। एतेन कालं दोषानुबंधं च ज्ञात्वा यस्य यत्स्वभावं द्रव्यं युक्तं भवति तेन तर्पणं यवागूर्वा कार्येत्यर्थः॥ खर्जूरादिना जलं षडंगविधानेनैव कर्तव्यम्। एतच्च जलमत्र मधुरमपि ऊर्ध्वगे कफसंसृष्टेऽपि रक्तपित्ते यौगिकं भवति रक्तपित्तव्याधिप्रत्यनीकत्वात्॥ २८—३३॥

शालिषष्टिकनीवारकोरदूषप्रशातिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम्॥ ३४॥
मुद्गा मसूराश्चणकाः समकुष्ठाढकीफलाः।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम्॥ ३५॥
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः।
किराततिक्तकं शाकं गण्डीरः सकठिल्लकः॥ ३६॥
कोविदारस्य पुष्पाणि काश्मर्यस्याथ शाल्मलेः।
अन्नपानविधौ शाकं यच्चान्यद्रक्तपित्तनुत्॥ ३७॥
शाकार्थे शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम्।
स्विन्नं वा सर्पिषा भृष्टं यूषवद्वा विपाचितम्॥ ३८॥
पारावतान्कपोतांश्च लावान्रक्ताक्षवर्तकान्।
शशान्कपिञ्जलानेणान्हरिणान्कालपुच्छकान्॥३९॥
रक्तपित्तहितान्विद्याद्रसांस्तेषां प्रयोजयेत्।
ईषदम्लाननम्लान्वा घृतभृष्टान्सशर्करान्॥ ४०॥
कफानुगे यूषशाकं दद्याद्वातानुगे रसम्।
रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते॥ ४१॥

पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियङ्गुका।
जले साध्यरसे तस्मिन्पेया स्याद्रक्तपित्तिनाम्॥४२॥
चन्दनोशीरलोध्राणां रसे तद्वत्सनागरे।
किराततिक्तकोशीरमुस्तानां तद्वदेव च॥ ४३॥
धातकीधन्वयासाम्बु बिल्वानां वा रसे शृताः।
मसूरपृश्निपर्ण्योर्वा स्थिरा मुद्गरसेन वा॥ ४४॥
रसे हरेणुकानां वा सघृते सबलारसे।
सिद्धाः पारावतादीनां रसे वा स्युः पृथक्पृथक्॥४५
इत्युक्ता रक्तपित्तघ्न्यः शीताः समधुशर्कराः।
यवाग्वः कल्पना चैषां कार्या मांसरसेष्वपि॥ ४६॥

शालीत्यादिनान्नमाह—नीवाराः प्रशातिका जलमध्ये प्रायो भवन्ति। प्रियंगुः कंगुः। कोरदूषस्य रक्तपित्तहेतुत्वं निष्पावमाषसूपादियुक्तस्यैव महिम्ना निदाने प्रोक्तम्। अयं तु कषायमधुरलघुत्वात्कोरदूषो रक्तपित्तहर एव इतीह पठ्यते। एवं गंडीरोऽपि निदाने स्वरसादियुक्त एव हेतुत्वेनोक्तः। स तु केवलो हितैव किंवा गंडीरो द्विविधः तत्र हरितादि पठितो यः स निदानं भवतीतरस्तु जलजैव शाकवर्गे पठितो यः सेह कफाधिकारे रक्तपित्ते ज्ञेयः॥ यूषवद्वा विपाचितमिति। यूषो दाडिमाद्यम्लद्रव्ययुक्तो विपाच्यते तथायमपीत्यर्थः। किंवा यूषयुक्तं यद्भवति तथा विपाचितमित्यर्थः। रक्ताक्षश्चोरकः। यूषश्च शाकं च इति यूषशाकं॥ ३४—४६॥

शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तिनाम्।
वातोल्बणे तित्तिरिः स्यादुदुम्बररसे शृतः॥ ४७॥
मयूरः प्लक्षनिर्यूहे न्यग्रोधस्य च कुक्कुटः।
रसे बिल्वोत्पलादीनां वर्तकक्रकरौ हितौ॥ ४८॥
तृष्यते तिक्तकैः सिद्धं तृष्णाघ्नं वा फलोदकम्।
सिद्धं विदारिगन्धाद्यैरथवा शृतशीतलम्॥ ४९॥
ज्ञात्वा दोषावनुबलौ बलमाहारमेव च।
जलं पिपासवे दद्याद्विसर्गादल्पशोऽपि वा॥ ५०॥

रक्तपित्ते यवागूनामित्यादि। आवश्यिकं भोजनमाह—शश इत्यादि। अत्र शशः कषायत्वाद्रक्तपित्तहरो भवत्येव। विबंधहरेण वास्तुकेन संस्कारत्वाद्विबंधहरो भवति। एवं तित्तिरिमयूरादयो यद्यप्युष्णत्वेन वातहरास्तथापि रक्तपित्ते न हिता उष्णत्वेन। ततश्च तेषां स्वरसादयो रक्तपित्तहराः साधने नियुज्यन्ते। तथा सति वातं रक्तपित्तं च घ्नन्ति। प्रतिनियतसाधकद्रव्योपन्यासात्संयोगमहिम्नैव कार्यकरो भवतीति ज्ञायते। न शशः कषायोऽपि विबंधं करोति। वास्तुकस्तु संस्कारत्वात् रक्तपित्तं कोपयेदित्यादि विपरीतफलसंभवो नास्ति संयोगशक्तेरचिन्त्यत्वात्। वास्तुकरसे एव शशस्य साधनप्रयोग इतरसाहचर्यात्। उक्तंहि—'विपचेत्तु वास्तुकरसे शशं विबंधे पुरीषस्ये'ति। इदानीं विदारिगंधाद्यैः शृतमुदकमिति आदिशब्देन शालिपर्ण्यादिपंचमूलशृतम्। संप्रति पानीय

दानविषयप्रकारमाह—ज्ञात्वेत्यादि । दोषाविति वातकफौ । पित्तं तु नायकमेव नानुवलम् । विसर्गादिति विरतेर्यावदिच्छमित्यर्थः । पक्षान्तरमाह—अल्पशो स्तोकं स्तोकमित्यर्थः। अत्र यदि वलवानग्निः शरीरं च महत्तदा विसर्गपर्यतं जलं देयं विपर्यये तु पानीयं नातिपथ्यं तेनाल्पशो देयम् ॥ ॥ ४७—५० ॥

निदानं रक्तपित्तस्य यत्किंचित्संप्रकाशितम् ।
जीवितारोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः ॥ ५१ ॥
इत्यन्नपानं निर्दिष्टं क्रमशो रक्तपित्तिषु ।
वक्ष्यते वहुदोषाणां कार्यं वलवतां च यत् ॥ ५२ ॥
अक्षीणवलमांसस्य यस्य संतर्पणोत्थितम् ।
वहुदोषं वलवतो रक्तपित्तं शरीरिणः ॥ ५३॥
काले संशोधनार्हस्य तद्धरेन्निरुपद्रवम् ।
विरेचनेनोर्ध्वभागमधोगं वमनेन च ॥ ५४ ॥
त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य वा ।
त्रायमाणागवाक्ष्योर्वा मूलमामलकानि वा ॥ ५५ ॥
विरेचनं प्रयुञ्जीत प्रभूतमधुशर्करम् ।
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः ॥ ५६ ॥
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ।
सशर्करं वा सलिलमिक्षूणां रस एव वा ॥ ५७ ॥
वत्सकस्य फलं मुस्तं मदनं मधुकं मधु ।
अधोवहे रक्तपित्ते वमनं परमुच्यते ॥ ५८ ॥
ऊर्ध्वगे शुद्धकोष्ठस्य तर्पणादिक्रमो हितः ।
अधोवहे यवाग्वादिर्न चेत्स्यान्मारुतो वली ॥ ५९ ॥

रक्तपित्तनिदानवर्जनार्थमाह—निदानमित्यादि ॥ वक्ष्यते इत्यादिना संशोधनानि प्रधानभेषजत्वादुच्यन्ते । अक्षीणवलमांस इत्यनेन सहजावलहानिरुच्यते । वलवतोरित्यनेन कालकृतं वलमुच्यते काले संशोधनयोग्येऽनत्युष्णशीतकाले । निरुपद्रवमिति क्रियाविशेषणम् ॥ किंवा रक्तपित्तविशेषणम् । विरेचनेनोर्ध्वभागमित्यादिना अनुलोमहरणं रक्तपित्ते निषेधयति । उक्तं च प्रतिमार्गहरणं रक्तपित्ते विधीयत इति । रक्तपित्ते विशेषत इत्यनेन रक्तपित्तादन्यत्र कल्कादयोऽपि एषां भवंति ॥ वमनकारको योगो वमनमुच्यते । मदनस्य दोषाद्यपेक्षया कर्षादिका मात्रा कल्पे वक्ष्यमाणा ज्ञेया ॥ सशर्करे सलिले तथेक्षुरसे मदनयोगादेव वमनकर्तृत्वं ज्ञेयम् । अधोगे इत्यत्रापि शुद्धकोष्ठस्यापि योज्यम् ॥ न चेत्स्यान्मारुतो वलीत्यनेन यदि मारुतो वली स्यात्तदा मांसोदनमेव देयम् । इति ज्वरोक्तं विधिं सूचयति ॥ ५१—५९ ॥

वलमांसपरिक्षीणं शोकभाराध्वकर्शितम् ।
ज्वलनादित्यसंतप्तमन्यैर्वा क्षीणमामयैः ॥ ६० ॥
गर्भिणीं स्थविरं वालं रूक्षाल्पप्रमिताशनम् ।
अवम्यमविरेच्यं वा यं पश्येद्रक्तपित्तिनम् ॥ ६१ ॥
शोषेण सानुवन्धं वा यस्य संशमनी क्रिया ।
शस्यते रक्तपित्तस्य परो या तु प्रवक्ष्यते ॥ ६२ ॥
आटरूपकमृद्वीकापथ्याक्वाथः सशर्करः ।
मधुमिश्रः श्वासकासरक्तपित्तनिवर्हणः ॥ ६३ ॥
आटरूपकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जने ।
विनीय लोध्रं क्षौद्रं च रक्तपित्तनुदं पिवेत् ॥ ६४ ॥
पद्मकं पद्मकिञ्जल्कं दूर्वां वास्तूकमुत्पलम् ।
नागपुष्पं च लोध्रं च तेनैव विधिना पिवेत् ॥ ६५॥
प्रपौण्डरीकं मधुकं मधु चाश्वशकृद्रसे ।
यवासभृङ्गरजसोर्मूलं वा गोशकृद्रसे ॥ ६६ ॥
विनीय रक्तपित्तघ्नं पेयं स्यात्तण्डुलाम्बुना ।
युक्तं वा मधुसर्पिर्भ्यां लिह्याद्वोऽश्वशकृद्रसम् ॥६७॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णानि मधुना लिह्यान्ना रक्तपित्तिकः ॥ ६८ ॥
शृङ्गाटकानां लाजानां मुस्तखर्जूरयोरपि ।
लिह्याचूर्णानि मधुना पद्मानां केशरस्य च ॥ ६९ ॥
धन्वजानामसृग्लिह्यान्मधुना मृगपक्षिणाम् ।
सक्षौद्रं ग्रथिते रक्ते लिह्यात्पारावतं शकृत् ॥ ७० ॥

संशमनविषयमाह—वलमांसेत्यादि। शोषेणेति राजयक्ष्मणा आटरूपकमृद्वीकेत्यादि कामलाहरं केचिदाहुः । आटरूपकनिर्यूह इत्यादि प्रियंग्वादीनां मिलितानां कल्केन कर्षः क्षौद्रस्य च कर्षो ग्राह्यः परिभाषावलात् । उक्तं चाग्निवेशेन–कर्ष चूर्णस्य कल्कस्य गुडिकानां च सर्वशः । शक्त्या क्षौद्रघृतादीनां क्वाथः स्नेहेषु चूर्णवदिति । अन्ये तु ब्रुवते चूर्णादीनां कर्षमानत्वं स्वतः प्रयोगे भवति । अत्र चाटरूपक्वाथः क्वाथपरिभाषया कार्यः कल्कश्च कल्कपरिभाषया कार्यः । एवंकृते भेषजभूयस्त्वं भवति । तेनाल्पमानस्य कर्षस्याकर्तव्यता ॥ तेनैव विधिनेति । आटरूपकनिर्यूहयुतं ॥ खदिरस्येत्यादौ वहुवचनांतत्वाद्रक्तपित्तनुदिति विशेषणं पुरुषस्य ज्ञेयं ॥ धन्वजानामिति जांगलानां ॥ ६०—७० ॥

उशीरकालीयकलोध्रपद्मक-
प्रियङ्गुकाकट्फलशङ्खगैरिकाः ।
पृथक्पृथक् चन्दनतुल्यभागिकाः
सशर्करास्तण्डुलधावनाप्लुताः ॥ ७१ ॥
रक्तं सपित्तं तमकं पिपासां
दाहं च पीताः शमयन्ति सद्यः ।
किराततिक्तं क्रमुकं समुस्तं
प्रपुण्डरीकं कमलोत्पले च ॥ ७२ ॥
ह्रीवेरमूलानि पटोलपत्रं
दुरालभा पर्पटका मृणालम् ।
धनञ्जयोदुम्वरवेतसत्वङ्
न्यग्रोधशालेययवासकत्वक् ॥ ७३ ॥

तुगालतावेतसतण्डुलीयं
सशारिवं मोचरसः समङ्गा।
पृथक् पृथक् चन्दनयोजितानि
तेनैव कल्पेन हितानि तत्र॥ ७४॥

उशीरादौ पृथक् पृथगिति वीप्सायां प्रत्येकमुशीराणां चंदनसमानां प्रयोगं दर्शयति। तथाचाष्टौ प्रयोगा भवंति। सशर्करा इति वचनेनात्र शर्करा समभागा एव देया। उक्तं ह्यग्निवेशे—मापिकं हिंगुसिंधूत्थलवणायास्तु शाणिकाः। सितोपला गुडक्षारा सामान्यैषां प्रकल्पना॥ यत्र शर्करायाः प्रक्षेप्यत्वं प्रक्षेपन्यायेनैव शर्करा देया॥ किरातादयोऽपि पृथग्पृथक् चंदनयोजितेत्यनेन समचंदनत्वं प्रत्येकं द्रव्यप्रयोगाणां॥ तेनैव कल्पेनेत्यनेन सशर्करत्वं तंडुलधावनाप्लुतत्वं चोच्यते। क्रमुकं पट्टिकालोध्रम् धनंजयोऽर्जुनः। प्रियंगुः पुन्नागेति। समंगा वरालक्रांता, लज्जालुरिति॥ ७१—७४॥

निशि स्थिता वा स्वरसीकृता वा
कल्कीकृता वा मृदिता शृता वा।
एते समस्ता गणशः पृथग्वा
रक्तं सपित्तं शमयन्ति योगाः॥ ७५॥
मुद्गाः सलाजाः सयवाः सकृष्णाः
सोशीरमुस्ताः सह चन्दनेन।
बलाजले पर्युषितः कषायो
रक्तं सपित्तं शमयत्युदीर्णम्॥ ७६॥

निशिस्थितेत्यनेन किराततिक्तादीनां कल्पनामाह—निशिस्थिता वेत्यनेन शीतकषायोच्यते। चूर्णग्रहणेन फांटग्रहणं क्रियते। यतः सुश्रुते पाठभेदाच्च पठ्यते। क्षीरं रसः कल्कमथो कषायः शृतश्च शीतं च तथैव चूर्णम्। कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टा इति। एवं चूर्णमेव फांटस्थाने ब्रुवते। तत्र तत्र फांटग्रहणादेव स पाठः सुश्रुते प्रमाणं तदा चूर्णशब्देन च कल्पांतरमेवोच्यते। इह तु फांटस्य श्रुतत्वात्कृष्णात्रेयादिति पठित एव फांटो ग्राह्यः। यदुक्तं—'क्षुण्णस्य सलिलात्तप्तात् मृदितादुद्धृतस्य च। यो रसानां विलस्तऽज्ञैः स फांटः संप्रकीर्तितः'। तेनेह द्रवः कल्क एव सचूर्णशब्देनोच्यते फांटम्॥ संप्रति व्यस्तसमस्तप्रयोगमेषामाह—गणश इति। उशीरादिगणश इति च तुगादि इति। अत्र च प्रत्येकप्रयोगे समचंदनत्वं श्रुतम्। तत्र पदान्तः प्रयोगो भवति। तथापि चंदनस्य भागो देय इति व्याख्यानयन्ति वृद्धाः॥ बलाजल इति। बलासाधितशीतजले पर्युषिताः कषाया इति शीतकषायाः॥ ७५॥ ७६॥

वैदूर्यमुक्तामणिगैरिकाणां
मृच्छङ्खहेमामलकोदकानाम्।
मधूदकस्येक्षुरसस्य चैव
पानाच्छमं गच्छति रक्तपित्तम्॥ ७७॥
उशीरपद्मोत्पलचन्दनानां
पक्वस्य लोष्ठस्य च यः प्रसादः।
सशर्करः क्षौद्रयुतः सुशीतो
रक्तातियोगप्रशमाय देयः॥ ७८॥
प्रियङ्गुकाचन्दनलोध्रशारिवा-
मधूकमुस्ताभयधातकीजलम्।
समृत्प्रसादं सह यष्टिकाम्बुना
सशर्करं रक्तनिवर्हणं परम्॥ ७९॥
कषाययोगैर्विविधैर्यथोक्तै-
र्दीप्तेऽनले श्लेष्मणि निर्जिते च।
यद्रक्तपित्तं प्रशमं न याति
तत्रानिलः स्यादनु तत्र कार्यम्॥ ८०॥

वैदूर्यादिसहस्थितं जलं वैदूर्यादिजलं ज्ञेयं। उशीरादीनां शीतकषाय इत्यादिना। प्रसाद इति प्रसन्नं जलं ग्राह्यम्। प्रियंग्वादावभयमुशीरं मृत्प्रसादमित्यत्र मृत्प्रसादोऽपि प्रायश आन्तरं ननु प्रक्षेप्यः॥ एवं यष्टिकाप्रयोगोऽपि॥ तत्रानिलः स्यादिति तत्र बलवान्वातः स्यात्॥ ७७—८०॥

छागं पयः स्यात्प्रथमं प्रयोगे
गव्यं शृतं पञ्चगुणे जले वा।
सशर्करं माक्षिकसंप्रयुक्तं
विदारिगन्धादिगणैः शृतं वा॥ ८१॥
द्राक्षाशृतं नागरकैः शृतं वा
बलाशृतं गोक्षुरकैः शृतं वा।
सजीवकं सर्षभकं ससर्पिः
पयः प्रयोज्यं सितया शृतं वा॥ ८२॥
शतावरीगोक्षुरकैः शृतं वा
शृतं पयो वाप्यथ पर्णिनीभिः।
रक्तं हिनस्त्याशु विशेषतस्तु
यन्मूत्रमार्गात्सरुजं प्रयाति॥ ८३॥
विशेषतो विट्प्रथमं प्रवृत्ते
पयो मतं मोचरसेन सिद्धम्।
वटावरोहैर्वटशृङ्गकैर्वा
ह्रीवेरनीलोत्पलनागरैर्वा॥ ८४॥
कषाययोगान्पयसा पुरा वा
पीत्वानुदद्यात्पयसानुशालीन्।
कषाययोगैरथवा विपक्व-
मेतैः पिबेत्सर्पिरतिस्रवेच्चे॥ ८५॥
वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्य।
प्रदाय कल्कं विपचेद्घृतं त-
त्सक्षौद्रमाश्वेव निहन्ति रक्तम्॥ ८६॥

इति वासाघृतम्।

प्रयोग इति अभ्यासे ॥ सजीवकमित्यादौ सजीवकं सर्षभकं शृतं यत् सर्पिः प्रयोज्यं तथा सितया च युक्तया पेयमिति ज्ञेयम् ॥ पर्णिन्यः पर्णिनीचतुष्टयम् । वटशुंगोऽविकसितनववटपल्लवान् कषाययोनाविति आटरूषकादीन्कल्कीकृतान् पयसा पीत्वेत्यर्थः । एतैरिति वक्ष्यमाणैः किंवा एतैरेव कषाययोगैर्यथायोग्यतया सर्पिः साधनीयम् । अतिस्रव इत्यतिमात्ररक्तपित्तप्लुतावार्द्रांया एव वासाया विधानानुकथनाद्वैगुण्यं । वासाकुसुमकल्के च केचित्पुष्पकल्कस्यातीवालाभो भवतीति कृत्वा प्रस्थे वृत्ते चतुष्पलं पुष्पकल्कं वदन्ति । सक्षौद्रमिति वचनेन घृतात्पादिकत्वं तंत्रान्तरप्रत्ययाज्ज्ञेयं उक्तं हि–स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करेति । अग्निवेशेऽप्युक्तम् । 'मात्रा क्षौद्रघृतानां च स्नेहक्वाथेषु पूर्ववदिति पादिकं ॥ ८१–८६ ॥

पलाशवृन्तस्य रसेन सिद्धं
तस्यैव कल्केन मधुद्रवेण ।
लिह्याद्घृतं वत्सककल्कसिद्धं
तद्वत्समङ्गोत्पललोध्रसिद्धम् ॥ ८७ ॥
स्याद्वायमाणाविधिरेष एव
सोदुम्बरे चैव पटोलपत्रे ।
सर्पींषि पित्तज्वरनाशनानि
सर्वाणि शस्तानि च रक्तपित्ते ॥ ८८ ॥

इति रक्तपित्तनाशकघृतवर्गः ।

मधुद्रवेणेति पादिकेन मधुना द्रवीकृतं त्रायमाणायारेवं सर्पिः पूर्ववदिति । उदुंबरपटोलपत्राभ्यां चापरं । पित्तज्वरनाशनानीत्यनेन सकलचिकित्सितवाक्यानि ज्वरहराणि ज्ञेयानि । घृतानि पित्तज्वरहन्तृतयेहोक्तानि न जीर्णज्वरहन्तृतया । अन्ये तु यान्येव जीर्णज्वरहराणि घृतानि तान्येव पित्तज्वरहराणि भवन्ति । तेषां तु रूक्षं तेज इति ज्वरविषयतया समानत्वेन निर्दिष्टपित्तविषयत्वम् । प्रदेशांतरेऽपि जले दशगुणे साध्यं त्रायमाणाचतुःपलमित्यादियावत्पित्तगुल्मं विसर्पांश्च पैत्तिकज्वरमिति । तथा त्रायंतिकामित्यादि यावद्वातरक्ते क्षतक्षीणे विसर्पे पैत्तिके ज्वरे इत्यादीनि सकलचिकित्सिते पित्तज्वरघृतानि कर्तव्यानि ॥ ८७ ॥ ८८ ॥

अभ्यङ्गयोगाः परिषेचनानि
सेकावगाहाः शयनानि वेश्म ।
शीतो विधिर्वस्तिविधानमग्र्यं
पित्तज्वरे यत्प्रशमाय दृष्टम् ॥ ८९ ॥
तद्रक्तपित्ते निखिलेन कार्यं
कालं च मात्रां च पुरा समीक्ष्य ।
सर्पिर्गुडा ये च हिताः क्षतेभ्य-
स्ते रक्तपित्तं शमयन्ति सद्यः ॥ ९० ॥
कफानुबन्धे रुधिरे सपित्ते
कण्ठागमे स्याद्ग्रथिते प्रयोगः ।
युक्तस्य युक्त्या मधुसर्पिषोश्च
क्षारस्य चैवोत्पलनालजस्य ॥ ९१ ॥
मृणालपद्मोत्पलकेशराणां
तथा पलाशस्य तथा प्रियङ्गोः ।
तथा मधूकस्य तथासनस्य
क्षाराः प्रयोज्या विधिनैव तेन ॥ ९२ ॥
शतावरीदाडिमतिन्तिडीकं
काकोलिमेदो मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत्क्षीरचतुर्गुणेन ॥ ९३ ॥
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं च घृतं निहन्यात् ।
यत्पञ्चमूलैरथ पञ्चभिर्वा
सिद्धं घृतं तच्च तदर्थकारि ॥ ९४ ॥

इति शतमूलादिघृतम् ।

अभ्यंगयोगादयः सर्वे ये दाहज्वरहरा उक्ताः पित्तज्वरप्रशमनकत्वेन तानादिशति । रुधिरे सपित्ते इति रक्तपित्ते । मधुसर्पिषोर्युक्तस्येति मात्रया युक्तस्य क्षारप्रयोगो, युक्तिशब्दो मात्रावचने कल्कार्थप्रतिपादकः यद्यपि क्षारस्तीक्ष्ण उक्तस्तथापि कंठस्थकफविलयार्थं उत्पलनालादिकृतगुणानुविधानात्क्षारो दीयत एव । एवं रक्तपित्तहरत्वप्रभावादुत्पलनालादिक्षारो भवत्येव येन तीक्ष्णानि द्रव्याणि परित्यज्योत्पलनालान्येव क्षारार्थमाह उक्तं च वार्तिके क्षीरस्वामिदत्तेन–'शीतं जहति भूयिष्ठं दग्धं सपदि सोमता'मिति चेदृष्टो हि भस्मन्यपि गुणोदय इति ॥ फलपूरको बीजपूरकः पंच पंचमूलानि रसायनोक्तानि । तदर्थकारीत्यनेनानंतरोक्तशतावर्यादिघृतानुकारि ॥ ८९—९४ ॥

"कषाययोगा य इहोपदिष्टा-
स्ते चावपीडे भिषजा प्रयोज्याः ।
घ्राणात्प्रवृत्तं रुधिरं सपित्तं
यदा भवेन्निःसृतदुष्टदोषम् ॥ ९५ ॥
रक्ते प्रदुष्टे ह्यवपीडबन्धे
दुष्टप्रतिश्यायशिरोविकाराः ।
रक्तं सपूयं कुणपश्च गन्धः
स्याद् घ्राणनाशः क्रमयश्च दुष्टाः ॥ ९६ ॥
नीलोत्पलं गैरिकशङ्खयुक्तं
सचन्दनं स्यात्तु सिताजलेन ।
नस्यं तथाम्रास्थिरसः समङ्गाः
सधातकीमोचरसः सलोध्रः ॥ ९७ ॥
द्राक्षारसस्येक्षुरसस्य नस्यं
क्षीरस्य दूर्वास्वरसस्य चैव ।
यवासमूलानि पलाण्डुमूलं
नस्यं तथा दाडिमपुष्पतोयम् ॥ ९८ ॥

घ्राणप्रवृत्तरक्तपित्तचिकित्सितमाह—कषाययोगा इत्याद्युशीरकालीयकेत्यादिना ये कषाययोगा उक्तास्ते घ्राणप्रवृत्ते रक्तपित्ते न देयाः । अवपीडश्च द्रव्यमापोथितं कृत्वा पीडयित्वा रसो दीयते यः स उच्यते । अयंच निःसृते रक्तदोषे सति देयः विपर्यये दोषमाह रक्त इत्यादि । सिताजलेनेति शर्कराजलेन नीलोत्पलादीनि अवपीडितः स्यात् ॥ ९५—९८ ॥

पियालतैलं मधुकं पयश्च
सिद्धं घृतं माहिषमाजकं वा ।
आम्रास्थिपूर्वैः पयसा च नस्यं
सशारिवैः स्यात्कमलोत्पलैश्च ॥ ९९ ॥
भद्रश्रियं लोहितचन्दनं च ।
प्रपौण्डरीकं कमलोत्पलं च ।
उशीरवाणीरजलं मृणालं
सहस्रवीर्यं मधुकं पयस्या ॥ १०० ॥
शालीक्षुमूलानि यवासगुन्द्रा-
मूलं नलानां कुशकाशयोश्च ।
कुचन्दनं शैवलमप्यनन्ता
कालानुसार्यातृणमूलमृद्धिः ॥ १०१ ॥
मूलानि पुष्पाणि च वारिजानां
प्रलेपनं पुष्करिणीमृदश्च ।
उदुम्बराश्वत्थमधूकलोध्राः
कषायवृक्षाः शिशिराश्च सर्वे ॥ १०२ ॥
प्रदेहकल्पे परिषेचने च
तथावगाहे घृततैलसिद्धौ ।
रक्तस्य पित्तस्य च शान्तिमिच्छ-
न्भद्रश्रियादीनि भिषक्प्रयुञ्ज्यात् ॥ १०३ ॥
धारागृहं भूमिगृहं च शीतं
वनं च रम्यं जलवातशीतम् ।
वैदूर्यमुक्तामणिभाजनानां
स्पर्शाश्च दाहे शिशिराम्बुशीताः ॥ १०४ ॥
पत्राणि पुष्पाणि च वारिजानां
क्षौमं च शीतं कदलीदलानि ।
प्रच्छादनार्थं शयनासनानां
पद्मोत्पलानां च दलाः प्रशस्ताः ॥ १०५ ॥
प्रियङ्गुकाचन्दनरूषितानां
स्पर्शाः प्रियाणां च वराङ्गनानाम् ।
दाहे प्रशस्ताः सजलाः सुशीताः
पद्मोत्पलानां च कलापवाताः ॥ १०६ ॥
सरिद्ध्रदानां हिमवद्दरीणां
चन्द्रोदयानां कमलाकराणाम् ।
मनोऽनुकूलाः शिशिराश्च सर्वाः
कथाः सरक्तं शमयन्ति पित्तम् ॥ १०७ ॥

पियालतैलमित्यादौ पियालतैलं मधुककल्केन पयसा द्रवेण साध्यम् । घृतं माहिषमित्यादावाम्रास्थिपूर्वैराम्रास्थिरसः । समार्गेत्यादियोगोक्तः शारिवाकमलोत्पलानि च कल्कः पयोद्रवः ज्ञेयम् । भद्रश्रियादीनि प्रलेपार्थमाह अमृणालमुशीरभेद एव सुगंधिः कंदलः कालानुसारि शीतलम् । शिशिराश्च सर्वा इत्यनेन लेपविधानं पद्मोत्पलानां च कलापवाता इति पद्मोत्पलसमूहजलकृतवाता इत्यर्थः ॥ ९९—१०७ ॥

भवति चात्र ।

हेतुं वृद्धिं संज्ञां स्थानं लिङ्गं पृथक् प्रदुष्टस्य ।
मार्गौ साध्यमसाध्यं याप्यं कार्यक्रमं चैव ॥ १०८ ॥
पानान्नमिष्टमेव च वर्ज्यं संशोधनं च शमनं च ।
गुरुरुक्तवान्यथावच्चिकित्सिते रक्तपित्तस्य ॥ १०९ ॥

इति चरकसंहितायां चिकित्सितस्थाने चतुर्थोऽध्यायः ॥

हेतुमित्यादिनाध्यायार्थसंग्रहः ॥ १०८ ॥ १०९ ॥

एतच्चाध्यायोक्तं व्यक्तमेव ॥ इति श्रीचक्रदत्तकृतायामायुर्वेददीपिकायां रक्तपित्तचिकित्सितं समाप्तम् ॥

---

## पञ्चमोऽध्यायः ।

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ।

सर्वप्रजानां पितृवच्छरण्यः
पुनर्वसुर्भूतभविष्यदीशः ।
चिकित्सितं गुल्मनिवर्हणार्थं
प्रोवाच सिद्धं वदतां वरिष्ठः ॥ १ ॥

निदानोक्तक्रमानुरोधाद्रक्तपित्तमनु गुल्मचिकित्सितं ब्रूते । सर्वप्रजानामित्यादिना गुरोः स्तुतिं धर्मजनकतया तथोत्तरग्रंथश्रद्धेयतया भूते भविष्ये चाव्याहतज्ञानतया प्रभुरेव भवतीति भूतभविष्यदीश इति सिद्धम् । साध्याव्यभिचारि सर्वमेव चिकित्सितं यद्यपि सिद्धमेव वक्तव्यं तथाप्यत्र प्रकरणे स्तुत्यर्थं सिद्धपदं ज्ञेयम् ॥ १ ॥

"विड्श्लेष्मपित्तातिपरिक्षयाद्वा
तैरेव वृद्धैः परिपीडितो वा ।
वेगैरुदीर्णैर्विहितैरधो वा
बाह्याभिघातैरतिपूरणैर्वा ॥ २ ॥
रूक्षान्नपानैरतिसेवनैर्वा
शोकेन मिथ्याप्रतिकर्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः
कोष्ठे प्रकोपं समुपैति वायुः ॥ ३ ॥

अत्र यद्यपि निदाने एव गुल्मस्य हेतुलक्षणान्युक्तानि तथापि प्रकरणवशात्पुनस्तान्यभिधीयन्ते । निदानोक्ताद्विशेषश्च

कश्चिदुच्यते निदाने वायोरेव कोपेन वृद्धैर्हेतुभिरावरणमुक्तम् ॥ अतिपीडनैर्वेत्यनेन तदेवोच्यते । तैरेवेतीह श्लेष्मपित्तैः मिथ्याप्रतिकर्म मिथ्याकृतं वमनादिकं पंच कर्म ॥ २ ॥ ३ ॥

कफं च पित्तं च स दूषयित्वा
प्रोद्धूय मार्गान्विनिबद्ध्य ताभ्याम् ।
हृत्प्लीहपार्श्वोदरबस्तिशूलं
करोत्यधो याति न बद्धमार्गः ॥ ४ ॥
पक्वाशये पित्तकफाशये वा
स्थितः स्वतन्त्रः परसंश्रयो वा ।
स्पर्शोपलभ्यः परिपिण्डितत्वा-
द्गुल्मो यथादोषमुपैति नाम ॥ ५ ॥

कफं च पित्तंचेत्यादिना संप्राप्तिमाह—इयंच शोणितजगुल्मव्यतिरिक्तानां चतुर्णां संप्राप्तिः । तत्र कफं च पित्तं चेति कदाचित्पित्तं कदाचित्कफः कदाचिद्रक्तमपि । तत्र कफजे स्वतंत्रो वृद्धः कफः । पित्तजे स्वहेतुवृद्धं स्वतंत्रं पित्तम् । सन्निपाते च यथोक्तगुणौ पित्तकफावुद्धूय गुल्मं वायुः करोति । वातगुल्मे स्वतंत्रःप्रकुपितो वायुः प्रकृतिस्थौ पित्तकफावुद्धूय गुल्मं करोतीति ज्ञेयम् । मार्गानित्यूर्ध्वाधस्तिर्यग्मार्गान् । अधो न यातीत्यत्र कारणं लुप्तनिर्दिष्टं तेनोर्ध्वं न याति तिर्यङ्न यातीति ज्ञेयम् । किंवा वायोः कोष्ठस्याधोगमनमेव प्रायो भवति । तेन तन्निषेधः साक्षादुक्तः । इतरमार्गगमननिषेधस्तु समानन्यायतया लभ्यते । आशये इति पक्वाशये । पित्ताशयामाशययोर्मार्गे एव स्वतंत्रः । स्वतंत्र इति वातगुल्मे, परसंश्रय इति पक्वाशये । पित्ताशयकफाशययोः कफजे पैत्तिके निचयगुल्मे च परसंश्रयो भवतीति ज्ञेयम् । परिपीडितत्वाद्गुल्म इत्यनेन यथाऽत्रापि लतासमूहादौ संघातेन गुल्म इति व्यपदिशंति । तथेहापि संघातेनावस्थानाद्गुल्मविधानं व्यपदिशेयुः । यथादोषमिति यथोल्बणं दोषं । नामेति च संज्ञा वातजोऽयं पित्तजोऽयमित्यादिका ॥ ४ ॥ ५ ॥

बस्तौ हि नाभ्यां हृदि पार्श्वयोर्वा
स्थानानि गुल्मस्य भवन्ति पञ्च ।
पञ्चात्मकस्य प्रभवन्तु तस्य
वक्ष्यामि लिङ्गानि चिकित्सितं च ॥ ६ ॥
रूक्षान्नपानं विषमातिमात्रं
विचेष्टितं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च
निरन्नता चानिलगुल्महेतुः ॥ ७ ॥
यः स्थानसंस्थानरुजां विकल्पं
विड्वातसङ्गं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरं च
हृत्कुक्षिपार्श्वांसशिरोरुजं च ॥ ८ ॥

करोति जीर्णेऽभ्यधिकं प्रकोपं
भुक्ते मृदुत्वं समुपैति यश्च ।
वातात्स गुल्मो न च तत्र रूक्षं
कषायतिक्तं कटु चोपशेते ॥ ९ ॥

गुल्मस्थानमाह—बस्तावित्यादि बस्त्यादिषु पंचस्थानान्येकरूपाणि भवंति । बस्त्यादीनीति पंचैव तथापि पंचग्रहणमधिकस्थाननिषेधार्थं । रौधिरस्यापि गुल्मस्य गर्भाशयस्यापि पार्श्वस्थितत्वेन पार्श्वे एवाशये भवति अन्येषां रौधिरव्यतिरिक्तानामेतत्पंचस्थानत्वं रौधिरस्य गर्भाशय एव विशिष्टं स्थानं भवति । संप्रति पृथक्त्वेन हेतुलिंगचिकित्साविधानं प्रतीयते पंचात्मकस्येत्यादि पंचात्मकस्य पंचस्वरूपस्य कारणानि पंच वातपित्तकफसन्निपातरूपाणि । प्रभवत्यस्मादिति प्रभवः कारणम् । तिष्ठत्यस्मिन्निति स्थानमाकृतिः । रुजा पीडा । एषां विकल्पः क्षणेऽन्यथात्वम् । शिशिरज्वरः शीतज्वरः । करोतीति पूर्वेण संबध्यते । जीर्णेऽभ्यधिकं प्रकोपं समुपैति यश्च न चोपशेते इति न सुखं जनयति ॥ ६—९ ॥

कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-
क्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो रुधिरं च दुष्टं
पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥ १० ॥
ज्वरः पिपासा वदनाङ्गरागः
शूलं महज्जीर्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः
स्पर्शासहः पैत्तिकगुल्मरूपम् ॥ ११ ॥
शीतं गुरु स्निग्धमचेष्टनं च
संपूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसंभवस्य
सर्वस्तु दुष्टो निचयात्मकस्य ॥ १२ ॥

कट्वम्लेत्यादिना पित्तगुल्ममाह—आमाभिघातशब्देनामाभिघातः पित्तजनको ज्ञेयः । रुधिरे च दुष्टमित्यनेन दुष्टाद्रुधिरान्मलभूतस्य पित्तस्य जन्म दर्शयति शीतमित्यादि । कफगुल्महेतुलक्षणकथनं । अत्रांतरे हेतुत्रयकथनावसाने दोषत्रयमेलकस्य कार्यमाह—सर्वस्तु दुष्टो निचयात्मकस्येति । निचयात्मकः सान्निपातिकः । सान्निपातिकश्च निचयरूपगुल्मजन्मतया व्यपदेशेन विकृतिविषमसमवायात्संयोगमहिम्ना च दर्शयति ॥ १०—१२ ॥

स्तैमित्यशीतज्वरगात्रसाद-
हृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं
गुल्मस्य रूपाणि कफात्मकस्य ॥ १३ ॥
निमित्तलिङ्गान्युपलभ्य गुल्मे
द्विदोषजे दोषबलाबलं च ।

व्यामिश्रलिङ्गानपरांस्तु गुल्मां-
स्त्रीनादिशेदौषधकल्पनार्थम्॥ १४॥

औत्पातिकं निचयगुल्ममभिधाय प्रकृतश्लेष्मगुल्मलक्षणमाह—स्तैमित्यमित्यादि। द्विदोषजगुल्महेतुलिंगातिदेशार्थमाह—निमित्तेत्यादिना। दोषबलाबलं चेत्यनेनैकोल्वणं द्वन्द्वं ग्राहयति। त्रीनिति च वातपित्तपित्तकफवातश्लेष्मजान्। औषधकल्पनार्थमित्यनेन विकृतिविषयसमवायत्वात्खविलक्षणकार्यकर्तृतया प्रत्येकदोषे गुल्मा अभिनिविष्टा एव प्रत्येकोक्तचिकित्सामेलकेन चिकित्स्या इत्येतन्मात्रोपदर्शनार्थम्। एतेनाष्टौदर्योक्तपंचसंख्याविरोधोऽपि न भवति। द्वान्द्विकगुल्मभेदस्याप्रयोजकत्वात्सन्निपातगुल्मे तु प्रत्येकदोषजलक्षणादतिरिक्तानि लक्षणानि तत्प्रभावश्चासाध्यत्वादिवक्तव्य एवेति युक्तं तस्य भेदेनोपादानम्। ज्वरे अपि द्वन्द्वज्वराणां पृथक् लक्षणयोगेन द्वान्द्विकत्वं युक्तमिति ज्ञेयम्॥ १३॥ १४॥

महारुजं दाहपरीतमश्मव-
द्घनोन्नतं शीघ्रविदाहि दारुणम्।
मनःशरीराग्निबलापहारिणं
त्रिदोषजं गुल्ममसाध्यमादिशेत्॥ १५॥
ऋतावनाहारतया भयेन
विरूक्षणैर्वेगविनिग्रहैश्च।
संस्तम्भनोल्लेखनयोनिदोषै-
र्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति॥ १६॥
यः स्पन्दते पिण्डित एव नाङ्गै-
श्चिरात्सशूलः समगर्भलिङ्गः।
स रौधिरः स्त्रीभव एव गुल्मो
मासे व्यतीते दशमे चिकित्स्यः॥ १७॥
क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम्।
प्रवक्ष्याम्यत ऊर्ध्वं च योगान्गुल्मनिबर्हणान्॥ १८॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम्।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत्॥ १९॥

महारुजमित्यादिना सन्निपातलक्षणान्याह—केचिदेतल्लक्षणव्यतिरिक्तलक्षणस्तु यः प्रत्येकदोषजोक्तसंसर्गमात्रलक्षणः प्रकृतिसमसमवायसन्निपातजन्यः स साध्य एव गुल्मो वदंति ऋतावित्यादिना शोणितगुल्ममाह—ऋताविति पुष्पदर्शनकाले स्त्रियमित्यनेन कुमारीमतिवृद्धां च निषेधयति। पिंडित एवेति गर्भस्त्वंगैः स्पंदते समगर्भलिंगः। स्तनपीनत्वादिसमानं गर्भलिंगं भवति। स्त्रीभव एवेति पुरुषस्य गुल्मोत्पत्तिं निषेधयति। मासे व्यतीते दशमे चिकित्स्य इति प्रभावाद्दशमासातिक्रम एवास्य सुखा चिकित्सा भवति। अर्वाक् चिकित्सायां तु शोणितातिस्रुतिगर्भाशयोपघातादि स्यादुच्यते गर्भसमानलिंगत्वेनास्य दशममासादूर्ध्वं रुधिरगुल्मावधारणं भवति। तेनार्वाक्चिकित्सात्र नोक्ता। अत्र दशमासातिक्रमेणापि गर्भावस्थानदर्शनात्। उक्तं हि—पुष्टो यदा वर्षगणैरपि स्यात्तथा संपिंडितस्य गर्भलक्षणाद्विरुद्धलक्षणमुक्तम्। तेन दशममासादर्वागपि शोणितगुल्मावधारणं भवत्येव। तस्मात्पूर्वोक्तमेव साधु॥ अत ऊर्ध्वमिति क्रियाक्रमाभिधानादुत्तरं स्नेहैरिति चतुर्भिरपि स्नेहैः॥ १५—१९॥

भोजनाभ्यञ्जनैः पानैर्निरूहैः सानुवासनैः।
स्निग्धस्य भिषजा स्वेदः कर्तव्यो गुल्मशान्तये॥२०॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम्।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति॥२१॥
स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे।
पक्वाशयगते वस्तिरुभयं जठराश्रये॥ २२॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्चसोः।
बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत्॥२३॥
पुनः पुनः स्नेहपानं निरूहाः सानुवासनाः।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा॥ २४॥
कफे वाते जितप्राये पित्तं शोणितमेव वा।
यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते॥२५॥
यथोल्बणस्य दोषस्य तत्र कार्यं भिषग्जितम्।

स्नेहोपयोगानाह—भोजन इत्यादि। विशेषेणेति वचनेन न सर्वं सर्वत्र। विशेषतस्तु स्नेहपानं नाभेरूर्ध्वं जाते गुल्मे। पक्वाशयगत इति पक्वाशयसंधिपार्श्वगते वस्तिरिति निरूहोऽनुवासनं च। जठराश्रय इति नाभिगते नाभिपार्श्वगतेऽपि चोभयमपि स्नेहवस्ती वातगुल्मेति वचनाद्वातप्रधानेषु गुल्मेष्वपि यथोक्तं कर्तव्यं दर्शयति। उक्तं हि गुल्मिनामनिलशांतिरुपायैरित्यादि॥ कफपित्तानुरक्षिणेति तथा स्नेहः कर्तव्यो यथा कफपित्ते न वर्धेते। वातचिकित्सया वृद्धकफपित्तरक्तचिकित्सामाह कफवातेत्यादि। जितप्राय इति वचनात्कफादिवृद्धौ वातो जितप्रायो न भवति। तथा वातचिकित्सा कार्या॥ यथोल्बणस्येति वातचिकित्सयोल्बणो दोषो भवति कफादिः तस्य चिकित्सा कर्तव्या॥ २०—२५॥

आदावन्ते च मध्ये च मारुतं परिरक्षता॥ २६॥
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत्तु तम्॥ २७॥
शूलानाहविबन्धेषु गुल्मे वातकफोल्बणे।
वर्तयो गुलिकाश्चूर्णं कफवातहरं मतम्॥ २८॥
पित्तं वा यदि संवृद्धं संतापं वातगुल्मिनः।
कुर्याद्विरेच्यः स भवेत्स्नेहनैरानुलोमिकैः॥ २९॥
गुल्मो यद्यनिलादीनां कृते सम्यग्भिषग्जिते।
न प्रशाम्यति रक्तेन संस्रुतेनोपशाम्यति॥ ३०॥
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम्।
रूक्षोष्णेन तु संभूते सर्पिः प्रशमनं परम्॥ ३१॥

**पित्तं वा पित्तगुल्मं वा ज्ञात्वा पक्वाशयस्थितम् ।**
**कालविन्निर्हरेत्सद्यः सतिक्तैः क्षीरवस्तिभिः ॥ ३२ ॥**
**पयसा वा सुखोष्णेन सतिक्तेन विरेचयेत् ।**
**भिषगग्निबलापेक्षी सर्पिषा तैल्वकेन वा ॥ ३३ ॥**
**तृष्णाज्वरपरीदाहशूलस्वेदाग्निमार्दवे ।**
**गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत् ॥ ३४ ॥**
**छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ।**

तस्यामपि चिकित्सायां वातवृद्धिर्यथा न भवति तथा कर्तव्यमिति दर्शयन्नाह—आदावित्यादि ॥ गुल्मे यद्यपि वमनं निषिद्धं तथाप्यवस्थायां वमनं तदपवादरूपं दर्शयन्नाह—वातगुल्म इत्यादि । वर्तय इति फलवर्तयः । आनुलोमिकैरितिवचनेन तीव्रविरेचनं वातकोपनं निषेधयति । रक्तस्रावणे गुल्मप्रदेशे एव शृंग्यादिना रक्तग्रहणं यकृत्साधारणत्वाद्गुल्मस्य बाहुशिराव्यधो न कर्तव्यः । रक्ताश्रयत्वादेव गुल्मस्येतरचिकित्साप्रशमो ज्ञेयः । रक्ताधिष्ठानत्वं च गुल्मपाकप्रस्तावदर्शनार्थम् । रूक्षोष्णेन तु संभूते पैत्तिकेति योज्यम् । रूक्षोष्णतयैव पित्तं भवति । तैल्वकं सर्पिरुदरे वक्तव्यम् । तृष्णाज्वरेत्यादिना गुल्मविदाहोपक्रमे रक्तावसेचनं कृतं चेच्छिन्नमूला विदह्यन्ते इतिच्छिन्नशोणिता इत्यर्थः ॥ २६—३४ ॥

**रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक् ॥ ३५**
**हृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः ।**
**समाश्वस्तं च शेषार्तिं सर्पिषा पुनराचरेत् ॥ ३६ ॥**
**रक्तपित्तातिवृद्धत्वात्क्रियामनुपलभ्य च ।**
**यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम् ॥ ३७ ॥**
**गुरुः कठिनसंस्थानो गूढमांसोत्तराश्रयः ।**
**अविवर्णः स्थिरश्चैव ह्यपक्वो गुल्म उच्यते ॥ ३८ ॥**

छिन्नमूलत्वमेव स्फुरयति—रक्तं हीत्यादि । तच्च नास्तीति शोणितमवसेकान्नास्तीत्यर्थः । तस्य रक्तस्याभावाद्रुगपि नास्ति । हृतदोषमिति । शोणितावसेकेन हृतदोषं, परिम्लानमिति क्षीणक्रियम् । क्रियामिति शोणितावसेकरूपां क्रियाम् । विदह्यते पच्यते । गुरुः कठिनेत्यादिनापक्वपच्यमानपक्वगुल्मलक्षणमाह—गूढमांसश्चासौ आंतराश्रयश्चेति गूढमांसांतराश्रय इति । स्थिर इति उन्नतः ॥ ३५—३८ ॥

**दाहशूलाग्निसंक्षोभस्वप्ननाशारतिज्वरैः ।**
**विदह्यमानं जानीयाद्गुल्मं समुपनाहयेत् ॥ ३९ ॥**
**विदाहलक्षणे गुल्मे बहिस्तुङ्गे समुन्नते ।**
**श्यावे सरक्तपर्यन्ते संस्पर्शे वस्तिसंनिभे ॥ ४० ॥**
**निपीडितोन्नते स्तब्धे सुप्ते तत्पार्श्वपीडनात् ।**
**तत्रैव पिण्डिते शूले संपक्वं गुल्ममादिशेत् ॥ ४१ ॥**
**तत्र धान्वन्तरीयाणामधिकारः क्रियाविधौ ।**

तमुपनाहयेदिति । उष्णद्रव्यव्यक्तेन लेपं पाचनार्थं दद्यादित्यर्थः । विदाहलक्षणे त्वन्येति दाहादिष्वन्येष्वित्यर्थः । बहिस्तुङ्गेति बाह्यत उन्नते । समुन्नतेति समत्वेनोन्नते न निम्नोच्चविभागेन । निपीडितानंतरमुन्नते निपीडितोन्नते । पीडनात्स्तब्धे इति वर्तुले सुप्ते इति मंदवेदनेइत्यर्थः । धान्वन्तरीयाणामिति धन्वंतरितंत्राध्यायिनां शल्यविदामित्यर्थः ॥ ३९—४१ ॥

**वैद्यानां कृतयोगानां व्यधशोधनरोपणे ॥ ४२ ॥**
**अन्तर्भागस्य चाप्येतत्पच्यमानस्य लक्षणम् ।**
**हृत्क्रोडशूनतान्तःस्थे बहिःस्थे पार्श्वनिर्गतिः ॥ ४३ ॥**
**पक्वः स्रोतांसि संक्लिद्य व्रजत्यूर्ध्वमधोऽपि वा ।**
**स्वयंप्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ॥ ४४ ॥**

कृताः शस्त्रकर्माणि यैस्ते कृतयोगाः गुल्मस्य च पाकः सुश्रुते निषिद्धः "सयस्मादात्मनिचयं गच्छत्यप्स्विव बुद्बुदः । अन्तःसरति यस्माच्च न पाकमुपयात्यतः" इति । तथापीह कृतवास्तुपरिग्रहस्य गुल्मस्य पाक उच्यते । यस्तु अकृतवास्तुपरिग्रहः स न पच्यत इति इहापि अनुगतम् । यस्त्वकृतवास्तुपरिग्रहतया पच्यत इति उच्यते इति विद्रधित्वेन पाको जायत इति संज्ञामात्रेण विसंवादः । अंतरमार्गस्येति कोष्ठमध्यस्थितस्य । यद्यपि सर्व एव गुल्मकोष्ठस्थस्तथापीह बहिरुन्नतश्चितो न भवति । स इह तत्स्थोऽभिप्रेतः ॥ हृत्क्रोडशूनतान्तस्थे इति अन्तस्थपाके हृत्क्रोडस्य शूनता भवति । बहिस्थे पार्श्वनिर्गतिः पार्श्वनिर्गतिर्गुल्म एव दृश्यते । केचित्तु श्लोकमेनं न पठंति । व्रजत्यूर्ध्वमिति सशब्देनान्तःस्थेनाभिप्रेतः । उपेक्ष्येत हिताशनैरिति हिताशनस्तिष्ठेत् न किंचिद्भेषजं कुर्यात् ॥ ४२—४४ ॥

**दशाहं द्वादशाहं वा रक्षन्भिषगुपद्रवान् ।**
**अत ऊर्ध्वं मतं पानं सर्पिषः सविशोधनम् ॥ ४५ ॥**
**शुद्धं सतिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते ।**
**शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके ॥ ४६ ॥**
**अवम्यस्याल्पकायाग्नेः कुर्याल्लङ्घनमादितः ।**
**मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।**
**सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥ ४७ ॥**
**उष्णैरेवोपचार्यस्य कृते वमनलङ्घने ।**
**योज्यश्चाहारसंसर्गो भेषजैः कटुतिक्तकैः ॥ ४८ ॥**
**सानाहं सविबन्धं च गुल्मं कठिनमुन्नतम् ।**
**दृष्ट्वादौ स्वेदयेद्युक्त्या स्विन्नं च विनयेद्भिषक् ॥ ४९ ॥**
**लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ।**
**कफगुल्मे पिबेत्काले सक्षारकटुकं घृतम् ॥ ५० ॥**
**स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः ।**
**सस्नेहैर्वस्तिभिर्वाथ शोधयेद्दशमूलकैः ॥ ५१ ॥**
**मन्दाग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम् ।**
**गुलिकाश्चूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम् ५२**
**कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ।**
**जयेत्कफकृतं गुल्मं क्षारारिष्टाग्निकर्मभिः ॥ ५३ ॥**

**दोषः प्रकृतिर्गुल्मे तु योगं बुद्ध्वा कफोल्बणे ।**
**बलदोषप्रमाणज्ञः क्षारं गुल्मे प्रयोजयेत् ॥ ५४ ॥**

रक्षन्नुपद्रवानित्युपद्रवेभ्यो ज्वरादिभ्यो रक्षन्नित्यर्थः । सविशोधनमिति विशेषेण सर्पिःपानम् । तिक्तकमिति तिक्तद्रव्यसाधितम् । शीतलैरित्यादिना कफगुल्ममनुत्क्षल्य चिकित्साक्रममाह—सक्षारकटुकमिति । अपसृतमिति चलितम् । दाशमूलकमिति दशमूलकृतवस्तयो वस्तिसूत्रीये वक्तव्याः । गूढे इति संमूर्च्छिते आवृते इति यावत् । गुडिकादय इति वक्तव्या गुडिकाः । क्षारारिष्टाग्निकर्मभिरित्यत्र क्षारस्यात्र शस्ततया शल्यतन्त्रे एव तावदभिधानमत्रापिच ग्रहण्याध्याये क्षारा वक्तव्याः । अग्निकर्मात्रापि गुल्मस्थाने वक्तव्यम् । पराधिकारे विस्तारानभिधानात् । क्षारस्य महात्ययत्वेन दोषादिज्ञानपूर्विकामन्तरान्तरप्रवृत्तिमाह—दोषेत्यादि । तत्र क्षारानुगुणे दोषः कफः प्रकृतिः श्लैष्मिकी । गुल्मश्च स्थिरः ऋतुर्हेमन्तः शिशिरो वा ॥ ४५—५४ ॥

**एकान्तरं द्व्यन्तरं वा त्र्यहं विश्रम्य वा पुनः ।**
**शरीरबलदोषाणां वृद्धिक्षपणकोविदः ॥ ५५ ॥**
**श्लेष्माणं मधुरं स्निग्धं मांसक्षीरघृताशिनः ।**
**भित्त्वा भित्त्वाशयान्क्षारः क्षरत्वात्क्षारयत्यधः॥५६॥**
**मन्देऽग्नावरुचौ सात्म्ये मद्ये सस्नेहमश्नताम् ।**
**प्रयोज्या मार्गशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम्॥५७॥**
**लङ्घनोल्लेखनैः स्वेदैः सर्पिष्पानैर्विरेचनैः ।**
**वस्तिभिर्गुलिकाचूर्णक्षारारिष्टगणैरपि ॥ ५८ ॥**
**श्लैष्मिकः कृतमूलत्वाद्यस्य गुल्मो न शाम्यति ।**
**तस्य दाहो हृते रक्ते शरलोहादिभिर्मतः ॥ ५९ ॥**
**औष्ण्यात्तैक्ष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ ।**
**तयोः शमाच्च संघातो गुल्मस्य विनिवर्तते ॥ ६० ॥**

एकांतरेत्यादि । दोषादिषु क्षारानुगुणेष्वेकांतरं विश्रम्य स्नेहादिगुणेषु द्व्यन्तरं गुणेषु त्र्यहं विश्रम्य 'शरीरबलदोषाणां वृद्धिक्षपणकोविद' इति । शरीरबलवृद्धौ दोषस्य च लक्षणपंडितः । मांसक्षीरघृताशिन इत्यनेन मांसादिभोजनेन क्षारप्रयोगे शरीरबलरक्षा कर्तव्येति दर्शयति । शरलोहादिभिरित्यनेन रूक्षदाहं दर्शयति । दाहश्च गुल्मदेशे एव कर्तव्यः ॥ ५५—६० ॥

**दाहे धान्वन्तरीयाणामत्रापि भिषजां बलम् ।**
**क्षारप्रयोगे भिषजां क्षारतन्त्रविदां बलम् ।**
**व्यामिश्रदोषैर्व्यामिश्र एष एव क्रियाक्रमः ॥ ६१ ॥**
**सिद्धानतः प्रवक्ष्यामि योगान्गुल्मनिवर्हणान् ।**
**त्र्यूषणं त्रिफला धान्यं विडङ्गाचव्यचित्रकैः ।**
**कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ६२ ॥**
**इति त्र्यूषणादिघृतम् ।**

दाहक्षारयोः पराधिकारत्वेन परबलस्याभिप्रेयत्वं तेन तत्परत्वेनैव दाहक्षारयोगमाह—दाहइत्यादि । क्षारतंत्रस्याष्टांगवेदपृथगभिधानाच्छल्यतंत्रमेवानुशस्त्रक्षारविधायकं क्षारतंत्रमुच्यते । व्यामिश्रदोष इति वातपित्तादनुबंधजो व्यामिश्रः । संप्रतिसिद्धान्योगानाह—सिद्धानिति वक्ष्यमाणयोगस्तुतिः शिष्यप्रवर्तका । त्र्यूषणार्थे द्रवान्तरानभिधानात् । क्षीरमेव चतुर्गुणं भवति ॥ ६१ ॥ ६२ ॥

**एत एव च कल्काः स्युः कषायः पञ्चमूलिकः ।**
**द्विपञ्चमूलिको वाथ तद्घृतं गुल्मनुत्परम् ॥ ६३ ॥**
**इति त्र्यूषणादिघृतमपरम् ।**

एते एवेति त्र्यूषण इत्युक्ताः ॥ ६३ ॥

**षट्पलं वा पिबेत्सर्पिर्यदुक्तं राजयक्ष्मणि ।**
**प्रसन्नया वा क्षीरार्थं सुरया दाडिमेन वा ।**
**दध्नः सरेण वा कार्यं घृतं मारुतगुल्मिनाम् ॥ ६४ ॥**
**इति गुल्मषट्पलघृतम् ।**

प्रसन्ना मद्यविशेषः । क्षीरोर्थं इति क्षीरस्थाने प्रसन्ना देया एवं स्वरसादिभिरपि क्षीरार्थो व्याख्येयः ॥ ६४ ॥

**हिङ्गुसौवर्चलाजाजीविडदाडिमदीप्यकैः ।**
**पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥ ६५ ॥**
**शटीवचाजगन्धैलासुरसैश्च विपाचितम् ।**
**शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ ६६ ॥**
**इति हिङ्गुसौवर्चलाद्यं घृतम् ।**

हिंग्वाद्यैरिति हिंग्वादीनां कल्कः दधिचतुर्गुणं द्रवम् ॥ ६५—६६ ॥

**हपुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ।**
**साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम् ॥ ६७ ॥**
**मातुलुङ्गदधिक्षीरकोलमूलकदाडिमैः ।**
**रसैस्तद्वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥ ६८ ॥**
**योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ।**
**वस्तिहृत्पार्श्वशूलं च घृतमेतद्व्यपोहति ॥ ६९ ॥**
**इति हपुषाद्यं घृतम् ।**

हपुषादिकल्कः मातुलुंगादीनि पंचद्रवाणि स्नेहसमानि ॥ "पंचप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमानिति वचनात् दाडिमस्यापि रसांतरसान्निध्याद्रव एव ग्राह्यः । उक्तं हि विश्वामित्रे—"पृथ्वीका जीरकव्योषहपुषाजाजिसैंधवैः । सचव्यपिप्पलीमूलैर्वह्निदीप्यकसंयुतैः । मूलदाडिमकोलानां रसे दध्नि पयस्यपि । सिद्धं घृतं जयेद्गुल्मं वह्निसंदीपनं परमि'ति ॥ ६७—६९ ॥

**पिप्पल्यः पिचुरध्यर्धो दाडिमाद्द्विपलं पलम् ।**
**धान्यात्पञ्च घृताच्छुण्ठ्याः कर्षं क्षीरं चतुर्गुणम्७०**
**सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति ।**
**योनिशूलं शिरःशूलमर्शांसि विषमज्वरम् ॥ ७१ ॥**
**इति पिप्पल्याद्यं घृतम् ।**

पिचुः कर्षः। तेनाध्यर्धपिचुरिति सार्धः। अत्र च घृते कल्कभूयस्त्वं भवन्नपि कल्पनीयम् वचनादेव। उक्तं हि न्यायविद्भिः। "निर्देशः श्रूयते तत्र द्रव्याणां यत्र यादृशः। तस्मिन्स संविधातव्यः शब्दाभावे प्रसिद्धितः"। अत्र पुनर्घृतं सिद्धमिति। पिप्पल्यादीनां लेहत्वेन प्रयोगनिरासार्थम्। घृतसाधनार्थमुक्तम् ॥ ७०—७१ ॥

घृतानामौपधगणा य एते परिकीर्तिताः।
ते चूर्णयोगा वर्त्यस्ताः कपायास्ते च गुल्मिनाम्७२
कोलदाडिमघर्माम्बुसुरामण्डाम्लकाञ्जिकैः।
शूलानाहनुदः पेया बीजपूररसेन वा ॥ ७३
चूर्णानि मातुलुङ्गस्य भावितस्य रसेन वा।
कुर्याद्वर्तीः सगुटिका गुल्मानाहार्तिशान्तये ॥७४॥
हिङ्गु त्रिकटुकां पाठां हपुपामभयां शटीम्।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥ ७५ ॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम्।
द्वौ क्षारौ लवणे द्वे च चव्यं चैकत्र योजयेत् ॥७६॥

भेपजानां चूर्णादिष्वपि प्रयोगमाह—घृतानामित्यादि। वर्तिरिति फलवर्तिः। उक्तद्रव्याणां चूर्णत्वे कृतेऽनुपानार्थं चूर्णद्रव्यमाह—चूर्णमित्यादि। कपायकरणपक्षे विशेषविधानानुक्तेः सामान्यविधिनैव कपायकरणं ज्ञेयम्। हिंग्वादौ अजमोदादीनि ख्यातानि द्वौ क्षारौ सर्जिकायावशूकजौ ७२–७६

चूर्णमेतत्प्रयोक्तव्यमन्नपानेष्वनत्ययम्।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥७७॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके।
आनाहे मूत्रकृच्छ्रे वा शूले च गुदयोनिजे ॥ ७८ ॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ।
उरोविबन्धे कासे च हिक्काश्वासे गलग्रहे ॥ ७९ ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा।
बहुशो गुलिकाः कार्याः कार्मुकाः स्युस्ततोऽधिकम्
इति हिङ्ग्वादिचूर्णं गुडिका च।

प्राग्भक्तमिति भोजनस्य प्राक्। वयःपरिमाणेन वा नवा भोजनात्प्रत्यासन्नं भवति। बहुश इति सप्ताहं भावनायां सप्ताहं भावनेति वचनात्। कार्मुका इति कर्मणि समर्थाः ॥ ७७—८० ॥

मातुलुङ्गरसो हिङ्गु दाडिमं बिडसैन्धवे।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ८१ ॥
शटीपुष्करहिङ्ग्वम्लवेतसक्षारचित्रकान्।
धान्यकं च यमानीं च विडङ्गं सैन्धवं वचाम् ८२
सचव्यपिप्पलीमूलमजगन्धां सदाडिमाम्।
अजाजीं चाजमोदां च चूर्णं कृत्वा प्रयोजयेत् ८३
रसेन मातुलुङ्गस्य मधुयुक्तेन वा पुनः।
भावितं गुडिकां कृत्वा सुपिष्टां कोलसंमिताम् ८४
गुल्मं प्लीहानमानाहं श्वासं कासमरोचकम्।
हिक्कां हृद्रोगमर्शांसि विविधाञ्छिरसो रुजान् ८५
पाण्ड्वामयं कफोत्क्लेशं सर्वजां च प्रवाहिकाम्।
पार्श्वहृद्वस्तिशूलं च गुटिकैपा व्यपोहति ॥ ८६ ॥
नागरार्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुडपलं क्षीरेणोष्णेन वा पिबेत् ॥ ८७ ॥
वातगुल्ममुदावर्तं योनिशूलं च नाशयेत्।
पिबेदैरण्डकं तैलं वारुणीमण्डमिश्रितम् ॥ ८८ ॥
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः।
श्लेष्मण्यनुबले पूर्वं हितं पित्तानुगे परम् ॥ ८९ ॥
साधयेत्सिद्धशुष्कस्य लशुनस्य चतुष्पलम्।
क्षीरे जलाष्टगुणिते क्षीरशेषं च ना पिबेत् ॥ ९० ॥
वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधीं शोथं साधयत्याशु तत्पयः ॥ ९१ ॥
इति लशुनक्षीरम्।

लुंचितस्येति निस्तुषीकृतस्य। अत्र चौषधयोगो व्याधिमहिम्नैव भवतीति ज्ञेयम्। पूर्वमिति पूर्वयोगोक्तमेरंडतैलम्। परमित्युत्तरयोगोक्तमेरंडतैलं पयोयुक्तं साधयेदित्यर्थः। साधयेदित्यादौ निस्तुषीकृतस्य शुद्धशुष्कस्योदकाष्टगुणिते क्षीरे इत्यत्र भागेऽनुक्ते समानविधानमिति वचनात्क्षीरं चतुर्गुणं षोडशपलानि जलाष्टगुणितं क्षीरावशिष्टम्॥ गुल्मस्य बहुभेपजसाध्यतया षोडशपलक्षीरमानं भवति। क्षीररसोनयोश्च यद्यपि सहोपयोगो विरुद्धस्तथापि व्याधिमहिम्ना महर्षिवचनादविवादः ॥ ८१—९१ ॥

तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजम्।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ९२ ॥
इति तैलपञ्चकम्।

तैलं प्रसन्नेत्यादौ यौगिकत्वाज्जतूकर्णसंवादादेरंडतैलं ज्ञेयम्। उक्तं ह्यारनालमूत्रक्षारैः संयोज्य तैलमैरंडमित्यादि ॥९२॥

पञ्चमूलीकषायेण सक्षीरेण शिलाजतु।
पिबेत्तस्य प्रयोगेण वातगुल्मात्प्रमुच्यते ॥ ९३ ॥
इति शिलाजतुप्रयोगः।

पंचमूलीत्यत्र प्रथमकल्पनया शालपर्ण्यादि पंचमूलीग्रहणं वाच्यम् ॥ ९३ ॥

वाट्यं यूषेण पिप्पल्या मूलकानां रसेन वा।
भुक्त्वा स्निग्धमुदावर्ताद्वातगुल्माद्विमुच्यते ॥९४॥
शूलानाहविबन्धार्तं स्वेदयेद्वातगुल्मिनम्।
स्वेदैः स्वेदविधावुक्तैर्नाडीप्रस्तरसङ्करैः ॥ ९५ ॥
वस्तिकर्म परं विद्याद्गुल्मघ्नं तद्धि मारुतम्।
स्वे स्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥९६॥

तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥९७॥
गुल्मघ्ना विविधा दृष्टाः सिद्धाः सिद्धिषु वस्तयः ।

इति वस्तिक्रिया ।

गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके ॥९८॥

पिप्पलीप्रधानो यूषः पिप्पलीयूषः । नाडीप्रस्तरसंकरैरित्यनेन गुल्मे स्वेदांतरस्यायौगिकत्वं सूचयति ॥ ९४—९८ ॥

तानि मारुतगुल्मेषु पानाभ्यङ्गानुवासनैः ।
प्रयुक्तान्याशु सिध्यन्ति तैलं ह्यनिलजित्परम् ॥९९॥
नीलिनीचूर्णसंयुक्तं पूर्वोक्तं घृतमेव वा ।
समलाय प्रदेयं स्याच्छोधनं वातगुल्मिने ॥ १०० ॥
नीलिनी त्रिवृता दन्ती पथ्या कम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविडक्षारनागरम् ॥ १०१ ॥
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विडङ्गं व्याघ्रीं च पलिकानि जलाढके ॥ १०२ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥ १०३ ॥
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ।
जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम् ॥१०४॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ।
श्वित्रं प्लीहानमुन्मादं घृतमेतद्व्यपोहति ॥ १०५ ॥

इति नीलिन्याद्यं घृतम् ।

आशु सिध्यन्तीति शीघ्रं गुल्मं जयंति ॥ तत्र हेतुमाह—तैलं ह्यनिलजित्परम् यस्मात्तैलं वातजित् तस्माद्वातगुल्मं वातविकारं शीघ्रं जयति । अन्ये तु तैलं त्वनिलजित्वरं नीलिनीचूर्णसंयुक्तं समलाय दातव्यम् । तथा पूर्वोक्तंच त्र्यूषणाद्यं नीलिनीचूर्णसंयुक्तं दातव्यमिति योजयंति । प्रथमव्याख्याने तु घृतमेवेतिशब्दो वक्ष्यमाणनीलिनीत्रिवृतेत्याद्युक्तद्रव्ये सिद्धं घृतं देयम् । नीलिनीमित्यादौ कल्को न श्रूयते । कल्काभावेच पाकज्ञानं नास्ति । पाकस्य हि मृद्वादिना त्रैविध्यमुक्तम् । तदपि कल्कानभिधानेऽपि पाकज्ञानार्थमपि कल्को देयः । सच क्वाथद्रव्यैरेव योग्यतया सान्निध्याच्च देयमिति वदंति । नैवं विचित्रत्वाद्घृतादिसाधनशक्तेः । यथोक्ते यथोक्तमेव परं ज्ञेयम् । नत्वनुक्तं कल्पनीयम् । कल्पनायांच युक्तिर्नास्त्येव । यतो विनाऽपि कल्कदानं क्वाथादिद्रवेण स्नेहपाको भवत्येव । न च कल्कमात्रेण स्नेहपाकज्ञानस्योक्तत्वात्तस्मादाचार्येण यथोक्तं तथैव कार्यम् । अत्र विरिक्तस्य पेयादिक्रममौत्सर्गिकं बाधयित्वा रसभोजनं प्रयोगसामान्यादुच्यते । यथोदावर्तिनी. घृतविरिक्तस्य-कांजिकाकोद्रवान्नभोजनम् ॥ ९९—१०५ ॥

कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्तकाः ।
शालयो मदिरा सर्पिर्वातगुल्मभिषग्जितम् ॥१०६॥
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ।
समण्डवारुणीपानं पक्वं वा धान्यकैर्जलम् ॥१०७॥
मन्देऽग्नौ वर्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति ।
तस्मान्नातिसौहित्यं कुर्यान्नातिविलङ्घितम् ॥१०८॥
सर्वत्र गुल्मे प्रथमे स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते १०९
भिषगात्ययिकं बुद्ध्वा पित्तगुल्ममुपाचरेत् ।
वैरेचनिकसिद्धेन पयसा सर्पिषापि वा ॥ ११० ॥
रोहिणीकटुकानिम्बमधुकं त्रिफलात्वचः ।
कार्षिका त्रायमाणा च पटोलत्रिवृतोः पले ॥१११॥
द्विपलं च मसूराणां साध्यमष्टगुणेऽम्भसि ।
शृताच्छेषं घृतसमं सर्पिषश्च चतुष्पलम् ॥ ११२ ॥
पिबेत्संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलं च भ्रमो मूर्च्छारुचिस्तथा ११३

इति रोहिण्याद्यं घृतम् ।

कुक्कुटेत्यादिना गुल्मिनेऽन्नपानं विधीयते । अतिसौहित्यमतिलंघनं चोभयोरप्यग्निवधहेतुतया वर्जनम् । यदुक्तं नाभोजनेनाग्निर्दीप्यते नातिभोजनेन इत्यादि । रोहिणी कटुरोहिणी । कर्षांशा इति कर्षप्रमाणाः । पटोलत्रिवृतोः पले इतिवचनात्प्रत्येकं पलम् । अष्टगुणे इति घृतादष्टगुणे घृतचतुःपलमेवोक्तम् । तेन क्वाथघृताभ्यामष्टगुणं पेयमष्टपलीच मात्रा गुल्मोक्तत्वादेव भवति । यदुक्तं-'गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये । तेषां मात्रा विनिर्दिष्टा पलान्यष्टौ विशेषत' इति ॥१०६—११३॥

जले दशगुणे साध्यं त्रायमाणा चतुष्पलम् ।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥११४॥
रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा ।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः ॥ ११५ ॥
रसस्यामलकानां च क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्वा सम्यग्विपाचयेत् ॥११६॥
पित्तरक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम् ।
हृद्रोगं कामलां कुष्ठं हन्यादेतद्घृतोत्तमम् ॥ ११७ ॥

इति त्रायमाणाद्यं घृतम् ।

चतुःपलायां त्रायमाणायां दशगुणं जलं चत्वारिंशत्पलानि । कल्कैरिति तामलकादिभिः । कटुरोहिण्यादयश्च कल्का इति योजनीयम् ॥ ११४—११७ ॥

रसेनामलकेक्षूणां घृतपादं विपाचयेत् ।
पथ्यापादं पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत् ॥११८॥

इति आमलकाद्यं घृतम् ।

द्राक्षां मधूकं खर्जूरं विदारीं सशतावरीम् ।
परूषकाणि त्रिफलां साधयेत्पलसंमिताम् ॥११९॥
जलाढके पादशेषे रसमामलकस्य च ।
घृतमिक्षुरसं क्षौद्रमभयाकल्कपादिकम् ॥ १२० ॥

साधयेत्तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात्पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ॥ १२१ ॥
इति द्राक्षाद्यं घृतम् ।

घृतपादमिति समुदितामलकेक्षुरसापेक्षया घृतस्य पादिकत्वम् । पथ्यापादमित्यत्र हरीतक्यागुरुत्वेन घृतापेक्षया पादत्वेनाष्टमो भागो भवतीति । एके तु यस्माच्च पादनिर्देशश्चतुर्भागस्तत्खु स इति वचनाच्चतुर्थमेवभागं प्रस्थे घृतेऽष्टपलरूपं भवतीति वदंति ॥ द्राक्षां मधूकमित्यादौ क्वाथशेषस्य प्रस्थस्य साहचर्याद्घृतादीनामपि प्रस्थमानत्वम् ॥ ११८—१२१ ॥

वृषं समूलमापोथ्य पचेदष्टगुणे जले ।
शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत् ॥ १२२ ॥
तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत् ।
रक्तपित्तज्वरश्वासकासहृद्रोगनाशनम् ॥ १२३ ॥
इति वासाघृतम् ।

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम् ।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥१२४॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥१२५॥
त्रायमाणाद्यं-घृतम् ।

वृषं समूलमित्यादौ क्वाथस्याष्टगुणजलदानेऽष्टभागशेषत्वमिति । रक्तपित्ते वासाघृताद्विशेषः तत्र हि सामान्यपरिभाषया वृषाच्चतुर्गुणं जलं चतुर्भागावशिष्टं च गृह्यते । तेन प्रयोगान्तरत्वाद्रक्तवापित्तोक्तवासाघृतातिदेशो न कृतः । क्षौद्रसंयुक्तमित्यनेन प्रक्षेपन्यायात्पादिकत्वं मधुनः । यथाबलमिति यथाविरेचनातियोगो न भवति । ॥ १२२—१२५ ॥

द्राक्षाभयारसं गुल्मे पैत्तिके सगुडं पिबेत् ।
लिह्यात्कम्पिल्लकं वापि विरेकार्थं मधुद्रवम् ॥१२६॥
दाहप्रशमनोऽभ्यङ्गः सार्पिषा पित्तगुल्मिनाम् ।
चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥ १२७ ॥
ये च पित्तज्वरार्तानां सतिक्ताः क्षीरबस्तयः ।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु १२८
शालयो जाङ्गलं मांसं गव्याज्ये पयसी घृतम् ।
खर्जूरामलकं द्राक्षा दाडिमं सपरूषकम् ॥ १२९ ॥
आहारार्थं प्रयोक्तव्यं पानार्थं सलिलं शृतम् ।
बलाविदारीगन्धाद्यैः पित्तगुल्मचिकित्सितम् १३०
आमान्वये पित्तगुल्मे सामे वा कफवातिके ।
यवागूभिः खडैर्यूषैः संधुक्ष्योऽग्निर्विलङ्घिते ॥१३१॥
शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्जयेत् ॥१३२॥
वमनार्हाय वमनं प्रदद्यात्कफगुल्मिने ।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥ १३३ ॥

परिवेष्ट्य प्रदीप्तांस्तु बल्वजानथवा कुशान् ।
भिषक्कुम्भे समावाप्य गुल्मं घटमुखे क्षिपेत् ॥१३४॥
संगृहीतो यदा गुल्मस्तदा घटमथोद्धरेत् ।
वस्त्रान्तरं ततः कृत्वा भिन्द्याद्गुल्मं प्रमाणवित् १३५
विमार्गजं यदा पश्येद्यथालाभं प्रपीडयेत् ।
मृद्नीयाद्गुल्ममेवैकं न त्वन्त्रहृदयं स्पृशेत् ॥ १३६ ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ।
श्लेष्मगुल्ममयः पात्रैः सुखोष्णैः स्वेदयेद्भिषक् १३७
सव्योषक्षारलवणं दशमूलीशृतं घृतम् ।
कफगुल्मं जयत्याशु सहिङ्गुबिडदाडिमम् ॥ १३८ ॥
इति दशमूलीघृतम् ।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढके ॥१३९॥
पादशेषे रसे तस्मिन्पिप्पलीं नागरं वचाम् ।
विडङ्गं सैन्धवं हिङ्गु यावशूकं बिडं शटीम् ॥१४०॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक् ।
प्रस्थं च पयसः कृत्वा घृतप्रस्थं विपाचयेत् ॥१४१॥
एतद्भल्लातकघृतं कफगुल्महरं परम् ।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥ १४२ ॥
इति भल्लातकाद्यं घृतम् ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥ १४३ ॥
क्षीरप्रस्थं च तत्सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ १४४ ॥
इति पञ्चकोलघृतम् ।

कंपिल्लकं शुंडारोचनिकाम् । तैलेन मधुकसाधितेन, पित्तज्वराणामित्यादौऽथपि पित्तज्वरहरत्वेन साक्षाद्वस्तयोनोक्तास्तथापि पटोलादय एव वस्तय उपयुक्तास्ता एव पित्तज्वरहरा भवन्तीति कृत्वेहोक्तं पित्तज्वरहरा इति । किंवा पित्तहरा ये तन्त्रे सिद्धौ च वक्तव्यास्ते ज्वरहराः पटोलादयो ज्ञेयाः । शैथिल्यमागत इति शिथिलदोषतया शस्त्रनिर्हार्ये दोषभूते घटमुखे न्यसेत् । घटमंथनयंत्रेण सम्यग्गृहीतात्प्रपीडयेद्विद्यादिति योजना । अत्र हृदयस्य त्यागः स्फुटनादिभयात् । सव्योषेत्यादि दशमूलस्य क्वाथे व्योषादीनां शेषाणां कल्कैः साधितं घृतं पिप्पल्याद्युक्तं पदपलघृतसमेनैव श्रपणीयम् । तथैव वचनादत्र त्रिगुणं जलं देयम् ॥ १२६—१३८ ॥ १३९—१४४ ॥

त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम् ।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम् ॥१४५॥
सर्पिरेरण्डजं तैलं क्षीरं चैकत्र साधयेत् ।
स सिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत् १४६
कफवातविबन्धेषु कुष्ठप्लीहोदरेषु च ।
प्रयोज्यो मिश्रकः स्नेहो योनिशूलेषु चाधिकम् १४७
इति मिश्रकः स्नेहः ।

त्रिवृतामित्यादौ पंचदशपलानि क्वाथ्यानि तत्र चतुर्गुणं जलं देयं पलोल्लेखविहितत्वात् षष्टिपलानि भवति। क्षीरमपि साहचर्यात्पंचदशपलम्। एतदुभयद्रवपादस्नेहोऽत्र वक्तव्यः। किंवा स्नेहसमक्षीरमिति वचनात्स्नेहसमेन क्षीरेण क्वाथेन च पंचदशपलेन द्रवेण पंचपलः स्नेहः द्रवपादिकः कर्तव्यः। जतूकर्णाभिप्रायात्तु उत्क्वाथ्य त्रिवृतादिपंचपलात्प्रस्थमानोल्लेखने प्रस्थचतुष्टयं जलस्य देयम्। यतस्तेन सामान्येनैवोक्तम्। त्रिवृतादन्ती त्रिफला दशमूलसमेनोरुबुकं तैलम्। सर्पिश्च शृतं पयसा सममुदावर्तशूलादौ॥ १४५—१४७॥

यदुक्तं वातगुल्मघ्नं स्रंसनं नीलिनीघृतम्।
द्विगुणं तद्विरेकार्थं प्रयोज्यं कफगुल्मिनाम्॥१४८॥
सुधाक्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम्।
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते १४९
जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च॥१५०॥
अष्टभागस्थितं तं च रसं पूतमधिक्षिपेत्।
दन्तीसमं गुडं पूतं क्षिपेत्तत्राभयाश्च ताः॥ १५१॥
तैलार्धकुडवं चैवं त्रिवृतायाश्चतुष्पलम्।
चूर्णितं पलमेकं च पिप्पली विश्वभेषजम् ॥१५२॥
तत्साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु।
क्षिपेच्चूर्णपलं चैकं त्वगेलापत्रकेशरात्॥ १५३॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम्।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः॥१५४॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम्।
हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरम्॥ १५५॥
कुष्ठं प्लीहानमानाहमेतान्घ्नन्त्युपसेवितः।
निरत्ययः क्रमश्चास्या द्रवो मांसरसौदनः॥ १५६॥
इति दन्तीहरीतकी।

द्विगुणमिति द्विपलप्रमाणं तत्र द्विपलं पेयमुक्तम्। तैलार्धकुडवमिति तैलं चतुःपलम्। लेहवदिति लेहपाकलक्षणेन पक्तव्यमित्यर्थः। इह चतुर्जातकान्मिलितात्पलम्। दोषप्रस्थमिति सार्धत्रयोदशपलं। उक्तं हि भोजेन—'वमने च 'विरेके च तथा शोणितमोक्षणे। सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण"॥ इति ग्रहण्याश्चिकित्सिते निर्दिष्टमित्यर्थः॥ १४८—१५६॥

"सिद्धाः सिद्धिषु वक्ष्यन्ते निरूहाः कफगुल्मिनाम्।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते॥१५७॥
यच्चूर्णं गुटिका याश्च विहिता वातगुल्मिनाम्।
द्विगुणक्षारहिङ्ग्वम्लवेतसास्ताः कफे मताः॥१५८॥
य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम्।
सिद्धा निरत्ययाः शस्ता दाहस्त्वन्ते प्रशस्यते १५९
प्रपुराणानि धान्यानि जाङ्गला मृगपक्षिणः।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च॥१६०॥
शुष्कमूलकयूषश्च विल्वस्य वरुणस्य च
चिरविल्वाङ्कुराणां च यमान्याश्चित्रकस्य च॥१६१॥
बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमैः।
तक्रेण तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत्॥ १६२॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम्।
कफगुल्मी पिबेत्काले जीर्णं माध्वीकमेव वा १६३
यमानीचूर्णितं तक्रं विडेन लवणीकृतम्।
पिबेत्संदीपनं वातकफमूत्रानुलोमनम्॥ १६४॥
संचितः क्रमशो गुल्मो महावास्तुपरिग्रहः।
कृतमूलः शिरानद्धो यदा कूर्म इवोन्नतः॥ १६५॥
दौर्बल्यारुचिहृल्लासकासवम्यरतिज्वरैः।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति॥१६६॥
गृहीत्वा सज्वरश्वासं वम्यतीसारपीडितम्।
हृन्नाभिहस्तपादेषु शोफः कर्षति गुल्मिनम् १६७
रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे।
स्निग्धस्विन्नशरीराय दद्यात्स्नेहविरेचनम्॥ १६८॥

दाहस्त्वंते इति दाहरूपत्वात्। क्रियांतरसिद्धावन्ते एव कर्तव्यतामाह॥ संचित इत्यदिना। क्रमादसाध्यताप्राप्तं गुल्ममाह—महावास्तुपरिग्रह इति। भूरिदेशव्यापकः। गर्भकालव्यतिक्रमे इति दशममासरूपस्य गर्भकालस्य व्यतिक्रमे॥ १५७—१६८॥

पलाशक्षारपादे द्वे द्वे पादे तैलसर्पिषोः।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् १६९
प्रभिद्येत न यद्येवं दद्याद्योनिविशोधनम्।
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः॥ १७०॥
आभ्यां वा भावितान्दद्याद्योनौ कटुकमत्स्यकान्।
वराहमत्स्यपित्ताभ्यां लक्तकान्वा सुभावितान् १७१
अधोहरैश्चोर्ध्वहरैर्भावितान्वा समाक्षिकान्।
किण्वं वा सगुडक्षारं दद्याद्योनिविशोधनम्॥१७२॥
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा।
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रदापयेत् १७३
बस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम्।
अदृश्यमाने रुधिरे दद्याद्गुल्मप्रभेदनम्॥ १७४॥
प्रवृत्तमाने रुधिरे दद्यान्मांसरसौदनम्।
घृततैलेन चाभ्यङ्गं पानार्थं तरुणां सुराम्॥ १७५॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः।
कार्या वातरुगार्तायाः सर्वा वातहराः पुनः॥१७६॥
घृततैलावसेकांश्च तित्तिरींश्चरणायुधान्।
सुरां समण्डां पूर्वं च पानमम्लस्य सर्पिषः।
प्रयोजयेदुत्तरं वा जीवनीयेन सर्पिषा॥ १७७॥
अतिप्रवृत्ते रुधिरे सतिक्तेनानुवासनम्।

क्षारपादे इति क्षारोदकपादद्वयं मात्रामिति योग्यप्रमाणमुक्तम्। पललं तिलपिष्टं क्षारश्चात्र पलाशक्षार एव प्रकृतत्वात्। ताभ्यामिति क्षारसुधाक्षीराभ्यां कटुकमत्स्यः शफरी शुष्कमत्स्यः लक्तकान्यस्त्रावयवान्। किण्वं सुधाबीजं रक्तपित्तहरम्। क्षारमिति नीलोत्पलक्षारम्। अम्लस्य सर्पिषः भोजनोत्तरकालपानं क्रियोत्तरपर्त्तिः। जीवनीयं सर्पिर्वातरक्तेव वक्तव्यम्। सतिक्तं सानुवासनमिति ॥ १६९—१७७ ॥

तत्र श्लोकाः।

स्नेहः स्वेदः सर्पिश्चूर्णानि बृंहणं गुडिका।
वमनविरेकौ मोक्षः कफजस्य च वातगुल्मवताम्
सर्पिः सतिक्तसिद्धं क्षीरं प्रस्रंसनं निरूहाश्च।
रक्तस्य चावसेचनमाश्वासनसंशमनयोगाः ॥१७९॥
उपनाहनं सशस्त्रं पक्वस्याभ्यन्तरप्रभिन्नस्य।
संशोधनसंशमने पित्तप्रभवस्य गुल्मस्य ॥ १८० ॥
स्नेहः स्वेदो भेदो लङ्घनमुल्लेखनं विरेकश्च।
सर्पिर्वस्तिर्गुडिकाश्चूर्णमरिष्टाश्च सक्षाराः ॥ १८१ ॥
गुल्मस्यान्ते दाहः कफजस्याग्रेऽपनीतरक्तस्य।
गुल्मस्य रौधिरस्य क्रियाक्रमः स्त्रीभवस्योक्तः १८२
पथ्यान्नपानसेवाहेतूनां वर्जनं यथास्वं च।
नित्यं चाग्निसमाधिः स्निग्धस्य च सर्वकर्माणि १८३
हेतुर्लिङ्गं सिद्धिः क्रियाक्रमः साध्यतानुयोगाश्च।"
गुल्मचिकित्सितसंग्रह एतावानग्निवेशस्य ॥ १८४ ॥

इति चरकसंहितायां चिकित्सितस्थाने
पञ्चमोऽध्यायः ॥ ५ ॥

स्नेह इत्यादिना पुनः संक्षेपेण संग्रहं करोति। साध्यतानुयोगाश्च एतेन प्रत्येकं वातादिगुल्मचिकित्सिते संगृहीतेऽपि पुनः संक्षेपसंग्रहाभिधानेन संगृहीता ॥ १७८—१८४ ॥

इति चक्रपाणिदत्तविरचितायां चरकटीकायां चिकित्सितस्थाने
गुल्मचिकित्सितं समाप्तम्।

---

## षष्ठोऽध्यायः।

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः।

निर्मोहमानानुशयो निराशः
पुनर्वसुर्ज्ञानतपोविशालः।
कालेऽग्निवेशाय सहेतुलिङ्गा-
नुवाच मेहान्शमनं च तेषाम् ॥ १ ॥
आस्यासुखं स्वप्नसुखं दधीनि।
ग्राम्यौदकानूपरसाः पयांसि।
नवान्नपानं गुडवैकृतं च
प्रमेहहेतुः कफकृच्च सर्वम् ॥ २ ॥
मेदश्च मांसं च शरीरजं च
क्लेदं कफो वस्तिगतं प्रदूष्य।
करोति मेहान्समुदीर्णमुष्णै-
स्तानेव पित्तं परिदूष्य भूयः ॥ ३ ॥

निदानोक्तसंबंधक्रमादेव गुल्मचिकित्सितादनु मेहचिकित्सितं समुच्यते। निर्गता मोहादयो यस्य स तथानुशयः कोपः निर्गता आशा यस्य स निराशः नीरागः। निदानोक्तमपि हेतुलिंगादि पुनः प्रकरणवशात्सकलमुच्यते। आस्यासुखमिति सुखजनिकास्या न दुःखजनिका। एवं स्वप्नसुखं च ज्ञेयम्। शय्यादिदोषेण दुःखस्वप्नं, दुःखास्या च, न प्रमेहहेतुः। गुडवैकृतं चेत्यादिना कफजादिमेहसंप्राप्तिः। कफजा एव मेहाः मेहत्वेनादावुच्यते मेदश्च मांसश्चेत्यनेन वातिकसंप्राप्तिमाह क्षीणेष्विति कफपित्तेषु द्वयोश्च बहुवचनं व्यक्त्यपेक्षया ज्ञेयम् ॥१–३॥

क्षीणेषु दोषेष्ववकृष्य वस्तौ
धातून्प्रमेहाननिलः करोति।
दोषो हि वस्तौ समुपेत्य मूत्रं
संदूष्य मेहाञ्जनयेद्यथास्वम् ॥ ४ ॥
साध्याः कफोत्था दश पित्तजाः षट्
याप्या न साध्याः पवनाच्चतुष्काः।
समक्रियत्वाद्विषमक्रियत्वा-
न्महात्ययत्वाच्च यथाक्रमं ते ॥ ५ ॥

क्षीणेष्विति वृद्धवातापेक्षया क्षीणे तेनावृद्धकफपित्ते यो वायुः क्रमेण वृद्धो भवति स मेहासाध्यमेहचतुष्टयकरणे विवक्षित इति दर्शयति। अत्र चिकित्साविधानात्साध्यत्वमस्ति 'या वातमेहान्प्रतिपूर्वमुक्ता वातोल्वणानां विहिता क्रिया सा। वायुर्हि मेहेष्वतिकर्षितानां कुप्यत्यसाध्यान्प्रति नास्ति चिन्ते'ति। धातूनिति मज्जौजोलसीकाख्यान्। सर्वत्रेति संशमनं दोषाणामुच्यत इत्याह दोषोहीत्यादि। समक्रियत्वादिति कफस्य दोषस्य दूष्यस्य मेदःप्रभृतेः समानत्वात्कटुतिक्तादिक्रियायाः विषमक्रियत्वादिति पित्तस्य संशमनातिचिकित्सायाः कट्वादिरूपाया विषमत्वात् महात्ययत्वादिति मज्जादिगंभीरधातुप्रकर्षकत्वेन महाव्यापत्तिकर्तृकत्वादाशुकारित्वाच्चकारान्निदानोक्तविषमक्रियत्वं वातात्मकानां समुच्चिनोति। यथाक्रममिति यथासंख्यम् ॥ ४—५ ॥

कफः सपित्तः पवनश्च दोषा
मेदोऽस्रशुक्राम्बुवसालसीकाः।
मज्जारसौजः पिशितं च दूष्यं
प्रमेहिणां विंशतिरेव मेहाः ॥ ६ ॥

कफ इत्यादिना सर्वमेहानां दोषदूष्यसंग्रहमाह—रसश्चोजश्चेति रसौजाः। ओजसोऽपि मधुमेहे दूष्यत्वाद्यद्यपि मेदप्रभृतयो दूष्या इह उच्यंते। तथापि मेदोमांसशरीरक्लेदानामवश्यंभावितया परिग्रहः। मज्जादयश्च सर्वमेहे पुनरवश्यं दृश्यंते स्तोकं वा दृष्टा भवंति। किंवा सर्वमेहानामेव त्रिदोषत्वं तथा सकलदूष्यत्वं च कफः सपित्त इत्यादिना ग्रंथेनोच्यते।

मेदोमांसादीन्यत्यर्थदुष्टोपदर्शनार्थं पृथगुक्तानि । यतः कियन्तः-शिरसीये इत्यत्र सकलमेहवाचकं मधुमेहं कथयता दोषत्रयप्रकोपोऽप्युक्तः ॥ तथाहि—'समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः । दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः' इत्युक्तं तथा सुश्रुतोऽप्याह—'वातपित्तमेदोभिरन्वितः श्लेष्मा मेहाञ्जनयति । कफादीनां लवणादिसंख्यानन्त्येन प्रमेहसंख्याप्रसक्तिनिरासार्थमाह—विंशतिरेव मेहा इति ॥ ६ ॥

जलोपमं चेक्षुरसोपमं वा
घनं घनं चोपरि विप्रसन्नम् ।
शुक्लं सशुक्रं शिशिरं शनैर्वा
लालेव वा वालुकया युतं वा ॥ ७ ॥
विद्यात्प्रमेहान्कफजान्दशैता-
न्क्षारोपमं कालमथापि नीलम् ।
हारिद्रमाञ्जिष्ठमथापि रक्त-
मेतान्प्रमेहान्षडुशन्ति पित्तात् ॥ ८ ॥
मज्जौजसा वा वसयान्वितं वा
लसीकया वा सततं विबद्धम् ।
चतुर्विधं मूत्रयतीह वाता-
च्छेषेषु धातुष्वपकर्षितेषु ॥ ९ ॥

जलोपममित्यादिना दशभिः श्लेष्मगुणैः कृतान्दशप्रमेहानाह—एतच्च निदाने स्फुटमनुसर्तव्यम् । घनं चोपरि विप्रसन्नमित्यनेन सान्द्रमेहमाह ॥ वातिको मज्जमेहः । वसया वसामेहः । लसिकया हस्तिमेह इति ज्ञेयाः । शेषेष्विति मेदादिषु रसादियुक्तधातुव्यतिरिक्तेष्वपकर्षितेषु इति क्षीणेषु क्षयस्तेषां प्रमेहारंभकेण वातेनैव उपोषणादिषु कर्षणाद्वा क्रियते ॥ ७—९ ॥

वर्णं रसं स्पर्शमथापि गन्धं
यथास्वदोषं भजते प्रमेहः ।
श्यावारुणो वातकृतः सशूलो
मज्जादिपाड्गुण्यमुपेत्यसाध्यः ॥ १० ॥
स्वेदोऽङ्गगन्धः शिथिलाङ्गता तु
शय्यासनस्वप्नसुखं रतिश्च ।
हृन्नेत्रजिह्वाश्रवणोपदेहा
घनाङ्गता केशनखातिवृद्धिः ॥ ११ ॥
शीतप्रियत्वं गलतालुशोषो
माधुर्यमास्ये करपाददाहः ।
भविष्यतो मेहगदस्य रूपं
मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ १२ ॥
स्थूलः प्रमेही बलवानिहैकः
कृशस्तथैकः परिदुर्बलश्च ।
संबृंहणं तत्र कृशस्य कार्यं
संशोधनं दोषबलाधिकस्य ॥ १३ ॥

स्निग्धस्य योगा विविधाः प्रयोज्याः
कल्पोपदिष्टा मलशोधनाय ।
ऊर्ध्वं तथाधश्च मलेऽपनीते
मेहेषु सन्तर्पणमेव कार्यम् ॥ १४ ॥

संक्षेपेण कफजादिप्रमेहलक्षणमाह—वर्णमित्यादि । तत्र कफजे श्वेतोवर्णो मधुरो रसः । शीतस्पर्शः, आमश्च गंधो भवति । एवं पित्तमेहेऽपि ज्ञेयाः । वायोस्त्विति निर्वर्णत्वेन प्राभाविकं कायवर्णमाह—श्यावारुण इत्यादि । मज्जादिपाड्गुण्यं मज्जलसीकादिसमानगुणतां याति । यद्यपि वातिको मेहोऽसाध्य एवोक्तस्तथापि पुनरिहासाध्यवचनेन य एव उत्पत्तितः प्रभूताकृतिः स एव श्यावारुणत्वादिसकलं लक्षणं बिभर्ति । यस्तूत्तरकालं चानुबद्धः स साध्यो भवति । तत्र मज्जादिपाड्गुण्यं नावश्यं भवतीति दर्शयति । किंवोत्तरकालमेव ये वातानुबंधाः श्यावारुणवर्णादय उक्ता भवन्ति तेऽप्यसाध्या भवन्तीति । तथा कफपित्तजापि मज्जादियोगादसाध्या एव, उक्तं—'सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः । मधुमेहत्वमायांति तदासाध्या भवन्ति हि' ॥ स्वेदोऽङ्गगंध इत्यादिना पूर्वरूपमाह परिदुर्बलो हीनबलः कृशस्य इति मांसकृशस्य, दोषबलाधिकस्य दोषेण बलेनाधिकस्य, क्षयो धातुक्षयः ॥ १०—१४ ॥

गुल्मः क्षयो मेहनबस्तिशूलं
मूत्रग्रहश्चाप्यपतर्पणेन ।
प्रमेहिणः स्युः परितर्पणानि
कार्याणि तस्मात्प्रसमीक्ष्य वह्निम् ॥ १५ ॥
संशोधनं नार्हति यः प्रमेही
तस्य क्रिया संशमनी प्रयोज्या ।
मन्थाः कषाया यवचूर्णलेहाः
प्रमेहशान्त्यै लघवश्च भक्ष्याः ॥ १६ ॥
ये विष्किरा ये प्रतुदा विहङ्गा-
स्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः ।
यवौदनं रूक्षमथापि वाट्यं
मद्यान्ससक्तूनपि चाप्यपूपान् ॥ १७ ॥
मुद्गादियूषैरथ तिक्तशाकैः
पुराणशाल्योदनमाददीत ।
दन्तीङ्गुदीतैलयुतं प्रमेही
तथातसीसर्षपतैलयुक्तम् ॥ १८ ॥
सषष्टिकं स्यात्तृणधान्यमन्नं
यवप्रधानस्तु भवेत्प्रमेही ।
यवस्य भक्ष्यान्विविधांस्तथाद्या-
त्कफप्रमेही मधुसंप्रयुक्तान् ॥ १९ ॥
निशिस्थितानां त्रिफलाकषायैः
स्युस्तर्पणाः क्षौद्रयुता यवानाम् ।

तान्सीधुयुक्तान्प्रपिवेत्प्रमेही
प्रायोगिकान्मेहवधार्थमेव ॥ २० ॥
ये श्लेष्ममेहे विहिताः कषाया-
स्तैर्भावितानां च पृथग्यवानाम्।
सक्तूनपूपान्सगुडान्सधाना-
न्भक्ष्यांस्तथान्यान्विविधांश्च खादेत् ॥ २१ ॥
खराश्वगोधेनुकसंभृतानां
तथा यवानां विविधाश्च भक्ष्याः।
देयास्तथा वेणुयवा यवानां
कल्पेन गोधूममयाश्च भक्ष्याः ॥ २२ ॥

क्षुण्णशुष्कयवानां मंडरहितो यवौदनः स एव मंडो निस्तुपोष्णदलितानां यवानां भवति अतसी ख्याता, ये तिलातसीति पठंति तेषां मनसि फलरूपातसी विवक्षिता। तृणधान्यादीनि श्यामाकादीनि। अपूपान्यवपिष्टकृतान् धानान्भृष्टयवान्। किंवा शकृहुतानां यवानां, वेणुयवा यवानां वंशफलाना मित्यर्थः ॥ १५-२२ ॥

संशोधनोल्लेखनलङ्घनानि
काले प्रयुक्तानि कफप्रमेहान्।
जयन्ति पित्तप्रभवान्विरेकाः
संतर्पणः संशमनो विधिश्च ॥ २३ ॥
दार्वीं सुराह्वां त्रिफलां समुस्तां
कषायमुत्क्वाथ्य पिबेत्प्रमेही।
क्षौद्रेण युक्तामथवा हरिद्रां
पिबेद्रसेनामलकीफलानाम् ॥ २४ ॥
हरीतकीकट्फलमुस्तलोध्रं
पाठाविडङ्गार्जुनधन्वनाश्च।
उभे हरिद्रे तगरं विडङ्गं
कदम्बशालार्जुनदीप्यकाश्च ॥ २५ ॥
दार्वी विडङ्गं खदिरो धवश्च
सुराह्वकुष्ठागुरुचन्दनानि।
दार्व्यग्निमन्थौ त्रिफला सपाठा
पाठा च मूर्वा च तथा श्वदंष्ट्रा ॥ २६ ॥
यमान्युशीराण्यभया गुडूची
चव्याभयाचित्रकसप्तपर्णाः।
पादैः कषायाः कफमेहिनां ते
दशोपदिष्टा मधुसंप्रयुक्ताः ॥ २७ ॥
उशीरलोध्राञ्जनचन्दनाना-
मुशीरमुस्तामलकाभयानाम्।
पटोलनिम्बामलकामृतानां
मुस्ताभयापद्मकवृक्षकाणाम् ॥ २८ ॥
लोध्राम्बुकालीयकधातकीनां
निम्बार्जुनाम्रातनिशोत्पलानाम्।
शिरीषसर्जार्जुनकेशराणां
प्रियङ्गुपद्मोत्पलकिंशुकानाम् ॥ २९ ॥

संशोधनग्रहणेनैवोल्लेखे प्राप्ते पुनर्वमनस्य कफजयप्रधानत्वख्यापनार्थमुल्लेखनपदेन वाच्यम्। अन्येतूल्लेखं कफमेहेपु निक्षेपणमात्रं, पित्तमेहानां याप्यत्वाज्जयन्तीति पदेन पित्तमेव प्रतिपादनमेवोच्यते किंवात्यन्तदुष्टे मेदसि पित्तजानामपि असाध्यत्वं। साध्यास्तु मेदो यदि न प्रदुष्टमित्यनेन वक्तव्यास्तान्प्रति जयन्तीति साधु। सुराह्वेत्याद्युक्तं योगद्वयं सर्वमेहेपु सुराह्वे देवदारुहरीतक्यादयो दश यथासंख्यं कफमेहेपु किंवा सर्वे सर्वकफमेहेपु उशीराद्युक्ताश्च पित्तमेहेपु सर्वेपु ज्ञेयाः ॥ २३—२९ ॥

अश्वत्थपाठासनवेतसानां
कटङ्कटेर्युत्पलमुस्तकानाम्।
पैत्तेषु मेहेषु दशैव दृष्टाः
पादैः कषाया मधुसंप्रयुक्ताः ॥ ३० ॥
सर्वेषु मेहेषु मतौ तु पूर्वौ
कषाययोगौ विहितास्तु सर्वे।
मन्थस्य पाने यवभावनायां
स्युर्भोजने पानविधौ पृथक्च ॥ ३१ ॥
सिद्धानि तैलानि घृतानि चैव
देयानि मेहेष्वनिलात्मकेषु।
मेदः कफश्चैव कषाययोगैः
स्नेहैश्च वायुः शममेति तेषाम् ॥ ३२ ॥
कम्पिल्लसप्तच्छदशालजानि
वैभीतरौहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि
क्षौद्रेण लिह्यात्कफपित्तमेही ॥ ३३ ॥
पिबेद्रसेनामलकस्य वापि
कल्कीकृतान्यक्षसमानि काले।
जीर्णे च भुञ्जीत पुराणमन्नं
मेही रसैर्जाङ्गलजैर्मनोज्ञैः ॥ ३४ ॥

कटंकटेरी दारुहरिद्रा। मंथस्यपानमिति मंथपानार्थं भोजनेति भोज्यसंस्कारे एवं पानसंस्कारेऽपि सिद्धानि तैलानीति। एतैरेव कषायैः सिद्धान्यनिलात्मकेष्विति कफपित्तमेहेष्वेव क्रमादपि नानुवंधेपूपपत्तिविशिष्टानिलजानसाध्यत्वेनाचिकित्स्यत्वात् कफमेही पित्तमेही। कल्कीकृतानीति। कंपिल्लकादीनि कल्कीकृतानि च ॥ ३०—३४ ॥

दृष्टानुबन्धं पवनात्कफस्य
पित्तस्य वा स्नेहविधिर्विकल्प्यः।
तैलं कफे स्यात्स्वकषायसिद्धं
पित्ते घृतं पित्तहरैः कषायैः ॥ ३५ ॥

त्रिकण्टकाश्मन्तकसोमवल्कै-
र्भल्लातकैः सातिविषैः सलोध्रैः।
वचापटोलार्जुननिम्बमुस्तै-
र्हरिद्रया पद्मकदीप्यकैश्च ॥ ३६ ॥

मञ्जिष्ठया चागुरुचन्दनैश्च
सर्वैः समुस्तैः कफवातजेषु।
मेहेषु तैलं विपचेद् घृतं तु
पैत्तेषु मिश्रं त्रिषु लक्षणेषु ॥ ३७ ॥

फलत्रिकं दारुनिशा विशाला
मुस्ता च निःक्वाथ्य निशां सकल्काः।
पिबेत्कषायं मधुसंप्रयुक्तं
सर्वप्रमेहेषु समुद्धतेषु ॥ ३८ ॥

लोध्रं शटीं पुष्करमूलमेलां
मूर्वां विडङ्गं त्रिफलां यमानीम्।
चव्यं प्रियङ्गुं क्रमुकं विशालां
किराततिक्तं कटुरोहिणीं च ॥ ३९ ॥

भार्ङ्गीनतं चित्रकपिप्पलीनां
मूलं सकुष्ठातिविषं सपाठम्।
कलिङ्गकान्केशरमिन्द्रसाह्वां
नखं सपत्रं मरिचं प्लवं च ॥ ४० ॥

द्रोणेऽम्भसः कर्षसमानि पक्त्वा
पूते चतुर्भागजलावशेषे।
रसेऽर्धभागं मधुनः प्रदाय
पक्षं निधेयो घृतभाजनस्थः ॥ ४१ ॥

मध्वासवोऽयं कफपित्तमेहान्
क्षिप्रं निहन्याद्द्विपलप्रयोगात्।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या
दोषं किलासं विविधं च कुष्ठम् ॥ ४२ ॥

इति मध्वासवः।

अनुबंधमिति पश्चादनुगतं विकल्प्य कफे स्यादिति। कफे वातानुबंधे स्यादेवं पित्तेऽप्युक्तं। सर्वैरित्युक्तेऽपि सर्वैः स्नेहसाधनं स्यादतआह समस्तैरिति, मिश्रमिति तैलघृतयमकम्। त्रिषु लक्षणेष्विति त्रिदोपलक्षणे मेलके सति त्रिदोषत्वम्। अनुबंध्यनुबंधकृतं कफपित्तमेहेष्वेव ज्ञेयम्। किंवा सर्वेषामेव मेहानां त्रिदोषजत्वात्रिदोषत्वाविर्भावः कदाचिद्भवतीति ज्ञेयम्। लोध्रेत्यादौ क्रमुकः पट्टिकालोध्रं पूगं वा, इंद्रसाह्वा बीजपूरका ॥ ३५—४२ ॥

क्वाथः स एवाष्टपलैश्च दन्त्या
भल्लातकानां च चतुष्पलं स्यात्।
सितोपला त्वष्टपला विशेषः
क्षौद्रं च तावत्पृथगासवौ तौ ॥ ४३ ॥

सारोदकं चाथ कुशोदकं वा
मधूदकं वा त्रिफलारसं वा।
शीधुं पिबेद्वा निगदं प्रमेही
माध्वीकमग्र्यं चिरसंस्थितं वा ॥ ४४ ॥

मांसानि शूल्यानि मृगद्विजानां
खादेद्यवानां विविधांश्च भक्ष्यान्।
संशोधनारिष्टकषायलेहैः
संतर्पणज्ञः शमयेत्प्रमेहान् ॥ ४५ ॥

भृष्टान्यवान् भक्षयतः प्रयोगा-
च्छुष्कांश्च सक्तून्न भवन्ति मेहाः।
श्वित्रं च कुष्ठं च कफं च कृच्छ्रं
तथैव मुद्गामलकप्रयोगात् ॥ ४६ ॥

संतर्पणोत्थेषु गदेषु योगा
मेदस्विनां ये च मयोपदिष्टाः।
विरूक्षणार्थं कफपित्तजेषु
सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥ ४७ ॥

क्वाथस्यैवेति तावन्मानजलेनैव दन्त्यष्टपलं भल्लातकचतुःपलं लोध्रादीनि कर्षमानानि दत्वा कर्तव्य इत्यर्थः। क्षौद्रंच तावदिति क्वाथापेक्षयाष्टभागमित्यर्थः। सारोदकमिति सारः प्रधानः खदिरादिसारे षडंगविधिना कृतमुदकं सारोदकं ज्ञेयं एवं कुशोदकं ज्ञेयम्। मधुनामधुरीकृतमुदकं मधूदकम्। शूल्यानीति शूलभृतानीत्यर्थः मृगद्विजानामित्यत्र यौगिकत्वात् जांगलमृगद्विजानामिति ज्ञेयम्। प्रयोगादित्यभ्यासात्। संतर्पणोत्थेषु गदेष्वित्यत्र संतर्पणीयाध्याये त्रिफलारग्वधपाठा इत्युक्ताः ॥ ४३—४७ ॥

"व्यायामयोगैर्विविधैः प्रगाढै-
रुद्वर्तनैः स्नानजलावसेकैः।
सेव्यत्वगेलागुरुचन्दनाद्यै-
र्विलेपनैश्चाशु न सन्ति मेहाः ॥ ४८ ॥

क्लेदश्च मेदश्च कफश्च वृद्धो
नाशं प्रयाति प्रसमीक्ष्य तस्मात्।
वैद्येन पूर्वं कफपित्तजेषु
मेहेषु कार्याण्यपतर्पणानि ॥ ४९ ॥

या वातमेहान्प्रति पूर्वमुक्ता
वातोल्वणानां विहिता क्रिया सा।
वायुर्हि मेहेष्वतिकर्षितानां
कुप्यत्यसाध्यान्प्रति नास्ति चिन्ता ॥ ५० ॥

यैर्हेतुभिर्ये प्रभवन्ति मेहा-
स्तेषु प्रमेहेषु न ते निषेव्याः।
हेतोरसेवा विहिता यथैव
जातस्य रोगस्य भवेच्चिकित्सा ॥ ५१ ॥

हारिद्रवर्णं रुधिरं च मूत्रं
विना प्रमेहस्य हि पूर्वरूपैः ।
यो मूत्रयेत्तं न वदेत्प्रमेहं
रक्तस्य पित्तस्य हि स प्रकोपः ॥ ५२ ॥

सेव्यमुशीरं चंदनादावित्यत्र चंदनादिग्रहणे हि सेव्यादीनांच ग्रहणं स्यात् । संप्रत्युत्सर्गतः कफपित्तप्रमेहाणामपतर्पणमाह— यद्यपि अपतर्पणेन गुल्मादिदोषो भवति तथापि गुल्मादिप्रादुर्भावो यथा न भवेत्तथापतर्पणं कर्तव्यमिति । क्लेदश्च मेदश्चेत्यादिना दर्शयति । पूर्वचिकित्सितमेहप्रयुक्तादिदेयानि मेहेष्वनिलात्मकेष्वित्यादिनोक्तानि, तानि वातानुबद्धमेहविषयाणीति दर्शयन्नाह—या वातेत्यादिवातोल्वणत्वमेव कुतः कफजेषु पित्तजेषु च भवतीत्याह—वायुरित्यादि । असाध्यानिति उत्पत्तितः । यैर्हेतुभिरित्यादि श्लोकार्थपरिभाषा सर्वरोगेष्वेवानुमता । इह प्रमेहस्य चिरकालानुबंधितया हेतुसेवानिरासार्थमुच्यते ॥ ४८—५२ ॥

दृष्ट्वा प्रमेहं मधुरं सपिच्छं
मधूपमं स्याद्विविधोपचारः ।
क्षीणेषु दोषेष्वनिलात्मकः स्या-
त्संतर्पणाद्वा कफसंभवः स्यात् ॥ ५३ ॥

संप्रति प्रमेहलक्षणस्य रक्तपित्तलक्षणसाम्ये रक्तपित्ते प्रमेहचिकित्सा माभूदिति कृत्वा प्रमेहरक्तपित्तभेदकं लक्षणमाह—दृष्ट्वेत्यादि । क्षीणेषु दोषेष्वतिक्षीणेषु कफमेदःप्रभृतिषु । क्षीणत्वं चेह दूष्ये विवक्षितेऽपि मेदआदौ तथापि दोषसंबंधात् दोषशब्दोऽत्र ज्ञेयः । किंवा 'कफदोषापेक्षया बहुवचनत्वं । यदि हि वातिकः स्यात्तदा हेत्वभावात्कफोऽनुद्रुद्धः स्यादित्यर्थः । संतर्पणात्तु यदि ज्ञातं तर्पणजनितकफवृद्धत्वं तदा वातनिदानाभावान्नायं वातजः किंतु कफज इत्यवधार्यत इति भावः ॥ ५३ ॥

संपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि न प्रदुष्टम् ॥ ५४ ॥

संप्रत्युक्तानुक्तप्रमेहाणां साध्यासाध्ययाप्योपदर्शनार्थमाह—स पूर्वरूप इति । सह पूर्वरूपेण स्वेदांगगंधेत्यादिना वर्तन्त इति सपूर्वरूपास्तत्रकफमेहाः साध्या उक्तास्तेन पूर्वरूपेण साध्या भवंति । पित्तमेहा याप्या उक्तास्ते प्रत्याख्येया भवंति, साध्यावस्थायामपि पूर्वरूपयोगेन यद्यपि सर्वरोगाणामसाध्यत्वमुक्तम् । उक्तं च यथा—अन्यस्यापि च रोगस्य पूर्वरूपाणि ये नरं । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवमिति । तथापि सर्वपूर्वरूपानुबंधे यद्यपि सर्वरोगाणामसाध्यत्वमुक्तमिह तु असमस्तपूर्वरूपानुबंधेऽप्यसाध्यत्वं भवतीति विशेषवचनाल्लभ्यते, तथा क्रमेणच ये वातकृतास्ते पूर्वरूपरहिताऽप्यसाध्याः । क्रमेणेति यथोक्तनिदानक्रमेण एतेन य एव निदानोक्तहेत्वादियोगेन वातजाश्चत्वारो जायंते ते मेहा असाध्या ये तु कफजाः पित्तजा वा वातानुबंधत्वेन वातजास्ते साध्या याप्याश्च । अत एव तान्प्रतिषिद्धानि तैलघृतानि देयानि । चिकित्सोक्तपूर्वरूपराहित्येन पित्तकृते प्रमेहे कदाचित्साध्यत्वमपि भवतीत्यपवादविधिं दर्शयितुमुत्सर्गप्राप्तां पैत्तिकयाप्यतामनुवदति—पित्तकृतास्तु याप्या इत्यवस्थासाध्यान् पैत्तिकानाह—साध्यास्त्वित्यादि । न प्रदुष्टमिति न प्रकर्षेण दुष्टम् । अदुष्टमेदसः पैत्तिकाः साध्या भवन्तीत्यर्थः । किंवा प्रदुष्टाः कफपित्तमेहास्तावदसाध्याः । तथा कफपित्तमेहा ये धात्वपकर्षणाद्वातकृता भवन्ति तेऽपि सर्वरूपाः सन्तः साध्या भवंति ये तु पूर्वरूपत्वेन कियन्तःशिरसीयोक्तं प्रमेहं विंशतिप्रमेहातिरिक्तं वर्णयंति । ते विंशतिरेव मेहा इति संख्याप्रतिनियमेनैव प्रयुक्ताः ॥ ५४ ॥

जातप्रमेही मधुमेहिनो वा
न साध्यरोगः स हि बीजदोषात् ।
ये चापि केचित्कुलजा विकारा
भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥ ५५ ॥

मेहसाध्यताप्रकारत्वमाह जातइत्यादि । प्रमेही यः प्रमेहिणो जातः सोऽप्यसाध्यो भवत्यत्रापि हेतुमाह—स हि बीजदोषादिति । प्रमेहारंभकदोषदुष्टबीजजातप्रमेहित्वान्मधुमेहशब्देनात्र मेहमात्रमुच्यते । यदि तु वातिक एव मधुमेह उच्यते तदेतरप्रमेहयुक्तमातापितृजनितप्रमेहिणो नासाध्यत्वं स्यात् । मधुमेहिनो जनितस्य मधुमेहित्वमेव, कारणानुरूपतया युक्तम् । ततश्च मधुमेही मधुमेहिनो वा जातो न साध्य इति वक्तुमुचितम् । तस्मादपत्ये सामान्येन प्रमेहवचनेनापि तत्करणे पितरि कार्यानुरूपः प्रमेहो मधुमेहशब्दवाच्यो ज्ञेयः । मेहशब्दोऽयं सामान्येन सर्वमेहेषु वर्तत एव, यतः कियन्तःशिरसीये येषां पिडका मधुमेहसंबंधत्वेन उक्तास्ता इह प्रमेहिणां या पिडका इत्यनेन सामान्यप्रमेहसंबंधितयाऽनुदितास्तस्मान्मधुमेहशब्दः सर्वप्रमेहे मधुमेहविशेषे च वर्तते । यथा तृणशब्दो सर्वतृणे तृणविशेषेच वर्तते । प्रपंचितश्चायमर्थः कियन्तःशिरसीये इति नेह प्रतन्यते ॥ कुलजप्रमेहासाध्यताप्रसंगेनापरेषामप्यसाध्यतामाह—ये चापीत्यादि । कुलजा इति पितृपितामहादिकारणोद्भूता अनेनैव सामान्येन वचनेन प्रमेहस्यापि कुलजस्यासाध्यतायां सिद्धायां पुनस्तद्वचनं संतानानुबंधित्वोपदर्शनार्थम् । उक्तं हि—प्रमेहोऽनुसंगिनामिति ॥ ५५ ॥

प्रमेहिणां याः पिडका मयोक्ता
रोगाधिकारे पृथगेव सप्त ।
ताः शल्यविद्भिः कुशलैश्चिकित्स्याः
शस्त्रेण संशोधनरोपणैश्च ॥ ५६ ॥

भवन्ति चात्र ।

हेतुर्दोषा दूष्यं मेहानां साध्यतानुरूपं च ।
मेही द्विविधस्त्रिविधं भिषग्जितं तल्लक्षणम् ॥५७॥
आद्या यवान्नविकृतिर्मन्था मेहापहाः कषायाश्च ।
तैलघृतलेह्ययोगा भक्ष्याः प्रवरासवाः सिद्धाः ॥५८॥
व्यायामविधिर्विविधः स्नानान्युद्वर्तनानि गन्धाश्च ।
मेहानां प्रशमार्थं चिकित्सिते दृष्टमेतावत् ॥ ५९ ॥

इति चरकसंहितायां चिकित्सितस्थाने
षष्ठोऽध्यायः ॥ ६ ॥

प्रमेहपिडकाचिकित्सासूत्रमाह प्रमेहिणामित्यादि । रोगाधिकारे इति रोगचतुष्के । अत्र शल्याधिकारत्वेऽन्याधिकारेषु न विस्तरोक्तिरिति वचनान्न विस्तरः कृतः ॥ हेतुरित्यादि संग्रहो भिषग्जितमिति संशोधनं संशमनं, निदानं वर्जनं च । आद्या इति । भक्षणीयाः । शेषं सुगमम् ॥ ५६—५९ ॥

इति मेहचिकित्सितं समाप्तम् ॥

## सप्तमोऽध्यायः ।

अथ कुष्ठचिकित्सिताख्यमध्यायं व्याख्यास्यामः ।
हेतुं लिङ्गं विविधं कुष्ठानामाश्रयं प्रशमनं च ।
शृण्वग्निवेश सम्यग्विशेषतः स्पर्शनघ्नानाम् ॥ १ ॥

स्नेहविभ्रमाशान्मेहकुष्ठयोर्जन्म उक्तं तेन मेहमनुकुष्ठचिकित्सितमुच्यते । निदाने हेत्वादय उक्ता अपि चिकित्सोपकरणतया किंचिद्विशेषप्रतिपादनार्थं पुनरुच्यते । आश्रयमिति कोष्ठाधारम् । प्रशमनं चेति चकारात्पूर्वरूपसंप्राप्त्योर्वक्ष्यमाणयोर्ग्रहणम् । किंवा लिंगेन हेतुना च संप्राप्तिर्बोद्धव्या । अन्यान्यपि पिप्लुव्यंगादीनि स्पर्शनघ्नानि संति, तेन विशेयतो यानि कुष्ठानि तेषां हेत्वादीनि शृणु किंवा कुष्ठानामानन्त्याद्यानि विशेषतः स्पर्शनघ्नान्यष्टादश तेषां हेत्वादि शृण्विति योजना । उक्तंहि कुष्ठानि सप्तविधान्यष्टादशान्यपरिसंख्येयविधानि चेति ॥ १ ॥

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान्प्रतिघ्नताम् ॥ २ ॥

विरोधीन्यात्रेयभद्रकाप्यीये—न मत्स्यान्पयसाभ्यवहरेदित्यादिनोक्तानि ॥ २ ॥

व्यायाममतिसंतापमतिभुक्त्वा निषेविणाम् ।
शीतोष्णलङ्घनाहारान्क्रमं मुक्त्वा निषेविणाम् ॥ ३ ॥

शीतोष्णेत्यादि । शीतोष्णादीनां यथाक्रमेण सेव्यत्वमुक्तम्—तद्विपरीतेन सेविनामेवं लंघनाहारयोरपि ज्ञेयम् ॥ ३ ॥

घर्मश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्यशिनां चैव पञ्चकर्मापचारिणाम् ॥ ४ ॥

घर्मादिभिरार्तत्वे द्रुतमविश्रम्य शीतांबुसेविनामिति योज्यम् । अजीर्णाशनमित्यामन्नं अध्यशनमित्याहारेऽपरिणते भुंजानानां, पंचकर्मापचारिणामिति पंचकर्मणि क्रियमाणेऽपचारः पंचकर्मापचारः ॥ ४ ॥

नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ।
माषमूलकपिष्टान्नगुडक्षीरतिलाशिनाम् ॥ ५ ॥
व्यवायं चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा ।
विप्रान्गुरून्धर्षयतां पापं कर्म च कुर्वताम् ॥ ६ ॥

व्यवायं चाप्यजीर्णे इति । विदग्धादिरूपेऽन्नेऽजीर्णे । पापकर्म च कुर्वतामिति पापकर्मणैव विप्रादिधर्षणे लब्धे पुनस्तद्वचनं विशेषहेतुत्वोपदर्शनार्थम् ॥ ५—६ ॥

वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ७ ॥
अतः कुष्ठा विजायन्ते सप्त चैकादशैव च ।
न चैकदोषजं किञ्चित्कुष्ठं समुपलभ्यते ॥ ८ ॥

वातादय इत्यादिना । वातादीनां त्रित्वे सिद्धेऽपि त्रय इति वचनं सर्वकुष्ठेषु त्रयाणामपि दुष्टिदर्शनार्थम् । द्रव्यसंग्रह इति कारणं संग्रहद्रव्याधारमारंभकं कारणमुच्यते, सप्तकं सर्वत्र सप्तकनियमार्थमुक्तमपि पुनरुच्यते । यद्यपि विसर्पाणामुत्पादे एतान्येव सप्तकारणानि, यदुक्तं—'रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः । विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः' इति । तथापि कुष्ठं चिरक्रियैः स्थिरैर्दोषैर्जन्यते । विसर्पस्तु विसरणशील इति विशेषः । अन्ये तु विसर्पा वातादिभिरेकैकशोऽपि भवन्तीत्याहुः । यदुक्तं—'पृथक् त्रयः त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रय' इति वचनाद्वर्णयंति । त्रिदोषत्वेऽपि विसर्पणानैकदोषजकुष्ठवत् । एकदोषतादिव्यपदेशस्तत्रोच्यते । सप्त चेति विशेषविच्छेदपाठेन सप्तानां कुष्ठानां महाकुष्ठत्वम् । एकादशानां च क्षुद्रकुष्ठत्वं बोधयति । निदानेनावहितानामपि क्षुद्रकुष्ठानामिह चिकित्सार्थं विधानम् ॥ ७—८ ॥

स्पर्शाज्ञत्वमतिस्वेदो न वा वैवर्ण्यमुन्नतिः ।
कोठानां लोमहर्षश्च कण्डूस्तोदः श्रमः क्लमः ॥ ९ ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
दाहः सुप्ताङ्गता चेति कुष्ठलक्षणमग्रजम् ॥ १० ॥

स्पर्शेत्यादि पूर्वरूपं, नवास्वेद इति संबन्धः अतिस्वेदास्वेदौ तु स्वेदवहस्रोतोऽवरोधानवरोधकृतौ ज्ञेयौ । शीघ्रोत्पत्तिश्चिरस्थितिश्च व्रणानामेव ॥ ९—१० ॥

अत ऊर्ध्वमष्टादशानां कुष्ठानां कपालोदुम्बरमण्डलर्ष्यजिह्वपुण्डरीकसिध्मकाकणकैककुष्ठचर्मकिटिभविपादिकालसकदद्रुचर्मदलपामाविस्फोटकशतारुर्विचर्चिकानां लक्षणानि उपदेक्ष्यामः ॥ ११ ॥

कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १२ ॥
कण्डूविदाहरुग्रागपरीतं लोमपिञ्जरम् ।
उदुम्बरफलाभासं कुष्ठमौदुम्बरं विदुः ॥ १३ ॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ १४ ॥
कर्कशं रक्तपर्यन्तमन्तः श्यावं सवेदनम् ।
यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ १५ ॥
सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधं च सदाहं च पुण्डरीकं तदुच्यते ॥ १६ ॥
श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।
अलाबुपुष्पवर्णं तत्सिध्मं प्रायेण चोरसि ॥ १७ ॥
यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति ॥ १८ ॥
इति सप्तमहाकुष्ठानि ।

कपालः खर्परपालः । विषमं दुश्चिकित्स्यम् । लोमपिंजरमिति कपिलम् । उत्सन्नमंडलमित्युद्गतमंडलम् । ऋष्यो नीलांडो हरिणः । तज्जिह्वाकारमिति ऋष्यजिह्वासंस्थानम् । प्रायश्चोरसीत्युरसि बाहुल्येन भवति श्लेष्मप्रधानत्वात् । कदाचिदन्यत्रापि भवतीति भावः । काकणंतिका गुंजा । कुष्ठत्वेनैव त्रिदोषलिंगत्वे सिद्धे पुनस्तद्वचनं प्रबलत्रिदोषलिंगत्वोपदर्शनार्थम् ॥ ११—१८ ॥

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।
तदेककुष्ठं चर्माख्यं बहलं हस्तिचर्मवत् ॥ १९ ॥
श्यावं किणखरस्पर्शं परुषं किटिभं स्मृतम् ।
वैपादिकं करे पादे स्फोटनं तीव्रवेदनम् ॥ २० ॥
सकण्डूकैः सरागैश्च गण्डैरलसकं स्मृतम् ।
सकण्डूरागपिडकं दद्रुमण्डलमुद्गतम् ॥ २१ ॥
रक्तं सकण्डु सस्फोटं सरुग्दलति चापि यत् ।
तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ॥ २२ ॥
पामाः श्वेतारुणाः श्यावाः पिडका कण्डुला भृशम् ।
श्वेताः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥
रक्तं श्यावं सदाहार्ति शतारुः स्याद्बहुव्रणम् ।
सकण्डूः पिडकाः श्यावा बहुस्रावा विचर्चिकाः ॥
इति एकादश क्षुद्रकुष्ठानि ।

महावास्त्विवति महास्थानं, मत्स्यशकलोपममिति मत्स्यत्वक्सदृशं, किणवत् खरस्पर्शो यस्य तत् किणखरस्पर्शं किणो व्रणस्थानम् ॥ १९—२४ ॥

वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे ।
पित्ते त्वौदुम्बरं विद्यात्काकणं तु त्रिदोषजम् ॥२५॥
वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके ।
ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठं च जायते ॥ २६ ॥
चर्माख्यमेककुष्ठं च किटिभं सविपादिकम् ।
कुष्ठं चालसकं ज्ञेयं प्रायो वातकफाधिकम् ॥ २७ ॥
दद्रुश्चर्मदलं पामा विस्फोटाश्च शतारुषः ।
पित्तश्लेष्माधिकाः प्रायः कफप्राया विचर्चिका ॥२८॥
सर्वं त्रिदोषजं कुष्ठं दोषाणां च बलाबलम् ।
यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया ॥ २९ ॥
दोषस्य यस्य पश्येत्कुष्ठेषु विशेषलिङ्गमुद्रिक्तम् ।
तस्यैव शमं कुर्यात्ततः परं चानुबन्धस्य ॥ ३० ॥

चिकित्सार्थं वाताद्याधिक्यं कुष्ठेष्वाह—वात इत्यादि । ऋष्यजिह्वादिषु वातपित्ताधिक्यादि यथासंख्यं ज्ञेयम् । उक्तैकदोषजत्वादिना कुष्ठेष्वविरोधं दर्शयन्नाह—सर्वमित्यादि । त्रिदोषजत्वं सर्वेषु कुष्ठेषु व्यवस्थितमेव । दोषबलाबलविवक्षया चिकित्सार्थया एकदोषजत्वादि व्यपदेश इति भावः ॥ अनुबंधस्येति अप्रधानस्य ॥ २५—३० ॥

कुष्ठविशेषैर्दोषा दोषविशेषैः पुनश्च कुष्ठानि ।
ज्ञायन्ते तैर्हेतुर्हेतुस्तांश्च प्रकाशयति ॥ ३१ ॥

संप्रति दुर्ज्ञातस्य कुष्ठविशेषस्य तथा कुष्ठजनकस्य च हेतोः परस्परविरोधकत्वमाह—कुष्ठविशेषैरित्यादि । कुष्ठविशेषैः कुष्ठं ज्ञात्वा कुष्ठा ज्ञायंते यैर्विशेषैस्ते कुष्ठविशेषास्तैर्वाताधिकोऽयं पैत्तिकोऽयमिति कुष्ठदोषे प्रतिज्ञाते दोषविशेषज्ञानात् विशिष्टानि कुष्ठानि ज्ञायंते यथा इदं वातोत्तरं कुष्ठं तस्मात्कापालमिदम् । पित्ताधिकत्वान्मंडलमिदमित्यादि । तथा यैः कुष्ठेष्वपरिज्ञातो हेतुस्स दोषैर्ज्ञायते । यथा कुष्ठं वातोत्तरं दृष्ट्वा वातोत्तरकुष्ठजनकानि रूक्षविरुद्धाशनादीनि कारणानि जायंते हेतुभिश्च दोषविशेषकुष्ठानि ज्ञायंते । यस्मादनेन वातोत्तरकुष्ठजनकं सेवितं तस्मादस्य वातोत्तरं कापालं कुष्ठं भविष्यतीति किंवा कुष्ठदोषयोरन्योन्यगमकत्वं तत्कार्यकारणतया परस्परगमकत्वादुपपन्नमिति दर्शयन्नाह—तैरिति तैः कुष्ठैः कार्यरूपैर्हेतुर्नामदोषः, अनुमीयते हेतुश्च दोषरूपस्यानकार्यरूपकुष्ठविशेषानवगमयतीत्यर्थः ॥ ३१ ॥

रौक्ष्यं शोषस्तोदः शूलं संकोचनं तथायासः ।
पारुष्यं खरभावो हर्षः श्यावारुणत्वं च ॥ ३२ ॥
कुष्ठेषु वातलिङ्गं दाहो रागः परिस्रवः पाकः ।
विस्रो गन्धः क्लेदस्तथाङ्गपतनं च पित्तकृतम् ॥३३॥
श्वैत्यं शैत्यं कण्डूः स्थैर्यं सोत्सेधगौरवस्नेहाः ।
कुष्ठेषु तु कफलिङ्गं जन्तुभिरभिभक्षणं क्लेदः ॥३४॥
सर्वैरेतैर्लिङ्गैर्युक्तं मतिमान्विवर्जयेदबलम् ।
तृष्णादाहपरीतं शान्ताग्निं जन्तुभिर्जग्धम् ॥ ३५ ॥
वातकफप्रबलं यद्यदेकदोषोल्बणं न तत्कृच्छ्रम् ।
कफपित्तवातपित्तप्रबलानि तु कृच्छ्रकुष्ठानि ॥ ३६ ॥

कुष्ठगतदोषज्ञानार्थं वातादिलिंगान्याह—रौक्ष्यमित्यादि । दाहादयः पित्तलिङ्गानि । चिकित्सानिवृत्त्यर्थं साध्यासाध्यकुष्ठान्याह—सर्वैरित्यादि ॥ ३२—३६ ॥

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रे ॥ ३७ ॥
वमनविरेचनयोगाः कल्पोक्ताः कुष्ठिनां प्रयोक्तव्याः ।
प्रच्छनमल्पे कुष्ठे मतं सिराव्यधनं महति च शस्तम् ॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥ ३९ ॥
स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रुधिरे ।
वायुर्हि शुद्धकोष्ठं कुष्ठिनमबलं विशति शीघ्रम् ॥४०

यथाक्रमं चिकित्सामाह—वातोत्तरेष्विति । अग्रे इति सर्पिरादिषु योज्यंते । नवातोत्तरादिषु योज्यंते । तेन वातोत्तरादिषु सर्पिः प्रथमं कर्तव्यम् । तदर्थं वक्ष्यमाणा चिकित्सा कार्या इति। बहुशः इति बहुवक्ष्यमाणार्थं स्तोकस्तोकनिर्हरणे पुनःपुनः शोध्यः । एकदाहि भूरिदोषहरणे बलक्षयो महात्ययः स्यात् । अत एवाह—दोषेत्यतिमात्रहृते इत्यादि । दोषे इति जातौ एकवचनं । तेन कफपित्तयोरपि ग्रहणम् । किंवा दोष इति एकवचनेनैव एकदोषस्याप्यतिमात्रहरणे वायुर्हन्यादिति । स्नेहस्य पानं ज्ञेयं । अशुद्धकोष्ठस्य व्याधिवर्धनं भवति । उक्तं हि—शेषदोषे व्याधिरतिवर्धते इति । शोधनेन तु निःशेषे दोषे कृते सशेषदोषता नास्ति ॥ ३७—४० ॥

दोषोत्क्लिष्टे हृदये वाम्यः कुष्ठेषु चोर्ध्वभागेषु ।
कुटजफलमदनमधुकैः सपटोलैर्निम्बरसयुक्तैः ॥४१॥
शीतरसः पक्वरसो मधूनि मधूकं च वमनानि ।
कुष्ठेषु त्रिवृता दन्ती त्रिफला च विरेचने शस्ता ॥४२
सौवीरकं तुषोदकमालोडनमासवांस्तु शीध्वादीन् ।
शंसन्त्यधोहराणां यथा विरेकं क्रमश्चेष्टः ॥ ४३ ॥
दार्वीबृहतीसेव्यैः पटोलपिचुमर्दमदनकृतमालैः ।
सस्नेहैरास्थाप्यः कुष्ठी सकलिङ्गयवमुस्तैः ॥ ४४ ॥
वातोल्बणं विरिक्तं निरूढमनुवासनमालक्ष्य ।
फलमधुकनिम्बकुटजैः सपटोलैः साधयेत्स्नेहम् ४५
दन्तीमधूकसैन्धवफणिज्जकः पिप्पली करञ्जफलम् ।
नस्यं स्यात्सविडङ्गं क्रिमिकुष्ठकफप्रदोषघ्नम् ॥४६॥

कुटजेत्यादिना वमनद्रव्याण्याह—शीतरसः शीतकषायः । यथा विरेकः क्रमः चेष्ट इति प्रधानमध्यावरशुद्ध्यपेक्षया पेयादिक्रमः द्विश एकशो वा कार्यः, उक्तंहि—'पेयाविलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकं । क्रमेण सेवेत नरोन्नकालान्प्रधानमध्यावरशुद्धिशुद्ध' इति । आस्थापनानुवासने यद्यपि नास्थाप्या कुष्ठिन इत्यादिना कुष्ठे निषिद्धे तथाप्यास्थापनानुवासनैकसाध्यायामवस्थायां कर्तव्ये एव । यदुक्तं—'प्रवृत्तिनिवृत्तिलक्षणसंयोगे गुरुलाघवं संप्रधार्य सम्यगधिगच्छे—'दिति । तेनाह वातोल्बणमित्यादि । आस्थापनानुवासनविधानं सेव्यम् ॥ ४१—४६ ॥

वैरेचनिकैर्धूमैः श्लोकस्थानेरितैश्च शाम्यन्ति ।
क्रिमयः कुष्ठकिलासाः प्रयोजितैरुत्तमाङ्गस्थाः ॥४७॥
स्थिरकठिनमण्डलानां स्विन्नानां प्रस्तरप्रणाडीभिः ।
कूर्चैर्विघट्टितानां रक्तोत्क्लेशोऽपनेतव्यः ॥ ४८ ॥
आनूपवारिजानां मांसानां पोट्टलैः सुखोष्णैश्च ।
स्विन्नोत्स्विन्नं विलिखेत्कुष्ठं तीक्ष्णेन शस्त्रेण ॥ ४९ ॥
रुधिरागमार्थमथवा शृङ्गालाबुभिराहरेद्रक्तम् ।
प्रच्छितमल्पं कुष्ठं विरेचयेद्वा जलौकाभिः ॥ ५० ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवेत्तेषाम् ॥ ५१ ॥

सूत्रस्थाने यद्यपि एकैव वैरेचनिको धूम उक्तस्तथापि तत्रोक्तद्रव्यैर्व्यस्तसमस्तैर्बहवो धूमा भवन्तीति बहुवचनमिह कृतम् । नाड्येव नाडी पुष्करनाडी स्वेदाध्याये उक्ता । कूर्चं शस्त्रविशेषमाह—रक्तोत्क्लेश उत्क्लिष्टं रक्तं स्विन्नत्वेनोत्स्विन्नम् । स्विन्नोत्स्विन्नम् । रुधिरागमार्थमुल्लिखेदिति संबंधः । निहृतोऽस्रदोषो येषां ते निर्हृतास्रदोषाः ॥ ४७—५१ ॥

येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनानि यानि स्युः ।
तेषु निपात्यः क्षारो रक्तं च दोषं च निःस्राव्य ॥५२॥
पाषाणकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।
पीतागदस्य कार्यो विषैः प्रदेहोऽगदैश्चानु ॥ ५३ ॥
स्तब्धानि सुप्तसुप्तान्यस्वेदकण्डुलानि कुष्ठानि ।
कूर्चैर्दन्तीत्रिफलाकरवीरकरञ्जनिम्बकुटजानाम् ५४
जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः समुद्रफेनैर्वा ।
घृष्टानि गोमयैर्वा ततः प्रलेपैः प्रदेह्यानि ॥ ५५ ॥
मारुतकफकुष्ठघ्नं कर्मोक्तं पित्तकुष्ठिनां कार्यम् ।
कफपित्तरक्तहरणं तिक्तकषायैः प्रशमनं च ॥ ५६ ॥
सर्पींषि तिक्तकानि च यच्चान्यद्रक्तपित्तनुत्कर्म ।
बाह्याभ्यन्तरमग्र्यं तत्कार्यं पित्तकुष्ठेषु ॥ ५७ ॥

न शस्त्रं क्रमत इति । सिरादिसंकटत्वान्न शस्त्रं योग्यं भवति । स्पर्शेन्द्रियनाशनानीति त्वगिन्द्रियहराणि सुप्तसुप्तानीति सुप्तवत् सुप्तानि अचेतनानि । सर्वथा स्पर्शाज्ञानीत्यर्थः । पित्तकुष्ठिनां रक्तपित्तहरादीनि कार्याणि इति योज्यम् ॥ सर्पींषि तिक्तकानि ॥ ५२—५७ ॥

दोषाधिक्यविभागादित्येतत्कर्म कुष्ठनुत्प्रोक्तम् ।
वक्ष्यामि कुष्ठशमनं प्रायस्त्वग्दोषसामान्यात् ॥५८॥
दार्वी रसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम् ।
अभया प्रयोजिता वा मासं सव्योषगुडतैला ॥५९॥

मूलं पटोलस्य तथा गवाक्ष्याः
पृथक्पलांशं त्रिफला त्रिवृच्च ।
स्यात्त्रायमाणा कटुरोहिणी च
भागार्द्धिका नागरपादयुक्ता ॥ ६० ॥

पलं तथैकं सह चूर्णितानां
जले शृतं दोषहरं पिबेद्वा ।
जीर्णे रसे धन्वमृगद्विजानां
पुराणशाल्योदनमाददीत ॥ ६१ ॥
कुष्ठानि शोफं ग्रहणीप्रदोष-
मर्शांसि कृच्छ्राणि हलीमकं च ।
षडात्रयोगेन निहन्ति चैव
हृद्बस्तिशूलं विषमज्वरं च ॥ ६२ ॥

दार्वीरसांजनं, दार्वीक्वाथकृतं रसाञ्जनं, अभयाप्रयोगो गुडतैलयोः कुष्ठनिदानत्वेनोक्तयोरपि संयोगमहिम्ना हरीतक्या समं प्रयोगो कुष्ठघ्नो भवति । मूलं पटोलस्येति । पटोलमूलम् तथा गवाक्ष्या अपि मूलं, पलांशः पलपरिमाणः । त्रिफला त्रिवृच प्रत्येकं पलांशाः । यद्यपि च महातिक्तोक्तं द्वितीयं पृथक् शब्देन त्रिफलायाः प्रत्येकं भागः सर्वत्र व्यवस्थापितः । तथापि तस्यैवार्थस्य द्योतनार्थं पुनः पृथक्त्वं ग्राहयति । किंवा त्रायमाणायाः कटुरोहिण्याः पृथक् भागार्धकत्वं दर्शयतिं । त्रिफलायास्तु प्रसंगत एव पृथग्भागग्रहणं सिद्धम् ॥ त्रायमाणा कटुरोहिण्याः प्रत्येकं षट्शाणमात्रं नागरस्य चोभयोरर्धभागपूरकत्वेनार्धपलापेक्षया चतुर्थपादद्वयेन चतुष्टयं भवति । एवं त्रायमाणा कटुरोहिणी नागरैः पलमेकं पटोलमूलादिभिः पंचपलानीति मिलित्वा षट्पलानि तथासत्येषां पटोलादीनां चूर्णीकृतानामिति जर्जरीकृतानां षट्पलानां पलमाकृष्य जले शृतं पिबेदेवं षड्दिनं प्रयोज्यम् । षड्दिनप्रयोगेणैवास्य प्रायः कुष्ठहरत्वादुन्नीयते । एतद्व्याख्यानसंमतिप्रदतंत्रांतराणीह लिख्यन्ते । तथाह्यग्निवेशः "पटोलमूलं त्रिफला विशाला च पलोन्मिता । पलार्धं त्रायमाणा च तथा कटुकरोहिणी । कर्षार्धं नागरं दत्त्वा षट्पलान्यवचूर्णयेत् । जले श्रृतं पिबेत्कोष्णं चूर्णस्यात्र पलं पलमि"त्यादि । तथा चक्षुष्येणाऽप्याह—"पटोलमूलं त्रिफला विशाला च पलांशिका ।" कटुका त्रायमाणा च पलार्धा पादनागरा । तस्मात् षड्भागमुत्क्वाथ्य जले दोषहरं पिबेदिति अन्ये तु व्याख्यानयन्ति यत् पलाशशब्देन कर्षं उच्यते । तेन पटोलमूलस्य पृथक्कर्षः, तथा गवाक्षामूलस्य कर्षः तथा त्रिफलायाः कर्षः । त्रायमाणा च नागरं पादयुक्ता सति भागार्धका कर्षप्रमाणा भवति । एवं कटुरोहिणी च नागरपादयुक्ता सति कर्षार्धा भवति । एवं मिलित्वा पलं चूर्णकृतं जले श्रृतं पिबेदिति । एतच्च तन्त्रान्तरे विरोधात् । तथा त्रिफलसमुदायभागस्य चान्यायसिद्धत्वान्नाति मधु । जतूकर्णे "पटोलमूलत्रिफलागवाक्षीत्रिवृतापलैः"। त्रायंती कटुका द्वाभ्यां कृत्वा नागरपादादिकं । चूर्णं पलं पिबेत्तस्माच्छृतमित्यादिवचनविरोधाज्जीर्णे रसे इत्यादि । विरेकेऽत्र रसभोजनं प्रयोगत्वात् धन्वमृगद्विजानां रसे शाल्योदनमाददीतेति ॥ ५८—६२ ॥

मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारुपञ्चमूले द्वे ।
सप्तच्छदनिम्बत्वक् सविशालश्चित्रको मूर्वा ॥६३॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वाज्यम् ।
श्रेष्ठं कुष्ठनिबर्हणमेतत्प्रायोगिकं भक्ष्यम् ॥ ६४ ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीदोषमर्शांसि ।
ब्रध्नभगन्दरपिडकाकण्डूकोठांश्च विनिहन्ति ॥६५॥
इति सर्वकुष्ठनाशकयोगः ।

त्रिफलातिविषाकटुकानिम्बकलिङ्गकवचापटोलानाम् ।
मागधिकारजनीद्वयपद्मकमूर्वाविशालानाम् ॥६६॥
भूनिम्बपलाशानां दद्याद्विपलं ततस्त्रिवृद्द्विगुणा ।
तस्याश्च पुनर्ब्राह्मी तच्चूर्णं सुप्तिनुत् परमम् ॥ ६७ ॥
इति सुप्तिकुष्ठे ।

नवनीतकप्रयोगो रसेन जात्याः समाक्षिकः परमः ।
सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥ ६८ ॥
गन्धकयोगसुवर्णमाक्षिकयोगादेव (?) ।
सर्वव्याधिविनाशनमद्यात्कुष्ठी रसं च निगृहीतम् ॥
वज्रं शिलाजतुसहितं सहितं वा योगराजेन ।
सर्वव्याधिहरणार्थमद्यात्कुष्ठी निगृह्य नित्यं च ॥७०॥
खदिरसुरदारुसारं श्रपयित्वा तद्रसेन तोयार्थम् ।
क्षौद्रप्रस्थे कार्यः कार्ये ते चाष्टपालिके च ॥ ७१ ॥
ततश्चायश्चूर्णानामष्टपलं प्रक्षिपेत्तथा मूलानि ।
त्रिफलैले त्वङ्मरिचं पत्रं कनकं च कर्षांशम् ॥७२॥
मत्स्यण्डिका मधुसमा तन्मांसमायसे भाण्डे ।
मध्वासवमाचरतः कुष्ठकिलासे शमं यातः ॥ ७३ ॥
इति मध्वासवः ।

खदिरकषायद्रोणं कुम्भे घृतभाविते समारोप्य ।
द्रव्याणि चूर्णितानि त्वष्टपलिकान्यत्र देयानि ॥७४॥
त्रिफलाव्योषविडङ्गरजनी-
मुस्ताटरूषकेन्द्रयवसौवर्णी च ।
तथा त्वक् छिन्नरुहा चेति
तन्मासं निदधीत धान्यमध्ये ॥ ७५ ॥
प्रातःप्रातः पिबेत्ततो युक्त्या
मासेन महाकुष्ठं हन्त्येवाल्पं तु ।
पक्षेणार्शःश्वासभगन्दरकासकिलासप्रमेहशोषांश्च ।
ना भवति कनकवर्णः पीत्वारिष्टं कनकबिन्दुम् ॥७६॥
इति कनकबिन्द्वरिष्टम् ।

तर्पणभागैरिति सक्तुभागैः प्रयोजितमिति सततोपयोज्यम् । त्रिफलेत्यादि योगं च पठंति । लिलिहकः पाषाणभेदः औत्तरापथिक उच्यत इति निघंटौ । 'आसीद्दैत्यो महाबाहुर्लिलिहानो महासुरः । योजनानां त्रयस्त्रिंशत् कायेनाच्छाद्य तिष्ठति । विष्णुचक्रेण संच्छिन्नो पपात धरणीतले । वसा तस्य समाख्याता

लिलीहक इति क्षितौ' इत्यादि । जाल्या इति आमलक्याः कार्ये ते चाष्टपालिके इति खदिरसुरदारुसारोक्तमाने मधुशर्कर इहापि ज्ञेयम् । सौवर्णीत्वग्दारुहरिद्रा ॥ ६३—७६ ॥

कुष्ठेष्वनिलकफकृतेष्वेवं पेयास्तथापि पित्तेषु ।
कृतमालक्काथश्चाप्येष विशेषात्कफकृतेषु ॥ ७७ ॥
त्रिफलासवश्च गौडः सचित्रकः श्वित्ररोगकुष्ठघ्नः ।
क्रमुकदशमूलदन्तीवराङ्गमधुयोगसंयुक्तः ॥ ७८ ॥
लघूनि चान्नानि हितानि विद्या-
त्कुष्ठेषु शाकानि च तिक्तकानि ।
भल्लातकैश्च त्रिफलैः सनिम्बै-
र्युक्तानि चान्नानि घृतानि चैव ॥ ७९ ॥
पुराणधान्यान्यथ जाङ्गलानि
मांसानि मुद्गाश्च पटोलयुक्ताः ।
शस्ता न गुर्वम्लपयोदधीनि
नानूपमत्स्या न गुडास्तिलाश्च ॥ ८० ॥

त्रिफलासवश्च गौड इत्यादौ गौड इति शर्करास्थाने गुडेन कृतः गौडः । हस्वक्रमुकं पूगफलं, वराङ्गं गुग्गुलुः, अत्र त्रिफलादीनां मानेऽनुक्तेऽपि आसवान्तरोक्तद्रव्यमानविभागेन मानं ग्राह्यम् । लघूनीत्यादिनाहारमाह ॥ ७७—८० ॥

एला कुष्ठं दार्वी शतपुष्पा चित्रकं विडङ्गं च ।
कुष्ठालेपनमिष्टं च रसाञ्जनाभया चैव ॥ ८१ ॥
चित्रकमेलां विम्बीं वृषकं त्रिवृदर्कनागरकम् ।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥ ८२ ॥
क्षारेण गवां मूत्रे घृतेन तेनास्य मण्डलान्याशु ।
भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥ ८३ ॥
मांसी मरिचं लवणं रजनी तगरं सुधागृहधूमः ।
मूत्रं पित्तं क्षारः पालाशः कुष्ठनुल्लेपः ॥ ८४ ॥
त्रपु सीसमयश्चूर्णं मण्डलनुत्फल्गु चित्रकं वृहती ।
गोधारसः सलवणं दारु च सूत्रं च मण्डलनुत् ८५
कदलीपलाशपाटलिनिचुलक्षाराम्भसा प्रसन्नेन ।
मांसेषु तोयकार्यं कार्यं पिष्टे च किण्वे च ॥ ८६ ॥
तैर्मोदकः सुजातः किण्वैर्जनितप्रलेपनं शस्तम् ।
मण्डलकुष्ठविनाशनमातपसंस्थे कृमिघ्नं च ॥ ८७ ॥
मुस्तं मदनं त्रिफला करञ्ज आरग्वधं कलिङ्गयवाः ।
दार्वी ससप्तपर्णा स्नानं सिद्धार्थकं नाम ॥ ८८ ॥
एष कषायो वमनं विरेचनं वर्णकस्तथोद्धर्षः ।
त्वग्दोषकुष्ठशोफप्रधानः पाण्डुरोगघ्नः ॥ ८९ ॥
कुष्ठं करञ्जबीजान्येडगजः कुष्ठसूदनो लेपः ।
प्रपुन्नाडबीजसैन्धवरसाञ्जनकपित्थलोध्राश्च ॥ ९० ॥
करवीरमूलकल्कः कुटजकरञ्जग्रोःफलत्वचोदार्व्योः ।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ९१ ॥

लोध्रस्य धातकीनां वत्सकबीजस्य नक्तमालस्य ।
कल्कश्च मालतीनां कुष्ठेषूद्वर्तनालेपः ॥ ९२ ॥
शैरीषीत्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि ।
पिष्टा च काकमाची चतुर्विधः कुष्ठनुल्लेपः ॥ ९३ ॥
इति चत्वारो लेपाः ।

एलेत्यादिना लेपानाह—विंबी ओष्ठफलोपमा, कुरवक इत्यनेन विलयंतीत्यपयांति । मांसेषु तोयकार्यमिति मांसप्रक्षालनादिपिष्टे च तोयकार्यं तथा किण्वे च तोयकार्यं क्षारांभसा कार्यमिति योज्यम् । अत्र मांसपिष्टाभ्यां किण्वं कार्यम् । किण्वैश्च मोदकः साधनीयः । मोदको जगलः सुजातः समजनितः प्रलेपनमिति योज्यम् । मुस्तमित्यादौ वर्णकमित्यालेपनं त्वग्दोषशब्देन गोवलीवर्दन्यायेन किलासव्यंगादीनां ग्रहणम् । कुष्ठमित्यादिको योगो ज्वरपिष्टको ज्ञेयः । तेनारग्वधीयोक्तकरंजैडगजं सकुष्ठं गोमूत्रपिष्टं च परः प्रदेहः । इत्यत्र गोमूत्रपिष्टत्वं विशेषतः । तेन न पौनरुक्त्यम् । उद्वर्तनमुन्मर्दावलेप इत्यादावुन्मर्दनमुद्वर्तनं ज्ञेयम् । शैरीषीत्वगादौ प्रत्येकद्रव्यकृतत्वेन चतुर्भिः प्रलेपो ज्ञेयः । अन्ये तु चतुर्भिरपि मिलितैरवचूर्णनोद्वर्तनजलपिष्टलेपनरसक्रियालेपनभेदेनेह चतुर्विधलेपं वदंति । एतच्च विधाचतुष्टयमन्यप्रयोगेष्वपि दृश्यते । तथाप्यालेपनसिद्धत्वान्नातिरमणीयम् ॥ ८१—९३ ॥

दार्व्या रसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य ।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥ ९४ ॥
इति षट्कषाययोगा निर्दिष्टाः सप्तमश्च तिनिशस्य ।
स्नाने पाने च मतास्तथाष्टमश्चाश्वमारस्य ॥ ९५ ॥
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः ।
तैलघृतपाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥ ९६ ॥
त्रिफलानिम्बपटोलमञ्जिष्ठा रोहिणी वचा रजनी ।
एष कषायोऽभ्यस्तो हिनस्ति कफपित्तजं कुष्ठम् ९७
एतैरेव च सर्पिः सिद्धं वातोल्वणं जयति कुष्ठम् ।
एष च कल्पो दृष्टः खदिरासनदारुनिम्बानाम् ॥ ९८ ॥

दार्व्या इत्यादौ दार्वीसंबंधिनो रसांजनस्यैको योगः । शेषास्तु षट्सप्तकस्तिनिशस्याष्टमोऽश्वमारस्य । अश्वमारस्तु यद्यपि मूलरवेनोक्तस्तथापि कुष्ठेषु विषमयोगस्यापि विहितत्वादसाधुः ॥ ९४—९८ ॥

कुष्ठार्कतुत्थकट्फलमूलकबीजानि रोहिणीकटुका ।
कुटजफलोत्पलमुस्तं वृहतीकरवीरकाशीसम् ॥ ९९ ॥
एडगजनिम्बपाठा दुरालभा चित्रको विडङ्गश्च ।
तिक्तेक्ष्वाकुबीजं कम्पिल्लकसर्षपवचा दार्वी ॥ १०० ॥
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष वा लेपः ।
उद्वर्तनं प्रघर्षणमवचूर्णनमेष एवेष्टः ॥ १०१ ॥
श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गश्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं संमतो भिषजाम् ॥ १०२ ॥
इति श्वेतकरवीराद्यं तैलम् ।

श्वेतकरवीरपल्लवमूलत्वक् वत्सकविडङ्गश्च।
कुष्ठार्कमूलसर्षपशिग्रुत्वग्रोहिणी कटुका ॥ १०३ ॥
एतैस्तैलं साध्यं कल्कैः पादांशिकैर्गवां मूत्रम्।
दत्त्वा तैलचतुर्गुणमभ्यङ्गः कुष्ठकण्डूघ्नः ॥ १०४ ॥

इति श्वेतकरवीरपत्राद्यं तैलम्।

तिक्तेक्ष्वाकुबीजं द्वे तुत्थे रोचना हरिद्रे द्वे।
बृहतीफलमेरण्डः सविशालश्चित्रको मूर्वा ॥१०५॥
काशीसहिङ्गुशिग्रुत्र्यूषणसुरदारुतुम्बुरुविडङ्गम्।
लाङ्गलकं कुटजत्वक् कटुकाख्या रोहिणी चैव१०६
सर्षपकल्कैरेतैर्मूत्रे चतुर्गुणे साध्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गान्मारुतकुष्ठघ्नं तैलम्।

इति तिक्तेक्ष्वाकुतैलम्।

कनकक्षीरीशैला भार्ङ्गी दन्त्याः फलानि मूलं च।
जातीफलानि प्रवालसर्षपलशुनविडङ्गं करञ्जत्वक्॥
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः।
गुञ्जैरण्डबृहतीमूलकसुरसार्जकफलानि ॥ १०९ ॥
कुष्ठं पाठा मुस्तं तुम्बुरुमूर्वावचाः सषड्ग्रन्थाः।
एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥११०॥
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासंज्ञः॥
सौराष्ट्रीकाशीशं दार्वीत्वक् सर्जिकालवणम्॥१११॥
कल्कैरेतैस्तैलं करवीरकमूलकपल्लवकषाये।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥११२॥
स्थाप्यं कटुकालाबुनि तत्सिद्धं तेनास्यमण्डलान्याशु
भिन्द्याद्विपगभ्यङ्गात्कृमींश्च कण्डूं विनिहन्यात्॥

इति कनकक्षीरीतैलम्।

कुष्ठं तमालपत्रं मरिचं समनःशिलं सकाशीसम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ ११४ ॥
तेनालिप्तं सिध्मं सप्ताहाद्व्येति तिष्ठतो घर्मे।
मासान्नवं किलासं स्नानं मुक्त्वा विशुद्धतनोः११५

इति सिध्मलेपः।

कुष्ठार्केत्यादि एतैस्तैलं सिद्धमित्यत्र तिलतैलं ज्ञेयम्। यत्र तु विशेषस्तत्र सार्षपं वा अन्ये तु कुष्ठेष्वालेपे सार्षपं ग्राहयंति। पाने तु विशेषानुक्ते तिलतैलमेव भवति। श्वेत करवीर इत्यादौ करवीरस्य गोमूत्रयोर्द्रवत्वं। श्वेतकरवीरेत्यादौ कल्कमानस्य च गोमूत्रमानमपि समानं। तुत्थेति कार्परिकातुत्थं। कनकक्षीरी स्वर्णक्षीरी। अर्वाक्पुष्पपामार्गावेति व्यपयाति। घर्मेत्यातपे, स्नानं मुक्त्वेति स्नानं वर्जयित्वा अयं प्रयोगः ॥ ९९—११५ ॥

सर्षपकरञ्जकोपातकीनां तैलान्यथेङ्गुदीनां च।
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य तैलानि११६

इति तैलानि।

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकस्तथा तुत्थम्।
एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः
क्षेप्यः समधूच्छिष्टो विपादिका नश्यति व्याप्ता।
चर्मैककुष्ठं किटिभं कुष्ठं शाम्यत्यलसकं च ॥११८॥

इति विपादिकायां तैलघृते।

किण्वं वराहरुधिरं पृथ्वीका सैन्धवं च लेपः स्यात्।
लेपो योज्यः कस्तुम्बुरूणि कुष्ठं च मण्डलनुत् ११९

इति मण्डलकुष्ठे लेपः।

सर्षपकरञ्जेत्यादिना कुष्ठेष्वनुपानसाधने सार्षपतैलादीनि देयानि इति दर्शयति। अन्ये तु कुष्ठेषु सामान्येन तैलाद्युक्तौ सार्षपादीन्येव देयानि। न तिलतैलमित्यनेन दर्शितं इति वर्णयन्ति। घृततैलपाकेति यमकपाकः। अत्र च सिद्धे स्नेहे क्षेप्ययोः सर्जरसमधूच्छिष्टयोरपि कल्कार्थं दत्तमंजिष्ठादिद्रव्याणां समानमानत्वं साहचर्याज्ज्ञेयम्। किंवा स्नेहादष्टमो भागः सर्जरसमधूच्छिष्टयोरन्यत्र दृष्टत्वात्। तथाहि समूलाग्रेरंडेत्यादौ द्विप्रस्थस्नेहपरिमाणे मधूच्छिष्टपलान्यष्टावुक्तानि ॥ ११६—११९ ॥

पूतिकादारुजटिला पक्वसुरा क्षौद्रमुद्गपर्ण्यौ च।
लेपः सकाकणासो मण्डलकुष्ठापहः सिद्धः ॥१२०॥

इति मण्डलकुष्ठे द्वितीयो लेपः।

चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च १२१
लाक्षारसाञ्जनैला पुनर्नवा चेति कुष्ठिनो लेपाः।
दधिमण्डयुताः सर्वे देयाः षण्मारुतकफघ्नाः॥१२२॥

इति षड्लेपः।

एडगजकुष्ठसैन्धवसौवीरकसर्षपैः कृमिघ्नैश्च।
कृमिकुष्ठमण्डलाख्यं दद्रुकुष्ठं च शममुपैति ॥१२३॥

इति एडगजादिलेपः।

एडगजः सर्जरसो मूलकबीजं च सिध्मकुष्ठानाम्।
काञ्जिकयुक्तं तु पृथग्ज्ञतमिदमुद्वर्तनं क्रमशो लेपाः॥

इति सिध्मकुष्ठे लेपः।

वासा त्रिफला पाने स्नाने चोद्वर्तने प्रलेपे च।
बृहती सेव्यपटोलाः सशारिवा रोहिणी चैव॥१२५॥
खदिराश्वघातककुभा रोहीतककुटजधवनिम्बाः॥
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥ १२६ ॥

इति कुष्ठे स्नानं पानं च।

जलवाप्यलोहकेशरपत्रप्लवचन्दनं मृणालानि।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ १२७ ॥
यष्ट्याह्वलोध्रपद्मकपटोलपिचुमन्दचन्दनरसाश्च।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः १२८

आलेपनं प्रियङ्गुर्हरेणुका वत्सकस्य च फलानि ।
सातिविषा च सेव्या सचन्दना रोहिणी कटुका ।
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ॥ १२९ ॥
इत्यभ्यङ्गः ॥
तैलैश्चन्दनमधुकप्रपुण्डरीकोत्पलयुतैश्चाभ्यङ्गः १३०
इति द्वितीयोऽभ्यङ्गः ।

पूतीत्यादौ पक्वासुरा गोरखकर्कटी । षण्मारुतकफकुष्ठघ्ना-इति किण्वं वराहरुधिरेत्याद्युक्ताः षड्भवन्ति । अन्ये चित्रकादीन्येव श्लोकपादोक्तान् षड् वर्णयंति । अवघातः कर्णिकाकारः रोहितको रोहिड इति ख्यातः । वाप्यं कुष्ठं लोहमगुरु छवं कैवर्तमुस्तकं भागोत्तराणि यथोत्तरमेकभागवृद्धानि ॥ रसा इति क्वाथाः, तैलैरिति चंदनादिभिः ॥ १२०—१३० ॥

क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके सचर्मदले ।
शीताः प्रदेहसेका व्यधनविरेचकौ घृतं तिक्तम् १३१
खदिरघृतं निम्बघृतं दार्वीघृतमुत्तमं पटोलघृतम् ।
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ॥ १३२ ॥
त्रिफलात्वचोऽर्धपलिकाः
पटोलपत्रं च कार्षिकाः शेषाः ।
कटुरोहिणी सनिम्बा
यष्ट्याह्वा त्रायमाणा च ॥ १३३ ॥
एष कषायः साध्यो दत्त्वा द्विपलं मसूराणाम् ।
सलिलाढकेऽष्टभागे शेषे पूतो रसो ग्राह्यः ॥ १३४ ॥
ते च कषायाष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ।
यावत्स्यादष्टपलं शेषं पेयं ततः कोष्णम् ॥ १३५ ॥
तद्वातपित्तकुष्ठं वीसर्पं वातशोणितं प्रबलम् ।
ज्वरदाहगुल्मविद्रधिविभ्रमविस्फोटकान्हन्ति ॥

खदिरघृतमित्यादौ खदिरादिभिर्घृतानि तत्र च खदिरस्य-सारं निंबस्य त्वक्, पटोलस्य च पत्रं, ग्राह्यं वृद्धव्यवहारात् । उक्तं च—'सारः स्यात्खदिरादीनां निंबादीनां त्वचं तथा, फलं तु दाडिमादीनां पटोलादेर्दलं तथा' । त्रिफलामिति निस्तुषमसूराणां न तु मसूरा विदला अत्र श्यामा उक्तं हि जतूकर्णे—पुंलिंगेन मसूरविदलात्पलमिति । अष्टभागे इति षोडशपलेऽत्र एवान्ते कषायाष्टपले इति प्रथमादिवचनांतं षोडशपलमाह । अत्र चाष्टविंशत्युत्तरपलशतमानस्याष्टभागशेषे, षोडशपलानि भवन्ति । तच्च द्रवषोडशपलमष्टपलशब्देनाकृतद्वैगुण्यमेवोच्यते । पलोपरि द्रवद्वैगुण्यं स्यात्तदा षोडशपलेन द्वात्रिंशत्पलानि स्युः । न चेह भागशेषे द्वात्रिंशत्पलार्धं किंतु षोडशपलत्वमेव तेनैतत्स्यादष्टपलशब्देनाकृतद्वैगुण्याद्द्रवषोडशपलग्रहणं तु नोन्नीयते । यत्पलोल्लेखनाद्द्वैगुण्यं नास्ति किंतु कुडवादावेव द्रवद्वैगुण्यमिहानुमतम् । तन्त्रान्तरेऽपि संमतमिति यावत्स्यादष्टपलमित्यनेन कषायचतुःपलेन संभूतस्याष्टपलं स्थाप्यं दर्शयति येषा च मात्रा कुष्ठिनां भूरिमात्रद्रव्यसाध्यत्वेनोत्तमा ज्ञेया ॥ १३१—१३६ ॥

निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्यादर्द्धपलांशं पर्पटकं त्रायमाणां च ॥ १३७ ॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत्पूते ।
चन्दनकिराततिक्तकमागधिकात्रायमाणां च ॥ १३८
मुस्तं वत्सकबीजं कल्कीकृत्यार्द्धकार्षिकान्भागान् ।
नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥ १३९ ॥
कुष्ठज्वरगुल्मार्शो ग्रहणीपाण्ड्वामयश्वयथुहारि ।
वीसर्पपिण्डकपामाकण्डूमदगण्डजुत्तिक्तम् ॥ १४० ॥
इति तिक्तषट्पलकं घृतम् ।

निंबमित्यादिना तिक्तषट्पलकमाह—सर्पिश्चाप्यनवं हितमिति वचनस्य बाधकमिह योगमहिम्ना सर्पिषो नवत्वं ज्ञेयम् । प्रथमं सर्पिष इति पदं मानार्थं द्वितीयं तु घृतमिति पदं पेयत्वोपदर्शनार्थम् ॥ १४० ॥

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥ १४१
धन्वयवासं चन्दनमुपकुल्यां पद्मकं रजन्यौ च ।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥ १४२ ॥
वत्सकबीजं यासं मूर्वाममृतं किराततिक्तं च ।
कल्कान्कुर्यान्मतिमान्यष्ट्याह्वां त्रायमाणां च ॥
कल्कस्य चतुर्भागे जलमष्टगुणं रसोऽमृतवलानाम् ।
द्विगुणो घृतात्प्रदेयस्तत्सर्पिः पाययेत्सिद्धम् ॥ १४४ ॥
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्पमम्लपित्तं वातासृक्पाण्डुरोगं च ॥ १४५ ॥
विस्फोटकान्सपामानुन्मादं कामलां ज्वरं कण्डूम् ।
हृद्रोगं गुल्मपिडकामसृग्दरं गण्डमालां च ॥ १४६ ॥
हन्यादेतत्सर्पिः पीतं काले यथाबलं सद्यः ।
योगशतैरप्यजितान्महाविकारान्महातिक्तम् ॥ १४७ ॥
इति महातिक्तकं घृतम् ।

सप्तच्छदमित्यादि । महातिक्तघृतमाह—शम्याक आरग्वधः । कल्कस्य चतुर्भागेति घृताच्चतुर्थो भागः । एतच्च सामान्यपरिभाषासिद्धमिति स्पष्टार्थमुच्यते, अमृतवलानामिति गुडूचीवलानामत्रापि त्रिसर्पिर्वचनैकं कल्कादिभागार्थं, द्वितीयं पेयत्वोपदर्शनार्थं, तृतीयकं महातिक्तकसंज्ञादर्शनार्थम् ॥ १४१—१४७ ॥

दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने ।
स्नेहे च कालयुक्ते न कुष्ठमनुवर्तते साध्यम् ॥ १४८ ॥
खदिरस्य तुलाः पञ्च शिंशपाशणयोस्तुले ।
तुलार्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥ १४९ ॥
पर्पटः कुटजश्चैव वृषः कृमिहरस्तथा ।
हारिद्रो कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥ १५० ॥

सप्तपर्णश्च सक्षुण्णो दशद्रोणेषु वारिणः ।
धात्रीरसं च तुल्यांशं सर्पिषश्चाढकं पचेत् ॥१५१॥
अष्टभागावशेषं तु कषायमवतारयेत् ।
महातिक्तककल्कैस्तु यथोक्तैः पलसंमितैः ॥ १५२॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ।
महाखदिरमित्येतत्परं कुष्ठविकारनुत् ॥ १५३ ॥
इति महाखदिरं घृतम् ।
प्रपतत्सु लसीकाप्रस्रुतेषु गात्रेषु जन्तुजग्धेषु ।
मूत्रं निम्बविडङ्गे स्नानं पानं प्रदेहश्च ॥ १५४ ॥
वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च ।
स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ॥ १५५॥
इति वा कृमिकुष्ठे
पानाहारविधाने प्रसेचने धूपने प्रदेहे च ।
कृमिनाशनं विडङ्गं विशिष्यते कुष्ठहृत् खदिरः॥१५६
इति वा कृमिकुष्ठे ।
एडगजः सविडङ्गो मूलान्यारग्वधस्य कुष्ठानाम् ।
उद्दालनं श्वदन्ता गोऽश्ववराहोष्ट्रदन्ताश्च ॥ १५७॥
एडगजः सविडङ्गो रजनीद्वयराजवृक्षमूलं च ।
कुष्ठोद्दालनमग्र्यं सपिप्पलीपाकलं योज्यम् ।
श्वित्राणां प्रशमार्थं प्रयोक्तव्यं सर्वतो विशुद्धानाम् ॥

खदिरस्य तुलेत्यादिकं केचिदनार्षं वदंति । साधयेदित्यत्र सर्पिरिति शेषः । तत्र तु घृतमानानुक्तौ क्वाथशेषस्याढकाधिकद्रोणस्य नियतत्वात् । तत्क्वाथचतुर्थभागप्रस्थाधिकाढकमात्रघृतं साध्यम् । न कुष्ठमनुवर्तत इति । साध्य एवेत्यर्थः । कुष्ठः खदिर इति हन्तृत्वेन खदिरश्च द्रवांतरेषु विशिष्यते । प्रकर्षवान्भवंतीत्यर्थः । श्वदंता इति कुक्कुरदंताः उद्दालनमिति । प्रशमनं पाकलं कुष्ठम् ॥ १४८—१५८ ॥

श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ।
तं पीत्वा सुस्निग्धो यथाबलं सूर्यपादसंतापम् १५९
सेवेत विरिक्तश्च त्र्यहं पिपासुः पिबेत्पेयाम् ।
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान्भिन्द्यात् ॥
स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत्पक्षम् ।
मलयूमशनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ॥
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ।
यच्चान्यत्कुष्ठघ्नं श्वित्राणां सर्वमेव तच्छस्तम् ।
खदिरोदकसंयुक्तं खदिरोदकपानमग्र्यम् ॥ १६२ ॥
सुमनःशिलं विडङ्गं काशीसं रोचनां कनकपुष्पीम् ।
श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् ॥१६३॥
इति श्वित्रे लेपः ।
कदलीक्षारयुतं वा खरास्थिदग्धं

गवां रुधिरयुक्तम् ।
हस्तिमदाध्युषितं वा मालत्याः क्षारकक्षारम् १६४
इति लेपः ।
नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा ।
मूलकबीजावल्गुजलेपः पिष्टो गवां मूत्रे ॥ १६५ ॥
इति द्वौ लेपौ ।
काकोदुम्बरिका वासा वल्गुजचित्रकौ गवां मूत्रे ।
पिष्टा मनःशिला वा संयुक्ता बर्हिपित्तेन ॥ १६६ ॥
इति वा द्वौ लेपौ ।
किलासहन्तामूलान्यवल्गुजानि लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः काललोहरजः ॥ १६७ ॥
इति श्वित्रे प्रलेपः ।
"शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च शक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥१६८॥
दारुणं चारुणं श्वित्रं किलासं नामभिस्त्रिभिः ।
विज्ञेयं त्रिविधं तच्च त्रिदोषं प्रायशश्च तत् ॥१६९॥
दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते ।
मेदःश्वेतं श्रितं श्वित्रे गुरुतच्चोत्तरोत्तरम् ॥ १७० ॥
यत्परस्परतोऽभिन्नं बहु यद्रक्तलोमवत् ।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति ॥ १७१ ॥
वचांस्यतथ्यानि कृतघ्नभावो
निन्दा सुराणां गुरुधर्षणं च ।
पापक्रिया पूर्वकृतं च कर्म
हेतुः किलासस्य विरोधि चान्नम् ॥ १७२ ॥
भवन्ति चात्र ।
हेतुर्द्रव्यं लिङ्गं समासतो दोषनिर्देशात् ।
साध्यासाध्यं कृच्छ्रं कुष्ठापहाश्च ये योगाः ॥ १७३ ॥
सिद्धाः किलासहेतुर्लिङ्गं गुरुलाघवं शान्तिः ।
इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाशनेऽध्याये ।
स्मृतिबुद्धिवर्धनार्थं शिष्याय हुताशवेशाय ॥१७४॥

इति चरकसंहितायां चिकित्सितस्थाने
सप्तमोऽध्यायः ॥ ७ ॥

त्वग्दोषाधिकारानुषंगात्त्वग्दोषविशेषस्य श्वित्रस्य चिकित्सामाह—श्वित्राणामित्यादि । नन्वपररोगाणां निदानमभिधाय चिकित्सोच्यते श्वित्रस्य तु प्रथमं चिकित्सा । अत्र कोऽभिप्राय उच्यते येयं कुष्ठचिकित्सोक्ता सा त्वग्दोषाणामपि हन्त्रीति श्वित्रस्योच्यते तेन सा चिकित्सा श्वित्राणां सविशेषं प्रयोक्तव्या । यदेतत्कुष्ठोद्दलनमुक्तं नाशने । तत् श्वित्राणां सविशेषगाढतरं कर्तव्यमित्यर्थः । सर्वतो विशुद्धानामिति वमनादिभिः शुद्धानां मलयू काकोदुंबरिका । श्वित्रेऽङ्गे इति

श्वित्रयुक्तेऽङ्गे कनकपुष्पी सुवर्णक्षीरी । मालत्याः क्षारकक्षारमिति मालतीमुकुलक्षारं, क्षारको मुकुल उच्यते । अंजने द्वे सौवीररसांजनकं च कस्यचिदेव प्रशाम्यति इत्यनेन श्वित्राणां दुरुपगमतामाह—नामभिरित्युक्तदारुणादिभिरेव । प्रायःशब्देनैकदोषं द्विदोषं च भवति दोष इत्यादिनोक्तं त्रैविध्यं विभजति सुश्रुते तु ।

इत्युक्तं न घनकुष्ठवद्रक्तादिकुष्ठलक्षणकारकं श्वित्रमित्यभिप्रायेणोक्तम् । इह तु यद्रक्ताद्याश्रयित्वं श्वित्रस्योच्यते तद्रक्तादिदोषमात्राभिप्रायेण । रक्तगतदोषं कुष्ठलक्षणकारितया तेनात्रापि त्वङ्मात्रविकृतिकारकत्वं श्वित्रस्य संमतमेवेति न विशेषः । रक्तमित्यादिना साध्यकिलासलक्षणमाह—वचांसीत्यादिना । वाङ्मानसं पापं कर्मोक्तम् । पापक्रियेत्यनेन जन्मांतरकृतमधर्मं ग्राहयति । हेतुर्द्रव्यमिति संग्रहश्लोकः । येषु येषु कपालादिषु ये ये वाऽधिकाः दोषास्तेषां निर्देशः दोषनिर्देशः । रौक्ष्यतोद इत्युक्तं दोषलिंगं । गुरुलाघवमिति श्वित्रं गुरुतश्चोत्तरोत्तरमित्यनेनोक्तं ॥ १५९—१७४ ॥

॥ इतिं श्रीचक्रदत्तकृतायामायुर्वेददीपिकायां कुष्ठचिकित्सितं समाप्तम् ॥

---

## अष्टमोऽध्यायः ।

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्यामः ।
"दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥ १ ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥ २ ॥
दुहितॄणामसंभोगाच्छेषाणां च प्रजापतेः ।
क्रोधो निःश्वासरूपेण मूर्तिमान् निःसृतो मुखात् ३
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान् ।
भार्यार्थं प्रतिजग्राह न च सर्वास्ववर्तत ॥ ४ ॥
गुरुणा तमवध्यातं भार्यास्वसमवर्तिनम् ।
रजोऽन्धमबलं दीनं यक्ष्मा शशिनमाविशत् ॥ ५ ॥
सोऽभिभूतोऽतिगुरुणा गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥ ६ ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान्सोमस्ततोऽश्विभ्यां चिकित्सितः॥७
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः ।
तेजसा वर्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥८॥
क्रोधो यक्ष्मा ज्वरो रोग एकोऽर्थो दुःखसंज्ञितः ।
यस्मात्स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः ॥९॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः ।
लब्ध्वा चतुर्विधं हेतुं समाविशति मानवान् ॥१०॥

त्रिदोषज्वरसामान्यात्कुष्ठमनु राजयक्ष्मचिकित्सितमुच्यते । उन्मादापस्मारौ दक्षाध्वरध्वंसोत्पन्नावपि आगंतुत्वात्पश्चादुक्तौ । दिवौकसामित्यादिना प्रागुत्पत्त्यादिलक्षणं दर्शयति । प्रागुत्पत्त्या धातुक्षयो राजयक्ष्मणः प्रधानं कारणं तथा भार्यास्वसमवर्तितस्याधर्मश्च कारणं भवतीति दृश्यते । कामव्यसनसंयुक्ता स्त्री पुंसंगसंबंधा । देहे स्नेहपरिक्षयादिति । देहसारक्षयात्स्नेहशब्देनहि सारवाचिना शुक्रौजसी ग्राह्ये । अवध्यातमिति क्रोधेन चिंतितम् । गुरुक्रोधेनेति यक्ष्मरूपेण शुभां मतिं बुद्ध्वेति स्वापराधजनितमात्मनः क्षयं बुद्ध्वा चंद्रमसः स्वभावदोषपरिहारार्थं शुद्धां बुद्धिं ज्ञात्वा विमुक्तग्रह इति ग्रहेण यक्ष्माख्येन विमुक्तः, सत्त्वं मनःशुद्धमिति निर्दोषम् ॥ १—१० ॥

अयथाबलमारम्भं वेगसन्धारणक्षयम् ।
यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम् ॥ ११ ॥

अयथाबलमारंभादियक्ष्महेतुत्रये विहाररूपतया भिन्नजातीयत्वाद्विषमाशनं चतुर्थं पृथक् पठितम् । निर्देशादेव चतुष्के लब्धे चतुर्थमिति पदं साहसादीनां प्रधानानां बहुत्वेऽपि चतुर्विधानतिक्रमोपदर्शनार्थम् ॥ ११ ॥

युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः ।
पतनैरभिघातैर्वा साहसैर्वा तथा परैः ॥ १२ ॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते ।
वायुः प्रकुपितो दोषावुदीर्योभौ विधावति ॥ १३ ॥
स शिरःस्थः शिरःशूलं करोति गलमाश्रितः ।
कण्ठोद्ध्वंसं च कासं च स्वरभेदमरोचकम् ॥ १४ ॥
पार्श्वशूलं च पार्श्वस्थो वर्चोभेदं गुदे स्थितः ।
जृम्भां ज्वरं च सन्धिस्थ उरस्थश्चोरसो रुजम्॥१५॥
क्षणनाच्चोरसो रक्तं कासमानः कफानुगम् ।
जर्जरेणोरसा कृच्छ्रमुरःशूली निरस्यति ॥ १६ ॥
इति साहसिको यक्ष्मा रूपैरेतैः प्रपद्यते ।
एकादशभिरात्मज्ञो भजेत्तस्मान्न साहसम् ॥ १७ ॥

निदानोक्तमपि राजयक्ष्महेत्वादि पुनः प्रकरणवशात्किंचिन्निदानोक्तविशेषविधित्सयोच्यते । उक्तं कारणचतुष्कं प्रपंचयति युद्धेत्यादि । सहसा शक्तिमनालोच्य यानि क्रियंते तानि साहसानि । कफपित्तक्षणनादिव्याधिना रक्तकफनिष्ठीवमेकमेवलक्षणमुरः शूलातिपीडित इत्यनेनोच्यते । शूल—उरोरुक् रक्तनिष्ठीवनविशेषणेनैव एकादशरूपत्वं पूर्यते ॥ १२—१७ ॥

ह्रीमत्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥ १८ ॥

तदा वेगप्रतीघातात्कफपित्ते समीरयन्।
ऊर्ध्वं तिर्यगधः कुर्याद्विकारान्कुपितोऽनिलः ॥१९॥
प्रतिश्यायं च कासं च स्वरभेदमरोचकम्।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्दनम् ॥ २० ॥
अङ्गमर्दं मुहुश्छर्दिर्वर्चोभेदं त्रिलक्षणम्।
रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥ २१ ॥

ह्रीमत्त्वादित्यादिना वेगसंधारणजमाह—वर्चोभेदं त्रिलक्षणमपि त्रिदोषलिंगमित्यर्थः पृथग्वातादिजनितम् १८—२१

ईर्ष्योत्कण्ठाभयत्रासक्रोधशोकातिकर्षणात्।
व्यवायानशनाभ्यां च शुक्रमोजश्च हीयते ॥ २२ ॥
ततः स्नेहक्षयाद्वायुर्वृद्धो दोषानुदीरयन्।
प्रतिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् ॥ २३ ॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम्।
करोति चांससन्तापमेकादशमिहाङ्गहृत् ॥ २४ ॥
लिङ्गान्यावेदयन्त्येतान्येकादश महागदम्।
संप्राप्तं राजयक्ष्माणं क्षयात्प्राणक्षयप्रदम् ॥ २५ ॥

ईर्ष्येत्यादिना धातुक्षयजमाह। ओज इति। रस. रसेऽप्योजःशब्दो वर्तते यदुक्तं—मलीभवति तत्प्रायः कल्पते किंचिदोजसे इति। किंवा ओजो देहस्य सारम् स्नेहः क्षयादिति देहसारशुक्रौजःक्षयात्। क्षयात्प्राणक्षयप्रदमित्यत्र क्षयहेतुत्वात्क्षयात्प्राणक्षयावहमिति वा पाठः ॥ २२—२५ ॥

विविधान्यन्नपानानि वैषम्येण समश्नतः।
जनयन्त्यामयान्घोरान्विषमान्मारुतादयः ॥ २६ ॥
स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः।
रुध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः ॥२७॥
प्रतिश्यायं प्रसेकं च कासं छर्दिमरोचकम्।
ज्वरमंसाभितापं च छर्दनं रुधिरस्य च ॥ २८ ॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि वा।
कफपित्तानिलकृतं लिङ्गं विद्याद्यथाक्रमम् ॥ २९ ॥
इति व्याधिसमूहस्य रोगराजस्य हेतुजम्।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥ ३० ॥

विविधानीत्यादिना विषमाशनजमाह—वैषम्येणेति। प्रकृतिकरणादिअष्टविधाहारवैषम्यात्। अतिप्रवृद्धा वातादयो विषमेणोन्मार्गेण गताः रुधिरादीनां स्रोतांसि रुध्वा यक्ष्मरूपाय कल्पंते इति योजना। यथाक्रममिति प्रथमश्लोकार्धविहितं कफकृतं द्वितीयश्लोकार्धविहितं पित्तकृतं शेषं तु वातकृतम्। अत्र प्रत्येकं एकादशलक्षणपाठेन एकादशलक्षणयोगेनैव राजयक्ष्मणः संपूर्णत्वं प्रायो भवतीति दर्शयति। यत्तु षड्लक्षणत्वं त्रिलक्षणत्वं वा यक्ष्मणो वक्ष्यति। तत्संपूर्णलक्षणस्यैव ज्ञेयम्। न तु शेषाणाम्। अथ अयथावलमारंभादिभेदेन चातुर्विध्यकथनेन तान्येव लक्षणानि सर्वत्र भवंति। तथाच सर्वेऽपि त्रिदोषजास्तेनैकरूपत्वाभिधानं युक्तम्। उक्तं च शल्ये—'एकप्रदेशानामेकत्रसांनिध्यात्तत्र क्रियायां चाविभागेन प्रायेणे'त्यायनेन न। 'एक एवमनःशोषः सन्निपातात्मको गद' इतीहापि चोक्तम्। सर्वेत्रिदोषजो यक्ष्मा इत्याद्येवं हेतुना लक्षणेन चतुर्णामपि भेदात् भिन्न एव इति युक्तम्। अत्र हेतवोऽयथावलमारंभादयः उक्ता एव लिंगं न भिन्नं साहसजं, कंठोध्वंस उरोरुक् जृंभा च ॥ वेगसंधारणजे च अंगमर्दं मुहुश्छर्दिस्तथा वर्चो भेदस्त्रिलक्षणः। अन्यत्र हि वर्चोभेदस्त्रिलक्षणो न भवति। क्षयजे श्वासशूलसंतापाः। विषमाशने छर्दनं रुधिरस्य, साहसजे प्रतिश्यायाभावः। शोषे तु प्रतिश्याय इत्यादिलक्षणभेदः। चिकित्सितभेदस्तु असाधारणलक्षणे कृत एव तस्माद्भेदो यक्ष्मणामेव तंत्रांतरे स्थूलदृष्ट्या भेद उक्तः। सूक्ष्मचिंतायां त्वयमेव भेदो युक्त्या ज्ञेयः। पुनश्च इत्यादिना दोषलक्षणानि वक्ष्यति तत्सामान्येन यक्ष्मणः प्रायोभाविलक्षणम्। चतुर्ष्वपि समुच्चित्योक्तमिति ज्ञेयम्। तेन न पुनरुक्तम् ॥ २६—३० ॥

पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम्।
अदोषेष्वपि भावेषु काये वीभत्सदर्शनम् ॥ ३१ ॥
घृणित्वमश्नतश्चापि वलमांसपरिक्षयः।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥ ३२ ॥
मक्षिकाघुणकेशानां तृणानां पतनानि च ॥
प्रायोऽन्नपाने केशानां नखानां चाभिवर्धनम् ॥३३॥
पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम्।
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम् ॥३४॥
जलाशयानां शैलानां वनानां ज्योतिषामपि।
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम् ॥ ३५ ॥

संप्रति चतुर्णामपि साधारणं पूर्वरूपमाह—पूर्वरूपमित्यादि। प्रतिश्यायश्च रूपे पठितः। तेन प्रतिश्यायः पूर्वरूपपूर्वरूपांतरसहिते रूपमिति विशेषः। न चैक एव प्रतिश्यायः पूर्वरूपार्थोऽपि व्याध्यवस्थायां वर्तमानत्वादिष्टं भवति। पूर्वरूपाणि सर्वाणीत्यादिना सर्वपूर्वरूपाणां रूपानुवर्तनाख्याधौ रिष्टं युक्तम् ॥ काये वीभत्सदर्शनमिति विकृतिदर्शनम्। मक्षिकादीनां पतनानि अन्नपाने च योज्यम्। पतत्र्यादिभिरभिधर्षणं स्वप्ने ज्ञेयम्। पतत्रिणः पक्षिणः, श्वापदा व्याघ्रादयः केशास्थिराशीनामित्यादौ यच्चादर्शनमित्यन्तेन स्वप्ने इत्यनुवर्तते ॥ ३१—३५ ॥

प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः।
रूपं तस्य यथोद्देशं परं शृणु सभेषजम् ॥ ३६ ॥
यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुना ॥३७॥

स्रोतसां संनिरोधाच्च रक्तादीनां च संक्षयात् ।
धातूष्मणां चापचयाद्राजयक्ष्मा प्रवर्तते ॥ ३८ ॥
तस्मिन्काले पचत्यग्निर्यदन्नं कोष्ठमाश्रितम् ।
मलीभवति तत्प्रायः कल्पते किंचिदोजसे ॥ ३९ ॥
तस्मात्पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः ।
सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ॥ ४० ॥
रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विवर्धते ।
स ऊर्ध्वं कासवेगेन बहुरूपः प्रवर्तते ॥ ४१ ॥

संप्रति यक्ष्मरूपाणि प्रपंचेन व्याख्यातुमाह—रूपं तस्येत्यादि । प्रपंचेन कथयिष्यामि रूपव्याकरणे कर्तव्ये यक्ष्मणः शरीरधातुपोषणविरोधकस्य धातुपोषणविरोधोपदर्शनार्थमाह—यथास्वेनेत्यादि । यथा स्वेनोष्मणा त्रयोदशविधेन, धातुः पुष्यति धातुनेति रसेन धातू रक्तादिरूपः किंवा क्रम परिणामपक्षे रसेन रक्तं रक्तेन मांसं पुष्यतीति ज्ञेयम्, एवं धातुपोषणक्रमं दर्शयित्वा यक्ष्मणि तद्विरोधमाह—स्रोतसामित्यादि । सन्निरोधादिति यक्ष्मकारकदोषेण निरुद्धत्वाद्रक्तादिसंक्षयोऽपि स्रोतोरोधात्तथा पोषकरसाप्रावल्याच्च ज्ञेयः । धातूष्मापचयोऽपि धातुक्षयाद्दोषप्रभावाच्च ज्ञेयः । यदा धातोः पोषकरसहानिर्भवति तदा तस्मिन्नित्याद्योजसे इति सारभागाय रसायेति यावत् । विशेषाद्राजयक्ष्मणेति वचनेनान्येषामपि दुर्बलानां पुरीषं रक्ष्यमिति सूचयति । विड्बलमिति विडाधारं यच्चापि रसबलमुपपद्यते तच्च धातून्न पुष्णाति । किंतु स्वस्थानेऽपि दह्यते । स्वस्थानस्थ इति हृदयस्थः ॥ ३६—४१ ॥

जायन्ते व्याधयश्चातः षडेकादशधा पुनः ।
येषां संघातयोगेन राजयक्ष्मेति कल्प्यते ॥ ४२ ॥
कासोंऽसतापो वैस्वर्यं ज्वरः पार्श्वशिरोरुजौ ।
शोणितश्लेष्मणोश्छर्दिः श्वासः कोष्ठामयोऽरुचिः४३
रूपाण्येकादशैतानि यक्ष्मिणः षडिमानि वा ।
कासो ज्वरः पार्श्वशूलं स्वरवर्चो गदोऽरुचिः॥४४॥
सर्वैरर्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ४५

सर्वैरित्येकादशभिरर्धैरिति पङ्क्तिरेकादशस्य ज्येष्ठभागपरिग्रहात् षडेषामर्धं भवति । दृष्टा चैषा विधा यथा त्रिंशन्मता स्नेहानिरूहान्तरिताश्च षट्स्युरित्यनेनोक्तः । त्रिभिरित्यादि त्रीणि यक्ष्मणो रूपाणि ज्ञेयानि शृंगग्राहिकया निर्देशात् । अन्ये तु अंसपार्श्वाभितापश्चेत्यादिवक्ष्यमाणं लक्षणत्रयं वर्तयंति । केचित्तु अंसपार्श्वाभितापश्चेत्यादिकं यक्ष्मसंबंधं क्षयलक्षणं वदंति । अन्यथेति बलमांसयोगेऽसति ॥ ४२—४५ ॥

घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा ।
मारुताध्मातशिरसो मारुतं श्यायते प्रति ॥ ४६ ॥
प्रतिश्यायस्ततो घोरो जायते देहकर्षणः ।
तस्य रूपं शिरःशूलं गौरवं घ्राणविप्लवः ॥ ४७ ॥
ज्वरः कासः कफोत्क्लेशः स्वरभेदोऽरुचिः क्लमः ।
इन्द्रियाणामसामर्थ्यं यक्ष्मा चातः प्रवर्तते ॥ ४८ ॥
पिच्छिलं बहलं विस्रं हरितं श्वेतपीतकम् ।
कासमानो रसं यक्ष्मी निष्ठीवति कफानुगम् ॥४९॥
अंसपार्श्वाभितापश्च तापः पादकरस्य च ।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ ५० ॥

प्रतिश्यायं विवृणोति—घ्राणविप्लवो गंधाग्राणादिरूपः । यक्ष्मा चातः प्रजायत इत्यनेनोक्तलक्षणप्रतिश्यायस्यैव पूर्वरूपतां सूचयति । स ऊर्ध्वकासरूपवेगेन बहुरूपः प्रवर्तते यदुक्तं यक्ष्मरूपं तद्विवृणोति, पिच्छिलमित्यादि । राजयक्ष्मणे क्षयस्य विशिष्टं लक्षणमाह—अंशेत्यादिलक्षणं राजयक्ष्मण इति ॥ ४६—५० ॥

वातात्पित्तात्कफाद्रक्तात्कासवेगात्सपीनसात् ।
स्वरभेदो भवेद्वाताद्रूक्षः क्षामश्चलः स्वरः ॥ ५१ ॥
तालुकण्ठपरिप्लोषः पित्ताद्वक्तुमसूयते ।
कफान्मन्दो विबद्धश्च स्वरः खुरुखुरायते ॥ ५२ ॥
सद्यो रक्तविबन्धत्वात्स्वरः कृच्छ्रात्प्रवर्तते ।
कासातिवेगात्करुणः पीनसात्कफवातिकः ॥ ५३ ॥
पार्श्वशूलं त्वनियतं संकोचायामलक्षणम् ।
शिरःशूलं ससंतापं यक्ष्मिणः स्यात्सगौरवम् ॥५४॥

स्वरभेदं विभजते—वक्तुमसूयत इति वक्तुं नेच्छति । खुरखुरायते इति खुरखुरशब्दं करोति सन्नोऽवसन्नः । कपण इति कंठं कर्षति हिनस्तीति यावत् । पार्श्वशूलं त्वनियतमिति न संकोचरूपेण नियतम् । कदाचिदायामरूपं कदाचित्संकोचरूपं न सर्वदा भाविशिरःशूलत्वेन वायुम् । ससंतापत्वेन पित्तम् । सगौरवत्वेन श्लेष्माणमेवं त्रिदोषजन्यत्वं ज्ञेयम् ॥ ५१—५४ ॥

अतिखिन्ने शरीरे तु यक्ष्मिणोः विषमाशनात् ।
कण्ठात्प्रवर्तते रक्तं श्लेष्मा चोत्क्लिष्टसंचितः ॥५५॥

सरक्तं कफमस्यतीति यदुक्तं तल्लक्षणं विवृणोति । अतिखिन्न इति । अभितः सन्नोऽवसन्नः । अभिष्यन्द इति पाठपक्षेऽभिष्यंदगृहीत इत्यर्थः ॥ किंत्वभिपूर्वं स्पंदतेः कथं रूपसिद्धिर्भवतीति चिंतनीया । संचितोत्क्लिष्टमिति वक्तव्ये पूर्वनिपातनियमादुत्क्लिष्टसंचित इति कृतम् ॥ ५५ ॥

रक्तं विबद्धमार्गत्वान्मांसादीन्नानुपद्यते ।
आमाशयस्थमुत्क्लिष्टं बहुत्वात्कण्ठमेति वा ॥ ५६ ॥
वातश्लेष्मविबन्धत्वादुरसः श्वासमृच्छति ।
दोषैरुपहते चाग्नौ सपिच्छमतिसार्यते ॥ ५७ ॥

केवलरुधिरच्छर्दनेन युक्तं विवृणोति । रक्तमित्यादि । विबद्धमार्गत्वादिति रक्तस्य मांसाद्यभिगमे यो मार्गः तन्निरोधात् मांसादभिगच्छद्रक्तं मांसाशये एव कृताधिष्ठानं प्रस्रवणजलमिव विबद्धमार्गत्वाद्बहु भवति । बहुत्वेनोत्क्लिष्टं द्वारान्तरागमनात्कंठेनेति । एवं रक्तस्य पोषकरसेनासंबंधात् क्षीयमाणस्यामाशये एव बहुत्वं ज्ञेयम् । तेन रक्तादीनां च संक्षयादित्यनेन रक्तक्षयो य उक्तः स उपपन्न एव॥५६–५७॥

**पृथग्दोषैः समस्तैर्वा जिह्वाहृदयसंश्रितैः ।**
**जायतेऽरुचिराहारैर्द्विष्टैरर्थैश्च मानसैः ॥ ५८ ॥**

रोगाधिकारे पंचभक्तस्यानशनस्थानानीति । वातपित्तकफद्वेषायासा इत्यनेन यद्यपि त्रिदोषजारुचिर्नोक्ता तथापि चिकित्सार्थं द्वन्द्वजगुल्मवत् त्रिदोषजारुचिरुच्यते । वक्ष्यति–चतुरोऽरोचकान्हन्युः वाताद्येकजसर्वजानिति । इयं च त्रिदोषजारुचिः प्रकृतिसमवायाख्या तेन रोगाधिकारे प्रत्येकदोषजारुचिर्गृहीतैव । प्रकृतिसमसमवायारब्धत्वेनैव त्रिदोषजारुचेः पृथक् लक्षणं नोक्तम् । अतो वातादिलक्षणमेलक एव तस्याः लक्षणम् ॥ ५८ ॥

**कषायतिक्तमधुरैर्विद्यान्मुखरसैः क्रमात् ।**
**वाताद्यैररुचिं जातां मानसीं दोषदर्शनात् ॥ ५९ ॥**

कषायमुखरसता वातजायां तिक्तमुखरसता पैत्तिकायां मधुरमुखरसता कफजायाम् । त्रिदोषजायां तु त्रिदोषमुखतोज्ञेया । दोषदर्शनादिति द्विष्टदर्शनात् ॥ ५९ ॥

**अरोचकात्कासवेगाद्दोषोत्क्लेशाद्भयादपि ।**
**छर्दिर्या सा विकाराणामन्येषामप्युपद्रवः ॥ ६० ॥**

छर्दिं विभजतेऽरोचकादित्यादि । विकाराणामन्येषामपि । उपद्रव इत्येवंभूता छर्दिर्न यक्ष्ममात्रनियता किंत्वन्येषामपि विकाराणामेवंभूता छर्दिर्भवति । किंवा एवंभूता या छर्दिः सा भवति । तथा रोचकादिभ्य उत्थिताच्छर्दिरन्येषामपि हिक्काराजयक्ष्मादीनामुपद्रवो भवतीत्यर्थः ॥ ६० ॥

**सर्वस्त्रिदोषजो यक्ष्मा दोषाणां तु बलाबलम् ।**
**परीक्ष्यावस्थितं वैद्यः शोषिणं समुपाचरेत् ॥ ६१ ॥**
**प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये ।**
**पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु ६२**
**पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च ।**
**परिषेकावगाहांश्च यावकं वाट्यमेव च ॥ ६३ ॥**
**लवणाम्लकटूष्णांश्च रसान्स्नेहोपसंहितान् ।**
**लावतित्तिरिदक्षाणां वर्तकानां च कल्पयेत् ॥ ६४ ॥**

संप्रति सर्वेषां यक्ष्मणां सामान्यरूपं त्रिदोषजत्वं प्रतिपाद्य दोषबलाबलभेदेन च भेदं सूचयित्वा सामान्यां च विशेषां च चिकित्सां सूचयन्नाह—सर्व इत्यादि । विविधा इति भिन्नाः साधारणीत्यनेनाभिन्नाश्च शृण्विति योज्यम् । तत्र विविधाः प्रत्येकं पीनसादिविहिता ज्ञेयाः । साधारणीस्तु षडंगरसादिरूपा साधारणविहिता ज्ञेया ॥ ६१—६४ ॥

**सपिप्पलिकं सयवं सकुलत्थं सनागरम् ।**
**दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥ ६५ ॥**
**तेन षड्विनिवर्तन्ते विकाराः पीनसादयः ।**
**मूलकानां कुलत्थानां यूषैर्वा सूपकल्पितैः ॥ ६६ ॥**
**यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत् ।**
**पिबेत्प्रसादं वारुण्या जलं वा पाञ्चमूलिकम् ॥६७॥**
**धान्यनागरसिद्धं वा तामलक्याथ वा शृतम् ।**
**पर्णिनीभिश्चतसृभिस्तेन चान्नानि कल्पयेत् ॥ ६८ ॥**
**कृशरोत्कारिकामाषकुलत्थयवपायसैः ।**
**संकरस्वेदविधिना कण्ठं पार्श्वमुरः शिरः ॥ ६९ ॥**
**स्वेदयेत्पत्रभङ्गेण शिरश्च परिषेचयेत् ।**
**बलागुडूचीमधुकशृतैर्वा वारिभिः सुखैः ॥ ७० ॥**
**वस्तमत्स्यशिरोभिर्वा नाडीस्वेदैः प्रयोजयेत् ।**
**कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः ॥७१॥**
**औदकानूपमांसानि सलिलं पाञ्चमूलिकम् ।**
**सस्नेहमारनालं वा नाडीस्वेदं प्रयोजयेत् ॥ ७२ ॥**

सपिप्पलकमित्यादिके रसे यवागूसाधनवद्द्रव्यादिमानं ज्ञेयम् । मांसमानं तु पलानि द्वादश सूपसंस्कृतैरिति सुष्ठूपसंस्कृतैस्तेनेति पंचमूल्यादिसंस्कृतजलेन तिलतण्डुलमात्रैस्तु कृशरा ज्ञेया । पत्रभंगक्काथेन पत्रभंगाश्च वातहरपल्लवाः । सवातिकैरिति तन्त्रातरे तु वातिकान्युत्तरवातिकानि च गुणेनपठितानि । यथाबिल्वाग्निमंथकाश्मर्य श्रेयसी पाटला बला । शालपर्णी पृश्निपर्णी बृहती कंटकारिका । वर्धमानं मूलकं च वातिन्यवतारयेत् । कारमर्दबदरं बिल्वं कुलत्थान् शुष्कमूलकान् । श्वदंष्ट्रावेणुपर्णी च साश्वगंधा ॥ ६५—७२ ॥

**जीवन्त्याः शतपुष्पाया बलाया मधुकस्य च ।**
**वचाया वेशवारस्य विदार्या मूलकस्य च ॥ ७३ ॥**
**औदकानूपमांसानामुपनाहाश्च संस्कृताः ।**
**शस्यन्ते च चतुःस्नेहाः शिरःपार्श्वांसशूलिनाम् ७४**
**शतपुष्पा समधुकं कुष्ठं तगरचन्दनम् ।**
**आलेपनं स्यात्सघृतं शिरःपार्श्वांसशूलनुत् ॥ ७५ ॥**

ऋष्यप्रोक्ता गुडूची च मधुकं शिग्रुरेव च । यवाग्वाश्च यच्चान्यत्किंचिदौषधम् । सर्वमेतद्विजानीयाद्भिषगुत्तरवातिकमिति । नाडीस्वेदं प्रयोजयेदिति नाडीस्वेदं यथायोग्यतया प्रयोजयेत् । जीवंत्यादीनां प्रत्येकमुपनाहा ज्ञेयाः । वेसवारो यथा—'अनस्थिपिशितं पिष्टं स्विन्नं गुडघृतान्वितं । कृष्णामरीचसंयुक्तं वेसवार इति स्मृतः' इति ॥ ७३—७५ ॥

**बला रास्ना तिलाः सर्पिर्मधुकं नीलमुत्पलम् ।**
**पलङ्कषा देवदारु चन्दनं केशरं घृतम् ॥ ७६ ॥**

वीरा बला विदारी च कृष्णगन्धा पुनर्नवा।
शतावरी पयस्या च कच्चूर्णं मधुकं घृतम् ॥ ७६ ॥
चत्वार एते श्लोकार्धैः प्रदेहाः परिकीर्तिताः।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम्॥७८॥
नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः।
तैलान्यभ्यङ्गयोगानि वस्तिकर्म तथा परम् ॥ ७९ ॥

पलंकषा गुग्गुलुः। सक्षीरकाकोली शिरःपार्श्वांसशूलिनां शस्ता इति योज्यम् ॥ ७६—७९ ॥

जलौकालाबुशृङ्गैर्वा प्रदुष्टं व्यधनेन वा।
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत् ॥ ८० ॥
प्रदेहः सघृतश्चेष्टः पद्मकोशीरचन्दनैः।
दूर्वामधुकमञ्जिष्ठाकेशरैर्वा घृताप्लुतैः ॥ ८१ ॥
प्रपौण्डरीकनिर्गुण्डीपद्मकेशरमुत्पलम्।
कशेरुकाः पयस्या च ससर्पिष्कं प्रलेपनम्॥ ८२ ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा।
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ॥ ८३ ॥
माहेन्द्रेण सुशीतेन चन्दनादिशृतेन वा।
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया ॥ ८४ ॥
इति संशमनी क्रिया।

शृंगालाबुजलौकोभिरित्यत्र पित्तदुष्टे जलौका कफ दुष्टे रक्तेऽलाबु ज्ञेयं। यदुक्तं—'पित्ताचितं जलौकोभिरलाब्वा तु कफान्वितम्। शोणितं वातदुष्टं तु विषाणेनाशु निर्हरे'दिति। व्यधनं तु सिराव्यधरूपम् ॥ ८०—८४ ॥

दोषाधिकानां वमनं शस्यते सविरेचनम्।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम् ॥ ८५ ॥
शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि।
अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते ॥ ८६ ॥
योगात्संशुद्धकोष्ठानां कासे श्वासे स्वरक्षये।
शिरःपार्श्वांसशूलेषु सिद्धानेतान्प्रयोजयेत् ॥ ८७ ॥
बलाविदारिगन्धाद्यैर्विदार्या मधुकेन वा।
सिद्धं सलवणं सर्पिर्नस्यं स्यात्स्वर्यमुत्तमम् ॥ ८८ ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला।
क्षीरं सर्पिश्च तत्सिद्धं स्वर्यं स्यान्नावनं परम् ॥८९॥
शिरःपार्श्वांसशूलघ्नं कासश्वासनिबर्हणम्।
प्रयुज्यमानं बहुशो घृतं चोत्तरभक्तिकम् ॥ ९० ॥

यन्न कर्षणमित्यनेन मृदुवमनविरेचनं यन्न कर्षणाय इति दर्शयति। प्रपौण्डरीकमित्यादि क्षीरं द्रवम्। ये तु क्षीरं सर्पिरित्येकपदेन पठंति ते क्षीरोत्थं सर्पिर्जलेनैव पाचयन्ति। घृतं चोत्तरभक्तिकमित्युक्तमेव घृतं भक्तोत्तरं शिरःशूलहरं भवति ॥ ८५—९० ॥

दशमूलेन पयसा सिद्धं मांसरसेन च।
बलागर्भं घृतं सद्यो रोगानेतान्प्रबाधते ॥ ९१ ॥
भक्तस्योपरि मध्ये वा यथाग्नि प्रविचारितम्।
रास्नाघृतं वा सक्षीरं सक्षीरं वा बलाघृतम् ॥९२॥
लेहान्कासापहान्स्वर्यान्श्वासहिक्कानिबर्हणान्।
शिरःपार्श्वांसशूलघ्नान्स्नेहांश्चातःपरं शृणु ॥ ९३ ॥
घृतं खर्जूरमृद्वीकाशर्कराक्षौद्रसंयुतम्।
सपिप्पलीकं वैस्वर्यकासश्वासनिबर्हणम् ॥ ९४ ॥
दशमूलशतात्क्षीरात्सर्पिर्यदुदियान्नवम्।
सपिप्पलीकं सक्षौद्रं तत्परं स्वरबोधनम् ॥ ९५ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम्।
पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियाद्घृतम् ॥ ९६ ॥

दशमूलेत्यत्रावांतरसाहचर्याद्यथा बलाया एव कल्के दशमूलस्य क्वाथो ज्ञेयः॥ किंवा दशमूलेन पयसेति पाठः। तेन दशमूलसिद्धेन क्षीरेणेत्यर्थः। रास्नाघृतं वा रास्नाक्षीरं रोगानेतान्प्रबाधत इति योजना। तथा बलाघृतं च क्षीरं च प्रबाधते इति योजना। कासे वक्ष्यमाणं बलाघृतं च वातरक्ते वक्ष्यमाणं तत्क्षीरेण महोत्पलमेतान्रोगान् प्रबाधत इत्याचार्यो वक्ष्यति। सपिप्पलीकं सक्षौद्रमित्यत्र पिप्पलीक्षौद्रयोः प्रक्षेप्यत्वं ज्ञेयम्। पंचभिः पंचमूलैर्वा यद्धृतमुदियात्तत्सपिप्पलीकं सक्षौद्रं स्वरबोधनमित्यादि योजना ॥ ९१—९६ ॥

पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे।
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ॥ ९७ ॥
खर्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा।
त्रिफला पिप्पली मुस्तं शृङ्गाटीगुडशर्कराः ॥ ९८ ॥
वीरा शटी पुष्कराख्यं सुरसः शर्करा गुडः।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥९९॥
श्लोकार्धविहितानेतांल्लिह्यान्मधुसर्पिषा।
कासश्वासापहान्स्वर्यान्पार्श्वशूलापहांस्तथा ॥१००॥

पंचानामित्यादिना योगांतरमाह—क्षीरचतुर्गुण इति। क्षीरेण समं घृतम् पंचानां पंचमूलीनां रसचतुर्गुणेन पंचमूलक्वाथस्त्रिगुणः घृतसमं च क्षीरं ज्ञेयम्। उक्तं हि जतूकर्णे दशमूलशृतक्षीराज्जातं सर्पिर्नवं च पिप्पलीमधुयुक्तं यत्, पंचपंचमूलक्वथितादुत्थितं च यत्। क्वथिततुल्यपयस्के पक्वमिति सप्तकं स्वरबोधनमित्यादि फलश्रुतौ यक्ष्माणं सप्तकं बलम्। इत्यनेन ये सप्तगदाः पठितास्ते ज्ञेयास्तेषु च हिक्का पठिता सा च राजयक्ष्मलक्षणेषु यद्यपि न पठिता तथाप्युपद्रवरूपा ज्ञेया। पुष्कराख्यं पुष्करमूलं ॥ ९७—१०० ॥

सितोपलां तुगाक्षीरीं पिप्पलीं बहुलां त्वचम् ।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥ १०१ ॥
चूर्णितं प्राशयेद्वा तच्छ्वासकासकफातुरम् ।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ॥१०२॥
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्ध्वगे ।
वासासर्पिः शतावर्या सिद्धं वा परमं हितम्॥१०३॥

सितोपलादावन्त्यादूर्ध्वं द्विगुणितमित्यन्त्यायास्त्वच एकोभागः बहुलाया भागद्वयं, पिप्पल्या भागचतुष्टयम् । तुगाक्षीरं वंशलोचनानुकारि पार्थिवं द्रव्यम् । तस्याष्टभागाः सितोपलायास्तु षोडश । ऊर्ध्वशब्देन चेहातीतोच्यते । विवक्ष्यमाणा ऊर्ध्वाधोभागस्य स्थानात्तेन क्वचित् ऊर्ध्वमित्यादावपगतोऽपि ऊर्ध्वशब्दश्चरति । हस्तेत्यादिकं वक्ष्यमाणवासाघृतं रक्तपित्तोक्तं च । योनिव्यापच्चिकित्सितवक्ष्यमाणं च ॥ १०१—१०३ ॥

दुरालभां श्वदंष्ट्रां च चतस्रः पर्णिनीर्बलाम् ।
भागान्पलोन्मितान्कृत्वा पलं पर्पटकस्य च ॥१०४॥
पचेद्दशगुणे तोये दशभागावशेषिते ।
रसे सुपूते द्रव्याणामेषां कल्कान्समावपेत् ॥१०५॥
शट्याः पुष्करमूलस्य पिप्पलीत्रायमाणयोः ।
तामलक्याः किरातानां तिक्तस्य कुटजस्य च १०६
फलानां शारिवायाश्च सुपिष्टान्कर्षसंमितान् ।
ततस्तेन घृतप्रस्थं क्षीरद्विगुणितं पचेत् ॥ १०७ ॥
ज्वरं दाहं भ्रमं कासमंसपार्श्वशिरोरुजम् ।
तृष्णां छर्दिमतीसारमेतत्सर्पिरपोहति ॥ १०८ ॥

इति गोक्षुराद्यघृतम् ।

श्वदंष्ट्राद्ये पचेद्दशगुणे तोये इत्यनेन घृताद्दशगुणतोयेनेति ज्ञेयम् । द्रव्याद्दशगुणतोयेन क्वाथस्याल्पत्वं स्यात् । प्रस्थघृतात्तु दशगुणतोये दशभागावशिष्टे प्रस्थमानत्वं कषायस्य भवति तच्च जतूकर्णानुमतम् ॥ १०४—१०८ ॥

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम्॥१०९॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीं च समं पिष्ट्वा घृतं वैद्यो विपाचयेत्॥११०॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ १११ ॥
बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम् ।
साधयित्वा रसे तस्मिन्पयो गव्यं सनागरम् ॥११२
द्राक्षा खर्जूरसर्पिः पिप्पल्या च शृतं सह ।
सक्षौद्रं ज्वरकासघ्नं स्वर्यं चैतत्प्रयोजयेत् ॥ ११३ ॥
आजस्य पयसश्चैव प्रयोगो जाङ्गला रसाः ।
यूषार्थे चणका मुद्गा मकुष्ठश्चोपकल्पिताः ।
ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः ११४

जीवन्त्यादि पूर्वयोगोक्तं क्षीरयुक्तमेव द्रवमिच्छन्ति । टीकाकृतास्तु बहवो जलमेव द्रवं पठंति । अत्र क्षीरे क्वाथकल्कसाध्ये चतुर्गुणक्षीरात्क्वाथ्यादिद्रव्यं चाष्टभागेन ज्ञेयम् । मधुकं प्रक्षेपार्थे योज्यम् ॥ १०९—११४ ॥

यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ।
कफप्रसेके बलवान् श्लैष्मिकश्छर्दयेन्नरः ॥ ११५ ॥
पयसा फलयुक्तेन मधुरेण रसेन वा ।
सर्पिष्मत्या यवाग्वा वा वमनीयोपसिद्धया ॥११६॥
स वान्तोऽद्याच्च लघ्वन्नमन्नकाले सदीपनम् ।
यवगोधूममाध्वीकशीध्वरिष्टसुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफं जयेत्॥११७
श्लेष्मणोऽतिप्रसेके तु वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान्स्निग्धोष्णेनैव निर्जयेत् ॥११८॥
क्रिया कफप्रसेके या वम्यां सैव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥ ११९॥
प्रायेणोपाहताग्नित्वात्सपिच्छमतिसार्यते ।
प्राप्नोत्यास्यस्य वैरस्यं न चान्नमभिनन्दति ॥ १२० ॥
तस्याग्निदीपनान्योगानतीसारनिबर्हणान् ।
वक्त्रशुद्धिकरान्कुर्यादरुचिप्रतिबाधकान् ॥ १२१ ॥
सनागरानिन्द्रयवान्पिबेद्वा तण्डुलाम्बुना ।
सिद्धां यवागूं जीर्णे च चाङ्गेरीतक्रदाडिमैः ॥१२२॥
पाठां बिल्वं यमानीं च पातव्यं तक्रसंयुतम् ।
दुरालभां शृङ्गवेरं पाठां च सुरया सह ॥ १२३ ॥
जम्ब्वाम्रमध्यं बिल्वं च सकपित्थं सनागरम् ।
पेयामण्डेन पातव्यमतीसारनिवृत्तये ॥ १२४ ॥
एतानेव च योगांस्त्रीन्पाठादीन्कारयेत्खडान् ।
ससूपधान्यान्सस्नेहान्साम्लान्संग्रहणान्परान् १२५
वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः ।
श्रीपर्ण्या मदयन्त्याश्च यूथिकायाश्च पल्लवान्॥१२६॥
चाङ्गेर्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत् ॥
खडान्दधिसरोपेतान्ससर्पिष्कान्सदाडिमान् १२७
मांसानां लघुपाकानां रसाः सांग्राहिकैर्युताः ।
व्यञ्जनार्थे प्रशस्यन्ते भोज्यार्थे रक्तशालयः ॥ १२८ ॥
स्थिरादिपञ्चमूलेन पाने शस्तं शृतं जलम् ।
तक्रं सुरा सचुक्रिका दाडिमस्याथवा रसः ॥ १२९ ॥
दीपनं ग्राहि निर्दिष्टं भेषजं भिन्नवर्चसे ।
परं मुखस्य वैरस्यनाशनं रोचनं शृणु । १३० ॥

ज्वराणामित्याद्यावस्थिकं विधिमाह—वामनीयानि मदनफलादीनि । सदीपनमिति दीपनशुण्ठ्यादि साधितम् । वम्यां सैव प्रशस्यत इत्यत्र कफप्रसेको द्विविधः स्वतंत्रः कफकृतः तथा वातपराधीनोक्तः । एवं छर्दिमपि द्विधा विभज्य कफप्रसेकक्रियानुसारेण श्लेष्मप्रधानायां वमनादि । वातप्रधानायामस्निग्धसेवानुरूपा सा क्रिया शस्यत इति योज्यम् । खडो व्या-

कृतः। अन्येऽपि वदंति—'पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः। मूलैश्च तिलकल्काम्लप्रायः कांबलिकः स्मृत' इति। चुक्रिकेति चुक्रचुक्रासवरित्यर्थः॥ ११५—१३०॥

द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनम्।
तद्वत्प्रक्षालयेदास्यं धारयेत्कवलग्रहान्॥ १३१॥
पिवेद्धूमं ततोभृष्टमद्याद्दीपनपाचनम्।
भेषजं पानमन्नं च हितमिष्टोपकल्पितम्॥ १३२॥
त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकं त्वचम्।
दार्वी त्वचो यमानी च पिप्पल्यस्तेजवत्यपि॥१३३॥
यमानी तिन्तिडीकं च पञ्चैते सुखधावनाः।
श्लोकपादेषु विहिता रोचना मुखशोधनाः॥१३४॥
गुलिकां धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम्।
एषामालोडितानां वा धारयेत्कवलग्रहान्॥ १३५॥
सुरामाध्वीकसीधूनां तैलस्य मधुसर्पिषोः।
कवलान्धारयेदिष्टान्क्षीरस्येक्षुरसस्य च॥ १३६॥
यमानीं तिन्तिडीकं च नागरं साम्लवेतसम्।
दाडिमं बदरं चाम्लं कार्षिकं चोपकल्पयेत्॥१३७॥
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम्।
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च॥ १३८॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचकम्॥ १३९॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत्॥ १४०॥
इति यमानीषाडवम्।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा।
यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके॥ १४१॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम्॥ १४२॥
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम्।
वम्यतीसारशूलघ्नमूर्ध्ववातानुलोमनम्॥ १४३॥
कल्पयेद्गुटिकां चैव चूर्णं पक्त्वा सितोपलैः।
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः॥१४४॥
इति तालीसाद्यं चूर्णं गुटिकाश्च।

द्वौ कालाविति सायंप्रातः। अथवा पवनैरिति करंजककरवीरादिभिस्तिक्तकटुकैस्तद्वदिति तिक्तकटुकृतैर्जलैः। तेजवति चविका, मुखशोधना इति मुखगतदोषशोधना इति यवानीखाडवं, वरांगकं त्वक्, पिप्पलीनां शतमिति। तालीसाद्ये शुभा इति विशेषणं पिप्पल्याः। उक्तं हि हारीते—'तालीशमरिचं शुंठी पिप्पल्योऽक्षांशको भवाः। त्वगेलार्धांशके दद्यात् शर्कराष्टपलं भवे'दित्यादि। तथा जतूकर्णः तालीसमरिचनागरकृष्णाः कर्षो त्वगेलेऽर्धांशे द्विकुडवसितं गुटिका विपाच्यतामिति त्वगेलयोरर्धभागत्वं। गुडिकापक्षे समजलेन गुडिकाः कुर्वंति वृद्धाः॥ १३१—१४४॥

"शुष्यते क्षीणमांसाय कल्पितानि विधानवित्।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः॥ १४५॥
शोषिणे बर्हिणं दद्याद्बर्हिशब्देन चापरान्।
गृध्रानुलूकांश्चाषांश्च विधिवत्सूपकल्पितान्॥१४६॥
काकांस्तित्तिरिशब्देन वर्मिशब्देन चोरगान्।
भृष्टान्मत्स्यान्त्रशब्देन दद्याद्गण्डूपदानपि॥ १४७॥
लोमशान्स्थूलनकुलान्बिडालांश्चोपकल्पितान्।
शृगालशावांश्च भिषक् शशशब्देन दापयेत्॥१४८॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवंविधांस्तथा।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये॥१४९॥
गजखड्गितुरङ्गाणां वेशवारकृतान्भिषक्।
दद्यान्महिषशब्देन मांसं मांसाभिवृद्धये॥ १५०॥
मांसेनोपचिताङ्गानां मांसं मांसकरं परम्।
तीक्ष्णोष्णलाघवाच्छस्तं विशेषान्मृगपक्षिणाम्॥१५१
मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत्।
तेषूपधा सुखं भोक्तुं तथा शक्यानि तानि हि॥ १५२
जानञ्जुगुप्सन्नैवाद्याज्जग्धं वा पुनरुल्लिखेत्।
तस्माच्छद्मोपसिद्धानि मांसान्येतानि दापयेत्॥ १५३
बर्हितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः।
खरगोमहिषाणां च मांसं मांसकरं परम्॥ १५४॥
योनिरष्टविधा चोक्ता मांसानामन्नपानिके।
तान्परीक्ष्य भिषग्विद्वान्दद्यान्मांसानि शोषिणे॥ १५५
प्रसहाभूशयानूपवारिजावारिचारिणः।
आहारार्थं प्रदातव्या मात्रया वातशोषिणे॥१५६॥
प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम्॥१५७॥
विधिवत्सूपसिद्धानि मनोज्ञानि मृदूनि च।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत्॥१५८॥
मांसमेवाश्नतः शोषे माध्वीकं पिबतोऽपि च।
नियतानल्पचित्तस्य चिरं काये न तिष्ठति॥ १५९॥
वारुणीमण्डनित्यस्य बहिर्मार्जनसेविनः।
अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम्॥ १६०॥
प्रसन्नां वारुणीं शीधुमरिष्टानासवान्मधु।
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयेत्॥ १६१॥
मद्यं तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात्स्रोतसां मुखम्।
प्रमथ्य विवृणोत्याशु तन्मोक्षात्सप्त धातवः॥१६२॥
पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति।
मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत्।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा॥ १६३॥
सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायिकैः।
क्षीरमांसरसोपेतं घृतं शोषहरं परम्॥ १६४॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम्॥१६५॥

रास्नावलागोक्षुरकं स्थिरा वर्षाभुसाधितम् ।
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषनुद्धृतम् ॥ १६६ ॥
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ।
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ॥ १६७ ॥
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ।
बहिःस्पर्शनमाश्रित्य वक्ष्यतेऽतः परं विधिः ॥१६८॥
स्नेहक्षीरेऽम्बुकोष्ठे तं स्वभ्यक्तमवगाहयेत् ।
स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव वा ॥ १६९ ॥
उत्तीर्णं मिश्रकैः स्नेहैः पुनरुक्तैः सुखैः करैः ।
मृद्नीयात्सुखमासीनं सुखं चोत्सादयेन्नरम् ॥ १७० ॥
जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम् ।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥१७१॥
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम् ।
माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत्॥१७२॥
त्रिगुणं यवचूर्णेन दध्ना युक्तं समाक्षिकम् ।
एतदुत्सादनं कार्यं पुष्टिवर्णबलप्रदम् ॥ १७३ ॥
गौरसर्षपकल्केन गन्धैश्चापि सुगन्धिभिः ।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः ॥ १७४ ॥

सूपकल्पितानीति सम्यक् संस्कारेण कृतानि । वर्मिशब्देन दीर्घो मत्स्यविशेषो ग्राह्यः । सर्पाकार गंडूपदो भूमिलता लोपाक अल्पशृगालो लांगूलप्रधानः । संप्रत्यस्यान्यमांसप्रयोजनमाह—मांसानीत्यादि । अनभ्यासादित्यभक्ष्यत्वेन । उपधेति चान्यशब्देन दानमिति यावत् । तथेति संज्ञापादाने सुखं यथा भवति तथा भोक्तुं शक्यते । अभक्ष्यत्वे तु ज्ञाते दोषमाह जानन्नित्यादि—योनिरष्टविधेति प्रसहेत्यादिना । क्षौद्रमिति च्छेदः । पयसेत्यादि द्वितीयं घृतम् । मधुरकाणि यानि तानि चेह कल्कार्थम् । पिप्पलीत्यादिना नियतमानं घृतं चतुर्गुणेन क्षीरेण साध्यते पञ्चपलोक्तद्रव्यघृतमानवत् । उत्तीर्णमित्यादि पुनरुक्तैरिति पुनः पुनः मर्दयेत्पुनरुक्तमिति पाठे तु पुनर्मिश्रकैः स्वरैरुक्तमित्यर्थः । उत्सादयेदित्युद्वर्तयेत्, विकसा मंजिष्ठा, तर्कारी विजया, समाक्षिकमितीषन्माक्षिकम् ॥ १४५—१७४ ॥

गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः ।
स्पृश्यान्संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः ॥
इष्टवर्णरसस्पर्शं गन्धवत्पानभोजनम् ॥
इष्टमिष्टैरुपहितं सुखमद्यात्सुखप्रदम् ॥ १७६ ॥
समातीतानि धान्यानि कल्पनीयानि शुष्यताम् ।
लघूनि हीनवीर्याणि तानि पथ्यतमानि हि ॥१७७॥
यच्चोपदेक्ष्यते पथ्यं क्षतक्षीणचिकित्सिते ।
यक्ष्मिणस्तत्प्रयोक्तव्यं बलमांसाभिवृद्धये ॥ १७८ ॥
अभ्यङ्गोत्सादनैः स्नानैरवगाहैर्विमार्जनैः ।
बस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः ॥ १७९ ॥
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः ।
यथर्तुविहितैः स्नानैर्वासोभिरहतैः प्रियैः ॥ १८० ॥
सुहृदां रमणीयानां प्रमदानां च दर्शनैः ।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च ॥ १८१ ॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः ।
ब्रह्मचर्येण दानेन तपसा देवतार्चनैः ॥ १८२ ॥
सत्येनाचारयोगेन मङ्गलैरविहिंसया ।
वैद्यविप्रार्चनाच्चैव रोगराजो निवर्तते ॥ १८३ ॥
यया प्रयुक्तया चेष्ट्या राजयक्ष्मा पुरा जितः ।
तां वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत् ॥ १८४ ॥

इति चरकसंहितायां राजयक्ष्मचिकित्सितं नामाष्टमोऽध्यायः ८

अतःपरं मनसआनुकूल्यं यक्ष्मारम्भकदोषं हन्तीत्यतो यया च युक्त्या चेष्टादौ सदैव मनोनुकूलं स्यात्तथैव वर्तनीयं च दैवव्यपाश्रयचिकित्सा कर्तव्या इत्यत आह-गंधैरित्यादिं ॥ १७५—१८४ ॥

तत्र श्लोकौ ।

यदुत्पत्तिनिमित्तानि प्राग्रूपं रूपसंग्रहः ।
समासव्यासतश्चोक्तं भेषजं राजयक्ष्मणः ॥ १८५ ॥
नाम हेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता ।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते॥१८६॥

प्रागुत्पत्तिरित्यादिसंग्रहः नामहेतुरिति । स राज्ञा पूर्वमासीद्धि राजयक्ष्मा ततो मत-इति संग्रहः ॥ १८५ ॥ १८६ ॥

इति चक्रपाणिदत्तविरचितायां चरकटीकायां चिकित्सितस्थाने राजयक्ष्मचिकित्सितं समाप्तम् ।

---

## नवमोऽध्यायः ।

### उन्मादचिकित्सितम् ।

बुद्धिस्मृतिज्ञानतपोनिवासः
पुनर्वसुः प्राणभृतां शरण्यः ।
उन्मादहेत्वाकृतिभेषजानि
कालेऽग्निवेशाय शशंस पृष्टः ॥ १ ॥

इदानीमुपोद्घातितं राजयक्ष्मचिकित्सितमभिधाय क्रमप्राप्तोन्मादचिकित्सितं ब्रूते । अयं क्रमः चरकसंस्कृतां पंचाध्यायीमर्शोतीसारवीसर्पमदात्ययद्विव्रणीयरूपां परित्यज्य ज्ञेयः । बुद्धिरूहापोहवती स्मृतिरतीतार्थविषयज्ञानं वा तपश्चान्द्रायणादि तेषां निवास आश्रय इत्यर्थः । उन्मादहेत्वादीत्यादौ हेतुग्रहणेनात्र वक्तव्या संप्राप्तिस्थितिरूपकालाः उन्मादगम्यहेतुविषतया गृह्यंते । आकृतिग्रहणेनाभिधेयस्योन्मादस्वरूपस्य ग्रहणं ज्ञेयम् ॥ १ ॥

"विरुद्धदुष्टाशुचिभोजनानि
प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो
मनोऽभिघातो विषमाश्च चेष्टाः ॥ २ ॥

संप्रत्युन्मादहेतुमाह—विरुद्धेत्यादि । विरुद्धं संयुक्तमत्स्यादि दुष्टं गरादि, अत्यर्थदोषजनकं च । अशुच्यपवित्रं । भयहर्षपूर्वो मनोऽभिघात इत्यत्र पूर्वशब्दः कारणवाचित्वेन भयहर्षकारणकेन मनोऽभिघात इत्यर्थः । एतद्विरुद्धाहारादि यथासंभवं वा कारणं ज्ञेयं भयहर्षाद्युपलक्षणौ । तेन क्रोधादयोऽपि मनोभिघातका अत्र ज्ञेयाः । क्रोधेन प्रत्याहते मनसि भयहर्षपूर्वक एवोन्मादो भवति ॥२॥

तैरल्पसत्त्वस्य मलाः प्रदुष्टा
बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि
प्रमोहयन्तीह नरस्य चेतः ॥ ३ ॥

तैरित्यादिना संप्राप्तिमाह—अल्पसत्त्वस्याल्पसत्वगुणस्य हृदयं यद्यपि बुद्धिनिवासत्वं नार्थे दशमहामूलीयादौ प्रतिपादितमेव । तथापि बुद्धिनिवासत्वोपदर्शनमिह कृतं हृदयोपघाताद्बुद्ध्युपघातो वक्ष्यमाणो युक्त एव । आश्रयोपघातेनाश्रितस्योपघातो सिद्ध एव । स्रोतांसि च मनोवहानीत्यनेन हृदयदेशसंबंधिधमन्यो विशेषेण मनोवहा दर्शयति । किंवा केवलमेव शरीरं मनोऽभ्यनुभूतं जग्राह । उक्तं हि केवलमेवास्य मनसः शरीरमधिष्ठानभूतं चेत इति मनः ॥ ३ ॥

धीविभ्रमः सत्त्वपरिप्लवश्च
पर्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयं च शून्यं
सामान्यमुन्मादगदस्य लिङ्गम् ॥ ४ ॥

समूढचेता न सुखं न दुःखं
नाचारधर्मौ कुत एव शान्तिम् ।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो
भ्रमत्ययं चेत इतस्ततश्च ॥ ५ ॥

धीविभ्रम इत्यादिना सामान्यमुन्मादपूर्वरूपमाह— कुत एव शांतिमिति कुतोऽपि शांतिं निर्वृतिं न विंदति । संज्ञानामोल्लेखेन ज्ञापनम् । अयं चेत इति ॥ ४ ॥ ५ ॥

समुद्भ्रमं बुद्धिमनःस्मृतीना-
मुन्मादमागन्तुनिजोत्थमाहुः ।
तस्योद्भवं पञ्चविधस्य भूयो
वक्ष्यामि लिङ्गानि चिकित्सितं च ॥ ६ ॥
रूक्षाल्पशीतान्नविरेकधातु-
क्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिजुष्टं हृदयं प्रदूष्य
बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥ ७ ॥
अस्थानहासस्मितनृत्यगीत-
वागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णता च
जीर्णे बलं चानिलजस्य रूपम् ॥ ८ ॥

उन्मादसंज्ञाव्युत्पत्तिमाह—समुद्भ्रममित्यादि । तत्र भ्रम उन्माद इत्येकोऽर्थः । मनोविभ्रमो चिंतनादिना चिंतानिदानोक्तसंज्ञादिविभ्रमोऽपि मनोविभ्रम एवान्तर्भावनीयः । संज्ञादिविभ्रमस्यापि तज्जन्यत्वात् । तस्योद्भवमित्यादौ यद्यपि पंचानां मध्येऽसाध्यस्य सान्निपातिकस्य चिकित्सितं न वक्तव्यम् । तथापि छत्रिणो गच्छन्तीति न्यायेन बाहुल्यमाश्रित्य चिकित्सितं वक्ष्यामीत्युक्तं चितमित्यनेन चयपूर्वकं चितेत्यादि येषां ते कामक्रोधादयो गृह्यंते । आदिशब्द उक्तप्रकारवाचि । अस्थानेऽविषमे हासादीन्यस्थानहासस्मितादीनि ॥ ६—८ ॥

अजीर्णकट्वम्लविदाह्यशीतै-
र्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य
हृदि श्रितं पूर्ववदेव कुर्यात् ॥ ९ ॥
अमर्षसंरम्भविनग्नभावाः
सन्तर्जनाभिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषः
पीता च भाः पित्तकृतस्य लिङ्गम् ॥ १० ॥

अजीर्णत्यादिना पित्तोन्मादमाह—चितमित्यनेन चयात्पूर्वकालत्वेन पित्तस्य महांतं कोपं दर्शयति । चयपूर्वकोऽतिदोषकोपमूलत्वान्महान्भवति । अन्ये तु चितशब्देन प्रकोपमिच्छंति । अत्युग्रमिति तीव्रवेगम् । पूर्ववदित्यनेन वातोन्मादवत् अमर्श अक्षान्तिः । संरंभ आरभटी, विलग्नभावो विवस्त्रत्वम् । अतिद्रवणं त्वरितगमनम् । प्रच्छायः प्रवृद्धच्छायो देशः ॥ ९—१० ॥

संपूरणैर्मन्दविचेष्टनैश्च
सोष्मा कफो मर्मणि संप्रवृद्धः ।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं
प्रमोहयन्संजनयेद्विकारम् ॥ ११ ॥
वाक्चेष्टितं मन्दमरोचकश्च
नारीविविक्तप्रियतातिनिद्रा ।
छर्दिश्च लाला च बलं च भुक्ते
नखादिशौक्ल्यं च कफात्मके स्यात् ॥ १२ ॥

संपूर्णैरित्यादिना कफोन्मादमाह—सोष्मा कफ इति सह ऊष्मणा कफ उन्मादं करोति न केवल इति । उन्मादकरणे कफस्य ऊष्मसहितत्वरूपं स्वभावं दर्शयति । किंवोष्मशब्देन वीर्यं शक्तिरूपमुच्यतें तेन सोष्मा कफ इति उत्कृष्टशक्तिकः कफ इत्यर्थः । मर्मणीति हृदये, नारीविविक्तयोः प्रियता नारीविविक्तप्रियता विविक्तं विजनम् ॥ ११—१२ ॥

यः सन्निपातप्रभवोऽतिघोरः
सर्वैः समस्तैः स तु हेतुभिः स्यात् ।
सर्वाणि रूपाणि बिभर्ति तादृ-
ग्विरुद्धभैषज्यविधिर्विवर्ज्यः ॥ १३ ॥

य इत्यादिना सान्निपातिकमाह—सर्वैरित्युक्तोऽपि प्रत्येकं सर्वहेतूनां जनकत्वं स्यादत आह समस्तैरिति विरुद्धभैपज्यमिति विरुद्धत्वाद्विवर्ज्यः। केचिदत्र तादृक्शब्देन य एव समस्तहेतुजः सर्वलक्षणश्च स एव वर्ज्यमेपजस्य हेतुलक्षण इति वदंति ॥ १३ ॥

देवर्षिगन्धर्वपिशाचयक्ष-
रक्षःपितृणामभिधर्षणानि।
आगन्तुहेतुर्नियमव्रतादि-
मिथ्याकृतं कर्म च पूर्वदेहे ॥ १४ ॥

देवर्षीत्यादिनाऽगन्तून्मादमाह—ये चासंख्येया ग्रहगणाः सुश्रुतोक्तास्ते इहाविष्कृता विज्ञेयाः। वक्ष्यति च इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततया ह्यष्टावेते व्याख्याता इति। अत्र न रक्षःशब्देन राक्षसब्रह्मरक्षसोर्ग्रहणम्। ब्रह्मराक्षसे समस्ता एवोक्ता अभिधर्षणमावेशः। नियमेत्यादिना ऐहिकं कर्म देवाद्यावेगकारणम्। मिथ्याकृतं कर्म चेत्यनेन पूर्वजन्मकृतं कर्म आह ॥ १४ ॥

अमर्त्यवाग्विक्रमवीर्यचेष्टा-
ज्ञानादिविज्ञानबलादिभिर्यः।
उन्मादकालोऽनियतश्च यस्य
भूतोत्थमुन्मादमुदाहरेत्तम् ॥ १५ ॥

अमर्त्येत्यादिनागन्तूनां सामान्यलिंगान्याह—अमर्त्यैरमनुष्यैर्वागादिभिर्लक्षितं भूतोत्थमुदाहरेत्। अनियत इति वातिकवत् आहारजीर्णादिकालवन्न कालनिश्चयो ये तु नियत इति पठंति तेषां वक्ष्यमाणनियततिथ्यादीनां ग्रहणमभिप्रेतम् ॥ १५ ॥

अदूषयन्तः पुरुषस्य देहं
देवादयः स्वैश्च गुणप्रभावैः।
विशन्त्यदृश्यास्तरसा यथैव
छायातपौ दर्पणसूर्यकान्तौ ॥ १६ ॥

अदूषयन्त ईषदूषयन्तः, गुणप्रभावैरिति अनियमादिगुणप्रभावैः। तरसातिवेगेन वृतावेगेन दृष्टांतद्वयमाह—छायेत्यादि। छाया यथादर्पणमातपो सूर्यकान्तमदूषयित्वैवादृश्यमानप्रभावावेशेच भवतः। तथा देवादयोऽपि देहं विशंतीत्यर्थः ॥ १६ ॥

आयातकालो हि स पूर्वरूपः
प्रोक्तो निदानेऽस्य परं सुराद्यैः।
उन्मादरूपाणि पृथङ्निबोध
कालं च गम्यान्पुरुषांश्च तेषाम् ॥ १७ ॥

आयातकाल इत्यावेशावकाशः। तेन निदाने तद्यथा पापकर्मणः समारम्भे इत्यादिनोक्ताः कालस्थितिरूपः ॥ १७ ॥

तद्यथा,—सौम्यदृष्टिं गम्भीरमप्रधृष्यमकोपनमस्वप्नमभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवातं शुभगन्धं फुल्लपद्मवदनमिति देवोन्मत्तं विद्यात् १८

भोजनाभिलाषी न भवत्यभोजनाभिलाषी देवादिशब्देनेह सुश्रुतमतात् देवाद्यनुकारिणस्तदनुचरा ज्ञेयाः। उक्तं हि सुश्रुतेन—न ते मनुष्यैः सह संविशंति न वा मनुष्यान्क्वचिदाविशंति। ये त्वाविशंतीति वदंति मोहात्ते भूतविद्याविषयादपोह्याः। तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्या ॥ असृक्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशंति ॥ १८ ॥

गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्यानानुरूपाहारचेष्टाव्याहारं तैरुन्मत्तं विद्यात् ॥ १९ ॥

ऋषिसधर्मतया गुर्वादीनामसूत्रितानामप्युदाहरणम्—गुर्वाद्यभिशापादयो यादृशेनाभिप्रायेण भवंति तादृक् स्वरूपचेष्टादयोऽपि तैरुन्मत्तस्य भवन्तीति गुर्वादिग्रंथार्थः ॥ १९ ॥

अप्रसन्नदृष्टिमपश्यन्तं निद्रालुं प्रतिहतवाचमनन्नाभिलाषारोचकाविपाकपरीतं पितृभिरुन्मत्तं विद्यात् ॥ २० ॥

अनन्नाभिलाषो नान्नप्रार्थना, अरोचकस्तु प्रार्थनादप्युपयोगसमये नाभिलाषः ॥ २० ॥

चण्डं साहसिकं तीक्ष्णं गम्भीरमप्रधृष्यं मुखवाद्यनृत्यगीतान्नपानस्नानपानमाल्यधूपगन्धरक्तवस्त्रबलिकर्महास्यकथायोगप्रियं शुभगन्धमिति गन्धर्वोन्मत्तं विद्यात् ॥ २१ ॥

असकृत्स्वप्नरोदनहास्यं नृत्यगीतवाद्यकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणमिति यक्षोन्मत्तं विद्यात् ॥ २२ ॥

नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्रतिबलिनं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं सन्तर्जकमिति राक्षसोन्मत्तं विद्यात् ॥ २३ ॥

प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिस्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीडनेन च ब्रह्मराक्षसोन्मत्तं विद्यात् ॥ २४ ॥

अस्वस्थचित्तं स्थानमलभमानं नृत्यगीतहासिनं बद्धाबद्धप्रभाषिणं संकटकूटमलिनरथ्याचेलतृणेषु आरोहणरतिं संभिन्नवर्णरूक्षस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखानि आवेदयन्तं नष्टस्मृतिं पिशाचोन्मत्तं विद्यात् ॥ २५ ॥

चंडमिति मारणात्मकं, स्तुतिः स्तावको ग्रंथः। उदाहरणमिति पठनं। सुखादीनामेव स्थानमलभमानमिति स्थानमेव नास्तीति भाषमाणम्। बद्धाबद्धत्वं संबंधासंबंधसंकरः। तृणाद्यमेध्यमित्यर्थः ॥ २१—२५ ॥

तत्र शौचाचारं तपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्यां च देवा धर्षयन्ति ॥ २६ ॥

स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिकाव्यकुशलं प्रायः षष्ठीनवम्योर्ऋषयो धर्षयन्ति ॥ २७ ॥

मातृपितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावस्यायां च, पितरो धर्षयन्ति ॥ २८ ॥

गन्धर्वास्तु स्तुतिगीतवादित्ररतिं परदारगन्धमाल्यप्रियं शौचाचारं द्वादश्यां चतुर्दश्यां च धर्षयन्ति ॥ २९ ॥

सत्त्वबलरूपगर्वशौर्ययुक्तं माल्यानुलेपनं हास्यप्रियमतिवाक्करणं प्रायः शुक्लैकादश्यां सप्तम्यां च यक्षा धर्षयन्ति ॥ ३० ॥

स्वाध्यायतपोनियमोपवासव्रतचर्यादेवयतिगुरुपूजारतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं शूरमानिनं देवतागारसलिलक्रीडनरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसा धर्षयन्ति ॥ ३१ ॥

रक्षःपिशाचास्तु हीनसत्त्वपिशुनस्त्रैणलुब्धं प्रायो द्वितीयातृतीयाष्टमीषु पुरुषं छिद्रमवेक्ष्य अभिधर्षयन्ति।

इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततया ह्यष्टावेते व्याख्याताः ॥ ३२ ॥

तत्र शौचाचारमित्यादिनाभिगमनीयपुरुषकालं च पृथगाह शौचं आचारो यस्य स शौचाचारः। शौचाचारादिशुभकर्मयुक्तत्वं यद्यप्युन्मादिनस्तथापि शुभकर्मतया प्राक्तनकर्मवशाद्देवादिभिरुन्माद्यन्त इति ज्ञेयम्। अतिवाक्करणमित्यतिभाषमाणम्। छिद्रमित्युच्छिष्टावस्थानादिरूपमवचारम्। संप्रति भूतविद्याधिकारत्वात् भौतिकोन्मादलेखस्य कथनमपीहाशून्यतार्थं दर्शयन्नाह—अपरिसंख्येयानामिति ॥ २६—३२ ॥

सर्वेष्वपितु खल्वेषु यो हस्तावुद्यम्य रोषसंरम्भान्निःसंज्ञमन्येषु आत्मनि वा पातयेत् स हि असाध्यो ज्ञेयस्तथा यः साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः प्रस्रुतनासिकश्छिद्यमानमर्मा प्रतिहन्यमानपाणिः सततं विकूजन् दुर्वर्णस्तृषार्तः पूतिगन्धिश्च हिंसार्थो उन्मत्तो ज्ञेयस्तं परिवर्जयेत् ॥३३॥

असाध्यभूतजोन्मादमाह सर्वेष्वित्यादिहिंसार्थो मारात्मकः। अप्रतिहन्यमानपाणिरिति नित्यं पाणौ हिंसार्थिनोच्यते ॥ ३३ ॥

रत्यर्चनकामोन्मादिनौ तु भिषक् अभिचाराभिशापाभ्यां बुद्ध्वा तदङ्गोपहारबलिश्रमेण मन्त्रभैषज्यविधिना उपक्रमेत् ॥ ३४ ॥

रत्यर्चनादिभूतगृहीतचिकित्सामाह—रतिरर्चनं तत्कामो रत्यर्चनकामः ताभ्यामुन्मादितौ रत्यर्चनकामोन्मादितौ अभिचाराभिशापाभ्यां बुद्ध्वेत्यभिप्रायेण यः काम्यमर्थमिच्छति स रतिकामः यस्तु पूजामिच्छति स अर्चनाकाम एवमाचारेण यः काम्यार्थप्राप्त्यर्थं चेष्टते स रतिकामः। योऽर्चनादिकं पुष्पधूपादिकं संगृह्णाति स अर्चनाकाम इति बुद्ध्वा तदंगस्य तत्रत्येरर्चनस्य च यदंगसाधनं तत्तद्वर्तनेन तत्तदंगापहाररूपबलिना भेषज्यमंत्रविधिना चोपचारः कर्तव्य इति वाक्यार्थः ॥ ३४ ॥

तत्र द्वयोरपि निजागन्तुनिमित्तयोरुन्मादयोः।
समासविस्ताराभ्यां भेषजविधिं व्याख्यास्यामः॥३५

उन्मादे वातजे पूर्वं स्नेहपानं विशेषवित्।
कुर्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ ३६ ॥
कफपित्तभवेऽप्यादौ वमनं सविरेचनम्।
स्निग्धस्विन्नस्य कर्तव्यं शुद्धे संसर्जनक्रमः ॥ ३७ ॥
निरूहणस्नेहवस्ती शिरसश्च विरेचनम्।
ततः कुर्याद्यथादोषं तेषां भूयस्त्वमाचरेत् ॥ ३८ ॥
हृदिन्द्रियशिरःकोष्ठे संशुद्धे वमनादिभिः।
मनःप्रसादमाप्नोति स्मृतिं संज्ञां च विन्दति ॥३९॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताडनं च मनोबुद्धिदेहसंतर्जनं हितम् ॥ ४० ॥
यः शक्तो विनयेत्पट्टैः संयम्य सुदृढैः सुखैः।
अपेतलोष्टकाष्ठाद्यैः संरोध्यश्च तमोगृहे ॥ ४१ ॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ ४२ ॥
प्रदेहोत्सादनाभ्यङ्गधूमपानं च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥ ४३ ॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः।
अतः सिद्धतमान्योगाञ्छृणून्मादविनाशनान् ॥४४॥

तत्रेत्यादिना भेषजविधानमाह—विशेषविदिति वातस्य निवारणरूपं विशेषं जानन् स्नेहपानं वातजे दद्यादिति दर्शयति। सारेण तु तन्निषिद्धमेव यदुक्तं—मेदःकफाभ्यामनिलो निरुद्धः शंगानुमर्दश्च पृथक्करोति। स्नेहं विमुंचन् बुधस्तु तस्मै संवर्धयत्येव हितान्विकारान्। इहावृतमार्गे कुर्यादित्यादिना विशेषमाह—सस्नेहमितीपत्स्नेहं कफपित्तोद्भवे इति कफोद्भवे पित्तोद्भवे। तत्र कफोद्भवे वमनम्। पित्तोद्भवे विरेचनम्। तेषामित्यादिना वस्त्यादीनां भूयस्त्वम्। पुनःपुनः प्रयोगमाचरेद्यथादोषमित्यनेन दोषभूयस्त्वे सति पुनःपुनः संयोगं कुर्यात्। शोधनकफमाह हृदीत्यादि हृदयादिशुद्ध्या मनःप्रसादोऽपि भवत्येव संवेजनमित्युद्वेजनम् विनयेत्पट्टैरित्यनेन पट्टबंधनं न व्रणकारी भवतीति दर्शयति। संयम्येति यथा निःसर्तुं न शक्नोति तथा स्थापनीयः कष्टाद्यपनयनं तमोग्रहे आत्मवधनिषेधार्थं। तमोग्रहं च शून्यग्रहतमोन्मादनिदानोक्तमपि रोगमहिम्नावस्थायां हितं भवति। तर्जनं वाचा, त्रासनं व्यालादिभिः, विस्मृतेर्हेतोरित्युन्मादहेतुभयहर्षादिः विस्मारकतया प्रभावान्मनः प्रकृष्टं स्वभावं नयंति। यथा विषमे ज्वरे ज्वरकालास्मरणं ज्वरहरणम् ॥ ३५—४४ ॥

हिङ्गुसौवर्चलाव्योषैर्द्विपलांशैर्घृताढकम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ ४५ ॥
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।
स्थिरानन्ता रजन्यौ द्वे शारिवे द्वे प्रियङ्गुकम् ॥४६॥
नीलोत्पलैलामञ्जिष्ठा दन्तीदाडिमकेशरम् ।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥ ४७ ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
कल्कैः कर्षसमैरेतैर्विंशत्यष्टाभिरेव च ॥ ४८ ॥
चतुर्गुणे जले पक्त्वा घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे श्वासे मन्देऽनलक्षये ॥ ४९ ॥
वातरोगे प्रतिश्याये तृतीयकचतुर्थके ।
छर्द्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥ ५० ॥
कण्डूपाण्ड्वामयोन्मादविषमेहगदेषु च ।
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥ ५१ ॥
शस्तं स्त्रीणां च वन्ध्यानां धन्यमायुर्बलप्रदम् ।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम् ॥ ५२ ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।

इति कल्याणकं घृतम् ।

विशालेत्यादावष्टाविंशतिकत्वं कल्कानां पाठादेव सिद्धम् । तत्किमुच्यतेऽष्टाविंशतिभिः कल्कैरित्यत्र यद्यपि त्रिफलाया प्रत्येकमेको भागो गृह्यते उत्सर्गतस्तथापि त्रिफलायाः प्रत्येकभागग्रहणार्थमष्टाविंशतिरित्युक्तम् । तथाहि सुश्रुते—हरीतक्यामलकविभीतकानि त्रिफलेति परिभाषया हरीतक्यादय उच्यंते तथा तत्रापि ज्वरान्ते अभयामेकां प्रागुक्ते द्वे विभीतके, पक्त्वा च मधुसर्पिर्भ्यां चत्वार्यामलकानि च, प्रयोजयेत्समामेकां त्रिफलाया रसायने, इति वचनात् हरीतक्यादिषु त्रिफलासंज्ञा दर्शिता तेन त्रिफलाशब्देन द्रव्यत्रयमुच्यते । तथा दशमूलशब्देन दशभेषजानि पंचमूलशब्देन पंच, यथा वा नीलोत्पलैलामंजिष्ठादंतीदाडिमकेशरमिति पदेन षड्द्रव्याण्युच्यंते । मानं चोपदिश्यमानं प्रत्येकद्रव्यापेक्षयेह भवति । यथा गुल्मचिकित्सिते—नीलिनीं त्रिफलामित्यादि यावत् । व्याघ्रीं च पलिकानि जलाढके, तथागस्त्यहरीतक्यां दशमूल्यादीनां द्विपलं प्रत्येकमेव भवति यतो उपदिश्यमानं भागमानं भागप्रयोगेषु प्रतिद्रव्येष्वेव भवति न समुदाये । तदा समुच्चितस्यैव द्रव्यस्य मानग्रहणं यथा लशुनस्याविनिष्टस्य तुलार्धं निस्तुषीकृतं । तदर्धं दशमूलस्य द्व्याढके पाचयेदपामित्यत्र षष्ठ्यंतत्वाद्दशमूलस्याप्राधान्यम् । यथा राज्ञः पुरुष इत्यत्राप्राधान्यं तेनेह विशेषतया प्रधानं मानं तद्विशेषणभूतं च दशमूलप्रधानं । अप्रधानत्वाच्च न प्रत्येकं नियमभागास्तेन शतलशुनार्धमानत्वमेव दशमूलस्य भवति । यथा वा द्विपंचमूल तुलार्धरसेनेत्यत्रापि द्विपंचमूलस्य समुदितस्यैव तुलार्धविशेषणीभूतस्य क्वाथार्थं तुलार्धभागो गृह्यते । एवं त्रिफलायास्त्रयोभागास्त्रयस्त्रिकटुकस्येत्यत्रापि समुदिता एव त्रयो भागा नतु प्रत्येकं तथाहि नवभागाः स्युः । तथा त्र्यूषणात्रिफलाकल्कबिल्वमात्रमित्यत्र तु कल्कविशेषणीभूतत्वेन त्र्यूषणत्रिफलेऽप्रधानकल्कस्यैव बिल्वमानत्वम् । न प्रत्येकं शुंठ्यादीनां हरीतक्यादीनां कल्कीकृतानां बिल्वमानत्वम् । एवमन्यत्रापि समुदायभागप्रमाणे आचार्याभिप्रायविशेष उन्नेयः द्रव्यप्रधाननिर्देशे तु प्रत्येकद्रव्याणि वा पठ्यतां तथा प्रत्येकमेव भागो भवति । अवयवप्रधानत्वान्निर्देशस्य । यदा समुदायप्रधाननिर्देशो विशेषाल्लिख्यते तदा प्रत्येकनिर्दिष्टलिंगानामपि समुदायस्य भागो भवति । पलमेकं विदध्यात्त्वगेलापत्रकेशरादित्यत्र चतुर्भ्योऽप्येकमेव पलं गृह्यते न प्रत्येकं । यथा तैलसर्पिषो पलद्वादशके दृष्टे इत्यत्र तैलसर्पिषोर्मिलितयोरेव द्वादशपलं प्रत्येकं यथा चात्र न प्रत्येकं द्रव्यप्रमाणानि तथा मानपूर्वनिर्देशं व्युत्पादयता संक्षेपेण दर्शितमेव। एवं व्यवस्थितेऽपि महानीलोक्तां पृथक् शब्देन सिद्धस्यापि त्रिफलापृथग्भागं दर्शयति । यथा पिप्पलीनागरं पाठा पृथक्पृथक् भागान् त्रिपलिकानित्यत्र पृथक्पृथगिति पलं करोति । तथा परिभाषासिद्धस्यापि स्नेहपूर्णकल्कभागस्याभिधानं तत्र तत्र तैलघृते च करोति । त्रिफलाशब्देन यद्यपि द्राक्षाकाश्मीरपुष्पाणि चोच्यंते । यदुक्तमन्यत्र—'पथ्यामलकधात्रीभिस्त्रिफला महती स्मृता । चक्षुष्या सर्वदोषघ्नी स्रंसनी बृंहणी च सा । ह्रस्वा काश्मर्यमृद्वीकापरूषकफलैर्भवेदि'ति तथापीह त्र्यूषणं त्रिफला पाठा इति कृतं हरीतक्यास्त्रिफलाया एव प्रधानतयोत्सर्गतो ग्रहणं भवति । अन्ये तु तालीशपत्रमित्यत्र तालीशं च पत्रं चेति द्रव्यद्वयग्रहणशंका स्यात्तेनाष्टाविंशतिपदेन स न भवत्वेतदर्थमष्टाविंशतिरिति कृतम्। त्रिफलायाः प्रत्येकं ग्रहणं न्यायसिद्धमेव इति वदंति । अन्ये त्वष्टाविंशत्यौषधमानमिष्यत इत्यादावष्टाविंशत्यौषधसंज्ञया व्यवहारोऽस्य भवतीत्येतदर्थमष्टाविंशतिरिति कृतम् । चतुर्गुणवचनमिह परिभाषया शुद्धजलाच्चतुर्गुणदानार्थम् ॥ ४५—५२ ॥

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन्पचेत्सर्पिर्गृष्टिक्षीरचतुर्गुणे ॥ ५३ ॥
वीरर्द्धिमाषकाकोलीस्वयंगुप्तर्षभकर्द्धिभिः ।
मेदया च समैः कल्कैस्तत्स्यात्कल्याणकं महत् ॥ ५४
बृंहणीयं विशेषेण सन्निपातहरं परम् ।

इति महाकल्याणकं घृतम् ।

जटिलां पूतनां केशीं चारटीं मर्कटीं वचाम् ।
त्रायमाणां जयां वीरां चोरकं कटुरोहिणीम् ॥५५॥

एवं स्थिरादीनि विदारीगंधमूलमपि स्यादत आह—एकविंशतिरिति तेन कल्याणोक्तान्येकैकविंशतिर्गृह्यते । गृष्टिरेकवारप्रसूता गौः । अत्र क्षीरेणैव चातुर्गुण्ये प्राप्तेऽयं कषायः । एकेनापि चातुर्गुण्यमित्यादिपरिभाषया स्वविषयः । तेन चातुर्गुण्यपरिभाषया क्षीरमानसाहचर्याद्वा चतुर्गुणो ज्ञेयः ।

केचित्त्वेकविंशतिद्रव्यवत्सर्पिस्तथैव विधिना पक्तव्यमित्यर्थः। तत्र यतो जतूकर्णे उत्सर्गेत एवास्य पाको उक्तः। द्विमाप इति मापराजमापयोर्ग्रहणम्॥ ५३—५५॥

कायस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम्।
महापुरुषदन्तां च वयःस्थां नाकुलीद्वयम्॥ ५६॥
कटम्भरां वृश्चिकालीं स्थिरां चाहृत्य तैर्घृतम्।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम्॥ ५७॥
महापैशाचिकं नाम घृतमेतद्यथामृतम्।
बुद्धिस्मृतिकरं चैव बालानां चाङ्गवर्धनम्॥ ५८॥
इति महापैशाचिकं घृतम्।

जटिलेत्यादि जटिला मांसी पूतना हरीतकी केशी भूतकेशी चारटी कुंभः। ब्रह्मयष्टिकेत्यन्ये मर्कटी शूकशिंवा, जया जयंती, वीरा क्षीरकाकोली, शालपर्णीत्यपरो चोरकश्चंडालकः। ब्राह्मी गुडूची वा शूकरी वाराहिकंदः। छत्रा मधुटिका अतिच्छत्रा शतपुष्पा। किंवा छत्रातिछत्रे द्रोणपुष्पीद्वयं। पलंकषा गुग्गुलुः। महापुरुषदंती शतावरी। अन्ये तु विक्रान्तमुदंतीं जटिलां शतावरीमाह—वयस्था सूक्ष्मैला, नाकुलीद्वयं रास्नाद्वयं, कटंभरा कटभी, उत्तोली वृश्चिकाली वृश्चिकापत्री ख्याता। अल्पपैशाचिकस्याभावान्महापैशाचिकमित्यत्र महच्छब्दः पूजावचनः॥ ५६—५८॥

लशुनानां शतं त्रिंशदभया त्र्यूपणात्पलम्।
गवां चर्ममसीप्रस्थो द्व्याढकं क्षीरमूत्रयोः॥ ५९॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत्।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम्॥ ६०॥
तद्दोपागन्तुसम्भूतानुन्मादान्विपमज्वरान्।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः॥ ६१॥
इति लशुनाद्यं घृतम्।

लशुनस्याविनष्टस्य तुलार्धं निस्तुपीकृतम्।
तदर्धं दशमूलस्य द्व्याढकेऽपां विपाचयेत्॥ ६२॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः॥ ६३॥
दाडिमाम्लसुरामस्तुकाञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत्रिफलादारुलवणव्योपदीप्यकैः॥ ६४॥
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धिकैः।
सिद्धमेतत्पिवेच्छूलगुल्मार्शोजठरापहम्॥ ६५॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषज्वरक्रमीन्।
वातश्लेष्मामयान्सर्वानुन्मादं चापकर्पति॥ ६६॥
इति द्वितीयलशुनाद्यं घृतम्।

हिङ्गुना हिङ्गुपर्ण्या च सकायस्थावयःस्थया।
सिद्धं सर्पिर्हितं तद्वद्वयःस्थाहिङ्गुरोचकैः॥ ६७॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद्घृतम्।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद्गृहेऽपि वा ६८

विशेषतः पुराणं च घृतं तं पाययेद्भिषक्।
त्रिदोषघ्नं पवित्रत्वाद्विशेषाद्ग्रहमोक्षणम्॥ ६९॥
गुणकर्माधिकं स्यानादास्वादात्कटुतिक्तकम्।
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्॥ ७०॥
लाक्षारससनिभं शीतं तद्धि सर्वग्रहापहम्।
मेध्यं विरेचनेष्वग्र्यं प्रपुराणमतः परम्॥ ७१॥
नासाध्यं नाम तस्यास्ति यत्स्याद्वर्षशतस्थितम्।
दृष्टं स्पृष्टमथाघ्रातं तद्धि सर्वग्रहापहम्।
अपस्मारग्रहोन्मादवतां शस्तं विशेषतः॥ ७२॥
एतैरौषधवर्गैर्वा विधेयत्वं स गच्छति।
अञ्जनोन्मर्दनालेपान्नावनादींश्च योजयेत्॥ ७३॥
शिरीषो मधुकं हिङ्गु लशुनं तगरं वचाम्।
कुष्ठं च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम्॥ ७४॥
इति नस्याञ्जनम्।

तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः।
शिरीषबीजं चोन्मादग्रहापस्मारनाशनम्॥ ७५॥
पिष्ट्वा तुल्यमपामार्गं हिङ्गुलं हिङ्गुपत्रिकाम्।
वर्तिः स्यान्मरिचार्धांशा पित्ताभ्यां गोश्रृगालयोः॥
तथाञ्जयेदपस्मारभूतोन्मादज्वरार्दितान्।
भूतार्तानमरार्तांश्च नरार्तांश्चैव गोमये॥ ७७॥
मरिचं चातपे मासं सपित्तं स्थितमञ्जनम्।
वैकृतं पश्यतः कार्यं दोषभूतहतस्मृतेः॥ ७८॥
इत्यञ्जनम्।

सिद्धार्थको वचा हिङ्गुकरञ्जो देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम्॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम्॥ ८०॥
नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः॥ ८१॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत्॥ ८२॥
प्रसेके पीनसे गन्धैर्धूमवर्तिं कृतां पिबेत्।
वैरेचनिकधूमोक्तैः श्वेताद्यैर्वा सहिङ्गुभिः॥ ८३॥
शल्लकोलूकमार्जारजम्बूकवृकवस्तजैः।
मूत्रपित्तशकृल्लोमनखैश्चर्मभिरेव च॥ ८४॥
सेकाञ्जनं प्रधमनं नस्यं धूमं च कारयेत्।
वातश्लेष्मात्मके प्रायः पैत्तिके च प्रशस्यते॥ ८५॥
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः।
शीतानि चान्नपानानि मधुराणि मृदूनि च॥ ८६॥
शङ्खकेशान्तसन्धौ वा मोक्षयेज्ज्ञो भिषक् शिराम्।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च॥ ८७॥
घृतमांसवितृप्तं वा निवाते स्थापयेत्सुखम्।
त्यक्त्वा मतिस्मृतिभ्रंशं संज्ञां लब्ध्वा प्रबुध्यते ८८

आश्वासयेत्सुहृद्वा तं वाक्यैर्धर्मार्थसंहितैः ।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥ ८९ ॥
बद्धा सर्षपतैलाक्तं न्यसेद्वोत्तानमातपे ।
कपिकच्छ्वाथवा तप्तलौहतैलजलैः स्पृशेत् ॥ ९० ॥
कशाभिस्ताडयित्वा वा सुबद्धं विजने गृहे ।
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य यथा शमम् ॥९१॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥ ९२ ॥
"अथवा राजपुरुषा वहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ९३ ॥
देहदुःखभयेभ्यो हि परं प्राणभयं महत् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ ९४ ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तिशान्त्याश्वासैः शमं नयेत् ॥९५॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ९६ ॥
बुद्धा देशं वयः सात्म्यं दोषं कालं बलाबलम् ।
चिकित्सितमिदं कुर्यादुन्मादे भूतदोषजे ॥ ९७ ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म च ॥ ९८ ॥
सर्पिष्पानादि तस्येह मृदुभैषज्यमाचरेत् ।
पूजां बल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ॥ ९९ ॥
शान्तिकर्मेष्टिहोमांश्च जप्यस्वस्त्ययनानि च ।
वेदोक्तान् नियमांश्चापि प्रायश्चित्तानि चाचरेत् १००
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥ १०१॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ।
तेषां पूजां च कुर्वाण उन्मादेभ्यो विमुच्यते ॥१०२॥
वलिभिर्मङ्गलैर्होमैरोषध्यगदधारणैः ।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः ॥ १०३ ॥
देवगुह्यकविप्राणां गुरूणां पूजनेन च ।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ॥१०४॥
यच्चोपदेक्ष्यते किंचिदपस्मारचिकित्सिते ।
उन्मादे तच्च कर्तव्यं सामान्याद्धेतुदूष्ययोः ॥१०५॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्ववान् न स युज्यते १०६

लशुनानां शतमित्यत्र लशुनबीजानां शतमानेन न्यूषणा-दपलमित्यत्र समुदितात्पलम् । मधुमाणिकाद्रवत्वाद्द्वैगुण्येन मणिकायाः द्विकुडवरूपायाः षोडशपलद्वयं भवति । तदर्धं दशमूलस्येति पंचविंशतिपलानि । लशुनरसादीनां प्रत्येकं प्रस्थमानत्वं ज्ञेयम् । हिंगुना हिंगुपर्ण्येत्येकं घृतम् । स कायस्था वयस्ययेति द्वितीयम् वयस्थेत्यादिना तृतीयम् । हिंगुपर्णी वंशपत्रिका । वयस्था ब्राह्मी, कायस्था सूक्ष्मैला उग्रगंधमित्यादिकं घृतं केचिदनार्षं वदंति । तद्धृतमसाधितं, एतैरित्यनेन घृतसाधनद्रव्यैः । नावनं चांजनं चेति नावनांजनम् । हिंगूलमिलत्वालं हरितालं । अमरार्तश्चेत्यत्र देवगृहीतं, दोषेण भूतेन वा हृता स्मृतिर्यस्य स दोषहृतस्मृतिः । अगद इति विष इव कृत्याभिचारः । राजद्वारे शस्यत इति वशीकरणत्वात् । गंधैरित्यगुर्वाद्यैः सागरवर्जितैः । उक्तं हि सूत्रस्थाने धूमविधौ गंधाश्चागुरुपत्राभ्यामिति । श्वेतायैरिति श्वेता ज्योतिष्मती चैव हरितालं मनःशिला इति सूत्रोक्तैः । शल्लकादीनां यथासंभवं मूत्रादीनि ग्राह्याणि । तिक्तकं महातिक्तकं पद्पलरूपं जीवनीयं सर्पिर्वातरक्ते वक्ष्यते । शंखे केशांते च संधिः शंखकेशांतसंधिः । अत्र च प्रत्यासन्नो मर्मपरित्यागेन सुश्रुतोक्तं, सिराविभागमवलोक्य सिराव्यधः कर्तव्यः । मांसं च यद्यपि निवृत्तामिषमद्यो य इत्यादिनोन्मादे निषिद्धं तथाप्येवंविधेन प्रयोगेण मांसयोगमाह—यथा भयहर्षयोरुन्मादकारणत्वेऽपि तौ पुनरुन्मादे विधेयत्वेनोच्यते । सांत्वनं हर्षणं भय इत्यादिनान्ये तु निवृत्तमांसत्वमागंतून्मादप्रशमनमिति व्याख्यानयंति । तेनेह निजे मांसविधानेऽनवरोध इति व्याख्यानयंति । अन्ये तु मांससेवयोन्मादो भवतीति निवृत्तामिषमद्यो य इत्यनेनोच्यते । सोपदेशं तु मांसमुन्मादप्रशमनमिति भिन्नविषयतया न विरोधमिति वर्णयंति । किंतु निदानोक्तस्यापि मांसस्य स्वजन्यव्याधिप्रशमकत्वं सविरोधमेव, तेन पूर्वमेव समाधानमत्र समीचीनमिति पश्यामः । रूपादिषु विनाशमित्यादिनोद्भ्रांतचित्तस्य पुनश्चित्तस्थिरकरणैः स्वदेशानयनमेव । दृश्यते च घट्टनचलितस्य पुनर्घट्टनेनैव सम्यक्स्थानं तद्वदिहापि ज्ञेयम् । सिंहैरिति व्याघ्रैः दान्तैः । वहिरिति ग्रामवहिः । देहदुःखभयेभ्य इति देहदुःखकारणेभ्यः । इष्टद्रव्येत्यादिना पूर्वमसूत्रितोऽपि अयमुन्मादः प्रकरणाच्चिकित्स्यते । यथा कृष्णाध्याये पञ्चकृष्णाः प्रतिपाद्य गुर्वन्नज्ञायाऽप्यधिकायाश्चिकित्सोच्यत इत्याहुः । किंतु चिन्तादिदुष्टहृदय इत्यादिनोक्तोन्मादेन गृहीत एवायमर्थोऽत्र चिकित्सित इति पश्यामः । पंचोन्मादव्यवस्थायामस्य वातिके एवावरोध उचितः । इष्टद्रव्यविनाशस्य वातप्रकोपकारित्वात् । एवं कामादिभवेष्वपि वाच्यम् । क्रूरमिति ताडनादिकम् । कर्मेत्यादिना दैवव्यपाश्रयचिकित्सामाह—सामान्याद्धेतुदूष्ययोरित्युन्मादेनापस्मारेण च समहेतुर्मनोभिघातादिर्दूष्यं च हृदयं समानमित्यर्थः ॥ ६०—१०६ ॥

प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥१०७॥

तत्र श्लोकः ।

उन्मादानां समुत्थानं लक्षणं सचिकित्सितम् ।
निजागन्तुनिमित्तानामुक्तवान् भिषगुत्तमः ॥१०८॥

इति चरकसंहितायामुन्मादचिकित्सितं नाम
नवमोऽध्यायः ॥ ९ ॥

निवृत्तामिष इत्यादि व्याख्यात एव पूर्वं क्रियमाणोन्मादचिकित्सायाः स्फोटनार्थं विगतोन्मादलक्षणमाह—प्रसाद इत्यादि ॥ १०७ ॥ १०८ ॥ उन्मादानामिति संग्रहः ॥ इत्युन्मादचिकित्सितं समाप्तम् ॥

## दशमोऽध्यायः ।

### अपस्मारचिकित्सितम् ।

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः ।
तमःप्रवेशबीभत्सचेष्टं धीसत्त्वसंप्लवात् ॥ १ ॥

व्याध्युत्पत्तावुन्मादेन सहोत्पन्नत्वादुन्मादमनु अपस्मारचिकित्सितमुच्यते । स्मृतेरपगम इत्यादिनापस्मारसंज्ञाव्युत्पादयन्नपस्मारस्वरूपमाह—स्मृतेरपगम एव विशिनष्टि । तमःप्रवेश इति।बीभत्सचेष्टमिति तमःप्रवेशेन ज्ञानाभावत्वाद्बीभत्सविचेष्टनवत् वदनाङ्गविक्षेपणादिकादनुमितं बीभत्सचेष्टं स्मृत्यपगमादौ च हेतुमाह—धीसत्वविभ्रमो विप्लवः स्वरूपान्यथात्वं ॥ १ ॥

विभ्रान्तबहुदोषाणामहिताशुचिभोजिनाम् ।
रजस्तमोभ्यां विहते सत्त्वे दोषावृते हृदि ॥ २ ॥
चिन्ताकामभयक्रोधशोकोद्वेगादिभिस्तथा ।
मनस्यभ्याहते नृणामपस्मारः प्रवर्तते ॥ ३ ॥

यादृशानामपस्मारो भवति तानाह—विभ्रान्त इत्यादि । विभ्रांतोन्मार्गगामिनो बहवश्च दोषा येषां विभ्रांतबहुदोषाणां । विहते सत्त्वेति सत्त्वाख्यगुणे विहते ननु सत्त्वशब्देन मन उच्यते । तस्य मनस्यभिहते इति ग्रहणेन सिद्ध्यति ॥ २ ॥ ३ ॥

धमनीभिः श्रिता दोषा हृदयं पीडयन्ति हि ।
संपीड्यमानो व्यथते मूढो भ्रान्तेन चेतसा ॥ ४ ॥
पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि ।
जिह्वाक्षिभ्रूस्रवल्लालो हस्तौ पादौ च विक्षिपन् ॥ ५
दोषवेगे च विगते सुप्तवत्प्रतिबुद्ध्यते ।
पृथग्दोषैः समस्तैश्च वक्ष्यते स चतुर्विधः ॥ ६ ॥

धमनीभिरिति यद्यपि सामान्येनोक्तं तथापि हृदयपीडायोग्यतया हृदयाश्रिता एव धमन्यो विशेषेण गृह्यन्ते। अत्र च वातादीनां प्रकोपे पृथक्पृथक् हेतुर्नोक्तः । तस्योन्मादसाधारणत्वेनोक्तत्वात् । उक्तंहि—यच्चोपदेक्ष्यते किंचित् अपस्मारचिकित्सिते । उन्मादे तच्च कर्तव्यं सामान्याद्धेतुदूष्ययोरिति । यस्त्वपस्मारस्य विशिष्टो हेतुरुन्मादात्समुदितात् उक्त एव पृथगित्यादिना चतुर्विधापस्मारलक्षणमाह ॥ ४—६ ॥

कम्पते दशते दन्तान्फेनोद्वामी श्वसित्यपि ।
परुषाणि च कृष्णानि पश्येद्रूपाणि चानिलात् ॥७॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः ।
सतृष्णश्चानलव्याप्तलोकदर्शी च पैत्तिकः ॥ ८ ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः ।
पश्यञ्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ९
सर्वैरेतैः समस्तैस्तु लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः १०
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम् ॥ ११ ॥

पीतासृग्रूपदर्शनमिति पीतलोहितरूपदर्शी सतृष्णश्चेति सतृष्णोष्मथासौ अनलव्याप्तलोकदर्शी चेति समासः । शुक्लेति श्लैष्मिकमुच्यते, चिरादिति वचनेन वातपित्तयोरचिरेण मोक्षं सूचयति । क्षीणस्यानवश्च यः एकदोषजोऽप्यसाध्य इति भावः । पक्षाद्वेत्यादौ व्युत्क्रम्य देशकालनिर्देशेन उक्तकालादूर्ध्वमर्वाक् पिशाचापस्मारवेगो भवतीति सूचयति । किंचिदथान्तरमिति किंचित्कालं वेगं कुर्वति स्तोककालमिति यावत् ॥ ७—११ ॥

तैरावृतानां हृत्स्रोतोमनसां संप्रबोधनम् ।
तीक्ष्णैरादौ भिषक् कुर्यात्कर्मभिर्वमनादिभिः १२
वातिकं वस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारं समाचरेत् ॥ १३ ॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान्संशमनाञ्छृणु ॥ १४ ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं पिबेदपस्मारकामलाज्वरनाशनम् ॥ १५ ॥

इति पञ्चगव्यं घृतम् ।

तैरित्यादिना चिकित्सामाह—प्रबोधनमिति । दोषविहितत्वेन सम्यक् स्वव्यापारत्वं । प्राय इत्यादौ प्रायःशब्दो विशेषार्थः । तेनान्या क्रियापि सूचिता भवति । आश्वासितस्येति आप्यायितस्य । गोशकृदित्यनेन दध्यादिभिरिति गोशब्दो योज्यः । तेन पंचगव्यमिदमल्पं भवति । साम्यं चात्र गोशकृद्रसादीति परिभाषासिद्धमपि स्पष्टार्थमुच्यते ॥ १२—१५ ॥

द्वे पञ्चमूले त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥ १६ ॥
शम्याकं फल्गुमूलं च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥ १७ ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥ १८ ॥
द्वे शारिवे रोहिषं च भूतीकं मदयन्तिकाम् ।
क्षिपेत्पिष्ट्वाक्षमात्राणि तेन प्रस्थं घृतात्पचेत् ॥१९॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत्तदमृतोपमम् ॥ २० ॥
अपस्मारे तथोन्मादे श्वयथावुदरेषु च ।
गुल्मार्शःपाण्डुरोगेषु कामलासु भगन्दरे ।
अलक्ष्मीग्रहरोगघ्नं चातुर्थिकविनाशनम् ॥ २१ ॥

इति महापञ्चगव्यं घृतम् ।

द्वे पंचमूल इत्यादि निर्दिष्टं पंचमूलद्वयं दशमूलाख्यं ग्राह्यम् । नीलिनीं नीलिकां, शम्याक आरग्वधः । द्विपलं प्रत्येकं

दशमूलादीनां तत्प्रतिपादितनेवोन्मादे । निचुलो हिज्जलः, श्रेयसी हस्तिपिप्पली । द्वे शारिवे इति श्यामलतानन्तमूला ॥ १६—२१ ॥

ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं घृतमुन्मादालक्ष्म्यपस्मारपाप्मजित् ॥ २२ ॥
घृतं सैन्धवहिङ्गुभ्यां वार्षे वास्ते चतुर्गुणे ।
मूत्रे सिद्धमपस्मारहृद्ग्रहामयनाशनम् ॥ २३ ॥
वचासम्पाककैटर्यवयःस्थाहिङ्गुचोरकैः ।
सिद्धं पलङ्कषायुक्तैर्वातश्लेष्मात्मके घृतम् ॥ २४ ॥

ब्राह्मीत्यादौ पुराणमिति घृतं विशेषेण तथा साध्यमिति विशेषः । तेन पुराणं घृतमिति साध्यं भवति । वार्षे वास्ते इति वृषे छागे मूत्रे भवेत् । अत्र च यद्यपि "स्त्रीणां तीक्ष्णं गुरु मूत्रं न तु पुंसां तथाविधम् । पित्तांशिकास्त्रियो यस्मात्सौम्यास्तु पुल्या स्मृता" इत्यनेन स्त्रियो मूत्रं प्रशस्तमुक्तम् । तथापीहाविशेषपरिग्रहात्पुंल्लिङ्गयोरेव मूत्रं यौगिकमिति । कैटर्यः पार्वतो निंबः । वयस्था गुडूची वातश्लेष्मातकमिति द्वन्द्वापस्मारनिर्देशाच वातात्मके श्लेष्मात्मके च ज्ञेयम् । अन्ये तु गुल्मवदनुक्तमपि प्रकृतिसमसमवायारब्धद्वन्द्वजवातश्लेष्मात्मकमपस्मारं वदन्ति ॥ २२—२४ ॥

तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।
क्षीरद्रोणे पचेत्सिद्धमपस्मारविनाशनम् ॥ २५ ॥
कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ।
कार्षिकैर्जीवनीयैश्च घृतप्रस्थं विपाचयेत् ॥ २६ ॥
वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति ।
तद्वत्काशविदारीक्षुकुशकाथशृतं घृतम् ॥ २७ ॥
मधुकाद्विपले कल्के द्रोणे चामलकीरसात् ।
तद्वत्सिद्धो घृतप्रस्थः पित्तापस्मारभेषजम् ॥ २८ ॥

तैलप्रस्थमित्यादौ पलोन्मितैः कल्कैरिति द्रवस्थाने क्षीरस्यैव विद्यमानत्वात् । कंस इत्यादके काश्मरीति गंभारीभवे रसे रसे इति काथे । तद्वदित्यनेन पूर्वयोगफलश्रुतिं दर्शयति । तद्वत्सिद्धो घृतप्रस्थः इत्यनेन पूर्वयोगोक्तं क्षिप्रमित्याकर्षति तेन क्षिप्रं पित्तापस्मार इति फलति ॥ २५—२८ ॥

अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद्गोशकृन्मूत्रे स्नानोत्सादनमेव च ॥ २९ ॥
कटभीनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे ।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थे प्रशस्यते ॥ ३० ॥

अभ्यंग इत्यादिना कल्कमेव तैलं पक्तव्यं । गोशकृदित्यादौ गोशकृतोत्सादनं गोमूत्रेण च योग्यतया स्नानम् । करभीत्यादौ करभ्यादीनां चतुर्णामपि त्वचं गृहीत्वा काथस्तेन त्रिगुणः कर्तव्यः । चतुर्थस्तु द्रवभागेनैव स्नेहसममेव पूर्यते॥२९॥३०॥

पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः ।
जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः ॥ ३१ ॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥ ३२ ॥
सिद्धमभ्यञ्जनं तैलमपस्मारविनाशनम् ।
एतैश्चैवौषधैः कार्यं धूपनं सप्रलेपनम् ॥ ३३ ॥
पिप्पलीं लवणं शिग्रु हिङ्गु हिङ्गुशिवाटिकाम् ।
काकोलीं सर्षपान्काकनासां कैटर्यचन्दने ॥ ३४ ॥
शुनःस्कन्धास्थिनखरान्पर्शुकांश्चेति पेषयेत् ।
वस्तमूत्रेण पुष्यर्क्षे प्रदेहः स्यात्सधूपनः ॥ ३५ ॥

पलंकषेत्यादौ पूतनायाः पूतपूर्वा या केशी पूतनाकेशी गोलोमीत्यर्थः । तथा ह्यत्र जतूकर्णे पूतनाकेशी गोलोमीत्युच्यते । उक्तं हि वृश्चिकाली पथ्या गोलोमी नाकुली नकुलकुष्ठैः सर्षपं जटिला हिंगु, वचा, मधुकं, चित्रकादि मांसादपुरीषैर्वस्तमूत्रेऽभ्यंगः । अतिरसाजलं यष्टीमधु चित्रा दन्ती हिंगुशिवाटिका वंशपत्रकमिति ख्याता । स्कंधस्यास्थि पुष्यर्क्षपेषणेन नक्षत्रयोगकृतयोः संस्कारमुपदिशति ॥३१—३५॥

अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः ।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ ३६ ॥
जलौकाशकृता तद्वद्गश्वैर्वा वस्तलोमभिः ।
खरास्थिभिर्हस्तिनखैस्तथा गोपुच्छलोमभिः ॥३७॥
कपिलानां गवां मूत्रं नावनं परमं हितम् ।
श्वशृगालविडालानां सिंहादीनां च शस्यते ॥३८॥

अपेतराक्षसि खरसो जलौकेत्यादौ तद्वदित्युत्सादनं । कपिलानां गवां मूत्रं विशेषकरं भवतीति आप्तवचनाद्गृह्यते । सिंहादीनां च शस्यत इत्यादि मूत्रमिति योज्यम् ॥३६—३८॥

भार्गी वचा नागदन्ती श्वेता श्वेता विषाणिका ।
ज्योतिष्मती नागदन्ती पादोत्था मूत्रपेषिताः॥३९॥
योगास्त्रयोऽतः षड्बिन्दून् पञ्च वा नावयेद्भिषक् ।
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः ॥ ४० ॥
श्यामापामार्गकारञ्जफलैर्मूत्रेऽथ वस्तजे ।
साधितं नावनं तैलमपस्मारविनाशनम् ॥ ४१ ॥
पिप्पलीवृश्चिकाली च कुष्ठं च लवणानि च ।
भार्गी च चूर्णितं नस्तः कार्यं प्रधमनं परम् ॥४२॥

भार्गीत्यादौ नागदन्ती काष्ठपाटला श्वेताश्वेतापराजिता, श्वेता विषाणिका शतावरी, त्रिफलेत्यादौ पीतद्रु देवदारु सैंधवादिति पंच किंवा लवणवर्गोक्तानि यथालाभं ग्राह्याणि ॥ ३९—४२ ॥

कायस्थाञ्छारदान्मुद्गान्मुस्तोशीरयवांस्तथा ।
सव्योषान्वस्तमूत्रेण पिष्ट्वा वर्तीः प्रकल्पयेत् ॥४३॥
अपस्मारे तथोन्मादे सर्पदष्टे तथार्दिते ।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ४४ ॥
मुस्तं वयःस्थां त्रिफलां कायस्थां हिङ्गु शाद्वलम् ।
व्योषं माषान्यवान्मूत्रैर्वस्तिमेषर्षभैस्त्रिभिः ॥ ४५ ॥

पिष्ट्वा कृत्वा च तां वर्तिमपस्मारे प्रयोजयेत् ।
किलासेषु तथोन्मादे ज्वरेषु विषमेषु च ॥ ४६ ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं मतम् ॥ ४७ ॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥ ४८ ॥
आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते ।
स्रोतांसि चापि शुध्यन्ति ततः संज्ञां स विन्दति ४९

कायस्थामित्यादौ शारदान्मुद्रानिति हारीतमुद्गाः । ते हि प्रायः शरदि भवन्ति । वर्तिर्नेत्रांजनवर्तिः । विषपीत इति पीतविषः । जलपानेन मृत इति जलपानमृतः तस्य लक्षणम् । आध्मातोदरमेहनं विद्याज्जलमृतं जंतुं वस्तिमेषर्षभैरिति छागमेषवृषभसंभवैः । पुष्योद्धृतमिति पुष्यनक्षत्रे गृहीतं, कीटो वृश्चिकः ॥ ४३—४९ ॥

यस्यानुबन्धं त्वागन्तुर्दोषलिङ्गाधिकाकृतिम् ।
पश्येत्तस्य भिषक्कुर्यादागन्तून्मादभेषजम् ॥ ५० ॥

संप्रत्यपस्मारे सूत्रेणानुबंधलिङ्गचिकित्सामाह—यस्येत्यादि। लिंगाकृतिरिति अपस्मारोक्तदोषलिंगेभ्योऽधिकागन्तून्मादसदृशी आकृतिर्यस्य स तथा नागंतुलिङ्गं दोषेषु भवति । नच दोषलिङ्गं विनागंतुलिङ्गता संभवति । ततश्चागंत्वपस्मारः पृथङ् न भवति । किंतु दोषजस्यानुबंधरूपः । पश्चात्कालीनः स आगंतुस्तेन चत्वार एवापस्मारा भवन्तीति यदुक्तं तस्यागन्तुरनुबन्धो भवत्येव कदाचिदिति । अनेनानुबन्धरूपतैव भूतापस्मारे दर्शिता । न तून्मादवत् स्वातन्त्र्येण कर्तव्यं भूतानां । अन्यत्राप्युक्तं—अपस्मारो महाव्याधिः तस्माद्दोषत एव तु । अन्ये तु भीमदन्तादयः स्वतन्त्राङ्गत्वमपस्मारलक्षणं चिकित्सानिर्देशार्थं मन्त्रग्रन्थं वर्णयन्ति च । न संख्यानियमश्च दोषजापस्माराणामेवं भवति ॥ ५० ॥

अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः ।
भगवन् प्राक् समुद्दिष्टः श्लोकस्थाने महागदः ५१
अतत्त्वाभिनिवेशश्च तस्य व्यक्तिरिहोच्यताम् ।
शुश्रूषवे वचः श्रुत्वा शिष्यायाह पुनर्वसुः ॥ ५२ ॥
"महागदं सौम्य शृणु सहेत्वाकृतिभेषजम् ।
मलिनाहारशीलस्य वेगान्प्राप्तान्निगृह्णतः ।
शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः ॥ ५३ ॥
हृदयं समुपाश्रित्य मनोबुद्धिवहाः शिराः ।
दोषाः संदूष्य तिष्ठन्ति रजोमोहावृतात्मनः ॥ ५४ ॥
रजस्तमोभ्यां वृद्धाभ्यां बुद्धौ मनसि चावृते ।
हृदये व्याकुले दोषैरथ मूढोऽल्पचेतनः ॥ ५५ ॥
करोति विषमां बुद्धिं नित्यानित्ये हिताहिते ।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम् ॥ ५६ ॥
स्नेहस्वेदोपपन्नं तं संशोध्य वमनादिभिः ।
कृतसंसर्जनं मेध्यैरन्नपानैरुपाचरेत् ॥ ५७ ॥
ब्राह्मीस्वरससंयुक्तं पञ्चगव्यमुदाहृतम् ।
तत्सेव्यं शङ्खपुष्पी च यच्च सेव्यं रसायनम् ॥ ५८ ॥
सुहृदश्चानुकूलास्तं स्वाप्तधर्मार्थवादिनः ।
संयोजयेयुर्विज्ञानधैर्यस्मृतिसमाधिभिः ॥ ५९ ॥

अस्मिन्प्रदेशे सैंधवाः काश्मीराः । भगवन्निलनेनातत्त्वाभिनिवेशस्य लक्षणचिकित्साग्रन्थं पठन्ति । तच्चानार्षमिति वृद्धाः ॥ ५१—५९ ॥

प्रयुञ्ज्यात्तैललशुनं पयसा वा शतावरीम् ।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ ६० ॥
दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी कृतास्पदः ।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत् ॥ ६१ ॥
जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा ।
रक्षेदुन्मादिनं चैव सद्यः प्राणहरा हि ते ॥ ६२ ॥"

तैललशुनादयः पंचयोगाः पिबन् चिरकारी चिकित्सा दर्शयति जलाग्नीत्यनेन जलादिसान्निध्ये यदि वेगो भवत्यपस्मारस्य तदा मरणमेव भवतीति दर्शयति ॥ ६०—६२ ॥

तत्र श्लोकौ ।

हेतुं कुर्वन्त्यपस्मारं दोषाः प्रकुपिता यथा ।
सामान्यतः पृथक्त्वाच्च लिङ्गं तेषां च भेषजम् ६३
महागदसमुत्थानं लिङ्गं चोवाच सौषधम् ।
मुनिर्व्याससमासाभ्यामपस्मारचिकित्सिते ॥ ६४ ॥

इति चरकसंहितायामपस्मारचिकित्सितं नाम
दशमोऽध्यायः ॥ १० ॥

संग्रहे कुर्वन्तीत्यादिना संप्राप्तिं गृह्णाति ॥ ६३ ॥ ६४ ॥ इत्यपस्मारचिकित्सितं समाप्तम् ।

---

## एकादशोऽध्यायः ।

### क्षतक्षीणचिकित्सितम् ।

उदारकीर्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित् ।
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ॥ १ ॥

अपस्माररोगेण विषमदोषादिभ्य उरःक्षतोऽपि भवति ततः क्षतक्षीणो भवति तत्संबन्धादपस्मारमनुक्षतक्षीणचिकित्सितमुच्यते । तत्र क्षतक्षीणरूपान्वक्ष्यमाणस्त्रीसेवकादिकरणशुक्रौजःक्षयाच्च जातो व्याधिः प्रधानमुरो रुध्यते इत्यादिना वक्ष्यमाणलक्षणकः कारणे कार्योपचारादुरःक्षत इत्युच्यते । यदा क्षतक्षीण इति पाठस्तदापि क्षीणशब्देन शुक्रौजःक्षययुक्तः पुरुष उच्यते । तथा क्षीणे च पुरुषे क्षतं भवतीति हेतोः क्षतक्षीण इत्युच्यते । अन्ये तु क्षतश्च क्षयश्च इति क्षतक्षयमित्याहुस्तेन रोगद्वयमेतत् । तयोरोरुक्शोणितच्छर्दिरित्यादिना क्षतस्य च क्षीणस्य च लक्षणं करिष्यति तस्मिन्पक्षेऽव्यक्तं लक्षणं तस्येति । तथा साध्यो बलवतो नवेत्यादौ एकव-

चननिर्देशोऽनुपपन्नस्तेनैकस्यैव क्षतक्षीणस्य हेतुकृतं लक्षणद्वैविध्यं किंवा क्षतक्षयकारणयोः क्षतधातुक्षीणयोस्तद्विधलक्षणकारणाभिधानं पूर्वरूपावस्थायां व्याधिप्रतिक्रियार्थं ज्ञेयम्। ब्रह्मर्षिरित्यनेन देवर्षित्वं राजर्षित्वमात्रेयस्य निषेधति। चिकित्सार्थमिति प्रतिक्रियार्थं चिकित्साभिधायकग्रन्थम् ॥१॥

"धनुषा यस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
पततो विषमोच्चेभ्यो युध्यमानस्य चाधिकैः ॥ २ ॥
वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ३
अधीयमानस्यात्युच्चैर्दूरं वा व्रजतो द्रुतम्।
महानदीं वा तरतो गजैर्वा सह धावतः ॥ ४ ॥
सहसोत्पततो दूरं तूर्णं चातिप्रनृत्यतः।
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते ॥ ५ ॥

इति क्षतनिदानम्।

चिकित्सा च निदानादिना ज्ञातस्यैव व्याधेर्भवति। तेन क्षीणनिदानमेव तावदाह धनुषेत्यादि आयस्यत इति शरीरमायास्यतो बलिभिरिति स्वापेक्षया बलाधिकैः निगृह्णत इति वारयतः, निर्घातोऽस्त्रविशेषः किंवा निर्घातः शिलादीनां प्रेरणविशेषोऽतिबलसंपादितः। अभ्याहतस्य परैरभिहतस्य। व्याधिरिति वक्ष्यमाणलक्षणः 'क्षतक्षयाख्यो व्याधिः। अन्ये तु व्याधिशब्देन वातमेवाहुः दोषादिष्वपि व्याधिशब्दो लभते इति वचनान्न चास्मिन् राजयक्ष्मरूपता शंकनीया, यतः उरःक्षतस्त्रिदोषजन्य एव भिन्नसंप्राप्तिश्च। अयथाबलमारंभैर्जन्तोरुरसि विक्षते। वायुः प्रकुपितो दोषौ संदीप्याभिधावतीत्यादिनोक्ता। लक्षणानि भिन्नान्येव उरो विरुज्यते इत्यादिना वक्ष्यमाणलक्षणेभ्य उक्तानि। अतएवाहानयोर्भेदान्वक्ष्यति उपेक्षिते भवेदस्मिन्संबन्धो राजयक्ष्मण इति ॥ २—५ ॥

स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः।
उरो विरुज्यते तस्य भिद्यतेऽथ विदह्यते ॥ ६ ॥

इति क्षीणरोगनिदानम्।

प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते।
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ॥ ७ ॥
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा।
दुष्टः श्यावः सदुर्गन्धः पीतो विग्रथितो बहुः ॥ ८ ॥
कासमानस्य च श्लेष्मा सरक्तः संप्रवर्तते।
सक्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ॥९॥

स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः, बलवान्व्याधिः समुदीर्यत इति संबन्धः। प्रमिताशनमेकरसाभ्यासः किंवातीतकालभोजनं। क्षतक्षयलक्षणमाह—उर इत्यादिना। भिद्यत इति विदीर्यते। अग्निवधादित्यत्राग्निवधं विना व्याधिमहिम्ना विड्भेदो भवतीति दर्शयति। अन्ये तु विड्भेदोऽग्निवधस्थेति पठन्ति। दुष्टो व्यापन्नः, क्षीयत इति धातुक्षयवान्भवति न केवलं क्षतादेव क्षीयते किंतु अतिस्त्रीसेवादिना कृताच्छुक्रौजःक्षयादपि क्षीयते इतरधातुक्षयवान्भवति ॥ ६—९ ॥

अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्।
उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते ॥ १० ॥
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः।
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ॥ ११ ॥
गते संवत्सरे याप्यः सर्वलिङ्गं तु वर्जयेत्।

पूर्वरूपमाह अव्यक्तमित्यल्पत्वेन यथोक्तलक्षणतया संपूर्णं। उरोरुगित्यादिग्रन्थस्तु प्रायेण विकृतिः। कासो वैशेषिक इति विशिष्टः स च विशेषो दुष्टः श्याव इत्यादिना प्रोक्तो ज्ञेयः। किंवा वैशेषिकोऽधिको ज्ञेयः। क्षीण इति शुक्रौजसी क्षीणे। अन्ये तु उरोरुगित्यादिनावस्थाद्वयं तस्य लक्षणद्वयमेतद्वर्णयन्ति। चिकित्साप्रवृत्त्यर्थं साध्यादिविभागमाह—अल्पेति परिसंवत्सरो वर्षातीतः ॥ १०—११ ॥

उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ॥१२॥
सद्य एव पिबेज्जीर्णे पयसाद्यात्सशर्करम्।
पार्श्वबस्तिरुजश्चाल्पपित्ताग्निस्तां सुरायुताम् ॥१३॥
भिन्नविट्कः समुस्तातिविषां पाठां सवत्सकाम्।
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ॥१४॥
त्वक्क्षीरीसंमितां क्षीरे पक्त्वा दीप्तानलः पिबेत्।
इक्ष्वालिकबिसग्रन्थिपद्मकेशरचन्दनैः ॥ १५ ॥
शृतं पयो मधुयुतं सन्धानार्थं पिबेत्क्षती।
यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम् ॥ १६ ॥
ज्वरदाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत्।
कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः।
मधूकमधुकद्राक्षा त्वक्क्षीरीपिप्पलीबलाः ॥ १७ ॥

ज्ञातरोगविशेषेण कर्तव्यां चिकित्सामाह—उरोमत्वेत्यादि। उरसः सद्यः क्षतं मत्वा लाक्षां पिबेदिति योजना। सशर्करमिति शर्करासहितमन्नं भिन्नविट्कः समुस्तातिविषां पाठां द्विवत्सकाम् इति पठन्ति ते वत्सकभागद्वयं ग्राहयन्ति किंवा वत्सकद्वयमेव वत्सकशब्देन गृह्यते। तथाहि बृहत्फलश्वेतपुष्पः स्निग्ध एव प्रभान्तरे। श्यावारुणाल्पपुष्पास्त्रीफलपर्वस्थाणुभिरिति कल्पे कुटजस्त्रीपुरुषविभाग उक्तः। संधानार्थमिति क्षतोरःसंधानार्थं मधुकशब्देनेह मधुकपुष्पं ग्राह्यम् ॥ १२—१७ ॥

एलापत्रत्वचोऽर्धाक्षाः पिप्पल्यर्धपलं तथा।
सितामधूकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ १८ ॥
संचूर्ण्य मधुना युक्ता गुलिकाः संप्रकल्पयेत्।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥ १९ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ २० ॥

शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतं क्षयम्।
गुलिका तर्पणी वृष्या रक्तपित्तं च नाशयेत्॥२१॥"
इति एलादिगुलिका।

एलापत्रत्वचेति गुडिका गुर्वयेति यावता मधुना गुटिका भवन्ति तावन्मानं मधु ज्ञेयम्॥ १८—२१॥

रक्तेऽतिवृत्ते दक्षाण्डं यूपैस्तोयेन वा पिबेत्।
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम्॥२२॥
चूर्णं पौनर्नवं रक्तशालितण्डुलशर्करम्।
रक्तष्ठीवी पिबेत्सिद्धं द्राक्षारसपयोघृतैः॥ २३॥

दक्षो गोष्ठकुक्कुरः। छागजांगलमिति छागभवं वा जांगलहरिणादिभवं वा चूर्णं पुनर्नवेत्यादौ सिद्धमिति साधितम्। चूर्णसाधनं द्राक्षारसादिद्रव्येण अग्निसंयोगात् चूर्णं वृंहणमात्रकं कर्तव्यम्। उक्तंहि जतूकर्णे—पुनर्नवारक्तशालीद्राक्षासिताचूर्णं पयोयुतं सिद्धमिति॥ २२॥ २३॥

मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम्।
मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम्॥ २४॥
क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रः सबलेऽनिले।
शृतक्षीरसरेनाद्यात्सक्षौद्रघृतशर्करम्॥ २५॥
शर्करां च यवक्षौद्रजीवकर्षभकौ मधु।
शृतक्षीरानुपानं वा लिह्यात्क्षीणः क्षतः कृशः २६
क्रव्यादमांसनिर्यूहं घृतभृष्टं पिबेच्च सः।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम्॥ २७॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः।
तालमस्तकजम्बूत्वक्प्रियालैश्च सपद्मकैः॥ २८॥
साश्वकर्णैः शृतात्क्षीराद्द्याज्जातेन सर्पिषा।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः॥२९॥
यष्ट्याह्वानागवलयोः क्वाथे क्षीरसमं घृतम्।
पयस्या पिप्पली वांशी कल्कसिद्धं क्षते शुभम् ३०
कोललाक्षारसे तद्वत्क्षीराष्टगुणसाधितम्।
कल्कैः कट्फलदार्वीत्वग्वत्सकत्वक्फलैर्घृतम्॥३१॥
जीवकर्षभकौ वीरां जीवन्तीं नागरं शटीम्।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ३२
पुनर्नवे द्वे मधुके आत्मगुप्तां शतावरीम्।
ऋद्धिं परूषकं भार्गीं मृद्वीकां बृहतीं तथा॥ ३३॥
शृङ्गाटकीं तामलकीं पयस्यां पिप्पलीं बलाम्।
बदराक्षोटखर्जूरवातामाभिषुकाण्यपि॥ ३४॥
फलानि चैवमादीनि कल्कान् कुर्वीत कार्षिकान्।
धात्रीरसविदारीक्षुछागमांसरसं पयः॥ ३५॥
कुर्यात्प्रस्थोन्मितं तेन घृतप्रस्थं विपाचयेत्।
प्रस्थार्धं मधुनः शीते शर्करार्धतुलां तथा॥ ३६॥
द्विकार्षिकाणि पत्रैलाहेमत्वङ्मरिचानि च।
चूर्णितानि विनीयास्माल्लिह्यान्मात्रां सदा नरः ३७
अमृतप्राशमित्येतन्नराणाममृतं घृतम्।
सुधामृतरसं प्राश्य क्षीरमांसरसाशिना॥ ३८॥
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्षितान्।
स्त्रीप्रसक्तान्कृशान्वर्णस्वरहीनांश्च बृंहयेत्॥ ३९॥
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत्।
पुत्रदं वमिमूर्च्छाहृद्योनिमूत्रामयापहम्॥ ४०॥
इत्यमृतप्राशघृतम्।

मधुकेत्यादौ मधूकमधुककल्केन क्षीरेण सम साधितं तण्डुलीयकशाकं। सबलेत्यादि बलवत्यनले। क्रव्यादाः मांसभुजो मृगपक्षिणः। क्षीराज्जातेनेति क्षीरावस्थायामेव गृहीतेन। यष्ट्याह्वेत्यादौ मधूकमधुककल्केन क्षीरेण सम क्वाथक्षीराभ्यां घृतात् चातुर्गुण्यम्। वांशी वंशलोचना। कोलेत्यादौ तद्वदिति क्षते हितं, अत्र कोलरसस्य लाक्षारसस्य च घृताच्चातुर्गुण्यम्। क्षीरं चाष्टगुणं ददति किंवा कोललाक्षारसयोः समत्वमेव क्षीरेण। अयं च न्यायोऽपस्माराध्याये निर्दिष्टः। निदिग्धिकेति वचनेन बृहतीलता बृहतिका ग्राह्या। पयस्या विदारिगन्धा अक्षीरवातामाभिषुकाणि तु औत्तरापथिकानि फलानि। एवमादीनि इति एवंप्रकाराण्यन्यानि वातपित्तहराणि। धात्रीरसानां च यद्यपि "पंचप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहु"रिति वचनेन प्रस्थमानत्वं सिद्धम्। तथापि एतत्परिभाषार्थदार्ढ्यार्थमेवैतन्मानकथनं ज्ञेयम्। पलार्धकत्वमिह मरिचादीनां मिलितानां समाहारप्रधानत्वान्निर्देशस्य। वृद्धाबलवतीन्यायात्तु प्रत्येकमेव पलार्धकत्वं भवति। सुधाभोगभोज्या। अमृतं तु देवभोज्यम्॥ २४—४०॥

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम्।
दर्भमूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम्॥ ४१॥
पालिकं साधयेत्तेषां रसे क्षीरचतुर्गुणे।
कल्कः स्वगुप्ताजीवन्तीमेदर्षभजीवकैः॥ ४२॥
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्द्रवशूलनुत्॥ ४३॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः॥ ४४॥
इति श्वदंष्ट्रादिघृतम्।

श्वदंष्ट्रेत्यादौ क्वाथ्यद्रव्यपरिमाणानुसारेण पादोनप्रस्थत्रयं जलं दत्त्वा चतुर्भागावशेषेण द्वात्रिंशत् क्वाथपलानि भवन्ति। क्षीरं चात्र चतुर्गुणं शृतात् किंवा क्वाथचतुर्गुणं क्षीरम्॥ ४१—४४॥

मधुकाष्टपले द्राक्षाप्रस्थक्वाथे घृतं पचेत्।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले॥ ४५॥
पृथगष्टपलं क्षौद्रे शर्कराभ्यां विमिश्रयेत्।
समं शक्तु क्षतक्षीणे रक्तगुल्मेषु तद्धितम्॥ ४६॥
इति शक्तुप्रयोगः।

मधुकेत्यादावपि क्वाथ्यमानानुसारेण क्वाथस्यार्धप्रस्थो भवति । समशर्कुरिति समंशकुघृतम् ॥ ४५ ॥ ४६ ॥

धात्रीफलविदारीक्षुजीवनीयरसाद्धृतात् ।
छागगोपयसोश्चैव सप्तप्रस्थान्पचेद्भिषक् ॥ ४७ ॥
सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत्ततः ।
यक्ष्मापस्मारपित्तासृक्कासमोहक्षयापहम् ॥ ४८ ॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।
घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ४९
लीढं निर्वापयेत्पित्तमल्पत्वाद्धन्ति नानिलम् ।
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ ५० ॥

घृतं लिलादिनेह योग्यानि पानानि शर्करादियोगाद्धृताद्युक्तानि तानि पित्ते लेह्यतया कर्तव्यानि । यानि तु शर्करादिरहितत्वेन पानयोग्यानि तानि वाते कर्तव्यानीति दर्शयति । किंवा स्त्यानावस्थायोगीनि उपयोगाल्लेह्यतया पित्ते प्रयोक्तव्यानि तान्येव विलीनावस्थायामापन्नानि तानि वायोः कर्तव्यानि । घृतलेहस्य घृतपानस्य च पृथक् फलमाह—निर्वापयेदित्यादि । अल्पत्वादिति लेहत्वेनैवाल्पत्वात् लेहस्य कर्षमानत्वेनोक्तत्वात् । आक्रमतीति जयति । निरुणद्धीति न प्रतिहन्ति । न रुणद्धीति केचित्पठन्ति ॥ ४७—५० ॥

क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि च ।
त्वक्क्षीरीशर्करालाजचूर्णैः पानानि योजयेत् ५१
सर्पिर्गुडान् समध्वंशाञ्जग्ध्वा दद्यात्पयोनु च ।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ५२ ॥

क्षामेत्यादौ क्षामः क्रान्तदेहः क्षीणो दुर्बलः कृशो हीनमांसः । त्वक्क्षीर्यादीनां तावन्मानं ज्ञेयं यावता घृतस्य पानत्वं । समध्वांशेत्यनेन मधुनः त्वक्क्षीर्यादिसमानतामाह ॥५१॥५२॥

बलां विदारीं ह्रस्वां च पञ्चमूलीं पुनर्नवाम् ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्टयंशकामपि ॥५३॥
एषां कषाये द्विक्षीरे विदार्याजरसांशिके ।
जीवनीयैः पचेत्कल्कैरक्षमात्रैर्घृताढकम् ॥ ५४ ॥
सितापलानि पूतेऽस्मिन् शीते द्वात्रिंशतं क्षिपेत्
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ ५५ ॥
सक्षौद्रं कुडवांशेन तत्सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुडान्कृत्वा भूर्जपत्रेण वेष्टयेत् ॥ ५६ ॥
ताञ्जग्ध्वा पलिकान्क्षीरं मद्यं वानुपिबेत्कफे ।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्षिते ॥ ५७ ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले विभेदे स्वरवर्णयोः ॥ ५८ ॥

इति सर्पिर्गुडः ।

त्वक्क्षीरीश्रावणीद्राक्षामूर्वकर्षभजीवकैः ।
वीरर्द्धिक्षीरकाकोलीबृहतीकपिकच्छुभिः ॥ ५९ ॥
खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतात्पचेत् ॥ ६० ॥
शर्करार्धतुलां शीते क्षौद्रार्धप्रस्थमेव च ।
क्षिप्त्वा सर्पिर्गुडान्कुर्यात्कासहिक्काज्वरापहान् ६१
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ।
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम् ६२

इति सर्पिर्गुडकः ।

बलामित्यादि । क्षीरिवृक्षा उदुंबराश्वत्थकपीतनाः । उक्तं शालाक्ये "उदुंबरोवटोऽश्वत्थमधुकःप्लक्ष एव च । पंचैतेक्षीरवृक्षसंज्ञास्मिन्प्रकीर्तितेत्युक्तं" । मुष्ट्यंशका इति पलमानाः । अत्र च बलादीनां त्रयोदशोपनीतेषु क्वाथ इति षड्विंशतिक्वाथपलानि । एतत्कषायाद्द्विगुणं क्षीरम् । विदारीरसः छागमांसरसश्च कषायः एवं त्रिंशत्पलाधिकं पलशतमिह घृताढके पक्तव्यं भवति । अन्ये तु क्वाथ्यात् षोडशगुणजलदानपरिभाषया साधिते क्वाथे पंचाशत् क्वाथपलान्याहुः । एतदनुसारेण क्षीरादिदानमप्यधिकं भवतीत्याहुः । किंतु क्वाथत्रयोदशपलेऽत्र पानीयं तथा पक्तव्यघृतसमः क्वाथो भवति । क्वाथो ह्यत्र चतुर्द्रवसाध्ये घृतस्नेहसम एव भवति । एतत्क्वाथः पेया च द्विगुणं क्षीरं समश्च विदारीरसः छागमांसरसश्च देयः । किंवा विदार्याजमांसयोर्मिलित्वा ध्याढकांशमयो देयः । उक्तंहि जतूकर्णे—श्वश्रीवं पंचमूलं च बला विदारीं वटादिशुङ्गांश्च । निष्क्वाथ्य द्विक्षीरे छागविदारीरसे च समे । जीवनकल्कैः पक्त्वा घृताढकमिति । अत्र हि क्वाथ्यद्रव्यमानमनियतमिति विशेषः । क्वाथस्तु स्नेहसम एव । खजो मन्था पंचांगुलो वा दृष्टः । भूर्जपत्रवेष्टनं च शक्त्युत्कर्षणार्थम् । त्वक्क्षीरीत्यादौ श्रावणी मुण्डिकेरी च विदारीकन्दः ॥ ५३—६२ ॥

द्राक्षां नवामामलकीमात्मगुप्तां पुनर्नवाम् ।
शतावरीं विदारीं च समांशां पिप्पलीं तथा ॥६३॥
पृथग्दशपलान् भागान् पलान्यष्टौ च नागरात् ।
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ॥ ६४ ॥
क्षीरतैलघृतानां च त्र्याढके शर्कराशते ।
क्वथिते तानि चूर्णानि दत्त्वा बिल्वसमान्गुडान् ६५
कुर्यात्तान्भक्षयेत्क्षीणः क्षतशुष्कश्च मानवः ।
तेन सद्यो रसादीनां वृद्ध्या पुष्टिं स विन्दति ॥ ६६ ॥

इति तृतीयसर्पिर्गुडकः ।

द्राक्षामित्यादौ यष्ट्याह्वसौवर्चलयोर्मिलित्वा द्विपलम् । मरिचस्य पलमिति शेषः । उक्तंहि जतूकर्णे घृततैलपयस्त्र्याढके सिता तुलां च प्रपच्य द्राक्षाविदारीश्वश्रीवशतावरी कृष्णा शुण्ठी बला धात्रीश्च दशपलिकाः प्रपञ्चयेत् । यष्ट्याह्वारुचकं च पलिकमित्यादि । क्वथित इति भाषया क्षीणे एव क्षीरे चूर्णप्रक्षेपं दर्शयति ॥ ६३—६६ ॥

गोक्षीराद्याढकं सर्पिः प्रस्थमिक्षुरसाढकम् ।
विदार्याः स्वरसात्प्रस्थं रसात्प्रस्थं च तैत्तिरात् ६७

दद्यात्सिध्यति तस्मिंस्तु पिष्टानिक्षुरसेरिमान् ।
मधूकपुष्पं कुडवं पियालकुडवं तथा ॥ ६८ ॥
तुगाक्षीर्यर्धकुडवां खर्जूराणि च विंशतिम् ।
पृथग्विभीतकानक्षः पिप्पल्याश्च चतुर्थिकाम् ॥६९॥
त्रिंशत्पलानि खण्डाच्च मधुकात्कर्पमेव च ।
तथार्धपलिकान्यत्र जीवनीयानि चावपेत् ॥ ७० ॥
सिद्धेऽस्मिन्कुडवं क्षौद्रं शीते क्षिप्त्वाथ मोदकान् ।
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥ ७१ ॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च ।
शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते ॥७२॥
कृशदुर्बलवृद्धानां पुष्टिवर्णबलार्थिनाम् ।
योनिदोषक्षतस्रावहतानां चापि योषिताम् ॥७३॥
गर्भार्थिनीनां गर्भश्च स्रवेद्यासां म्रियेत वा ।
धन्या वल्या हितास्ताभ्यः शुक्रशोणितवर्धनाः ७४

चतुर्थसर्पिर्मोदकम् ।

गोक्षीरेत्यादौ गोक्षीरमानं कारणतयोच्यते न घृतपाकः । तथाहि सति प्रक्षेप्यचूर्णेन मोदका न भवेयुः । चतुर्थिकापलं ॥ ६७—७४ ॥

वस्तिदेशे विकुर्वाणे स्त्रीप्रसक्तस्य मारुते ।
वातघ्नान्बृंहणान्वृष्यान्योगांस्तस्य प्रयोजयेत् ७५
शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण वा ।
संयुक्तं वा शृतं क्षीरं पिबेत्कासज्वरापहम् ॥७६॥
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम् ।
स्त्रीषु क्षीणः पिबेद्यूपं जीवनं बृंहणं परम् ॥ ७७ ॥
सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम् ।
यावन्न सात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ७८
जीवनीयोपसिद्धं वा घृतभृष्टं तु जाङ्गलम् ।
रसं प्रयोजयेत् क्षीणो व्यञ्जनार्थं सशर्करम् ॥ ७९ ॥
गोमहिषाश्वनागाजैः क्षीरैर्मांसरसैस्तथा ।
यथाग्नि भोजयेद्यूषैः फलाम्लैर्घृतसंस्कृतैः ॥ ८० ॥
दीप्तेऽग्नौ विधिरेषः स्यान्मन्दे दीपनपाचनः ।
यक्ष्मिणां विहितो ग्राही भिन्ने शकृति चेष्यते ॥८१॥

विकुर्वाण इति शूलादिविकारं कुर्वाणे । शर्करेत्यादौ प्रक्षेपन्यायेन क्षीरशर्करादिप्रक्षेपः । वस्त्रपूतानामिति वस्त्रान्तरालपतितानाम् । मन्देऽग्नौ यक्ष्मिणां यो विहितः भिन्ने शकृति च यो ग्राही स विधिरिष्यत इति ज्ञेयम् ॥ ७५—८१ ॥

पलिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात्पले ।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रसर्जकात् ॥८२॥
एकैकं मरिचाजाज्योर्धान्यकाद्वे चतुर्थिके ।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥ ८३ ॥
कृत्वा चूर्णमतो मात्रामन्नपाने प्रयोजयेत् ।
रोचनं दीपनं वल्यं पार्श्वार्तिश्वासकासनुत् ॥८४॥

इति सैन्धवादिचूर्णम् ।

एका षोडशिका धान्याद्वि द्वेऽजाज्यजमोदयोः ।
ताभ्यां दाडिमवृक्षाम्लद्विर्द्विः सौवर्चलात्पलम् ८५
शुण्ठ्याः कर्षं दधित्थस्य मध्यात्पञ्च पलानि च ।
तच्चूर्णं षोडशपले शर्करायां विमिश्रयेत् ।
पाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ॥ ८६ ॥

इति पाडवः ।

पलिकमिति पलमानम् । षोडशिकापलं दाडिमवृक्षाम्लद्विद्विरिति पूर्वद्विपलापेक्षया द्विगुणं प्रत्येकं चतुःपलत्वं दर्शयति । पूर्ववदिति पूर्वयोगसमानफलतामाह—अत्र जतूकर्णः पलिके धान्यकरुचकः द्वौ जीवकदीप्यकौ शुण्ठ्याश्च पलम् । कपित्थदाडिमवृक्षाम्लानां कुडवमित्यादि ॥ ८२—८६ ॥

पिबेन्नागबलामूलस्यार्धकर्षविवर्धनम् ।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥ ८७ ॥
एष प्रयोगः पुष्ट्यायुर्बलारोग्यकरः परः ।
मण्डूकपर्ण्याः कल्पोऽथ शुण्ठीमधुकयोस्तथा ८८
"यच्चत्संतर्पणं शीतमविदाहि हितं लघु ।
अन्नपानं निषेव्यं तत्क्षतक्षीणैः सुखार्थिभिः ॥८९॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम् ।
तच्च कुर्यादपेक्ष्याग्निं व्याधिं सात्म्यबलांस्तथा ९०

नागबलेत्यादौ अर्धकर्षप्रभृति अर्धकर्षेणैव वर्धितं पलं मासमेकं पेयम् । केवलं क्षीरवर्तिनां । उक्तं हि जतूकर्णे नागबला समूलार्धकर्षवृद्धा पलमाना मासं पेया क्षीरमात्रवृत्तिरिति । शीतं चापि स्पर्शे कन्तिकारि विदाहि भवति तदर्थमविदाहीत्युक्तम् ॥ ८७—९० ॥

उपेक्षितो भवेत्तस्मिन्ननुबन्धो हि यक्ष्मणः ।
प्रागेवागमनात्तस्य तस्मात्तं त्वरया जयेत् ॥९१॥"

तत्र श्लोकौ ।

क्षतक्षयसमुत्थानं सामान्यपृथगाकृतिम् ।
असाध्ययाप्यसाध्यत्वं साध्यानां सिद्धिमेव च ९२
उक्तवाञ्ज्येष्ठशिष्याय क्षतक्षीणचिकित्सिते ।
तत्त्वार्थविद्वीतरजस्तमोदोषः पुनर्वसुः ॥ ९३ ॥

इति चरकसंहितायां क्षतक्षीणचिकित्सितं नाम
एकादशोऽध्यायः ॥ ११ ॥

क्षतक्षीणस्य त्वरया प्रतिकर्तव्यतामाह उपेक्षित इत्यादि तस्येति यक्ष्मणः । संग्रहे सामान्यपृथगिति क्षतोत्थस्य क्षयोत्थस्य च उदरोऽभिरुज्यत इत्यादि पृथक्लक्षणं कृतम् ॥ ९१—९३ ॥ इति क्षतक्षीणचिकित्सितं समाप्तम् ॥

## द्वादशोऽध्यायः ।

### श्वयथुचिकित्सितम् ।

भिषग्वरिष्ठं सुरसिद्धजुष्टं
मुनीन्द्रमत्र्यात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथाव-
त्प्रकोपरूपप्रशमानपृच्छत् ॥ १ ॥

क्षतक्षीणे मर्मोपघातो भवति शोथेऽपि मर्मोपघातः कारणं तेन समानहेतुतया क्षतक्षयमनु शोथचिकित्सितमुच्यते । जुष्टमिति सेवितं । प्रकोपयतीति प्रकोपो हेतुरित्यर्थः । किंवा कार्यकारणयोरभेदोपचारात्प्रकोपशब्देन श्वयथुकारणमुच्यते । रूपशब्देन रूपपूर्वरूपयोर्ग्रहणं तेन सर्वत्वगाश्रितत्वेन तच्छमनं चिकित्सोच्यते ॥ १ ॥

तस्मै जगादागदवेदसिन्धु-
प्रवर्तनाद्रिप्रवरोऽत्रिजस्तान् ।
वातादिभेदास्त्रिविधस्य सम्यङ्-
निजानिजैकाङ्गजसर्वजस्य ॥ २ ॥

अगदार्थं आरोग्यार्थो यो वेदोऽगदवेदः स एव गम्भीरप्रसन्नत्वात्सिंधुरिव सिंधुस्तस्य प्रवर्तनेऽद्रिप्रवरो हिमालय इव इत्यर्थः । यथा हिमालयो गंगायाः प्रवर्तकस्तथात्रिजोऽपि अग्निवेशप्रवर्तक इत्यर्थः । तानिति प्रकोपादीन् । यान् शिष्यः पृष्टवान् एकांगजसर्वजस्येत्यत्र सर्वजशब्देन सर्वशरीरस्य ग्रहणं कर्तव्यम् । एकांगजशब्देन च सामान्येन शरीराव्यापकस्य ग्रहणं तेन सर्वार्धगात्रावयवाश्रीतत्वं यत्त्रैविध्यं वक्तव्यं तत्रैकांगजेनार्धगात्राश्रीतावयवादिग्रहणं कर्तव्यम् ॥२॥

शुद्ध्यामयाभक्तकृशाबलानां
क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्ट-
गरोपसृष्टान्ननिषेवणं च ॥ ३ ॥
अर्शांस्यचेष्टा न च देहशुद्धि-
र्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणां च
निजस्य हेतुः श्वयथोः प्रदिष्टः ॥ ४ ॥

शुद्धिर्वमनादि शोधनं । आमया ज्वरादयः, अभुक्तमभोजनं, विगुणं च भोजनं विरुद्धं भोजनं तैः कृशानामबलानां च क्षारादिसेवा निजस्य श्वयथोर्हेतुरिति योज्यम् । रत्यादि तु स्वतन्त्रमेव हेतुः । आममपक्वं दुष्टदोषकारकं । नच देहशुद्धिरिति शोधनार्हेऽपि देहे देहाशुद्धिः । मर्मोपघात इह दोषकृत एव ज्ञेयः । बाह्यहेतुस्तु मर्मोपघाते आगन्तुर्हेतुरेव विषमाप्रसूतिरकालगर्भपतनका । प्रतिकर्मणामिति वमनादीनां । मिथ्योपचारेति असम्यगुपचारः ॥ ३ ॥ ४ ॥

बाह्यास्त्वचो दूषयिताभिघातः
काष्ठाश्मशस्त्राग्र्यशनीविषाद्यैः ।
आगन्तुहेतुस्त्रिविधो निजश्च
सर्वार्धगात्रावयवाश्रितत्वात् ॥ ५ ॥

बाह्या इत्यादिनागन्तुशोथहेतुमाह—बाह्या इत्यसंभवः । एतेन गम्भीरत्वग्दूषकत्वं शोथस्य न भवति । त्वच इति कर्मपदं दूषयिता हलन्तमभिघातविशेषेण काष्ठाश्मशन्यश्मविषगकारणकः । आदिशब्दो हि कारणवाची । तेन काष्ठादिकारणमभिघात इत्यर्थः । काष्ठादिश्च संक्षेपोक्त्या दन्तादीनामप्युपलक्षणा ज्ञेया । किंवा दिशब्दः प्रकारवाची तेन काष्ठादिकृतोऽभिघातः काष्ठादिशब्देनोच्यत इति कृत्वाभिघातेन समं समानाधिकरणं ज्ञेयम् । आगन्तुहेतुरिति च्छेदः । त्रिविध इति सर्वार्धगात्रावयवाश्रितत्वेन निजस्त्रिविधः । चकारात् आगन्तुरपि यथोक्तभेदात्त्रिविध इत्यर्थः ॥ ५ ॥

बाह्याः शिराः प्राप्य यदा कफासृक्-
पित्तानि संदूषयतीह वायुः ।
तैर्बद्धमार्गः स तदा विसर्प-
न्नुत्सेधलिङ्गं श्वयथुं करोति ॥ ६ ॥

बाह्याः शिरा इत्यादिसंप्राप्तिकथनं बाह्या इति । शिराशब्देन स्रोतसां सामान्येन ग्रहणं । बद्धमार्ग इत्यावृतमार्गः उत्सेधेनाव्यभिचारिणा लिंग्यत इत्युत्सेधलिंगः ॥ ६ ॥

उरःस्थितैरूर्ध्वमधस्तु वायोः
स्थानस्थितैर्मध्यगतैस्तु मध्ये ।
सर्वाङ्गगैः सर्वगतैः क्वचित्स्थै-
र्दोषैः क्वचित्स्याच्छ्वयथुस्तदाख्यः ॥ ७ ॥

उरःस्थितइत्यादिना विशिष्टशोथानां संप्राप्तिविशेषमाह—ऊर्ध्वमित्युरःप्रभृति ऊर्ध्वशरीरे । अथ इति आमपक्वाशयप्रभृति वायोः स्थाने पक्वाशयमध्यगतैः इत्युरःपक्वाशयमध्यगतैः । क्वचिदिति कण्ठताल्वादिदेशे तदाख्य इति गलशोथ इति शब्दाख्य इति । किंवा ऊर्ध्वशोथाधःशोथ इत्यादिशब्दाख्य इति सर्वत्र योजनीयं ॥ ७ ॥

ऊष्मा तथा स्याद्दवथुः सिराणा-
मायाम इत्येव च पूर्वरूपम् ।
सर्वस्त्रिदोषोऽधिकदोषलिङ्गै-
स्तत्संज्ञमभ्येति भिषग्जितं च ॥ ८ ॥

ऊष्मेत्यादिना पूर्वरूपमाह—दवथुस्तापः तत्रेति । चक्षुरादिभ्यः । सिराणामायाम इति सिराप्रसरणम् । सर्वशोथानां त्रिदोषजत्वेऽपि वातजादिव्यपदेशो वातजा चिकित्सा यथा भिन्ना भवतीति निर्देष्टुमाह सर्वेत्यादि । अधिकानि बाधिकस्य दोषस्य लिंगानि इत्यधिकदोषलिङ्गैः । तत्संज्ञमिति अधिकदोषसंज्ञं वातजोऽयमित्यादिकम् प्राप्नोति तदाभिषग्जितं चाधिकदोषलिङ्गैः प्राप्नोति । अधिकदोषलिङ्गप्रयुक्तं चिकित्सितभेदं प्राप्नोतीत्यर्थः ॥ ८ ॥

सगौरवं स्यादनवस्थितत्वं
सोत्सेधमुष्माथ शिरातनुत्वम् ।
सलोमहर्षाङ्गविवर्णता च
सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥ ९ ॥
चलस्तनुत्वक्परुषोऽरुणोऽसितः
सुषुप्तिहर्षार्तियुतोऽनिमित्ततः ।
प्रशाम्यति प्रोन्नमति प्रपीडितो
दिवाबली च श्वयथुः समीरणात् ॥ १० ॥

सगौरवमित्यादिना सामान्यलिङ्गं पठति । चल इत्यादिना वातलिङ्गमाह । तनुत्वगित्यबहलत्वक् । असित इति कृष्णः । सुप्तिः स्पर्शाज्ञानं हर्षो रणरणिकेति ख्याता वेदना किंवा रोमहर्षः । अनिमित्ततः प्रशाम्यतीति वायोश्चलत्वेन कदाचित् निमित्तेन विनापि लीनो भवति । केचित् निमित्तमिति पठन्ति तेन स्नेहोष्णमर्दनादिना प्रशाम्येत् स च वातिक इति । प्रोन्नमतीति संपीडनानन्तरमेवोन्नमति ॥ ९ ॥ १० ॥

मृदुः सगन्धोऽसितपीतरागवा-
न्भ्रमज्वरस्वेदतृषामदान्वितः ।
य उष्यते स्पर्शसहोऽक्षिरागकृ-
त्सपित्तशोथो भृशदाहपाकवान् ॥ ११ ॥

मृद्वित्यादिना पित्तशोथमाह—उष्यत इति दह्यते । स्पर्शसह इति स्पर्शनं न सहते ॥ ११ ॥

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत् ।
सुकृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिबली कफान्वितः ॥ १२ ॥

गुरुरित्यादिना कफशोथमाह । अरोचकान्वित इति अरोचकव्याधिसहचारी । कृच्छ्रजन्मप्रशम इति चिरोत्पत्तिविनाशः । रात्रिबली कफात्मक इति रात्रौ स्रोतोरोधजेन देहक्लेदेनाचेष्टया च कफस्य वृद्धत्वात् तज्जनितशोथो बलवान् भवति दिवा न भवति । दिवा तु स्फुटस्रोतसि शरीरे चेष्टायुक्तेन कफोऽबली भवति दिवा च कफशोथस्तु हीयते ॥१२॥

कृशस्य रोगैरबलस्य यो भवे-
दुपद्रवैर्वा वमिपूर्वकैर्युतः ।
महार्तिमर्मानुगतोऽथ राजिमा-
न्परिस्रवन्भीमबलश्च सर्वशः ॥ १३ ॥

संप्रत्यसाध्यसाध्यभागमाह—कृशस्येत्यादि । वमिपूर्वकैरिति त्रिशोथीये "छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरातीसार एव च । सुप्तिः शोषः सदौर्बल्यः शोथोपद्रवसंग्रह" इति अनेनोक्तैः । मर्मानुगतो राजिमानिति च पृथक् लक्षणम् । परिस्रवमित्यादि च पृथक् पृथगसाध्यलक्षणम् ॥ १३ ॥

अहीनमांसस्य य एकदोषजो
नवोऽबलस्तस्य सुखः स साधने ।
निदानदोषर्तुविपर्ययक्रमै-
रुपाचरेत्तं बलदोषकालवित् ॥ १४ ॥

अहीनेत्यादिना सुखसाध्यलक्षणमुच्यते । कृच्छ्रसाध्यलक्षणं च सुखसाध्यलक्षणासंपूर्णतायां ज्ञेयम् । श्वयथोश्च हेतुलक्षणानि त्रिशोथीयोक्तान्यपि प्रकरणात्संक्षेपेण इहापि कथितानि । सामान्येन चिकित्सासूत्रमाह निदानेत्यादि । निदानादिविपरीतक्रमैः लङ्घनादिभिरुपाचरेदित्यर्थः । बलदोषकालविदित्यनेन निदानादेर्विपरीता क्रिया युक्ता । बलं तथा दोषं विरामादिभेदभिन्नं तथाकालं च व्याध्यवस्थारूपं विदित्वा या युज्यते सा कर्तव्येति दर्शयति । निदानेत्यादौ दोषशब्देन वातादयो गृह्यन्ते । ऋतुशब्देन च नित्यगः कालः । तेनैव तद्विशिष्टवाचकतया बलदोषकालविदिति वचनं न पुनरुक्तम् । अन्ये तु प्रथमेन दोषशब्देन दूष्यधातुग्रहणं । कृतेन प्रथमव्याख्यानेन दोषशब्देनैव दूष्यस्यापि दोषाधारस्य ग्रहणं ज्ञेयम् ॥ १४ ॥

अथामजं लङ्घनपाचनक्रमै-
र्विशोधनैरुल्बणदोषमादितः ।
शिरोगतं शीर्षविरेचनैरधो-
विरेचनैरूर्ध्वहरैस्तथोर्ध्वजम् ॥ १५ ॥
उपाचरेत् स्नेहगतं विरूक्षणैः
प्रकल्पयेत्स्नेहविधिं च रूक्षजे ।
विबद्धविट्केऽनिलजे निरूहणं
घृतं तु पित्तानिलजे सतिक्तकम् ॥ १६ ॥
पयश्च मूर्च्छारतिदाहतर्षिते
विशोधनीये तु समूत्रमिष्यते ।
कफोत्थितं क्षारकटूष्णसंयुतैः
समूत्रतक्रासवयुक्तिभिर्जयेत् ॥ १७ ॥

आमजमिति एकदोषजनितं । अपक्वता च प्रायो दोषाणां प्रथमदुष्टौ भवति । क्रमैरित्युपक्रमैरधोविरेचनैरुपाचरेत् । ऊर्ध्वहरैरिति वमनैः । ऊर्ध्वजमित्युक्तं सतिक्तकं घृतमिति साधितं घृतं । पित्तानिलजेति वातपित्तजद्वन्द्वे । मूर्च्छादय इह संजाता यस्य तस्मिन् मूर्छारतिदाहतर्षिते विशोधनीय इति मूर्छायुक्त एव विशोधनीयः । समूत्रेति मूत्रसमभागं ॥ १५—१७ ॥

ग्राम्यानूपं पिशितलवणं शुष्कशाकं नवान्नं
गौडं पिष्टं दधि तिलकृतं विज्जलं मद्यमम्लम् ।
धाना वल्लूरमशनमथो गुर्वसात्म्यं विदाहि
स्वप्नं रात्रौ श्वयथुगदवान्वर्जयेन्मैथुनं च ॥ १८ ॥

वातेत्यादिना निदानत्वेनैव प्राप्तनिषेधापि महात्ययावहत्वादत्यर्थनिषेधोपदर्शनार्थमाह । गौडमिति गुडविकारं तस्य विकारे आधिक्यं । धानाङ्कुरितभृष्टयवाः । वल्लूरं शुष्कमांसं अशनं पथ्यापथ्ययोरेकत्रभोजनं ॥ १८ ॥

व्योषं त्रिवृत्तिक्तकरोहिणी च ।
सायोरजस्का त्रिफलारसेन ।
पीतं कफोत्थं शमयेत्तु शोफं
मूत्रेण गव्येन हरीतकी वा ॥ १९ ॥
हरीतकीनागरदेवदारु-
सुखाम्बुयुक्तं सपुनर्नवं वा ।
सर्वं पिबेत्त्रिष्वपि मूत्रयुक्तं
स्नातश्च जीर्णे पयसान्नमद्यात् ॥ २० ॥

अत्र कफदोषस्यैव चिकित्सितत्वे प्रथमं व्योषमित्यादिना कफशोथचिकित्सामाह। सायोरजस्केति अनेन मारितमेवात्र अयोरज इच्छन्ति। रसायनेऽपि मृतायोरजस एव प्रयोगोपदेशात्। अयोरजः न समं तुल्यमानं अयो हि दुःपरिणामं तेनायःप्रयोगेऽल्पमेव लोहं मानानुसारेण ज्ञेयम्। हरीतक्यादीनां कल्कः सुखांबुना पेयः। सपुनर्नवं वा सर्वमिति हरीतक्यादिस्त्रिष्वपि वातादिजेषु स्नातश्चेत्यादिविधिरन्ते उक्तत्वात् उक्तसर्वप्रयोगेषु ज्ञेयः ॥ १९ ॥ २० ॥

पुनर्नवानागरमुस्तकल्का-
न्प्रस्थेन क्षीरः पयसोऽक्षमात्रान् ।
मयूरकं मागधिकां समूलां
सनागरां वा प्रपिबेत्सवाते ॥ २१ ॥
दन्तीत्रिवृद्व्यूषणचित्रकैर्वा
पयः शृतं दोषहरं पिबेद्वा ।
द्विप्रस्थमात्रं च पलार्धिकैस्तै-
रर्धावशिष्टं पवने सपित्ते ॥ २२ ॥
सशुण्ठि पीतद्रुरसं प्रयोज्यं
श्यामोरुबूकोषणसाधितं वा ।
त्वग्दारुवर्षाभुमहौषधैर्वा
गुडूचिकानागरदन्तिभिर्वा ॥ २३ ॥
सप्ताहमौष्ट्रं यदि वापि मासं
पयः पिबेद्भोजनवारिवर्जी ।
गव्यं समूत्रं महिषीपयो वा
क्षीराशनं मूत्रमथो गवां वा ॥ २४ ॥
तक्रं पिबेद्वा गुरुभिन्नवर्चाः
सव्योषसौवर्चलमाक्षिकं वा ।
गुडाभयां वा गुडनागरां वा
सदोषभिन्नामविबद्धवर्चाः ॥ २५ ॥
विज्ञातसङ्गे पयसा रसैर्वा
प्राग्भुक्तमद्यादुरुबूकतैलम् ।
स्रोतोविबन्धेऽग्निरुचिप्रणाशे
द्यान्यरिष्टांश्च पिबेत्सुजातान् ॥ २६ ॥
गण्डीरभल्लातकचित्रकांश्च
व्योषं विडङ्गं बृहतीद्वयं च ।
द्विप्रस्थिकं गोमयपावकेन
द्रोणे पचेत्कूर्चिकमस्तुनस्तु ॥ २७ ॥
त्रिभागशेषं च सुपूतशीतं
द्रोणेन तत्प्राकृतमस्तुना च ।
सितोपलायाश्च शतेन युक्तं
लिप्ते घटे चित्रकपिप्पलीनाम् ॥ २८ ॥
वैहायसे स्थापितमादशाहा-
त्प्रयोजयंस्तद्विनिहन्ति शोफान् ।
भगन्दरार्शःक्रिमिकुष्ठमेहा-
न्वैवर्ण्यकार्श्यानिलहिक्कनं च ॥ २९ ॥

इति गण्डीराद्यरिष्टः ।

पुनर्नवेत्यादौ प्रस्थमानं क्षीरमिति बहुत्वात्तदनुभुक्पेयं। मयूरकमित्यादावपि पूर्वयोगोक्तं क्षीरं द्रव्यमानं च ज्ञेयं। पलार्धकैरिति द्विकर्षमानैः। अत्र च भेषजापेक्षया बहुलात् स्तोकक्षीरदानं केचिदिच्छन्ति साधनत्वेन कर्तव्यमिति। यथा कुर्वन्ति स उपाय इति वचनात्। पीतद्रुर्देवदारुः। ऊषणं मरिचं। भोजनवारिवर्जीति भोजनं वारि च त्यक्तव्यमित्यर्थः। गव्यमित्यादावपि गवां मूत्रमित्यन्तेन सप्ताहं मासमेवेति च तथा भोजनवारिवर्जीति चानुवर्तयति। समूत्रमित्यत्र मूत्रसमं क्षीराशनमिति संबध्यते। कूर्चिकमस्तुन इत्यत्र दध्ना सह पयसि पक्वं यन्मस्तु तत्कूर्चिकमस्तु। केवलस्य दध्नो यन्मस्तु तत्प्राकृतमस्तु। वैहायसेत्यन्तरिक्षे ॥ २१—२९ ॥

काश्मर्यधात्रीमरिचाभयानां
द्राक्षाफलानां च सपिप्पलीनाम् ।
शतं शतं जीर्णगुडात्तुलां च
संक्षुद्य कुम्भे मधुना प्रलिप्ते ॥ ३० ॥
सप्ताहमुष्णे द्विगुणं तु शीते
स्थितं जलद्रोणयुतं पिबेद्वा ।
शोफान्विबन्धान्कफवातजांश्च
स हन्त्यरिष्टोऽष्टशतोऽग्निकृच्च ॥ ३१ ॥

इत्यरिष्टः ।

काश्मर्येत्यादौ, ऊष्मे इत्यूष्मकाले, द्विगुणमिति द्विसप्ताहं, शीतकाले स्थाप्यं अष्टशत इति संज्ञा काश्मर्यादिसप्तशतमिलित्वा कृतत्वाज्ज्ञेया ॥ ३० ॥ ३१ ॥

पुनर्नवे द्वे च बले सपाठे
दन्तीं गुडूचीमथ चित्रकं च ।
निदिग्धिकां च त्रिपलानि पक्त्वा
द्रोणार्धशेषे सलिले ततस्तम् ॥ ३२ ॥
पूत्वा रसं द्वे च गुडात्पुराणा-
त्तुले मधुप्रस्थयुतं सुशीतम् ।
मासं निदध्याद्घृतभाजनस्थं
पले यवानां परितस्तु मासात् ॥ ३३ ॥

चूर्णीकृतैरर्धपलांशिकैस्तं
पत्रत्वगेलामरिचाम्बुलोहैः।
गन्धान्वितं क्षौद्रघृतप्रदिग्धे-
जीर्णे पिबेद्व्याधिबलं समीक्ष्य॥ ३४॥
हृत्पाण्डुरोगं श्वयथुं प्रवृद्धं
प्लीहभ्रमारोचकमेहगुल्मान्।
भगन्दरं पड्जठराणि कासं
श्वासं ग्रहण्यामयकुष्ठकण्डूः॥ ३५॥
शाखानिलं बद्धपुरीषतां च
हिक्कां किलासं च हलीमकं च।
क्षिप्रं जयेद्वर्णबलायुरोज-
स्तेजोन्वितो मांसरसान्नभोक्ता॥ ३६॥

इति पुनर्नवाद्यरिष्टः।

पुनर्नवे द्वे इत्यादौ प्रत्येकं द्रव्याणां द्विपलिकत्वं। द्रोणार्धशेषविधानाच्च चतुर्द्रोणं जलस्य ज्ञेयम्। तथाहि सति यदि शेषेण द्रोणः क्वाथो भवति यवानामिति यवराशौ क्षौद्रघृतप्रदिग्धे कुंभे कृत्वा मासं स्थाप्यमिति ज्ञेयम्। किंवा क्षौद्रघृतप्रलिप्तसुगन्धे भाजने कृत्वा पचेत्। षड्जठराणां भेषजासाध्यच्छिद्रोदकौ वर्जयित्वा॥ ३२—३६॥

फलत्रिकं दीप्यकचित्रकौ च
सपिप्पलीलोहरजोविडङ्गम्।
चूर्णीकृतं कौडविकं द्विरंशं
क्षौद्रं पुराणस्य तुलां गुडस्य।
मासं निदध्यात् घृतभाजनस्थं
यवेषु तानेव निहन्ति रोगान्॥ ३७॥

इति त्रिफलाद्यरिष्टः।

फलत्रिकमित्यादौ द्विप्रस्थे त्रिफलादीनां चतुर्गुणं जलं दत्वा पादावशेषः कषायान्तरोक्तोऽपि आसवान्तरे इष्टत्वात् ज्ञेयः। सुचूर्णीकृतमिति कषायार्थं जर्जरीकृतं। अन्ये तु चूर्ण एव द्रोणार्धं परं जलं ददति किंवा कुडवमानत्वं चूर्णस्य देयम्। तेन द्विरंशं क्षौद्रमिति द्विकुडवं षोडशमिति यावत्॥ ३७॥

ये चार्शसां पाण्डुविकारिणां च
प्रोक्ताः शुभाः शोफिषु तेऽप्यरिष्टाः।
कृष्णा सपाठा गजपिप्पली च
निदिग्धिका चित्रकनागरे च॥ ३८॥
सपिप्पलीमूलरजन्यजाजी
मुस्तं च चूर्णं सुखतोयपीतम्।
हन्यात् त्रिदोषं चिरजं च शोफं
कल्कश्च भूनिम्बमहौषधस्य॥ ३९॥
अयोरजस्त्र्यूषणयावशूकं
चूर्णं च पीतं त्रिफलारसेन।
क्षारद्वयं स्याल्लवणानि चत्वा-
र्ययोरजो व्योषफलत्रिकं च॥ ४०॥

सपिप्पलीमूलविडङ्गसारं
मुस्ताजमोदामरदारुबिल्वम्।
कलिङ्गकाश्चित्रकमूलपाठं
सयष्टिकं चातिविषं पलांशम्॥ ४१॥
सहिङ्गु कर्षं त्वनुसूक्ष्मचूर्णं
द्रोणं यथा मूलकशुण्ठिकानाम्।
स्याद्भसनस्तत् सलिलेन साध्य-
मालोड्य यावद्घनमप्रदग्धम्॥ ४२॥
स्त्यानं ततः कोलसमां तु मात्रां
कृत्वा सुशुष्कां विधिना भजेत।
प्लीहोदरश्वित्रहलीमकांस्तु
पाण्ड्वामयारोचकशोषशोफान्।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासाः प्रणुदेत् सकुष्ठाः॥ ४३॥

इति क्षारगुडिका।

पिप्पल्याद्यं चूर्णं प्रत्येकं मिलितैर्वा वातादिभिर्जनितम् इति ज्ञेयम्। न चात्र त्रिदोषस्यासाध्यत्वं युक्तम्। चत्वारि लवणानि सामुद्रवर्जम् दीर्घजीवितीयोक्तानि। अत्र शुष्कचूर्णमिति सूक्ष्मचूर्णं ग्राह्यम्। अत्र जलमानमपि चूर्णचतुर्गुणं देयम्। स्त्यानमिति घनम्॥ ३८—४३॥

प्रयोजयेदार्द्रकनागरं वा
तुल्यं गुडेनार्धपलाभिवृद्ध्या।
मात्रापलं पञ्चपलानि मासं
जीर्णे पयो यूषरसान्नभोक्ता॥ ४४॥
गुल्मोदरार्शःश्वयथुप्रमेहान्
श्वासप्रतिश्यालसकाविपाकान्।
सकामलां शोषमनोविकारा-
न्कासं कफं चैव जयेत्प्रयोगः॥ ४५॥

इति गुडार्द्रकप्रयोगः।

आर्द्रकनागरमित्यशुष्कनागरम्। अर्धपलाभिवृद्धिश्च इह गुडनागराभ्यां ज्ञेया। अन्यथा केवलार्धकवृद्ध्या पंचपलमाने गुडेन समं दशपलतायां भूरिदोषजाग्निवधादिदोषकारकं स्यात्। अर्धपलादारभ्य प्रतिदिनमर्धपलवृद्ध्या दशभिर्दिनैः पंचपलं भवति। ततश्च पंचपलस्य यावन्मासमुपयोगः॥ ४४॥ ४५॥

रसस्तथैवार्द्रकनागरस्य
पयोऽथ जीर्णे पयसान्नमद्यात्।
जत्वश्मजं च त्रिफलारसेन
हन्यात् त्रिदोषं श्वयथुं प्रसह्य॥ ४६॥

इति शिलाजतुप्रयोगः।

रसस्तथैवेत्यादौ पूर्वयोगवत् अर्धपलाभिवृद्धिः। गुडयुक्तत्वं च इत्यादि सर्वं तथैवेति पदेन गृह्यते॥ ४६॥

द्विपञ्चमूलस्य पचेत्कषाये
कंसेऽभयानां च शतं गुडस्य ।
लेहे सुसिद्धे च विनीय चूर्णं
व्योषं त्रिसौगन्ध्यमुपस्थिते च ॥ ४७ ॥
प्रस्थार्धमात्रं मधुनः सुशीते
किंचिच्च चूर्णादपि यावशूकात् ।
एकाभयां प्राश्य ततश्च लेहा-
च्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥ ४८ ॥
श्वासज्वरारोचकमेहहिक्का-
प्लीहत्रिदोषोदरपाण्डुरोगान् ।
कार्श्यामवातानसृगम्लपित्तं
वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥ ४९ ॥

इति कंसहरीतकी ।

द्विपंचेत्यादौ निर्दिष्टत्वात् कंसः क्वाथ्याद्भवति तावन्मानं दशमूलं चतुःषष्टिपलं ग्राह्यम् । अन्ये तु द्विपंचमूलस्य तुला कषाय इति । अभयानां च शतं । व्योषत्रिसौगन्ध्ययोः माननिर्देशेन इहैवोक्तचूर्णमानानुसारेण मानं ज्ञेयम् । अगस्त्यहरीतक्यां गुडतुलायां पिप्पलिचूर्णपलचतुष्टयमित्युक्तम् । तथा च्यवने मत्स्यंडिकातुलायां पिप्पलीचूर्णपलद्वयमुक्तम् । तदिहापि गुडशते व्योषस्य कटुद्रव्यस्य पलचतुष्टयं तथा च्यवने चातुर्जातकस्य गन्धार्थस्य पलमुक्तम् । तदनुसारेणेह द्विपलं त्रिसौगन्ध्यम् । किंचिच्छब्दस्याल्पवचनत्वात् अत्रोक्तनागरादिचूर्णात् अर्धमानं ज्ञेयम् । केचित्तु किंचिच्छब्दं कर्षपर्यायं वदन्ति । तत्रान्तरप्रत्ययात् । त्रिसौगन्ध्यस्य प्रत्येकं कर्षमानत्वं ज्ञेयम् त्र्यूषण एवं । क्षाराणां तु प्रत्येकं पलमुक्तम् । "दशमूलकषायस्य कंसे पथ्याशतं गुडात् । तुलां पचेत्ततो दद्यात् व्योषक्षारचतुःपलम् । त्रिसुगन्धस्य कर्षांशं प्रस्थार्धं मधुनो हिम" इत्यादि ॥ ४७—४९ ॥

पटोलमूलाम्बुदरदारुदन्ती-
त्रायन्तिपिप्पल्यभयाविशालाः ।
यष्ट्याह्विकातिक्तकरोहिणी च
सचन्दना स्यान्निचुलानि दार्वी ॥ ५० ॥
कर्षोत्थितैस्तैः क्वथितः कषायो
घृतस्य पेयः कुडवेन युक्तः ।
विसर्पदाहज्वरसन्निपाता-
स्तृष्णां विषाणि श्वयथुं निहन्ति ॥ ५१ ॥

इति पटोलमूलाद्यघृतम् ।

पटोलमूल इत्यादौ क्वाथ्यद्रव्यपलत्रयं अष्टगुणजलपरिभाषया क्वथनीयम् । ततश्चतुर्भागावशेषेण षट्पलमानः कषायो भवति । उक्तं हि "कर्षादौ तु पलं यावत् दद्यात्षोडशकं जलम् । ततश्च कुडवं यावत् तोयमष्टगुणं भवेदि"ति ॥ ५० ॥ ५१ ॥

सचित्रकं धान्ययवान्यजाजी-
सौवर्चलं त्र्यूषणवेतसाम्लम् ।
बिल्वात्फलं दाडिमयावशूकौ
सपिप्पलीमूलमथोऽपि चव्यम् ॥ ५२ ॥
पिष्टाक्षमात्राणि जलाढकेन
पक्त्वा घृतप्रस्थमथो प्रयुञ्ज्यात् ।
अर्शांसि गुल्मं श्वयथुं च दुःखं
तद्धन्ति वह्निं च करोति दीप्तम् ॥ ५३ ॥

इति चित्रकाद्यंघृतम् ।

पिबेद्घृतं वाष्टगुणाम्बुसिद्धं
सचित्रकक्षारमुदारवीर्यम् ।
कल्याणकं वापि सपञ्चगव्यं
तिक्तं महद्वाप्यथ तिक्तकं वा ॥ ५४ ॥

इति चित्रकादिघृतम् ।

क्षीरं घटे चित्रककल्कलिप्ते
दध्यागतं साधु विमथ्यते
तज्जं घृतं चित्रकमूलगर्भं
तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ॥ ५५ ॥
अर्शोऽतिसारानिलगुल्ममेहां-
श्चैतन्निहन्त्यग्निबलप्रदं च ।
तक्रेण वाद्यात्सघृतेन तेन
भोज्यानि सिद्धामथवा यवागूम् ॥ ५६ ॥

इति चित्रकघृतम् ।

सचित्रकेत्यादौ बिल्वात्पलमिति पठन्ति । तन्मते बिल्वं पलमानं शेषं तु कार्षिकम् । दध्यागतमिति दधिभावेन परिणतम् । तक्रेणेति यथोक्तदधिमथनजातेन तक्रेण ॥५२-५६॥

जीवन्त्यजाजीशटिपुष्कराह्वैः
सकारवीचित्रकबिल्वमध्यैः ।
सयावशूकैर्बदरप्रमाणै-
र्वृक्षाम्लयुक्ता घृततैलभृष्टाः ॥ ५७ ॥
अर्शोऽतिसारानिलगुल्मशोफ-
हृद्रोगमन्दाग्निहिता यवागूः ।
या पञ्चकोलैर्विधिनैव तेन
सिद्धा भवेत् सा च समा तयैव ॥ ५८ ॥
कुलत्थयूषश्च सपिप्पलीको
मौद्गश्च सत्र्यूषणयावशूकः ।
रसस्तथा विष्किरजाङ्गलानां
सकूर्मगोधाशिखिशल्लकानाम् ॥ ५९ ॥
सुवर्चिका गृञ्जनकं पटोलं
सवायसीमूलकनेत्रनिस्वम् ।
शाकार्थिनां शाकमतिप्रशस्तं
भोज्यं पुराणश्च यवः सशालिः ॥ ६० ॥
आभ्यन्तरं भेषजमुक्तमेत-
द्बहिर्हितं यच्छृणु तद्यथावत् ।

स्नेहान्प्रदेहान्परिषेचनानि
स्वेदांश्च वातप्रबलांश्च कुर्यात् ॥ ६१ ॥
शैलेयकुष्ठागुरुदारुकौन्ती-
त्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसी-
तालीसपत्रप्लवपत्रधान्यैः ॥ ६२ ॥
श्रीवेष्टकध्यामकपिप्पलीभिः
स्पृक्कानखैश्चैव यथोपलाभम्।
वातान्विते ऽभ्यङ्गमुसन्ति तैलं
सिद्धं सुपिष्टैरपि च प्रदेहम् ॥ ६३ ॥
इति शैलेयाद्यं तैलम्।

जीवन्तीत्यादौ वदरप्रमाणैरिति द्विशाणिकैः विधिनैव तेनेत्यत्र वदरमानत्वं द्रव्याणां ज्ञेयम्। सकूर्मकेत्यादौ कूर्मविधानं मत्स्यमांसनिषेधेऽपि अपवादरूपं ज्ञेयम्। शल्लकः शललीसंज्ञः। सुवर्चिका सूर्यावर्तः। गृञ्जनकं रसोनकः किंवा गृञ्जनकं शोभांजनम्। वायसी काकमाची। वर्हिर्हितमिति। शैलेयेत्यादौ पलाशः। तैलं सिद्धम्। पिष्टैरिति शैलेयादिभिः सुपिष्टैस्तैलं सिद्धं भवति। तथा तैरेव सुपिष्टैः प्रदेहं कथयन्ति ॥ ५७—६३ ॥

जलैश्च वासार्ककरञ्जशिग्रु-
काश्मर्यपत्रार्जकजैश्च सिद्धैः।
स्विन्नो मृदूष्णो रवितप्ततोय-
स्नातश्च गन्धैरनुलेपनीयः ॥ ६४ ॥
सवेतसाः क्षीरवतां द्रुमाणां
त्वचः समञ्जिष्ठलतामृणालाः।
सचन्दनाः पद्मकवालकौ च
पैत्ते प्रदेहस्तु सतैलपाकः ॥ ६५ ॥
आक्तस्य तेनाम्बु रविप्रतप्तं
सचन्दनं साभयपद्मकं च।
स्नाने मतं क्षीरवतां कषायः
क्षीरोदकं चन्दनलेपनं च ॥ ६६ ॥

रविणा सूर्येण तप्ततोयैश्च स्नातः गन्धैर्गुर्वादिभिरालेपनीयः। सवेतसेत्यादिना पैत्ते प्रदेहमाह—क्षीरिद्रुमाऽश्वत्थादयः। तैलपाक इति मञ्जिष्ठादिभिरेव क्वाथकल्केन स्नेहः कर्तव्यः। सचन्दनमित्यादौ चन्दनोशीरं पद्मकं शुभमित्यर्थः। ॥ ६४—६६ ॥

कफे तु कृष्णासिकतापुराण-
पिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकं-
श्चण्डागुरुभ्यामनुलेपनं च ॥ ६७
विभीतकानां फलमध्यलेपः
सर्वेषु दाहार्तिहरः प्रलेपः।

यष्ट्याह्वमुस्तैः सकपित्थपत्रैः
सचन्दनैस्तत्पिडकासु लेपः ॥ ६८ ॥
रास्नावृषार्कत्रिफलाविडङ्गा-
शिग्रुत्वचो मूषिकपर्णिका च।
निम्बार्जकौ व्याघ्रनखा सदूर्वा
सुवर्चला तिक्तकरोहिणी च ॥ ६९ ॥
सकाकमाची वृहती सकुष्ठा
पुनर्नवा चित्रकनागरे च।
उन्मर्दनं शोफिषु मूत्रपिष्टं
शस्तस्तथा मूलकतोयसेकः ॥ ७० ॥
शोफास्तु गात्रावयवाश्रिता ये
ते स्थानदूष्याकृतिनामभेदात्।
अनेकसंख्याः कतिचिच्च तेषां
निदर्शनार्थं शृणु चोच्यमानान् ॥ ७१ ॥
दोषास्त्रयः स्वैः कुपिता निदानैः
कुर्वन्ति शोफांश्छिरसः सुघोरान्।
अन्तर्गले घुर्घुरिकान्वितं च
शालूकमुच्छ्वासनिरोधनानि ॥ ७२ ॥
गलस्य सन्धौ चिवुके गले च
सदाहरागश्वसनासु चोग्रः।
शोफो भृशार्तिस्तु विडालिका स्या-
द्धन्याद्गले चेद्वलयीकृता स्यात् ॥ ७३ ॥
स्यात्तालुविद्रध्यपि दाहरोगै-
र्युता भवेत्तालुनि सा त्रिदोषात्।
जिह्वोपरिष्टादुपजिह्विका स्यात्
कफादधस्तादधिजिह्विका च ॥ ७४ ॥
यो दन्तमांसेषु तु रक्तपित्तात्
पाको भवेत् सोपकुशः प्रदिष्टः।
स्याद्दन्तविद्रध्यपि दन्तमांसे
शोफः कफाच्छोणितसंचयोत्थः ॥ ७५ ॥
गलस्य पार्श्वे गलगण्ड एकः
स्याद्गण्डमाला वहुभिस्तु गण्डैः।
साध्याः स्मृताः पीनसपार्श्वशूल-
कासज्वरच्छर्दियुतास्त्वसाध्याः ॥ ७६ ॥
येषां शिराकायशिरोविरेको
धूमः पुराणस्य घृतस्य पानम्।
सलङ्घनं वक्त्रभवेषु चापि
प्रघर्षणं स्यात् कवलग्रहश्च ॥ ७७ ॥

सिकता वालुका। शिग्रोस्त्वक्। अनुलेपनं स्नानानन्तरमनुलेपनम्। तत्पिडकास्विति दाहादियुक्तपिडिकासु। रास्नेत्यादौ सर्वशोथोन्मर्दनौ सेकौ ब्रूते। व्याघ्रनखा नखी मूषिकपर्णी पुत्रीपत्रेति ख्याता। शोथास्त्वित्यादि दूष्या गलादिः आकृतिराकारो दीर्घवर्णादिः। नामभेदस्तु शल्यादिषु विस्तरेणो-

क्तोऽपि कण्ठशालूक इत्यादिना लेशेनाभिहितः । एवं स्थानादिभेदकृतादतिबहुलात् बहुसंख्या ज्ञेया इति योज्यं । शिरसः सुघोरानिलत्र लक्षणं त्रिदोषकृतम् । नाम च शिरःशोथे विज्ञेयम् । तन्त्रान्तरे द्वयमप्युपशीर्षकमित्युक्तम् । घुर्घुरिकान्वितमिति घुर्घुराकारशब्देन वेदनया वा युक्तम् । गलस्य संधाविति गलवदनसंधौ । श्वसनासु इति श्वासवहनाडीषु । विडालकायां दोषाश्रयः कारणत्वेनानुवर्तते । वलयीकृता स्यादिति कृत्स्नगलवेष्टकत्वेन वलयाकारः स्यात् । सुश्रुतेऽप्युक्तम् । 'तत्सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति' । इयं च त्रिदोषजापि रक्तपित्ताधिका ज्ञेया । उपजिह्विकेह त्रिशोथीयोक्तापि तत्रानुक्ताधिजिह्विकाप्रसंगेनोक्ता । साध्याः स्मृता इत्यादि पीनसादिरहिताः साध्याः । एते च साध्यासाध्यविभागादिभेदाः शिरःशोथादयः सर्व एव ज्ञेयाः । सिरा इति सिराव्यधः । विशेषचिकित्सात्र सुश्रुते प्रतिपत्तव्या॥६७–७७॥

अङ्गैकदेशेष्वनिलादिभिः स्यात्
स्वरूपधारी स्फुरणः शिराभिः ।
ग्रन्थिर्महामांसभवस्त्वनार्ति-
र्मेदोभवः स्निग्धतमश्चलश्च ॥ ७८ ॥
तं शोधितं स्वेदितमश्मकाष्ठैः
साङ्गुष्ठदण्डैर्विनयेदपक्वम् ।
विपाट्य चोद्धृत्य भिषक् सकोशं
शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत् ॥ ७९ ॥
अदग्ध ईषत् परिशोषितश्च
प्रयाति भूयोऽपि शनैर्विवृद्धिम् ।
तस्मादशेषः कुशलैः समन्ता-
च्छेद्यो भवेद्वीक्ष्य शरीरदेशान् ॥ ८० ॥
शेषे कृते पाकवशेन शीर्यै-
स्ततः क्षतोत्थः प्रसरेद्विसर्पः ।
उपद्रवं तं प्रतिवार्य तज्ज्ञः
स्वैर्भेषजैः पूर्वतरैर्यथोक्तैः ॥ ८१ ॥
ततः क्रमेणास्य यथाविधानं
व्रणं व्रणज्ञस्त्वरया चिकित्सेत् ।
विवर्जयेत्कुक्ष्युदराश्रितं च
तथा गले मर्मणि संश्रितं च ॥ ८२ ॥
स्थूलः खरश्चापि भवेद्विवर्ज्यो
यश्चापि बालस्थविरावलानाम् ।
ग्रन्थ्यर्बुदानां च यतोऽविशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः ॥ ८३ ॥
ततश्चिकित्सेद्भिषगर्बुदानि
विधानविद्ग्रन्थिचिकित्सितेन ।
ताम्रा सशूला पिडका भवेद् या
सा त्वालजीनाम परिस्रुताग्रा ॥ ८४ ॥

अङ्गैकदेशेत्यादिना ग्रन्थीनाह—स्वरूपधारीति वातेन वातलक्षणधारी पित्तेन पित्तलक्षणधारी कफेन कफलक्षणधारी ग्रन्थिसंज्ञया ग्रन्थ्याकारत्वं दर्शयति । स्फुरणो वेपमानश्चेत्यर्थः । मेदोभवो नार्तिर्भवति । महान् ग्रन्थिर्मांसभवो भवति । शोधितमिति कृतशोधने पुरुषे । विनयेदिति विम्लापयेत् । सकोशमिति कोशवर्णं उद्धृत्य ततो दग्ध्वा व्रणवत् चिकित्सेत् । असम्यक् दग्धेऽपरिशोधिते च ग्रन्थौ दोषमाह—अदग्ध इत्यादि । स्वैर्भेषजैरिति विसर्पभेषजैः । विवर्जयेदित्यादिनाऽसाध्यग्रन्थिभेदानाह अर्बुदचिकित्सादिदेशार्थमाह—ग्रन्थ्यर्बुदानामिति । अविशेषे इति वा शेष इह ज्ञेयः । सुश्रुतेऽपि ग्रन्थिलक्षणमुक्तम् । "गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य । वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकं । कुर्वन्ति मांसाश्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति" । तस्मात्लोकविशेषे सत्यपि सावायविशेषात् ग्रन्थिविशेषचिकित्सैवातिदिश्यते ॥ ७८—८४ ॥

शोफः कृतश्चर्मनखान्तरे स्या-
न्मांसास्रदूषी भृशशीघ्रपाकः ।
ज्वरान्विता वङ्क्षणकक्षजा या
वर्तिर्निरर्तिः कठिनायता च ॥ ८५ ॥
विदारिका सा कफमारुताभ्यां
तेषां यथादोषमुपक्रमः स्यात् ।
विस्रावणं पिण्डिकयोपनाहः
पक्वेषु चैव व्रणवच्चिकित्सा ॥ ८६ ॥
विस्फोटकाः सर्वशरीरजाः स्युः
स्फोटास्तु रागज्वरतर्षयुक्ताः ।
यज्ञोपवीतप्रतिमाः प्रभूताः
पित्तानिलाल्लाजनिभास्तु कक्षाः ॥ ८७ ॥
याश्चापराः स्युः पिडकाः प्रकीर्णाः
स्थूलाणुमध्या अपि पित्तजास्ताः ।
सर्वत्र गात्रेषु मसूरमात्र्यो
मसूरिकाः पित्तकफात्प्रदिष्टाः ॥ ८८ ॥

चर्मनखान्तर इति चर्मनखसंधौ विदारिकेह कफवाताभ्यामित्युच्यते । सुश्रुते विदारिका सा सर्वजेति पठिता तेनेहापि कफवाताधिका हीनपित्ता च विज्ञेया । तेषामित्यनेन विदारिकारोगान्प्रत्यवमृशति । विस्रावणमिति रक्तविस्रावणम् । पिण्डिकयेति पिण्डिकास्वेदेन । स्फोटा इह कुक्ष्योक्तस्फोटाः चिरस्थायिनः । यज्ञोपवीतप्रतिमा इति । यज्ञोपवीतव्याप्यस्थानमात्रव्यापकाः । स्फोटा एव कक्षा इति कक्षाशब्दाख्याः । प्रकीर्णा इति बहुविधजातिकाः ॥ ८५—८८ ॥

विसर्पशान्त्यै विहिताः क्रिया या
तां तासु कुष्ठेषु हितां विदध्यात् ।
व्रध्नानिलाद्यैर्वृषणे स्वलिङ्गै-
रन्त्रान्निरेति प्रविशेन्मुहुश्च ॥ ८९ ॥

मूत्रेण पूर्णं मृदुमेदसा तु
स्निग्धं च विद्यात्कठिनं च शोथम्।
विरेचनाभ्यङ्गनिरूहलेपाः
पक्केषु चैव व्रणवच्चिकित्सा ॥ ९० ॥
स्यान्मूत्रसेकः कफजं विपाट्य
विशोध्य सीव्यं व्रणवच्च पक्कम्।
क्रिम्यस्थिसूक्ष्मक्षणनव्यवाय-
प्रवाहनान्युत्कटुकाश्वपृष्ठैः ॥ ९१ ॥
गुदस्य पार्श्वे पिडका भृशार्तिः
पक्कप्रभिन्ना तु भगन्दरः स्यात्।
विरेचनं चैषणपाटनं च
विशुद्धमार्गस्य च तैलदाहः ॥ ९२ ॥
स्यात्क्षारमूत्रेण सुपाचितेन
छिन्नस्य चास्य व्रणवच्चिकित्सा।
जङ्घासुपिण्डीप्रपदोपरिष्टा-
त्स्यात् श्लीपदं मांसकफास्रदोषात् ॥ ९३ ॥
शिराकफघ्नश्च विधिः समग्र-
स्तत्रेष्यते सर्षपलेपनं च।
मन्दास्तु पित्तप्रबलाः प्रदिष्टा
दोषाः सुतीव्रं तनुरक्तपाकम् ॥ ९४ ॥
कुर्वन्ति शोथं ज्वरतर्षयुक्तं
विसर्पणं जालकगर्दभाख्यम्।
विलङ्घनं रक्तविमोक्षणं च
विरूक्षणं कायविरेचनं च ॥ ९५ ॥
धात्रीप्रयोगाञ्शिशिरान्प्रदेहा-
न्कुर्यात्सदा जालकगर्दभस्य।
एवंविधांश्चाप्यपराञ्निशम्य
शोथप्रकारानलिलादिलिङ्गैः ॥ ९६ ॥
शान्तिं नयेद्दोषहरैर्यथास्व-
मालेपनच्छेदनभेददाहैः।
प्रायोऽभिघातादनिलः सरक्तः
शोथं सरागं प्रकरोति तत्र।
वीसर्पवन्मारुतरक्तनुच्च
कार्यं विषघ्नं विषजे च कर्म ॥ ९७ ॥"

विसर्पेत्यादौ तेष्विति स्फोटकक्षामसूराख्येषु विदारिकान्तरोक्तेष्वित्यर्थः। व्रध्नेत्यादौ वृषणे इति जातौ एकवचनं वृषणयोरपि ग्रहणं। स्वलिङ्गैरिति वातलिङ्गैः। एवं पित्तलिङ्गेन पैत्तिकं, कफलिङ्गेन कफजं, व्रध्नं ज्ञेयमित्यर्थः। अत्र निर्वृत्तिसह वृषणं प्रविशेदिति अत्र वृद्धिलक्षणं मुहूर्तेन तु यद्व्रध्नं तत्पूर्णं मृदु च भवति। मेदसा तु कृतं स्निग्धं कठिनं च एवं षड्विधं व्रध्नोक्तम्। तदिह पित्तजे एवान्तर्भावनीयम्। विरेचनेत्यादिना सामान्यचिकित्सासूत्रमाह। कफजानां वैशेषिकी चिकित्सोच्यते। विपाट्य विशोध्य च सीव्येत् विपक्कं व्रध्नव्रणवदुपचर्य सीव्येदिति भावः। क्रिम्यस्थीत्यादिना भगंदरं पंचविधमपि इह संक्षेपात्सामान्येनाह। एषणं शलाकया गल्यवेक्षणं, क्षारमूत्रेण सुपाचितेन। छिन्नस्येत्यनेन शल्यतन्त्रोक्तं क्षारमूत्रविधानविधिं दर्शयति। प्रपंचस्त्विह पराधिकारत्वेन न कृतः। सुपाचितेनेति सम्यग्विपाचितक्षारेण। पिण्डीति मांसपिण्डी। प्रपदं पादाग्रम्। जङ्घास्विति बहुवचनं व्यक्त्यपेक्षया किंवा बहुवचनेन जङ्घादिष्वित्यादि तदलोपो ज्ञेयः। उक्तंहि—शिश्नोष्ठनासास्वपि केचिदाहुरित्यादि। तथाहि पुष्करावतः। "ग्रीवावंक्षणजङ्घौष्ठपादकर्णकराश्रयम्। श्लीपदं मांसमेदोभ्यां विद्यादि"ति। मन्देत्यादौ मन्दा इत्यल्पवृद्धाः। पित्तं प्रबलं येषां ते पित्तप्रबलाः। मन्दा इत्यत्र बहुवचनं व्यक्त्यपेक्षया। तनुरक्तपाको यस्मिन् तत् तनुरक्तपाकं। सुश्रुते हि अपाकशब्देन ईषत्पाक उक्तः। "अपाकः श्वयथुः पित्तात्स ज्ञेयो जालगर्दभ" इति। रक्तपाकयुक्तं रक्तपाकं नतु रक्तवर्णमात्रं। अत्र शोथप्रकारसंग्रहार्थं आगन्तुशोथचिकित्सामाह। प्राय इत्यादि। विषजे शोथे इति संबन्धः॥८९–९७॥

भवति चात्र।

त्रिविधस्य दोषभेदात्सर्वार्धावयवगात्रभेदाच्च।
श्वयथोर्द्विविधस्य तथा लिङ्गानि चिकित्सितं चोक्तम्॥

इति चरकसंहितायां श्वयथुचिकित्सितं नाम
द्वादशोऽध्यायः ॥ १२ ॥

संग्रहे सर्वार्धगात्रावयवभेदाच्च त्रिविधस्येति संबन्धः। द्विविधस्येति निजागन्तुभेदेन ॥ ९८ ॥ इति शोथचिकित्सितं समाप्तम् ॥

---

## त्रयोदशोऽध्यायः।

अथात उदरचिकित्सितं व्याख्यास्यामः।
सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे।
तप्यमानं तपस्तीव्रं साक्षाद्धर्ममिव स्थितम् ॥ १ ॥
आयुर्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्तकम्।
पुनर्वसुं जितात्मानमग्निवेशोऽब्रवीद्वचः ॥ २ ॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते ह्यर्दिता नराः।
शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः ॥ ३ ॥
प्रनष्टाग्निबलाहाराः सर्वचेष्टास्वनीश्वराः।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत् ॥ ४ ॥
तेषामायतनं संख्यां प्राग्रूपाकृतिभेषजान्।
यथावच्छ्रोतुमिच्छामि गुरुणा सम्यगीरितम् ॥ ५ ॥
सर्वभूतहितार्षिः शिष्येणैवं प्रचोदितः।
सर्वभूतहितं वाक्यं व्याहर्तुमुपचक्रमे ॥ ६ ॥

शोथभेदत्वादुदरस्य शोथचिकित्सानन्तरमुदरचिकित्सितमुच्यते। आयुर्वेदविदामिति भिषग्वेदविदां। दुःखैरिति दुःखकारणैः। तेषामिति उदराणां। आयतनमिति कारणं संख्या च

यद्यपि रोगाधिकारेऽष्टावुदराणीत्यनेनोक्ता तथापि गुल्मकुष्ठयोस्तत्र संख्यादिक्रमदर्शनात् पुनः संख्याप्रश्नः । किंवा प्रकरणगतत्वात्संख्योक्तापि पुनरुच्यते ॥ १—६ ॥

"अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः ।
मलवृद्ध्या प्रवर्तन्ते विशेषेणोदराणि तु ॥ ७ ॥
मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसंचयः ।
प्राणाग्न्यपानान्संदूष्य मार्गान्वद्ध्वोत्तरोत्तरान् ॥८॥
त्वङ्मांसान्तरमागम्य कुक्षिमाध्मापयन्भृशम् ।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम् ॥ ९ ॥

अग्निदोषोऽत्राग्निमांद्यमेव विवक्षितं तस्यैवेहोदरकारणदोषत्रयकर्तृत्वमुक्तम् । अग्निर्हीने कुप्यन्ति पवनादय इति । मला वातादयः पुरीषादयः । दोषकारकाः विरुद्धाहारादयः । मन्दाग्नित्वं मलिनभोजनादिभिर्यद्यपि रोगाधिकारेऽष्टावुदराण्युक्तानि तथापि गुल्मकुष्ठयोः प्रत्येकमपि दोषत्रयकर्तृकत्वमुक्तम् । तथापीह प्रकर्षो दृश्यते अतएव च प्रकर्षार्थं संपूर्व कृतवान् । प्राणेत्यादौ पुनरग्निदूषणाभिधानेन मन्दस्य वह्नेः पुनर्दोषकृतं नितरां मान्द्यं दर्शयति । दोषसंचयकृतेन वायुना प्राणापानयोर्दूषणमविरुद्धमेव । यतो वायुनापि वायुदुष्टिर्भवत्येव । त्वङ्मांसान्तरमिति त्वङ्मांसमध्यम् ॥ ७—९ ॥

अत्युष्णलवणक्षारविदाह्यम्लरसाशनात् ।
मिथ्यासंसर्जनाद्रूक्षविरुद्धाशुचिभोजनात् ॥ १० ॥
प्लीहार्शोग्रहणीदोषकर्षणात्कर्मविभ्रमात् ।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात् ॥ ११ ॥
स्रोतसां दूषणादामात्संक्षोभादतिपूरणात् ।
अर्शोवलिशकृद्रोधादन्त्रस्फुटनभेदनात् ॥ १२ ॥
अतिसंचितदोषाणां पापं कर्म च कुर्वताम् ।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः ॥ १३ ॥

अत्युष्णेत्यादिना हेतुमाह कर्मविभ्रमादिति वमनादीनामसम्यक्करणात् । क्लिष्टानामप्रतीकारादिति कृतया प्रतिक्रियया इत्यर्थः । रौक्ष्यात् उत्पत्तिरौक्ष्यस्य प्रतिक्रियाभावेनानुवर्तनात् । आमादिति आमानुवन्धात् । पापं कर्म च कुर्वतामित्यनेनास्य महादुःखरूपस्य प्रवलाधर्मजन्यतामाह मन्दाग्नीनां विशेषत इति अत्यन्तोपहताग्नीनां ॥ १०—१३ ॥

क्षुन्नाशः स्वाद्वतिस्निग्धगुर्वन्नं पच्यते चिरात् ।
भुक्तं विदाहवत् सर्वं जीर्णाजीर्णं न वेत्ति च ॥ १४ ॥
सहते नातिसौहित्यमीषच्छोफश्च पादयोः ।
शश्वद्बलक्षयोऽल्पेऽपि व्यायामे श्वासमृच्छति १५
पुरीषनिचयो वृद्धिरुदावर्तकृता च रुक् ।
वस्तिसन्धौ रुगाध्मानं वर्धते पाट्यतेऽपि च ॥१६॥
आतन्यते च जठरमपि लघ्वल्पभोजनात् ।
राजीजन्म वलीनाश इति लिङ्गं भविष्यताम् ॥१७॥

क्षुन्नाश इति पूर्वरूपाभिधानम् । स्वाद्वादीनां यद्यपि कट्वाद्यपेक्षया चिरेणैव पाको भवति तथापीह चिरादिति पदेनात्यर्थं चिरादित्यभिधीयते । जीर्णाजीर्णं न वेत्ति चेति वातजन्यत्वाज्ज्ञेयम् । वद्धोदावर्तहेतुकेति वा पाठः । वस्तिरित्यत्र वस्तिना समं शरीरदेशसंवन्धः । आतन्यतेति विस्तीर्यते । राजी व्यक्ता शिरा ॥ १४—१७ ॥

रुद्ध्वा स्वेदाम्बुवाहानि दोषाः स्रोतांसि संचिताः ।
प्राणापानाग्निह संदूष्य जनयन्त्युदरं नृणाम् ॥१८॥
कुक्षेराध्मानमाटोपः शोफः पादकरस्य च ।
मन्दोऽग्निः श्लक्ष्णगण्डत्वं कार्श्यं चोदरलक्षणम्१९
पृथग्दोषैः समस्तैश्च प्लीहवद्धक्षतोदकैः ।
संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ २० ॥

रुद्ध्वेत्यादिना चतुर्णां दोषजन्यानामुदराणां सामान्यात्संप्राप्तिमाह—पूर्वं या संप्राप्तिरुक्ता सा सर्वोदराणामित्येके वदन्ति । रुद्ध्वेत्यादिना पूर्वं संप्राप्त्युक्तस्य स्वेदाम्बुवाहिस्रोतोदुष्टिरूपस्याभिधानात् अपौनरुक्त्यमित्यन्ये । स्वेदवहस्रोतसां चोदकवहस्रोतसां च तालुमूलक्लोमरोमकूपाश्रितत्वनेन भेदो उक्तो ज्ञेयः । उदराणां समानरूपमाह—कुक्षेरित्यादि । मन्दोऽग्निर्यद्यपि कारणं तथाप्ययं मन्दाग्निरिह लक्षणे ज्ञेयः । श्लक्ष्णगंडत्वमिति मसृणकपोलत्वं । तेषां लिङ्गमित्यत्र लिङ्गशब्देन वक्ष्यमाणहेतुसंप्राप्ती अपि व्याधिगमकतया संगृहीते ज्ञेये । इह संप्राप्तिः कारणानि वा वक्तव्यानि विशेषस्यैव तेन न सर्वसाधारणोक्तहेतुसंप्राप्त्या पुनरुक्तत्वम् ॥ १८—२० ॥

रूक्षाल्पभोजनायासवेगोदावर्तकर्शनैः ।
वायुः प्रकुपितः कुक्षिहृद्वस्तिगुदमार्गगः ॥ २१ ॥
हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्तथा ।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः॥२२॥
तस्य रूपाणि—कुक्षिपाणिपादवृषणश्वयथूदरविपाटनमनियतौ च वृद्धिह्रासौ कुक्षिपार्श्वशूलोदावर्ताङ्गमर्दपर्वभेदशुष्ककासकार्श्यदौर्बल्यारोचकाविपाका अधोगुरुत्वं वातवर्चोमूत्रसङ्गः श्यावारुणत्वं नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं तनु असितराजीशिरासन्ततमाहतमाध्मातदृतिशब्दवच्च भवति । वायुश्चोर्ध्वमधस्तिर्यक् च सशूलशब्दश्चरति एतद्वातोदरं विद्यात् ॥ २३ ॥

कर्षणैरिति कृशत्वकारणत्वात् लङ्घनादिभिः । गुदस्य मार्गो गुदमार्गः । कफमुद्धूयेत्यत्र कफस्याप्राधान्यम् । तेन कफेनोदरव्यपदेशोऽत्र प्राचीनो न इति दर्शयति । अनियतौ च वृद्धिह्रासावुदरस्येति शेषः । असिता राज्यः सिराश्च ताभिः संधितं व्याप्तं आध्मात इति वातपूर्णचर्मवत् ॥ २१—२३ ॥

कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः ।
विदाह्यध्यशनाजीर्णैश्चाशु पित्तं समाचितम् ॥२४॥

प्राप्यानिलकफौ रुद्ध्वा मार्गमुन्मार्गमास्थितम् ।
निहंत्यामाशये वह्निं जनयत्युदरं ततः ॥ २५ ॥

तस्य रूपाणि—दाहज्वरतृष्णामूर्च्छातीसारभ्रमाः कटुकास्यत्वं हरितहारिद्रत्वं नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं नीलपीतहारिद्रहरितताम्रराजीशिरावनद्धं दह्यात् दूयते धूप्यते ऊष्मायते स्विद्यते क्लिद्यते मृदुस्पर्शं क्षिप्रपाकं च भवति एतत् पित्तोदरं विद्यात् ॥ २६ ॥

कद्भ्वित्यादिना पित्तोत्तरमाह—तत्रापि अनिलकफावप्रधानौ । पित्तं तु प्रधानं, निहंत्यामाशये वह्निमित्यनेन स्थानान्तरस्थधात्वमिवधं कृत्वा हारिद्रो हारिद्राभः दूयत इति व्यथनेन धूप्यत इति धूममिव ऊष्मायत इति पार्श्वस्थेनैव वह्निना दह्यते । स्विद्यत इति क्षिप्रपाकं भवति इति शीघ्रपाकाज्जलोदरतां याति ॥ २४—२६ ॥

अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः ।
दधिदुग्धोदकानूपमांसैश्चात्युपसेवितैः ॥ २७ ॥
क्रुद्धेन श्लेष्मणा स्रोतःस्वाहतेष्वावृतोऽनिलः ।
तमेव पीडयन् कुर्यादुदरं वहिरन्त्रगः ॥ २८ ॥

तस्य रूपाणि—गौरवारोचकाविपाकाङ्गमर्दसुप्तिपाणिपादमुष्कोरुशोफोत्क्लेशनिद्राकासश्वासाः शुक्लत्वं च नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं शुक्लराजीशिरासन्ततं गुरु स्तिमितस्थिरं कठिनं च भवति एतच्छ्लेष्मोदरं विद्यात् ॥ २९ ॥

अव्यायामेत्यादिना कफोदरमाह । वहिरंत्रग इति अंत्राद्बाह्यगः ॥ २७—२९ ॥

दुर्बलाग्नेरपथ्यामविरोधिगुरुभोजनात् ।
स्त्रीदत्तैश्च रजोरोमविण्मूत्रास्थिनखादिभिः ॥३०॥
विषैश्च मन्दैर्वाताद्याः कुपिताः संचितास्त्रयः ।
शनैः कोष्ठे प्रकुर्वन्तो जनयन्त्युदरं नृणाम् ॥३१॥

तस्य रूपाणि—सर्वेषामेव दोषाणां समस्तानि लिङ्गान्युपलभ्यन्ते वर्णाश्च नखादिषु उदरमपि नानावर्णराजीशिरासन्ततं भवति एतत्सन्निपातोदरं विद्यात् ॥ ३२ ॥

दुर्बलाग्नेरित्यादिना । स्त्रीदत्तमिति स्त्रीभिः अज्ञानात्सौभाग्यार्थं रजःप्रभृतिदानं प्रायो भवतीति स्त्रीणामभिधानम् उपलक्षणार्थं तेनान्यदत्तानामपि रजःप्रभृतीनां ग्रहणं भवत्येव । विषैश्च मन्दैरिति दूषीविषैर्दूषीविषाण्येव हि मन्दानि भवन्ति । त्रय इति पदेन वातादीनां त्रयाणामपि अख्यातत्र्येण ग्रहणं करोति । वर्णाश्च सर्वेषां दोषाणामिति संबन्धः । इह सकललक्षणमेलकाभिधानेनैव मुखादिवर्णश्च सर्वैश्च नानावर्णैः राजयश्च यद्यपि गृहीतास्तथापि तद्विधानं अवश्योत्पाददर्शनार्थम् ॥ ३०—३२ ॥

अशितस्यातिसंक्षोभाद्यानयानातिचेष्टितैः ।
अतिव्यवायभाराध्ववमनव्याधिकर्शनैः ॥ ३३ ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात्प्रवर्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ॥३४॥

इति तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्धमानः कच्छपसंस्थान उपलभ्यते स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्यधिष्ठानं च परिक्षिपन्नुदरमभिनिर्वर्तयति ॥ ३५ ॥

तस्य रूपाणि—दौर्बल्यारोचकाविपाकवर्चामूत्रग्रहतमःपिपासाङ्गमर्दच्छर्दिमूर्च्छाङ्गसादकासश्वासमृदुज्वरानाहाग्निनाशकार्श्यास्यवैरस्यपर्वभेदकोष्ठवातशूलान्यपि चोदरमरुणवर्णं विवर्णं वा नीलहरितहारिद्रराजिमद्भवति । एवमेव यकृदपि दक्षिणपार्श्वस्थं कुर्यात् । तुल्यहेतुलिङ्गौषधत्वात्तस्य प्लीहजठर एवावरोध इत्येतद्यकृत्प्लीहोदरं विद्यात् ॥ ३६ ॥

प्लीहवृद्धिर्द्विधा संक्षोभादिच्युतस्य वा वृद्धिरच्युतस्य वा शोणितवृद्ध्या वृद्धिर्भवति । वामपार्श्वाश्रित इति प्लीहस्वरूपकथनं । शोणितं वा रसादिभ्य इत्यत्रादिशब्दः प्रकारवाची । तेन रसस्य कारणस्य वृद्ध्या कार्यस्य रक्तस्य वृद्धिस्तथा मांसादिभ्योऽपि रक्तवृद्धिर्भवति । आहारविहारेभ्यो रक्तवृद्धिरुक्ता भवति प्रथमं या च्युतस्य वृद्धिरुक्ता सा वातादिसन्निपातत्वेन चतुर्विधा ज्ञेया तेन रक्तजप्लीहवृद्ध्या समं पंचप्लीहप्रदोषा ये उक्तास्ते संगता भवन्ति । उक्तं हि—पंचप्लीहप्रदोषा गुल्मैर्व्याख्याता इति । अष्ठीला दीर्घो लोहमयो ग्रन्थिर्लोहकारेषु प्रसिद्धः । कुक्षि पार्श्वदेशः । दक्षिणपार्श्वस्थमिति यकृत् जन्म यकृदस्य पृथङ्नाम आख्याय तज्जमुदरमाह । तुल्येत्यादिना ॥ ३३—३६ ॥

पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
उदावर्त्तैस्तथार्शोभिरन्त्रसंमूर्च्छनेन वा ॥ ३७ ॥
अपानो मार्गसंरोधाद्धात्वग्निं कुपितोऽनिलः ।
वर्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः ॥ ३८ ॥

तस्य रूपाणि—तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वासदौर्बल्यारोचकाविपाकवर्चोमूत्रसङ्गाध्मानच्छर्दिक्षवथुशिरोहृन्नाभिगुदशूलान्यपि चोदरं मूढवातं स्थिरमरुणं नीलराजिशिरावनद्धमराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभिनिर्वर्तत इत्येतद्बद्धगुदोदरं विद्यात् ॥ ३९ ॥

पक्ष्मवालैरित्यादिना बद्धगुदोदरमाह । बद्धायने इति बद्धमार्गे उदावर्त इत्यादावपि बद्धायने, गुदे इत्यनुवर्तनीयम् । अत्र संमूर्छनेनांत्रपरिवर्तनेन पक्ष्मवालैरित्यादिना हेतुकृतो गुदो निरोधः । तेन गुदनिरोधकलरूपेणैवैकरूपमेव गुदोदरं

जनयति । तेन पक्ष्मादिगुदनिरोधहेतुपंचकजन्यत्वात् बद्धगुदोदराणां पंचत्वं यथोक्तम् ॥ ३७—३९ ॥

शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः ।
भिद्येतान्त्रं यदा भुक्तैर्जृम्भयात्यशनेन वा ॥ ४० ॥
द्रवात्पाकरसस्तेभ्यश्छिद्रेभ्यः प्रस्त्रवद्बहिः ।
पूरयन्गुदमन्त्रं च जनयत्युदरं ततः ॥ ४१ ॥

इति तदधो नाभ्याः प्रायोऽभिनिवर्तमानमुदकोदरस्य च यथावलं च दोषाणां रूपाणि दर्शयत्यपि चातुरः स लोहितनीलपीतपिच्छिलकुणपगन्धामवर्चं उपवेशते । हिक्काश्वासकासतृष्णाप्रमेहारोचकाविपाकदौर्बल्यपरीतश्च भवति । एतच्छिद्रोदरं विद्यात् ॥ ४२ ॥

शर्करेत्यादिना क्षतोदरमाह—अभ्याहृतस्यान्तरं भिद्येतेति योजना। पाकं गच्छेदिति भिन्नमेवान्तःपाकं गच्छति । वहिरिति अंत्रं गुदं च वहिर्भागे पूरयन् पाकं गच्छेत् स एव रसोऽन्नपाकरूपो व्याधिरूपतया ज्ञेयः । तदधो नाभेः प्रायो निवर्तमानमिति ऊर्ध्वं निवर्तते । द्रवस्योदरारंभकस्याधोगामित्वादुदकोदरं भवतीति । उदरान्तरापेक्षया शीघ्रगतिर्भवतीत्यर्थः । उदकोदरमेवैतत्स्यात् उदकोदरस्यैवेति वा पाठः । उदकोदरस्य रूपाणि दर्शयति । दोषाणां च यथावलं रूपाणि दर्शयतीति योजना । यथावलमिति वयोवलवान् दोषो भवति तस्य रूपाणि दर्शयति ॥ ४०—४२ ॥

स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य वा ।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि संस्थितः ४३
स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः ।
वर्धयेतां तदेवाम्बु स्वस्थानादुदराश्रयौ ॥ ४४ ॥

तस्य रूपाणि—अनन्नकाङ्क्षापिपासागुदस्रावशूलश्वासकासदौर्बल्यान्यपि चोदरं नानावर्णराजिशिरासन्ततमुदकपूर्णदृतिक्षोभसंस्पर्शं भवति एतदुदकोदरं विद्यात् ॥ ४५ ॥

तत्र अचिरोत्पन्नमनुपद्रवमनुदकमप्राप्तमुदरं त्वरमाणश्चिकित्सेदुपेक्षितानां ह्येषां दोषाः स्वस्थानादपावृत्ता अपरिपाकाद्द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति स्वेदश्च बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्याययति ॥ ४६ ॥

तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरुस्तिमितमाकोठितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रांतं नाभ्यां सर्पतीति । ततोऽनन्तरं उदकप्रादुर्भावः ।—तस्य रूपाणि कुक्षेरतिमात्रवृद्धिः शिरान्तर्धानगमनमुदकपूर्णदृतिसंक्षोभस्पर्शत्वं च ॥ ४७ ॥

तदातुरमुपद्रवाः स्पृशन्ति छर्द्यतीसारतमकतृष्णाश्वासकासहिक्कादौर्बल्यपार्श्वशूलारुचिस्वरभेदमूत्रसङ्गादयस्तथाविधमचिकित्स्यं विद्यादिति ४८

स्नेहेत्यादिना उत्पत्तिविशिष्टं जलोदरमाह—क्लोम हृदयावयवविशेषः । वर्धयेतामिति यथोक्तौ कफमारुतौ । तयोश्चांबुवर्धकत्वं पिपासाजननेनाम्बुपानादेरिति ज्ञेयम् । साध्यासाध्यविभागमाह तत्रेत्यादि । अनुदकप्राप्तमिति अजातोदकरूपदोषावस्थं परिपाकेनात्र दोषाणां द्रवत्वं स्वभावादेव ज्ञेयम् । बाह्येषु स्रोतःसु प्रतिहतगतिरिति बहिर्गन्तुमसमर्थम् । अत्र जलजन्मपूर्वरूपं पिच्छोत्पद्यते तेन पिच्छोत्पत्तिलक्षणमेव तावदेव । पिच्छासदृशो भागः पिच्छा । अन्ये तु भक्तमण्डपिच्छामाहुः । सर्पतीति चलति । उदकपूर्णदृतिवत् संक्षोभः मांसस्य पिच्छोदकरूपं प्राप्तस्य । तमकः श्वासविशेषः । अचिकित्स्यमिति विषप्रयोगशस्त्रप्रणिधानादिदारुणकर्मव्यतिरिक्तक्रियाऽचिकित्स्यम् विद्यात् ॥ ४३—४८ ॥

भवति चात्र ।

वातात्पित्तात्कफात्प्लीह्नः सन्निपातात्तथोदकात् ।
परम्परं कृच्छ्रतरमुदरं भिषगादिशेत् ॥ ४९ ॥
पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं यथा ।
प्रायो भवत्यभावाय च्छिद्रान्त्रं चोदरं नृणाम् ॥५०

परंपरं कृच्छ्रतममिति यथा यथा परत्वनिर्देशे तथा तथा कृच्छ्रसाध्यत्वम् । बद्धच्छिद्रदकोदराणां विशेषमाह—पक्षादित्यादि । बद्धगुदमुदरंपक्षादिनाशाय प्रायो भवति । कदाचित्पक्षादूर्ध्वमपि अभावाय भवतीति प्रायःशब्देनाह—जातोदकं छिद्रं च प्रायो विनाशाय भवति । कदाचित् विषशस्त्राभिमतचिकित्सया जातोदकं छिद्रं बद्धगुदं च सिध्यतीति प्रायःशब्देन दर्शयति ॥ ४९ ॥ ५० ॥

शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।
बलशोणितमांसाग्निपरिक्षीणं च संत्यजेत् ॥ ५१ ॥
श्वयथुः सर्वमर्मोत्थः श्वासो हिक्कारुचिः सतृट् ।
मूर्च्छाच्छर्द्यतिसारश्च निहन्त्युदरिणं नरम् ॥ ५२ ॥
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥५३॥

अजातजललक्षणमाह ।

अशोथमरुणाभासं सशब्दं नातिभारिकम् ।
सदा गुडगुडायन्तं शिराजालगवाक्षितम् ॥ ५४ ॥
नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति ।
हृन्नाभिवङ्क्षणकटीगुदप्रत्येकशूलिनः ॥ ५५ ॥
कर्कशं सृजतो वातं नातिमन्दे च पावके ।
मूत्रेऽल्पे संहतविपि लालया विरसे मुखे ॥ ५६ ॥
अजातोदकमित्येतैर्लिङ्गैर्विज्ञाय तत्त्वतः ।
उपाक्रमेद्भिषग्दोषबलकालविशेषवित् ॥ ५७ ॥

शूनाक्षमित्यादिना साध्योक्तानामप्यसाध्यतामाह । कुटिलोपस्थमिति वक्रोपस्थः । उपक्लिन्ना तन्वी च त्वग्यस्य स तथा । अग्निक्षयश्चोदरे प्रथमत एव यद्यपि भवति तथापि असाध्यलक्षणेषु विशेषेणाग्निक्षयो लक्षणोत्तरमुक्तश्च भवतीति ज्ञेयम् । जन्मनैवेत्युत्पत्तिमात्रेण । अजाताम्बुलक्षणमाह अजातशोथमिति । नातिभारिकमिति नातिगुरुणा भारेण युतं नाभिं विष्टभ्येति नाभिं स्तम्भयित्वा कृत्वा वेगमिति पुरीषवातवेगं कृत्वा वातपुरीषं विसृज्येति यावत् । प्रणश्यतीति लीनं भवति । कर्कशमिति वेगवन्तं सृजतीति वातं सरता ॥ ५१—५७ ॥

वातोदरे बलवतः पूर्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात्स्नेहविरेचनम् ॥५८॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत्पुनः ॥ ५९ ॥
दोषातिमात्रोपचयात्स्रोतसां सन्निरोधनात् ।
संभवन्त्युदराण्येवमतो नित्यं विशोधयेत् ॥ ६० ॥
शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत्तु तम् ।
प्रागुत्क्लेशान्निवर्त्यं च बले लब्धे क्रमात्पयः ॥ ६१ ॥
यूषैः रसैर्वा मन्दाम्ललवणैः रेधितानलम् ।
सोदावर्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम् ॥ ६२ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु ।
दीप्ताग्निं बद्धविड्वातं रूक्षमप्यनुवासयेत् ॥ ६३ ॥
तीक्ष्णाधोभागयुक्तः स्यान्निरूहो दाशमूलिकः ।
वातघ्नाम्लशृतैरण्डतिलतैलानुवासनः ॥ ६४ ॥
अविरेच्यं तु यं विद्याद्दुर्बलं स्थविरं शिशुम् ।
सुकुमारं प्रकृत्याल्पदोषं वातोल्वणानिलम् ॥ ६५ ॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः ।
वस्त्यभ्यङ्गानुवासैश्च क्षीरैश्चोपाचरेद्बुधः ॥ ६६ ॥

वातोदरमित्यादिना चिकित्सामाह परिम्लानमिति क्षीणं । तथेति वस्त्रवेष्टनेन । उदरे पुनः शोधनोत्पत्तिमाह । दोषेत्यादि स्रोतोमार्गनिरोधनादिति स्रोतोमुखनिरोधनादित्यर्थः । मार्गशब्दोऽत्र स्रोतोवाची । संसृज्येत्यत्र पेयादिक्रमेणोत्पाद्य । प्रागुत्क्लेशादिति उत्क्लेशे दृश्यमाने । कार्यं कर्तव्यमित्यनुवर्तनीयम् । उत्सर्गतस्तु बलजनककार्यं कृत्वा पयो निवर्तनीयम् । वातघ्नादिभिः शृतमैरण्डतैलं वानुवासनं यस्य वस्तेः स तथा । अनुवासैरित्यनुवासनैः ॥ ५८—६६ ॥

पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत् ।
दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना ॥ ६७ ॥
संजातबलकायाग्निं पुनः स्निग्धं विरेचयेत् ।
पयसा सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥ ६८ ॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ।
सकफे वा समूत्रेण सवाते तिक्तसर्पिषा ॥ ६९ ॥
पुनः क्षीरप्रयोगं च वस्तिकर्म विरेचनम् ।
क्रमेण ध्रुवमातिष्ठन्युक्तः पित्तोदरं जयेत् ॥ ७० ॥

स्निग्धं स्विन्नं विशुद्धं तु कफोदरिणमातुरम् ।
संसर्जयेत्कटुक्षारयुक्तैरन्नैः कफापहैः ॥ ७१ ॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा ।
सक्षारैस्तैलपानैश्च शमयेत्तु कफोदरम् ॥ ७२ ॥

सातला चर्मकषा । क्षीरवस्तिरिति क्षीरप्रधानो वस्तिः । सकफेति कफयुक्ते पित्ते समूत्रेणेत्यत्र पयसेत्यनुवर्तते सवाते पित्ते तिक्तसर्पिषा विरेचनं त्रिवृतादिद्रव्ययुक्तेन विरेचनं कर्तव्यं । क्रमेणेति क्षीरप्रयोगादिक्रमेण पित्तोदरं जयतीति योजना । विशुद्धमित्यत्र वमनं विना विशुद्धो ज्ञेयः । वमनस्योदरे निषिद्धत्वात् । चूर्णयुक्तायस्कृतयः चूर्णायस्कृतयः नवायोरजसो भागं चूर्णं तु मधुसर्पिषा इत्याद्युक्ताः । किंवा चूर्णान्यत्रैव वक्ष्यमाणानि । अयस्कृतयस्तु रसायनोक्तलोहप्रयोगे ज्ञेयाः ॥ ७१ ॥ ७२ ॥

सन्निपातोदरे सर्वा यथोक्ताः कारयेत्क्रियाः ।
सोपद्रवं तु निर्वृत्तं प्रत्याख्येयं विजानता ॥ ७३ ॥

सर्वा यथोक्ता इति प्रत्येकं वातादिविहिताः सर्वा एव सन्निपातोदरे कर्तव्याः । सोपद्रवं तु निर्वृत्तमिति सोपद्रवतयोत्पन्नम् ॥ ७३ ॥

उदावर्तरुजानाहैर्दाहमोहतृषाज्वरैः ।
गौरवारुचिकाठिन्यैश्चानिलादीन्यथाक्रमम् ॥ ७४ ॥
लिङ्गैः प्लीहोदरार्तं दृष्ट्वा रक्तं वापि स्वलक्षणैः ।
चिकित्सां संप्रकुर्वीत यथादोषं यथाबलम् ॥७५॥
स्नेहं स्वेदं विरेकं च निरूहमनुवासनम् ।
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेच्छिराम् ॥७६
षट्पलं वा पिबेत्सर्पिः पिप्पलीर्वा प्रयोजयेत् ।
सगुडामभयां वापि क्षारारिष्टगणांस्तथा ॥ ७७ ॥
पिप्पली नागरं दन्ती चित्रकं द्विगुणाभयम् ।
विडङ्गांशयुतं चूर्णमेतदुष्णाम्बुना पिबेत् ॥ ७८ ॥
विडङ्गं चित्रकं शुण्ठीं सघृतां सैन्धवं वचाम् ।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं भवेत् ॥७९॥
रोहीतकलतानां तु काण्डकाः साभया जले ।
मूत्रे वा श्टतमेतच्च सप्तरात्रस्थितं पिबेत् ॥ ८० ॥
कामला गुल्ममेहार्शःप्लीहसर्वोदरक्रिमीन् ।
तद्धन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम् ॥ ८१ ॥

प्लीहोदरचिकित्सामाह उदावर्तेत्यादि । अनिलादीन्यथाक्रममिति उदावर्तरुजानाहैर्वातं दाहमोहतृषाज्वरैः पित्तं शेषैः कफं दृष्ट्वा चिकित्सां कुर्वीत । किंतु वाधितं रक्तं तल्लक्षणैर्दृष्ट्वा चिकित्सां कुर्वीत । तत्र रक्तस्य लक्षणानि विधिशोणितीयोक्तानि तन्त्रान्तरे विदाहस्तृष्णा वैरस्यं गात्रगौरवम् । मूर्छा इत्यादीनि ज्ञेयानि । प्लीहेति प्लीहोदरे । यथादोषमिति उल्वणदोषप्रशमनीं वामे बाहौ शिराव्यधः सामान्योक्तोऽपि सुश्रुतप्रत्ययात्कूर्पराद्यशिराव्यधो ज्ञेयः । पिप्पलीर्वा प्रयो-

जयेदिति रसायनोक्तपिप्पलीवर्धमानं प्रयोजयेत् । क्षारारिष्टगणानिति ग्रहण्यर्शोवक्ष्यमाणक्षारारिष्टसमूहान् । इहापि च विडङ्गमित्यादिना क्षारं तथा रोहितकलवेत्यादिनारिष्टं च वक्ष्यति । द्विगुणाभयमिति द्विभागाभयं रोहितकलता रोहितक इति ख्याता । काण्डका इति स्वल्पप्रमाणाः खण्डाः । असुतुयादिति द्रवे मग्नाः कृत्वा संधानार्थं स्थापयेत् ॥ ७४—८१ ॥

रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ८२ ॥
पालिकैः पञ्चकोलैस्तु तैः सर्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ८३ ॥
प्लीहातिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।
तथा गुल्मोदरश्वासक्रिमिपाण्डुत्वकामलाः ॥८४॥

रोहितकेत्यादौ सप्तपंचाशत्पलक्काथोऽष्टगुणमुदकं दत्वा पादावशेषेण द्विपलोपेतचतुर्दशशरावावधिमानः क्काथो भवति । सर्वैस्तैश्चापि तुल्ययेति रोहितकत्वचा पंचपलानीत्यर्थः । पिष्टैरिति पंचकोलैः पिष्टैः तथा विभक्तिविपरिणामाद्रोहितकत्वचापिष्टयेति ज्ञेयम् ॥ ८२—८४ ॥

अग्निकर्म च कुर्वीत भिषग्वातकफोल्वणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः ॥ ८५ ॥
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ।
यूषैर्मांसरसैश्चापि दीपनीयसमायुतैः ॥ ८६ ॥

अग्निकर्मेति गुल्मवदत्राप्यग्निकर्म वदन्ति । वातकफोल्वणे प्लीहोदरे एव ज्ञेयम् । दीपनीयसमायुतैरिति पिप्पल्यादिदीपनीयगणसंस्कृतैरित्यर्थः ॥ ८५ ॥ ८६ ॥

लघून्यन्नानि संसृज्य भजेत्प्लीहोदरी नरः ।
स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ॥८७॥
सतैललवणं दद्यान्निरूहं सानुवासनम् ।
परिस्रंसीनि चान्नानि तीक्ष्णं चैव विरेचनम् ॥ ८८ ॥
उदावर्तहरं कर्म कार्यं वातघ्नमेव च ।
छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत् ॥ ८९ ॥
जातं जातं जलं स्राव्यमेवं तत्पातयेद्भिषक् ।
तृष्णाकासज्वरार्ते तु क्षीणमांसाग्निभोजनम् ॥९०॥

निरूहस्योत्सर्गत एव सतैललवणत्वे सिद्धे सतैललवणमितिपदं तैललवणयोरत्राधिकदानोपदर्शनार्थम् । बद्धछिद्रकफोदराणां च यद्यप्यास्थापनं निषिद्धं तथापि तदेकसाध्यायामवस्थायां निरूहानुवासनमिह ज्ञेयम् । परिस्रंसीनीत्यनुलोमनानि छिद्रान्त्रोदरं तृणामित्यत्र यद्यप्यसाध्यत्वमुक्तं तथापि तत्र प्रायःशब्दनिवेशात्साध्यताव्यभिचारोऽपि दर्शितः । तेनेह तच्चिकित्सोच्यते । उत्तरत्रापि च पिपीलिकादंशादिना छिद्रोदरस्योच्यते । तथाहि—हन्ति सर्वोदराण्येतत् चूर्णमित्यनेन सर्वोदरचिकित्सा वक्तव्या । अन्ये तु सर्वोदरहन्तृत्वकथनं न पारमार्थिकम् । ऋते स्वेदादित्यनेन स्वेदस्य छिद्रोदरे उदककारकतया निषेधं दर्शयति । तृष्णेत्यादिना प्रत्याख्येयं छिद्रोदरमाह—अपामित्यादिना ॥ ८७—९० ॥

वर्जयेच्छालिनं तद्वच्छूलिनं दुर्बलेन्द्रियम् ।
अपां दोषे ग्रहण्यादौ विदध्यादुदकोदरे ॥ ९१ ॥
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ।
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ॥ ९२ ॥
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्वशः ।
सर्वमेवोदरं प्रायो दोषसङ्घातजं मतम् ॥ ९३ ॥
तस्मात्त्रिदोषशमनीं क्रियां सर्वेषु कारयेत् ।
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति ॥ ९४ ॥
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ।
रक्तशालीन्यवान्मुद्गान्जाङ्गलांश्च मृगद्विजान् ॥९५॥
पयोमूत्रासवारिष्टान्मधुशीधूंस्तथा सुराम् ।
यवागूमोदनं वापि यूषैरद्यादसैरपि ॥ ९६ ॥
मन्दाम्लस्नेहकटुभिर्यूषैः मूलोपसाधितैः ।
औदकानूपजं मांसं शाकं पिष्टकृतं तिलान् ॥ ९७ ॥
व्यायामाध्वदिवास्वप्नं यानयानं च वर्जयेत् ।
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ॥ ९८ ॥
नाद्यादन्नानि जठरी तोयपानं च वर्जयेत् ।
नातिसान्द्रं मतं पाने स्वादु तक्रमपेलवम् ॥ ९९ ॥
त्र्यूषणक्षारलवणैर्युक्तं तु निचयोदरी ।
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ॥ १०० ॥
शर्करामधुकोपेतं स्वादु पित्तोदरी पिबेत् ।
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ॥ १०१ ॥
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ।
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ १०२ ॥
युक्तं प्लीहोदरी जातं सव्योषं तूदकोदरी ।
बद्धोदरी तु हवुषायमान्यजाजीसैन्धवैः ॥ १०३ ॥
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ।
गौरवारोचकार्तानां समन्दाग्न्यतिसारिणाम् ॥१०४॥
तक्रं वातकफार्तानाममृतत्वाय कल्पते ।
शोफानाहार्तितृण्मूर्च्छापीडिते कारभं पयः ॥१०५॥
शुद्धानां क्षामदेहानां गव्यं छागं समाहितम् ।
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥ १०६ ॥
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ।
वृश्चिकालीं वचां कुष्ठं पञ्चमूलीं पुनर्नवाम् ॥१०७॥
भूतीकां नागरं धान्यं जले पक्त्वावसेचयेत् ।
पलाशं कत्तृणं रास्ना तद्वत्पक्त्वावसेचयेत् ॥१०८॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् ॥१०९
दीपनीयानि सर्पींषि जठरघ्नानि वक्ष्यते ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ ११० ॥

उत्पत्तिविशिष्टदकोदरचिकित्सामाह—अपां दोपहराणि इति वदन्ति । उदकादिभ्य इति उदकप्रकारेभ्योऽवान्तरेभ्यः । नियच्छेदिति निवर्तयेत् । अनुपूर्वेश इति क्रमेण । निवर्तयन्नत्र सर्वोदरसाधारणीं चिकित्सां वक्तुमाह—सर्वमित्यादिना । भोज्यानि अन्नानि पुनर्भोज्यानीति भोक्तव्यानि । मन्दाग्नेरित्यादौ मन्दशब्दोऽल्पवचनः । यानयानमित्यश्वादिना यानम् । अपेलवमित्यत्र उद्धृतस्नेहं । स्वाद्विति सद्यो मथितं मधुरं जातं । कवोष्णमिति ईषदुष्णं । उरकाथ्येति जले पक्त्वा अवसेचयेदित्यत्र उदरमित्यनुवर्तते । स्नेहनीयानीत्यत्र केचिद्दीपनीयानीति पठन्ति ॥ ९१—११० ॥

सक्षारैरर्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ।
कल्कैर्द्विपञ्चमूलस्य तुलार्धस्य रसेन च ॥ १११ ॥
दधिमण्डाढकोपेतं तत्सर्पिर्जठरापहम् ।
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ११२"

इति पञ्चकोलघृतम् ।

नागरत्रिफलाप्रस्थं घृततैलात्तथाढकम् ।
मस्तुनः साधयित्वैतत्पिबेत्सर्वोदरापहम् ।
कफमारुतसंभूते गुल्मे चैतत्प्रशस्यते ॥ ११३ ॥

इति नागरघृतम् ।

पिप्पलीत्यादौ सक्षीरैरर्धपलिकैर्द्विप्रस्थं सर्पिषः पचेदिति पाठे । द्विशब्दः प्रस्थेन तथार्धपलिकैरित्यनेन च योज्यः । एतेन पिप्पल्यादीनां द्विरिति द्विगुणार्धपलैः पट्पलानि भवन्ति । प्रस्थेन च द्विशब्दयोजनाद्घृतप्रस्थद्वयं भवति । काश्मीरे तु पलिकैः सपिप्पलीक्षारैः द्विप्रस्थं सर्पिषः पचेदित्येव पठ्यते । जतूकर्णोऽप्याह "दशमूलतुलार्धरसे सक्षारैः पञ्चकोलकैः । सार्धं घृतार्धप्रस्थं दधिमस्तुकमुदरघ्नमिति" ॥ १११—११३ ॥

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥११४॥

इति चित्रकघृतम् ।

यवकोलकुलत्थानां पञ्चमूलरसेन च ।
सुरासौवीरकाभ्यां च सिद्धं वापि पिबेद्घृतम् ११५

इति यवाद्यघृतम् ।

चतुर्गुणेत्यादौ सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत्पलं देयम् । उक्तं ह्यन्यत्र—"अग्निक्षारपलाभ्यां त्रि मूत्रं चतुर्गुणं घृतप्रस्थ"मिति ॥ ११४ ॥ ११५ ॥

एभिः स्निग्धाय संजाते बले शान्ते च मारुते ।
स्रस्ते दोषाशये दद्यात्कल्पदृष्टं विरेचनम् ॥ ११६ ॥
पटोलमूलरजनीविडङ्गत्रिफलात्वचम् ।
काम्पिल्यकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ११७
षडाद्यान्कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णमतो मुष्टिं गवां मूत्रेण वा पिबेत् ११८
विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलै रसैः ।
पिण्डपेयां च पीत्वा वा सव्योषं षडहं पयः ११९
शृतं पिबेत्ततश्चूर्णं पिबेदेवं पुनः पुनः ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ।
कामलां पाण्डुरोगं च श्वयथुं चापकर्षति ॥ १२० ॥

इति पटोलाद्यं चूर्णम् ।

दोषाशय इति दोषः स्नेहेन विमुक्तबन्धनत्वात्स्रस्त इत्यर्थः । पटोलेत्यादौ षडाद्यान्कार्षिकानित्यनेन त्रिफलायाः समं प्रत्येकं कार्षिकत्वं कम्पिल्लकादीनां चूर्णानां यथाक्रमं द्विचतुर्गुणत्वम् । मुष्टिमिति पलम् । सव्योषं षडहं शृतं पयः पिबेदिति विरेचनदिने मण्डपेयानामन्यतमं अम्यपेक्षया कर्तव्यम् । ऊर्ध्वं यथोक्तपयोवृत्तिना भवितव्यम् । ततः पुनः सप्तमे पटोलादिचूर्णं पेयम् । ईदृशं पुनःपुनः कर्तव्यम् ॥ ११६—१२० ॥

गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेद्द्राक्षाम्बुगोमूत्रकोलकर्कन्धुशीधुभिः ॥ १२१ ॥
यमानी हवुषा धान्यं त्रिफला चोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥ १२२ ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥१२३॥
विडङ्गस्य समांशानि दन्त्या भागास्त्रयस्तथा ।
त्रिवृद्विशालयोर्द्वौ द्वौ शातला स्याच्चतुर्गुणा ॥१२४॥
एतन्नारायणं नाम चूर्णं रोगगणापहम् ।
नैतत्प्राप्याभिवर्तन्ते रोगा विष्णुमिवासुराः १२५
तक्रेणोदरिभिः पेयं गुल्मिभिर्बदराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥ १२६ ॥
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसैः ।
परिकर्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके ॥ १२७ ॥
भगन्दरे पाण्डुरोगे श्वासे कासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥ १२८ ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्थं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ १२९ ॥

इति नारायणचूर्णम् ।

शङ्खिनी श्वेतभल्लातको कोलकर्कन्धूनां रसेव ज्ञेया । यवानीत्यादावुपकुञ्चिका । कृष्णजीरकाः । अजमोदोग्रगन्धा, कारवी अल्पजीरकं जीरकशब्देन तु महाजीरकम् । दन्त्याभागास्त्रयः गृहीतभागापेक्षया । एवं त्रिवृद्विशालयोरपि आद्यभागापेक्षया द्वैगुण्यम् । नारायणसंज्ञानिमित्तमाह—नैतदित्यादि । एतेन नारायणसधर्मित्वात् नारायणसंज्ञेत्युक्तं भवति ॥ १२१—१२९ ॥

हपुषा काञ्चना क्षीरी त्रिफला कटुरोहिणी ।
नीलिनी त्रायमाणा च शातला त्रिवृता वचा १३०

सैन्धवं काललवणं पिप्पली चेति चूर्णयेत् ।
दाडिमत्रिफलामांसरसमूत्रसुखोदकैः ॥ १३१ ॥
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ।
कुष्ठे श्वित्रे सरुजके सवाते विषमाग्निषु ॥ १३२ ॥
शोथार्शःपाण्डुरोगेषु कामलासु हलीमके ।
वातं पित्तं कफं चाशु विरेकात्संप्रसाधयेत् ॥१३३
इति हपुषाद्यं चूर्णम् ।

नीलिनीं निचुलं व्योषं द्वौ क्षारौ लवणानि च ।
चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ १३४ ॥
इति निलीन्याद्यं चूर्णम् ।

हपुषेत्यादौ—काललवणं विडलवणमेव अन्ये तु सौवर्चलाकारं लवणमाहुः । दाडिमादिभिरिति शब्दः संबध्यते ॥ १३०—१३४ ॥

क्षीरद्रोणं सुधाक्षीरप्रस्थार्धसहितं दधि ।
जातं विमथ्य तद्युक्तया त्रिवृत्सिद्धं पिबेद्घृतम् १३५
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ।
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च ।
गुल्मानां गरदोषाणामुदराणां च शान्तये ॥ १३६ ॥
इति स्नुहीक्षीरघृतम् ।

क्षीरद्रोणमित्याद्युक्तानि घृतानि तुल्यकर्माणि तत्रच प्रथमे घृते द्रवानुक्ते जलेनैव पाकः किंवा प्रकृतदधिमथितेन घृतेनैव तथेत्यादिना षट्पलेन चेत्यन्तेन द्वितीयं घृतम् । तथेति पूर्वप्रकारोत्थितं घृतमेव । एवं उत्तरे घृते तत्तच्छन्दार्थं वर्णयन्ति ॥ १३५ ॥ १३६ ॥

दधिमण्डाढके सिद्धात्स्नुक्क्षीरपलकल्कितात् ।
घृतप्रस्थात्पिबेन्मात्रां तद्वज्जठरशान्तये ॥ १३७ ॥
एषां चानुपिबेत्पेयां पयो वा स्वादु वा रसम् ।
घृते जीर्णे विरिक्तं तु कोष्णनागरकैः शृतम् ॥१३८॥
शुण्ठ्याः पिबेत्ततः पेयां यूषं कौलत्थकं ततः ।
पिबेद्रूक्षस्त्र्यहं त्वेवं पयो वा प्रतिभोजितः ॥ १३९ ॥
पुनःपुनः पिबेत्सर्पिरानुपूर्व्या तथैव च ।
घृतान्येतानि सिद्धानि विदध्यात्कुशलो भिषक् ४०
गुल्मानां गरदोषाणामुदराणां च शान्तये ।
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ॥ १४१ ॥

पेयादीनां त्रयाणां अन्नानुपानत्वं कफपित्ते । किंवा प्रकृत्यपेक्षयानुपानभेदः कल्पनीयः । नागरकैः शृतमित्यत्र षडङ्गविधिना जलसाधनम् । द्वितीये दिवसे यूषं कौलत्थिकं तत इति तृतीये दिवसे, उक्तं हि प्रथमे नागरयूषं परेऽहनि पेया । तृतीये कुलत्थोदनमिति । रूक्ष इति पुनःपुनः पिबेदित्यनेन संबध्यते । तेन रूक्षस्य एतत्स्नेहविरेचनं कर्तव्यम् । यत्तु स्नेहविरेचनमित्यत्र स्निग्धो नाधिकारीति दर्शयति । इदमेव नागरादिशृतपानीयादिनोपपादितं तथा वलापेक्षया भूयो वा प्रतिभोजित इति अधिकानि वा दिनानि मात्रया भोजितः सन् पुनःपुनः पिबेदिति योज्यम् ॥ १३७—१४१ ॥

गुल्मघ्नीलिनीसर्पिःस्नेहं वा मिश्रकं पिबेत् ।
क्रमान्निर्हृतदोषाणां जाङ्गलप्रतिभोजिनाम् ॥१४२॥
दोषशेषनिवृत्त्यर्थं योगान्वक्ष्याम्यतः परम् ।
चित्रकामरदारुभ्यां कल्कं क्षीरेण ना पिबेत् ॥१४३॥
मांसयुक्तं तथा हस्तिपिप्पली विश्वभेषजम् ।
विडङ्गं चित्रकं दन्ती चव्यं व्योषं च तैः समैः १४४
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ।
पिबेत्कषायं त्रिफलादन्तीरोहितकैः शृतम् ॥१४५॥
व्योषक्षारयुतं जीर्णे रसैरद्यात्सजाङ्गलैः ।
मांसं वा भोजनं भोज्यं सुधाक्षीरघृतान्वितम् १४६

गुल्मघ्नमिति गुल्महरत्वेनोक्तं गुल्माध्याये । मिश्रकगुल्मोक्त एव चित्रकेत्यादौ मांसयुक्तमितिच्छेदः । तथा हस्तिपिप्पल्यादाविति क्षीरेण पिबेदिति संबध्यते । विडङ्गादिभिः क्षीरं अष्टपलं चतुर्गुणजलेन साधनीयम् । पिबेत्कषायमित्यादौ व्योषक्षारयोः प्रक्षेप्यत्वं । मांसं वेत्यादौ तु सुधाक्षीरसाधितं घृतं पूर्वोक्तं ज्ञेयम् ॥ १४२—१४६ ॥

क्षीरानुपानं गोमूत्रेणाभयां वा प्रयोजयेत् ।
सप्ताहं माहिषं मूत्रं क्षीरं चानन्नभुक् पिबेत् १४७
मासमौष्ट्रं पयश्छागं त्रीन्मासान्व्योषसंयुतम् ।
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु ॥१४८॥
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत् ।
शृङ्गवेरार्द्रकरसः पाने क्षीरसमो मतः ॥ १४९ ॥
तैलं रसेन तेनैव सिद्धं दशगुणेन वा ।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे हितम् ॥ १५० ॥
शूलानाहविबन्धेषु सकुयूषरसादिभिः ।
सरलामरशिग्रूणां बीजेभ्यो मूलकस्य च ॥ १५१ ॥
तैलान्यभ्यङ्गपानार्थं शूलघ्नान्यनिलोदरे ।
स्तैमित्यारुचिहृल्लासेष्वल्पाग्निर्मद्यपस्तथा ॥ १५२ ॥
अरिष्टान्वा पिबेत्क्षारान्कफस्त्यानस्थिरोदरः ।
पिप्पलीं तिल्वकं हिङ्गु नागरं हस्तिपिप्पलीम् १५३
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम् ।
देवदारु हरिद्रे द्वे सरलातिविषे वचाम् ॥ १५४ ॥
कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्प्य च ।
दधिसर्पिर्वसातैलमज्जयुक्तानि दाहयेत् ॥ १५५ ॥
अन्नादूर्ध्वमतः क्षाराद्विडालकपदं पिबेत् ।
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ॥ १५६ ॥
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शोजठराणि च ।
विषूचिकामुदावर्तं वाताष्ठीलां च नाशयेत् ॥ १५७
क्षारं चाजकरीषाणां स्रुतं मूत्रैर्विपाचयेत् ।
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ॥ १५८ ॥

पिप्पलीं चित्रकं शुण्ठीं त्रिफलां त्रिवृतां वचाम्।
द्वौ क्षारौ शातलां दन्तीं स्वर्णक्षीरीं विषाणिकाम्॥
कोलप्रमाणां वटिकां पिबेत्सौवीरसंयुताम्।
श्वयथावविपाके च प्रवृद्धे चोदकोदरे॥ १६०॥
भावितानां गवां मूत्रे षष्टिकानां तु तण्डुलैः।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम्॥ १६१॥
पिबेदिक्षुरसं चानु जठराणां निवृत्तये।
स्वं स्वं स्थानं व्रजन्त्येषां तथा पित्तकफानिलाः॥
शङ्खिनीस्नुक्त्रिवृद्दन्तीचिरिविल्वादिपल्लवैः।
शाकं गाढपुरीषाय प्राग्भक्तं दापयेद्भिषक्॥१६३॥
ततोऽस्मै शिथिलीभूतवर्चोदोषाय शास्त्रवित्।
दद्यान्मूत्रयुतं क्षीरं दोषशेषहरं शिवम्॥ १६४॥

अनन्नभुगिति गोमूत्रेत्यादि योगत्रये योज्यम्। क्षीराशीति क्षीरमनुशिलाजतुभक्षीयात्। शिलाजतुविधानेन इत्यनन्तरोक्त-शिलाजतुविधानमेव। क्षीराशीत्यनेनोक्तं गृह्यते न रसायनो-क्तम् व्यवहितत्वात्। शृङ्गवेरार्द्रकशब्देन शुष्कार्द्रकरसः क्वाथ इत्यर्थः। विडालपदकः कर्षः। क्षारं चाजकरीषाणामित्यादौ क्षारान् षड्द्रवेण एकविंशतिवारस्रावणेन क्षारद्रवं ग्राह्यम्। यावच्चूर्णसमुदायद्रवत्वेन कृतद्वैगुण्यं सदष्टगुणं भवति॥ ॥ १४७—१६४॥

पार्श्वशूलमुपस्तम्भं हृद्ग्रहं चापि मारुतम्।
जनयेद्यस्य तैलं स बिल्वक्षारेण ना पिबेत्॥१६५॥
तथाग्निमन्थस्योनाकपलाशतिलनालजैः।
बलाकदल्यपामार्गक्षारैः प्रत्येकशः स्रुतैः॥ १६६॥
तैलं पक्त्वा भिषग्दद्यादुदराणां प्रशान्तये।
निवर्तते चोदरिणां हृद्ग्रहश्चानिलोद्भवः॥ १६७॥

पार्श्वेत्यादौ उरस्तम्भे इति उपस्तम्भः उपशब्दः समीप-वाची। बिल्वक्षारेण इति बिल्वफलदाहात्कृतेन क्षारेण सिद्धं तैलं पाययेत्। तथा तिलनालजैः क्षारैः सिद्धं तैलं पाययेदिति संबन्धः॥ १६५—१६७॥

"कफे वातेन पित्तेन ताभ्यां वाप्यावृतेऽनिले।
बलिनः स्वौषधयुतं तैलमैरण्डजं हितम्॥ १६८॥
सुविरिक्तो नरो यस्तु पुनराध्मतीह तम्।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत्॥ १६९॥
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम्।
तीक्ष्णैः सक्षारगोमूत्रैर्वस्तिभिस्तमुपाचरेत्॥१७०॥

कफेत्यादौ कफे वातेनावृते कफे पित्तेनावृते ताभ्यां कफपि-त्ताभ्यां वाते आवृते इत्यर्थः। स्वौषधमिति आवरकदोषहर-मौषधमित्यर्थः॥ सुविरिक्तमित्यादौ विरिक्तस्य ध्मानं रिष्ट-मिति ज्ञेयम्। तेनाह निर्जितवाते पुनराध्मानं न रिष्टं अतस्त-च्चिकित्सोपदेशोऽत्र युज्यते किंवा रिष्टयुक्तं पुनराध्मानं इत्या-दाय इह सोपस्तम्भ इति कृतम्। सोपस्तम्भ इति साव-रणः॥ १६८—१७०॥

क्रियातीते त्रिदोषे च जठरे चापशाम्यति।
ज्ञातीन्ससुहृदो दारान्ब्राह्मणान्नृपतीन्गुरून्॥१७१॥
अनुज्ञाप्य भिषक्कर्म विदध्यात्संशयं ब्रुवन्।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत्॥
एवमाख्याय तस्येदमनुज्ञातः प्रयोजयेत्।
पानभोजनसंयुक्तं विषमस्मै प्रदापयेत्॥ १७३॥
यस्मिन्वा कुपितः सर्पो विसृजेद्धि फले विषम्।
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः १७४
विषेणाशु प्रमाथित्वादाशु भिन्नः प्रवर्तते।
विषेण हृतदोषं तं शीताम्बुपरिषेचितम्॥ १७५॥

क्रिया निवृत्त इत्यादिना। जातोदकतां दर्शयति। तत्र हि क्रियानिषिद्धा। अजातोदकमित्यादिना त्रिदोषजेत्यनेनापि जातोदके त्रिदोषमिति ज्ञेयम्। अजातोदके त्रिदोषेऽपि क्रिया उक्तैव। एवंभूतत्रिदोषस्य तु क्रियानिवृत्तपदेनैव लाभेऽपि त्रिदोषे इति पदं त्रिदोषस्य जातोदकस्याप्यत्र क्रियालघुत्वो-पदर्शनार्थं ज्ञात्यादिसंमतिग्रहणादिना एष विपर्ययः। अनु-ज्ञात इति अनुमतः विषादिप्रयोगे अस्मिन्निति फले विषं विसृ-जेत् तथा फलं प्रयोजयेदिति संबन्धः। विषं चात्र दंष्ट्राविष-मेव ज्ञेयम्। उक्तंहि—"श्वरोगे दूष्योदरे बद्धगुदे क्षतांत्रजे जलोदरे दंष्ट्राविषस्यैव प्रयोगो वै विशोधने"। स्थिर इत्यच-पलः। लीन इति धात्वन्तरगतः। प्रमाथित्वादिति क्षोभ-कारित्वात्॥ १७१—१७५॥

पाययेत भिषग्दुग्धं यवागूं वा यथाबलम्।
त्रिवृन्मण्डूकपर्ण्योश्च शाकं सयववास्तुकम्॥१७६॥
भक्षयेत्कालशाकं वा स्वरसोदकसाधितम्।
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक्॥ १७७॥
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत्।
एवं विनिर्हृते दोषे शाकैर्मासात्परं ततः॥ १७८॥
दुर्बलाय प्रयुञ्जीत प्राणभृत्कारभं पयः।
इदं तु शल्यहर्तॄणां कर्म स्याद्दृष्टकर्मणाम्॥ १७९॥

कालशाकमप्रसिद्धम्। स्वरसोदकाभ्यां साधितम्। ततश्चैव स्वरसमिति शाकस्वरसम्॥ १७६—१७९॥

वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरङ्गुलम्।
मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक्॥१८०॥
विपाट्यान्त्रं ततः पश्चाद्वीक्ष्य बद्धक्षतान्त्रयोः।
सर्पिषाभ्यज्य केशादीनवसृज्य विमोक्षयेत्॥१८१॥

नाभ्यधश्चतुरंगुलमिति नाभेरधो यथा भवति तथा वाम-कुक्षिं मापयित्वा उदरमध्याच्चतुरंगुलं त्यक्त्वा वामकुक्षौ नाभ्यधात् अर्धदलपाटनं कर्तव्यम्। पश्चाद्बद्धक्षतोदरयोर-न्तरं वीक्ष्य यथोचितक्रियार्थं केशादिमार्जनं कृत्वा संमूढमन्त्रं द्राक् मोक्षयेत्॥ १८०॥ १८१॥

मूर्च्छनाद्यच्च संमूढमन्त्रं तच्च विमोक्षयेत्।
छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः १८२
बहुशः संगृहीतानि ज्ञात्वा छित्वा पिपीलिकान्।
प्रतियोगैः प्रवेश्यान्त्रं ग्रैयैः सीव्येद्व्रणं ततः ॥१८३॥
तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक्।
वामपार्श्वे त्वधो नाभेर्नाडीं दत्त्वा च गालयेत्१८४
निःस्राव्य च विमृद्यैतद्वेष्टयेद्वाससोदरम्।
तथा वस्तिविरेकाद्यैर्म्लानं सर्वं च वेष्टयेत् ॥१८५॥
निःसृते लङ्घितः पेयामस्नेहलवणां पिबेत्।
अतः परं च षण्मासान् क्षीरवृत्तिर्भवेन्नरः ॥१८६॥
त्रीन् मासान् पयसा पेयां पिबेत्त्रींश्चापि भोजयेत्।
श्यामाकं कोरदूष्यं वा क्षीरेण लघुभोजनः ॥१८७॥
नरः संवत्सरेणैवं जयेत्प्राप्तं जलोदरम्।
प्रयोगाणां च सर्वेषामनुक्षीरं प्रयोजयेत् ॥ १८८ ॥
दोषानुबन्धरक्षार्थं बलस्थैर्यार्थमेव च।
प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः।
सर्वधातुक्षयार्तानां देवानाममृतं यथा ॥ १८९ ॥"

छिद्रान्त्रस्य तु अत्र छिद्राणि पिपीलिकैः दंशयित्वा संगृहीतानि यथान्त्रच्छिद्राणि भवन्ति तथा ज्ञात्वा पिपीलिकाशिरश्छेदः कार्यः स्यूतयोरपि बद्धच्छिद्रान्त्रयोः निवृत्तांत्रप्रवेशविधिः प्रतियोगैरित्यनेनोक्तः कर्तव्यः ॥ तथेत्यादिना जातोदकविधिमाह तथाव्यधेदिति नाभ्यधश्चतुरंगुले इत्यर्थः। अतः परमिति अलवणपेयापानादूर्ध्वं षण्मासान् क्षीरवृत्तिः स्यात्। ततः क्षीरमात्रवृत्तिषण्मासादूर्ध्वं त्रीन्मासान्पयसा सह पेयां पाययेत्। ततश्चोर्ध्वं त्रीन्मासान् श्यामाकं कोरदूषमित्य दि ग्रन्थोक्तं क्षीरेण भोजयेत्। एवं संवत्सरेण इति यदुक्तं तत्पूर्यते ॥ १८२—१८९ ॥

तत्र श्लोकौ।

हेतुं प्राग्रूपमुदराणां लिङ्गं व्याससमासतः।
उपद्रवान्गरीयस्त्वं साध्यासाध्यत्वमेव च ॥१९०॥
जाताजाताम्बुलिङ्गानि चिकित्सां चोक्तवानृषिः।
समासव्यासनिर्देशैरुदराणां चिकित्सितम् ॥१९१॥

इति चरकसंहितायामुदरचिकित्सितं त्रयोदशोऽध्यायः ॥ १३ ॥

प्रयोगापचिताङ्गानामिति प्रयोगैः क्षीणदेहानां हेतुमित्यादिना संग्रहं ब्रूते। संग्रहार्थश्चाध्यायोक्तोऽनुसरणीयः ॥ १९० ॥ १९१ ॥ इति उदरचिकित्सितं समाप्तम्।

## चतुर्दशोऽध्यायः।

अथार्शश्चिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

उदरार्शसोस्त्रिदोषजत्वसामान्यात् बद्धगुदोदरकारणाच्च अनन्तरमर्शसां चिकित्सितं ब्रूते ॥ १ ॥ २ ॥

आसीनं मुनिमव्यग्रं कृतजप्यं कृतक्षणम्।
पृष्टवानर्शसां मुक्तिमग्निवेशः पुनर्वसुम् ॥ ३ ॥

आसीनमित्यादि। कृतक्षणमिति कृतावसरम्। मुक्तिमिति रोगोन्मुक्तिं किंवा प्रकोपहेत्वादिं पप्रच्छेति योजना ॥ ३ ॥

प्रकोपहेतुसंस्थानं स्थानं लिङ्गचिकित्सितम्।
साध्यासाध्यविभागं च तस्मै तन्मुनिरब्रवीत् ॥ ४ ॥

प्रकोपस्य रोगोत्पादस्य हेतुः। तथाह्यत्र प्रकोपशब्देन रोगोत्पादं ज्ञापयति यथा—"पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम्" संस्थानमाकारः। संस्थानं यद्यपि लिङ्गे एव प्रविशति तथापीह बहुप्रपञ्चत्वाद्बहुचलात्संस्थानं पृथगुक्तम् ॥ ४ ॥

इह खल्वग्निवेश! द्विविधान्यर्शांसि सहजानि कानिचित् कानिचिज्जातस्योत्तरकालजानि। तत्र बीजं गुदवलिबीजोपतप्तमायतनमर्शसां सहजानाम्। तत्र द्विविधो बीजोपतप्तौ हेतुर्मातापित्रोरपचारः पूर्वकृतं च कर्म; तथाऽन्येषामपि सहजानां विकाराणाम्। तत्र सहजानि सहजातानि शरीरेण, अर्शांसीत्यधिमांसविकाराः ॥ ५ ॥

इहेत्यादिना विविधान्यर्शांसि प्रतिपाद्यन्ते सहजानि हेत्यादिना प्राक्। तत्र बीजमिति शुक्रशोणितोक्तम्। तच्च गुदवल्यारंभकेण बीजेनोपतप्तं सत् सहजानां कारणं भवति। गुदवल्यारंभकेण च दुष्टेन बीजेन शरीरारंभकस्य बीजस्य अदुष्टस्यासंबन्धः। ततश्च गुदवलीबीजदोषात् गुदवलीष्वेवार्शोजन्म भवति। शेषावयवारंभकं बीजं अदुष्टत्वान्न विकारं जनयति। उक्तंच यस्य यस्याङ्गावयवस्य बीजेन बीजभागः उपतप्तो भवति। तस्य तस्य अङ्गावयवस्य विकृतिरुपजायते इत्यादि। अन्ये तु आहिताग्निपाठात् पूर्वनिपातनियमेन उपतप्तगुदवलीबीजं इत्यस्मिन् गुदवलीबीजोपतप्तमितिपदं कृतमित्याहुः। अपचार इति अनुचित आहारविहाररूपः शुक्रशोणितभागविशेषत्वदूषकः पूर्वकृतं च कर्मेति जायमानस्य सहजस्यार्शोऽभिनिर्वर्तकं जन्मान्तरीयं कर्म। तच्च कर्म दुर्बलं सत् मातापित्रपचारसहितं बीजदोषकं भवतीति ज्ञेयं। यथोक्तहेतुद्वयं अन्यत्रापि सहजे गदेऽतिदिशति तथेत्यादिना। तत्रेत्यादिना सहजशब्दार्थं व्याकरोति अर्शःशब्दाभिधेयमाह—अर्शांसीत्यादि अधिमांसविकारा इति ॥ ५ ॥

सर्वेषां चार्शसां क्षेत्रं—गुदस्यार्धपञ्चमाङ्गुलेऽवकाशे त्रिभागान्तरास्तिस्रो गुदवलयः, क्षेत्रमिति देशः; केचित्तु भूयांसमेव देशमुपदिशन्त्यर्शसां शिश्नमपत्यपथं गलमुखनासिकाकर्णाक्षिवर्त्मानि त्वक् च। तदस्त्यधिमांसदेशतया गुदव-

लिजानां त्वर्शांसीति संज्ञा तन्त्रेऽस्मिन् । सर्वेषां चार्शसामधिष्ठानं मेदो मांसं त्वक् च ॥ ६ ॥

त्रिभागान्तरा इति ऊर्ध्वपंचांगुलस्य सार्धांगुलरूपतृतीयभागावकाशा गुदवलयः । अयं च विभागोऽर्धपंचांगुले गुदे गुदौष्ठेन गृह्यते इति ॥ केचिदित्यनेन तन्त्रान्तरेऽपत्यपथादिगतानामपि अधिमांसानां अर्शांसि इति संज्ञा भण्यते इति सूचयति । अधिष्ठानमितिदूष्यम् ॥ ६ ॥

तत्र सहजान्यर्शांसि कानिचिदणूनि कानिचिन्महान्ति कानि चिद्दीर्घाणि कानिचिद्ध्रस्वानि कानिचिद्वृत्तानि कानिचिद्विषमविसृतानि कानिचिदन्तःकुटिलानि कानिचिद्बहिःकुटिलानि कानिचिज्जटिलानि कानिचिदन्तर्मुखानि यथास्वं दोषानुबन्धवर्णानि ॥ ७ ॥

सहजानीत्यादिना संस्थानलिङ्गान्याह । जटिलानीति तृणान्तरितानि । दोषानुबन्धवर्णानीति दोषानुरूपवर्णानि ॥ ७ ॥

तैरुपहतो जन्मप्रभृति भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषः शार्करी चाश्मरी वा तथाऽनियतविबद्धमुक्तपक्वामशुष्कभिन्नवर्चा अन्तरान्तरा श्वेतपाण्डुहरितपीतरक्तारुणतनुसान्द्रपिच्छिलकुणपगन्धामपुरीषोपवेशी नाभिबस्तिवंक्षणोद्देशे प्रचुरपरिकर्त्तिकान्वितः सशूलगुदप्रवाहिकः परिहर्षप्रमेहप्रसक्तविष्टम्भान्त्रकूजोदावर्तहृदयेन्द्रियोपलेपः प्रचुरविबद्धतिक्ताम्लोद्गारः सुदुर्बलो सुदुर्बलाग्निरल्पशुक्रः क्रोधनो दुःखोपचारशीलः कासश्वासतमकतृष्णाहृल्लासच्छर्दिररोचकाविपाकपीनसक्षवथुपरीतस्तैमिरिकः शिरःशूली क्षामभिन्नसन्नसक्तजर्जरस्वरः कर्णरोगी सशूलपाणिपादवदनाक्षिकूटः सज्वरः साङ्गमर्दः सर्वपर्वास्थिशूली चान्तरान्तरा पार्श्वकुक्षिबस्तिहृदयपृष्ठत्रिकग्रहोपतप्तः प्रध्यानपरः परमालसश्चेति; जन्मप्रभृत्यस्य गुदजैरावृतो मार्गोपरोधाद्वायुरपानः प्रत्यारोहन्समानव्यानप्राणोदानान्पित्तश्लेष्माणौ च प्रकोपयति, ते प्रकुपिताः पञ्च वाताः पित्तश्लेष्माणौ चार्शसमभिद्रवन्त एतान् विकारानुपजयन्तीत्युक्तानि सहजान्यर्शांसि ॥ ८ ॥

अनियतत्वं विबद्धमुक्तत्वादि विरुद्धधर्माणां ज्ञेयम् । अन्तरान्तरेति कदाचित्, न सर्वदा । दुःखोपचारशील इति दुःखोपचारहेतुरित्यर्थः । प्रध्यानं घूर्णनम् । पुनरयं सहजार्शोयुक्त ईदृग्व्याधिपरीतो भवतीत्याह—जन्मेत्यादि । प्रत्यारोहमिति ऊर्ध्वं अनुक्रमेण पंचवातप्रकोपो भवति । अत्र सर्वथा वायुर्विगुणो भवति । तेन सर्वत्र वातविकाराः प्रायो भवन्ति । पित्तश्लेष्मप्रकोपाच्च तद्विकारा विभवन्तीति युक्तमेव । अर्शसमिति अर्शोयुक्तं पुरुषं ॥ ८ ॥

अत ऊर्ध्वं जातस्योत्तरकालजानि व्याख्यास्यामः ९

गुरुमधुरशीताभिष्यन्दिविदाहिविरुद्धाजीर्णप्रमिताशनासात्म्यभोजनाद्गव्यमात्स्यवाराहमाहिषाजाविकपिशितभक्षणात्कृशशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरमोदकदधितिलगुडविकृतिसेवनाच्च माषयूषेक्षुरसपिण्याकपिण्डालुकशुष्कशाकशुक्तलशुनकिलाटपिण्डकबिसमृणालशालूककौञ्चादनकशेरुकशृङ्गाटकतरुणविरूढनवधान्याममूलकोपयोगाद्गुरुफलशाकरागहरितकमर्दकवसाशिरस्पदपर्युषितपूतिशीतसंकीर्णान्नाभ्यवहरणान्मन्दकातिक्रान्तमद्यपानाद्व्यापन्नगुरुसलिलपानादतिस्नेहपानादसंशोधनाद्बस्तिकर्मविभ्रमादव्यवायाद्दिवास्वप्नात्सुखशयनासनोपसेवनाच्चोपहताग्नेर्मलोपचयो भवत्यतिमात्रं, तथोत्कटुकविषमकठिनासनसेवनादुद्भ्रान्तयानोष्ट्रयानादतिव्यवायाद्बस्तिनेत्रासम्यक्प्रणिधानाद्गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चेलकोष्टतृणादिघर्षणात्प्रततातिनिर्वहणाद्वातमूत्रपुरीषवेगोदीरणात्समुदीर्णवेगविनिग्रहात्स्त्रीणां चामगर्भभ्रंशाद्गर्भोत्पीडनाद्बहुविषमप्रसूतिभिश्च प्रकुपितो वायुरपानस्तं मलमुपचितमधोगममासाद्य गुदवलिष्वाधत्ते, ततस्तास्वर्शांसि प्रादुर्भवन्ति १०

गुरुशीतेत्यादौ प्रमितमल्पं कृशं दुर्बलं परमान्नं पिण्याकं तिलकल्कः । किलाटो नष्टक्षीरपिण्डस्तक्रपिण्डस्तु तक्रजो घनभागः । बिसंस्थुलं मृणालं तत्र मृणालं तद्दण्डं क्रौंचादनं वेंचुलिकेति ख्यातः । तरूढं निष्कारकः । संकीर्णमांसभक्तादि मिश्रप्रकृतिकमन्नं संकीर्णं । अतिक्रान्तमद्यं व्यापन्नं मद्यम् । अव्यवायातिव्यवायविषमव्यवाया ज्ञेयाः । प्रततादितिनिर्वाहणात् दीर्घातिमात्रप्रवाहणात् ॥ ९ ॥ १० ॥

सर्षपमसूरमाषमुद्गमकुष्ठकयवकलायपिण्डिटिण्टिकेरखर्जूरकर्कन्धुकाकणन्तिकाबिम्बीबदरकरीरोदुम्बरजाम्बवगोस्तनाङ्गुष्ठकशेरुकशृङ्गाटकशृङ्गीदक्षशिखिशुकतुण्डजिह्वामुकुलकर्णिकासंस्थानानि सामान्याद्वातपित्तकफप्रबलानि ॥ ११ ॥

तेषामयं विशेषः—शुष्कम्लानकठिनपरुषरूक्षश्यावानि तीक्ष्णाग्राणि वक्राणि स्फुटितमुखानि विषमविसृतानि शूलाक्षेपतोदस्फुरणचिमिचिमासंहर्षणापरीतानि स्निग्धोष्णोपशमानि प्रवाहिकाध्मानशिश्नवृषणबस्तिवङ्क्षणहृद्ग्रहाङ्गमर्दहृदयद्रवप्रबलानि प्रततविबद्धवातमूत्रवर्चांसि कठिनवर्चांस्यूरुकटीपृष्ठत्रिकपार्श्वकुक्षिबस्तिशूलशिरोऽ-

भितापक्षवथूद्गारप्रतिश्यायकासोदावर्तायासशोषशोथमूर्च्छारोचकमुखवैरस्यतैमिर्यकण्डूनासाकर्णशङ्खशूलस्वरोपघातकराणि श्यावारुणपरुषनखनयनवदनत्वङ्मूत्रपुरीषस्य वातोल्वणान्यर्शांसीति विद्यात् ॥ १२ ॥

भवतश्चात्र ।

कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम् ॥ १३ ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसामिति ॥ १४ ॥

तत्र यानि मृदुशिथिलसुकुमाराणि स्पर्शासहानि रक्तपीतनीलकृष्णानि स्वेदोपक्लेदबहुलानि विस्रगन्धीनि तनुपीतरक्तस्राविणि दाहकण्डूशूलनिस्तोदपाकवन्ति शिशिरोपशयानि संभिन्नपीतहरितवर्चांसि पीतविस्रगन्धप्रचुरविण्मूत्राणि पिपासाज्वरतमकसंमोहभोजनद्वेषकराणि पीतनखनयनत्वङ्मूत्रपुरीषस्य पित्तोल्वणान्यर्शांसीति विद्यात् ॥ १५ ॥

भवतश्चात्र ।

कट्वम्ललवणक्षारव्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ १६ ॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ १७ ॥

टिण्टिकेटं कटीरफलं दक्षः कुक्कुटः । सामान्यातकफपित्तवातप्रबलानीत्यनेन सर्वैर्दोषैः अर्शसां नानाकृतिं दर्शयति । लिङ्गानि सामान्ये वातजादीनां किं विशेषनिश्चायकमित्याह— तेषामयं विशेष इति । अयमिति वक्ष्यमाणलिङ्गहेतुभेदरूपो विशेषो वातजादिव्यवच्छेदक इत्यर्थः । यद्यपि विशेषाभिधाने हेतुरेवाग्रेऽभिधातुं युज्यते तथापि संस्थानरूपलिङ्गाभिधानानुषङ्गात्प्रतिलोमव्याख्यानाद्वा लिङ्गमेवाग्रेऽभिधीयते, शुष्कम्लानेत्यादिना । तदनु कषायेत्यादिना हेतुं वक्ष्यति । एवं पित्तकफजयोरपि व्यतिक्रमेण हेतुलिङ्गाभिधानं ज्ञेयम् । प्रमिताशनमेव अल्पा अन्नाल्पाशनं आतपस्पर्शः यद्यप्युष्णस्तथापि रूक्षतया वातजनकः । उक्तं हि आतपः कटुको रूक्ष इत्यादि। मृद्वीत्यादिना पित्तजं प्राह कोमलानि शिथिलानि सुकुमाराणीति अकर्कशानि । रक्तपीतस्राविणीत्यत्र तत्र रक्तशब्देन लोहितशब्दो उच्यते । रुधिरवहानीति पदेन रक्तस्रुतिरेवोच्यते । प्रथमं विस्रगन्धीनीति रक्तविशेषणम् । द्वितीयं विस्रगन्धित्वं विण्मूत्रविशेषणम् । प्रथमं पीताभिधानं वर्चसः हरितपीतोपदेशार्थम् । द्वितीयं तु विस्रगन्धिना सह पीतवर्णतोपदेशार्थम्। तृतीयं तु पीतनखेत्यादौ केवलं पीतवर्णतोपदर्शनार्थम् । कट्वम्लेत्यादौ प्रथममुष्णपदं उष्णस्पर्शोपदेशार्थं द्वितीयमुष्णपदं उष्णवीर्योपदर्शनार्थम् । कट्वम्ललवणक्षार इति वा पाठः ॥ ९—१७ ॥

तत्र यानि प्रमाणवन्ति उपचितानि श्लक्ष्णानि स्पर्शसहानि श्वेतपाण्डुपिच्छिलानि स्तब्धानि गुरूणि स्तिमितानि सुप्तसुप्तानि स्थिरश्वयथूनि कण्डूबहुलानि प्रततपिञ्जरश्वेतरक्तपिच्छास्राविणि गुरुपिच्छिलश्वेतमूत्रपुरीषाणि रूक्षोष्णोपशयानि प्रवाहिकातिमात्रोत्थानवङ्क्षणानाहवन्ति परिकर्तिकाहृल्लासनिष्ठीविकाकासारोचकप्रतिश्यायगौरवच्छर्दिमूत्रकृच्छ्रशोषशोथपाण्डुरोगशीतज्वराश्मरीशर्कराहृदयेन्द्रियास्योपलेपास्यमाधुर्यप्रमेहकराणि दीर्घकालानुपशयानि अतिमात्रमग्निमार्दवक्लैब्यकराणि आमविकारप्रबलानि गुरूणि च शुक्लनखनयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्वणानि अर्शांसीति विद्यात् ॥ १७ ॥

तत्र यानि इत्यादिना कफजमाह । प्रमाणवन्तीति महाप्रमाणानि । सुप्तसुप्तानीत्यर्थं निश्चेतनानि । दीर्घकालानुपशयानीति दीर्घकालानुबन्धीनि ॥ १७ ॥

भवन्ति चात्र ।

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामदिवास्वप्नशय्यासनसुखे रतिः ॥ १८ ॥
प्राग्वातसेवाशीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ १९ ॥
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्वणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ २० ॥

हेतुलक्षणेत्यादौ उल्वणपदेन द्वन्द्वजे तृतीयोऽपि दोषः जनकोऽस्त्येव । परं सोल्वणो न भवतीति दर्शयति । सर्वो हेतुरिति यथोक्तसर्वहेतुः, सहजैः लक्षणैः सह सर्वो हेतुस्त्रिदोषाणां भवति । तेन त्रिदोषे सर्वहेतुत्वात् सहजानि लक्षणानि भवन्तीत्यर्थः ॥ १८—२० ॥

विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता २१
ग्रहणीदोषपाण्ड्वर्तिराशङ्का चोदरस्य च ।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ २२ ॥
अर्शांसि खलु जायन्ते नासन्निपतितैस्त्रिभिः ।
दोषैर्दोषविशेषात्तु विशेषः कल्प्यतेऽर्शसाम् ॥२३॥

विष्टम्भोऽप्रचालत्वं, आटोपो गुडगुडो शब्दः । अर्शसां त्रिदोषजन्यत्वेऽपि एकदोषजत्वादिव्यपदेशमाह । अर्शांसीत्यादि यद्यपि सन्निपतितैरित्युक्ते त्रयाणां मेलको लभ्यते । तथापि त्रिभिरिति पदं त्रयाणामप्यत्र अनुबन्ध्यत्वस्य तथाच हीनपादस्योपदर्शनार्थम् । दोषविशेषादिति उल्वणरूपादिवि-

शेषात्। विशेष इति वातजोऽयं पित्तजोऽयं इत्यादिको विशेषः ॥ २१—२३ ॥

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम्।
सर्वं एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥ २४ ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ २५ ॥

पंचात्मेति प्राणोपानव्यानोदानसमानरूपः ॥ २४ ॥ २५ ॥

हस्ते पादे गुदे नाभ्यां मुखे वृषणयोस्तथा।
शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ २७ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरा वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयोऽन्यतोऽन्यथा२९
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥३०॥
वाह्यायां तु वलौ जातान्येकदोषोल्वणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ३१
तेषां प्रशमने यत्नमाशु कुर्याद्विचक्षणः।
तान्याशु हि गुदं वद्ध्वा कुर्युर्वद्धगुदोदरम् ॥ ३२ ॥
तत्राहुरेके शस्त्रेण कर्तनं हितमर्शसाम्।
दाहं क्षारेण चाप्येके दाहमेके तथाग्निना ॥ ३३ ॥
अस्त्येतद्भूरितन्त्रेण धीमता दृष्टकर्मणा।
क्रियते त्रिविधं कर्म भ्रंशस्तस्य सुदारुणः ॥ ३४ ॥
पुंस्त्वोपघातः श्वयथुर्गुदे वेगविनिग्रहः।
आध्मानं दारुणं शूलं व्यथा रक्तातिवर्तनम् ॥ ३५॥
पुनर्विरोहो रूढानां क्लेदो भ्रंशो गुदस्य च।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ॥३६॥
यत्तु कर्म सुखोपायमल्पभ्रंशमदारुणम्।
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ॥ ३७ ॥
वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः।
प्रस्रावीणि तथार्द्राणि रक्तपित्तोल्वणानि च ॥३८॥
तत्र शुष्कार्शसां पूर्वं प्रवक्ष्यामि चिकित्सितम्।
स्तब्धानि स्वेदयेत्पूर्वं शोफशूलान्वितानि च ॥३९॥
चित्रकक्षारबिल्वानां तैलेनाभ्यज्य बुद्धिमान्।
यवमाषपुलाकानां कुलत्थानां च पोट्टलैः ॥ ४० ॥
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैरपि।
वचाशताह्वापिण्डैर्वा सुखोष्णैः स्नेहसंयुतैः ॥४१॥
शक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा।
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः॥४२॥
रास्नापिण्डैः सुखोष्णैर्वा सस्नेहैर्हपुषैरपि।
इष्टकस्य खराह्वायाः शार्ङ्गेष्टनकस्य च ॥ ४३ ॥

अभ्यज्य कुष्ठतैलेन स्वेदयेत्पोट्टलीकृतैः।
वृषार्करेण्डबिल्वानां पत्रोत्क्वाथैश्च सेचयेत् ॥ ४४॥
मूलकत्रिफलार्काणां वेणूनां वरुणस्य च।
अग्निमन्थस्य शिग्रोश्च पत्राण्यश्मन्तकस्य च ॥४५॥
जलेनोत्क्वाथ्य शूलार्तं स्वभ्यक्तमवगाहयेत्।
कौलोत्क्वाथेऽथवा कोष्णे सौवीरकतुषोदके ॥४६॥
बिल्वोत्क्वाथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके।
गोमूत्रे वा सुखोष्णे तं शूलार्तमुपवेशयेत् ॥ ४७ ॥
कृष्णसर्पवराहोष्ट्रजतुकावृषदंशजाम्।
वसामभ्यञ्जनं कुर्याद्धूपनं चार्शसां हितम् ॥ ४८ ॥
नृकेशाः सर्पनिर्मोको वृषदंशस्य चर्म च।
अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम् ॥ ४९ ॥
तुम्बुरूणि विडङ्गानि देवदार्वक्षता घृतम्।
बृहती चाश्वगन्धा च पिप्पल्यः सुरसा घृतम् ५०
वराहवृषविट् चैव धूपनं शक्तवो घृतम्।
कुञ्जरस्य पुरीषं तु घृतं सर्जरसो रसः ॥ ५१ ॥
हरिद्राचूर्णसंयुक्तं सुधा क्षीरं प्रलेपनम्।
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम् ॥५२॥
शिरीषबीजं कुष्ठं च पिप्पल्यः सैन्धवं गुडः।
अर्कक्षीरं सुधाक्षीरं त्रिफला च प्रलेपनम् ॥ ५३ ॥
पिप्पल्यश्चित्रकाः श्यामाः किण्वं मदनतण्डुलाः।
प्रलेपः कुक्कुटशकृद्धरिद्रा गुडसंयुतः ॥ ५४ ॥
निकुम्भः साम्रृतासङ्कः पारावतशकृद्गुडः।
प्रलेपः स्याद्गजास्थीनि निम्बो भल्लातकानि च ५५
प्रलेपः स्यादलर्केण वासन्तकवसा युतः।
शल्लश्वयथुहृद्युक्तश्चुल्कीवसयाथवा ॥ ५६ ॥
आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः।
करञ्जो वस्तमूत्रं च लेपनं श्रेष्ठमर्शसाम् ॥ ५७ ॥
अभ्यङ्गाद्याः प्रदेहान्ता य एते परिकीर्तिताः।
स्तम्भश्वयथुकण्डूर्तिशमनास्तेऽर्शसां मताः ॥ ५८॥
प्रदेहान्तैरुपक्रान्तान्यर्शांसि प्रस्रवन्ति हि।
संचितं दुष्टरुधिरं ततः संपद्यते सुखम् ॥ ५९ ॥
शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति।
रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ॥ ६० ॥

हस्तेत्यादिना असाध्यविभागमाह—अंगस्य रुगिति सर्वांगरुक् शेषादायुषमिति आयुषः शेषेत्यर्थः । समन्वित इति भावे क्तः । तेन चतुःपादसमर्थे सतीत्यर्थः । शस्त्रेत्यादिना चिकित्सामाह—कर्तनं छेदनं भूरि तन्त्राणि अधीतानि येन स भूरितन्त्रः । अयं प्रकरणार्थः । शिक्षितेनैव शस्त्रकर्मविधानतः कर्तव्यः । विरोह इति रूढाणां रूढव्रणानां वातश्लेष्मोल्वणानीत्यत्र यद्यपि कफजे स्राव उक्तः तथापि पिच्छाद्यनुबन्धः तेन शुष्कार्शोग्रहणम् । शुष्कार्द्रकारणे नैलकेऽपि भवति । चित्रकक्षारबिल्वानां तैलेनेति चित्रकादिसिद्धेन पु-

लाकं तुच्छधान्यम् । काण्ड्यगन्धिकैरिति शोभाञ्जनकैः । रात्राअजमोदाकुष्ठसिद्धतैलेन, किण्वं सुराबीजं, जतुका चर्मजटिका, वृषदंशो बिडालः अक्षता इति खण्डिता यवाः । घृतपादान्ताश्चत्वारो धूपाः । सर्जरसाभ्यां च पञ्चमो धूपः । मदनफलशष्पं निकुम्भी दन्ती अमृता गुडूची, अलं हरितालं वार्त्तकवसा उष्ट्रवसा, कटुकालाबुस्तिक्तकोऽलाबु ॥२६-६०॥

जलौकाभिस्तथा शस्त्रैः सूचीभिर्वा पुनःपुनः ।
आवर्तमानं रुधिरं रक्तार्शोभ्यः प्रवाहयेत् ॥ ६१ ॥
गुदश्वयथुशूलार्तं मन्दाग्निं पाययेत्तु तम् ।
त्र्यूषणं पिप्पलीमूलं पाठां हिङ्गु सचित्रकम् ॥६२॥
सौवर्चलं पुष्कराख्यमजाजीं बिल्वपेशिकाम् ।
बिडं यमानीं हपुषां विडङ्गं सैन्धवं वचाम् ॥ ६३ ॥
तिन्तिडीकं च मण्डेन मद्येनोष्णोदकेन च ।
तथार्शोग्रहणीदोषशूलानाहाद्विमुच्यते ॥ ६४ ॥
कुर्याद्वा पाचनं तस्य यदुक्तं ह्यातिसारिके ।
सगुडामभयां वाथ प्राशयेत्पौर्वभक्तिकीम् ॥ ६५ ॥
पाययेत त्रिवृच्चूर्णं त्रिफलाया रसेन वा ।
हृते गुदाश्रये दोषे गच्छन्त्यर्शांसि संक्षयम् ॥ ६६ ॥
गोमूत्राध्युषितां दद्यात्सगुडां वा हरीतकीम् ।
हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ॥ ६७ ॥
सनागरं चित्रकं वा शीधुयुक्तं प्रयोजयेत् ।
चव्यं वा शीधुसंयुक्तमजाजीदीप्यकं पिबेत् ॥६८॥
सुरां वा हपुषां पाठां युक्तां सौवर्चलायुताम् ।
दधित्थबिल्वसंयुक्तं तथा वा चव्यचित्रकौ ॥ ६९ ॥
भल्लातकयुतं वाथ प्रदद्यात्तत्र तर्पणम् ।
बिल्वनागरयुक्तं वा यमान्या चित्रकेण वा ॥ ७० ॥
चित्रकं हपुषां हिङ्गु दद्याद्वा तक्रसंयुतम् ।
पञ्चकोलयुतं वापि तक्रमस्मै प्रदापयेत् ॥ ७१ ॥
हपुषां कुञ्चिकां धान्यमजाजीं कारवीं शटीम् ।
पिप्पलीपिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥७२॥
यमानीं चाजमोदां च चूर्णितं तक्रसंयुतम् ।
मन्दाम्लकटुकं विद्वान् स्थापयेद्घृतभाजने ॥ ७३ ॥
व्यक्ताम्लकटुकं ज्ञातं तक्रारिष्टं मुखप्रियम् ।
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषितस्त्रिषु ॥ ७४ ॥
दीपनं रोचनं वर्ण्यं कफवातानुलोमनम् ।
गुदश्वयथुकण्ड्वार्तिनाशनं बलवर्धनम् ॥ ७५ ॥

इति तक्रारिष्टः ।

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ७६ ॥
वातश्लेष्मार्शसां तक्रात्परं नास्तीह भेषजम् ।
तत्प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ॥ ७७ ॥
सप्ताहं वा दशाहं वा पक्षं मासमथापि वा ।
बलकालविशेषज्ञो भिषक्तक्रं प्रयोजयेत् ॥ ७८ ॥
अत्यर्थं मृदुकायाग्नेस्तक्रमेवावचारयेत् ।
सायं वा लाजशक्तूनां दद्यात्तक्रावलेहिकाम् ॥७९॥
जीर्णे तक्रे प्रदद्याद्वा तक्रं पेयां ससैन्धवाम् ॥८०॥
तक्रानुपानं सस्नेहं तक्रौदनमतः परम् ।
यूषैर्मांसरसैर्वापि भोजयेत्तक्रसंयुतैः ॥ ८१ ॥
कालक्रमज्ञः सहसा न च तक्रं निवारयेत् ।
तक्रप्रयोगान्मासान्ते क्रमेणोपशमो मतः ॥ ८२ ॥
अपकर्षो यथोत्कर्षो न त्वन्नादपकृष्यते ।
शक्त्यागमनरक्षार्थं दार्ढ्यार्थमनलस्य च ॥ ८३ ॥

जलौकाभिरित्यादौ प्रवर्तमानं रुधिरं प्रवाहयेदिति योज्यम् । बिल्वपेशिका बिल्वमध्यं । गोमूत्राध्युषितामिति रात्रौ गोमूत्रसिद्धां । भल्लातकयुतमित्यत्र भल्लातकचूर्णस्य शक्त्यपेक्षया दशमो भागः । उक्तंहि चूर्णं तर्पणभागैर्नवभिः संयोजनीयं, अन्ये तु तर्पणभल्लातकचूर्णयोः समानयोः स्तोकस्य द्रव्यस्य प्रयोगमाहुः । तर्पणं तु हपुषेत्याद्युक्तम् । तक्रारिष्टे तु ग्रहणीचिकित्सायां "यमान्यामलकं पथ्या मरीचं त्रिफलांशिकम् । लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् । तक्रकं सयुतं जातं तक्रारिष्टं पिबेन्नरः" । इत्युक्ततक्रानुसारेण, इहापि तक्रचूर्णसमानव्यवस्था हपुषेति चूर्णेन व्यक्ताम्लकटुकं तक्रं भवति त्रिषु कालेष्विति भोजनाद्यन्तेषु सस्नेहं तक्रं वातकफे कफे रूक्षम् । पूर्वाह्णे तक्रमेव केवलं पेयम् । मृद्वग्निनापि तक्रमेव सेव्यम् । एतत् अत्यर्थंमृदुकायाग्नेस्तक्रमेवावचारयेत् । इत्यनेनोक्तम् । किंचित्प्रवृद्धेऽग्नौ प्रातस्तक्रमेव पेयम् । सायं तु लाजसक्तुना पेयम् । ततस्तु क्रमेणाग्नौ वृद्धे तक्रपेया तक्रौदनं तक्रसंस्कृतयूषादिभोजनानि सायं देयानि । प्रातस्तु तक्रमेव, सप्ताहादितक्रकालो ज्ञेयः । अत्र जतूकर्णः प्रातस्तक्रप्रयोगः क्रमशोत्कर्षापकर्षौ जीर्णे च सैन्धवान्विततक्रौदनम् वा अतिमन्दाग्नेस्तक्रमेवेति आमासान्तात् । उत्कर्षापकर्षौ तु येन क्रमेण तक्रं वृद्धं तेनैव मात्राक्रमेण तक्रमपकृष्यत इति तक्रप्रयोगह्रासे सति अर्थसमुदायात् ह्रासो न कर्तव्यः । योऽन्नस्तक्रस्यापकृष्टः सो अर्थान्तरेण पूरणीय इत्यर्थः ॥ ६१—८३ ॥

बलोपचयवर्णार्थमेष निर्दिश्यते क्रमः ।
रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ॥ ८४ ॥
तक्रं दोषाग्निबलवित्त्रिविधं तत्प्रयोजयेत् ।
हतानि न विरोहन्ति तक्रेण गुदजानि तु ॥ ८५ ॥

रूक्षमित्यादिनोक्तं त्रिविधं तक्रं कफपित्तवातेषु दोषेषु । मन्दतममन्दतरमन्देषु अग्निषु बलेषु च अधममध्यमोत्तमेषु यथासंख्यं ज्ञेयम् ॥ ८४ ॥ ८५ ॥

भूमावपि निषिक्तं तद्दहेत्तक्रं तृणोलुपम् ।
किं पुनर्दीप्तकायाग्नेः शुष्काण्यर्शांसि देहिनः ॥८६॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ।

तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ॥ ८७ ॥
वातश्लेष्मविकाराणां शतं चापि निवर्तते ।
नास्ति तक्रात्परं किंचिदौषधं कफवातजे ॥ ८८ ॥

भूमावित्यादि केचित्पठन्ति । शतमिति विंशतिः श्लेष्मविकारा अशीतिर्वातविकारैर्मिलित्वा विकाराणां शतम् ॥ ८६—८८ ॥

पिप्पलीपिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ।
शृङ्गवेरमजाजीं च कारवीं धान्यतुम्बुरुम् ॥ ८९ ॥
बिल्वं कर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत् ।
फलाम्लां यमकस्नेहां तां दद्याद्गुदजापहाम् ॥९०॥
एतैश्चैव खडं कुर्यादेतैश्चैव पचेज्जलम् ।
एतैश्चैव घृतं साध्यमर्शसां विनिवृत्तये ॥ ९१ ॥
शटीपलाशसिद्धां वा पिप्पल्या नागरेण वा ।
दद्याद्यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ॥ ९२ ॥
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा ।
दधित्थबिल्वयूषं वा सकुलत्थमकुष्ठकम् ॥ ९३ ॥
छागलं वा रसं दद्याद्यूषैरेतैर्विमिश्रितम् ।
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्युतम् ९४
रक्तशालिर्महाशालिः कलमो जाङ्गलः सितः ।
शारदः षष्टिकश्चैव स्यादन्नविधिरर्शसाम् ॥ ९५ ॥
इत्युक्तो भिन्नशकृतामर्शसां च विधिक्रमः ।
येऽत्यर्थं गाढशकृतस्तेषां वक्ष्यामि भेषजम् ॥ ९६ ॥
सस्नेहैः शक्तुभिर्युक्तां प्रसन्नां लवणीकृताम् ।
दद्यान्मत्स्यण्डिकां पूर्वं भक्षयित्वा सनागराम् ९७
गुडं सनागरं पाठां फलाम्लं पाययेच्च तम् ।
गुडं घृतं यवक्षारसंयुक्तं वापि प्रयोजयेत् ॥ ९८ ॥

बिल्वं बालबिल्वं फलैर्दाडिमादिभिः । दधित्थं कपित्थं ग्राहीत्युक्तम् । रक्तशाल्यादयोऽनुपानव्याहताः ॥ ८९—९८ ॥

यमानीं नागरं पाठां दाडिमस्य रसं गुडम् ।
सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनम् ॥ ९९ ॥
दुःस्पर्शकेन बिल्वेन यमान्या नागरेण वा ।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥१००॥
प्रागुक्तान् यमके भृष्टान् सक्तुभिश्चावचूर्णितान् ।
करञ्जपल्लवान् दद्याद्वातवर्चोऽनुलोमनान् ॥ १०१ ॥
मदिरां वा सलवणां शीधुं सौवीरकं तथा ।
गुडनागरसंयुक्तं पिबेद्वा पौर्वभक्तिकम् ॥ १०२ ॥

यमानीनागरमित्यादौ यमान्यादीनि समानि तक्रेण पेयानि । लवणं तावद्यावल्लवणरसता भवति ॥ ९९—१०२ ॥

पीप्पलीनागरक्षारकारवीधान्यजीरकैः ।
फाणितेन च संयोज्य फलाम्लं दापयेद्घृतम् ॥१०३॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
शृङ्गवेरं यवक्षारं तैः सिद्धं वा पिबेद्घृतम् ॥ १०४ ॥
चव्यचित्रकसिद्धं वा गुडक्षारसमन्वितम् ।
पिप्पलीमूलसिद्धं वा सगुडक्षारनागरम् ॥ १०५ ॥

पिप्पलीनागरेत्यादौ यवक्षमेव केचिद्घृतमिच्छन्ति । गुडक्षारसमन्वितमित्यत्र घृतसिद्धे गुडादीनां प्रक्षेप्यत्वं ज्ञेयम् ॥ १०३—१०५ ॥

पिप्पलीपिप्पलीमूलदधिदाडिमधान्यकैः ।
सिद्धं सर्पिर्विधातव्यं वातवर्चोविबन्धनुत् ॥१०६॥
चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ।
यमानीं पिप्पलीमूलमुभे च विडसैन्धवे ॥ १०७ ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥ १०८ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवङ्क्षणशूलं च घृतमेतद्व्यपोहति ॥ १०९ ॥
नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वपाठायमानिकाः ११०
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचयेत् ।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥ १११ ॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ॥ ११२ ॥
पिप्पलीं नागरं पाठां श्वदंष्ट्रां च पृथक् पृथक् ।
भागांस्त्रिपलिकान्कृत्वा कषायमुपकल्पयेत् ॥११३॥

पिप्पलीपिप्पलीमूलेत्यादौ दधिद्रवं शेषाणां कल्कत्वात् । नागरमित्यादिके घृते चांगेरीस्वरसस्यापि चातुर्गुण्येन, दध्ना चेति चकाराचातुर्गुण्यम् । पिप्पलीनागरमित्यादौ क्वाथस्यानुक्तमानत्वात्स्नेहसमत्वम् । तेन द्वादशपलेऽपि क्वाथ्यद्रव्यप्रस्थं पानीयं दत्वा चत्वारिंशत्पलानि स्थाप्यानि ॥ १०६—११३ ॥

कण्डीरं पिप्पलीमूलं व्योषचव्यश्च चित्रकम् ।
पिष्ट्वा कषाये विनयेत्पूते द्विपलिकं भिषक् ॥११४॥
पलानि सर्पिषस्तस्मिंश्चत्वारिंशत्प्रदापयेत् ।
चाङ्गेरीस्वरसं तुल्यं सर्पिषा दधि षड्गुणम् ११५
मृद्वग्निना ततः साध्यं सिद्धं सर्पिर्विधापयेत् ।
तदाहारे विधातव्यं पाने प्रायोगिके विधौ ॥११६॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥ ११७ ॥
कासहिक्कारुचिश्वाससूदनं पार्श्वशूलनुत् ।
बलपुष्टिकरं वर्ण्यमग्निसंदीपनं परम् ॥ ११८ ॥
सगुडां पिप्पलीयुक्तां घृतभृष्टां हरीतकीम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥११९॥
विज्ञातकफपित्तानामानुलोम्येन निर्मले ।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्धते ॥१२०॥
बर्हितित्तिरिलावानां रसानम्लान्सुसंस्कृतान् ।

दक्षाणां वर्तकानां च दद्याद्विट्वातसंग्रहे ॥ १२१ ॥
त्रिवृद्दन्तीपलाशानां चाङ्गेर्याश्चित्रकस्य च ।
सुभृष्टं यमके दद्याच्छाकं दधिसमन्वितम् ॥ १२२ ॥
उपोदिकां तण्डुलीयं वीरां वास्तुकपल्लवान् ।
सुवर्चलां सलोणीकां यवशाकमवल्गुजम् ॥ १२३ ॥
काकमाचीं रुहापत्रं महापत्रं तथाम्लिकाम् ।
जीवन्तीशटिशाकं च शाकं गृञ्जनकस्य ॥ १२४ ॥
दधिदाडिमसिद्धानि भृष्टानि यमकेऽपि च ।
धान्यनागरयुक्तानि शाकान्येतानि दापयेत् ॥ १२५ ॥

कण्टीरमित्यादिनानुलोमिकानि शाकान्याह—त्रिवृत्पर्णी नाडीपर्णी जालन्धरं शाकं सुवर्चला सूर्यावर्त्ता महापत्रः श्योनाकः । रोहापत्रमुदग्रशाकं । दधिदाडिमादिसंस्कारं ॥ ११४—१२५ ॥

गोधाश्वाविल्सलोपाकमार्जारोष्ट्रगवामपि ।
कूर्मशल्लकयोश्चैव साधयेच्छाकवद्रसान् ॥ १२६ ॥
रक्तशाल्योदनं दद्याद्रसैस्तैर्वातशान्तये ।
धात्वा वातोल्वणं रूक्षं दीप्ताग्निं गुदजातुरम् १२७
मदिरां शार्करं जातं शीधुं तक्रं तुषोदकम् ।
अरिष्टं दधिमण्डं वा शृतं वा शिशिरं जलम् १२८

शार्करमिति शर्कराकृतम् अरिष्टं वक्ष्यमाणम् ॥ १२६–१२८ ॥

कण्टकार्या शृतं वापि शृतं नागरधान्यकैः ।
अनुपानं भिषग्दद्याद्वातवर्चोऽनुलोमनम् ॥ १२९ ॥
उदावर्तपरीता ये ये चात्यर्थं विरूक्षिताः ।
विलोमवाताः शूलार्तास्तेष्विष्टमनुवासनम् ॥ १३० ॥
पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम् ।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥ १३१ ॥
पिष्ट्वा तैलं विपक्तव्यं पयसा द्विगुणेन च ।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥ १३२ ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥ १३३ ॥
पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम् ।
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ॥ १३४ ॥

पिप्पल्याद्ये तैले केचित् तन्त्रान्तरदर्शनात्तोयमपि चतुर्गुणं वदन्ति । तच्च तन्त्रान्तरोक्तयोगान्तरमेव पश्यामः ॥ १२९—१३४ ॥

आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः ।
दार्वन्तैः स्तब्धशूलानि गुदजानि प्रलेपयेत् ॥ १३५ ॥

आनुवासनिकैरिति अनुवासनतैलसाधनार्थं युक्तैः पिप्पल्यादिभिः । पञ्चविरेचनाशताश्रितीयोक्तानुवासनोपदर्शककषायग्रहणप्रतिषेधार्थं दार्वन्तैरिति विशेषणभूतानि तानि दार्वन्तेनोक्तान्येव गृह्यन्ते ॥ १३५ ॥

दिग्धा तैः प्रस्रवन्त्याशु श्लेष्मपिच्छासशोणिताः ।
कण्डूः स्तम्भः सरुक् शोफः स्रुतानां विनिवर्तते ॥
निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम् ।
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ॥ १३७ ॥

दाशमूलकमिति दशमूलकषाययुतं फलादिभिरिति मदनफलादिभिर्वमनस्थापनयोगिकैः ॥ १३६ ॥ १३७ ॥

हरीतकीनां प्रस्थार्धं प्रस्थमामलकस्य च ।
स्यात्कपित्थाद्दशपलं ततोऽर्धा चेन्द्रवारुणी १३८
विडङ्गं पिप्पली लोध्रं मरिचं सैलवालुकम् ।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ १३९ ॥
द्रोणशेषे रसे तस्मिन्पूते शीते समावपेत् ।
गुडस्य द्विशतं तिष्ठेत्तत्पक्षं घृतभाजने ॥ १४० ॥
पक्षादूर्ध्वं भवेत्पेया ततो मात्रा यथाबलम् ।
अस्याभ्यासादरिष्टस्य नश्यन्ति गुदजामपि ॥ १४१ ॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः ।
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्धनः ॥ १४२ ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ।
कृमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत् ॥ १४३ ॥

इत्यभयारिष्टः ।

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान्पलांशानापोथ्य जलद्रोणे विपाचयेत् १४४
त्रिफलाया दलानां च प्रक्षिप्य त्रिपलं ततः ।
रसे चतुर्थशेषे तु पूते शीते समावपेत् ॥ १४५ ॥
तुलां गुडस्य तत्तिष्ठेन्मासार्धं घृतभाजने ।
तन्मात्रया पिबेन्नित्यमर्शोभ्योऽपि प्रमुच्यते ॥ १४६ ॥
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनं चारुचिघ्नं च दन्त्यरिष्टमिदं विदुः ॥ १४७ ॥

इति दन्त्यरिष्टम् ।

हरीतकीफलप्रस्थं प्रस्थमामलकस्य च ।
विशालाया दधित्थस्य पाठाचित्रकमूलयोः ॥ १४८ ॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम् ।
पादावशेषे पूते च रसे तस्मिन्प्रदापयेत् ॥ १४९ ॥
गुडस्यैकां तुलां वैद्यः संस्थाप्यो घृतभाजने ।
पक्षस्थितं पिबेदेनं ग्रहण्यर्शोविकारवान् ॥ १५० ॥
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम् ।
वर्चोमूत्रानिलकृतान्विबन्धानग्निमार्दवम् ॥ १५१ ॥
कासं गुल्ममुदावर्तं फलारिष्टो व्यपोहति ।
अग्निसन्दीपनो ह्येष कृष्णात्रेयेण भाषितः ॥ १५२ ॥

इति फलारिष्टम् ।

दुरालभायाः प्रस्थः स्याच्चित्रकस्य वृषस्य च ।
पथ्यामलकयोश्चैव पाठाया नागरस्य च ॥ १५३ ॥
दन्त्याश्च द्विपलान्भागाञ्जलद्रोणे विपाचयेत् ।

पादावशेषे पूते च सुशीते शर्कराशतम् ॥ १५४ ॥
प्रक्षिप्य स्थापयेत् कुम्भे मासार्धं घृतभाजने ।
प्रलिप्ते पिप्पलीचव्यप्रियङ्गुक्षौद्रसर्पिषा ॥ १५५ ॥
तस्य मात्रां पिबेत्काले शार्करस्य यथाबलम् ।
अर्शांसि ग्रहणीदोषमुदावर्तमरोचकम् ॥ १५६ ॥
शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्दवम् ।
हृद्रोगं पाण्डुरोगं च सर्वमेतेन साधयेत् ॥ १५७ ॥

इति द्वितीयफलारिष्टम् ।

नवस्यामलकस्यैकां कुर्याज्जर्जरितां तुलाम् ।
कुडवांशं विडङ्गानि पिप्पलीमरिचानि च ॥ १५८ ॥
पाठां मूलं च पिप्पल्याः क्रमुकं चव्यचित्रकौ ।
मञ्जिष्ठा नालुकं लोध्रं पलिकानुपकल्पयेत् ॥१५९॥
कुष्ठं दारुहरिद्रां च सुराह्वं शारिवाद्वयम् ।
इन्द्राह्वं भद्रमुस्तं च कुर्यादर्धपलोन्मितम् ॥ १६० ॥
चत्वारि नागपुष्पस्य पलान्यसिनवस्य च ।
द्रोणाभ्यामम्भसो द्वाभ्यां साधयित्वावतारयेत् ॥
पादावशेषे पूते च शीते तस्मिन्समावपेत् ।
मृद्वीकाद्व्याढकरसं शीतं निर्यूहसंमितम् ॥ १६२ ॥
शर्करायाश्च भिन्नाया दद्याद्द्विगुणितां तुलाम् ।
कुसुमस्य रसस्यैकमर्धप्रस्थं नवस्य च ॥ १६३ ॥
त्वगेलाप्लवपत्राम्बुसेव्यक्रमुककेशरान् ।
चूर्णयित्वा तु मतिमान्कार्षिकानत्र दापयेत् १६४
तत्सर्वं स्थापयेत्पक्षं शुचौ च घृतभाजने ।
प्रलिप्ते सर्पिषा किंचिच्छर्करागुरुधूपिते ॥ १६५ ॥
पक्षादूर्ध्वमरिष्टोऽयं कनको नाम विश्रुतः ।
पेयः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचनः ॥ १६६ ॥
अर्शांसि ग्रहणीदोषमानाहमुदरं ज्वरम् ।
हृद्रोगं पाण्डुतां शोथं गुल्मवर्चोविनिग्रहम् ॥१६७॥
कासं श्लेष्मामयांश्चोग्रान् सर्वानेवापकर्षति ।
वलीपलितखालित्यं दोषजं च व्यपोहति ॥ १६८ ॥

इति कनकारिष्टः ।

पत्रभङ्गोदकैः शौचं कुर्यादुष्णेन चाम्भसा ।
इति शुष्कार्शसां सिद्धमुक्तमेतच्चिकित्सितम् १६९

हरीतक्यादिना अभयारिष्टादयः पञ्चारिष्टा उच्यन्ते । त्रिफलायामिति ता एव या हरीतकीत्यादौ फलशब्देन निरस्थिहरीतकीं ग्राहयति किंतु जतूकर्णदर्शनादत्रार्धमुच्यते । तेन हरीतकीप्रस्थार्धं अयं हि योगो द्विगुणमानेन यथा प्रस्थः क्वाथो द्विगुणामलकः कपित्थपाठेन्द्राः सहचित्रकौ गुडस्य च शतद्वयम् । तत्र पठितः क्रमुकं पूगः पट्टिकालोध्रं वा । सुराह्वा गोरक्षकर्कटिका । अत्र यद्यपि कारव्यामलकादिद्रव्यद्व्याढकमानं भवति तत्र च सामान्यपरिभाषयैव द्विद्रोणजलदानं अर्धद्रोणावस्थानं च लभ्यते । तथापीष्टार्थं जलकाथाभिधानं ज्ञेयम् मृद्वीका द्व्याढकमिति वचनेन द्रोणद्वयं जलं दत्त्वा क्वाथसमं दर्शयति अन्ये तु द्राक्षास्वरसतुल्यद्रवा इति व्याख्यानं कृतवन्तः । उक्तंहि जतूकर्णे धात्रीतुला कौडविकं पिप्पली मरिचं कृमिघ्नं अजपुष्पं द्विनिशा सुरदारु घनकुष्ठं पलिकं । पलिकं पाठा तिल्वकग्रन्थिकवालुकक्रमुकं बिल्वं सामीकं पाक्यद्राक्षाद्वयं च पृथक्पृथक् क्वाथौ विमिश्रितौ द्वौ सितातुले द्वे मधु द्विकुडवं चेत्यादि अत्रापि च सामान्यपरिभाषा चकारोक्तमानसमाना एव भिन्नाया इति चूर्णीकृतायाः कुसुमस्वरसो मधु ॥ १३८—१६९ ॥

चिकित्सितमिदं सिद्धं स्राविणां शृण्वतः परम् ।
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च॥१७०॥

संप्रति अर्शसां वातानुबन्धं लक्षणं च दर्शयित्वा भिन्नां चिकित्सामाह ॥ १७० ॥

विड्श्यावं कठिनं रूक्षं चाधो वायुर्न वर्तते ।
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ॥१७१॥
कट्यूरुगुदशूलं च दौर्बल्यं यदि वाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि विरूक्षणम् ॥ १७२ ॥
शिथिलं श्वेतपीतं च विट्स्निग्धं गुरुशीतलम् ।
यदर्शसां घनं चासृक् तन्तुमत् पाण्डु पिच्छिलम् ।
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥१७४॥
स्निग्धशीतं हितं वाते रूक्षशीतं कफानुगे ।
चिकित्सितमिदं तस्मात् संप्रधार्य प्रयोजयेत् १७५
पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत् ।
स्राविणां चाप्युपेक्षेत लङ्घनैर्वा समाचरेत् ॥१७६॥
प्रवृत्तमादावर्शोभ्यो यो निगृह्णात्यबुद्धिमान् ।
शोणितं दोषमलिनं तद्रोगाञ्जनयेद्बहून् ॥ १७७ ॥
रक्तपित्तं ज्वरं तृष्णामग्निनाशमरोचकम् ।
कामलां श्वयथुं शूलं गुदवङ्क्षणसंश्रयम् ॥ १७८ ॥
कण्ड्वरुःकोठपिडकाः कुष्ठं पाण्ड्वामयं गदम् ।
वातमूत्रपुरीषाणां विबन्धं शिरसो रुजम् ॥१७९॥
स्तैमित्यं गुरुगात्रत्वं तथान्यात्रक्तजान्गदान् ।
तस्मात्स्रुते दुष्टरक्ते रक्तसंग्रहणं मतम् ॥ १८० ॥
हेतुलक्षणकालज्ञो बलशोणितवर्णवित् ।
कालं तावदुपेक्षेत यावन्नात्ययमाप्नुयात् ॥ १८१ ॥
अग्निसन्दीपनार्थं च रक्तसंग्रहणाय च ।
दोषाणां पाचनार्थं च परं तिक्तैरुपाचरेत् ॥ १८२ ॥
यत्तु प्रक्षीणदोषस्य रक्तं वातोल्बणस्य च ।
वर्तते स्नेहसाध्यं तत्पानाभ्यङ्गानुवासनैः ॥ १८३ ॥
यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते ।
स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम् ॥१८४॥

स्राविणामित्यादि । अत्र च तन्त्रे पित्तजस्यैव रक्तजाम्य-

र्शांसि दुष्टस्रावयुक्तानि ज्ञेयानीति । विदग्ध्यावमिति निर्देशात्, विदशब्दो नपुंसकलिङ्गोऽप्यस्तीत्युन्नीयते । वलिनमित्यत्यर्थ-दुष्टम् । हेत्वादिविशेषणेन स्रावस्योपेक्षा कार्येति सूचयति । वर्तेते इति प्रवर्तते चेत् वातेऽनुवले लेहनं कफेऽनुवले तु उपेक्षणं वा लङ्घनादिकार्यमिति वा भावः ॥ १७१—१८४ ॥

कुटजत्वङ्निर्यूहः सनागरः स्निग्धरक्तसंग्रहणः ।
त्वग्दाडिमस्य तद्वत्सनागरश्चन्दनरसश्च ॥ १८५ ॥

चन्दनकिराततिक्तक-
धन्वयवासाः सनागराः क्वथिताः ।
रक्तार्शसां प्रशमना
दार्वीत्वगुशीरनिम्बाश्च ॥ १८६ ॥

सातिविषा कुटजत्वक् फलं च सरसाऽञ्जनम् ।
मधुयुतं हि रक्तापहं प्रदद्यात्पिपासवे तण्डुलजलेन
कुटजत्वचो विपाच्यं पलशतमार्द्रं तु मेघसलिलेन ।
यावत्स्याद्गतरसं तद्द्रव्यं पूतो रसस्ततो ग्राह्यः १८८

मोचरसः ससमङ्गः
फलिनी च समांशिकैस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं
चूर्णितमत्र प्रदातव्यम् ॥ १८९ ॥

पूतः क्वथितः सरसो दार्वीलेपस्ततः समवतार्य ।
मात्राकालोपहिता रसक्रियैषा जयति रक्तम् १९०
छागलिपयसा पीता पेया मण्डेन वा यथाग्निवलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत॥१९१॥
रक्तार्शांस्यतिसारं रक्तं सास्रग्रुजो निहन्यात्तु ।
वलवच्च रक्तपित्तं रसक्रियैषा जयत्युभयभागम् ॥

इति कुटजादिरसक्रिया ।

सनागरः ईषन्नागरः स्निग्धस्य रक्तस्य संग्रहणः तद्वदिति पूर्वयोगफलं च विधिं च दर्शयति । कुटजत्वगित्यादौ पलशतं तुलाः जलद्रोणेन साध्यम् । अष्टभागावशेषः कषायो ग्राह्यः । तन्त्रान्तरेष्युक्तम्—द्रोणेऽम्भसः पलशतं कुटजत्वचोऽष्टभागमिति । मेघसलिलं आन्तरिक्षं जलं दार्वीप्रलेपेन ग्राह्यमिति यस्यामवस्थायां दार्वीप्रलेपो भवति तस्यामवतारणीयः । उभयभागरक्तपित्तस्यासाध्यत्वादुभयभागशब्देन केवलोर्ध्वगं चेष्यते । तत्राप्यस्य योगस्य याप्यत्वात्तत् प्रतिपादनमेवेहं निहन्यादिति पदेनोच्यते ॥ १८५—१९२ ॥

नीलोत्पलं समङ्गा मोचरसश्चन्दनं तिला लोध्रम् ।
पीत्वा छागलिपयसा भोज्यं पयसैव शाल्यन्नम् ॥
छागलिपयः प्रयुक्तं निहन्ति रक्तं सवास्तुकरसश्च।
धन्वविहङ्गमृगाणां रसो निरम्लः कदम्लो वा१९४
पाठा वत्सकबीजं रसाञ्जनं नागरं यमान्यश्च ।
विल्वमिति चार्शसैश्चूर्णितानि पेयानि सशूलेषु ॥

दार्वीकिराततिक्तं मुस्तं दुःस्पर्शकश्च रुधिरघ्नम् ।
रक्तेऽतिवर्तमाने शूले च घृतं विधातव्यम् ॥१९६॥
कुटजफलवल्ककेशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥१९७॥
सर्पिः सदाडिमरसं सयावशूकं जयत्याशु ।
रक्तं सशूलमथवा निदिग्धिकादुग्धिकासिद्धम् ॥
लाजाः पेया पीता चुक्रिका केशरोत्पलैः सिद्धा ।
हन्त्याशु रक्तरोगं तथा वलापृश्निपर्णीभ्याम् १९९
ह्रीवेरविल्वनागरनिर्यूहे साधितां सनवनीताम् ।
वृक्षाम्लदाडिमाम्लामम्लीकाम्लां सकोलाम्लाम्
गृञ्जनकसुरासिद्धां भृष्टां यमकेन वा पिबेत्पेयाम् ।
रक्तातिसारशूलप्रवाहिकाशोथनिग्रहणीम् ॥२०१॥
काश्मर्यामलकानां सकर्बुदारफलाम्लानाम् ।
गृञ्जनकशाल्मलीनां क्षीरिण्याश्चुक्रिकायाश्च॥२०२॥
न्यग्रोधशुङ्गकानां खण्डांस्तथा कोविदारपुष्पाणाम्
दध्नः सरेण सिद्धान्दद्याद्रक्ते प्रवृत्तेऽति ॥ २०३ ॥

सिद्धं पलाण्डुशाकं च
तक्रेणोपोदिकां सवदराम्लां च ।
रुधिरस्रवे प्रदद्या-
न्मसूरसूपं च तक्राम्लम् ॥ २०४ ॥

पयसा शृतेन यूपैर्मसूरमुद्गाढकीमकुष्ठानाम् ।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम्॥२०५॥
शशहरिणलावमांसैः कपिञ्जलैणेयैः सुसिद्धैश्च ।
भोजनमद्यादम्लैर्मधुरैरीपत्समरिचैर्वा ॥ २०६ ॥

कदम्लः ईषदम्लः कुटजफलवल्कशब्देन च लगुच्यते । दाडिमरसमित्यत्र गृञ्जनकेत्यादिना योगान्तरं । गृञ्जनकः पलाण्डुभेदः । कर्बुदारः कांचनभेदः । भोजनमित्यादि भोजनमद्यात् इति योज्यम् ॥ १९३—२०६ ॥

दक्षशिखितित्तिरिरसैर्द्वि-
ककुदलोपाकजैश्च मधुराम्लैः ।
अद्यादग्नेरतिवहे-
ऽर्शःस्वनिलोल्वणशरीरः ॥ २०७ ॥

रसखडयूषयवागूसंयुक्तः केवलोऽथवा जयति ।
रक्तमतिवर्तमानं वातं च पलाण्डुरुपयुक्तः ॥२०८॥

छागान्तराधितरुणं
सरुधिरमुपसाधितं वहुपलाण्डु ।
व्यत्यासान्मधुराम्लं
विट्संशोणितसंक्षये देयम् ॥ २०९ ॥

नवनीततिलाभ्यासा-
त्केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासा-
दर्शांस्यपयान्ति रक्तानि ॥ २१० ॥

नवनीतं घृतं छागं मांसं सपष्टिकः शालिः।
तरुणश्च सुरामण्डस्तरुणा च सुरा निहन्त्यजस्रम्
प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते।
दुष्टेऽपि कफपित्ते तस्मादनिलोऽधिको ज्ञेयः २१२
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातलिङ्गमल्पं च।
शीताः क्रियाः प्रयोज्या यथेरिता वक्ष्यते चान्या२१३
मधुकं सपञ्चवल्कं बदरीत्वगुदुम्बरं धवपटोलम्।
परिषेचने विदध्याद्वृषककुभयवासनिम्बांश्च २१४
रक्तेऽतिवर्तमाने दाहे क्लेदे च गाहयेच्चापि।
मधुकमृणालपद्मकचन्दनकुशकाशनिःक्काथे॥२१५॥
इक्षुरसमधुकवेतसनिर्यूहे शीतले पयसि वा तम्।
अवगाहयेत्प्रदिग्धं पूर्वं शिशिरेण तैलेन ॥ २१६ ॥

द्विककुदुष्टः। अन्तराधि शरीरमध्यं तच्च तरुणच्छागसेवा-बात्। मधुराम्लं प्रथमं मधुरं तत्किंचिदम्लं। दधिसरस्य म-थितं नवनीतं सद्यस्कशृतं नवशृतम्। अन्ये तु नवनीतं घृतं छागं वदन्ति। यथा आवि रक्तस्तम्भनात्मिका प्रोक्ता सा। यवासो दुरालभा। शिशिरेण तैलेनेति शीतलद्रव्यसाधितेन तैलेन ॥ २०७—२१६ ॥

दत्त्वा घृतं सशर्करमुपस्थदेशे गुदे त्रिकदेशे।
शिशिरजलस्पर्शसुखा धारा प्रस्तम्भनी योज्या॥
कदलीदलैरभिनवैः पुष्करपत्रैश्च शीतजलसिक्तैः।
प्रच्छादनं मुहुर्मुहुरिष्टं पद्मोत्पलदलैश्च ॥ २१८॥
दूर्वाघृतप्रदेहः शतधौतसहस्रधौतमपि सर्पिः।
व्यजनपवनश्च शीतो रक्तस्रावं जयत्याशु॥२१९॥

समङ्गामधुकाभ्यां तिलम-
धुकाभ्यां रसाञ्जनघृताभ्याम्।
सर्जरसघृताभ्यां वा
निम्बघृताभ्यां मधुघृताभ्याम्॥ २२०॥
दार्वीत्वक्सर्पिर्भ्यां
सचन्दनाभ्यामथोत्पलघृताभ्याम्।
दाहे क्लेदे गुदभ्रंशे
गुदजाः प्रतिसारणीयाः स्युः ॥ २२१ ॥
आभिः क्रियाभिरथवा
शीताभिर्यस्य तिष्ठति न रक्तम्।

तं काले स्निग्धोष्णैर्मांसैस्तर्पयेन्मतिमान्॥ २२२ ॥
अवपीडकसर्पिर्भिः कोष्णैर्घृततैलिकैस्तथाभ्यङ्गैः।
क्षीरघृततैलसेकैः कोष्णैः समुपाचरेदाशु॥२२३॥

शिशिरेत्यादि शिशिरजला च सुखस्पर्शात्तेन तीव्रशीतत्वं निवारयति। अधुना अशक्यरक्तस्रुतौ क्षीणधातुतर्पणार्थं बृंह-णमाह—आभिरित्यादि। अवपीडकसर्पिः भोजनस्योर्ध्वं पी-यते किंवा भूरिमात्रं सर्पिरवपीडकमुच्यते॥ २१७—२२३ ॥

कोष्णेन वातप्रबले घृतमण्डेनानुवासयेच्छीघ्रम्।
पिच्छाबस्तिं दद्याद्वस्तिं काले तस्याथवा सिद्धम्२२४
यवासकुशकाशानां मूलं पुष्पं च शाल्मलम्।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः॥२२५
त्रिप्रस्थे सलिलस्यैतत्क्षीरप्रस्थं च साधयेत्।
क्षीरशेषं कषायं च पूतं कल्कैर्विमिश्रयेत्॥ २२६ ॥
कल्काः शाल्मलिनिर्याससमङ्गाचन्दनोत्पलम्।
वत्सकस्य च बीजानि प्रियङ्गुः पद्मकेशरम्॥२२७॥
पिच्छाबस्तिरयं सिद्धः सघृतक्षौद्रशर्करः।
प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापहः॥ २२८ ॥

इति पिच्छाबस्तिः सिद्धबस्तिश्च।

तमिति स्रवद्रक्तं पुरुषं, इच्छाबस्तिमाह यवासमित्यादि दुरालभा, अत्र च कल्कादिमानं बस्तिवत् विज्ञेयम् ॥ २२४—२२८ ॥

प्रपौण्डरीकं मधुकं पिच्छाबस्तौ यथेरितम्।
पिष्टानुवासनं स्नेहं क्षीरद्विगुणितं पचेत्॥ २२९॥
ह्रीवेरमुत्पलं लोध्रं समङ्गाचव्यचन्दनम्।
पाठा सातिविषा बिल्वं धातकी देवदारु च॥२३०॥
दार्वी त्वङ् नागरं मांसी मुस्तं क्षारो यवाग्रजः।
चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम्॥२३१॥
ऐकध्यं साधयेत्सर्वं तत्सर्पिः परमौषधम्।
अर्शोऽतिसारग्रहणीपाण्डुरोगज्वरारुचौ॥ २३२॥
मूत्रकृच्छ्रे गुदभ्रंशे बस्त्यानाहे प्रवाहणे।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत्त्रिदोषनुत् २३३

इति ह्रीवेरादिघृतम्।

यवाग्रजः क्षारो यवक्षारः, चांगेरीस्वरसोऽत्र चतुर्गुणो ग्राह्यः द्रवान्तरासान्निध्यात्॥ २२९—२३३ ॥

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकः।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः २३४
कषाय एषां पेष्यास्तु जीवन्ती कटुरोहिणी।
पिप्पली पिप्पलीमूलं नागरं सुरदारु च॥ २३५॥
कलिङ्गाः शाल्मलं पुष्पं वीरा चन्दनमुत्पलम्।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषास्थिराः २३६
पद्मोत्पलानां किञ्जल्कं समङ्गा सनिदिग्धिका।
बिल्वं मोचरसः पाठा भागाः कर्षसमन्विताः२३७
चतुःप्रस्थे शृतं प्रस्थं कषायमवतारयेत्।
त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः॥२३८॥
सुनिषण्णकचाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत्॥ २३९ ॥
एतदर्शःस्वतीसारे रक्तस्रावे त्रिदोषजे।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च॥ २४०॥
उत्थाने चातिबहुशः शोथशूले गुदाश्रये।
मूत्रग्रहे मूढवाते मन्देऽग्नावरुचावपि॥ २४१॥

प्रयोज्यं विधिवत्सर्पिर्बलवर्णाग्निवर्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययमिति ॥२४२॥
इति सुनिषण्णकचाङ्गेरीघृतम् ।

अवाक्पुष्पी अधःपुष्पी अथ क्वाथ्यद्रव्यं षोडशपलम् । अत्रोत्सर्गतः चतुःप्रस्थं जलमेव ज्ञेयम् । तथा शेषचतुर्भागः प्रस्थ एव भवति । तथापि चतुर्गुणजलदानस्य शेषतया स्थाप्यकषायस्य च उत्सर्गविधौ सूचनार्थं इदं चरकवचनं । तथा त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिक इति विज्ञेयम् । परिभाषा सिद्धार्थानिधायकम् । अतएव द्रवबलसंस्थानेऽपि द्रवद्वैगुण्याभिधानं भविष्यति । त्रिंशत्पलविशेषणतया द्विपलाधिकानीति निर्देशे प्राप्ते प्रस्थविवक्षायां पुंल्लिङ्गो निर्देशो ज्ञेयः ॥ २३४—२४२ ॥

भवन्ति चात्र ।

व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत् ।
नित्यमग्निबलापेक्षी जयत्यर्शःकृतान्गदान् ॥२४३॥
त्रयो विकाराः प्रायेण ये परस्परहेतवः ।
अर्शांसि चातिसारश्च ग्रहणीदोष एव च ॥ २४४ ॥
एषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः ।
तस्मादग्निबलं रक्ष्यमेषु त्रिषु विशेषतः ॥ २४५ ॥
भृष्टैः शाकैर्यवागूभिर्यूषैर्मांसरसैः खडैः ।
क्षीरतक्रप्रयोगैश्च विचित्रैर्गुदजाञ्जयेत् ॥ २४६ ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं द्रव्यं तत्सेव्यं नित्यमर्शसैः ॥ २४७ ॥
यदतो विपरीतं स्यान्निदाने यत्प्रदर्शितम् ।
गुदजाभिपरीतेन तत्सेव्यं न कथंचन ॥ २४८ ॥”

व्यत्यासात्परस्परपरिवर्तनेन मधुराम्लयोः शीतोष्णयोश्च योजना । अर्शःसु अग्निरक्षामभिधातुं अन्यत्रापि यत्र अग्निरक्षा विशेषेण कर्तव्या तामाह त्रय इत्यादि । वृद्धे परिक्षये अग्निबले वृद्धे विनाशः । त्रिषु विशेषतः इत्यनेन अन्यत्राप्यग्निरक्षणं कार्यमिति दर्शयति । यद्वायोरित्यादिना पूर्वोक्तचिकित्सां सारोद्धारेणाह ॥ २४३–२४८ ॥

तत्र श्लोकाः ।

अर्शसां द्विविधं जन्म पृथगायतनानि च ।
स्थानसंस्थानलिङ्गानि साध्यासाध्यविनिश्चयः२४९
अभ्यङ्गाः स्वेदनं धूमाः सावगाहाः प्रलेपनाः ।
शोणितस्यावसेकश्च योगा दीपनपाचनाः ॥ २५० ॥
पानान्नविधिरध्यश्च वातवर्चोऽनुलोमनः ।
योगाः संशमनीयाश्च सर्पींषि विविधानि च ॥२५१॥
वस्तयस्तक्रयोगाश्च वरारिष्टाः सशर्कराः ।
शुष्काणामर्शसां शस्ताः स्राविणां लक्षणानि च२५२
द्विविधं सानुबन्धानां तेषां नेष्टं यदौषधम् ।
रक्तसंग्रहणा योगाः पेयाश्च विविधात्मकाः २५३
स्नेहपानविधिश्चाग्र्यो विधिः पानान्नयोश्च यः ।
परिषेकावगाहाश्च प्रदेहाः प्रतिसारणम् ॥ २५४ ॥
अतिवृत्तस्य रक्तस्य विधातव्यं यदुत्तरम् ।
तत्सर्वमिह निर्दिष्टं गुदजानां चिकित्सितम् ॥२५५॥
इति चरकसंहितायामर्शश्चिकित्सितं नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

अर्शसां द्विविधमित्यादि अध्यायार्थसंग्रहः । अरिष्टग्रहणेनैव शार्करस्यापि ग्रहणे प्राप्ते शार्करस्य पृथगभिधानं गुडप्रकृष्टेभ्यो भेदेन व्यवहारार्थं तथानुपानाभिधानार्थं पृथक्कृतम् ग्रहणी ॥ २४९.—२५५ ॥ इत्यर्शसां चिकित्सितं समाप्तम् ।

---

## पंचदशोऽध्यायः ।

अथातो ग्रहणीचिकित्सितं व्याख्यास्यामः ।
“आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा ।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः ॥१॥
शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ।
रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते ॥ २ ॥

अर्शःकार्यत्वाद्ग्रहणीदोषस्य अर्शश्चिकित्सितमनु ग्रहणीचिकित्सितं ब्रूते । ग्रहण्यां ग्रहणीदोषः एवंचाश्रयाश्रयिणोरभेदग्रहणाद्ग्रहण्याश्रितोऽग्निदोषोऽपि गृह्यते । तत्र ग्रहणीदोषनिर्दिष्टाग्निदोषे वक्तव्ये प्रकृतिज्ञानान्तरत्वाद्विकृतिज्ञानस्य प्रथमं तावदविकृतस्याग्ने रूपमाह—आयुरित्यादि । आयुश्चेतनानुवृत्तिः, वर्णो गौरादिः, बलं शक्तिः, व्यायामशक्तिश्च । स्वास्थ्यशब्देनैव वर्णादिग्रहणं यद्यपि लभ्यते तथापि “स्वस्थस्योजस्करं यत्तु तद्रसायनमुच्यते” । तेन वर्णादीनामविकारत्वं अवश्यं सुखे भवतीति वर्णादीनां पृथगुपादानं कृतम् । उत्साहो दुष्करेष्वपि कार्येषु अध्यवसायः । उपचयो देहपुष्टिः । ओजो हृदयस्थं सर्वधातुसाररूपम् । तेजो देहोष्मा शुक्रं वा । यदुक्तं शालाक्ये “दृष्टिस्तेजोमयी प्रोक्ता शुक्रं तेजश्च केवलम् । तस्माद्दृष्टिबलापेक्षी तेजोवृद्धिं समाचरेत्” इति । अग्नय इति भूताग्नयः पञ्च । धात्वग्नयः सप्त इति द्वादशाग्नयः । प्राणा इति प्राणापानोपलक्षिताः पञ्चापि वायवः । किंवा प्राणाः इति शब्देन नित्यं बहुवचनान्तेनोच्यते । यथाप्सरस्शब्देन एकापि विद्याधरी कीर्त्यते । देहाग्निहेतुका इति देहपोषकप्रधानजाठराग्निकारकाः । शान्ते इत्युत्सन्ने । युक्ते इति समे । विकृत इति मन्दे विषमे तीक्ष्णे वा मूलमग्निस्तस्मादिति तस्मात्प्राशस्त्यात् अन्वयव्यतिरेकविधानात् आयुर्वर्णादीनां अग्निर्मूलं प्रधानं कारणमित्यर्थः । निरुच्यते इति निश्चयेनोच्यते ॥ १ ॥ २ ॥

यदन्नं देहधात्वोजोबलवर्णादिपोषकम् ।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ३ ॥

सामान्यकारणमुक्त्वा अग्नेः साक्षात्कार्यकारणत्वं व्युत्पादयन्नाह—यदन्नमित्यादि। वाह्याअपि गैरिकादयो धातुशब्देनोच्यन्ते इति तद्व्यवच्छेदार्थं धातोर्देहविशेषणम् । अथ अहोरात्रजन्येषु देहधात्वादिषु कथमग्नेः कारणत्वमित्याह—आहारादिति । एतेनाहारमप्यपेक्षैव रसादीन् जनयति । आदिग्रहणेन रक्तादीन् संगृह्यन्ते ॥ ३ ॥

**अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति ।**
**तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ॥ ४ ॥**
**समानेनावधूतोऽग्निरुदर्यः पवनेन तु ।**
**काले भुक्तं समं सम्यक्पचत्यायुर्विवृद्धये ॥ ५ ॥**

संप्रति संप्राप्तस्यान्नस्य अग्निना यथा पाको भवति यथाच पच्यमानं अन्नं देहधात्वादिना रूपतामापद्यते तदाह—अन्नमित्यादि । सुखप्रवेशादन्नस्य व्याहार इहोच्यते । आदानं आहारप्रणयनं कर्म यस्य स तथा कर्षतीति नयति द्रवैरिति पानीयादिभिः भिन्नसंघातमित्यवयवशैथिल्यमापन्नम् । काले इति बुभुक्षाकाले भुक्तं सममिति मात्राप्रकृत्यादिसमम् । समानेनावधूत इति अग्निपार्श्वस्थितेन समानेन संधुक्षितः । अयंच समानप्रकृतत्वात् वाह्यो वायुरिव अग्नेः सलक्षणो भवति न वैषम्यकरः विकृतस्तु वैषम्यं करोति तेन वातेन विषमोग्निर्भवतीति च उपपन्नं भवति । एते च द्रवादयः पाचकस्याग्नेः सहाया भवन्ति इत्यनेन ग्रन्थेनोच्यते । आहारपरिणामकरा रसभावा भवन्ति। तद्यथा ऊष्मा वायुः क्लेदः स्नेहः कालः समयोगश्चेति उदर्यः पाचक इत्यर्थः पवनोद्वह इत्यग्निविशेषणं केचित्पठन्ति सम्यगिति भुक्तविशेषणं केचित्पठन्ति तदा सम्यगित्यनेन मात्रासाम्यमुच्यते । सम्यग्ग्रहणेन तु प्रकृत्यादि संपदुच्यते । आयुर्विवृद्धये इति शरीरेन्द्रियसत्त्वात्मसंयोगानुवर्तमाना रसादयः । तादर्थ्ये चतुर्थी ॥ ४ ॥ ५ ॥

**एवं रसमलायान्नमाशयस्थमधःस्थितः ।**
**पचत्यग्निर्यथा स्थाल्यामोदनायाम्बुतण्डुलम् ॥ ६ ॥**
**अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः ।**
**मधुरात्प्राक् कफोद्भावात्फेनभूत उदीर्यते ॥ ७ ॥**

आशयस्थमित्यामाशयस्थं अधःस्थित इत्यनेन अग्नेरूर्ध्वज्वलनस्वभावतया ऊर्ध्वस्थान्नपाके सामर्थ्यं सूचयति । अत्रार्थे यथेत्यादिना दृष्टान्तमाह । एवं स्थूलपाकक्रमं विधाय अवान्तरमनुपाकक्रममाह—अन्नस्येत्यादि भुक्तमात्रस्य भुक्तानन्तरमेव षड्रसस्येति प्राशस्त्यत्वेनाभिधानं किंवा षड्रसस्यापि प्रथमं मधुरता निरुक्ता भवतीति दर्शयति । प्रपाकत इति प्रथमपाकतः । प्रशब्दो रसादिकर्मणि मधुरश्चासौ आद्यश्चेति मधुराद्यः । किंवा मधुरात्प्राक् कफोद्भावः इति पाठः । फेनभूत इति फेनसदृशो घन इत्यर्थः ॥ ६ ॥ ७ ॥

**परंतु पच्यमानस्य विदग्धस्याम्लभावतः**
**आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥ ८ ॥**

**पक्वाशयं तु प्राप्तस्य शोष्यमाणस्य वह्निना ।**
**परिपिण्डितपक्वस्य वायुः स्यात्कटुभावतः ॥ ९ ॥**

आद्यमधुरपाकानन्तरं विदग्धस्येति पक्वापक्वस्य । अम्लभावतः इति जाताम्लस्वरूपतः । आशयादामाशयात् अधोभागं वायुना नीयमानस्तु अनेन च पित्तस्थानसंवन्धं विदग्धाहारस्य दर्शयति—अच्छमित्यघनम् । उदीर्यते इति पित्तमुदीर्यते । अम्लं च पित्तं अम्लभावादाहारस्य उत्पद्यत इति युक्तमेव । पक्वाशयं तु प्राप्तस्येति च मलरूपतया पक्वाशयं गतस्य शोष्यमानस्य च वह्निनेति यद्यपि ऊर्ध्वंदाहक्षमो वह्नि तथाप्यधोगतमपि वह्निना शोष्यमानत्वं पक्वाशयगतस्याप्युपपन्नम् । यतश्चाधोगमने सम्यक् वह्निव्यापारो नास्ति अतः पच्यमानस्येति पदं परित्यज्य शोष्यमाणस्येति कृतं । परिपिण्डितपक्वस्येति परिपिण्डितरूपतया मलरूपतया पक्वस्य । वायुः स्यात्कटुभावत इति परिपिण्डितावस्थोद्भूतकटुता वायोरुत्पद्यते एवमीदृशः षड्रसाहारस्यावस्थापको भवति । उक्तं मधुरादीनां कफादिकर्तृत्वम् । कटुतिक्तकषायाणां विपाकः प्रायशः कटु इत्यादिनाच यः पाक उच्यते सोऽवस्थापाकेन च वाधितत्वात् । मैवं नह्यवस्थापाकोऽस्वभावं वाधते किंत्ववस्थायां स्वकार्यं करोति । तेन रसादयोऽपि स्वकार्यं कुर्वन्ति । अवस्थापाकोऽपि स्वकीयं कार्यं करोति । यथा मधुरतिक्तादिषड्रसेऽन्ने उपयुक्ते मधुरोऽपि स्वकार्यं करोति तिक्तादयः स्वकार्यं कुर्वति अयं तु विशेषः यदवस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अन्नगुणा भवंति तदा श्लेष्माणं जनयंति । यदा तु अवस्थापाकः विपरीतकटुकादिपरिगृहीतो भवति तदा स्तोकमात्रं कफं जनयति । एवं पित्तजनक अवस्थापाकेऽपि वाच्यम् । त्रिधा विपाकस्तु रसमलविवेकसमकाले एवावस्थापाकैः समं भवति । कालोऽपि अवस्थापाककार्यदोषानुगुणतया अवस्थापाकाहितदोषाणां वर्धनं क्षपणं च करोतीति तस्याभिधानं शास्त्रे प्रयोजनवदेव । यद्यपि वा सर्वमन्नं अवस्थायां विदह्यते तथापि येऽत्यर्थं विदाहित्वात् विदाहिन इत्युच्यन्ते विशेषविदाहकर्तृत्वात् । अन्ये त्वाहुः न षड्रसादपि अन्नसामान्येनावस्थापाके कफाद्युत्पत्तिः किंतु षड्रसादन्नात्प्रथमे पाके मधुरोऽयमुपक्रान्तो रसः स कफं जनयति तथा पित्तदोषं विदाहावस्थायां उद्भूतादम्लरसात् पित्तमुत्पद्यते । एवं वायुरपि आहारकटुतावस्थायां भवतीति । अन्ये त्वाहुः यत् नान्नस्याग्निसंयोगात् मधुराद्यावस्थिकं भवति किंतु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति । उक्तं हि तन्त्रान्तरे मधुरो हृदयादूर्ध्वं रसः कोष्ठे व्यवस्थितः । ततः संवर्धते श्लेष्मा शरीरबलवर्द्धनः । नाभीहृदयमध्ये च रसस्त्वम्लो व्यवस्थितः । स्वभावेन मनुष्याणां ततः पित्तं प्रवर्तते । अधोनाभ्यास्तु नन्वेकः कटुकोऽवस्थितो रसः । प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्द्धतेऽनिलः । तस्माद्विपाकस्त्रिविधो रसानां नात्र संशय

इति । इह तु तत्रेत्यादि ग्रंथार्थालोचनया यथार्थ एव ग्रंथार्थो न्याय्यः । तन्त्रान्तरे तु श्लेष्मपित्तगतमधुराम्लरसौ वर्णयंति ते च कफाधिगता रसाः अस्माकमपि पाकसहकारितया अनुमता एव । यत्तु श्लेष्मजनकांशस्यैवावस्थापाके श्लेष्मकर्तृत्वमित्युक्तं तदनुमतमेव एवं श्लेष्मजनकोऽशः आहारगतः यः स स्थानमहिम्ना तदाहारस्य मधुरतामापद्य श्लेष्माणं जनयतीति विशेषेण ब्रूमः । यत्तु अनेनावस्थापाकेन कफपित्तयोः ईरणमात्रं करोति नतु वृद्धिः । वृद्धिः कफस्यानुपाके भवतीति वदंति तदुपपत्तिशून्यं भाति किंतु अवस्थापाकाच्च कफपित्तवृद्धिः तथा रसरक्तपाकाच्च मलरूपतया उत्पादयति इति युक्तं पश्यामः ॥ ८ ॥ ९ ॥

**अन्नमिष्टं ह्युपहितमिष्टैर्गन्धादिभिः पृथक् ।**
**देहे प्रीणाति गन्धादीन्घ्राणादीनिन्द्रियाणि च १०**
**भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।**
**पञ्चाहारगुणान्स्वान्स्वान्पार्थिवादीन्पचन्ति हि ११**

कर्मान्तरेणापि अन्नस्य पाकः संपद्यते तमाह—अन्नमिति अन्नं इष्टं उपहितमिति हिशब्दोऽवधारणे इष्टशब्देनेह प्रियं हितं चोच्यते न प्रियमात्रं अहितस्य प्रियमात्रस्य न देहव्यवस्थितिः गन्धादितर्पकत्वं भवति । उपहितमित्युपयुक्तं इष्टैरिति प्रियहितैः गन्धरसरूपस्पर्शशब्दैः । अत्र यद्यपि हितत्वमेव गन्धादीनां आहारगतानां देहगतगन्धादिपोषणे प्रधानं तथापि प्रियत्वमपि आहारगतगन्धादीनां तदात्मोपकारकतया गृहीतुं प्रियत्वहितत्वद्वयोरपि उपादानं कर्तव्यम् । देहे प्रीणाति गन्धादीनिति देहाश्रितान् गन्धादीन् पोषयेदिति । तथा घ्राणादीनि च घ्राणरसस्पर्शनश्रोत्राणि इष्टैर्गन्धादिभिः प्रीणाति तर्पयति पोषयतीति यावत् । इन्द्रियाण्यपि हि पाञ्चभौतिकान्यसद्दर्शने तानि च प्रतिक्षणं क्षीयमाणानि । भौतिकवह्निव्यापारमाह—भौमेत्यादि । भौमादयः पंचोष्माणः पार्थिवादिद्रव्यव्यवस्थिताः जाठराग्निसंधुक्षितबलाः अन्तरीयं द्रव्यं पचन्तः स्वान् स्वान् पार्थिवादीन् पूर्वपार्थिवगन्धत्वादिविलक्षणान् गुणान् निर्वर्णयंति । एतदेवाशितलीढपीतखादितं जन्तोर्हितं अंतरग्निसंधुक्षितबलेन यथा स्वेनोष्मणा सम्यग्विपच्यमानमिति यद्यपि च भूताग्निना पार्थिवादिद्रव्यं पच्यते तथापि पार्थिवादिद्रव्याणां पाकेनैतदेव जननं यद्विशिष्टगुणयुक्तत्वं तेन पाकेन जन्यमानेऽपि द्रव्ये गुणा एव जन्यन्त इत्यभिप्रायेण पार्थिवादीनाहारगुणान् जनयंति । अनेन गुणजननमेवाग्निनोच्यते न द्रव्यजननं किंवा आहाराश्च गुणाश्चेति विग्रहादाहारशब्देन आहाराधिकाररूपं द्रव्यमपि गृह्यते पार्थिवादिनीति पार्थिवाप्यतैजसवायवीयनाभसानि । अत्र जाठराग्निः सर्वमेवाहाररसमलविपाकान् पचति भौतिकास्त्वाग्नयः स्वान्स्वान्गुणान् जनयंति । उक्तंच जाठरेणाग्निना पूर्वं कृते संघातभेदे पश्चाद्भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचंति । अयं च भूताग्निव्यापारो धातुष्वप्यस्ति । तेन धातुष्वपि पञ्चभूतानि संति । तत्रापि धात्वग्निव्यापारो भूताग्निव्यापारश्च जाठराग्निक्रमेणैवोक्तो ज्ञेयः ॥ १० ॥ ११ ॥

**यथास्वं स्वं च पुष्यन्ति देहद्रव्यगुणाः पृथक् ।**
**पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः १२**

अग्निपक्वान्नाहारगुणानाह यथास्वमिति यद्यस्यात्मीयं । सजातीया द्रव्यगुणा द्रव्यगुणान्पुष्णन्ति । तेन द्रव्याणि पार्थिवादिद्रव्यरूपाणि देहधातुदोषमलाख्यानि पुष्णंति, गुणास्तु पाकस्थितगन्धस्नेहौष्ण्यगौरवादयः देहगन्धस्नेहौष्ण्यगौरवादीनि पुष्णंति । यथास्वमित्यादिशब्दार्थं स्फोरयति पार्थिवा आहारद्रव्यगुणाः देहगतान्पार्थिवानेव द्रव्यगुणान्पुष्णंति । आहारद्रव्यगुणा इत्यत्र द्रव्यगतगुणा एव उच्यन्ते । द्रव्यपोषणं तु गुणपोषणेन लभ्यते गुणपोषणं द्रव्यपोषणमन्तराकर्तुमशक्यत्वात् ॥ १२ ॥

**सप्तभिर्देहधातारो द्विविधाश्च पुनःपुनः ।**
**यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥१३॥**

भूताग्निव्यापारं दर्शयित्वा धात्वग्निव्यापारं दर्शयन्नाह—सप्तभिरित्यादि देहधातार इति विशेषेण देहधारकाः । द्विप्रकारमिति द्विविधं पाकं तदेव प्रकारद्वयमाह किट्टप्रसादवदिति किट्टप्रसादरूप इत्यर्थः । शुक्रस्येति किट्टवान्पाको न भवति तथापि बहूनां किट्टवत्त्वात् द्विविधमिति निर्देशो छत्रिणो गच्छन्तीति न्यायाज्ज्ञेयः ॥ १३ ॥

**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।**
**अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ॥१४॥**
**रसात्स्तन्यं ततो रक्तमसृजः कण्डराः शिराः ।**
**मांसाद्वसा त्वचः षट् च मेदसः स्नायुसंभवः १५**

पुनरिति जाठराग्निपाकानन्तरं पाकजन्यानां रसादीनां उत्पादः क्रमेणाह—रसादित्यादि । रसाद्रक्तं प्रसादनं ततो रक्तान्मांसं प्रसादनं, मांसान्मेदःप्रसादनमित्यादि यावच्छुक्रात् प्रसादशब्देन रसादिभ्यः प्रसादांशजन्या रक्तादयः किट्टांशजन्यास्तु वक्ष्यमाणाः कफादय इति । शुक्रात्तु निर्मलतया प्रसादत एव गर्भो भवति नतु मलः जन्यन्ते केचित्तु शुक्रमलतया श्मश्रूणि वदंति, तन्न । तन्त्रेऽनभिधानात् । तथा शुक्रमलश्मश्रूणि तदा स्त्रीणामपि शुक्रतया श्मश्रूणि स्युः । रक्तादयो हि गर्भप्रभृत्येव पोष्यन्ते । तत्र च त्रिधातूत्पादं वर्णयंति । यद्रसः स्वाग्निपच्यमानः रक्ततां याति रक्तं मांसतामित्याह—रसादिति पूर्वपूर्वधातुपरिणामात् उत्तरोत्तरधातूत्पादः यथा क्षीराद्दधि भवति दध्नो नवनीतं नवनीताद्घृतं घृतात् घृतमण्डः इत्येकः पक्षः । किंवा रस एव रक्तं प्रथमं प्लावयति तत्र च रक्तस्थानसंबन्धात् रक्तसादृश्यमनुभवति रक्तं च रक्तसमानेनांशेन पोषयति । ततो मांसमाप्लाव्य मांसपोषणं करोति ।

मांससादृश्यतामनुवदति एवं उत्तरोत्तरधातून्। रस एवाप्लावयति वर्धयति च । यथा केदारनिषिक्तं कुल्याजलं प्रत्यासन्नकेदारं तर्पयित्वा क्रमेण केदारिकेतराणि पयसा प्लावयति किंवा आहाररसः उत्पन्नः अभिन्नैरेव मार्गैः रसरुधिरादीनि समानेनांशेन तर्पयति । तत्र च यः प्रत्यासन्नो धातुः तं शीघ्रं पुष्णाति । यस्तु विरुद्धो धातुः तस्याभिन्नमार्गतया चिरेण पोषणं भवति । क्षिप्रचिरादिभेदेन शीघ्रचिरेण च गमनं भवति तद्वदिति क्षीरदधिन्यायात् । केदारकुल्यान्यायात् खले कपोतन्यायात्त्रेधा धातुपोषणक्रमः । तत्रेहशब्दार्थपर्यालोचनया केदारे कुल्यान्यायः क्षीरदधिन्यायो वा संगतः । खले कपोतन्यायस्तु दुर्घटः । रसाद्रक्तं प्रसादजमित्यर्थे उत्पादनं दुःशकं प्रपञ्चितं चैतत् विविधाशीतपीतीये तत्रैवानुसरणीयः प्रपञ्चः । ननु विविधाशीतपीतीये आहाररसाद्रसादिपुष्टिरुक्ता पोष्यत्वादाहाररसात् रुधिरपोषको रसो भिन्न इत्यनेन तत्र रसद्वयं स्वीकृतम् । इह तु एक रक्तपोषको रस इति कथं न विरोधः । मैवं तत्रापि आहाररसशब्देन आहारजः प्रसादोऽभिधीयते । सच रसग्रहणेन गृहीत एव । यतो द्विविधो रसः स्थायी पोषकश्चेति तेन तत्र धातुपोषकरसांशयोः भेदविवक्षया भेद उक्तः । इह स्थायी पोषकरससारस्यैकतयानिर्दिष्टयोः स्थायिरसपोषकरसभावयोः स्थानाग्निभावाद्यभावात् एकत्वं एवं कृत्वा सप्तधातुकं शरीरमुच्यते । एतदपि विविधाशीतपीतये प्रपञ्चितम् ॥ धातूनां पोषणमभिधाय उपधातुपोषणमाह—रसात्स्तन्यमित्यादि रसात्स्तन्यं प्रसादजं ततस्तन्याद्रक्तं स्त्रीणां चार्तवमिति असृजः कण्डरादिस्थूलस्नायवः मेदसस्तु सूक्ष्मस्नायुपोषणम् । मेदसः स्नायुसंभव इत्यनेन वक्तव्यम् । इह हि कण्डराशब्देन स्थूलस्नायू सूच्यन्ते सुश्रुते तु स्थूलशिरा धात्वन्तरापोषणात् शरीरपोषकाऽपि उपधातुशब्देनोच्यन्ते रसादयस्तु शरीरधारकतया धात्वन्तरपोषकतया च धातुशब्देनोच्यन्ते उक्तंच भोजे 'शिरास्नायुरजःसप्तत्वचो गतिविवर्जिताः । धातुभ्यश्चोपजायन्ते तस्मात्त उपधातवः' इति अत्रापीह धातवश्चोपजायन्ते इत्यनेन जायन्त एव परं न जनयन्ति इत्युक्तम् । शुक्रं तु ओजोजनकत्वात् । ओजस्तु उपधातुषु पठितं तस्य सप्तधातुरूपतया सप्तधात्वन्तरगतत्वादेव अतएव तस्याग्निरपि पृथङ्नोक्तः ॥ १४ ॥ १५ ॥

**(इत्युक्तवन्तमाचार्यं शिष्यस्त्विदमचोदयत् ।**
**रसाद्रक्तं विसदृशात्कथं देहेऽभिजायते ॥ १६ ॥**
**रसस्य च न रागोऽस्ति स कथं याति रक्तताम् ।**
**रसाद्रक्तात्स्थिरं मांसं कथं तज्जायते नृणाम् ॥१७॥**
**रसाद्रक्तात्तथा मांसान्मेदसः श्वेतता कथम् ।**
**श्लक्ष्णाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु १८**
**खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा ।**
**मज्ज्ञश्च परिणामेन यदि शुक्रं प्रवर्तते ॥ १९ ॥**
**सर्वदेहगतं शुक्रं प्रवदन्ति मनीषिणः ।**
**अथापि मध्ये मज्ज्ञश्च शुक्रं भवति देहिनाम् ॥२०॥**
**छिद्रं न दृश्यतेऽस्थ्नां च तन्निःसरति वा कथम् ।**
**एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् ॥ २१ ॥**
**तेजोरसानां सर्वेषां मनुजानां यदुच्यते ।**
**पित्तोष्मणः स रागेण रसो रक्तत्वमृच्छति ॥ २२ ॥**
**वाय्वम्बुतेजसा रक्तमूष्मणा चाभिसंयुतम् ।**
**स्थिरतां प्राप्य शौक्ल्यं च मेदो देहेऽभिजायते ॥२३॥**
**पृथिव्यप्यनिलादीनां संघातः श्लेष्मणावृतः ।**
**खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् ॥२४॥**
**करोति तत्र सौषिर्यमस्थ्नां मध्ये समीरणः ।**
**मेदसस्तानि पूर्यन्ते स्नेहो मज्जा ततः स्मृतः ॥२५॥**
**तस्मान्मज्ज्ञस्तु यः स्नेहः शुक्रं संजायते ततः ।**
**वाय्वाकाशादिभिर्भावैः सौषिर्यं जायतेऽस्थिषु २६**
**तेन स्रवति तच्छुक्रं नवात्कुम्भादिवोदकम् ।**
**स्रोतोऽभिष्यन्दते देहात्समन्ताच्छुक्रवाहिभिः २७**
**हर्षेणोदीरितं रागात्संकल्पाच्च मनोभवात् ।**
**विलीनं घृतवद्व्यायामोष्मणा स्थानविच्युतम् ॥२८॥)**
**वस्तौ संभृत्य निर्याति स्थलान्निम्नादिवोदकम् ।**
**किट्टमन्नस्य विण्मूत्रं रसस्य च कफोऽसृजः ॥ २९ ॥**
**पित्तं मांसस्य खमलो**
**मलः स्वेदस्तु मेदसः ।**
**स्यात्किट्टं केशलोमास्थ्नो**
**मज्ज्ञः स्नेहोऽक्षिविट्त्वचाम् ॥ ३० ॥**
**प्रसादकिट्टे धातूनां पाकादेवं द्विधर्च्छतः ।**
**परस्परोपसंस्तम्भा धातुस्नेहपरंपरा ॥ ३१ ॥**

प्रसादभागोत्पादमभिधाय मलभागोत्पादमाह किट्टमित्यादि । रसस्य कफ इति रसे पच्यमाने किट्टं कफो भवति प्रसादश्च रक्तं एवं रक्तादिमपि ज्ञेयम् । मांसस्य च मलो इति कर्णाक्षिनासास्यजननमलाः मलस्वेदस्तु मेदसः इति स्वेदो यद्यपि उदकविशेष एव उक्तस्तथापि तस्य मेदोमलत्वेनैवोत्पत्तिः किंवा उदकादपि स्वेदो भवति मेदोमलतया च भवति । यथा कफोऽवस्थापाकात् रसमलतया च भवति अस्थिमलं नखोऽपि सुश्रुतप्रामाण्यादुन्नेयः । तत्राहं नखलोमचेत्यनेन अस्थिमलत्वं नखस्योक्तम् । उक्तंच विविधाशीतपीतीये केशनखादयः पुष्यन्ति किंतु शरीरेऽस्थिगणनायां विंशतिर्नखा इत्यनेन अस्थिगणना प्रोक्ता । तेन क्रमेण प्रसादकिट्टौ भवत इत्यर्थः । संप्रति रक्तेन रसस्य पोषणं न क्रियते तथा मांसेनापि रक्तस्य इत्यादि परस्परं धातूनां उत्पादकत्वमाह—परस्परेत्यादि । धातुस्नेहपरंपरा परस्परोपस्तम्भेऽति अन्योन्यमुपस्नेहेन संस्तम्भाच्च संतर्पितेति यावत् ॥२९–३१॥

**वृष्यादीनां प्रभावस्तु पुष्णाति वलमाशु हि ।**
**षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्तनम् ॥ ३२ ॥**
**संतत्याभोज्यधातूनां परिवृत्तिस्तु चक्रवत् ।**

वृष्यादिद्रव्याणां धातुपरंपराक्रमेण शुक्रजननादिकार्यं निषेधयन्नाह वृष्यादीनामित्यादि । वृष्यादीनां क्षीरादिद्रव्याणां प्रभावो वलं शीघ्रं पुष्णाति ततस्ते क्षीरादयः प्रभाववर्द्धितवलाः शीघ्रमेवान्नकार्यं शुक्रजननादि कुर्वन्ति यथोक्तधातुक्रमेणेत्यर्थः । किंवा वृष्यादीनां प्रभावाच्छुक्राद्युत्पत्तिः शीघ्रं भवति । कियता कालेन धातुपरिवृत्तिर्भवति इत्याह षड्भिरहोरात्रैः रसस्य शुक्ररूपतया परिवर्तनं भवतीति केचिदिच्छन्ति । तत्रोत्पन्नो रसः रक्तमेकेनाहोरात्रेणेति एवं रसोत्पत्तिदिनं परित्यज्य षडहेन शुक्रता भवति । यदा तु रसोत्पत्तिदिनमपि प्रक्षिप्यते तदा षड्भिर्दिनैरतिक्रान्तैः सप्तमे शुक्रभावतया परिवर्तनं भवतीति ज्ञेयम् । उक्तं हि पराशरे आहारोपभोगदिनात् श्वः रसत्वं तृतीयेह्नि रक्तत्वं चतुर्थेह्नि मांसता मेदस्त्वं पञ्चमे षष्ठे त्वस्थित्वं सप्तमे मज्जता अष्टमे शुक्रता नियमेन भवति । किंच रसधातोः रक्तधातुरूपतया परिणमनं यत्तदपि षष्ठदिननिवर्त्यैवेति । सुश्रुते स खल्वाप्यो रसः एकैकस्मिन् धातौ त्रीणि त्रीणि कला सहस्राण्यवतिष्ठते। पंचदश च कलाः एवं मासेन रसः शुक्रीभवतीति ज्ञेयम् । एतत्पक्षद्वयमपि केचिदित्यादिना दर्शयति । स्वमतमाह संतत्येत्यादि । भोज्ये उपयुक्ते सति धातूनां रसादीनां चक्रवत्परिवृत्तिर्भवति । अविश्रांता समुत्पत्तिर्धातूनां भवति । तत्र दृष्टान्तेन तु परिवृत्तिः कालानियमं दर्शयति । यथा चक्रं पानीयोद्धरणार्थं नियुक्तं वाह्यमानं वाहुवलप्रकर्षात् कदाचिदाश्वेव परिवर्तते कदाचित् वाहुवलाप्रकर्षात् चिरेण एवं धातवोऽपि अग्न्यादिसौष्ठवात् शीघ्रमेव परिवर्तन्ते । अग्न्यादिवैगुण्ये चिरेण वर्तन्ते इति एवं सुश्रुतेनापि सशब्दार्चिर्जलसंतानवत् अणुना विशेषेणानुधावत्येव शरीरं केवलम् । इत्यत्र कृष्णात्रेयेण रसपरिणामोऽपि अग्न्यादिभेदेन प्रकृष्टाप्रकृष्टकालज उक्त एव । तत्र हि जलसंतानदृष्टान्तेन चिरेण मासपर्यन्तेन शुक्रतापत्तिः रसस्योक्ता । शब्दसंतानदृष्टान्तेन तु नातिशीघ्रं नातिचिराच्च शुक्रोत्पत्तिरुक्ता । अर्चिःसंतानदृष्टान्तेन तु नातिशीघ्रं नातिचिराच्च शुक्रोत्पत्तिर्भवति । तथान्यत्रापि उक्तं केचिदाहुरहोरात्रात्षड्रात्रादपरे परे । मासेन याति शुक्रत्वमन्नं पाकक्रमादिति । तदेतत्सकलचक्रदृष्टान्तेन गृहीतं ज्ञेयम् ॥ ३२ ॥

**व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ॥ ३३ ॥**
**युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ।**
**क्षिप्यमाणस्तु वैगुण्याद्रसः सज्जति यत्र सः ॥३४॥**
**करोति विकृतिं चात्र खे वर्षमिव तोयदः ।**
**दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ॥ ३५ ॥**

अथ कः अन्नरसं रक्तादिधातुपोषकं प्रेरयति । येन तत्र रसः सर्पतीत्याह व्यानेनेत्यादि । रसरूपो धातुः किंवा रसतीति रसो द्रव्यधातुरुच्यते । तेन रुधिरादीनामपि द्रवाणां ग्रहणं भवति । विक्षेपोचितं प्राकृतं कर्म यस्य स विक्षेपोचितकर्मा तेन व्यानेन युगपदित्येककालं सर्वतः इति सर्वस्मिन्देशे विक्षिप्यते नीयते । अजस्रमिति अविश्रान्तं । सदेति सर्वकालं । नन्वेवं सर्वत्र रसविक्षेपे कथमेकदेशेन रसो विकाराश्रये दृश्यते इत्याह क्षिप्यमाण इत्यादि । वैगुण्यादिति स्रोतोवैगुण्यात् । सज्जतीति तिष्ठति विकारं कुरुत इति रसाश्रयी विकारं कुरुते रसोऽपि विकारकरणे आश्रयतया व्याप्रियते तेनेह तस्य कर्तृत्वं युक्तं । खेवर्षमिव तोयद इति यथा चण्डेन वायुना नीयमानो मेघो यत्र शक्तो भवति तत्रैव वर्षं करोति तथा रसोऽपीत्यर्थः । यथा रसः एकदेशे विकारं करोति एवं दोषाअपि एकदेशविकारं कुर्वन्तीत्याह । सुश्रुतेप्याह—"कुपितानां हि दोषाणां शरीरे परिधावतां । यत्र संगः स्ववैगुण्याद्व्याधिस्तत्रोपजायते" ॥ ३३—३५ ॥

**इति भौतिकधात्वन्नपक्तॄणां कर्म भाषितम् ।**
**अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ॥ ३६ ॥**
**तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ।**
**तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ॥ ३७ ॥**
**पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्वलस्थितिः ।**
**यो हि भुङ्क्ते विधिं मुक्त्वा ग्रहणीदोषजान्गदान्॥३८॥**

उक्तमग्नीनां कर्म उपसंहरति इति भौतिक इत्यादि । भौतिकाः पञ्च धात्वग्नयः सप्त अन्नपक्तकः । अन्नपक्तृमूलत्वे हेतुगर्भविशेषणमाह तद्वृद्धीत्यादि । तस्य जाठराग्नेः वृद्ध्यात्मकः क्षयेण च क्षयात्मकः तस्मादन्वयव्यतिरेकार्थविधायित्वात्तन्मूलादित्यर्थः । यतश्चायमन्तराग्निर्मूलं सर्वत्र तस्मात्तं पालयेदिति योज्यम् । विधिवद्युक्तैरित्यत्र आहारविधियोगात् उपयुक्तैः । आयुर्वलस्थितिरित्यत्र अन्नपाचकाग्निस्थितौ आयुर्वलादीनां स्थितिर्लक्षणीया । विपर्यये दोषमाह यो हीत्यादि । ग्रहणीदोषजा [illegible]न वक्ष्यमाणलक्षणाश्चत्वारो ग्रहणीविकारा विशेषेण ग्रहणी[illegible]षशब्दवाच्या गृह्यन्ते । तथाग्निमान्द्याजीर्णादयश्च ग्रहण्याश्रिता रोगा गृह्यन्ते । अग्निमान्द्याजीर्णादयस्तु यद्यपि ग्रहण्याश्रितत्वे ग्रहणीरोगा एव तथापीह ग्रहणीरूपनाडीव्यापारवैपरीत्येन ये जायन्ते त एव मुख्यग्रहणीशब्दवाच्याश्चत्वारो रोगाः । यतोऽग्रश्च पक्वमामं वा इत्यादिना ग्रहणीगदसामान्यविशिष्टलक्षणविशिष्टमेव ग्रहणीगदं ग्रहणीप्राकृतव्यापारोपमर्देन जायमानं वक्ष्यति । वक्ष्यति च ग्रहण्यादुष्टमदुष्टं च रूपं "अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः । सा दुष्टा वहुशो भुक्तमाममेव विमुञ्चति" । न चेयं पक्वान्नविमोक्षलक्षणा दुष्टिः । अग्निदोषे आमादिजीर्णे शब्दे वा अनेन विशेषाभिधेयग्रहणीशब्दत्वं ग्रहण्याश्रितदोषजन्यग्रहणीगदमेवेहोच्यते । अग्निदोषाणां न विशेषाद्ग्रहणीगदत्वं अ-

तिसारे यद्यपि अपक्वान्नमुद्धनमस्ति तथापि तस्य भिन्नसंप्राप्तिकत्वात् तथा चिकित्सामेदात् ग्रहणीदोषान्यत्वं उक्तम् ॥ ३६—३८ ॥

**स लौल्याल्लभते शीघ्रं वक्ष्यन्तेऽतः परं तु ये ।**
**अभोजनादजीर्णातिभोजनाद्विषमाशनात् ॥ ३९ ॥**
**असात्म्यगुरुशीतातिरूक्षसंदुष्टभोजनात् ।**
**विरेकवमनस्नेहविभ्रमाद्व्याधिकर्षणात् ॥ ४० ॥**
**देशकालर्तुवैषम्याद्वेगानां च विधारणात् ।**
**दुष्यत्यग्निः स दुष्टोऽन्नं न तत्पचति लघ्वपि ॥४१ ॥**
**अपच्यमानं शुक्तत्वं यात्यन्नं विषतां च तत् ।**

एवं व्यवस्थिते सामान्येन ग्रहणीदोषजविकाराणां हेत्वादीन्याह—अभोजनादित्यादि। कालशब्देन च संवत्सरात्मककाल उच्यते । देशवैषम्यं देशव्यापत् । सा च जनपदोध्वंसनीये प्रोक्ता । ऋतुशब्देन तु शिशिरादिऋतुः कालवैषम्येण सर्वेषां वैषम्यं, सर्व एव ऋतवः पठ्यन्ते ऋतुवैषम्येण द्वे एक एवर्तुरितिविशेषः शुक्तत्वमिति आमतां विषरूपतामिति यथा वहुविकारकारितया भवति तद्रूपतां अनेन सर्व एवाजीर्णभेदाऽवरुद्धा ज्ञेया ये तन्त्रान्तरे "आमं विदग्धं विष्टब्धं कफपित्तानिलैः क्रमात् । अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः" ॥ ३९—४१ ॥

**तस्य लिङ्गमजीर्णस्य विष्टम्भोऽङ्गं च सीदति ॥४२॥**
**शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठकटिग्रहः ।**
**जृम्भाङ्गमर्दस्तृष्णा च ज्वरश्छर्दिः प्रवाहणम्॥४३॥**
**अरोचकोऽविपाकश्च घोरमन्नविषं च तत् ।**
**संसृज्यमानं पित्तेन दाहं तृष्णां मुखामयान् ॥४४॥**
**जनयत्यम्लपित्तं च पित्तजांश्चापरान्गदान् ।**
**यक्ष्मपीनसमेहादीन्कफजान्कफसङ्गतः ॥ ४५ ॥**

तस्येति सामान्याजीर्णस्य लक्षणं विष्टम्भ इत्यादि। विष्टम्भोऽप्रचलनरूपतयावस्थानम्। घोरं अन्नविषं च तत् पित्तेन संसृज्यमानं इत्यादिना पित्तदुष्टस्याजीर्णस्य लक्षणमाह । एतच्च पित्तादिसंसर्गकृतं लक्षणं, अजीर्णस्य कोष्ठान्तरगतत्वेन यक्ष्मादिविकारकरणे सामर्थ्योपलब्धेः । अम्लपित्तं चेति अम्लगुणोद्रिक्तं पित्तं। अस्य तन्त्रान्तरे लक्षणमुक्तं "अविपाकक्लमोत्क्लेदतिक्ताम्लोद्गारगौरवैः । हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं विनिर्दिशेदिति" । यक्ष्मणस्त्रिदोषजत्वेऽपि स्रोतोऽवरोधे कफव्यापारप्राधान्यात् इह कफजत्वमुक्तम् ॥ ४२—४५ ॥

**करोति वातसंसृष्टं वातजांश्च गदान्बहून् ।**
**मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतम् ॥ ४६ ॥**
**रसादिभिश्च संसृष्टं कुर्याद्रोगान्रसादिजान् ।**
**विषमो धातुवैषम्यं करोति विषमं पचन् ॥ ४७ ॥**
**तीक्ष्णो मन्देन्धनो धातून्विशोषयति पावकः ।**

किट्टधातुयोगेन रसशेषान्नस्य गदानाह—मूत्ररोगानित्यादि। रसादिजानित्यत्र ये रसादिजाश्चारुच्यादय उक्तास्ते भवन्तीति ज्ञेयम् । अजीर्णलक्षणमभिधाय अग्निदोषलक्षणमाह विषमइत्यादि । तीक्ष्णाग्निकार्यमाह तीक्ष्णमित्यादि । अत्र मन्देन्धन इत्यनेन तीक्ष्णोपि यदि शुचीन्धनो भवति तदा धातुपोषणं भवतीति दर्शयति ॥ ४६ ॥ ४७ ॥

**युक्तं भुक्तवतो युक्तो धातुसाम्यं समं पचन् ॥४८॥**

अग्निप्रसंगात्समाग्नेः कार्यमाह युक्तमित्यादि । युक्त इति समः । युक्तमन्नं पञ्चधातुसाम्यं करोति इत्यर्थः । समशब्देन समानो वायुः अग्निसहायो गृह्यते। किंवा युक्तवायुतया धातुसाम्यं करोति युक्तशब्देन च कफपित्तसाम्यं अग्नौ गृह्यते । यतः समःसमैरिति वचनेन दोषाणां समत्वेनैव समाग्नित्वमुक्तं ॥ ४८ ॥

**दुर्वलो विदहत्यन्नं तद्यात्यूर्ध्वमधोऽपि वा ।**
**अधश्च पक्वमामं वा प्रवृत्तं ग्रहणीगदः ॥ ४९ ॥**
**उच्यते सर्वमेवान्नं प्रायो ह्यस्य विदह्यते ।**
**अतिसृष्टं विवद्धं वा द्रवं तदुपवेश्यते ॥ ५० ॥**
**तृष्णारोचकवैरस्यप्रसेकतमकान्वितः ।**
**शूनपादकरः सास्थिपर्वरुक् छर्दनं ज्वरः ॥ ५१ ॥**
**लोहामगन्धिस्तिक्ताम्ल उद्गारश्चास्य जायते ।**
**पूर्वरूपं तु तस्येदं तृष्णालस्यं वलक्षयः ॥ ५२ ॥**
**विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवम् ।**

मन्दाग्निव्यापारमाह—दुर्वल इत्यादि । युक्तविकारेषु प्रधानत्वेन अध्यायप्रकृतं ग्रहणीदोषविकारं निर्धारयन्नाह अधश्चेत्यादि । पक्वमामं वेति वाशब्दः समुच्चये । तेन किंचित्पक्वं किंचिदपक्वं । कुतः पक्वापक्वं भवतीत्याह—सर्वमेवान्नं प्रायो ह्यस्य विदह्यते इति पक्वापक्वं भवति अतिसृष्टमिति विमुक्तं तम एव तमकः । पूर्वरूपे विदाहोऽन्नस्येति विशिष्टो दाहो विदाहः ॥ ४९—५२ ॥

**अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ॥ ५३ ॥**
**नाभेरुपरि सा ह्यग्निवलोपस्तम्भबृंहिता ।**
**अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः ॥ ५४ ॥**
**दुर्वलाग्निबलाद्दुष्टाद्याममेव विमुञ्चति ।**
**वातात्पित्तात्कफात्सर्वाद्ग्रहणीदोष उच्यते ॥ ५५ ॥**
**हेतुं लिङ्गं चिकित्सां च शृणु तस्य पृथक् पृथक् ।**
**कटुतिक्तकषायातिरूक्षशीतलभोजनैः ॥ ५६ ॥**
**प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ।**
**करोति कुपितो मन्दमग्निं संछाद्य मारुतः ॥ ५७ ॥**
**तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ।**
**कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ५८**
**पार्श्वोरुवङ्क्षणग्रीवारुजोऽभीक्ष्णं विसूचिका ।**
**हृत्पीडा कार्श्यदौर्वल्यं वैरस्यं परिकर्तिका ॥ ५९ ॥**

गृद्धिः सर्वरसानां च मनसः सदनं तथा ।
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ६०
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ।
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ ६१ ॥
पुनःपुनः सृजेद्वर्चः कासश्वासान्वितोऽनिलात् ।
कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ॥ ६२ ॥
अग्निमाप्लावयद्धन्ति जलं तप्तमिवानलम् ।
सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ॥६३॥
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडार्दितः ।
गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ॥ ६४ ॥
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ।
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ॥ ६५ ॥
आस्योपदेहमाधुर्यकासष्ठीवनपीनसाः ।
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ ६६ ॥
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ।
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥ ६७ ॥
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ।
यश्चाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः ॥ ६८ ॥

संप्रति ग्रहणीदोषस्य सुखप्रतिपत्त्यर्थं ग्रहण्याः स्वरूपं प्रकृतं च कर्म आह—अग्न्यधिष्ठानं अग्नेराश्रय इत्यर्थः । ग्रहणीसंज्ञानिमित्तमाह अन्नस्येत्यादि । ग्रहणादिति धारणात् । नाभेरुपर्यन्नस्य धारणादित्यर्थः । किंवा नाभेरुपरि अग्नेरूर्ध्वज्वलनेन उपस्तम्भिता उपबृंहिता सति पक्वं अन्नं धारयति पक्वं च पार्श्वतः सृजति इति वामपार्श्वतः सृजति । यतः ग्रहणीगुदौ वामपार्श्वाश्रयौ तेन वामे च पार्श्वे पक्वं सृजतीत्युक्तं । उपस्तम्भिता इति । अग्निना पित्तव्यापारकरणेन अनुकूलिता उपबृंहितेति अग्निना बृंहणव्यापारकरणेन सशक्तीकृता किंवा उपस्तम्भत्वेन उपबृंहिता अत्र पक्षे उपस्तम्भसाधारण्यं ग्रहण्याह—ग्रहण्याः प्राकृतं कर्म अभिधाय वैकृतं कर्म आह—दुर्बलेत्यादि दुर्बलाग्निश्च अबलाश्चेति किंवा दुर्बलं अग्निबलं यस्याः सा दुर्बलाग्निबला । दुष्टादिति दोषदुष्टात् । आमं विमुञ्चतीति अपक्वमेवान्नं विमुञ्चति । पूर्वरूपे पक्वमामं विमुञ्चतीत्यनेन विदग्धरूपमाममेवोक्तम् । इह त्वामं नियमेन विमुञ्चति इति न विरोधः । वातपित्तकफसंनिपातजान् ग्रहणीभेदानाह—वातादित्यादि । सर्वादिति सन्निपातात् शुक्तमिवान्नस्य पाकः शुक्तपाकः । गृद्धिः सर्वरसानामिति सप्तम्यर्थे षष्ठी जीर्णे जीर्यति अन्न इति शेषः । गुल्मादिशङ्कित्वं गुल्मादिसदृशपीडायुक्तत्वेन भवति । पैत्तिके पित्तेनाग्निहननं क्रियते इति दर्शयन्नाह । उष्णस्यापि हि द्रवतया अग्निनिर्वापणे दृष्टान्तमाह—जलं तप्तमित्यादि । गुर्वित्यादिना कफजग्रहणीमाह—दौर्बल्यं बलहानिः ॥ ५३—६८ ॥

तं चापि ग्रहणीदोषं समवर्जं प्रचक्ष्महे ।
पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ॥ ६९ ॥
त्रिदोषं निर्दिशेत्तेषां भेषजं शृणु [illegible]
ग्रहणीमाश्रितं दोषं विदग्धाहार[illegible]
सविष्टम्भप्रसेकार्तिविदाहारुचिगौ[illegible]
आमलिङ्गान्वितं दृष्ट्वा सुखोष्णेनाम्बु[illegible]
फलानां वा कषायेण पिप्पलीसर्षपै[illegible]
लीनं पक्वाशयस्थं वाप्यामं स्राव्यं सदी[illegible]
शरीरानुगते सामे रसे लङ्घनपाचनम् ।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युत[illegible]
दद्यात् पेयादिलघ्वन्नं पुनर्योगांश्च दीपना[illegible]
ज्ञात्वा तु परिपक्वामं मारुतग्रहणीगदम् ॥ [illegible]
दीपनीययुतं सर्पिः पाययेताल्पशो भिषक् ।
किंचित्सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ॥७५॥
द्वित्रीण्यहानि सस्नेहं स्नेहाभ्यक्तं निरूहयेत् ।
तत एरण्डतैलेन सर्पिषा तैल्वकेन वा ॥ ७६ ॥
सक्षारेणानिले शान्ते स्रस्तदोषं विरेचयेत् ।
शुद्धं रूक्षाशयं बद्धवर्चसं चानुवासयेत् ।
दीपनीयाम्लवातघ्नसिद्धतैलेन मात्रया ॥ ७७ ॥
निरूढश्च विरिक्तश्च सम्यक् चैवानुवासितः ॥
लघ्वन्नप्रतिसंभुक्तः सर्पिरभ्यासयेत्पुनः ॥ ७८ ॥"

यश्चाग्निरित्यादिश्लोकं केचित् वैशेषिकग्रहणीदोषव्यतिरिक्तदोषत्रयजग्रहणीरोगान्तर्निवेशनप्रसंगत इति दर्शयति इति कृत्वा अनार्षं वदन्ति किंतु तं चापीति पदेनाग्निमान्द्यादीनां प्राकृतानां सामान्याद्ग्रहणीदोषाबाधे सति न किंचिद्विरोधं पश्यामः सामान्यग्रहणीदोषेऽपि अग्निमान्द्यादयो उक्ता इति दर्शितमेव । समवर्जमिति समप्रकृतिपुरुषाग्निवर्जम् । ग्रहणीमाश्रितमित्यादौ दोषमिति सामान्यवचनात् वातादीनां त्रयाणामपि ग्रहणम् । आमस्यापक्वस्य लिङ्गैरन्वितमिति आमलिङ्गान्वितम् । फलानामिति मदनफलानां लीनमित्यनुत्क्लिष्टं । पक्वाशयस्थमिति अधोगतत्वेन पक्वाशयसमीपगतं । स्राव्यमिति विरेचनीयम् । सदीपनैरिति दीपनद्रव्यसंयुक्तैर्विरेचनप्रयोगैः । शरीरानुगते इति शरीरव्यापके । सामे रसे इति अपक्वे रसे । आमश्चात्रापक्वरूप एव इष्टः आहाररसस्य रससंबन्धेन शरीरव्यापकत्वात् । लङ्घनमनशनं, पाचनं यवाग्वादि, विशुद्धामाशये इत्यत्र विशुद्धिर्हि विरेचनलङ्घनैर्यथायोग्यतया ज्ञेया, दीपनीययुतमिति षड्विरेचनशताश्रितीयोक्तदीपनीयग्रहणम् । स्नेहेनाभ्यक्तमिति स्नेहाभ्यक्तम् । स्रस्तदोषमिति निरूहेण स्रस्तदोषं ॥ ६९—७८ ॥

द्वे पञ्चमूले सरलं देवदारु सनागरम् ।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥७९॥
शणबीजं यवान्कोलान्कुलत्थान्सुरभींस्तथा ।
पाचयेदारनालेन दध्ना सौवीरकेण वा ॥ ८० ॥
चतुर्भागावशेषेण पचेत्तेन घृताढकम् ।

स्वर्जिकायावशूकाख्यौ क्षारौ दत्त्वा च युक्तितः ८१
सैन्धवौद्भिदसामुद्रविडानां रोमकस्य च।
ससौवर्चलपाक्यानां भागान्द्विपलिकान्पृथक् ८२
विनीय चूर्णितात्सिद्धात्ततो द्वे द्वे पले पिबेत्।
करोत्यग्निं बलं वर्णं वातघ्नं भुक्तपाचनम्॥ ८३॥
इति दशमूलाद्यं घृतम्।

द्वे पञ्चमूले इत्यादौ सुरभिस्वरसः जलस्थानीये आरनालादिक्वाथ्यं च मिलित्वा द्रोणं मानं ग्राह्यम्। क्षारौ च दत्वा युक्तित इति अनेन क्षारयोरनल्पमानत्वमुच्यते किंतु प्रक्षेप्यान्यतमलवणमानेन पृथक् क्षारौ देयौ। युक्तित इत्यनेन योग्ये काले क्षारयोगमाह सच योग्यकालः घृतावतारणकाल एव यदाह जतूकर्णः। दशमूलं पञ्चकोलं कुलत्थं सुरभिं यवम्। शणवीजं च साधयेत्। दध्ना सौवीरकेणैव तेन पक्के घृताढके। द्वौ क्षारौ सप्तलवणं दापयेत् द्विपलान्वितम्। औद्भिदमुत्कारि उत्कारिकालवणं। रोमकं समाभवं पाक्यं पाकजं ॥ ७९—८३ ॥

त्र्यूषणत्रिफलाकल्के विल्वमात्रे गुडात्पले।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत्॥८४॥
इति त्र्यूषणाद्यं घृतम्।

अष्टपले घृते विल्वमात्रे इति पलमाने कल्के अष्टपलमानमेवात्र सर्पिः पक्तव्यम्॥ ८४॥

पञ्चमूलाभयाव्योषविडङ्गशटिभिर्घृतम्।
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च॥ ८५॥
शुष्कमूलककोलाम्बुचुक्रिकादाडिमस्य च।
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः॥ ८६॥
काञ्जिकेन च तत्पक्कमग्निदीप्तिकरं परम्।
शूलगुल्मोदरश्वासकासानिलकफापहम्॥ ८७॥
सबीजपूरकरसं सिद्धं वा पाययेद्घृतम्।
सिद्धमभ्यञ्जनार्थे च तैलमेतैः प्रयोजयेत्॥ ८८॥
एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना।
वाते श्लेष्मावृते सामे कफे वा वायुनोद्धते।
दद्याच्चूर्णं पाचनार्थमग्निसन्दीपनं परम्॥ ८९॥
इति पञ्चमूलाद्यं घृतं चूर्णं च।

महर्षिवचनेन फलदायित्वात्। पञ्चमूलाद्ये शुक्तादित्रयोदशद्रवाणां प्रत्येकं स्नेहसमत्वम्। सबीजपूरकरसमित्यत्रापि पञ्चमूल्यादीनि कल्कत्वेनेच्छन्ति। किंवा पूर्वमेव घृतं बीजपूररससंयुक्तं पेयमित्यर्थः। तैलमित्यादौ एतैः पञ्चमूल्यादिभिः सिद्धं तैलं तथा एतेषामेव कल्कोक्तानां पञ्चमूल्यादीनां चूर्णं वातश्लेष्मावृते ग्रहणीगदे तथा सामे ग्रहणीगदे केचित् सामे पुरीष इति वदन्ति आमं च अनेकविधमाह यदुच्यते 'आमं अन्नरसं केचित् केचित्तु मलसंचयं। प्रथमं दोषदुष्टिं च केचिदामं प्रचक्षते'। भोजोऽप्याह—'आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः। आद्य आहारधातुर्यः स आम इति संज्ञितः'। सेनोऽप्याह—'एवमामाशयेऽप्यन्नं बहुसम्यङ्न जीर्यति। चीयमानं ......कालेनामलमाप्नुयात्' इत्यादि। तदिहापि तद्वचनप्रामाण्याद्व्यवस्था कर्तव्या॥ ८५—८९॥

मज्जत्यामाद्गुरुत्वाद्विट् पक्का तूत्प्लवते जले।
विनातिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात्॥ ९०॥
परीक्ष्यैवं पुरा सामं निरामं वा सदोषिणम्।
विधिनोपाचरेत्सम्यक् पाचनेनेतरेण वा॥ ९१॥
चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषं हिङ्ग्वजमोदां च चव्यं चैकत्र चूर्णयेत्॥९२॥

सामनिरामग्रहणीगदज्ञानार्थं सामनिरामविड्लक्षणमाह—मज्जतीत्यादि। आमात् गुरुत्वादिति आमाहितगुरुत्वात्। पक्केति निरामद्वयोरपि आमपक्कलक्षणयोः अपवादमाह विनातिद्रवे इत्यादि। अतिद्रवत्वात् आमापि प्लवते। अतिसंहतत्वात्पक्कापि मज्जति। शैत्यश्लेष्मप्रदूषणात् पक्कापि निमज्जति। ननु विष्टम्भः प्रसेकार्तीत्यत्रसामस्य लक्षणमुक्तम्। किमनेन सामतालक्षणेन पुनरुक्तेन। उच्यते वातकफाधिकारात् तदुक्तं इदं च विड्ज्ञानार्थमुक्तम्। इति विशेषः। परीक्ष्येत्यादौ निरामं वा सदोषिणमिति। आमदोषशब्देन ग्रहणीदोषो नान्यत्राभिप्रेतः। चित्रकेत्यादौ लवणानि चेत्यत्र कपिञ्जलाधिकरणन्यायेन लवणत्रयमिच्छन्ति किंतु अनियते स न्यायो भवति इह तु पञ्चलवणानां प्राधान्येन दीर्घंजीवितीये निर्दिष्टत्वात् पञ्चलवणस्यैव स्वशक्त्योत्पादनत्वात्पञ्चैव लवणानि ग्राह्याणि॥ ९०—९२॥

गुडिका मातुलुङ्गस्य दाडिमस्य रसेन वा।
कृता विपाचयन्त्यामं दीपयन्त्याशु चालनम्॥९३॥
इति चित्रकाद्या गुडिका।

नागरातिविषामुस्तक्वाथः स्यादामपाचनः।
मुस्तान्तकल्कः पथ्या वा नागरं चोष्णवारिणा॥९४॥
देवदारुवचामुस्तनागरातिविषाभयाः।
वारुण्यामासुतास्तोये कोष्णे वा लवणं पिबेत्॥९५॥
पिबेत्सपरिकर्तामे मले वा दाडिमाम्बुना।
विडेन लवणं पिष्टं विल्वं चित्रकनागरम्॥ ९६॥
वर्चस्यामे सशूले च पिबेद्वा दाडिमाम्बुना॥ ९७॥
सामे वा सकफे वाते कोष्ठशूलकरे पिबेत्।
कलिङ्गहिङ्ग्वतिविषावचासौवर्चलाभयाः॥ ९८॥
छर्द्यर्शोग्रन्थिशूलेषु पिबेदुष्णेन वारिणा।
पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम्॥ ९९॥
अभयां पिप्पलीमूलं वचां कटुकरोहिणीम्।
पाठां वत्सकबीजानि चित्रकं विश्वभेषजम्॥१००॥
पिबेन्निष्क्वाथ्य चूर्णानि कृत्वा कोष्णेन वारिणा।

पित्तश्लेष्माभिभूतायां ग्रहण्यां शूलनुद्धितम् ॥१०१॥
सामे सातिविषाव्योपलवणक्षारहिङ्गुवत् ।
निःक्वाथ्य पाययेच्चूर्णं कृत्वा वा कोष्णवारिणा१०२
पिप्पलीं नागरं पाठां शारिवां बृहतीद्वयम् ।
चित्रकं कौटजं बीजं लवणान्यथ पञ्च च ॥ १०३ ॥
तच्चूर्णं सयवक्षारं दध्युष्णाम्बुसुरादिभिः ।
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं नरः ॥ १०४ ॥

मुस्तान्तः कल्केति पश्चादुक्तनागरादिकल्क इत्यर्थः । चूर्णानि कृत्वा पिप्पलीमूलाद्येवमादीनि पिबेदित्यनुवर्तते । सामे दोषे सति पिप्पलीमूलादिषु अतिविषादि प्रक्षिप्य चूर्णं कर्तव्यमित्यर्थः । सुरादिभिरित्यत्र सुराशब्देन काञ्जिकसौवीरादिग्रहणम् ॥ ९३—१०४ ॥

मरिचः कुञ्चिकाम्बष्ठावृक्षाम्लाः कुडवाः पृथक् ।
पलानि दश चाम्लस्य वेतसस्य पलार्धिकम् ॥१०५॥
सौवर्चलं विडं पाक्यं यवक्षारः ससैन्धवः ।
शटीपुष्करमूलानि हिङ्गु हिङ्गुशिराटिका ॥ १०६ ॥
तत्सर्वमेकतः सूक्ष्मं चूर्णं कृत्वा प्रयोजयेत् ।
हितं वाताभिभूतायां ग्रहण्यामरुचौ तथा ॥१०७॥
इति मरिचाद्यं चूर्णम् ।

चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम् ।
लवणानां च चत्वारि शर्करायाः पलाष्टकम् ॥१०८॥
संचूर्ण्य शाकसूपान्नरागादिष्ववचारयेत् ।
कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयगुल्मनुत् १०९
चव्यत्वक्पिप्पलीमूलधातकीव्योषचित्रकम् ।
कपित्थं बिल्वमम्बष्ठां शाल्मलं हस्तिपिप्पलीम् ११०
शिलोद्भेदं तथाजाजीं पिष्ट्वा बदरभागिकम् ।
परिभर्ज्य घृते दध्ना यवागूं साधयेद्भिषक् ॥ १११ ॥
रसैः कपित्थचुक्रिका वृक्षाम्लैर्दाडिमस्य च ।
सर्वातिसारमन्दाग्निगुल्मार्शःप्लीहनाशिनी ॥ ११२ ॥
इति पञ्चप्रकारयवागूः ।

चतुर्णां प्रस्थमम्लानामित्यत्र चतुरम्लं वृक्षाम्लाम्लवेतसदाडिमबदररूपमाहुः । अन्ये तु चव्यत्वगित्यादिप्रयोगवक्ष्यमाणकपित्थचुक्रिकावृक्षाम्लदाडिमानां गणमाहुः । तत्रान्तरे तु "वृक्षाम्लं मातुलुङ्गाम्लं बदरं चाम्लवेतसं । चतुरम्लमिदं प्रोक्तं पञ्चाम्लं तु सदाडिमम्" इत्युक्तम् । त्र्यूषणाच्च पलत्रयमिति मिलितात् पलत्रयम् । रागः कपित्थादिद्रव्यकृतो व्यञ्जनविशेषः । चव्येत्यादौ शाल्मलं शाल्मलीवेष्टकं । शिलोद्भवं शैलजं चुक्रिका चाङ्गेरी ॥ १०५—११२ ॥

पञ्चकोलकयूषश्च मूलकानां च सोषणः ।
स्निग्धो दाडिमतक्राम्लो जाङ्गलः संस्कृतो रसः ११३
क्रव्यादस्वरसः शस्तो भोजनार्थं सदीपनः ।
तक्रारनालमद्यानि पानार्थेऽरिष्ट एव च ॥ ११४ ॥

तक्रं तु ग्रहणीदोषे दीपनग्राहि लाघवात् ।
श्रेष्ठं मधुरपाकित्वान्न च पित्तं प्रकोपयेत् ॥ ११५ ॥
कषायोष्णविकासित्वाद्रौक्ष्याच्चैव कफे मतम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥
तस्मात् तक्रप्रयोगा ये जठराणां तथार्शसाम् ।
विहिता ग्रहणीदोषे सर्वशस्तान् प्रयोजयेत् ॥११७॥
यमान्यामलके पथ्या मरिचं त्रिपलांशिकम् ।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् ॥ ११८ ॥
तक्रकं साप्लुतं जातं तक्रारिष्टं पिबेन्नरः ।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम् ॥ ११९ ॥
इति तक्रारिष्टः ।

सोषण इति समरिचः । ग्रहणीत्यादिना तक्रगुणविधारणं मधुरपाकित्वात् न च पित्तप्रकोपणम् अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति । सद्यस्कं अविदाहीति सद्यो मथितमेव तक्रं पच्यमानावस्थायां न विदाहकृद्भवति । किंचित्कालस्थितं तु विदाही भवत्येव । यमानीत्यादौ । कंस इति आढकं, जातमिति अम्लरसतया जातम् ॥ ११३—११९ ॥

स्वस्थानगतमुत् क्लिष्टमग्निनिर्वापकं भिषक् ।
पित्तं ज्ञात्वा विरेकेण निर्हरेद्वमनेन वा ॥ १२० ॥
अविदाहिभिरन्नैश्च लघुभिस्तिक्तसंयुतैः ।
जाङ्गलानां रसैर्यूषैर्मुद्गादीनां खडैरपि ॥ १२१ ॥
दाडिमाम्लैः ससर्पिष्कैर्दीपनग्राहिसंयुतैः ।
तस्याग्निं दीपयेच्चूर्णैः सर्पिर्भिर्वा सतिक्तकैः ॥ १२२ ॥
चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम् ।
षड्ग्रन्थाशारिवास्फोतासप्तपर्णाटरूषकान् ॥१२३॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनान् ।
कटुकारोहिणीं मुस्तं निम्बं च द्विपलांशिकम् ॥१२४॥
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात्पचेत् ।
किराततिक्तेन्द्रयवबीरामागधिकोत्पलैः ॥ १२५ ॥
कल्कैरक्षसमैः पेयं तत् पित्तग्रहणीगदे ।
तिक्तकं यद्घृतं चोक्तं कौष्ठिके तच्च दापयेत् ॥१२६॥
इति चन्दनाद्यं घृतम् ।

नागरातिविषे मुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं बिल्वं पाठां कटुकरोहिणीम् १२७
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥ १२८ ॥
अर्शांसि च गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ १२९ ॥
इति नागराद्यं चूर्णम् ।

वमनेन वेत्यूर्ध्वगपित्तापेक्षया ज्ञेयम् । सर्पिर्भिश्चापि तिक्तकैरित्यत्र व्याख्यार्थं बहुलवचनं किंवा कुष्ठोक्तं तिक्तघृतद्वयं अन्यच्च तिक्तसाधितं घृतमिति बहुवचनं साधु । कुटन्नटं कै-

वर्तमुस्तकम्, षड्ग्रन्था वचा आस्फोता अस्फुरमल्लिका कपीतनो गन्धमुण्ड इति ख्यातः । नागराद्ये सक्षौद्रमिति मधुप्रक्षेपयुक्तम् । तण्डुलाम्बुनेति तण्डुलधावनाम्बुना अन्ये तु तण्डुलाद्द्विगुणमम्लं तण्डुलेन समं चिरं स्थितं तत्तण्डुलाम्बु वदन्ति । कृष्णात्रेयेण पूजितलोपदर्शितं अस्य सिद्धयोगत्वं दृश्यते । कृष्णात्रेयौ पुनर्वसुभिन्नाविति वोध्यम्॥१२०–१२९॥

भूनिम्बं कटुकं व्योषं मुस्तमिन्द्रयवान् समान् ।
द्वौ चित्रकाद्वत्सकत्वग् भागान् षोडश चूर्णयेत् १३०
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ॥१३१॥

इति भूनिम्बाद्यं चूर्णम् ।

भूनिम्बाद्ये गुडयुतं शीताम्बु गुडश्चात्र माधुर्यापत्तिमात्रो ज्ञेयः ॥ १३० ॥ १३१ ॥

वचामतिविषां पाठां सप्तपर्णं रसाञ्जनम् ।
श्योनाकोदीच्यकट्वङ्गवत्सकत्वग्दुरालभाः ॥१३२॥
दार्वीं पर्पटकं मूर्वां यमानीं मधु शिग्रुकम् ।
पटोलपत्रं सिद्धार्थान् यूथिकं जातिपल्लवान् ॥१३३॥
जम्ब्वाम्रविल्वमध्यानि निम्बशाकफलानि च ।
तद्रोगशममन्विच्छन् भूनिम्बाद्येन योजयेत् ॥१३४॥
किराततिक्तं षड्ग्रन्था त्रायमाणा कटुत्रिकम् ।
चन्दनं पद्मकोशीरं दार्वी त्वक् कटुरोहिणी ॥१३५॥
कुटजत्वक् फलं मुस्तं यमानी देवदारु च ।
पटोलनिम्बपत्रैलासौराष्ट्र्यातिविषात्वचः ॥ १३६ ॥
मधुशिग्रोश्च वीजानि मूर्वापर्पटकास्तथा ।
तच्चूर्णं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥ १३७ ॥
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान् ।
कामलां सन्निपातं च मुखरोगांश्च नाशयेत् ॥१३८॥

इति किराताद्यं चूर्णम् ।

वचामित्यादौ स्योनाककट्वङ्गशब्दाभ्यां द्वावपि स्योनाको गृह्यते तद्रोगशमनमन्विच्छन्निति भूनिम्बाद्युक्तग्रहणीदोषादिरोगशान्तिं काङ्क्षन् भूनिम्बाद्येनेति भूनिम्बाद्युक्तद्रव्यगणेन यथोक्तमानेन योजयेत् वचादीनि । अपरे तु भूनिम्बाद्येनेति वचनेन भूनिम्बाद्युक्तगुडशीताम्बुपेयतामतिदिशतीति वदन्ति ॥ १३२—१३८ ॥

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि ।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्धयेत् ॥ १३९ ॥
पलाशं चित्रकं चव्यं मातुलुङ्गं हरीतकी ।
पिप्पलीं पिप्पलीमूलं पाठां नागरधान्यकम् १४०
कार्षिकाण्युदकप्रस्थे पक्त्वा पादावशेषिकम् ।
पानीयार्थं प्रयुञ्जीत यवागूं तैश्च साधिताम् ॥१४१॥
शुष्कमूलकयूषेण कौलत्थेनाथवा पुनः
कट्वम्लक्षारपटुना लघून्यन्नानि भोजयेत् ॥ १४२ ॥
अम्लं चानुपिवेत् तक्रं तक्रारिष्टमथापि वा ।
मदिरां मध्वरिष्टान् वा निगदं शीधुमेव वा ॥१४३॥
द्रोणं मधूकपुष्पाणां विडङ्गानां ततोऽर्धतः ।
चित्रकस्य ततोऽर्धं स्यात् तथा भल्लातकाढकम् ॥
मञ्जिष्ठात्रिपलं चैव त्रिद्रोणेऽपां विपाचयेत् ।
द्रोणशेषे तु तच्छीतं मध्वर्द्धाढकसंयुतम् ॥ १४५ ॥
एलामृणालागुरुभिश्चन्दनेन च रूपिते ।
कुम्भे मासस्थितं जातमासवं तं प्रयोजयेत् ॥१४६॥
ग्रहणीं दीपयत्येष वृंहणः कफपित्तजित् ।
शोथं कुष्ठं किलासं च प्रमेहांश्च प्रणाशयेत् ॥१४७॥

इति मध्वासवः ।

सतु पानाय कट्वम्लक्षारपटुनेति कट्वादियोगात्········ कफग्रहण्यां सद्यस्कमेव यद्यपि कषायत्वात्तक्रमुचितं तथापि अग्निदीपनतया अम्लमेव तक्रं अम्लं चानुपिवेदित्यनेनैवोक्तम् । निगदं सीधुमिति निर्दोषं सीधुं ॥ १३९—१४७ ॥

मधूकपुष्पस्वरसं शृतमर्द्धक्षयीकृतम् ।
क्षौद्रपादयुतं शीतं पूर्ववत् सन्निधापयेत् ।
तं पिवन् ग्रहणीदोषान् जयेत्सर्वान् हिताशनः १४८

इति आसवः ।

तद्वद्द्राक्षेक्षुखर्जूरस्वरसानासुतान् पिवेत् ॥ १४९ ॥

इति द्वितीयासवः ।

प्रस्थौ दुरालभाया द्वौ प्रस्थमामलकस्य च ।
मुष्टी चित्रकदन्त्योर्द्वे प्रत्यग्रं चाभयाशतम् ॥ १५० ॥
चतुर्द्रोणेऽम्भसः पक्त्वा शीतं द्रोणावशेषितम् ।
सगुडद्विशतं पूतं मधुनः कुडवायुतम् ॥ १५१ ॥
तद्वत् प्रियङ्गोः पिप्पल्या विडङ्गानां च चूर्णितैः ।
कुडवैर्घृतकुम्भस्थं पक्षाज्जातं ततः पिवेत् ॥ १५२ ॥
ग्रहणीपाण्डुरोगार्शःकुष्ठवीसर्पमेहनुत् ।
स्वरवर्णकरश्चैष रक्तपित्तकफापहः ॥ १५३ ॥

इति दुरालभासवः ।

हरिद्रा पञ्चमूले द्वे वीरकर्षभजीवकम् ।
एषां पञ्च पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
द्रोणशेषे रसे पूते गुडस्य द्विशतं भिषक् ।
चूर्णितान् कुडवार्द्धांशान् प्रक्षिपेच्च समाक्षिकान् ॥
प्रियङ्गुं मुस्तमञ्जिष्ठाविडङ्गमधुकप्लवान् ।
लोध्रं शावरकं चैव मासार्धं स्थापयेत्ततः ॥१५६॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तजित् ।
आनाहकफहृद्रोगपाण्डुरोगाङ्गसादनुत् ॥ १५७ ॥

इति मूलासवः ।

अर्धक्षयीकृतमिति पाकादर्धावशिष्टं कृतं पूर्ववत्संनिधापयेदिति एलादिलिप्ते कुम्भे संस्थापयेत् । तद्वदिति एलादिलिप्तं घृतकुम्भस्थान् चित्रकदन्त्योर्मुष्टिरिति मिलित्वा द्विपलम् ॥ १४८—१५७ ॥

प्रास्थिकं पिप्पलीं पिष्ट्वा गुडं मध्यं विभीतकात् ।
उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत् ॥ १५८ ॥
तस्मात्पलं सुजातात्तु सलिलाञ्जलिसंयुतम् ।
पिबेत्पिण्डासवो ह्येष रोगानीकविनाशनः ॥१५९॥
स्वस्थोऽप्येनं पिबेन्मासं नरः सिद्धं रसायनम् ।
इच्छंस्तेषामनुत्पत्तिं रोगाणां ये प्रकीर्तिताः ॥१६०॥

इति पिण्डासवः ।

नवे पिप्पलि मध्वाक्ते कलसेऽगुरुधूपिते ।
मध्वाढकं जलसमं चूर्णानीमानि दापयेत् ॥१६१॥
कुडवार्धं विडङ्गानां पिप्पल्याः कुडवं तथा ।
चतुर्थकांशान् त्वक्क्षीर्याः केशरं मरिचानि च १६२
त्वगेलापत्रकशटीक्रमुकातिविषाघनम् ।
हरेण्वेणुकतेजोह्वापिप्पलीमूलचित्रकान् ॥ १६३ ॥
कार्षिकांस्तान स्थितं मासमत ऊर्ध्वं प्रयोजयेत् ।
मन्दं सन्दीपयत्यग्निं करोति विषमं समम् ॥ १६४॥
हृत्पाण्डुग्रहणीरोगकुष्ठार्शःश्वयथुज्वरान् ।
वातश्लेष्मामयांश्चान्यान्मध्वरिष्टो व्यपोहति ॥१६५॥

इति मध्वरिष्टः ।

समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च ।
मातुलुङ्गाभयारास्नाशटीमरिचनागरम् ॥ १६६ ॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्धनम् ॥ १६७ ॥
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ।
गौल्मिके षट्पलं प्रोक्तं भल्लातकघृतं च यत् ॥१६८॥

प्रास्थिकमित्यादौ पिप्पलीगुडविभीतकमज्जा प्रत्येकं प्रस्थः । नवेत्यादौ त्वगेलादीनां कार्षिकत्वं । समूलां पिप्पलीमिति पिप्पलीं पिप्पलीमूलं भल्लातककृतं च गुल्मोक्तमिति ज्ञेयम् । विडं कालोत्थलवणमिति विडलवणं काललवणं तुषलवणं चेति । खण्डीकृतानीति खण्डं खण्डं कृतानि । अनुपीतरसे इति निपीते रसे । पाणितलमिति कर्षः । मधुराशनलमिह क्षारप्रयोगयौगिकत्वाज्ज्ञेयं । गोमूत्रेण समांशानीति गोमूत्रेण मिलितं चूर्णं तुल्यं अस्य च पानं पूर्वक्षारवत्सर्पिषा ज्ञेयम् ॥ १५८—१६८ ॥

विडं कालोत्थलवणं सर्जिकायवशूकजम् ।
सप्तला कण्टकारी च चित्रकश्चेति दाहयेत् ॥१६९॥
सप्तकृत्वः सुतस्यास्य क्षारस्य ह्याढकेन तु ।
आढकं सर्पिषः पक्त्वा पिबेदग्निविवर्धनम् ॥१७०॥

इति क्षारघृतम् ।

समूलां पिप्पलीं पाठां चव्येन्द्रयवनागरम् ।
चित्रकातिविषे हिङ्गु श्वदंष्ट्रां कटुरोहिणीम् ॥१७१॥
वचां च कार्षिकं पञ्च लवणानां पलानि च ।
दध्नः प्रस्थद्वये तैलसर्पिषोः कुडवद्वये ॥ १७२ ॥
चूर्णीकृतानि निष्क्वाथ्य शनैरन्तर्गते रसे ।
अन्तर्धूमं ततो दग्ध्वा चूर्णं कृत्वा घृताप्लुतम् १७३
पिबेत्पाणितलं तस्मिञ्जीर्णे स्यान्मधुराशनः ।
वातश्लेष्मामयान्सर्वान्हन्याद्विषगरांश्च सः ॥१७४॥
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रिकम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ १७५ ॥
स क्षारः सर्पिषा पीतो भोज्यो वाप्यवचूर्णितः ।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्तशूलनुत् ॥ १७६ ॥
दुरालभां करञ्जौ द्वौ सप्तपर्णं सवत्सकम् ।
षड्ग्रन्थां मदनं मूर्वां पाठामारग्वधं तथा ॥१७७॥
गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत् ।
दग्ध्वा च तं पिबेत्क्षारं ग्रहणीबलवर्धनम् ॥ १७८ ॥

इति क्षारः ।

भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्धनः ॥ १७९ ॥

इति द्वितीयक्षारः ।

द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ।
मुस्तं च वस्तमूत्रेण सिद्धः क्षारोऽग्निवर्धनः ॥१८०॥

इति तृतीयक्षारः ।

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ।
वार्ताकीकुडवं चार्कादष्टौ द्वे चित्रकात्पले ॥ १८१ ॥
दग्धानि वार्ताकुरसे गुलिका भोजनोत्तराः ।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ॥ १८२ ॥

इति क्षारगुटिका ।

वत्सकातिविषे पाठां दुःस्पर्शां हिङ्गु चित्रकम् ।
चूर्णीकृत्य पलाशानां क्षारे मूत्रस्रुते पचेत् ॥१८३॥
आयसे भाजने सान्द्रात्तस्मात्कोलं सुखाम्बुना ।
मद्यैर्वा ग्रहणीदोषे शोथार्शः पाण्डुमान् पिबेत्१८४

इति चतुर्थक्षारः ।

माहिषमूत्रेणेत्यादिनापि चूर्णसमत्वं माहिषमूत्रस्य पूर्वप्रयोगदृष्टत्वात् । चतुःपलमित्यादौ चतुःपलं सुधाकाण्डात्रिफलालवणानि चेति ये पठन्ति ते त्रिफलालवणैर्मिलित्वा चतुःपलं वदन्ति दग्धानि वार्ताकुरसे इति क्षारभूतानि गुटिकाः कर्तव्याः ॥ १६९—१८४ ॥

त्रिफलां कटभीं चव्यं विल्वमध्यमयोरजः ।
रोहिणीं कटुकां मुस्तं कुष्ठं पाठां च हिङ्गु च ॥१८५॥

मधुकं मुष्ककयवक्षारौ त्रिकटुकं वचाम्।
विडङ्गं पिप्पलीमूलं स्वर्जिकां निम्बचित्रकौ॥१८६॥
मूर्वाजमोदेन्द्रयवान्गुडूचीं देवदारु च।
कार्षिकं लवणानां च पञ्चानां पलिकान्पृथक्॥१८७
भागान्दध्नि त्रिकुडवे घृततैलेन मूर्च्छितान्।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात्पाणितलं पिबेत्।
सर्पिषा कफवातार्शोग्रहणीपाण्डुरोगवान्॥१८८॥
प्लीहमूत्रग्रहश्वासहिक्काकासक्रिमिज्वरान्।
शोषातिसारौ श्वयथुं प्रमेहानाहहृद्ग्रहान्॥ १८९॥
हन्यात्सर्वविषं चैव क्षारोऽग्निजननो वरः।
जीर्णे रसैर्वा मधुरैरन्नं स्यात्पयसापि वा॥ १९०॥

इति पञ्चमक्षारः।

त्रिफलामित्यादौ घृततैलेनेत्यत्र दधिसाहचर्यात् घृततैलस्यापि मिलितस्य कुडवत्रयं॥ १८५—१९०॥

"त्रिदोषे विधिवद्वैद्यः पञ्च कर्माणि कारयेत्।
घृतक्षारासवारिष्टान्दद्याच्चाग्निविवर्धनान्॥ १९१॥
क्रिया या चानिलादीनां निर्दिष्टा ग्रहणीं प्रति।
व्यत्यासात्तां समस्तां च कुर्याद्दोषविशेषवित्॥ १९२
स्नेहनं स्वेदनं शुद्धिर्लङ्घनं दीपनं च यत्।
चूर्णानि लवणक्षारमध्वरिष्टसुरासवाः॥ १९३॥
विविधास्तक्रयोगाश्च दीपनानां च सर्पिषाम्।
ग्रहणीरोगिभिः सेव्याः क्रियां चावस्थिकीं शृणु॥१९४
ष्ठीवनं श्लैष्मिके रूक्षं दीपनं तिक्तसंयुतम्।
सकृद्रूक्षं सकृत्स्निग्धं कृशे बहुकफे हितम्॥१९५॥
परीक्ष्यामं शरीरस्य दीपनं स्नेहसंयुतम्।
दीपनं बहुपित्तस्य तिक्तं मधुरसंयुतम्॥ १९६॥
बहुवातस्य तु स्नेहलवणाम्लयुतं हितम्।
सन्धुक्षति यदा वह्निः परेषां विधिनेन्धनैः॥१९७॥
स्नेहमेव परं विद्याद्दुर्बलानलदीपनम्।
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि॥ १९८॥

त्रिदोषे पञ्चकर्मणि शिरोविरेचनमित्यत्र देयमेव, व्यत्यासात्तां समस्तां चेति उक्तवातादिक्रियाव्यत्यासात्। एकैकदोषक्रियापरिवर्तने सर्वान्तां कुर्यात् किंवा मिलितैः कुर्यात् मेलनं च वातादिद्रव्यमेलनादेव भवति स्नेहनमित्यादिना ग्रहणीदोषभेषजसंकलनमाह। क्रियां चावस्थिकीमिति ग्रहणीदोष एव अवस्थाविशेषे कर्तव्या क्रिया शृणु सकृद्रूक्षं सकृत्स्निग्धं कृशेति रूक्षमेव क्रियते तदा कृशस्य बलहानिः स्यात्। अथ स्निग्धमेव क्रियते तदा बहुकफे कफवृद्धिः स्यात् तेनोभयापेक्षया अंतरा रूक्षं अंतराच स्निग्धं कर्तव्यमित्यर्थः। स्नेहलवणाम्लयुतमिति दीपनमित्यर्थः। संधुक्षतेति विधिनेन्धन इति यथाविधानदीपितमित्यर्थ उक्तानुक्तस्नेहफलमवधारयन्नाह स्नेहमेवेत्यादि। परमिति श्रेष्ठं स्नेहस्य दीपनं श्रेष्ठं तत्र हेतुमाह नालमित्यादिना। नालं न समर्थम्॥ १९१—१९८॥

मन्दाग्निरपि पक्वं तु पुरीषं योऽतिसार्यते।
दीपनीयौषधैर्युक्तां घृतमात्रां पिबेत्तु सः॥ १९९॥
तया समानः पवनः प्रसन्नो मार्गमाश्रितः।
अग्नेः समीपचारित्वादाशु प्रकुरुते बलम्॥ २००॥
काठिन्याद्यः पुरीषं तु कृच्छ्रान्मुञ्चति मानवः।
सघृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत्॥ २०१॥
रौक्ष्यान्मन्दे पिबेत्सर्पिस्तैलं वा दीपनैर्युतम्।
अतिस्नेहात्तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः॥ २०२

स्नेहसमिद्धस्येति स्नेहदीप्तस्य स्नेहशब्देनात्र सामान्यवाचिना सर्पिरेवोच्यते सर्पिष एवात्राधिकारात्। मन्दाग्निरित्यादौ अविपक्वमिति पुरीषविशेषणम्। तेनाविपक्वशब्दग्रहणात् सामस्य ग्रहणं न भवति। अपक्वपुरीषं प्रति स्नेहप्रयोगो विरुद्ध एव किंच दीपनीयौषधसंस्कारात् स्नेहस्य संस्कारगुणानभिधानात् पुरीषं प्रति हितत्वं भवति स्नेहांशस्तु वातप्रगुणताकरणत्वेन सहायतया उपादीयते। अतएवोक्तं तया समान इति प्रसन्नेति दुष्टिर्हिता मार्गमास्थित इति स्वाभाविकमार्गमापन्नः। समीपचारित्वादिति प्रसन्नत्वादिगुणयोगे सति अन्नावग्रहमिति अन्नमध्यप्रयुक्त इत्यर्थः। अतिस्नेहान्मन्देग्नौ सति चूर्णारिष्टादीनि योज्यानि॥ १९९—२०२॥

भिन्ने गुदेऽग्निलेहास्तु विडतैलसुरासवाः।
उदावर्तात्तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः॥ २०३॥
दोषवृद्ध्या तु मन्देऽग्नौ शुद्धो दोषविधिं चरेत्।
व्याधियुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनम्॥२०४॥
उपवासाच्च मन्देऽग्नौ यवागूभिः पिबेद्घृतम्।
अन्नावपीडितं चालं दीपनं बृंहणं च तत्॥ २०५॥
दीर्घकालप्रसङ्गात्तु कामक्षीणकृशान्नरान्।
प्रसहानां रसैः साम्लैर्भोजयेत्पिशिताशिनाम्॥२०६
लघुतीक्ष्णोष्णशोधित्वाद्दीपयन्त्याशु तेऽनलम्।
मांसोपचितमांसत्वात्तथाशुतरबृंहणाः॥ २०७॥

भिन्ने इति विशिष्टगुदोपलेपात् अग्नौ मन्दे तैलसुरासवा देय। इति वाक्यार्थः। दोषविधिं चरेदिति अग्निमान्द्यकारकदोषौषधविधिं चरेत्। अन्नावपीडितं यथा भवति तथा यवाग्वाभिर्घृतं पिबेत् अन्नावपीडितं च मध्यभोजनापीडं घृतं भवति। दीर्घकालेत्यादौ क्षामो व्यवसायशून्यः। क्षीणो दुर्बलः कृशो हीनमांसः। प्रसहानां मांससिद्धत्वे मांसाशिनामिति विशेषणं तेन तृणादप्रसहानां गवादीनां निषेधः। ननु प्रसहाः गुरूष्णस्निग्धमधुरा इत्युक्तं इह तु लघुतीक्ष्णोष्णैवेत्यादिना कथं लाघवं? उच्यते प्रसहानां मध्ये ये लघवस्तेषां रसेनात्र भोजयेत्। तीक्ष्णेत्यादिना प्रसहगुणाभिधानम्। अन्ये तु इतरापेक्षया प्रसहा लघवस्तेषामिह लघुशब्देनोपादानं। तथान्ये अम्लादि

योगात् संस्कारेणेह लाघवं साधयन्ति एतेन राजयक्ष्मचिकित्सितेऽपि प्रसङ्गगुणाः तीक्ष्णोष्णलघुरुचिलादयः गुणाः उक्ताः ते न्याय्या एव ॥ २०३—२०७ ॥

नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ।
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥२०८॥
स्नेहान्नविधिभिश्चित्रैश्चूर्णारिष्टसुरासवैः ।
प्रयुक्तैर्भिषजा सम्यग्बलमग्नेः प्रवर्धते ॥ २०९ ॥
यथा हि सारदार्वग्निः स्थिरः सन्तिष्ठते चिरम् ।
स्नेहान्नविधिभिस्तद्वदन्तरग्निर्भवेत्स्थिरः ॥ २१० ॥
हितं जीर्णे मितं चाश्नंश्चिरमारोग्यमश्नुते ।
अवैषम्येण धातूनामग्निवृद्धौ यतेत वा ॥ २११ ॥
समैर्दोषैः समो मध्ये देहस्योष्माग्निसंस्थितः ।
पचत्यन्नं तदारोग्यपुष्ट्यायुर्बलवृद्धये ॥ २१२ ॥
दोषैर्मन्दोऽतिवृद्धो वा विषमैर्जनयेद्गदान् ।
वाच्यं मन्दस्य तत्रोक्तमतिवृद्धस्य वक्ष्यते ॥ २१३ ॥

नाभोजनेनेत्यादिना सम्यक्प्रयोगस्याग्निजनकतामाह— अभोजनमल्पभोजनं, अल्पो वा, अतीन्धनावृतो वा, न दीप्यते इति योजना। सारदार्वग्निः सारदारुणि स्थितोऽग्निः सारदार्वग्निः। स्नेहवदन्नं स्नेहान्नं, मितमिति मात्रावश्यं, यद्यपि हितमिताशिनोऽपि कालविपर्यादिना रोगा भवन्त्येव तथापि हितमिताशिनां आहारजरोगोत्पत्तिर्न भवतीति दर्शयति । चिरमारोग्यमश्नुते इति आहारजरोगं न प्राप्नोतीति भावः । अवैषम्येण धातूनां इति धातुसाम्येन क्रियमाणायामग्निवृद्धौ यतेत एवेन दोषवैषम्येण पित्तोद्रेकरूपेण या अग्निवृद्धिरत्यग्निरूपा तां निषेधयति समैरित्यादिनाग्निभेदान् समाग्निपरिपालनार्थमाह। मध्येति समीपे अग्निसंस्थित इति ऊष्मारूपो जाठराग्निः दोषैरिति सामान्योक्तेऽपि योग्यतया कफपित्तवातैर्यथाक्रममेव मन्दतीक्ष्णविषमत्वानि ज्ञेयानि । वाच्यमिति प्रतिक्रिया वचनीयं चिकित्सितमिति यावत् ॥ २०८—२१३ ॥

भस्मकचिकित्सामाह ।

नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् ।
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ॥२१४॥
तथा लब्धबलो देहे विरूक्षे सानिलोऽनलः ।
परिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥ २१५ ॥
पक्त्वान्नं सततं धातूञ्छोणितादीन्पचत्यपि ।
ततो दौर्बल्यमातङ्कान्मृत्युं चोपनयेन्नरम् ॥ २१६ ॥
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति ।
तृट्श्वासदाहमूर्च्छाद्याः व्याधयोऽत्यग्निसंभवा॥२१७
तमत्यग्निं गुरुस्निग्धशीतैर्मधुरविज्जलैः ।
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ॥२१८॥
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत्॥२१९॥

पायसं कृशरां स्निग्धं पैष्टिकं गुडवैकृतम् ।
अद्यात्तथौदकानूपपिशितानि घृतानि च ॥ २२० ॥

पित्तं पाकस्थाने कुपितमिति संबन्धः तच्च पित्तं मारुतानुगत्वात् अत्यग्निकरं भवति एवं धर्मभेदात् विरुद्धकार्यकरं ज्ञेयम् । पित्तोष्मरूपस्यापि वह्नेः प्रादेशिकपित्तोष्मणो हानिजनकत्वं जन्यजनकयोर्भेदत्वात् उपपन्नमेव ज्ञेयम् ॥ २१४—२२० ॥

मत्स्यान्विशेषतः श्लक्ष्णान्स्थिरतोयचरांस्तथा ।
आविकं सघृतं मांसमद्यादत्यग्निनाशनम् ॥ २२१ ॥
यवागूं समधूच्छिष्टां घृतं वा क्षुधितः पिबेत् ।
गोधूमचूर्णमन्थं वा व्यधयित्वा शिरां पिबेत् २२२
पयो वा शर्करासर्पिर्जीवनीयौषधैः शृतम् ।
फलानां तैलयोनीनामुत्कुञ्चाश्च सशर्कराः ॥२२३॥
मार्दवं जनयन्त्यग्नेः स्निग्धान्मांसरसांस्तथा ।
पिबेच्छीताम्बुना सर्पिर्मधूच्छिष्टेन वा युतम् २२४
गोधूमचूर्णं पयसा ससर्पिष्कं पिबेन्नरः ।
आनूपरससिद्धान्वा त्रीन्स्नेहांस्तैलवर्जितान्॥२२५॥
गोधूमचूर्णमन्थं वा व्यधयित्वा शिरां पिबेत् ।
पयसा संमितां चापि घनां त्रिस्नेहसंयुताम् २२६
नारीस्तन्येन संयुक्तां पिबेदौदुम्बरीत्वचम् ।
आभ्यां वा पायसं सिद्धमद्यादत्यग्निशान्तये २२७
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ।
असकृत्पित्तशान्त्यर्थं पायसप्रतिभोजनम् ।
प्रसमीक्ष्य भिषक् प्राज्ञस्तत्सं दद्याद्विधानवित् २२८
यत्किञ्चिन्मधुरं मेध्यं श्लेष्मलं गुरुभोजनम् ।
तदत्यग्निहितं सर्वं भुक्त्वा प्रस्वपनं दिवा ॥ २२९ ॥
मेध्यान्यन्नानि योऽत्यग्नावप्रशान्तः समश्नुते ।
न तन्निमित्तं व्यसनं लभते पुष्टिमेव च ॥ २३० ॥
कफे वृद्धे जिते पित्ते मारुते चानलः समः ।
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये ॥ इति॥२३१

स्थिरतोयचरानित्यनेन स्थिरतोयचारिणां निष्क्रियतया गौरवातिशयं दर्शयति । उष्णोदकमृदिता पिण्डा मृत्कुञ्जा उच्यन्ते । उत्कारिकेत्यन्ये । घनां त्रिस्नेहसंयुतामित्यत्र घनशब्देन लपुच्यते । पायसेन प्रतिभोजनं यस्मिन् पित्तहरणे तत्पायसभोजनं मेध्यमिति मेदुरम्, मेदोजनकं वा । अप्रशांत इति आबुभुक्षितः । व्यसनं मरणमित्यर्थः । पुष्टिमेव लभते इति योज्यम् ॥ २२१—२३१ ॥

भवन्ति चात्र ।

पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् ।
विषमं बहु वाल्पं वाप्यप्राप्तातीतकालयोः ॥२३२॥
भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान्व्याधीन्सृजन्ति वा॥

प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ।
दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत् ॥ २३४ ॥
तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः ।
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः २३५
उत्क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः ।
अक्लिन्नेष्वन्नमासिक्तमन्यत्तेषु न दुष्यति ॥ २३६ ॥
अविदग्ध इव क्षीरे क्षीरमन्यद्विमिश्रितम् ।
रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ॥ २३७ ॥
यान्ति कोष्ठे च विक्लेदं संवृते देहधातवः ।
क्लिन्नेष्वन्यदपक्केषु तेष्वासिक्तं प्रदुष्यति ।
विदग्धेषु पयः स्वन्यत्पयस्तप्तेष्विवार्पितम् ॥२३८॥
नैशेष्वाहारजातेषु नाविपक्केषु बुद्धिमान् ।
तस्मादन्यत्समश्नीयात्पालयिष्यन्बलायुषी ॥२३९॥

संप्रति प्रागुक्तसमशनादिलक्षणमाह पथ्यापथ्येत्यादि पथ्यापथ्यं किंचिदेकत्र मिलितं यथा रक्तशाल्यन्नं यवान्नं मिलितं। वहुभुक्तं अल्पभुक्तं वा तथा प्राप्तकालमतीतकालं च भुक्तं विषममुच्यते । पूर्वोक्तेत्यादिना उक्तं दिवा भुक्तस्य पुनरुपयोगोऽध्यशनं प्रातराशेत्यादि प्रायशो भोजनमित्यर्थः । कस्मात्तद्दूष्यतीत्याह दिवेत्यादि । स्फुटत्वमिति स्रोतसां वहनेन रसव्याप्तिर्भवति ततश्च नक्तं इदं स्रोतांसि याति । तथा व्यायामादिभिश्च शोष्यमाणा उत्क्लेदमुपयान्ति स्रोतांसि । व्यायामो गमनादिः, विहारोऽङ्गक्षेपणादिचेष्टा, स्रोतोत्क्लेदे किंभवतीत्याह अक्लिन्नेष्वित्यादि । आसिक्तमिति प्रक्षिप्तं । अविदग्धेत्यादिनात्र दृष्टान्तमाह म्लानेति संकुचिते । अपक्केष्वित्यन्येषु उपसंहरति नैशेष्वित्यादिना समश्नीयादिति योजना ॥ २३२—२३९ ॥

तत्र श्लोकाः ।

अन्तरग्निगुणा देहं यथा धारयते च सः ।
यथान्नं पच्यते यांश्च यथाहारः करोत्यपि ॥२४०॥
येऽग्नयो यांश्च पुष्यन्ति यावन्तो ये पचन्ति यान् ।
रसादीनां क्रमोत्पत्तिर्मलानां तेभ्य एव च ॥ २४१ ॥
तृष्णानामाशुकृद्धेतुर्धातुकालोद्भवक्रमः ।
रोगैकदेशकृद्धेतुरन्तरग्निर्यथाधिकः ॥ २४२ ॥
सन्दुष्यति यथा दुष्टो यान्रोगाञ्जनयत्यपि ।
ग्रहणी या यथावच्च ग्रहणीदोषलक्षणम् ॥ २४३ ॥
पूर्वरूपं पृथक् चैव व्यञ्जनं सचिकित्सितम् ।
चतुर्विधस्य निर्दिष्टं तथा चावस्थिकी क्रिया २४४
जायते च यथात्यग्निर्यच्च तस्य चिकित्सितम् ।
उक्तवानिह तत्सर्वं ग्रहणीदोषके मुनिः ॥ २४५ ॥

इति चरकसंहितायां ग्रहणीचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

अंतरग्निरित्यादिना अध्यायसंग्रहः । येऽग्नय इति यथाखं स्वामित्याद्युक्तं संगृह्णाति यानिति सप्तभिर्देहधातार इत्याद्युक्तं संग्रहः । आशुकारिकत्वेन हेतुना आशुकृद्धेतुः । शेषं व्यक्तम् । चक्रदत्तकृतटीकायां ग्रहणीचिकित्सितं समाप्तम् ॥२४०—२४५॥

---

## षोडशोऽध्यायः ।

### पाण्डुरोगचिकित्सितम् ।

"पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ १ ॥

ग्रहणीदोषचिकित्सिते तीक्ष्णादिना पित्तजननात् ग्रहणीचिकित्सितमनन्तरपित्तप्रधानं पाण्डुरोगचिकित्सितमुच्यते । पाण्डुना वक्ष्यमाणेभ्यः हरितालवर्णेभ्यः प्रधानेन वर्णेन चिकित्सितो रोगः पाण्डुरोगः । सुश्रुते उक्तं सर्वेषु चैतेषु च पाण्डुभावो यतो अधिको अन्तः खलु पाण्डुरोगः इति । कामलाहलीमकादिचिकित्सा च पाण्डुरोगभेदत्वादेव इहैव वक्तव्या । किंवा पाण्डुरोगादीनां चिकित्सितं पाण्डुरोगचिकित्सितमिति परिग्रहात् कामलाचिकित्सितमिति प्रतिज्ञातम् । त्रिशोथीये यद्यपि पाण्डुरोगो पञ्चसंख्याको उक्तस्तथापीह पुनस्तदनुवादेन सुश्रुतोक्तचतुः संख्यात्वं निषेधयति । उक्तं हि सुश्रुते पाण्ड्वामयोऽष्टार्धविधः प्रदिष्टः पृथक्समस्तैर्युगपच्च दोषैरिति । मृद्भक्षणजः पृथगेवोच्यते ॥ १ ॥

दोषाः पित्तप्रधानास्तु यस्य कुप्यन्ति धातुषु ।
शैथिल्यं तस्य धातूनां गौरवं चोपजायते ॥ २ ॥
ततो वर्णबलस्नेहा ये चान्येऽप्योजसो गुणाः ।
व्रजन्ति क्षयमत्यर्थं दोषदूष्यप्रदूषणात् ॥ ३ ॥
सोऽल्परक्तोऽल्पमेदस्को निःसारः शिथिलेन्द्रियः ।
वैवर्ण्यं भजते तस्य हेतुं शृणु सलक्षणम् ॥ ४ ॥

दोषा इत्यादिना संप्राप्तिमाह । पित्तं प्रधानं ययोस्ते पित्तप्रधानाः बहुवचनं च व्यक्तिबहुत्वापेक्षया नतु पारमार्थिकं । गौरवं पाण्डुरोगिणो निःसारधातुत्वादिति ब्रुवते । ओजसो गुणा इति ओजसो ये दशगुणा क्षीरसमाना उक्तास्ते ज्ञेयाः । ओजसः क्षपणेनैव स्नेहक्षये लब्धे पुनः स्नेहक्षयाभिधानं विशेषक्षयाभिधानार्थं । दोषैर्दूष्याणां प्रकृष्टादूषणादिति दोषदूष्यप्रदूषणात् निःसारः । अष्टौ सारा इत्यादिना प्रोक्तसारविरहितः शिथिलेन्द्रियः दुर्बलेन्द्रियः । स इति पुमान् रक्तपित्तयोरेकयोनित्वात् अपिच पित्तरक्तयोरिह रक्तवृद्धिर्भाव्या तथापि इह रक्तक्षयो रक्तपोषकरसस्य पित्तेन क्षपणात् रक्तपोषकसारभागानुत्पादाच्च । यद्यपि पित्तं तेजोरूपतया वर्णकरमिहोच्यते यदुक्तं तेजो धातुवर्णकर इति तथापि विकृतत्वात् पित्तमिह विकृतवर्णकृदेव भवति ॥ २—४ ॥

क्षाराम्ललवणात्युष्णविरुद्धासात्म्यभोजनात् ।
निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥ ५ ॥

विदग्धेऽन्ने दिवास्वप्नाद्व्यायामान्मैथुनात्तथा ।
प्रतिकर्मर्तुवैषम्याद्वेगानां च विधारणात् ॥ ६ ॥
कामचिन्ताभयक्रोधशोकोपहतचेतसः ।
समुदीर्णं यथा पित्तं हृदये समवस्थितम् ॥ ७ ॥
वायुना बलिना क्षिप्तं स्रोतोभिर्दशभिः स्रुतम् ।
प्रपन्नं केवलं देहं त्वङ्मांसान्तरमाश्रितम् ॥ ८ ॥
प्रदूष्य कफवातासृक्त्वङ्मांसानि करोति तत् ।
वर्णान्हरितहारिद्रान्पाण्डून्बहुविधांस्त्वचि ॥ ९ ॥
स पाण्डुरोग इत्युक्तस्तस्य लिङ्गं भविष्यतः ।
हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमस्तथा ॥ १० ॥
सम्भूतेऽस्मिन्भवेत्सर्वः कर्णक्ष्वेडी हतानलः ।
दुर्बलः सदनोऽन्नद्विट्श्रमभ्रमनिपीडितः ॥ ११ ॥
गात्रशूलज्वरश्वासगौरवारुचिमान्नरः ।
मृदितैरिव गात्रैश्च पीडितोन्मथितैरिव ॥ १२ ॥
शूनाक्षिकूटो हरितः शीर्णलोमा हतप्रभः ।
कोपनः शिशिरद्वेषी निद्रालुः ष्ठीवनोऽल्पवाक् १३
पिण्डिकोद्वेष्टकट्यूरुपादरुक्सदनानि च ।
भवन्त्यारोहणायासैर्विशेषश्चात्र वक्ष्यते ॥ १४ ॥

क्षारेत्यादिना समानं हेतुमाह । व्यायाममैथुने विदग्धेऽन्ने रोगहेतुनि प्रतिकर्मणां ऋतूनां च वैषम्यम् । धमनीर्दश इति हृदयाश्रितदशधमनीः । केवलमिति कृत्स्नं, प्रदूष्य कफवातासृगित्यादिपाठे वायोः पित्तेन दूषणम् । यदा तु कफपित्तासृगिति पाठः तदा पित्तेन हृदयस्थेन स्थानान्तरस्थस्य पित्तस्य दुष्टिर्ज्ञेया । समुदीर्णमित्यादिना एवेयं संप्राप्तिः पूर्वोक्तसामान्यसंप्राप्तेरेव प्रपञ्चः । तस्येत्यादिना पूर्वरूपमाह खेदाबाध इति केचित्पठन्ति । संभूतेऽस्मिन्निति उत्पन्ने पाण्डुरोगे कर्णक्ष्वेड इत्यादि सामान्यं लक्षणं कर्णक्ष्वेडी कर्णनादवान् । अन्नद्विडित्यादिना अन्नाग्रह उच्यते अरुचिमानित्यनेन प्रार्थितान्नभक्षणासामर्थ्यमुच्यते । शिशिरद्वेषीति शीतद्वेषी । शिशिरद्वेषिता च पित्तरोगेऽप्यस्मिन् रोगमहिम्ना भवति । पिण्डिकोद्वेष्टनं पिण्डिकापीडा । आरोहणेनायासाश्चेति विशेषश्चास्य वक्ष्यते इति । पाण्डुरोगस्य वातजत्वादिविशेषतो हेतुलिंगविशेषो वक्ष्यत इत्यर्थः ॥ ५—१४ ॥

आहारैरुपचारैश्च वातलैः कुपितोऽनिलः ।
जनयेत्कृच्छ्रपाण्डुत्वं तथा रूक्षारुणाङ्गताम् ॥१५॥
अङ्गमर्दं रुजं तोदं कम्पं पार्श्वशिरोरुजम् ।
शकृच्छोषास्यवैरस्यशोफानाहबलक्षयान् ॥ १६ ॥

आहारैरित्यादिना—वातजस्य हेतुलक्षणेऽप्याह—सामान्यलक्षणानि सर्वत्र भवन्ति विशेषलक्षणानि विशेषलक्षणाय ॥ १५ ॥ १६ ॥

पित्तलस्याचितं पित्तं यथोक्तैः स्वैः प्रकोपनैः ।
दूषयित्वा तु रक्तादीन्पाण्डुरोगाय कल्पते ॥ १७ ॥
स पीतो हरिताभो वा ज्वरदाहसमन्वितः ।
तृष्णामूर्च्छापरीतस्तु पीतमूत्रशकृन्नरः ॥ १८ ॥
स्वेदनः शीतकामश्च न चान्नमभिनन्दति ।
कटुकास्यो न चास्योष्णमुपशेतेऽम्लमेव वा ॥१९॥
उद्गारोऽम्लो विदाहश्च विदग्धेऽन्नेऽस्य जायते ।
दौर्गन्ध्यं भिन्नवर्चस्त्वं दौर्बल्यं तम एव च ॥ २० ॥

पित्तलस्येत्यादिना पैत्तिकमाह सर्वोऽपि पाण्डुरोगः पित्तजः तथाप्ययं विशेषेण दोषान्तरासंपृक्तत्वात् । प्रबलपित्तजन्यत्वात् पैत्तिक इत्युच्यते । यथा पैत्तिकं रक्तपित्तं अतएवात्र पित्तातिप्रबलतोपदर्शनार्थम् । पित्तलस्येत्यनेन पित्तप्रकोपिकारणान्युक्तानि । यथोक्तैरिति रक्तादीन् रक्तप्रकारान् तेन रसरक्तादीनामपि ग्रहणम् । तृष्णामूर्च्छापिपासार्त इत्यत्र तृष्णानिमित्तामूर्च्छा तृष्णामूर्च्छा तेन पिपासाया न पौनरुक्त्यम् । अन्ये तु तृष्णामिह क्षुधामाहुः केचित् तृष्णामूर्च्छापरीतस्येति पठन्ति ॥ १७—२० ॥

विवृद्धैः श्लेष्मलैः श्लेष्मा पाण्डुरोगं स पूर्ववत् ।
करोति गौरवं तन्द्रां छर्दिं श्वेतावभासताम् ॥२१॥
प्रसेकं लोमहर्षं च सादं मूर्च्छां भ्रमं क्लमम् ।
श्वासकासौ तथालस्यमरुचिं वाक्स्वरग्रहम् ॥२२॥
शुक्लमूत्राक्षिवर्चस्त्वं कटुरूक्षोष्णकामता ।
श्वयथुर्मधुरास्यत्वमिति पाण्ड्वामयः कफात् ॥२३॥

विवृद्धैरित्यादिना कफजमाह पूर्ववद्धि रक्तादीन् संदूष्य ॥ २१—२३ ॥

सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम् ।
त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम् ॥ २४ ॥

सर्वान्नेत्यादिना सांनिपातिकं व्याकरोति त्रिदोषलिङ्गमिति प्रत्येकदोषलिङ्गं समुदाययुक्तम् ॥ २४ ॥

मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥ २५ ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं विरूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धि च ॥ २६ ॥
इन्द्रियाणां बलं तेज ओजो वीर्यं निहत्य च ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ २७ ॥
शूनगण्डाक्षिकूटभ्रूनाभिपादाग्रमेहनः ।
क्रिमिकोष्ठोऽतिसार्येत मलं सासृक् कफान्वितम् ॥

मृत्तिकेत्यादिना मृद्भक्षणजमाह अत्र च दोषसंबन्धे सत्यपि मृदेव व्यपदेशिका न दोषाः । तस्या एव चिकित्सामेदलिङ्गभेदकर्तृत्वात् कषाया मारुतमित्यादिना मृदोऽपि वातादिगतलिङ्गं दर्शयति—ऊषरेति । सक्षारानुरसा रसादींश्च भुक्तं च विरूक्षय इति योज्यम् । अविपक्वैवेति स्वरूपावस्थितैव केवलं स्रोतांसि पूरयति रुणद्धि च । स्रोतोविरोधेन रसादीनां न

सम्यक्बलं भवति तेन च बलवर्णाग्निनाशन इत्यनेन बलहानिर्दर्शयति ॥ २५—२८ ॥

पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनो ना यश्च पीतानि पश्यति ॥२९॥
बद्धाल्पविट्कं सकफं हरितं योऽतिसार्यते ।
दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृषार्दितः॥३०॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात् ।
इति पञ्चविधस्योक्तं पाण्डुरोगस्य लक्षणम् ॥ ३१ ॥

पाण्डुरोग इत्यादिना असाध्यलक्षणमाह खरीभूतेति अत्यर्थरूक्षः । कालेत्यादिनाऽपरमसाध्यलक्षणं । श्वेतातिदिग्धाङ्गेति श्वेतवर्णलिप्तांग इत्यर्थः ॥ २९—३१ ॥

पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते ।
तस्य पित्तमसृग्मांसं दग्ध्वा रोगाय कल्पते ॥३२॥
हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः ।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ ३३ ॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः ।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥ ३४ ॥
कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भकामला ।
कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ॥ ३५ ॥
सरक्ताक्षिमुखच्छर्दिर्विण्मूत्रो यश्च ताम्यति ।
दाहारुचितृषानाहतन्द्रामोहसमन्वितः ॥ ३६ ॥
नष्टाग्निर्विसंज्ञश्च निर्यात्याशु स कामली ।
साध्यानामितरेषां तु भेषजं संप्रवक्ष्यते ॥ ३७ ॥

पाण्डुरोगीत्यादिना कामलामाह—पाण्डुरोगीति वचनात् पाण्डुरोगस्यैव हेतुविशेषेण कामलादिरूपावस्था उत्पद्यते अत एव च हारीतेऽपि कामलादीनामपि पाण्डुरोगत्वमेवोक्तं। वचनं हि—'वातेन पित्तेन कफेन चैव त्रिदोषमृल्लक्षणसंभवन्ति । द्वे कामले चैव हलीमकश्च इत्यष्टधैव······पाण्डुरोगः ॥' अन्यातु सुश्रुतोक्ता कामला भिन्ना भवति 'यो ह्यामयान्ते सहसाम्लमन्नमद्यादपथ्यान्यपि तस्य पित्तं । करोति पाण्डुं वदनं विशेषात् पूर्वेरितौ तन्द्रिबलक्षयौ चे'त्यादिना पृथक्कामलाहेतुरुक्तः । वाग्भटेऽपि "भवेत् पित्तोल्वणस्यासौ पाण्डुरोगादृतेऽपि च" इह तु पाण्डुरोगेऽपि भवेत् पाण्डुरोगादिनापि भवेत्। यथा प्रमेहाश्रिताः पिडिकाः प्रमेहेषु भवन्ति विना प्रमेहमपि भवन्ति । तथा पाण्डुरोगिणोऽपि उक्ता कामला पृथगपि भवति । कोष्ठशाखाश्रया बहुपित्तात् पाण्डुरोगपूर्विका भवति । या तु केवलं शाखाश्रया सा अल्पपित्ता च वक्तव्या सा स्वतन्त्रापि भवतीति केचित् अतएव तस्या रूक्षशीतेत्यादिना पृथगेव हेतुं लिङ्गं च अध्यायशेषे वक्ष्यति । बहुपित्तेत्यनेन केवलं शाखाश्रयाया अल्पपित्तत्वं सूचयति । अम्लकटुतीक्ष्णोपयोगं शाखाश्रयि पित्तस्य बलेन कोष्ठानयनार्थं वक्ष्यति । खरीभूतेति कठोरतामुपगता कुम्भकामला अवस्थाभेदेन कोष्ठगकामलायाः संज्ञा कुम्भः कोष्ठः तदाश्रया कामला कुम्भकामला । अस्यां च शोथोपलक्षणं भवति । उक्तंहि सुश्रुते—'भेदस्तु तस्याः खलु कुम्भमाहुः स्रोतोमहांश्चापि स पर्वभेदः ॥ ३२—३७ ॥

तत्र पाण्ड्वामयी स्निग्धस्तीक्ष्णैरूर्ध्वानुलोमिकैः ।
संशोध्यो मृदुभिस्तिक्तैः कामली तु विरेचनैः ॥३८॥
ताभ्यां संशुद्धकोष्ठाभ्यां पथ्यान्यन्नानि दापयेत् ।
शालयो यवगोधूमपुराणा यूषसंस्कृताः ॥ ३९ ॥
मुद्गाढकमसूरैश्च जाङ्गलैश्च रसैर्हिताः ।
यथादोषं विशिष्टं च तयोर्भैषज्यमाचरेत् ॥ ४० ॥
पञ्चगव्यं महातिक्तं कल्याणकमथापि वा ।
स्नेहनार्थं घृतं दद्यात्कामलापाण्डुरोगिणे ॥ ४१ ॥

तत्रेत्यादिना चिकित्सामाह ऊर्ध्वानुलोमिकैरिति ऊर्ध्वहरानुलोमनवमनविरेचनयोरपि ग्रहणं युक्तम् । यतः पाण्डुरोगेऽपि "कफपाण्डौ तु गोमूत्रक्लिन्नयुक्तां हरीतकीं" इत्यादिना विरेचनं वक्ष्यति । ताभ्यामिति पाण्डुरोगकामलाभ्यां । ताभ्यां संशुद्धकोष्ठाय इति पाठपक्षे ताभ्यामिति वमनविरेचनाभ्यां विशिष्टभैषज्यमिहैव कामलायां पाण्डुरोगे च वक्ष्यमाणं ज्ञेयम् ॥ ३८—४१ ॥

दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम् ।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका तथा ॥ ४२ ॥
तैः कल्कैर्विंशतिपलं घृतस्य सलिलाढके ।
सिद्धं हृत्पाण्डुरोगार्शःप्लीहवातकफार्तिनुत् ॥४३॥
दीपनं श्वासकासघ्नं मूढवाते च शस्यते ।
दुःखप्रसविनीनां च वन्ध्यानां चैव गर्भदम् ॥४४॥
इति घृतम् ।

कटुका रोहिणी मुस्तं हरिद्रे वत्सकात्पलम् ।
पटोलं चन्दनं मूर्वा त्रायमाणा दुरालभा ॥ ४५ ॥
कृष्णा पर्पटको निम्बो भूनिम्बो देवदारु च ।
तैः कार्षिकैर्घृतप्रस्थः सिद्धः क्षीरचतुर्गुणः ॥ ४६ ॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम् ।
अर्शांस्यसृग्दरं चैव हन्ति विस्फोटकांस्तथा ॥४७॥
इति कटुकाद्यं घृतम् ।

दाडिमेत्यादौ अष्टमिका द्विकर्षमुक्तम् । उक्तं हि—'द्वे सुवर्णे पलार्धं स्यात् शुक्तिरष्टमिकापि च' इति ॥ ४२—४७ ॥

पथ्याशतरसे पथ्यावृन्तार्धशतकल्कवान् ।
प्रस्थः सिद्धो घृतात्पेयः सपाण्ड्वामयगुल्मनुत् ४८
इति पथ्याघृतम् ।

पथ्याशतरसेन क्वाथः कर्तव्यः । अत्र च तथा क्वाथार्थं जलं देयम् यथा चतुर्भागावशिष्टं सत् घृतत्त्चतुर्गुणं भवति अतएव द्रोणमानं जलं देयम् । पथ्यावृन्तार्धशतं हरीतकीफ-

लवन्धनार्धशतं, अन्ये तु पथ्याचूर्णं हरीतकीफलस्यैव चूर्णं तत् अस्थिशून्यमाहुः ॥ ४८ ॥

दन्त्याश्चतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः ।
तद्वत्प्रस्थो घृतात्सिद्धः प्लीहपाण्ड्वर्तिशोफजित् ४९

इति दन्तीघृतम् ।

दन्तीत्यादौ दन्त्याः क्वाथः घृताच्चतुर्गुणं स्थाप्यः । तन्त्रान्तरदर्शनात् प्रस्थमान एवात्र क्वाथो भवति । उक्तं ह्यन्यत्र 'निकुम्भकुडवक्वाथप्रस्थे तत्कल्कसंयुतं । सर्पिःप्रस्थं पचेत् प्लीहकामलापाण्डुरोगनुत्' ॥ ४९ ॥

पुराणसर्पिषः प्रस्थो द्राक्षार्धप्रस्थसाधितः ।
कामलागुल्मपाण्ड्वर्तिज्वरमेहोदरापहः ॥ ५० ॥

इति द्राक्षाघृतम् ।

पुराणेत्यादौ जलंगनुक्तद्रवाद्भवति द्राक्षाप्रस्थार्धं तु कल्कः ॥ ५० ॥

हरिद्रात्रिफलानिम्बबलामधुकसाधितम् ।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ ५१ ॥

इति हरिद्रादिघृतम् ।

हरिद्रेत्यादौ द्रवान्तराभावात् क्षीरमेव चतुर्गुणम् ॥ ५१ ॥

गोमूत्रे द्विगुणे दार्व्याः कल्काक्षद्वयसाधितम् ।
दार्व्याः पञ्चपलक्वाथे कल्के कालीयके परः ॥ ५२ ॥
माहिषात्सर्पिषः प्रस्थः पूर्वः पूर्वे परे परः ।
स्नेहैरेभिरुपक्रम्य स्निग्धं मत्वा विरेचयेत् ॥ ५३ ॥
पयसा मूत्रयुक्तेन बहुशः केवलेन वा ।
दन्तीफलरसे कोष्णे काश्मर्याञ्जलिना शृतम् ॥ ५४ ॥
द्राक्षाञ्जलिं मृदित्वा वा दद्यात्पाण्ड्वामयापहम् ।
द्विशर्करं त्रिवृच्चूर्णं पलार्धं पैत्तिकः पिबेत् ॥ ५५ ॥
कफपाण्डुस्तु गोमूत्रक्लिन्नयुक्तां हरीतकीम् ।
आरग्वधं रसेनेक्षोर्विदार्यामलकस्य च ॥ ५६ ॥
सत्र्यूषणं बिल्वपत्रं पिबेद्वा कामलापहम् ।
दन्त्यर्धपलकल्कं वा द्विगुडं शीतवारिणा ॥ ५७ ॥
कामली त्रिवृतां वापि त्रिफलाया रसैः पिबेत् ।
विशालात्रिफलामुस्तकुष्ठदारुकलिङ्गकान् ॥ ५८ ॥
कार्षिकानर्धकर्षांशान्कुर्याद्दतिविषां तथा ।
कर्षौ मधुरसाया द्वौ सर्वमेतत्सुखाम्बुना ॥ ५९ ॥
मृदितं तं रसं पूतं पीत्वा लिह्याच्च मध्वनु ।
कासं श्वासं ज्वरं दाहं पाण्डुरोगमरोचकम् ॥ ६० ॥
गुल्मानाहामवातांश्च रक्तपित्तं च नाशयेत् ।
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम्
शीतं मधुयुतं प्रातः कामलार्तः पिबेन्नरः ।
क्षीरमूत्रं पिबेत्पक्षं गव्यं माहिषमेव वा ॥ ६२ ॥
पाण्डुर्गोमूत्रसिद्धं वा सप्ताहं त्रिफलारसम् ।
तरुजान् ज्वलितान्मूत्रे निर्वाप्यामृद्य चाङ्कुरान् ६३
मातुलुङ्गस्य तत्पूतं पाण्डुशोथहरं पिबेत् ।
स्वर्णक्षीरीं त्रिवृच्छ्यामे भद्रदारु सनागरम् ॥ ६४ ॥
गोमूत्राञ्जलिना पिष्टं मूत्रे वा क्वथितं पिबेत् ।
क्षीरमेभिः शृतं वापि पिबेद्दोषानुलोमनम् ॥ ६५ ॥
हरीतकीं प्रयोगेण गोमूत्रेणाथवा पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ६६ ॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा पाययेद्भिषक् ॥ ६७ ॥

दार्व्याः कल्काक्षद्वयसाधितो माहिषात्सर्पिषः प्रस्थ इति योज्यम् । दार्व्याः पञ्चपलक्वाथे इत्यत्रापि पूर्वघृतानुसारात् पञ्चपलदार्वीक्वाथोऽपि घृताद्द्विगुण एव कर्तव्यः । कालीयककल्कोऽपि पूर्ववत् अक्षद्वयमानमेव पूर्वः पूर्वेति पूर्वे पाण्डुरोगे गोमूत्रसिद्धो घृतप्रस्थः परे तु कामलाख्ये परो दार्व्यायुक्तो देय इति शेषः । काश्मरी गंभारीफलं । शृतमिति फांटकषायविधिना प्रक्षिप्तं । द्राक्षांजलिं मृदित्वेत्यनेन स्फुटमेव फांटकषायं दर्शयति । द्विशर्करमित्यादौ त्रिवृच्चूर्णं पलार्धं द्विशर्करयुक्तं सत् पलद्वयमानं भवति । गोमूत्रक्लिन्नयुक्तामिति गोमूत्रेण क्लिन्नां कल्कीकृतां तथा गोमूत्रेण युक्तामालोडितां पिबेत् । अन्ये तु आरग्वधरसेन हरीतकीं पिबेदिति योजयन्ति । इक्ष्वादिरसेन सत्रिकटुं पिबेदिति योजयन्ति । आरग्वधं सत्रिकटुकं रसेनेक्षोः विदार्या आमलकस्य रसेन पिबेदिति अपरोऽर्थः । विशालेत्यादौ फांटकषायवद्द्रव्यात्पलमानात् चतुःपलं द्रवं वदन्ति वृद्धाः ॥ ५२—६७ ॥

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चित्रकाः समाः ।
नवायोरजसो भागास्तच्चूर्णं क्षौद्रसर्पिषा ॥ ६८ ॥
भक्षयेत्पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम् ॥ ६९ ॥

इति नवायसचूर्णम् ।

नवायोरजसो भाग इति एकभागापेक्षया नवगुणलमयोरजसः तेन त्र्यूषणादीनां मिलितानां चूर्णेन सममयोरजः ॥ ६८ ॥ ६९ ॥

गुडनागरमण्डूरतिलांशान्मानतः समान् ।
पिप्पलीद्विगुणां कुर्याद्गुटिकां पाण्डुरोगिणे ॥ ७० ॥
त्रिफला त्र्यूषणं मुस्तं विडङ्गं चव्यचित्रकौ ।
दार्वी त्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥ ७१ ॥
एतान् द्विपलिकान्भागांश्चूर्णान्कुर्यात्पृथक् पृथक् ।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥ ७२ ॥
गोमूत्रेऽष्टगुणे पक्त्वा तस्मिंस्तत्प्रक्षिपेत्ततः ।
उदुम्बरसमान्कृत्वा वटकांस्तान्यथाग्निना ॥ ७३ ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम् ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥ ७४ ॥

कुष्ठान्यजीर्णकं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥७५॥
इति मण्डूरवटकाः ।

ताप्याद्रिजतुरूप्यायोमलाः पञ्चपलाः पृथक् ।
चित्रकत्रिफलाव्योषविडङ्गैः पालिकैः सह ॥ ७६ ॥
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः ।
अश्यस्यास्त्वक्षमात्रा हि जीर्णे नियमिताशिना ७७
कुलत्थकाकमाच्यादिकपोतपरिहारिणा ।
त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ॥ ७८ ॥
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ।
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ॥ ७९ ॥
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा ।
अष्टौ भागाः सितायाश्च तत्सर्वं सूक्ष्मचूर्णितम् ८०
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ।
उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना ॥ ८१ ॥
दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यदीप्सितम् ।
वर्जयित्वा कुलत्थानि काकमाचीकपोतकम् ॥८२॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं शिवम् ॥ ८३ ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ।
कुष्ठान्यजीर्णकं मेहं शोषं श्वासमरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ८४ ॥
इति योगराजः ।

मण्डूरं पुराणं लोहकिट्टं । त्रिफलेत्यादौ रौप्यमलं रूप्यस्य यत्किट्टं भवति तज्ज्ञेयं । माक्षिकस्येति माक्षिकधातोः । अश्मजत्वादीनां चतुर्णां पञ्चभागाः प्रत्येकं किंवा पञ्चाश्मजतुनो-भागाः तथा रूप्यमलस्य चेति रूप्यमलस्य शिलाजतुविशेषणं तेन रूप्यमलरूपं यदुक्तं शिलाजतु राजतं कटुकं चेति तदिह गृह्यते ॥ ७०—८४ ॥

कौटजत्रिफलानिम्बपटोलघननागरैः ।
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा ॥८५॥
शिलाजतुपलान्यष्टौ तावतीं सितशर्कराम् ।
त्वक्क्षीरी पिप्पली धात्री कर्कटाख्या पलोन्मिता ॥
निदिग्ध्याः फलमूलाभ्यां पलं युक्त्या त्रिगन्धिकम् ।
चूर्णितं मधुरः कुर्यात्त्रिपलेनाक्षिकान्गुडान् ॥ ८७ ॥
दाडिमाम्बुपयःपक्षिरसतोयसुरासवान् ।
पिबेत्तु भक्षयित्वा तान्निरन्नो भुक्त एव वा ॥ ८८ ॥
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरान् ।
पूतिहृच्छुक्रमूत्राग्निदोषशोषगरोदरान् ॥ ८९ ॥
कासासृग्दरपित्तासृक्शोथगुल्मगरामयान् ।
ते च सर्वव्रणान्हन्युः सर्वरोगहराः शिवाः ॥९०॥
इति शिलाजतुवटकाः ।

पुनर्नवा त्रिवृद्व्योषविडङ्गं दारु चित्रकम् ।
कुष्ठं हरिद्रे त्रिफला दन्ती चव्यं कलिङ्गकाः ॥९१॥
पिप्पली पिप्पलीमूलं मुस्तं चेति पलोन्मितम् ।
मण्डूरं द्विगुणं चूर्णाद्गोमूत्रे ह्याढके पचेत् ॥ ९२ ॥
कोलवद्गुटिकाः कृत्वा तक्रेणालोड्य ता पिबेत् ।
ताः पाण्डुरोगान्प्लीहानमर्शांसि विषमज्वरम् ।
श्वयथुं ग्रहणीदोषं हन्युः कुष्ठं क्रिमींस्तथा ॥ ९३ ॥
इति पुनर्नवामण्डूरम् ।

भावितानीति द्विगुणत्रिगुणदशाहानि भावितानि । रसैरिति कुटजादिक्काथैः । कौटजं कुटजफलं । अत्र भावना शिलाजतूक्तेनैव विधिना कर्तव्या क्वाथ्यक्वाथमाने च तन्त्रान्तरे "तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्वाथ्यम् । तत्क्काथे पादांशे पूतोष्णे प्रक्षिपेद्धि गिरिजं तत् । तत्समतां यातं यत् शुष्कं तत्प्रक्षिपेद्रसे भूयः" इति । एतच्च अन्यत्रापि भावनाविधौ क्वाथ्यक्वाथमानौ ज्ञेयौ । फलमूलाभ्यां पलमिति मिलित्वा पलम्—युक्त्या त्रिगन्धिकमिति यावत् त्रिगन्धेन साधुगन्धो भवति तावन्मात्रं त्रिगन्धं ज्ञेयम् । त्रिगन्धं च पत्रलगेलोच्यते 'त्रिगन्धं तु समाख्यातं त्वगेलापत्रकेशरैः । तदेव तु समाख्यातं चातुर्जातं सकेसर'मिति । पूत्यादिनिर्दोषसंबन्धः प्रत्येकं संबन्ध्यते ॥ ८५—९३ ॥

दार्वीत्वक्त्रिफलाव्योषं विडङ्गमयसो रजः ।
मधुसर्पिर्युतं लिह्यात्कामलापाण्डुरोगवान् ॥९४॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा ।
चूर्णिताः कामली लिह्याद्गुडक्षौद्रेण वाभयाः ॥९५॥
त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरजः ।
चूर्णितं क्षौद्रसर्पिर्भ्यां स लेहः कामलापहः ॥९६॥
द्विपलांशां तुगाक्षीरीं नागरं मधुयष्टिकाम् ।
प्रास्थिकीं पिप्पलीं द्राक्षां शर्करार्धतुलां शुभाम् ॥
धात्रीफलरसद्रोणे सुपिष्टं लेहवत्पचेत् ।
शीतां मधुप्रस्थयुतां लिह्यात्पाणितलं ततः ।
हन्त्येष कामलां पित्तं पाण्डुं कासं हलीमकम् ॥९८॥
इति धात्र्यवलेहः ।

द्विपलांशामित्यादौ द्राक्षाप्रास्थिकी । धात्रीफलरसो धात्रीस्वरसः ॥ ९४—९८ ॥

त्र्यूषणं त्रिफला चव्यं चित्रको देवदारु च ।
विडङ्गानि समांशानि चित्रकं चेति चूर्णयेत् ॥९९॥
मण्डूरतुल्यं तच्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ।
शनैः सिद्धास्तथा शीताः कार्याः कर्षसमा गुडाः ॥
यथाग्नि भक्षणीयास्ते प्लीहपाण्ड्वामयापहाः ।
ग्रहण्यर्शोनुदश्चैव तक्रवाट्याशिनः स्मृताः ॥१०१॥
इति मण्डूरवटकाः ।

मञ्जिष्ठा रजनी द्राक्षा बलामूलान्ययोरजः ।
लोध्रं चैतेषु गौडः स्यादरिष्टः पाण्डुरोगिणाम् १०२
इति गौडोऽरिष्टः ।

त्र्यूषणादीनामष्टाविंशतिपदानि मण्डूरं च समं समुदितं चूर्णं सप्तत्र्यधिकशतं पलमानं भवति । पृथक् इति पाठात् मण्डूरं चूर्णमेव पृथङ्मूत्रे पक्तव्यम् । तस्मिन् सिद्ध्यति त्र्यूषणादीनां तच्चूर्णं प्रक्षेप्यम्। शुद्धमिति पदेन मण्डूरस्य ध्मापनगोमूत्रनिर्वापणादिना शुद्धिर्दर्शयति । केचित्तु गोमूत्रमष्टगुणं प्रस्थाप्तमण्डूरादेव वदन्ति अयमेव च पक्षः प्रतिभाति ॥ ९९—१०२ ॥

बीजकात्षोडशपलं त्रिफलायाश्च विंशतिः ।
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे जलस्य तत् ॥
साध्यं पादावशेषे तु पूतशेषे समावपेत् ।
शर्करायास्तुलां प्रस्थं माक्षिकस्य च कार्षिकम् १०४
व्योषं व्याघ्रनखोशीरं क्रमुकं सैलवालुकम् ।
मधूकं कुष्ठमित्येतच्चूर्णितं घृतभाजने ।
यवेषु दशरात्रं तद्ग्रीष्मे द्विः शिशिरे स्थितम् १०५
पिबेत्तद्ग्रहणीपाण्डुरोगार्शःशोथगुल्मनुत् ।
मूत्रकृच्छ्राश्मरीमेहकामलासन्निपातनुत् ।
बीजकारिष्ट एवैष आत्रेयेण प्रकीर्तितः ॥ १०६ ॥
इति बीजकारिष्टः ।

बीजकात्षोडशपलमित्यत्र केचित् द्विनीरकपलान्यष्टाविति वदन्ति तथापि स एवार्थः । बीजको असनः । व्याघ्रनखो नखीभेद एव । द्विः शिशिर इति विंशतिरात्रस्थितं ॥ १०३—१०६ ॥

धात्रीफलसहस्रे द्वे पीडयित्वा रसं तु तम् ।
क्षौद्राष्टांशेन संयुक्तं कृष्णार्धकुडवेन च ॥ १०७ ॥
शर्करार्धतुलोन्मिश्रं पक्षं स्निग्धघटे स्थितम् ।
प्रपिबेन्मात्रया प्रातर्जीर्णे मितहिताशनः ॥ १०८ ॥
कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान् ।
कासहिक्कारुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत् १०९
इति धात्र्यरिष्टः ।

धात्रीत्यादौ धात्रीफलसहस्रद्वयस्य स्वरस एव ग्राह्यः ॥ १०७—१०९ ॥

स्थिरादिभिः शृतं तोयं पानाहारे प्रशस्यते ।
पाण्डूनां कामलार्तानां मृद्वीकामलकीरसः ॥११०॥
पाण्डुरोगप्रशान्त्यर्थमिति प्रोक्तं महर्षिणा ।
विकल्प्यमेतद्भिषजा पृथग्दोषबलं प्रति ॥ १११ ॥
वातिके स्नेहभूयिष्ठं पैत्तिके तिक्तशीतलम् ।
श्लैष्मिके कटुतिक्तोष्णं विमिश्रं सान्निपातिके ११२

कामलार्तानां मृद्वीकामलकीरसः पानाहारे प्रशस्यत इत्यर्थः ॥ ११०—११२ ॥

निष्पातयेच्छरीरात्तु मृत्तिकां भक्षितां भिषक् ।
युक्तिज्ञः शोधनैस्तीक्ष्णैः प्रसमीक्ष्य बलाबलम् ११३
शुद्धकायस्य सर्पींषि बलाधानानि योजयेत् ११४
व्योषं बिल्वं हरिद्रे द्वे त्रिफला द्वे पुनर्नवे ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ।
वृश्चिकाली च भार्गी च सक्षीरैस्तैः समैर्घृतम् ११५
साधयित्वा पिबेद्युक्त्या नरो मृद्दोषपीडितः ।
तद्वत्केशरयष्ट्याह्वपिप्पलीमूलशाद्वलैः ॥ ११६ ॥
मृद्भक्षणादातुरस्य लोभादविनिवर्तिनः ।
द्वेष्यार्थं भावितां कामं दद्यात्तद्दोषनाशनैः ॥११७॥
विडङ्गैलातिविषया निम्बपत्रेण पाठया ।
वार्ताकैः कटुरोहिण्या कौटजैर्मूर्वयापि वा ॥११८॥

विकल्पमिलनेन विकल्पविधिमाह—निष्पातयेदित्यादिना मृज्ज पाण्डुरोगचिकित्सामाह शाद्वलं दूर्वा मृद्भक्षणादविनिवर्तिनः सक्तसेत्यर्थः । भावितामिति तद्दोषनाशनैर्द्रव्यैः संस्कृताम् । मूर्वया पिबेदित्यन्तो ग्रन्थः पूर्वेण संबध्यते ॥११३–११८॥

यथादोषं प्रकुर्वीत भैषज्यं पाण्डुरोगिणाम् ।
क्रियाविशेष एषोऽस्य मतो हेतुविशेषतः ॥ ११९ ॥
तिलपिष्टनिभं यस्तु वर्चः सृजति कामली ।
श्लेष्मणा रुद्धमार्गं तत्पित्तं कफहरैर्जयेत् ॥ १२० ॥
रूक्षशीतगुरुस्वादुव्यायामैर्वेगनिग्रहैः ।
कफसंमूर्च्छितो वायुः स्थानात्पित्तं क्षिपेद्बली१२१
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।
भवेत्साटोपविष्टम्भो गुरुणा हृदयेन च ॥ १२२ ॥
दौर्बल्याल्पाग्निपार्श्वार्तिहिक्काश्वासारुचिज्वरैः ।
क्रमेणाल्पेन सज्येत पित्ते शाखासमाश्रिते॥१२३॥

पाण्डुरोगोक्तं दोषविशेषचिकित्सितम् मृज्जेप्यतिदिशति । यथादोषमित्यादि एतेति मृज्जे पाण्डुरोगे प्रोक्तः । तिलपिष्टनिभमित्यादिना शाखाश्रयकामलाचिकित्सितं लक्षणपूर्वकमाह । श्लेष्मणा रुद्धमार्गमिति कोष्ठस्थेन श्लेष्मणा शाखाश्रयि पित्तं कामलाजनकं रुद्धमार्गं कोष्ठगमनार्थं निषिद्धमार्गमिति यावत् । एतदेव रूक्षेत्यादिना विस्तरेणाह । श्वेतवर्चा इति कोष्ठस्य पित्तस्य मलरंजकस्य बहिर्निर्गमात् रुद्धेन श्लेष्मणा श्वेतवर्चा भवति । क्रमेणेति ज्वरान्तैरनुपज्यते । अल्पे पित्ते शाखाश्रित इति संबन्धः ॥ ११९—१२३ ॥

बर्हितित्तिरिदक्षाणां रूक्षाम्लैः कटुकै रसैः ।
शुष्कमूलककौलत्थैर्यूषैश्चान्नानि भोजयेत् ॥१२४॥
मातुलुङ्गरसं क्षौद्रं पिप्पलीमरिचान्वितम् ।
सनागरं पिबेत्पित्तं तथास्यैति स्वमाशयम् ॥१२५॥

बर्हीत्यादिना कफहरं पित्तवृद्धिकरं च समं चिकित्सितं प्राह । यतः शाखाश्रयदोषस्य वृद्धिः कोष्ठानयनार्थम् । उक्तं

हि—'वृद्ध्याभिष्यन्दनात्पाकात्स्रोतोमुखविशोधनात्। शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात्॥ १२४॥१२५॥

"तृषाम्लैः कटुरूक्षोष्णैर्लवणैश्चाप्युपक्रमः ।
आपित्तरोगाच्च कृतो वायोश्चाप्रशमाद्भवेत्॥१२६॥
स्वस्थानमागते पित्ते पुरीषे पित्तरञ्जिते ।
निवृत्तोपद्रवस्यास्य पूर्वः कामलिको विधिः॥१२७॥
यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः ।
बलोत्साहक्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः॥१२८॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिर्भ्रमः ।
हलीमकं तदा तस्य विद्यादनिलपित्ततः॥१२९॥

आपित्तरोगात्कोष्ठमार्गस्य मलं न वर्द्धते तावद्रक्तपित्तवर्धनम्। पूर्व इति पूर्वोक्तः कामलिको विधिरिति कोष्ठप्राया कामलाचिकित्सितं कर्तव्यमित्यर्थः । यदेत्यादिना हलीमकमाह । अयमेव तन्त्रान्तरे लाघवसंज्ञया अलसमुच्यते। उक्तं हि सुश्रुते—'ज्वरांगमर्दभ्रमदाहतन्द्राक्षयान्वितो लाघविकोऽलसश्च। तं वातपित्ताद्धिपरीतलिङ्गं हलीमकं केचिदुदाहरंति॥' यच्चापि तत्र भिन्नवर्चस्त्वं सा चापि कामलावस्थैव न पृथगुक्तम्। उक्तं हि तन्त्रान्तरे—'संतापो भिन्नवर्चस्त्वं बहिरन्ते च पीनता। पाण्डुता नेत्ररागश्च पङ्कीलक्षणं (?) मतम्॥ १२६—१२९॥

गुडूचीस्वरसक्षीरसाधितं माहिषं घृतम् ।
स पिबेत्त्रिवृतां स्निग्धरसेनामलकस्य तु ॥ १३०॥
विरिक्तो मधुरप्रायं भजेत्पित्तानिलापहम्।
द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च॥१३१॥
यापनान्क्षीरबस्तींश्च शीलयेत्सानुवासनान्।
मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये॥ १३२॥
कासिकं चाभयालेहं पिप्पलीं मधुकं बलाम्।
पयसा च प्रयुञ्जीत यथादोषं यथाबलम्॥ १३३॥

गुडूचीत्यादिना हलीमकचिकित्सामाह—द्राक्षालेहं च पूर्वोक्तमिति द्विपलांशतुगाक्षीरी इत्यादि ग्रन्थोक्तम्। इहैव यापनाबस्तयः। कासिकं चाभयालेहमित्यगस्त्यहरीतकी॥ १३०—१३३॥

तत्र श्लोकौ ।

पाण्डोः पञ्चविधस्योक्तं हेतुलक्षणभेषजम् ।
कामला द्विविधा चैव साध्यासाध्यत्वमेव च॥१३४
तेषां विकल्पो यश्चान्यो महाव्याधिर्हलीमकः ।
तस्य चोक्तं समासेन व्यञ्जनं सचिकित्सितम्॥१३५

इति चरकसंहितायां पाण्डुरोगचिकित्सितं नाम षोडशोऽध्यायः॥ १६॥

पाण्डोः पञ्चविधस्येत्यादिना संग्रहमाह स च व्यक्त एव॥ इति पाण्डुरोगचिकित्सितं समाप्तम्॥ १३४॥ १३५॥

## सप्तदशोऽध्यायः ।

अथातो हिक्काश्वासचिकित्सितं व्याख्यास्यामः ।
वेदलोकार्थतत्त्वज्ञमात्रेयमृषिमुत्तमम्।
अपृच्छत्संशयं धीमानग्निवेशः कृताञ्जलिः॥ १॥
य इमे द्विविधाः प्रोक्तास्त्रिदोषास्त्रिप्रकोपणाः ।
रोगा नानात्मकास्तेषां कस्को भवति दुर्जयः॥२॥
अग्निवेशस्य तद्वाक्यं श्रुत्वा मतिमतां वरः ।
उवाच परमप्रीतः परमार्थविनिश्चयम्॥ ३॥
कामं प्राणहरा रोगा बहवो न तु ते तथा ।
यथा श्वासश्च हिक्का च प्राणानाशु निकृन्ततः॥४॥

पाण्डुरोगकारणत्वात् हिक्काश्वासयोः पाण्डुरोगानन्तरमभिधानम्। वक्ष्यति हि 'पाण्डुरोगात् विषाच्चैव प्रवर्तेते गदाविमौ' इति। हिक्काश्वासौ च समानकारणचिकित्सितत्वात् एकाध्यायेनैवोक्तौ। वैदिकं लौकिकं च अर्थतत्त्वं जानातीति वेदलोकार्थतत्त्वज्ञः। द्विविधा इति सामान्यासामान्यभेदेन किंवा मृदुदारुणभेदेन निजानिजभेदेन। त्रिदोषा इति वातादिभिः पृथङ्मिलितैः। त्रिप्रकोपणा इति असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधकारणकाः काममित्यनुमताः। बहव इति ज्वरशङ्करोहिण्यादयः। यथा श्वासश्च हिक्का चेत्यनेन शीघ्रं प्राणहारित्वं हिक्काश्वासयोर्दर्शयति॥ १—४॥

अन्यैरप्युपसृष्टस्य रोगैर्जन्तोः पृथग्विधैः ।
अन्ते संजायते हिक्का श्वासो वा तीव्रवेदनः॥ ५॥
कफवातात्मकावेतौ पित्तस्थानसमुद्भवौ ।
हृदयस्य रसादीनां धातूनां चोपशोषणौ॥ ६॥
तस्मात्साधारणावेतौ मतौ परमदुर्जयौ ।
मिथ्योपचरितौ क्रुद्धौ हताशीविषाविव॥ ७॥

अन्त इति मरणसमये। संजायत इति अवश्यं हिक्काश्वासयोरन्यतरो जायते। पित्तस्थानसमुद्भवा इत्यनेन पित्तस्योर्ध्वस्थानसंबन्धेनैव ननु वातकफवदारंभकत्वं दर्शयति। पित्तस्थानशब्देनामाशयोऽभिप्रेतः। साधारणाविति प्रायस्तुल्यचिकित्स्यत्वात्। आशीविषविषदष्टिनिःश्वासविसर्पमिव। मिथ्योपचरितोऽन्योऽपि रोगो हन्ति तदिहाशीविषदृष्टान्तेन मिथ्योपचारे सति शीघ्रहन्तृत्वमाह॥ ५—७॥

पृथक् पञ्चविधावेतौ निर्दिष्टौ रोगसंग्रहे ।
तयोः शृणु समुत्थानं लिङ्गं च सभिषग्जितम्॥८॥
रजसा धूमवाताभ्यां शीतस्थानाम्बुसेवनात् ।
व्यायामाद्ग्राम्यधर्माध्वरूक्षान्नविषमाशनात्॥ ९॥
आमप्रदोषादानाहाद्रौक्ष्यादत्यपतर्पणात् ।
दौर्बल्यान्मर्मणो घाताद्द्वन्द्वाच्छुद्ध्यतियोगतः॥१०॥
अतीसारज्वरच्छर्दिप्रतिश्यायक्षतक्षयात्।
रक्तपित्तादुदावर्ताद्विसूच्यलसकादपि॥ ११॥
पाण्डुरोगाद्विषाच्चैव प्रवर्तेते गदाविमौ ।

निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥ १२ ॥
पिष्टशालूकविष्टम्भिविदाहिगुरुभोजनात् ।
जलजानूपपिशितदध्यामक्षीरसेवनात् ॥ १३ ॥
अभिष्यन्द्युपचाराच्च श्लेष्मलानां च सेवनात् ।
कण्ठोरसोः प्रतीघाताद्विबन्धैश्च पृथग्विधैः ॥१४॥
मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति ।
उरःस्थः कफमुद्धूय हिक्काश्वासान्करोति सः॥१५॥
घोरान्प्राणोपरोधाय प्राणिनां पञ्च पञ्च च ।
उभयोः पूर्वरूपाणि शृणु वक्ष्याम्यतः परम् ।
कण्ठोरसोर्गुरुत्वं च वदनस्य कषायता ॥ १६ ॥
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ।
आनाहः पार्श्वशूलं च पीडनं हृदयस्य च ॥ १७ ॥
प्राणस्य च विलोमत्वं श्वासानां पूर्वलक्षणम् ।

पृथगिति प्रत्येकं पञ्चविधैः । रोगसंग्रहे इति अष्टोदरीये । अत्र च रूक्षेत्यादिना प्रायो वातप्रकोपकगणो विच्छियोक्तः प्रवर्तते प्रवर्तते गदाविमौ इत्यन्तेन । निष्पावेत्यादिना कफकारणतया हिक्काश्वासयोः हेतुगणोऽभिहितः तदनेन वातजनककफजनकहेतुवर्गद्वयविच्छेदपाठेन वातकफयोरप्यत्र स्वहेतुकुपितत्वेन स्वातन्त्र्यं दर्शयति नानुबन्ध्यरूपत्वं । प्राणोदकान्नेत्यादिना संप्राप्तिमाह । इयं हिक्काश्वासयोः साधारणी संप्राप्तिः । वैशेषिकी चाग्रे वक्ष्यति । प्राणोपरोधायेति प्रायः प्राणहरायेत्यर्थः । पञ्च पञ्च चेति हिक्काः पञ्च श्वासाः पञ्च इत्यर्थः । लक्षणग्रहगृहीतं पूर्वरूपं हिक्कानां कण्ठोरस इत्यादिना श्वासानामानाह इत्यादिनाह । विलोमत्वमिति पर्याकुलत्वं ॥ ८—१७ ॥

प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः ॥१८॥
हिक्काः करोति संरुध्य तासां लिङ्गं पृथक् शृणु ।
क्षीणमांसबलप्राणतेजसः सकफोऽनिलः ॥ १९ ॥
गृहीत्वा सहसा कण्ठमुच्चैर्घोषवतीं भृशम् ।
करोति सततं हिक्कामेकद्वित्रिगुणां तथा ॥ २० ॥
प्राणः स्रोतांसि मर्माणि संरुध्योष्माणमेव च ।
संज्ञां मुष्णाति गात्रे च स्तम्भं संजनयत्यपि ॥२१॥
मार्गं चैवान्नपानानां रुणद्ध्यपहतस्मृतेः ।
साश्रुविप्लुतनेत्रस्य स्तब्धशङ्खच्युतभ्रुवः ॥ २२ ॥
सक्तजल्पप्रलापस्य निर्वृतिं नाधिगच्छतः ।
महातेजा महावेगा महाशब्दा महाबला ।
महाहिक्केति सा नृणां सद्यः प्राणहरा मता ॥२३॥

इति महाहिक्का ।

प्राणोदकेत्यादिविशिष्टहिक्कासंप्राप्तिमाह—क्षीणमांसबलप्राणतेजस इति । अनुप्राणो वायुः उत्साहो वा तेजोऽग्निः उच्चैर्गृहीत्वाघोषवतीमिति योज्यम् । द्विसंततां त्रिसंततां अनेकगुणां वा करोति । तत्र द्विसंतता एकोपक्रमे वारद्वयं भवति । संरुध्योष्माणमिति देहोष्माणं । सक्तवचनतया प्रलापो यस्य स सक्तवाक्प्रलापः । महामूलेति महाबलगम्भीराश्रयदोषमूला । महाशब्दत्वं च उच्चैर्घोषवतीमित्यनेनैवोक्तमपि महाहिक्कासंज्ञोपादानार्थं इह पुनरुक्तिस्तेन महाहिक्केति संज्ञा ॥ १८—२३ ॥

हिक्कते यः प्रवृद्धस्तु कृशो दीनमना नरः ।
जर्जरेणोरसा कृच्छ्रं गम्भीरमनुनादयन् ॥ २४ ॥
संजृम्भन्संक्षिपंश्चैव तथाङ्गानि प्रसारयन् ।
पार्श्वे चोभे समायम्य कूजन्स्तम्भरुगर्दितः ॥ २५ ॥
नाभेः पक्वाशयाद्वापि हिक्का चास्योपजायते ।
क्षोभयन्ती भृशं देहं नामयन्तीव ताम्यतः ॥ २६ ॥
रुणद्ध्युच्छ्वासमार्गं तु प्रनष्टबलचेतसः ।
गम्भीरनामा सा तस्य हिक्का प्राणान्तिकी मता ॥

इति गम्भीरा हिक्का ।

तत्र हिगिति कायति शब्दं करोतीति हिक्का गम्भीरमनुनादयन्निति हिक्काया अनु गम्भीरं शब्दं कुर्वन् संक्षिपन्नङ्गमिति योज्यम् । गम्भीरदेशभवत्वात् गम्भीरेति संज्ञा ॥ २४–२७ ॥

व्यपेता जायते हिक्का यान्नपाने चतुर्विधे ।
आहारपरिणामान्ते भूयश्च लभते बलम् ॥ २८ ॥
प्रलापवम्यतीसारतृष्णार्तस्य विचेतसः ।
सजृम्भस्य प्लुताक्षस्य शुष्कास्यस्य विनामिनः ॥२९॥
पर्याध्मातस्य हिक्का या जत्रुमूलादसन्तता ।
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी ॥३०॥

इति व्यपेता वा यमिका हिक्का ।

व्यपेता परिणता इत्यर्थः । आहारपरिणामांत इति आहारपरिणामे वृत्ते एतेनाहारेऽपि उत्पद्यत अन्ते बलवती भवती सा व्यपेत इति संज्ञया दर्शयति । विनामिन इति शरीरविनामकस्य असंततेति अनतिदीर्घा ॥ २८—३० ॥

क्षुद्रवातो यदा कोष्ठाद्व्यायामपरिघट्टितः ।
कण्ठे प्रपद्यते हिक्कां तदा क्षुद्रां करोति सः ॥३१॥
अतिदुःखा न सा चोरःशिरोमर्मप्रबाधिनी ।
न चोच्छ्वासान्नपानानां मार्गमावृत्य तिष्ठति ॥ ३२॥
वृद्धिमायस्यतो याति भुक्तमात्रे च मार्दवम् ।
यतः प्रवर्तते पूर्वं तत एव निवर्तते ॥ ३३ ॥
हृदयं क्लोम कण्ठं च तालुकं च समाश्रिता ।
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्तिता ३४

इति क्षुद्रहिक्का ।

क्षुद्रेत्यादिना क्षुद्राहिक्कामाह क्षुद्रवातोऽल्पवातः । केचित्क्षुद्रवातमुदानमाहुः । आयस्यत इति आयासं कुर्वतः मार्दवं यातीति संबन्धः । यतः प्रवर्तते पूर्वं तत एव निवर्तत इति उत्पद्यमानैव निवर्तमानरोगा भवति महाहिक्कादिवत् अनुबन्धा न भवति उत्पादकहेतोः व्यायामादेरेव निवर्तते व्याया-

मादिना हिक्काजनकवातस्य क्षुद्रस्य विक्षेपात् संप्राप्तिभङ्गेनेति भावः । क्षुद्रवातजनितत्वात् क्षुद्रा हिक्का ॥ ३१—३४ ॥

**सहसात्यम्यवहृतैः पानान्नैः पीडितोऽनिलः ।**
**ऊर्ध्वं प्रपद्यते कोष्ठान्मद्यैर्वातिमदप्रदैः ॥ ३५ ॥**
**तथातिरोषभाष्याध्वभारातिपरिवर्तनैः ।**
**वायुः कोष्ठगतो धावन्पानभोज्यप्रपीडितः ॥ ३६ ॥**
**उरःस्रोतः समाविश्य कुर्याद्धिक्कां ततोऽन्नजाम् ।**
**तथा शनैरसंबन्धं क्षुवंश्चापि स हिक्कते ॥ ३७ ॥**
**न मर्मबाधाजननी नेन्द्रियाणां प्रबाधिनी ।**
**हिक्का पीते तथा भुक्ते शमं याति च सान्नजा ३८**

**इति अन्नजा हिक्का ।**

सहसेत्यादिना अन्नजामाह । इयं च यद्यपि दोषाभिभूतजाप्युक्ता तथापि दोषादिजनितापि । पानभोज्यप्रपीडित इत्यनेनान्नास्य कारणत्वेनोक्तत्वात् अन्नजेयमिति संज्ञा॥३५-३८॥

**अतिसंचितदोषस्य भक्तच्छेदकृशस्य च ।**
**व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥३९॥**
**आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्**
**यमिका च प्रलापार्तितृष्णामोहसमन्विता ॥ ४० ॥**
**अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ।**
**तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ४१**

अतीत्यादिना साध्यासाध्यविभागमाह । अतिशयेन संचिता दोषा यस्य स तथा । भक्तच्छेदकृशस्येति अभोजनदुर्बलस्य । आसां या हिक्का पञ्चानां या हिक्का अतीत्यादिना प्रोक्तलक्षणस्य पुरुषस्य भवति सा जीवितं हन्ति । यमिकाचेत्यनेन क्षुद्रान्नजा साध्यत्वेनोक्ता वेगेन जायमाना यमिका ज्ञेया पूर्वोक्तानुवेगेन या जायमाना सा महाहिक्का सा स्वरूपेणैव असाध्या तस्याः अतीत्यादियोगेनासाध्यताविधानमनर्थकम् । तथा महत्यादिहिक्कानां तिसृणां असंपूर्णलक्षणानामसाध्यत्वम् । क्षुद्रान्नजयोस्तु संपूर्णलक्षणयोरपि असाध्यत्वम् । महाहिक्कादित्रयं निसर्गत एवासाध्यम् । अन्ये तु ब्रुवते महाहिक्कादयोऽपि कदाचित्साध्या भवन्त्येव तत्र प्राणान्तिकेति वचनात् तत्प्रायः प्राणहरा इत्यनेनोक्तम् । तथा जतूकर्णे आद्या दुःसाध्या, यमिका तृष्णामोहवती सद्यः प्राणहृत् । गम्भीरा व्यपेते च इत्युक्तं । अक्षीणेति अक्षीणमांसः ॥ ३९—४१ ॥

**यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः ।**
**विष्वग्व्रजति संरुद्धस्तदा श्वासान्करोति सः॥४२॥**
**उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।**
**उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥ ४३ ॥**
**प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।**
**विकृताक्षाननो बद्धमूत्रवर्चा विशीर्णवाक् ॥ ४४ ॥**
**दीनः प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् ।**
**महाश्वासोपसृष्टः स क्षिप्रमेव प्रपद्यते ॥ ४५ ॥**

**इति महाश्वासः ।**

यदेत्यादिना श्वाससंप्राप्तिमाह स्रोतांसीति प्रकृतत्वात् प्राणोदकवाहीनि स्रोतांसि कफपूर्वक इति कफप्रधानः विष्वग्व्रजति सर्वतो गच्छति । उद्धूयमानेत्यादिना महाश्वासलक्षणमाह उद्धूयमान इति ऊर्ध्वं धूयमानवातः । उच्चैरिति दीर्घम् । मत्तर्षभो मत्तबलीवर्दः । दीन इति दीनवत् हीनं प्रश्वसितमिति पाठः । तथाहि प्रश्वसितस्य दीनत्वे दूराद्विज्ञायत इति यद्वक्ष्यति तदनुपपन्नं स्यात् ॥ ४१—४५ ॥

**दीर्घं श्वसिति यस्तूर्ध्वं न च प्रत्याहरत्यधः ।**
**श्लेष्मावृतमुखस्रोतः क्रुद्धगन्धवहार्दितः ॥ ४६ ॥**
**ऊर्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः ।**
**प्रमुह्यन्वेदनार्तश्च शुष्कास्योऽरतिपीडितः ॥ ४७ ॥**
**ऊर्ध्वश्वासे प्रवृत्ते च यश्चाधःश्वासरोधभाक् ।**
**मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥४८॥**

**इत्यूर्ध्वश्वासः ।**

दीर्घमित्यादिनोर्ध्वश्वासमाह दीर्घं श्वसिति श्वासस्य बहिर्निर्गमनं दीर्घकालं करोति न च प्रत्याहरत्यध इति श्वासमधो न नयति । क्रुद्धगन्धवहो वायुः । श्वासस्य दीर्घकाल उद्धूयने अधोऽनयने चोक्ते हेतुमाह ऊर्ध्वश्वासेत्यादिना ॥४६—४८॥

**यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः ।**
**न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः ॥ ४९ ॥**
**आनाहस्वेदमूर्च्छार्तो दह्यमानेन वस्तिना ।**
**विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥ ५० ॥**
**विचेताः परिशुष्कास्यो विवर्णः प्रलपन् नरः ।**
**छिन्नश्वासेन संच्छिन्नः स शीघ्रं प्रजहात्यसून् ५१**

**इति छिन्नश्वासः ।**

यस्त्वित्यादिना छिन्नश्वासलक्षणमाह । श्वसिति निःश्वस्य पुनःक्षणान्तेन न वाश्वसिति न श्वासं लभते मर्मच्छेदरूपा रुक् वस्तिनिरोधः । वस्तिनिरोधो मूत्रनिरोध इत्यर्थः । रक्तैकलोचनत्वमिह व्याधिप्रभावात् । विच्छिन्नः विमुक्तसंधिबन्धः एते त्रयः श्वासाः निसर्गतोऽसाध्याः ॥ ४९—५१ ॥

**प्रतिलोमं यदा वायु स्रोतांसि प्रतिपद्यते ।**
**ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥ ५२ ॥**
**करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ।**
**अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥ ५३ ॥**
**प्रताम्यत्यतिवेगाच्च कासते सन्निरुध्यते ।**
**प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ ५४ ॥**
**श्लेष्मण्यमुच्यमाने च भृशं भवति दुःखितः ।**
**तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥ ५५ ॥**
**अथास्यो ध्वसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्।**
**न चापि निद्रां लभते शयानः श्वासपीडितः॥५६॥**

पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णं चैवाभिनन्दति ॥५७॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ।
विशुष्कास्यो मुहुः श्वासो मुहुश्चैवावधम्यते ॥५८॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्चाभिवर्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः

इति तमकश्वासः ।

प्रतिलोम इत्यादिना तमकश्वासमाह—श्लेष्माणं समुदीर्यचेत्यनेन सामान्यसंप्राप्त्युक्तस्यापि श्लेष्मणः पुनरभिधानात् इह विशेषेण कारणत्वं दर्शयति । घुर्घुरकमिति कण्ठे घुर्घुरकशब्दं । संनिरुध्यते इति निरोधो भवति तस्यैव चेति शेषः । आसीन उपविष्टः । उच्छ्रिताक्ष इति उच्छूनाक्षः । मुहुश्चैवावधम्यते इति क्षणक्षणश्वासेनैव वायुनावधम्यते ॥ ५२-५९ ॥

ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकं तु तत् ।
उदावर्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥ ६० ॥
तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ।
मज्जतस्तमसी वास्य विद्यात्संतमकं तु तत् ॥ ६१ ॥

इति प्रतमकसंतमकश्वासौ ।

ज्वरादिरोगेण तमकस्यैव पित्तसंबन्धात् प्रतमकसंज्ञां दर्शयन्नाह—ज्वरेत्यादि । उदावर्तेत्यादिना प्रतमकहेतुलक्षणे प्राह— प्रतमक एव संतमकः रजो धूलिः कायनिरोधो वेगानां निरोधः । किंवा क्लिन्नकायो वृद्धः निरोधो वेगनिरोधः । तमसेत्यन्धकारेण किंवा तमसा तमोगुणेन । यद्यपि तमकस्य शीतेन वृद्धिरुक्ता तथापि प्रतमकस्य पित्तसंबन्धत्वात् शीतैश्चाशुप्रशाम्यतीति यदुक्तं तदुपपन्नं भवति । किंवा यथा मद्योत्थविकारस्य मद्यं प्रशमनं भवति तथा शीतसमुत्थस्यापि तदालमात्रे शीतैः प्रशमनं ज्ञेयम् । प्रतमकभेदेतिकृत्वा श्वासानां पञ्चसंख्यासिद्धिः ॥ ६० ॥ ६१ ॥

रूक्षायासोद्भवः कोष्ठे क्षुद्रवात उदीरयन् ।
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥६२॥
निहन्ति न स गात्राणि न च दुःखो यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥६३॥
नेन्द्रियाणां व्यथां नापि कांचिदुत्पादयेद्रुजम् ।
स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ६४
इति श्वासाः समुद्दिष्टा हिक्काश्चैव स्वलक्षणैः ।
एषां प्राणहरा वर्ज्या घोरास्ते ह्याशुकारिणः ॥६५॥
भेषजैः साध्ययाप्यांस्तु क्षिप्रं भिषगुपाचरेत् ।
उपेक्षिता दहेयुर्हि शुष्कं कक्षमिवानलाः ॥ ६६ ॥

रूक्षेत्यादिना क्षुद्रश्वासमाह । रूक्षादायासाच्च उद्भवो यस्य स रूक्षायासोद्भवः । क्षुद्रवात इति स्वल्पवातः न सोऽत्यर्थमिति नात्यर्थं दुःखकरः न दुःख इति न दुःखसाध्यः । सर्वे चाव्यक्तलक्षणा इत्यनेन साध्यत्वेनोक्तानां महाश्वासादीनां व्यक्तवैलक्षण्यताव्यतिरिक्तायामेवावस्थायां साध्यतां प्रतिपादयति । प्राणहरा महाश्वासादयः संपूर्णलक्षणे वर्ज्याः साध्यायाप्या इति बहुवचनं साध्ययाप्यभेदबहुत्वाज्ज्ञेयम् ॥ ६२—६६ ॥

कारणस्थानमूलैक्यादेकमेव चिकित्सितम् ।
द्वयोरपि यथादृष्टमृषिभिस्तन्निबोधत ॥ ६७ ॥
हिक्काश्वासार्दितं स्निग्धैरादौ स्वेदैरुपाचरेत् ।
आक्तं लवणतैलेन नाडीप्रस्तरसंकरैः ॥ ६८ ॥
तैरस्य ग्रथितः श्लेष्मा स्रोतःस्वभिविलीयते ।
खानि मार्दवमायान्ति ततो वातानुलोमता ॥६९॥
यथाद्रिकुञ्जेष्वर्कांशुतप्तं विष्यन्दते हिमम् ।
स्थिरः श्लेष्मा शरीरस्थः स्वेदैर्विष्यन्दते तथा ७०
स्विन्नं ज्ञात्वा ततस्तूर्णं भोजयेत्स्निग्धमोदनम् ।
मत्स्यानां शूकराणां वा रसैर्दध्युत्तरेण वा ॥ ७१ ॥
ततः श्लेष्मणि संवृद्धे वमनं पाययेत्तु तम् ।
पिप्पलीसैन्धवक्षौद्रैर्युक्तं वाताविरोधि यत् ॥७२॥
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ।
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥ ७३ ॥

संप्रति भिन्नयोरपि हिक्काश्वासयोः यथा समानं चिकित्सितं भवति तथा दर्शयन्समानं चिकित्सितमाह—कारणेत्यादि । कारणं बाह्यकारणं स्थानं नाभ्यादि मूलं दोषः । स्निग्धैरिति स्नेहविशेषणम् । अन्ये तु स्निग्धमिति पठन्ति । लवणवत्तैलं लवणतैलं । कुञ्जेष्विति विटपेषु, मत्स्यादीनामित्यादौ मत्स्यानामपि रसः स्वरसः कल्केन कर्तव्यः । दध्युत्तरं दधिसरः । ईदृशं च भोजनं रसनानुगुणकफवृद्ध्यर्थम् । उक्तं हि श्लोकोद्भवः छर्दयतीह दुःखम् । वाताविरोधीत्यनेन अन्नं रूक्षं तीक्ष्णं वमनं निषेधयति । दुष्टःविग्रहो यस्य स दुष्टविग्रहः ॥ ६७—७३ ॥

लीनश्चेद्दोषशेषः स्याद्धूपैस्तं निर्हरेद्बुधः ।
हरिद्रापत्रमेरण्डमूलं लाक्षां मनःशिलाम् ॥ ७४ ॥
मांसीं सदेवदार्वेलां पिष्ट्वा वर्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद्धूमं यवैर्वा घृतसंयुतैः ॥ ७५ ॥

वमनशेषहरणार्थं धूममाह—लीन इत्यादिना । एतेन धूमवमनं विनापि स्वल्पदोषे कर्तव्या एव । मात्रापि धूमविषया दोषस्य विद्यमानत्वादलं हरितालं धूमवर्तिकरणं तस्याशीतीयोक्तधूमवर्तिविधानेन कर्तव्यम् । अत्र च धूमपाननलिकामानं वक्ष्यमाणकासहरधूमनलिकामानसमानमिच्छन्ति हिक्काश्वासयोरपि काससमानत्वात् ॥ ७४ ॥ ७५ ॥

मधूच्छिष्टं सर्जरसं घृतं मल्लकसंपुटे ।
कृत्वा धूमं पिबेच्छृङ्गं वालं वा स्नायु वा गवाम् ॥
स्योनाकवर्धमानानां नाडीं शुष्कां कुशस्य वा ।
पद्मकं गुग्गुलं लोध्रं शल्लकीं वा घृताप्लुतम् ॥७७॥
स्वरक्षीणातिसारासृक्पित्तदाहानुबन्धजान् ।

**मधुरस्निग्धशीताद्यैर्हिक्काश्वासानुपाचरेत् ॥ ७८ ॥**
**न स्वेद्याः पित्तदाहार्ता रक्तस्वेदातिवर्तिनः ।**
**क्षीणधातुबला रूक्षा गर्भिण्यश्चापि पित्तलाः ७९**

मधूच्छिष्टं सिक्थकं, मल्लकसंपुटेचात्रोक्तमपि पातव्यम-धुनिर्गमार्थे ऊर्ध्वच्छिद्रं कर्तव्यम् । पद्मकादिष्वपि घृतमि-त्याद्यनुवर्तते । वर्धमान एरण्डः । लोध्रोऽगरुः शल्लकी स्वना-मख्याता । शीताद्यैरित्यादिशब्देन पित्तहरणं पिच्छिलादिग्रह-णम् । पित्तदाहार्ता इति पित्तार्तान् दाहार्तांश्च । रक्तं स्वेदश्चा-तिवर्तमानौ येषां ते रक्तस्वेदातिवर्तिनः पित्तप्रकृतयः ॥ ७६—७९ ॥

**कोष्णैः काममुरःकण्ठं स्नेहसेकैः सशर्करैः ।**
**उत्कारिकोपनाहैश्च स्वेदयेन्मृदुभिः क्षणम् ॥ ८० ॥**
**तिलोमामापगोधूमचूर्णैर्वातहरैः सह ।**
**स्नेहैश्चोत्कारिका साम्लैः सक्षीरैर्वा कृता हिता ८१**
**नवज्वरामदोषेषु रूक्षस्वेदं विलङ्घनम् ।**
**समीक्ष्योल्लेखनं वापि कारयेल्लवणाम्बुना ॥ ८२ ॥**
**अतियोगोद्धतं वातं दृष्ट्वा वातहरैर्भिषक् ।**
**रसाद्यैर्नातिशीतोष्णैरभ्यङ्गैश्च शमं नयेत् ॥ ८३ ॥**
**उदावर्ते तथाध्माने मातुलुङ्गाम्लवेतसैः ।**
**हिङ्गुपीलुविडैश्चान्नं युक्तं स्यादनुलोमनम् ॥ ८४ ॥**

काममित्यादिना स्वेद्यानां स्थानविशिष्टं स्वेदमाह—काम-मिति । इच्छायां सत्यां उत्कारिकोपनाहैः स्वेदयेत् । उल्लेखनं वमनं, अतियोगोद्धतमिति वमनाद्यतियोगवृद्धम् । किंवा अति-योगेन अतिमात्रोद्धतं पीलुविडसिद्धम् ॥ ८०—८४ ॥

**हिक्काश्वासामयी ह्येको बलवान्दुर्बलोऽपरः ।**
**कफाधिकस्तथैवैको रूक्षबह्वनिलोऽपरः ॥ ८५ ॥**
**कफाधिके बलस्थे च वमनं सविरेचनम् ।**
**कुर्यात्पथ्याशिने धूमलेहादिशमनं ततः ॥ ८६ ॥**
**वातिकान्दुर्बलान्बालान्वृद्धांश्चानिलसूदनैः ।**
**तर्पयेदेव शमनैः स्नेहयूषरसादिभिः ॥ ८७ ॥**

चिकित्साभेदार्थं हिक्काश्वासिनोऽवस्थाभेदमाह—हिकेत्यादि । एताश्चतस्रोऽवस्थाः साक्षादुक्ताः । बलवान् वाताधिकः क-फाधिकश्चेति । बह्वनिलविशेषणेनापि रूक्षस्निग्धावस्थाद्वयम् । तत्र बह्वनिलबहुकफरूपतासूचितेऽवस्थाद्वये क्रियां ब्रूते कफाधिक इति । तत इति वमनविरेचनानन्तरं तथाचापरे अवस्थाद्वये समानचिकित्सितमाह वातिकानिति । बालवृद्धयो-श्चात्रासंपूर्णक्षीणधातुत्वेन दुर्बलयोः दुर्बलोदाहरणार्थमेवोपा-दानम् । एतच्च संक्षेपेण चिकित्सासूत्रमुक्तं । तेन बलवा-न्वाताधिक इत्याद्यवस्थामिश्रितायाः युक्तचिकित्सायाः अपि मिश्रणं कल्पनीयम् । यथा प्रत्येकदोषोक्तचिकित्सादोषसंसर्गे विकल्प्यते ॥ ८५—८७ ॥

**अनुत्क्लिष्टकफास्विन्नदुर्बलानां विशोधनात् ।**
**वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥ ८८ ॥**
**दृढान्बहुकफांस्तस्मात्रसैरानूपवारिजैः ।**
**तृप्तान्विशोधयेत्स्विन्नान्बृंहयेदितरान्भिषक् ॥ ८९ ॥**
**बर्हितित्तिरिदक्षाश्च जाङ्गलाश्च मृगद्विजाः ।**
**दशमूलीरसे सिद्धाः कौलत्थे वा रसे हिताः ॥ ९० ॥**

अविषयप्रविष्टशोधने दोषमाह अनुत्क्लिष्टेत्यादिना । मर्म इति हृदयादीनि दृढानिति बलवतः रसैरानूपवारिजैस्तृप्तानित्यनेन कफोत्क्लेशकरणे तृप्तिं दर्शयति स्विन्नानिति स्वेदितान् इतरा-निति दुर्बलान् बहुवातांश्च कफाधिकायामवस्थायां तर्पणरूप-विपरीतक्रियाकरणेऽनुक्तेऽपि कफवृद्ध्या अदोषा एव ज्ञेया । इह दशमूलरसादौ बर्हितित्तिरादीनां सिद्धिः रसविधानेनैव ज्ञेया ॥ ८८—९० ॥

**निदिग्धिकां बिल्वमध्यं कर्कटाख्यां दुरालभाम् ।**
**त्रिकण्टकं गुडूचीं च कुलत्थांश्च सचित्रकान् ॥ ९१ ॥**
**जले पक्त्वा रसः पूतः पिप्पलीघृतभर्जितः ।**
**सनागरः सलवणः स्याद्यूषो भोजने हितः ॥ ९२ ॥**
**रास्नां बलां पञ्चमूलं ह्रस्वं मुद्गान्सचित्रकान् ।**
**पक्त्वाम्भसि रसे तस्मिन्यूषः साध्यश्च पूर्ववत् ॥ ९३ ॥**
**पल्लवान्मातुलुङ्गस्य निम्बस्य कुलकस्य च ।**
**पक्त्वा मुद्गांश्च सव्योषान्क्षारयूषान्विपाचयेत् ९४**
**दत्त्वा सलवणं क्षारं शिग्रूणि मरिचानि च ।**
**युक्त्या संसाधितो यूषो हिक्काश्वासविकारनुत् ९५**

निदिग्धिकामित्यादि यूषविधानं सामान्यपठितमपि कुल-त्थयूषप्रकृतित्वाद्यूषसाधनौपयिकं मानं गृह्यते शेषद्रव्यं तु यूषसाधनमानेन गृह्यते । पिप्पलीसाधिते घृते वा पिप्पलीयुक्ते घृते भर्जित इति पिप्पलीघृतभर्जितः । एवं रास्नामित्यादौ र-सस्य प्राधान्यं पूर्ववदिति पिप्पलीघृतभर्जितादिकमतिदिशति । क्षारेण युक्तो यूषः क्षारोऽपामार्गादिः ॥ ९१—९५ ॥

**कासमर्दकपत्राणां यूषः शोभाञ्जनस्य च ।**
**शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः ॥ ९६ ॥**
**सदधिव्योषसर्पिष्को यूषो वार्ताकजो हितः ।**
**शालिषष्टिकगोधूमयवान्नान्यनवानि च ॥ ९७ ॥**
**हिङ्गुसौवर्चलाजाजीविडपौष्करचित्रकैः ।**
**सकर्कटाह्वयैः सिद्धा यवागूः श्वासहिक्किनाम् ९८**

कासमर्दः कासमर्दादीनां यथायोग्यतया प्रक्षेपः जलमा-नादिना संस्कार उन्नेयः ॥ ९६—९८ ॥

**दशमूलीशटीरास्नापिप्पलीमूलपौष्करैः ।**
**शृङ्गीतामलकीभार्गीगुडूचीनागराम्बुभिः ॥ ९९ ॥**
**यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः ।**
**कासहृद्ग्रहपार्श्वार्तिहिक्काश्वासप्रशान्तये ॥ १०० ॥**
**पुष्कराह्वशटीव्योषमातुलुङ्गाम्लवेतसैः ।**
**योजयेदन्नपानानि ससर्पिर्बिडहिङ्गुभिः ॥ १०१ ॥**

दशमूलस्य वा क्वाथमथवा देवदारुणः ।
तृषितो मदिरां वापि हिक्काश्वासी पिबेन्नरः ॥१०२॥
पाठां मधुरसां रास्नां सरलं देवदारु च ।
प्रक्षाल्य जर्जरीकृत्य सुरामण्डे निधापयेत् ॥१०३॥
तं मन्दलवणं कृत्वा भिषक्प्रसृतसंमितम् ।
पाययेत्तु ततो हिक्काश्वासश्चैवोपशाम्यति ॥ १०४ ॥
हिङ्गु सौवर्चलं कोलं समङ्गां पिप्पलीं बलाम् ।
मातुलुङ्गरसे पिष्टमारनालेन वा पिबेत् ॥ १०५ ॥
सौवर्चलं नागरं च भार्गीं द्विशर्करायुतम् ।
उष्णाम्बुना पिबेदेतद्धिक्काश्वासविकारनुत् ॥१०६॥
भार्गीनागरयोः कल्कं मरिचक्षारयोस्तथा ।
पीतद्रुचित्रकास्फोतामूर्वाणां चाम्बुना पिबेत् १०७
मधूलिका तुगाक्षीरी नागरं पिप्पली तथा ।
उत्कारिका घृते सिद्धा श्वासे पित्तानुबन्धजे १०८
श्वाविधः शशमांसं च शल्लकस्य च शोणितम् ।
पिप्पलीघृतसिद्धानि श्वासे वातानुबन्धजे ॥१०९॥
सुवर्चलारसो दुग्धं घृतं त्रिकटुकायुतम् ।
शाल्योदनस्यानुपानं वातपित्तानुगे हितम् ॥११०॥
शिरीषपुष्पस्वरसः सप्तपर्णस्य वा पुनः ।
पिप्पलीमधुसंयुक्तः कफपित्तानुगे मतः ॥ १११ ॥
मधुकं पिप्पलीमूलं गुडो गोऽश्वशकृद्रसः ।
घृतं क्षौद्रं हिक्काकासश्वासाभिष्यन्दिनां शुभम् ॥
खराश्वोष्ट्रवराहाणां मेषस्य च गजस्य च ।
शकृद्रसं बहुकफे चैकैकं मधुना पिबेत् ॥ ११३ ॥
क्षारं चाप्यश्वगन्धाया लेहयेत्क्षौद्रसर्पिषा ।
मयूरपादं नालं वा शकलं शल्लकस्य वा ॥ ११४ ॥
श्वाविज्जाण्डकचाषाणां रोमाणि कुररस्य वा ।
शृङ्गैकद्विशफानां वा चर्मास्थीनि क्षुरांस्तथा ११५
सर्वाण्येकैकशो वापि दग्ध्वा क्षौद्रघृतान्वितान् ।
चूर्णं लीढ्वा जयेत्कासं हिक्कां श्वासं च दारुणम् ॥
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।
तस्मात्तन्मार्गशुद्ध्यर्थं सेका लेह्या न निष्कफे ११७

दशमूलीत्यादौ कषायशब्दः पानीयस्थानविहितत्वादर्धशृते जले एव वर्तते । आस्फोता अपरमल्लिकेति ख्याता मधूलिकाल्पगोधूमा । श्वाविधमिति शल्लकस्य मांसं मयूरपादमिति नालं मयूरस्यैव पृथगेव प्रस्थमानं शकलमिति मत्स्यशकलाकारं । जाण्डको मरुदेशोद्भवः प्राणी पृष्ठमात्रे संकोचमुपयाति । एकः द्विविधाभिन्नः शफः येषां तेऽश्वादयो एकशफाः द्विशफा हरिणादयः । तन्मार्गशुद्ध्यर्थमिति प्राणमार्गशुद्ध्यर्थम् ॥ ९९—११७ ॥

कासिने च्छर्दनं दद्यात्स्वरभङ्गे च बुद्धिमान् ।
वातश्लेष्महरैर्युक्तं तमके तु विरेचनम् ॥ ११८ ॥
उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ।
यथा तथानिलस्तस्य मार्गं नित्यं विशोधयेत् ११९

कासिन इति हिक्काश्वासयुक्त एव कासी । उदीर्यत इत्यादावनिलः कफमार्गनिरोधादुदीरित इति दर्शयति ॥११८॥११९॥

शटीचोरकजीवन्तीत्वङ्मुस्तं पुष्कराह्वयम् ।
सुरसं तामलक्येला पिप्पल्यगुरु नागरम् ॥१२०॥
वालकं च समं चूर्णं कृत्वाष्टगुणशर्करम् ।
सर्वथा तमके श्वासे हिक्कायां च प्रयोजयेत् १२१
मुक्ताप्रवालवैडूर्यशङ्खस्फटिकमञ्जनम् ।
ससारगन्धकाचार्कसूक्ष्मैला लवणद्वयम् ॥ १२२ ॥
ताम्रायोरजसी रूप्यं ससौगन्धिकसेरुकम् ।
जातीफलं शणाद्बीजमपामार्गस्य तण्डुलाः ॥१२३॥
एषां पाणितलं चूर्णं तुल्यानां क्षौद्रसर्पिषा ।
हिक्कां श्वासं च कासं च लीढमाशु नियच्छति१२४
अञ्जनात्तिमिरं काचं नीलिकं पुष्पकं तमः ।
मैल्यं कण्डूमभिष्यन्दं मन्दं च तत्प्रणाशयेत् १२५
इति मुक्ताद्यचूर्णम् ।

शटीत्यादिके चूर्णे समसिति सवालकं द्रव्यं अष्टगुणशर्करमिति एकभागापेक्षयाष्टगुणशर्करं सर्वथेति मानभोजनलेहादियुक्ते । मुक्तेत्यादौ ससारः स्फटिक एव, लवणद्वयं सौवर्चलं सैन्धवं च सौगन्ध्यं माणिक्यभेदः । सीसकं सौवीराञ्जनं । केचित् कृष्णमणिमाहुः । कसेरुकमिषन्नीलपीतोमणिः । पाणितलं कर्षः, मैल्यमिति मलदिग्धाक्षितां ॥ १२०—१२५ ॥

शटीपुष्करमूलानां चूर्णमामलकस्य च ।
मधुना संयुतं लेह्यं चूर्णं वा काललोहजम् १२६
सशर्करां तामलकीं द्राक्षां गोऽश्वशकृद्रसम् ।
तुल्यं गुडं नागरं च प्राशयेन्नावयेत्तथा ॥ १२७ ॥
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ।
नावयेच्चन्दनं वापि नारीक्षीरेण संयुतम् ॥ १२८ ॥
सुखोष्णं घृतमण्डं वा सैन्धवेनावचूर्णितम् ।
नावयेन्मक्षिकाविष्टामलक्तकरसेन वा ॥ १२९ ॥
स्त्रियाः स्तन्येन सिद्धं वा सर्पिर्मधुरकैरपि ।
पीतं नस्तो निषिक्तं वा सद्यो हिक्कां नियच्छति १३०
सकृदुष्णं सकृच्छीतं व्यत्यासाद्धिक्किनां पयः ।
पाने नस्तःक्रियायां वा शर्करामधुसंयुतम् ॥ १३१ ॥

काललोहो लोह एव । तीक्ष्णं लोहं केचिद्वर्णयन्ति । गृञ्जनकं लोहितपलाण्डुः । माक्षिकीमिति मक्षिकाभवां मधुरकैरिति जीवनीयैः सकृदिति कदाचित् व्यत्यासादिति विपर्यसात् उष्णं पयः कृत्वा शीतं कर्तव्यं मधुसंयोगश्चात्र विरुद्धत्वादुष्णेन तैव्यः ॥ १२६—१३१ ॥

अधोभागे घृतं सिद्धं सद्यो हिक्कां नियच्छति ।
पिप्पलीमधुयुक्तौ वा रसौ धात्रीकपित्थयोः॥१३२॥

लाजालाक्षामधुद्राक्षापिप्पल्यश्वशकृद्रसान्।
लिह्यात्कोलं मधुद्राक्षापिप्पलीनागराणि वा १३३
शीताम्बुसेकः सहसा त्रासो विस्मापनं भयम्।
क्रोधहर्षप्रियोद्वेगा हिक्काप्रच्यवना मताः ॥ १३४ ॥
हिक्काश्वासविकाराणां निदानं यत्प्रकीर्तितम्।
वर्ज्यमारोग्यकामैस्तद्धिक्काश्वासविकारिभिः १३५
हिक्काश्वासानुबन्धा ये शुष्कोरःकण्ठतालुकाः।
प्रकृत्या रूक्षदेहाश्च सर्पिर्भिस्तानुपाचरेत् ॥१३६॥
दशमूलरसे सर्पिर्दधिमण्डे च साधयेत्।
कृष्णासौवर्चलक्षारवयःस्थाहिङ्गुचोरकैः।
कायस्थया च संसिद्धं हिक्काश्वासौ प्रणाशयेत् ३७
इति दशमूलाद्यं घृतम्।

अधोभागैरिति विरेचनद्रव्यैः। दशमूलीत्यादौ दधिमण्डो मस्तुः दशमूलक्काथदधिमण्डानां च मिलित्वा चातुर्गुण्यम्। वयस्था ब्राह्मी। कायस्था सुरसा ॥ १३२—१३७ ॥

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी।
भूतिकं पौष्करं मूलं पलाशश्चित्रकः शटी॥ १३८॥
सौवर्चलं तामलकी सैन्धवं बिल्वपेशिका।
तालीसपत्रं जीवन्ती वचा तैरक्षसंमितैः ॥ १३९ ॥
हिङ्गुपादैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे।
एतद्यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः।
शोथानिलार्शोग्रहणीहृत्पार्श्वरुज एव वा ॥ १४० ॥
इति तेजोवत्यादिघृतम्।

मनःशिलासर्जरसलाक्षारजनिपद्मकैः।
सञ्जिष्ठैलैश्च कर्षांशैः प्रस्थः सिद्धो घृताद्धितः १४१
इति मनःशिलादिघृतम्।

तेजोवत्यादौ तेजोवती चविका। हिंगुपादैरित्यत्र हिंगुपादशब्देन हिंगुलमेकद्रव्यापेक्षया शाणमानो गृह्यते। तथापि अयमेव प्रयोगो हारीतेन एतानि तेजोवतीत्यादिपठित्वा उक्तः कल्कैस्तैरक्षसंमितैर्हिंगुशाणेन संयुतैर्घृतप्रस्थं विपाचयेत् इत्यादि ॥ १३८—१४१ ॥

जीवनीयोपसिद्धं वा सक्षौद्रं लेहयेद्घृतम्।
त्र्यूषणं दाधिकं वापि पिबेद्वासाघृतं तथा ॥१४२॥
"यत्किंचित्कफवातघ्नमुष्णं वातानुलोमनम्।
भेषजं पानमन्नं वा तद्धितं श्वासहिक्किने ॥ १४३ ॥
वातकृद्वा कफहरं कफकृद्वानिलापहम्।
कार्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम् ॥
सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत्।
नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्शने ॥१४५॥
तस्माच्छुद्धानशुद्धांश्च शमनैर्बृंहणैरपि।
हिक्काश्वासार्दिताञ्जन्तून्प्रायशः समुपाचरेत् १४६"

वासाघृतमिति गुल्मोक्तं। त्र्यूषणमिति त्र्यूषणं त्रिफलामित्यादिना त्र्यूषणसंज्ञयैव कासचिकित्सिते वक्ष्यमाणं। अनुक्तचिकित्सापक्षग्रहणार्थमाह यत्किंचिदित्यादि। अनैकान्तिकं कर्तव्यविधिमाह वातकृदित्यादि। अत्र हिक्काश्वासयोश्चिकित्सिते विधिरयं—तत्र तावत् कफवातहरं प्रधानमेवोक्तम्। यत्तु अवशिष्टं तत्र दोषस्य विद्यमानतया एकान्तेन कारणं ज्ञेयम्। एवमुक्तेऽपि अनेकान्तेन चिकित्साद्वयकरणे वातहरस्यैव प्राधान्यं ज्ञेयम्। ताभ्यामित्यादि अनिलापहं च बृंहणं समानं भवति। तत्रोपपत्तिमाह सर्वेषामित्यनेन। गदान्तरानपि ज्वरादीन् हिक्काश्वासवद्बृंहणार्हानाह बृंहणे क्रियमाणे ह्यल्पोपायो भवति शक्यः प्रतीकारो भवति बृंहणजनितबलानां सुखजयव्यापत्तिकत्वादिति भावः। शमने तु नावश्योपायो भवति। कर्षणे तु क्रियमाणेऽशक्योपायो भवति कष्टश्च भवति। अशक्य इति असाध्यः, एतदपि कर्षणेन बहुबले पुरुषे भेषजादिरोगस्य दुःशकत्वादिति ज्ञेयम्। अतएव शमनैर्बृंहणैरिति उपसंहारं करिष्यति। किंवा बृंहणरूपे शमने क्रियमाणे नावश्यमुपायो भवति भवन्नपि अल्पः शक्यश्च भवति शक्यमेव तु क्रियमाणे उपायो भवतीति योज्यम्। न्यायोपपादितं बृंहणशमनं बृंहणं वा प्रायः कर्तव्यतयोपसंहरन्नाह तस्मादित्यादि। अत्र शमनमशुद्धविषयं बृहणं च शुद्धविषयं केचिदाहुः शमनस्यैव तु बृंहणत्वं केचिदुदाहरंति ॥ १४२—१४६ ॥

तत्र श्लोकः।

दुर्जयत्वे समुत्पत्तौ क्रियैकत्वे च कारणम्।
लिङ्गं पथ्यं च हिक्कानां श्वासानां चेह दर्शितम् ॥

इति चरकसंहितायां हिक्काश्वासचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

दुर्जय इत्यादिकोऽध्यायार्थसंग्रहो व्यक्तः ॥ १४७ ॥
इति हिक्काश्वासचिकित्सितं समाप्तम् ॥

## अष्टादशोऽध्यायः।

अथातः कासचिकित्सितं व्याख्यास्यामः।

तपसा यशसा धृत्या धिया च परयान्वितः।
आत्रेयः कासशान्त्यर्थं सिद्धं प्राह चिकित्सितम् १
"वातादिभ्यस्त्रयो ये च क्षतजः क्षयजस्तथा।
पञ्चैते स्युर्नृणां कासा वर्धमानाः क्षयप्रदाः ॥ २ ॥
पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ३ ॥
अधःप्रतिहतो वायुरूर्ध्वस्रोतःसमाश्रितः।
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ॥ ४ ॥
आविश्य शिरसः खानि सर्वाणि प्रतिपूरयन्।
आभञ्जन्नाक्षिपन्देहं हनुमन्ये तथाक्षिणी ॥ ५ ॥

नेत्रे पृष्ठमुरःपार्श्वे निर्भुज्य स्तम्भयंस्ततः ।
शुष्को वा सकफो वापि कसनात्कास उच्यते ॥६॥

हिक्काश्वासानन्तरं समानचिकित्सितत्वात् तथा हिक्काश्वासकासानां परस्परानुबन्धित्वाच्च कासचिकित्सितमुच्यते । अभ्रात्रेयस्याभिधानादेव शिष्यप्रश्नोऽनुमीयते । न पृष्टा गुरवो वदन्तीति न्यायात् । क्षय इति धातुक्षयस्तेन राजयक्ष्मसंबन्धानां क्षीणधातुपुरुषभवानां तथा जराकासस्य च क्षयजशब्देन ग्रहणं भवति । क्षतोद्भवस्य क्षतपूर्वकयक्ष्मभवस्य तथा क्षतक्षीणस्य च कासस्य ग्रहणं भवति । पञ्चेति संख्या सकलकासावरोधो ज्ञेयः । क्षयप्रदा इति देहक्षयप्रदाः न मारकाः इति यावत् । किंच क्षयजोऽपि कासः पुनर्विशिष्टक्षयप्रदो भवति, यथा ज्वरोत्पत्तेः रक्तपित्तं पुनर्ज्वरो भवति उक्तंहि—ज्वरसंतापाद्रक्तपित्तमुदीर्यते रक्तपित्ताज्ज्वरः इति । पूर्वरूपमाह पूर्वेत्यादि । शूकैरिव पूर्णः शूकपूर्णः गल आस्यं च यस्य । भोज्यानामवरोधोऽरुचिः अशक्तिर्वा । अथेत्यादिना संप्राप्तिमाह उदानभावमापन्न इति ऊर्ध्वगतिस्वभावमापन्नः । खानीति स्रोतांसि, निर्भुज्येत्याक्षिप्य नेत्रादीन्येव स्तम्भयन् कास इत्यन्वर्थसंज्ञयोच्यते । कसगतिसंतानयोरिति धातोरयं प्रयोगः ॥ १—६ ॥

प्रतिघातविशेषेण तस्य वायोः सरंहसः ।
वेदनाशब्दवैषम्यं कासानामुपजायते ॥ ७ ॥
रूक्षशीतकषायाल्पप्रमितानशनं स्त्रियः ।
वेगधारणमायासो वातकासप्रवर्तकाः ॥ ८ ॥
हृत्पार्श्वोरःशिरःशूलस्वरभेदकरो भृशम् ।
शुष्कोरःकण्ठवक्त्रास्यहृष्टलोमा प्रताम्यतः ॥ ९ ॥
निर्घोषदैन्यक्षामस्य दौर्बल्यक्षयमोहकृत् ।
शुष्ककासः कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् ॥
स्निग्धाम्ललवणोष्णैश्च भुक्तमात्रे प्रशाम्यति ।
ऊर्ध्ववातस्य जीर्णेऽन्ने वेगवान्मारुतो भवेत् ॥११॥

एवं सामान्योक्तस्य भेदहेतुमाह प्रतीघातेत्यादि । प्रतीघात इत्यावरणं कफादि सरंहसः सवेगस्य, वेदना पीडा वैशिष्ट्यं विशिष्टत्वं भिन्नत्वमिति यावत्, रूक्षेत्यादिना वातजस्य हेतुलक्षणे आह—प्रताम्यत इति तमसीव प्रवेशतः । ऊर्ध्ववातस्येति ऊर्ध्वतया प्रकुपितवातस्य ॥ ७—११ ॥

कटुकोष्णविदाह्यम्लक्षाराणामतिसेवनम् ।
पित्तकासकरं क्रोधः सन्तापश्चाग्निसूर्यजः ॥ १२ ॥
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं स्वरामयः ।
उरोधूमायनं तृष्णा दाहो मोहोऽरुचिर्भ्रमः ॥ १३ ॥
प्रततं कासमानश्च ज्योतींषीव च पश्यति ।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥ १४ ॥
गुर्वभिष्यन्दिमधुरस्निग्धस्वप्नाविचेष्टनैः ।
वृद्धः श्लेष्मानिलं रुद्ध्वा कफकासं करोति हि ॥१५॥

मन्दाग्नित्वारुचिच्छर्दिपीनसोत्क्लेशगौरवैः ।
लोमहर्षास्यमाधुर्यक्लेदसंसदनैर्युतम् ॥ १६ ॥
बहुलं मधुरं स्निग्धं निष्ठीवति घनं कफम् ।
कासमानोऽतिरुग्वक्षःसंपूर्णमिव मन्यते ॥ १७ ॥

कट्वित्यादिना पित्तकासहेतुलिङ्गमाह अग्निसूर्यज इति अग्निसूर्यभवः संताप इत्यर्थः । उरोधूमायनमिति उरसो धूमोद्गमनमिव पित्तजेऽपि उद्गमनं श्लेष्मनिष्ठीवनं। व्याधेरुरःप्रभृतिकफस्थानभूतत्वेन श्लेष्मपित्तसंसर्गो जायत इति ज्ञेयम् । गुर्वित्यादिना श्लेष्मजमाह ॥ १२—१७ ॥

अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् ॥ १८ ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत्सशोणितम् ।
रुजमानेन कण्ठेन विरुग्णेनैव चोरसा ॥ १९ ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ २० ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ।
पारावत इवाकूजन्कासवेगात्क्षतोद्भवात् ॥ २१ ॥

अतिव्यवायेत्यादिना क्षतजमाह । उरःक्षतं गृहीत्वेति क्षतं प्राप्येत्यर्थः । अयं च कासः साहसयक्ष्मरूपेऽपि युक्त एव ज्ञेयः ॥ १८—२१ ॥

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥२२
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ।
दुर्गन्धं हरितं रक्तं ष्ठीवेत्पूयोपमं कफम् ॥ २३ ॥
स्थानादुत्कासमानश्च हृदयं मन्यते च्युतम् ।
अकस्मादुष्णशीतार्तो बह्वाशी दुर्बलः कृशः ॥२४॥
स्निग्धाच्छमुखवर्णत्वक् श्रीमद्दर्शनलोचनः ।
पाणिपादतलौ श्लक्ष्णौ सततासूयको घृणी ॥ २५॥
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक् पीनसोऽरुचिः ।
भिन्नसङ्घातवर्चस्त्वं स्वरभेदोऽनिमित्ततः ॥ २६ ॥
इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
याप्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥
कदाचिदपि सिध्येतामेतौ पादगुणान्वितौ ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः २८
त्रीन्साध्यान्साधयेत्पूर्वान्पथ्यैर्याप्यांश्च यापयेत् ।
चिकित्सामत ऊर्ध्वं तु शृणु कासनिबर्हिणीम् २९

विषमेत्यादिना क्षयजमाह । अत्र च विषमासात्म्यभोज्येन तथा व्यवायेन तथा वेगनिग्रहेण विषमासात्म्यजयक्ष्मजवेगसंधारणजानां यक्ष्मणां लक्षणभूतकासहेतुत्रयं पृथगुक्तं भवति । अत्र प्रसन्नदृष्टित्वं भिन्नवर्चस्त्वं अनिमित्ततो भवति तथा स्वरभेदोऽपि अनिमित्ततो भवति । देहनाशन इत्यसाध्य इत्यर्थः । पादगुणान्वित इति पादचतुष्टयगुणवान् । अत्र क-

दान्चित्सिध्यतीत्यभिधानेन याप्यत्वं साध्यत्वं वा नैकविषयकं। यतो न वायोरेव चतुःपादसंपत्त्या साध्यत्वमुक्तम्। क्षतजो याप्य इति उक्तः स भिन्नविषयः। क्षयजकासमेदं याप्यतया दर्शयन्नाह स्थविराणामित्यादि। स्थविराणामित्युक्त्यापि जराकास इति वचनेन देहक्षयकारितया कृतः स याप्यः यस्तु दोषकृतः स साध्य एव भवतीति ज्ञेयः। अन्ये तु जराकासं दोषेष्वेवान्तर्भावयन्ति। त्रीन्पूर्वानिति दोषजान् साध्यानिति साध्यत्वेनोक्तान्। याप्यानिति वहुवचनं व्यक्त्यपेक्षयोन्नेयम्॥ २२—२९॥

रूक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत्।
सर्पिर्भिर्वस्तिभिः पेया यूपक्षीररसादिभिः॥ ३०॥
वातघ्नसिद्धैः स्नेहाद्यैर्धूमैर्लेहैश्च युक्तितः।
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च बुद्धिमान् ३१
वस्तिभिर्बद्धविड्वातं शुष्कोर्ध्वं चोर्ध्वभक्तिकैः।
घृतैः सपित्तं सकफं जयेत्स्नेहविरेचनैः॥ ३२॥"
कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः॥ ३३॥

इति कण्टकारीघृतम्

रूक्षस्येत्यादिना चिकित्सामाह—शुष्कं ऊर्ध्वं यस्य स शुष्कोर्ध्व शुष्ककासगृहीतं वातपित्तं ऊर्ध्वभक्तिकैः घृतैर्जयेत्। शुष्कोर्ध्वमेव सकफं स्नेहविरेचनैर्जयेत्। कण्टकारीत्यादौ रसे इति क्वाथे॥ ३०—३३॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
धान्यपाठावचारास्नायष्ट्याह्वक्षारहिङ्गुभिः॥ ३४॥
कोलमात्रैर्घृतप्रस्थाद्दशमूलीरसाढके।
सिद्धां चतुर्थिकां पीत्वा पेयामण्डं पिवेदनु॥३५॥
तच्छ्वासकासहृत्पार्श्वग्रहणीदोषगुल्मनुत्।
पिप्पल्याद्यं घृतं चैतदात्रेयेण प्रकीर्तितम्॥ ३६॥

इति पिप्पल्यादिघृतम्।

चतुर्थिकामिति पलं॥ ३४—३६॥

त्र्यूषणं त्रिफलां द्राक्षां काश्मर्याणि परूपकम्।
द्वे पाठे देवदार्वृद्धिं स्वगुप्तां चित्रकं शटीम्॥३७॥
ब्राह्मीं तामलकीं मेदां काकनासां शतावरीम्।
त्रिकण्टकां विदारीं च पिष्ट्वा कर्षसमं घृतात्॥३८॥
प्रस्थं चतुर्गुणक्षीरं सिद्धं कासहरं पिवेत्।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत्॥ ३९॥
कामलार्शोऽनिलाष्ठीलाक्षतशोपक्षयापहम्।
त्र्यूषणं नाम विख्यातमेतद्धृतमनुत्तमम्॥ ४०॥

इति त्र्यूषणाद्यं घृतम्।

त्र्यूषणमित्यत्र द्वे पाठे इत्यनेन स्वल्पपत्रां द्वितीयां पाठां ग्राहयन्ति। स्वगुप्ता शूकशिम्वी॥ ३७—४०॥

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम्।
पलिकान् माणिकांशांस्तु कुलत्थान्वदरान्यवान्॥४१
तुलार्धं चाजमांसस्य पादशेषेण तेन च।
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः॥ ४२॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत्॥ ४३॥
पञ्च कासान् शिरःकम्पं शूलं वङ्क्षणयोनिजम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलाञ्जयेत्।

इति रास्नाघृतम्।

द्रोणेऽपामित्यादौ वक्ष्यमाणानि अजमांसान्तानि क्वाथ्यानि द्रोणे एव साध्यानि। माणिकाष्टौ पलानि जीवनीयानीति जीवन्त्यादीनि दश षड्विरेचनशताश्रितीयोक्तानि॥४१—४४॥

विडङ्गं नागरं रास्नां पिप्पलीहिङ्गुसैन्धवैः।
भार्गीक्षारश्च तच्चूर्णं पिवेद्वा घृतमात्रया॥ ४५॥
सकफेऽनिलजे कासे श्वासहिक्काहताग्निषु।
द्वौ क्षारौ पञ्च कोलानि पञ्चैव लवणानि च॥४६॥
शटीनागरकोदीच्यकल्कं वा वस्त्रगालितम्।
पाययेत घृतोन्मिश्रं वातकासनिवर्हणम्॥ ४७॥
दुरालभां शटीं द्राक्षां शृङ्गवेरं सितोपलाम्।
लिह्यात्कर्कटशृङ्गीं च कासे तैलेन वातजे॥ ४८॥
दुःस्पर्शां पिप्पलीं मुस्तं भार्गीं कर्कटकीं शटीम्।
पुराणगुडतैलाभ्यां चूर्णितं वापि लेहयेत्॥ ४९॥
विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम्।
मधुसर्पिर्युतं कासहिक्काश्वासं जयेल्लिहन्॥ ५०॥

घृतमात्रयेति चूर्णमालोडितया घृतमात्रया। वस्त्रगालितमिति वस्त्रपूतं। कर्कटमिति कर्कटशृङ्गी॥ ४५—५०॥

चित्रकं पिप्पलीमूलं व्योषं हिङ्गु दुरालभाम्।
शटीं पुष्करमूलं च श्रेयसीं सुरसां वचाम्॥ ५१॥
भार्गीं छिन्नरुहां रास्नां शृङ्गीं द्राक्षां च कार्पिकान्।
कल्कानर्धतुलाक्वाथे निदिग्ध्याः पञ्चविंशतिम् ५२
दत्त्वा मत्स्यण्डिकायाश्च घृताच्चे कुडवं पचेत्।
सिद्धं शीतं पृथक् क्षौद्रपिप्पलीकुडवान्वितम् ५३
चतुष्पलं तुगाक्षीर्याश्चूर्णितं तत्र दापयेत्।
लेहयेत्कासहृद्रोगश्वासगुल्मनिवारणम्॥ ५४॥

इति चित्रकादिलेहः।

चित्रकेत्यादौ श्रेयसीमिति हस्तिपिप्पली अर्धतुलाक्वाथ इत्यत्र तुलार्धशब्दोल्लेखेन क्रियमाणत्वात् द्रोणार्धजलेन क्वाथः कर्तव्यः॥ ५१—५४॥

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान्॥ ५५॥
भार्गीं पुष्करमूलं च द्विपलांशं यवाढकम्।
हरीतकीशतं चैकं जलपञ्चाढके पचेत्॥ ५६॥

यवे स्विन्ने कषायं तं पूतं तच्चाभयाशतम्।
पचेद्गुडतुलां दत्त्वा कुडवं च पृथक् घृतात् ॥५७॥
तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात्।
लिह्याद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥५८॥
तद्वलीपलितं हन्ति वर्णायुर्बलवर्धनम्।
पञ्च कासान् क्षयं कासं हिक्कां सविषमज्वराम् ५९
हन्यात्तथार्शोग्रहणीहृद्रोगारुचिपीनसान्।
अगस्त्यविहितं श्रेष्ठं रसायनमिदं शुभम् ॥ ६० ॥
इत्यगस्त्यहरीतकी।

दशमूलीत्यादौ हरीतकीशतमिति हरीतकीफलशतं। यवैः स्विन्नैरिति यवाः स्विन्ना भवन्ति तदा तत्कषायं पूतं गृहीत्वा हरीतकीशतं च गृहीत्वा गुडतुलां च दत्त्वा पुनःपाकः कर्तव्यः। यवानां च स्विन्नानां चतुर्भागावशेष एव कषायो भवतीति कृत्वा चतुर्भागावशिष्टमेवात्र कषायं कुर्वन्ति। घृततैलकुडवे चात्राष्टजलमानेन कुडवेऽपि द्विगुण्यस्य प्रतिपादितत्वात्। तन्त्रान्तरे चात्रैव योगे मधुनश्च पलाष्टकमित्युक्तम्। तुल्यमानत्वेऽपि चात्र घृतमधुनोः द्रव्यान्तरयोगविद्यमानत्वान्न विरुद्धत्वम्। द्रव्यान्तरयोगे सति मधुघृतयोस्तुल्यमानता न विरुद्धा भवति। अत्र च हरीतकीफलस्विन्नं घृततैले प्रथमं भर्जयंति ततः क्वाथादिप्रक्षेपः अवतारसमये च पिप्पलीचूर्णप्रक्षेपः शीतीभूते च मधु देयं इदं वृद्धवैद्यानां कर्माहुः। लेह्यादीनि तं प्रकृतं लेहं लिह्यात्। द्वेऽभये च खादेत्। नित्यं निरन्तरमित्यर्थः। किंवा द्वेऽभये लिह्यात् तथा द्वेऽभये खादेत्। इत्यनेन अभयाद्वयसंवद्धलेह्यं भागं लिह्यात् ततस्तदभयाद्वयं खादेदित्यर्थः। अगस्त्यविहितमित्यनेनास्य महाजनसंप्रदाययोग्यता सिद्धा भवतीत्यर्थः ॥ ५५—६० ॥

सैन्धवं पिप्पलीं भार्गीं शृङ्गवेरं दुरालभाम्।
दाडिमाम्लेन कोष्णेन भार्गीनागरमम्बुना ॥ ६१ ॥
पिबेत्खदिरसारं वा मदिरादधिमस्तुभिः।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥ ६२ ॥
"शिरसः सदने स्रावे नासाया हृदि ताम्यति।
कासप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ ६३ ॥
दशाङ्गुलोन्मितां नाडीमथवाष्टाङ्गुलोन्मिताम्।
शरावसंपुटच्छिद्रं कृत्वा जिह्वां विचक्षणः ॥ ६४ ॥
वैरेचनं मुखेनैव कासवान् धूममापिबेत्।
तमुरः केवलं प्राप्तं मुखेनैवोद्वमेत्पुनः ॥ ६५ ॥
स ह्यस्य तैक्ष्ण्याद्विक्षिप्य श्लेष्माणमुरसि स्थितम्।
निष्कृष्य शमयेत्कासं वातश्लेष्मसमुद्भवम् ॥ ६६ ॥

खदिरसारमिति खदिरकाष्ठसारम्। ससैन्धवमिति ईषत् सैन्धवेन अव्यक्तलवणमिति यावत्। अत्रापि मदिरादिभिः पिबेदित्यनुवर्तते। शिरस इत्यादिना धूमयोग्यावस्थोपदर्शनपूर्वकं धूममाह। गौरवादिना शिरसि पीडिते दशांगुलोन्मितां सूत्रस्थानोक्तधूमपानविशिष्टनलिकेह विधीयते। अयं च धूमः वमनार्थम्। तन्त्रान्तरे पृथगेवोक्तः तथापि पञ्चधूमा स्नेहनप्रायोगिकवैरेचनिककासघ्नवामनीयाश्चेति सुश्रुते प्रोक्ताः। तथापीह कासघ्नवामनीययोः विरेचनकारकतया कासहरस्य न वमनादिभेद उक्त इति विशेषो ज्ञेयः। छिद्रमिति उपरिनलिकामानच्छिद्रयुक्तम्। जिह्वामिति वक्त्रां मुखेनैवेति वचनेन प्रागुक्तनासापानं निषेधति ॥ ६१—६६ ॥

मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत्।
धूमं तस्यानु च क्षीरं सुखोष्णं सगुडं पिबेत् ॥६७॥
एष कासान्पृथग्दोषसन्निपातोद्भवाञ्जयेत्।
प्रसह्यापरिसंसिद्धानन्यैर्योगशतैरपि ॥ ६८ ॥

मनःशिलेत्यादौ अलं हरितालं इङ्गुदः पुत्रजीवकः। अस्य धूमस्य पश्चात् क्षीरपानं तीक्ष्णेन धूमेन क्रियमाणओजःक्षयादिभयपरिहारार्थम्। सन्निपातजकासो यद्यप्यत्र नोक्तः तथापि प्रकृतिसमसन्निपातस्तु कासो भवत्येवेति वचनादुन्नीयते। किंवा सान्निपातिकः क्षयजकासः। वक्ष्यते हि "संनिपातोद्भवो दोषः क्षयकासः सुदारुणः। सन्निपातहितं तस्मात्कार्यमत्र भिषग्जितम्" ॥ ६७ ॥ ६८ ॥

प्रपौण्डरीकं मधुकं शार्ङ्गेष्टां समनःशिलाम्।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम् ॥ ६९ ॥
कृत्वा वर्तिं पिबेद्धूमं क्षौमचेलानुवर्तिताम्।
घृताक्तामनु च क्षीरं गुडोदकमथापि वा ॥ ७० ॥
मनःशिलामरिचक्षाराञ्जनकुटन्नटैः।
वंशलोचनशैवालक्षौमलक्तकरोहिषैः ॥ ७१ ॥
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते।
आलं मनःशिला तद्वत्पिप्पली नागरैः सह ॥ ७२ ॥
त्वगिङ्गुदीबृहत्यौ द्वे तालमूलं मनःशिला।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः ७३
ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा दापयेद्धितान् ॥ ७४ ॥
यमानीपिप्पलीविल्वमध्यनागरचित्रकैः।
रास्नाजाजीपृथक्पर्णीपलाशशटिपौष्करैः ॥ ७५ ॥
स्निग्धाम्ललवणां सिद्धां पेयामनिलजे पिबेत्।
कटीहृत्पार्श्वकोष्ठार्तिश्वासहिक्काप्रणाशनीम् ॥ ७६ ॥
दशमूलरसे तद्वत्पञ्चकोलगुडान्विताम्।
सिद्धां समतिलां दद्यात्क्षीरे वापि ससैन्धवम् ७७
मत्स्यकुक्कुटवाराहैरामिषैर्वा घृतान्वितैः।
सिद्धां ससैन्धवां पेयां वातकासी पिबेन्नरः ॥७८॥
वास्तुकं वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥७९॥
दध्यारनालाम्लफलप्रसन्नापानमेव च।

शस्यते वातकासे तु स्वाद्वम्ललवणानि च ॥ ८० ॥
इति वातकासचिकित्सा ।

प्रपुण्डरीकेत्यादि शार्कैष्टा गुडा। कृत्वा वर्तिमिति मात्राशीतीयोक्तविधानेन । रोहिषं गन्धतृणं, पूर्वकल्पेन पूर्वोक्तविधिना, नागरैरित्यनेनैको योगः, आत्मगुप्ता इति शूकशिम्बिः । पञ्चकोलगुडान्वितेति प्रक्षिप्तपञ्चकोलगुडां समतिलतण्डुलसाधितां। आमिषैरिति मत्स्यादामिषैः सतण्डुलैः सिद्धां। वायसी काकमाची ॥ ६९—८० ॥

पैत्तिके सकफे कासे वमनं सर्पिषा हितम् ।
तथा मदनकाश्मर्यमधूककक्वथितैर्जलैः ॥ ८१ ॥
यष्ट्याह्वफलकल्कैर्वा विदारीक्षुरसायुतैः ।
हृतदोषस्ततः शीतं मधुरं च क्रमं भजेत् ॥ ८२ ॥
पैत्ते तनुकफे कासे त्रिवृतां मधुरैर्युताम् ।
दद्याद्धनकफे तिक्तैर्विरेकार्थे युतां भिषक् ॥ ८३ ॥
स्निग्धशीतस्तनुकफे रूक्षशीतकफे घने ।
क्रमः कार्यः परं भोज्यैः स्नेहैर्लेहैश्च शस्यते ॥८४॥"
शृङ्गाटकं पद्मबीजं नीलीसाराणि पिप्पली ।
पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वा महौषधम् ॥ ८५ ॥
लाजामृतफला द्राक्षा त्वक्क्षीरी पिप्पली सिता ।
पिप्पली पद्मको द्राक्षा बृहत्याश्च फलाद्रसः ॥८६॥
खर्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते ।
घृतक्षौद्रयुता लेहाः श्लोकार्धैः पित्तकासिनाम् ८७
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः ।
पैत्ते समुस्तमरिचः सकफे सघृतोऽनिले ॥ ८८ ॥
मृद्वीकार्धशतं त्रिंशत्पिप्पली शर्करापलम् ।
लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥ ८९ ॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।
लाजामुस्तशटीरास्नाधात्रीफलविभीतकैः ॥ ९० ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहः कासविनाशनः ।
श्वासं हिक्कां क्षयं चैव हृद्रोगं च प्रणाशयेत् ॥९१॥

वमनं सर्पिषेति वमनद्रव्ययुक्तेन सर्पिषा वमनं कर्तव्यं । यष्ट्याह्वफलकल्कैरित्यत्र फलं मदनफलं । पित्तकासे एव कासवेगनिःसार्यमाणस्य कफस्य तनुतायां घनतायां च चिकित्सामाह पैत्तेत्यादि । तिक्तैर्युतां त्रिवृतामिति संबन्धः । क्रम इति पेयादिक्रमः । परमिति पेयादिक्रमादूर्ध्वं । शस्यत इति उपचार इति शेषः । नीलीसारमिति नीलिनीफलसारं अमृतफलमामलकं । शर्करादिः केवले पैत्ते, सकफे पैत्ते समुस्तमरिचः सघृतस्तु शर्करादिः, अनिलानुबन्धे पैत्ते ज्ञेयः । मृद्वीकार्धशतं त्रिंशत्पिप्पलीश्च व्यक्तं परिग्रहात् गोक्षीरसेति क्षीरमात्राशनस्य ॥ ८१—९१ ॥

पिप्पल्यामलकं द्राक्षां लाक्षां लाजान् सितोपलाम् ।
पिबेद्वा मधुसंयुक्तं पित्तकासहरं परम् ॥ ९२ ॥
विदारीक्षुमृणालानां रसान्क्षीरं सितोपलम् ।
पिबेद्वा मधुसंयुक्तं पित्तकासहरं परम् ॥ ९३ ॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥९४॥
घनश्लेष्मणि लेहास्तु तिक्तका मधुसंयुताः ।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥९५॥
शर्कराम्भोऽनुपानार्थे द्राक्षेक्षूणां रसाःपयः ।
सर्वं च मधुरं शीतमविदाहि प्रशस्यते ॥ ९६ ॥
काकोली बृहती मेदा युग्मैः सवृषनागरैः ।
पित्तकासे रसान्क्षीरं यूषांश्चाप्युपकल्पयेत् ॥९७॥

पिप्पल्यामलकमित्यादौ घनमिति घनतामापन्नं । काकोलीत्यादौ प्रत्येकं युग्मैरिति संबध्यते ॥ ९२—९७ ॥

शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत्समधुशर्करम् ॥ ९८ ॥
स्थिरासितापृश्निपर्णीश्रावणीबृहतीयुगैः ।
जीवकर्षभकाकोलीतामलक्यृद्धिजीरकैः ॥ ९९ ॥
शृतं पयः पिबेत्कासी ज्वरी दाही क्षतक्षयी ।
तज्जं वा साधयेत्सर्पिः सक्षीरेक्षुरसं भिषक् १००
जीवकाद्यैर्मधुरकैः फलैश्चाभिषुकादिभिः ।
कल्कैस्त्रिकार्षिकैः सिद्धे पूतशीते प्रदापयेत् १०१
शर्करा पिप्पलीचूर्णस्त्वक्क्षीर्या मरिचस्य च ।
शृङ्गाटकस्य चावाप्य क्षौद्रगर्भान्पलोन्मितान् १०२
गुडान् गोधूमचूर्णेन कृत्वा खादेद्धिताशनः ।
शुक्रासृग्दोषशोषेषु कासे क्षीणक्षतेषु च ॥ १०३ ॥
शर्करानागरोदीच्यं कण्टकारीं शटीं समाम् ।
पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्च्छितम् ॥१०४॥
महिष्यजाविगोक्षीरधात्रीफलरसैः समैः ।
सर्पिः सिद्धं पिबेद्युक्त्या पित्तकासनिबर्हणम्॥१०५॥
इति पित्तकासचिकित्सा ।

शरादिपञ्चमूली तृणपञ्चमूलं अभिषुकादयः वातपित्तहरा "वातामाभिषुकाक्षोडं मकूलकनिकोचक"मिति ग्रन्थोक्ताश्चत्वारो ज्ञेयाः । जीवकादयश्च जीवनीयगणोक्ताः । शर्करादीनां च क्षयोक्तसर्पिर्मानानुसारेण मानमत्र ज्ञेयं । शर्करेत्यादौ रसमिति कल्कस्यैव रसम् ॥ ९८—१०५ ॥

"बलिनं वमनैरादौ शोधयेत्कफकासिनम् ।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥१०६॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥ १०७॥
धान्वबैलरसैर्स्नेहैस्तिलसर्षपबिल्वजैः ।
मध्वासलोष्णाम्बुतक्रं वा मद्यं वा निगदं पिबेत् १०८
पौष्करारग्वधं मूलं पटोलाहृतं निशास्थितम् ।
जलं मधुयुतं पेयं कालेष्वन्नस्य वा त्रिषु ॥ १०९ ॥

कट्फलं कत्तृणं भार्गीं मुस्तं धान्यं वचाभया ।
शुण्ठी पर्पटकः शृङ्गी सुराह्वं च शृतं जले ॥ ११० ॥

बलिनमित्यादिना कफकासचिकित्सामाह । पिप्पलीक्षारकैरिति पिप्पलीक्षारसंस्कृतैः । धान्वजरसैरिति बिलेशयरसैः । कालेषु त्रिष्वित्यत्र भोजनादि मध्यावसानेषु ॥ १०६—११० ॥

मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूले श्वासहिक्काज्वरेषु च ॥१११॥"
पाठां शुण्ठीं शटीं मूर्वां गवाक्षीं मुस्तपिप्पलीम् ।
पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतां पिबेत् ११२
नागरातिविषामुस्तशृङ्गीकर्कटकस्य च ।
हरीतकीं शटीं चैव तेनैव विधिना पिबेत् ॥ ११३ ॥
तैलभृष्टं च पिप्पल्याः कल्काक्षं ससितोपलम् ।
पिबेद्वा श्लेष्मकासघ्नं कुलत्थरससंयुतम् ॥ ११४ ॥
कासमर्दाश्वविट् भृङ्गराजो वार्ताकजा रसाः ।
सक्षौद्राः कफकासघ्नाः सुरसस्यासितस्य च ११५
देवदारु शटी रास्ना कर्कटाख्या दुरालभा ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ११६
मधुतैलयुतावेतौ लेहौ वातानुगे कफे ।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ११७
पथ्या तामलकी धात्री भद्रमुस्तानि पिप्पली ।
देवदार्वभया मुस्तं पिप्पली विश्वभेषजम् ॥११८॥
विशाला पिप्पली मुस्तं त्रिवृता चेति लेहयेत् ।
चतुरो मधुना लेहान् कफकासहरान् भिषक् ११९
सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम् ।
चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ॥ १२० ॥

मधुहिंगुयुतमित्यत्र माक्षिकं हिंगुरिंधूत्थेत्यादिवचनानुसारेण प्रक्षेप्य विधिनोष्णोदकेन हिंगुसैन्धवोपेतं पिबेदित्यर्थः । सुरसस्यासितस्य कृष्णपर्णजस्य । चतुरो मधुना लेहानित्यत्र अर्धश्लोकोक्ता लेहा ज्ञेयाः ॥ १११—१२० ॥

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वशटीबिल्वसुरसैर्व्योपहिङ्गुभिः ॥ १२१ ॥
पेयं पेयानुपानं तत्कासे वातकफात्मके ।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ १२२ ॥

इति दशमूलादिघृतम् ।

दशमूलाढकेति । दशमूलस्य क्वाथस्याढकमानत्वं "क्वाथः क्वाथ्यसमो मतः" इति वचनात् क्वाथोऽप्याढकमानो भवति ॥ १२१ ॥ १२२ ॥

समूलफलपत्रायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योपविडङ्गशटिचित्रकैः ॥ १२३ ॥
सौवर्चलयवक्षारपिप्पलीमूलपौष्करैः ।
वृश्चीकबृहतीपथ्यायमानीदाडिमर्द्धिभिः ॥ १२४ ॥
द्राक्षापुनर्नवाचव्यदुरालभाम्लवेतसैः ।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥१२५॥
कल्कैस्तत्लेहकासेषु हिक्काश्वासेषु शस्यते ।
कण्टकारीघृतं ह्येतत्कफव्याधिनिषूदनम् ॥ १२६ ॥

इति कण्टकारीघृतम् ।

कुलत्थरसयुक्तं वा पञ्चकोलशृतं घृतम् ।
पाययेत्कफजे कासे हिक्काश्वासे च शस्यते ॥१२७॥

इति कुलत्थादिघृतम् ।

कण्टकारीघृते बलादिकल्कद्रव्यस्य मिलित्वा कुडवमानत्वम् ॥ १२३—१२७ ॥

धूमांस्तानेव दद्याच्च ये प्रोक्ता वातकासिनाम् ।
कोशातकीफलान्मध्यं पिबेद्वा समनःशिलम् १२८
तमकः कफकासे तु स्याच्चेत्पित्तानुबन्धजे ।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥१२९॥
वाते कफानुबन्धे तु कुर्यात्कफहरीं क्रियाम् ।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥१३०॥
आर्द्रे विरूक्षणं शुष्के स्निग्धं वातकफात्मके ।
कासेऽन्नपानं कफजे सपित्ते तिक्तसंयुतम् ॥ १३१ ॥

इति कफजकासचिकित्सा ।

कोशातकी घोसकः । तमकः उपद्रवः । कफोऽनुबन्धोऽस्येति कफानुबन्धः तस्मिन्कफानुबन्धे पवने । पित्तानुबन्धयोरित्यत्रापि वातकफयोरनुबन्धत्वम् । पित्तस्य तु प्राधान्यम् । अत एव पित्तनाशिनी क्रियोक्ता तत्र । आर्द्रे इति तनुकफे ॥ १२८—१३१ ॥

"कासमात्ययिकं मत्वा क्षतजं त्वरया जयेत् ।
मधुरैर्जीवनीयैश्च बलमांसविवर्धनैः ॥ १३२ ॥
पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम् ।
प्रास्थिकं गव्यमाजं तु क्षीरमिक्षुरसस्तथा ॥ १३३॥
यवगोधूममृद्वीकाचूर्णमामलकीरसः ।
तैलं च प्रसृतांशानि तत्सर्वं मृदुनाग्निना ॥ १३४ ॥
पचेल्लेहं घृतक्षौद्रयुक्तः स क्षतकासनुत् ।
श्वासहृद्रोगकासेषु हितो वृद्धाल्परेतसे ॥ १३५ ॥

कासमित्यादिना क्षतजकासचिकित्सामाह । पिप्पल्यादिके लेहे यवादयस्तैलान्ताः प्रत्येकं प्रसृतमानाः ॥ १३२–१३५ ॥

क्षतकासाभिभूतानां वृत्तिः स्यात्पित्तकासिकी ।
क्षीरसर्पिर्मधुप्राया संसर्गे तु विशेषणम् ॥ १३६ ॥
वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्हितः ।
तैलैश्चानिलरोगघ्नैः पीड्यमाने च वायुना ॥ १३७ ॥
हृत्पार्श्वार्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ।
सदाहं कासिनो रक्तं ष्ठीवतः सबलेऽनले ॥ १३८ ॥
मांसोचितेभ्यः कासिभ्यो लावादीनां रसा हिताः ।

तृष्णार्तानां पयश्चास्य शरमूलादिभिः शृतम् १३९
रक्ते स्रोतोभ्य आस्याद्वाऽप्यागते क्षीरजं घृतम् ।
नस्यं पानं यवागूर्वा श्रान्ते क्षामे हतानले ॥१४०॥
स्तम्भायासेषु महतीं मात्रां वा सर्पिषः पिबेत् ।
कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥१४१॥
निवृत्ते क्षतदोषे तु कफे वृद्ध उरःक्षते ।
दाल्यते कासिनो यस्य स धूमान्वा पिबेदिमान्१४२
द्वे मेदे मधुकं द्वे च बले तैः क्षौमसक्तकैः ।
वर्तितैर्धूममापीय जीवनीयघृतं पिबेत् ॥ १४३ ॥
मनःशिलापलाशाजगन्धात्वक्क्षीरिनागरैः ।
भावयित्वा पिबेत्क्षौमं शर्करेक्षुगुडोदकम् ॥१४४॥
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ।
ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनम् ॥ १४५ ॥
भावितं जीवनीयैर्वा कुलिङ्गाण्डरसायुतैः ।
क्षौमं धूमं पिबेत्क्षीरं शृतं चायोगुडैरनु ॥ १४६ ॥

इति क्षतजकासचिकित्सा ।

वृत्तिरिति चिकित्सा । संसर्गे तु विशेषणं इति चिकित्साविशेषो वातपित्तार्दित इत्यादिना वक्ष्यमाणो ज्ञेयः । वातपित्तार्दित इत्यादिना क्षतकासे एवावस्थिकीं चिकित्सामाह । जीवनीयं सर्पिर्वातरक्ते वक्ष्यमाणं । महतीं मात्रामिति अहोरात्रेण परिणमनीयां प्रायोऽष्टपलप्रमाणां । निवृत्ते क्षतदोषे इति क्षतव्रणे शान्ते क्षौमसक्तकैर्वर्तितैरिति यथोक्तौषधेन क्षौमलेपाद्वर्तिकृतैः क्षौमं दग्ध्वा धूमं पिबेत् । तित्तिरिरसानुपानं । अयोगुडैरिति लोहगुडैः शृतं क्षीरम् ॥ १३६—१४६ ॥

संपूर्णरूपं क्षयजं दुर्बलस्य विवर्जयेत् ।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत्क्रियाम् १४७
तस्मै बृंहणमेवादौ कुर्यादग्नेश्च वर्धनम् ।
बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम् ॥ १४८ ॥
शम्पाकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥ १४९ ॥
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् ।
हितं तद्देहबलयोरस्य संरक्षणं मतम् ॥ १५० ॥
पित्ते कफे च संक्षीणे परिक्षीणेषु धातुषु ।
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥ १५१ ॥
विदारीभिः कदम्बैर्वा तालशस्यैस्तथा शृतम् ।
घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥ १५२ ॥
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ।
घृतमण्डेन मधुनाऽनुवास्यो मिश्रकेण वा ॥१५३॥

प्रत्याख्यायाचरेत्क्रियां इत्यनेन उक्तलक्षणेऽपि क्षयजे कदाचित्सिद्धिर्दर्शयति । शम्याक आरग्वधः । कर्कटकी काकडशिङ्गी । तालसस्य तालफलस्य । घृतमण्डः घृतोपरिस्थानभागः ॥ १४७—१५३ ॥

जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशयाः ।
क्रमशः प्रसहाश्चैव प्रयोज्याः पिशिताशिनः १५४
औष्ण्यात्प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ।
कफं शुद्धैश्च तैः पुष्टिं कुर्यात्सम्यग्वहन्रसः १५५
चविका त्रिफला भार्गी दशमूलैः सचित्रकैः ।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥ १५६ ॥
शृतैर्नागरदुःस्पर्शापिप्पलीशटिपौष्करैः ।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् १५
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च ।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः १५८

इति द्विपञ्चमूलादिघृतम् ।

औष्ण्यादिति । शुद्धैश्च तैरिति शुद्धैः स्रोतोभिः । द्विपञ्चमूलीत्यादौ क्षारलवणानां च युक्त्या दानवचनेन स्तोकमात्रं दानं लवणीकरणप्रयोजनार्थं दर्शयति ॥ १५४—१५८ ॥

गुडूचीं पिप्पलीं मूर्वां हरिद्रां श्रेयसीं वचाम् ।
निदिग्धिकां कासमर्दं पाठां चित्रकनागरम्॥१५९॥
जले चतुर्गुणे पक्त्वा पादशेषेण तत्समम् ।
सिद्धं सर्पिः पिबेद्गुल्मश्वासार्तिक्षयकासनुत् १६०

इति गुडूच्यादिघृतम् ।

गुडूचीत्यादौ श्रेयसी रास्ना । तत्सममिति क्वाथसमम् ॥ १५९ ॥ १६० ॥

कासमर्दाभयामुस्तपाठाकट्फलनागरैः ।
पिप्पल्या कटुकाद्राक्षाकाश्मर्यैः सुरसेन च॥१६१॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ।
पचेच्छोपज्वरप्लीहसर्वकासहरं शिवम् ॥ १६२ ॥
धात्रीफलैः क्षीरसिद्धैः सर्पिर्वाप्यवचूर्णितम् ।
द्विगुणे दाडिमरसे विपक्वं व्योषसंयुतम् ॥ १६३ ॥
पिबेदुपरि भक्तस्य यवक्षारघृतं नरः ।
पिप्पलीगुडसिद्धं वा च्छागक्षीरयुतं घृतम् ॥१६४॥
एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ।
स्युर्दोषबद्धकोष्ठोरःस्रोतसां च विशुद्धये ॥ १६५ ॥
हरीतकीर्यवक्वाथद्व्याढके विंशतिं पचेत् ।
स्विन्ना मृदित्वा तास्तस्मिन्पुराणं गुडषट्पलं १६६
दद्यान्मनःशिलाकर्षं कर्षार्धं च रसाञ्जनात् ।
कुडवार्धं च पिप्पल्याः स लेहः श्वासकासनुत्१६७

इति हरीतकीलेहः ।

क्षीरसिद्धैरिति क्षीरस्विन्नैः । यवक्षारं घृतंच ॥१६१—१६७॥

श्वाविधः सूचयो दग्धाः सघृतक्षौद्रशर्कराः ।
श्वासकासहरा बर्हिःपादौ वा क्षौद्रसर्पिषा १६८
एरण्डपत्रक्षारं वा व्योषतैलं गुडान्वितम् ।

लिह्यादेतेन विधिना सुरसैरण्डपत्रजम् ॥ १६९ ॥
द्राक्षापद्मकवार्ताकपिप्पलीः क्षौद्रसर्पिषा ।
लिह्यात्त्र्यूषणचूर्णं वा पुराणं गुडसर्पिषा ॥ १७० ॥
चित्रकं त्रिफलाजाजी कर्कटाख्यं कटुत्रिकम् ।
द्राक्षां च क्षौद्रसर्पिर्भ्यां लिह्याद्द्याद्गुडेन वा ॥१७१
पद्मकं त्रिफलां व्योषं विडङ्गं सुरदारु च ।
बलां रास्नां च तुल्यानि सूक्ष्मं चूर्णानि कारयेत् ॥
सर्वैरेभिः समं चूर्णं पृथक् क्षौद्रघृतं सिताम् ।
विमथ्य लेहयेल्लेहं सर्वकासहरं शिवम् ॥ १७३ ॥

इति पद्मकादिलेहः ।

तेन विधिनेति व्योषतैलगुडान्वितं साधनीयं । सुरसं सुनिषण्णकम् ॥ १६८—१७३ ॥

जीवन्तीं मधुकं पाठां त्वक्क्षीरीं त्रिफलां शटीम् ।
मुस्तैले पद्मकं द्राक्षा द्वे बृहत्यौ वितुन्नकम् ॥१७४॥
शारिवां पौष्करं मूलं कर्कटाख्यं रसाञ्जनम् ।
पुनर्नवां लोहरजस्त्रायमाणां यमानिकाम् ॥ १७५ ॥
भार्गीं तामलकीमृद्धिं विडङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥ १७६ ॥
चूर्णीकृत्य समांशानि लेहयेत्क्षौद्रसर्पिषा ।
चूर्णात्पाणितलं पञ्च कासानेष व्यपोहति ॥ १७७ ॥
लिह्यान्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ।
सर्वकासहरं श्रेष्ठं लेहं कासार्दितो नरः ॥ १७८ ॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
स्वरभेदे च कासे च लेहमेतत्प्रयोजयेत् ॥ १७९ ॥
पत्रकल्कं घृतैर्भृष्टं तिल्वकस्य सशर्करम् ।
पेया चोत्कारिकाच्छर्दिस्तृट्कासामातिसारनुत् ॥
गौरसर्षपगण्डीरविडङ्गव्योषचित्रकान् ।
साभयान्साधयेत्तोये यवागूं तेन चाम्भसा ॥१८१॥
ससर्पिर्लवणां कासे हिक्काश्वासे सपीनसे ।
पाण्ड्वामये क्षये शोथे कर्णशूले च शस्यते ॥ १८२ ॥
कण्टकारीरसे सिद्धो मुद्गयूपः सुसंस्कृतः ।
सगौरामलकः साम्लः सर्वकासभिषग्जितम् १८३
वातघ्नौषधनिष्काथं क्षीरं यूपान्रसानपि ।
वैष्किरप्रतुदादीनां दापयेत्क्षयकासिने ॥ १८४ ॥
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।
क्षयकासेऽपि तानेव यथावस्थं प्रयोजयेत् ॥१८५॥
दीपनं बृंहणं चैव स्रोतसां च विशोधनम् ।
व्यत्यासात्क्षयकासिभ्यो बल्यं सर्वं मितं हितं १८६
सन्निपातभवोऽप्येष क्षयकासः सुदारुणः ।
सन्निपातहितं तस्मात्सदा कार्यं भिषग्जितम् १८७
दोषानुबलयोगाच्च हरेद्रोगबलाबलम् ।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम् ॥१८८"॥

पाणितलं कर्षः। उत्कारिकेति पत्रकल्केनेत्यादिना । गण्डीरः शमठः । गौरामलक आर्द्रामलकः, साम्ल इति दाडिमादियोगादम्लः । व्यत्यासादिति क्रियापरिवर्तनात् । क्षयकासस्य सन्निपातोद्भव इत्यादिना सान्निपातिकत्वमभिधाय दोषोद्रेकविशेषानुबन्धरूपेण चिकित्साविशेषसूत्रमाह—'दोषानुबन्धयोगाच्च हरेद्रोगबलाबलं' । अत्र बुद्ध्वेत्यध्याहार्यं । दोषाणामनुबन्धः उत्कर्षापकर्षादिना संबन्धः तदपेक्षयोगः अत्र पंचमी हेतौ । अन्ये तु दोषानुबन्धरूपेण भेषजयोगेन रोगस्य क्षयकासस्य प्रबलत्वं च दोषं हरेत् । तस्मिन् न तु युक्तं हरेद्रोगबलाबलमिति । अन्ये तु ' दोषानुबलयोगाच्च कुर्याद्दोषबलाबल'मिति पठंति । तेन दोषानुबन्धयोगात् रोगबलाबलं बुद्ध्वा कुर्याद्भिषग्जितमिति संबंधः । कासेष्विति वातपित्तकफक्षतक्षयजेषु ॥१७८—१८८ ॥

तत्र श्लोकौ ।

भोज्यं पानानि सर्पींषि लेहाः पाश्चनकानि च ।
क्षीरं सर्पिर्गुडा धूमाः कासभैषज्यसंग्रहः ॥ १८९ ॥
संख्या निमित्तं रूपाणि साध्यासाध्यत्वमेव च ।
कासानां भेषजं प्रोक्तं गरीयस्त्वं च कासिनः १९०

इति चरकसंहितायां कासचिकित्सितं नाम अष्टादशोऽध्यायः ॥ १८ ॥

विस्तारोक्तं कासभेषजं संगृह्णाति—भोज्यमित्यादि । संख्येत्यादि अध्यायार्थसंग्रहः सुगम इति ॥ इति कासचिकित्सितं समाप्तम् ॥ १८९ ॥ १९० ॥

---

## एकोनविंशोऽध्यायः ।

### अतीसारचिकित्सितम् ।

भगवन्तं खलु आत्रेयं कृताह्निकं कृताग्निहोत्रमासीनमृषिगणपरिवृतमुत्तरे हिमवतः पार्श्वे विनयादुपेत्याभिवाद्य अग्निवेश उवाच—भगवन् । अतीसारस्य प्रागुत्पत्तिनिमित्तलक्षणोपशमनानि प्रजानुग्रहार्थमाख्यातुमर्हसीति ॥ १ ॥

अथ भगवानात्रेयः तदग्निवेशवचनमनुनिशम्योवाच । श्रूयताम् अग्निवेश ! सर्वमेतदखिलेन व्याख्यायमानम् ॥ २ ॥

अग्निबलहानिसामान्यात् ग्रहणीदोषमनु अतीसारचिकित्सिते वक्तव्ये उपोद्घाततया पाण्डुरोगादिभिर्व्यवधानं कृतं संप्रति तु उपोद्घातोक्तपाण्डुरोगादीनभिधाय प्रकृतमतीसारचिकित्सितमुच्यते—प्रागुत्पत्तिरिति प्राक्कालोत्पत्तिः॥ १ ॥ २ ॥

"आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुर्नारम्भाय प्रक्रियन्ते स्म । ततो दक्षयज्ञप्रत्यवरकालं मनोः पुत्राणां मरीचनाभागेक्ष्वाकुकुविड-

चर्येत्यादीनां च क्रतुषु पशूनामेव अभ्यनुज्ञानात् पशवः प्रोक्षणमवापुः । अतश्च प्रत्यवरकाले पृषध्रेण दीर्घसत्रेण यजमानेन पशूनामलाभाद्गवामालम्भः प्रावर्तितः । तं दृष्ट्वा प्रव्यथिता भूतगणाः तेषां चोपयोगादुपकृतानां गवां गौरवादौष्ण्याद्सात्म्यत्वाद्शस्तोपयोगाच्चोपहताग्नीनामुपहतमनसाम् अतीसारः पूर्वमुत्पन्नः पृषध्रयज्ञे ॥ ३ ॥

आदिकाले इति कृतयुगे । समालभनीया इति मन्त्रेण अभिमंत्र्यैव परित्याज्या बभूवुः न आलभार्थम् । प्रक्रियन्ते स्म इति आलभाय मरणाय न प्रक्रियन्ते न संक्रियन्त इत्यर्थः । मरीचनाभागादिमनुपुत्रेषु । एवमेव मनुपुत्रमुदाहार्थं यज्ञादिशब्दः क्रियते तदा तेषां क्वचिदन्यत्र समुदायेन पाठात् बुद्धिपूर्वः साक्षात् ज्ञानार्थं कतिपये पाठिताः । पशूनामभ्यनुज्ञानादिति पशूनामेव प्रेरणया प्रेपाय च एषां विशिष्टार्थमेवोच्यते आगमेषु । क्रत्वर्थहिंसायां वधवध्ययोरुभयोरपि महापुण्यमुत्पद्यत इति । किंवा पशूनामेवाभ्यनुज्ञानादिति वेदे पशूनां वध्यत्वेऽप्यनुज्ञानात् प्रोक्षणमिति अभिमन्त्र्यहतानां । उक्तंहि—'उपाकृतः पशुरसौ योऽभिमंत्र्य क्रतौ हतः' । अनेन प्रागुत्पत्तिनिदर्शनेन मानसोपतापोऽतीसारकारणं भवतीत्युपदर्श्यते । दीर्घसत्रेणेति दीर्घकालवर्तिना । व्यथिता इति अदृष्टपूर्वं गवां वधं दृष्ट्वा दुःखिताः सन्तः ॥ ३ ॥

अथापरं कालं वातलस्य वातातपव्यायामातिमात्रनिषेविणो रूक्षाल्पप्रमिताशिनः तीक्ष्णमद्यव्यवायनित्यस्य उदावर्तयतश्च वेगाद्वायुः प्रकोपमापद्यते पक्ता चोपहन्यते स वायुः कुपितोऽग्नावुपहते मूत्रस्वेदौ पुरीषाशयमभिहत्य ताभ्यां पुरीषं द्रवीकृत्य अतीसाराय प्रकल्पते ॥ ४ ॥

अथेत्यादीनां वातातीसारादीनां पृथक् लक्षणं ब्रूते । वातलस्येत्यनेन वातप्रकृतिं प्राप्य वातातपादीनां वातातीसारजनने सामर्थ्यातिशयो दृश्यते । अनेन अन्यप्रकृतेरपि वातातपादयः अतीसारस्य कारणं भवतीति ज्ञेयम् । एवं पित्तलश्लेष्मलशब्दयोरपि तात्पर्यं व्याख्येयम् । प्रमिताशनमतीतकालाशनं वेगादुदावर्तयेत इति उद्वृत्तमावर्तयतो वेगादित्यर्थः । पुरीषाशयं वेगेनाभिहत्येति पक्वाशयं जित्वा । ताभ्यामिति मूत्रस्वेदाभ्याम् ॥ ४ ॥

तस्य रूपाणि विड्जलमाममविप्लुतमवसादितं रूक्षं द्रवं सशब्दमशब्दं वा विबद्धमूत्रवातमतिसार्यते पुरीषं वायुश्चान्तःकोष्ठस्य सशब्दशूलः तिर्यक् चरति विबद्ध इति आमातिसारः ॥ ५ ॥

तस्य रूपाणीत्यादिना आमवातातीसारलक्षणमाह—आममिति आमलगतं । विप्लुतमिति प्रसरणशीलं । अवसादितमिति भूमौ पतितं लीनं भवति ॥ ५ ॥

वातात् पक्वं विबद्धमल्पाल्पं सशब्दं सशूलपिच्छापरिकर्तिकं हृष्टरोमा विनिःश्वसन् शुष्कमुखः कट्यूरुत्रिकजानुपृष्ठपार्श्वशूली भ्रष्टगुदो मुहुर्मुहुर्विग्रथितमुपवेश्यते पुरीषं वातात् तमाहुः अनुग्रन्थम् इत्येके वातानुग्रन्थितवर्चस्त्वात् ॥ ६ ॥

पक्वं चेत्यादिना पक्ववातातिसारमाह । विनिःश्वसनिति शब्दं कुर्वन् तमाहुरनुग्रन्थमिति विग्रन्थितपुरीषातिसारावस्थां प्राप्नोति ॥ ६ ॥

पित्तलस्य पुनरम्ललवणकटुकक्षारोष्णतीक्ष्णातिमात्रनिषेविणः प्रतताग्निसूर्यसन्तापोष्णमारुतोपहतगात्रस्य क्रोधेर्ष्याबहुलस्य पित्तं प्रकोपमापद्यते । तत् प्रकुपितं द्रवत्वादूष्माणमुपहत्य पुरीषाशयमाश्रितमौष्ण्यात् द्रवत्वात् सरत्वाच्च भित्वा पुरीषम् अतिसाराय प्रकल्पते ॥ ७ ॥

तस्य रूपाणि हरिद्रहरितनीलकृष्णपित्तोपहितमतिदुर्गन्धमतिसार्यते पुरीषं तृष्णादाहस्वेदमूर्च्छाशूलब्रध्नसन्तापपाकपरीत इति पित्तातिसारः

पित्तलस्येत्यादिना पित्तातिसारमाह—द्रवत्वादूष्माणमुपहत्येति यद्यपि पित्तं उष्णं अग्नेः समानतया वर्धकं भवतीति युज्यते तथापि द्रवत्वादूष्माणं पुरीषाशयगतं पित्तं हन्तीत्यर्थः । ब्रध्नो गुदः ॥ ७ ॥ ८ ॥

श्लेष्मलस्य तु गुरुमधुरशीतस्निग्धोपसेविनः संपूरकस्याचिन्तयतो दिवास्वप्नपरस्यालसस्य श्लेष्मा कोपमापद्यते । स स्वभावाद् गुरुमधुरशीतस्निग्धः स्रस्तोऽग्निमुपहत्य सौम्यस्वभावात् पुरीषाशयमुपहत्योपक्लेद्य पुरीषमतिसाराय कल्पते ॥ ९ ॥

श्लेष्मलस्येत्यादिना श्लेष्मातिसारमाह—संपूरकस्येति । अतिमात्राशनशीलस्य श्लेष्मणोऽग्न्युपघाते हेतुमाह । सौम्यस्वभावादिति सौम्यस्याग्नेर्विरुद्धत्वात् आघातं करोतीति युक्तमेवेति भावः । पुरीषाशयमुपहत्येति पुरीषाशयं गत्वा हन्तेर्गतिहिंसात्मकत्वात् । अत्र गत्यर्थेन किंवा पुरीषाशयशब्देन स्थानेन स्थानिनोपचारात् पुरीषमेवोच्यते । यथा मञ्चाः क्रोशन्तीतिवत्, ततश्च पुरीषमुपहत्येति संबन्धः ॥ ९ ॥

तस्य रूपाणि स्निग्धं श्वेतं पिच्छिलं तन्तुमदामं गुरु दुर्गन्धश्लेष्मोपहितमनुबन्धशूलमल्पाल्पमभीक्ष्णमतिसार्यते सप्रवाहिकं गुरूदरगुदबस्तिवंक्षणोद्देशः कृतापकृतसंज्ञो भवति सलोमहर्षः सोत्क्लेशः निद्रालस्यपरीतः सादनोऽन्नद्वेषी चेति श्लेष्मातिसारः ॥ १० ॥

कृतेप्यकृतसंज्ञ इति कृतेऽपि वेगे न बुध्यत इत्यर्थः । अत्र च पित्तकफातिसारे सामतालक्षणं यद्यपि नोक्तं तथापि सामतातीसारसंबन्धकृतविज्वरत्वगंधिलप्रकारैर्लक्षणैः आमातिसा-

रूपावस्था ज्ञेयैव । तथाहि चिकित्सायां पित्तातिसारं निदानोपशयाकृतिभिः विदित्वेत्यादिना रक्तातिसारे पृथक् चिकित्सां वक्ष्यति, श्लेष्मातिसारे तु सामे निरामे रूक्षोष्णादिरूपा चिकित्सा समानैवेति कृत्वा पृथगामश्लेष्मातीसारचिकित्सा नोक्ता क्षारपाणिना सर्वातिसाराणां समता पृथगुक्ता वचनं हि "वातातिसारः सामश्च सशूलः फेनिलस्तनुः । श्यावः सशब्दो दुर्गन्धो विवद्धोऽल्पाल्प एव च"। एवं पित्तकफानां हि अतीसारं निर्दिशेत् ॥ १० ॥

**अतिशीतस्निग्धरूक्षोष्णगुरुखरकठिनविषमविरुद्धासात्म्यभोजनात् अभोजनात् कालातीतभोजनाद् यत्किंचिदभ्यवहरणाद् दुष्टमद्यपानीयपानात् अतिमद्यपानात् असंशोधनात् प्रतिकर्मणां विषमगमनात् अनुपचाराज्ज्वलनादित्युपवनसलिलातिसेवनात् अस्वप्नात् अतिस्वप्नाद्वेगविधारणादृतुविपर्ययात् अयथाबलमारम्भाद्भयशोकचित्तोद्वेगातियोगात् कृमिशोषज्वरार्शोविकारातिकर्षणाद्वा विपन्नाग्नेस्त्रयो दोषाः प्रकुपिता भूय एवाग्निमुपहत्य पक्वाशयमनुप्रविश्य अतीसारं सर्वदोषलिङ्गं जनयन्ति ॥ ११ ॥**

अतिशीतेत्यादीनां त्रिदोषजातीसारमाह । अत्र च शीतादीनां यथासंभवं वातादिकर्तृत्वेन ज्ञेयं । किंवा सर्वेषामेव त्रिदोषकर्तृत्वं ज्ञेयं । उक्तं हि—सर्वेषां दोषाणां अग्निसंश्रितौ सामप्रकोपौ इति । किंचिदभ्यवहरणादिति पथ्यापथ्यभोजनात्। अनुपचारादिति प्रतिकर्मणामेव असम्यगुपचारादित्यर्थः। सलिलादिसेवनादित्यत्र अवगाहादीनां बाह्यसेवनं सलिलस्योच्यते अनुपानं तु प्रागेवोक्तम् । विपन्नाग्निरिति वचनात् यथोक्तहेतूनाम् अग्निवधद्वारैव प्रायस्त्रिदोषकर्तृत्वं दर्शयति ॥ ११ ॥

**अपि च शोणितादीन् धातूनतिप्रकृष्टं दूषयन्तो धातुदोषस्वभावकृतानतीसारवर्णानुपदर्शयन्ति । तत्र शोणितादिषु धातुषु अतिप्रदुष्टेषु हारिद्रहरितनीलमाञ्जिष्ठमांसधावनसन्निकाशं रक्तं कृष्णं श्वेतं वराहमेदःसदृशमनुवद्धवेदनमवेदनं वा समासव्यासादुपवेश्यते शकृद् ग्रथितमामं सकृत् सकृदपि पक्वमनतिक्षीणमांसशोणितबलो मन्दाग्निर्विहतमुखरसस्तादृशमातुरं कृच्छ्रसाध्यं विद्यात् । एभिर्वैणैरतिसार्यमाणं सोपद्रवमातुरमसाध्योऽयमिति प्रत्याचक्षीत । तद्यथा—क्वाथशोणिताभं यकृत्पिण्डोपमं मांसोदकसन्निकाशं दधिघृतमज्जतैलवसाक्षीरवेसवाराभमतिनीलमतिरक्तमतिकृष्णमुदकमिवाच्छं पुनर्मेचकाभम् अतिस्निग्धं हरितनीलकषायवर्णं कर्बुरमाविलं तन्तुमदामं चन्द्रकोपगतमतिकुणपपूतिपूयगन्धमाममत्स्यगन्धिमक्षिकाक्रान्तं क्वथितबहुधातुद्रवमल्पपुरीषमपुरीषं वातिसार्यमाणं तृष्णादाहज्वरभ्रमतमकहिक्काश्वासानुबन्धमतिवेदनमवेदनं वा स्रस्तपक्वगुदं पतितगुदवलिं मुक्तनालमतिक्षीणबलमांसशोणितं सर्वपार्श्वास्थिशूलिनमरोचकातिप्रलापसंमोहपरीतं सहसोपरतविकारमतिसारिणमचिकित्स्यं विद्यादिति सन्निपातातिसारः ॥ १२ ॥**

अपिचेत्यादिना विकृतिविषमसमवायत्रिदोषजलक्षणमाह । अतिप्रकृष्टं यथा भवति तथा प्रदूषयन्त इत्यर्थः । मांसधावनं मांसप्रक्षालनोदकम् । समासव्यासादुपवेश्यत इति समासो यथोक्तलक्षणानां मेलकः । सकृदिति कदाचित् । विहतमुखरसः इति विरसमुखः। एभिर्वक्ष्यमाणैः वेसवाराभं वेसवारसदृशं तल्लक्षणं च निरस्थिपिशितं पिष्टमित्यर्थः । इत्यादिनोक्तं मेचकाभमिति स्निग्धकृष्णं । मक्षिकाक्रान्तमिति मक्षिकामयं मक्षिकाक्रान्त इति पाठे मक्षिकापरीते इत्यर्थः । तृष्णेत्यादिना सोपद्रवलक्षणसूचकानुपद्रवानाह सहसोपरतविकारमिति ॥ १२ ॥

**तमसाध्यतामसंप्राप्तं चिकित्सेद् यथाप्रधानोपक्रमेण हेतूपशयदोषविशेषपरीक्षया चेति ॥१३॥**

यद्यपि रिष्टे संशयितमरणमुक्तं तथापि इहातीसारं प्राप्य निश्चितमरणज्ञापकतया उच्यते, यथा प्रधानोपक्रमेणेति दोषत्रये यः प्रधानो भवति तस्योपक्रमेणेत्यर्थः । हेत्वादिपरीक्षा चेह भवति । अत्र विशिष्टा चिकित्सैवोच्यते ॥ १३ ॥

**आगन्तू द्वावतीसारौ मानसौ भयशोकजौ ।**
**तत्तयोर्लक्षणं वायोर्यदतीसारलक्षणम् ॥ १४ ॥**

आगन्त्वित्यादिना भयशोकजावतीसारौ प्राह । आगन्त्विति आगन्तुजनितभयशोकजौ। मानसाविति मानसदोषभयशोकजनितौ। एतेन मानसत्वं चानयोर्न विरोधी भवति अनयोर्लक्षणं अतिदेशेनाह तयोर्लक्षणं इत्यादिना ॥ १४ ॥

**मारुतो भयशोकाभ्यां शीघ्रं हि परिकुप्यति ।**
**तयोः क्रिया वातहरा हर्षणाश्वासनानि च ॥१५॥**
**इत्युक्ताः षडतीसाराः साध्यानां साधनं त्वतः ।**
**प्रवक्ष्याम्यानुपूर्व्येण यथावत् तन्निबोधत ॥ १६ ॥**

कस्मात्पुनर्वातातिसारलक्षणमनयोर्भवतीत्याह—मारुत इत्यादि । यस्मात् भयशोकजनितोऽत्र मारुतः कारणं भवति तस्माद्वातातीसारलक्षणानि भवन्तीति युक्तमित्यर्थः । न चानयोर्वातजन्यत्वेन वातजलक्षणयुक्तत्वेन वातजेनैव ग्रहणमिति वाच्यम् । यतोऽनयोर्वातजाद्भिन्नापि चिकित्सा भविष्यति हर्षणाश्वासनरूपचिकित्साभेदार्थं व्याधीनां भेदोऽभिधीयते । किंच लक्षणभेदोऽप्यत्र वातः शीघ्रं हि परिकुप्यतीति इत्यनेनोक्तः । यतो भयशोकजेऽतीसारे शीघ्रकारी वायुर्भवतीति शीघ्रं कुप्यतीति पदेनोच्यते न निदानान्तरं सन्निपातातिसारे

न भयशोकौ कारणत्वेनोक्तौ हेत्वन्तरसहितौ अत्र कारणं भवत इति । त्रिदोषजभयशोकजयोश्च यद्यपि तुल्यं लक्षणमिहोक्तं तथापि चिकित्साभेदात् तयोर्भेद उक्तस्तथाहि भयजे प्रश्वासनं शोकजे हर्षणं इति चिकित्साभेदः । चिकित्साभेदोऽस्तु सुश्रुते तु—"तैस्तैर्भावैः शोचतोऽल्पाशनस्य वाष्पोष्मा वह्निमाविश्य जन्तो"रित्यादिना शोकजः प्रबन्धेनोक्तः स तु शोकजादन्य एव विशिष्टहेतुजन्यः । इह त्वसौ सान्निपातिकेनाविरुद्धो ज्ञेयः । तथाहि तत्र वाष्पोष्मणा हि पित्तकारणत्वं युक्तं तेन शोकानलजो वायुः वाष्पोष्मणा च पित्तकफाविति तत्र कारणत्वेन दर्शितं । अतएव च तस्यासाध्यत्वं तत्रोक्तं अत्रापि च त्रिदोषजशोकोऽपि कारणत्वेनोक्तः । सुश्रुते अजीर्णात्प्रद्रुता इत्यादिना जीर्णजः पृथगुक्तः । तस्य इह उक्त त्रिदोषजे अनुबन्धो व्यक्त एव । यत्तत्रैव दोषा इति बहुवचनेन अत्राजीर्णस्य त्रिदोषजत्वमुक्तं इहापि च व्यापन्नेनाविलेनेन अग्निमांद्यजनिताजीर्ण-त्रिदोषजातिसारे कारणत्वमेव तेन सुश्रुतोक्तसर्वातिसाराविरोधोऽत्र ज्ञेयः ॥ १५—१६ ॥

**दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः ।**
**अतीसाराय कल्पन्ते भूयस्तान् संप्रवर्तयेत् ॥१७॥**
**न तु संग्रहणं देयं पूर्वमामातिसारिणे ।**
**विबध्यमानाः प्राग्दोषा जनयन्त्यामयान् बहून् १८**
**दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ।**
**शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ॥ १९ ॥**
**तस्मादुपेक्षेतोत्क्लिष्टान् वर्तमानान् स्वयं मलान् ।**
**कृच्छ्रं वातहतान् दद्यादभयां संप्रवर्तिनीम् ॥ २० ॥**
**तया प्रवाहिते दोषे प्रशाम्यत्युदरामयः ।**
**जायते देहलघुता जठराग्निश्च वर्धते ॥ २१ ॥**
**प्रमथ्यां मध्यदोषाणां दद्याद्दीपनपाचनीम् ।**
**लङ्घनं चाल्पदोषाणां प्रशस्तमतिसारिणाम् ॥२२॥**

दोषाः सन्निचिता इत्यादिना चिकित्सामाह । विदग्धशब्देनाविपक्काहारवाचिना चतुर्विधमप्यामं विदग्धं विष्टब्धं रसशेषं चाजीर्णं गृह्यते । संप्रवर्तयेदित्यनेन वर्तमानस्योपेक्षया प्रवर्तनम् । यथा स्तोकं वहत् विरेचनयोगात् प्रवर्तनम् । यद्वक्ष्यति "कृच्छ्रं वातहतान् दद्यात् अभयां संप्रवर्तिनीमिति । न तु संग्रहणं पूर्वं देयं सामातिसारिणे" इत्यत्र पूर्वमिति विशेषणेन उत्तरकालमतीसारे संग्रहणं दर्शयति । प्रथमं चामातीसारस्यापेक्षया विरेचनदानं युक्तम् इति विरोधे इयं व्यवस्था । यत्प्रवृत्ते आमे बलवति च पुरुषे प्रवर्तनमेव कर्तव्यम् । यदा तु दुर्बलः पुमान् क्षीणश्चामस्तदा प्रथमं प्रवर्तनं कृत्वा संग्रहणं कर्तव्यम् । तस्यां व्यवस्थायां संग्रहणे आतुरस्य बलभ्रंशात् मरणमेव स्यात् । अन्ये तु पूर्वं संग्रहणं न देयं इति शाल्मलकुटजलगादिसंग्रहणं न देयम् । सस्ते चव्यादिपाचनसंग्रहणं देयमिति वर्णयन्ति । इयं चामातिसारचिकित्सा सर्वामातिसाराणां साधारणी ज्ञेया । कृच्छ्रं वा वहतामिति सम्बन्धं वहताम् । प्रमथ्यामिति पाचनीयदीपनीयं कषायं । प्रमथ्याशब्दो हि वृद्धपरंपरया वैद्यकशास्त्रपरिभाषया पाचनदीपनकषाये श्रूयते । पथ्या विडंगकषायः शैखरिककषायशब्देन वैद्यैरुच्यते । बहुदोषे प्रवर्तनं तथा मध्यदोषे प्रमथ्योक्ता । अल्पदोषे च सामे प्रथमं कर्तव्यमाह—लङ्घनमित्यादि ॥ १७—२२ ॥

**पिप्पली नागरं धान्यं भूतीकमभया वचा ।**
**ह्रीवेरं भद्रमुस्तानि बिल्वं नागरधान्यकम् ॥ २३ ॥**
**पृश्निपर्णी श्वदंष्ट्रा च समांशा कण्टकारिका ।**
**तिस्रः प्रमथ्या विहिताः श्लोकार्धेष्वतिसारिणाम्॥**
**वचाप्रतिविषाभ्यां वा मुस्तपर्पटकेन वा ।**
**ह्रीवेरशृङ्गवेराभ्यां पक्वं वा पाययेज्जलम् ॥ २५ ॥**

तिस्रः प्रमथ्या इति यथाक्रमं कफपित्तवातेषु विभज्य देया इति वदंति । यथा वचाप्रतिविषादीन् विहितानि त्रीण्यपि जलानि कफपित्तवातेषु यथाक्रमं वदन्ति षडङ्गविधिनात्र जलसाधनं ज्ञेयम् ॥ २३—२५ ॥

**युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ।**
**तथा स शीघ्रमाप्नोति रुचिमग्निबलं बलम् ॥२६॥"**
**तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा ।**
**सुरया मधुना चादौ यथासात्म्यमुपाचरेत् ॥२७॥**
**यवागूभिर्विलेपीभिः खडैर्यूषै रसौदनैः ।**
**दीपनग्राहिसंयुक्तैः क्रमश्च स्यादतः परम् ॥ २८ ॥**

युक्तेऽन्नकाले इति सम्यग्बुभुक्षाकाले अवन्तिसोम कांजिकं तक्रादीनां द्रवाणां तर्पणादीनां आलोडनार्थमिहाभिधानम् । यवागूर्विरलद्रवा विलेपी बहुसिक्था च रसादिसंस्कृताः धनप्रलेहा व्यञ्जनविशेषाः । दीपनग्राहिगणौ षड्विरेचनशताश्रिती योक्तौ । अतःपरमिति यवाग्वाद्युपचारानन्तरम् ॥ २६—२८॥

**शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम् ।**
**बलां श्वदंष्ट्रां बिल्वानि पाठां नागरधान्यकम् २९**
**शटीं पलाशं हपुषां वचां जीरकपिप्पलीम् ।**
**यमानीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥३०॥**
**वृक्षाम्लं दाडिमाम्लंच सहिङ्गु बिडसैन्धवम् ।**
**प्रयोजयेदन्नपाने विधिना सूपकल्पितम् ॥ ३१ ॥**
**वातश्लेष्महरो ह्येष गणो दीपनपाचनः ।**
**ग्राही बल्यो रोचनश्च तस्माच्छस्तोऽतिसारिणाम् ॥**
**आमे परिणते यस्तु विबन्धमतिसार्यते ।**
**सशूलपिच्छमल्पाल्पं बहुशः सप्रवाहिकम् ॥ ३२ ॥**

शालिपर्णीत्यादिना यवाग्वादिसंस्कारद्रव्याण्याह । स प्रवाहिकामित्यत्र प्रवाहिकालक्षणम् 'वायुर्विवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य । प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदंति तज्ज्ञाः ।' इत्यनेन सुश्रुतोक्तं ज्ञेयम् ॥ २९—३३ ॥

तं मूलकानां यूषेण बदराणामथापि वा ।
उपोदिकायाः क्षीरिण्या यमान्या वास्तुकस्य वा ॥
सुवर्चलायाश्चञ्चोर्वा शाकेनावल्गुजस्य वा ।
शट्याः कर्कारुकाणां वा जीवन्त्याश्चिर्भटस्य वा ॥
लोणीकायाः सपाठायाः शुष्कशाकेन वा पुनः ।
दधिदाडिमसिद्धेन बहुस्नेहेन भोजयेत् ॥ ३६ ॥

क्षीरिणी लम्बिका, सुवर्चला सूर्यभक्ता, चञ्चुर्नाडीचाः, कर्कारुः कूष्माण्डभेदः, चिरभटः कर्कटी, लोणिका खनामख्याता शुष्कशाकं रूक्षदेशजं शाकमित्येके ॥ ३४—३६ ॥

कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लस्नेहाढ्यः खडो हन्यात् प्रवाहिकाम् ॥
यवानां मुद्गमाषाणां शालीनां च तिलस्य च ।
कोलानां बालबिल्वानां धान्ययूषं प्रकल्पयेत् ॥ ३८ ॥
ऐकध्यं यमके भृष्टं दधि दाडिमसाधितम् ।
वर्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३९ ॥
दध्नः सरं वा यमके भृष्टं सगुडनागरम् ।
सुरां वा यमके भृष्टां व्यञ्जनार्थं प्रदापयेत् ॥ ४० ॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा ।
लोपाकरसमम्लं वा स्निग्धाम्लं कच्छपस्य वा ४१
बर्हितित्तिरिदक्षाणां वर्तकानां तथा रसः ।
स्निग्धाम्लाः शालयश्चाग्र्या वर्चःक्षयरुजापहाः ४२
अन्तराविरसं पूत्वा रक्तं मेषस्य चोभयम् ।
पचेद्दाडिमसाराम्लं सधान्यस्नेहनागरम् ॥ ४३ ॥
भोजनं रक्तशालीनां तेनाद्यात् प्रपिबेच्च तत् ।
तथा वर्चःक्षयकृतैर्व्याधिभिर्विप्रमुच्यते ॥ ४४ ॥

कल्कः स्यादित्यादिना खडम् । धान्ययूषमिति धान्यप्रधानं यूषं यथोक्तमेव । यमकेति घृततैले दाडिमदधिसराभ्यां संस्कृतं दधिदाडिमसाधितं । शालीनां यद्यपि बद्धवर्चस्त्वं उक्तं तथापीह खडयूषविशेषयुक्तानां शालीनां वर्चःक्षये हितत्वं दर्शयन्नाह—स्निग्धाम्लः शालयश्चाग्र्या वर्चःक्षयरुजापहा इति । तेनाद्यात्प्रपिबेच्च तमिति उक्तविधानकृतेन द्रवेण संदिह्यात् । पृथक् द्रवं पिबेत् वर्चःक्षयकृतैः मुखशोफदौर्बल्योदावर्तादिभिः ॥ ३७—४४ ॥

गुदनिःसरणे शूले पानमम्लस्य सर्पिषः ।
प्रशस्यते निरामाणामथवाप्यनुवासनम् ॥ ४५ ॥
चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् ।
घृतमुत्कथितं पेयं गुदभ्रंशरुजापहम् ॥ ४६ ॥

इति चाङ्गेरीघृतम् ।

सचव्यपिप्पलीमूलं सव्योपविडदाडिमम् ।
पेयमम्लं घृतं युक्त्या सधान्याजाजिचित्रकम् ४७

इति गुदभ्रंशे चव्यादिघृतम् ।

सूत्रितमम्लघृतमाह । अत्र चांगेरीरसकोलरसदधिभिर्द्रवत्वं नागरक्षारयोश्च कल्कत्वम् । पेयमन्नं घृतमित्यत्र अम्लार्थं अनन्तरोक्तमेव द्रवं चांगेरीस्वरसादि देयम् । चव्यादयश्च दशकल्काः उक्तं च तन्त्रान्तरे "पञ्चकोलविडाजाजीधान्यदाडिमवेतसैः । पचेदम्लं घृतं तद्वत् नाग रक्षारसंयुत"मिति ॥ ४५–४७ ॥

दशमूलोपसिद्धं वा सबिल्वमनुवासनम् ।
शताह्वाशठिबिल्वैर्वा वचया चित्रकेण वा ।
स्तब्धभ्रष्टगुदे पूर्वं स्नेहस्वेदौ प्रयोजयेत् ॥ ४८ ॥

इति गुदभ्रंशेऽनुवासनम् ।

दशमूलोपसिद्धमित्यादौ अनुवासनमित्यानुवासनस्नेहः । अत्रानुवासने स्नेहस्तु तैलमेव अन्ये तु घृतस्य प्रकान्तत्वात् घृतमेवाहुः । शठीत्यादिनाप्यनुवासने स्नेहत्रयमुच्यते ॥ ४८ ॥

सुस्विन्नं च मृदुभूतं पिचुना संप्रवेशयेत् ।
विबद्धवातवर्चास्तु बहुशूलप्रवाहिकः ॥ ४९ ॥
सरक्तपिच्छतृष्णार्तः क्षीरसौहित्यमर्हति ।
यमकस्योपरि क्षीरं धारोष्णं वा पिबेन्नरः ॥ ५० ॥
शृतमैरण्डमूलेन बालबिल्वेन वा पयः ।
एवं क्षीरप्रयोगेण रक्तं पिच्छा च शाम्यति ॥ ५१ ॥
शूलं प्रवाहिका चैव विबन्धश्चोपशाम्यति ।

पिचुना संप्रवेशयेदिति पिचुनाच्छादितं पीडयित्वा प्रवेशयेत् पिचुः स्थूलकर्पटिका । सौहित्यं तृप्तिः ॥ ४९—५१ ॥

पित्तातिसारं पुनर्निदानोपशयाकृतिभिरामान्वयमुपलभ्य यथाबलं लङ्घनपाचनाभ्यामुपाचरेत् ॥ तृष्यतस्तु मुस्तपर्पटकोशीरसारिवाचन्दनकिराततिक्तकोदीच्यवारिभिरुपचारः ॥ ५३ ॥

आमान्वयं इति आमयुक्तं लंघनपाचनाभ्यां उपचरेदित्यनेन यत्पूर्वं आमातिसारे सामान्यविधानमुक्तं तदिह नानुमन्यते । तत्र च प्रवर्तने क्रियमाणे अभियोगभयं स्यादिति भावः । यत्तु विरेचनमिह वक्तव्यं तत्र सामग्रीविशेषसंपन्नाभाव एव ॥ ५२ ॥ ५३ ॥

लङ्घितस्य चाहारकाले बलातिबला-सूर्प्य-शालपर्णी-पृश्निपर्णी-बृहतीकण्टकारिकाशतावरीश्वदंष्ट्रानिर्यूहसंयुक्तेन यथासात्म्यं यवागूमण्डादिना तर्पणादिना वा क्रमेणोपचारः ॥ ५४ ॥

मुग्धमसूरहरेणुमकुष्ठकयूषैर्वा लावकपिञ्जलशशहरिणैणेयकालपुच्छकरसैरीषदम्लैर्वा क्रमशोऽग्निं सन्धुक्षयेत् ॥ ५५ ॥

अनुबन्धत्वे तु अस्य दीपनीयपाचनीयोपशमनीयसंग्रहणीयान् योगान् प्रयोजयेदिति ॥ ५६ ॥

लङ्घितस्य चेत्यादौ सूर्प्यशालपर्णां मुद्गमाषपर्ण्यौ । निर्यूहशब्देन च षडंगविधानसिद्धं जलमुच्यते । यवाग्वादिसाधने

तस्यैवाधिकारात्। अनुबंधत्वेत्यादौ पित्तातिसारानुबन्धे इमानिति वक्ष्यमाणान् ॥ ५४—५६ ॥

भवन्ति चात्र।

सक्षौद्रातिविषं पिष्ट्वा वत्सकस्य फलत्वचम्।
पिबेत् पित्तातिसारघ्नं तण्डुलोदकसंयुतम् ॥ ५७ ॥
किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः।
बिल्वं दारुहरिद्रा च त्वक् ह्रीवेरं दुरालभाम् ५८
चन्दनं च मृणालं च नागरं लोध्रमुत्पलम्।
तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम् ॥५९॥
उत्पलं धातकीपुष्पं दाडिमत्वङ्महौषधम्।
कट्फलं नागरं पाठा जम्ब्वाम्रास्थिदुरालभाः ६०
योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः।
पेयाः पित्तातिसारघ्नाः श्लोकार्धेन निदर्शिताः ६१
जीर्णौषधानां शस्यन्ते यथायोगं प्रकल्पितैः।
रसैः सांग्राहिकैर्युक्ताः पुराणा रक्तशालयः ॥६२॥
पित्तातिसारो दीप्ताग्नेः क्षिप्रं समुपशाम्यति।
आजक्षीरप्रयोगेण बलं वर्णश्च वर्धते ॥ ६३ ॥

फलत्वचं फलं च त्वचंचेति फलत्वचं। मृणालं सुषीरं। समङ्गा वराहक्रान्ता इत्यन्ये ॥ ५७—६३ ॥

बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति।
पैत्तिको यद्यतीसारः पयसा तं विरेचयेत् ॥ ६४ ॥
पलाशफलनिर्यूहं पयसा पाययेत तम्।
ततोऽनुपाययेत् कोष्णं क्षीरमेव यथाबलम् ॥६५॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः।
पलाशवत् प्रयोज्या वा त्रायमाणा विशोधिनी ६६
संसर्ग्यां क्रियमाणायां शूलं यद्यनुवर्तते।
स्रुतदोषस्य तं शीघ्रं यथावदनुवासयेत् ॥ ६७ ॥

न तिष्ठति न निवर्तते। पलाशवदिति उक्तफलाशफलविधानेन। संसर्ग्यामिति पेयादिक्रमे ॥ ६४—६७ ॥

शतपुष्पावरीभ्यां च पयसा मधुकेन च।
तैलपादं घृतं सिद्धं सबिल्वमनुवासनम् ॥ ६८ ॥
कृतानुवासनस्यापि कृतसंसर्जनस्य च।
वर्तते यद्यतीसारः पिच्छाबस्तिरतः परम् ॥ ६९ ॥

शतपुष्पेत्यादौ वरी शतावरी अनुवासनं दद्यादिति शेषः ॥ ६८ ॥ ६९ ॥

परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः।
कृष्णमृत्तिकयालिप्य स्वेदयेत् गोमयाग्निना ॥७०॥
सुशुष्कां मृत्तिकां ज्ञात्वा तानि वृन्तानि शाल्मलेः
शृते पयसि मृद्नीयादापोथ्योलूखले ततः ॥ ७१ ॥
पिष्टं मुष्टिसमं प्रस्थे तत् पूतं तैलसर्पिषा।
योजितं मात्रया युक्तं कल्केन मधुकस्य च ॥ ७२ ॥

बस्तिमभ्यक्तगात्राय दद्यात् प्रत्यागते ततः।
स्नात्वा भुञ्जीत पयसा जाङ्गलानां रसेन वा ॥७३॥

पित्तातिसारज्वरशोथगुल्मा-
जीर्णातिसारग्रहणीप्रदोषान्।
जयत्ययं शीघ्रमतिप्रवृद्धान्
विरेचनास्थापनयोश्च बस्तिः ॥ ७४ ॥

परिवेष्ट्येत्यादिना पिच्छाबस्तिमाह। शृते पयसीत्यत्र पानीयमानेनैव पयःशृतं ज्ञेयम्। प्रस्थ इति शृते पयसीत्यस्य विशेषणं। वृन्तानि शाल्मलेः उलूखलेऽऽपोथ्य अपोथितापिण्डं शृते प्रस्थे पयसि मृद्नीयादिति योजना। मात्रयेति वचनात् तैलसर्पिषोरत्र तावतीमात्रा यावता स्नेहमात्रं भवति तथा यष्टीमधुकल्कस्यापि तावतीमात्रा यावता घनो बस्तिर्भवति ॥ ७०—७४ ॥

पित्तातिसारी यस्त्वेतां क्रियां मुक्त्वा निषेवते।
पित्तलान्यन्नपानानि तस्य पित्तं महाबलम् ॥ ७५ ॥
कुर्याद्रक्तातिसारं तु रक्तमाशु प्रदूषयत्।
तृष्णां शूलं विदाहं च गुदपाकं च दारुणम् ॥७६॥

पित्तातिसारीत्यादिना पित्तातिसारस्यैव हेतुविशेषकृतावस्थाभेदरूपं रक्तातिसारं दर्शयति। अयंच रक्तातिसारो यद्यपि पित्तातिसारोत्तरकालभावितयोक्तः तथापि पित्तातिप्रकोपेण रक्तदुष्ट्या च प्रथममपि भवत्येव दुष्टत्वादिति ज्ञेयम्। तेनात्रोत्पत्तिक्रियाभिधानं अतन्त्रम्। यथा पाण्डुरोगास्तु योऽत्यर्थमित्यादिना कामला उक्ता उक्तं क्रमं विनापि कामला भवति एवमपि चास्य रक्तातीसारस्य पित्तजन्यत्वात् पैत्तिके एवावसेयः तेन षट्संख्या न व्याहन्यते। अतीसारस्य तु आमरक्तशकृत् पित्तवातकफान् अतीसारकारकानभिधाय एकद्वित्रिसंसर्गात् त्रिंशद्भेदा भवंति। ते केवलैः सह षड्त्रिंशदपि अत्रैव षट्केऽन्तर्भावनीयं तत्र सूक्ष्मभेदगणनया स भेदः कृत इत्यविरोधः ॥ ७५ ॥ ७६ ॥

छागं तत्र पयः शस्तं शीतं समधुशर्करम्।
पानार्थे व्यञ्जनार्थे च गुदप्रक्षालनं तथा ॥ ७७ ॥
भोजनं रक्तशालीनां पयसा तेन भोजयेत्।
रसैः पारावतादीनां घृतभृष्टैः सशर्करैः ॥ ७८ ॥
शशपक्षिमृगाणां च शीतानां वनचारिणाम्।
रसैरनम्लैः सघृतैर्भोजयेत् तं सशर्करैः ॥ ७९ ॥
रुधिरं मार्गमाजं वा घृतभृष्टं प्रशस्यते।
काश्मर्या फलयूषो वा किंचिदम्लः सशर्करः ॥८०॥
नीलोत्पलं मोचरसो समङ्गा पद्मकेशरम्।
अजाक्षीरयुतं दद्याज्जीर्णे च पयसौदनम् ॥ ८१ ॥
दुर्बलं पाययित्वा वा तस्यैवोपरि भोजयेत्।
प्रागुक्तं नवनीतं वा दद्यात् समधुशर्करम् ॥ ८२ ॥

तत्र च्छागमित्यादौ व्यञ्जनार्थमिति भोज्योपकरणार्थम् । पयसा तेनेति छागेन पयसा मृगस्येदं मार्गं अजस्येदमाजं रुधिरमिति योजना ॥ ७७—८२ ॥

प्राश्य क्षीरोत्थितं सर्पिः कपिञ्जलरसाशनः ।
त्र्यहादारोग्यमाप्नोति पयसा क्षीरभुक् तथा ॥८३॥
पीत्वा शतावरीकल्कं पयसा क्षीरभुक् जयेत् ।
रक्तातिसारं पीत्वा वा तथा सिद्धं घृतं नरः ॥८४॥
घृतं यवागूमण्डेन कुटजस्य फलैः शृतम् ।
पेयं तस्यानुपातव्या पेया रक्तोपशान्तये ॥ ८५ ॥
त्वक् च दारुहरिद्रायाः कुटजस्य फलानि च ।
पिप्पली शृङ्गवेरं च द्राक्षा कटुकरोहिणी ॥ ८६ ॥

प्राश्येत्यादौ सर्पिः प्राश्येति संबन्धः । कपिञ्जलो गौरतित्तिरिः । क्षीरं भुनक्तीति क्षीरभुक् । कपिञ्जलरसस्थाने माक्षिकं ज्ञेयम् । पीत्वा शतावर्याः कल्कं यवागूमण्डेन पेयं इति संबन्धः ॥ ८३—८६ ॥

षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम् ।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ८७ ॥
कृष्णमृन्मधुकं शङ्खं रुधिरं तण्डुलोदकम् ।
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परम् ॥ ८८ ॥
पीतः प्रियङ्गुकाकल्कः सक्षौद्रस्तण्डुलाम्भसा ।
रक्तस्रावं जयेच्छीघ्रं धन्वमांसरसाशिनः ॥ ८९ ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः ।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ९० ॥

षड्भिरितिपदं यथालाभनिषेधार्थम् । कृष्णमृदित्यादौ रुधिरं शोणितं केचित्कुङ्कुममाहुः । शर्करापंचभागिक इत्यत्र शर्करा पञ्चमभागेन कृष्णतिलदानं । उक्तं हि जतूकर्णे कृष्णतिलान् शर्करया छागीपयसेति ॥ ८७—९० ॥

पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥९१॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्भसा ।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाद्विमुच्यते ॥ ९२ ॥
गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते ।
सेचयेत्तं सुशीतेन पटोलमधुकाम्बुना ॥ ९३ ॥
पञ्चवल्कमधूकानां रसैरिक्षुरसैर्घृतैः ।
छागैर्गव्यैः पयोभिर्वा शर्कराक्षौद्रसंयुतैः ॥ ९४ ॥

पलमित्यादौ रसमिति क्वाथं । रसाशीति मांसरसभुञ्जानः । इक्षुरसैर्घृतैरित्यन्तेन सेचयेदित्यनुवर्तते ॥ ९१—९४ ॥

प्रक्षालनानां कल्कैर्वा ससर्पिष्कैः प्रलेपयेत् ।
एषां वा सुकृतैश्चूर्णैस्तं गुदं प्रतिसारयेत् ॥ ९५ ॥
धातकीलोध्रचूर्णैर्वा समांशैः प्रतिसारयेत् ।
तथा तत्र स्रवत्यस्रं गुदं तैः प्रतिसारितम् ॥ ९६ ॥

पक्वता प्रशमं याति वेदना चोपशाम्यति ।
यथोक्तैः सेचनैः शीतैः शोणिते निःस्रवत्यपि ।
गुदवङ्क्षणकट्यूरु सेचयेद्घृतभावितम् ॥ ९७ ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ।
कार्पाससहयोगेन सेचयेद्गुदवङ्क्षणौ ॥ ९८ ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते ।
यदा वायुर्विबद्धश्च कृच्छ्रं चरति वा न वा ॥ ९९ ॥
पिच्छावस्तिं तदा तस्य यथोक्तमुपकल्पयेत् ।
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासयेत् ॥ १०० ॥
प्रायशो दुर्बलगुदाश्चिरकालातिसारिणः ।
तस्मादभीक्ष्णशस्तेषां गुदस्नेहं प्रयोजयेत् ॥ १०१ ॥

प्रक्षालनानामिति प्रक्षालनार्थं युक्तानां पटोलमधुकादीनां प्रतिसारयेदवचूर्णयेत् । पिच्छावस्तिं तदा तस्येति अत्रैवोपरि वस्तिग्रन्थोक्तं गुदे स्नेहं प्रयोजयेदिति स्नेहभावितपिचुप्रणयनेन गुदे स्नेहप्रयोगमिच्छन्ति । अन्ये तु प्रकृतत्वादनुवासनेनैवात्र प्रयोगमाहुः ॥ ९५—१०१ ॥

पवनोऽतिप्रवृत्तो हि स्वे स्थाने लभतेऽधिकम् ।
बलं तस्य सपित्तस्य जयार्थे वस्तिरुत्तमः ॥ १०२ ॥
रक्तं विड्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ।
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥ १०३ ॥
शर्करार्धांशिकं लीढं नवनीतं नवोद्धृतम् ।
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ॥१०४॥
न्यग्रोधोदुम्बराश्वत्थशुङ्गानापोथ्य वासयेत् ।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ॥ १०५॥
तदर्धं शर्करायुक्तं लिह्यात्सक्षौद्रपादिकम् ।
अधो वा यदि वाप्यूर्ध्वं यस्य रक्तं प्रवर्तते ॥१०६॥
यस्त्वेवं दुर्बलो मोहात्पित्तलान्येव सेवते ।
शीघ्रं विपद्यते प्राप्य वलीपाकं सुदारुणम् ॥ १०७॥
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम् ।
योऽयश्चामातिसारघ्नो यथोक्तो दीपनो गणः ॥१०८॥

स्वे स्थाने इति पक्वाशये वस्तिरिति सामान्यवचनात् अनुवासनं निरूहश्च ज्ञेयः । शतावरीघृतमिति शतावरीमूलतुलाचतस्र इत्यादिना योनिव्यापद्घृतम् शतावरीघृतम् । विकारमिति रक्तं स वहतीत्यादिनोक्तम् । वलीपाकमिति गुदवलीपाकं । दीपनो गण इति शालीपर्ण्यादिनोक्तः ॥१०२—१०८॥

लङ्घितस्यानुपूर्व्या च कृतायां न निवर्तते ।
कफजो यद्यतीसारः कफघ्नैस्तमुपाचरेत् ॥ १०९ ॥
बिल्वकर्कटिकामुस्तमभया विश्वभेषजम् ।
वचा विडङ्गं भूतीकं धान्यकं देवदारु च ॥ ११० ॥
कुष्ठं सातिविषा पाठा चव्यं कटुकरोहिणी ।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ॥ १११ ॥

योगाञ्छ्लोकार्धविहितांश्चतुरस्तान्प्रयोजयेत्।
शृताञ्छ्लेष्मातिसारेषु कायाग्निबलवर्धनान् ॥११२॥

कफघ्नैस्तमुपाचरेदित्युक्तम् तेन बिल्वकर्कटकेत्यादिना योगमाह ॥ १०९—११२ ॥

अजाजीं ससितां पाठां नागरं मरिचानि च।
धातकीद्विगुणं दद्यान्मातुलुङ्गरसाप्लुतम् ॥ ११३ ॥
रसाञ्जनं सातिविषं कुटजस्य फलानि च।
धातकीद्विगुणं दद्यात्पातुं सक्षौद्रनागरम् ॥११४॥
धातकी नागरं बिल्वं लोध्रं पद्मस्य केशरम्।
जम्बूत्वङ्नागरं धान्यं पाठा मोचरसं बला ॥११५॥
समङ्गा धातकी बिल्वमध्यं जम्ब्वाम्रयोस्त्वचा।
कपित्थानि विडङ्गानि नागरं मरिचानि च ॥११६॥
चाङ्गेरीकोलतक्राम्लांश्चतुरस्तान्कफातुरे।
श्लोकार्धविहितान्दद्यात्सस्नेहलवणान्खडान् ११७
कपित्थमध्यं लीढ्वा तु सव्योषक्षौद्रशर्करम्।
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ॥११८॥

धातकीद्विगुणमिति। एकद्रव्यापेक्षया द्विगुणया धातक्या युक्तं अजाजीमित्यादौ असितामिति पिप्पली जतूकर्णे त्वयं योगः। पाठा जातीफलं व्योषं धातकीद्विगुणमित्युक्तम् ॥ ११३—११८ ॥

कणां मधुयुतां पीत्वा तक्रं पीत्वा सचित्रकम्।
जग्ध्वा वा बालबिल्वानि मुच्यते जठरामयात् ॥
बालबिल्वं गुडं तैलं पिप्पलीं विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥१२०॥
भोज्यं मूलकषायेण वातघ्नैश्चोपसेवनैः।
वातातिसारविहितैर्यूषैर्मांसरसैः खडैः ॥ १२१ ॥
पूर्वोक्तमम्लसर्पिर्वा षट्पलं वा यथाबलम्।
पुराणं वा घृतं दद्याद्यवागूमण्डमिश्रितम् ॥१२२॥
वातश्लेष्मविबन्धे वा कफे वाऽतिस्रवत्यपि।
शूले प्रवाहिकायां वा पिच्छाबस्तिं प्रयोजयेत्१२३
पिप्पलीबिल्वकुष्ठानां शताह्वावचयोरपि।
कल्कैः सलवणैर्युक्तं पूर्वोक्तं सन्निधापयेत् ॥१२४॥

कणां मधुयुतामित्यत्र कणा पिप्पली। अन्ये कणानिति पठंति कणानित्यनेन च यष्टीतण्डुलान् ग्राहयंति। वाते प्रतिहत इति बद्धे वाते। उपसेवनैरिति व्यञ्जनैः पूर्वोक्तमम्लसर्पिरिति चांगेरीकोलदध्यम्लेत्यादिनोक्तम्। पिच्छाबस्तिं प्रयोजयेदिति यदुक्तं तत्रापि पिच्छाबस्तेर्विशेषणमाह। पिप्पल्यादिकल्कैर्युक्तं सन्निधापयेदिति ॥ ११९—१२४ ॥

प्रत्यागते सुखे स्नातं कृताहारं दिनात्यये।
बिल्वतैलेन मतिमान्सुखोष्णेनानुवासयेत् ॥१२५॥
वचान्तैरथवा कल्कैस्तैलं पक्त्वानुवासयेत्।
बहुशः कफवातार्तः तथा स लभते सुखम् ॥१२६॥
"स्वे स्थाने मारुतोऽवश्यं वर्धते कफसंक्षये।
स वृद्धः सहसा हन्यात्तस्मात्तं त्वरया जयेत् १२७

बिल्वतैलेनेति सिद्धौ दशमूलं बलारास्नेत्यादिना वक्ष्यमाणं बिल्वतैलं। वचान्तैरिति पिप्पलीबिल्वकुष्ठानां शताह्वावचयोरित्यत्रोक्तैर्वचान्तैः। संप्रति सर्वातिसारेषु पक्वाशयव्यापकत्वेन वायुवृद्धिर्भवति साचाशुकारितया त्वरया जेतव्येति दर्शयन्नाह स्वे स्थानेइत्यादिना कफसंक्षयादित्यनेन कफसंक्षये रूक्षशरीरतया वायुः कुप्यति श्लेष्मशोणिते वृद्धे शरीरवायुः विवृतप्रसवो भवति इति ॥ १२५—१२७ ॥

वातस्यानुजयेत्पित्तं पित्तस्यानुजयेत्कफम्।
त्रयाणां वा जयेत्पूर्वं यो भवेद्बलवत्तमः ॥ १२८ ॥

पूर्वं ज्वराध्याये सन्निपातचिकित्सायां कफस्थानानुपूर्व्या वा इत्यनेन कफपित्तवातादीनां क्रमेण चिकित्सा अतीसारेऽपि त्रिदोषजे कदाचित्स्यादित्याशङ्क्य अत्र विशिष्टं क्रममाह—वातस्यानित्यादि। अयंच क्रमो निरामसन्निपातातिसारे एव ज्ञेयः। सामे तु प्रथममामस्यैव चिकित्सितं कर्तव्यम् ॥१२८॥

तत्र श्लोकः।

प्रागुत्पत्तिनिमित्तानि लक्षणं साध्यता तथा।
क्रिया चावस्थिकी सिद्धा निर्दिष्टा ह्यतिसारिणाम्

इति चरकसंहितायामतीसारचिकित्सितं नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

समत्रिदोषातिसारचिकित्साक्रममभिधाय विषमत्रिदोषातिसारचिकित्साक्रममाह—प्रागुत्पत्तीत्यादिना अध्यायार्थसंग्रहः ॥ १२९ ॥

इति चरकसंहितायां अतीसारचिकित्सितं समाप्तम् ॥

## विंशोऽध्यायः।

अथातश्छर्दिचिकित्सितं व्याख्यास्यामः।

यशस्विनं ब्रह्मतपोद्युतिभ्यां
ज्वलन्तमद्र्यर्कसमप्रभावम्।
पुनर्वसुं भूतहिते निविष्टं
पप्रच्छ शिष्योऽत्रिजमग्निवेशः ॥ १ ॥

शरीरे मार्गद्वयं प्रधानं अधोगुदमूर्ध्वं मुखं तदधोमार्गातिप्रवृत्तिदोषमतीसारमभिधाय ऊर्ध्वातिदोषप्रवृत्तिरूपा छर्दिरुच्यते इति छर्द्यध्यायसंबन्धः। ब्रह्मणः तत्त्वज्ञानस्य तपसश्च द्युतिः ताभ्यां ज्वलन्तम् ॥ १ ॥

याश्छर्दयः पञ्च पुरा त्वयोक्ता
रोगाधिकारे भिषजां वरिष्ठ।
तासां चिकित्सां सनिदानलिङ्गां
यथावदाचक्ष्व नृणां हितार्थम् ॥ २ ॥

तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद।
याश्छर्दयः पञ्च पुरा मयोक्ता-
स्ता विस्तरेण ब्रुवतो निबोध॥ ३॥

रोगाधिकारे इत्यष्टोदरीये पृथक् वातादिषु त्रिषु च मिलितेषु प्रभवः उत्पत्तिर्यासां ताः पृथक् त्रिप्रभवाश्चतस्रः। द्विष्टार्थयोगादपीत्यत्र द्विष्टशब्देन प्रतीपाशुचिपूत्यादयोऽपि द्वेष्यतया गृह्यन्ते। द्विष्टप्रतीपेत्यादौ वक्ष्यमाणा द्विष्टार्थछर्दिनिदाने द्विष्टशब्देन गोवलीवर्दन्यायात् प्रतिपुरुषनियतद्विष्टत्वमुच्यते तेनेह उक्तार्थशब्देन प्रतिपादिता छर्दिरुच्यते॥२॥३॥

दोषैः पृथक्त्रिप्रभवाश्चतस्रो
द्विष्टार्थयोगादपि पञ्चमी स्यात्।
तासां हृदुत्क्लेशकफप्रसेकौ
द्वेषोऽशने चैव हि पूर्वरूपम्॥ ४॥

यद्यपि हेत्वभिधानपूर्वकं पूर्वरूपाभिधानं युज्यते हेतूत्तरकालभावित्वादेव पूर्वरूपस्य तथाप्यल्पवक्तव्यत्वात् तासामित्यादिना पूर्वरूपमाह। पूर्वरूपं लिङ्गाल्पत्वादुच्यते एवमन्यत्रापि साक्षात्सूचितपूर्वाभिधानेन ज्ञेयम्॥ ४॥

व्यायामतीक्ष्णौषधशोकरोग-
भयोपवासाद्यतिकर्षितस्य।
क्रुद्धो महास्रोतसि मातरिश्वा
दोषान्समुत्क्लिश्य तदूर्ध्वमस्यन्॥ ५॥
आमाशयोद्रेककृतां च मर्म
प्रपीडयन् छर्दिमुदीरयेच्च।
हृत्पार्श्वपीडामुखशोषमूर्ध्व-
नाभ्यर्तिकासस्वरभेदतोदैः॥ ६॥
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम्।
कृच्छ्रेण चाल्पं महता च वेगे-
नार्तोऽनिलाच्छर्दयतीह दुःखम्॥ ७॥

व्यायामेत्यादिना वातजहेतुमाह। महास्रोतसीति कोष्ठे दोषानिति बहुवचनं बहूनां उत्क्लेशनीयस्य विद्यमानत्वात् सा रक्तादेरपि छर्द्यादिदोषशब्देनाभिधानात्। ऊर्ध्वक्षिपणं आमाशयोद्रेकेण उदीरितो वायुरेव किंवा आमाशयोद्रेककृत इति द्वितीयाबहुवचनं दोषानित्यस्य विशेषणम्। मर्मेति हृदयम्। कषायमिति कषायरसं कषायवर्णं वा॥ ५—७॥

अजीर्णकट्वम्लविदाह्यशीतै-
रामाशये पित्तमुदीर्णवेगम्।
रसायनीभिर्विसृतं प्रपीड्य
मर्मोर्ध्वमागम्य वमिं करोति॥ ८॥
मूर्च्छापिपासामुखशोषमूर्ध्व-
ताल्वक्षिसंतापतमोभ्रमार्तः।
पित्तं भृशोष्णं हरितं सतिक्तं
धूम्रं च पित्तेन वमेत्सदाहम्॥ ९॥

अजीर्णेत्यादिना पित्तजायाः हेतुलक्षणे ब्रूते—अजीर्णे इति। अजीर्णे भोजनम्। रसायनीभिरिति स्रोतोभिः। मूर्धेति तापेन संबध्यते। धूम्रं धूम्रवर्णम्॥ ८॥ ९॥

स्निग्धातिगुर्वामविदाहिभोज्यैः
स्वप्नादिभिश्चैव कफोऽतिवृद्धः।
उरःशिरोमर्मरसायनीश्च
सर्वाः समावृत्य वमिं करोति॥ १०॥
तन्द्रास्यमाधुर्यकफप्रसेक-
संतोषनिद्रारुचिगौरवार्तः।
स्निग्धं घनं स्वादुकफं विशुद्धं
सलोमहर्षोऽल्परुजं वमेत्तु॥ ११॥

स्निग्धेत्यादिना कफजमाह। संतोषोऽत्र तृप्तिः। अन्ये तु संतोषो मानस एव अत्र व्याधिप्रभावाद्भवति। अल्परुजमिति क्रियाविशेषणम्॥ १०॥ ११॥

समश्नतः सर्वरसान्प्रसक्त-
मामप्रदोषर्तुविपर्ययैश्च।
सर्वे प्रकोपं युगपत्प्रपन्ना-
श्छर्दिं त्रिदोषां जनयन्ति दोषाः॥ १२॥
शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबला प्रसक्तम्।
छर्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात्॥ १३॥

समश्नत इत्यादिना त्रिदोषजमाह। समश्नतः सर्वरसानिति पथ्यापथ्यमेलकरूपतया भजतः। उक्तं हि—'पथ्यापथ्यमिहैकत्र भुक्तं समशनं मत'मित्यत्र, न तु सर्वरसान् भुञ्जानस्येत्यर्थः। सर्वरसभोजनं हि पथ्यमेव। तेनेह तस्य त्रिदोषकर्तृत्वं न स्यात्। प्रसक्तमिति आमस्य वा प्रदोषः आमप्रदोषः॥ १२॥ १३॥

विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्ध्वमेति।
उत्सन्नदोषस्य तदाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात्॥ १४॥
विण्मूत्रयोस्तत्समवर्णगन्धं
तृट्श्वासहिक्कार्तियुतं प्रसक्तम्।
प्रच्छर्दयेद्दुष्टमिहातिवेगा-
त्तयार्दितश्चाशु विनाशमेति॥ १५॥

विट्स्वेदेत्यादिना उपद्रवयुक्तां छर्दिं उपद्रवादसाध्यामाह। विण्मूत्रयोस्तत्समगन्धवर्णं छर्दयतीति वायुना विण्मूत्रस्रोतसां दूषितत्वाज्ज्ञेयम्॥ १४॥ १५॥

द्विष्टप्रतीपाशुचिपूत्यमेध्य-
बीभत्सगन्धाशनदर्शनैश्च ।
यश्छर्दयेत्तमना मनोघ्नै-
र्द्विष्टार्थसंयोगभवा मता सा ॥ १६ ॥
क्षीणस्य या छर्दिरतिप्रवृद्धा
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदन्त्यसाध्यां
साध्यां चिकित्सेदनुपद्रवां च ॥ १७ ॥

द्विष्टेत्यादिना द्विष्टजामाह । द्विष्टामयो गन्धेनाशनेन दर्शनेन च यथायोग्यतया संबध्यते । अशनं भक्षणं । द्विष्टं प्रति पुरुषाप्रीतिजनकं । प्रतीपं वचादि । केचित्प्रतीपं वातमाहुः । अशुचि उच्छिष्टं, अमेध्यं मलिनं, बीभत्सं जुगुप्सितम् । मनोघ्नैरित्यनेन द्विष्टादीनां मध्ये यत्किंचित् पुरुषं प्राप्य अशुच्यादि मनोघ्नं न भवति तं प्रति तच्छर्दिकारकं न भवति मनोऽनुपघातकत्वादिति सूचयति । असाध्यलक्षणयुक्तां छर्दिं परित्यागार्थमाह—क्षीणस्येत्यादि । अतिप्रवृद्धा इति । सदानुबद्धा सोपद्रवेत्यत्र विट्स्वेदेत्यादिना रोगोपद्रवा ज्ञेयाः । सचन्द्रिकामिति दत्तस्नेहमण्डलाकारयुक्ताम् ॥ ॥ १६ ॥ १७ ॥

आमाशयोत्क्लेशभवा हि सर्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात् ।
प्राक्कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ १८ ॥
चूर्णानि लिह्यान्मधुनाभयानां
हृद्यानि वा यानि विरेचनानि ।
मद्यैः पयोभिश्च युतानि युक्त्या
नयन्त्यधोदोषमुदीर्णमूर्ध्वम् ॥ १९ ॥
वल्लीफलाद्यैर्वमनं पिबेद्वा
यो दुर्बलस्तं शमनैश्चिकित्सेत् ।
रसैर्मनोज्ञैर्लघुभिर्विशुष्कै-
र्भक्ष्यैः सभोज्यैर्विविधैश्च पानैः ॥ २० ॥

आमाशयेत्यादिना साध्यानां चिकित्सामाह । यस्मादामाशयोत्क्लेशात्सर्वाश्छर्दयो भवंति । आमाशयोत्थे च रोगे लंघनादिकफहरं भेषजं युक्तम् । तस्मात् लंघनमेव कर्तव्यमिति भावः । लंघनं चाल्पदोषविषयं शोधनं च बहुदोषविषयं इति व्यवस्था । संशोधनशब्देन चेह विरेचनवमनेऽपि गृह्येते । अन्ये तु अत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयंति । संशोधनयोगानाह—चूर्णानीत्यादि । फलाद्यैरिति फलानि जीमूतेक्ष्वाकुप्रभृतीनि पठितानि तैः । शमनैरिति दोषनिर्हरणं विना दोषसाम्यकरैः । उक्तं हि पुष्कलावते 'न शोधयति यद्दोषान्समान्नोदीरयत्यपि । समीकरोति विषमान् तत्संशमनमुच्यते' इति ॥ १८—२० ॥

सुसंस्कृतास्तित्तिरिबर्हिलाव-
रसा व्यपोहन्त्यनिलप्रवृत्ताम् ।
छर्दिं तथा कोलकुलत्थधान्य-
बिल्वादिमूलाम्लयवैश्च यूषः ॥ २१ ॥
वातात्मके हृद्द्रवकासयुक्तो
नरः पिबेत्सैन्धववद्धृतं तु ।
सिद्धं तथा धान्यकनागराभ्यां
दध्ना च तोयेन च दाडिमस्य ॥ २२ ॥

सुसंस्कृता इत्यादिना वैशेषिकी वातजा चिकित्सोच्यते । उत् यत् उरसोपरिस्रोतः । सैन्धववदिति सैन्धवप्रक्षेपं तोयेन च । दाडिमस्य इति दाडिमरसेन ॥ २१ ॥ २२ ॥

व्योषेण युक्तां लवणैस्त्रिभिश्च
घृतस्य मात्रामथवा विदध्यात् ।
स्निग्धानि हृद्यानि च भोजनानि
रसैः सयूषैर्दधिदाडिमाम्लैः ॥ २३ ॥
पित्तात्मिकायामनुलोमनार्थं
द्राक्षाविदारीक्षुरसैस्त्रिवृत्स्यात् ।
कफाशयस्थं त्वतिमात्रवृद्धं
पित्तं हरेत्स्वादुभिरूर्ध्वमेव ॥ २४ ॥
शुद्धाय काले मधुशर्कराभ्यां
लाजैश्च मन्थं यदि वापि पेयाम् ।
प्रदापयेन्मुद्गरसेन वापि
शाल्योदनं जाङ्गलजै रसैर्वा ॥ २५ ॥"
सितोपलामाक्षिकपिप्पलीभिः
कुल्माषलाजायवसक्तुगृञ्जान् ।
खर्जूरमांसान्यथ नारिकेलं
द्राक्षामथो वा बदराणि लिह्यात् ॥ २६ ॥

व्योषेणेत्यादौ व्योषादीनां घृतमात्रायां प्रक्षेपार्थम् । कफाशयस्थमिति कफस्थानम् । आमाशयोर्ध्वभागो वक्षः तत्स्थं हरेत् । ऊर्ध्वमेवेति वमनेनैव हरेत् । यदि वापि पेयामिति मन्दाग्निं प्रति पेया ज्ञेया । कुल्माषलाजायवसक्तुगृञ्जानिति पिष्टकृता भक्ष्याः । पारियात्रास्तु मुद्गान्मसूरांस्तत्सन्नसूदितान् कुल्माषानाहुः । गृंजः समण्डो यवोदनः । खर्जूरमांसानीति खर्जूरफलमज्जा । खर्जूरेत्यादौ लिह्यादित्यत्र सितोपलामाक्षिकपिप्पलीत्यनुवर्तनीयम् ॥ २३—२६ ॥

स्रोतोजलाजोत्पलकोलमज्ज-
चूर्णानि लिह्यान्मधुनाभयां च ।
कोलास्थिमज्जाञ्जनमक्षिकाविड्-
लाजासितामागधिकाकणा वा ॥ २७ ॥

स्रोतोजं स्रोतोञ्जनं । कोलमज्जा कोलाभ्यन्तरं । अभयां वेत्यत्रापि मधुना लिह्यादिति संबध्यते । कोलास्थीत्यादावपि मधुना लिह्यादित्यनुवर्तते ॥ २७ ॥

द्राक्षारसं वापि पिबेत्सुशीतं
मृद्भृष्टलोष्टप्रभवं जलं वा ।
जम्ब्वाम्रयोः पल्लवजं कषायं
पिबेत्सुशीतं मधुसंयुतं वा ॥ २८ ॥
निशि स्थितं वारि समुद्गकृष्णं
सौवीरधान्यं चणकोदकं वा ।
गवेधुकामूलजलं गुडूच्या
जलं पिबेदिक्षुरसं पयो वा ॥ २९ ॥
सेव्यं पिबेत्काञ्चनगैरिकं वा
सवालकं तण्डुलधावनेन ।
धात्रीरसेनोत्तमचन्दनं वा
तृष्णावमिघ्नानि समाक्षिकाणि ॥ ३० ॥
कल्कं तथा चन्दनचव्यमांसी-
द्राक्षोत्तमावालकगैरिकाणाम् ।
शीताम्बुना गैरिकशालिचूर्णं
मूर्वा तथा तण्डुलधावनेन ॥ ३१ ॥
कफात्मिकायां वमनं प्रशस्तं
सपिप्पलीसर्षपनिम्बतोयैः ।
पिण्डीतकैः सैन्धवसंप्रयुक्तै-
र्वम्यां कफामाशयशोधनार्थम् ॥ ३२ ॥
गोधूमशालीन्सयवान्पुराणा-
न्यूषैः पटोलामृतचित्रकाणाम् ।
व्योषस्य निम्बस्य च तक्रसिद्धै-
र्यूषैः फलाम्लैः कटुभिस्तथाद्यात् ॥ ३३ ॥
रसांश्च शूल्यानि च जाङ्गलानां
मांसानि जीर्णान्मधुशीध्वरिष्टान् ।
रागांस्तथा षाण्डवपानकानि
द्राक्षाकपित्थैः फलपूरकैश्च ॥ ३४ ॥
मुद्गान्मसूरांश्चणकान्कलाया-
न्भृष्टान्युतान्नागरमाक्षिकाभ्याम् ।
लिह्यात्तथैव त्रिफलाविडङ्ग-
चूर्णं विडङ्गप्लवयो रसं वा ॥ ३५ ॥
सजाम्बवं वा बदरस्य चूर्णं
मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसंप्रयुक्तां
लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥ ३६ ॥

मृद्भृष्टलोष्टजलं वेति मृन्मयलोष्टनिर्वेपणभवं जलमित्यर्थः । स मुद्गकृष्णं पिप्पलीमुद्गसहितं । निशि स्थितमित्यादौ सौवीरधान्यमिति द्वितीयः । चणकं चेति तृतीयो योगः तथा गवेधुका । योगद्वयेऽपि शीतकषायविधिर्ज्ञेयः । कांचनगैरिकमिति गैरिकमिति कांचनवर्णं । सवालकं तण्डुलधावनेनेति विधानम् । सेव्यं पिबेदित्यनेन तथा कांचनगैरिकं चेदित्यनेन च द्वितीययोगे संबध्यते । द्राक्षोत्तमा गोस्तनी द्राक्षेत्यर्थः । उत्तमचन्दनं धवलचन्दनम् । समाक्षिकं शीतं पश्चादुक्तत्रयद्रव्याणि समाक्षिकाणि । पिण्डीतकैरिति मदनैः कफस्यामाशयस्य च शोधनार्थं यद्यपि गोधूमयोर्मधुरत्वयोगात् कफकरौ तथापि पुराणतया न कफकरौ इति कृत्वा कफच्छर्द्यां विहितौ । उक्तं हि—"श्लेष्मलं मधुरं प्रायो जीर्णाच्छालियवादृते" इति । रागाः कपित्थादिद्रव्यकृताः ॥ २८—३६ ॥

मनःशिलायाः फलपूरकस्य
रसैः कपित्थस्य च पिप्पलीनाम् ।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं
लिहञ्जयेच्छर्दिमुदीर्णवेगाम् ॥ ३७ ॥
"येषा पृथक्त्वेन मया क्रियोक्ता
तां सन्निपातेऽपि समीक्ष्य बुद्ध्या ।
दोषर्तुरोगाग्निबलान्यवेक्ष्य
प्रयोजयेच्छास्त्रविदप्रमत्तः ॥ ३८ ॥

मनःशिलायाश्चूर्णं क्षौद्रेण युतं फलपूरकरसैर्लिहन् तथा कपित्थस्य रसैः पिप्पलीनां चूर्णं मरिचैश्च युक्तं क्षौद्रेण युतं लिहन्निति योजयेत् । दोषेत्यादिना सान्निपातिका चिकित्सोच्यते । समीक्ष्येति प्रत्यक्षीकृतम् । दोषर्तुरोगाग्निबलानिरीक्ष्येति दोषादीनां बलं वीक्ष्य यद्बलवत् तत्प्रधानचिकित्सा कर्तव्या । रोगश्छर्दिरेव ॥ ३७ ॥ ३८ ॥

मनोभिघाते तु मनोऽनुकूला
वाचः समाश्वासनहर्षणानि ।
लोकप्रसिद्धाः श्रुतयो वयस्याः
शृङ्गारिकाश्चैव हिता विहाराः ॥ ३९ ॥
गन्धा विचित्रा मनसोऽनुकूला
मृत्पुष्पशुक्ताम्लफलादिकानाम् ।
शाकानि भोज्यानथ पानकानि
सुसंस्कृताः षाडवरागलेहाः ॥ ४० ॥
यूषा रसाः काम्बलिका खडाश्च
मांसानि धाना विविधाश्च भक्ष्याः ।
फलानि मूलानि च गन्धवर्णै
रसैरुपेतानि वमिं जयन्ति ॥ ४१ ॥
गन्धं रसं स्पर्शमथापि शब्दं
रूपं च यद्यत्प्रियमप्यसात्म्यम् ।
तदेव कुर्यात्प्रशमाय तस्या-
स्तज्जो हि रोगः सुखमेव जेतुम् ॥ ४२ ॥
छर्द्युत्थितानां च चिकित्सितात्स्वा-
च्चिकित्सितं कार्यमुपद्रवाणाम् ।
अतिप्रवृत्तासु विरेचनस्य
कर्मातियोगैर्विहितं विधेयम् ॥ ४३ ॥

मनोऽभिघातेति लोकप्रसिद्धा श्रुतय इति लौकिकार्थानुगता । आख्यायिकेति । विहाराः क्रीडाः । लेहा व्यञ्जन-

रूपा लेहाः । गन्धवर्णरसैः उपेतानि प्रशस्तगन्धादियुतानि । गन्धसित्यादिना गन्धादीनां प्रियाणामुपयोगेन छर्द्याः प्रशमे सति तज्जो हि रोग इति गन्धादीनां सात्म्यजनितरोगो जेतुं सुख एव भवति । मूलव्याधेः महात्ययस्य जितत्वादित्यभिप्रायः । सुखमेव चेतुमिति पाठे सुखं यथा भवति तथा चेतुंपर्यन्तमिति चैपः । अतिप्रवृत्तास्वित्यादि । अतिप्रवृत्तासु छर्दिषु विरेचनस्यातियोगे यत्कर्म विहितं संशोधनव्यापत्तिसिद्धौ तदिह विधेयमित्यर्थः ॥ ३९—४३ ॥

वमिप्रसङ्गात्पवनोऽप्यवश्यं
धातुक्षयाद्वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्तास्वनिलापहानि
कार्याण्युपस्तम्भनबृंहणानि ॥ ४४ ॥
सर्पिर्गुडाः क्षीरविधिर्घृतानि
कल्याणकत्र्यूषणजीवनानि ।
वृष्यास्तथा मांसरसाः सलेहा-
श्चिरप्रसक्तां च वमिं जयन्ति ॥ इति ॥ ४५ ॥

वमिप्रसंगात् छर्द्यनुबंधात् पवनस्य वृद्धिर्भवति । तत्रोपस्तम्भनं छर्दीनां पवनस्य वा बृंहणं च्यवनप्राशादयो लेहाः ॥ ४४ ॥ ४५ ॥

तत्र श्लोकः ।

संख्यां हेतुं लक्षणमुपद्रवान्साध्यतां च योगांश्च ।
छर्दीनां प्रशमार्थं प्राह चिकित्सितं मुनिवर्यः ॥४६॥

इति चरकसंहितायां छर्दिचिकित्सितं नाम
विंशोऽध्यायः ॥ २० ॥

हेतुमित्यादिना संग्रहः । उपद्रवानिति विद्खेदेत्यादिनोक्तानुपद्रवान् मुनिवर्य इति मुनिश्रेष्ठः ॥ ४६ ॥

इति छर्दिचिकित्सितं समाप्तम् ॥

---

## एकविंशोऽध्यायः ।

### अथ विसर्पचिकित्सिताख्यमध्यायं व्याख्यास्यामः ।

कैलासे किन्नराकीर्णे बहुप्रस्रवणौषधे ।
पादपैर्विविधैः स्निग्धैर्नित्यं कुसुमसंपदैः ॥ १ ॥
वहद्भिर्मधुरान्गन्धान्सर्वतः स्वभ्यलङ्कृते ।
विहरन्तं जितात्मानमात्रेयमृषिवन्दितम् ॥ २ ॥
महर्षिभिः परिवृतं विभुं भूतहिते रतम् ।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥ ३ ॥

पूर्वाध्याये छर्दिवेगेन विघातादष्टौ विसर्पाणामुत्पत्तेः छर्द्यनन्तरं विसर्पस्य चिकित्सितमुच्यते । छर्देश्च रक्तदूषकत्वं विधिशोणितीये 'छर्दिवेगप्रतीघाता'दित्यादीनां 'शरत्कालस्वभावाच्च शोणितं संप्रदूष्यती'त्यनेनोक्तम् । कैलासेत्यादि । प्रश्नोऽत्र गुणदोषोपदर्शनपरः । शोभने हि देशे सुमनसो गुरवः शिष्यैः प्रष्टव्याः कुसुमसंपदा पुष्पफलसंपत्त्या । मधुरान् गन्धान् इष्टान् गन्धान् । विहरन्तं वर्तमानम् । जितात्मानं जितेन्द्रियम् ॥ १—३ ॥

भगवन् दारुणं रोगमाशीविषविषोपमम् ।
विसर्पन्तं शरीरेषु देहिनामुपलक्षये ॥ ४ ॥
सहसैव नरास्तेन परीताः शीघ्रकारिणा ।
विनश्यन्त्यनुपक्रान्तास्तत्र नः संशयो महान् ॥ ५ ॥

आशीविषाः सर्पाः । उपलक्षये पश्यामि । अनुपक्रान्ता गदाः केचिद्विनश्यंति यथा व्यंगतिलकादयः । केचित्तु उपक्रान्ता अपि चिरेण घ्नन्ति यथा मेहगुल्मादयः । अनेन तु गृहीताः शीघ्रमेव विनश्यन्तीति त्वराविशेषं चिकित्से दर्शयंति ॥ ४ ॥ ५ ॥

स नाम्ना केन विज्ञेयः संज्ञितः केन हेतुना ।
कतिभेदः कियद्धातुः किंनिदानः किमाश्रयः ॥६॥
सुखसाध्यः कृच्छ्रसाध्यो ज्ञेयो यश्चानुपक्रमः ।
कथं कैर्लक्षणैः किं च भगवन् तस्य भेषजम् ॥७॥
तदग्निवेशस्य वचः श्रुत्वात्रेयः पुनर्वसुः ।
यथावदखिलं सर्वं प्रोवाच मुनिसत्तमः ॥ ८ ॥

संज्ञितः केन हेतुनेति कस्माद्धेतोः वक्ष्यमाणविसर्पाः विसर्पसंज्ञया आख्याता इत्यर्थः । कियद्धातुरिति कतिधातुकारणकः कथं कैर्लक्षणैरिति कथंभूतः कैर्लक्षणैर्ज्ञेय इत्यर्थः ॥ ६—८ ॥

विविधं सर्पति यतो विसर्पस्तेन स स्मृतः ।
परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात् ॥ ९ ॥

विविधमित्यादिना यथाक्रमं प्रश्नानामुत्तरमाह । विविधं सर्पतीति अध ऊर्ध्वं तिर्यक् तथा स्फोटशोफादिभिः प्रसरति विसर्पः । परिसर्पशब्दार्थं व्याकरोति । परितः सर्वतः । परिशब्दः सर्वतोऽर्थे इत्यर्थः । किंवा परिसर्पणादिशब्देन सर्पणमात्रमुच्यते । सर्वतः शब्देन परिशब्दार्थो व्याक्रियते । तेनोक्तं सर्वतः परिसर्पणमिति ॥ ९ ॥

स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः ।
पृथक्त्रयस्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः ॥ १० ॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः ।
चत्वार एते विसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ॥ ११ ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः ।
यस्तु कर्दमको घोरः स पित्तकफसंभवः ॥ १२ ॥

सप्तविधो दोषैरिति दोषभेदात्सप्तविधो भवति । एतेन साध्यासाध्यभेदोऽप्यस्य संभवतीति दर्शयति ॥ १०—१२ ॥

रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः ।

विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥१३॥

पृथगित्यादिना निर्दिष्टं सप्तविधत्वं दर्शयति—रक्तमित्यादिना सप्तधातुत्वं स्फुटयति । रक्तादिदोषत्वं कुष्ठे यद्यप्यस्ति तथापि विसर्पणशीलदोषैर्विसर्पाः । कुष्ठानि तु चिरक्रियैर्दोषैर्जायन्त इत्यादि कुष्ठचिकित्सिते एव प्रपंचितमनुसरणीयम् । दोषास्त्रयो मला इत्यत्र दोपशब्देनैव वातादिप्राप्तौ मला इति अत्यर्थदुष्ट्या शरीरमलिनीकरणत्वं प्रतिपादयितुमुक्तम् । उक्तं चान्यत्र 'शरीरदूषणाद्दोषा मलिनीकरणान्मलाः । धारणाद्धातवश्च स्युर्वातपित्तकफास्त्रयः' इति ॥ १३ ॥

लवणाम्लकटूष्णानां रसानामतिसेवनात् ।
दध्यम्लवस्तुशुक्तानां सुरासौवीरकस्य च ॥ १४ ॥
व्यापन्नबहुमद्योष्णरागषाडवसेवनात् ।
शाकानां हरितानां च सेवनाच्च विदाहिनाम् ॥१५॥
कूर्चिकानां किलाटानां सेवनान्मन्दकस्य च ।
दध्नः शाण्डाकिपूर्वाणामास्रुतानां च सेवनात् १६
तिलमाषकुलत्थानां तलानां पैष्टिकस्य च ।
ग्राम्यानूपौदकानां च मांसानां लशुनस्य च ॥१७॥
प्रक्लिन्नानामसात्म्यानां विरुद्धानां च सेवनात् ।
अत्यादानाद्दिवास्वप्नादजीर्णाध्यशनात्क्षतात् ॥१८॥
वधबन्धप्रपतनाद्धर्मकर्मातिसेवनात् ।
विषवाताग्निदोषाच्च विसर्पाणां समुद्भवः ॥ १९ ॥
एतैर्निदानैर्व्यामिश्रैः कुपिता मारुतादयः ।
दूष्यं संदूष्य रक्तादि विसर्पन्त्यहिताशिनाम् ॥२०॥

जायते कैश्च हेतुभिरित्यस्योत्तरं लवणाम्लेत्यादि । उष्णानामिति उष्णवीर्याणां सैन्धवामलकादीनां हरितानामिति हरितशाकवर्गपठितानामार्द्रकादीनां कूर्चिका दधिकूर्चिका । तक्रकूर्चिका च किलाटा नष्टक्षीरपिण्डा । मन्दकस्येति मन्दक्षीरजातस्य । शाण्डाकी पूर्वाणामिति शाण्डाकीसंधानं शेषः । अजीर्णेऽशनमजीर्णाशनं, किंवा अजीर्णस्यापरिणतस्यापचनम् । अविदग्धे पूर्वदिनान्नेऽशनमध्यशनं व्यामिश्रैः संमिश्रैः ॥ १४—२० ॥

बहिःश्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः ।
विसर्पो बलमेतेषां ज्ञेयं गुरु यथोत्तरम् ॥ २१ ॥
बहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम् ।
विसर्पं दारुणं विद्यात्सुकृच्छ्रं त्वन्तराश्रयम् ॥२२॥
अन्तःप्रकुपिता दोषा विसर्पन्त्यन्तराश्रये ।
बहिर्बहिः प्रकुपिताः सर्वत्रोभयसंश्रिताः ॥ २३ ॥

साध्यासाध्यविभागज्ञानार्थं शाखाश्रितत्वादीन्याह—बहिरित्यादि । यथोत्तरमिति बहिःश्रितात् अन्तःश्रितादुभयाश्रितश्च गुरुरित्यर्थः । अन्तराश्रित इति अन्तःशरीरे । बहिरिति शाखायां सर्पति ॥ २१—२३ ॥

मर्मोपघातात्संमोहादयनानां विघट्टनात् ।
तृष्णातियोगाद्वेगानां विषमाणां प्रवर्तनात् ॥ २४ ॥
विद्याद्विसर्पमन्तर्यदाशु चाग्निबलक्षयात् ।
अतो विपर्ययाद्बाह्यमन्यैर्विद्यात्स्वलक्षणैः ॥ २५ ॥
यस्य लिङ्गानि सर्वाणि बलवद्यस्य कारणम् ।
यस्य चोपद्रवाः कष्टा मर्मगो यश्च हन्ति सः ॥२६॥

अन्तराश्रयादिविसर्पणमाह—मर्मोपघातादित्यादि । मर्मेति हृदयम् । विद्यात्स्वलक्षणैरिति वक्ष्यमाणविसर्पलक्षणैः यस्य यस्य सर्वाणीति अन्तराश्रयबहिराश्रयविसर्पलक्षणानि ॥ २४—२६ ॥

रूक्षोष्णैः केवलो वायुः पूरणैर्वा समाचितः ।
प्रदुष्टो दूषयन्दूष्यं विसर्पति यथाबलम् ॥ २७ ॥

तस्य स्वरूपाणि ।

भ्रमदवथुपिपासानिस्तोदशूलाङ्गमर्दोद्वेष्टनकम्पज्वरतमककासास्थिसंधिभेदविश्लेषणवेपनारोचकाविपाकाश्चक्षुषोराकुलत्वमस्रागमनं पिपीलिकासंचार इव चाङ्गेषु यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशः श्यावारुणाभासः श्वयथुमान् निस्तोदभेदशूलायाससंकोचहर्षस्फुरणैरतिमात्रं प्रपीड्यते । अनुपक्रान्तश्चोपचीयते शीघ्रं भेदैः स्फोटकैस्तनुभिररुणाभैः श्यावैर्वा तनुविषमदारुणाल्पास्रावैर्विबद्धवातमूत्रवर्चस्तानि निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति वातविसर्पः ॥ २८ ॥

रूक्षोष्णेत्यादिना पृथक् हेतुलक्षणमाह । पूर्णैः रूक्षादिभिः पूर्णेन मार्गावरोधात् कुपितः परतन्त्रो वायुर्ज्ञेयः । उष्णं यद्यपि न साक्षाद्वातकरं तथापि रूक्षसंचयात् उष्णं वातं करोति । उष्णसंबद्धात्तु सामान्यसंप्राप्तिसंप्राप्तं इह यत्कुपितं तज्जन्यमिति ज्ञेयम् । दवथुश्च पैत्तिकोऽप्यत्र उत्सर्गसिद्धविसर्पार्थकानि पित्तरक्तसंभवाद्भवति ॥ २७ ॥ २८ ॥

पित्तमुष्णोपचारादि विदाह्यम्लाशनैश्चितम् ।
दूष्यं संदूष्य मार्गांश्च पूरयन्वै विसर्पति ॥ २९ ॥

तस्य रूपाणि ज्वरस्तृष्णा मूर्च्छामोहश्छर्दिररोचकोऽङ्गभेदः स्वेदोऽतिमात्रमन्तर्दाहः प्रलापः शिरोरुक् चक्षुषोराकुलत्वमस्वप्नमरतिर्भ्रमः शीतवातवारितर्षोऽतिमात्रं हरितनेत्रमूत्रवर्चस्त्वक्तेषां हरितहारिद्ररूपदर्शनं यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशस्ताम्रहरिद्रनीलकृष्णरक्तानां वर्णानामन्यतमं पश्यति । सोत्सेधैश्चातिमात्रं दाहसंभेदनपरीतैः स्फोटकैरुपचीयते तुल्यवर्णास्रावैरचिरपाकैर्निदानोक्तानि नोपशेरते विपरीतानि चोपशेरत इति पित्तविसर्पः ॥ ३० ॥

पित्तमित्यादिना पैत्तिकमाह । पूरयेदिति पदं यद्यपि पैत्तिके एवोक्तं तथापि समाने स्वार्थे सर्वस्यापि अभिहितो विधिरन्यत्राप्यनुसंजनीय इति न्यायात् अन्यविषयेऽपि ज्ञेयम् । अयंच समानो विधिः पित्तप्रधानत्वाद्विसर्पाणां पित्तप्रकारे एवोक्तः । शीतवातशीतपयसोः तृष्णा शीतवातवारितदेशे । अवकाशे दोषः ॥ २९ ॥ ३० ॥

**स्वाद्वम्ललवणस्निग्धगुर्वन्नस्वप्नसंचितः ।**
**कफः संदूषयन्दूष्यं कृच्छ्रमङ्गे विसर्पति ॥ ३१ ॥**

तस्य रूपाणि शीतकः शीतकज्वरो गौरवं निद्रा तन्द्राऽरोचको मधुरास्यत्वमास्योपलेपो निष्ठीविका छर्दिरालस्यं स्तैमित्यमग्निनाशो दौर्बल्यं यस्मिंश्चावकाशे विसर्पति सोऽवकाशः श्वयथुमान्पाण्डुमान्नातिरक्तस्नेहः सुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्रपाकैश्चिरकारिभिः बहुलत्वगुपलेपैः स्फोटैः श्वेतपाण्डुभिरनुबध्यते प्रभिन्नस्तु श्वेतं पिच्छिलं तन्तुमद्धनमनुबद्धं स्निग्धमास्रावं स्रवत्यूर्ध्वं च गुरुभिः स्निग्धैर्जालावततैः स्निग्धैर्बहुलत्वगुपलेपैर्व्रणैरनुबध्यतेऽनुषङ्गी श्वेतनखनयनवदनत्वङ्मूत्रवर्चस्त्वानि निदानोक्तानि नोपशेरते विपरीतानि चोपशेरत इति श्लेष्मविसर्पः ॥ ३२ ॥

स्वाद्वम्लेत्यादिना कफजमाह । हेत्वन्तरेष्वपि श्लेष्मणो विद्यमानेषु स्वाद्वादीनामभिधानं एषामेव प्रायो विसर्पजनकत्वात् । एवं वातपित्तजहेत्वभिधानेऽपि वर्णनीयं । कृच्छ्रमङ्गे विसर्पति कृच्छ्रमिति ऊर्ध्वं श्लेष्मणोर्ध्वकाये एवावस्थानात् । अनुषङ्गी चिरकालस्थायी ॥ ३१ ॥ ३२ ॥

**वातपित्तं प्रकुपितमतिमात्रं स्वहेतुभिः ।**
**परस्परं लब्धबलं दहद्गात्रं विसर्पति ॥ ३३ ॥**

तदुपतापादातुरः सर्वशरीरमङ्गारैरिवाकीर्यमाणं मन्यते । छर्द्यतीसार-मूर्च्छा-दाहमोह-ज्वर-तमकारोचकास्थिसंधिभेदतृष्णाविपाकाङ्गभेदादिभिश्चाभिभूयते । यं यं चावकाशं विसर्पोऽनुसर्पति सोऽवकाशः शान्ताङ्गारप्रकाशोऽतिरिक्तो वा भवत्यग्निदग्धप्रकारैश्च स्फोटैरुपचीयते स शीघ्रगत्वादाशु एव मर्मानुसारी भवति मर्मणि चोपतप्ते पवनोऽतिबलो भिनत्ति अङ्गानि अतिमात्रं प्रमोहयति संज्ञां हिक्काश्वासौ जनयति नाशयति निद्रां स नष्टनिद्रः प्रमूढसंज्ञो व्यथितचेता न क्वचन सुखमुपलभते अरतिपरीतः स्थानादासनात् शय्यां क्रान्तुमिच्छति क्लिष्टभूयिष्ठश्चाशु निद्रां भजति अबलो दुःखप्रबोधश्च तमेवंविधमग्निविसर्पपरीतमचिकित्स्यं विद्यात् ॥ ३४ ॥

वातपित्तमित्यादिना अग्निविसर्पलक्षणमाह । परस्परं लब्धबलमिति अन्योन्यवृद्धं वातपित्तं । शान्ताङ्गारप्रकाशमिति निर्वाणाङ्गारसदृशः कृष्ण इत्यर्थः । स्थानात् अवस्थानात् । क्रान्तुं गन्तुम् । एवंविधमित्यनेन अग्निविसर्पस्य अनुपहते मर्मणि साध्यत्वं वक्ष्यमाणावस्था उक्ता ॥ ३३ ॥ ३४ ॥

**कफपित्तं प्रकुपितं बलवत्स्वेन हेतुना ।**
**विसर्पत्येकदेशे तु प्रक्लेदयति देहिनः ॥ ३५ ॥**

तद्विकाराः—शीतज्वरः शिरोगुरुत्वं दाहः स्तैमित्यमङ्गावसादनं निद्रा तन्द्रा मोहोऽन्नद्वेषः प्रलापोऽग्निनाशो दौर्बल्यमस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो जाड्यमिन्द्रियाणां प्रायोपवेशनम् अङ्गविक्षेपोऽङ्गमर्दोऽरतिरौत्सुक्यं च उपजायते प्रायश्चामाशये विसर्पत्येकदेशग्राही यस्मिंश्चावकाशे विसर्पति सोऽवकाशो रक्तपीतपाण्डुपिडकावकीर्ण इव मेचकाभः कालो मलिनः स्निग्धो बहूष्मा गुरुः स्तिमितवेदनः श्वयथुमान् गम्भीरपाकः निरास्रावः शीघ्रक्लेदः स्विन्नक्लिन्नपूतिमांसत्वक् क्रमेणाल्परुक् परामृष्टोऽवदीर्यते कर्दम इवावपीडितोऽनन्तरं प्रयच्छत्युपक्लिन्नपूतमांसत्यागी शिरास्नायुसंदर्शी कुणपगन्धी च भवति संज्ञास्मृतिहर्ता तं कर्दमविसर्पपरीतमचिकित्स्यं विद्यात् ३६

कफपित्तमित्यादिना कर्दमविसर्पमाह । प्रायश्चामाशये विसर्पतीति कर्दमस्य कफजन्यत्वात् कफपित्तयोश्च आमाशयस्थितत्वादिति भावः । एकदेशग्राही न सर्वशरीरव्यापकः । मलिनो मलिनांगवदनकः । गम्भीरपाकः अन्तःपाकः । अंतरं प्रयच्छति अवकाशं ददाति । कर्दमसारूप्याच्चास्य कर्दमसंज्ञा देया । कर्दमविसर्पपरीतं अचिकित्स्यं विद्यात् यथोक्तसर्वलक्षणं कर्दममसाध्यं विद्यात् । असंपूर्णलक्षणं प्रति तु चिकित्सां वक्ष्यति ॥ ३५—३६ ॥

स्थिरगुरुकठिन-मधुरशीत-स्निग्धान्नपानाभिष्यन्दिसेविनामव्यायामादिसेविनामप्रतिकर्मशालिनां श्लेष्मा वायुश्च प्रकोपमापद्यते तावुभौ दुष्टप्रवृद्धौ अतिबलौ प्रदूष्य दूष्यं विसर्पाय कल्पेते । तत्र वायुः श्लेष्मणा विबद्धमार्गस्तमेव श्लेष्माणमनेकधा भिन्दन् क्रमेण ग्रन्थिमालां कृच्छ्रपाकसाध्यां कफाशये संजनयति उत्सन्नरक्तस्य वा प्रदूष्य रक्तं शिरास्नायुमांसत्वगाश्रितं ग्रन्थिविसर्पं कुरुते तीव्ररुजा ग्रन्थीनां स्थूलानामणूनां दीर्घवृत्तरक्तानां तदुपतापाज्ज्वरातीसारकासहिक्काश्वासशोषप्रमेहवैवर्ण्यारोचकाविपाकच्छर्दिमूर्च्छाङ्गभङ्गनिद्रारतिसंसदनाद्याः प्रादुर्भवन्ति उपद्रवास्तैरुपद्रुतः सर्वकर्मणां विषयमतिपतितो विवर्जनीयो भवतीति ग्रन्थिविसर्पः ॥ ३७ ॥

स्थिरेत्यादिना ग्रन्थिविसर्पमाह—दुष्टप्रवृद्धाविति । परस्परदूषकत्वेन प्रवृद्धौ कृच्छ्रपाकसाध्यां कृच्छ्रपाका च कृच्छ्रसाध्या । कृच्छ्रपाकता च चिरेण पाको ज्ञेयः । उत्सन्नरक्तस्येति वृद्धरक्तस्य । शिरास्नायुमित्यादौ ग्रंथिविसर्पं कुरुत इति योज्यम् । तेन तीव्ररुजादियुक्तानां ग्रन्थीनां आश्रयं ग्रन्थिविसर्पं कुरुत इत्यर्थः । तदुपतापात् तेन ग्रंथिविसर्पेण पीडनात् । सर्वकर्मणां विषयमेति पतितो भवतीति सर्वचिकित्सा विषमतामतिक्रान्तो भवतीत्यर्थः । सच शब्देन यथोक्तोपद्रवयुक्त एव ग्रन्थिविसर्पः प्रत्यवमृश्यते । अयंच ग्रन्थिविसर्पस्तन्त्रान्तरे अपचीसंज्ञया कथ्यत इत्याहुः ॥ ३७ ॥

**उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा रोगात्पश्चाज्जायत इति उपद्रवसंज्ञः । तत्र प्रधानो व्याधिर्व्याधेर्गुणीभूत उपद्रवस्तस्य प्रायः प्रधानप्रशमे प्रशमो भवति । स तु पीडाकरतरो भवति इति पश्चादुत्पद्यमानो व्याधिः परिक्लिष्टशरीरत्वात्तस्मादुपद्रवं त्वरमाणोऽभिवाधेत् ॥ ३८ ॥**

विसर्पाणां रक्तोपद्रवतया उक्तज्वराद्युपद्रवा ज्ञेयाः । उपद्रवस्वरूपं व्याकरोति—उपद्रवस्त्वित्यादि । रोगोत्तरकालजेऽपि रोगमध्यकालजः । एतेन रोगसहोत्थस्य लिङ्गस्य व्यवच्छेदः । यानि च लिङ्गान्यपि कदाचित् रोगोत्तरकालजानि भवंति तानि रोगेण सह प्रायः उत्पद्यमानानि न रोगोत्तरकालजानीत्युच्यन्ते न तेषामुपद्रवत्वम् । रोगाश्रय इति रोगोत्पादकदोषप्रकोपजन्यतया रोगेण समतुल्यकारणः । एतेन गलगण्डोत्पन्नानां ज्वरादीनां रोगोत्तरकालजानामपि उपद्रवत्वं निषेधयति । रोग एवेत्यनेन मूलव्याधेः पृथक् रोगशब्देन व्यवह्रियमाणमुपद्रवं ग्राहयंति । तेन व्याध्यावस्थायाः रोगोत्तरकालजरोगाश्रयस्य च व्यवच्छेदं करोति । व्याधेरवश्यंभावितया मूलव्याधेः स्वरूपत एव उपद्रवोऽवश्यं भवति । यद्यपि केचित् सहवलदोषाः व्याधेरुपद्रवा युक्ताः सहोत्पन्नेन च उपद्रवार्थो नास्ति तथापि ये गदा उपद्रवरूपा जायन्ते ते सहोत्पन्नव्याधियोगतया उपद्रवा भण्यन्ते । परमार्थतस्तु सहभाविन उपद्रवा युक्ताः । किंतु रोगसंकरत्वेन तत्र जायन्त इति । एतदुपद्रवलक्षणार्थं सुश्रुतः—'तत्रोपसर्गो नाम यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातमुपसर्पति स न्यून एव तेनोपद्रवसंज्ञ' इति । उपद्रवप्रकारमाह—स्थूलेति । उपद्रवसंज्ञानिरुक्तिः पश्चाज्जायत इति व्याध्युत्पादसमीपे उपद्रवतीति उपद्रव इति निरुक्तेः । व्याधेर्गुणीभूत इति मूलव्याध्यपेक्षया अप्रधानमित्यर्थः । गुणीभूतत्वे हेतुमाह—तस्य प्रायः प्रधानप्रशमे शम इति । मूलव्याधिप्रशमाधीनशमत्वात् उपद्रवस्याप्राधान्यमित्यर्थः । प्रायःशब्देन च व्यभिचारवाचिना क्वचिदुपद्रवस्य स्वतन्त्रा चिकित्साप्युक्ता । उपद्रवस्य तु आशुचिकित्स्यत्वं दर्शयति । उपद्रवे नितरां क्लेशो भवति । तस्मादित्यादि त्वरया चिकित्सेत् । सा चिकित्सा च मूलव्याधिप्रशमनेन तथा स्वतन्त्रापि भवतीति उक्तमेव ॥ ३८ ॥

**सर्वायतनसमुत्थं सर्वलिङ्गव्यापिनं सर्वधात्वनुसारिणमाशुकारिणं महात्ययिकमिति सन्निपातविसर्पमचिकित्स्यं विद्यात् ॥ ३९ ॥**

संप्रति प्रकान्तं सन्निपातविसर्पमाह—सर्वेत्यादि । सर्वायतनसमुत्थमिति सर्वहेतुभवम् । सर्वलिङ्गव्यापिनमिति वातादिजोक्तसर्वलक्षणयुक्तम् । सर्वधात्वनुसारिणमिति विसर्पाश्रयत्वेन । अयुक्तानामपि धातूनां आश्रयित्वं दर्शयति । तथाहि मसूरिकायाः एवं तन्त्रान्तरे सकलधात्वाशयत्वमुक्तं तदुत्सर्गतः विसर्पाणां दोषातिमात्रदुष्ट्या सप्तधातुकेतरधातुदुष्टिर्भवतीति ॥ ३९ ॥

**तत्र वातपित्तश्लेष्मनिमित्ता विसर्पास्त्रयः साध्याः भवन्त्यग्निकर्दमाख्यौ पुनरनुपसृष्टे मर्मणि अनुपहते वा शिरास्नायुमांसक्लेदे साधारणक्रियाभिरुपायैः तावेवाभ्यस्यमानौ प्रशान्तिमापद्येयातामनादरोपक्रान्तं पुनस्तयोरन्यतरो हन्यात् देहमाश्वेवाशीविषवत् ॥ ४० ॥**

**तथा ग्रन्थिविसर्पमजातोपद्रवमारभेत चिकित्सितुमुपद्रवोपद्रुतं त्वेनं परिहरेत् । सन्निपातजं सर्वधात्वनुसारित्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्च असाध्यं विद्यात् ॥ ४१ ॥**

मर्मणीति हृदयादिमर्मणि । साधारणक्रियादिभिरिति आरम्भकदोषयोः क्रियाभिः । अभ्यस्यमानाविति सततमुपचर्यमाणौ अनादरोपक्रान्तमिति तेन पूर्वं सर्वथानुपक्रमे अनुपक्रान्ता इत्यनेन मारकत्वमुक्तम् । इह तु असम्यगुपक्रम इति विशेषः ॥ ४० ॥ ४१ ॥

**तत्र साध्यानां साधनमनुव्याख्यास्यामः ॥ ४२ ॥**

**लङ्घनोल्लेखने शस्ते तिक्तकानां च सेवनम् ।**
**कफस्थानगते सामे रूक्षशीतैः प्रलेपयेत् ॥ ४३ ॥**
**पित्तस्थानगतेऽप्येतत्सामे कुर्याच्चिकित्सितम् ।**
**शोणितस्यावसेकं च विरेकं च विशेषतः ॥ ४४ ॥**
**मारुताशयसम्भूतेऽप्यादितः स्याद्विरूक्षणम् ।**
**रक्तपित्तान्वयेऽप्यादौ स्नेहनं न हितं मतम् ॥ ४५ ॥**

तत्र साध्यानामित्यादिना चिकित्सामाह । उल्लेखनं वमनं । कफस्थानगत इति ऊर्ध्वकायगते । मारुताशयशब्देन च पक्वाशयादधःशरीरं गृह्यते ॥ ४२—४५ ॥

**वातोल्वणे तिक्तघृतं पैत्तिके च प्रशस्यते ।**
**लघुदोषे महादोषे पैत्तिके स्याद्विरेचनम् ॥ ४६ ॥**
**न घृतं बहुदोषाय देयं यन्न विरेचयेत् ।**
**तेन दोषो ह्युपस्तब्धस्त्वङ्मांसरुधिरं पचेत् ॥ ४७ ॥**

तस्माद्विरेकमेवादौ शस्तं विद्याद्विसर्पिणः।
रुधिरस्यावसेकं च तद्ध्यस्याश्रयसंज्ञितम् ॥ ४८ ॥

वातोल्बणे पैत्तिके च तिक्तघृतं प्रशस्यते। लघुदोषे इति च्छेदः। तेन लघुदोषे पैत्तिके इति योज्यम्। बहुदोषायेति पित्तस्य प्रकृतत्वात् बहुपित्तायेत्यर्थः। तेनेति विरेचनघृतेन। तद्ध्यस्याश्रितसंज्ञितमिति तत् शोणितमस्य विसर्पस्य आश्रयत्वेन कथितं तेन शोणितावसेकात् आश्रयोच्छेदेन विसर्पोच्छेदो भवतीत्यर्थः ॥ ४६—४८ ॥

इति वीसर्पनुत्प्रोक्तं समासेन चिकित्सितम्।"
एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते ॥ ४९ ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च।
वमनं संप्रदातव्यं विसर्पे कफपित्तजे ॥ ५० ॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च।
विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ॥ ५१ ॥
यांश्च योगान् प्रवक्ष्यामि कल्पेषु कफपित्तिनाम्।
विसर्पिणां प्रयोज्यास्ते दोषनिर्हरणाः परम् ॥ ५२ ॥
मुस्तनिम्बपटोलानां चन्दनोत्पलयोरपि।
शारिवामलकोशीरमुस्तानां वा विचक्षणः ॥ ५३ ॥

व्यासत इति विस्तरेण। कफपित्तिनामिति व्यस्तसमस्तकफपित्तजानाम् ॥ ४९—५३ ॥

पाययेत कषायान्हि सिद्धान्वीसर्पनाशनान्।
किराततिक्तकं लोध्रं दुरालभां सचन्दनाम् ॥ ५४ ॥
नागरं पद्मकिञ्जल्कमुत्पलं सविभीतकम्।
मधुकं नागपुष्पं च दद्याद्वीसर्पशान्तये ॥ ५५ ॥
प्रपौण्डरीकं मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पं च लोध्रं च तेनैव विधिना पिबेत् ॥ ५६ ॥

किराततिक्तादिरपि कषायः। तेनैव विधिनेति मुस्तयोगोक्तकषायविधिना ॥ ५४—५६ ॥

द्राक्षां पर्पटकं शुण्ठीं गुडूचीं धन्वयासकम्।
निशापर्युषितं दद्यात्तृष्णाविसर्पशान्तये ॥ ५७ ॥
पटोलं पिचुमर्दं च दार्वीं कटुकरोहिणीम्।
यष्ट्याह्वां त्रायमाणां च दद्याद्विसर्पशान्तये ॥ ५८ ॥
पटोलादिकषायं वा पिबेत्रिफलया सह।
मसूरविदलैर्युक्तं घृतमिश्रं प्रदापयेत् ॥ ५९ ॥
पटोलपत्रमुद्गानां रसमामलकस्य च।
पाययेत घृतोन्मिश्रं नरं विसर्पपीडितम् ॥ ६० ॥
यच्च सर्पिर्महातिक्तं पित्तकुष्ठनिबर्हणम्।
निर्दिष्टं तदपि प्राज्ञो दद्याद्विसर्पशान्तये ॥ ६१ ॥
त्रायमाणाघृतं सिद्धं गौल्मिके यदुदाहृतम्।
विसर्पाणां प्रशान्त्यर्थं दद्यात्तदपि बुद्धिमान् ॥ ६२ ॥
त्रिवृच्चूर्णं समालोड्य सर्पिषा पयसापि वा।
घर्माम्बुना वा संयोज्य मृद्वीकानां रसेन वा ॥ ६३ ॥
विरेकार्थं प्रयोक्तव्यं सिद्धं विसर्पनाशनम्।
त्रायमाणाशृतं वापि पयो दद्याद्विरेचनम् ॥ ६४ ॥

निशापर्युषितमिति शीतकषायं। अयंच शीतकषायविधिः पटोलेत्यादावपि ग्राह्यः। मसूरविदलैरिति मसूराणां विदलैः। नचात्र विदला श्यामा तस्याः स्त्रीलिङ्गत्वात् ॥ ५७—६४ ॥

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह।
प्रयोक्तव्यं विरेकार्थं विसर्पज्वरनाशनम् ॥ ६५ ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत्।
स एव गुरुकोष्ठाय त्रिवृच्चूर्णयुतो हितः ॥ ६६ ॥

त्रिफलारसादिभिः समं घृतं देयम्। गुरुकोष्ठाय इति क्रूरकोष्ठाय। दोषपूर्णकोष्ठं गुरुकोष्ठमाहुः ॥ ६५ ॥ ६६ ॥

दोषे कोष्ठगते भूय एतत्कुर्याच्चिकित्सितम्।
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ॥ ६७ ॥
भिषग्वातान्वितं रक्तं विषाणेनाभिनिर्हरेत्।
पित्तान्वितं जलौकाभिः कफान्वितमलाबुभिः ॥ ६८ ॥
यथासन्नं विकारस्य व्यधयेदाशु वा सिराम्।
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ६९ ॥
अन्तःशरीरे संशुद्धे दोषे त्वङ्मांससंश्रिते।
आदितः स्वल्पदोषाणां क्रिया बाह्या प्रवक्ष्यते ७०
उदुम्बरत्वङ्मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पं प्रियङ्गुश्च प्रदेहः सघृतो हितः ॥ ७१ ॥

दोषे कोष्ठगते भूय इत्यत्र भूयःशब्दः शाखाश्रयदोषे वाच्यः। दुष्टरक्ते चिकित्सामाह—शाखादुष्ट इत्यादि। शाखायां दोषे रक्ते च दुष्टे। दोषविशेषेण रक्तावसेकोपायमाह—वातान्वितमित्यादि। रक्तावसेकविशेषविधानं चेह पराधिकारत्वान्नोक्तम्। तच्च सुश्रुते ज्ञेयम्। यथासन्नमिति या विकारप्रत्यासन्नामिसंव्यधयेत्। सिराव्यधश्च सर्वसाधारणः। रक्तानपहरणे दोषमाह। त्वङ्मांसेत्यादौ त्वङ्मांसेत्यादि आदित इति। विरेचनशोणितमोक्षणाभ्यां क्रिया। बाह्या इति लेपसेकादिका आह ॥ ६७—७१ ॥

न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः।
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥ ७२ ॥
कालीयं मधुकं हेम वल्यं चन्दनपद्मकम्।
एला मृणालं फलिनी प्रलेपः स्याद्घृताप्लुतः ॥ ७३ ॥
शाद्वलं च मृणालं च शङ्खचन्दनमुत्पलम्।
वेतसस्य च मूलानि प्रदेहः स्यात्सतण्डुलः ॥ ७४ ॥
शारिवा पद्मकिञ्जल्कमुशीरं नीलमुत्पलम्।
मञ्जिष्ठा चन्दनं लोध्रमभया च प्रलेपनम् ॥ ७५ ॥
नलदं च हरेणुश्च लोध्रं मधुकपद्मकौ।
दूर्वा सर्जरसश्चैव सघृतं स्यात्प्रलेपनम् ॥ ७६ ॥
यावकाः सक्तवश्चैव सर्पिषा सह योजिताः।
प्रदेहो मधुकं वीरा सघृता यवसक्तवः ॥ ७७ ॥

बलामुत्पलशालूकं वीरामगुरुचन्दनम् ।
कुर्यादालेपनं वैद्यो मृणालं च बिसान्वितम् ॥७८॥
यवचूर्णं समधुकं सघृतं च प्रलेपनम् ।
हरेणवो मसूराश्च समुद्गाः श्वेतशालयः ।
पृथक् पृथक् प्रदेहाः स्युः सर्वे वा सर्पिषा सह७९
पद्मिनी कर्दमः शीतो मौक्तिकं पिष्टमेव वा ।
शङ्खः प्रवालः शुक्तिर्वा गैरिको वा घृताप्लुतः ॥८०॥
प्रपौण्डरीकं मधुकं बला शालूकमुत्पलम् ।
न्यग्रोधपत्रं दुग्धीका सघृतं स्यात्प्रलेपनम् ॥ ८१ ॥
बिसानि च मृणालं च सघृता च कसेरुका ।
शतावर्या विदार्याश्च कन्दौ धौतघृताप्लुतौ ॥ ८२ ॥
शैवालं नलमूलानि गोजिह्वा वृषकर्णिका ।
इन्द्राणिशाकं सघृतं शिरीषत्वग्बलाघृतम् ॥ ८३ ॥

न्यग्रोधपादा इति न्यग्रोधप्ररोहाः । कदलीगर्भो गर्भस्था कदली । कालेयं कालेयकाष्ठमित्यर्थः । हेम इति नागकेशरचूर्णम् । वत्यं कैवर्तमुस्तकम् । शाद्वलं दूर्वा । मृणालमुशीरं । वीरा विदारीकंदः । हरेणवो वर्द्धनकलायः । श्वेतशालय अकुलितशुक्लधान्यानि । दुग्धिका स्वनामख्याता । मृणालं पद्मनालिका । वृषपर्णी मूषिकपर्णिका । काकाह्वा गोष्ठोदुम्बरिका । इन्द्राणिर्निर्गुण्डी । बलाघृतमिति छेदः ॥ ७२—८३ ॥

न्यग्रोधोदुम्बरप्लक्षवेतसाश्वत्थपल्लवैः ।
त्वक् कल्कैर्बहुसर्पिष्कैस्तैरेवालेपनं हितम् ॥ ८४ ॥
प्रदेहाः सर्व एवैते वातपित्तोल्वणे शुभाः ।
सकफे तु प्रवक्ष्यामि प्रलेपानपरान् शुभान् ॥८५॥
त्रिफलां पद्मकोशीरं समङ्गां करवीरकम् ।
नलमूलान्यनन्तं च प्रदेहमुपकल्पयेत् ॥ ८६ ॥
खदिरं सप्तपर्णं च मुस्तमारग्वधं धवम् ।
कुरण्टकं देवदारु दद्यादालेपनं भिषक् ॥ ८७ ॥
आरग्वधस्य पत्राणि त्वचं श्लेष्मान्तकस्य च ।
इन्द्राणीशाकं काकाह्वां शिरीषकुसुमानि च ॥८८॥
शैवालं नलमूलानि वीरा गन्धप्रियङ्गुकौ ।
त्रिफलां मधुकं वीरां शिरीषकुसुमानि च ॥ ८९ ॥
प्रपौण्डरीकं ह्रीवेरं दार्वीं त्वङ्मधुकं बलाम् ।
पृथगालेपनं कुर्याद्द्वन्द्वशः सर्वशोऽपि वा ॥ ९० ॥
प्रदेहाः सर्व एवैते देयाः स्वल्पघृतायुताः ।
वातपित्तोल्वणे ये तु प्रदेहास्ते घृताधिकाः ॥९१॥
प्रदेहाः सर्व एवैते कर्तव्याः संप्रसादनाः ।
क्षणे क्षणे युज्यमाना पूर्वमुद्धृत्य लेपनम् ॥ ९२ ॥

प्लक्षः अल्पदीर्घपत्रः । प्रदेहा इत्यनेन पूर्वोक्तप्रदेहानां भिन्नविषयाणां कफेऽनधिकारात् अपरान् प्रदेहानाह—सकफेत्यादि । अनन्ता उत्पलसारिवा । कुरण्टको म्लानकः । श्लेष्मातको बहुवारक इति प्रसिद्धः । इन्द्राणीशाकं केचित् मत्स्याक्षक इति आहुः । निर्गुण्डीति परे । गन्धप्रियङ्गुकौ इति व्यस्तसमस्तयोगः । सर्व एवेत्यत्र एतेति कफविहिताः प्रदेहाः । वातपित्तोल्वण इत्यत्र यद्यपि साक्षात्प्रदेहा न विहिताः तथापि इहैवात्र रक्तपित्तोल्वणे विहितास्तत्रैव द्रव्यगुणतो वातहरद्रव्यकृताधिकाः अधिकसर्पिर्युताः वाते कर्तव्या इति ज्ञेयम् ॥ ८४—९२ ॥

घृतेन शतधौतेन प्रदिह्यात्केवलेन च ।
घृतमण्डेन शीतेन पयसा मधुकाम्बुना ॥ ९३ ॥
पञ्चवल्ककषायेण सेचयेच्छीतलेन वा ।
वातासृक् पित्तबहुलं विसर्पं बहुशो भिषक् ॥९४॥
सेचनास्ते प्रदेहा ये त एव घृतसाधनाः ।
ते चूर्णयोगा विसर्पचूर्णानामवचूर्णनाः ॥ ९५ ॥
दूर्वास्वरससिद्धं च घृतं स्याद्व्रणरोपणम् ।
दार्वीत्वङ्मधुकं लोध्रं केशरं चावचूर्णनम् ॥ ९६ ॥
पटोलः पिचुमर्दस्तु त्रिफला मधुकोत्पले ।
एतत्प्रक्षालनं सर्पिर्व्रणचूर्णं प्रलेपनम् ॥ ९७ ॥
प्रदेहाः सर्व एवैते कर्तव्याः संप्रसादनाः ।
क्षणे क्षणे प्रयोक्तव्याः पूर्वमुद्धृत्य लेपनम् ॥ ९८ ॥
अनवीने घृते पूर्वं प्रदेहा बहुशोऽग्निनाः ।
देयाः प्रदेहाः कफजे पर्याधानोद्धृते घनाः ॥ ९९ ॥
त्रिभागाङ्गुष्ठमात्रः स्यात्प्रलेपः कल्कपेषितः ।
नातिस्निग्धो न रूक्षश्च न पिण्डो न द्रवः समः१००

घृतमण्डो घृतसंतानिकः । पञ्चवल्कं तन्त्रान्तरे उक्तं—न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्रसंयुक्तैः पञ्चवल्कलमुच्यते' । प्रदेहार्थद्रव्याण्येव परिसेचने घृतसाधनेऽवचूर्णनेऽपि विदध्यात् । दार्व्यादौ एतैर्द्रव्यादिभिः प्रक्षालनक्वाथः कर्तव्यः । तथा घृतं च अनेनैव तथा चूर्णं च प्रलेपनं कर्तव्यम् । संप्रसादना इति सवर्णकरा सवर्णत्वे साध्ये कर्तव्या इत्यर्थः । किंवा संप्रसादना इति रक्तपित्तप्रसादनाः । तेनायमर्थः । एते रक्तपित्ते प्रदेहाः कर्तव्याः य एते कर्तव्याः प्रदेहाः उक्तास्ते क्षणे क्षणे पूर्वं लेपनमुद्धृत्य प्रयोक्तव्याः । न चिरेण नापि पूर्वप्रलेपनोपरि इत्यर्थः । पूर्वं च लेपनमुद्धृत्य कर्तव्याः तथा बहुशो घनाः प्रतनुका इत्यर्थः । कफप्रदेहानां विशेषमाह—देया इत्यादि । पर्याधानोद्धृत इति शुष्कोद्धृते ॥ ९३—१०० ॥

न च पर्युषितं लेपं कदाचिदवचारयेत् ।
न च तेनैव लेपेन पुनर्जातु प्रलेपयेत् ॥ १०१ ॥
क्लेदविसर्पशूलानि शोषणभावात्प्रवर्तयेत् ।
लेपो ह्युपरि पट्टस्य कृतः स्वेदयति व्रणम् ॥ १०२ ॥
स्वेदजाः पिडकास्तस्य कण्डूश्चैवोपजायते ।
उपर्युपरि लेपस्य लेपो यद्यवचार्यते ॥ १०३ ॥
तानेव दोषाञ्जनयेत्पट्टस्योपरि यान्कृतः ।

अतिस्निग्धोऽतिद्रवश्च लेपो यश्चवचार्यते ॥ १०४ ॥
त्वचि न श्लिष्यते सम्यक् न दोषं शमयत्यपि ।
तन्वालिप्तं न कुर्वीत संशुष्को ह्यापुटायते ॥१०५॥
न चौषधिरसो व्याधिं प्राप्नोत्यपि च शुष्यति ।
तन्वालिप्तेन ये दोषास्तानेव जनयेद्भृशम् ॥ १०६ ॥
संशुष्कः पीडयेद्व्याधिं निस्नेहो ह्यवचारितः ।
अन्नपानानि वक्ष्यामि विसर्पाणां निवृत्तये ॥१०७॥
लङ्घितेभ्यो हितो मन्थो रूक्षः सक्षौद्रशर्करः ।
मधुरः किंचिदम्लो वा दाडिमामलकान्वितः १०८
सपरूपकमृद्वीकः सखर्जूरः शृताम्बुना ।
तर्पणैर्यवशालीनां सस्नेहा वावलेहिका ॥ १०९ ॥
जीर्णे पुराणशालीनां यूपैर्भुञ्जीत भोजनम् ।
मुद्गान् मसूरांश्चणकान्यूपार्थमुपकल्पयेत् ॥ ११० ॥
अनम्लान्दाडिमाम्लान्वा पटोलामलकैः सह ।
जाङ्गलानां च मांसानां रसांस्तस्योपकल्पयेत् १११
रूक्षान्परूपकद्राक्षादाडिमामलकान्वितान् ।
रक्ताः श्वेता महाह्वाश्च शालयः षष्टिकैः सह ११२
भोजनार्थं प्रशस्यन्ते पुराणाः सुपरिस्रुताः ।
यवगोधूमशालीनां सात्म्यान्येव प्रदापयेत् ॥११३॥
येषां नात्युचितः शालिर्नरा ये च कफाधिकाः ।
विदाहीन्यन्नपानानि विरुद्धं स्वपनं दिवा ॥ ११४ ॥

अन्नपानमाह—जीर्णे इति । अवलेहिकारूपेऽन्ने जीर्णे । जाङ्गलानामित्यादौ रूक्षानित्यनेन स्नेहविरहेण रूक्षमांसकृतत्वेन रूक्षत्वं ज्ञेयम् । रक्ताश्वेतामहाह्वा इति । रक्तशालयः श्वेतशालयो महाशालयः । श्वेतशालिर्मागधे पुण्डरीकशालिरिति ख्यातः । यवगोधूमेत्यादि शालिर्महाशालिः यवगोधूमशालीनां सात्म्यं तदेव प्रयोजयेत् । येषांच शालिर्नात्युचितः नाभ्यस्तः तेषां यवगोधूमावेव ज्ञेयौ । तयोः कफविरुद्धत्वात् विसर्पहितत्वाच्च । उक्तं हि—'सर्वं मधुरं कफकरं अन्यत्र पुराणयवशालिगोधूमात्' इति । विसर्पवर्ज्यानाह—विदाहीनीत्यादि ॥ १०१—११४ ॥

क्रोधव्यायामसूर्याग्निप्रवातांश्च विवर्जयेत् ।
कुर्याच्चिकित्सितान्यस्माच्छीतप्रायाणि पैत्तिके ११५
रूक्षप्रायाणि कफजे स्नैहिकान्यनिलात्मके ।
वातपित्तप्रशमनमग्निविसर्पणे हितम् ॥ ११६ ॥
कफपित्तप्रशमनं प्रायः कर्दमसंज्ञिते ।
रक्तपित्तोत्तरं दृष्ट्वा ग्रन्थिविसर्पमादितः ॥ ११७ ॥
रूक्षणैर्लङ्घनैः सेकैः प्रदेहैः पाञ्चवल्किकैः ।
शिरामोक्षैर्जलौकोभिर्वमनैः सविरेचनैः ॥ ११८ ॥
घृतैः कषायतिक्तैश्च कालज्ञैः समुपाचरेत् ।
ऊर्ध्वं चाधश्च शुद्धाय रक्ते चाप्यवसेचिते ॥११९॥
वातश्लेष्महरं कर्म ग्रन्थिविसर्पिणे हितम् ।
उत्कारिकाभिरुष्णाभिरुपनाहः प्रशस्यते ॥ १२० ॥
स्निग्धाभिर्वेशवारैर्वा ग्रन्थिविसर्पशूलिनः ।
दशमूलोपसिद्धेन तैलेनोष्णेन सेचयेत् ॥ १२१ ॥
कुष्ठतैलेन चोष्णेन यवक्षारयुतेन च ।
गोमूत्रैः पत्रनिर्यूहैरुष्णैर्वा परिषेचयेत् ॥ १२२ ॥
सुखोष्णया प्रदिह्याद्वा पिष्टया चाश्वगन्धया ।
शुष्कमूलककल्केन नक्तमालत्वचापि वा ॥ १२३ ॥
विभीतकस्य वा ग्रन्थिं कल्केनोष्णेन सेचयेत् ।
बलां नागबलां पथ्यां भूर्जग्रन्थिं विभीतकम् १२४
वंशपत्राण्यग्निमन्थं कुर्याद्ग्रन्थिप्रलेपनम् ।
दन्ती चित्रकमूलत्वक् सुधार्के पयसी गुडः ॥१२५॥
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ।
बहिर्मार्गस्थितं ग्रन्थिं किं पुनः कफसम्भवम् १२६

उत्कारिकेत्यादिना उष्णोपनाहमाह उष्णो बहलो लेपः । पाक्यक्षारयुतेनेति पाकेन सुश्रुतायुक्तविधानेन कृतक्षारः पाक्यक्षारः किंवा पाक्यं पूतिकरञ्जं लवणं । गोमूत्रैत्यादौ पत्रं एरण्डादिकं पत्रं । नक्तमालं करञ्जकः । विभीतकस्यचेत्यत्र कल्केनेति योज्यम् । दन्तीत्यादौ लेपो भिन्द्यां शिलामपि सकफग्रंथिं नितरां भिन्द्यादिति भावः ॥ ११५—१२६ ॥

दीर्घकालस्थितं ग्रन्थिं भिन्द्याद्वा भेषजैरिमैः ।
मूलकानां कुलत्थानां यूषैः सक्षारदाडिमैः ॥१२७॥
गोधूमाद्यैर्यवाद्यैर्वा सशीधुमधुशर्करैः ।
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः ॥ १२८ ॥
त्रिफलायाः प्रयोगैश्च पिप्पलीक्षौद्रसंयुतैः ।
मुस्तभल्लातशक्तूनां प्रयोगैर्माक्षिकस्य च ॥ १२९ ॥
देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ।
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ॥ १३० ॥
अयोलवणपाषाणहेमताम्रप्रपीडनैः ।
आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बली स्थिरः
ग्रन्थिः पाषाणकठिनो यदा नैवोपशाम्यति ।
अथास्य दाहः क्षारेण शरैर्लौहैन वा हितः ॥१३२॥
पाकिभिः पाचयित्वा वा पाटयित्वा समुद्धरेत् ।
मोक्षयेद्बहुशश्चास्य रक्तमुत्क्लेशमागतम् ॥ १३३ ॥

इमैरिति वक्ष्यमाणैः । गिरिजं शिलाजतु । गिरिजप्रयोगश्च रसायनोक्तो ज्ञेयः । मुस्तसक्तवो मुस्तव्योष इत्यादिना कुष्ठोक्ताः । भल्लातकसक्तवो रसायनोक्ताः । अयो लवणेत्यादि तत्प्रायःप्रभृतिभिः पीडनैरित्यर्थः । शरैर्लौहैनेति शरेण तापितेन । पाकिभिरिति पाचनपिण्डैः ॥ १२७—१३३ ॥

पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ।
धूमो विरेकः शिरसः स्वेदनं परिमर्दनम् ॥ १३४ ॥
अप्रशाम्यति दोषे च पाचनं वा प्रशस्यते ।
प्रक्लिन्ने दाहपाकाभ्यां भिषक् शोधनरोपणैः ॥१३५॥

वाह्यैश्चाभ्यन्तरैश्चैव व्रणवत् समुपाचरेत् ।
कम्पिल्लकं विडङ्गानि दार्वीकारञ्जकं फलम् ।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥१३६॥
द्विव्रणीयोपदिष्टेन कर्मणा चाप्युपाचरेत् ।
देशकालविभागज्ञो व्रणग्रन्थिविसर्पवित् ॥ १३७ ॥
इति ग्रन्थिविसर्पचिकित्सा ।

पुनश्चेत्यादिना उक्तापि धूमादयः पुनः अपनीतग्रन्थिविषयतया विधीयन्ते तेनचेह न पुनरुक्तिः ॥ १३४—१३७ ॥

"य एव विधिरुद्दिष्टो ग्रन्थीनां विनिवृत्तये ।
स एव गलगण्डानां कफजानां निवृत्तये ॥ १३८ ॥
गलगण्डास्तु वातोत्था ये कफानुगता नृणाम् ।
घृतक्षीरकषायाणामभ्यासान्न भवन्ति ते ॥ १३९ ॥

ग्रंथिव्रणचिकित्सिते युक्तं तदेवातिदिशन्नाह—य एवेत्यादिना । गलगण्डानामिति वहुवचनानि गलगण्डमाला अपची विवक्षितानि ॥ १३८ ॥ १३९ ॥

यानीहोक्तानि कर्माणि विसर्पाणां निवृत्तये ।
एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः ॥ १४० ॥
विसर्पो न ह्यसंसृष्टो रक्तपित्तेन जायते ।
तस्मात्साधारणं सर्वमुक्तमेतच्चिकित्सितम् ॥१४१॥
विशेषो दोषवैषम्यान्न च नोक्तः समासतः ।
समासव्यासनिर्दिष्टां क्रियां विद्वानुपाचरेत् १४२"

विसर्पे रक्तमोक्षणस्तुतिमाह—यानीत्यादि । रक्तमोक्षणे एव कुतः प्राधान्यमित्याह—विसर्पो नेत्यादि । साधारणमिति वातकफविसर्पे रक्तपित्तहरं चिकित्सितं युक्तमित्यर्थः ॥ १४०—१४२ ॥

भवन्ति चात्र ।

निरुक्तनामभेदाश्च दोषा दूष्याणि हेतवः ।
आश्रयो मार्गतश्चैव विसर्पगुरुलाघवम् ॥ १४३ ॥
लिङ्गान्युपद्रवा ये च यल्लक्षण उपद्रवाः ।
साध्यत्वं न च साध्यानां साधनं च यथाक्रमम् ॥
इति पिप्रक्षवे सिद्धिमग्निवेशाय धीमते ।
उक्तं भगवता ह्येतद्विसर्पाणां चिकित्सिते ॥ १४५ ॥

इति चरकसंहितायां विसर्पचिकित्सितं नाम एकविंशोऽध्यायः ॥ २१ ॥

निरुक्तमित्यादिसंग्रहः । यल्लक्षणोपद्रव इति यादृक्लक्षणेनोपद्रवेण न साध्यमित्यर्थः । पिप्रक्षवे प्रष्टुमिच्छवे ॥ १४३—१४५ ॥ इति विसर्पचिकित्सितं समाप्तम् ॥

---

## द्वाविंशोऽध्यायः ।

अथातस्तृष्णारोगचिकित्सितं व्याख्यास्यामः ।

"ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितेऽभिरतः ।
तृष्णानां प्रशमार्थं चिकित्सितं प्राह पञ्चानाम् ॥१॥

विसर्पे प्रायेण तृष्णा उपद्रवरूपा भवति इति विसर्पानन्तरं तृष्णाचिकित्सितमुच्यते । ज्ञानं विज्ञानं । प्रशमः शांतिः । तपश्चांद्रायणादि । चिकित्सितं चिकित्साविधायको ग्रन्थः । निदानाद्यभिधानं च चिकित्सार्थमेव निदानादिज्ञानपूर्वकत्वाच्चिकित्सायाः । पञ्चानामिति वचनेन पञ्चानामपि चिकित्साविषयत्वं दर्शयति । नहि कासश्वासवदस्यासाध्यत्वम् । तथा सुश्रुतोक्तनिरुक्तिः पञ्चस्वपि तृष्णासु भवति । उक्तंहि सुश्रुते—'तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवाच्च । सप्तमी भक्तनिमित्तजाचे'ति ॥ १ ॥

क्षोभाद्भयाच्छ्रमादपि शोकात्क्रोधाद्विलङ्घनान्मद्यात् ।
क्षाराम्ललवणकटुकोष्णरूक्षशुष्कान्नसेवाभिः ॥२॥
धातुक्षयगदकर्षणवमनाद्यतियोगसूर्यसंतापैः ।
पित्तानिलौ प्रवृद्धौ सौम्यान्धातूंश्च शोषयतः ॥३॥
रसवाहिनीश्च नालीर्जिह्वामूलगलतालुक्लोम्नः ।
संशोष्य नृणां देहे कुरुतस्तृष्णां महाबलावेतौ ॥४॥
पीतं पीतं हि जलं शोषयतस्तावतो न याति शमम् ।
घोरव्याधिकृशानां प्रभवत्युपसर्गभूता सा ॥ ५ ॥

क्षोभादित्युक्तनिदानस्य योगात् वातपित्तकर्तृत्वं चोन्नेयं । पित्तानलाविति सर्वतृष्णासंप्राप्तिग्रन्थः । सौम्याद्धातूनिति सोमगुणातिरिक्तानि । प्रदूषयतः इति षोडशांशेन दूषयतः । द्वितीयावहुवचनांतं देह इत्यनेन एतासां तृष्णानां शरीरद्वयं दर्शयति । या हि मानसी तृष्णा सा शरीरे इच्छाद्वेषात्मिका । दुःखात्प्रवर्तते इति । या तु देहाश्रयदोषकारणा सा देहजेति भावः । स्वाभाविकतृष्णा यापि वातपित्ते आरंभे एव । तार्किसाप्यत्र न गृह्यते । मैवं इह अस्वभाविकव्याधिप्रकरणे नाधिकार इति कृत्वा स्वाभाविकतृष्णाकरवातपित्ताभ्यां वक्ष्यमाणतृष्णाकरवातपित्तानां विशेषमाह—पीतं पीतमित्यादि । प्रकृततृष्णारंभकौ पित्तवातौ पीतं पीतं जलं शोषयतः । अतो जलशोषणत्वात् शमं न याति । स्वाभाविक्यां जलं पीत्वा शांतिमधिगच्छतीति भावः । उपद्रवरूपतृष्णोत्पादमाह—घोरेत्यादि । उपसर्गरूपेति उपद्रवरूपा ॥ २—५ ॥

प्राग्रूपं मुखशोषः स्वलक्षणं सर्वदाम्बुकामित्वम् ।
तृष्णानां सर्वासां लिङ्गानां लाघवमपायः ॥ ६ ॥

तृष्णाप्राग्रुपमाह—प्राग्रूपमित्यादि । प्राग्रुपकथने एव मध्ये तृष्णानामव्यभिचारिलक्षणमाह—स्वलक्षणमिति । अव्यभिचारिलक्षणं यथा ज्वरस्य संतापः । पुनः प्रकृतं प्राग्रुपमाह—लिङ्गानां लाघवमिति । वक्ष्यमाणवातादिजतृष्णालिङ्गानां अल्पत्वं पूर्वरूपावस्थायां वक्ष्यमाणलक्षणानि कानिचिच्च न भ-

वन्त्येव । उक्तंच—'अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतं' इति । किंवा यदेतत्प्राग्रूपं मुखशोषः सर्वदांबुकामित्वम् । एतच्च खलक्षणं तृष्णानां मुखशोषं सर्वदाम्बुकामित्वं खलक्षणं तथा पूर्वरूपं च भवतः । ये तु प्राग्रूपं मुखशोषः सर्वदाम्बुकामित्वमिति पठंति तेषां मध्ये तृष्णायाः खलक्षणं नोक्तं स्यात् । उक्तंच—'खलक्षणं तु तृष्णानां सर्वदाम्बुपिपासिते'ति । किंवा मुखशोषे एव सर्वदाम्बुकामित्वं च लिङ्गानां च लाघवं रोगरूपायास्तृष्णाया आगमनमित्यर्थः । तृष्णानां व्युपरमो वक्ष्यमाणलिङ्गानामन्यथात्वम् । सर्वदोच्छेदो हि तृष्णालक्षणानां न भवत्येव । सहजतृष्णाग्रस्तत्वेन तल्लक्षणानां अल्पमात्रतयावस्थानात् । लिङ्गानां लाघवमाशुरपादः । अपायो मारणमिति कृत्वा तृष्णानामसाध्यतालक्षणमिदमुच्यते ॥ ६ ॥

**मुखशोषस्वरभेदभ्रमसंतापप्रलापसंस्तम्भान् ।**
**ताल्वोष्ठकण्ठजिह्वाकर्कशतां चित्तनाशं च ॥ ७ ॥**
**जिह्वानिर्गममरुचिं बाधिर्यं मर्मदूयनं सादम् ।**
**तृष्णोद्भूता कुरुते पञ्चविधा लिङ्गतः शृणु ताम् ॥ ८ ॥**

सर्वतृष्णानामुपद्रवानाह—मुखशोष इत्यादि । ये तु मुखशोषादीनि लक्षणान्याहुस्तन्मते तृष्णोपद्रवानाभिधानं स्यात् । उपद्रवाश्चाध्यायसंग्रहे संगृहीताः तेनातिशयवृद्धाः मुखशोषादय उपद्रवाः । वृद्धास्तु लिङ्गानीति व्यवस्था ॥ ७ ॥ ८ ॥

**अब्धातुं देहस्थं कुपितः पवनो यदा विशोषयति ।**
**तस्मिञ्शुष्के शुष्यत्यबलस्तृष्यत्यथ विशुष्यन् ॥ ९ ॥**
**निद्रानाशः शिरसो भ्रमस्तथा शुष्कविरसमुखता च**
**स्रोतोऽवरोध इति च स्याल्लिङ्गं वाततृष्णायाः १०**

अब्धातुमित्यादिना पञ्चानां पृथक् संप्राप्तिमाह । कुपितः देहे नानारसादिरूपतया स्थितं अब्धातुं शुष्केऽब्धातौ शुष्यतीति योज्यम् । स्रोतोवरोध इति प्रत्युपघातः ॥ ९ ॥ १० ॥

**पित्तं मतं कुर्वितमाग्नेयं कुपितं तापयत्यपां धातुम् ।**
**संतप्तः स हि जनयेत्तृष्णां दाहोल्वणां नृणाम् ११**
**तिक्तास्यत्वं शिरसो दाहः शीताभिनन्दता मूर्च्छा ।**
**पीताक्षिमूत्रवर्चस्त्वमाकृतिः पित्ततृष्णायाः ॥ १२ ॥**

पित्तमित्यादिना पित्तजामाह शरीरसंख्याशारीरेवमुक्तम् यद्द्रवं सरं स्निग्धं मन्द-स्निग्धं मृदु पिच्छिलरसरुधिरवसाकफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनं चेत्यनेन तथा तत्रैव यत्पित्तमित्यनेन द्वयात्मकत्वं पित्तस्य यद्यप्युक्तं तथाप्याग्नेयबाहुल्यात् पित्तमाग्नेयमेवेति दर्शयन्नाह—पित्तं मतमाग्नेयमिति । द्वयात्मकत्वेऽपि च पित्तस्याग्नेयांशप्राधान्यात् अन्यत्रापि सौम्याग्नेयवायव्याधिकारभेदैः पैत्तिकविकाराः आग्नेयत्वेन गृहीता एव । संतप्तः सहीति स अब्धातुः संतप्तः । संतप्तः सहीति पाठपक्षे पित्तमेव जनयेदिति योज्यम् । यदाब्धातुर्जनयति तदा पित्तसंतप्तएव जनयतीति पित्तस्यैव कर्तृत्वम् ॥ ११ ॥ १२ ॥

**तृष्णाऽऽमप्रभवा साप्याग्नेयामपित्तजनितत्वात् ।**
**लिङ्गं तस्याश्चारुचिराध्मानकफप्रसेकौ च ॥ १३ ॥**
**देहो रसजोऽम्बुभवो रसश्च तस्य क्षयाच्च तृष्येत्तु ।**
**दीनस्वरः प्रताम्यन्संशुष्कहृदयगलतालुः ॥ १४ ॥**

तृष्णेत्यादिनाऽऽमजामाह । आमशब्देन च समानलक्षणतया कफजेऽपि गृह्यते । साप्याग्नेयामित्यनेन पूर्वपरिज्ञातं सर्वासां वातपित्तजन्यत्वं समुन्नयति । वातश्च तृष्णाकरणेनोक्तो अपि अत्र प्रधानं । अन्यत्राप्युक्तं—'दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवं । प्रभावप्रसादौ मेधा पित्तकर्माविकारज'मिति । आमपित्तजनितत्वादिति आमावरोधवृद्धपित्तजनितत्वादित्यर्थः । देहोरसज इत्यादिना आहाररसात्सर्वधातुसमुत्पद्यते । सच रसो देहपोषकोऽम्बुभव इति आप्यः तस्य क्षयादिति रसक्षयात् अम्बुक्षयो भवति तेन चाम्बुक्षयेण पुरुषः पानीयप्रार्थनारूपतृष्णायां युक्तो भवतीति दर्शयति । उक्तंहि सुश्रुते—'दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः । अन्नपानं स्वयोनिवर्द्धनं यत्तदन्नपानं प्रकांक्षतीति इहापि चोक्तम् । रससंक्षये तृष्यति ॥ १३ ॥ १४ ॥

**भवति खलु सोपसर्गात्तृष्णा सा शोषिणी कष्टा ।**
**ज्वरमेहक्षयशोषश्वासाद्युपसृष्टदेहानाम् ॥ १५ ॥**

भवतीत्यादिनोपसर्गजामाह—ज्वराद्युपद्रवरूपा भवति । कष्टेति कष्टसाध्या । एवं प्राक्सूत्रितवातपित्तामांबुक्षयोपसर्गात्मिका पञ्च तृष्णा व्याहृताः । अत्रैव सुश्रुतोक्ता कफजा सामजायामवरुद्धा क्षतजा उपसर्गात्मिकायामवरुद्धा । अन्नजाया आमेनैवान्तर्भावनीया ॥ १५ ॥

**सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम् ।**
**घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥ १६ ॥**

इदानीं तृष्णाया असाध्यतालक्षणमाह—सर्वास्त्वित्यादि । घोरोपद्रवयुक्तेति पीडाकरोपद्रववती ॥ १६ ॥

**नाग्निं विना हि तर्षः पवनाद्वातौ हि शोषणे हेतू ।**
**अब्धातोरतिवृद्धावपां क्षये तृष्यते नरो हि ॥ १७ ॥**
**गुर्वन्नपयःस्नेहैः संमूर्च्छद्भिर्विदाहकाले च ।**
**यस्तृष्येद्धृतमार्गे तत्राप्यनिलानलौ हेतू ॥ १८ ॥**
**तीक्ष्णोष्णरूक्षभावान्मद्यं पित्तानिलौ प्रकोपयति ।**
**शोषयतोऽपां धातुं तावेव मद्यशीलानाम् ॥ १९ ॥**
**तप्तास्विव सिकतासु हि तोयमाशुष्यति क्षिप्तम् ।**
**तेषां संतप्तानां हिमजलपानाद्भवति शर्म ॥ २० ॥**

संप्रति तृष्णान्तराणां उक्ततृष्णायामेवान्तर्भावं दर्शयन् उक्तवक्तव्यतृष्णानामपि वातपित्तक्षयजन्यत्वमाह—नाग्निमित्यादि । कस्मात्पुनः अग्निवातौ विना तर्षो न भवतीत्याह ।

तौ हि अतिवृद्धौ पित्तरूपौ अग्निवातौ अब्धातु शोषणे हेतू। तस्मान्नाग्निवातौ विना तर्ष इत्युक्तमित्यर्थः। एवमग्निवाताभ्यां कृतेऽपांक्षये स्वरूपादेव नरस्तृष्यति । एवं पित्तवातहताब्धातुक्षयजत्वमभिधाय अन्तर्भावनीयतृष्णामाह—गुर्वन्नेत्यादि। संमूर्च्छद्भिरिति एकतां गच्छद्भिः। अत्र वातो वृद्धः संमूर्च्छने अमुष्य तृष्णाकरः विदाहकाले न तृष्णा तत्र पित्तं तृष्णाकरम्। भयजामपि अन्तर्भावयन्नाह—तीक्ष्णोष्णेत्यादि। सिकतासु हि तोयमिति प्रशमकथनं। शर्मेति सुखम् ॥१७—२०॥

शिशिरस्नातस्योष्मा रुद्धः कोष्ठं प्रपद्य तर्षयति।
तस्मान्नोष्णः क्लान्तो भजेत सहसा जलं शीतम्२१
लिङ्गं सर्वास्वेतास्वनिलक्षयात्पित्तजं भवत्यथ तु।
पृथगागमाच्चिकित्सितमतः प्रवक्ष्यामि तृष्णानाम्

शीतजामन्तर्भावयन्नाह—शिशिरेत्यादि। शिशिरं शीतं ऊष्मा रुद्ध इति शीतस्पर्शे बलेन बहिर्निर्गच्छन् रोमकूपैः ऊष्मावरुद्धः प्रतीपीकृतः। एतेन एतस्यापि पित्तजत्वमुक्तम्। न सहसेत्यनेन विश्रमार्थं शीतजलसेवायां न तथाविधा तृष्णा भवतीति दर्शयति। संप्रति मिन्नसंमूर्च्छनादीनां यथोक्तक्रमेण अनिलपित्तजावरोधमभिधाय सर्वासामेवानिलक्षयपित्तजत्वं उपदर्शयन्नाह—लिङ्गं सर्वास्वित्यादि। पृथगागमादिति पृथक्हेतुत्वात्। आगच्छत्यस्मादिति आगमो हेतुः। वातादिहेतुभेदाच्चिकित्सितभेदं वक्ष्यामीत्यर्थः। किंवा पृथक् हि चिकित्सितं वक्ष्यामि आगमादिति आयुर्वेदागमप्रामाण्यात्। आगमे तृष्णानां भेदेन चिकित्साभिधानात् अहमपि पृथक् चिकित्सां वक्ष्यामीत्यर्थः ॥ २१ ॥ २२ ॥

अपां क्षयाद्धि तृष्णा संशोष्य नरं प्रणाशयेदाशु।
तस्मादैन्द्रं तोयं समधु पिबेत्तद्गुणं वान्यत् ॥ २३ ॥
किञ्चित्तुवरानुरसं तत्र लघुशीतलं सुगन्धिसुरसम्
अनभिष्यन्दि च यत्तत्क्षितिगतमप्यैन्द्रवज्ज्ञेयम्२४

अपांक्षयादित्यादिना चिकित्सामाह। ऐन्द्रमित्यान्तरिक्षं तद्गुणं वान्यदिति यदुक्तं वा तत्राह—किंचिदित्यादि। तुवरोऽनुरसतया रस्यते आस्वाद्यते यस्मिन्निति तुवरानुरसं। अंतरिक्षं जलं अव्यक्तसर्वरसयुक्तं अव्यक्तीभावस्तु गन्धरसानां प्रकृतो भवति। ऐन्द्रवदित्यनेन अंतरिक्षानुकारि ॥२३॥२४॥

शृतशीतं ससितोपलमथवा शरपूर्वपञ्चमूलेन।
लाजा शक्तून्सिताक्तान्मधुयुतमैन्द्रेण वा मन्थम्२५
वाट्यं वामयवानां शीतं मधुशर्करायुतं दद्यात्।
पेयां वा शालीनां दद्याद्वा कोरदूषाणाम् ॥ २६ ॥
पयसा शृतेन भोजनमथवा मधुशर्करायुतं भोज्यम्
पारावतादिकरसैर्घृतभृष्टैर्वाप्यलवणाम्लैः ॥ २७ ॥
तृणपञ्चमूलमुञ्जातकैः पियालैश्च जाङ्गलाः सुकृताः।
शस्ता रसाः पयो वा तैः सिद्धं शर्करामधुमत् २८
शतधौतघृतेनाक्तः पयः पिबेच्छीततोयमवगाह्य।
मुद्गमसूरचणकजा रसास्तु भृष्टा घृते देयाः॥२९॥
मधुरैः सजीवनीयैः शीतैश्च सतिक्तकैः शृतं क्षीरम्।
पानाभ्यञ्जनसेकेष्विष्टं मधुशर्करायुक्तम् ॥ ३० ॥

शरेक्षुदर्भकाशानां मूलमेव च इत्यत्रोक्तेन शरपञ्चमूलेन आमयवानां वाट्यं ईषद्भृष्टयवमण्डः तैरिति तृणपञ्चमूल्यादिभिः। मधुरैरिति मधुररसैः। शीतैरिति शीतवीर्यैः ॥ ॥ २५—३० ॥

तज्जं वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि च स्यात्।
नारीपयः सशर्करमुष्ट्र्या अपि नस्यमिक्षुरसः॥३१॥
क्षीरेक्षुरसगुडोदकसितोपलाद्यैःक्षौद्रशीधुमाध्वीकैः।
वृक्षाम्लमातुलुङ्गैर्गण्डूपास्तालुशोषघ्नाः॥ ३२॥
जम्ब्वाम्रातकबदरीवेतसपञ्चपल्लवैश्चाम्लैः।
हृन्मुखशिरःप्रलेपाः सघृता मूर्च्छाभ्रमतृष्णाघ्नाः॥
दाडिमदधित्थलोध्रैः सविदारीबीजपूरकैः शिरसः
प्रलेपो गौरामलकैर्घृतारनालायुतैश्च हितः ॥ ३४ ॥
शैवलपङ्कजलजैः साम्लैः सघृतैश्च शकुभिर्लेपाः।
मस्त्वारनालार्द्रवसनकमलमणिहारसंस्पर्शाः ३५
शिशिराम्बुचन्दनार्द्रस्तनतटपाणितलसंस्पर्शाः।
क्षौमार्द्रवसनानां वराङ्गनानां प्रियाणां च ॥ ३६ ॥
हिमवद्दरीवनसरित्सरोऽम्बुजपवनेन्दुपादशिशिराणाम्।
रम्यशिशिरोदकानां स्मरणं च कथाश्च तृष्णाघ्नाः॥

तज्जमिति। मधुरादिशृतक्षीरजं माध्वीकं मृद्वीकारसः गण्डूषो मुखपूरको द्रवः। 'पञ्चाम्लं कोलाम्लचुक्रिकाम्लचुक्रवेतसैश्चतुरम्लमिति प्रोक्तं पञ्चाम्लं तु सदाडिमं' इति वचनात् ज्ञेयम्। दधित्थः कपित्थः। गौरामलकैरिति आर्द्रतया गौरदण्डैरामलकैः। इन्दुपादाश्चन्द्ररश्मयः ॥ ३१—३७ ॥

वातघ्नमन्नपानं मृदु लघु शीतं च वाततृष्णायाः।
क्षतकासनुद्धृतक्षीरमूर्ध्वं वाततृष्णाघ्नम् ॥ ३८ ॥
स्याजीवनीयसिद्धं क्षीरघृतं वातपित्तजे तर्षे।
पैत्ते द्राक्षाचन्दनखर्जूरोशीरमधुयुतं तोयम् ॥३९॥
लोहितकशालितण्डुलखर्जूरपरूपकोत्पलद्राक्षाः।
मधुपक्कलोष्टमेव च जले शृतं शीतलं पेयम् ॥४०॥
लोहितशालितण्डुलप्रस्थः सलोध्रमधुकाञ्जनोत्पलः
पक्त्वामलोष्टमधुजलसमायुतो मृण्मये पेयः॥४१॥
वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः।
सिद्धेऽम्भस्यग्निनिभाः कृष्णमृदः कृष्णसिकता वा॥

वातघ्नेत्यादि । तृष्णानां वैशेषिकचिकित्सितमाह क्षयकासहरैः शृतं क्षयकासनुत् घृतं ऊर्ध्वं वातः श्वासः । वातपित्तजे तर्षे इत्यत्र संसर्गजा तृष्णा असूत्रितापि असूत्रितद्वंद्वजगुल्मन्यायेनोच्यते । पैत्ते इत्यत्र तर्षे इति शेषः । लोहितशालिप्रस्थेत्यादौ लोध्रादीनां मिलितानां चतुःपलं प्रक्षेप्य न्यायात् पादिकं पक्वामलोष्टप्रसादनं च दत्त्वा शालितण्डुलप्रस्थं क्षणं स्थाप्यते तस्य पानयोग्या मात्रा मधुप्रक्षेपान् मृन्मये पात्रे पीयत इति वृद्धैरुपादर्शितम् ॥ ३८—४२ ॥

तप्तानि नरकपालान्यथवा निर्वाप्य पाययेताच्छम्।
अल्पपक्वशर्करामृतवल्ल्युदकं वा तृषं हन्ति ॥४३॥
क्षीरवतां मधुराणां शीतानां शर्करा मधुविमिश्राः।
शीतकषाया मृद्भृष्टसंयुताः पित्ततृष्णाघ्नाः ॥ ४४ ॥
व्योषवचाभल्लातकतिक्तकषायास्तथामतृष्णायाम्।
यच्चोक्तं कफजायां वम्यां तच्चैव कार्यं स्यात् ॥४५॥
स्तम्भारुच्यविपाकालस्यच्छर्दिषु कफानुगां तृष्णाम् ।
ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम् ४६
दाडिममद्गफलं वाप्यन्यतमकषायमथ लेहम् ।
पेयमथवा हरिद्राम्बुशर्कराक्षौद्रसंयुक्तम् ॥ ४७ ॥
क्षयकासेन तु तुल्या क्षयतृष्णा गरीयसी या नृणाम् ।
क्षीणक्षतशोषहितैस्तस्मात्ता भेषजैः शमयेत् ॥४८॥
पानतृष्णार्तः पानं त्वर्धोदकमम्ललवणगन्धाढ्यम्।
शिशिरस्नातः पानं मद्याम्बु गुडाम्बु वा तृषितः ॥
भक्तोपरोधतृषितः स्नेहतृषार्तोऽथवा तनुयवागूम्।
प्रपिबेद्गुरुणा तृषितो भुक्तेनोद्धरेद्भुक्तम् ॥ ५० ॥
मद्याम्बु वाम्बु चोष्णं बलवांस्तृषितः समुल्लिखेत्पीत्वा ।
मागधिकाविशदमुखः सशर्करं वा पिबेन्मन्थम्५१
बलवांस्तु तालुशोषे पिबेद्धृतं वृष्यमनुमद्यम् ।
सर्पिर्भृष्टं क्षीरं मांसरसांश्चाबलः स्निग्धान् ॥ ५२॥
अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥५३॥

अल्पपक्वशर्करमिति पाकनिमित्तमधुरसहितं । अमृतवल्ली गुडूची । मृद्भृष्टसंयुता इति भृष्टमृद्युतेत्यर्थः । अन्यतमकषायमिति आमलकादिकषायं । पानतृषार्त इति अतिशयपानजतृट्पीडितः । भक्तोपरोधो भक्तच्छेदः । मागधिका पिप्पली । तालुशोषे यद्यपि घृतं न सिद्धं 'तृष्णामूर्च्छापरीतश्च गर्भिण्याः मुखशोषिणः' । न पिबेदिति गुडाम्बुस्निग्धं स्निग्धगुडहितत्वान्नहितं । उक्तं हि—'यदाहारगुणैः पानं विपरीतं तु दृश्यते' । तदा दृश्यत इति । तदा मधुरतया तृष्णाहरत्वात्तु प्रभावाच्चोपयुज्यते ॥ ४३—५३ ॥

स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत् ।
तर्षं मूर्च्छाभिहतस्य रक्तपित्तापहैर्हन्यात् ॥ ५४ ॥

शीतमुष्णं च जलं कुत्र देयं वर्ज्यं वा कुत्रेत्याह—

ऊर्ध्वस्लदाहमूर्च्छातमःक्लममदात्ययास्रविषपित्ते ।
शस्तं स्वभावशीतं शृतशीतं सन्निपातेऽम्भः ॥५५॥
हिक्काश्वासनवज्वरपीनसघृतपीतपार्श्वगलरोगे ।
कफवातकृते स्त्याने सद्यः शुद्धे हितमुष्णम् ॥५६॥
पाण्डूदरपीनसमेहगुल्ममन्दातिसारेषु ।
प्लीह्नि च तोयं हितं काममशक्ये पिबेदल्पम् ॥५७॥
पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं काङ्क्षन् ।
न लभेत स चेन्मरणमाश्वेवाप्नुयाद्दीर्घरोगं वा ५८
तस्माद्धान्याम्बु पिबेद्भृष्यन्त्रोगी सशर्कराक्षौद्रम् ।
यद्वा तस्यान्यत्स्यात् सात्म्यं रोगस्य तच्चेष्टम् ॥५९॥
तस्यां विनिवृत्तायां तज्जन्योपद्रवः सुखं जेतुम् ।
तस्मात्तृष्णां पूर्वं जयेद्बहुभ्योऽपि रोगेभ्यः ॥६०॥"

तर्षं मूर्छेत्यादिना । औपसर्गिकतृष्णाचिकित्सोच्यते । विषपित्तेति विषे पित्ते च । संनिपाते इति संनिपाते ज्वरे रोगे च । उद्भूततृष्णायां हितमिति पाण्ड्वादिरोगे तृष्णायामपि तोयं न हितं । असह्ये तर्षे इति शेषः । असह्यतृष्णासयेषु जलदाने दोषमाह—पूर्वेत्यादि । पूर्वामयातुर इति पूर्वोत्पन्नगदपीडितः । तज्जन्योपद्रव इति तृष्णाप्रशमनार्थं पीयमानपानीयजः । सुखं जेतुमिति महात्ययकरीं तृष्णामपेक्ष्य जेतुं सुखोपायो भवतीत्यर्थः ॥ ५४—६० ॥

तत्र श्लोकः ।

हेतुर्यथाग्निपवनौ कुरुतः सोपद्रवं च पञ्चानाम् ।
तृष्णानां पृथगाकृतिरसाध्यता साधनं चोक्तम् ६१

इति चरकसंहितायां तृष्णारोगचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

हेतुरित्यध्यायसंग्रहः । अग्निपवनौ इति यथाग्निपवनौ कुरुतः सोपद्रवां तृष्णामिति शेषः । उपद्रवाश्च मुखशोषादयः पूर्वमुक्ताः ॥ ६१ ॥

इति तृष्णाचिकित्सितं समाप्तम् ॥

---

## त्रयोविंशोऽध्यायः ।

अथातो विषचिकित्सितं व्याख्यास्यामः ।

प्रागुत्पत्तिं गुणान्योनिं वेगाँल्लिङ्गान्युपक्रमान् ।
विषस्य ब्रुवतः सम्यगग्निवेश निबोध मे ॥ १ ॥

शीतोपशमप्राधान्यसामान्यात्तृष्णाचिकित्सितमनु विषचिकित्सितमुच्यते—प्रागिति । प्रागुत्पत्तिः आद्योत्पत्तिः । योनिरित्यधिष्ठानम् । लिङ्गानीति देहसंबंधिविषस्य लिङ्गानि अत्र

नापृष्टा गुरवो वदन्तीति न्यायात् शिष्यप्रश्नो ज्ञातव्यः। विषं च यद्यपि रोगाधिकारे न सूचितं साक्षात्तथापि विषगराभिधानात् तत्तत्कारणतया सूचितमेव रोगाधिकारे ज्ञेयम्। तेन नोत्सूत्रितमिह विषाभिधानमिति ॥ १ ॥

"अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः।
जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ २ ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः।
जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥ ३ ॥
जङ्गमस्थावरांयां तद्योनौ ब्रह्मा न्ययोजयत्।
तदम्बुसंभवं तस्माद्द्विविधं पावकोपमम् ॥ ४ ॥

मथ्यमाने इत्यादिना प्रागुत्पत्त्यभिधानं विषस्य महाप्रभावदर्शनार्थम्। हरित्केश इति कालकेशः स पुरुषः विषमुच्यते विषादनाद्धेतोः। एवंच विषशब्दनिरुक्तिर्भवति। तदम्बुसंभवं तस्मात् द्विविधमिति—तस्मात्संबन्धतः उत्पन्नत्वादंबुसंभवं तथा तस्माद्ब्रह्मणो योनिद्वयनियुक्तत्वात् द्विविधमित्यर्थः। अत्र संभवत्वेन चास्य वर्षप्रकोपित्वं वक्ष्यमाणं युक्तं योनिभूतेन वस्य प्रभावप्रशमने क्रियत इति ज्ञेयम्। उक्तं हि भगवता व्यासेन 'अद्भ्यग्निरुक्षता (?) अश्मनो लोहमुत्थितं तस्मात्सर्वत्रगं तेज' इति ॥ २—४ ॥

अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम्।
तद्वर्षास्वम्बुयोनित्वात्संक्लेदं गुडवद्गतम् ॥ ५ ॥
सर्पत्यम्बुधरापाये तदगस्त्यो हिनस्ति च।
प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये ॥ ६ ॥

अष्टवेगमिति मनुष्यापेक्षयाष्टवेगं। दशगुणा इत्यग्रे वक्ष्यमाणाः। उपक्रमं चिकित्सानुष्ठानभेदः। सर्वविषविशेषप्रकोपे हेतुमाह—तद्वर्षास्विति। गुडो यथा अंबुयोनित्वात् वर्षासूपक्लिन्नो भवति तथा विषमपि क्लिन्नं च विसर्पति उत्क्लिष्टशक्तिकं भवति। अतएवाशीविषार्ताः अतिपीडिता भवन्ति अंबुधराणां वृद्धिकारणं वर्षागमः। अगस्त्यप्रभावाच्च न हिनस्ति पराधिकारित्वाद्विषस्य ॥ ५—६ ॥

सर्पाः कीटोन्दुरा लूता वृश्चिका गृहगोधिकाः।
जलौका मत्स्यमण्डूकाः शलभाः सकृकण्टकाः॥७॥
श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः।
दंष्ट्रिणोऽमी विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ॥ ८ ॥

सर्पा इत्यादिना जङ्गमस्थावरयोनिद्वयं विषस्य संक्षेपादेवाह। यद्यपि विषगुणा अग्रे उद्दिष्टास्तथा गुणानां गुण्यपेक्षत्वात् अग्रे विषस्य गुणिनः स्थावरजङ्गमभेदभिन्नस्याभिधानं विषस्य कार्यकारणगुणप्राधान्यख्यापनार्थम्। सर्पादीनां भेदाः अग्रत एव वक्तव्याः। आदिग्रहणात्तन्त्रांतरोक्तानां ग्रहणं। अत्र दंष्ट्रिसर्पिप्राधान्याद्दंष्ट्रिण इत्युक्तं। तथा दंष्ट्रोत्थस्य सर्वविषप्राधान्यात्। अदंष्ट्रोत्थानामपि उंदरुविषादीनां ग्रहणं। जङ्गमस्य विषस्य उक्तान्यधिष्ठानानि षोडश दंष्ट्रानिःश्वासनखमूत्रलालास्पर्शशब्दगुदास्थिपित्तासृक्शकृत्शुक्रशिराणि देहे पतितानि इत्याहुः ॥ ७—८ ॥

मुस्तकं पौष्करं क्रौञ्चं वत्सनाभं बलाहकम्।
कर्कटं कालकूटेन्द्रकरवीरकसंज्ञकम् ॥ ९ ॥
गालवेन्द्रायुधं तैलं मेषकं कुशपुष्पकम्।
रोहिषं पुण्डरीकाक्षं लाङ्गलक्यञ्जनाभकम् ॥ १० ॥
सङ्कोचं मर्कटं शृङ्गीविषं हालाहलं तथा।
एवमादीनि चान्यानि मूलजानि स्थिराणि च ॥११॥

स्थावरजे विषे मूलजानीति पदं मूलजस्य बहुत्वात् प्राधान्यात्। तेन पत्रपुष्पादिजानामपि विषाणां ग्रहणं। यदुक्तं सुश्रुते 'मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सारएव तु ॥ निर्यासो धातवश्चैव कंदश्च दशमं स्मृतम्'। कंदस्त्विह मूलशब्देनैव गृहीतः। एतेषां च संज्ञासंबन्धे शबरकिरातादय एव तद्विधा प्रमाणं ते हि गुरुपरंपरया व्याख्यानयन्ति ॥ ९—११ ॥

गरं संयोगजं चान्यद्गरसंज्ञं गदप्रदम्।
कालान्तरविपाकित्वान्न तदाशु हरत्यसून् ॥ १२ ॥

स्थावरजङ्गमसंभवमेव तृतीयं विषमाह—गरं संयोगजमित्यादि। गरार्थः संयोगो एषां ते गरसंयोगाः द्रव्यभेदास्तेभ्यो जातं संयोगजम्।गरं तन्त्रे संज्ञा यस्य तत् गरसंज्ञं चिरकारित्वाद्रोगजनकं आशुप्राणहरं। एतदेवाह—कालान्तरेत्यादि। सुश्रुतेऽपि त्रिविधमेव विषमुक्तम् 'स्थावरं जङ्गमं चैव कृत्रिमं विषमि'त्यनेन। यत्तु दूषीविषमग्रे वक्ष्यति तत् त्रिविधान्तर्गतं दर्शयिष्यामः। गरन्तु द्विविधं निर्विषद्रव्यसंयोगकृतं तथा सविषद्रव्यसंयोगकृतं तत्राद्यं गरसंज्ञं उत्तरं तु कृत्रिममिति व्यवस्था। इमां व्यवस्थां गृहीत्वैवमुक्तं रसायनीये। 'दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे' इति। तथा वृद्धकाश्यपेप्युक्तं 'संयोगे द्विविधं प्रोक्तं तृतीयं विषमुच्यते। गरं स्यादविषं तत्र सविषं कृत्रिमं मत'मिति ॥ १२ ॥

निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम्।
शोफं चैवातिसारं च जनयेज्जङ्गमं विषम् ॥ १३ ॥
स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम्।
फेनवम्यरुचिश्वासमूर्च्छाश्च जनयेद्विषम् ॥ १४ ॥
जङ्गमं स्यादधोभागमूर्ध्वभागं तु मूलजम्।
तस्माद्दंष्ट्रिविषं मौलं हन्ति मौलं च दंष्ट्रिजम् ॥१५॥

निद्रामित्यादिना तथा ज्वरमित्यादिना जङ्गमस्थावरविषस्य लिङ्गानि जङ्गमस्थावरयोः परस्परोपरोधात्। तद्गतधर्ममभिधायहेतुमत्परस्परोपघातकत्वमाह—जङ्गममित्यादि। तस्मादिति परस्परं विरुद्धगामित्वात्। एतेन च यद्वक्ष्यति........ तदुपपन्नं भवति। ननु विषं विषघ्नमुक्तम् यत्प्रभावस्तत्र कारणमिति। आत्रेयभद्रकाप्यीये प्रभावेण विषस्य विषहरणा-

शिधानात् । इत्युपपत्तिविरुद्धं वर्णनम् । यदि प्रभावः कारणं न स्यात् । तदा यत्किंचिदूर्ध्वभागं मदनफलादि तद्दंष्ट्राविषहरं स्यात् । यद्वाधोभागं त्रिवृतादि मौलविषं हन्यात् । नचैतद्दृष्टं तस्मात् । प्रभावस्यैवानुगुणे ईषन्मात्रकारणमेतत् । अधोभागत्वमूर्ध्वभागत्वं चेति ॥ १३—१५ ॥

तृण्मोहदन्तहर्षप्रसेकवमथुक्लमा भवन्त्याद्ये ।
वेगे रसप्रदोषादसृक्प्रदोषाद्द्वितीये च ॥ १६ ॥
वैवर्ण्यभ्रमवेपथुमूर्च्छाजृम्भाङ्गचिमिचिमातमकाः
दुष्टपिशिता तृतीये मण्डलकण्डूश्वयथुकोठाः ॥१७॥
वातादिजाश्चतुर्थे छर्दिर्दाहाङ्गशूलमूर्च्छाद्याः ।
नीलादीनां तमसश्च दर्शनं पञ्चमवेगे च ॥ १८ ॥
षष्ठे हिक्का भङ्गः स्कन्धेस्यात्तु सप्तमेऽष्टमे मरणं नृणाम्
चतुष्पादादीनां स्याच्चतुर्विधः पक्षिणां त्रिविधः १९
सीदत्याद्ये भ्रमति च चतुष्पदो वेपते ततः शून्यः ।
मन्दाहारश्च ततो म्रियते श्वासेन हि चतुर्थे ॥ २०॥
ध्यायति विहगः प्रथमे वेगे प्रभ्रास्यति द्वितीये तु ।
स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वम् ॥२१॥

तृण्मोहेत्यादिना दंष्ट्रिविषवेगलक्षणमाह—सुश्रुते 'एकैककलातिक्रमेण सप्तवेगा उदीरिताः । इह कलालं घन इति सप्तवेगाः अष्टमे तु सप्तकलालं घनोत्तरकालं मारको वेग' इति सुश्रुते विशेषः । वातादिजा इति यथायोग्यतया एकदोषद्विदोषत्रिदोषजाः आदिशब्दः प्रकारवाची । सुश्रुतवचनान्नीलादीनामित्यत्र आदिशब्देन प्रधानवाचिना नीलप्रधानेतरवर्णदर्शनं भवति । षष्ठे हिक्केति च्छेदः । विषवेगप्रस्तावात् चतुष्पादपक्षिणोऽपि विषवेगानाह । एतद्वेगाभिधानेन विषवेगहतस्य मांसं नोपादेयम् । यतस्तस्य विषार्दितस्य सर्वं शरीरं विषवद्भवति चतुःपादादीनां अन्यवेगत्वं सत्वान्यत्वात् । अवसीदतीत्यादिद्वितीये । शूल इत्यादि तृतीये ॥१६—२१॥

लघुरूक्षमाशुविशदं व्यवायि तीक्ष्णं विकासि सूक्ष्मंच
उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः ॥ २२॥
रौक्ष्याद्वातमशैत्यात्पित्तं सौक्ष्म्यादसृक्प्रकोपयति।
कफमव्यक्तरसत्वादन्नरसांश्चानुवर्तते शीघ्रम् ॥२३॥
शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं देहम् ।
तीक्ष्णत्वान्मर्मघ्नं प्राणघ्नं तद्विकासित्वात् ॥ २४ ॥
दुरुपक्रमं लघुत्वाद्वैशद्यात्स्यादसक्तगतिदोषम् ।
दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयति ॥ २५ ॥

विषगुणानाह—लघ्वित्यादि । प्रत्येकं गुणानां कार्यमाह । अशैत्यादित्युष्णत्वात् सौक्ष्म्यादसृक्प्रकोपणं असृजोऽपि सूक्ष्ममार्गानुसारित्वात् अव्यक्तरसत्वात् कफं अन्नग्रहणेन योगवाही भवति । विषमपि रसमांसानुयातं सर्वत्रानुगतं भवति । शीघ्रेत्यादौ- शीघ्रत्वादाशु व्याप्नोति व्यवायित्वात्केवलं देहं व्याप्नोतीति विज्ञेयम् । व्यवायित्वं सर्वतः प्रसरणशीलत्वं पानीयपतिततैलवत् । तीक्ष्णत्वान्मर्मघ्नमिति । मर्मणां सौम्यानां मृदूनां तीक्ष्णेन विरुद्धत्वात् बोद्धव्यम् । विकासित्वादिति विकसनशीलत्वात् । सर्वत्र हि कस हिंसार्थः । लघुत्वादित्यनवस्थितत्वात् । यस्य चानवस्थितत्वं तस्य भेषजेणोपक्रमणम् अकिंचित्करं । असक्ता विश्रान्ता दोषेषु गतिर्यस्य तत् असक्तगतिदोषं लघुत्वादनवस्थितत्वं । विशदं पिच्छाभागरहितत्वात् क्वचिन्न सज्जति । अत्र च गुणानां प्रतिनियमेन विरुद्धकर्मकरणे विषस्याचिन्त्यत्वमेव ज्ञेयम् । तेन रूक्षादिभिः श्लेष्मक्षयात् अद्भवा शङ्कनीयं सुश्रुते च विषगुणे पाकित्वमुक्तं तदाशुकारिविषेर्ति प्रयोजनमिति नेहोक्तम् । तथाहि विषैः तावन्तं कालमपेक्षन्ते येन यावदस्य पाको भवत्यविचार्य । सुश्रुते च कालान्तरप्रकोपादि यद्द्वयमुक्तं तदिहापि दूषीविषे चिन्तनीयमिति ॥ २२—२५ ॥

स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु ।
तृण्मूर्च्छारुचिमोहगलग्रहच्छर्दिफेनादि ॥ २६ ॥
पित्ताशयस्थितं पैत्तिकस्य कफवातयोर्विषं तद्वत् ।
तृट्कासज्वरवमथुक्लमदाहतमोऽतिसारादि ॥२७॥
कफदेशगतं च कफस्य दर्शयेद्वातपित्तयोश्चैतत् ।
लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि ॥ २८ ॥

संप्रति स्थानविशेषप्राप्त्या लिङ्गविशेषानाह—वातिकस्येत्यादि । विषं मद्यं यद्यपि त्रिदोषकोपनं स्थानप्रकृतिविशेषप्राप्त्या तद्दोषप्रकोपमधिकं करोति । वातिकस्येति वातप्रकृतेः । वातस्थाने पक्वाशयादौ कफपित्तलिङ्गमीषदिति वचनेन वातलिङ्गानि बहूनि भवन्ति तानि तृण्मूर्च्छेत्यादिनोक्तानि ज्ञेयानि । एवं उत्तरत्रापि योज्यम् । कफवातयोस्तद्वदिति ईषदित्यर्थः । कफस्येत्यादौ चकारात्कफप्रकृतेरित्यर्थः । ईषद्वातपित्तयोरिति योज्यम् ॥ २६—२८ ॥

दूषीविषं तु शोणितदुष्ट्यरुकिटिभकोठादिरक्तलिङ्गं च ।
विषमेकैकं दोषं संदूष्य हरत्यसूनेवम् ॥ २९ ॥

दूषीविषलक्षणमाह—दूषीत्यादौ । कोठो वरटीदंशशोथाकारः । कालान्तरप्रकोपं दूषीविषम् । उक्तंचान्यत्र 'यस्माद्दूष्यते धातून् तस्माद्दूषीविषं स्मृत'मिति । एवंभूतं च गरमेव प्रायो भवति । तथा स्थावरं जङ्गमं च भवति । यदुक्तं सुश्रुते 'जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा । स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति । इहापि दूषीविषाः कीटाः हीनवीर्यविषा वक्तव्याः । विषमेकैकमित्यादिना स्याद्वातिकस्येत्यादिना यदुक्तं तस्यैकैकदोषस्यात्यर्थकोपमाह—संदूष्येति अत्यर्थं दूषयित्वा ॥ २९ ॥

क्षरति विषतेजसासृक्,
तत्खानि निरुध्य मारयति जन्तुम् ।
पीतं मृतस्य हृदि तिष्ठति
दष्टविद्धयोर्दंशदेशे स्यात् ॥ ३० ॥

नीलौष्ठदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः ।
शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी च ॥३१॥
क्षतजं क्षताच्च नायात्युक्तान्येतानि मरणलिङ्गानि ।
एभ्योऽन्यथा चिकित्सा तेषां चोपक्रमाञ्छृणु मे॥३२

क्षरतीत्यादिना पीतविषलक्षणमाह । विषं मृतस्य हृदि तिष्ठति दष्टविद्धयोः दंशदेशे विषं स्यात् । विषमृतस्य विशेषज्ञानार्थं लक्षणमाह—नीलौष्ठेत्यादि । दण्डराजिः दण्डाकारा रेखा ॥ ३०—३२ ॥

मन्त्रारिष्टोत्कर्तननिष्पीडनचूषणाग्निपरिषेकाः ।
अवगाहनरक्तमोक्षणवमनविरेकोपधानानि ॥३३॥
हृदयावरणाञ्जननस्यधूमलेहौषधप्रशमनानि ।
प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः ॥ ३४ ॥

मन्त्रेत्यादिना मन्त्रस्य विषहरेषु श्रेष्ठत्वादग्रेऽभिधानात् । 'विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः । यथा निवार्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः ॥ ३३—३४ ॥

मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिकाः ।
स्युरुपक्रमा यथा यत्र योज्याः शृणु तथा तान् ३५
दंशात्तु विषं दष्टस्याविसृतं वेणिकां भिषग् बद्ध्वा ।
निष्पीडयेद्भृशं दंशमुद्धरेन्मर्मसंवर्ज्यं वा ॥ ३६ ॥
तं दंशं वा चूषेन्मुखेन यवचूर्णपांशुपूर्णेन ।

अरिष्टा द्विविधाः मन्त्रेण रज्ज्वादिभिर्वा विषोपरिबन्धः उपधानं विषमं मस्तके भेषजदानं हृदयावरणं हृदयरक्षकमौषधं प्रतिविषं विषान्तरप्रयोगः । मृतसंजीवनकरं भेषजं ! शेषं अग्रे ग्रन्थेन स्फुटं भविष्यति । अविसृतमित्यप्राप्तमरणं वेणिकां बध्वेति । एतेन सामान्याभिधानेन मन्त्रव्यापारेऽपि अभिधानं कल्पते । उक्तं चान्यत्र 'अरिष्टानामपि मन्त्रैः बध्नीयान्मन्त्रकोविदः' सा च बन्धादिभिर्बद्धा विषप्रतिकरी मता । निष्पीडयेदिति निष्पीडनेन उद्धरेदिति उत्कृत्यापहरेत् । मर्मवर्ज्यमिति मर्मण्यभिघातं निषेधयति । यवचूर्णपांशुपूर्णेन चूषेत् दंशमुखावरणं विषसंबन्धपरिहारार्थं ॥ ३५—३६ ॥

प्रच्छन्वेधजलौकाशृङ्गैः स्राव्यं ततो रक्तम् ॥ ३७ ॥
रक्ते विषप्रदुष्टे दुष्येत्प्रकृतिं ततस्त्यजेत्प्राणान् ।
तस्मात्प्रघर्षणैरसृग् वर्तमानं प्रवर्त्यं स्यात् ॥ ३८ ॥
त्रिकटुगृहधूमरजनीपञ्चलवणाः सवार्ताकाः ।
घर्षणमतिप्रवृत्ते वटादिभिः शीतलैर्लेपः ॥ ३९ ॥
रक्तं हि विषाधानं वायुरिवाग्नेः प्रदेहसेकैस्तत् ।
शीतैः स्कन्दति तस्मिन् स्कन्ने व्ययं याति विषवेगः
विषवेगान्मदमूर्च्छाविषादहृदयद्रवाः प्रवर्तन्ते ।
शीतैर्निर्वर्तयेत्तान् न वीज्यैश्च लोमहर्षः स्यात्॥४१॥

प्रच्छेनेति रक्तमोक्षणमुपक्रममाह । उपक्रमाणां च व्यतिक्रमाभिधानेन नियमेन क्रमयोगं निषेधयति । रक्तस्रावणोपपत्तिमाह—प्रकृतिरिति देहधात्वादिस्वभावः । प्रघर्षणैरिति व्रणादिभिः प्रकर्षणेन चेत्यर्थः । प्रतिसारणमिति विवृत्तं प्रघर्षणमिति । विषाधानमिति विषस्य प्रसारकं । स्कन्दति स्थिरं भवति ॥ ३७—४१ ॥

तरुरिव मूलच्छेदा
दंशच्छेदान्न वृद्धिमुपयाति विषम् ।
आचूषणमानयनं
जलस्य सेतुर्यथा तथारिष्टाः ॥ ४२ ॥
त्वङ्मांसगतो दाहो
दहति विषस्रावणं हरति रक्तात् ।
पीतं वमनैः सद्यो
हरेद्विरेकैर्द्वितीये तु ॥ ४३ ॥

तरुमिवेत्यादिना च्छेदादीनां विषहरोपपत्तिमाह—सेतुर्यथेति । विषविरोधक इत्यर्थः । द्वितीयवेगे इति शेषः ॥ ४२—४३ ॥

आदौ हृदयं रक्ष्यं तस्यावरणं पिबेद्यथालाभम् ।
मज्जानं मधुघृतगैरिकमथ गोमयरसं वा ॥ ४४ ॥
इक्षुं सुपक्वमथवा काकं निष्पीड्य तद्रसं वलम् ।
छागादीनां वाऽसृग्भस्मृदं वा पिबेदाशु ॥ ४५ ॥
क्षारोऽगदस्तृतीये शोफहरैर्लेखनं समध्वम्बु ।
गोमयरसश्चतुर्थे वेगे सकपित्थमधुसर्पिर्भिः ॥४६॥
काकाण्डशिरीषाभ्यां,
स्वरसेनाश्च्योतनमञ्जने नस्यम् ।
स्यात्पञ्चमेऽथ षष्ठे,
संज्ञायाः स्थापनं कार्यम् ॥ ४७ ॥
गोपित्तयुता रजनी,
मञ्जिष्ठामरिचपिप्पलीपानम् ।
विषपानं दष्टानां
विषपीते दंशनं चान्ते ॥ ४८ ॥

आदाविति सर्वोपक्रमादौ । तस्येति हृदयस्य । यथालाभमिति वक्ष्यमाणहृदयावरणयोगेषु यथाप्राप्तिहृदयावरणं क्षाराग्नेर्वक्ष्यमाणं तद्विशेषेण शोफहरमिति शेषः । काकांडा शुशुभेदः । गोपित्तयुता रजनी आश्च्योतनादिषु ज्ञेया । अन्ते इति सर्वोपक्रमशेषे सप्तमे वेगे सर्पेण दंशनं कार्यं ४४—४८ ॥

शिखिपित्तार्धयुतं स्या-
त्पलाशबीजमगदो मृतेषु मतः ।
वार्ताकुफाणितागार,
धूमगोपित्तनिम्बं वा ॥ ४९ ॥
गोपित्तयुतैर्गुलिकाः
सुरसाग्रन्थिहरिद्रजनीमधुककुष्ठैः ।

शस्ता मूत्रेन तु शिरी-
पपुष्पकाकाण्डकरसैर्वा ॥ ५० ॥
काकाण्डसुरसगवाक्षी-
पुनर्नवावायसीशिरीषफलैः ।
उद्बद्धविषजलमृते-
लेपौषधनस्यपानानि ॥ ५१ ॥

अष्टमे वेगे शिखिपित्तेत्यादिना मृतसंजीवनयोगमाह— मृत इति । उद्बद्धत्यादिभिस्त्रिभिः संबध्यते । लेपौषधस्य पानानि इत्यादौ उद्बद्धत्वेत्यादिषु यथायोग्यतया ज्ञेयाः ॥ ४९—५१ ॥

स्पृक्काप्लवस्थौणेयकाकाक्षीशैलेयरोचनास्तगरम् ।
ध्यामककुङ्कुममांसीसुरसाग्रैलालकुष्ठघ्नाः ॥ ५२ ॥
बृहती शिरीषपुष्पं श्रीवेष्टकपद्मचारटिविशालाः ।
सुरदारुपद्मकेशरसावरकमनःशिलाकौन्त्यः ॥५३॥
जात्यर्कपुष्परसरजनीद्वयहिङ्गुपिप्पलीलाक्षाः ।
जलमुद्गपर्णिचन्दनमधुकमदनसिन्धुवाराश्च ॥५४॥
शम्याकलोध्रमयूरकगन्धफलीनाकुलीविडङ्गाश्च ।
पुष्ये संहृत्य समं पिष्ट्वा गुलिका विधेयाः स्युः ५५
सर्वविषघ्नो जयकृद्विषमृतसंजीवनो ज्वरनिहन्ता ।
श्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥ ५६ ॥
भूतविषजन्त्वलक्ष्मी-
कार्मणमन्त्राग्न्यशन्यरीन्हन्यात् ।
दुःस्वप्नस्त्रीदोषा-
नकालमरणाम्बुचौरभयम् ॥ ५७ ॥
धनधान्यकार्यसिद्धिः श्रीपुष्ट्यायुर्विवर्धनो धन्यः ।
मृतसंजीवन एष प्रागमृताद्ब्रह्मणा विहितः ॥५८॥

इति मृतसंजीवनी ।

पृक्केत्यादौ पृक्का सौराष्ट्रिका कुष्ठघ्नः खदिरः । कुम्भीरेणुका मयूरकोऽपामार्गः । गन्धफली प्रियङ्गुः । नाकुली रास्ना । धारणशब्देन शरीरे धारणं । गृहस्थ इति गृहे तिष्ठन् मन्त्रोऽभिचारमन्त्रः । स्त्रीदोषमिति स्त्रीदत्तगरादिदोषं । प्रागमृतादिति अमृतोत्पत्तेः प्राक् । एतेन चामृतसमानत्वं चास्य दर्श्यते ॥ ५२—५८ ॥

मन्त्रैर्धमनीबन्धोऽपामार्जनं कार्यमात्मरक्षा च ।
दोषस्य विषं यस्य स्थाने स्यात्तं जयेत्पूर्वम् ॥ ५९ ॥
वातस्थाने स्वेदो दध्ना नतकुष्ठकल्कपानं च ।
घृतमधुपयोऽम्बुपानावगाहसेकाश्च पित्तस्थे ॥६०॥
क्षारागदः कफस्थानगते स्वेदस्तथा शिराव्यधनम् ।
दूषीविषेऽथ रक्तस्थिते शिराकर्म पञ्चविधम् ६१ ॥
भेषजमेवं कल्प्यं भिषग्विदा सर्वदा लक्ष्यं सर्वम् ।
स्थानं जयेच्च पूर्वं स्थानस्थस्याविरुद्धं च ॥ ६२ ॥
विषदूषितकफमार्गः स्रोतःसंरोधरुद्धवायुश्च ।
मृत इव श्वसेन्मर्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च ६३

मन्त्रैरित्यादौ अपामार्जनमिति प्रतिलोमेन मार्जनं मन्त्रैरेव कार्यम् । आत्मरक्षा भूतावेशनिषेधार्थम् । जयेदिति स्थानिनं दोषं जयेत् । स्वेदो यद्यपि निषिद्धत्वेनोक्तः तथापि वातस्थानविशेषत्वात् विधीयते । स्वेदस्तु प्रायो भोजनादिविधानवत् अस्य प्रयोगाचतुर्विंशत्युपक्रमे नोक्तः । किंवा अग्निशब्देन स्वेदोऽपि गृह्यते । पित्तस्थेति पित्तस्थानस्थे । दूषीविष इत्यादौ पञ्चविधौ शिराकर्म इति पञ्चशिराव्यधः । स्थानस्थस्येति स्थानगतविषस्याविरुद्धं च कुर्यादिति शेषः । स्रोतःसंरोधेन रुद्धो वायुर्यस्य सः । असाध्यलिङ्गैरिति प्रागुक्तनीलोष्ठादिभिः ॥ ५९—६३ ॥

चर्मकषायाः कल्कं बिल्वसमं मूर्ध्नि काकपदमस्य ।
कृत्वा कुर्यात्कटभीं कटुकट्फलप्रधमनं च ॥ ६४ ॥
छागगव्यमाहिषाविककौक्कुटाब्जमांसम् ।
दद्यात्काकपदोपरि सत्से विषेणैव सहसा ॥ ६५ ॥
घ्राणाक्षिकर्णजिह्वाकण्ठनिरोधेषु कर्म नस्तः स्यात् ।
वार्ताकुबीजपूरकज्योतिष्मत्यादिभिः पिष्टैः ॥ ६६ ॥
अञ्जनमक्ष्युपरोधे कर्तव्यं बस्तमूत्रपिष्टैस्तु ।"
दारुव्योषहरिद्राकरवीरकरञ्जसुरसैस्तु ॥ ६७ ॥
श्वेता वचाश्वगन्धा-
हिङ्ग्वमृता कुष्ठसैन्धवे लशुनम् ।
सर्षपकपित्थमध्यं
तुण्डुककरञ्जबीजानि ॥ ६८ ॥
व्योषं शिरीषपुष्पं द्विरजनी वंशलोचनं च समम् ।
पिष्ट्वा ह्यजस्य मूत्रेण गोऽश्वपित्तेन सप्तकृत्वः ॥६९॥
व्यत्यासभावितोऽयं,
निहन्ति शिरसि स्थितं विषं क्षिप्रम् ।
सर्वज्वरभूतग्रह-
विषूचिकाजीर्णमूर्च्छार्ती ॥ ७० ॥
उन्मादापस्मारौ काचपटलनीलिकाशिरोदोषान् ।
शुष्काक्षिपाकपिल्लार्बुदार्मकण्डूतमोदोषान् ॥ ७१ ॥
क्षयदौर्बल्यमदात्यय-
पाण्डुगदांश्चाञ्जनात्तथा मोहान् ।
लेपाद्दिग्धक्षतलीढ,-
दष्टविषपीतविषघाती ॥ ७२ ॥
अर्शःस्वानद्धेषु च गुदलेपो योनिलेपनं स्त्रीणाम् ।
मूढे गर्भे दुष्टे ललाटलेपः प्रतिश्याये ॥ ७३ ॥
दद्रुकण्डूकिटिभे कुष्ठे श्वित्रेषु च विचर्चिकादिषु लेपः
गज इव तरूंस्त्वगदो निहन्त्यगदगन्धहस्त्येषः ७४

इति गन्धनामा अगदहस्ती ।

चर्मकषाया इति चर्मचटिकाकषायाः। काकपदमिति काकपदकमिव व्रणं। कफमिलत्र कटुकफला तिक्तालाबु किंवा कटु त्रिकटु। ज्योतिष्मतीलादीनि षड्विरेचनशताश्रितीयोक्तानि शिरोविरेचनानि। दार्व्यादौ श्वेताकटभी व्यत्यासाद्भावितेति गोपित्तेन भावयित्वा अश्वपित्तेन भावितं ॥ ६४—७४ ॥

पत्रागुरुमुस्तैला निर्यासः पद्मचन्दनं तथा स्पृक्का।
त्वङ्नलदोत्पलवालकहरेणुकोशीरव्याघ्रनखाः ७५
सुरदारुकनककुङ्कुमध्यामककुष्ठप्रियङ्गवस्तगरम्।
पञ्चाङ्गानि शिरीषाद्योपैलामनःशिलाजाज्यः ७६
श्वेतकटभीकरञ्जौ रक्षोघ्नौ सिन्धुवारिका रजनी।
सुरसाञ्जनगैरिकमञ्जिष्ठानिम्बनिर्यासाः ॥ ७७ ॥
वंशत्वगश्वगन्धाहिङ्गुदधित्थास्लवेतसं लाक्षा।
मधुमधुकसोमराजीवचारुहारोचनातगरान् ॥७८॥
अगदोऽयं वैश्रवणाख्यातरुयम्बकेण पञ्चाङ्गः।
अप्रतिहतप्रभावः ख्यातो महागन्धहस्तीति ॥७९॥
पित्तेन गवां पेष्या गुलिकाः कार्यास्तु पुष्ययोगेन।
पानाञ्जनप्रलेपैः प्रसाधयेत्सर्वकर्माणि ॥ ८० ॥
पैल्यं कण्डूं तिमिरं रात्र्यन्ध्यं काचमर्बुदं पटलम्।
हन्ति सततं प्रयोगाद्धितसितपथ्याशिनां पुंसाम् ८१
विषमज्वरानजीर्णान्
दद्रुकण्डूविसूचिकां चोपहन्ति नृणाम्।
विषं मूषिकलूतानां सर्वेषां पन्नगानां च।
आशुविषं नाशयति समूलजमथ कन्दजं सर्वम् ८२
एतेन लिप्तगात्रः सर्पान्गृह्णाति भक्षयेच्च विषम्।
कालपरीतोऽपि नरो जीवति नित्यं निरातङ्कः ८३॥
आनद्धे गुदलेपो योनिलेपश्च मूढगर्भाणाम्।
मूर्च्छार्तिषु च ललाटे प्रलेपनमाहुः प्रधानतमम् ८४
भेरीमृदङ्गपटहाश्छत्राण्यमुना तथा ध्वजपताकाः।
लिप्ताहिविषनिरस्तैः प्रध्वनयेद्दर्शयेन्मतिमान् ॥८५॥
यत्र च सन्निहितोयं न तत्र बालग्रहा न रक्षांसि।
न च कार्मणवेताला वहन्ति नाथर्वणा मन्त्राः ८६
सर्वग्रहा न तत्र प्रभवन्ति न चाग्निशस्त्रनृपचौराः।
लक्ष्मीश्च तत्र भजते यत्र महागन्धहस्त्यस्ति ॥८७॥
पिष्यमाण इमं चात्र सिद्धं मन्त्रमुदीरयेत्।
मम माता जया नाम विजयो नाम मे पिता ॥८८॥
सोऽहं जयो जयापुत्रो विजयोऽथ जयामि च।
नमः पुरुषसिंहाय विष्णवे विश्वकर्मणे ॥ ८९ ॥
सनातनाय कृष्णाय भवाय विभवाय च।
तेजो वृषाकपेः साक्षात्तेजो ब्रह्मेन्द्रयोर्यमे ॥ ९० ॥
यथाहं नाभिजनामि वासुदेवपराजयम्।
मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ॥ ९१ ॥
अनेन सत्यवाक्येन सिध्यतामगदो ह्ययम्।
हिलिमिलिसंस्पृष्टे रक्ष सर्वभेषजे तु मे ॥ ९२ ॥
इति महागन्धहस्ती नामागदः।

ऋषभकजीवकभार्गी-
मधुकोत्पलधान्यकेशराजाज्यः।
सलितगिरिकोलमध्याः
पेयाः श्वासज्वरादिहराः ॥ ९३ ॥
हिङ्गु च कृष्णायुक्तं कपित्थरसमुग्रलवणं च।
समधुसितौ पातव्यौ ज्वरहिक्काश्वासकासघ्नौ ९४॥
लेहः कोलास्थ्यञ्जनलाजोत्पलमधुघृतैर्वस्याम्।
बृहती ह्याढकीपत्रधूमवर्तिस्तु हिक्काघ्नी ॥ ९५ ॥
शिखिबर्हिबलाकास्थीनि
सर्षपाश्चन्दनं च घृतयुक्तम्।
धूमो गृहशयनासन-
वस्त्रादिषु शस्यते विषनुत् ॥ ९६ ॥
घृतयुक्ते नतकुष्ठे भुजगपतिशिरः शिरीषपुष्पं च।
धूमागदः स्मृतोऽयं सर्वविषघ्नः श्वयथुहृच्च ॥९७॥
जतुसेव्यपत्रगुग्गुलुभल्लातकककुभपुष्पसर्जरसाः।
श्वेता धूमा उरगाखुकीटवल्मीकमिहराः स्युः ॥९८॥
तरुणपलाशक्षारस्रुतं पचेच्चूर्णितैः सह समांशैः।
लोहितमृद्रजनीद्वयशुक्लसुरसमञ्जरीमधुकैः ॥९९॥
लाक्षासैन्धवमांसीहरेणुहिङ्गुद्विशारिवाकुष्ठैः।
सव्योषैर्बाह्लीकैर्दर्वीलेपनं वट्टयेद्यावत् ॥ १०० ॥
सर्वविषशोथगुल्मत्वग्दोषार्शोभगन्दरप्लीह्ः।
शोथापस्मारक्रिमिभूतस्वरभेदकण्डुपाण्डुगदान् ॥
मन्दाग्नित्वं कासं सोन्मादं नाशयेन्नृणामाशु।
गुलिकाश्छायाशुष्काः कोलसमास्ताःसमुपयुक्ताः॥
इति क्षारागदः।

ऋषभकेत्यादिना विषोपद्रवश्वासादिचिकित्सोच्यते। सितगिरिः श्वेतापराजिता। कोलमध्यं बदरमज्जा। भुजगपतिशिर इति द्विमुखसर्पशिरः। पलाशक्षारस्रुतमिति क्षारपरिस्रावां धारितं, लोहितमृत् गैरिकं, सुरसमञ्जरी पर्णासभेदः ॥ ९३—१०२ ॥

विषपीतदष्टविद्धेष्वेतद्दिग्धे च वाच्यमुद्दिष्टम्।
सामान्यतः पृथक्त्वान्निर्देशमतःशृणु यथावत् १०३
रिपुयुक्तेभ्यो नृभ्यः स्वेभ्यः स्त्रीभ्योऽथवा भयं नृपतेः।
आहारविहारगतस्तस्मात्प्रेष्यान्परीक्षेत ॥ १०४ ॥
अत्यर्थशङ्कितः स्या
द्वहुवागथवाल्पवाग्विगतलक्ष्मीः।
प्राप्तः प्रकृतिविकारं विषप्रदाता नरो ज्ञेयः ॥१०५॥
दृष्ट्वैवं न तु सहसा भोज्यं नस्येत्तदन्नमग्नौ तु।
सविषं हि प्राप्यान्नं बहून्विकारान्भजत्यग्निः ॥१०६॥

शिखिबर्हविचित्रार्चिस्तीक्ष्णाल्परूक्षकुणपधूमश्च ।
स्फुटति च सशब्दमशब्द
सेकावर्तो विहितार्चिरपि स्यात् ॥ १०७ ॥
पात्रस्थं च विवर्णं
भोज्यं स्यान्मक्षिकांश्च मारयति ।
क्षामस्वरांश्च काकान्कुर्याद्विरजेच्चकोराक्षि ॥१०८॥
पाने नीला राजी वैवर्ण्यं स्वां च नेक्षते छायाम् ।
विकृतामथवा पश्यति लवणाक्ते फेनमाला स्यात्

अतः श्वणिति विषस्य लक्षणं भेषजस्य पृथक् निर्देशं शृणु इति । विषयुक्तमिति विषयुक्तेत्यर्थः । स्त्रीभ्य इति सौभाग्यार्थं प्रवृत्ताभ्यः । स्त्रीति आहारविहारग इति आहारविहारौ सविषा इत्यनुवर्तते । विरज्येत चकोराक्षीति तृष्णा सविषमन्नं काकांश्च क्षामस्वरान् दर्शनेनैव कुर्यादिति ज्ञेयम् ॥ १०३—१०९ ॥

पानान्नयोः सविषयोर्विरसो गन्धेन रुग् हृदि च ।
मूर्च्छास्यपाणिशोथः क्षुत्यङ्गुलिदाहतोदनखभेदाः
मुखताल्वोष्ठचिमिचिमा,
जिह्वा शूलवती जडा विवर्णा ।
द्विजहर्षहनुस्तम्भास्यदाहलालागलविकाराः ११११
आमाशयं प्रविष्टे वैवर्ण्यं स्वेदसदनमुत्क्लेदः ।
दृष्टिहृदयोपरोधो बिन्दुशतैश्चीयतेचाङ्गम् ॥ ११२ ॥
पक्वाशयं तु याते मूर्च्छामदमोहदाहबलनाशाः ।
तन्द्रा कार्श्यं च विषे पाण्डुत्वं चोदरस्थे स्यात्११३
दन्तपवनस्य कूर्चो विशीर्यते दन्तोष्ठमांसशोफश्च ।
केशच्युतिः शिरोग्रन्थयश्च सविषे शिरोऽभ्यङ्गे११४
दुष्टेऽञ्जनेऽक्षिदाहः स्रावाद्युपदेहशोथरागाश्च ।
खाद्यैरादौ कोष्ठः स्पृश्यैस्त्वग्दूष्यते दुष्टैः ॥ ११५ ॥
स्नानाभ्यङ्गोत्सादनवस्त्रालङ्कारकैर्दुष्टैः ।
कण्ड्वार्तिलोमहर्षाः कोठपिडकचिमिचिमाः शोथाः
एते करचरणदाहतोदरुङ्माङ्गविपाकाश्च ।
भूपादुकाश्वगजचर्मकेतुशयनासनैर्दुष्टैः ॥ ११७ ॥
माल्यमगन्धं म्लायति शिरसो रुजा लोमहर्षकरम्
स्तम्भयति खानि दर्शनमुपहन्ति च नासिकां धूमः
कूपतडागादिजलं दुर्गन्धं सकलुषं विवर्णं च ।
पीतं श्वयथुं कोठान्पिडकांश्च करोति मरणं च ॥

पान इति मद्यादौ पेये । छायामिति प्रतिबिम्बं । लवणाक्ते इति पानविशेषणम् । मुखेत्यादिना मुखसंबन्धे विषलक्षणं । दन्तेत्यादिना दन्तधावनछर्यादीनां विषदुष्टानामेव लक्षणं प्रकरणाज्ज्ञेयम् । दन्तपवनस्य कूर्चः दन्तशोधनमलकूर्चः । विशीर्यत इत्यत्र शीर्णः स्यात् । खाद्येत इति भोज्यैः । स्पृश्यैरित्यभ्यङ्गादिभिः । माल्यमिति विषदुष्टं माल्यं । नासामुपहन्तीति दर्शनमिति चक्षुः ॥ ११०—११९ ॥

आदावामाशयगे वमनं त्वक्स्थे प्रदेहसेकादि ।
कुर्याद्भिषक् चिकित्सां दोषबलं चैव हि समीक्ष्य ॥
इति मूलविषविशेषाः प्रोक्ताः शृणु जङ्गमस्यातः ।
सविशेषचिकित्सितमेवादौ,
तत्रोच्यते तु सर्पाणाम् ॥ १२१ ॥
इह दर्वीकरः सर्पो मण्डली राजिमानिति ।
त्रयो यथाक्रमं वातपित्तश्लेष्मप्रकोपणाः ॥ १२२ ॥
दर्वीकरः फणी ज्ञेयो मण्डली मण्डलाः फणाः ।
बिन्दुलेखो विचित्राङ्गः पन्नगः स्यात्तु राजिमान् ॥
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम् ।
विषं यथाक्रमं तेषां तस्माद्वातादिकोपनम् ॥१२४॥
दर्वीकरकृतो दंशः सूक्ष्मदंष्ट्रापदोऽसितः ।
निरुद्धरक्तः कूर्माभो वातव्याधिकरो मतः ॥ १२५ ॥
पृथ्वर्पितः सशोथश्च दंशो मण्डलिभिः कृतः ।
पीताभः पीतरक्तश्च सर्वपित्तविकारकृत् ॥ १२६॥
कृतो राजिमता दंशः पिच्छिलः स्थिरशोफकृत् ।
स्निग्धः पाण्डुश्च सान्द्रासृक्श्लेष्मव्याधिसमीरणः॥

मण्डलीति मण्डलयुक्तं । बिन्दुना लेखया च विचित्रं अङ्गं यस्य स तथा । दर्वीकरादीनां तु प्रपञ्चस्त्विह पराधिकारत्वेन न कृतः । विशेषादित्यादौ रूक्षमविकं दर्वीकराणां अम्लोष्णं मण्डलीनां स्वादुशीतं राजिमतां, त्रिदोषकोपनत्वेन वातादिकोपनं । विशेषादिह विषं च यद्यप्यव्यक्तरसयुक्तं तथापीह कटुकादिरसविधानं अनुरसाभिप्रायेण ज्ञेयं । यथा आतपे कटुकत्वं तद्वदिहापि, किंवा अव्यक्तदशायामेव अम्लकटुकादीनामधिकत्वं ज्ञेयम् । पृथ्वर्पित इति अवगाढदंष्ट्रार्पितः ॥ १२०—१२७ ॥

वृत्तभोगी महाकायः श्वसन्नूर्ध्वेक्षणः पुमान् ।
स्थूलमूर्धा समाङ्गश्च स्त्रीत्वतः स्याद्विपर्ययात्१२८
क्लीबः स्रस्तस्त्वधोदृष्टिः स्वरहीनः प्रकम्पते ।
स्त्रिया दष्टो विपर्यस्तैरेतैः पुंसो नरोमतः ॥१२९॥
व्यामिश्रलिङ्गैरेतैस्तु क्लीबदष्टं नरं वदेत् ।
इत्येतदुक्तं सर्पाणां स्त्रीपुंक्लीबनिदर्शनम् ॥ १३० ॥
पाण्डुवक्त्रस्तु गर्भिण्या शूनौष्ठोऽप्यसितेक्षणः ।
जृम्भाक्रोधोपजिह्वार्तः सूतया रक्तमूत्रवान् ॥१३१॥
सर्पो गौधेरको नाम गोधाख्यः स्याच्चतुष्पदः ।
कृष्णसर्पेण तुल्यः स्यान्नाना स्युर्मिश्रजातयः १३२
गूढसंपादितं वृत्तं पीडितं लम्बितार्पितम् ।
सर्पितं च भृशाबाधं दंशा येऽन्ये न ते भृशाः ॥
तरुणाः कृष्णसर्पास्तु गोनसाः स्थविरास्तथा ।
राजिमन्तो वयोमध्ये भवन्त्याशीविषोपमाः १३४

वृत्तभोगीत्यादिना सर्पाणां तीव्रविषज्ञानार्थं पुनर्भेदमाह । तत्कृतचिकित्साभेद इहानुक्तोऽपि तन्त्रान्तरे ज्ञेयः । तथाहि

'सावित्रे पच्यते रात्रौ स्त्रियस्तीव्रविषाः सदा' । तथा 'क्लीदष्टो भिषजा कार्यः सूपचारस्त्वनारभे' इति । क्लीवो नपुंसकः । स्वरहीनेत्यादि गाढसंपादितमात्रावगाढं ऊर्ध्वं परिवृत्तं पीडितमतिमात्ररुजाकरम् । लक्षितदंशं अर्पितसकलदंष्ट्राप्राप्तलक्षणं । वयोभेदेन दर्वीकरादीनां तीव्रतामाह—तरुणा इत्यादि । कृष्णसर्पा इति । म्लानः गोनसः इति मण्डलिनः । आशीविषोपमा इति दृष्टिनिःश्वासविषाः ॥ १२८—१३४ ॥

**सर्पदंष्ट्राश्चतस्रस्तु तासां वामाधराः सिताः ।**
**पीता वामोत्तरा दंष्ट्रा रक्तश्यावाधरोत्तरा ॥१३५॥**
**यन्मात्रः पतते विन्दुर्गोवालात्सलिलोद्धृतात् ।**
**वामाधरायां दंष्ट्रायां तन्मात्रं स्यादहेर्विषम् ॥१३६॥**
**एकद्वित्रिचतुर्वृद्धिविषभागोत्तरोत्तराः ।**
**सवर्णास्तत्कृता दंशा बहूत्तरविषा भृशाः ॥१३७॥**

सर्पदंष्ट्रेत्यादिना दंष्ट्राभेदं दंशविशेषज्ञानार्थमाह । दंशस्याधरोत्तरेति दक्षिणाधरारक्ता दक्षिणोत्तरा तु श्यावा । एकद्वित्रिचतुराद्यृद्धिविषभागोत्तरोत्तरमिति एकद्वित्रिचतुरुपजातवृद्धिविषविभागे उत्तरोत्तरमिति वाक्यार्थः । सवर्णा यथा श्वदंष्ट्रासमानवर्णा । बहूत्तरविषा इति उत्तरोत्तरं बहुविषाः यथोत्तरं विषाः । भृशा इति दुःखसाध्याः । दूष्यत्वमपि यथोत्तरं ज्ञेयम् । ननु पूर्वं दर्वीकरादीनां दंशस्य वर्णभेद उक्तः इदानीं तु दंष्ट्राभेदेन वर्णभेद उच्यते । तेन सर्वत्रैव दर्वीकरादौ सर्ववर्णोपपत्तिः । ततः पूर्वोक्तदंशवर्णविरोधः । उक्तंच अत्रैवार्थे आपाढवर्मणा—यत्तु दर्वीकरमण्डली असितः पीतश्च वर्णतो दंशः इति लक्षणेन । यस्मात् अनेकवर्णास्तु दंशाः । अत्रोच्यते दंष्ट्रानुकारिवर्णानां दंशमात्रस्थिते विषे भवति । दर्वीकरादिषु उल्लेखो विहितो यः वर्णः स प्रविसृते विषे भवतीति अवस्थाभेदान्न विरोधः । उक्तंच परिहारवार्तिके 'दंशास्ततः वर्णं दोषजे विसृजे'दिति ॥ १३५—१३७ ॥

**सर्पाणामेव विण्मूत्रात्कीटाः स्युः कीटसंमताः ।**
**दूषीविषाः प्राणहरा इति संक्षेपतो मताः ॥१३८॥**
**गात्रं रक्तं सितं कृष्णं श्यावं वा पिडकान्वितम् ।**
**सकण्डूदाहविसर्पपाकि स्यात्कुथितं तथा ॥१३९॥**
**कीटैर्दूषीविषैर्दष्टं लिङ्गं प्राणहरं शृणु ।**
**सर्पदष्टे यथा शोथो वर्धते सोऽग्रगन्ध्यसृक् ॥१४०॥**
**दंशोऽक्षिगौरवं मूर्च्छा सरुगार्तः श्वसित्यपि ।**
**तृष्णारुचिपरीतश्च भवेद्दूषीविषार्दितः ॥ १४१ ॥**

कीटोत्पत्तिमाह—सर्पाणामित्यादि । कीटशब्दनिरुक्त्यर्थं । अनयोरुपादानं तेनान्यान्यपिकीटकारणानि भवन्तीति ज्ञेयम् । उक्तंहि सुश्रुते—'सर्पाणां शुक्रविण्मूत्रशरपूयदंष्ट्रसंभवाः । वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः' इति । कीटाश्च यद्यपि सुश्रुते वातपित्तकफसन्निपातकोपनाः दण्डिनामादयः सप्तषष्टिः प्रतिपादिताः तथापीह । दूषिविषाः प्राणहरविषाः उग्रगन्ध्यसृक् वर्तते इति उग्रगन्धिलोहितम् ॥१३८—१४१॥

**दंशस्य मध्ये यत्कृष्णं श्यावं वा जालकावृतम् ।**
**दग्धाकृति भृशं पाकि क्लेदशोथज्वरान्वितम् १४२**
**दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्दिशेत् ।**
**सर्वासामेव तासां च दंशे लक्षणमुच्यते ॥ १४३ ॥**
**शोफाः श्वेताः सिता रक्ताः पीता वा पिडका ज्वरः ।**
**प्राणान्तिको भवेच्छ्वासो दाहहिक्काशिरोग्रहाः १४४**

दंशस्य मध्य इत्यादिना दूषिविषलूतादष्टलक्षणम् । लूताश्च अन्यत्राष्टौ साध्याः असाध्याश्चाष्टौ त्रिमण्डलाः सौवर्णिकादय उक्तास्तथा दूषिकत्वात् कण्टकवृश्चिकमण्डूकमत्स्यजलौकाशतपदीगशकमक्षिकाणां सुश्रुतादिषु प्रपञ्चार्थिभिः प्रपञ्चोऽनुसरणीयः । इहतु तन्त्रकारेण प्रपञ्चो न क्रियते ॥१४२—१४४ ॥

**आदंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ।**
**लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥ १४५ ॥**
**मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ।**
**शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः १४६**
**श्यावत्वमथ कार्ष्ण्यं वा नानावर्णत्वमेव वा ।**
**मोहः पुरीषभेदो वा दष्टे स्यात्कृकलासकैः ॥१४७॥**
**दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च ।**
**वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥१४८॥**
**दष्टोऽसाध्यस्तु दृग्घ्राणरसनोपहतो नरः ।**
**मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ १४९ ॥**
**विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा ।**
**लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्यते ॥ १५० ॥**
**हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान् ।**
**दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥ १५१ ॥**
**एकदष्टार्दितः शूनः सरुक् स्यात्पीतकः सतृट् ।**
**छर्दिर्निद्रा च मण्डूकैः सविषैर्दष्टलक्षणम् ॥ १५२॥**
**मत्स्यास्तु सविषाः कुर्युर्दाहशोफरुजं तथा ।**
**कण्डूं शोथं ज्वरं मूर्छां सविषास्तु जलौकसः १५३**
**दाहतोदस्वेदशोथकरी तु गलगोडिका ।**
**दंशे स्वेदं रुजं दाहं करोति च शतपदी ॥ १५४ ॥**
**कण्डूमान्मशकैर्दष्टैस्तच्छोथः स्यान्मन्दवेदनः ।**
**असाध्यकीटसदृशेमसाध्यमशकक्षतम् ॥ १५५ ॥**
**सद्यःप्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।**
**पीडका मक्षिकादंशे तासां तु स्थगिकासुहृत् १५६**

आदंशादित्यादि आखुविषलक्षणं । करभश्च कीटविशेष इति सुश्रुते कीटविशेषे पठितः । एकदंष्ट्रार्पित इति । एक एव दंष्ट्रया कृत इत्यर्थः । अस्थिसाराविषा उक्ता जलौकाश्च पदपदा य उक्ताः संदंशविषयाः गणगोलिकां ज्येष्ठामित्याहुः । अन्येतु शरणमाहुः । शतपदीकारुण्डा असाध्यमशकक्षतमिति ।

पञ्चसु मशकेषु पार्वतीयकृतमसाध्यमाहुः । उक्तं हि सुश्रुते कीटैः प्राणहरैस्तुल्यलक्षणः स्थगिका असुर'इति । कान्तारिकादिषु सुश्रुतोक्तपञ्चमक्षिकासु स्थगिकाख्या मक्षिका प्राणहरीत्यर्थः ॥ १४५—१५६ ॥

श्मशानचैत्यवल्मीकयज्ञाश्रमसुरालये ।
पक्षसन्धिषु मध्याह्ने सार्धरात्रेऽष्टमीषु च ॥१५७॥
न सिद्ध्यन्ति नरा दष्टाः पाषण्डायतनेषु च ।
दृष्टिश्वासमलस्पर्शविषैराशीविषैस्तथा ॥ १५८ ॥
विनश्यन्त्याशु संप्राप्ता दष्टाः सर्वेषु मर्मसु ।
येन केनापि सर्पेण संभवः सर्व एव च ॥ १५९ ॥
शीतसत्त्वावलोष्णक्षुत्तृषार्ते वर्धते विषम् ।
विषं प्रकृतिकालौ च तुल्यौ प्राप्याल्पमन्यथा १६०
वारिविप्रहताः क्षीणा भीता नकुलनिर्जिताः ।
वृद्धा बालास्त्वचो मुक्ताः सर्पा मन्दविषाः स्मृताः
सर्वदेहाश्रितं क्रोधाद्विषं सर्पो विमुञ्चति ।
तद्वेवाहारहेतोर्वा भयाद्वा न प्रमुञ्चति ॥ १६२ ॥
वातोल्वणविषाः प्राय उच्चिटिङ्गाः सवृश्चिकाः ।
वातपित्तोल्वणाःकीटाः श्लैष्मिकाःकणभादयः१६३
यस्य यस्य हि दोषस्य लिङ्गाधिक्यानि लक्षयेत् ।
तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥१६४॥
हृत्पीडोर्ध्वानिलस्तम्भः शिरायासोऽस्थिपर्वरुक् ।
घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥ १६५ ॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता ।
दंशावदरणं शोथो रक्तपीतश्च पैत्तिके ॥ १६६ ॥
वम्यरोचकहृल्लासप्रसेकोत्क्लेशगौरवैः ।
सशैत्यमुखमाधुर्यैर्विद्याच्छ्लैष्माधिकं विषम् ॥१६७॥

संप्रति स्थानकालस्वभावप्रदेशे दष्टानां सर्पाणामसाध्यतामाह—श्मशानेत्यादि । चैत्यःग्रामदेवताप्रायो महातरुः । पक्षसंधिष्विति अमावास्यापौर्णमासीषु । पाषण्डाः कापालिकादयः । आशीविषविषैः इत्यस्यैव लक्षणं दृष्टिश्वासमलस्पर्शविषैरिति । उक्तं हि तन्त्रान्तरे—'दृष्टिश्वासादिभिर्ज्ञेयाः सर्पा आशीविषाः आशुघातित्वात् । विषवृद्धिहेतुमाह—शीतेत्यादि । प्रकृतिकालौ तुल्यौ यथा विषस्य प्रबलपित्तप्रकृतिः शरदृतुश्च काल इति ज्ञेयम् । अल्पमन्यथेति शीतत्वादिविपर्यये अल्पं विषं भवति । वारीत्यादौ मन्दविषत्वमाह । प्रागुक्तं 'सर्वदेहाश्रितं क्रोधा'दिति सर्वदेहाश्रितमपि दंष्ट्रास्वेव विषं विशेषेण ज्ञेयम् । विषचिकित्सार्थं वातोल्वणत्वादिभेदमाह—वातोल्वणेत्यादि । विपरीतगुणैरित्यादिना विषगताधिकवातादिलिङ्गमाह ॥ १५७—१६७ ॥

खण्डेन च व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।
स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥१६८॥
सुशीतैः स्तम्भयेत्सेकैः प्रदेहैश्चापि पैत्तिकम् ।
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ १६९ ॥
विषेष्वपि च सर्वेषु सर्वस्थानगतेषु च ।
अवृश्चिकोच्चिटिङ्गेषु प्रायः शीतो विधिर्हितः १७०
वृश्चिके स्वेदमभ्यङ्गं घृतेन लवणेन च ।
सेकांश्चोष्णान्प्रयुञ्जीत भोज्यं पानं च सर्पिषः १७१
एतदेवोच्चिटिङ्गेऽपि प्रतिलोमं च पांशुभिः ।
उद्वर्तनं सुखाम्बुचूर्णैस्तथावच्छादनं घनैः ॥ १७२ ॥
श्वाग्निदोषप्रकोपात्तु तथा धातुविपर्ययात् ।
शिरोऽभितापो लालास्रावोऽधोवक्त्रस्तथा भवेत्१७३
अन्येऽप्येवंविधा व्यालाः कफवातप्रकोपणाः ।
हृच्छिरोरुग्ज्वरस्तम्भतृषामूर्च्छाकरा मताः १७४
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदोपशोषणम् ।
विदाहरागरुक्पाकाः शोफा ग्रन्थिनिकुञ्चनम् १७५
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ।
ज्वरश्च सविषे लिङ्गं विपरीतं तु निर्विषे ॥ १७६ ॥
तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः ।
पूर्वोक्तं विधिमन्यं च यथावद्ब्रुवतः शृणु ॥१७७॥
हृद्विदाहे प्रसेके वा विरेकं वमनं भृशम् ।
यथावस्थं प्रयोक्तव्यं शुद्धे संसर्जनक्रमः ॥ १७८ ॥
शिरोगते विषे नस्तः कुर्यान्मूलानि बुद्धिमान् ।
बन्धुजीवस्य भार्ग्याश्च सुरसस्यासितस्य च १७९
दक्षकाकमयूराणां मांसासृङ् मस्तके क्षते ।
मूर्ध्नि देयमथो दष्टस्योर्ध्वदष्टस्य पादयोः ॥ १८० ॥
पिप्पलीमरिचक्षारवचासैन्धवशिग्रुकाः ।
पिष्ट्वा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात् ॥ १८१ ॥
कपित्थमामं ससितं क्षौद्रं कण्ठगते विषे ।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥१८२॥
विषे पक्वाशयप्राप्ते पिप्पलीरजनीद्वयम् ।
मञ्जिष्ठा च समं पिष्ट्वा गोपित्तेन नरः पिबेत् ॥१८३॥
मांसं रक्तं च गोधायाः शुष्कं चूर्णीकृतं हितम् ।
विषे रसगते पानं कापित्थरससंयुतम् ॥ १८४ ॥
शेलुमूलत्वगग्राणि बादरौदुम्बराणि च ।
कटभ्याश्च पिबेद्रक्तगते मांसगते पिबेत् ॥ १८५ ॥
सक्षौद्रं खदिरारिष्टं कौटजं मूलमम्भसा ।
सर्वेषु च बले द्वे तु मधूकं मधुकं नतम् ॥ १८६ ॥

वातादिभेदेन चिकित्सामाह—खण्डेनेत्यादि । पुलाकस्तुच्छधान्यं घनैरिति पांशुभिः श्वाग्निदोषेत्यादि—सविषकुक्कुरादिलक्षणं अत्रैव च शुनस्त्रिदोषप्रकोपो भवति । केचित्तु शिरोभितापत्वादि यथोक्तकुक्कुरे तद्दष्टे च भवतीति वदन्ति । विस्तरश्चास्य सुश्रुत एव । अन्येप्येवंविधेति अन्येऽपि शृगालतरक्ष्वादयः एवं संतः कृच्छ्ररोगादिकरा भवन्तीत्यर्थः । उक्तं हि सुश्रुते—'श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदानिलः ।

श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः' इति । कण्डुनिस्तोद इत्यादिना सामान्येन सविषकीटादिदंशलिङ्गं अविषप्राणिदंशलिङ्गं चोच्यते । सर्वेति चतुर्विंशतियथोक्तोपक्रमाः पूर्वोक्ता इत्यत्र वक्ष्यमाणचिकित्सितं पूर्वोक्ते विधावपि अवस्थाविशेषविधायकतया कर्तव्या इत्यर्थः । यदा पूर्वोक्ता इति पाठः तदा उपक्रमा इत्यस्य विशेषणमेतत् । ऊर्ध्वं दष्टस्य पादयोरित्यत्रापि क्षतयोरेव पादयोर्विशेषेण संक्रमणार्थं मांसासृग्दानं देयम् । ताभ्यामिति सिताक्षौद्राभ्यां नतं तगरं शेलुः श्लेष्मातकः । मांसगत इति उत्तरेण संबध्यते । खदिरश्चारिष्टश्चेति खदिरारिष्टः, किंवा खदिरकृतोरिष्टः । मधुकं नतमिति च्छेदः ॥ १६८—१८६ ॥

पिप्पलीं नागरं क्षारं नवनीतेन मूर्च्छितम् ।
कफे भिषगुदीर्णे तु विदध्यात्प्रतिसारणम् १८७"
मांसीकुङ्कुमपत्रत्वक्रजनीनतचन्दनैः ।
मनःशिलाव्याघ्रनखसुरसैरम्बुपेषितैः ॥ १८८ ॥
पाननस्याञ्जनालेपाः सर्वशोथविषापहाः ।
चन्दनं तगरं कुष्ठं हरिद्रे द्वे त्वगेव च ॥ १८९ ॥
मनःशिला तमालश्च रसः कैशर एव च ।
शार्दूलस्य नखश्चैव सुपिष्टं तण्डुलाम्बुना ॥ १९० ॥
हन्ति सर्वविषाण्येव वज्रिवज्रमिवासुरान् ।
रसे शिरीषपुष्पस्य सप्ताहं मरिचं सितम् ॥ १९१ ॥
भावितं सर्पदष्टानां नस्यपानाञ्जने हितम् ।
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत्सुखप्रदम् ॥ १९२ ॥
सिन्धुवारस्य मूलं च श्वेता च गिरिकर्णिका ।
पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम् ॥ १९३ ॥
मञ्जिष्ठा मधुयष्ट्याह्वा जीवकर्षभकौ सिता ।
काश्मर्यं वटशुङ्गानि पानं मण्डलिनां विषे ॥१९४॥
व्योषं सातिविषं कुष्ठं गृहधूमो हरेणुका ।
तगरं कटुका क्षौद्रं हन्ति राजीमतां विषम् १९५
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेद्दधिघृताप्लुतम् ॥१९६॥
क्षीरीवृक्षत्वगालेपः शुद्धे कीटविषापहः ।
मुक्तालेपो वरः शोथदाहतोदज्वरापहः ॥ १९७ ॥
चन्दनं पद्मकोशीरं पाटलिः सिन्धुवारिका ।
क्षीरशुक्लानतं कुष्ठं शिरीषोदीच्यशारिवाः ॥१९८॥
शेलुस्वरसपिष्टोऽयं लूतानां सार्वकार्मिकः ।
मधूकं मधुकं कुष्ठं शारिवोदीच्यपाटलैः ॥ १९९ ॥
सनिम्बशारिवाक्षौद्रं पानं लूताविषापहम् ।
कुसुम्भपुष्पं गोदन्ताः स्वर्णक्षीरी कपोतविट् ।
दन्ती त्रिवृत्सैन्धवैलो कर्णिकापातनं तयोः ॥२००॥
कटभ्यर्जुनशैरीषशेलुक्षीरीद्रुमत्वचम् ।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः २०१
त्वचं च नागरं चैव समांशं श्लक्ष्णपेषितम् ।
पेयमुष्णाम्बुना सर्वं मूषिकाणां विषापहम् २०२
कुटजस्य फलं पिष्टं तगरं जालमालिनी ।
तिक्तेक्ष्वाकुकयोगोऽयं पानप्रधमनादिभिः ॥२०३॥
वृश्चिकोन्दुरुलूतानां सर्पाणां च विषापहम् ।
समानममृतेनेदं गराजीर्णे च नाशयेत् ॥ २०४ ॥
सर्वेऽगदा यथादोषं प्रयोज्याः स्युस्त्रिकण्टके ।
कपोतविट् मातुलुङ्गं शिरीषकुसुमाद्रसः ॥ २०५ ॥
शङ्खिन्यर्कं पयः शुण्ठी करञ्जमधु वार्श्चिके ।
शिरीषस्य फलं पिष्टं स्नुहीक्षीरेण दार्दुरे ॥ २०६ ॥
मूलानि श्वेतभण्डीनां व्योषसर्पिश्च मत्स्यजे ।
कीटदष्टक्रियाः सर्वाः समानाः स्याज्जलौकसाम्
वातपित्तहरी प्रायः क्रिया प्रायः प्रशस्यते ।
वार्श्चिकस्योच्चिटिङ्गस्य शलभस्येन्दुरोऽगदः २०८

पिप्पलीत्यादिप्रतिसारणं मरिचं सितमिति शोभाञ्जनकं बीजम् । श्वेता चेति गिरिकर्णिकाविशेषणं । तेन श्वेतापराजिता गृह्यते । केचित् गिरिकर्णिकास्यन्दनमाहुः । पाकलं कुष्ठं मुक्ता मौक्तिकं क्षीरशुक्ला विदारी, कर्णिकापतनेतयोरिति कीटलूतादंशयोः या कर्णिका तस्याः पातनमित्यर्थः । ज्वालमालिनीदेवताकः । तिक्तेक्ष्वाकु इति । दर्दुरो भेकः । श्वेतभण्डा अपराजिता । वार्षिकस्येत्यादि यो योगोक्तः स कर्तव्यः। एवं शलभस्यापि विषस्य उत्तरे यो उक्तो योगः स कर्तव्यः ॥ १८७—२०८ ॥

वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम् ।
द्वे बले नाकुली कुष्ठं शिरीषं रजनीद्वयम् ॥ २०९ ॥
गुहामतिगुहां श्वेतामजगन्धां शिलाजतु ।
कत्तृणं कटभीं क्षारं गृहधूमं मनःशिलाम् ॥ २१० ॥
रोहीतकस्य पित्तेन पिष्ट्वा तु परमोऽगदः ।
नस्याञ्जनाद्यलेपेषु हितो विश्वम्भरादिषु ॥ २११ ॥
स्वर्जिकाजशकृत्क्षारः सुरसोऽथाक्षिपीडकः ।
मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥ २१२ ॥
कपित्थमक्षिपीडोऽर्कबीजं त्रिकटुकं तथा ।
करञ्जो द्वे हरिद्रे च गलगोड्या विषं जयेत् ॥२१३॥
काकाण्डरससंयुक्तो विषाणां तण्डुलीयकः ।
सर्वेषां बर्हिपित्तेन तद्वद्वायसपीलुकः ॥ २१४ ॥
शिरीषफलमूलत्वक्पुष्पपत्रैः समैर्घृतैः ।
श्रेष्ठः पञ्चशिरीषोऽयं विषाणां प्रवरो वधे ॥२१५॥
इति पञ्चशिरीषोऽगदः ।

नाकुली रास्ना, गुहा पृश्निपर्णी, अतिगुहा शालपर्णी, अजगन्धा फोफादीतिख्याता, पित्तेनेति गोपित्तेन विश्वंभरादयः कीटा एव . श्लेष्मकोपनाः सुश्रुतोक्ताः । अक्षपीडकः श्वेतपीतशिंबीभेदः । वायसी काकमाची, श्रेष्ठः पञ्चशिरीषोऽय-

मिति पदं शिरीषाद्यपेक्षया पञ्चशिरीषस्य श्रेष्ठत्वं ब्रूते । प्रवर इति पदं विषहरयोगान्तरेषु श्रेष्ठतामाह । तेन न पुनरुक्तिः किंवा श्रेष्ठ इति श्रेष्ठशिरीषफलादिकृतः ॥ २०९—२१५ ॥

चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तक्षतं तु यत् ।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥ २१६ ॥
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ २१७ ॥

द्विपदा वनमानुषमर्कटादयः । अश्वकर्णः सर्जभेदः ॥ २१६—२१७ ॥

दुरन्धकारे दष्टस्य केनचिद्विषशङ्कया ।
विषोद्वेगाज्ज्वरश्छर्दिर्मूर्च्छादाहोऽपि वा भवेत् ।
ग्लानिर्मोहोऽतिसारो वाप्येतच्छङ्काविषं मतम् ।
चिकित्सितमिदं तस्य कुर्यादाश्वासनं बुधः २१९
सितां विगन्धिकां द्राक्षां पयस्यां मधुकं मधु ।
पानं समन्त्रपूताम्बु प्रोक्षणं सान्त्वहर्षणम् ॥२२०॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः ।
भोजनार्थे प्रशस्यन्ते लवणार्थे च सैन्धवम् २२१
तण्डुलीयकजीवन्तीवार्ताकुसुनिषण्णकाः ।
चुञ्चूर्मण्डूकपर्णी च शाकं च कुलकं हितम् ॥२२२॥
धात्री दाडिममम्लार्थे यूषा मुद्गहरेणुभिः ।
रसाश्चैणशिखिश्वाविलावतैत्तिरिपार्षताः ॥२२३॥
विषघ्नौषधसंयुक्ता रसा यूषाश्च संस्कृताः ।
अविदाहीनि चान्नानि विषार्तानां भिषग्जितम्२२४

दुरन्धकारेत्यादिना शङ्काविषमाह—केनचिदिति । निर्विषेणापि शङ्कया विषोद्वेगात् इति विषशङ्कयैव प्रादुर्भावादित्यर्थः । शङ्का चेयं प्रभावादेव विषजनिका । वैगंधिकं कोरदूषः कोद्रवः । कुलकं कारवेल्लकं । अन्ये पटोलभेदमाहुः ॥ २१८—२२४ ॥

विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम् ।
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥ २२५ ॥
मुहुर्मुहुः शिरोन्यासः शोथः स्रस्तौष्ठकर्णता ।
ज्वरस्तब्धाक्षिगात्रत्वं हनुकम्पोऽङ्गमर्दनम् ॥२२६॥
रोमापगमनं ग्लानिररतिर्वेपथुग्रहः ।
चतुष्पदां भवत्येतद्दष्टानामिह लक्षणम् ॥ २२७ ॥
देवदारु हरिद्रे द्वे सरलं चन्दनागुरु ।
रास्ना गोरोचनाजाजी गुग्गुल्विक्षुरसो नतम् ॥
चूर्णं ससैन्धवानन्तं गोपित्तमधुसंयुतम् ।
चतुष्पदानां दष्टानामगदः सार्वकार्मिकः ॥ २२९॥
सौभाग्यार्थं स्त्रियः स्वेदरजो नानाङ्गजान्मलान् ।
शत्रुप्रयुक्ताश्च गरान्प्रयच्छन्त्यन्नमिश्रितान् ॥२३०॥
तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ।
मर्मप्रध्मानमाध्मानहस्तपच्छोथलक्षणाः ॥ २३१ ॥
जठरं ग्रहणीदोषं यक्ष्माणं श्वयथुं क्षयम् ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥२३२॥
स्वप्ने मार्जारगोमायुव्यालान्सनकुलान्कपीन् ।
प्रायः पश्यति नद्यादीञ्शुष्कांश्च सवनस्पतीन्२३३
कालश्च गौरमात्मानं स्वप्ने गौरश्च कालकम् ।
विकर्णनासिकं वापि पश्येत्तद्विहतेन्द्रियः ॥ २३४ ॥
तमवेक्ष्य भिषक् प्राज्ञः पृच्छेत्किं कैः कदा सह ।
जग्धमित्यवगम्याशु प्रदद्याद्वमनं भिषक् ॥ २३५ ॥
सूक्ष्मताम्ररजस्तस्मै सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥२३६॥
हेम सर्वविषाण्याशु गरांश्च विनियच्छति ।
हेमपस्य सजत्यङ्गे न हि पद्मेऽम्बुवद्विषम् ॥२३७॥"
नागदन्तीत्रिवृद्दन्तीद्रवन्तीस्नुक्पयःफलैः ।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम् २३८
सर्पकीटविषार्तानां गरार्तानां च शान्तये ।

अत्र मिश्रितानिति भक्ष्यमिश्रितान् गरश्चास्योपजायत इति वक्ष्यमाणेन अत्राभिधानात् व्याधिर्जायते । विहतेन्द्रिय इति रोगोपहतेन्द्रियः । पृच्छेदित्यादौ पृच्छायां गरावधारणमेव फलमवगम्यते । सूक्ष्ममित्यादौ अमृतताम्रचूर्णं देयम् । अनृतेनैव वमनं भवति । हेमप इति हेम पिबतीति हेमपः । नागदंती दंतीभेदः । फलं मदनफलं ननु फलैरिति पाठः । अयं योगो जतुकर्णे पठ्यते । नागदंती स्नुक्क्षीरफलं गोमूत्रसिद्धं माहिषं घृतं पाययेदिति ॥ २२५—२३८ ॥

शिरीषत्वक् त्रिकटुकं त्रिफला चन्दनोत्पले ।
द्वे बले शारिवास्फोता सुरभीनिम्बपाटलाः २३९
बन्धुजीवाढकीमूर्वावासासुरसवत्सकान् ।
पाठां कोठाश्वगन्धार्कमूलयष्ट्याह्वपद्मकान् ॥२४०॥
विशालां बृहतीं लाक्षां कोविदारं शतावरीम् ।
कटभीदन्त्यपामार्गान्पृश्निपर्णीं रसाञ्जनम् ॥२४१॥
श्वेतभण्डाश्वखुरकौ कुष्ठदारुप्रियङ्गुकान् ।
विदारीं मधुकं सारं करञ्जस्य फलं वचाम् ॥२४२॥
रजन्यौ लोध्रमक्षांशं पिष्ट्वा साध्यं घृताढकम् ।
तुल्याम्बुच्छागगोमूत्राढके तत्तु विषापहम् ॥२४३॥
अपस्मारक्षयोन्मादभूतग्रहगरोदरम् ।
पाण्डुरोगान्क्रिमीन्गुल्मान्प्लीहोरुस्तम्भकामलाः ॥
हनुस्कन्धग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्यात्संजीवयेच्चापि विषोद्वन्धमृतान्नरान् ।
नाम्नेदममृतं सर्वविषाणां स्याद्धृतोत्तमम् ॥ २४५॥
इत्यमृतघृतम् ।

शिरीषत्वगित्यादौ आस्फोता अपरमल्लिका । सुरभी पर्णासभेदः । बंधुजीवः पुत्रजीवकः । खुरकः स्यंदनः किंवा कोकिलाक्षः ॥ २३९—२४५ ॥

तत्र श्लोकाः ।

'छत्री झर्झरपाणिश्च चरेद्रात्रौ तथा दिवा
तच्छायाशब्दवित्रस्ताः प्रणश्यन्त्याशु पन्नगाः २४६
दष्टमात्रं दशेदाशु तं सर्पं लोष्टमेव वा ।
उपर्यरिष्टां बध्नीयाद्दंशं छिन्द्याद्दहेत्तथा ॥ २४७ ॥
वज्रं मरकतं सारं पिचुकी विषमूषिका ।
कर्कोटकमणिः सर्पाद्वैदूर्यगजमौक्तिकम् ॥ २४८ ॥
धार्यं गरमणिर्याश्च वरौषध्यो विषापहाः ।
खगाश्च शारिकाक्रौञ्चशिखिहंसशुकादयः॥२४९॥"
इतीदमुक्तं द्विविधस्य विस्तरे—
र्बहुप्रकारं विषरोगभेषजम् ।
अधीत्य विज्ञाय तथा प्रयोजयेत्—
व्रजेद्विषाणामविषह्यतां बुधः ॥ २५० ॥

इति चरकसंहितायां विषचिकित्सितं नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

छत्रीत्यादौ छत्री दिवा रात्रौ झर्झरपाणिश्चरेदिति वदंति । झर्झरिकः झुरझुर इति ख्यातः । छायाशब्दैः यथासंख्यं वित्रस्ताः । दंशकाले यत्कर्तव्यं तदाह—दष्टमात्र इत्यादि । धारणादेव विषापहमाह—वज्रमित्यादि । सारमिति सवज्रम् । पिचुकी मणिरुत्तरापथे प्रसिद्धः । विषमूषिका विषमणिः । कर्कोटकमणिः पद्मरागः । गरमणिशब्देन नानामणीनां ग्रहणम् । वरौषध्य इति तन्त्रान्तरोक्ताः अक्षीरा जातपिप्पली । अजरुहा काकोलीप्रभृतयः । इतीदमित्यादिसंग्रहः । व्रजेद्विषाणामिति विषाणि सोढुं पारयन्तीति भावः ॥ २४६—२५० ॥

इति विषाध्यायः समाप्तः ।

---

## चतुर्विंशोऽध्यायः ।

### मदात्ययचिकित्सितम् ।

सुरैः सुरेशसहितैर्या सुरा परिपूजिता ।
सौत्रामण्यां हूयते या कर्मभिर्या प्रतिष्ठिता ॥ १ ॥
यज्ञे हि या च शक्रस्य सोमोऽतिपतितो यया ।
नीरजस्तमसाविष्टस्तस्माद्दुर्गात्समुद्धृतः ॥ २ ॥
विधिभिर्वेदविहितैर्या यजद्भिर्महात्मभिः ।
दृश्या स्पृश्या प्रकल्प्या च यज्ञिया यज्ञसिद्धये ॥३

मोहजनकत्वसामान्यात् तथा विषसमानगुणजन्यत्वाच्च विषचिकित्सितमनु मदात्ययस्य चिकित्सितमुच्यते । सुरैरित्यादिना । मदिरास्तुत्या तथा वक्ष्यमाणनिन्दया विषसमानसुरायाः सुतकलत्रनाशाय अविधिपानं च अत्यर्थनिन्दितफलवत्वं दर्शयति । या सुरा परिपूजिता इत्यनेन प्रथमं देवैरेवं परिपूजिता ततः सुरयोगात् सुरेति उपदिष्टा इति दर्शयति । सौत्रामणिर्यज्ञविशेषः तस्मिन् हूयते सुराकर्मणि या प्रतिष्ठितेति याज्ञिकैः अभिसवनं सुरया क्रियते इत्युच्यते । सौत्रामणिहोमे तु यत्रैवांगमङ्गमुच्यते । शक्रस्य सोमोऽभिपतित इति शक्रस्यातिपातेन सोमः क्षपितबलो निर्वीर्यो भूतः स किल पुनरपि अनयापनीतक्षयः आपादि इत्येषा श्रुतिः अतिपातेन परीतः अतिपतितः । प्रकल्प्या इत्यभिषुतव्यः संधानीयेति यावत् । यज्ञसिद्धय इति यज्ञविधौ कानिचित् यूपवर्ह्यादीनि कानिचित्तु पुरुषार्थानि अङ्ग्यादीनि कानिचित् यज्ञार्थानि पुरुषार्थानि यथासपिष्टकाख्यादीनि तदिह सुरा यज्ञीया इत्यनेन रसनादिवत् पुरुषार्था इत्युच्यते । यज्ञसिद्धये भवतीत्यनेन यूपादिवत् यज्ञार्थं सुरा उच्यते ॥ १—३ ॥

योनिसंस्कारनामाद्यैर्विशेषैर्बहुधा च या ।
भूत्वा भवत्येकविधा सामान्यान्मदलक्षणात् ॥४॥

योनीत्यादौ विशेषशब्दः प्रत्येकमभिसंबध्यते । योनिः कारणं तद्विशेषाः धान्यफलपुष्पकाण्डत्वचः शर्करानवमाः सूत्रस्थानोक्ताः । संस्कारोऽपि बहुप्रकारसंस्कारयोगः । नामविशेषाः सुरामधुमैरेयादयः । आदिग्रहणात् प्रभावगुणादीनां ग्रहणम् । मदो लक्षणं यस्य तस्मात् मदलक्षणात् । सामान्यात् मद्यस्वरूपात् ॥ ४ ॥

या देवानमृतं भूत्वा स्वधा भूत्वा पितॄंश्च या ।
सोमो भूत्वा द्विजातीन्या युङ्क्ते श्रेयोभिरुत्तमैः ॥५॥

अमृतं भूत्वेत्यादौ सुराधिष्ठात्री देवता अमृतादिरूपेण देवादीन् तर्पयतीति दर्शयति । श्रेयोभिरिति महत्कल्याणैः ॥ ५ ॥

आश्विनं या महत्तेजो वीर्यं सारस्वतं च या ।
बलमैन्द्रं च या सोमे सौत्रामण्यां च या मता ॥६॥
शोकारतिभयोद्वेगनाशिनी या महाबला ।
या प्रीतिर्या रतिर्या वाक् पुष्टिर्या या च निर्वृतिः ७

आश्विनं यन्महत्तेजो इत्यादौ सुराधिष्ठातृदेवताया एव तेजः वीर्यादिकारणत्वाद्वीर्यं ज्ञेयम् । तेजः सर्वदेवतादिगं तथा सारस्वतं वीर्यं मन्त्रबलं तथा सौत्रामण्यां सूयते सोमः इत्यनेन सोमरूपत्वमुच्यते । या प्रीतिरित्यादौ प्रीत्यादिकारणत्वेन प्रीत्यादिरूपतया निर्देशो ज्ञेयः ॥ ६—७ ॥

या सुरा सुरगन्धर्वयक्षराक्षसमानुषैः ।
रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत् ॥८॥
"शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान् ।
प्रावृतो निर्मलैर्वस्त्रैर्यथर्तूद्दामगन्धिभिः ॥ ९ ॥
विचित्रविविधस्रग्वी रत्नाभरणभूषितः ।
देवद्विजातीन्संपूज्य स्पृष्ट्वा मङ्गलमुत्तमम् ॥ १० ॥
देशे यथर्तुके शस्ते कुसुमप्रकरीकृते ।
संवाससंमते मुख्ये धूपसंमोदबोधिते ॥ ११ ॥
सोपधाने सुसंस्तीर्णे विहिते शयनासने ।
उपविष्टोऽथवा तिर्यक् स्वशरीरसुखे स्थितः ॥१२॥

सौवर्णे राजतैश्चापि तथा मणिमयैरपि।
भाजनैर्विमलैश्चान्यैः सुकृतैश्च पिबेत् सदा ॥ १३ ॥
स्त्रीभिर्यौवनमत्ताभिः शिक्षिताभिर्यथर्तुकैः।
वस्त्राभरणमाल्यैश्च भूषिताभिर्विभूषितः ॥ १४ ॥
शौचानुरागयुक्ताभिः प्रमदाभिरितस्ततः।
संवाह्यमान इष्टाभिः पिबेन्मद्यमनुत्तमम् ॥ १५ ॥
पिबेन्मद्यानुकूलैर्वा फलैर्हरितकैः शुभैः।
लवणैर्गन्धपिशुनैरवदंशैर्यथर्तुकैः ॥ १६ ॥
भृष्टैर्मांसैर्बहुविधैर्भूजलाम्बरचारिणाम्।
पौरोगवर्गविहितैर्भक्ष्यैश्च विविधात्मकैः ॥ १७ ॥
पूजयित्वा सुरान्पूर्वमाशिषः प्राक् प्रयुज्य च।
प्रदाय सजलं मद्यमादितो वसुधातले ॥ १८ ॥

विधिना पिबेदित्यत्र विधिमाह—शरीरेत्यादि। शरीरे स्नानवस्त्रादिभिर्बाह्यं अंतश्च प्रकृत्याद्यपेक्षया स्निग्धोष्णान्नादिभिः कृतः संस्कारो येन शरीरकृतसंस्कारः स्वशरीरसुखे स्थित इति यथाशरीरसुखं स्थितः। सुकृतैरिति संस्कृतैः। शिक्षिताभिरिति अभ्यस्ताभिः। गन्धपिशुनैरिति गन्धाढ्यैः। पौरोगवर्गा इति अश्विनीवलदेवचण्डा इत्यर्थः। तैः ॥ ७—१८ ॥

अभ्यङ्गोत्सादनस्नानवासोधूपानुलेपनैः।
स्निग्धोष्णैर्भावितैश्चान्नैर्वातिको मद्यमाचरेत् ॥१९॥
शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः।
पैत्तिको भावितश्चान्नैः पिबन्मद्यं न सीदति ॥२०॥
उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत्।
श्लैष्मिकैर्धन्वजैर्मांसैर्मद्यं मरिचकैः सह ॥ २१ ॥
विधिर्वसुमतामेप भविष्यद्विभवाश्च ये।
यथोपपत्तिकैर्मद्यं पातव्यं मात्रया हितम् ॥ २२ ॥
वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम्।
कफपित्ताधिकेभ्यस्तु फालमाधवशार्करम् ॥२३॥
बहुद्रव्यं बहुगुणं बहुकर्मप्रदात्मकम्।
गुणैर्दोषैश्च तन्मद्यमुभयं चोपलक्ष्यते ॥ २४ ॥
विधिना मात्रया काले हितैरन्नैर्यथावलम्।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥ २५ ॥
यथोपेतं पुनर्मद्यं प्रसङ्गाद्येन पीयते।
रूक्षव्यायामनित्येन विषवद्याति तस्य तत् ॥ २६ ॥

सामान्यं विधिमुक्त्वा वातिकादीनां पानविधिमाह—अभ्यंगेत्यादि। मरिचकैरिति मरिचसंस्कृतैः। वसुमतामिति धनवतां भविष्यद्विभवा उत्पद्यमानधनाः। यथोपपत्तिरिति यथापरिच्छेदोपपत्तिः। कफपित्ताविल्यादौ विपर्ययतन्त्रयुक्त्या कफाधिक्येभ्यः माधवं पित्ताधिकेभ्यो मार्द्वीकं। मार्द्वीकं मृद्वीकाकृतं मधुकृतं तु माधवं। बहुद्रव्यमिति नानाविधद्रव्यसंपादितं। बहुगुणमिति भूरिवक्ष्यमाणलघ्वादिगुणं दोषकरं च द्वितीयमद इति भावः। विधिनेति यथोक्तविधिना। काल इति यस्य मद्यस्य य उचितगुणः कालः तस्मिन्। हितैरन्नैरिति मद्यहितैरन्नैः। यथोपेतमिति यदेवमद्यं तत् प्रसंगादिति। अतियोगेन विषवदिति मोहादिकारकर्तृत्वात् ॥ १९—२६ ॥

मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान्।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥२७॥
लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाय्याशुगमेव च।
रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥ २८ ॥
गुरु शीतं मृदु श्लक्ष्णं बहलं मधुरं स्थिरम्।
प्रसन्नं पिच्छिलं स्निग्धमोजो दशगुणं स्मृतम् २९
गुरुत्वं लाघवाच्छैत्यं चौष्ण्यादम्लस्वभावतः।
माधुर्यं मार्दवं तैक्ष्ण्यात्प्रसादं चाशुभावनात् ३०
रौक्ष्यात्स्नेहं व्यवायित्वात्स्थिरत्वं श्लक्ष्णतामपि।
विकासिभावात्पैच्छिल्यं वैशद्यात्सान्द्रतां तथा ३१
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान्।
सत्त्वं तदाश्रयं चाशु संक्षोभ्य जनयेन्मदम् ॥३२॥
रसधात्वादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम्।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥ ३३ ॥
अतीपीतेन मद्येन विहतेनौजसा च तत्।
हृदयं याति वैकृत्यं तत्रस्था ये च धातवः ॥३४॥

मद्यं यथा मदयति तथा प्राह—मद्यमिति। दशभिरिति लघ्वादिभिः। गुणैः देशानामपि गुर्वादीनामोजोगुणानामवस्कन्दनकैः चेतः विक्रियां नयति। येन गुणेन मद्यस्य ओजो गुणः क्षीणो भवति तदाह—गुरुत्वं लाघवादित्यादि। प्रसादं चाशुभावनादिति प्रसादाख्यगुणं आशुगत्वात् हंति। आशुगत्वं च यद्यपि प्रसादविरुद्धं न भवति तथापि प्रतिकूलतया ओजःप्रसादं हंति। तत्राशुगुणत्वेन प्रसादो नश्यति इति ज्ञेयम्। व्यवायित्वात्स्थिरत्वमिति व्यवायित्वं व्यापकं तच्च स्थिरत्वं तद्विपरीतत्वादेव हंति आशुगत्वव्यवायित्वयोश्चायं विशेषः—आशुगं शीघ्रं गच्छति। व्यवायि तु सर्वव्यापकम्। विकासित्वं विकसनशीलत्वं स्थिरत्वादेव। श्लक्ष्णविपरीतत्वात् श्लक्ष्णतां हंति, एते विकासित्वाशुगत्वगुणा यद्यपि गुणगणनायां न पठितास्तथाप्यसंख्येयत्वाद्गुणानां एषामपि गुणत्वं सिद्धम्। ये तु तत्र पठितास्ते तावत्सिद्धतमा ज्ञेयाः। आश्रयोपघातात् आश्रितोपघातो भवतीति दर्शयन्नाह—सत्वमित्यादि। सत्त्वस्य चेत आश्रयः रसधात्वित्यादि। रसधात्वादिवहानां दशधमनीनां हृदयं स्थानं रसवहा एव या दश धमन्य उक्तास्ता एव वातादिवहाः। यदुक्तं—वातपित्तश्लेष्मणां सर्वशरीरगाणां स्रोतांस्ययनभूतानि। धात्वादीनां तु सर्वशरीरगाणामपि विशेषेण हृदयं स्थानमुक्तम्। 'षडंगमङ्गविज्ञानमिन्द्रियाणां तु पञ्चकं'। धातव इति सत्वबुद्धीन्द्रियादयः सत्वं विहत्यैवं ओजसः गुणैः गुणानसत्वं नयतीत्युत्सर्गं नयति ॥ २७—३४ ॥

ओजस्यविहते पूर्वो हृदि च प्रतिबोधिते ।
मध्यमो विहतेऽल्पे च विहते तूत्तमो मदः ॥ ३५ ॥
नैवं विघातं जनयेन्मद्यं पैष्टिकमोजसः ।
विकाशरूक्षविशदा गुणास्तत्र हि नोल्वणाः ॥३६॥

प्रथमं मदमाह—ओजस्यवहिते इति । हृदयाश्रितबुद्ध्यादौ प्रतिबोधिते । हृदयशब्देन हि तत्स्थोपचाराद्धृदयाश्रिता बुद्ध्यादयोऽभिधीयन्ते । यथा मंचाः क्रोशन्तीति न्यायेन बुद्ध्यादिबोधनम् । प्रथममदकार्यप्रभावात् मध्यमोत्तममदोपपत्तिसामग्रीमाह—विहतेति । विघाते ओजसः अल्पे विघाते मध्यमो मदो भवति । विहतेति विशेषेण हते अत्यर्थं हते । उत्तम इति तृतीयः ॥ ३५—३६ ॥

हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् ।
विकाराश्च यथासत्त्वं चित्रा राजसतामसाः ॥३७॥
जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात् ।
स मद्यविभ्रमो नाम्ना मद इत्यभिधीयते ॥ ३८ ॥
पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः ।
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान्प्रवक्ष्यते ॥३९॥

हृदीत्यादिना सामान्येन मदलक्षणमाह । तर्षोऽभिलाषः यथासत्त्वमिति हृदये राजसाः तामसे च तामसाः । चित्रा इति नानाप्रकाराः । मोहनिद्रान्ताः इति मोहनिद्रावसानाः ॥ ३७—३९ ॥

प्रहर्षणः प्रीतिकरः पानान्नगुणदर्शकः ।
वाद्यगीतप्रहासानां कथानां च प्रवर्तकः ॥ ४० ॥
न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः ।
सुखनिद्राप्रबोधश्च प्रथमः सुखदो मदः ॥ ४१ ॥
मुहुः स्मृतिर्मुहुर्मोहो व्यक्ता सज्जति वाङ्मुहुः ।
युक्तायुक्तप्रलापश्च प्रपलायनमेव च ॥ ४२ ॥
स्थानपानान्नसांकथ्ये योजना सविपर्यया ।
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे ॥ ४३ ॥
मध्यमं मदमुत्क्रम्य मदमप्राप्य चोत्तमम् ।
न किंचिन्नाशुभं कुर्युर्नरा राजसतामसाः ॥ ४४ ॥

प्रथमादिमदानां लक्षणमाह—प्रहर्षणइत्यादि । पानान्नगुणदर्शक इति पानान्नगुणान्बोधयतीत्यर्थः । विषयेषु तु विषयसेवासु नचाक्षमः नासमर्थकर इत्यर्थः । युक्तायुक्तप्रलाप इति संज्ञासंज्ञिवचनः । प्रपलायनं घूर्णनं । योजना सविपर्ययेति स्थानादीनां सम्यग्योजना कदाचिद्भवति कदाचिच्च स्थानादियोजनाऽसम्यक्कृतया भवतीत्यर्थः । मध्यममदेत्युक्त्वा मद्यस्य त्रिविधो मद उक्तः । तथापि द्वितीयमदावसाने तृतीयमदाप्राप्त्यवस्थायामेव अत्यर्थंनिंदितां दर्शयन् तृतीयमदस्य अत्यंतं निंदितां दर्शयति । येन यस्य तृतीयमदस्य पूर्वरूपावस्थैव सर्वाशुभकरणादिहेतुतया नितान्तं निन्द्या इत्यर्थः । इयं च मध्यमदातिक्रमात्तृतीयमदप्राप्त्यवस्थामभिमार्थतः चतुर्थमदावस्थानुमिता भवति ॥ ४०—४४ ॥

को मदं तादृशं विद्वानुन्मादमिव दारुणम् ।
गच्छेदध्वानमस्वन्तं बहुदोषमिवाध्वगः ॥ ४५
तृतीयं तु मदं प्राप्य भग्नदार्विव निष्क्रियः ।
मदमोहावृतमना जीवन्नपि मृतैः समः ॥ ४६ ।
रमणीयान्स विषयान्न वेत्ति न सुहृज्जनम् ।
यदर्थं पीयते मद्यं रतिं तां च न विन्दति ॥ ४७ ।
कार्याकार्यं सुखं दुःखं लोके यच्च हिताहितम् ।
यदवस्थो न जानाति कोऽवस्थां तां व्रजेद्बुधः ४८
स दूष्यः सर्वभूतानां निन्द्यश्चाग्राह्य एव च ।
व्यसनित्वादुदर्के च स दुःखं व्याधिमश्नुते ॥ ४९ ॥
प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षश्च यत्परम् ।
मनःसमाधौ तत्सर्वमायत्तं सर्वदेहिनाम् ॥ ५० ॥
मद्येन मनसश्चास्य संक्षोभः क्रियते महान् ।
महामारुतवेगेन तटस्थस्येव शाखिनः ॥ ५१ ॥
मद्यप्रसङ्गमज्ञात्वा महादोषं महागदम् ।
सुखमित्यधिगच्छन्ति रजोमोहपराजिताः ॥ ५२ ॥
मद्योपहतविज्ञाना वियुक्ताः सात्त्विकैर्गुणैः ।
श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मदलालसाः ॥५३॥
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रितः ।
सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥५४॥
यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधुवत् ।
इत्येवं मद्यदोषज्ञा मद्यं गर्हन्ति यत्नतः ॥ ५५ ॥

अस्वन्तं अशोभनान्तं । भग्नदार्विति भग्नवृक्ष इव पतितस्तिष्ठति । उदर्कमुत्तरकालः । सदुःखं व्याधिमिति मदात्ययम् । प्रेत्यचेहेत्यादिना प्रेत्येति जन्मान्तरे तटस्थस्येति वचनेन वातोत्क्षेप्यतां दर्शयति । मद्यमित्यादिना स्वमतमाह—एते दोषाः मद्यस्य अहितादिधर्मयुक्तस्यैव भवन्ति न विपरीतस्येति भावः ॥ ४५—५५ ॥

सत्यमेते महादोषा मद्यस्योक्ता न संशयः ।
अहितस्यातिमात्रस्य पीतस्य विधिवर्जनम् ॥ ५६ ॥
किंतु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥ ५७ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ५८ ॥

विधिवर्जितमिति क्रियाविशेषणम् । मद्यस्य विधिवदुपयोगे गुणवत्तां अविध्युपयोगे च दोषवत्तामाह—किंत्वित्यादि । उभयथा देशकालमात्रापेक्षयानपेक्षया योजनया उक्तं शुभमशुभं च कार्यकरं भवति । तच्च शुभाशुभकार्यमाह—प्राणा इत्यादि । प्राणहेतुत्वात् प्राणाः । अयुक्तमित्यविधिप्रयुक्तम् । रसायनमिति यथा 'विषस्य

तु तिलं दद्यात्' इति प्रयोगे तिलस्य रसायनत्वं ज्ञेयम् ॥ ५६—५८ ॥

**हर्षमूर्जो मदं पुष्टिमारोग्यं पौरुषं परम् ।**
**युक्त्या पीतं करोत्याशु मद्यं मदसुखावहम् ॥ ५९ ॥**

विधिपीतमद्यगुणानाह—हर्षमूर्जइत्यादि । हर्ष उत्साहकं शारीरम् । मुदमिति मनःसंतोषम् । पौरुषमिति शुक्रम् । आश्विति वचनात् शीघ्रं हर्षादीनि करोति न परिणामक्रियामपेक्षते । मदसुखमिति सुखप्रदमदम् । प्रथमं मदमिति यावत् । अन्ये तु मदसुखप्रदमिति पठन्ति । तत्रापि मदसुखं प्रथममदारम्भ एव ॥ ५९ ॥

**रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम् ।**
**प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम् ॥ ६० ॥**
**स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनम् ।**
**बोधनं चातिनिद्राणां विबद्धानां विबन्धनुत् ॥ ६१ ॥**
**वधबन्धपरिक्लेशदुःखानां चावमोहनम् ।**
**मद्योत्थानां च रोगाणां मद्यमेव प्रबाधकम् ॥ ६२ ॥**
**रतिविषयसंयोगे प्रीतिसंयोगवर्धनम् ।**
**अतिप्रवयसां मद्यमुत्सवामोदकारकम् ॥ ६३ ॥**
**पञ्चस्वर्थेषु कान्तेषु या रतिः प्रथमे मदे ।**
**यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि ६४**
**बहुदुःखकृतस्यास्य शोकेनोपहतस्य च ।**
**विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम् ॥ ६५ ॥**

रोचनमित्यादिना मद्यगुणानाह—स्वापनं नष्टनिद्राणां तथा बोधनं चातिनिद्राणामिति कार्यद्वयकारकम् । निद्राकरत्वप्रभावादेव, किंवा नष्टनिद्राणां निद्राभिघातहेतुचिंतनादिविस्मारकतया निद्राकरं भवति । अतिनिद्राणां निद्राहेतुमनोवहस्रोतोरोगादिहन्तृतया प्रबोधकं भवतीति ज्ञेयम् । 'मद्योत्थानां च रोगाणां मद्यमेव प्रबाधक'मिति हेतुविपरीतार्थकारिताप्रभावादित्यर्थः । रतिविषयसंयोगे वर्धनमिति विषयाणां शब्दादीनां संयोगे प्रीतिं संयोगं च वर्धयति । पीतमद्यः यदा विषयैः शब्दादिभिः संयुज्यते तदा तेष्वपि प्रीतिमान् भवति । प्रीतश्च सुखाकांक्षी सन् पुनस्तेन संयुज्यते । प्रवयसामिति वृद्धानाम् । उत्सवः औत्सुक्यं । आमोदो हर्षः न तु विषये स्वभावादेव प्रीतये भवति । तत् किं मद्येन तत् क्रियते इति आशंक्य प्रथममदस्य विशिष्टरतिकर्तृत्वमाह—पंचस्वित्यादि । रतिश्चेह अत्यर्थसुखजनकत्वात् विश्राम इति दुःखादिशमहेतुः । जीवलोक इति जीवमानलोकः ॥ ६०—६५ ॥

**अन्नपानवयोव्याधिबलकालत्रिकाणि षट् ।**
**त्रीन्दोषांस्त्रिविधं सत्त्वं ज्ञात्वा मद्यं पिबेत्सदा ६६**
**तेषां त्रिकाणामष्टानां योजना युक्तिरुच्यते ।**
**यथा युक्त्या पिबेन्मद्यं मद्यदोषैर्न युज्यते ॥ ६७ ॥**
**मद्यस्य च गुणान्सर्वान्यथोक्तान्स समश्नुते ।**
**धर्मार्थयोरपीडार्थैर्नरः सत्त्वगुणोच्छ्रितः ॥ ६८ ॥**
**सत्त्वानि तु प्रबुध्यन्ते प्रायशः प्रथमे मदे ।**
**द्वितीये व्यक्ततां यान्ति मदे चोत्तममध्ययोः ॥ ६९ ॥**
**सत्त्वसंबोधकं हर्षं मोहेप्रकृतिदर्शकम् ।**
**हुताशः सर्वसत्त्वानां मद्यं तूभयकारकम् ॥ ७० ॥**
**प्रधानावरमध्यानां रूपाणां व्यक्तिदर्शकः ।**
**यथाग्निरेवं सत्त्वानां मद्यं प्रकृतिदर्शकम् ॥ ७१ ॥**

युक्त्या निषेवितमित्यत्रोक्तां मद्यपाने युक्तिमाह—अन्नपानेत्यादि । तत्रान्नं त्रिविधं वातपित्तकफकरम् । एवं पानमपि त्रिविधम् । बाल्यादिभेदाद्वयोऽपि त्रिविधम् । व्याधिरपि मृदुमध्यतीव्रभेदेन त्रिविधः । किंवा सौम्याग्नेयवायव्यभेदेन त्रिविधः । बलं प्रवरावरमध्यभेदात्त्रिविधम् । कालस्तु शीतोष्णवर्षालक्षणस्त्रिविधः । त्रिविधं सत्त्वं शुद्धं राजसं तामसं च । योजनेति सम्यग्योजनानुरूपा । सम्यक् युक्तिमवधारयति—यथा युक्त्येत्यादिना । सत्त्वगुणोच्छ्रितः समश्नुतेति योज्यम् । तत्र वातापेक्षया युक्तिः यथा वातहरमन्नमुपयुज्य वातहरं मद्यं पेयम्, एवं पित्तहरकफहरत्वेऽपि पित्तकफहरान्नोपयोगे तद्धरं मद्यं योज्यम् । एवं पानाद्यपेक्षयापि योजना व्याख्याता भवति । बाल्ये स्थविरे चातीक्ष्णं मद्यं यौवने तीक्ष्णं । संप्रति व्याध्यपेक्षयापि योजना यथा मृदुव्याधौ तीक्ष्णोष्णं, उष्णे च शीतमधुरं, वर्षाकाले तु स्निग्धं दीपनं च मद्यम् । दोषभेदेन तु मद्यं वाते स्निग्धोष्णं गौडिकादि, पित्ते शीतमधुरं शार्करादि, कफे रूक्षं माधवादि । उक्तं हि 'वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम् । कफपित्ताधिकेभ्यस्तु मद्यं माधवशार्कर'मिति । दोषग्रहणेनैव वातलादिप्रकृतिरपि गृहीता । सत्त्वभेदेनापि सात्त्विकेन तीक्ष्णं राजसतामसैर्मध्यमल्पं च । सत्त्वानीति मनांसि । अव्यक्ततामीषद्व्यक्ततां मध्ये चाव्यक्ततां याति । उत्तमे तु सर्वथापि अव्यक्तं भवतीति भावः । केचित्तु 'सत्त्वसंबोधकं हर्ष' इत्यादिकं पठंति । प्रकृतिदर्शको हुताशो यथा सुवर्णस्य शुद्धाशुद्धतां दर्शयति मद्यं तथाकारकमिति मनःप्रबोधकं मनोगुणादर्शकं च । रूपाणामिति हेमरूपाणाम् । व्यक्तिदर्शकेति आकारदर्शकः ॥ ६६—७१ ॥

**सुगन्धिमाल्यगन्धैर्वा सुप्रणीतमनाकुलम् ।**
**मिष्टान्नपानविशदं सदा मधुरसंकथम् ॥ ७२ ॥**
**सुखप्रपानं सुमदं हर्षप्रीतिविवर्धनम् ।**
**स्वन्तं सात्त्विकमापानं न चोत्तममदप्रदम् ॥ ७३ ॥**
**वैगुण्यं सहसा यान्ति मद्यदोषैर्न सात्त्विकाः ।**
**मद्यं हि बलवत्सत्त्वं गृह्णाति सहसा न तु ॥ ७४ ॥**
**सौम्यासौम्यकथाप्रायं विशदाविशदं क्षणात् ।**
**चित्रं राजसमापन्नं प्रायेणास्वन्तकाकुलम् ॥ ७५ ॥**

हर्षप्रीतिकथोपेतमहृष्टं पानभोजने ।
संमोहक्रोधनिद्रान्तमापानं तामसं स्मृतम् ॥ ७६ ॥
आपाने सात्विकान्बुद्धा तथा राजसतामसान् ।
जह्यात्सहायान्यैः पीत्वा सह दोषानुपाश्नुते ॥७७॥

सात्विकादिभेदेन पानं त्रिविधमाह—सुगन्धेत्यादि । शोभनो गन्धो यस्य तत् सुगंधि । स्वंतमिति स्वतंत्रम् । न चोत्तममदप्रदमिति नोत्तममदकरम् । कदाचिदपि मद्यपानात् द्वितीयमदाशङ्का न भवति । उत्तममदः सात्विकें न भवतीत्यर्थः । उत्तममदाप्राप्तौ हेतुमाह—वैगुण्यमित्यादि । सत्वसंयोगादिति सत्वाख्यगुणयोगात् । सत्वाख्यो हि गुणः प्रकाशकतया न मोहेनाभिभूयत इति भावः । सौम्यासौम्येत्यादि राजसपानमाह—सौम्यासौम्यकथासंबन्धात् । विशदाविशदमिति प्रसन्नाप्रसन्नम् । चित्रमिति नानाप्रकारकम् । तथेत्यादिना तामसमाह । क्रोधो निद्रा च अंते यस्य तत्क्रोधनिद्रान्तम् । यैरित्यनेन राजसतामसाः प्रलवमृश्यन्ते तैरिव समं पिवन् तत्प्रसक्त्या स्वयमपि अतिपिवन् माद्यं च द्वितीयतृतीयमददोषान् प्राप्नोति ॥ ७२—७७ ॥

सुखशीलाः सुसंभाषाः सुमुखाः संमताः सताम् ।
कलासु वाक्यविशदा विषयप्रवणाश्च ये ॥ ७८ ॥
परस्परविधेया ये येषामैक्यं सुहृत्तया ।
प्रहर्षप्रीतिमाधुर्यैरापानं वर्धयन्ति ये ॥ ७९ ॥
उत्सवादुत्सवतरं येषामन्योन्यदर्शनम् ।
ते सहायाः सुखाः पाने तैः पिवन्सह मोदते ॥८०॥
रूपगन्धरसस्पर्शैः शब्दैश्चापि मनोरमैः ।
पिवन्ति सुसहाया ये ते वै सुकृतिभिः समाः ८१
पञ्चभिर्विषयैरिष्टैरुपेतैर्मनसः प्रियैः ।
देशे काले पिवेन्मद्यं प्रहृष्टेनान्तरात्मना ॥ ८२ ॥
स्थिरसत्वशरीरा ये पुराणा मद्यपान्वयाः ।
वहुमद्योचिता ये च माद्यन्ती सहसा न ते ॥८३॥
प्राज्ञद्यात्क्षुत्पिपासार्ता दुर्वला वातपैत्तिकाः ।
रूक्षाल्पप्रमिताहारा विस्तब्धाः सत्वदुर्वलाः॥८४॥
क्रोधिनोऽनुचिताः क्षीणाः परिश्रान्ता मदक्षताः ।
स्वल्पेनापि मदं शीघ्रं यान्ति मद्येन मानवाः॥८५॥

उपादेयान्सात्विकान् आह—सुखशीला इत्यादि । सुमुखा इति प्रियाः । कलासु विशदाः कलाकुशलाः । आपानं वर्द्धयंतीति आपाने प्रसादं वर्द्धयंति न पानप्रसक्तिं वर्द्धयन्तीत्यर्थः । तस्याऽनिंदितत्वात् । मनोरमैरित्यत्र साधीयांस इति शेषः । एवं पानस्य प्रकृत्यनवद्यत्वात् स्थिरसत्वेत्यादौ पुराणा इति पूर्वमुपयुक्तमद्याः मद्यान्वया इति मद्यवंशजाः तेषां मद्यपानं विकारकरं न भवति । विषकन्या विषमिव ॥७८—८५॥

ऊर्ध्वं मदात्ययस्यातः सम्भवं स्वस्वलक्षणम् ।
अग्निवेश चिकित्सां च प्रवक्ष्यामि यथाक्रमम्॥८६॥
स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्शितः ।
रूक्षाल्पप्रमिताशी वा यः पिवत्यतिमात्रया ॥८७॥
रूक्षं परिणतं मद्यं निशि निद्रां विहत्य च ।
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम् ॥८८॥
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ।
विद्याद्वहुप्रलापस्य वातप्रायं मदात्ययम् ॥ ८९ ॥
तीक्ष्णोष्णं मद्यमम्लं वा योऽतिमात्रं निषेवते ।
अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः ९०
तस्योपजायते पित्ताद्विशेषेण मदात्ययः ।
स तु वातोल्वणस्याशु प्रशमं याति हन्ति वा ॥९१॥
तृष्णादाहज्वरस्वेदमूर्च्छातीसारविभ्रमैः ।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ ९२ ॥
तरुणं मधुरप्रायं गौडं पैष्टिकमेव वा ।
मधुरस्निग्धगुर्वाशी यः पिवत्यतिमात्रया ॥ ९३ ॥
अव्यायामदिवास्वप्नशय्यासनसुखे रतः ।
मदात्ययं कफप्रायं स शीघ्रमधिगच्छति ॥ ९४ ॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ ९५ ॥

मद्यपानदोषगुणमभिधाय मदात्ययकरं हेत्वादिमाह—ऊर्ध्वमित्यादि । संभवमिति कारणम् । वातप्रायमित्यादौ प्रायःशब्देन वक्ष्यमाणानां सर्वमदात्ययानां त्रिदोषजन्यत्वं दर्शयति—सतु वात इति । पैत्तिकः वातोल्वणस्यैवं मदात्ययः वातपित्तसंयोगतया भवति ॥ ८६—९५ ॥

विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपणाः ।
त एव मद्ये दृश्यन्ते विषे तु वलवत्तराः ॥ ९६ ॥
हन्त्याशु हि विषं किंचित् किंचिद्रोगाय कल्पते ।
यथा विषं तथैवान्त्यो ज्ञेयो मद्यकृतो मदः ॥ ९७ ॥
तस्मात् त्रिदोषजं लिङ्गं सर्वत्रापि मदात्यये ।
दृश्यते रूपवैशेष्यात्पृथक्त्वं चास्य लक्ष्यते ॥ ९८ ॥

मद्यस्य त्रिदोषकरत्वे हेतुमाह—विषस्येत्यादि । यद्यपि मद्यमम्लं विषं त्वव्यक्तमधुरं तथापि वहुगुणसामान्यात् त एव मद्ये दृश्यंत इत्युक्तम् । तथैवान्त्योमद इति । प्राणहरो मदकरश्चेत्यर्थः । पृथक्त्वमिति वातिकत्वादिना पार्थक्यम् ॥ ९६—९८ ॥

शरीरदुःखं वलवत्संमोहो हृदयव्यथा ।
अरुचिः प्रतता तृष्णा ज्वरः शीतोष्णलक्षणः॥९९॥
शिरःपार्श्वास्थिसन्धीनां विद्युत्तुल्या च वेदना ।
जायतेऽतिवला जृम्भा स्फुरणं वेपनं श्रमः ॥१००॥
उरोविवन्धः कासश्च हिक्का श्वासः प्रजागरः ।
शरीरकम्पः कर्णाक्षिमुखरोगस्त्रिकग्रहः ॥ १०१ ।
छर्द्यतीसारमुत्क्लेशो वातपित्तकफात्मकः ।
भ्रमः प्रलापो रूपाणामसतां चैव दर्शनम् ॥१०२॥

तृणभस्मलतापर्णपांशुभिश्चावपूरणम्।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते॥ १०३॥
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च।
मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत्॥१०४॥
सर्वं मदात्ययं विद्यात् त्रिदोषमधिकं तु यत्।
दोषं मदात्यये पश्येत् तस्यादौ प्रतिकारयेत्॥१०५॥

शरीरदुःखमित्यादि सर्वमदात्ययस्य सामान्यं लक्षणं ब्रूते किंवा त्रिदोषमदात्ययस्यैव लक्षणम्। यतो रोगसंग्रहे वातपित्तकफसन्निपातैश्चत्वारो मदात्यया उक्ताः। 'पुनश्च पंचमः प्रोक्तो विषजो रौधिरश्च यः। सर्वे एते मदा वातपित्तकफत्रयात्' इत्यनेन मदात्ययस्य वातादित्वेन चातुर्विध्यमुक्तम्। मद एव आत्ययिको गदो मदात्यय इत्युच्यते। स्फुरणं किंचित्कंपनम्। वेपनं एकदेशकंपनम्। वातपित्तकफात्मक इति उत्क्लेशविशेषेण समसर्वदोषः॥ ९९—१०५॥

कफस्थानानुपूर्व्या च क्रिया कार्या मदात्यये।
पित्तमारुतपर्यन्तः प्रायेण हि मदात्ययः॥ १०६॥
मिथ्यातिहीनपीतेन यो व्याधिरुपजायते।
समपीतेन तेनैव स मद्येनोपशाम्यति॥ १०७॥
जीर्णाममद्यदोषाय मद्यमेव प्रदापयेत्।
प्रकाङ्क्षा लाघवे जाते यद्यदस्मै हितं भवेत्॥१०८॥
सौवर्चलानुसंविद्धं शीतं सविडसैन्धवम्।
मातुलुङ्गार्द्रकोपेतं जलयुक्तं प्रमाणवित्॥ १०९॥
तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना।
मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः॥ ११०॥
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम्।
जनयत्याशु तच्छान्त्यै मद्यमेव प्रदापयेत्॥१११॥

कफस्थानेत्यादि। कफस्थानानुपूर्व्या चात्र कफस्थानोद्भूततया प्रथमकफसंबन्धात् सन्निपातज्वर इव ज्ञेयः। आदौ कफप्रवलतामेवाह। पित्तमारुतपर्यंत इत्यनेन कफादित्वं लम्भयति। समपीतेन तेनैवेति यज्जातीयेन मद्येन मदात्ययो जनितः तज्जातीयेनैव शाम्यति। यथा विषं मौलं दंष्ट्रीयेण शाम्यति तथा मद्यमपि विजातीयेन मद्येन शाम्यतीत्येके, किंतु तेनैवेत्यत्र मद्यजातिं परामृशति। तेनावश्यं तज्जातीयमेव मद्यं ज्ञेयम्। यतोऽनन्तरं वक्ष्यति 'यच्च यस्मै हितं भवे'दिति। तथा 'दद्यात्सलवणं मद्यं पैष्टिकं वातशान्तये' इत्यनेन येनकेनचिन्मद्येन उद्भूते वातमदात्यये पैष्टिकयुक्तं तथा सशर्करं त्रैत्यादि विशेषविधानं बहुकरिष्यति। तेन तज्जातीयं मद्यजातीयं च मद्यं मदात्यये देयम्। अन्नरसोत्क्लेदे इत्यत्राम्लरसक्लेदेति पठंति॥ १०६—१११॥

क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंस्कृतः।
श्रेष्ठमम्लेषु मद्यं च यैर्गुणैस्तान् परं शृणु॥ ११२॥
मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः स्मृताः।
मधुरश्च कषायश्च तिक्तः कटुक एव च॥ ११३॥
गुणाश्च दश पूर्वोक्तास्तैश्चतुर्दशभिर्गुणैः।
सर्वेषां मद्यमम्लानामुपर्युपरि तिष्ठति॥ ११४॥
मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः।
करोति वेदनां तीव्रां शिरस्यस्थिषु सन्धिषु॥११५॥
दोषविष्यन्दनार्थं हि तस्मै मद्यं विशेषतः।
व्यवायि तीक्ष्णोष्णतया देयमम्लेषु सत्स्वपि॥११६॥
स्रोतोविबन्धमुन्मथ्य मारुतस्यानुलोमनम्।
रोचनं दीपनं चाग्नेरभ्यासात्सात्म्यमेव च॥११७॥
रसस्रोतःस्वरुद्धेषु मारुते चानुलोमिते।
निवर्तन्ते विकाराश्च शाम्यत्यस्य मदोदयः॥११८॥
बीजपूरकवृक्षाम्लकोलदाडिमसंयुतम्।
यमानीहपुषाजाजीशृंगवेरावचूर्णितम्॥ ११९॥
सस्नेहैः शकुभिर्युक्तमच्छैर्दशैश्चिरोत्थितम्।
दद्यात्सलवणं मद्यं पैष्टिकं वातशान्तये॥ १२०॥
दृष्ट्वा वातोल्बणं लिङ्गं रसैश्चैनमुपाचरेत्।
लावतित्तिरदक्षाणां स्निग्धाम्लैः शिखिनामपि१२१
पक्षिणां मृगमत्स्यानामानूपानां च संस्कृतैः।
भूशयप्रसहानां च रसैः शाल्योदनेन च॥ १२२॥
स्निग्धोष्णलवणाम्लैश्च वेशवारैर्मुखप्रियैः।
चित्रैर्गोधूमिकैश्चान्नैर्वारुणीमण्डसंयुतैः॥ १२३॥
पिशितार्द्रकगर्भाभिः स्निग्धाभिर्धूपवर्तिभिः।
माषपूपलिकाभिश्च वातिकं समुपाचरेत्॥ १२४॥
नातिस्निग्धं न चाम्लेन युक्तं समरिचार्द्रकम्।
मध्ये प्रागुदितं मांसं दाडिमस्वरसेन वा॥ १२५॥
पृथक्त्रिजातकोपेतसधान्यमरिचार्द्रकम्।
रसप्रलेपिसंपूपैः सुखोष्णैः संप्रदापयेत्॥ १२६॥
भक्तेन वारुणीमण्डं दद्यात्पातुं पिपासवे।
दाडिमस्य रसं वाथ जलं वा पाञ्चमूलिकम्॥ १२७
धान्यनागरतोयं च दधिमण्डमथापि वा।
अम्लकाञ्जिकमण्डं वा शुक्तोदकमथापि वा॥ १२८
कर्मणानेन सिद्धेन विकार उपशाम्यति।
मात्राकालप्रयुक्तेन बलं वर्णश्च वर्धते॥ १२९॥
रागषाडवसंयोगैर्विविधैर्भक्तरोचनैः।
पिशितैर्बहुपिष्टान्नैर्यवगोधूमशालिभिः॥ १३०॥
अभ्यङ्गोत्सादनैः स्नानैरुष्णैः प्रावरणैर्घनैः।
घनैरगुरुपङ्कैश्च धूपैश्चागुरुजैर्घनैः॥ १३१॥
नारीणां यौवनोष्णानां निर्दयैरवगूहनैः।
श्रोण्यूरुकुचभारैश्च संरोधोष्णसुखावहैः॥ १३२॥
शयनाच्छादनैरुष्णैः रूक्षैश्चान्तर्गृहैः सुखैः।
मारुतप्रबलः शीघ्रं प्रशाम्यति मदात्ययः॥ १३३॥

क्षारमाधुर्याय यदाम्लमद्यदानं तदा किमिति अन्यदम्लं न दीयते इत्याह—क्षारो हीत्यादि । उपर्युपरीति अत्यर्थं श्रेष्ठ इत्यर्थः । मदादय इति मदनिमित्तास्तर्षादयः । केचित्तु ज्वरप्रधानास्तर्षादय इत्यर्थं उन्नेय इत्याहुः । अवदंशोयमुपयुज्य मद्यं पीयते । दक्षः कुक्कुटः । वेशवारः सचोक्तलक्षणः । रसप्रलेपनमिति रसप्रलेपनरूपतया निर्वृत्तरसप्रलेपमिति यावत् । अगुरुपंकैरिति अगुरुलेपैः । घनैरिति वहलैः । संरोधोष्णसुखावहैरिति संरोधजनितोष्मणा सुखकारकैः ॥ ११२—१३३ ॥

मद्यं खर्जूरमृद्वीकापरूपकरसैर्युतम् ।
सदाडिमरसं शीतं सक्तुभिः स्ववचूर्णितम् ॥१३४॥
सशर्करं शार्करं वा माध्वीकमथवापरम् ।
दद्याद्वहूदकं काले पातुं पित्तमदात्यये ॥ १३५ ॥
शशान् कपिञ्जलानेणान् लावानसितपुच्छकान् ।
मधुराम्लान्प्रयुञ्जीत भोजने शालिषष्टिकान् ॥१३६॥
पटोलयूषमिश्रं वा छागलं कल्पयेद्रसम् ।
सतीनमुद्गमिश्रं वा दाडिमामलकान्वितम् ॥१३७॥
द्राक्षामलकखर्जूरपरूपकरसेन वा ।
कल्पयेत्तर्पणान्यूषान् रसांश्च विविधात्मकान् १३८
आमाशयस्थमुत्क्लिष्टं कफपित्तमदात्यये ।
विज्ञाय बहुदोषस्य दह्यमानस्य तृष्यते ॥ १३९ ॥
मद्यं द्राक्षारसं तोयं दत्त्वा तर्पणमेव वा ।
निःशेषं वामयेच्छीघ्रमेवं रोगाद्विमुच्यते ॥ १४० ॥
काले पुनस्तर्पणाद्यं क्रमं कुर्यात्प्रकाङ्क्षिते ।
तेनाग्निर्दीप्यते तस्य दोषशेषान्नपाचनः ॥ १४१ ॥
कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजोस्तथा ।
तृष्यते सविदाहे च सोत्क्लेशे हृदयोरसि ॥ १४२ ॥

मद्यमित्यादिना पैत्तिके विधिमाह । सतीनो वहुलकलायः । रोगाद्विमुच्यत इति प्रकृतमदात्ययाद्विमुच्यत इत्यर्थः । क्रममिति दोषशेषे कोष्ठलेपकोऽत्र ज्ञेयः ॥१३४—१४२॥

गुडूचीभद्रमुस्तानां पटोलस्याथवा भिषक् ।
रसं सनागरं दद्यात् तित्तिरिप्रतिभोजनम् ॥१४३॥
तृष्यते चातिबलवद्वातपित्ते समुद्धते ।
दद्याद्द्राक्षारसं पातुं शीतं दोषानुलोमनम् ॥१४४॥
जीर्णे समधुराम्लेन छागमांसरसेन तम् ।
भोजनं भोजयेन्मद्यस्यानुतर्पं च पाययेत् ॥ १४५ ॥
अनुतर्षस्य मात्रा सा यया नो हन्यते मनः ।
तृष्यते मद्यमल्पाल्पं प्रदेयं स्याद्बहूदकम् ॥ १४६ ॥
तृष्णा येन च संशाम्येन्मदं येन च नाप्नुयात् ।
परूपकाणां पीलूनां रसं शीतमथापि वा ॥१४७॥
पर्णिनीनां चतसृणां पिबेद्वा शिशिरं जलम् ।
मुस्तदाडिमलाजानां तृष्णाघ्नं वा पिबेद्रसम् १४८

गुडूचीत्यादौ रसमिति क्वाथम् । तित्तिरिप्रतिभोजनं जीर्णे भोजने यस्मिन् तित्तिरिः प्रतिभुज्यते तत् अनुतर्पं च पाययेदिति भोजनसमये तृषां लक्षीकृत्य पाययेत् । अनुपानस्य मात्रामाह—अनुतर्षेत्यादि । मुहुर्मुहुर्दीयमानस्य मनो न दूष्यत इति न विकृतिं याति । एतेन तृषायां मनो हन्तृ यन्मद्यं न भवति तदनुतर्षसंज्ञं भवतीत्यर्थः । तृष्णाघ्नमिति कषायरूपं रसम् ॥ १४३—१४८ ॥

कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति १४९
शीतलान्यन्नपानानि शीतशय्यासनानि च ।
शीतवातजलस्पर्शाः शीतान्युपवनानि च ॥ १५० ॥
क्षौमपद्मोत्पलानां च मणीनां मौक्तिकस्य च ।
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः १५१
हेमराजतकांस्यानां पात्राणां शीतवारिभिः ।
पूर्णानां हिमपूर्णानां दृतीनां पवनाहताः ॥ १५२ ॥
संस्पर्शाश्चन्दनार्द्राणां नारीणां च समारुताः ।
चन्दनानां च मुख्यानां शस्ताः पित्तमदात्यये १५३
कुमुदोत्पलपत्राणां सिक्तानां चन्दनाम्बुना ।
हिताः स्पर्शा मनोज्ञानां दाहे मद्यसमुत्थिते १५४
कथाश्च विविधाः शस्ताः शब्दाश्च शिखिनां शिवाः ।
तोयदानां च शब्दा हि शमयन्ति मदात्ययम् १५५
जलयन्त्राभिवर्षीणि वातयन्त्रवहाणि च ।
कल्पनीयानि भिषजा दाहे धारागृहाणि च १५६
फलिनीसेव्यलोध्राम्बुहेमपत्रं कुटन्नटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ १५७ ॥

शुक्तिका चांगेरी ॥ १४९—१५७ ॥

वदरीपल्लवोत्थाश्च तथैवारिष्टकोद्भवाः ।
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं शुभम् ॥१५८॥
सुरा समण्डा दध्यम्लं मातुलुङ्गो रसो मधु ।
सेकप्रदेहे शस्यंते दाहघ्नाः साम्लकाञ्जिकाः १५९
परिषेकावगाहेषु व्यञ्जनानां च सेवने ।
शस्यते शिशिरं तोयं दाहतृष्णाप्रशान्तये ॥ १६० ॥
मात्राकालप्रयुक्तेन कर्मणानेन शाम्यति ।
धीमतो वैद्यवश्यस्य शीघ्रं पित्तमदात्ययम् ॥१६१॥

वदरीत्यादौ वदरीपत्राणि मथित्वा तज्जः फेनो ग्राह्यः । अरिष्टको निंवः ॥ १५८—१६१ ॥

उल्लेखनोपवासाभ्यां जयेत्कफमदात्ययम् ।
तृष्यते सलिलं चास्मै दद्याद्धीवेरसाधितम् ॥१६२॥
वलायाः पृश्निपर्ण्या वा कण्टकार्याथवा शृतम् ।
सनागराभिः सर्वाभिर्जलं वा शृतशीतलम् १६३
दुःस्पर्शितेन-मुस्तेन मुस्तपर्पटकेन वा ।
जलं मुस्तैः शृतं वापि दद्याद्दोषविपाचनम् ॥१६४॥

एतदेव च पानीयं सर्वत्रापि मदात्यये।
निरत्ययं पीयमानं पिपासाज्वरनाशनम् ॥१६५॥
निरामं काङ्क्षितं काले सक्षौद्रं पाययेच्च तम्।
शार्करं मधु वा जीर्णमरिष्टं शीधुमेव वा ॥ १६६ ॥
रूक्षतर्पणसंयुक्तं यवानीनागरान्वितम्।
यवगोधूमिकं चान्नं रूक्षयूषेण भोजयेत् ॥ १६७ ॥
कुलत्थानां सुशुष्काणां मूलकानां रसेन वा।
तनुनाल्पेन लघुना कट्वम्लेनाल्पसर्पिषा ॥ १६८ ॥
व्योषयूषसथाम्लं वा यूषं वा साम्लवेतसम्।
छागमांसरसं रूक्षमम्लं वा जाङ्गलं रसम् ॥१६९॥
स्थाल्यां वाथ कपाले वा भृष्टं निर्द्रववर्तितम्।
कट्वम्ललवणं मांसं भक्षयन्व्रणुयान्मधु ॥ १७० ॥
व्यक्तमारीचकं मांसं मातुलुङ्गरसान्वितम्।
भृष्टं दाडिमसाराम्लमुष्णयूपोपवेष्टितम् ॥ १७१ ॥
यथाग्नि भक्षयेत्काले प्रभूतार्द्रकपेषितम्।
पिबेच्च निगदं मद्यं कफप्राये मदात्यये ॥ १७२ ॥

उल्लेखेत्यादिना कफमदात्ययचिकित्सितम्। तृष्यते सलिलमित्यादौ षडङ्गविधिना जलसाधनं स्मारयति। मधुक्तं माधवं व्योषप्रधानो यूषः निर्द्रववर्तितमिति निर्द्रवरौवेर्तितम्। व्रणुयादिति व्याप्नुयात्। आर्द्रकपेषितमिति आर्द्रखंडानि पेषितानि ॥ १६२—१७२ ॥

सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥१७३॥
एतल्लवणमष्टाङ्गमग्निसंदीपनं परम्।
मदात्यये कफप्राये दद्यात्स्रोतोविशोधनम् ॥१७४॥

सौवर्चलमित्यादौ त्वगेलामरिचादीनां प्रत्येकमेव भागार्धत्वम्। शर्कराभागः पूर्वैकद्रव्यभागः ॥ १७३–१७४ ॥

एतदेव पुनर्युक्त्या मधुराम्लैर्द्रवीकृतम्।
गोधूमान्नयवान्नानां मांसानां चातिरोचनम् १७५
पेषयेत्कटुकैर्युक्तां श्वेतां वीजविवर्जिताम्।
मृद्वीकां मातुलुङ्गस्य दाडिमस्य रसेन वा ॥१७६॥
सौवर्चलैलामरिचैरजाजीभृङ्गदीप्यकैः।
सरागः क्षौद्रसंयुक्तः श्रेष्ठो रोचनदीपनः ॥ १७७ ॥
मृद्वीकानां विधानेन कारयेत्कारवीमपि।
युक्तमत्स्यण्डिकोपेतं रागं दीपनपाचनम् ॥ १७८ ॥
आम्रामलकपेशीनां रागान्कुर्यात्पृथक् पृथक्।
धान्यसौवर्चलाजाजीकारवीमरिचान्वितान् १७९
गुडेन मधुयुक्तेन व्यक्ताम्ललवणीकृतान्।
तैरन्नं रोचते दिग्धं सम्यग्भुक्तं विजीर्यति ॥ १८० ॥
रूक्षोष्णेनान्नपानेन स्नानेनाशिशिरेण च।
व्यायामलङ्घनाभ्यां च युक्ताभ्यां जागरेण तु १८१
कालयुक्तेन रूक्षेण स्नानेनोद्वर्तनेन च।
स्नानवर्णकवासानां प्रहर्षाणां च सेवया ॥ १८२ ॥
प्राणवर्णकराणां च गुरूणामगुरोरपि।
सकामोष्णसुखाङ्गीनामङ्गनानां च सेवया ॥१८३॥
सुखशिक्षितहस्तानां स्त्रीणां संवाहनेन च।
मदात्ययः कफप्रायः शीघ्रमेवोपशाम्यति ॥ १८४ ॥

श्वेतामिति मृद्वीकां। श्वेता च द्राक्षा काश्मीरभवा ज्ञेया। कारवीति अल्पद्राक्षा। आम्रामलकयोः पेशीति अंतःफलगतं सम्यग्गृह्यते। संकोचसुखाङ्गीनां संकोचेन संश्लेषेण उष्णसुखमङ्गं यासां तासाम्। केचित्तु संकोचं कुङ्कुममाहुः ॥ १७५—१८४ ॥

यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति।
सन्निपाते दशविधे तद्विकल्प्यं भिषग्विदा ॥१८५॥
यस्तु दोषविकल्पज्ञो यश्चौषधिविकल्पवित्।
स साध्यान्साधयेद्व्याधीन्
साध्यासाध्यविभागवित् ॥ १८६ ॥

यदिदमित्यादिना सांनिपातिकमदात्ययचिकित्सामाह। यद्यपि त्रयोदशविधः सन्निपातो वृद्धदोषाणां युक्तस्तथापि सर्वमदात्ययानां त्रिदोषजत्वात् यदेतद्वातादिमदात्ययचिकित्सितमुक्तं तदेकदोषोल्वणसन्निपातजमदात्ययचिकित्सितं भवति। तेन हीनमध्याधिकभेदसन्निपातैः यद्दशावशिष्टाः सन्निपातास्तान् अभिप्रेत्यैवमुक्तम्। सन्निपाते दशविधे तद्विकल्प्यमिति हीनमध्याधिकदोषत्रयोद्भूतमदात्ययेषु हीनमध्याधिकदोषभेदेन विकल्प्य चिकित्सा कर्तव्या ॥१८५—१८६॥

वनानि रमणीयानि सपद्माः सलिलाशयाः।
विशदान्यन्नपानानि सहायाश्च प्रहर्षणाः ॥ १८७ ॥
माल्यानि गन्धयोगाश्च वासांसि विमलानि च।
गान्धर्वशब्दाः कान्ताश्च गोष्ठ्यश्च हृदयप्रियाः १८८
संकथाहास्यगीतानां विशदाश्चैव योजनाः।
प्रियाश्चानुगता नार्यो नाशयन्ति मदात्ययम् १८९
नाक्षोभ्यं हि मनो मद्यं शरीरमविहत्य च।
कुर्यान्मदात्ययं तस्मादेष्टव्या हर्षणी क्रिया ॥१९०॥

मदात्ययस्य प्रहर्षिणीं चिकित्सामाह—वनानीत्यादि। यस्मात्पुनर्मदात्यये प्रहर्षिणी चिकित्सा कार्या तद्धेतुमाह-नाक्षोभ्यमिति ॥ १८७—१९० ॥

आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः।
न चेन्मद्यविधिं हित्वा क्षीरमस्य प्रयोजयेत् १९१
"लङ्घनैः पाचनैश्चैव दोषसंशोधनैरपि।
विमदस्य कफे क्षीणे जाते दौर्बल्यलाघवे ॥१९२॥
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य वा
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ॥ १९३ ॥
पयसाभिहते रोगे बले जाते निवर्तयेत्।
क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥१९४॥

क्षीरप्रयोगस्य विषयमाह—लङ्घनैरित्यादि । तत्र कार्यक्षीरवृत्तिक्रमं पुनर्मद्याभ्यासक्रमं चाह पयसाभिहतेत्यादि-क्रमेणेति कालक्रमेण । अल्पाल्पमिति स्तोकं स्तोकं॥१९१—१९४

विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते ।
ध्वंसको विक्षयश्चैव रोगस्तस्योपजायते ॥ १९५ ॥
व्याध्युपक्षीणदेहस्य दुश्चिकित्स्यतमौ मतौ ।
तयोर्लिङ्गं चिकित्सां च यथावदुपदेक्ष्यते ॥ १९६ ॥
श्लेष्मप्रकोपः कण्ठस्य शोषः शब्दासहिष्णुता ।
तन्द्रानिद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ १९७ ॥
हृत्कण्ठरोगः संमोहश्छर्दिरङ्गरुजा ज्वरः ।
तृष्णा कासः शिरःशूलमेतद्विद्क्षयलक्षणम् १९८
तयोः कर्म तदेवेष्टं वातिके यन्मदात्यये ।
तौ हि प्रक्षीणदेहस्य जायेते दुर्बलस्य वा ॥ १९९ ॥
वस्तयः सर्पिषः पानं प्रयोगः क्षीरसर्पिषोः ।
अभ्यङ्गोद्वर्तनस्नानान्यनुपानं च वातनुत् ॥ २०० ॥
ध्वंसको विक्षयश्चैव कर्मणानेन शाम्यति ।
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते ॥ २०१ ॥

एतद्विपर्ययेण मद्यसेवायां दोषमाह—विच्छिन्नेत्यादि । ध्वंसकविद्क्षयौ वक्ष्यमाणलक्षणौ सुश्रुतेनाप्युक्तौ । केचित्तु 'विच्छिन्नमद्यः सहसा यस्तु मद्यं निषेवते । तस्य पानस्यातियोगात् विकारः संभवेदि'ति ग्रन्थेन ध्वंसकस्यावरोधं वर्णयन्ति । एतयोश्चिकित्सामाह—तयोरित्यादि । कर्म इति चिकित्सा तौहीत्यादिना दुर्बलतया वातप्रधानतां दर्शयति । युक्तमद्यस्येति यथोक्तविधिना मद्यमाचरतः ॥ १९५—२०१ ॥

निवृत्तः सर्वमद्येभ्यो नरो यः स्याज्जितेन्द्रियः ।
शारीरमानसैर्धीमान् विकारैर्न स युज्यते ॥२०२॥"

सर्वथामद्यपरित्यागफलमाह—निवृत्तेत्यादि जितेन्द्रिय इति विशेषणं मद्यनिवृत्तावेव प्रयोजनीयम् । शारीरमानसैर्विकारैरिति मद्यव्यापत्तिजन्यैरेव शारीरमानसैर्विकारैः । न युज्यत इति शारीरमानसविकारान्मद्यनिवृत्त्या न युक्तो भवति ॥२०२

भवन्ति चात्र ।

यत्प्रभावा भगवती सुरा पेया यथा च सा ।
यद्द्रव्या यस्य या चेष्टा योगं चापेक्षते यथा ॥२०३॥
यथा यथा मद्यते यैश्च युक्ता महागुणैः ।
यो मदो मदभेदाश्च ये त्रयः स्वस्वलक्षणाः ॥२०४॥
ये च मद्यकृता दोषा गुणा ये च मदात्मकाः ।
यच्च त्रिविधमापानं यथासत्त्वं च लक्षणम् ॥२०५॥
ये सहायाः सुखा ये च चिरक्षिप्रमदा नराः ।
मदात्ययस्य यो हेतुर्लक्षणं यद् यथा च यत् २०६
मद्यं मद्योत्थितान् रोगान् हन्ति यश्च क्रियाक्रमः ।
सर्वं तदुक्तमखिलं मदात्ययचिकित्सिते ॥ २०७ ॥

इति चरकसंहितायां मदात्ययचिकित्सितं नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

यत्प्रभावेत्यादि अध्यायसंग्रहः । संग्रहार्थो व्यक्त एव॥ २०७
इति मदात्ययचिकित्सितं समाप्तम् ॥

---

## पञ्चविंशोऽध्यायः ।

### द्विव्रणीयचिकित्सितम् ।

परावरज्ञमात्रेयं गतमानमदव्यथम् ।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥ १ ॥
भगवन् पूर्वमुद्दिष्टौ द्वौ व्रणौ रोगसंग्रहे ।
तयोर्लिङ्गं चिकित्सां च वक्तुमर्हसि शर्मद ॥ २ ॥
इत्यग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
यौ व्रणौ पूर्वमुद्दिष्टौ निजश्चागन्तुरेव च ॥ ३ ॥
श्रूयतां विधिवत्सौम्य तयोर्लिङ्गं च भेषजम् ।
"निजः शारीरदोषोत्थ आगन्तुर्बाह्यहेतुजः ॥ ४ ॥
वधबन्धप्रपतनाद्दंष्ट्रादन्तनखक्षतात् ।
आगन्तवो व्रणास्तद्वद्विषस्पर्शाग्निशस्त्रजाः ॥ ५ ॥
मन्त्रागदप्रलेपाद्यैर्भेषजैर्हेतुभिश्च ते ।
लिङ्गैकदेशैर्निर्दिष्टा विपरीता निजैर्व्रणाः ॥ ६ ॥
व्रणानां निजहेतूनामागन्तूनाम्प्रशाम्यताम् ।
कुर्याद्दोषबलापेक्षी निजानामौषधं यथा ॥ ७ ॥

मद्यमत्तस्य संप्रहारादिना व्रणोत्पत्तौ व्रणचिकित्सार्थं द्विव्रणीय उच्यते । परो मोक्षः अवरं तज्जानातीति परावरज्ञम् । लिङ्गं चिकित्सां चेत्यत्र हेतोरपि ग्रहणम् । दोषाः शारीरा एव तथापीह शारीरपदं स्नायुदोषादिषु नियुक्तदोषव्युदासार्थम् । निजागन्तुव्रणभेदमाह—मन्त्रेत्यादि । निजैः समं आगन्तवो व्रणाः विपरीताः मन्त्रादिभिर्भेषजैश्च तथा हेतुभिश्च वधबन्धनादिभिस्तथा लिङ्गैकदेशैश्च । स वै लिङ्गैकदेशः यथा आगन्तुः पूर्वमुदेति पश्चाद्वातादीन्कोपयति । निजे तु पूर्वं वातादयः प्रकुप्यन्ति पश्चाद्व्याधय उत्पद्यन्ते । आगन्तुर्व्यथापूर्वमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति इत्यादि आगन्तुव्रणस्य भिन्नविषयतया विशिष्टतेह वक्तव्या । तेन तस्याः चिकित्सामपि समासादेव तावदाह—व्रणानामित्यादि । आगन्तूनां व्रणानां मन्त्रादिचिकित्सया साध्यतां तथा निजानां वक्ष्यमाणैरौषधैः दोषबलापेक्षी सन् कुर्यादिति योजना । आगन्तूनां चेह चिकित्सया प्रशमनं निजदोषानुबन्धादेव ज्ञेयम् । अतएवेह निजहेतूनामिति कृतम् ॥ १—७ ॥

यथास्वैर्हेतुभिर्दुष्टा वातपित्तकफा नृणाम् ।
बहिर्मार्गं समाश्रित्य जनयन्ति निजान्व्रणान् ॥ ८ ॥

यथास्वैरित्यादिना निजव्रणहेतुः संप्राप्त्यादिकथनम् । अत्र यथास्वैर्हेतुभिरिति वचनेन वातादीनां स्वातन्त्र्येण प्रकोपं दर्शयति । अहेतुदुष्टो दोषः स्वतन्त्रो भवति । किंच यथास्वैर्हेतुभिरिति वचनेन य एव वातादिकोपहेतवस्त एवात्र निजव्रणकारका भवन्ति । न पुनरत्र व्रणानां विशिष्टो हेतुरस्ति सामान्यवातादिहेतुस्तु विशिष्टव्रणलक्षणकार्योत्पत्तिः संप्राप्तिभेदाद्भवतीति ज्ञेयम् ॥ ८ ॥

**स्तब्धः कठिनसंस्पर्शो मन्दस्रावोऽतितीव्ररुक् ।**
**तुद्यते स्फुरति श्यावो व्रणो मारुतसंभवः ॥ ९ ॥**
**संपूरणैः स्नेहपानैः स्निग्धैः स्वेदोपनाहनैः ।**
**प्रदेहैः परिषेकैश्च वातव्रणमुपाचरेत् ॥ १० ॥**
**तृष्णामोहज्वरस्वेददाहदुष्ट्यवदारणैः ।**
**व्रणं पित्तकृतं विद्याद्गन्धस्रावैः सपूतिकैः ॥ ११ ॥**
**शीतलैर्मधुरैस्तिक्तैः प्रदेहपरिषेचनैः ।**
**सर्पिःपानैर्विरेकैश्च पैत्तिकं शमयेद्व्रणम् ॥ १२ ॥**
**बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः ।**
**पाण्डुवर्णोऽल्पसंक्लेदश्चिरकारी कफव्रणः ॥ १३ ॥**
**कषायकटुरूक्षोष्णैः प्रदेहपरिषेचनैः ।**
**कफव्रणं प्रशमयेत्तथा लङ्घनपाचनैः ॥ १४ ॥**

स्तब्धः कठिनेत्यादि । वातादिव्रणानां लक्षणानि तथा चिकित्सासूत्रं चाह । प्रदेहैः परिषेचनैरित्यत्र स्निग्धैरित्यनुवर्तते चिरविकारकारीति चिरं विकारं करोतीति चिरविकारी चिकित्सासमासाभिधानं च सुखग्रहणार्थमेव ॥ ९—१४ ॥

**तौ द्वौ नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः ।**
**तेषां परीक्षा त्रिविधा प्रदुष्टा द्वादश स्मृताः १५**
**स्थानान्यष्टौ तथा गन्धाः परिस्रावाश्चतुर्दश ।**
**षोडशोपद्रवा दोषाश्चत्वारो विंशतिस्तथा ॥१६॥**
**तथा चोपक्रमाः सिद्धाः षट्त्रिंशत्समुदाहृताः।**
**विभाव्यमानाः शृणु तान्सर्वानेव यथेरितान् १७**

तौ द्वावित्यादि । नानात्वकारको भेदः नानात्वभेदः । प्रकर्षेण दुष्टाः प्रदुष्टाः ॥ १५-

**कृत्योत्कृत्यस्तथा दुष्टस्त्वदुष्टो मर्मस्थितो नवः ।**
**संवृतो दारुणः स्रावी सविषो विषमस्थितः ॥१८॥**
**त्वक्सङ्ग्युत्सन्न एषां च व्रणान् विद्याद्विपर्ययात् ।**
**इति नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः ॥ १९ ॥**

कृत्योत्कृत्येत्यादिना व्रणभेदा व्याक्रियन्ते । तत्र कृत्यः छेदनेनोपरमणीयः । उत्कृत्यस्तु नात्र किंचित्करणीयमस्ति परं रोपणीय एव । किंवा कृत्यः साध्यः उत्कृत्यस्त्वसाध्यः । कृत्यादयः षट् सविपर्यया एवोक्ताः संवृतादयस्तु सप्तोद्दिष्टाः सविपर्ययाः सन्तः चतुर्दश । उत्सन्नोद्गतमांसः किंवा व्रणाद्बहिः पूयस्योत्सर्गात् विषमस्थितः । सुश्रुते तु तत्राभिसंवृतो अभिविवृत्तेत्यादिना यद्दुष्टव्रणलक्षणमुक्तं तदतिसंवृतादिविषयम् । इहतु संवृतत्वमात्रमुच्यते । तेनेह दुष्टव्रणेन संवृतस्य ग्रहणमुद्भावनीयम् ॥ १८—१९ ॥

**दर्शनप्रश्नसंस्पर्शैः परीक्षा त्रिविधा स्मृता ।**
**वयोवर्णशरीराणामिन्द्रियाणां च दर्शनात् ॥ २० ॥**
**हेत्वर्तिसात्म्याग्निबलं परीक्ष्यं वचनाद्बुधैः ।**
**स्पर्शान्मार्दवशैत्ये च परीक्ष्ये सविपर्यये ॥ २१ ॥**

परीक्षात्रैविध्यं विभजते—दर्शनेत्यादि । इन्द्रियाणि च यद्यपि अतीन्द्रियत्वादनुमानगम्यानि तथापीह तदधिष्ठानानां इन्द्रियशब्देनोपादानम् । अग्निश्च यद्यपि अग्निं जरणशक्त्येति वचनादअनुमानविषयोक्तस्तथापि प्रश्नेनाग्निरवगम्यते एवेति कृत्वा इह वचनपरीक्षणीयतैवोक्ता । सविपर्ययेति काठिन्यौष्ण्ययुक्ते । अनुमानं च यद्यपि परीक्षाधिकारे प्रोक्तं द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं चेत्यादिना तथाप्यनुमानस्य ............किंतु दर्शनपूर्वकत्वादनुमानस्य दर्शनादिना अनुमानमपि इन्द्रियादिग्राहकं संगृहीतमुक्तमिति पश्यामः । दर्शनशब्दश्चात्र साक्षादुपलब्धिवचनः । तेन व्रणगतगन्धेनापि व्रणपरीक्षणं संगृहीतं भवति । दर्शनशब्देन च गृहीतोपदर्शनेति भूयसा व्याप्रियमाणत्वात् २०—२१

**श्वेतोपसन्नवर्त्मातिस्थूलवर्त्मातिपिञ्जरः ।**
**नीलः श्यावोऽतिपिडको रक्तः कृष्णोऽतिपूतिकः २२**
**रौप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश व्रणाः ।**
**कल्पेनानेन दोषाणां चतुर्विंशतिरुच्यते ॥ २३ ॥**
**त्वक्शिरामांसमेदोऽस्थिस्नायुमर्मान्तराश्रयाः ।**
**व्रणस्थानानि निर्दिष्टान्यष्टावेतानि संग्रहे ॥ २४ ॥**
**सर्पिस्तैलवसापूयरक्तश्यावाम्लपूतिकाः ।**
**व्रणानां व्रणगन्धज्ञैरष्टौ गन्धाः प्रकीर्तिताः ॥ २५ ॥**

श्वेतोपसन्नेत्यादिना प्रदुष्टव्रणानाह । रौप्यलक्षणं तन्त्रान्तरादवगन्तव्यम् । तथाहि भोजः रूढाः प्रकुप्यन्ति अन्तर्दोषाः पुनः पुनर्वैहि दुष्टा एव भवन्ति रौप्यास्तेषां प्रकीर्तिता इति । एतेषामेव श्वेतादीनां भेदानां चतुर्विंशतित्वं दर्शयन्नाह—कल्पेनानेनेति । व्रणदुष्टिकारककारणयोगभेदेन भिद्यमानाः चतुर्विंशतिभेदा भवन्तीत्यर्थः । त्वगित्यादि स्थाननिर्देशः । सर्पिरित्यादिना गंधनिर्देशः । श्यावगन्धं दध्यादेः समानं गन्धमाहुः । केचित्तु शवस्य गन्धः शावः अम्लसहचरितगन्धोऽम्लगन्ध इति वदंति ॥ २२—२५ ॥

**लसीकाजलपूयासृग्घरितारुणपिञ्जराः ।**
**कषायनीलहरितस्निग्धरूक्षसितासिताः ॥ २६ ॥**
**इति रूपैः समुद्दिष्टैर्व्रणस्रावाश्चतुर्दश ।**
**विसर्पः पक्षघातश्च शिरास्तम्भोपतानकाः ॥ २७ ॥**
**मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः ।**
**कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः २८**
**षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ।**

स्नायुक्लेदाच्छिराक्लेदाद्गाम्भीर्यात्क्रमिदर्शनात् २९ ।
अस्थिभेदात्सशल्यत्वात् सविषत्वाच्च सर्पणात् ।
नखकाष्ठप्रभेदाच्च चर्मलोमातिघट्टनात् ॥ ३० ॥
मिथ्यावन्धादतिस्नेहादतिभैषज्यकर्षणात् ।
अजीर्णादतिभुक्ताच्च विरुद्धासात्म्यभोजनात् ३१
शोकात्क्रोधाद्दिवास्वप्नाद्व्यायामान्मैथुनात्तथा ।
व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम् ३२
परिस्रावाच्च गन्धाच्च दोषैश्चोपद्रवैः सह ।
व्रणानां बहुदोषाणां कृच्छ्रत्वं चोपजायते ॥ ३३ ॥
त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ।
धीमतोऽभिनवः काले सुखसाध्यः स्मृतो व्रणः ३४
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रतमः स्मृतः ।
सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः ॥ ३५ ॥

लसीकेत्यादिना स्रावानाह । प्रकारांतरोद्दिष्टान् चतुर्विंशतिदोषानाह—स्नायुक्लेदेत्यादि । अत्र नखकाष्ठप्रभेद एकं कारणं । चर्मलोमातिघट्टनं द्वितीयं कारणं । निष्क्रियत्वं असाध्यो निष्प्रतीकार इत्यर्थः । असाध्यत्वमभिधायापि निरुपक्रमताभिधानेन सोपक्रमं असाध्यं याप्यं निषेधयति । ॥ २६—३५ ॥

व्रणानामादितः कार्यं यथासन्नं विशोधनम् ।
ऊर्ध्वभागैरधोभागैः शस्त्रैर्बस्तिभिरेव च ॥ ३६ ॥
सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः ।
यथाक्रममतश्चोर्ध्वं शृणु सर्वानुपक्रमान् ॥ ३७ ॥
शोफघ्नं षड्विधं चैव शस्त्रकर्मावपीडनम् ।
निर्वापणं ससन्धानं स्वेदः शमनमेषणा ॥ ३८ ॥
शोधनौ रोपणीयौ च कषायौ सप्रलेपनौ ।
द्वौ स्नेहौ तद्गुणौ पत्रच्छेदने द्वे च वन्धने ॥ ३९ ॥
भोज्यमुत्सादनं दाहो द्विविधः सावसादनः ।
काठिन्यमार्दवकरे धूपने लेपने शुभे ॥ ४० ॥

अवसरप्राप्तायां षट्त्रिंशदुपक्रमरूपायां चिकित्सायां वक्तव्यायां संशोधनस्य प्राधान्योपदर्शनार्थं पृथगभिधानम् । व्रणानामित्यादि उपक्रमानाह—शोफघ्नमित्यादिना । शोफघ्नउपक्रमो वक्ष्यमाणः । षट्शस्त्रकर्मेति पाटनादि शल्यतंत्रोक्तं कर्मान्तर्भावनीयम् । किंचेषणं शस्त्रकर्म तत्पृथगेवावपीडनं कल्कादीनां वासीपूयनिर्गमनार्थं वक्ष्यति । निर्वापणं दाहौष्ण्यशमनं 'शोधनौ रोपणीयौ च कषायौ संप्रलेपनौ''विति शोधनरोपणकषायौ भेदाद्वक्ष्यति तथापि शोधनरोपणकर्मद्वयकर्तृकतया द्वित्वमेव अत्र तैलघृतयोस्तद्गुणीयत्वम् । काश्मीरास्तु द्वौ स्नेहौ तद्गुणाविति पठंति ॥ ३६—४० ॥

व्रणावचूर्णनं वर्ण्यं लेपनं लोमरोपणम् ।
इति षट्त्रिंशदुद्दिष्टा व्रणानां समुपक्रमाः ॥ ४१ ॥

पत्रच्छेदनेति पत्रमेकमुपक्रमः । छेदनं च द्विविधं बाह्यान्तरभेदेन वक्ष्यमाणमुत्सादनं च व्रणोत्थापनं भवसादनमुत्सन्नव्रणमांसक्षयकरम् । काठिन्यमार्दवकरे धूपनोन्मर्दनेति काठिन्यकरं धूपनम् । एवमुन्मर्दनमपि ज्ञेयम् । व्रणावचूर्णनं द्विविधं एवं षट्त्रिंशदुपक्रमा भवंति शल्यतन्त्रे तु षष्टिरुपक्रमा ये उक्तास्तेष्वन्तर्भावनीयाः ॥ ४१ ॥

सर्वरूपं भिषग्वुद्ध्वा व्रणानां शोफमादितः ।
रक्तावसेचनं कुर्यादजातव्रणशान्तये ॥ ४२ ॥
शोधयेद्बहुदोषांस्तु स्वल्पदोषान् विलङ्घयेत् ।
पूर्वं कषायैः सर्पिर्भिर्जयेद्वा मारुतोत्तरम् ॥ ४३ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलाः ।
ससर्पिष्कः प्रलेपः स्याच्छोफनिर्वापणः परम् ॥४४॥
विजया मधुकं वीरा बिसग्रन्थिः शतावरी ।
नीलोत्पलं नागपुष्पं प्रदेहः स्यात्सचन्दनः ॥ ४५ ॥
सक्तवो मधुकं सर्पिः प्रदेहः स्यात्सशर्करः ।
अविदाहीनि चान्नानि शोफे भेषजमुत्तमम् ॥ ४६ ॥
स चेदेवमुपक्रान्तः शोफो न प्रशमं व्रजेत् ।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥ ४७ ॥
तैलेन वा सर्पिषा वा ताभ्यां वा सक्तुपिण्डिका ।
सुखोष्णा शोफपाकार्थमुपनाहः प्रशस्यते ॥ ४८ ॥
सतिला सातसीवीजदध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ ४९ ॥
रुग्दाहरागतोदैश्च विदग्धं शोफमादिशेत् ।
जलवस्तिसमस्पर्शं संपक्वं पिण्डितोन्नतम् ॥ ५० ॥
उमाथो गुग्गुलुः सौधं पयो दक्षकपोतयोः ।
विट् पलाशभवः क्षारो हेमक्षीरी मकूलकः ॥ ५१ ॥
इत्युक्तो भेषजगणः पक्वशोथप्रभेदनः ।

यथावस्थमुपक्रममाह—पूर्वरूपमित्यादि । त्रिशोफीये व्रणपूर्वरूपं शोथचिकित्सानागतव्रणोपक्रमे नोक्ताः कषायास्तैः सर्पिर्भिश्चेति कषायसर्पिर्भिः उपनाहैरिति सोष्णबहललेपैः किण्वं सुरावीजं उमा अतसी सौधं पयः स्नुहीक्षीरं हेमक्षीरी कंकुष्ठं मकूलको दंती ॥ ४२—५१ ॥

सुकुमारस्य कृच्छ्रस्य शस्त्रं तु परमुच्यते ॥ ५२ ॥
पाटनं व्यधनं चैव छेदनं लेखनं तथा ।
प्रोञ्छनं सीवनं चैव षड्विधं शस्त्रकर्म तत् ॥५३॥

सुकुमारस्येति कृच्छ्रस्येत्यत्र सुकुमारस्य शस्त्रं परं भेदनमिति संबन्धः । पाटनमित्यादिना प्रोक्ते षड्विधशस्त्रकर्मणि एषणीशस्त्रशस्त्रोक्तकर्माविरोधोऽत्र वोद्धव्यः ॥ ५२—५३॥

नाडीव्रणाः पक्वशोथास्तथा क्षतगुदोदरम् ।
अन्तःशल्याश्च ये शोफाः पार्श्वास्ते तद्विधाश्च ये
दकोदराणि संपक्वा गुल्मा ये ये च रक्तजाः ।
व्यध्याः शोणितरोगाश्च विसर्पपिडकादयः ॥५५॥
उद्वृत्तान् स्थूलपर्यन्तानुत्सन्नान् कठिनान् व्रणान् ।
अर्शःप्रभृत्यधीमांसं छेदनेनोपपादयेत् ॥ ५६ ॥

किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान् ।
वातासृग्ग्रन्थिपिडकाः सकोठा रक्तमण्डलाः ५७
कुष्ठान्यभिहतं चाङ्गं शोथान्प्रच्छादयेद्भिषक् ।
सीव्यं कुक्ष्युदराद्यं तु गम्भीरं यद्विपाटितम् ॥५८॥
इति षड्विधमुद्दिष्टं शस्त्रकर्म मनीषिभिः ।
सूक्ष्माननाः कोपवन्तो ये व्रणास्तान्प्रपीडयेत् ५९
कलायाश्च मसूराश्च गोधूमाः सहरेणवः ।
कल्कीकृताः प्रशस्यन्ते निःस्नेहा व्रणपीडने ॥६०॥

पाटनादीनां पृथग्विषयमाह—नाडीव्रणा इत्यादि । संपक्वा गुल्मा ये ते व्यध्याः । तथा रक्तजेति रक्तगुल्माः विधिशोणितीयोक्ताः व्यध्याः साव्यसिराव्यधाः । लेख्यानीति लेखनावस्थां प्राप्तानि । व्रणपीडनेति व्रणपीडनश्च लेपो निःस्नेहः व्रणमुखं वर्जयित्वा कर्तव्यः ॥ ५४—६० ॥

शाल्मलीत्वग्बलामूलं तथा न्यग्रोधपल्लवाः ।
न्यग्रोधादिकमुद्दिष्टं बलादिकमथापि वा ॥ ६१ ॥
आलेपनं निर्वपणं तद्विधान्यैश्च सेचनम् ।
सर्पिषा शतधौतेन पयसा मधुकाम्बुना ॥ ६२ ॥
निर्वापयेत्सुशीतेन रक्तपित्तोत्तरान्व्रणान् ।
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥ ६३ ॥
संदधीत समं वैद्यो बन्धनैश्चोपपादयेत् ।
तान्समान्सुस्थिताञ्ज्ञात्वा फलिनीलोध्रकट्फलैः
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ।
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ॥ ६५ ॥
धातकीलोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः ।
अस्थिभग्नं च्युतं सन्धिं संदधीत समं पुनः ॥६६॥
समेन सममङ्गेन कृत्वान्येन विचक्षणः ।
स्थिरैः कवलिकाबन्धैः कुशिकाभिश्च संस्थितम् ॥
पट्टैः प्रभूतसर्पिष्कैर्बध्नीयादबलं सुखम् ।
अविदाहिभिरन्नैश्च पैष्टिकैस्तमुपाचरेत् ॥ ६८ ॥
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ।
विच्युताभिहताङ्गानां विसर्पादीनुपद्रवान् ॥ ६९ ॥
उपाचरेद्यथाकालं कालज्ञः स्वचिकित्सितात् ।
शुष्का महारुजः स्तब्धा ये व्रणा मारुतोत्तराः ।
स्वेद्याः शङ्करकल्पेन ते स्युः कृशरपायसैः ॥७०॥
ग्राम्यवैलाम्बुजानूपैर्वेशवारैश्च संस्कृतैः ।
उत्कारिकाभिरुष्णाभिः सुखी स्याद्व्रणितस्तदा ७१
सदाहवेदनावन्तो ये व्रणा मारुतोत्तराः ।
तेषां तिलानुमां चैव भृष्टान्पयसि निर्वृतान् ॥७२॥
तेनैव पयसा पिष्ट्वा कुर्यादालेपनं भिषक् ।

न्यग्रोधादिकमिति न्यग्रोधोदुम्बराश्वत्थेत्यादिनोक्तम् । अत्रैव बलादिकं शोथहरोपक्रमोपदिष्टं । लंबानीत्यादिना संधानोपक्रममाह । शुक्तिर्बदरिका समेन सममंगेनेति कृत्वा समेनेति सदृशं कृत्वा संदधीतेति योज्यम् । कवलिकाकुशिकाबन्धौ सुश्रुते द्रष्टव्यौ । विच्युताभिहतांगानामिति आनाहादितेति केचित्पठंति । स्वचिकित्सितादिति विसर्पादिचिकित्सितात् ॥ ६१—७२ ॥

बला गुडूची मधुकं पृश्निपर्णी शतावरी ॥ ७३ ॥
जीवन्तीशर्कराक्षीरं तैलमत्स्यवसाघृतम् ।
संसिद्धा समधूच्छिष्टा शूलघ्नी स्नेहशर्करा ॥ ७४ ॥
द्विपञ्चमूलक्वथितेनाम्भसा पयसाथवा ।
सर्पिषा वा सतैलेन कोष्णेन परिषेचयेत् ॥ ७५ ॥
यवचूर्णं समधुकं सतैलं सह सर्पिषा ।
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ॥ ७६ ॥
उपनाहश्च कर्तव्यः सतिलो मुद्गपायसः ।
रुग्दाहयोः प्रशमनो व्रणेष्वेषु विधिर्हितः ॥ ७७ ॥
(सूक्ष्मानना बहुस्रावाः कोपवन्तश्च ये व्रणाः ।
न च मर्माश्रितास्तेषामेषणं हितमुच्यते ॥ ७८ ॥

बला गुडूचीत्यादि । अत्र बलादीनि पिष्टानि तथा शर्कराक्षीरमधूच्छिष्टतैलादिभिः उत्करिकां कृत्वा अन्ये तु बलादिकल्केन तैलादिस्नेहं चतुर्गुणेन साधयित्वा स्नेहपानादिकं मधूच्छिष्टप्रक्षेपं प्राहुः । स्नेहस्यार्द्रसंहतावस्थितत्वात् मधुशर्करावत्स्नेहशर्करेति व्यपदेशात् । द्विपंचमूलक्वथितेनेति अम्भसा पयसा सर्पिःस्तैले योजनीयेति ॥ ७३—७८ ॥

द्विविधामेषणां विद्यान्मृद्वीं च कठिनामपि ।
उद्भिदैर्मृदुभिर्नालैर्लोहानां वा शलाकया ॥ ७९ ॥
गम्भीरमांसगे देशे पार्श्वे लौहशलाकया ।
एष्यं विद्याद्व्रणं नालैर्विपरीतमतो भिषक् ॥ ८० ॥
पूतिगन्धान् विवर्णांश्च बहुस्रावान्महारुजः ।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥८१॥
त्रिफला खदिरो दार्वी न्यग्रोधादिर्बला कुशः ।
निम्बकोलकपत्राणि कषायाः शोधना मताः ॥८२॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम् ।
मधुकं निम्बपत्राणि प्रलेपो व्रणशोधनः ॥ ८३ ॥

द्विविधामिति औद्भिदैर्मृदुभिर्नालैः मृद्वीं कठिनां । पाठ्यमिति एषणीयं । निम्बएव वृद्धनिम्ब उच्यते । किंवा कुलकेतिपाठः । कुलकः पटोलः ॥ ८३ ॥

नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक् ।
न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः ८४
न्यग्रोधोदुम्बराश्वत्थकदम्बप्लक्षवेतसाः ।
करवीरार्ककुटजाः कषाया रोपणाः स्मृताः ॥८५॥
चन्दनं पद्मकिञ्जल्कं दार्वी त्वङ्नीलमुत्पलम् ।
मेदां मूर्वां समङ्गां च यष्ट्याह्वां व्रणरोपणम् ॥८६॥
प्रपौण्डरीकं जीवन्तीं गोजिह्वां धातकीं बलाम् ।

रोपणं सतिलं दद्यात्प्रलेपं सघृतं व्रणे ॥ ८७ ॥
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफलां बलाम् ।
पटोलं पिचुमर्दं च लोध्रं मुस्तं प्रियङ्गुकम् ॥ ८८ ॥
खदिरं धातकीं सर्जमेलामगुरुचन्दने ।
पिष्ट्वा साध्यं भवेत् तैलं तत्परं व्रणशोधनम् ॥८९॥
प्रपौण्डरीकं मधुकं काकोल्यौ द्वे च चन्दने ।
सिद्धमेतैः समैस्तैलं तर्पणं व्रणरोपणम् ॥ ९० ॥
दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ९१ ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं दृष्ट्वा रोपणीयं घृतं तथा ॥ ९२ ॥
कदम्बार्जुननिम्बानां पाटल्याः पिप्पलस्य च ।
व्रणप्रच्छादने विद्वान्पत्राण्यर्कस्य चादिशेत् ॥९३॥
राङ्कोऽथ बादरश्चैव पट्टो व्रणहितः स्मृतः ।
बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः ॥९४॥

नातिरिक्त इत्यादिना शुद्धव्रणलक्षणमभिधाय रोपणमाह—न्यग्रोधेत्यादि । कषाया इति बहुवचननिर्देशात्समस्तप्रयोगान् सूचयति । दार्वीति व्रणशोधनीयं हरिद्राघृततैले साधयेत् । यथोक्ततैलद्रव्यैरेव साधयेदिति । घृतविषयमाह—रक्तपित्तोत्तरमित्यादि । रोपणीयमिति वचनात् रोपणमेव घृतं कर्तव्यं नतु शोधनार्थं घृतं कर्तव्यमित्यर्थः । सव्यदक्षिणेति वामदक्षिणः । अत्रैव शल्योक्तचतुर्दशबन्धावरोधः कार्यः ॥ ८४—९४ ॥

लवणाम्लकटूष्णानि विदाहीनि गुरूणि च ।
वर्जयेदन्नपानानि व्रणी मैथुनमेव च ॥ ९५ ॥
नातिशीतगुरुस्निग्धमविदाहि यथाक्रमम् ।
अन्नपानं व्रणहितं हितं चास्वपनं दिवा ॥ ९६ ॥
स्तन्यानि जीवनीयानि बृंहणीयानि यानि च ।
उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत् ९७
भूर्जग्रन्थ्यश्मकासीसमधोभागानि गुग्गुलुः ।
व्रणावसादनं तद्वत्कलविङ्ककपोतविट् ॥ ९८ ॥

स्तन्यानि षड्विरेचनाशयाश्रितीयोक्तानि । अश्मकासीसं धातुकासीसं । अधोभागानि त्रिवृतादीनि विरेचनद्रव्याणि ॥ ९५—९८ ॥

रुधिरेऽतिप्रवृद्धे तु छिन्ने छेद्येऽधिमांसके ।
कफग्रन्थिषु गण्डेषु वातस्तम्भानिलार्तिषु ॥ ९९ ॥
गूढपूयलसीकेषु गम्भीरेषु स्थिरेषु च ।
क्लिन्नेषु चाङ्गदेशेषु कर्माग्नेः संप्रशस्यते ॥ १०० ॥
मधूच्छिष्टेन तैलेन मज्जक्षौद्रवसाघृतैः ।
तप्तैर्वा विविधैर्लौहैर्दहेद्दाहविशेषवित् ॥ १०१ ॥
रूक्षाणां सुकुमाराणां गम्भीरान्मारुतोत्तरान् ।
दहेत् स्नेहैर्मधूच्छिष्टैर्लौहैः क्षौद्रैस्ततो घृतैः ॥१०२॥
बालदुर्बलवृद्धानां गर्भिण्या रक्तपित्तिनाम् ।
तृष्णाज्वरपरीतानामबलानां विषादिनाम् ॥१०३॥

छेद्येति छेदनार्हे । तप्तैरिति रूक्षस्निग्धदाहभेदविषयं दर्शयन्नाह—सुकुमाराणामित्यादिना । दाहविशेषविदिति स्निग्धरूक्षादिरूपं तथा बिन्दुवलयादिरूपं जानातीति दहविशेषवित् विषादिनामिति भक्षितविषाणां ॥९९—१०३॥

नाग्निकर्मोपदेष्टव्यं स्नायुमर्मव्रणेषु च ।
सविषेषु च शल्येषु नेत्रकुष्ठव्रणेषु च ॥ १०४ ॥
रोगदोषबलापेक्षी मात्राकालाग्निकोविदः ।
शस्त्रकर्माग्निकृत्येषु क्षारमप्यवचारयेत् ॥ १०५ ॥
कठिनत्वं व्रणा यान्ति गन्धैः सारैश्च धूपिताः ।
सर्पिर्मज्जवसाधूपैः शैथिल्यं यान्ति हि व्रणाः १०६
रुजः स्रावाश्च गन्धाश्च क्रिमयश्च व्रणाश्रिताः ।
शैथिल्यं मार्दवं चापि धूपनेनोपशाम्यति ॥१०७॥
लोध्रन्यग्रोधशुङ्गानि खदिरस्त्रिफलाघृतम् ।
प्रलेपो व्रणशैथिल्ये सौकुमार्यप्रबोधनः ॥ १०८ ॥
सरुजः कठिनाः स्तब्धा निरास्रावाश्च ये व्रणाः ।
यवचूर्णैः ससर्पिष्कैर्बहुशस्तान्प्रलेपयेत् ॥१०९॥
मुद्गषष्टिकशालीनां पायसैर्वा यथाक्रमम् ।
सघृतैर्जीवनीयैर्वा तर्पयेत्तानभीक्ष्णशः ॥ ११० ॥
ककुभोदुम्बराश्वत्थलोध्रजाम्बवकट्फलैः ।
त्वचमाश्वेव गृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः १११
मनःशिलैला मञ्जिष्ठा लाक्षा च रजनीद्वयम् ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ११२
अयोरजः सकासीसं त्रिफलाकुसुमानि च ।
करोति लेपः कृष्णत्वं सद्य एव नवत्वचि ॥११३॥
कालीयकनताम्रास्थिहेमकाला रसोत्तमः ।
लेपः सगोमयरसः सवर्णीकरणः परः ॥ ११४ ॥
श्यामकाश्वत्थनिचुलमूलं लाक्षा सगैरिका ।
सहेमश्चामृतासङ्गा कासीसं चेति वर्णकृत् ॥११५॥

यद्यपि शस्त्रकर्मसु क्षारः पृथक् पठितः तथापि शस्त्रादीनां उपक्रमगृहीतत्वात् क्षारमप्यवचारयेदिति वचनेन क्षारोऽपि विहितः । तर्पयेदिति तर्पणार्थं लेपं कारयेत् । ककुभेत्यादि प्रकरणेन त्वग्जननं तथा वर्णकरणं तथा रोमजननमिति उपक्रमत्रयमाह—त्वचमाश्वेव गृह्णंति इति सद्यो भवंति त्रिफलाकुसुमानीति त्रिफलापुष्पाणि । नता प्रियंगुः । हेमकाला मंजिष्ठा । रसोत्तमः पारदः घृतं वा । अमृतासंगः कपिकच्छः ॥ १०४—१११ ॥

चतुष्पदानां त्वग्लोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेल्लोमवती पुनः ॥ ११६ ॥
षोडशोपद्रवा ये च व्रणानां परिकीर्तिताः ।
तेषां चिकित्सा निर्दिष्टा यथास्वे स्वे चिकित्सिते
तत्र श्लोकौ ।
द्वौ व्रणौ व्रणभेदाश्च परीक्षा दुष्टिरेव च ।
स्थानानि गन्धाः स्रावाश्च सोपसर्गाः क्रियाश्च याः
गुणाधिकारे सप्रश्नमेतन्नवकमुक्तवान् ।
मुनिर्व्याससमासाभ्यामग्निवेशाय धीमते ॥११९॥

इति चरकसंहितायां द्विव्रणीयचिकित्सितं नाम
पंचविंशोऽध्यायः ॥ २५ ॥

द्वौ व्रणावित्याद्यध्यायसंग्रहः व्यक्तः ॥ ११८—११९ ॥
इति द्विव्रणीयचिकित्सितं समाप्तम् ॥

## षड्विंशोऽध्यायः ।

अथातस्त्रिमर्मीयचिकित्सितमध्यायं
व्याख्यास्यामः ।

"सप्तोत्तरं मर्मशतं यदुक्तं
शरीरसंख्यामधिकृत्य तेभ्यः ।
मर्माणि बस्तिं हृदयं शिरश्च
प्रधानभूतानि वदन्ति तज्ज्ञाः ॥ १ ॥

द्विव्रणीये द्विसंख्यावच्छिन्नरोगचिकित्साभिधानानंतरं द्विसंख्यावच्छिन्नशिरोहृदयवस्तिचिकित्साभिधानार्थं त्रिमर्मीयचिकित्सोच्यते । त्रिमर्मीयेन हि त्रिमर्माश्रिता रोगा अभिधीयन्ते । तेन त्रिमर्मीयरोगानधिकृत्य कृतं चिकित्सितं त्रिमर्मीयचिकित्सितमवधारयति सप्तोत्तरमित्यादि । शरीरसंख्यामधिकृत्येति शरीरसंख्या शारीरे उक्तमधिकृत्येत्यर्थः ॥१॥

प्राणाश्रयान्तान्परिपीडयन्ति
वातादयोऽसूनपि पीडयन्ति ।
तत्संश्रितानामनुपालनार्थं
महागदानां शृणु सौम्य रक्षाम् ॥ २ ॥

हृदयादिमर्मप्राधान्ये हेतुमाह—प्राणाश्रयानिति । हृदयादीनां प्राणाश्रयत्वे उपपत्तिमाह—तानिति । हृदयाद्युपघातेन यस्माद्विशेषतः प्राणोपघातो भवति तस्मात् हृदयाद्याश्रिताः प्राणा उच्यन्ते । यथा भित्त्युपघातोपहन्यमानं चित्रं भित्त्याश्रयमुच्यते । तत्संश्रितानामिति प्राणाश्रयाणां हृदयादीनां महान्तो गदा येषां भवंति तेषां महागदानां वस्त्यादीनां रक्षां । शृणु किंवा तत्संश्रितानामिति वस्त्यादिसंश्रितानां महागदानां रक्षामिति चिकित्साम् ॥ २ ॥

कषायतिक्तोषणरूक्षभोज्यैः
संधारणाभोजनमैथुनैश्च ।
पक्वाशये कुप्यति चेदपानः
स्रोतांस्यधोगानि बली स रुद्ध्वा ॥ ३ ॥
करोति विण्मारुतमूत्रसङ्गं
क्रमादुदावर्तमतः सुघोरम् ।
रुग्बस्तिहृत्कुक्ष्युदरेष्वभीक्ष्णं
सपृष्ठपार्श्वेष्वतिदारुणा स्यात् ॥ ४ ॥
आध्मानहृल्लासविकर्तिकाश्च
तोदोऽविपाकश्च सबस्तिशोथः ।
वर्चोऽप्रवृत्तिर्जठरे च गण्डा-
न्यूर्ध्वं च वायुर्विहतो गुदे स्यात् ॥ ५ ॥
कृच्छ्रेण शुष्कस्य चिरात्प्रवृत्तिः
स्याद्वा तनुः स्यात्खररूक्षशीता ।
ततश्च रोगा ज्वरमूत्रकृच्छ्र-
प्रवाहिकाहृद्ग्रहणीप्रदोषाः ॥ ६ ॥
वम्यान्ध्यबाधिर्यशिरोऽभिताप-
वातोदराष्ठीलमनोविकाराः ।
तृष्णास्रपित्तारुचिगुल्मकास-
श्वासप्रतिश्यायार्दितपार्श्वरोगाः ॥ ७ ॥
अन्ये च रोगा बहवोऽनिलोत्था
भवन्त्युदावर्तकृताः सुघोराः ।
चिकित्सितं चास्य यथावदूर्ध्वं
प्रवक्ष्यते तच्छृणु चाग्निवेश ॥ ८ ॥
तैलं तु शीतज्वरनाशनोक्तं
स्वेदैर्यथोक्तैः प्रविलीनदोषम् ।
उपाचरेद्वर्तिनिरूहबस्ति-
स्नेहैर्विरेकैरनुलोमनान्नैः ॥ ९ ॥

बस्त्यादिजानां यथाक्रमं हेत्वादिमाह—कषायेत्यादि । ऊषणः कटुकः । पक्वाशय इत्यादिना उदावर्तसंप्राप्तिलिंगचिकित्सितानि प्राह । ननु कथमपानः कुपितः अपानस्यैव सङ्गं करोतीति ब्रूमः । आत्मनैवायं दुष्टः सम्यगप्रवर्तमानः आत्मनः सङ्गं करोति । यथा मन एव मनोनिग्रहं करोति । उक्तं 'इन्द्रियाभिग्रहः कर्म मनसः स्व विनिग्रह' इति । ऊर्ध्वश्चेति ऊर्ध्वगमनः स्वभावः । तैलं ज्वरनाशनोक्तमिति शीतज्वरनाशनमगुर्वाद्युक्तम् । वर्तिः फलवर्तिः ॥ ८—९ ॥

श्यामात्रिवृन्मागधिकास्त्रिचूर्णं
गोमूत्रपिष्टं दशभागमाषम् ।
सनीलिकां द्विलवणां गुडेन
वर्तिं कराङ्गुष्ठनिभां विदध्यात् ॥ १० ॥
पिण्याकसौवर्चलहिङ्गुभिर्वा
ससर्षपत्र्यूषणयावशूकैः ।
क्रिमिघ्नकम्पिल्लकशङ्खिनीभिः
सुधार्कजक्षीरगुडैर्युताभिः ॥ ११ ॥

स्यात्पिप्पली सर्पपराटवेश्म-
धूमैः सगोमूत्रगुडैश्च वर्तिः ।
श्यामाफलेक्ष्वाकुसपिप्पलीकं
नाड्याथवा तत्प्रधमेत्तु चूर्णम् ॥ १२ ॥
रक्षोघ्नतुम्बीकरहाटकृष्णा-
चूर्णं सजीमूतकसैन्धवं वा ।
स्निग्धे गुदे तान्यनुलोमयन्ति
नरस्य वर्चोऽनिलमूत्रसङ्गम् ॥ १३ ॥
तेषां विघाते तु भिषग्विदध्या-
त्स्वभ्यक्तसुस्विन्नतनोर्निरूहम् ।
ऊर्ध्वानुलोमौषधमूत्रतैल-
क्षाराम्लवातघ्नयुतं सुतीक्ष्णम् ॥ १४ ॥

श्यामेत्यादि। फलवर्तौ श्यामा त्रिवृद्भेदः । दशभागा माषा यस्यां सा दशभागमाषा । द्विर्लवणेति द्विर्भागलवणा । गुडेनेति वचनेन यावता गुडेन वर्तिः कर्तुं युज्यते तावन्मानो गुडो देयः । यावच्छूकैरित्यन्तेन द्वितीया वर्तिः माषगुडेनैव कर्तव्या । शंखिनी श्वेतबुन्दा फलं मदनफलं वेश्मधूमोगार-धूमः । रक्षोघ्नः सर्पपः करहारो मदनः तेषां विघात इति फलवर्तिचूर्णानामुक्तानां कार्याकरणे ऊर्ध्वानुलोमौषधं वमन-विरेचनौषधम् ॥ १०—१४ ॥

वातेऽधिकेऽम्लं लवणं सतैलं
क्षीरेण पित्ते तु कफे समूत्रम् ।
समूत्रवर्चोऽनिलसङ्गमाशु
गुदं शिराश्च प्रगुणीकरोति ॥ १५ ॥
त्रिवृत्सुधापत्रतिलादिशाकं
ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भि-
रद्यात्प्रसन्नागुडशीधुपायी ॥ १६ ॥

वातेऽधिक इत्यादिना दोषभेदेन साधनमाह । उदावर्ते पित्तकफौ वातकोपितावेव ज्ञेयौ । प्रसन्ना मद्योपरि स्वच्छो भागः । गुडकृतः सीधुः गुडसीधुः ॥ १५—१६ ॥

भूयोऽनुबन्धे तु भवेद्विरेच्यो
मूत्रप्रसंघ्नादधिमण्डयुक्तैः ।
स्वस्थं तु पश्चादनुवासयेत्तं
रौक्ष्याद्धि सङ्गोऽनिलवर्चसोश्चेत् ॥ १७ ॥
द्विरुत्तरं हिङ्गुवचाग्निकुष्ठं
सुवर्चिका चैव विडङ्गचूर्णम् ।
सुखाम्बुनाऽऽनाहविसूचिकार्ति-
हृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥ १८ ॥
वचाभयाचित्रकयावशूका-
न्सपिप्पलीकातिविषान्सकुष्ठा-
नुष्णाम्बुनानाहविमूढवाता-
न्पीत्वा जयेदाशु रसौदनाशी ॥ १९ ॥
हिङ्गूग्रगन्धा विडशुण्ठ्यजाजी
हरीतकीपुष्करमूलकुष्ठम् ।
यथोत्तरं भागविवृद्धमेत-
त्प्लीहोदराजीर्णविसूचिकासु ॥ २० ॥
स्थिरादिवर्गस्य पुनर्नवायाः
श्यामाकपूतीककरञ्जयोश्च ।
सिद्धः कषाये द्विपलांशिकानां
प्रस्थो घृतात्स्यात्प्रतिरुद्धवाते ॥ २१ ॥

भूयोनुबन्धेति उदावर्तानुबन्धे । एतच्च विरेचनं वस्तिदानं च सप्ताहादूर्ध्वम् । यदुक्तं 'नरो विरिक्तस्तु निरूहदानं विवर्जये-त्सप्तदिनान्यवश्यम् । शुद्धो निरुहेण विरेचनं चे'ति । द्विरुत्तरे-त्यादौ यथोत्तरद्रव्याणां द्वैगुण्यम् । सुवर्चिका स्वर्जिकाक्षारः । सुखांबुनापीतमिति शेषः । उग्रगन्धा अजमोदा । स्थिरादि-वर्गस्येति अल्पपञ्चमूलस्य। शम्याकपूतिककरंजयोश्चेत्यत्र पूतिक-शब्दः करंजविशेषणम् । तथाहि जतूकर्णः । सर्पप उग्रपू-तिकः पुनर्नवा स्थिराद्यमित्यादि ॥ १७—२१ ॥

फलं च मूलं च विरेचनोक्तं
हिङ्ग्वर्कमूलं दशमूलमग्र्यम् ।
स्नुक्चित्रकौ चैव पुनर्नवा च
तुल्यानि सर्वैर्लवणानि पञ्च ॥ २२ ॥
स्नेहैः समूत्रैः सहजर्जराणि
शरावसन्धौ विपचेत्सुलिप्ते ।
पक्वं सुपिष्टं लवणं तदन्नैः
पानैस्तथानाहरुजाघ्नमद्यात् ॥ २३ ॥
हृत्स्तम्भमूर्ध्वामयगौरवार्तं
चोद्गारसङ्गेन सपीनसेन ।
आनाहमामप्रभवं जयेत्तु
प्रच्छर्दनैर्लङ्घनपाचनैश्च ॥ २४ ॥
गुल्मोदरब्रध्नार्शःप्लीहोदावर्तयोनिशुक्रगदे ।
मेदःकफसंसृष्टे मारुतरक्तेऽवगाढे च ॥ २५ ॥
गृध्रसिपक्षवधादिषु विरेचनार्हेषु वातरोगेषु ।
वाते विबद्धमार्गे मेदःकफपित्तरक्तेन ॥ २६ ॥
पयसा मांसरसैर्वा त्रिफलारसयूषमूत्रमदिराभिः ।
दोषानुबन्धयोगात्प्रशस्तमैरण्डजं तैलम् ॥ २७ ॥
तद्वातनुस्वभावात्संयोगवशाद्विरेचनाच्च जयेत् ।
मेदोऽसृक्पित्तकफान्मिश्रानिलरोगजित्तत्स्यात् २८
बलकोष्ठव्याधिवशादापञ्चपला भवेन्मात्रा ।
मृदुकोष्ठबलानां सह भोज्यं तत्प्रयोज्यं स्यात् ॥२९

इत्युदावर्तचिकित्सा ।

फल च मूलं च विरेचनोक्तमिति । दीर्घजीवितीये मूलि-नीविरेचनकर्मण्युक्तम् । किंवा कल्पे विरेचनयोगेषु वक्ष्यमाणं

हृदित्यादिना उदावर्तस्यैव हेतुलक्षणविशेषेण आनाहसंज्ञां प्रदर्श्य तत्र भेषजमाह ॥ २३—२९ ॥

इत्युदावर्तचिकित्सा ॥

## अथ मूत्रकृच्छ्रनिदानम् ।

व्यायामतीक्ष्णौषधरूक्षमद्य-
प्रसङ्गनित्यद्रुतपृष्ठयानात् ।
आनूपमत्स्याध्यशनादजीर्णा-
त्स्युर्मूत्रकृच्छ्राणि नृणामिहाष्टौ ॥ ३० ॥
पृथङ्मलाः स्वैः कुपिता निदानैः
सर्वेऽथवा कोपमुपेत्य वस्तौ ।
मूत्रस्य मार्गं परिपीडयन्ति
यदा तदा मूत्रयतीह कृच्छ्रात् ॥ ३१ ॥
तीव्रा हि रुग्वङ्क्षणवस्तिमेढ्रे
स्वल्पं मुहुर्मूत्रयतीह वातात् ।
पीतं सरक्तं सरुजं सदाहं
कृच्छ्रान्मुहुर्मूत्रयतीह पित्तात् ॥ ३२ ॥
वस्तेः सलिङ्गस्य गुरुत्वशोथौ
मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ।
सर्वाणि रूपाणि तु सन्निपाता-
द्भवन्ति तत्कृच्छ्रतमं तु कृच्छ्रम् ॥ ३३ ॥

इति मूत्रकृच्छ्रनिदानम् ।

व्यायामेत्यादिना वातपित्तकफसन्निपातजानां मूत्रकृच्छ्राणां संप्राप्तिमाह—तीव्रा हि रुगित्यादिचतुर्णां रोगमाह ॥ ३०—३३ ॥

## ( अश्मरीनिदानम् । )

विशोषयेद्वस्तिगतं तु शुक्रं
मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाऽश्मर्युपजायते तु
क्रमेण पित्तेष्विव रोचना गोः ॥ ३४ ॥

विशोषयेदित्यादिना चतुःप्रकारानप्यश्मरीरोगानाह—तन्त्रान्तरे अश्मर्यस्तु वातपित्तकफशुक्रजा उक्ताः, यद्यपि सर्वाश्मरीषु दोषत्रयजन्यत्वमस्ति 'संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः । तद्वद्बलासं वस्तिस्थमूष्माणहन्ति चानिलः' इति सुश्रुते प्रतिपादितम् । तथाप्येकदोषाभिप्रायेण वातजादिव्यपदेशो ज्ञेयः । वातजायामश्मर्यां प्रबलेन वायुना मूत्रशोषे क्रियमाणे तत्कृतः कफ एवाश्मरीरूपः क्रियते । एवं पित्ताश्मर्यामपि ज्ञेयम् । अतएव सुश्रुते श्लेष्माधिष्ठानाः सर्वे एवाश्मर्य उक्ताः । अश्मर्युत्पादे दृष्टान्तमाह—पित्तेष्विव रोचना गोरिति । पित्तेष्विति बहुवचनं पित्तबहुलापेक्षया ॥ ३४ ॥

कदम्बपुष्पाकृतिरश्मतुल्या
श्लक्ष्णा त्रिपुट्यप्यथवापि मृद्वी ।
मूत्रस्य चेन्मार्गमुपैति रुध्वा
मूत्रं रुजं तस्य करोति वस्तौ ॥ ३५ ॥
ससीवनीमेहनवस्तिशूलं
विशीर्णधारं च करोति मूत्रम् ।
मृद्गाति मेढ्रं स तु वेदनार्तो
मुहुः शकृन्मुञ्चति मेहते च ॥ ३६ ॥

कदम्बपुष्पाकृत्यादयो विशेषाः दोषभेदत्वेनोन्नेयाः । तत्र वातेन कदम्बपुष्पाकृतिः । त्रिपुटी च, पित्तेनाश्मतुल्या श्लक्ष्णा, मृद्वी कफेन शुक्रेण च ॥ ३५—३६ ॥

क्षोभात्क्षते मूत्रयतीह सासृक्
तस्याः सुखं मेहति च व्यपायात् ।
एषाश्मरी मारुतभिन्नमूर्तिः
स्याच्छर्करा मूत्रपथात्क्षरन्ती ॥ ३७ ॥
रेतोऽभिघाताभिहतस्य पुंसः
प्रवर्तयेत्तस्य तु मूत्रकृच्छ्रम् ।
स्याद्वेदना वङ्क्षणवस्तिमेढ्रे
तस्यातिशूले वृषणातिवृत्ते ॥ ३८ ॥
शुक्रेण संरुद्धगतिः प्रवाहो
मूत्रं स कृच्छ्रेण विमुञ्चतीह ।
तमण्डयोः स्तब्धमिति ब्रुवन्ति
रेतोऽभिघाते प्रवदन्ति कृच्छ्रम् ॥ ३९ ॥

क्षोभात्क्षत इति । अश्मरीक्षोभात् मूत्रमार्गे वस्तौ । तस्या इत्यश्मर्याः । व्यपायादिति मूत्रमार्गापगमात् । सुखमिति निर्वेदनम् । एषेत्यादिना शर्करामाह—भिन्नमूर्तिरिति भेदितमूर्तिः अतएव मूत्रपथात्क्षरन्तीत्युक्तम् । तेन वातेन द्विधा त्रिधा भिन्नाश्मरी मूत्रपथेन क्षरन्ती शर्करेव भवति ॥ ३७—३९ ॥

शुक्रं मलाश्चैव पृथक् पृथग्वा
मूत्राशयस्थाः प्रतिवारयन्ति ।
तद्व्याहतं मेहनवस्तिशूलं
मूत्रं सशुक्रं हि करोति बद्धम् ॥ ४० ॥
स्तब्धश्च शूनो भृशवेदनश्च
तुद्येत वस्तिर्वृषणौ च तस्य ।
क्षताभिघातात्क्षतजं क्षयाद्वा
प्रकोपितं वस्तिगतं विबद्धम् ॥ ४१ ॥
तीव्रार्तिमूत्रेण सहाश्मरीत्व-
मायाति तस्मिन्नतिसञ्चिते च ।
आध्मातता विन्दति गौरवं च
वस्तेर्लघुत्वं च विनिःसृतेऽस्मिन् ॥ ४२ ॥

इत्यश्मरीनिदानम् ।

शुक्रे मलेत्यादिना शुक्रमूत्रकृच्छ्रलक्षणम् । शुक्राशयस्थेति शुक्रमार्गस्थिता । क्षतेत्यादिना रक्तजं मूत्रकृच्छ्रमाह—क्षतजमिति । रक्तं क्षयाद्वा प्रकोपितमिति अतिव्यवायात् शुक्रक्षये सति वायुनोदीर्य वस्तिमानीतम् । आध्मातताम् इति वस्तिपूर्णतां । अस्मिन्निति वस्ति संचितरक्ते एवं सूत्रस्थानोद्दिष्टाष्टौमूत्राघाता मूत्रकृच्छ्रशब्देनेह निर्दिश्य व्याकृताः । ये तु त्रिमर्मीयसिद्धौ त्रयोदश मूत्राघाता वक्तव्यास्ते सूत्रस्थानेऽसूत्रिता अपि एकादशक्षुद्रकुष्ठवदन्तर्भावनीयाः । मूत्राघातमूत्रकृच्छ्रयोश्चायं विशेषो यन्मूत्रकृच्छ्रे मूत्रं कृच्छ्रेण वहति मूत्राघाते मूत्रं शोष्यते प्रविहन्यते । सुश्रुतेऽपि च मूत्रकृच्छ्रमूत्राघातयोर्विशेषोऽध्यायभेदेनैवोक्तः । अन्येतु मूत्रकृच्छ्राविशेषेणैव मूत्राघातानाहुः । यथायोग्यतया वातपित्तजादिचतुर्षु मूत्रकृच्छ्रेषु मूत्राघाता अन्तर्भावयन्ति तेन न पृथङ्मूत्राघाताभिधानं ॥४०—४२॥

( अथ मूत्रकृच्छ्राश्मरीचिकित्सा । )

अभ्यञ्जनस्नेहनिरूहवस्ति-
स्नेहोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धा-
न्युञ्ज्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥ ४३ ॥
पुनर्नवैरण्डशतावरीभिः
पत्तूरवृश्चीरबलाश्मभिद्भिः ।
द्विपञ्चमूलेन कुलत्थकोलं
यवैश्च तोयोत्क्वथिते कषाये ॥ ४४ ॥
तैलं वराहर्क्षवसाघृतं च
तैरेव कल्कैर्लवणैश्च साध्यम् ।
तन्मात्रयाशु प्रतिहन्ति पीतं
शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥ ४५ ॥
एतानि चान्यानि वरौषधानि
सर्वाणि शस्तान्यपि चोपनाहे ।
स्युर्लोमशस्तैलफलानि चैव
स्नेहाम्लयुक्तानि सुखोष्णवन्ति ॥ ४६ ॥

मूत्रकृच्छ्रचिकित्सामाह—अभ्यञ्जनेत्यादि । स्थिरादिभिः पञ्चमूलैर्वातहरैरिति वातहरत्वेन प्रतिपादितैः । पत्तूरः सालिंचिका । अश्मभित् पाषाणभेदः । अन्यानि चैवंगुणानि आस्फोटादीनि ॥ ४३—४६ ॥

सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्तिपयोविरेकाः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्याः ॥ ४७ ॥
शतावरीकाशकुशाश्वदंष्ट्रा-
विदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्कराभ्यां
युक्तं पिबेत् पैत्तिकमूत्रकृच्छ्री ॥ ४८ ॥
पिबेत्कषायं कमलोत्पलानां
शृङ्गाटकानामथवा विदार्याः ।
दण्डोत्पलानामथवापि मूलं
पूर्वेण कल्पेन तथा सुशीतम् ॥ ४९ ॥

ग्रैष्मो विधिरिति । तस्याशीतीयोक्तग्रीष्मविधिः तत्र शिशिरावेव सेकावगाहौ यद्यप्युक्तौ तथापि विशेषेण शिशिरसेकावगाहकरणार्थं पुनरभिधानम् । दण्डोत्पलं अश्म इति ख्यातं । पूर्वेण कल्पेनेति क्वाथेन मधुशर्करयोर्योगेन च ॥ ४७—४९॥

एर्वारुबीजं त्रपुषात्कुसुम्भा-
त्सकुङ्कुमः स्याद्वृषकश्च पेयः ।
द्राक्षारसेनाश्मरिशर्करासु
सर्वेषु कृच्छ्रेषु प्रशस्त एषः ॥ ५० ॥
एर्वारुबीजं मधुकं सदारु
पैत्ते पिबेत्तण्डुलधावनेन ।
दार्वीं तथैवामलकीरसेन
समाक्षिकां पित्तकृते तु कृच्छ्रे ॥ ५१ ॥

त्रपुषात् कुसुम्भादित्यत्र बीजमिति संबध्यते ॥५०-५१॥

क्षारोष्णतीक्ष्णौषधमन्नपानं
स्वेदो यवान्नं वमनं निरूहाः ।
तक्रं सतिक्तौषधसिद्धतैल-
मभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ ५२ ॥
व्योषं श्वदंष्ट्रा त्रुटिसारसास्थि
कोलप्रमाणं मधुमूत्रयुक्तम् ।
पिबेत्त्रुटिं क्षौद्रयुतां कदल्या
रसेन कैटर्यरसेन वापि ॥ ५३ ॥
तक्रेण युक्तं शितिमारकस्य
बीजं पिबेत्कृच्छ्रविनाशहेतोः ।
पिबेत्तथा तण्डुलधावनेन
प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ ५४ ॥
सप्तच्छदारग्वधकेबुकैला
धवं करञ्जं कुटजं गुडूचीम् ।
पक्त्वा जले तेन पिबेद्यवागूं
सिद्धं कषायं मधुसंयुतं वा ॥ ५५ ॥

क्षारोष्णेत्यादि । कफकृच्छ्रे भेषजे क्षारादिभिर्युक्तमन्नपानं प्रयोज्यम् । ऊषणं कटुकं त्रुट्येला सारसः पक्षी खनामख्यातः । कोलप्रमाणमिति अष्टमापकमानं । कैटर्यः पार्वतो निम्बः । शितिमारकः शालिञ्चः ॥ ५२—५५ ॥

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम् ।
त्रिभ्योऽधिके प्राग्वमनं कफे स्या-
त्पित्ते विरेकः पवने तु वस्तिः ॥ ५६ ॥

इति मूत्रकृच्छ्रचिकित्सा ।

सर्वमित्यादि। एतदेव वातादिभेषजं मिलितं त्रिदोषप्रभवे कृच्छ्रे कर्तव्यम्। तत्र समेष्वपि दोषेषु वायोः स्थानपूर्वा चिकित्सा कर्तव्या ॥ ५६ ॥

इति मूत्रकृच्छ्रचिकित्सितम् ॥

( अथाश्मरीचिकित्सा। )

क्रिया हिता साश्मरिशर्कराभ्यां
कृच्छ्रे यथैवेह कफानिलाभ्याम्।
कार्याश्मरीभेदनपातनाय
विशेषयुक्तं शृणु कर्म सिद्धम् ॥ ५७ ॥
पाषाणभेदं वृषकं श्वदंष्ट्रा
पाठाभयाव्योषशटीनिकुम्भाः।
हिंस्राखराश्वाशितिमारकाणा-
मेर्वारुकाणां त्रपुषस्य बीजम् ॥ ५८ ॥
उत्कुञ्चिका हिङ्गु सवेतसाम्लं
स्याद्द्वे बृहत्यौ हवुषा वचा च।
चूर्णं पिबेदश्मरिभेदपक्वं
सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥ ५९ ॥
मूलं श्वदंष्ट्रेक्षुरकोरुबूका-
त्क्षीरेण पिष्टं बृहतीद्वयं च।
आलोड्य दध्ना मधुरेण पेयं
दिनानि सप्ताश्मरिभेदनाय ॥ ६० ॥
पुनर्नवायोरजनीश्वदंष्ट्रा-
फल्गुप्रवालाश्च सदर्भपुष्पाः।
क्षीराम्बुमद्येक्षुरसैः सुपिष्टं
पेयं भवेदश्मरिशर्करासु ॥ ६१ ॥
त्रुटिं सुराह्वां लवणानि पञ्च
यवाग्रजं कुन्दुरुकाश्मभेदौ।
कम्पिल्लकं गोक्षुरकस्य बीज-
मेर्वारुबीजं त्रपुषस्य बीजम् ॥ ६२ ॥
चूर्णीकृतं चित्रकहिङ्गुमांसी-
यमानितुल्यं त्रिफलाद्विभागम्।
अम्लैः सशुक्तैः रसमद्ययूषैः
पेयं हि गुल्माश्मरिभेदनार्थम् ॥ ६३ ॥
शिग्रोस्तु यूषो मृदुमूलकल्का-
द्बिल्वप्रमाणो घृततैलभृष्टः।
शीतोऽश्मभित्स्याद्दधिमण्डयुक्तः
पेयः प्रकामं लवणेन युक्तः ॥ ६४ ॥
जलेन शोभाञ्जनमूलकल्कः
शीतो हितश्चाश्मरिशर्कराभ्याम्।
सितोपला वा समयावशूका
कृच्छ्रेषु सर्वेष्वपि भेषजं स्यात् ॥ ६५ ॥
पीत्वा च मद्यं निगदं रथेन
हयेन वा शीघ्रजवेन यायात्।
तैः शर्करा प्रच्यवतेऽश्मरी तु
शाम्येन्न चेच्छल्यविदुद्धरेत्ताम् ॥ ६६ ॥
रेतोविघातप्रभवे तु कृच्छ्रे
समीक्ष्य दोषं प्रतिकर्म कुर्यात्।
कार्पासमूलं वृषकाश्मभेदौ
बलास्थिरादीनि गवेधुका च ॥ ६७ ॥
वृश्चीर ऐन्द्री च पुनर्नवा च
शतावरी मध्वशनाखुपर्ण्यौ।
तत्क्वाथसिद्धं पवने नरस्य
पित्तेऽधिके क्षीरमथापि सर्पिः ॥ ६८ ॥
कफे च यूषादिकमन्नपानं
संसर्गजे सर्वहितः क्रमः स्यात्।
एवं न चेच्छाम्यति तस्य युञ्ज्यात्
सुरां पुराणां मधुकासवं वा ॥ ६९ ॥
विहङ्गमांसानि च बृंहणाय
वस्तींश्च शुक्राशयशोधनार्थम्।
शुद्धस्य तृप्तस्य च वृष्ययोगैः
प्रियानुकूलाः प्रमदा विधेयाः ॥ ७० ॥
रक्तोद्भवे तूत्पलनालताल-
कासेक्षुबालेक्षुकशेरुकाणि।
पिबेत्सिताक्षौद्रयुतानि खादे-
दिक्षुं विदारीं त्रपुषाणि चैव ॥ ७१ ॥

क्रिया हिता सेति या कफमारुतोत्थे कृच्छ्रे विहिता सा शर्करायामश्मर्यां च कर्तव्या। खराश्वाजमोदा, चूर्णं पिबेदित्यत्र जलेनैव पानं। इक्षुरकः कोकिलाक्षः कुन्दुरुकः शितिमारकः कुन्दकुसुमख्यातः। त्रिफलाद्विभागमिति त्रिफलायाः प्रत्येकं मूलभागात् भागद्वयम्। अम्लैरिति काञ्जिकादिभिः। अशुक्तैरिति शुक्तवर्जितैः। मद्यग्रहणात् तत्र वस्तिशोधनत्वं अश्मरीभेदकप्रकर्षख्यापनार्थं पुनरुच्यते। अश्मभिदिति अश्मरिभेदी सितोपला शर्करा। शल्यवित् हरेदिति शल्यवित् उक्तविधानेनाश्मरीमाकर्षेत्। समीक्ष्येति दोषमुल्वणं समीक्ष्य मध्वशनाखुपर्ण्यौ मधुपर्णी गुडूची असनपर्णी अपराजिता। संसर्गजेति त्रिदोषजे खादेदिति सिद्धान्येव खादेत् ॥ ५७—७१ ॥

घृतं श्वदंष्ट्रास्वरसेन सिद्धं
क्षीरेण चैवाष्टगुणेन पेयम्।
स्थिरादिकानां कतकादिकाना-
मेकैकशो वा विधिनैव तेन ॥ ७२ ॥
क्षीरेण वस्तिर्मधुरौषधैः स्या-
त्तैलेन वा स्वादुफलोत्थितेन।
यन्मूत्रकृच्छ्रे विहितं तु पैत्ते
कार्यं तु तच्छोणितमूत्रकृच्छ्रे ॥ ७३ ॥

व्यायामसन्धारणशुष्कभक्ष्य-
पिष्टान्नवातार्ककरव्यवायान् ।
खर्जूरशालूककपित्थजम्बू
विषं कषायं च रसं भजेत्ता ॥ ७४ ॥

इत्यश्मरीचिकित्सा ।

घृते श्वदंष्ट्रैलादौ साहचर्यात् केचित् श्वदंष्ट्रास्वरसं अष्टगुणं वदन्ति । तत्र स्नेहसम एव स्नेहेषु भवति । उक्तं हि जतूकर्णे 'कल्काच्चतुर्गुणः स्नेहः स्वरसः स्नेहसंमित' इति । तेन क्षीरवत् सर्वस्नेहेषु स्वरसाभिधानं ज्ञेयम् । स्थिरादिकानां मधुररसपाकानां कतककाश्मर्यादीनां उक्तो गणो ज्ञेयः । विधिनैव तेनेति पूर्वघृतविधानैः श्वदंष्ट्रास्थाने स्थिरादीनि प्रत्येकं कल्पनीयानि । स्वादुफलोत्थितैनेति मधुराक्षोटादिफलनिष्पन्नेन । व्यायामेत्यादिना मूत्रकृच्छ्रे पथ्यान्याह ॥ ७२—७४ ॥

इति बस्तिरोगचिकित्सितं समाप्तम् ॥

## ( अथ हृद्रोगचिकित्सा । )

व्यायामतीक्ष्णातिविरेकवस्ति-
चिन्ताभयत्रासमदातिचाराः ।
छर्द्यामसन्धारणकर्षणानि
हृद्रोगकर्तॄणि तथाभिघातः ॥ ७५ ॥
वैवर्ण्यमूर्च्छाज्वरकासहिक्का-
श्वासास्यवैरस्यतृषाः प्रमोहाः ।
छर्दिः कफोत्क्लेशरुजोऽरुचिश्च
हृद्रोगजाः स्युर्विविधास्तथान्ये ॥ ७६ ॥
हृच्छून्यभावद्रवशोषभेद-
स्तम्भाः समोहाः पवनाद्विशेषः ।
पित्तात्तमोदूयनदाहमोहाः
सन्त्रासतापज्वरपीतभावाः ॥ ७७ ॥
स्तब्धं गुरु स्यात्स्तिमितं च मर्म
कफात्प्रसेकज्वरकासतन्द्राः ।
विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं
तीव्रार्तितोदं क्रिमिजं सकण्डूम् ॥ ७८ ॥

निदानादिक्रमेण हृद्रोगचिकित्सामाह—मदातिचार इत्यसम्यगुपचारः । वैवर्ण्यादिषु हृद्रोगजेषु हृद्रोगजा इति वचनं हृद्रोगोत्पत्तिसमकालमेव वैवर्ण्यादयो भवन्तीति ज्ञापनार्थम् । यस्मात् तरुणकाले वैवर्ण्यादय उपद्रवा भवन्ति इह तु वैवर्ण्यादयः हृद्रोगमुत्पादयन्ति । हृद्रोगश्च कियन्तःशिरसीये विस्तरेणोक्तः । चिकित्साप्रकरणात् इह संक्षेपेणाभिधीयते । मर्मेति हृदयम् ॥ ७५—७८ ॥

तैलं ससौवीरकमस्तु तक्रं
वाते प्रपेयं लवणं सुखोष्णम् ।
मूत्राम्बुसिद्धं लवणैश्च तैल-
मानाहगुल्मार्तिहृदामयघ्नम् ॥ ७९ ॥
पुनर्नवां दारु सपञ्चमूले
रास्नां यवान्बिल्वकुलत्थकोलम् ।
पक्त्वा जले तेन विपाच्य तैल-
मभ्यङ्गपानेऽनिलहृद्गदोऽयम् ॥ ८० ॥
हरीतकीनागरपुष्कराह्वै-
र्वयःकयस्थालवणैश्च कल्कैः ।
सहिङ्गुभिः साधितमग्र्यसर्पि-
र्गुल्मे सहृत्पार्श्वगदेऽनिलोत्थे ॥ ८१ ॥
सपुष्कराह्वं फलपूरमूलं
महौषधं शट्यभया च कल्काः ।
क्षाराम्बुसर्पिर्लवणैर्विमिश्राः
स्युर्वातहृद्रोगविकर्तिकाघ्नाः ॥ ८२ ॥"

तैलमित्यादिना चिकित्सामाह—तैलादीनां अत्र समभागत्वं ज्ञेयम् । वयःकयस्थेति गुडूचीस्वरसग्रहणं अग्र्यसर्पिरिति अत्राग्र्यपदं सम्यक् सर्पिषः प्राधान्यख्यापनार्थम् । विकर्तिकेह हृदयपरिकर्तिकाकारा वेदना ॥ ७९—८२ ॥

क्वाथः कृतः पौष्करमातुलिङ्ग-
पलाशभूतीकशटीसुराह्वैः ।
सशुण्ठ्यजाजी द्विवचा यमानी
सक्षार उष्णो लवणश्च पेयः ॥ ८३ ॥
पथ्याशटीपुष्करपञ्चकोला-
न्समातुलुङ्गाद्यमकेन कल्कः ।
गुडप्रसन्नालवणैश्च भृष्टो
हृत्पार्श्वगुल्मोदरयोनिशूले ॥ ८४ ॥

क्वाथः कृतेत्यादौ नागरादीनां कल्कं पौष्करादीनां क्वाथमाहुः । पथ्याशटीत्यादौ यमकेन कल्कः गुडलवणैश्च पेय इति व्याख्येयम् ॥ ८३—८४ ॥

स्याद्व्यूषणं द्वे त्रिफले सपाठे
निदिग्धिकागोक्षुरकौ बले द्वे ।
ऋद्धिस्त्रुटिस्तामलकीस्वगुप्ता
मेदे मधूकं मधुकं स्थिरा च ॥ ८५ ॥
शतावरीजीवकपृश्निपर्ण्यौ
द्रव्यैरिमैरक्षसमैः सुपिष्टैः ।
प्रस्थं घृतस्येह पचेद्भिषिज्ञः
प्रस्थेन दध्नस्त्वथ माहिषस्य ॥ ८६ ॥
मात्रां पलं चार्धपलं पिचुं वा
प्रयोजयेन्माक्षिकसंप्रयुक्तम् ।
श्वासे सकासे त्वथ पाण्डुरोगे
हलीमके हृद्ग्रहणीप्रदोषे ॥ ८७ ॥

इति त्र्यूषणाद्यघृतम् ।

द्वे त्रिफलेत्यत्र द्राक्षाकाश्मर्यपरूषकाणि द्वितीया त्रिफला- त्रुटी एला सूक्ष्मैला ॥ ८५—८७ ॥

"शीताः प्रदेहाः परिषेचनं च
तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरूषकैः स्या-
च्छुद्धे तु पित्तापहमन्नपानम् ॥ ८८ ॥
यष्ट्याह्विकातिक्तकरोहिणीभ्यां
कल्कं पिबेच्चापि सिताजलेन।
क्षतेषु सर्पींषि हितानि सर्पि-
र्गुडाश्च ये तान्प्रसमीक्ष्य सम्यक् ॥ ८९ ॥
दद्याद्भिषग्धन्वरसांश्च गव्य-
क्षीराशिनां पित्तहृदामयेषु।
तैरेव सर्वे प्रशमं प्रयान्ति
पित्तामयाः शोणितसंश्रया ये ॥ ९० ॥
द्राक्षाबलाश्रेयसिशर्कराभिः
खर्जूरवीरर्षभकोत्पलैश्च।
काकोलिमेदायुगजीवकैश्च
क्षीरे च सिद्धं महिषीघृतं स्यात् ॥ ९१ ॥
कशेरुकाशैवलशृङ्गवेर-
प्रपौण्डरीकं मधुकं बिसस्य।
ग्रन्थिश्च सर्पिः पयसा पचेत्तैः
क्षौद्रान्वितं पित्तहृदामयघ्नम् ॥ ९२ ॥
स्थिरादिकल्कैः पयसा च सिद्धं
द्राक्षारसेनेक्षुरसेन वापि।
सर्पिर्हितं स्वादुफलेक्षुजाश्च
रसाः सुशीता हृदि पित्तदुष्टे ॥ ९३ ॥

शीतेति पित्तहृद्रोगचिकित्सिते क्षते। इति क्षतक्षीणचिकित्सिते। श्रेयसी रास्ना खर्जूरं खर्जूरफलम्। क्षौद्रान्वितमिति साधनोत्तरकालं पादिकमधुयुक्तम्। स्वादुफलेत्यादौ रसा इति स्वरसाः ॥ ८८—९३ ॥

खिन्नस्येत्यादि कफजहृद्रोगचिकित्साधिकारः।

स्विन्नस्य वान्तस्य विलङ्घितस्य
क्रिया कफघ्नी कफमर्मरोगे।
कौलत्थधान्यैश्च रसैर्यवान्नैः
पानानि तीक्ष्णानि च शार्कराणि ॥ ९४ ॥
मूत्रे शृताः कट्फलशृङ्गवेर-
पीतद्रुपथ्यातिविषाः प्रदेयाः।
कृष्णाशटीपुष्करमूलरास्ना-
वचाभयानागरचूर्णकं च ॥ ९५ ॥
उदुम्बराश्वत्थवटार्जुनाख्ये
पलाशरोहीतकखादिरे च।
क्वाथे त्रिवृत्त्र्यूषणचूर्णसिद्धो
लेहः कफघ्नोऽशिशिराम्बुयुक्तः ॥ ९६ ॥
शिलाह्वयं वा भिषगप्रमत्तः
प्रयोजयेत्कल्पविधानदृष्टम्।
प्राशस्तथा गस्त्यहरीतकी च
रसायनं ब्राह्ममथामलक्याः ॥ ९७ ॥

शार्कराणीति कल्याणकराणि कल्पशब्देन च क्षुद्ररसायन- मुच्यते। प्राश इति च्यवनप्राशः। अगस्त्यमिति लेहविशेषणम् ॥ ९४—९७ ॥

त्रिदोषजे लङ्घनमादितः स्या-
दन्नं च सर्वत्र हितं विधेयम्।
हीनातिमध्यत्वमवेक्ष्य चैव
कार्यं त्रयाणामपि कर्म शस्तम् ॥ ९८ ॥

त्रिदोषजेत्यादौ आदौ लङ्घनविधानं हृदयस्य कफस्थानतया त्रिदोषजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम्। त्रिदोषजे उल्वणदोषे चिकित्सासूत्रमाह—हीनातीत्यादि। हीनत्वमधिकत्वं मध्यमत्वं दोषाणामवेक्ष्य यत्कर्म शस्तं अधिकदोषक्षपकतया कार्यमिति वाक्यार्थः ॥ ९८ ॥

भुक्तेऽधिकं जीर्यति शूलमल्पं
जीर्णे स्थितं चेत्सुरदारुकुष्टम्।
सतिल्वकं द्वे लवणे विडङ्ग-
मुष्णाम्बुना सातिविषं पिबेत्सः ॥ ९९ ॥
जीर्णेऽधिके स्नेहविरेचनं स्या-
त्फलैर्विरेच्यो यदि जीर्यमाणे।
त्रिष्वेव कालेष्वधिके तु शूले
तीक्ष्णं हितं मूलविरेचनं स्यात् ॥ १०० ॥

भुक्तेऽधिकमित्यादिना सान्निपातिकहृद्रोगे प्रायो भाविशूलं लक्षणभेदेन विभजन् चिकित्सति। भुक्तेऽधिकमित्यादिना श्लेष्मशूलमुच्यते। स्थितमिति प्रशान्तम्। जीर्णेऽधिकमित्यादिना अनिलशूलं जीर्यतेऽधिकमित्यनेन पैत्तिकं ब्रूते। फलैरिति द्राक्षाकाश्मर्यादिभिः। त्रिष्वेवेत्यादिना सान्निपातिकशूलमाह। मूलविरेचनं त्रिवृन्मूलादिभिर्विरेचनम् ॥ ९९—१०० ॥

प्रायोऽनिलो रुद्धगतिः प्रकुप्य-
त्यामाशये शोधनमेव तस्मात्।
कार्यं तथा लङ्घनपाचनं च
सर्वं क्रिमिघ्नं कृमिहृद्गदे च ॥ १०१ ॥

इति हृद्रोगचिकित्सा।

विरेचनोपपत्तिमाह—प्रायोऽनिल इत्यादि। अत्र चानिलकोपे यद्यपि वस्तिरुचिता तथापि आमाशयशोधनं विरेचनमेव ज्ञेयम्। कृमिघ्नमिति व्याधितरूपीये कृमिहरत्वेनोक्तं विधानम् ॥ १०१ ॥

इति हृद्रोगचिकित्सितम् ॥

(अथ पीनसनासारोगनिदानम्)

सन्धारणाजीर्णरजोऽतिभाष्य-
क्रोधर्तुवैषम्यशिरोऽभितापैः।
प्रजागरातिस्वपनाम्बुशीतै-
रवश्यया मैथुनवाष्पधूमैः॥ १०२॥
संस्त्यानदोषे शिरसि प्रवृद्धो
वायुः प्रतिश्यायमुदीरयेत्तु।
घ्राणार्तितोदैः श्वयथुर्जलाभः
स्रावोऽनिलात्सस्वरमूर्धरोगः॥ १०३॥
नासाग्रपाकज्वरवक्त्रशोष-
तृष्णोष्णपीतस्रवणानि पित्तात्।
कासारुचिस्रावघनप्रसेकाः
कफाद्गुरुः स्रोतसि चापि कण्डूः॥ १०४॥

क्रमागतशिरोरोगचिकित्सायां वक्तव्यायां शिरोरोगहेतुः प्रतिश्यायमेव तावदाह। शालाक्ये उक्तम्—'भूयिष्ठं व्याधयः सर्वे प्रतिश्यायनिमित्तजाः। तस्मात् रोगप्रतिश्यायः पूर्वमेवोपदिश्यते' इति। यद्यपि राजयक्ष्मचिकित्सिते प्रतिश्याय उक्त एव तथापि तत्र यक्ष्मपूर्वतया तथोक्तः। इहतु स्वतन्त्रः प्रतीश्याय उच्यत इति विशेषः। रजो धूलिः अतिस्वप्नो दिवास्वप्नः। अवश्यायः तुषारः। संस्त्यानदोषेति निभृतदोषे। घ्राणार्तित्यादिना वातादिप्रतिश्यायानां चतुर्णां क्रमाल्लक्षणमाह—सस्वरमूर्द्धरोगइति स्वररोगः स्वरभेदः कफात् गुरुरित्यादौ गुरुशब्दः कण्डूविशेषणम्। स्रोतसीति नासास्रोतसि॥ १०२—१०४॥

सर्वाणि रूपाणि तु सन्निपाता-
त्स्युः पीनसे तीव्ररुजेऽतिदुःखे।
सर्वोऽतिवृद्धोऽहितभोजनात्तु
दुष्टप्रतिश्याय उपेक्षितः स्यात्॥ १०५॥
ततश्च रोगः क्षवथुः सनासा
शोषः प्रतीनाहपरिस्रवौ च।
घ्राणास्यपूतित्वमपीनसश्च
सपाकशोथार्बुदपूयरक्ताः॥ १०६॥
अरूंषि मूत्रश्रवणाक्षिरोग-
खालित्यहर्यर्जुनलोमभावाः।
तृट्श्वासकासज्वररक्तपित्त-
वैस्वर्यशोषाश्च ततो भवन्ति॥ १०७॥
रोधाभिघातस्रवशोषपाकै-
र्घ्राणं युतं यश्च न वेत्ति गन्धम्।
दुर्गन्धि चास्यं बहुशः प्रकोपि
दुष्टप्रतिश्यायमुदाहरेत्तम्॥ १०८॥
संस्पृश्य मर्माण्यनिलस्तु मूर्ध्नि
विष्वक्पथस्थः क्षवथुं करोति।
क्रुद्धः स संशोष्य कफं तु नासा-
शृङ्गाटकाघ्राणविशोषणं च॥ १०९॥

सर्वोऽतिवृद्धेत्यादिना दुष्टप्रतिश्यायलक्षणमाह—अत्र मुखरोगं ये न पठन्ति ते शिरोरोगग्रहणेनैव मुखरोगस्य ग्रहणमिति मन्यन्ते। एतेषां दुष्टप्रतिश्यायक्षवथ्वादीनां शालाक्यादिषु विस्तरः। अत्र तु पराधिकारत्वात् संक्षेप एव। रोधाभिघातेत्यादिना दुष्टप्रतिश्यायादीनां क्रमेण लक्षणान्याह—क्रुद्धेत्यादौ स इत्यनिलः॥ १०५—१०९॥

उच्छ्वासमार्गं तु कफः सवातो
रुन्ध्यात्प्रतीनाहमुदाहरेत्तम्।
घ्राणाद्घनः पीतसितस्तनुर्वा
दोषः स्रवेत्स्रावमुदाहरेत्तम्॥ ११०॥
यो मस्तुलुङ्गाद्घनपीतपक्वः
कफः स्रवेद्गाढमपीनसोः यः।
वैवर्ण्यदौर्गन्ध्यमुपेक्षया तु
स्यात्पूतिनस्यं श्वयथुर्भ्रमश्च॥ १११॥
आनह्यते यस्य विशुष्यते च
प्रक्लिद्यते धूप्यति यस्य नासा।
न वेत्ति यो गन्धरसांश्च जन्तु-
र्जुष्टं व्यवस्येत्तमपीनसेन॥ ११२॥
सदाहरागः श्वयथुः सपाकः
स्याद्घ्राणपाकोऽपि च रक्तपित्तात्।
घ्राणाश्रितास्त्वक्प्रभृतीन्प्रदूष्य
कुर्वन्ति नासाश्वयथुं मलाश्च॥ ११३॥
घ्राणे तथोच्छ्वासगतिं निरुध्य
मांसास्रदोषादपि चार्बुदानि।
घ्राणात्स्रवेद्वा श्रवणान्मुखाद्वा
पित्ताक्तमस्रं त्वपि पूयरक्तम्॥ ११४॥
कुर्यात्सपित्तः पवनस्त्वगादी-
न्सन्दूष्य चारूंषि सपाकवन्ति।
नासा प्रदीप्तेव नरस्य यस्य
दीप्तं तु तं रोगमुदाहरन्ति॥ ११५॥

इति पीनसनासारोगनिदानम्।

मस्तुलुङ्गादिति मस्तिष्कात्। सपित्तेत्यादिना अरूंषिकामाह—सा तु शिरोभवा ज्ञेया॥ ११०—११५॥

(अथ पीनसनासारोगचिकित्सा)।

वातात्सकासवैस्वर्ये सक्षारं पीनसे घृतम्।
पिबेद्रसं पयश्चोष्णं स्नैहिकं धूममेव वा॥ ११६॥
शताह्वा त्वग्बलामूलं स्योनाकैरण्डबिल्वजम्।
सारग्वधां पिबेद्वर्तिं मधूच्छिष्टवसाघृतैः॥ ११७॥
अथवा सघृतान् सक्तून् कृत्वा मल्लकसंपुटे।
नवप्रतिश्यायवतां धूमं वैद्यः प्रकल्पयेत्॥ ११८॥
शङ्खमूर्धललाटार्तौ पाणिस्वेदोपनाहनम्।

स्वभ्यक्ते क्षवथुस्रावरोधादौ संकरादयः ॥ ११९ ॥
घ्रेयाश्च रौहिषाजाजीवचातर्कारिचोरकाः ।
त्वक्पत्रमरिचैलानां चूर्णैर्वा सोपकुञ्चिकैः ॥१२०॥
स्रोतःशृङ्गाटनासाक्षिशोषे तैलं सनावनम् ।
प्रभाव्याजे तिलान्क्षीरे तेन पिष्टांस्तदूष्मणा १२१
मन्दस्विन्नान्सयष्ट्याह्वचूर्णांस्तेनैव पीडयेत् ।
दशमूलस्य निष्काथे रास्नामधुककल्कवत् ॥१२२॥
सिद्धं ससैन्धवं तैलं दशकृत्वो नु तत्स्मृतम् ।
स्निग्धस्यास्थापनैर्दोषं निर्हरेद्वातपीनसे ॥ १२३ ॥
स्निग्धाम्लोष्णैश्च लघ्वन्नं ग्राम्यादीनां रसैर्हितम् ।
उष्णाम्बुना स्नानपाने निवातोष्णप्रतिश्रयः ॥१२४॥
चिन्ताव्यायामवाक्चेष्टाव्यवायविरतो भवेत् ।
वातजे पीनसे धीमानिच्छन्नेवात्मनो हितम् १२५

अथातः क्रमात् चिकित्साभिधीयते । प्रतिश्याये धूमस्य धोधनात् स्नेहिकधूमं अग्रेऽभिधाय पाणिस्वेदोपनाहनं पाणिस्वेदं च उपनाहनं च पाणिस्वेदोपनाहनम् । अवरोध इत्यत्र अवरोधशब्देन प्रतीनाहोऽभिधीयते । संकरादयः प्रच्छानकादयः । स्वेदाध्यायोक्ताः स्वेदाः । तर्कारी जीवंती, शृङ्गाटवासाक्षिशोषे नावनं तैलं युक्तम् । तत्तैलमाह—प्रभाव्याजेइत्यादि । तदूष्मणेति क्षीरोष्मणा मंदस्विन्नानिति मंदं स्विन्नां । सयष्ट्याह्वचूर्णानिति यष्ट्याह्वचूर्णस्याप्रधानत्वात् तिलचूर्णात्पादिकत्वम् । तेनैव पीडयेदिति अजाक्षीरेण । एवं तैलस्य दशमूलनिःक्काथादिभिः दशकृत्वो पाकात् सिद्धं तैलं वातपीनसे युंज्यात् । सिद्धाम्लेत्यादिना आचारमाह—निवातोष्णप्रतिश्रय इति निवातोष्णगृहस्थायी ॥ ११६—१२५ ॥

पैत्ते सर्पिः पिबेत्सिद्धं शृङ्गवेरशृतं पयः ।
पाचनार्थं पिबेत्पक्के कार्यं मूर्धविरेचनम् ॥१२६॥
पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः ।
दन्त्या च साधितं तैलं नस्यं संपक्कपीनसे ॥१२७॥
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च ।
पाकदाहाद्यरूक्षेषु शीता लेपाः ससेचनाः ॥१२८॥
स्नेहनस्योपचाराश्च कषायाः स्वादुशीतलाः ।
मन्दपित्ते प्रतिश्याये स्निग्धैः कुर्याद्विरेचनम् १२९
घृतं क्षीरं यवाः शालिर्गोधूमा जाङ्गला रसाः ।
शीताम्लास्तिक्तशाकानि यूपा मुद्गादिभिर्हिताः ॥
गौरवारोचकेष्वादौ लङ्घनं कफपीनसे ।
स्वेदाः सेकाश्च पाकार्थं लिप्ते शिरसि सर्पिषा १३१

पैत्ते सर्पिः पिबेत्सिद्धमित्यत्र शृङ्गवेरसिद्धमेव सर्पिर्देयम् । रक्तपित्तघ्ना इति रक्तपित्तचिकित्सोक्ताः । मंदपित्ते इति ईषत्पित्ते देयम् ॥ १२६—१३१ ॥

लशुनं मुद्गचूर्णेन व्योषक्षारघृतैर्युतम् ।
देयं कफघ्नं वमनमुत्क्लिष्टश्लेष्मणे हितम् ॥ १३२ ॥
अपीनसे पूतिनस्ये घ्राणस्रावे सकण्डुके ।
धूमः शस्तोऽवपीडश्च कटुभिः कफपीनसे ॥ १३३ ॥
मनःशिला वचा व्योषं विडङ्गं हिङ्गु गुग्गुलुः ।
चूर्णैः प्रायः प्रधमनं कटुभिश्च फलैस्तथा ॥१३४॥
भार्गीमदनतर्कारीसुरसादिविपाचितम् ।
तैलं सर्षपजं वल्यं कफपीनसशान्तये ॥ १३५ ॥
आर्तगलवचालं वा विडङ्गं कुष्ठपिप्पली ।
कृत्वा कल्कं करञ्जं च तैलं तैः सार्षपं पचेत् १३६
पाकान्मुक्ते घने नस्यमेतन्मेदोन्विते कफे ।
स्निग्धस्य व्याहते वेगे छर्दनं कफपीनसे ।
वमनीयशृतक्षीरतिलमाषयवागुभिः ॥ १३७ ॥
वार्ताककुलकव्योषकुलत्थाढकिमुद्गजाः ।
यूषाः कफघ्नमन्नं च शस्तमुष्णाम्बुसेचनम् १३८
सर्वजित्पीनसे दुष्टे कार्यं शोफे च शोफजित् ।
क्षारोऽर्बुदाधिमांसेषु क्रिया सर्वेष्ववेक्ष्य च १३९

इति पीनसनासारोगचिकित्सा ।

कफघ्नवमनमिति कफघ्नद्रव्यकृतं वमनं देयं इत्यर्थः । कटुभिः फलैरिति मरीचपिप्पल्यादिभिः । पाकान्मुक्तेति पाकावसानाच्च्युते । व्याहते वेग इति पीनसस्य वेगे मंदीभूते शोफेचेति नासाशोफे ॥ १३२—१३९ ॥

इति नासारोगचिकित्सा

## ( अथ शिरोरोगनिदानम् । )

भृशार्तिशूलं स्फुरतीह वाता-
त्पित्तात्सदाहार्तिकफाद्गुरुः स्यात् ।
सर्वैस्त्रिदोषं क्रिमिभिस्तु कण्डू-
दौर्गन्ध्यतोदार्तियुतं शिरः स्यात् ॥ १४० ॥

इति शिरोरोगनिदानम् ।

भृशार्तीत्यादिना यद्यपि प्रतिश्यायोत्पन्नत्वेन शिरोरोगाणां लक्षणमुच्यते तथापि स्वतन्त्रोत्पन्नानामपि शिरोरोगाणामेतदेव लक्षणं ज्ञेयम् । एवं मुखरोगादिषु लक्षणेषु वाच्यम् । सर्वैस्त्रिदोषमिति वातादिमिलितैर्लक्षणैस्त्रिदोषं स्यादित्यर्थः ॥ १४० ॥

## ( अथ शिरोरोगचिकित्सा )

वातिके शिरसो रोगे स्नेहान्स्वेदान्सनावनान् ।
पानान्नमुपनाहांश्च कुर्याद्वातामयापहान् ॥ १४१ ॥
तैलभृष्टैरगुर्वाद्यैः सुखोष्णैश्चोपनाहनम् ।
जीवनीयैः सुमनसा मत्स्यैर्मांसैश्च शस्यते ॥१४२॥
रास्नास्थिरादिभिः सिद्धं सक्षीरं नस्यमर्तिनुत् ।
तैलं रास्नाद्विकाकोलीशर्कराभिरथापि वा ॥१४३॥
बलामधूकयष्ट्याह्वविदारीचन्दनोत्पलैः ।
जीवकर्षभकद्राक्षाशर्कराभिश्च साधितः ॥ १४४ ॥

प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्धतुलारसे।
नस्यं सर्वोर्ध्वजत्रूत्थवातपित्तामयापहम् ॥१४५॥"
दशमूलबलारास्नात्रिफलामधुकैः सह।
मयूरं पक्षपित्तान्त्रशकृत्तुण्डादिवर्जितम् ॥१४६॥
जले पक्त्वा घृतप्रस्थं तस्मिन्क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् १४७
कर्णाक्षिनासिकाजिह्वाताल्वास्यगलरोगनुत्।
मायूरमिति विख्यातमूर्ध्वजत्रुगदापहम् ॥ १४८ ॥
इति मायूरघृतम्।

दशमूलादिभिः प्रत्येकं त्रिपलमानम् समयूरं पक्षादिवर्जितं जलद्रोणे एव पचेत्। जलद्रोणो हि यत्र क्वाथार्थं घृतप्रस्थात् पादावशेषपलम्। समचतुर्गुणो भवति। किंच दशमूलादीनां चत्वारिंशत्पलेन मयूरेण च चतुःषष्टिपले क्वाथ्ये द्रोणमानं जलं देयं। किंवा दशमूलादीनां मयूरेण च मिलित्वा यावत् क्वाथ्यं भवति तच्चतुर्गुणजलमुत्सर्गपरिभाषयैव देयम्। मधुरैरिति जीवनीयगणोक्तैर्दशभिः। जीवनीयानि मधुरत्वप्रकर्षादिह मधुरशब्देनोच्यन्ते ॥ १४१—१४८ ॥

एतेनैव कषायेण घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन दुग्धेन कल्कैरेभिश्च कार्षिकैः ॥ १४९ ॥
जीवन्तीत्रिफलामेदामधूकर्द्धिपरूषकैः।
समङ्गाचविकाभार्गीकाश्मरीसुरदारुभिः ॥ १५० ॥
आत्मगुप्तामहामेदातालखर्जूरमुस्तकैः।
मृणालबिसशालूकशृङ्गीजीवकपद्मकैः ॥ १५१ ॥
शतावरीविदारीक्षुबृहतीशारिवायुगैः।
मूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककसेरुकैः ॥ १५२ ॥
रास्नास्थिरातामलकीसूक्ष्मैलाशटिपुष्करैः।
पुनर्नवातुगाक्षीरीकाकोलीधन्वयासकैः ॥ १५३ ॥
मधूकाक्षोटवाताममुञ्जाताभिषुकैरपि।
द्रव्यैरेभिर्यथालाभं पूर्वकल्केन साधितम् ॥१५४ ॥
तत्पक्वं नावनेऽभ्यङ्गे पाने वस्तौ प्रयोजयेत्।
शिरोरोगेषु सर्वेषु कासे श्वासे च दारुणे ॥१५५॥
मन्यापृष्ठग्रहे शोषे स्वरभेदे तथार्दिते।
योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥१५६॥
ऋतुस्नाता तथा नारी पीत्वा पुत्रं प्रसूयते।
महामायूरमित्येतद्घृतमात्रेयपूजितम् ॥ १५७ ॥
इति महामायूरघृतम्।

एतेनैवेति दशमूलादिमयूरक्वाथेन यथोक्तविधानकृतेन द्वितीयखर्जूरशब्देन खर्जूरफलं गृह्यते। अक्षोडवातामादीनि औत्तरपथिकानि। पूर्वयोगोक्तक्वाथविधानं यद्यप्येतेनैव कषायेणेत्यादिना सिद्धं तथापि पुनः पूर्वकल्केनेति वचनेन यथालाभमिति च पदेन यथालाभं करणीयत्वं दर्शयति ॥ १४९—१५७ ॥



आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्पेनानेन विपचेत्सर्पिरूर्ध्वगदापहम् ॥ १५८ ॥
पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्नं चापि पित्तनुत् १५९
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्याच्छृतैर्वा परिषेचनम् ॥१६०॥
त्वक्पत्रशर्कराकल्कः सुपिष्टस्तण्डुलाम्बुना।
कार्योऽवपीडः सर्पिश्च नस्यं तत्स्यात्तु पैत्तिके १६१
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं शुभम्।
नावनं शर्कराद्राक्षामधूकैर्वापि पित्तजे ॥ १६२ ॥
कफजे स्वेदितं धूमनस्यप्रधमनादिभिः।
शुद्धं प्रलेपपानान्नैः कफघ्नैः समुपाचरेत् ॥ १६३ ॥
पुराणसर्पिषः पानैस्तीक्ष्णैर्वस्तिभिरेव च।

अत्र मयूरस्थाने मूषकादीन् दर्शयन्नाह—आखुभिरित्यादिना। आखुना मयूरापेक्षया अल्पमानेनाप्यत्रैकेनापि साधनं कर्तव्यम्। शृतैर्वा इत्यत्र क्षीरशृतैः। सर्पिश्च नस्यमित्यत्र अवपीडस्य पश्चात् सर्पिषा नस्यं देयम् ॥ ॥ १५८—१६३ ॥

कफानिलोत्थिते दाहः शेषयो रक्तमोक्षणम् १६४
एरण्डनलदक्षौमगुग्गुल्वगुरुचन्दनैः।
धूमवर्तिं पिबेद्गन्धैः सकुष्ठतगरैस्तथा ॥ १६५ ॥
सन्निपातभवे कार्या सन्निपातहिता क्रिया।
क्रिमिजे चैव कर्तव्यं तीक्ष्णं मूर्धविरेचनम् ॥१६६॥
त्वग्दन्ती व्याघ्रकरजविडङ्गं नवमालिका।
अपामार्गफलं बीजं नक्तमालशिरीषयोः।
क्षवकोऽश्मन्तको बिल्वं हरिद्रा हिङ्गु यूथिका१६७
फणिज्झकश्च तैस्तैलमविमूत्रे चतुर्गुणे।
सिद्धं स्यान्नावनं चूर्णं चैषां प्रधमनं हितम् ॥१६८॥
फलं शिग्रुकरञ्जाभ्यां सव्योषं चावपीडकम्।
कषायः स्वरसः क्षारश्चूर्णं कल्कोऽवपीडकः।
शुक्ततिक्तकटुक्षौद्रकषायैः कवलग्रहः ॥ १६९ ॥
इति शिरोरोगचिकित्सा।

कफानिलोद्भवे दाह इत्यत्र कफोद्भवे अनिलोद्भवे च। सुश्रुतवचनात्। ललाटशंखदेशे दाहः कर्तव्यः। उक्तं हि सुश्रुते—'शिरोरोगाधिमन्थःप्रभृतिषु ललाटप्रदेशे दहेत् अकुष्ठतगरै' रिति। अगुर्वादिगन्धैः। कुष्ठतगरवर्जनं चात्र मस्तुलुङ्गस्रवर्जनार्थम्। उक्तं च शालाक्ये 'नतु कुष्ठं स्रावयतो धूमवर्तिं प्रयोजयेत्। मस्तुलुंगे प्रकर्षेण तस्मात्तं नैव योजयेत्' इतिशिरोरोगचिकित्सा ॥ १६४—१६९ ॥

## ( अथ मुखरोगनिदानम् )

"मुखामये मारुतजे तु शोष-
कार्कश्यरौक्ष्याणि चला रुजश्च।

कृष्णारुणं निष्पतनं सशीतं
प्रस्रंसनस्पन्दनतोदभेदाः ॥ १७० ॥
तृष्णाज्वरस्फोटकतालुदाहा
धूमायनं चाप्यवदीर्णता च ।
पित्तात्समूर्च्छा विविधा रुजश्च
वर्णाश्च शुक्लारुणवर्णवर्ज्याः ॥ १७१ ॥
कण्डूर्गुरुत्वं सितविज्जलत्वं
स्वेदोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानलता च तन्द्रा
रुजश्च मन्दाः कफवक्त्ररोगे ॥ १७२ ॥
सर्वाणि रूपाणि तु वक्त्ररोगे
भवन्ति यस्मिन्स तु सर्वजः स्यात् ।
संस्थानदूष्याकृतिनामभेदा-
च्चैते चतुःषष्टिविधा भवन्ति ॥ १७३ ॥
शालाक्यतन्त्रे विहितानि तेषां
निमित्तरूपाकृतिभेषजानि ।
यथाप्रदेशं तु चतुर्विधस्य
क्रियां प्रवक्ष्यामि मुखामयस्य ॥ १७४ ॥

इति मुखरोगनिदानम् ।

निष्पतनमिति मुखैव कृष्णेत्यादि पित्तजमुखरोगलक्ष- शालाक्ये मुखरोगाणां प्रपञ्चः तथाप्यत्रैव सर्वेषां चतुर्विध- मुखरोगेऽन्तर्भावं दर्शयन्नाह—संस्थानेत्यादि संस्थानं महा- रोगः दूष्यं रक्तादि आकृतिर्लिङ्गं इत्यादिभेदाः चतुःषष्टिविधा- भवन्ति ते च शालाक्ये एवोन्नेयाः ॥ मुखरोगाणां तु चतुःषष्टित्वं वैदेहमतानुसारेणोक्तम् । सुश्रुते तु पञ्चषष्टि- मुखरोगा उक्तास्तथापीह चतुर्विधेष्वेव यथाप्रदेशं अन्त- र्निवेशकृतः ॥ १७०—१७४ ॥

## ( अथ मुखरोगचिकित्सा । )

धूमः प्रधमनं शुद्धिरधश्छर्दनलङ्घनम् ।
भोज्यं च मुखरोगेषु यथास्वं दोषनुद्धितम् १७५
पिप्पल्यगुरुदार्वीत्वग्यवक्षारो रसाञ्जनम् ।
पाठां तेजोवतीं पथ्यां समभागं सुचूर्णितम् १७६
मुखरोगेषु सर्वेषु सक्षौद्रं तद्विधारयेत् ।
शीधुमाधवमाध्वीकैः श्रेष्ठोऽयं कवलग्रहः ॥१७७॥"
तेजोह्वामभयामेलां समङ्गां कटुकां घनम् ।
पाठां ज्योतिष्मतीं लोध्रं दार्वीं कुष्ठं च चूर्णयेत् ॥
दन्तानां घर्षणाद्रक्तस्रावकण्डूरुजापहम् ।
पञ्चकोलकतालीसपत्रैलामरिचत्वचः ॥ १७९ ॥
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः ।
गुडे पुराणे द्विगुणे क्वथिते गुडिकाः कृताः १८०
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ।
कण्ठरोगेषु सर्वेषु धार्याः स्युरमृतोपमाः ॥१८१॥

गृहधूमो यवक्षारपाठाव्योषं रसाञ्जनम् ।
तेजोह्वा त्रिफला लोध्रं चित्रकं चेति चूर्णितम् १८२
सक्षौद्रं धारयेदेतद्गलरोगविनाशनम् ।
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ॥ १८३ ॥

इति कालकचूर्णम् ।

रुजाघ्नमिति रोगपीडाहरम् । शुद्धिरधः इति विरेचनम् । दार्वीत्वगिति दार्व्यास्त्वग् । पंचकोलेत्यादौ चूर्णसमुदायात् गुडो द्विगुणः । कर्कन्धुमात्राइत्यस्थमापकमानाः । केचित् रोध्रस्थाने लोहं पठंति । तथोक्तंहि सुश्रुते—'पाठां रसां- जनं व्योषं तेजोह्वा त्रिफलाग्निकम् । ग्रहधूमयवक्षारं शस्तं चूर्णं तु कालकमिति । वातपित्तकफापहा इति प्रत्येकं मृद्वीकादयस्त्रयो योगास्त्रिदोषहराः । रसक्रियेति घनीभूत- रसस्य संज्ञा ॥ १७५–१८३ ॥

मनःशिला यवक्षारो हरितालं ससैन्धवम् ।
दार्वी त्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् १८४
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्तितम् ॥ १८५ ॥

इति पीतकचूर्णम् ।

मृद्वीका कटुका व्योषं दार्वी त्वक् त्रिफला घनम् ।
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ॥१८६॥

इति मृद्वीकादिचूर्णम् ।

पाठां रसाञ्जनं मूर्वां तेजोह्वेति च चूर्णितम् ।
क्षौद्रयुक्तं विधातव्यं गलरोगभिषग्जितम् ।
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः १८७
कटुकातिविषापाठादार्वीमुस्तकलिङ्गकाः ।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥१८८॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया ।
सक्षौद्रमुखरोगासृग्दोषनाडीव्रणापहा ॥ १८९ ॥
तालुशोषे सतृष्णस्य सर्पिषौत्तरभक्तिकम् ।
नावनं मधुराः स्निग्धा शीताश्चैव रसा हिताः १९०
मुखपाके शिराकर्म शिरःकायविरेचनम् ।
मूत्रतैलघृतक्षौद्रक्षीरैश्च कवलग्रहः ॥ १९१ ॥
सक्षौद्रास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
कषायतिक्तकाः शीताः क्वाथाश्च मुखधावनाः १९२

तालुशोषेत्यादौ सतृष्णेतिपदेन तृष्णायुक्तस्य तालुशोषे औत्तरभक्तिकमपि सर्पिःपानं निषेधयति । तालुशोषे च तृष्णा मूर्छा च परं गर्भिण्यस्तालुशोषणेत्यादिना यद्यपि स्नेहपानं निषिद्धं तथापीह औत्तरभक्तिकं सर्पिश्च विशेष- विधानात्कर्तव्यमेव । सिराकर्मेति सिराव्यधनम् । तच्च सुश्रुतवचनात् तालुनि जिह्वायां च कर्तव्यम् ॥ १८४–१९२ ॥

तुलां खदिरसारस्य द्वितुलामरिमेदसः ।
प्रक्षाल्य जर्जरीकृत्य चतुर्द्रोणेऽम्भसः पचेत् १९३
द्रोणशेषं कषायं तं पक्त्वा भूयः पचेच्छनैः ।
ततस्तस्मिन्घनीभूते चूर्णीकृत्याक्षभागिकम् ॥१९४॥
चन्दनं पद्मकोशीरं मञ्जिष्ठा धातकी घनम् ।
प्रपौण्डरीकं यष्ट्याह्वत्वगेलापद्मकेशरम् ॥ १९५ ॥
लाक्षा रसाञ्जनं मांसी त्रिफला लोध्रवालकम् ।
रजन्यौ फलिनीमेलां समङ्गां कट्फलं वचाम् १९६
यवासागुरुपत्तङ्गगैरिकाञ्जनमावपेत् ।
लवङ्गनखकंकोलजातिकोशान्पलोन्मितान् ॥१९७॥
कर्पूरकुडवं चापि पुनः शीतेऽवतारिते ।
ततस्तु गुलिकाः कार्याः शुष्काश्चास्येन धारयेत्
तैलं चानेन कल्केन कषायेण च साधयेत् ।
दन्तानां चलनभ्रंशशौशिर्यक्रिमिरोगनुत् ॥ १९९ ॥
मुखपाकास्यदौर्गन्ध्यजाड्यारोचकनाशनम् ।
स्रावोपलेपपैच्छिल्यवैस्वर्यगलरोगनुत् ।
दन्तास्यगलरोगेषु सर्वेषां तत्परायणम् ॥ २०० ॥
खदिरादिगुटीकेयं तैलं च खदिरादिकम् ।
इति खदिरादिगुटिका तैलं च ।

तुलामित्यादिना खदिरादिगुटिकामाह—द्वितुलामरिमेदसो विट्खदिरस्य खदिरसारस्य तु तुला विभक्ता एव पत्तंगरक्तचंदनलवंगादीनां अत्र पलमानत्वं । दंतास्यगदरोगाः पृथक् शालाक्योक्ता ज्ञेयाः । परायणमिति परमयनं श्रेष्ठं भेषजमिति यावत् इति मुखरोगचिकित्सा ॥ १९३–२०० ॥

"वातादिभिः शोकभयातिलोभ-
क्रोधैर्मनोघ्नाशनगन्धरूपैः ।
अरोचकाः स्युः परिहृष्टदंत-
कषायवक्त्रश्च मतोऽनिलेन ॥ २०१ ॥
कट्वम्लमुष्णं विरसं च पूति
पित्तेन विद्याल्लवणं च वक्त्रम् ।
माधुर्यपैच्छिल्यगुरुत्वशैत्य-
विबद्धसंबद्धयुतं कफेन ॥ २०२ ॥
अरोचके शोकभयातिलोभ-
क्रोधाद्यहृद्याशुचि गन्धजे स्यात् ।
स्वाभाविकं चास्यमथाऽरुचिश्च
त्रिदोषजे नैकरसं भवेत्तु ॥ २०३ ॥
इत्यरोचकनिदानम् ।

वातादिभिरित्यनेनारोचकानाह—अतिलोभेनारुचिरुच्यते । अतिलोभेनारुचिकरणं दर्शयति ॥ २०१—२०३ ॥

## ( अथारोचकचिकित्सा । )

अरुचौ कवलग्रहा धूमाः समुखधावनाः ।
मनोज्ञमन्नपानं च हर्षणाश्वासनानि च ॥ २०४ ॥
कुष्ठसौवर्चलाजाजीशर्करा मरिचं विडम् ।
धात्र्येलापद्मकोशीरपिप्पल्युत्पलचन्दनम् ॥२०५॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाडिमनिर्यासश्चाजाजीशर्करायुतः ॥२०६॥
सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः ।
चतुरोऽरोचकान्हन्युर्वाताद्येकजसर्वजान् ॥२०७॥
कारवीमरिचाजाजी द्राक्षावृक्षाम्लदाडिमम् ।
सौवर्चलं गुडं क्षौद्रं सर्वारोचकनाशनम् ॥ २०८ ॥
वस्तिः समीरणे पित्ते विरेकं वमनं कफे ।
कुर्याद्धृद्यानुकूलानि हर्षणं च मनोघ्नजे ॥ २०९ ॥
इत्यरोचकचिकित्सा ।

अरोचकचिकित्सामाह—कुष्ठेत्यादिना अर्धश्लोकोक्ताश्चत्वारो योगाः वातपित्तकफसन्निपातजेषु अरोचकेषु क्रमात् ज्ञेयाः ॥ २०४—२०९ ॥

## ( अथ कर्णरोगनिदानम् । )

नादोऽतिरुक्कर्णमलस्य शोषः
स्रावस्तनुश्चाश्रवणं च वातात् ।
शोफः सरागो दरणं विदाहः
सपीतपूतिश्रवणं च पित्तात् ॥ २१० ॥
वैश्रुत्यकण्डूस्थिरशोफशुक्ल-
स्निग्धश्रुतिः श्लेष्मभवेऽल्परुक् च ।
सर्वाणि रूपाणि तु सन्निपाता-
त्स्रावश्च तत्राधिकदोषवर्णः ॥ २११ ॥
इति कर्णरोगनिदानम् ।

## ( अथ कर्णरोगचिकित्सा । )

कर्णशूले तु वातघ्नी हिता पीनसवत्क्रिया ।
प्रदेहाः पूरणं नस्यं पाकस्रावे व्रणक्रियाः ॥ २१२ ॥
भोज्यानि च यथादोषं कुर्यात्स्नेहांश्च पूरणान् ।
हिङ्गुतुम्बुरुशुण्ठीभिस्तैलं च सार्षपं पचेत् ।
एतद्धि पूरणं श्रेष्ठं कर्णशूलनिवारणम् ॥ २१३ ॥
देवदारुवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
तैलं सिद्धं बस्तमूत्रे कर्णशूलनिवारणम् ॥ २१४ ॥
वराटकान्समाहृत्य दहेन्मृद्भाजने नवे ।
तद्भस्म श्च्योतयेत्तेन गन्धतैलं विपाचयेत् ॥२१५॥
रसाञ्जनस्य शुण्ठ्याश्च कल्काभ्यां कर्णशूलनुत् ।
बालमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ॥ २१६
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ।
सौवर्चलयवक्षारस्वर्जिकोद्भिदसैन्धवम् ॥ २१७ ॥
भूर्जग्रन्थिर्विडं मुस्तं मधुशुक्तं चतुर्गुणम् ।
मातुलुङ्गरसश्चैव कदल्या रस एव च ॥ २१८ ॥
सर्वैरेतैर्यथोद्दिष्टैः क्षारतैलं विपाचयेत् ।
बाधिर्यं कर्णनादश्च पूयस्रावश्च दारुणः ॥ २१९ ॥

क्रिमयः कर्णशूलश्च पूरणादस्य नश्यति ।
मुखकर्णाक्षिरोगेषु यथोक्तं पीनसे विधिम् ।
कुर्याद्भिषक् समीक्ष्यादौ दोषकालबलाबलम् २२०

इति कर्णरोगचिकित्सा ।

नाद इत्यादिना कर्णरोगानाह—एते च शालाक्ये अष्टाविंशतिरुक्ताः । तथापीह चतुर्ष्वेव कर्णरोगेषु शेषाणामपि कर्णरोगाणामवरोधो व्याख्येयः । शेषाणामपि वातादिजन्यत्वात् ॥ वराटकानित्यत्र तद्भस्मेति वराटकादाहभस्म गालयेत् । गंधतैलमिति सुगंधद्रव्यकल्कयुक्तं तैलं किंवा गंधद्रव्याधिवासितं तैलम् ।

बालमूलक शुण्ठीत्यत्रक्षारवत् तैलम् । मधुशुक्तं चतुर्गुणमिति मधुप्रधानं शुक्तं चतुर्गुणम् । शुक्तं च शुचौ भांडे द्रवनागरधान्ययुक्तं त्रिरात्रस्थं तत् शुक्तमुच्यते । मातुलुंगकदलीरसौ तैलसमौ । यच्चोक्तं जतूकर्णे 'मधुनः शुक्तग्रहणेनैव गृहीतत्वात् शुक्तं च मूलकशताह्वादिक्षारवचाचतुर्लवणकुष्टदारुरसांजननागरशोभांजनहिंगुघनभूर्जैः मातुलुंगकदलीरसैश्चतुर्गुणैः शुक्तैस्तैलं विपक्वं बाधिर्यशूलजंतुघ्नम् ॥ २१०—२२० ॥

इति कर्णरोगचिकित्सा ॥

अथ नेत्ररोगनिदानम् ॥

अल्पस्तु रागोऽनुपदेहवांश्च
प्रस्पन्दतोदातिरुजश्च वातात् ।
सतोदभेदोऽनिलजाक्षिरोगे
पीतोपदेहः सुभृशोष्णमस्रम् ॥ २२१ ॥
शुक्लोपदेहो बहुपिच्छिलास्त्र
नेत्रं कफात् स्याद्गुरुतासकण्डुः ।
सर्वाणि रूपाणि तु सन्निपाता-
षट्सप्ततिर्नेत्रगदास्तु भेदात् ॥ २२२ ॥
तेषामभिव्यक्तिरभिप्रदिष्टा
शालाक्यतन्त्रेषु चिकित्सितं च ।
पराधिकारे तु न विस्तरोक्तिः
शस्तेति तेनात्र न नः प्रयासः ॥ २२३ ॥

इति नेत्ररोगनिदानम् ।

अल्पस्त्वित्यादिना चत्वारोऽक्षिरोगाऽभिधीयन्ते उपदेहो दूषिकं अल्पर्थोष्णस्रावि । अनुक्तनेत्रामयेषु आचार्याणां विप्रतिपत्तिश्चेन्न । रोगाणां षट्सप्ततिः विदेहः प्राह करालस्तु षण्णवतिः अशीतिं कौशीतकिः प्राह—उक्तं 'तत्रसत्यप्तविधं स्थानासन्नौ प्रकीर्तितः । त्रयोदशतु शुक्लस्थाः षड्रोगाः कृष्णभागजाः । पंचविंशतिदृष्टिस्थाः षोडशेति च सर्वगा' इति । एतेषां ज्ञानोपायमाह—तेषामित्यादि । अभिव्यक्तिरिति लक्षणम् । नेत्ररोगानभिधाने कारणमाह पराधिकारेष्विति ॥ ॥ २२१—२२३ ॥

( अथ नेत्ररोगचिकित्सा । )

नेत्ररोगे समुत्पन्ने तरुणे तु विडालकः ।
कार्यो दाहोपदेहाश्रुशोफरागनिवारणः ॥ २२४ ॥
नागरं सैन्धवं सर्पिर्मण्डेन च रसक्रिया ।
निघृष्टं वातिके तद्वन्मधुसैन्धवगैरिकम् ॥ २२५ ॥
तथा शावरकं लोध्रं घृतभृष्टं विडालकः ।
कार्या हरीतकी तद्वद्घृतभृष्टा रुजापहा ॥ २२६ ॥
पैत्तिके चन्दनानन्तामञ्जिष्ठाभिर्विडालकः ।
कार्यः पद्मकयष्ट्याह्वमांसीकालीयकैस्तथा ॥ २२७ ॥
गैरिकं सैन्धवं मुस्तं रोचना च रसक्रिया ।
कफे कार्या तथा क्षौद्रप्रियङ्गुः समनःशिला ॥२२८
सन्निपाते तु सर्वैः स्याद्बहिरक्ष्णोः प्रलेपनम् ।
पक्ष्माण्यस्पृश्यता कार्यं सम्यङ्नेत्राञ्जनं त्र्यहात्२२९
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिः शुभः ।
कोष्णः सैरण्डतर्कारीबृहतीमधुशिग्रुभिः ॥ २३० ॥
द्राक्षा दार्वी समञ्जिष्ठा लाक्षा द्विमधुकोत्पलैः ।
क्वाथः सशर्करः शीतः पूरणं रक्तपित्तनुत् ॥२३१॥
नागरत्रिफलामुस्तनिम्बवासारसः कफे ।
कोष्णमाश्च्योतनं मिश्रैरौषधैः सान्निपातके ॥ २३२
बृहत्यैरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्याद्वर्तिर्वाताक्षिरोगनुत् ॥ २३३
सुमनःक्षारकाः शङ्खास्त्रिफला मधुकं बला ।
पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥ २३४
सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनः शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगनुत् २३५
अमृताह्वाविसं बिल्वं पटोलं छागलं शकृत् ।
प्रपौण्डरीकं यष्ट्याह्वं दार्वी कालानुसारिवा ॥२३६
सुधौतञ्जर्जरीकृत्य कृत्वा चार्द्धपलांशकम् ।
तोये पक्त्वा रसे पूते भूयः पक्वे घने रसे ॥२३७॥
कर्षं च श्वेतमरिचाज्जातीपुष्पान्नवात्पलम् ।
चूर्णं कृत्वा कृता वर्तिः सर्वघ्नी[1] दृक्प्रसादनी २३८
शङ्खप्रवालवैदूर्यलौहताम्रप्लवास्थिभिः ।
स्रोतोऽजश्वेतमरिचैर्वर्तिः सर्वाक्षिरोगनुत् ॥ २३९
शाणार्धं मरिचाद्द्वौ च पिप्पल्यर्णवफेनयोः ।
शाणार्धं सैन्धवाच्छाणं नवसौवीरकाञ्जनात् २४०
पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम् ।
कण्डूकाचकफार्तानां मलानां च विशोधनम् २४१
बस्तमूत्रे त्र्यहं स्थाप्यमेलाचूर्णं सुभावितम् ।

---

१ सर्वघ्नीति त्रिदोषघ्नीति ।

चूर्णाञ्जनं च तैमिर्यक्रिमिपैल्लमलापहम् ॥ २४२ ॥
सौवीरमञ्जनं तुत्थं ताप्यो धातुर्मनःशिला ।
चक्षुष्या मधुकं लोहमणयः पौष्पमञ्जनम् ॥ २४३ ॥
सैन्धवं शौकरी दंष्ट्रा कतकं चाञ्जनं शुभम् ।
तिमिरादिषु चूर्णं वा वर्तिर्वेयमनुत्तमा ॥ २४४ ॥
कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं सिता ।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥ २४५
कुक्कुटाण्डकपालं च वर्तिरेषा व्यपोहति ।
तिमिरं पटलं काचं मलं चाशु सुखावती ॥ २४६ ॥

इति सुखावतीवर्तिः ।

त्रिफला कुक्कुटाण्डत्वक्कासीसमयसो रजः ।
नीलोत्पलं विडङ्गानि फेनं च सरितां पतेः ॥ २४७
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने ।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्तयेत् ।
एषा दृष्टिप्रदा वर्तिरन्धस्याभिन्नचक्षुषः ॥ २४८ ॥

इति दृष्टिप्रदा वर्तिः ।

वदने कृष्णसर्पस्य निहितं मासमञ्जनम् ।
ततस्तस्मात्समुद्धृत्य सशुष्कं चूर्णयेद्बुधः ॥ २४९ ॥
सुमनःक्षारकैः शुष्कैरर्धांशैः सैन्धवेन च ।
एतन्ने भाञ्जनं कार्यं तिमिरघ्नमनुत्तमम् ॥ २५० ॥
पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम् ।
जीर्णं घृतं च सर्वाक्षीरोगघ्नी स्याद्रसक्रिया ॥२५१॥
कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया ।
शस्ता सर्वाक्षिरोगेषु काचार्बुदमलेषु च ॥ २५२ ॥
धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया ।
पित्तरक्ताक्षिरोगघ्नी तैमिर्यपटलापहा ॥ २५३ ॥
धात्रीसैन्धवपिप्पल्यः स्युरल्पमरिचाः समाः ।
क्षौद्रयुक्ता निहन्त्यान्ध्यं पटलं च रसक्रिया ॥२५४

इति नेत्ररोगचिकित्सा ।

उत्पन्नमात्रेत्यादिना नेत्ररोगचिकित्सितमाह—विडालकः नेत्रवहिर्लेपः शालाक्ये उच्यते निघृष्टमित्यादौ तद्वदिति रसक्रियावदित्यर्थः । हरीतत्वात् हरीतकीघृतयुक्तो विडालकः । सन्निपातेतु सर्वैरिति प्रत्येकमुक्तविडालकद्रव्यैः प्रलेपनं कार्यमित्यर्थः । नेत्रांजनं त्र्यहादित्यत्र प्रायोऽक्षिरोगाणां त्र्यहेण पाकात् त्र्यहादित्युक्तम् । पाकलक्षणं तंत्रांतरे—प्रशस्तवर्त्मता चाक्ष्णोः संस्रावाश्रुप्रशांतता । वेदनाकंडू......पक्वाक्षिगदलक्षणं । आश्च्योतनमक्षिसेकः । सुमनसः क्षारं जातीसुमनः क्षारः । श्वेतमरिचं पुष्पं पुष्पांजनं प्लवः पक्षिविशेषः द्वौ च पिप्पल्यर्णवफेनौ शाणावित्यर्थः । चित्रायामिति चित्रानक्षत्रे । ताप्यो धातुः तापीनदीभवः । चक्षुष्या वनकुलत्थिका पौष्पमंजनं पुष्पांजनं ॥ अभिन्नचक्षुष इति अभिन्नपाकस्य । ॥ २२४–२५४ ॥ इति नेत्ररोगचिकित्सा ॥

## ( अथ खालित्यरोगनिदानम् । )

तेजोऽनिलाद्यैः सह केशभूमिं
दग्ध्वाशु कुर्यात्खलितं नरस्य ।
किंचित्तु दग्ध्वा पलितानि कुर्या-
द्धरित्प्रभत्वं च शिरोरुहाणाम् ॥ २५५ ॥

तेज इत्यादिना खालित्यलक्षणमाह—तेजःशब्देन देहोष्माभिमतः स वाताद्यैर्युक्तः खालित्यं करोतीति योजनीयम् । केचित्तु तेजःशब्देन पित्तमपि वर्णयन्ति हरित्प्रभत्वमिति कपिलत्वम् । शिरोरुहाणामिति केशानाम् । भेषजसंग्रहमिति भेषजाभिधायकं ग्रन्थम् ॥ २५५ ॥

इत्यूर्ध्वजत्रूत्थगदैकदेशः
प्रोक्तश्चिकित्सां तु परं निबोध ।
अतःपरं भेषजसंग्रहं तु
निबोध संक्षेपत उच्यमानम् ॥ २५६ ॥

इति खालित्यरोगनिदानम् ।

खालित्ये पलिते वल्यां हरिलोम्नि च शोधितम् ।
नस्यैस्तैलैः शिरोवक्त्रप्रलेपैश्चाप्युपाचरेत् ॥ २५७ ॥
सिद्धं विदारीगन्धाद्यैर्जीवनीयैरथापि च ।
नस्यं स्यादणुतैलं वा खालित्यपलितापहम् ॥२५८॥
क्षीरात्सहचराद्भृङ्गराजाच्च सुरसाद्रसात् ।
प्रस्थैस्तु कुडवस्तैलाद्यष्ट्याह्वपलकल्कितः ॥ २५९ ॥
सिद्धः शैलासने भाण्डे मेषशृङ्गे च संस्थितः ।
नस्यं स्याद्भिषजा सम्यग्योजितं पलितापहम् २६०
भिषजा क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ।
उत्पाट्य पलितं देयौ तावुभौ पलितापहौ ॥२६१॥
मार्कवस्वरसात्क्षीराद्विप्रस्थं मधुकात्पलम् ।
तैः पचेत्कुडवं तैलात्तन्नस्यं पलितापहम् ॥ २६२ ॥
आदित्यवल्ल्या मूलानि कृष्णशैरेयकस्य च ।
सुरसस्य च पत्राणि पत्रं कृष्णशणस्य च ॥ २६३ ॥
मार्कवं काकमाची च मधुकं देवदारु च ।
पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम् ॥ २६४ ॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थि कर्दमः कृष्णो मृणालं रक्तचन्दनम् २६५
नीलीभल्लातकास्थीनि कासीसमदयन्तिकाः ।
सोमराज्यसनः शस्त्रं कृष्णं पिण्डीतचित्रकौ २६६
पुष्कराजुर्नकाश्मर्याण्याम्रजम्बूफलानि च ।
पृथक् पञ्च पलांशानि तैः पिष्टैराढकं पचेत् २६७
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः २६८
लोहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्यक्रियायां च शिरोऽभ्यङ्गे तथैव च २६९

एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥ २७० ॥

इति महानीलतैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवो द्विगुणामलकीरसः ॥ २७१ ॥
सिद्धः सप्रतिमर्शः स्यात्सर्वमूर्धगदापहः ।
क्षीरं पियालयष्ट्याह्वे जीवकाद्यो गणस्तिलाः ॥२७२
कृष्णा वक्रे प्रलेपः स्याद्धरिल्लोमनिवारणः ।
यष्ट्याह्वतिलकिञ्जल्कक्षौद्रमामलकानि च ॥ २७३ ॥
बृंहयेद्रञ्जयेच्चैतत्केशान्मूर्धप्रलेपनात् ।
पचेत्सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ॥ २७४ ॥
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशि ।
तत्प्रातस्त्रिफलाधौतं स्यात्कृष्णमृदुमूर्धजम् ।
अतश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः ॥ २७५
कुर्याच्छेषेषु रोगेषु
क्रियां स्वां स्वां चिकित्सिताम् ।
शेषेष्वादौ च निर्दिष्टा सिद्धौ चान्या प्रवक्ष्यते २७६

इति खालित्यचिकित्सा ।

खालित्येत्यादिना । खालित्यादिचिकित्सितमाह—हरिल्लोम्नीति कपिललोम्नी । शिलासमे पात्रेति अश्ममये पात्रे । आदित्यवर्ण्यां मूलानीति आदित्यवर्णा सूर्या । कृष्णसैरीयकः कृष्णाझिंटी । सोमराजी शस्तं कृष्णं लोहम् । कृष्णपिंडितचित्रकाविति कृष्णमदनकृष्णाचित्रकौ । आदित्यपाकमिति आदित्यरश्मिसंवन्धादेव पक्वम् । अत्र वहुभागैरिति वहुवचनात् पृथक्भावे सिद्धेऽपि पृथगिति पदं सिद्धस्यापि त्रिफलापृथक् भावस्य द्योतनार्थं कल्कभूयस्त्वात् । समानकइत्यादियोगाः केशरंजकाः । पचेत्सैंधवेत्यादौ सैंधवायश्चूर्णस्तंडुलानां सत्वसिद्धमिति । शेषेषु रोगेष्विति श्वासकासज्वरारक्तपित्तशोषेषु पीनसोपद्रवतयोक्तेषु । शेषेषु रोगेष्वित्यादौ शेषशब्दनिर्देशेन अनुक्तत्रिमर्मजरोगग्रहणम् । आदौ निर्दिष्टा इति सामान्यादिहैव त्रिमर्मजरोगादिष्टा चिकित्सा ज्ञेया । सिद्धौ चान्याप्रवक्ष्यतेति त्रिमर्मजायां सिद्धौ वक्ष्यते ॥ ॥ २५६–२७६ ॥

( अथ स्वरभेदचिकित्सा । )

सर्पींष्युपरिभक्तानि स्वरभेदेऽनिलात्मके ।
तैलैश्चतुष्प्रयोगैश्च बलारास्नामृताभयैः ॥ २७७ ॥
बर्हितित्तिरिदक्षाणां पञ्चमूलशृतान्रसान् ।
मायूरं क्षीरसर्पिर्वा पिबेज्जूषणमेव वा ॥ २७८ ॥
पैत्तिके तु विरेकः स्यात्पयश्च मधुरैः शृतम् ।
सर्पिर्गुडो घृतं तिक्तं जीवनीयं वृषस्य वा ॥ २७९ ॥
कफजे स्वरभेदे तु तीक्ष्णं मूर्धविरेचनम् ।
विरेको वमनं धूमो यवान्नकटुसेवनम् ॥ २८० ॥
चव्यभार्ग्यभयाव्योषक्षारमाक्षिकचित्रकान् ।
लिह्याद्वा पिप्पलीपथ्ये तीक्ष्णं मद्यं पिबेच्च सः २८१
रक्तजे स्वरभेदे तु सघृता जाङ्गला रसाः ।
द्राक्षाविदारीक्षुरसाः सघृतक्षौद्रशर्कराः ॥ २८२ ॥
यच्चोक्तं क्षयकासघ्नं तच्च सर्वं चिकित्सितम् ।
पित्तजस्वरभेदघ्नं शिरावेधश्च रक्तजे ॥ २८३ ॥
सन्निपाते हिताः सर्वाः क्रिया न तु शिराविधिः ।
इत्युक्तं स्वरभेदस्य समासेन चिकित्सितम् ॥२८४॥

इति स्वरभेदचिकित्सा ।

सर्पिंष्युपरिभक्तानीत्यादिना स्वरभेदचिकित्सामाह—वातादिस्वरभेदलक्षणं यद्यपीह नोक्तं तथापि राजयक्ष्म चिकित्सोक्तमेव वोद्धव्यम् । यद्यपि तत्र चिकित्सोक्ता तथापि इह स्वरभेदस्याधिकृतत्वात्पुनरप्युच्यते । चतुष्प्रयोगैरिति अभ्यंगगंडूषमस्तुप्रयोज्यैः वलारास्नामृताह्वयैः वातव्याधौ वक्ष्यमाणैः । जीवनीयघृतं वातरक्ते वक्ष्यमाणम् । वृषघृतं रक्तपित्तचिकित्सोक्तम् । रक्तजे स्वरभेदे च इति रक्तघ्नं स्वरभेदघ्नं चिकित्सितमिति संवंधः । इति स्वरभेद चिकित्सा ॥ २७७—२८४ ॥

भवन्ति चात्र ।

वातपित्तकफा नृणां वस्तिहृन्मूर्धसंश्रयाः ।
तस्मात्तु स्थानसामीप्याद्धर्तव्या वमनादिभिः २८५
अध्यात्मलोके वाताद्यैर्लोको वातरवीन्दुभिः ।
पीड्यते धार्यते चैव विकृताविकृतैस्तथा ॥ २८६ ॥
विरुद्धैरपि नत्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वाद्विषं घोरमहीनिव ॥२८७॥
त्रिमर्मजानां रोगाणां निदानाकृतिभेषजम् ।
विस्तरेण पृथग्दिष्टं त्रिमर्मीये चिकित्सिते ॥ २८८ ॥

उक्तानुक्तचिकित्सार्थमाह—वातपित्तकफेत्यादिषु वमनादीनां कर्मणां मध्ये यस्य कर्मणः समीपदोपहरणसामर्थ्यं भवति तेन कर्मणा हर्तव्येति । वातादीनामेव विकृताविकृतानां देहपीडकत्वमाह—अध्यात्मेत्यादि । अध्यात्मलोकश्चेतनलोकः । लोक इति जगत् । अत्र दृष्टांते इन्दुस्थानीयश्लेष्मा रविस्थानीयं पित्तं विकृतैः पीड्यते अविकृतैर्धार्यते इति व्यवस्था । दोषाणां यस्य गुणविरोधात्संभूयकार्यकरणे यथा विरोधो न भवति तदाह—विरुद्धैरपीति । परस्परविरुद्धैरपि यथा श्लेष्मणः स्नेहपैच्छिल्यगौरवादीनां वातगुणे रौक्ष्यलघवादिभिः विपरीतानां च परस्परोपघातकत्वं यद्दृष्टं तदिह दोषसंसर्गे न भवति । कुतो न घ्नंतीत्याह—सहजसात्म्यत्वादिति । स्वाभाविकसात्म्यभावोऽनुपघातकत्वम् । अयंच स्वभावः कर्मजन्यो वा भवतु उभयथाप्यचिंत्य एव । नात्रयुक्तिबाधा भवति तेन परस्परगुणोपघातव्यभिचारः चंद्रिकाकृतः सुश्रुते प्रपंचितः स न भवति । विरुद्धस्याप्यनुपघाते दृष्टांतमाह—घोरं विषमहीनिव । त्रिमर्म-

जानामिति संग्रहो व्यक्तः। इति त्रिमर्मीयचिकित्सितं समाप्तम् ॥ २८५—२८८ ॥

इति चरकसंहितायां त्रिमर्मीयचिकित्सितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

अथात ऊरुस्तम्भचिकित्सितं व्याख्यास्यामः ।
श्रिया परमया ब्राह्म्या परया च तपःश्रिया ।
अहीनं चन्द्रसूर्याभ्यां सुमेरुमिव पर्वतम् ॥ १ ॥
धीधृतिस्मृतिविज्ञानज्ञानकीर्तिक्षमालयम् ।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥ २ ॥
भगवन् पञ्च कर्माणि समस्तानि पृथक् तथा ।
निर्दिष्टान्यामयानां तु सर्वेषामेव भेपजम् ॥ ३ ॥
दोषजोऽस्त्यामयः कश्चिद्यस्यैतानि भिषग्वर ।
न स्युः शक्तानि शमने साध्यस्य क्रियया ततः॥४॥
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य कारणम् ।
सलिङ्गभेपजं भूयः पृष्टस्तेनाब्रवीद्गुरुः ॥ ५ ॥
"स्निग्धोष्णलघुशीतानि जीर्णाजीर्णे समश्नतः ।
द्रवशुष्कदधिक्षीरग्राम्यानूपौदकामिषैः ॥ ६ ॥
पिष्टव्यापन्नमद्यातिदिवास्वप्नप्रजागरैः ।
लङ्घनाध्यशनायासभयवेगविधारणैः ॥ ७ ॥
स्नेहाच्चामं चितं कोष्ठे वातादीन्मेदसा सह ।
रुद्ध्वाशु गौरवादूरू यात्यधोगैः शिरादिभिः ॥ ८ ॥
पूरयेत्सक्थिजङ्घोरु दोषो मेदोबलोत्कटः ।
अविधेयपरिस्पन्दं जनयत्यल्पविक्रमम् ॥ ९ ॥

त्रिमर्मीयानपि बहून् रोगान् पंचकर्मसाध्यान् दृष्ट्वा पंचकर्मसाध्ये ऊरुस्तंभे जातस्मरण आचार्यः ऊरुस्तंभचिकित्सितमाह—भवतिहि विरोधदर्शनात् तद्विरोधस्मरणं । अहीनमिति सर्वदा युक्तम् । समस्तानीति मिलितानि दोषज इति पदं मानसागंतुनिरासार्थम् । तन्निरासस्तु तयोः पंचकर्मविषयतया प्रसिद्धत्वात् । तथा दोषजस्याप्यसाध्यस्य साधने पंचकर्माणि समर्थानि तन्निरासार्थमाह—साध्यस्य सतः इति संबंधः । भूयो ऊरुस्तंभस्य कारणादीनि पृष्टो गुरुः । जीर्णाजीर्णः स्तोकशेषाजीर्ण इति । आमं चितमिति रसशेषरूपम् । कोष्ठे वातादीन् मेदसा सहेति मेदसहितमामं वातादीनां रोधकं ज्ञेयम् । आमं च त्रिदोषसहितमेवं शिरादिभिः ऊरू याति । दोषो मेदोबलोत्कष्ट इति दोषः आमसंरुद्ध वातादि । यदा दोषो मलोत्कट इति पाठः तदामस्य विशेषणम् । तद्विग्रहेणैव यद्यपि जंघोर्वोर्ग्रहणं प्राप्तं तथापि तयोरभिधानं विशेषेण तत्पूरणोपदर्शनार्थम् । अविधेयपरिस्पंदमिति अस्वाधीनइन्द्रियं अल्पविक्रमं इति वातेनाल्पक्रियं अक्रियं वा करोतीत्यर्थः ॥ १—९ ॥

महासरसि गम्भीरे पूर्णेऽम्बु स्तिमितं यथा ।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥ १० ॥
गौरवायाससङ्कोचदाहरुक्सुप्तिकम्पनैः ।
भेदस्फुरणतोदैश्च युक्तो देहं निहन्त्यसून् ॥ ११ ॥
ऊरुश्लेष्मा समेदस्को दोषौ द्वावविभूय तु ।
स्तम्भयेत्स्थैर्यशैत्याभ्यामूरुस्तम्भस्ततस्तु सः ॥१२॥
प्राग्रूपं ध्याननिद्रातिस्तैमित्यारोचकज्वराः ।
लोमहर्षश्च छर्दिश्च जङ्घोर्वोः सदनं तथा ॥ १३ ॥
वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात्पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ १४ ॥

महासरसीत्यादि दृष्टांतेन ऊरुस्तंभारंभकप्रधानस्य कफस्य प्रबलतामाह—यद्यपि ऊरुस्तंभस्य त्रिदोषजनितत्वमिहोक्तं तथा सूत्रस्थानेऽपि एकोरुस्तंभः त्रिदोषमात्रजन्य इत्यनेनोक्तस्तथापि कफप्राधान्यादत्र कफ एवोपदिष्टः । अतएवाग्रे ऊरुश्लेष्मेत्यादिना ऊरुस्तंभशब्दनिरुक्ति उत्पादसामग्रीं चाह । स्थैर्यशैत्याभ्यामित्यनेन स्तंभनक्रियामाह । तथाच स्थैर्यशैत्ययोः कफगुणयोः स्तंभनकरणे कारणतां दर्शयति । ऊरुस्तंभे स्नेहप्रयोगजं दोषमाह—वातशंकिभिरित्यादि । वातशंका चास्मिन् सुप्तिसंकोचादिना वातसमानलिंगदर्शनाद्भवति । अस्य संस्नेहेन दोषाः कृच्छ्रादुद्धरणमित्यन्तोक्ताः ॥ १०—१४ ॥

जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदना ।
पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ १५ ॥
संस्थाने पीडने गत्यां चलने चाप्यनीश्वरः ।
अन्यनेयौ हि संभग्नावूरुपादौ च मन्यते ॥ १६ ॥
यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ १७ ॥

जंघोरुग्लानिरित्यादि तु लक्षणं भिन्नसामग्रीकं ब्रूते अन्येतु दोषप्रयोगकृतं असाध्यलक्षणमेतदाहुः ॥ १५-१७ ॥

तस्य न स्नेहनं कार्यं न वस्तिर्न विरेचनम् ।
न चैव वमनं यस्मात्तन्निबोधत कारणम् ॥ १८ ॥
वृद्धये श्लेष्मणो नित्यं स्नेहनं वस्तिकर्म च ।
तत्स्थस्योद्धरणे चैव न समर्थं विशोधनम् ॥ १९ ॥
कफं कफस्थानगतं पित्तं च वमनात्सुखम् ।
हर्तुमामाशयस्थौ च स्रंसनात्तावुभावपि ॥ २० ॥
पक्वाशयस्थाः सर्वे च वस्तिभिर्मूलनिर्जयात् ।
शक्या न त्वाममेदोभ्यां स्तब्धा जङ्घोरुसंस्थिताः२१
वातस्थाने हितच्छैत्याद्वयोः स्तम्भाश्च तद्गताः ।
न शक्याः सुखमुद्धर्तुं जलं निम्नादिव स्थलात् २२

संप्रति स्नेहवस्त्यादिकप्रतिषेधोपपत्तिमाह—तस्येत्यादि । स्नेहस्य दोषो यद्यपि पूर्वोक्तः तथापीदानीं यथादोषकारकं स्नेहनं भवति तथा प्रतिपाद्यते । शिरोविरेचनं चात्र सर्वथैवासंभाव्यमा-

नत्वादेव नोपन्यस्तमिति ज्ञेयम् । स्नेहनमिति स्नेहेन वस्तिकर्म च श्लेष्मवृद्धिकरत्वान्न युक्तम् । किंवा वस्तिकर्म विशेषणं स्नेहनमिति पदम् । तेनानुवासनमिति लभ्यते । निरूहस्तु विरेचनशब्देनैव शोधनाभिधायिना गृहीत एव अतएव ऊरुस्तंभदोषोद्धरणासमर्थशोधनविवरणे एव निरूहोऽप्युक्तः । उक्तदोषहरणासामर्थ्यं वमनविरेचननिरूहाणां क्रमेण विवृण्वन्नाह—श्लेष्मस्थानगत इत्यादि हर्तुं शक्यमिति विभक्तिलिंगविपरिणामाद्योजनीयम् । तावुभौ निर्हर्तुमशक्यौ । सर्वे हि वातपित्तश्लेष्माणः । मूलनिर्जयादितिपदं वमनमित्यनेन तथा वस्तिरित्यनेन योज्यम् । मूलनिर्जयादिति मूलच्छेदात् ॥ वमनादीनां साध्यं विषयं दर्शयित्वा असाध्यं विषयमाह—शक्येत्यादि । तथा मेदसः स्वच्छत्वेन वमनादीनां जंघोरुस्थानेऽसमर्थत्वं ज्ञेयम् । ऊरुस्तंभदोषस्य वमनादिनामसामर्थ्ये हेत्वंतरमाह—वातस्थानेति । जंघोरुरूपे वातस्थाने । तच्छैत्यादिति वातशैत्यात् ॥ १८—२२ ॥

तस्य संशमनं नित्यं क्षपणं शोषणं तथा ।
युक्त्यपेक्षी भिषक् कुर्यादधिकत्वात्कफामयोः॥२३॥
सदा रूक्षोपचाराय यवश्यामाककोद्रवान् ।
शाकैरलवणैरद्याज्जलतैलोपसाधितैः ॥ २४ ॥
सुनिषण्णकनिम्बार्कवेत्रारग्वधपल्लवैः ।
वायसीवास्तुकैरन्यैस्तिक्तैश्च कुलकादिभिः ॥ २५ ॥
क्षारारिष्टप्रयोगाच्च हरीतक्यास्तथैव च ।
मधूदकस्य पिप्पल्या ऊरुस्तम्भविनाशनाः ॥ २६ ॥
समङ्गां शाल्मलीं बिल्वं मधुना सह ना पिबेत् ।
तथा श्रीवेष्टकोदीच्यदेवदारूनतान्यपि ।"
चन्दनं धातकीं कुष्ठं तालीशं नलदं तथा ॥ २७ ॥

चिकित्सामाह—तस्येत्यादि । तस्योरुस्तंभस्य शमनं कर्तव्यं न शोधनमित्यर्थः । क्षपणं शोधनं आमकफयोः । कुर्यादिति योजना । तत्र क्षपणं शोषणं द्रवभागविशोषणं । वायसी काकमाची । कुटकं कारवेल्लकम् । शाल्मलं शाल्मली श्रीवेष्टकलता । एतानि मधुना पिबेदिति संबंधः ॥ ॥ २३—२७ ॥

मुस्तं हरीतकीं लोध्रं पद्मकं तिक्तरोहिणीम् ।
देवदारु हरिद्रे द्वे वचां कटुकरोहिणीम् ॥ २८ ॥
पिप्पलीं पिप्पलीमूलं सरलं देवदारु च ।
चव्यं चित्रकमूलानि देवदारु हरीतकीम् ॥ २९ ॥
भल्लातकं समूलां च पिप्पलीं पञ्च तान् पिबेत् ।
सक्षौद्रानर्धश्लोकोक्तान्कल्कानूरुग्रहापहान् ॥३०॥

मुस्तेत्यादिकाः पंचयोगाः अर्धश्लोकोक्ता ऊरुग्रहापहाः ॥ ॥ २८—३० ॥

शार्ङ्गेष्टां मदनं दन्तीं वत्सकस्य फलं वचाम् ।
मूर्वामारग्वधां पाठां करञ्जं कुलकं तथा ॥ ३१ ॥
पिबेन्मधुयुतं तुल्यं चूर्णं वा वारिणाप्लुतम् ।
सक्षौद्रं दधिमण्डं वाप्यूरुस्तम्भविनाशनम् ॥ ३२ ॥
मूर्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम् ।
पूर्ववद्वा पिबेत्तोये रात्रिस्थितमथापि वा ॥ ३३ ॥
स्वर्णक्षीरीमतिविषां मुस्तं तेजोवतीं वचाम् ।
सुराह्वं चित्रकं कुष्ठं पाठां कटुकरोहिणीम् ॥ ३४ ॥
लेहयेन्मधुना चूर्णं सक्षौद्रं वा जलान्वितम् ।
फलीं व्याघ्रनखं हेम पिबेद्वा मधुसंयुतम् ॥ ३५ ॥
त्रिफलां पिप्पलीं मुस्तं चव्यं कटुकरोहिणीम् ।
लिह्याद्वा मधुना चूर्णमूरुस्तम्भार्दितो नरः ॥ ३६ ॥

शार्ङ्गेष्टा गुञ्जा स्वादुकंटकं विकंकतं पूर्ववदिति पूर्वेण संबध्यते । गुग्गुलुं च मूत्रे उषितं पिबेदिति योज्यम् । जलान्वितं पिबेदिति शेषः । फली न्यग्रोधः । हेम नागकेशरम् ॥ ३१—३६ ॥

अपतर्पणजश्चेत्स्याद्दोषः संतर्पयेद्धितम् ।
युक्त्या जाङ्गलजैर्मांसैः पुराणैश्चैव शालिभिः ॥३७॥
रूक्षणाद्वातकोपश्चेन्निद्रानाशार्तिपूर्वकः ।
स्नेहस्वेदक्रमस्तत्र कार्यो वातामयापहः ॥ ३८ ॥
पीलुपर्णी पयस्या च रास्ना गोक्षुरको वचा ।
सरलागुरुपाठाश्च तैलमेभिर्विपाचयेत् ॥ ३९ ॥
सक्षौद्रात्प्रसृतं तस्मादञ्जलिं वापि ना पिबेत् ।
कुष्ठं श्रीवेष्टकोदीच्यसरलं दारुकेशरम् ।
अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत् ॥४०॥
सक्षौद्रं मात्रया तच्चाप्यूरुस्तम्भार्दितः पिबेत् ।
रौक्ष्यान्मुक्त ऊरुस्तम्भात्ततश्च स विमुच्यते ॥ ४१ ॥
द्वे पले सैन्धवात्पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढके ॥ ४२ ॥
आरनालात्पचेत्प्रस्थं तैलस्यैतैरपत्यदम् ।
गृध्रस्यूरुग्रहार्शोऽर्तिसर्ववातविकारनुत् ॥ ४३ ॥
पलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः ।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥ ४४ ॥

इत्यष्टकट्वरतैलम् ।

इत्याभ्यन्तरमुद्दिष्टमूरुस्तम्भस्य भेषजम् ।
श्लेष्मणः क्षपणं त्वन्यद्बाह्यं शृणु चिकित्सितम् ॥४५॥
वल्मीकमृत्तिकामूलं करञ्जस्य फलं त्वचम् ।
इष्टकानां ततश्चूर्णैः कुर्यादुत्सादनं भृशम् ॥ ४६ ॥
मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक् ।
पिचुमर्दस्य वा मूलैरथवा देवदारुणः ॥ ४७ ॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक् ।
गाढमुत्सादनं कुर्यादूरुस्तम्भे प्रलेपनम् ॥ ४८ ॥
दन्तीद्रवन्तीसुरसासर्षपैश्चापि बुद्धिमान् ।
तर्कारीशिग्रुसुरसविश्ववत्सकनिम्बजैः ॥ ४९ ॥

पत्रमूलफलैस्तोयं शृतमुष्णं च सेचनम्।
पिष्टं तु सर्षपं मूत्रेऽध्युषितं स्यात्प्रलेपनम् ॥ ५० ॥
वत्सकः सुरसं कुष्ठं गन्धास्तुम्बुरुशिग्रुकौ।
हिंस्रार्कमूलवल्मीकमृत्तिकाः सकुठेरकाः ॥ ५१ ॥
दधिसैन्धवसंयुक्तं कार्यमेतैः प्रलेपनम्।
ऊरुस्तम्भविनाशाय भिषजा जानता क्रमम् ॥५२॥
श्योनाकं खदिरं बिल्वं बृहत्यौ सरलासनौ।
शोभाञ्जनकतर्कारीश्वदंष्ट्रासुरसार्जकान् ॥ ५३ ॥
अग्निमन्थकरञ्जौ च जलेनोत्क्वाथ्य सेचयेत्।
प्रलेपो मूत्रपिष्टैर्वाप्यूरुस्तम्भनिवारणः ॥ ५४ ॥
'कफक्षयार्थं शक्येषु व्यायामेष्वनुयोजयेत्।
स्थलान्याक्रामयेत्कालं शर्कराः सिकतास्तथा ॥५५॥
प्रतारयेत्प्रतिस्रोतों नदीं शीतजलां शिवाम्।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ ५६ ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत्।

आवस्थिकं क्रममाह—अपतर्पणेत्यादिना। रूक्षणादित्यादिना स्नेहविधानमावस्थिकं तेन सामान्येनात्र विहितस्नेहनिषेधेन समं न विरोधि अस्य विरोधापवादत्वात्। पीलुपर्णी मोरटः। रास्नाभेद इत्यन्ये। सक्षौद्रमिति पादिकक्षौद्रम्। अजगंधा अजमोदा। भल्लातकास्थीनि विंशतिरिति अभिधानेन पलाभ्यामिति पिप्पलिसमुदायात्पलाभ्याम् अष्टकट्वर इति तैलादष्टगुणः कट्वरः कट्वरं तक्रम्। पिचुमर्दो निंबः। द्रवंती दंतीभेदः। तर्कारी जयंती। गंधा इत्यगुर्वाद्युक्ता इह ग्राह्याः। कुठेरकः पर्णासः। शक्येषु वोढुं शक्येषु अत्र जलप्रतरणं कथमस्य श्लेष्मक्षयकरं भवति। यस्माज्जलसंबंधमात्रेण श्लेष्मवृद्धिरेव प्राप्ता। उच्यते—जलेन बहिर्निर्गच्छदूष्मणः निरुद्धस्यान्तःप्रवेशात् श्लेष्मसंघातभेदनं भवति। तथा प्रतरणक्रियया श्लेष्मा विच्छिद्यते समानाभिमता क्रिया अत्र योग्यत्वात्क्रियत एव। उक्तं हि—'भवेत् कदाचित् कार्येषु विरुद्धाभिमता क्रिये'ति ॥ ३७—५६ ॥

श्लेष्मणः क्षपणं यत्स्यान्न च मारुतमावहेत् ॥५७॥
तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम्।
शरीरं बलमग्निं च कार्यैषा रक्षता क्रिया ॥५८॥"

तत्र श्लोकः।

हेतुः प्राग्रूपलिङ्गानि कर्मायोग्यत्वमेव च।
द्विविधं भेषजं चोक्तमूरुस्तम्भचिकित्सिते ॥ ५९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने ऊरुस्तम्भचिकित्सितं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

अनुक्तचिकित्सापरिग्रहार्थमाह—श्लेष्मण इत्यादि। हेतुरित्यादिसंग्रहः। कर्मायोग्यत्वे हेतुः वृद्धये श्लेष्मण इत्यादिनोक्तो ज्ञेयः। द्विविधमिति आंतरं बाह्यं च। भेषजमिति औषधम् ॥ ५७—५९ ॥

ऊरुस्तंभचिकित्सितं समाप्तम्।

## अष्टाविंशोऽध्यायः।

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः।
"वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम्।
वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्तितः ॥ १ ॥

ऊरुस्तंभभेषजे विरूक्षणाद्वातप्रकोपो भवतीति संबंधादूरुस्तंभानंतरं वातव्याधिचिकित्सितमारभ्यते। वात एव व्याधिरिति पक्षे विकृतश्च वातः सर्वांगैकरूपतामापन्नः विविधपीडाकरत्वाद्वातव्याधिरुच्यते। यदा वाताद्व्याधिरिति पक्षस्तदा वातात् दोषदूष्यसंमूर्च्छनविशेषरूपात् सर्वांगैकांगरूपो व्याधिर्वातव्याधिरुच्यते। ज्वरादयस्तु यद्यपि वातादुत्पद्यंते तथापि ते दोषांतरेणापि वातं विना भवंतीति कृत्वा नात्र शास्त्रे वातव्याधिशब्देनोच्यंते। येऽपि चात्र कफपित्तावृतत्वाद्वाताद्विकाराः व्याधित्वेन वक्तव्याः तेऽतिप्रधानं वातं विना न भवंतीति कृत्वा वातव्याधिरूपाः। एवम् यथा वातिकाश्च व्याधयः पृथक्चिकित्सयोच्यन्ते तथा पित्तजाः कफजाश्च चिकित्स्यंतामिति न वाच्यम्। यतः पित्तकफकृतानां व्याधीनां न तथा प्राधान्यं यथा वातजानाम्। तेन वातजानामेव पृथक् चिकित्सोच्यते। कफपित्तजानां तु अनाविष्कृतानां वमनविरेचनादिकफपित्तचिकित्सैव युक्तेति ज्ञेयम्। वायोः विकारं ज्ञापयितुं तत्स्वभावज्ञानं विना विकृतिविज्ञानस्य अपार्थकत्वात् स्वभावमेव तावदाह—वायुरित्यादि। यद्यपि शरीरेन्द्रियसत्वात्मसंयोगमायुस्तथापि तादृशसंयोगप्रधानत्वाद्वायुरपि प्रकृतिरुच्यते। एवं शरीराधारतया वायुरेव बलम् ॥ १ ॥

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः।
वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥२

हेतुत्वं दर्शयन्नाह—अव्याहतगतिः अपरित्यक्तस्वमार्गः स्थानस्थेति न विमार्गः। प्रकृतौ स्थित इति अक्षीणवृद्धः। वीतरोगेति निरोगः ॥ २ ॥

प्राणोदानसमानाख्यव्यानापानैः स पञ्चधा।
देहं तन्त्रयते सम्यक् स्थानेष्वव्याहतश्चरन् ॥ ३ ॥
स्थानं प्राणस्य शीर्षोरःकर्णजिह्वाक्षिनासिकाः।
ष्ठीवनक्षवथूद्गारश्वासाहारादि कर्म च ॥ ४ ॥
उदानस्य पुनः स्थानं नाभ्युरः कण्ठ एव च।
वाक्प्रवृत्तिः प्रयत्नोर्जो बलवर्णादिकर्म च ॥ ५ ॥

स्वेददोषाम्बुवाहानि स्रोतांसि समधिष्ठितः ।
अन्तरग्नेश्च पार्श्वस्थः समानोऽग्निबलप्रदः ॥ ६ ॥
देहं व्याप्नोति सर्वं तु व्यानः शीघ्रगतिर्नृणाम् ।
गतिप्रसरणाक्षेपनिमेषादिक्रिया सदा ॥ ७ ॥
वृषणौ वस्ति मेढ्रं च नाभ्यूरू वंक्षणौ गुदम् ।
अपानस्थानमन्त्रस्थः शुक्रमूत्रशकृत्क्रियः ॥ ८ ॥
सृजत्यार्तवगर्भौ च युक्ताः स्थानस्थिताश्च ते ।
स्वकर्म कुर्वते देहो धार्यते तैरनामयः ॥ ९ ॥
विमार्गस्था ह्ययुक्ता वा रोगैः स्वस्थानकर्मजैः ।
शरीरं पीडयन्त्येते प्राणानाशु हरन्ति वा ॥ १० ॥
सङ्ख्यामप्यतिवृत्तानां तज्जानां हि प्रधानतः ।
अशीतिर्नखभेदाद्या रोगाः सूत्रे निदर्शिताः ॥११॥
तानुच्यमानान्पर्यायैः सहेतूपक्रमान् शृणु ।
केवलं वायुमुद्दिश्य स्थानभेदात्तथावृतम् ॥ १२ ॥

प्राणोदानेत्यादिना व्यवहारार्थं संज्ञोपदर्शनपूर्वकं प्राणादीनां स्थानं कर्म चाह—देहं तन्त्रयतेइत्यादि । स्थानेष्विति वक्ष्यमाणात्मीयस्थानेषु । आहारादीत्यत्र आदिग्रहणादन्नविधारणनिःसरणादीनि गृह्यंते । प्राणोदानयोर्यद्यपि समानमुरःस्थानं तथापि कर्मभेदाद्भेद एव । यथैव एकगृहस्थितमालाकारकुम्भकारयोः । प्रयतनं प्रयत्नः । ऊर्जः बलवर्णनिष्पादनमुच्यते । स्वेददोषांबुवाहीनीत्यादौ स्वेदवाहीनि तथांबुवाहीनि च स्रोतांसि स्रोतोविमाने पृथगेवोक्तानि ज्ञेयानि । दोषवहानि च स्रोतांसि सर्वशरीरचराण्येव । उक्तं हि 'वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां स्रोतांसि आयतनभूतानि' ॥ गतीत्यादौ आदिशब्देन आकुञ्चनप्रसारणादीनां च ग्रहणम् । यत्रस्थेति वस्त्यादिगतः । सृजतीति निःसारयतीति यावत् । आर्तवगर्भौ च सृजतीति संबंधः । एतानि कर्माणि यादृशाः कुर्वंति तदाह—युक्ता इति । अव्यापन्नाः स्थानस्थिता इति यथोक्तस्थानस्थिताः । यस्मादेवंभूताः अतो देहो धार्यते । वातानां वैगुण्यं कर्माह—विमार्गस्था इत्यादि । स्वस्थानकर्मजैरिति यस्य वायोर्यत् स्थानमुक्तं तत्स्थानगतैः । तथा ष्ठीवनादि यद्वायोः कर्म उक्तम् तज्जैश्च रोगैः शरीरं पीडयंति । प्राणान् वातरोगेण हरंति च । अत्र वायोरेव भूरिप्रधानरोगकर्तृतया भिन्नचिकित्साप्रयोगतया पंचभेदा उक्ताः । न पित्तकफयोः अनभिप्रयोजनत्वात् । तथाहि तंत्रांतरे पित्तमपि पाचकरंजकसाधकालोचकभ्राजकभेदात्पंचविधमुक्तम् । तेषां च यथाक्रमं जठरहृदयदृष्टित्वक्स्थानमुक्तम् । तथा श्लेष्मापि बोधक-श्लेषक-तर्पक-क्लेदक-रोचकभेदात्पंचविधः । तेषांच स्थानानि यथाक्रमं हृदया-माशय-जिह्वा-शिरः-संधयः कर्माणि च यथाक्रमं श्लेषणमवलंबनांतक्लेदनरसबोधनाक्षितर्पणानि पृथगुक्तानि । प्रकृतवातव्याधिकथनायैव संख्यानिर्देशः । अशीतिरित्यादि सूत्रेति महारोगाध्याये । पर्यायैरिति संज्ञांतरैः । कथं पुनस्तेऽशीतिनखभेदाद्या उपदिष्टाः । उच्यन्ते—केवलं वायुमुद्दिश्य केचिदुक्तास्तथा चावृतं वातमुद्दिश्य केचिदुक्ताः ॥ ॥ ३—१२ ॥

रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ।
विषमादुपचाराच्च दोषासृक्स्रवणादपि ॥ १३ ॥
लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः ।
धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥१४॥
दुःखशय्यासनात्क्रोधाद्दिवास्वप्नाद्भयादपि ।
वेगसन्धारणादामादभिघातादभोजनात् ।
मर्माघाताद्गजोष्ट्राश्वशीघ्रयानावतंसनात् ॥ १५ ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान्व्याधीन्सर्वाङ्गैकाङ्गसंश्रितान् ॥१६

रूक्षेत्यादिना संप्रति निदानमाह—विषमादुपचारादिति । उपचारवैरूप्यात् । दोषासृगित्यादौ दोषशब्देन पुरीषमपि गृह्यते । अवतंसनं गजादिभ्यः पतनं । किंवा अवतंसनं धातूनां कर्षणम् । रिक्तानीति तुच्छानि । स्नेहादिगुणशून्यानीत्यर्थः ॥ १३—१६ ॥

अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ।
आत्मरूपं तु तद्व्यक्तमपायो लघुता पुनः ॥ १७ ॥

अव्यक्तं लक्षणमित्यादिना पूर्वरूपमाह—अपायेति । वायोश्चपलत्वेन वातव्याधीनां अपगतत्वमिव । लघुता च शरीरस्य । न सर्वथा वातलिंगाभावो येन प्रकृतलिंगानि संत्येव । अथवा वातलिंगानां लघुता ॥ १७ ॥

सङ्कोचः पर्वणां स्तम्भो भेदोऽस्थ्नां पर्वणामपि ।
लोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः ॥ १८ ॥
खाञ्ज्यपाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता ।
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥ १९ ॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ।
भेदस्तोदार्तिराक्षेपो मोहश्चायास एव च ॥ २० ॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ २१ ॥

कुपितानां कार्यमाह—शिरःप्रभृतीनां अंतःप्रवेशः । अन्ये तु केशभूमिः स्फुटनं शंखललाटभेदश्च । नासाहुंडनं घ्राणनाशः । अक्षिहुंडनमक्षिण्युदासः । जत्रुहुंडनं वक्षोपरोधः । ग्रीवाहुंडनं ग्रीवास्तंभः । उक्तंहि—व्याधयस्ते तदात्वे तु लिंगानीष्टानि नामयोरिति । वातव्याधिविशेषे हेतुस्थानविशेषः । उक्तंहि—प्रकुपितास्तु प्रकोपणविशेषान् दूष्यविशेषान् दूषयंति ॥ १८—२१ ॥

तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ।
ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलं च मारुते ॥ २२ ॥
सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम् ।
वेदनाभिः परीताश्च स्फुटन्तीवास्य सन्धयः ॥२३॥

ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः ।
जङ्घोरुत्रिकपात्पृष्ठरोगशोषौ गुदे स्थिते ॥ २४ ॥
हृन्नाभिपार्श्वोदररुक्तृष्णोद्गारविसूचिकाः ।
कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥२५
पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च ।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ।
श्रोत्रादिष्विन्द्रियवधं कुर्याद्दुष्टसमीरणः ॥ २६ ॥
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ।
आतन्यते सरागा च पर्वरुक् त्वक्स्थितेऽनिले ॥२७
रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः ।
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥ २८

सर्वांगकुपिते इति कृत्स्नदेहकुपिते । गुदे इत्युत्तरगुदे । आतन्यते विस्तार्यते । भुक्तस्य स्तंभ इति भुक्तस्तंभः भुक्तवतो गात्रस्तंभो भवतीति ॥ २३—२८ ॥

गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं तथा ।
सरुक् श्वसितमत्यर्थं मांसमेदोगतेऽनिले ॥ २९ ॥
भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः ।
अस्वप्नः संतता रुक् च मज्जास्थिकुपितेऽनिले ॥ ३०
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ।
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥३१॥
सर्वाङ्गैकाङ्गरोगांश्च कुर्यात्स्नायुगतोऽनिलः ।
बाह्याभ्यन्तरमायामं खल्लिं कुब्जत्वमेव च ॥ ३२ ॥

गुर्वंगेत्यादिना मांसमेदोगतलक्षणम् । तथा मेदोऽस्थिपर्वणामित्यादि अस्थिमज्जगयोः समानं लक्षणम् । समानेऽपि लक्षणे विविधाशितपीतीयोक्तविशिष्टधातुलक्षणैर्विशेष उन्नेयः । संततेति सानुबंधा । क्षिप्रं मुञ्चति बध्नातीति व्यवायकाले क्षिप्रं मुञ्चति वा चिरं धारयते । विकृतमित्यादिना विकारयुक्तं गर्भं जनयति । बाह्येत्यादिना स्नायुगतवातलक्षणत्वेनोक्तानि बहिरायामादीनि अग्रे वक्ष्यन्ति ॥ २९—३२ ॥

शरीरं मन्दरुक् शोफं शुष्यति स्पन्दतेऽपि वा ।
सुप्तास्तन्व्यो महत्यो वा शिरा वाते शिरागते ॥३३
वातपूर्णदृतिस्पर्शः शोथः सन्धिगतेऽनिले ।
प्रसारणाकुञ्चनयोरप्रवृत्तिः सवेदना ॥ ३४ ॥

मंदरुक्शोफमिति मंदरुजं मंदशोफं च । सुप्ता इति निःस्पंदाः ॥ ३३—३४ ॥

अतिवृद्धः शरीरार्धमेकं वायुः प्रपद्यते ।
यदा तदोपशोष्यासृग्बाहुं पादं च जानु च ॥३५॥
तस्मिन् सङ्कोचयत्यर्धं मुखं जिह्मं करोति च ।
वक्रीकरोति नासाभ्रूललाटाक्षिहनूस्तथा ॥ ३६ ॥
ततो वक्त्रं व्रजत्यास्ये भोजनं वक्त्रनासिकम् ।
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते ॥ ३७ ॥
दीना जिह्वा समुत्क्षिप्ताऽवला सज्जति चास्य वाक् ।
दन्ताश्चलन्ति बाध्येते श्रवणौ भिद्यते स्वरः ॥३८॥
पादहस्ताक्षिजङ्घोरुशङ्खश्रवणगण्डरुक् ।
अर्धे तस्मिन्मुखार्धे वा केवले स्यात्तदर्दितम् ॥३९॥

इदानीमतिबलान् वातविकारानभिधातुमुद्यतोऽर्दितमाह—अतिवृद्धेत्यादि । अतिग्रहणेन वायोर्बलवलम् । उग्रकुपितत्वमाह—एकमिति । वामं दक्षिणं वा संकोचयति । भोजनमिति न समं मुखेन खादति किंतु वक्त्रैकदेशेन । दीनेति अगंभीरा जिह्वेति कुटिला, समुत्क्षिप्तेति निःसारिता । बाध्येते श्रवणौ यद्यपि एकपार्श्वाश्रयो विकारोऽयं तथापि प्रभावात्कर्णयोर्बाधा भवति । केवलेति अर्धे एव । ननु देहार्धव्यापित्वं अर्दितस्य तदार्दितेन अर्धांगेन च को भेदः । ब्रूमः—अर्दितेऽरोगितया सर्वकालं भवति अर्धांगं तु व्याप्त्या भवति । उक्तं हि—'सुस्थः स्यादर्दितायानां मुहुर्वेगैर्गतैरि'ति । किंवा यथोक्तविशिष्टत्वादर्दितः अर्धांगे तु नैतानि सर्वाणि भवंति ॥ ३५—३९ ॥

मन्ये संश्रित्य वातोऽन्तर्यदा नाडीः प्रपद्यते ।
मन्यास्तम्भं तदा कुर्यादन्तरायामसंज्ञितम् ॥ ४० ॥
अन्तरायस्यते ग्रीवा मन्या च स्तभ्यते भृशम् ।
दन्तानां दंशनं लाला पृष्ठाक्षेपः शिरोग्रहः ॥४१॥
जृम्भा वदनसङ्गाश्चाप्यन्तरायामलक्षणम् ।
इत्युक्तस्त्वन्तरायामो बहिरायाम उच्यते ॥ ४२ ॥

मन्येत्यादि अंतरायाममाह । अन्तः यदा नाडी प्रपद्यते मन्यासंबद्धा एव शिराः यदि अन्तः प्रपद्यत इत्यर्थः । अन्तरायामसंज्ञितमिति एवंविधो मन्यास्तंभः अन्तरायाम उच्यते । अपरस्तु मन्यास्तंभो वक्ष्यमाणबहिरायाम इति वक्तव्यः । तंत्रांतरे तु मन्यास्तंभः आयामयोः पूर्वरूपत्वेनोक्तः । अन्तः आयम्यत इति अन्तः आकृष्यते ॥ ॥ ४०—४२ ॥

पृष्ठमन्याश्रिता बाह्याः शोषयित्वा शिरावलीः ।
श्रितः कुर्याद्धनुस्तम्भं बहिरायामसंज्ञकम् ॥ ४३ ॥
चापवन्नाम्यमानस्य पृष्ठतो नीयते शिरः ।
उर उत्क्षिप्यते मन्या स्तब्धा ग्रीवा च मृद्यते ॥४४॥
दन्तानां दंशनं जृम्भा लालास्रावश्च वाग्ग्रहः ।
जातवेगो निहन्त्येष वैकल्यं वा प्रयच्छति ॥ ४५ ॥

पृष्ठमन्याश्रिता इति पृष्ठानुगतमन्यासंबंधाः । बाह्या इति शिराविशेषणम् । बाह्याश्च शिराः पृष्ठगता एव । केचित्तु पृष्ठमन्याश्रिता इति वातविशेषणं पठंति । पृष्ठतो नियत इति पृष्ठं प्रति आकृष्यते । जातवेगेति अतिवेगः । एतौ च यामौ खल्वीं कुब्जत्वं सर्वैकांगत्वं कुर्यात् । स्नायुगतेति स्नायुगतोऽनिल इत्यनेन स्नायुगतानिलजन्यावुक्तौ । इहच सिरागतवातजन्यत्वेनोक्तौ तेनोभयवचनात् एतावायामौ

शिरास्नायुगतवातजन्यावेव भवतः । उक्तंहि अन्यत्र—महाहेतू बली वायुः शिराः स्नायवः कण्डराः शिराः मन्यापृष्ठाश्रिता बाह्याः संशोष्यायामयेद्बहिरिति ॥ ४३—४५ ॥

**हनुमूले स्थिते बन्धात्संस्रयत्यनिलो हनुम् ।**
**विवृतास्यत्वमथवा कुर्यात्संवृतमाननम् ॥ ४६ ॥**
**हनुग्रहं च संस्तभ्य हनुसंवृतवक्त्रताम् ।**
**हनुमूले स्थितो वायुः करोति बहुकष्टदम् ॥ ४७ ॥**

हनुस्तंभसंकोचयोर्लक्षणं हनुमूलस्थित इत्यादि । स्रंसयतीति विवर्तयति । विवृतास्यत्वमथवा शब्देन संवृतवक्त्रतां पाक्षिकीं चापेक्षते । संस्तभ्येति निश्चलं कृत्वा संवृतमुखतां करोति । एतद्द्वयमपि हनुस्तंभे एव ॥ ४६—४७ ॥

**मुहुराक्षिपति क्रुद्धो गात्राण्याक्षेपकोऽनिलः ।**
**पाणिपादं च संशोष्य शिराः सस्नायुकण्डराः ॥४८॥**
**पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः ।**
**दण्डवत्स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥४९॥**
**स्वस्थः स्यादर्दितादीनां मुहुर्वेगागमे गते ।**
**पीड्यते पीडनैस्तैस्तैर्भिषगेतान् विवर्जयेत् ॥ ५० ॥**

मुहुरित्यादि आक्षेपलक्षणम् । पाणिपादं च संशोष्येत्यादि आक्षेपकसंप्राप्तिकथनम् । पाणिपादशिर इत्यादि दंडकलक्षणम् । अर्दितादीनां दंडकांतानां समानं रूपमाह—स्वस्थः स्यादित्यादि । अर्दितहनुस्तंभादिषु मुहुर्मुहुर्वेगित्वं दृश्यते तदर्दितांतर्गतमेव ज्ञेयम् ॥ ४८—५० ॥

**हत्वैकं मारुतः पक्षं दक्षिणं वाममेव वा ।**
**कुर्याच्चेष्टानिवृत्तिं हि रुजं वाक्स्तम्भमेव च ॥ ५१॥**
**गृहीत्वा वा शरीरार्धं शिराः स्नायुं विशोष्य च ।**
**पादं संकोचयत्येकं हस्तं वा तोदशूलनुत् ॥ ५२ ॥**
**एकाङ्गरोगं तं विद्यात्सर्वाङ्गं सर्वदेहजम् ।**
**स्फिक्पूर्वाकटिपृष्ठोरुजानुजङ्घापदं क्रमात् ॥ ५३ ॥**
**गृध्रसीः स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ।**
**वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता ॥ ५४ ॥**
**खल्ली तु पादजङ्घोरुकरमूलावमोटनी ।**
**स्थानानामनुरूपैश्च लिङ्गैः शेषान् विनिर्दिशेत् ॥५५**

हत्वैकमित्यादि पक्षवधलक्षणम् । गृहीत्वार्धमित्यादि एकांगलक्षणम् । सर्वांगं सर्वदेहजमिति सर्वांगलक्षणम् । स्फिक्पूर्वेत्यादि । प्रथमं स्फिक् स्तंभरुक्तोदैर्गृण्हाति । पश्चात् कटिपृष्ठोरुजानुजंघापदं गृण्हाति सा गृध्रसी वातात् । वातकफात् सा पूर्वोक्तलक्षणा सती तंद्रेत्यभिधेया भवति । एवं गृध्रसीद्वयं यत् द्वे गृध्रस्यौ वातात् वातकफाच्चे इत्यनेनोक्ते अपि विवृते भवतः । अनुक्तानां परिग्रहार्थमाह—स्थानानामित्यादि । शेषान् अनुरूपैर्लिंगैः भेदशूलादिभिः निर्दिशेदिति ज्ञेयम् । केचित् स्थानानामनुरूपैरिति पठंति । तत्र नखभेदस्थानानुरूपं च लिंगं नखस्फुटनरूपं भवति । एवं चापरवातविकारेष्वपि महारोगोक्तेषु स्थानानुरूपं लिंगमनुसर्तव्यम् ॥ ५१—५५ ॥

**सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ।**
**वायोर्धातुक्षयात्कोपो मार्गस्यावरणेन च ॥ ५६ ॥**
**वातपित्तकफा देहे सर्वस्रोतोऽनुसारिणः ।**
**वायुरेव हि सूक्ष्मत्वाद्द्वयोस्तत्राप्युदीरणः ॥ ५७ ॥**
**कुपितस्तौ समुद्धूय तत्र तत्राक्षिपन् गदान् ।**
**करोत्यावृतमार्गत्वाद्रसादींश्चोपशोषयन् ॥ ५८ ॥**

वातस्य पित्तादिसंसर्गं ज्ञापयन्नाह—सर्वेष्वित्यादि । पित्ताद्यैरिति पित्तकफरक्तादिभिः । अथावृतस्य वायोः कथं कुपितत्वं भवति भवतु मार्गरोधात् वातकोपः । आवरकेण तु पित्तेन कफेन वातकोपनस्य कथं संभवो भवतीत्याह—वातपित्तेत्यादि । तृतीयमेलके वायोः प्राधान्यमाह—सूक्ष्मत्वादिति । सूक्ष्ममार्गानुसारितया प्रेरकत्वात् । तस्मात् त्रिष्वपि दोषेषु वायुरेव उक्तन्यायेन प्रधानं अतः कुपितः पित्तकफौ समुदीर्य ताभ्यामावृतमार्गोऽपि तत्रतत्र प्रदेशे गदान्करोति । तथा रसादींश्च तत्रतत्र क्षिपन् संशोषयेत् ॥ ॥ ५६—५८ ॥

**लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमः क्लमः ।**
**कट्वम्ललवणोष्णैश्च विदाहः शीतकामिता ॥ ५९ ॥**
**शीतगौरवशूलानि कट्वाद्युपशयोऽधिकम् ।**
**लङ्घनायासरूक्षोष्णकामिता च कफावृते ॥ ६० ॥**
**रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरयोर्भृशम् ।**
**भवेत्सरागः श्वयथुर्जायन्ते मण्डलानि च ॥ ६१ ॥**
**कठिनाश्च विवर्णाश्च पिडकाः श्वयथुस्तथा ।**
**हर्षः पिपीलिकानां च संचार इव मांसगे ॥ ६२ ॥**
**चलः स्निग्धो मृदुः शीतः शोफोऽङ्गेष्वरुचिस्तथा ।**
**आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृतः ॥६३**
**स्पर्शमस्थ्यावृते तूष्णं पीडनं चाभिनन्दति ।**
**संभज्यते सीदति च सूचीभिरिव तुद्यते ॥ ६४ ॥**
**मज्जावृते विनामः स्याज्जृम्भणं परिवेष्टनम् ।**
**शूलं तु पीड्यमाने च पाणिभ्यां लभते सुखम् ॥६५**
**शुक्रावेगोऽतिवेगो वा निष्फलत्वं च शुक्रगे ।**
**भुक्ते कुक्षौ च रुग्जीर्णे शाम्यत्यन्नावृतेऽनिले ॥६६॥**
**मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृतेऽनिले ।**
**वर्चोवृते विबन्धोऽधः स्वे स्थाने परिकृन्तति ॥६७॥**
**व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ।**
**चिरात्पीडितमन्नेन दुःखं शुष्कं शकृत्सृजेत् ॥६८॥**
**श्रोणीवंक्षणपृष्ठेषु रुग्विलोमश्च मारुतः ।**
**अस्वस्थं हृदयं चैव वर्चसात्वावृतेऽनिले ॥ ६९ ॥**
**सन्धिच्युतिर्हनुस्तम्भः कुञ्चनं कुब्जतार्दितम् ।**

पक्षाघातोऽङ्गसंशोषः पङ्गुत्वं खण्डवातता ॥ ७०॥
स्तम्भनं चाढ्यवातश्च रोगा मज्जास्थिगाश्च ये ।
एते स्थानस्य गाम्भीर्याद्यत्नात्सिध्यन्ति वा न वा
नवान्वलवतां त्वेतान्साधयेन्निरुपद्रवान् ।

आवरणकृतं वातकोपं दर्शयित्वा आवरणविशेषकृतं लिंगमाह—पित्तावृतेत्यादि । काद्वाद्युपशय इति। कटूष्णादिकफविपरीतैरुपशयः । अधिकमिति ........................ मांसेति मांसावृते मांसगतस्य रक्तादिगतस्य च वातस्य लक्षणमुच्यते । आढ्यवातेति आयुर्वेदसंज्ञाम् । मेदसा आवृतवातस्य । स्वस्थानेति पक्काशये । परिकृंतति परिकर्तिकां जनयति । साध्यासाध्यविभागा इति सकृच्छ्र इत्यादि । अत्र कुब्जत्वपंगुत्वादयो यद्यपि साक्षान्न प्रपंचितास्तथापि विशेषदोषेणैव तल्लक्षणं ज्ञेयम् । खंडवातता गुल्फवातता किंवा संनिपातवातः। मज्जास्थिगा इति । मज्जास्थिगतवातजन्या इत्यर्थः । स्थानस्य गांभीर्यादिति गंभीरस्थानाश्रितत्वात् । अन्ये तु गांभीर्यत्वमाहुः । वैद्यस्तु नावश्यं सर्वत्र अव्याहतज्ञानो भवति । तेन संशयाभिधानमिति ज्ञेयम्। नवानामप्येषां निरुपद्रवतया साध्यतामाह—नवानित्यादि । उपद्रवांश्चात्र शृंगग्राहितयानुक्तापि सामान्योपलक्षणयुक्ता एव केचित् गदा विज्ञेयाः । किंवा अध्यायशेषे हृद्रोगविद्रधीत्यादिना वक्ष्यमाणा उपद्रवा ज्ञेयाः ॥ ५९—७१ ॥

क्रियामतः सिद्धतमां वातरोगापहां शृणु ॥ ७२ ॥
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत् ।
वायुं सर्पिर्वसातैलमज्जपानैर्नरं ततः ॥ ७३ ॥
स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत्पुनः ।
यूषैर्ग्राम्याम्बुजानूपै रसैर्वा स्नेहसंयुतैः ॥ ७४ ॥
पायसैः कृशरैरम्ललवणैः सानुवासनैः ।
नावनैस्तर्पणैश्चान्नैः सुस्निग्धं स्वेदयेत्ततः ॥ ७५ ॥
स्वभ्यक्तस्नेहसंयुक्तैर्नाडीप्रस्तरसङ्करैः ।
तथान्यैर्विविधैः स्वेदैर्यथायोगमुपाचरेत् ॥ ७६ ॥

अवसरप्राप्तां क्रियामाह—क्रियामत इत्यादि । केवलमित्यादौ । केवलमिति असंसृष्टम् । निरुपस्तंभमित्यनावृतं । कैः स्नेहैः ,कथंचोपाचरेदित्याह—सर्पिर्वसातैलमज्जपानैरिति । स्नेहपानानंतरं कर्तव्यमाह—नरं ततः स्नेहक्लांतमित्यादि । स्नेहपानोद्विग्नं समाश्वास्येति विश्रमयित्वा स्नेहयेदिति तर्पणैः । पानैरित्यत्र यावदित्यादि अनुवर्तते । अन्यैरिति कुटीभेदस्वेदादिभिः । यथायोगमिति सर्वथा स्नेहपूर्वकस्वेदम् ॥ ७२—७६ ॥

स्नेहार्द्रं स्विन्नमङ्गं तु वक्रं स्तब्धमथापि वा ।
शनैर्नमयितुं शक्यं यथेष्टं शुष्कदारुवत् ॥ ७७ ॥
हर्षतोदरुगायासशोथस्तम्भग्रहादयः ।
स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ॥७८॥
स्नेहश्च धातून्संशुष्कान्पुष्णात्याशु प्रयोजितः ।
बलमग्निबलं पुष्टिं प्राणांश्चाप्यभिवर्धयेत् ॥ ७९ ॥
असकृत्तं पुनः स्नेहैः स्वेदैश्चाप्युपपादयेत् ।
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ॥ ८० ॥

स्नेहपूर्वकस्वेदगुणमाह—स्नेहार्द्रं स्विन्नमित्यादि । स्वेदाध्याये स्नेहपूर्वप्रयुक्तेन उक्तोऽपि अयं स्नेहपूर्वकः स्नेहगुणः पुनः प्रकरणागतत्वादुच्यते । आशुयोजितमित्यत्र पुष्णातीत्यनेन संबध्यते । अनिलामयाः न तिष्ठंति । न स्थायिनो भवंतीत्यर्थः ॥ ७७—८० ॥

यद्यनेन सदोषत्वात्कर्मणा न प्रशाम्यति ।
मृदुभिः स्नेहसंयुक्तैरौषधैस्तं विशोधयेत् ॥ ८१ ॥
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ।
पयसैरण्डतैलं वा पिवेद्दोषहरं शिवम् ॥ ८२ ॥
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ।
स्रोतो बद्ध्वानिलं रुन्ध्यात्तस्मात्तमनुलोमयेत् ॥ ८३

यद्यनेन सदोषत्वादित्यादि । अत्र केवलो निरुपस्तंभः वायुः चिकित्स्यत्वेनाधिकृतः । सः दोषमुपपन्नः कर्मणा न प्रशाम्यति तेनोक्तस्य कर्मणोऽपि तत्राशुद्धिः मलजनकत्वात् । वक्ष्यति हि 'स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः, इति किंवा सदोषत्वादित्यनेन उत्तरकालीनं वायोः संशमनमुच्यते । असंसृष्टत्वं च यदुक्तं तदुपक्रमारंभकाले ज्ञेयं । सदोषत्वं च स्नेहप्रयोगेणानुपशये ज्ञेयम् । संशोधनकरणे च हेतुः शमनमेवोत्तरकालीनं कुतो भवतीत्याह—स्निग्धेत्यादि ॥ ८१—८३ ॥

दुर्वलोऽयो(ऽ)विरेच्यः स्यात्तं निरूहैरुपाचरेत् ।
पाचनैर्दीपनीयैर्वा भोज्यैर्वा तद्युतैर्नरम् ॥ ८४ ॥
शुद्धस्य चोत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ।
स्वाद्वम्ललवणस्निग्धैराहारैः सततं पुनः ॥ ८५ ॥
नावनैर्धूमपानैश्च सर्वानेवोपपादयेत् ।
इति सामान्यतः प्रोक्तं वातरोगचिकित्सितम् ।
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिवेन्नरः ॥ ८६ ॥
पाचनैर्दीपनीयैस्तैरम्लैर्वा पाचयेन्मलान् ।
गुदपक्वाशयस्थे तु कर्मोदावर्तनुद्धितम् ॥ ८७ ॥
आमाशयस्थे शुद्धस्य यथा दोषहराः क्रियाः ।
सर्वाङ्गकुपितेऽभ्यङ्गो वस्तयः सानुवासनाः ॥८८॥

दुर्वलो योऽविरेच्येति दुर्वलत्वप्रकर्षेण अविरेच्य इत्यर्थः । अत्यर्थं दुर्वलतायां विधिमाह—पाचनैर्दीपनीयैरिति । यथा पाचनैः तथा नास्याप्यजीर्णे इत्यादौ अपि दुर्वलः पठितः । पाचनं किंचिद्दीपनं यथा पटोलं दीपनं, किंचित् पाचनं यथा त्रिफला । उक्तंहि सुश्रुते—'त्रिफला कफपित्तास्रमेहकुष्ठविनाशिनी । चक्षुष्या दीपनी चेति । तथा पाचनैरित्यस्य दीपनैरिति विशेषणं कृतं । भोज्यैर्वा तद्युतैरिति पाचनदीपन

संयुक्तैर्भोज्यैः । उत्थिते चाग्नौ इति दीप्ते वह्नौ । स्थानविशेषेण क्रियाविशेषमाह—विशेषतस्त्वित्यादिना । अधोनाभेः शस्यते चावपीडकमित्यन्तेन क्षारं यवक्षारं किंवा क्षारमिति ग्रहण्यादिनिर्दिष्टं दीपनक्षारं उदावर्तनुत्कर्मं त्रिमर्मीये तं-तैलशीतज्वरनाशनोक्तमित्यादिनोक्तं ज्ञेयम् ॥ ८४—८८ ॥

स्वेदाभ्यङ्गा निवातानि हृद्यं चान्नं त्वगाश्रिते ।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ ८९
विरेको मांसमेदःस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ ९० ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ।
विबद्धमार्गं दृष्ट्वा वा शुक्रं दद्याद्विरेचनम् ॥ ९१ ॥
विरिक्तप्रतिभुक्तस्य पूर्वोक्तां कारयेत्क्रियाम् ।
गर्भे शुष्के तु वातेन बालानां चापि शुष्यताम् ॥ ९२
सिताकाश्मर्यमधुकैर्हितमुत्थापने पयः ।
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम् ॥ ९३ ॥

स्वेदा इत्यादि त्वग्गतानिलचिकित्सितम् । प्रहर्षो मनोहर्षणम् । विरेचनानंतरं प्रतिभोजिनः विरिक्तप्रतिभुक्तस्य । पूर्वोक्तामिति शुक्रजननहर्षिणीं क्रियां सितादिभिः सिद्धं पयो हितम् । अंशुमती शालपर्णी ॥ ८९—९३ ॥

मत्स्यान्नाभिप्रदेशस्थे सिद्धान्बिल्वशलाटुभिः ।
वायुना वेष्ट्यमाने तु गात्रे स्यादुपनाहनम् ॥ ९४ ॥
तैलं संकुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ।
बाहुशीर्षगते नस्यं पानं चौत्तरभक्तिकम् ॥ ९५ ॥

मत्स्या इति नाभिप्रदेशे कुपिते वाते बिल्वशलाटुभिः सिद्धा देयाः । नाभिप्रदेशे वातस्य कोपोऽनुक्तोऽपि तत्र-भवशूलादिभिरिव ज्ञेयम् । वेष्ट्यमान इति अवमोट्यमाने । उपनाहनं च वातहरद्रव्यैरेव कर्तव्यम् । नस्ये पाने च उक्तमाषसैंधवसाधितमेव तैलं । अत्र च माषस्य क्वाथः सैंधवस्य कल्कः ॥ ९४—९५ ॥

बस्तिकर्म त्वधो नाभेः शस्यते चावपीडकः ।
अर्दिते नावनं मूर्ध्नि तैलं तर्पणमेव च ।
नाडीस्वेदोपनाहाश्चाप्यानूपपिशितैर्हिताः ॥ ९६ ॥
स्वेदनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ।
अन्तरा कण्डराङ्गुल्योः शिरावस्त्यग्निकर्म च ॥९७

अर्दितादिचिकित्सामाह—अर्दितेत्यादि। तर्पणमित्यादिनावन-विशेषम् । अन्तराकण्डराङ्गुल्योरिति कण्डराङ्गुल्योर्मध्ये सिराव्यधनं कर्तव्यम् ॥ ९६—९७ ॥

गृध्रसीषु प्रयुञ्जीत खल्ल्यां तूर्णोपनाहनम् ।
पायसैः कृशरैश्चैव शस्तं तैलघृतान्वितैः ॥ ९८ ॥
व्यात्ताननं हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च ।
प्रदेशिनीभ्यां चोन्नाम्य चिबुकोन्नामनं हितम् ॥ ९९
स्रस्तां सङ्गमयेत्स्थानं स्तब्धां स्विन्नां विनामयेत् ।
प्रत्येकं स्थानदूष्यादिक्रियावैशेष्यमाचरेत् ॥१००॥

गृध्रसीष्विति बहुवचनं व्याधिभेदतया गदितं । व्यात्ताननमिति विवृतास्यं । प्रदेशिनी अङ्गुष्ठानन्तराङ्गुली । अनुक्तविशेष-चिकित्साग्रहणार्थमाह—प्रत्येकमित्यादि । स्थानं पक्वाशयादि दूष्यं रसरक्तादि । आदिग्रहणात् आवरणग्रहणं । स्थानदूष्या-पेक्षः क्रियाविशेषस्तु कोष्ठस्य इत्यनेनैवोक्तः ॥ ९८—१०० ॥

सर्पिस्तैलवसामज्जसेकाभ्यञ्जनबस्तयः ।
स्निग्धाः स्वेदा निवातं च स्थानं प्रावरणानि च १०१
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम् ॥ १०२ ॥

सर्वविकारशमनं चिकित्सितमाह—सर्पिस्तैलमित्यादि ॥ ॥ १०१—१०२ ॥

बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।
अजशीर्षाम्बुजानूपमांसादपिशितैः पृथक् ॥१०३॥
साधयित्वा रसान्स्निग्धान्दध्यम्लव्योषसंस्कृतान् ।
भोजयेद्वातरोगार्तं तैर्व्यक्तलवणैर्नरम् ॥ १०४ ॥
एतैरेवोपनाहांश्च पिशितैः संप्रकल्पयेत् ।
घृततैलयुतैः साम्लैः क्षुण्णस्विन्नैरनस्थिभिः ॥१०५
पत्रोत्क्वाथपयस्तैलद्रोण्यः स्युरवगाहने ।
स्वभ्यक्तानां प्रशस्यन्ते सेकाश्चानिलरोगिणाम् १०६
आनूपौदकमांसानि दशमूलं शतावरीम् ।
कुलत्थान्बदरान्माषांस्तिलान्रास्नां यवान्बलाम् ।
वसादध्यारनालाम्लैः सह कुम्भ्यां विपाचयेत् ।
नाडीस्वेदं प्रयुञ्जीत पिष्टैश्चैवोपनाहनम् ।
तैश्च सिद्धं घृतं तैलमभ्यङ्गः पानमेव च ॥ १०८ ॥
मुस्तं किण्वं तिलाः कुष्ठं सुराह्वं लवणं नतम् ।
दधि क्षीरचतुःस्नेहैः सिद्धं स्यादुपनाहनम् ॥ १०९ ॥
उत्कारिकावेसवारक्षीरमाषतिलौदनैः ।
एरण्डबीजगोधूमयवकोलस्थिरादिभिः ॥ ११० ॥
सस्नेहैः सरुजं गात्रमालिप्य बहुलं भिषक् ।
एरण्डपत्रैः प्रच्छाद्य रात्रौ कल्ये विमोक्षयेत् ॥१११
क्षीराम्बुना ततः सिक्तं पुनश्चैवोपनाहितम् ।
मुञ्चेद्रात्रौ दिवाबद्धं चर्मभिश्च सलोमभिः ॥ ११२॥

बलाया इत्यादौ बलापृथक्शब्दः । बलादीनां रसाः साधनद्रव्याणि । अजशीर्षादयश्चत्वारः साध्याः । एवं द्वादश रसा भवंति । कल्येति प्रभाते ॥ १०३—११२ ॥

फलानां तैलयोनीनामम्लपिष्टान्सुशीतलान् ।
प्रदेहानुपनाहांश्च गन्धैर्वातहरैरपि ।
पायसैः कृशरैश्चैव कारयेत्स्नेहसंयुतैः ॥ ११३ ॥
रूक्षशुद्धानिलार्तानामतः स्नेहान्प्रवक्ष्यते ।

विविधान्विविधव्याधिप्रशमायामृतोपमान् ॥११४॥
द्रोणेऽम्भसः पचेद्भागान्दशमूलाच्चतुष्पलान्।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥११५
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः।
तथा खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः॥ ११६॥
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत्।
निरत्ययः प्रयोक्तव्यः पानाभ्यञ्जनवस्तिषु ॥ ११७॥
चित्रकं नागरं रास्नां पौष्करं पिप्पलीं शटीम्।
पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परम् ॥ ११८ ॥
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत्।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं मूर्धगतेऽनिले॥ ११९
ग्राम्यानूपौदकानां तु भित्त्वास्थीनि पचेज्जले।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥ १२०॥
जीवकर्षभकास्फोता विदारीकपिकच्छुभिः।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥ १२१ ॥
तत्सिद्धं नावनाभ्यङ्गात्तथा पानानुवासनात्।
शिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥१२२॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये।
बलपुष्टिकरं तेषामेतत्स्यादमृतोपमम् ॥ १२३ ॥

फलानां तैलयोनीनामिति तिलातस्यादीनां। प्रदेहानुपनाहांश्चेत्यत्र प्रदेहः उपनाहापेक्षया तनुर्लेपः। गन्धैरित्यगुर्वाद्यैः शुद्धेत्यादौ शुद्धानिलार्ताः केवलवातपीडिताः। घृतमण्डः घृतस्योपरितनो भागः। शुक्तिरर्धपलं ॥ ११३—१२३ ॥

तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजाः।
प्रत्यग्रा विधिनानेन नस्यपानेषु शस्यते ॥ १२४ ॥
प्रस्थः स्यात्त्रिफलायास्तु कुलत्थकुडवद्वयम्।
कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलं भवेत् १२५
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम्।
जलद्रोणे पचेत्पादशेषे प्रस्थोन्मितं पृथक् ॥ १२६॥
सुरारनालदध्यम्लसौवीरकतुषोदकम्।
कोलदाडिमवृक्षाम्लरसं तैलं वसां घृतम् ॥ १२७॥
मज्जानं च पयश्चैव जीवनीयपलानि षट्।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत् ॥१२८
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तदभ्यङ्गे प्रयोजयेत् ॥ १२९ ॥
निर्गुण्ड्या मूलपत्राभ्यां गृहीत्वा स्वरसं ततः।
तेन सिद्धं समं तैलं नाडीकुष्ठानिलार्तिषु ॥ १३० ॥
हितं पामापचीनां च पानाभ्यञ्जनपूरणम्।
कार्पासास्थिकुलत्थानां रसे सिद्धं च वातनुत् १३१

तद्वत्सिद्धेति बलाबिल्वशृतक्षीरसिद्धा। चुलुकी शिशुमारः। प्रत्यग्रेति नस्यपानेष्विति नस्येषु पानेषु योजयेत् ॥ कृष्णगन्धात्वग् शोभांजनत्वक्। महास्नेहमिति चतुःस्नेहः। तेन सिद्धं तैलमित्यत्र सममिति निर्गुण्डीरससमं। नाडीव्रणः अपची च हन्वस्थिकक्षादिदेशभवा ॥ १२४—१३१ ॥

मूलकस्वरसे क्षीरसमे स्थाप्यं त्र्यहं दधि।
तस्याम्लस्य त्रिभिः प्रस्थैस्तैलप्रस्थं विपाचयेत्१३२
यष्ट्याह्वशर्करारास्नालवणार्द्रकनागरैः।
सुपिष्टैः पालिकैः पानात्तदभ्यङ्गाच्च वातनुत् ॥ १३३

मूलकस्वरसेत्यादौ मूलकस्वरसे समक्षीरे दधि स्थाप्यं। तस्याम्लस्येति मूलरसाद्यम्लतां गतस्य। अत्रच त्रिभिः प्रस्थैरिति वचनात् मूलकरसादीनां प्रत्येकं प्रस्थमानत्वं। उक्तंहि जतूकर्णे 'विपचेत् दधिमूलकरसपयसा' इत्यादि ॥ ॥ १३२—१३३ ॥

पञ्चमूलकषायेण पिण्याकं बहुवार्षिकम्।
पक्त्वा तस्य रसं पूत्वा तैलप्रस्थं विपाचयेत् १३४
पयसाष्टगुणेनैतत्सर्ववातविकारनुत्।
संसृष्टे श्लेष्मणा चैतद्वाते शस्तं विशेषतः॥ १३५॥
यवकोलकुलत्थानां श्रेयस्याः शुष्कमूलकात्।
बिल्वाच्चाञ्जलिमेकैकं द्रवैरम्लैर्विपाचयेत् ॥ १३६॥
तेन तैलं कषायेण फलाम्लैः कटुभिस्तथा।
पिष्टैः सिद्धं महावातैरार्तः शीते प्रयोजयेत् ॥१३७
सर्ववातविकाराणां तैलान्यन्यान्यतः शृणु।
चतुष्प्रयोगाण्यायुष्यबलवर्णकराणि च ॥ १३८ ॥
रजःशुक्रप्रदोषघ्नान्यपत्यजननानि च।
निरत्ययानि सिद्धानि सर्वदोषहराणि च ॥ १३९ ॥
सहाचरतुलायाश्च रसे तैलाढकं पचेत्।
मूलकल्काद्दशपलं पक्त्वा क्षीरे चतुर्गुणम् ॥१४०॥
सिद्धेऽस्मिञ्छर्कराचूर्णादष्टादशपलं भिषक्।
विनीय दारुणेष्वेतद्वातव्याधिषु योजयेत् ॥ १४१ ॥
श्वदंष्ट्रास्वरसप्रस्थौ द्वौ समौ पयसा सह।
षट्पलं शृङ्गवेरस्य गुडस्याष्टपलं तथा ॥ १४२ ॥
तैलप्रस्थं विपक्वं तैर्दद्यात्सर्वानिलार्तिषु।
जीर्णे तैले च दुग्धेन पेयाकल्पः प्रशस्यते ॥ १४३ ॥
बलाशतं गुडूच्याश्च पादं रास्नाष्टभागिकम्।
जलाढकशते पक्त्वा दशभागस्थिते रसे ॥ १४४ ॥
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः।
पचेत्साजपयोऽर्धांशैः कल्कैरेभिः पलोन्मितैः १४५
शटीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः।
पद्मकातिविषामुस्तसूर्पपर्णीहरेणुभिः ॥ १४६ ॥
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः।
पलाशरसकस्तूरीनलिकाजातिकोषकैः ॥ १४७ ॥
स्पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः।
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः ॥ १४८ ॥
लवङ्गनखकक्कोलकुष्ठमांसीप्रियङ्गुभिः।
स्थौणेयतगरध्यामवचामदनपल्लवैः ॥ १४९ ॥

सनागकेशरैः सिद्धे क्षिपेच्चात्रावतारिते ।
पत्रकल्कं ततः पूतं विधिना तत्प्रयोजयेत् ॥ १५०॥
श्वासं कासं ज्वरं हिक्कां छर्दिं गुल्मान्क्षतं क्षयम् ।
प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत् ॥ १५१ ॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ।
अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम् ॥१५२॥

इति बलातैलम् ।

पंचमूलकषायेत्यादौ पञ्चमूलीकषायं तथा पिण्याकक्वथितं जलं च पृथक्देयमिति केचिद्वदंति । पञ्चमूलीकषायेणैव जलस्य पूर्णमानत्वात् शास्त्रपरिभाषया पत्रकल्को देय इत्युच्यते । गंधशास्त्रे च चूर्णखरसपुष्पाणां सिद्धयः शीते अवतारिते दीयन्ते गंधवृद्ध्यर्थम् । पत्रकल्कमिति तेन कर्पूरादिपत्रकल्कः अवतारितेऽपि देयः ॥ १३४—१५२ ॥

तुलाः पञ्चाऽमृतायास्तु द्रोणेष्वष्टस्वपां पचेत् ।
पादशेषे समं क्षीरं तैलस्य द्व्याढकं पचेत् ॥ १५३॥
एलामांसीनतोशीरशारिवाकुष्ठचन्दनैः ।
बलातामलकीमेदाशतपुष्पर्द्धिजीवकैः ॥ १५४ ॥
काकोलीक्षीरकाकोलीश्रावण्यतिबलानखैः ।
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः ॥१५५॥
शतावरीमहामेदाकर्कटाख्याहरेणुभिः ।
वचागोक्षुरकैरण्डरास्नाकालासहाचरैः ॥ १५६ ॥
चोराशल्लकिमुस्तत्वक्पत्रर्षभकवालकैः ।
महैलाकुङ्कुमस्पृक्कात्रिदशाह्वैश्च कार्षिकैः ॥ १५७ ॥
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च ।
कल्कैस्तत्क्षीणवीर्याग्निबलसंमूढचेतसः ॥ १५८ ॥
उन्मादार्त्यपस्मारैरार्तांश्च प्रकृतिं नयेत् ।
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम् ।
कृष्णात्रेयेण गुरुणा भाषितं वैद्यपूजितम् ॥ १५९ ॥

इत्यमृताद्यं तैलम् ।

अमृतायेत्यादौ श्रावणी बृहन्मुंडी, काला सारिवा, त्रिदशाह्वः देवदारु ॥ १५३—१५९ ॥

रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत् ।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्तिनुत् ॥ १६०॥

इति रास्नातैलम् ।

रास्नासहस्रनिर्यूहे । हैमवतैरिति हिमालयभूतैः । एलाद्यैरिति अमृताद्यैः एलामांसीनतेत्यादिनोक्तैः ॥ १६० ॥

एष कल्पस्तु बलयोः प्रसारण्यश्वगन्धयोः
कल्पोऽयमष्टगन्धायां प्रसारण्यां बलाद्वये ।
क्काथकल्कपयोभिर्वा बलादीनां पचेत्पृथक् ॥१६१॥
इति बला-नागबला-प्रसारण्यश्वगन्धातैलानि
मूलकस्वरसं क्षीरं तैलं दध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत्कल्कैर्बलाचित्रकसैन्धवैः ॥ १६२ ॥
पिप्पल्यतिविषारास्नाचविकागुरुशिग्रुकैः ।
भल्लातकवचाकुष्ठश्वदंष्ट्राविश्वभेषजैः ॥ १६३ ॥
पुष्कराह्वशटीबिल्वशताह्वानतदारुभिः ।
तत्सिद्धं पीतमत्युग्रान्हन्ति वातात्मकान्गदान् १६४

इति मूलकाद्यतैलम् ।

एष कल्प इत्यनंतरोक्तेषु बलादिष्वपि वक्तव्यः ॥ १६१—१६४ ॥

वृषमूलगुडूच्योश्च द्विशतस्य शतस्य च ।
अश्वगन्धाचित्रकयोः क्काथे तैलाढकं पचेत् ॥१६५॥
सक्षीरं वायुना भग्ने दद्याज्जर्जरिते तथा ।
प्राक् तैलाच्चोपसिद्धं च स्यादेतद्द्विगुणोत्तरम् १६६

इति वृषमूलादिसकल्कवृषमूलादि च तैलम् ।

वृषमूलेत्यादौ अश्वगन्धाचित्रकाभ्यां मिलिताभ्यां क्काथे प्राक् तैलात् चोपसिद्धमिति मूलकस्वरसेत्याद्युक्ततैलेन समं सिद्धं । द्विगुणोत्तरमिति पाठे वृषमूलादिक्काथसिद्धात्तैलात् द्विगुणं श्रेष्ठम् ॥ १६५ ॥ १६६ ॥

रास्नाशिरीषयष्ट्याह्वशुण्ठीसहचरामृताः ।
स्योनाकदारुसंपाका हयगन्धात्रिकण्टकाः ॥१६७॥
एषां दशपलान्भागान्कषायमुपकल्पयेत् ।
ततस्तेन कषायेण सर्वगन्धैश्च कार्षिकैः ॥ १६८ ॥
दध्यारनालमाषाम्बुमूलकेक्षुरसैः शुभैः ।
पृथक् प्रस्थोन्मितैः सार्धं तैलप्रस्थं विपाचयेत् ॥
प्लीहमूत्रग्रहश्वासकासमारुतरोगनुत् ।
एतन्मूलकतैलाग्र्यं वर्णायुर्बलवर्धनम् ॥ १७० ॥

इति रास्नातैलम् ।

यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः ।
रसेन मूलकानां च तैलं दधिपयोऽन्वितम् ॥ १७१
साधयित्वा भिषग्दद्यात्सर्ववातामयापहम् ।
लशुनस्वरसे सिद्धं तैलमेभिश्च वातनुत् ॥ १७२ ॥
तैलान्येतान्यृतुस्नातामङ्गनां पाययेत च ।
पीत्वान्यतममेषां हि वन्ध्यापि जनयेत्सुतम् ॥१७३
यच्च शीतज्वरे तैलमगुर्वाद्यमुदाहृतम् ।
अनेकशतशस्तच्च सिद्धं स्याद्वातरोगनुत् ॥ १७४ ॥
वक्ष्यन्ते यानि तैलानि वातशोणितकेऽपि च ।
"तानि चानिलशान्त्यर्थं सिद्धिकामः प्रयोजयेत् ॥
नास्ति तैलात्परं किंचिदौषधं मारुतापहम् ।
व्यवाय्युष्णगुरुस्नेहात्संस्काराद्बलवत्तरम् ॥ १७६
गणैर्वातहरैस्तस्माच्छतशोऽथ सहस्रशः ।
सिद्धं क्षिप्रतरं हन्ति सूक्ष्ममार्गस्थितान्गदान् १७७

सर्वगन्धैरिति बलातैलोक्तैः । सर्वगन्धैः सार्धं सहितं

मूलकतैलाम्यमिति संज्ञया, अथवा रास्नादीनां मूलेनैव क्वाथसाधनेन साधितं । लशुनस्वरसेत्यादौ एभिश्चेति यवादिक्वाथैः अनन्तरोक्तैः अनेकशः शतशश्च तेनैव विधानेन साधितं ॥ १६७—१७७ ॥

क्रिया साधारणी सर्वा संसृष्टे चापि शस्यते ।
वातपित्तादिभिः स्रोतःस्वावृतेषु विशेषतः ॥ १७८
पित्तावृते विशेषेण शीतामुष्णां तथा क्रियाम् ।
व्यत्यासात्कारयेत्सर्पिर्जीवनीयं च शस्यते ॥१७९॥
धन्वमांसं यवाः शालिर्यापनाः क्षीरवस्तयः ।
विरेकः क्षीरपानं च पञ्चमूलीबलाश्रितम् ॥ १८० ॥
मधुयष्टिबलातैलघृतक्षीरैश्च सेचनम् ।
पञ्चमूलकषायेण कुर्याद्वा शीतवारिणा ॥ १८१ ॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥१८२॥
जीर्णं सर्पिस्तथा तैलं तिलसर्षपजं हितम् ।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥१८३

संप्रतिदोषांतरादिसंसृष्टवातचिकित्सामाह—क्रियासाधारणीत्यादि । साधारणीति या वाते सा ससंर्गिणी च पित्तादौ समाना । न केवलं संसृष्टवायौ साधारणी किंतु वातपित्तादिभिरावृतेपि साधारणी कर्तव्या । केचित्तु वातपित्तादिभिरिति पठंति । पाठः सुगमः । विशिष्टसूत्रितां क्रियामाह—पित्तावृतेत्यादि । व्यत्यासादिति परिवर्तनेन शीतां कृत्वोष्णां उष्णां च कृत्वा शीतां कुर्यादित्यर्थः । यापनाः वस्तयः सिद्धौ वक्ष्यमाणाः पित्तमादौ विनिर्जयेदिति वचनेन कफापेक्षया पित्तस्याशुकारितया पित्तजयमेवोपदिशति ॥ ॥ १७८—१८३ ॥

आमाशयगतं मत्वा कफं वमनमाचरेत् ।
पक्वाशये विरेकं तु पित्ते सर्वत्रगे तथा ॥ १८४ ॥
स्वेदैर्विष्यन्दितः श्लेष्मा यदा पक्वाशये स्थितः ।
पित्तं वा दर्शयेल्लिङ्गं वस्तिभिस्तौ विनिर्हरेत् ॥१८५॥
श्लेष्मणाऽनुगतं वातमुष्णैर्गोमूत्रसंयुतैः ।
निरूहैः पित्तसंसृष्टं निर्हरेत्क्षीरसंयुतैः ॥ १८६ ॥
मधुरौषधसिद्धैश्च तैलैस्तमनुवासयेत् ।
शिरोगते तु सकफे धूमनस्यादि कारयेत् ॥ १८७॥
हृते पित्ते कफे यः स्यादुरःस्रोतोऽनुगोऽनिलः ।
स शेषः स्यात्क्रिया तत्र कार्या केवलवातिकी ॥
शोणितेनावृते कुर्याद्वातशोणितकीं क्रियाम् ।
प्रमेहवातमेदोघ्नीमामवाते प्रयोजयेत् ॥ १८९ ॥
स्वेदाभ्यङ्गा रसाः क्षीरं स्नेहा मांसावृते मताः ।
महास्नेहोऽस्थिमज्जस्थे पूर्ववद्रेतसावृते ॥ १९० ॥
अन्नावृते तु वमनं पाचनं दीपनं लघु ।
मूत्रलानि तु मूत्रस्थे स्वेदाः सोत्तरवस्तयः ॥१९१
एरण्डतैलं वर्चस्थे स्निग्धोदावर्तवत्क्रिया ।
स्वस्थानस्थो बली दोषः प्रोक्तं स्वैरौषधैर्जयेत् १९२
वमनैर्वा विरेकैर्वा वस्तिभिः शमनेन वा ।
इत्युक्तमावृते वाते पित्तादिभिर्यथायथम् ॥१९३॥

आमाशयगतं मत्वा कफमिति वातानुबंधि कफस्यैव चिकित्सा—पक्वाशये विरेकं त्वित्यत्र कफ इत्यनुवर्तते । सर्वत्रग इति अन्यस्थानगतेऽपि पित्ते यद्यपि दोषांतरस्थाने गते तद्दोषप्रधानमेव कर्म वमनं वस्तिर्वोक्तं तथाप्यनेन विरेचनमिति यौगिकं तत्र दर्शयति । सकफेति सकफे वाते स्रोतोष्वगिति केचित् पठंति । तथाच सूक्ष्मस्रोतोऽनुगत इति केचित्पठंति । सूक्ष्मस्रोतोनुगत इत्यर्थः । प्रमेहवातमेदोघ्नीति प्रमेहघ्नीं वातघ्नीं मेदोघ्नींच । महास्नेह इति चतुःस्नेहः । अत्रचोक्तं पूर्ववद्रेतसावृतेति शुक्रस्थे वाते क्रिया पूर्वमुक्ता सा रेतसावृतेऽपि वाते कार्या । उल्लेख इति उल्लेखनं वमनम् । मूत्रलानीति मूत्रविरेचनिकानि । स्वस्थानेत्यादि स्वस्थानस्थो यस्मात्स्थानोपबृंहणाद्बली दोषो भवति तस्मात् स्वैरौषधैर्जयेत् । कतमैः स्वैरौषधैरित्याह—वमनैरित्यादि । शमनेनेति कफादिशमनेनैव शमनं च शोधनानन्तरं शोधनार्हे वा ज्ञेयम् ॥ १८४—१९३ ॥

मारुतानां हि पञ्चानामन्योन्यावरणं शृणु ।
लिङ्गं व्याससमासाभ्यामुच्यमानं मयाऽनघ॥१९४॥
प्राणो वृणोत्युदानादीन्प्राणं वृण्वन्ति तेऽपि च ।
उदानाद्यास्तथान्योऽन्यं सर्व एव यथाक्रमम् १९५
विंशतिर्वरणान्येतान्युल्वणानां परस्परम् ।
मारुतानां हि पञ्चानां तानि सम्यक् प्रतर्कयेत् १९६
सर्वेन्द्रियाणां शून्यत्वं ज्ञात्वा स्मृतिबलक्षयम् ।
व्याने प्राणावृते लिङ्गं कर्म तत्रोर्ध्वजत्रुकम् ॥१९७॥
स्वेदोऽत्यर्थं लोमहर्षस्त्वग्दोषः सुप्तगात्रता ।
प्राणे व्यानावृते तत्र स्नेहयुक्तं विरेचनम् ॥ १९८ ॥
प्राणावृते समाने स्युर्जडगद्गदमूकताः ।
चतुष्प्रयोगाः शस्यन्ते स्नेहास्तत्र सयापनाः ॥१९९॥
समानेनावृतेऽपाने ग्रहणीपार्श्ववेदना ।
शूले चामाशये तत्र दीपनं सर्पिरिष्यते ॥ २०० ॥

मारुतानां अन्योन्यावरणमाह—मारुतानामित्यादि । यद्यपि चेह वायोरमूर्तत्वं वातकलाकलीये प्रोक्तं तथापीदममूर्तत्वमकठिनवाचकं नत्ववयवप्रतिषेधकम् । तेन वायोः वायुंप्रति आवरणमुपपन्नमेव । दृष्टा च वायुना वाय्वंतरेण अपघातेन वातकुण्डलिका वहिरपनीतेन तेन वातादीनां परस्परमावरणमुपपन्नमेव । प्राणो वृणोत्यपानादीनित्यादिना विंशत्यावरणान्युक्तानि । प्राणोवृणोत्युदानादीनित्यनेन चत्वार्यावरणाणि प्राणं वृण्वंति चेत्यनेन चत्वारि । उदानाद्यास्तथान्योन्यमित्यनेन द्वादशावरणान्युच्यंते । तत्रोदानेन व्याना-

धीनां त्रयाणामावरणमिति त्रीणि तथा व्यानादेश्चोदानावरणे त्रीणि तथा व्यानेन समानापानाऽवरणौ द्वौ परिशिष्टयोश्चान्योन्यावरणे द्वे एवं द्वादशावरणानि पूर्वाष्टकयुक्तानि विंशतिर्भवंति। उल्वणानामिति वृद्धानां किंचोल्वणानामिति आविष्कृततमानां मिलितानामेतेषां द्वित्र्यादिसंसर्गात् बहुविधमावरणं भवतीति दर्शयति ॥ १९४-२०० ॥

**शिरोग्रहः प्रतिश्यायो निःश्वासोच्छ्वाससंग्रहः।**
**हृद्रोगो मुखशोषश्चाप्युदाने प्राणसंवृते ॥ २०१ ॥**
**ततोर्ध्वभागिकं कर्म कार्यमाश्वासनं तथा।**
**कर्मौजोबलवर्णानां नाशो मृत्युरथापि वा ॥२०२॥**
**उदानेनावृते प्राणे तं शनैः शीतवारिणा।**
**सिञ्चेदाश्वासयेच्चैव सुखं चैवोपपादयेत् ॥ २०३ ॥**

शिरोग्रह इत्यादिना अष्टावावरणानि प्रायो भावीनि। अनुक्तशेषोपग्रहणार्थमाह—ऊर्ध्वभागिकं कर्मेति। उपर्युक्तस्नेहपानस्यादिकं। आश्वासयेदिति स्थिरीकारयेत् ॥ २०१—२०३ ॥

**ऊर्ध्वगेनावृतेऽपाने छर्दिश्वासादयो गदाः।**
**स्युर्वाते तत्र वस्त्यादिभोज्यं चैवानुलोमनम् २०४**
**मोहोऽल्पोऽग्निरतीसार ऊर्ध्वगेऽपानसंवृते।**
**वाते स्याद्वमनं तत्र दीपनं ग्राहि चाशनम् ॥२०५॥**
**वस्त्याधमानमुदावर्तगुल्मार्तिपरिकर्तिकाः।**
**लिङ्गं व्यानावृतेऽपाने तं स्निग्धैरनुलोमयेत् ॥२०६॥**
**अपानेनावृतेऽव्याने भवेद्विण्मूत्ररेतसाम्।**
**अतिप्रवृत्तिस्तत्रापि सर्वं संग्रहणं मतम् ॥ २०७ ॥**
**मूर्च्छा तन्द्रा प्रलापोऽङ्गसादोऽग्न्योजोबलक्षयः।**
**समानेनावृते व्याने व्यायामो लघुभोजनम् ॥ २०८**
**स्तब्धताल्पाग्नितास्वेदश्चेष्टाहानिर्निमीलनम्।**
**उदानेनावृते व्याने तत्र पथ्यं मितं लघु ॥ २०९ ॥**
**पञ्चान्योन्यावृतानेवं वातान्बुध्येत लक्षणैः।**
**एषां स्वकर्मणां हानिर्वृद्धिर्वावरणे मता ॥ २१० ॥**
**यथास्थूलं समुद्दिष्टमेतदावरणे पृथक्।**
**सलिङ्गभेषजं सम्यक् शृणु त्वं बुद्धिवृद्धये ॥२११॥**

ऊर्ध्वगेनावृते उदानेन अनुक्तावरणरूपमाह—एषां स्वकर्मणामित्यादि अत्र। आवार्याणां बलीयावरणात् स्वकर्महानिर्भवति आवरकस्यतु स्वकर्मवृद्धिर्भवति यदावरणेन आवार्यः प्रकुपितो न भवति तदा स्वकर्मणां वृद्धिर्भवतीति व्यवस्था। अन्ये तु आवरणीयस्य स्वकर्मवृद्धिर्भवतीति व्यवस्थामाहुः ॥ २०४—२११ ॥

**स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम्।**
**द्वादशावरणान्यन्यान्यभिलक्ष्य भिषग्जितम् ॥ २१२**
**कुर्यादभ्यञ्जनस्नेहपानवस्त्यादि सर्वशः।**
**क्रममुष्णमनुष्णं वा व्यत्यासादवचारयेत् ॥२१३॥**

अनुक्तावरणलक्षणज्ञानोपायमाह—स्थानान्यवेक्ष्येति। कर्मवृद्ध्या व्याख्यातं पूर्ववत्। स्थानान्यवेक्ष्येत्यनेन वातानां स्थानगतविकारेण च वातविकृतिर्ज्ञातव्येति दर्शयति। उष्णं क्रममनुष्णं चेत्यत्र उष्ण एव क्रमो वाते युज्यते तथापि स्थानापेक्षया रक्तादिदूष्यं क्रमविपर्ययस्य कारणं ज्ञेयम् ॥ २१२—२१३ ॥

**उदाने योजयेदूर्ध्वमपानं चानुलोमयेत्।**
**समानं शमयेच्चैव त्रिधा व्यानं तु योजयेत् ॥२१४॥**
**प्राणो रक्ष्यश्चतुर्भ्योऽपि स्थाने ह्यस्य स्थितिर्ध्रुवा।**
**स्वं स्थानं गमयेदेवं वृतानेतान् विमार्गगान् २१५॥**

विकृतवातानां प्रकृतिस्थापनमाह—उदानं योजयेदूर्ध्वमित्यादि। एतच्च स्वमार्गयोजनं वातानां यथोक्तवमनादिक्रियायोगविधानेन कर्तव्यम्। समानं शमयेदिति देहमध्यं कुर्यादित्यर्थः। त्रिधा व्यानं तु योजयेदिति ऊर्ध्वमधो मध्ये त्रिधा योजयेत्। प्राणो रक्ष्यः। स्थाने एव पालनीयः। चतुर्भ्यो इत्यनेन इतरेभ्यः कुतोऽयं विशेषरक्षणीय इत्याह—स्थाने ह्यस्य स्थितिर्ध्रुवेति। अस्य प्राणस्य स्थाने चेति सम्यगवस्थाने सति स्थितिर्जीवनरूपा ध्रुवा ॥ ॥ २१४—२१५ ॥

**मूर्च्छा दाहो भ्रमः शूलं विदाहः शीतकामिता।**
**छर्दनं च विदग्धस्य प्राणे पित्तसमावृते ॥ २१६ ॥**
**ष्ठीवनं क्षवथूद्गारनिःश्वासोच्छ्वाससंग्रहः।**
**प्राणे कफावृते रूपाण्यरुचिश्छर्दिरेव च ॥ २१७ ॥**
**मूर्च्छाद्यानि च रूपाणि दाहो नाभ्युरसोः क्लमः।**
**ओजोभ्रंशश्च सादश्चाप्युदाने पित्तसंवृते ॥ २१८ ॥**
**आवृते श्लेष्मणोदाने वैवर्ण्यं वाक्स्वरग्रहः।**
**दौर्बल्यं गुरुगात्रत्वमरुचिश्चोपजायते ॥ २१९ ॥**
**अतिस्वेदस्तृषा दाहो मूर्च्छा चारुचिरेव च।**
**पित्तावृते समाने स्यादुपतापास्तथोष्मणः ॥२२०॥**
**अस्वेदो वह्निमान्द्यं च लोमहर्षस्तथैव च।**
**कफावृते समाने स्याद्गात्राणां चातिशीतता २२१**
**व्याने पित्तावृते तु स्याद्दाहः सर्वाङ्गगः क्लमः।**
**गात्रविक्षेपसङ्गश्च ससंतापश्च सवेदनः ॥ २२२ ॥**
**गुरुता सर्वगात्राणां सर्वसन्ध्यस्थिजा रुजः।**
**व्याने कफावृते लिङ्गं गतिसङ्गस्तथा रुजः ॥२२३॥**
**हारिद्रमूत्रवर्चस्त्वं तापश्च गुदमेढ्रयोः।**
**लिङ्गं पित्तावृतेऽपाने रजसः संप्रवर्तनम् ॥ २२४ ॥**
**भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम्।**
**श्लेष्मणा संवृतेऽपाने कफमेहस्य चागमः ॥ २२५॥**

प्राणादीनां पित्तेन कफेन तथा पित्तकफाभ्यां चावरणलक्षणान्याह—मूर्च्छा दाहो भ्रम इत्यादि। मूर्च्छाद्यानि दाह इत्यादिना प्रागुक्तानि श्लेष्माणं शोषयेयुः। अत्र

पित्तेनावृते समाने अभ्युत्तेजनाभावादुष्णोपघातो ज्ञेयः । गात्रविक्षेपसंगश्च गात्रविक्षेपणोपरमः ॥ २१६–२२५ ॥

लक्षणनां तु मिश्रत्वं पित्तस्य च कफस्य च ।
उपलक्ष्य भिषग्विद्वान् मिश्रमावरणं वदेत् ॥ २२६
यद्यस्य वायोर्निर्दिष्टं स्थानं तत्रेतरौ स्मृतौ ।
दोषौ बहुविधान्व्याधीन्दर्शयेतां यथा निजान् २२७
आवृतं श्लेष्मपित्ताभ्यां प्राणं चोदानमेव च ।
गरीयस्त्वेन पश्यन्ति भिषजः शास्त्रचक्षुषः ॥ २२८
विशेषाज्जीवितं प्राणे उदाने संश्रितं बलम् ।
तत्तयोः पीडनाद्धानिरायुषश्च बलस्य च ॥२२९॥
सर्वेऽप्येते परिज्ञेयाः परिसंवत्सरास्तथा ।
उपेक्षणादसाध्याः स्युरथवा दुरुपक्रमाः ॥२३० ॥
हृद्रोगो विद्रधिः प्लीहा गुल्मातीसार एव च ।
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥ २३१ ॥
तस्मादावरणं वैद्यः पवनस्योपलक्षयेत् ।
पञ्चात्मकस्य वातेन पित्तेन श्लेष्मणापि वा ॥२३२॥

मिश्रमावरणमिति कफपित्तमावरणं यथा निजानिति यथास्वीयान्। गरीयस्त्वेनेत्यधिकत्वेन। एतत् गरीयस्त्वे हेतुमाह–विशेषादित्यादि । संश्रितमित्यधीनं परिज्ञेया इति याथातथ्येन ज्ञातव्याः। संम्याज्ञाता अपि उपेक्षणात् याथातथ्येन ज्ञातापि परिसंवत्सरास्तथेति । परिसंवत्सरादुपेक्षणीयाः स्युरिति योज्यम्। हृद्रोगेत्यादिना उपद्रवानाह ॥ २२६—२३२ ॥

भिषग्जितैरतः सम्यगुपलक्ष्य समाचरेत् ।
अनभिष्यन्दिभिः स्निग्धैः स्रोतसां शुद्धिकारिभिः॥
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ।
सर्वस्थानावृतेऽप्याशु तत्कार्यं मारुते शुभम् २३४
यापना वस्तयः प्रायो मधुराः सानुवासनाः ।
प्रसमीक्ष्य बलाधिक्यं मृदु वा स्रंसनं हितम् २३५
रसायनानां सर्वेषामुपयोगः प्रशस्यते ।
शैलस्य जतुनोऽत्यर्थं पयसा गुग्गुलोस्तथा ॥ २३६

पञ्चात्मकस्येति प्राणादिभेदेन पंचस्वरूपस्य प्रसमीक्ष्येत्यादौ बलाधिक्ये सति स्रंसनं मृदु कर्तव्यमित्यभिप्रायः । अत्यर्थं प्रशस्यत इति संबंधः ॥ २३३—२३६ ॥

लेहं वा भार्गवप्रोक्तमभ्यसेत्क्षीरभुङ्नरः ।
अभयामलकीयोक्तानेकादश सिताशनः ॥ २३७ ॥
अपानेनावृते सर्वं दीपनं ग्राहि भेषजम् ।
वातानुलोमनं यच्च पक्वाशयविशोधनम् ॥ २३८ ॥

लेहं वा भार्गवप्रोक्तमिति च्यवनप्राशं च्यवनो हि भार्गव उच्यते । उक्तं हि आयुर्वेदसमुत्थाने "भार्गवश्च्यवनः काशीवृद्धः सन् विकृतं गत इति" । वातस्यानुलोमनैश्चिकित्सितं कुर्यादिति नियोजनीयम् ॥ २३७—२३८ ॥

इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितं स्नेहेन
प्राणादीनां भिषक् कुर्याद्धितकर्म स्वयमेव तत् २३९
पित्तावृते तु पित्तघ्नैर्मारुतस्याविरोधिभिः ।
कफावृते कफघ्नैस्तु मारुतस्यानुलोमनैः ॥ २४० ॥
लोके वाय्वर्कसोमानां दुर्विज्ञेया यथा गतिः ।
तथा शरीरे वातस्य पित्तस्य च कफस्य च ॥ २४१

वातादीनां दुर्विज्ञेयता दृष्टान्तेन दर्शयति लोक इत्यादि ॥ २३९—२४१ ॥

क्षयं वृद्धिं समत्वं च तथैवावरणं भिषक् ।
विज्ञाय पवनादीनां न प्रमुह्यति कर्मसु ॥ २४२ ॥

क्षयमित्यादौ आवरणमपि क्षयवृद्धिसंमितं निर्दिष्टमेव तथापि आवरणस्य विशेषलक्षणचिकित्सार्थं पृथगभिधानम् । कर्मस्विति चिकित्सासु ॥ २४२ ॥

तत्र श्लोकौ ।

पञ्चात्मनः स्थानवशाच्छरीरे ।
स्थानानि कर्माणि च देहधातोः ।
प्रकोपहेतुः कुपितश्च रोगान् ।
स्थानेषु चान्येषु वृतोऽवृतश्च ॥ २४३ ॥
प्राणेश्वरः प्राणभृतां करोति ।
क्रिया च तेषामखिला निरुक्ता ।
तान्देशसात्म्यर्तुबलान्यवेक्ष्य ।
प्रयोजयेच्छास्त्रमतानुसारी ॥ २४४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने वातव्याधिचिकित्सितं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

पञ्चात्मन इत्यादिसंग्रहे पञ्चात्मनः स्थानवशात् इति च्छेदः । देहधातोरिति देहधारकरूपस्याविकृतस्य वायोरित्यर्थः । उक्तचिकित्साकरणापेक्षणीयं संग्रहेणाह तानित्यादि । देशाद्यपेक्षया सूत्रस्थाने विवृता देशादिभेदेन प्रकरणतया विस्तारिता प्रपञ्चिता ॥ २४३—२४४ ॥

इति वातव्याधिचिकित्सितं समाप्तम्

## एकोनत्रिंशोऽध्यायः ।

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ।

हुताग्निहोत्रमासीनमृषिमध्ये पुनर्वसुम् ।
पृष्टवान् गुरुमेकाग्रमग्निवेशोऽग्निवर्चसम् ॥ १ ॥
अग्निमारुततुल्यस्य संसर्गस्यानिलासृजोः ।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत् ॥ २ ॥
लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥ ३ ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥ ४ ॥

...शनक्रोधदिवास्वप्नप्रजागरैः।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥५॥
अचंक्रमणशीलानां कुप्यते वातशोणितम्।
अभिघातादशुद्ध्या च प्रदुष्टे शोणिते नृणाम् ॥ ६ ॥
कषायकटुतिक्ताल्परूक्षाहारादभोजनात्।
हयोष्ट्रखरयानाम्बुक्रीडाप्लवनलङ्घनात् ॥ ७ ॥
उष्णे चात्यध्वगमनाद्व्यायामाद्वेगनिग्रहात्।
वायुर्विवृद्धो वृद्धेन रक्तेनावारितः पथि ॥ ८ ॥
कृत्स्नं संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्।
खुडं वातबलासाख्यमाढ्यवातं च नामभिः ॥ ९॥

वातव्याधिचिकित्सितानंतरं वातरक्तचिकित्सितमुच्यते । वातरक्ताभ्यां जनितो व्याधिः वातरक्तं किंवा वात एव अवस्थांतरप्राप्तं वातरक्तं । अग्निमारुततुल्यस्येत्यनेन वातरक्तस्य दुर्निवारत्वं शीघ्रकारित्वं चाह । लवणेत्यादिना हेतुमाह–प्रायशः सुकुमाराणामित्यनेन सुकुमारशरीरे लवणादिहेतुसेवया शीघ्रं दुष्टवातशोणितं संभवतीति दर्शयति । संसृष्टमन्नं सुखेन भुंजते तेषां संसृष्टान्नसुखभोजिनाम् अत्र लवणानि यद्यपि वातशोणितहेतुतयोक्तानि तथापि शोणितदुष्टिकारणं एतत् प्राधान्यात् ज्ञेयम् । वातदुष्टिकारणं तु काषायेत्यादिनोक्तं तच्च लवणादि च मिलितं सत् वातशोणितोत्पादकं भवति । यत्तु जायते वातशोणितमिति अनेन लवणादीनां वातशोणितकारणत्वमुक्तम् । तद्वातशोणितजनकशोणितदुष्टिकारणात् ज्ञेयम् । अशुद्ध्येति शुद्धिकालेऽसंशोधनात् । केचिदव्यवधानात् अशुद्ध्या चेतिस्थाने अधुना वातवैषम्यमिति पठंति अशुद्ध्या चेति चकारेण लवणादिषु प्रजागरैरित्यन्तं शोणितदुष्टिकारणं समुच्चिनोति । अत्र शोणितवातस्य विच्छिन्नहेतुवर्गपाठेन द्वयोरप्यत्र स्वतन्त्रं प्रकोपं दर्शयति । उष्णे काले च जनिताद्वातवैषम्यात् वायुरित्यादिना संप्राप्तिमाह–वायुः कुप्यति स्रोतसि इति वृद्धोऽपि स्वहेतोर्वायुः पुनः शोणिताद्यावरणविशेषेण क्रुद्धे व्यवहारार्थं तंत्रान्तरप्रसिद्धसंज्ञाभेदानप्याह–खुडमित्यादि खुडदेशप्राप्त्यां खुडः वातस्यावरणेन बलमस्य यस्मिन् शोणितमिति वातबलाशं खुडशब्देन संधिरुच्यते । वातस्यावरणेन आढ्यानां प्रायो भवतीति आढ्यरोगः ॥ १—९ ॥

तस्य स्थानं करौ पादावङ्गुल्यः सर्वसन्धयः।
कृत्वादौ हस्तपादे तु मूलं देहे विधावति ॥ १० ॥
सौक्ष्म्यात्सर्वसरत्वाच्च देहं गच्छन् शिरायनैः।
पर्वस्वभिहतं क्षुब्धं वक्रत्वादवतिष्ठते ॥ ११ ॥
स्थितं पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः।
करोति दुःखं तेष्वेव तस्मात्प्रायेण सन्धिषु।
भवन्ति वेदनास्तास्ता अत्यर्थं दुःसहा नृणाम् १२
स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक्।
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥ १३ ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ १४ ॥
कण्डूः संधिषु रुग्भूत्वा भूत्वा नश्यति चासकृत्।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ १५ ॥

वातशोणितस्य वैशेषिकं स्थानमाह । तस्य स्थानमित्यादि करपादग्रहणेनैव अङ्गुलीनां ग्रहणे प्राप्ते अंगुलीनां बहुपर्वतया, विशेषाधिष्ठानत्वोपदर्शनार्थं पुनरभिधानम् । मूलमास्थायेति आस्पदं कृत्वा तत्र हेतुमाह सौक्ष्म्यादित्यादि सूक्ष्ममार्गानुसारित्वात् । वातशोणितस्य देहं सर्पतः विशेषेण पर्वस्थानं । शिरायनैरिति शिरारूपैर्मार्गैः । वक्रत्वादिति पर्वणां वक्रत्वात् । पित्तादिसंसृष्टमिति पित्तेन कफेन च द्वेरवंतरयुक्तेन वायुना युक्तम् तस्मादिति संधिष्ववस्थानात् । खेदेत्यादिना पूर्वरूपमाह खेदोत्यर्थं नवेति च यद्यपि कुष्ठपूर्वरूपे उक्तं तथाप्यसमानभूरिसंबंधात् अन्यतरपूर्वरूपत्वे निश्चयः ॥ १०–१५ ॥

उत्तानमथ गम्भीरं द्विविधं तत्प्रचक्षते।
त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम् ॥ १६ ॥
कण्डूदाहरुगायासतोदस्फुरणकुञ्चनैः।
अन्विता श्यावरक्ता त्वग्बाह्ये ताम्रा तथेष्यते १७
गम्भीरे श्वयथुः स्तब्धः कठिनोऽन्तर्भृशार्तिमान्।
श्यावस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान् ॥ १८ ॥
रुग्विदाहान्वितोऽभीक्ष्णं वायुः सन्ध्यस्थिमज्जसु।
छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान् ॥ १९ ॥
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन्।
सर्वैर्लिङ्गैश्च विज्ञेयं वातासृगुभयाश्रयम् ॥ २० ॥

अवगाढानवगाढचिकित्साभेदार्थमाह । उत्तानमित्यादि । अंतराश्रयमिति त्वङ्मांसव्यतिरिक्तगंभीरधात्वाश्रयं सर्वैर्लिङ्गैरिति उत्तरवर्गाभ्युक्तैर्मिलिता अयं च तृतीयः प्रकारो बाह्याभ्यन्तरप्रकारो वेति कृत्वा रोगसंग्रहे द्विविधं वातशोणितमुक्तम् । उत्तरमगाढमित्येके भाषन्ते । तत्तु न सम्यक् कस्मात् कुष्ठवदुत्तानं भूत्वा कालान्तरेण अवगाढं भवतीत्यनेन अद्वैविध्यं सिद्धम् । तदा आचार्ययोः परमात्मयोः सुश्रुताग्निवेशयोः एकस्यापि अप्रामाण्यं न संगतमिति कृत्वा अविरोधमत्र व्याख्यास्यामः । तथाहि सुश्रुतेनोक्तम् । द्विविधं वातशोणितमुत्तानमवगाढं चेत्येके भाषन्ते तत्तु न सम्यक् । कुष्ठवदुत्तानीभूत्वा कालान्तरेणावगाढी भवति तस्मान्न द्विविधम् । उत्तानं वातशोणितं कुष्ठवद्गंभीरं भवतीत्युच्यते । ननु सर्वमेव उत्तानं भूत्वा गंभीरं भवतीति प्रतिज्ञायते । तेन यो ब्रूते उत्तानमेवावतिष्ठते तं प्रति सुश्रुतवचनं बाधकं चरके तु उत्तानमेवावतिष्ठते इति नैवोक्तम् । किंतु प्रथमोत्पत्तौ किंचिदुत्तानमुत्प-

यते । किंचित्तु गंभीरमिति तेन न विरोधश्चरकसुश्रुतयोः॥ ॥ १९—२० ॥

**तत्र वातेऽधिके वा स्याद्रक्ते पित्ते कफेऽपि वा।**
**संसृष्टेषु समस्तेषु यच्च तच्छृणु लक्षणम्॥ २१ ॥**
**विशेषतः शिरायामशूलस्फुरणतोदनम्।**
**शोथस्य काष्ण्यं रौक्ष्यं च श्यावता वृद्धिहानयः॥**
**धमन्यङ्गुलीसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।**
**कुञ्चनस्तम्भने शीतप्रद्वेषश्चानिलेऽधिके॥ २३ ॥**
**श्वयथुर्भृशरुक् तोदस्ताम्रश्चिमिचिमायते।**
**स्निग्धरूक्षैः शमं नैति कण्डूक्लेदान्वितोऽसृजि॥ २४**
**विदाहो वेदना मूर्च्छा स्वेदस्तृष्णा मदो भ्रमः।**
**रागः पाकश्च भेदश्च शोषश्चोक्तानि पैत्तिके॥ २५॥**
**स्तैमित्यं गौरवं स्नेहः सुप्तिर्मन्दाऽरुचिः कफे।**
**हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वं त्रिदोषजम्॥ २६ ॥**

तत्र वातेऽधिके इत्यादौ पित्तवृद्धिः शोणितवृद्धिः रक्तपित्तवृद्धिर्ज्ञेया। संसृष्टैरिति द्वित्रिमेलकैः समस्तैरिति चतुर्मिलितैः शिरायामेत्यादिना वाताद्युल्वणानां चतुर्णां लक्षणमाह। आयामो विस्तरणं श्यावता श्याववर्णत्वं। श्वयथुरित्यादिना उद्रिक्तरक्तस्य विशेषणम्। द्वन्द्वं त्रिदोषजमित्यत्र अधिकशोणितानुबन्धोऽपि गृहीतव्यः। तेन वातादिचतुष्टयमेलकजं अपि वातशोणितं ज्ञेयम्॥ अतएव द्वित्रिसर्वाधिकभेदात् द्विविधस्यापि वातशोणितस्य पूर्वटीकाकृद्भिः पञ्चचत्वारिंशद्भेदा उक्ताः। करणादीनि तु प्रकरणान्तरेण षट् त्रिंशद्विधमुक्तम्। उक्तं हि वातोत्तरं प्रवृद्धासृक् पञ्चविंशद्विधं मतम्। पित्तात्षट्त्रिंशद्विधं योगात् कफाद्दशेति। एते भेदाः अनतिप्रयोजनत्वान्न विवृताः॥ २१—२६ ॥

**एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्।**
**त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः॥ २७॥**
**अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः।**
**मूर्च्छा च मदरुक् तृष्णा ज्वरमोहप्रवेपकाः॥ २८॥**
**हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः।**
**अङ्गुलीवक्रता स्फोटा दाहमर्मग्रहार्बुदाः॥ २९ ॥**
**एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत्।**
**संप्रस्रावि विवर्णं च स्तब्धमर्बुदकृच्च यत्॥ ३० ॥**
**वर्जयेच्चैव संकोचकरमिन्द्रियतापनम्।**
**अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम्॥ ३१**

साध्यादिविभागमाह। एकदोषानुगमित्यादि यस्य च स्युरुपद्रवा इति साध्यत्वेनोक्तस्यापि वक्ष्यमाणोपद्रवयोगादसाध्यता। त्रिदोषस्य असाध्यत्वेऽपि यद्वक्ष्यति "खजेनमथिता पेया वातरक्ते त्रिदोषजे" इति। तत् असंपूर्णलक्षणत्रिदोषजाभिप्रायेण। मूर्च्छा इव मूर्च्छा पांगुल्यं पंगुता मोहेनैकेनेति इतरोपद्रवाणां मेलकैरसाध्यत्वं। मोहस्तु एक एव असाध्यताकर इत्यर्थः। ये तु मेहेनैकेनेति पठंति ते मेहेनं वातशोणितस्य विरुद्धोपक्रमतया मेहयोगेनासाध्यतामाहुः। वातशोणितस्य हि प्रायेण मधुरशीतोपक्रमः तद्विपरीतस्तु मेहस्येति विरुद्धोपक्रमता। विवर्णमिति विपरीतवर्णं विवर्णलमत्र तु वातानुषंगोपद्रवः॥ २७—३१ ॥

**रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः।**
**निविश्यान्योन्यमावाध्य वेदनाभिर्हरेदसून्॥ ३२॥**
**तत्र मुञ्चेदसृक् शृङ्गजलौकःसूच्यलाबुभिः।**
**प्रच्छनैर्वा शिराभिर्वा यथादोषं यथाबलम्॥३३॥**
**रुग्दाहशूलतोदार्तादसृक् स्राव्यं जलौकसा।**
**शृङ्गैस्तु वै हरेत्सुप्तिकण्डूचिमिचिमायनात्॥ ३४॥**

वातशोणितस्य रक्तहरणार्थं रूपमाह। रक्तमार्गमित्यादि रक्तस्य मार्गं मारुतो निहंति शाखासंधिषु निविश्य रक्तनिरोधात् अन्योन्यमावाध्य रक्तेन वातं वातेन च रक्तं आवाध्य वेदनाभिः हरेदसूनिति योज्यम्। अतएवाह। अत्र वातशोणिते असृक् विमुञ्चेदिति भावः। असृङ्मोक्षणेन आवरकव्यपगमात् वायुरपि प्रसन्नो भवति ततश्च व्याध्युपरमः॥ ॥ ३२—३४ ॥

**देशाद्देशं व्रजेत्स्राव्यं शिराभिः प्रच्छनेन वा।**
**अङ्गग्लानौ न तु स्राव्यं रूक्षे वातोत्तरे च यत्॥३५**
**गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुशिरामयान्।**
**ग्लानिं चापि ससङ्कोचां कुर्याद्वायुरसृक्क्षयात्॥**
**खाञ्ज्यादीन् वातरोगांश्च मृत्युं वात्यवसेचनात्।**
**कुर्यात्तस्मात्प्रमाणेन स्निग्धाद्रक्तं विनिर्हरेत्॥३७॥**
**विरेच्यः स्नेहयित्वादौ स्नेहयुक्तैर्विरेचनैः।**
**रूक्षैर्वा मृदुभिः शस्तमसकृद्वस्तिकर्म च॥ ३८॥**

देशाद्देशं व्रजेदिति प्रसरणशीलं स्रावणार्हं शोणितेऽपि अतिस्रावणाद्दोषमाह। गम्भीरमित्यादि खांज्यादीनि खांज्यपांगुल्यकुब्जत्वादीनि कुर्यादिति च्छेदः। प्रमाणेनेति अविकारिमात्रया। विरेचनविधानमाह स्नेहयुक्तैर्वेति विकल्पद्वयं स्नेहयुक्तविरेचनं ईषत् स्निग्धविषयम्। रूक्षैस्तु विरेचनं अतिस्निग्धविषयम्। मृदुभिरित्यनेन वातक्षोभभयात् अत्र तीक्ष्णविरेचनं निषेधयति। वस्तिकर्मेति अनुवासननिरूहरूपम्॥ ३५—३८ ॥

**सेकाभ्यङ्गप्रदेहान्नस्नेहाः प्रायोऽविदाहिनः।**
**वातरक्ते प्रशस्यन्ते विशेषं तु निबोध मे॥ ३९ ॥**
**बाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनैः।**
**विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत्॥ ४० ॥**
**सर्पिस्तैलवसामज्जापानाभ्यञ्जनवस्तिभिः।**
**सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत्॥ ४१॥**
**विरेचनैर्घृतक्षीरपानैः सेकैः सवस्तिभिः।**
**शीतैर्निर्वापनैश्चापि रक्तपित्तोत्तरं जयेत्॥ ४२॥**

वमनं मृदुनाऽल्पशो स्नेहसेकादि लङ्घनम् ।
कोष्णलेपाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥ ४३ ॥
कफवातोत्तरे शीते प्रलिप्ते वातशोणिते ।
विदाहः शोथरुक् कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥
रक्तपित्तोत्तरे दाहः क्लेदोऽवदरणं भवेत् ।
उष्णैस्तस्माद्भिषग्दोषबलं बुद्ध्वाचरेत्क्रियाम् ॥ ४५ ॥

प्रायोऽविदाहिन इति नितरां अविदाहिनः । विशेषमिति विशिष्टचिकित्सितं वाह्यमित्युक्त्वा कफोत्तरे वातोत्तरे च शीतप्रलेपदोषमाह । कफवातोत्तर इत्यादि शीतलेपेन विदाहोऽत्र उष्णरोधाद्भवतीति ज्ञेयम् । पित्तोत्तरे रक्तोत्तरे च उष्णैः प्रलेपैर्दोषमाह रक्तपित्तोत्तर इत्यादि दोषबलं बुध्वा अनुगुणामेव क्रियामाचरेत् । वातकफोत्तरे उष्णा रक्तपित्तोत्तरे शीता मिश्रे च मिश्रा ॥ ३९—४५ ॥

दिवास्वप्नं ससन्तापं व्यायामं मैथुनं तथा ।
कट्वूष्णं गुर्वभिष्यन्दि लवणाम्लं च वर्जयेत् ॥ ४६॥
पुराणा यवगोधूमनीवाराः शालिषष्टिकाः ।
भोजनार्थे रसार्थे वा विष्किरप्रतुदा हिताः ॥ ४७॥
आढक्यश्चणका मुद्गा मसूराः समकुष्ठकाः ।
यूषार्थे बहुसर्पिष्काः प्रशस्ता वातशोणिते ॥ ४८॥
सुनिषण्णकवेत्राग्रकाकमाचीशतावरीः ।
वास्तुकोपोदिकाशाकं शाकं सौवर्चलं तथा ॥ ४९॥
घृतमांसरसे भृष्टं शाकसात्म्याय दापयेत् ।
व्यञ्जनार्थं तथा गव्यं माहिषाजं पयो हितम् ॥ ५०॥
इति संक्षेपतः प्रोक्तं वातरक्तचिकित्सितम् ।"
एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते ॥ ५१ ॥

सौवर्चलमिति सूर्यावर्तशाकं व्यञ्जनार्थमिति भोजनसाधनतया आजं पयश्चेत्यादि उपक्रमः । एतदेवेति संक्षिप्तप्रयोगकथनं प्रपंचेन प्रपञ्चयति ॥ ४६—५१ ॥

श्रावणीक्षीरकाकोलीजीवकर्षभकैः समैः ।
सिद्धं समधुकैः सर्पिः सक्षीरं वातरक्तनुत् ॥ ५२॥
बलामतिबलां मेदामात्मगुप्तां शतावरीम् ।
काकोलीं क्षीरकाकोलीं रास्नामृद्धिं च पेषयेत् ५३
घृतं चतुर्गुणक्षीरं तैः सिद्धं वातरक्तनुत् ।
हृत्पाण्डुरोगवीसर्पकामलाज्वरनाशनम् ॥ ५४ ॥
त्रायन्तिकातामलकीद्विकाकोलीशतावरी ।
कशेरुका कषायेण कल्कैरेभिः पचेद्धृतम् ॥ ५५ ॥
दत्त्वा परूषकद्राक्षाकाश्मर्येक्षुरसान्समान् ।
पृथग्विदार्याश्च रसं तथा क्षीरं चतुर्गुणम् ॥ ५६ ॥
एतत्प्रायोगिकं सर्पिः पारूषकमिति स्मृतम् ।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ॥ ५७ ॥

इति पारूषकं घृतम् ।

श्रावणी मुण्डी चतुर्गुणक्षीरमित्यनेन द्रवान्तराभावात् चतुर्गुणक्षीरमेव घृताद्भवति । तामलक्येत्यादौ कल्कैरेभिरित्यनेन पृथक् विदार्यतानां कल्कत्वं कशेरुकाकषायः परूषकस्वरसादीनां प्रत्येकं घृतसमानत्वे विदारीरसस्यापि तथा वचनात् समत्वं । अत्र जतूकर्णः—रसैः परूषककाश्मर्यकशेरुकोविदारकद्राक्षेक्षूणां चतुष्के पयसि द्विकाकोलीतामलकीशतावर्यः पिष्ट्वा पिवेत् घृतं प्रयोगेण तद्वातासृजित् सर्पिः परूपकं नामेति ॥ ५२—५७ ॥

द्वे पञ्चमूले वर्षाभूमेरण्डं सपुनर्नवम् ।
मुद्गपर्णीं महामेदां माषपर्णीं शतावरीम् ॥ ५८ ॥
शङ्खपुष्पीमवाक्पुष्पीं रास्नामतिबलां बलाम् ।
पृथग्द्विपलिकं कृत्वा जलद्रोणे विपाचयेत् ॥ ५९ ॥
पादशेषे समं क्षीरं धात्रीक्षुच्छागलात्रसान् ।
घृताढकेन संयोज्य शनैर्मृद्वग्निना पचेत् ॥ ६० ॥
कल्कानावाप्य मेदे द्वे काश्मर्यं फलमुत्पलम् ।
त्वक्क्षीरीं पिप्पलीं द्राक्षां पद्मबीजं पुनर्नवाम् ॥ ६१
नागरं क्षीरकाकोलीं पद्मकं बृहतीद्वयम् ।
वीरां शृङ्गाटकं भव्यमुरुमाणं निकोचकम् ॥ ६२ ॥
खर्जूराक्षोटवातामयुञ्जाताभिषुकांस्तथा ।
एतैर्घृताढके सिद्धे क्षौद्रं शीते प्रदापयेत् ॥ ६३ ॥
सम्यक् सिद्धं च विज्ञाय सुगुप्तं संनिधापयेत् ।
कृतरक्षाविधिं तच्च प्राशयेदक्षसंमितम् ॥ ६४ ॥
पाण्डुरोगं ज्वरं हिक्कां स्वरभेदं भगन्दरम् ।
पार्श्वशूलं क्षयं कासं प्लीहानं वातशोणितम् ॥ ६५॥
क्षतशोषमपस्मारमश्मरीं शर्करास्तथा ।
सर्वाङ्गैकाङ्गरोगांश्च मूत्रसङ्गं च नाशयेत् ॥ ६६ ॥
बलवर्णकरं धन्यं वलीपलितनाशनम् ।
जीवनीयमिदं सर्पिर्वृष्यं वन्ध्यासुतप्रदम् ।
अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम् ॥ ६७ ॥

इति द्विपञ्चमूलादिघृतम् ।

द्वे पञ्चमूलेत्यादौ वर्षाभूः श्वेतपुनर्नवा आवाक्पुष्पी अवःपुष्पीति ख्याता क्षीरादीनां स्नेहसमत्वं । सुगुप्तमिति वातावस्पर्शनीयम् यथा भवति तथा विधाय प्राशयेदिति ॥ ५८—६७ ॥

द्राक्षामधुकतोयाभ्यां सिद्धं वा ससितोपलम् ६८

इतिद्राक्षादिघृतम् ।

पिबेद्धृतं तथा क्षीरं गुडूचीस्वरसे शृतम् ॥ ६९ ॥

इति गुडूच्यादिघृतम् ।

जीवकर्षभकौ मेदामृष्यप्रोक्तां शतावरीम् ।
मधुकं मधुपर्णीं च काकोलीद्वयमेव च ॥ ७० ॥
मुद्गमाषाख्यपर्णिन्यौ दशमूलं पुनर्नवाम् ।
बलामृताविदारीश्च साश्वगन्धाश्ममेदकाः ॥ ७१ ॥

एषां कषायकल्काभ्यां सर्पिस्तैलं च साधयेत्।
लाभतश्च वसामज्जधन्वप्रतुदवैष्किरान्॥ ७२॥
चतुर्गुणेन पयसा तत्सिद्धं वातशोणितम्।
सर्वदेहाश्रितं हन्ति व्याधीन्घोरांश्च वातजान्॥७३

द्राक्षेत्यादौ ससितोपलमिति प्रक्षिप्तशर्करं॥ ऋष्यप्रोक्ता अतिवला काला मंजिष्ठा मधुपर्णी विकंकतं। धन्वप्रतुदवैष्किरानितिवसामज्जविशेषणम्॥ ६८—७३॥

स्थिराश्वदंष्ट्रा बृहती शारिवा सशतावरी।
काश्मर्याण्यात्मगुप्ता च वृश्चीरं द्वे बले तथा॥७४
एषां क्वाथे चतुःक्षीरे पृथक् तैलं पृथग् घृतम्।
मेदाशतावरीयष्टिजीवन्तीजीवकर्षभैः॥ ७५॥
पक्त्वा मात्रा ततः क्षीरत्रिगुणाऽध्यर्धशर्करा।
खजेन मथिता पेया वातरक्ते त्रिदोषजे॥ ७६॥

स्थिरामित्यादौ चतुःक्षीरमिति चतुर्गुणं क्षीरं पृथक्तैलं पृथक्घृतमित्यनेन संमिश्रपाकं निषेधयति। क्षीरत्रिगुणा सार्धभागाशर्करा यस्यां मात्रायां सा त्रिगुणाध्यर्द्धशर्करा। खजः पञ्चांगुलो हस्तः मन्थानं वा॥ ७४—७६॥

तैलं पयः शर्करां च पाययेद्वा सुमूर्च्छितम्।
सर्पिस्तैलसिताक्षौद्रैर्मिश्रं वापि पिबेत्पयः॥ ७७॥
अंशुमत्या शृतः प्रस्थः पयसः ससितोपलः।
पाने प्रशस्यते तद्वत्पिप्पलीनागरैः शृतः॥ ७८॥
बलाशतावरीरास्नादशमूलैः सपीलुभिः।
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः॥७९॥
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्।
पिबेद्वा सत्रिवृच्चूर्णं पित्तरक्तेऽनिलात्मके॥ ८०॥
क्षीरेणैरण्डतैलं वा प्रयोगेण पिबेन्नरः।
बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः॥ ८१॥

अंशुमती शालपर्णी। द्विसितोपलमिति शर्कराद्विपलं। इयं च क्षीरमात्रा उत्तमाग्नीन् प्रति धारोष्णेति दोहकालमेव धारयति अग्नियोगादिना उष्णीकृतं मूत्रं च क्षीरसमं सत्रिवृच्चूर्णं धारोष्णं क्षीरमिति संबंधः। प्रयोगेणेत्यभ्यासेन॥ ॥ ७७—८१॥

कषायममृतानां वा घृतभृष्टं पिबेन्नरः।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा॥ ८२॥
काश्मर्यं त्रिवृतां द्राक्षां त्रिफलां सपरूषकाम्।
शृतां पिबेद्विरेकाय लवणक्षौद्रसंयुताम्॥ ८३॥

क्षीरप्रधानो वस्तिः क्षीरवस्तिः। मधुयष्ट्या इत्यादौ मधुकतुलाया जलद्रोणं दत्त्वा तैलाढकं वरी शतावरी। हंसपदी ख्यनामख्याता। वितुन्नकं धान्यकं चतुःप्रयोगादिति पानाभ्यंगवस्तिनस्यप्रयोगात्॥ ८२—८३॥

त्रिफलायाः कषायं वा पिबेत्क्षौद्रेण संयुतम्॥८४
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके।
योगैश्च कल्पविहितैरसकृत्तं विरेचयेत्॥ ८५॥
मृदुभिः स्नेहसंयुक्तैर्ज्ञात्वा वातं मलावृतम्।
निर्हरेद्वा मलं तस्य सघृतैः क्षीरवस्तिभिः॥ ८६॥
न हि वस्तिसमं किंचिद्वातरक्तचिकित्सितम्।
वस्तिवंक्षणपार्श्वोरुपर्वास्थिजठरार्तिषु॥ ८७॥
उदावर्ते च शस्यन्ते निरूहाः सानुवासनाः।
दद्यात्तैलानि चेमानि वस्तिकर्मणि बुद्धिमान्॥८८॥
नस्याभ्यञ्जनसेकेषु दाहशूलोपशान्तये।
मधुयष्ट्यास्तुलायास्तु कषाये पादशेषिते॥ ८९॥
तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः।
शतपुष्पा वरी मूर्वापयस्यागुरुचन्दनैः॥ ९०॥
स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः।
काकोलीक्षीरकाकोलीतामलक्यृद्धिपद्मकैः।
जीवकर्षभजीवन्तीत्वक्पत्रनखवालकैः॥ ९१॥
प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः।
चतुःप्रयोगात्तद्धन्ति तैलं मारुतशोणितम्॥ ९२॥
सोपद्रवं साङ्गशूलं सर्वगात्रानुगं तथा।
वातासृक्पित्तदाहार्तिज्वरघ्नं बलवर्णकृत्॥ ९३॥

इति मधुपर्ण्यादितैलम्।

मधुकस्य शतं द्राक्षा खर्जूराणि परूषकम्।
मधुकौदनपाक्यौ च प्रस्थं मुञ्जातकस्य च॥ ९४॥
काश्मर्याढकमित्येतच्चतुर्द्रोणे पचेदपाम्।
शेषेऽष्टभागे पूते च तस्मिंस्तैलाढकं पचेत्॥ ९५॥
तथामलककाश्मर्यविदारीक्षुरसैः समैः।
चतुर्द्रोणेन पयसा कल्कं दत्त्वा पलोन्मितम्॥९६॥
कदम्बामलकाक्षोटपद्मबीजकशेरुकम्।
शृङ्गाटकं शृङ्गवेरं लवणं पिप्पलीं सिताम्॥ ९७॥
जीवनीयैश्च संसिद्धं क्षौद्रप्रस्थेन संसृजेत्।
नस्याभ्यञ्जनपानेषु वस्तौ चापि नियोजयेत्॥९८॥
वातव्याधिषु सर्वेषु मन्यास्तम्भे हनुग्रहे।
सर्वाङ्गैकाङ्गवाते च क्षतक्षीणे क्षतज्वरे॥ ९९॥
सुकुमारकमित्येतद्वातास्रामयनाशनम्।
स्थिरवर्णकरं तैलमारोग्यबलपुष्टिदम्॥ १००॥

इति सुकुमारकतैलम्।

गुडूचीं मधुकं ह्रस्वं पञ्चमूलं पुनर्नवाम्।
रास्नामैरण्डमूलं च जीवनीयानि लाभतः॥१०१॥
पलानां शतकैर्भागैर्बलापञ्चशतं तथा।
कोलबिल्वयवान्माषान्कुलत्थांश्चाढकोन्मितान्॥
काश्मर्याणां सुशुष्काणां द्रोणं द्रोणशतेऽम्भसि।
साधयेज्जर्जरं धौतं चतुर्द्रोणं च शेषयेत्॥ १०३॥
तैलद्रोणं पचेत्तेन दत्त्वा पञ्चगुणं पयः।
पिष्ट्वा त्रिपलिकांश्चैवं चन्दनोशीरकेशरान्॥ १०४॥

पत्रेलागुरुकुष्ठानि तगरं मधुयष्टिकाम्।
मञ्जिष्ठाष्टपलं चैव तत्सिद्धं सार्वयौगिकम् ॥१०५॥
वातरक्ते क्षते क्षीणे भारार्ते क्षीणरेतसि।
वेपनोक्षिप्तभग्नानां सर्वाङ्गैकाङ्गरोगिणाम् ॥ १०६ ॥
योनिदोषमपस्मारमुन्मादं खञ्जपङ्गुताम्।
हन्यात्पुंसवनं चैतत्तैलाख्यममृताह्वयम् ॥ १०७ ॥
इत्यमृताद्यं तैलम्।

मधुकस्य शतमिति शतधा पाकेन मधुकफलशतात् सिद्धमित्यर्थः। गुडूच्यादीनां प्रत्येकं शतपलत्वं। कोलादीनां प्रत्येकमाढकमानत्वं। काश्मर्याणामिति गंभारीफलानां सार्वयौगिकमिति पानादिचतुःप्रयोगे यौगिकत्वं पुंसवनमिति प्रसूतिकारकं ॥ ८४—१०७ ॥

पद्मवेतसयष्ट्याह्वफेनिला पद्मकोत्पलैः।
पृथक्पञ्चपलैर्दर्भबलाचन्दनकिंशुकैः ॥ १०८ ॥
जले शृतैः पचेत्तैलप्रस्थं सौवीरसंमितम्।
लोध्रकालीयकोशीरजीवकर्षभकेशरैः ॥ १०९ ॥
मदयन्तीलतापत्रपद्मकेशरपद्मकैः।
प्रपौण्डरीककाश्मर्यमांसीमेदाप्रियङ्गुभिः ॥ ११० ॥
कुङ्कुमस्य पलार्धेन मञ्जिष्ठायाः पलेन च।
महापद्ममिदं तैलं वातासृग्ज्वरनाशनम् ॥ १११ ॥
इति महापद्मं तैलम्।

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम्।
स्यात्पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ११२
खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत्।
आत्रेयेणाग्निवेशाय भाषितं हितकाम्यया ॥ ११३॥
इति खुड्डाकपद्मतैलम्।

पद्मवेतसेत्यादौ फेनिला उत्पादिका सौवीरमिति स्नेहसमं सौवीरकं लोध्रादिभिः कार्षिकैः कुकुमं च द्विकार्षिकं खुड्डाकपद्ममिह अल्पपद्मकसंज्ञा वैयव्यवहारार्था ॥ १०८—११३ ॥

शतेन यष्टिमधुकात्साध्यं दशगुणं पयः।
तस्मिंस्तैले चतुर्द्रोणे मधुकस्य पलेन तु।
सिद्धं मधुककाश्मर्यरसैर्वा वातरक्तनुत् ॥ ११४ ॥
मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे।
क्षीरे साध्यं शतकृत्वस्तदेव मधुकाच्छतैः ॥११५॥
सिद्धं देयं त्रिदोषेस्याद्वातास्रश्वासकासनुत्।
हृत्पाण्डुरोगवीसर्पकामलादाहनाशनम् ॥ ११६ ॥
इति शतपाकमधुपर्णीतैलम्।

शतेन यष्टीमधुकेत्यादौ यष्टीमधुपलशतं दशगुणेन क्षीरेण साध्यम्। तैले चतुर्द्रोणे स्थितं तदेव मधुकाच्छतमिति शतधापाकेन मधूकपलशतात्सिद्धमित्यर्थः। अनेन च मधुपलशतसाधनोपदेशेन शतकृत्वेति शब्दस्य विपुलवाचितां निषेधयति ॥ ११४—११६ ॥

बलाकषायकल्काभ्यां तैलं क्षीरसमं तथा।
सहस्रशतपाकं वा वातासृग्वातरोगानुत् ॥११७॥
रसायनं श्रेष्ठतममिन्द्रियाणां प्रसादनम्।
जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ ११८ ॥
इति सहस्रपाकं वा शतपाकं तैलम्।

गुडूचीरसदुग्धाभ्यां तैलं द्राक्षारसेन वा।
सिद्धं मधुककाश्मर्यरसैर्वा वातरक्तनुत् ॥ ११९ ॥
आरनालाढके तैलं पादं सर्जरसं घृतम्।
प्रभूते मथितं तोये ज्वरदाहार्तिनुत्परम् ॥ १२० ॥

बलाकषाय इत्यादिनोक्तशतसहस्रपाके अत्यंतुपाकात् स्नेहक्षयं पश्यन्तः शतगुणेन सहस्रगुणेन वा द्रवेण एकदैवपाकं व्याख्यानयंति। किंतु तावती स्नेहमात्रा अत्र पक्तव्या या पाकापेक्षया निःशेषा भवति क्षीरं चात्र स्नेहवर्द्धकमस्ति तेन यथाश्रुतमेव आचार्यवचनं प्रमाणमिति पश्यामः किंच प्रत्यासन्ने एव पाके रुद्रवत्स्नेहकल्कोद्गमनमत्र कर्तव्यम्। तेन स्नेहापेक्षयैव भवति। गुडूचीमित्यादौ द्रवात्पाकादिकस्नेह इति न्यायात् प्रस्थं तैलस्य भवति खजितमिति मथितं ॥ ॥ ११७—१२० ॥

समधूच्छिष्टमाञ्जिष्ठं ससर्जरससारिवम्।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ १२१ ॥
इति पिण्डतैलम्।

समधूच्छिष्टमित्यादौ मधूच्छिष्टादीनि कल्कः जलं च द्रवं देयम्। पिंडतैलभाषयात्रवस्त्रापूतमेव एतत्तैलं कर्तव्यम्। अत्र तैले एव सर्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपात् तत्तैलं अभ्यंगे उच्यत इति जतूकर्णवचनादुन्नीयते उक्तं हि कांजिकसर्जरसशतं खजितं सिक्थकसर्जरसैर्युक्तं अभ्यंजनमिति ॥ १२१ ॥

"दशमूलशृतं क्षीरं सद्यः शूलनिवारणम्।
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ १२२ ॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत्।
स्तम्भाक्षेपकशूलार्ते कोष्णैर्दाहे तु शीतलैः ॥१२३॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः।
निःक्वाथैर्जीवनीयानां पञ्चमूलस्य वा भिषक् १२४
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम्।
सेकार्थे तण्डुलक्षौद्रशर्कराम्बु च शस्यते ॥ १२५ ॥
कुमुदोत्पलपद्माद्यैर्मणिहारैः सचन्दनैः।
शीततोयानुगैर्दाहे प्रोक्षणं स्पर्शनं हितम् ॥ १२६ ॥
चन्द्रपादाम्बुसंसिक्ते क्षौमपद्मदलच्छदे।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥ १२७ ॥
चन्दनार्द्रस्तनकराः प्रिया नार्यः प्रियंवदाः।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥

सरागे सरुजे दाहे रक्तं मुक्त्वा प्रलेपयेत्।
मधुकाश्वत्थत्वङ्मांसीवीरोदुम्बरशाद्वलैः ॥१२९॥
जलजैर्यवचूर्णैर्वा सयष्ट्याह्वपयोघृतैः।
सर्पिषा जीवनीयैर्वा पिष्टैर्लेपोऽर्तिदाहनुत् ॥ १३०
एलाः पियालं मधुकं बिसं मूलं च वेतसात्।
आजेन पयसा पिष्ट्वा प्रलेपो दाहरोगनुत् ॥१३१॥
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः।
सितोपलैरकासक्तुमसूरोशीरपद्मकैः ॥ १३२ ॥
लेपो रुग्दाहवीसर्परुक्शोफविनिवारणः।
पित्तरक्तोत्तरे त्वेते लेपान् वातोत्तरे शृणु ॥१३३॥
वातघ्नैः साधिताः स्निग्धाः सक्षीरमुद्गपायसैः।
तिलसर्षपपिण्डैर्वाप्युपनाहा रुजापहाः ॥ १३४ ॥
औदकप्रसहानूपवेशवाराः सुसंस्कृताः।
जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥ १३५ ॥
स्तम्भतोदरुगायासशोथाङ्गग्रहनाशनाः।
जीवनीयौषधैः स्नेहः सपयस्को रसोऽपि वा ॥
घृतं सहचरान्मूलं जीवन्ती च्छागलं पयः।
लेपाः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः १३७
क्षीरपिष्टमुमालेपमेरण्डस्य फलानि च।
कुर्याच्छूलनिवृत्त्यर्थं शताह्वं वानिलेऽधिके ॥ १३८
समूलाग्रच्छदैरण्डक्वाथे द्विप्रस्थिकं पृथक्।
घृतं तैलं वसा मज्जा चानूपमृगपक्षिणाम् ॥ १३९
कल्कार्थे जीवनीयानि गव्यं क्षीरमथाजकम्।
हरिद्रोत्पलकुष्ठैलाशताह्वावरुणच्छदान् ॥ १४० ॥
बिल्वमात्रं पृथक् पुष्पं काकुभं चापि साधयेत्।
मधूच्छिष्टं पलान्यष्टौ दद्याच्छीतेऽवतारिते ॥१४१॥
शूलेनैवार्दिताङ्गानां लेपः सन्धिगतेऽनिले।
वातरक्ते स्रुते भग्ने खञ्जे कुब्जे च शस्यते ॥ १४२ ॥
शोफगौरवकण्ड्वाद्यैर्युक्ते त्वस्मिन् कफोत्तरे।
मूत्रक्षारसुरापक्वघृतमभ्यञ्जने हितम् ॥ १४३ ॥
पद्मकं त्वक् समधुकं शारिवा चेति तैर्घृतम्।
सिद्धं समधुशुक्तं स्यात्सेकाभ्यङ्गः कफोत्तरे ॥१४४
क्षीरं तैलं गवां मूत्रं जलं च कटुकैः शृतम्।
परिषेकाः प्रशस्यन्ते वातरक्ते कफोत्तरे ॥ १४५ ॥
लेपः सर्षपनिम्बार्कहिंस्राक्षीरतिलैर्हितः।
श्रेष्ठः सिद्धः कपित्थत्वग्घृतक्षीरैः ससक्तुभिः ॥
द्वे हरिद्रे वचागौरधूमकुष्ठशताह्विकाः।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥ १४७ ॥
तगरं त्वक् शताह्वैला कुष्ठं मुस्तं हरेणुका।
दारु व्याघ्रनखं चाम्लपिष्टं वातकफार्तिनुत् ॥१४८
मधु शिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम्।
मुहूर्तं लिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥ १४९ ॥
त्रिफलाव्योषपत्रैलास्त्वक् क्षीरं चित्रकं वचाम्।
विडङ्गं पिप्पलीमूलं लोमशं वृषकत्वचम् ॥ १५० ॥
ऋद्धिं तामलकीं चव्यं समभागानि पेषयेत्।
कल्कं लिप्तमयस्पात्रे मध्याह्ने भक्षयेत् ततः ॥१५१॥
वर्जयेद्दधिशुक्तानि क्षारं वैरोधिकानि च।
वातास्रे सर्वदोषेऽपि हितं शूलार्दिते परम् ॥१५२॥
बुद्ध्वा स्थानविशेषांश्च दोषाणां च बलाबलम्।
चिकित्सितमिदं कुर्यादूहापोहविकल्पवित् ॥१५३॥

मधुरैः स्नेहैरिति जीवनीयसिद्धस्नेहैः। तंडुलेत्यादौ प्रत्येकं त्रिभिरम्बुशब्दः संबध्यते। शीततोयानुग इति शीततोयसिक्तैः। चंद्रपादाम्बुसंसिक्त इति तुषारजलनिषिक्तः। पुलिनं नदीतटः। पुलिनस्पर्शेन शीते शयने। पयसि निर्वृता इति क्षीरे निर्वापिता। उमा अतसी अग्रच्छदानीति वरुणपत्राणि। अम्लैरिति काञ्जिकादिभिः। बुध्वेत्यादि अवस्थाकर्तव्यमाह—ऊहापोहविकल्पविदिति पूर्वोक्तचिकित्सितस्य ऊहापोहविकल्पज्ञः ॥ १२२—१५३ ॥

कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा।
अतिवृद्ध्याऽनिले नादौ शस्तं स्नेहनबृंहणम् ॥ १५४॥

कुपित इत्यादि मेदसः कफस्य वा अतिवृद्ध्या कृतान् मार्गसंरोधान् आदौ स्नेहनं तथा बृंहणं च न शस्तमिति नकारार्थः ॥ १५४ ॥

व्यायामशोधनारिष्टमूत्रपानैर्विरेचनैः।
तक्राभयाप्रयोगैश्च क्षपयेत्कफमेदसी ॥ १५५ ॥
बोधिवृक्षकषायं तु पिबेत्तं मधुना सह।
वातरक्तं जयत्याशु त्रिदोषमपि दारुणम् ॥ १५६ ॥
पुराणयवगोधूमसिध्वरिष्टासुरासवैः।
शिलाजतुप्रयोगैश्च गुग्गुलोर्माक्षिकस्य च ॥ १५७॥
पश्चाद्वाते क्रियां कुर्याद्वातरक्तप्रसादनीम्।
गम्भीरे रक्तमाक्रान्तं स्याच्चेद्वा तद्विवर्जयेत् ॥१५८॥

अत्र स्नेहनबृंहणनिषेधे सति कर्तव्यमाह—व्यायामेत्यादि एतत् क्रियोत्तरकालीनं कर्तव्यमाह—पश्चाद्वातेत्यादि। कफमेदोवृत एव निर्जितकफमेदसि वाते वातरक्तप्रसादिनि क्रिया कार्या। अत्रैवोक्ता स्नेहप्रयोगादिका वातविकारत्वात् वातव्याधिचिकित्सितं जनयेत्। एतच्च वातेन गंभीर एव वातरक्ते प्रायो भवति इति दर्शयितुं गंभीर इति कृतम्। गंभीरानुगते हि वातरक्ते रक्तं बहुलमाक्रांतं रक्तस्य हि रक्ताधारा त्वक् स्थानं तेन रक्तावसेचनमाचरेदिति ॥१५५—१५८॥

रक्तपित्तातिवृद्ध्या तु पाकमाशु नियच्छति।
भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव वा ॥ १५९॥
तयोः क्रिया विधातव्या व्यधशोधनरोपणैः।
कुर्यादुपद्रवाणां च क्रियां स्वात्स्वाच्चिकित्सितात्

रक्तस्रावस्थिकं विधिमाह—रक्तेत्यादि। रक्तवृद्ध्या पित्तवृद्ध्या चेति रक्तपित्तातिवृद्ध्या पाकं नियच्छति वातरक्तमिति शेषः।

तयोरित्यादि वृद्धपित्तवृद्धरक्तकृतपाकयोः वातरक्तयोश्चिकित्सामतिदिशन्नाह । उपद्रवचिकित्सामाह—कुर्यादित्यादि ॥ १५९—१६० ॥

तत्र श्लोकाः ।

हेतुस्थानानि मूलं च यस्मात्प्रायश्च सन्धिषु ।
कुप्यति प्राक् च तद्रूपं द्विविधस्य च लक्षणम् ॥
पृथग्भिन्नस्य लिङ्गं च दोषाधिक्यमुपद्रवाः ।
साध्यं याप्यमसाध्यं च क्रिया साध्यस्य चाखिला
वातरक्तस्य निर्दिष्टा समासव्यासतस्तथा ।
महर्षिणाग्निवेशाय तथैवावस्थिकी क्रिया ॥१६३॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने वातशोणितचिकित्सितं नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

हेतुस्थानानीत्यादि दोषाधिक्यमुपद्रवाः साध्यं याप्यमसाध्यं चेति । अननुक्रमेण संग्रहं करोति उपद्रवाणां स्तोकास्तोकभावित्वेन साध्यत्वासाध्यत्वयाप्यत्वख्यापनार्थम् ॥ ॥ १६१—१६३ ॥

इति वातरक्तचिकित्सितं समाप्तम् ।

## त्रिंशोऽध्यायः ।

अथ योनिव्यापच्चिकित्सितं व्याख्यास्यामः ।
दिव्यौषधिजलस्वादुधातुचित्रशिलावति ।
पुण्ये हिमवतः पार्श्वे सुरसिद्धर्षिसेविते ॥ १ ॥
विहरन्तं तपोयोगात् तत्त्वज्ञानार्थदर्शिनम् ।
कृष्णात्रेयं जितात्मानमग्निवेशोऽथ पृष्टवान् ॥ २ ॥
भगवन् यदपत्यानां मूलं नार्यः परं नृणाम् ।
तद्विघातो गदैश्चासां क्रियते योनिमाश्रितैः ॥ ३ ॥
तस्मात्तेषां समुत्पत्तिमुत्पन्नानां च लक्षणम् ।
सौषधं श्रोतुमिच्छामि प्रजानुग्रहकाम्यया ॥ ४ ॥
इति शिष्येण पृष्टस्तु प्रोवाचर्षिवरोऽत्रिजः ।
विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ॥ ५ ॥
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च ।
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥६॥

वातरक्तचिकित्सानन्तरं पारिशेष्यात् वातकृतत्वाच्च योनिव्यापच्चिकित्सितमुच्यते । उक्तं हि "नहि वातादृते योनिर्नारीणां संप्रदुष्यतीति ।" दिव्यानि तीर्थानि गङ्गादीनि दिव्याश्चौषध्यो ब्रह्मसुवर्चलैन्द्रीप्रभृतयः यस्मिन्स दिव्यतीर्थौषधिः चित्रधातुः नानावर्णधातुः । तत्त्वज्ञानेन अर्थान्द्रष्टुं शीलं यस्य तं तत्त्वज्ञानार्थदर्शिनं । मूलमिति कारणं तद्विघाते योनिव्यापत् कारणविघातः तेषामिति योनिगदानां समुत्पत्तिरिति उत्पत्तिः कारणे कार्योपचारात् । रोगसंग्रहेति अष्टोदरीये । मिथ्याचारेण असम्यगाचरणेन प्रदुष्टेनार्तवेनेति दुष्टार्तवेन योनिव्यापत् भवति । बीजदोषादिति बीजार्तवदोषात् । दैवादिति अकर्मवशात् । एतेषां च यथायोग्यतया कारणत्वं अग्रे वक्ष्यमाणकारणत्वभेदेन योनिव्यापत्सु उपपादितमेव दैवं तु सर्वत्रैव साधारणकारणम् ॥ १—६ ॥

वातलाहारचेष्टाया वातलायाः समीरणः ।
विवृद्धो योनिमाश्रित्य योनेस्तोदं सवेदनम् ॥ ७ ॥
स्तम्भं पिपीलिकासृप्तिमिव कर्कशतां तथा ।
करोति सुप्तिमायासं वातजांश्चापरान्गदान् ॥ ८ ॥
सा स्यात्सशब्दरुक्फेनतनुरूक्षार्तवानिलात् ।
व्यापत्कट्वम्ललवणक्षाराद्यैः पित्तजा भवेत् ॥ ९ ॥
दाहपाकज्वरोष्णार्ता नीलपीतसितार्तवा ।
भृशोष्णकुणपस्रावा योनिः स्यात्पित्तदूषिता ॥१०॥
कफोऽभिष्यन्दिभिर्वृद्धो योनिं चेद्दूषयेत्स्त्रियाः ।
स शीतां पिच्छिलां कुर्यात्कण्डुग्रस्तात्पवेदनाम् ॥
पाण्डुवर्णां तथा पाण्डुपिच्छिलार्तववाहिनीम् ।
समश्नत्या रसान्सर्वान्दूषयित्वा त्रयो मलाः ॥१२॥
योनिगर्भाशयस्थाः स्वैर्योनिं युञ्जन्ति लक्षणैः ।
सा भवेद्दाहशूलार्ता श्वेतपिच्छिलवाहिनी ॥ १३ ॥

वातलाया इति विशेषेण वातलयोनिव्यापदुत्पादोपदर्शनार्थम् । पिपीलिकासृप्तामिति पिपीलिका परिसर्पणाकारा वेदना सशब्दरुक् कफेन तद्रूक्षार्तवेति एवंभूतार्तवा भवति तेन वातिकरूपा योनिव्यापत् एवमेव पैत्तिकश्लैष्मिकसान्निपातिकयोनिव्यापदामपि पैत्तिककफजसान्निपातिकदोषप्रभवत्वं वर्णयति । रक्तयोनिरिह असृक्दरसंज्ञया चिकित्साप्रस्तावे वक्तव्या । नैवं ये तु एतद्व्यापदां प्रदरभिन्नमेव मन्यंते प्रदरचिकित्सार्थम् प्रकरणान्तरं अत्राध्याये पठिष्यन्ति । समश्नत्या इति पथ्यापथ्यमेलकेनोपपन्नमन्नादि भक्षन्त्याः ॥ ७—१३ ॥

रक्तपित्तकरैर्नार्या रक्तं पित्तेन दूषितम् ।
अतिप्रवर्तते योन्यां लब्धे बीजेऽपि साऽप्रजा ॥१४॥
योनिगर्भाशयस्थं चेत्पित्तं संदूषयेदसृक् ।
सारजस्का मता कार्श्यवैवर्ण्यजननी भृशम् ॥१५॥

रक्तपित्तकरैरित्यादौ गर्भे लब्धेऽपि रक्तमति प्रवर्तते तेनास्या गर्भो भवति । सा अप्रजा रक्तयोनिः इत्यर्थः । ये तु सास्रजा इति पठंति ते यस्यां लब्धेपिगर्भे असृमतिप्रवर्तते सा तादृशरक्तसृत्या अस्रजा भवतीति वदंति । योनौ गर्भे तिष्ठतीति योनिगर्भाशयस्थं सा अरजस्केति अनार्तवा ॥ १४—१५ ॥

योन्यामधावनात्कण्डूं जाताः कुर्वन्ति जन्तवः ।
सा स्यादचरणा कण्ड्वा तयातिनरकाङ्क्षिणी ॥१६॥

चिरेणेति अचरणा कंड्वातयेति कृमिजनितयोनिकंड्वा ॥ १६

पवनोऽतिव्यवायेन शोफसुप्तिरुजः स्त्रियाः ।
करोति कुपितो योनौ सा चातिचरणा मता ॥ १७
मैथुनादतिबालायाः पृष्ठजङ्घोरुवंक्षणम् ।
रुजयन् दूषयेद्योनिं वायुः प्राक्चरणा हि सा ॥१८
गर्भिण्याः श्लेष्मलाभ्यासाच्छर्दिश्वासविनिग्रहात् ।
वायुः क्रुद्धः कफं योनिमुपनीय प्रदूषयेत् ॥ १९ ॥
पाण्डुं सतोदमास्रावं श्वेतं स्रवति वा कफम् ।
कफवातामयव्याप्ता सा स्याद्योनिरुपप्लुता ॥ २० ॥

व्यवायस्यातिचरणेन व्यापत् अतिचरणा । रुजन् इति दुःखयन् । उचितव्यवायकालात्प्राक् व्यवायाचरणात्प्राक्चरणा उच्यते । गर्भिण्या इत्यादौ आस्रावमिति श्लेष्मानिलमास्रावं । कफवातामयैः उपपन्ना उपप्लुता इत्युच्यते ॥ १६—२० ॥

पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तसंमूर्छितो वायुर्योनिं दूषयति स्त्रियाः ॥ २१ ॥
शूना स्पर्शाक्षमा सार्तिर्नीलपीतमसृक् स्रवेत् ।
श्रोणिवंक्षणपृष्ठार्ति ज्वरार्तायाः परिप्लुता ॥ २२ ॥
वेगादावर्तनाद्योनिमुदावर्तयतेऽनिलः ।
सा रुगार्ता रजः कृच्छ्रेणोदावृत्य विमुञ्चति ॥२३॥
आर्तवे सा विमुक्ते तु तत्क्षणं लभते सुखम् ।
रजसो गमनादूर्ध्वं ज्ञेयोदावर्तिनी बुधैः ॥ २४ ॥
अकाले वाहमानाया गर्भेण पिहितोऽनिलः ।
कर्णिकां जनयेद्योनौ श्लेष्मरक्तेन मूर्च्छितः ॥ २५ ॥
रक्तमार्गावरोधिन्या सा तया कर्णिनी मता ।

नृसंवासे इति रमणजनसान्निध्ये सर्वतः वातपित्तविकारोत्पन्नत्वात् परिप्लुता योनिमुदावर्तयेदिति योनिमुदावर्तवृत्तां करोति । विकारेण रजसः ऊर्ध्वगमनात् उदावर्तिनीमिति उच्यते वाहमानाया इत्यादि आप्राप्तगर्भनिष्क्रमणकाले प्रवाहणं कुर्वत्याः । कर्णिकामिति कर्णिकाकारं ग्रंथिं ॥ २१–२५॥

रौक्ष्याद्वायुर्यदा गर्भं जातं जातं विनाशयेत् ॥ २६
दुष्टशोणितजं नार्याः पुत्रघ्नी नाम सा मता ।
व्यवायमतितृप्ताया भजन्त्यास्त्वत्र पीडितः ॥ २७ ॥
वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः ।
वक्रयत्याननं योन्याः सास्थिमांसानिलार्तिभिः॥२८
भृशार्तिर्मैथुनासक्ता योनिरन्तर्मुखी मता ॥ २९ ॥
गर्भस्थायाः स्त्रिया रौक्ष्याद्वायुर्योनिं प्रदूषयन् ।
मातृदोषादणुद्वारां कुर्यात्सूचीमुखी तु सा ॥ ३० ॥

रौक्ष्यादिति रूक्षगुणोत्कर्षात् दुष्टशोणितजमिति वचनादिह वायुना दुष्टिरपि क्रियते इति दर्शयति । अत्र च यद्यपि सामान्येनैव गर्भविनाश उक्तः तथापि पुत्रस्यैव प्राधान्यात् पुत्रघ्नीति व्यपदेशो ज्ञेयः ॥ व्यवायमिति अतितृप्ताया इत्यादौ अतितृप्तायाः व्यवायं भजन्त्याः मिथ्यास्थितांगायाः मिथ्यास्थितांगत्वेन वक्रतया अन्तः मुखनयनमभिप्रेतम् । गर्भस्थाया इत्यादौ रौक्ष्यादिति रूक्षगुणात् । मातृदोषादिति मातुः गर्भकाले वातप्रकोपहेतुरूपाचारात् ॥ ॥ २६—३० ॥

व्यवायकाले रुन्धन्त्या वेगान्प्रकुपितोऽनिलः ।
कुर्याद्विण्मूत्रसङ्गार्तिं शोषं योनिमुखस्य च ॥ ३१ ॥
षडहात्सप्तरात्राद्वा शुक्रं गर्भाशयं गतम् ।
सरुजं नीरुजं वापि या स्रवेत्सा च वामिनी ॥३२॥
बीजदोषात्तु गर्भस्था मारुतोपहताशया ।
नृद्वेषिण्यस्तनी चैव षण्ढी स्यादनुपक्रमा ॥ ३३ ॥
विषमं दुःखशय्यायां मैथुनात्कुपितोऽनिलः ।
गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्त्रियाः ३४
असंवृतमुखी सार्त्ती रूक्षफेनास्रवाहिनी ।
मांसोत्सन्ना महायोनिः पर्ववंक्षणशूलिनी ॥ ३५ ॥

शोषं योनिमुखस्येत्यनेन योनिमुखशोषात् शुष्कयोनिसंज्ञा । षडहादित्यादिना शुक्रवमनात् वामिनीति उच्यते । मारुतोपहताशयेति मारुतोपहतगर्भाशया । बीजदोषादिति सामान्यवचनेनापि आर्तवरूपबीजदोषएवात्र ज्ञेयः । गर्भाशयोपघातकरत्वात् । उक्तं हि यदा ह्यस्याः शोणितं गर्भाशयबीजभागं प्रकोपमापद्यते तदावन्ध्यां जनयति । विषमेति क्रियाविशेषणं विषमं यथा भवति तथा मैथुनादित्यर्थः । विष्टंभयेदिति विस्तारयेत् । मांसोत्सन्नेति उत्सन्नमांसा । दोषैर्योनिरुपद्रुते इत्यनेन दोषशब्देन योनिदूषका यथोक्ता गदा उच्यंते । उक्तं हि रोगाहि दोषशब्दं लभन्ते ॥ ३१—३५ ॥

इत्येतैर्लक्षणैः प्रोक्ता विंशतिर्योनिजा गदाः ।
न शुक्रं धारयत्येभिर्दोषैर्योनिरुपद्रुता ॥ ३६ ॥
तस्माद्गर्भं न गृह्णाति स्त्री गच्छत्यामयान् बहून् ।
गुल्मार्शःप्रदरादींश्च वाताद्यैश्चातिपीडनम् ॥ ३७ ॥
आसां षोडश यास्तासामाद्ये द्वे पित्तदोषजे ।
परिप्लुता वामिनी च वातपित्तात्मिके मते ॥ ३८ ॥
कर्णिन्युपप्लुते वातकफाच्छेषास्तु वातजाः ।
देहं वातादयस्तासां स्वैर्लिङ्गैः पीडयन्ति हि ॥ ३९ ॥

तस्मादिति योन्युपद्रवान् प्रदरादीन् इत्यत्र योनिव्यापच्छेषं प्रदरमाहुः । तेन योनिव्यापदभावे प्रदरदोषोत्पादं वर्णयन्ति येतु योनिव्यापद्भिन्नमेव प्रदरमिच्छन्ति तेषामत्र विरोधो नास्त्येव । संप्रति आद्यव्यापच्चतुष्टयं त्यक्त्वा शेषषोडशव्यापत्सु वातादिलिङ्गं चिकित्साज्ञानार्थं दोषविभागं दर्शयन्नाह—आसामित्यादि । आद्ये द्वेइति रक्तयोन्यावस्थे देहे वातादय इति तासां वातादिविभागेन उक्तयोनिव्यापदां वातादयो देहमिति स्वैर्लिङ्गैः पीडयंति तेन वाताद्यहितत्वं तासामुपपन्नं इति भावः । अन्ये तु देहशब्देनात्र योनिस्थानमेवोच्यत इत्याहुः ॥ ३६—३९ ॥

स्नेहनस्वेदवस्त्यादि वातलास्वनिलापहम्।
कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च ॥ ४० ॥
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्विचक्षणः।
सन्निपाते विमिश्रं तु संसृष्टासु च कारयेत् ॥४१॥
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत्पुनः।
पाणिना नामयेज्जिह्मां संवृतां वर्धयेत्पुनः ॥ ४२ ॥
प्रवेशयेन्निःसृतां च विवृतां परिवर्तयेत्।
योनिः स्थानापवृत्ता हि शल्यभूता स्त्रिया मता ॥
सर्वां व्यापन्नयोनिं तु कर्मभिर्वमनादिभिः।
मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ॥४४॥
सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते।
वातव्याधिहरं कर्म वातार्तानां सदा हितम् ॥४५॥
औदकानूपजैर्मांसैः क्षीरैः सतिलतण्डुलैः।
सवातघ्नौषधैर्नाडीकुम्भीस्वेदैरुपाचरेत् ॥ ४६ ॥
युक्तां लवणतैलेन साश्मप्रस्तरसङ्करैः।
स्विन्नां कोष्णाम्बुसिक्ताङ्गीं वातघ्नैर्भोजयेद्रसैः ४७

लिङ्गानन्तरं चिकित्सामाह—स्नेहनेत्यादि। स्नेहनादीनां अनिलापहत्वे सिद्धेऽपि अनिलापहमिति विशेषेण अनिलापहद्रव्यकृतस्नेहनादिप्रतिपादनार्थं। संसृष्टासु इति द्वन्द्वजासु। स्थापनप्रकारमाह। स्निग्धस्विन्नामिति सर्वत्रानुवर्तते। जिम्हामिति वक्रां विवृतामिति विवृत्तमुखां परिवर्तयेदिति परितो वर्तनेन संवृतां कुर्यात्। पञ्चभिरितिपदं सकलकर्मणां मृदुतया कर्तव्योपदर्शनार्थम्। अत्र च वमनादीनां सर्वदेहोपकारकतया योनिगतरोगहरणेऽपि सामर्थ्य भवत्येवेति ज्ञेयम् शेषकर्मेति वक्ष्यमाणं ॥ ४०—४७ ॥

बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत्।
स्थिरापयस्याजीवन्तीवीरर्षभकजीवकैः ॥४८ ॥
श्रावणीपिप्पलीमुद्गपीलुमाषाख्यपर्णिभिः।
शर्कराक्षीरकाकोलीकाकनासाभिरेव च ॥ ४९ ॥
पिष्टैश्चतुर्गुणक्षीरसिद्धं पेयं यथाबलम्।
वातपित्तकृतान्रोगान्हत्वा गर्भं दधाति तत् ५०
काश्मर्यत्रिफलाद्राक्षाकासमर्दपरूषकैः।
पुनर्नवाहरिद्राभ्यां काकनासासहाचरैः ॥ ५१ ॥
शतावर्या गुडूच्याश्च प्रस्थमक्षसमैर्घृतात्।
साधितं योनिवातघ्नं गर्भदं परमं पिबेत् ॥ ५२ ॥
पिप्पल्यः कुञ्चिकाजाजी वृषकं सैन्धवं वचाम्।
यवक्षाराजमोदे च शर्करां चित्रकं तथा ॥ ५३ ॥
पिष्ट्वा सर्पिषि भृष्टानि पाययेत प्रसन्नया।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ५४ ॥
वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम्।
पिबेत्सलवणैर्मद्यैः पिप्पलीकुञ्चिके तथा ॥ ५५ ॥
रास्नाश्वदंष्ट्रावृषकैः पिबेच्छूले पयः शृतम्।
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचयेत् ॥ ५६ ॥
सैन्धवं तगरं कुष्ठं बृहती देवदारु च।
समांशैः साधितं कल्कैस्तैलं धार्यं रुजापहम् ५७॥
गुडूचीमालतीरास्नाबलामधुकचित्रकैः।
निदिग्धिकादेवदारुयूथिकाभिश्च कार्षिकैः ॥ ५८ ॥
तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत्।
वातार्तानां च योनीनां सेकाभ्यङ्गपिचुक्रियाः ५९॥
वातार्तायाः पिचुं दद्याद्योनौ च प्रणयेत्सदा।
हिंस्राकल्कं तु वातार्ता कोष्णमभ्यज्य धारयेत् ॥
पञ्चवल्कस्य पित्तार्ता श्यामादीनां कफातुरा।
पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥६१
शीताः पित्तहराः कार्याः स्नेहनार्थं घृतानि च।
पित्तघ्नौषधसिद्धानि कार्याणि भिषजा तथा ॥ ६२ ॥

बलाद्रोणद्वयेत्यादौ बलाद्रोणद्वयस्य क्वाथेति बलयोः द्रोणद्वयप्रमाणक्वाथे इति वा उभयथापि द्रोणद्वयमान एव क्वाथो भवति। पयस्यार्कपुष्पी मुद्गपीलुमापाख्यैः पर्णीशब्दः प्रत्येकमभिसंबध्यते। तत्र पीलुपर्णी मोरटा केचित् मूर्वामाहुः। प्रसन्ना मदिराया उपरितनो भागः। शूल इति योनिशूलः। तैलं धार्यमिति पिच्छिलायां योनौ धार्यम्। योनौ च प्रणयेदिति योनावुत्तरवस्तिना प्रवेशयेत्। श्यामादीनामिति रोगभिषग्जितीये श्यामात्रिवृतचतुरंगुलेत्यादिनोक्तानाम् ४८—६२

शतावरीमूलतुलाश्चतस्रः संप्रपीडयेत्।
रसेन क्षीरतुल्येन पचेत्तेन घृताढकम् ॥ ६३ ॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः।
पियालैश्चाक्षकैः पिष्टैर्द्वियष्टिमधुकैः पचेत् ॥ ६४ ॥
सिद्धे शीते च मधुनः पिप्पल्याश्च पलाष्टकम्।
सितादशपलोन्मिश्राल्लिह्यात्पाणितलं ततः।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं च तत् ॥ ६५ ॥
क्षतं क्षयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तं च वीसर्पं हृच्छिरोग्रहम्।
उन्मादायाससन्न्यासं वातपित्तात्मकं जयेत् ॥६६॥

इति बृहच्छतावरीघृतम्।

शतावरीमूलतुला इत्यादौ आर्द्रशतावरीमूलपीडनेन यावद्रसो भवति तेन समं क्षीरघृतं वक्ष्यमाणकल्कैः पाचनीयं। द्वियष्टिमधुकैरिति द्विभागमधुयष्टिकैः किंवा जलस्थलयष्टिमधुकद्वययुक्तैः ॥ ६३—६६ ॥

एवमेव क्षीरसर्पिर्जीवनीयोपसाधितम्।
गर्भदं पित्तलानां च योनीनां स्याद्भिषग्जितम् ६७॥
योन्याः श्लेष्मप्रदुष्टाया वर्तिः संशोधनी हिता।
वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता ॥ ६८ ॥
भावितं पयसार्कस्य माषचूर्णं ससैन्धवम्।
वर्तिः कृता मुहुर्धार्या ततः सेच्या सुखाम्बुना ६९

पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधनी ७०

एवमेवेत्यादौ शतावरीचतुःशतरससमेनेत्यर्थः । क्षीरोत्थितं सर्पिः जीवनीयान्यत्र कल्कः । पयसार्कस्येति अर्कक्षीरेण । सेच्येति परिषिंचनीया प्रदेशिनीतुल्या प्रदेशिन्या अंगुलीसमानपरिणाहेन दैर्घ्येण ॥ ६७—७० ॥

उदुम्बरशलाटूनां द्रोणमब्द्रोणसंयुतम् ।
सपञ्चवल्ककुलकनिम्बमालतिपल्लवम् ॥ ७१ ॥
निशां स्थाप्य जले तस्मिंस्तैलप्रस्थं विपाचयेत् ।
लाक्षाधवपलाशत्वङ्निर्यासैः शाल्मलेन च ॥ ७२
पिष्टैः सिद्धस्य तैलस्य पिचुर्योनौ निधापयेत् ।
सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम् ॥ ७३ ॥
पिच्छिला विवृता कालदुष्टा योनिश्च दारुणा ।
सप्ताहाच्छुध्यति क्षिप्रमपत्यं चापि विन्दति ७४ ॥
उदुम्बरस्य दुग्धेन षट्कृत्वो भावितांस्तिलान् ।
तैलं क्वाथे च तस्यैव सिद्धं धार्यं च पूर्ववत् ॥७५॥
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ।
जम्ब्वाम्रमध्यकासीसलोध्रकट्फलतिन्दुकैः ॥७६॥
सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः ।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ७७ ॥
तैलप्रस्थं पिचुं तस्याद्योनौ च प्रणयेत्ततः ।
कटीपृष्ठत्रिकाभ्यङ्गं स्नेहवस्तिं च दापयेत् ॥ ७८ ॥
पिच्छिला स्राविणी योनिर्विप्लुतोपप्लुता तथा ।
उत्ताना चोन्नता शूना सिध्येत्सस्फोटशूलिनी७९॥
करीरधवनिम्बार्कवेणुकोशाम्रजाम्बवैः ।
जिङ्गिनीवृषमूलानां क्वाथैर्माद्वीकशीधुभिः ॥ ८० ॥
सशुक्तैर्धावनं मिश्रैर्योन्यास्रावविनाशनम् ।
कुर्यात्सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः ॥ ८१ ॥

उदुंबरशलाटूनामित्यादौ पंचवल्कादिसहितानां द्रोणं समागं द्रव्यमानं गृहीतं । निर्यासैरिति पलाशस्यैव निर्यासैः । लाक्षा च- पलाशव्यतिरेकेण भवतीति ज्ञेयम् । सशर्करैः कषायैरिति उदुंबरशलाद्वादिकृतकषायैरेवेत्यर्थः । कालदुष्टा चिरकालदुष्टा । उदुंबरस्य दुग्धेनेति उदुम्बरक्षीरेण क्वाथेन । तस्यैवेति उदुंबरस्य क्वाथेन सौराष्ट्रिका अपरमृत्तिका । अजामूत्रे क्षीरे चेति । अजाक्षीरे प्रत्येकं द्विगुणे । उत्तानेत्युन्नता । करीरो मरुद्रुमः । कोषाम्रः स्वनामख्यातः । जिंगिनी प्रसिद्धा ॥ ७१—८१ ॥

पिप्पल्ययोरजःपथ्याप्रयोगा मधुना हिताः ।
श्लेष्मलायां कटुप्रायाः समूत्रा वस्तयो हिताः ८२
पित्ते समधुरक्षीरा वाते तैलाम्लसंयुताः ।
सन्निपातसमुत्थायाः कर्म साधारणं मतम् ॥८३॥
रक्तयोन्यामसृग्वर्णैरनुबन्धं समीक्ष्य च ।
ततः कुर्याद्यथादोषं रक्तस्थापनमौषधम् ॥ ८४ ॥
तिलचूर्णं दधिघृतं फाणितं शौकरी वसा ।
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम् ॥ ८५ ॥
वराहस्य रसो मेध्यः सकौलत्थोऽनिलाधिके ।
शर्करातैलयष्ट्याह्वनागरैर्वा युतं दधि ॥ ८६ ॥
पयस्योत्पलशालूकविसकालीयकाम्बुजान् ।
सपयःशर्करां क्षौद्रं पैत्तिकेऽसृग्दरे पिबेत् ॥ ८७ ॥

कर्मसाधारणं वातादिजयोनिदोषोक्तं मिलितं त्रिदोषजायां कर्तव्यम् । रक्तयोन्यामित्यादि असृक्वर्णैरनुवन्धं वीक्ष्येति असृक्वर्णविशेषैः दोषानुवंधं परीक्ष्य ॥ ८२—८७॥

पाठाजम्ब्वाम्रयोर्मध्ये शिलोद्भेदं रसाञ्जनम् ।
अम्बष्ठा शाल्मलीवेष्टं समङ्गा वत्सकत्वचम् ॥८८॥
वाह्लीकातिविषे विल्वं मुस्तं लोध्रं सगैरिकम् ।
कट्फलं मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम् ॥८९॥
कट्वङ्गवत्सकानन्तां धातकीं मधुकार्जुनम् ।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ९० ॥
तानि क्षौद्रेण संयोज्य पिबेत्ता तण्डुलाम्बुना ।
अर्शःसु चातिसारेषु रक्तं यच्चोपवेश्यते ॥ ९१ ॥
दोषागन्तुकृता ये च वालानां तांश्च नाशयेत् ।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ॥ ९२ ॥
स्त्रीणां श्यावारुणं यच्च प्रसह्य विनिवर्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ ९३ ॥

इति पुष्यानुगचूर्णम् ।

पाठेत्यादौ अंवष्ठा पाठाभेदः । अन्ये तु पाठाभागद्वयग्रहणार्थं पुनः अंबष्ठेतिपदं वर्णयंति । उक्तं हि "घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते । भागतो द्विगुणं तद्धि ग्रहणीयं मनीषिभि"रिति । शाल्मलीवेष्टनं शाल्मलीवेष्टः । वाह्लीकमिति कुंकुमं । पुष्येणेति पुष्यनक्षत्रें उद्धृत्य । नीलं श्वेतं सपीतकमिति रजोदोषविशेषणम् ॥ ८८—९३ ॥

तण्डुलीयकमूलं च सक्षौद्रं तण्डुलाम्बुना ।
रसाञ्जनं च लाक्षां च छागेन पयसा पिबेत् ॥९४॥
पत्रकल्कौ घृते भृष्टौ राजादनकपित्थयोः ।
पित्तानिलहरौ पैत्ते सर्वथैवास्रपित्तजित् ॥ ९५ ॥
मधूकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु ।
मद्यैर्निम्बगुडूच्यौ तु कफजेऽसृग्दरे पिबेत् ॥ ९६॥
विरेचनं महातिक्तं पित्तजेऽसृग्दरे पिबेत् ।
हितं गर्भपरिस्रावे यच्चोक्तं तच्च कारयेत् ॥ ९७ ॥
काश्मर्यकुटजक्वाथसिद्धमुत्तरवस्तिना ।
रक्तयोन्यरजस्कानां पुत्रघ्न्याश्च हितं घृतम् ॥ ९८ ॥
मृगाजाविवराहासृग्दध्यम्लक्षौद्रसर्पिषा ।
अरजस्का पिबेत्सिद्धं जीवनीयैः पयोऽपि वा ९९

कर्णिन्यचरणाशुष्कयोनिप्राक्चरणासु च ।
कफवाते च दातव्यं तैलमुत्तरवस्तिना ॥ १०० ॥

विरेचनमित्यादौ विरेचनमेव त्रिवृतादि पिबेत् । तथा महातिक्तकं घृतं कुष्ठोक्तं पिबेदिति योज्यम् । गर्भपरिस्रावे यच्चोक्तमिति जातिसूत्रीये गर्भस्रावचिकित्स्यं यदुक्तं तत्कारयेत् । मृगाजावीत्यादौ मृगादीनामसृक्दध्यम्लफलसर्पिषा पिबेदिति योज्यम् । अम्लक्षौद्रसर्पिषेति पाठः तैलमुत्तरवस्तिनेत्यत्र जीवनीयसिद्धं तैलं ॥ ९४—१०० ॥

गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥ १०१ ॥
स्रोतसां शोधनं कण्डूक्लेदशोफहरं च तत् ।
वातघ्नैः शतपाकैस्तु तैलैः प्रागतिचारिणी ॥१०२॥
आस्थाप्या चानुवास्या च स्वेद्याश्चानिलसूदनैः ।
स्नेहद्रव्यैस्तथाहारैरुपनाहैश्च युक्तितः ॥ १०३ ॥
शताह्वायवगोधूमकिण्वकुष्ठप्रियङ्गुभिः ।
बालाखुपर्णिकास्नेहैः संयावा धारणे स्मृताः १०४
वामिन्युपप्लुतानां च स्नेहस्वेदादिकः क्रमः ।
कार्यस्ततः स्नेहपिचुस्ततः संतर्पणं भवेत् ॥ १०५ ॥

गोपित्तेत्यादि दद्यादचरणापहमिति । संयाव उत्करिका । धारणः स्मृत इति धारणकारक इत्यर्थः ॥ १०१—१०५ ॥

शल्लकीजिङ्गिनीजम्बूधवत्वक्पञ्चवल्कलैः ।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥
कर्णिन्यां वर्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ।
वस्तमूत्रकृता धार्या सर्वं च श्लेष्मनुद्धितम् ॥ १०७
त्रैवृतं स्नेहनं स्वेदो ग्राम्यानूपौदका रसाः ।
दशमूलपयोवस्तिश्चोदावर्तानिलार्तिषु ॥ १०८ ॥
त्रैवृतेनानुवास्यैव वस्तिश्चोत्तरसंज्ञितः ।
तदेव च महायोन्यां स्रस्तायां च विधीयते ॥ १०९
वसा ऋक्षवराहाणां घृतं च मधुरैः शृतम् ।
पूरयित्वा महायोनिं बध्नीयात्क्षौमलक्तकैः ॥ ११०

त्रैवृतं स्नेहनमिति । सर्पिस्तैलं वसास्नेहनं । तदेवेति त्रैवृतमेव अनुवासनवस्तिरुत्तरवस्तिषु ॥ १०६—११० ॥

प्रसुप्तां सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेश्य च ।
बध्नीयाद्वेशवारस्य पिण्डेनामूत्रकालतः ॥ १११ ॥
यच्च वातविकाराणां कर्मोक्तं तच्च कारयेत् ।
सर्वव्यापत्सु मतिमान्महायोन्यां विशेषतः ॥११२ ॥
नहि वाताहते योनिर्नारीणां संप्रदुष्यति ।
शमयित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम् ॥ ११३ ॥
मूलकल्कं तु रोहीतात्पाण्डुरे प्रदरे पिबेत् ।
जलेनामलकाद्बीजं कल्कं वा ससितामधुम् ॥ ११४
मधुनामलकं चूर्णं रसं वा लेहयेच्च ताम् ।
न्यग्रोधत्वक्कषायेण लोध्रकल्कं तथा पिबेत् ॥
आस्रावे क्षौमपट्टं वा भावितं तेन धारयेत् ।
प्लक्षत्वक्चूर्णपिण्डं वा धारयेन्मधुना कृतम् ॥११६

आमूत्रकालत इति मूत्रकालपर्यंतं बन्धनं कुर्यात् । सर्वव्यापत्सु वातचिकित्साकरणे हेतुमाह—नहि वाताहत इत्यादि । पाण्डुरेति प्रदरे श्वेतप्रदरे भावितं । तेनेति न्यग्रोधत्वक्कषायेण भावितं ॥ १११—११६ ॥

योन्या स्नेहाक्तया लोध्रप्रियङ्गुमधुकस्य च ।
धार्या मधुयुता वर्तिः कषायाणां च सर्वशः ॥११७
स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ।
सरलागुग्गुलुयवैः सतैलकटुमत्स्यकैः ॥ ११८ ॥
कासीसत्रिफलाकाङ्क्षीसाम्रजम्ब्वास्थिधातकी ।
पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ॥ ११९ ॥
पलाशसर्जजम्बूत्वक्समङ्गामोचधातकी ।
सपिच्छिला परिक्लिन्ना स्तम्भनः कल्क इष्यते १२०
स्तब्धानां कर्कशानां च पिण्डो मार्दवकारकः ।
धारयेद्वेशवारं वा पायसं कृशरां तथा ॥ १२१ ॥
दुर्गन्धीनां कषायः स्यात्तौवरः कल्क एव वा ।
चूर्णं वा सर्वगन्धानां पूतिगन्धापकर्षणम् ॥१२२॥
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ।
अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति ॥ १२३ ॥
पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ।
परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ॥१२४॥

सहजगुणसंपन्ने शुक्रशोणितबीजे अदुष्टे सति गर्भं योषितः विंदंति । जीवोपक्रमणं पूर्वकर्मप्रेरितात् सुयोगाद्भवति । यस्मात् पुरुषस्य शुक्रमप्यत्र कारणं तस्मात् शुक्रस्यापि परीक्षापूर्विकां चिकित्सामाह—पञ्चकर्मेत्यादि । दोषाणां वातादीनां वर्णैर्यदि दुष्टं भवति तदा वातादिवर्णयोगात् वातादिहरैर्भेषजैः उपाचरेदित्यर्थः ॥ ११७—१२४ ॥

भवन्ति चात्र ।

सलिङ्गा व्यापदो योनेः सनिदानचिकित्सिताः ।
उक्ता विस्तरशः सम्यङ्मुनिना तत्त्वदर्शिना ॥१२५
पुनरेवाग्निवेशस्तु पप्रच्छ भिषजां वरम् ।
आत्रेयमुपसङ्गम्य शुक्रदोषास्त्वयानघ ॥ १२६ ॥
रोगाध्याये समुद्दिष्टा ह्यष्टौ पुंसामशेषतः ।
तेषां हेतुं भिषक्श्रेष्ठ दुष्टादुष्टस्य चाकृतिम् ॥ १२७
चिकित्सितं च कार्त्स्न्येन क्लैब्यं यच्च चतुर्विधम् ।
उपद्रवेषु योनीनां प्रदरो यश्च कीर्तितः ॥ १२८ ॥
तेषां निदानं लिङ्गं च चिकित्सां चैव तत्त्वतः ।
समासव्यासभेदेन प्रब्रूहि भिषजांवर ॥ १२९ ॥
तस्मै शुश्रूषमाणाय प्रोवाच मुनिपुङ्गवः ।
"बीजं यस्माद्व्यवायेषु हर्षयोनिसमुत्थितम् ।

शुक्रं पौरुषमित्युक्तं तस्माद्वक्ष्यामि तच्छृणु ॥१३०॥
यथा बीजमकालाम्बुकृमिकीटाग्निदूषितम् ।
न विरोहति संदुष्टं तथा शुक्रं शरीरणाम् ॥ १३१
अतिव्यवायाद्व्यायामादसात्म्यानां च सेवनात्
अकाले वाप्ययोनौ वा मैथुनं न च गच्छतः ॥१३२
रूक्षतिक्तकषायातिलवणाम्लोष्णसेवनात् ।
नारीणामरसज्ञानां स्त्रवणाज्जरया तथा ॥ १३३ ॥
चिन्ताशोकादविस्रम्भाच्छस्त्रक्षाराग्निविभ्रमात्
भयात्क्रोधादतीसाराद्याधिभिः कर्षितस्य च ॥१३४
वेगाघातात्क्षताच्चापि धातूनां संप्रदूषणात् ।
दोषाः पृथक् समस्ता वा प्राप्य रेतोवहाः शिराः
शुक्रं संदूषयन्त्याशु तद्वक्ष्यामि विभागशः ॥१३५॥

अत्रांतरे पुनरेवेत्यादिग्रंथं शुक्रदोषादिलक्षणचिकित्साविधायकं केचित्पठंति तच्चान्ये अन्याय्यं वदन्ति । उपपत्तिं च वर्णयन्ति यत् शुक्रादिदोषाः वाजीकरणेनैव चिकित्सिताः क्लैब्यं च शारीरे एव प्रतिपादितम् प्रदरश्चैवेह योनिव्यापत् चिकित्सिते इति ये तु पठंति ते पूर्वोक्तसंक्षेपस्य विस्तराभिधानादिति वर्णयन्ति । एवमस्यार्थस्य विवादेऽपि काश्मीरादिदेशानुमतत्वात् किंचित् व्याकरणं कुर्म एव । शुक्रगुणोपवर्णने हेतुमाह—बीजं यस्मादित्यादि । यस्मात् बीजभूतं गर्भस्य शुक्रं तस्माद्वक्ष्यामि । व्यवायेषु हर्षयोनिः तस्मादुत्थितं पौरुषमिति पुरुषचिह्नं । शुक्रेणैव हि पुरुष उच्यते । मैथुनं च गच्छत इति उचितमैथुनकाले । मैथुनागमनं शुक्रवेगप्रतीघातादेव दर्शयति—अतिविस्रंभादिति । अतिविश्वासाद्वक्ष्यामीति दुष्टं शुक्रं वक्ष्यामि ॥ १२५-१३५ ॥

फेनिलं तनु रूक्षं च विवर्णं पूति पिच्छिलम् ।
अन्यधातूपसंसृष्टमवसादि तथाष्टमम् ॥ १३६ ॥
फेनिलं तनु रूक्षं च कृच्छ्रेणाल्पं च मारुतात् ।
भवत्युपहतं शुक्रं न तद्गर्भाय कल्पते ॥ १३७ ॥
सनीलमथवा पीतमत्युष्णं पूतिगन्धि च ।
दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् ॥ १३८ ॥
श्लेष्मणा बद्धमार्गं तु भवत्यत्यर्थपिच्छिलम् ।
स्त्रीणामत्यर्थगमनादभिघातात्क्षतादपि ॥ १३९ ॥
शुक्रं प्रवर्तते जन्तोः प्रायेण रुधिरान्वयम् ।
वेगसन्धारणाच्छुक्रं वायुना विहतं पथि ॥ १४० ॥
कृच्छ्रेण याति ग्रथितमवसादि तथाष्टमम् ।
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः ॥
स्निग्धं घनं पिच्छिलं च मधुरं चाविदाहि च ।
रेतः शुद्धं विजानीयाच्छ्वेतं स्फटिकसन्निभम् ॥१४२
वाजीकरणयोगोक्तैरुपयोगैः सुखैर्हितैः ।
रक्तपित्तहरैर्योगैर्योनिव्यापदिकैस्तथा ॥ १४३ ॥
दुष्टं यथा भवेद्रेतस्ततस्ततसमुपाचरेत् ।
घृतं च जीवनीयं यच्च्यवनप्राश एव च ॥ १४४ ॥
गिरिजस्य प्रयोगश्च रेतोदोषानपोहति ।
वातान्विते हिताः शुक्रे निरूहाः सानुवासनाः ॥

रुधिरान्वयमिति रुधिरयुक्तं । शुक्राभिधानप्रसंगात् विशुद्धशुक्रलक्षणमाह—स्निग्धमित्यादि ॥ १३६-१४५ ॥

अभयामलकीयं च पैत्ते शस्तं रसायनम् ।
मागध्यमृतलोहानां त्रिफलाया रसायनम् ॥१४६॥
कफोत्थितं शुक्रदोषं हन्याद्भल्लातकस्य च ।
अन्यधातूपसंसृष्टं शुक्रं वीक्ष्य भिषक् क्रियाम् ॥
यथादोषं प्रयोज्यं स्याद्दोषधातुभिषग्जितम् ।
सर्पिः पयो रसाः शालिर्यवगोधूमषष्टिकाः ॥१४८ ॥
प्रशस्तः शुक्रदोषेषु वस्तिकर्म विशेषतः ।
इत्यष्टशुक्रदोषाणां मुनिनोक्तं चिकित्सितम् ॥ १४९
रेतोदोषोद्भवं क्लैब्यं यस्माच्छुद्ध्यैव सिध्यति ।
ततो वक्ष्यामि ते सम्यगग्निवेश यथातथम् ॥१५०॥

मागध्यमृतेत्यादौ मागधी अमृता । आमलकभल्लातकरसायनमिति अनुवर्तते । शुद्ध्यैवेति एतैः शुद्धैः ॥१४६-१५०॥

बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ।
क्लैब्यं संपद्यते तस्य शृणु सामान्यलक्षणम् ॥ १५१ ॥
सङ्कल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम् ।
न याति लिङ्गशैथिल्यात्कदाचिद्याति वा यदि ॥
श्वासार्तः स्विन्नगात्रश्च मोघसङ्कल्पचेष्टितः ।
म्लानशिश्नश्च निर्बीजः स्यादेतत्क्लैब्यलक्षणम् ।
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ॥ १५३ ॥
शीतरूक्षाल्पसंक्लिष्टविरुद्धाजीर्णभोजनात् ।
शोकचिन्ताभयत्रासात्स्त्रीणां चात्यर्थसेवनात् ॥
अभिचारादविस्रम्भाद्रसादीनां च संक्षयात् ।
वातादीनां च वैषम्यात्तथैवानशनाच्छ्रमात् ॥ १५५

संकल्पेत्यादौ लिङ्गशैथिल्यादिति लिङ्गापगमात् । मोघे संकल्पचेष्टिते यस्य सः । तथा वायोः क्षयात् बीजक्षयानुपपत्तेः । वातादीनां च संक्षयादित्यत्र प्राकृतवातादिक्षयेणैव शुक्रानुत्पादो ज्ञेयः ॥ १५१-१५५ ॥

नारीणामरसज्ञत्वात्पञ्चकर्मापचारतः ।
बीजोपघाताद्भवति पाण्डुवर्णः सुदुर्बलः ॥ १५६ ॥
अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः ।
हृत्पाण्डुरोगतमककामलाश्रमपीडितः ॥ १५७ ॥
छर्द्यतीसारशूलार्तः कासज्वरनिपीडितः ।
बीजोपघातजं क्लैब्यं ध्वजभङ्गकृतं शृणु ॥ १५८ ॥
अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात् ।
अत्यम्बुपानाद्विषमात्पिष्टान्नगुरुभोजनात् ॥१५९॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ।

कन्यानां चैव गमनाद्योनिगमनादपि ॥ १६० ॥
दीर्घरोगां चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गन्धां दुष्टयोनिं च तथैव च परिस्रुताम् ॥ १६१॥
ईदृशीं प्रमदां मोहाद्यो गच्छेत्कामहर्षितः ।
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः ॥ १६२ ॥
अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् ।
काष्ठप्रहारनिष्पेषाच्छूकानां चातिसेवनात् ।
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्तते ॥ १६३ ॥

शूकानां चातिसेवनादिति अतिवृध्यर्थं कृतप्रयोगात् । एतत् पञ्चविधं केचित् ध्वजभङ्गं वदंति । तथोक्तेन वातपित्तकफसन्निपातभेदेन पञ्चविधत्वमित्यर्थः ॥ १५६-१६३ ॥

भवन्ति यानि रूपाणि तस्य वक्ष्याम्यतः परम् ।
श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते ।
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि ॥
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि ।
पुलाकोदकसङ्काशः स्रावः श्यावारुणप्रभः ॥१६५॥
वलयीकुरुते चापि कठिनश्च परिग्रहः ।
ज्वरस्तृष्णा भ्रमो मूर्च्छा च्छर्दिश्चास्योपजायते ॥
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम् ।
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः ॥ १६७॥
वस्तौ वृषणयोर्वापि सीवन्यां वंक्षणेषु च ।
कदाचित्पिच्छिलो वापि पाण्डुस्रावश्च जायते ॥
श्वयथुश्च भवेन्मन्दस्तिमितोल्पपरिस्रवः ।
चिराच्च पाकं व्रजति शीघ्रं वाथ प्रमुच्यते ॥ १६९॥
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च ।
विशीर्यते मणिश्चास्य मेढ्रं मुष्कावथापि च ॥१७०॥
ध्वजभङ्गकृतं क्लैब्यमित्येतत्समुदाहृतम् ।
एवं पञ्चविधं केचिद्ध्वजभङ्गं वदन्त्यपि ॥ १७१ ॥

इति ध्वजभङ्गकृतक्लैब्यम् ।

तत्र श्वयथुर्वेदना मेढ्रे इति वातेन, स्फोटाश्चेति पित्तेन, मांसादिवृद्धिरिति कफेन, ज्वरस्तृष्णेत्यादि रक्तेन, अग्निनेवेति सन्निपातेन ॥ १६४—१७१ ॥

इति ध्वजभङ्गकृतं क्लैब्यम् ॥

क्लैब्यं जरासंभवं हि प्रवक्ष्याम्यथ तच्छृणु ।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ॥ १७२ ॥
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ।
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ॥ १७३ ॥
बलवीर्येन्द्रियाणां च क्रमेणैव परिक्षयात् ।
परिक्षयादायुषश्चाप्यनाहाराच्छ्रमात्क्लमात् ॥१७४
जरासंभवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम् ।
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ॥ १७५
विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते ।
एतज्जरासंभवं हि चतुर्थं क्षयजं शृणु ॥ १७६ ॥

इति जरासंभवक्लैब्यम् ।

वृष्यादिसेविनां न क्षीयते शुक्रमिति दर्शयति । प्रवयसां शुक्रक्षये हेतुमाह—रसादीनामित्यादि । एते च रसक्षयादयो हेतवः बाधकस्वभावादेव भवंति ॥ जघन्येत्यादौ प्रायशः क्षीयते इति वचनात् प्रवयसामपि शुद्धसाराणां ॥१७२-१७६॥

इति जरासंभवक्लैब्यम् ॥

अतीव चिन्तनाच्चैव शोकात्क्रोधाद्भयादपि ।
ईर्ष्योत्कण्ठादथोद्वेगान्सदा विशति यो नरः॥१७७॥
कृशो वा सेवते रूक्षमन्नपानमथौषधम् ।
दुर्बलप्रकृतिश्चैव निराहारो भवेद्यदि ॥ १७८ ॥
असात्म्यभोजनाच्चापि हृदये यो व्यवस्थितः ।
रसः प्रधानधातुर्हि क्षीयेताशु नरस्ततः ॥ १७९ ॥
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ।
शुक्रावसानास्तेभ्यो हि शुक्रं धाम परं मतम्॥१८०॥
चेतसो वातिहर्षेण व्यवायं सेवते तु यः ।
शुक्रं तु क्षीयते तस्य ततः प्राप्नोति स क्षयम् ।
घोरंव्याधिमवाप्नोति मरणं वा स गच्छति ॥१८१॥
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ।
एतन्निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्विधम् ॥ १८२॥
केचित्क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ।
वदन्ति शेफसश्छेदाद्वृषणोत्पाटनेन वा ॥ १८३ ॥

केचिदित्यादौ ध्वजभंगक्षयोद्भवे वक्ष्यमाणविशेषभङ्गक्षयोद्भवे । भेदमुद्भावयति वृषणोत्पाटनेनेत्यन्तेन ॥१७७-१८३॥

मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः ।
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः ।
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ॥ १८४ ॥
तत्र संपूर्णसर्वाङ्गः स भवत्यपुमान् पुमान् ।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात्
चिकित्सितमतस्तूर्ध्वं समासव्यासतः शृणु ।
शुक्रदोषेषु निर्दिष्टं भेषजं यन्मयानघ ।
क्लैब्योपशान्तये कुर्यात्क्षीणक्षतहितं च यत् ॥१८६॥
वस्तयः क्षीरसर्पींषि वृष्ययोगाश्च ये मताः ।
रसायनप्रयोगाश्च सर्वानेतान्प्रयोजयेत् ।
समीक्ष्य देहदोषाग्नीन् बलभेषजकालवित् ॥१८७॥
व्यवायहेतुजं क्लैब्यं यत्स्याद्धेतुविपर्ययात् ।
दैवव्यपाश्रयैश्चैव भेषजैश्चाभिचारजम् ।
समासेनैतदुद्दिष्टं भेषजं क्लैब्यशान्तये ॥ १८८ ॥

मातापित्रोरित्यादिनोच्यते । स पुमान् स्त्रीपुरुषव्यापारकरणासमर्थत्वात् अपुमान् भवति । हेतुजमितिपदं बीजदोषोत्पन्नसहजव्युदासार्थम् । हेतुविपर्ययादिति दोष-

वैपम्यात् दैवव्यपाश्रयेत्यादिना अभिचारादिजक्लैव्यचिकित्सां ब्रूते । अभिचारादिजं च क्लैव्यं दैवव्यपाश्रयचिकित्साभिधानादेव स्वीकर्तव्यम् ॥ १८४—१८८ ॥

विस्तरेण प्रवक्ष्यामि क्लैव्यानां भेषजं पुनः ।
सुस्विन्नस्निग्धगात्रस्य स्नेहयुक्तं विरेचनम् ।
अन्नाशनं ततः कुर्यादथवा स्थापनं पुनः ॥ १८९ ॥
प्रदद्यान्मतिमान्वैद्यस्ततस्तमनुवासयेत् ।
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत्ततः ॥१९०॥
वाजीकरणयोगाश्च पूर्वं ये समुदाहृताः ।
भिषजा ते प्रयोज्याः स्युः क्लैव्ये बीजोपघातजे१९१
ध्वजभङ्गकृतं क्लैव्यं ज्ञात्वा तस्याचरेत्क्रियाम् ।
प्रदेहान्परिषेकांश्च कुर्याद्वा रक्तमोक्षणम् ।
स्नेहपानं च कुर्वीत सस्नेहं वा विरेचनम् ॥ १९२ ॥
अनुवासं ततः कुर्यादथवास्थापनं पुनः ।
व्रणवच्च क्रियाः सर्वास्तत्र कुर्याद्विचक्षणः ॥ १९३ ॥
जरासंभवजे क्लैव्ये क्षयजे चैव कारयेत् ।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥ १९४ ॥
क्षीरसर्पिर्वृष्ययोगा वस्तयश्चैव यापनाः ।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते ।
विस्तरेणैतदुद्दिष्टं क्लैव्यानां भेषजं मया ॥ १९५ ॥

इति क्लैव्यचिकित्सा ।

पलाशैरंडमुस्ताद्यैरिति । तत्र एरंडपत्रादि एरंडमूलत्रिफलादि ग्रन्थे वक्ष्यमाणा मुस्तादिसिद्धौ वक्ष्यमाणाः । वस्तिद्वयेऽप्यत्र बहुवचनं व्यक्तिसद्भावापेक्षया ज्ञेयम् ॥ १८९ ॥ ॥ १९५ ॥

इति क्लैव्यचिकित्सा ।

यः पूर्वमुक्तः प्रदरः शृणु हेत्वादिभिस्तु तम् ।
यात्यर्थं सेवते नारी लवणाम्लगुरूणि च ।
कटून्यथ विदाहीनि स्निग्धानि पिशितानि च १९६
ग्राम्यौदकानि मेध्यानि कृशरं पायसं दधि ।
शुक्तमस्तुसुरादीनि भजन्त्याः कुपितोऽनिलः ॥१९७
रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः शिराः ।
रजोवहाः समाश्रित्य रक्तमादाय तद्रजः ।
यस्माद्विवर्धयत्याशु रक्तपित्तं समारुतम् ॥ १९८ ॥
तस्मादसृक्दरं प्राहुरेतत्तन्त्रविशारदाः ।
रजः प्रदीर्यते यस्मात्प्रदरस्तेन स स्मृतः ॥ १९९ ॥
सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ।
चतुर्विधं व्यासतस्तु वाताद्यैः सन्निपाततः ।
अतःपरं प्रवक्ष्यामि हेत्वाकृतिभिषग्जितम् ॥ २०० ॥
रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्ववत् ।
कुपितः प्रदरं कुर्याल्लिङ्गं तस्य च मे शृणु ॥ २०१ ॥
फेनिलं तनु रूक्षं च श्यावमारुणमेव च ।
किंशुकोदकसङ्काशं सरुजं वाथ नीरुजम् ॥ २०२ ॥
कटीवंक्षणहृत्पार्श्वपृष्ठश्रोणिषु मारुतः ।
कुरुते वेदनां तीव्रामेतद्वातात्मकं विदुः ॥ २०३ ॥
अम्लोष्णलवणक्षारैः पित्तं प्रकुपितं यदा ।
पूर्ववत्प्रदरं कुर्यात्पैत्तिकं लिङ्गतः शृणु ॥ २०४ ॥
सनीलमथवा पीतमत्युष्णमसितं तथा ।
नितान्तरक्तं स्रवति मुहुर्मुहुरथार्तिमत् ॥ २०५ ॥
विदाहरागतृण्मोहज्वरभ्रमसमायुतम् ।
असृग्दरं पैत्तिकं तु श्लैष्मिकं तु प्रवक्ष्यते ॥ २०६ ॥
गुर्वादिभिर्हेतुभिश्च पूर्ववत्कुपितः कफः ।
प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥ २०७ ॥
पिच्छिलं पाण्डुवर्णं च गुरु स्निग्धं च शीतलम् ।
स्रवत्यसृक् श्लेष्मलं च तथा मन्दरुजाकरम् ।
छर्द्यरोचकहृल्लासश्वासकाससमन्वितम् ॥ २०८ ॥
वक्ष्यते क्षीरदोषाणां सामान्यमिह कारणम् ।
यत्तदेव त्रिदोषस्य कारणं प्रदरस्य तु ॥ २०९ ॥

यः पूर्वमुक्तः प्रदरेत्यादौ उपद्रवरूपतया पूर्वमुक्तः प्रदर इति वदंति । किंतु रक्तयोनिचिकित्सिते असृक्दरसंज्ञयैव रक्तयोनिसामान्याच्च निर्दिष्टदोषभेदेन च तत्रैव रक्तयोनिरसृग्दररूपा व्याकृता तेनेह पुनः असृग्दरं लक्षणाभिधानं पूर्वटीकाकृतामपि समानम् । येत्यादिग्रंथं पठंति ते तस्यैवायं प्रभेदः प्रपंचो वा क्रियत इति वर्णयंति । वयं तु भूरिपुस्तकेषु पाठदर्शनादस्य व्याख्यानं कुर्मः । गर्भाशयगता इति गर्भाशयसंबद्धाः । असृक्दरशब्दव्युत्पत्तिमाह—कुपितोऽनिल इति । रक्तं प्रमाणमुत्क्रम्य इति रक्तं प्रमाणाधिकं कृत्वा रक्तमादाय तद्रजो यस्माद्विवर्धयति वृद्धेन रक्तेन योजयित्वा रजो विवर्धयति यस्मात्तस्मात् असृजो मेलकरूपत्वात् अयं व्याधिरसृग्दर इत्युच्यते । प्रदीर्यते इति विस्तारयति असृक् प्रदीर्यते यस्मिन्निति असृक्दर इत्येषां निरुक्तिरप्यत्र बोद्धव्या ॥ १९६—२०९ ॥

त्रिलिङ्गसंयुतं विद्यान्नैकावस्थमसृग्दरम् ।
नारी त्वतिपरिक्लिष्टा यदा प्रक्षीणशोणिता ।
सर्वहेतुसमाचारादतिवृद्धस्तदानिलः ॥ २१० ॥
रक्तमार्गेण सृजति प्रत्यनीककरं कफम् ।
दुर्गन्धं पिच्छिलं पीतं विदग्धं पित्ततेजसा ॥ २११ ॥
वसां मेदश्च यावद्धि समुपादाय वेगवान् ।
सृजत्यपत्यमार्गेण सर्पिर्मज्जवसोपमम् ॥ २१२ ॥
शश्वत्स्रवत्यथास्रावं तृष्णादाहज्वरान्विताम् ।
क्षीणरक्तां दुर्बलां च तामसाध्यां विवर्जयेत् ॥२१३॥
मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्तवं शुद्धमादिशेत् ॥ २१४ ॥
गुञ्जाफलसवर्णं च पद्मालक्तकसन्निभम् ।
इन्द्रगोपकसङ्काशमार्तवं शुद्धमेव तत् ॥ २१५ ॥

योनीनां वातलाद्यानां यदुक्तमिह भेषजम् ।
चतुर्णां प्रदराणां च तत्सर्वं कारयेद्भिषक् ॥ २१६ ॥
रक्तातिसारिणां यच्च तथा शोणितपित्तिनाम् ।
रक्तार्शसां च यत्प्रोक्तं भेषजं तच्च कारयेत् ॥ २१७ ॥
इति प्रदरचिकित्सा ।

नैकावस्थमिति नानावस्थं प्रसंगाल्लक्षणमाह—नारीत्यादि पञ्चरात्रानुबंधीति पञ्चरात्रमनुबध्नातीति पञ्चरात्रानुबंधी द्वादश रात्रकालस्य किं न निर्देशः द्वादशरात्रपर्यंतं गर्भाशयमार्तवस्रप्रवृत्तिरिति ज्ञेयम् । गुञ्जाफलसवर्णमित्यादिना वर्णभेदश्चार्तवे प्रकृतिभेदादेव भवति ॥ २१०–२१७ ॥

अथ स्तन्यदोषचिकित्सा ।

धात्रीस्तनस्तन्यसंपदुक्ता विस्तरतः पुरा ।
स्तन्यसंजननं चैव स्तन्यस्य च विशोधनम् ॥ २१८ ॥
वातादिदुष्टे लिङ्गं च क्षीणस्य च चिकित्सितम् ।
तत्सर्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्तिताः ॥ २१९ ॥
वातादिष्वेव तान्विद्याच्छास्त्रचक्षुर्भिषक्तमः ।
त्रिविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम् ॥

संप्रति प्रदरचिकित्सामभिधाय स्त्रीरोगाभिधानप्रसंगात् अपरमपि स्त्रीरोगं स्तन्यदोषं अभिधित्सुराह—धात्रीस्तनस्तन्येत्यादि । त्रिविधस्तु यतो शिष्या ततो वक्ष्यामीति त्रिविधभेदेषु शिष्येषु मन्दबुद्धिशिष्याणां सुखप्रतिपत्त्यर्थं ॥ ॥ २१८—२२० ॥

अजीर्णासात्म्यविषमविरुद्धात्यर्थभोजनात् ।
लवणाम्लकटुक्षारप्रक्लिन्नानां च सेवनात् २२१ ॥
मनःशरीरसन्तापादस्वप्नान्निशि चिन्तनात् ।
प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च ॥ २२२ ॥
परमान्नं गुडकृतं कृशरं दधि मत्स्यकम् ।
अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च ॥
भुक्त्वा भुक्त्वा दिवास्वप्नान्मद्यस्यातिनिषेवणात् ॥
अनायासादभीघातात्क्रोधाच्चातङ्ककर्शनैः ॥ २२४ ॥
दोषाः क्षीरवहाः प्राप्य शिराः स्तन्यं प्रदूष्य च ।
कुर्युरष्टविधं भूयो दोषांस्तान् मे निबोधत ॥ २२५ ॥
वैरस्यं फेनसङ्घातं रौक्ष्यं चेत्यनिलात्मके ।
पित्ताद्वैवर्ण्यदौर्गन्ध्ये स्नेहपैच्छिल्यगौरवम् ।
कफाद्भवति रूक्षाद्यैरनिलः स्वैः प्रकोपणैः ॥ २२६
क्रुद्धः क्षीराशयं प्राप्य रसं स्तन्यस्य दूषयेत् ।
विरसं वातसंसृष्टं कृशीभवति तत्पिबन् ।
न चास्य स्वदते क्षीरं कृच्छ्रेण च विवर्धते ॥ २२७
तथैव वायुः कुपितः स्तन्यमन्तर्विलोडयन् ।
करोति फेनसङ्घातं तत्तु कृच्छ्रात्प्रवर्तते ॥ २२८ ॥
तेन क्षामस्वरो बालो बद्धविण्मूत्रमारुतः ।
वातिकं शीर्षरोगं वा पीनसं वाधिगच्छति ॥ २२९ ॥
पूर्ववत्कुपितः स्तन्ये स्नेहं शोषयतेऽनिलः ।
रूक्षं तत्पिबतो रौक्ष्याद्बलह्रासश्च जायते ॥ २३० ॥
पित्तमुष्णादिभिः क्रुद्धं स्तन्याशयमभिप्लुतम् ।
करोति स्तन्यवैवर्ण्यं नीलपीतसितादिकम् ॥ २३१ ॥
विवर्णगात्रः स्विन्नः स्यात्तृष्णालुर्भिन्नविट् शिशुः ।
नित्यमुष्णशरीरश्च नाभिनन्दति तत्स्तनम् ॥ २३२ ॥
पूर्ववत्कुपिते पित्ते दौर्गन्ध्यं क्षीरमृच्छति ।
पाण्ड्वामयस्तत्पिबतः कामला च भवेच्छिशोः २३३
क्रुद्धो गुर्वादिभिः श्लेष्मा क्षीराशयगतः स्त्रियः ।
स्नेहान्वितत्वात्तत्क्षीरमतिस्निग्धं करोति तु २३४
छर्दनः कुन्थनस्तेन लालालुर्जायते शिशुः ।
नित्योपदिग्धैः स्रोतोभिर्निद्राक्लमसमन्वितः ।
श्वासकासपरीतस्तु प्रसेकतमकान्वितः ॥ २३५ ॥
अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा ।
लालालुः शूनवक्त्राक्षिर्जडः स्यात्तु पिबन् शिशुः ॥
कफः क्षीराशयगतो गुरुत्वात्क्षीरगौरवम् ।
अतिस्नेहान्वितं पीत्वा बालो हृद्रोगमृच्छति ।
अन्यांश्च विविधान्रोगान्कुर्यात्क्षीरसमाश्रितान् ॥
क्षीरे वातादिभिर्दुष्टे संभवन्ति तदात्मकाः ।
तत्रादौ स्तन्यशुद्ध्यर्थं धात्रीं स्नेहोपपादिताम् ।
संस्वेद्य विधिवद्वैद्यो वमनेनोपपादयेत् ॥ २३८ ॥
वचाप्रियङ्गुयष्ट्याह्वफलवत्सकसर्षपैः ।
कल्कैर्निम्बपटोलानां क्वाथैः सलवणैर्वमेत् ॥ २३९ ॥
सम्यग्वान्तां यथान्यायं कृतसंसर्जनां ततः ।
दोषकालबलापेक्षी स्नेहयित्वा विरेचयेत् ॥ २४० ॥
त्रिवृतामभयां वापि त्रिफलारससंयुताम् ।
पाययेन्मधुसंयुक्तामभयां चापि केवलाम् ।
पाययेन्मूत्रसंयुक्तां विरेकार्थं च शास्त्रवित् ॥ २४१ ॥
अथ सम्यग्विरिक्तां च कृतसंसर्जनां पुनः ।
ततो दोषावशेषघ्नैरन्नपानैरुपाचरेत् ॥ २४२ ॥
शालयो यष्टिका[1] वा स्युः श्यामाका भोजने हिताः ।
प्रियङ्गवः कोरदूषा यवा वेणुयवास्तथा ॥ २४३ ॥
वंशवेत्रकलायाश्च सस्नेहा यूषसंस्कृताः ।
मुद्गान् मसूरान् यूषार्थं कुलत्थांश्च प्रकल्पयेत् २४४
निम्बवेत्राग्रकुलककवार्ताकामलकैः शृतान् ।
सव्योपसैन्धवान्यूषान्दापयेत्स्तन्यशोधनान् २४५
शशान् कपिञ्जलानेणान्संस्कृतांश्च प्रकल्पयेत् ।
शार्ङ्गेष्टासप्तपर्णत्वगश्वगन्धाशृतं जलम् ॥ २४६ ॥
पाययेताथ वा स्तन्यशुद्ध्यै कटुरोहिणीम् ।
अमृतासप्तपर्णत्वक्क्वाथं चैव सनागरम् ॥ २४७ ॥
किराततिक्तकक्वाथं श्लोकपादेरितान् पिबेत् ।
त्रीनेतान्स्तन्यशुद्ध्यर्थमिति सामान्यभेषजम् ।
कीर्तितं स्तन्यदोषाणां पृथगन्यं निबोधत ॥ २४८ ॥

१ शालयो यष्टिका इत्यत्र शष्टिका इति साधु ।

पाययेद्धि रसक्षीरीं द्राक्षामधुकशारिवाः ।
श्लक्ष्णपिष्टां पयस्यां च समालोड्य सुखाम्बुना २४९
पञ्चकोलकुलत्थैश्च पिष्टैरालेपयेत्स्तनौ ।
शुष्कौ प्रक्षाल्य निर्दुह्यात्तथा स्तन्यं विशुध्यति २५०
फेनसङ्घातवत्क्षीरं यस्यास्तां पाययेत च ।
पाठानागरशार्ङ्गेष्टामूर्वाः पिष्ट्वा सुखाम्बुना ॥२५१॥
अञ्जनं तगरं दारु बिल्वमूलं प्रियङ्गवः ।
स्तनयोः पूर्ववत्कार्यं लेपनं क्षीरशोधनम् ॥ २५२ ॥
किराततिक्तकं शुण्ठी सामृता क्वाथयेद्भिषक् ।
तं क्वाथं पाययेद्धात्रीं स्तन्यदोषनिबर्हणम् ॥ २५३ ॥
स्तनौ चालेपयेत्पिष्टैर्यवगोधूमसर्षपैः ।
षड्भिरेकाग्रितीयोक्तैरौषधैः स्तन्यशोधनैः ॥ २५४ ॥

क्वाथं चैव सनागरं इत्यत्र नागरकृत एव क्वाथो ज्ञेयः ॥ ॥ २३१—२५४ ॥

रूक्षक्षीरा पिबेत्क्षीरं तैर्वा सिद्धं घृतं पिबेत् ।
पूर्ववज्जीवकाद्यं च पञ्चमूलं प्रलेपनम् ।
स्तनयोः संविधातव्यं सुखोष्णं स्तन्यशोधनम् २५५
यष्टीमधुकमृद्वीकापयस्याः सिन्धुवारिकाः ।
शीताम्बुना पिबेत्कल्कं क्षीरवैवर्ण्यनाशनम् २५६
द्राक्षामधुककल्केन स्तनौ चास्याः प्रलेपयेत् ।
प्रक्षाल्य वारिणा चैव निर्दुह्यात्तौ पुनःपुनः ॥२५७॥
विषाणिकाजशृङ्गी च त्रिफलां रजनीं वचाम् ।
पिबेत्क्षीराम्बुना पिष्ट्वा क्षीरदौर्गन्ध्यनाशनम् २५८
लिह्याद्वाप्यभयाचूर्णं सव्योषं माक्षिकप्लुतम् ।
क्षीरदौर्गन्ध्यनाशार्थं धात्री पथ्याशिनी तथा २५९
शारिवोशीरमञ्जिष्ठाश्लेष्मातकसचन्दनैः ।
पत्राम्बुचन्दनोशीरैः स्तनौ चास्याः प्रलेपयेत् २६०
स्निग्धक्षीरा दारुमुस्तपाठाः पिष्ट्वा सुखाम्बुना ।
पीत्वा ससैन्धवाः क्षिप्रं क्षीरशुद्धिमवाप्नुयात् २६१
पाययेत्पिच्छिलक्षीरां शार्ङ्गेष्टामभयां वचाम् ।
मुस्तनागरपाठाश्च पीताः स्तन्यविशोधनाः ॥२६२॥
तक्रारिष्टमपि पिबेदर्शसां यन्निदर्शितम् ।
विदारीबिल्वमधुकैः स्तनौ चास्याः प्रलेपयेत् २६३
त्रायमाणामृतानिम्बपटोलत्रिफला शृतम् ।
गुरुक्षीरा पिबेदेतत्स्तन्यदोषविशुद्धये ॥ २६४॥
पिबेद्वा पिप्पलीमूलचव्यचित्रकनागरम् ।
बलानागरशार्ङ्गेष्टामूर्वाभिर्लेपयेत्स्तनौ ।
पृश्निपर्णीपयस्याभ्यां स्तनौ चास्याः प्रलेपयेत् २६५
अष्टावेते क्षीरदोषा हेतुलक्षणभेषजैः ।
निर्दिष्टाः क्षीरदोषोत्थास्तथोक्ताः केचिदामयाः २६६
दोषदूष्यमलाश्चैव महतां व्याधयश्च ये ।
त एव सर्वे बालानां मात्रा त्वल्पतरा मता ॥ २६७

पूर्ववत् जीविकाद्यमित्यत्र जीवकाद्यं जीवनीयं । एवं दुष्टक्षीरे उत्पन्नवातविकाराणां रूपं दर्शयित्वा यथाकर्तव्यं भेषजमाह ॥ दोषा वातादयः । दूष्याणि रक्तादीनि । मलमूत्रस्वेदादयः । एते दोषादयो महतामिव बालानामपि भवंति । किंतु तेषां दोषादीनां मात्रा तु अल्पतरा इति विशेषः । तेन दोषादिमात्रापेक्षया भेषजमात्राप्यल्पा भवतीति भावः ॥ २५५—२६७ ॥

निवृत्तिर्वमनादीनां मृदुत्वं परतन्त्रता ।
वाक्चेष्टयोरसामर्थ्यं वीक्ष्य बालेषु शास्त्रवित् ।
भेषजं चाल्पमात्रं तु यथाव्याधि प्रयोजयेत् २६८
मधुराणि कषायाणि क्षीरवन्ति मृदूनि च ।
प्रयोजयेद्भिषग्बाले मतिमानप्रमादतः ॥ २६९ ॥
अत्यर्थस्निग्धरूक्षोष्णमम्लं कटु विपाकि च ।
गुरु चौषधपानान्नमेतद्बालेषु गर्हितम् ॥ २७० ॥
समासात्सर्वरोगाणामेतद् बालेषु भेषजम् ।
निर्दिष्टं शास्त्रविद्वैद्यः प्रविविच्य प्रयोजयेत् २७१

इति स्तन्यदोषबालरोगौ ।

निवृत्तिर्वमनादीनामित्यादि द्विविधा बाला भवंति स्वतंत्रवृत्तयः परतंत्रवृत्तयश्च । तत्र परतंत्रवतां बालानां वमनादीनां निवृत्तिः कर्तव्या वाक्चेष्टयोश्च बालकस्य सामर्थ्यं वीक्ष्य स्वतंत्राणां वमनादीनां मृदुत्वं । शास्त्रविद्वैद्यः प्रयोजयेत् । तथा संशमनमपि भेषजं अल्पमात्रं यथाव्याधि प्रयोजयेत् । किंवा बालेषु मृदुतां परतंत्रतां च वीक्ष्य वमनादीनां निवृत्तिर्विधातव्या । वाक्चेष्टयोश्च बालेषु सामर्थ्यं वीक्ष्य संशमनं भेषजमल्पमात्रं यथाव्याधि प्रयोजयेदिति योजनीयम् । मधुराणीत्यादिना बालेषु कर्तव्यं भेषजमाह—अत्यर्थमित्यादि । बालेषु निषिद्धमेषजमाह—शास्त्रविद्वैद्यः प्रविविच्य निर्दिष्टं प्रयोजयेदिति ॥ २६८—२७१ ॥

इति स्तन्यदोषबालरोगौ ॥

सलिङ्गव्यापदो योनेः सनिदानचिकित्सिताः ।
उक्ता विस्तरशः सम्यग्मुनिना तत्त्वदर्शिना ॥ २७२
इति सर्वविकाराणामुक्तमेतच्चिकित्सितम् ।
स्थानमेतद्धि तन्त्रस्य रहस्यं सारमुत्तमम् २७३

सर्वविकाराणां चिकित्सास्थानोक्तं उपसंगृह्णाति । सर्वविकाराणामिति वचनेन अनुक्तानामपि विकाराणामेतत् चिकित्साबीजसूत्रमिति दर्शयति । रहस्यपदेन न कस्मैचित् पापिष्ठाय प्रकाशनीयमिति द्योतयति ॥ २७२ ॥ २७३ ॥

अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च ।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते ॥ २७४ ॥
तानेतान् कापिलबलः शेषान् दृढबलोऽकरोत् ।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम् ॥२७५॥

**रोगा येऽप्यत्र नोद्दिष्टा बहुत्वान्नामरूपतः ।**
**तेषामप्येतदेव स्याद्दोषादीन् वीक्ष्य भेषजम्॥२७६॥**

संप्रति दृढबलः स्वकीयस्थानविषयं दर्शयन्नाह—अस्मिन्नित्यादि । सप्तदशाध्याया इति चिकित्सास्थाने सप्तदशाध्यायांते यक्ष्मचिकित्सितांतां अष्टौ अध्यायाः तथा अतीसारविसर्पाद्विव्रणीयमदात्ययोक्ताः परिशिष्टसंस्कारस्य दृष्ट्वा अतिशयसंपादकत्वादात्मनो निर्दिष्टा विषयमेव दर्शयन्नाह—तत्र दृश्यमित्यादि । संप्रति उक्तानुक्तरोगचिकित्सातिदेशार्थमाह—रोगा येऽप्यत्रेत्यादि । तच्चिकित्सास्थानोक्तं भेषजं तदेव हि भेषजं नामरूपादिना विशेषेणायुक्तानां सामान्यतश्च वातादिजन्यतया दोषानपेक्ष्य तथायुक्तं सत् भेषजं भवतीत्यर्थः ॥ २७४—२७६ ॥

**दोषदूष्यनिदानानां विपरीतं हितं ध्रुवम् ।**
**उक्तानुक्तान् गदान् सर्वान् सम्यग् युक्तं नियच्छति**

दोषादीनिति दोषदूष्यनिदानानि अग्रे वक्ष्यमाणानि किंवा दोषभेषजदेशकालशरीरसत्त्वप्रकृतिवयांसि सूत्रस्थानोक्तानि अथ कथमेतद्भेषजं अनुक्तानां गदानां भेषजं भवतीत्याह—दोषदूष्येत्यादि । दोषा वातादयः दूष्याणि रक्तादीनि निदानानि रूक्षादीनि एषां विपरीतं भेषजं हितमिति । ततः सम्यक् युक्तं सत् उक्तानुक्तगदान् ध्रुवं नियच्छति । उक्तानि नामरूपादीनि अनुक्तानि नामरूपादिविशेषेण अनुक्ताः ये । एतेन यदेव दोषादिविपरीततया प्रतिपादितं भेषजं तदेव अनुक्तानां गदानां दोषादिसमत्वं बुध्वा भेषजं योज्यमिति ज्ञेयम् । यद्यपि च निदानविपरीतं भेषजं तद्दोषविपरीतेनैव गृहीतुं पार्यते । यतो निदानेषु दोषप्रकोपः क्रियते । तस्यच दोषाद्विपरीतं यत् यथा रूक्षनिदानवृद्धे वायौ रूक्षस्य विपरीता स्नेहाः स निदानविपरीत एव तथापि दोषस्यैव वैपरीत्येन भेषजप्रयोगोपदर्शनार्थम् । निदानविपरीतोपादानमिह यथायथं संयोजनीयम् । औषधैरित्यादिना औषधं संस्कृतमनुपयुज्यते अलघु लघु वा तत्संभुक्तशब्देनोच्यते । ये तु ग्रासे ग्रासांतर इति पठंति तेन ग्रासे ग्रासांतरे च भैषज्योपयोगेन कालद्वयमाहुः । संयुतामिति पदं संभोज्यमित्यस्यैव विशेषणं वर्णयंति । भुक्तमिति ॥ तुपदं सर्वान्नकालेऽपि योजनीयं भेषजविशेषणमिति व्याख्यानयंति ॥ २७७ ॥

**देशकालप्रमाणानां सात्म्यासात्म्यस्य चैव हि ।**
**सम्यक्योगोऽन्यथात्वेषां पथ्यमप्यन्यथा भवेत् ॥**
**आस्यादामाशयस्थान् हि रोगान् नस्तःशिरोगतान्**
**गुदात्पक्वाशयस्थांश्च हन्त्याशु द्रवमौषधम् ॥ २७९**

इदानीं तद्दोषादिभिः तत्रास्यौषधकालो दशविधः । प्रमाणमौषधस्य त्रिविधमल्पं बहु समं च । समं च द्विविधं देशशरीरयोः । ......कालगृहीतपक्षसव्यपेक्ष्य सम्यग्योगेनैव कृतम् । असात्म्यं उक्तसात्म्यविपरीतं सम्यग्योगो यथावत् प्रयोगः विपर्यये दोषमाह । अन्यथा खेषां पथ्यमपि अन्यथा भवेत् । एषां दोषादीनां......भेषजं दोषादिविपरीतमपि अन्यथेति अपथ्यं भवति । यानि चापराणि बलसत्वादीनि दशविधदोषाद्यंतरगतानि नेहोक्तानि तानि दोषादिष्वंतर्भवनीयानि।......उदाहरणमाह—आस्यादित्यादि । आस्यादित्यादौ तृतीयास्थाने पंचमी । तेन आस्येन दत्तमौषधं वमनाद्यामाशयस्थान् गदानाशुतरा निहंति ॥ २७८ ॥ २७९ ॥

**शरीरावयवोत्थेषु वीसर्पपिडकादिषु ।**
**यथादेशं प्रदेहादि शमनं स्याद्विशेषतः ॥ २८० ॥**

एवं नासिकया दत्तमौषधं शिरोगतान्निहंति । गुदेन दत्तमौषधं ......योगे देशापेक्षामाह—शरीरावयवेष्वित्यादि । यथादेशमिति व्याधेर्देशे प्रदेहादीति । प्रदेहपरिषेकोपनाहनादि देशसामर्थ्यकालमपेक्ष्य देयानीति । सोदाहरणं कालविभागपूर्वकमाह ॥......यदि वायुः सर्वात्मना...... तदा तस्य वायोः यद् विपरीतं तैलं तत्कर्तव्यम् । यदानुशीतेन वायुर्वृद्धः तदा सर्वात्मना वातविपरीतं तैलमुत्सृज्य यदेव शीत......हितं वातस्य शैत्यं तस्यैवंगुणस्य प्रशमाय हेतुविपरीतमुष्णं भेषजं........चोक्तं 'शीतेनोष्णकृतान् रोगान् शमयंति भिषग्विद' इत्यादि । इह तु दोषादीनां व्यस्तसमस्तानां ग्रहणात् दोषदूष्यसमुदायात्मा व्याधिरपि लभ्यते तेन व्याधिविपरीतमपि भेषजमविरुद्धम् । विपरीत......मुच्यते न विपरीतगुणमात्रं तेन विपर्ययस्तार्थकारिणामपि भेषजानां ग्रहणं भवति । यत्तु समानमेव क्षीणानां दोषाणां धातूनां वा भेषजं भवति तद्दोषादिक्षयस्य व्याधिवृद्धिजनकत्वात् तद्विपरीतमेव भवेत् । तत्र...... इति कर्तव्या । किंतु तत्क्षयस्ते नक्षये दोषादिसमानमेव विपरीतमिति न कश्चिद्दोषः ॥ २८० ॥

**दीनातुरौषधव्याधिजीर्णलिङ्गान्यवेक्षणम् ।**
**कालं विद्याद्दिनापेक्षः पूर्वाह्णे वमनं यथा ॥ २८१ ॥**

औषधापेक्षं कालमभिधाय व्याध्यपेक्षं कालमाह......... उत्सर्गविधिना ज्वरादारभ्य षडहे षडहे यथाक्रमं देयमिति उच्यते । षडहादिक्रमे पेयादिदानं न विरोधमावहति । सामान्यविधिर्विशेषविधिं न बाधते तस्य सर्वत्रैव अनुलंघनीयत्वात् ।........लक्षणशब्दः संबध्यते ।.........तत्र दिनापेक्षादिकालान् क्रमादुदाहरति । दिनापेक्षः रोग्यपेक्षेति रोगिणो विशेषेण बलवत्त्वमबलत्त्वं चापेक्ष्य भवतीत्यर्थः । औषधमुपयुज्यापि उपेक्षणं अभुंजानः औषधं ॥ २८१ ॥

**रोग्यवेक्ष्य यथा प्रातर्निरन्नो बलवान् पिबेत् ।**
**भेषजं लघुपथ्यान्नैर्युक्तमद्यात्तु दुर्बलः ॥ २८२ ॥**

भैषज्यकालो भक्तादौ मध्ये पश्चान्मुहुर्मुहुः ।
सामुद्गं भक्तसंभुक्तं ग्रासेग्रासान्तरे दश ॥ २८३ ॥

भैषज्यकाला इत्यादि । अत्र भक्तादाविलनेन कालद्वयमुच्यते । यथा प्रातर्निर्दिष्टं तथा प्रातर्भोजनं च तथा पश्चादिलनेन च कालद्वयं प्रातर्भोजनोत्तरं । अपरस्तु सायंभोजनोत्तरम् । कालं च ......भुक्तं तु यदर्धं भुक्त्वा उपयुज्यते पश्चात्पुनरर्धं भुज्यते । मुहुर्भुक्तं नाम यद्भोजनसमये प्रतिक्षणं योज्यम् । सामुद्गं नाम यदन्नस्य आदावन्ते च समुद्गवत् आचरणं तत्सामुद्गमभिधीयते । भुक्तमिति पदं भुक्त्वा......इत्यादिभिः प्रत्येकं संवध्यते । संभुक्तं नाम यदन्नेन संयोगान्मिश्रितं भुज्यते । ग्रासांतरे तु भुक्तं नाम यत् ग्रासादनुभुज्यते अन्ये तु ग्रासग्रासांतरेति पठंति एकं भेषजकालं अतिभुक्तमिति ।.........कालांतरमभिधाय देशौषधकालपूरणं कुर्वंति अतएव वायौ प्राणे दुष्टे तु ग्रासे ग्रासांतरे इष्यत इति वचनेन आचार्येण एक एव काल उक्तः । तत्र ग्रासस्य ग्रासांतरमध्ये यदौषधं तत् ग्रासांतरमुच्यते भुक्तभुक्तस्य.........उपेक्ष्य ग्रासमपेक्ष्य भोजनमिति बोधनात् गृहीतकालः षड्विधः ॥ २८२ ॥ २८३ ॥

अपाने विगुणे पूर्वं समाने मध्यभोजनम् ।
व्याने तु प्रातरेस्मिन्नुदाने भोजनोत्तरम् ॥ २८४ ॥

एवं व्यवस्थिते अपाने विगुणेत्यादि पुनर्व्याक्रियते । एते च कालाः यद्यपि रोगविशेषविषयतया विहिताः तथा भेषजस्यैवामी अन्नपानादिविधेयस्य काला भवंति । अपानवैगुण्यादयस्तु गदाः इह भेषजविशेषतयोपदर्शनार्थम् । यदौषधं तस्य अर्थात्पूर्वकाल इत्यादि अर्थो बोद्धव्यः । यस्तु व्याध्यपेक्षः कालः स व्याध्यवस्थारूप इह वक्तव्य इति विशेषः । ॥ २८४ ॥

वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्तरिष्यते ।
श्वासकासपिपासासु त्ववचार्यं मुहुर्मुहुः ॥ २८५ ॥
सामुद्गं हिक्किने देयं लघुनान्नेन संयुतम् ।
संभोज्यं त्वौषधं भोज्यैर्विचित्रैररुचौ हितम् ॥२८६॥
ज्वरे पेयाः कषायाश्च क्षीरसर्पिर्विरेचनम् ।
षडहे षडहे देयं कालं वीक्ष्यामयस्य तु ॥ २८७ ॥
क्षुद्वेगमोक्षौ लघुता विशुद्धिर्जीर्णलक्षणम् ।
तदा भेषजमादेयं स्याद्धि दोषवदन्यथा ॥ २८८ ॥
चयादयश्च दोषाणां वर्ज्यं सेव्यं च यत्र यत् ।
ऋतावपेक्ष्यं यत्कर्म पूर्वं सर्वमुदाहृतम् ॥ २८९ ॥

'अथ दोषादिविपरीतं सम्यक् योगेन यद्वदान् नियच्छतीत्युक्तं ततो येन सम्यक् योगेन......तमेव सम्यग्योगमाह—देशकालेत्यादि । येषां तु देशाद्यपेक्षया योगानां उदाहरणानि आचार्येणैव दत्तानि आस्यादामाशयस्थानिलादिना त्रिदोषं च वह्नपीत्यंतेन तत्रेह देशः आतुररूप एवोक्तः भूमिः ॥ २८५—२८९ ॥

उपक्रमाणां करणं प्रतिषेधे च कारणम् ।
व्याख्यातमबलानां सविकल्पानामवेक्षणे ॥ २९० ॥
मुहुर्मुहुश्च रोगाणामवस्था आतुरस्य च ।
अवेक्षमाणस्तु भिषक् चिकित्सायां न मुह्यति २९१
इत्येवं षड्विधं कालमनपेक्ष्य भिषग्जितम् ।
प्रयुक्तमहिताय स्यात्सस्यस्याकालवर्षवत् ॥ २९२ ॥
व्याधीनामृत्वहोरात्रवयसां भोजनस्य तु ।
विशेषो भिद्यते यस्तु कालापेक्षः स उच्यते ॥ २९३
वसन्ते श्लेष्मजा रोगाः शरत्काले तु पित्तजाः ।
वर्षासु वाताजाश्चैव प्रायः प्रादुर्भवन्ति हि ।
निशान्ते दिवसान्ते च वर्षान्ते वातजा गदाः २९४
प्रातः क्षपादौ कफजास्तयोर्मध्ये तु पित्तजाः ।
जीर्णान्ते वातजा रोगा जीर्यमाणे तु पित्तजाः ।
श्लेष्मजा भुक्तमात्रे तु लभन्ते प्रायशो बलम् २९५
नाल्पं हन्त्यौषधं व्याधिं यथापोऽल्पा महानलम् ।
दोषवच्चातिमात्रं स्यात्सस्यस्यात्युदकं यथा ॥२९६॥
संप्रधार्य बलं तस्मादामयस्यौषधस्य च ।
नैवातिबहुलात्यल्पं भैषज्यमवचारयेत् ॥ २९७ ॥
औचित्याद्यस्य यत्सात्म्यं देशस्य पुरुषस्य च ।
अपथ्यमपि नैकान्तात्तत्त्यजंल्लभते सुखम् ॥ २९८ ॥
बाह्लीकाः पह्लवाश्चीनाः शूलीका यवनाः शकाः ।
मांसगोधूममाध्वीकशस्त्रवैश्वानरोचिताः ॥ २९९ ॥
क्षीरसात्म्यास्तथाप्राच्या मत्स्यसात्म्याश्चसैन्धवाः
अश्मकावन्तिकानां तु तैलाज्यं सात्म्यमुच्यते ३००
कन्दमूलफलं सात्म्यं विद्यान्मलयवासिनाम् ।
सात्म्यं दक्षिणतः पेया मन्थश्चोत्तरपश्चिमे ॥ ३०१
मध्यदेशे भवेत्सात्म्यं यवगोधूमगोरसाः ।
तेषां तत्सात्म्ययुक्तानि भैषजान्यवचारयेत् ॥ ३०२
सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बह्वपि ।
योगैरेवं चिकित्सन् हि देशाद्यज्ञोऽपराध्यति ३०३

उक्तप्रयोगैरेव चिकित्सां कुर्वाणो दोषमाह—योगैरेवेत्यादि । दोषादिलनेन दोषादि अज्ञानात् दोषादिविगुणचिकित्साकारकं पुरुषं लक्षयति । अपराध्यतीति नेप्सितं साधयति । देशाद्यज्ञेति चैत्रादिशब्देन बलादीनां वयोबलशरीरप्रकृतिसत्त्वानां ग्रहणं यस्मात् वयोबलादि ॥ ॥ २९०—३०३ ॥

वयोबलशरीरादिभेदा हि बहवो मताः ।
तथान्तः सन्धिमार्गाणां दोषाणां गूढचारिणाम् ॥
भवेत्कदाचित्कार्यापि विरुद्धाभिमता क्रिया ।
अन्तर्गतं गूढपित्तं स्वेदसेकोपनाहनैः ॥ ३०५ ॥

नीयन्ते वहिरुष्णैर्हि तथोष्णं शमयन्ति तम् ।
वाह्यैश्च शीतैः सेकाद्यैरूष्मान्तर्याति पीडितः ॥३०६
सोऽन्तर्गूढं कफं हन्ति शीतं शीतैस्तथा जयेत् ।
श्लक्ष्णपिष्टो घनो लेपश्चन्दनस्यापि दाहकृत् ॥ ३०७
त्वग्गतस्योष्मणो रोधाच्छीतकृच्चान्यथा गुरोः ।
छर्दिघ्ना मक्षिकाविष्ठा मक्षिकैव तु वामयेत् ॥ ३०८
द्रव्येषु स्विन्नदग्धेषु चैव तेष्वेव विक्रिया ।
तस्माद्दोषौषधादीनि परीक्ष्य दश तत्त्वतः ।
कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलैः ॥ ३०९ ॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना ।
क्षीणे मार्गीकृते देहे शेषः सूक्ष्म इवानलः ॥ ३१० ॥
तस्मात्तमनुवध्नीयात्प्रयोगेणानपायिना ।
सिद्ध्यर्थं प्राक् प्रयुक्तस्य सिद्धस्याप्यौषधस्य तु ॥
काठिन्यादूनभावाद्वा दोषोऽन्तः कुपितो महान् ।
पथ्यैर्मृद्वल्पतां नीतो मृदुदोषकरो भवेत् ॥ ३१२ ॥
पथ्यमप्यश्नतस्तस्माद्यो व्याधिरुपजायते ।
ज्ञात्वैवं वृद्धिमभ्यासमथवान्यस्य कारयेत् ॥ ३१३
सात्म्यंस्यादभावाद्वा पथं द्वेष्यत्वमागतम् ।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत्पुनः ॥ ३१४ ॥
मनसोऽर्थानुकूल्याद्धि तुष्टिरूर्जा रुचिर्बलम् ।
सुखोपभोगता च स्याद्व्याधेश्चातो बलक्षयः ३१५
लौल्याद्दोषक्षयाद्व्याधेर्वैधर्म्याच्चापि या रुचिः ।
तासु पथ्योपचारः स्याद्योगेनाद्यं विकल्पयेत् ३१६
विंशतिर्व्यापदो योनेर्निदानं लिङ्गमेव च ।
चिकित्सा चापि निर्दिष्टा शिष्याणां हितकाम्यया ॥
शुक्रदोषास्तथा चाष्टौ निदानाकृतिभेषजैः ।
क्लैव्यान्युक्तानि चत्वारि चत्वारः प्रदरास्तथा ३१८
तेषां निदानं लिङ्गं च भैषज्यं चैव कीर्तितम् ।
क्षीरदोषास्तथा चाष्टौ हेतुलिङ्गभिषग्जितैः ३१९
तेषां चिकित्सा निर्दिष्टा समासव्यासतो मया ।
रेतसो रजसश्चैव कीर्तितं शुद्धिलक्षणम् ॥ ३२० ॥
उक्तानुक्तचिकित्सा च सम्यग्योगस्तथैव च ।
देशादिगुणशंसा च कालः षड्विध एव च ॥३२१॥
देशे देशे च यत्सात्म्यं यथा वैद्योऽपराध्यति ।
चिकित्सा चापि निर्दिष्टा दोषाणां गूढचारिणाम् ॥
यो हि सम्यङ्न जानाति शास्त्रं शास्त्रार्थमेव च ।
न कुर्यात्स क्रियां चित्रमचक्षुरिव चित्रकृत् ३२३

इति योनिव्यापच्चिकित्सितं समाप्तम् ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
चिकित्सितमिदं स्थानं षष्ठं परिसमापितम् ॥३२४॥

इति श्रीचरकसंहितायां चिकित्सितस्थानं समाप्तम् ।

---

# कल्पस्थानम् ।

## प्रथमोऽध्यायः ।

### मदनकल्पः ।

अथातो मदनकल्पं व्याख्यास्याम इति ह स्माह ॥१॥
भगवानात्रेयः ॥ २ ॥

चिकित्सितस्थाने तु तत्र तत्र विहितवमनविरेचनयोः प्रयोगान् विस्तरेणाभिधातुं चिकित्साधिकृतयोगस्थानरूपकल्पस्थानमुच्यते—यद्यपि चिकित्सायां वस्तेरपि प्रतिपादितत्वाद्वस्त्यभिधायकं सिद्धिस्थानमपि चिकित्साऽङ्गतयाऽभिधातव्यम् तथापि पञ्चकर्मणामौत्सर्गिकप्रवृत्तौ वमनविरेचनपूर्विकैव वस्तिकर्मप्रवृत्तिर्भवतीति कृत्वा वमनविरेचनाभिधायकं कल्पस्थानमेव वस्त्यभिधायकसिद्धिस्थानादग्रेऽभिधीयते । वमनविरेचनानां कल्पस्तिष्ठत्यस्मिन्निति कल्पस्थानम् । कल्पाभिधानेऽपि विरेचनस्यौत्सर्गिकप्रवृत्तौ वमनपूर्विकैव प्रवृत्तिर्भवतीति विरेचनाद्वमनस्य पूर्वत्वाद्वमनकल्पा एवाग्रेऽभिधातव्याः । वमनकल्पेष्वपि वमनद्रव्यश्रेष्ठत्वान्मदनफलस्यैवादौ कल्पोऽभिधीयते, श्रेष्ठत्वं च मदनफलस्य, "वमनद्रव्याणां मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्" इत्यनेनाऽत्रैव वक्ष्यति ॥ १ ॥ २ ॥

"अथ खलु वमनविरेचनार्थं मदनफलादित्रिवृतादीनां वमनविरेचनद्रव्यणां सुखोपभोग्यतमैः सहान्यैर्द्रव्यैः विविधैस्तद्योगानां च क्रियाविधैः सुखोपायस्य सम्यगुपकल्पनार्थं कल्पस्थानमुपदेक्ष्यामोऽग्निवेश ॥ ३ ॥

कल्पार्थं दर्शयन्नाह—अथ खल्वित्यादि ।—'अथ' शब्दः प्राक्प्रस्तुते । 'खलु' शब्दः प्रकाशने । वमनविरेचनार्थमिति वमननिमित्तं विरेचननिमित्तं च । वमनविरेचनद्रव्याणामिति मदनफलादित्रिवृदादीनाम् । अन्यैरिति सुरासौवीरकाद्यैः कोविदारादिप्रकारैश्च । अन्यैरित्यस्य विशेषणम्—'सुखोपभोग्यतमैः' इति । अत्र सुखायोपभोगो येषां ते सुखोपभोगाः । तेन, तदात्वसुख उपभोगो येषां ते सुखोपभोगाः । तथाहि तदात्वसुखोपभोगानां कोविदारादीनां ग्रहणं स्यात् । कल्पनार्थमिति यदस्य क्रियया सम्बन्धमदर्शयित्वैव भवितुमकारि, तद्व्याख्यानप्रत्ययनार्थं व्याकरोति,—भेदार्थं विभागार्थं चेत्यर्थ इति । तत्र भेदार्थमिति वमनविरेचनद्रव्यप्रयोगभेदार्थम्, ते च प्रयोगभेदाः 'त्रिंशद्योगशतं मदनफलेषु' इत्यादिकाः । विभागार्थमिति 'अत्र फलपिप्पलीनां द्वौ भागौ कोविदारकषायेण' इत्यादिवक्ष्यमाणद्रव्यविभागार्थम् । उपोद्घातं समाप्य प्रकृतमाह—तद्योगानामिति वमनविरेचन

द्रव्यप्रयोगाणाम् । क्रियाया इति कर्त्तव्यताया विधिः क्रियाविधिः स्वरसादिरूपतया करणानीति यावत् । तस्य क्रियाविधेर्विशेषणम्—'सुखोपायस्य' इति,—सुखार्थः सुखो वा उपायो यस्य स सुखोपायस्तस्य । क्रियाविधेः सम्यगुपकल्पनार्थमिति सम्यगुपदेशार्थम् ॥ ३ ॥

**तत्र दोषहरणमूर्ध्वभागं वमनसंज्ञकमधोभागं विरेचनसंज्ञकम् । उभयं वा शरीरमलविरेचनाद्विरेचनशब्दं लभते ॥ ४ ॥**

वमनविरेचनशब्दार्थं विभजते,—तत्रेत्यादि ।—ऊर्ध्वं मुखेन दोषनिर्हरणं भजत इत्यूर्ध्वभागम् । अधो गुदेन दोषनिर्हरणं भजत इत्यधोभागम् । वमनविरेचनयोरपि कदाचिद्विरेचनसंज्ञां षड्विरेचनशताश्रितीयोक्तां दर्शयन्नाह,—उभयमपीत्यादि ।—न चैवं सति वमनविरेचनवन्निरूहेऽपि विरेचनसंज्ञाप्रसक्तिः संभावनीया, यतः पङ्कजशब्दवदियं विरेचनसंज्ञा वमनविरेचनयोरपि योगरूढ्या वर्तते ॥ ४ ॥

**तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीनि औषधानि स्ववीर्येण हृदयमुपेत्य धमनीरनुसृत्य सम्यक् युत्त्या स्थूलानुस्रोतोभ्यः केवलं शरीरगतं दोषसंघातं आग्नेयत्वात् विष्यन्दयन्ति तैक्ष्ण्यात् विच्छिन्दन्ति ॥**

**स विच्छिन्नः परिप्लवः स्नेहभाविते काये स्नेहाक्तभाजनस्थमिव क्षौद्रमसज्जन्नणुप्रवणभावात् आमाशयमागत्य उदानप्रणुन्नोऽग्निवाय्वात्मकत्वात् ऊर्ध्वभागप्रभावात् औषधस्य ऊर्ध्वं उत्क्षिप्यते । सलिलपृथिव्यात्मकत्वात् अधोभागप्रभावाच्च औषधस्य अधः प्रवर्तते, उभयतश्च उभयगुणत्वात् इति लक्षणोद्देशः ॥ ५ ॥**

सम्प्रति द्वयोरपि वमनविरेचनद्रव्ययोः साधारणोष्णतीक्ष्णत्वादिगुणयोगकृतदोषविष्यन्दनादि—साधारणकार्यदर्शनपूर्वकमग्निवाय्वात्मकत्वादिविशिष्टधर्मयोगादिकृतं विशिष्टं च कार्यं वमनविरेचनं दर्शयन्नाह,—तत्रोष्णेत्यादि ।—उष्णमिति उष्ण वीर्यम् । स्ववीर्येणेति स्वप्रभावेण । धमनीरनुसृत्येति सकलदेहगतधमनीरनुसृत्य, सकलदेहगतधमन्यनुसरणं वीर्येण ज्ञेयम्, न साक्षात् । आग्नेयत्वाद्विष्यन्दयन्तीति विलीनं कुर्वन्तीति । विच्छिन्दन्ति छिन्नं कुर्वन्ति परिप्लव इतस्ततोगच्छन् असजन्निति न क्वचिदपि सङ्गं गच्छन् अणुप्रवणभावादिति अणुत्वात् प्रवणभावाच्च, प्रवणत्वमिह कोष्ठगमनोन्मुखत्वम् अणुत्वं च अणुमार्गसंचारित्वम् । उदानप्रणुन्न इति उदानवायुप्रेरितः अग्निवाय्वात्मकत्वादिति अग्निवायूत्कर्षवत्त्वात् । ऊर्ध्वभागप्रभावादिति ऊर्ध्वभागदोषहरत्वरूपप्रभावात् । एवं सलिलपृथिव्यात्मकत्वमपि व्याख्येयम् । उभयतश्चेति ऊर्ध्वमधश्च क्षिप्यत इत्यर्थः । उभयगुणत्वादिति अग्निवाय्वात्मकत्वात् सलिलपृथिव्यात्मकत्वादूर्ध्वाधोभागप्रभावाच्चेत्यर्थं इति लक्षणोद्देश इति अनन्तरग्रन्थेन वमनविरेचनतद्द्रव्यस्वरूपाभिधानं कृतमित्यर्थः । अत्र च प्रकरणे सामान्येनैव वमनविरेचनद्रव्याणाम् 'आग्नेयत्वाद्विष्यन्दयन्ति' इत्यनेनाग्नेयत्वं प्रतिपादितम्, पुनश्च विशेषेण, 'अग्निवाय्वात्मकत्वाद्' इति पदेन वमनद्रव्यस्याग्न्यात्मकत्वं प्रतिपाद्यते । तेन, सामान्ये विशेषे च वमनद्रव्याणामाग्नेयत्वप्रतिपादनात् प्रकृष्टमाग्नेयत्वं भवति । विरेचनद्रव्याणां तु सामान्योक्ताग्नेयत्वसंबन्धात् विशेषगुणकथनप्रस्तावे च सलिलपृथिव्यात्मकत्वाभिधानाद्वमनद्रव्यापेक्षयाऽपकृष्टमाग्नेयत्वं भवति । तथाहि सुश्रुतेऽपि वमनविरेचनयोरप्याग्नेयत्वम्—"लघुत्वसूक्ष्मतीक्ष्णोष्णविकाशित्वैर्विरेचनम् । वमनं च हरेद्दोषान् प्रकृत्या कृतमन्यथा" इत्यनेन । यच्चात्रोच्यते—वमनं यदि ऊर्ध्वभागहरत्वप्रभावादूर्ध्वयति; तदाऽग्निवाय्वात्मकत्वादिति हेतुवर्णनं न युज्यते । यतः, यत् सोपपत्ति कार्यम्, न तत् प्रभावकृतमिति व्यपदिश्यते । उक्तं हि—"प्रभावोऽचिन्त्य उच्यते" इति । तत्र,—यतः, प्रभावस्यैवेह वमनकार्ये वाय्वग्न्यात्मकगुणतया वाय्वग्न्यात्मकत्वे हेतुरुपदर्श्यते, न तु वाय्वग्न्यात्मकत्वं स्वतन्त्रो वमनहेतुः । तथाहि सति यदन्यदपि वाय्वग्न्यात्मकं ऊर्ध्वभागदोषहरत्वप्रभावरहितम्, तदपि वमनकरं स्यात् । यथा कटुकरसे द्रव्ये तत् स्यात् । तस्मात् प्रभावगुणतयैव हेतुवर्णनं । एवं विरेचनद्रव्येऽपि पूर्वपक्षसिद्धान्तावनुसर्तव्यौ ॥ ५ ॥

**तत्र फलजीमूतकेक्ष्वाकुधामार्गवकृतवेधनानां, श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनां, च नानाविध-देश-काल-संभव-स्वादुरसवीर्यविपाकप्रभावग्रहणानां, देहदोषप्रकृतिवयोबलाग्निभुक्तिसात्म्यरोगावस्थादीनां नानात्मकत्वाच्च, विचित्रगन्धवर्णरसस्पर्शानामुपयोगसुखार्थम् असंख्येयसंयोगानामपि च सतां द्रव्याणाम्, विकल्पमार्गोपदर्शनार्थं षड्विरेचनयोगशतानि व्याख्यास्यामः ॥ ६ ॥**

सम्प्रति कल्पस्थानस्य वक्तव्यतया षड्विरेचनप्रयोगशतान्यनतिसंक्षेपविस्तरप्रयोगोपदर्शनपूर्वकं प्रतिजानीते—'तत्र फल' इत्यादिना "षड्विरेचनयोगशतानि व्याख्यास्यामः" इत्यन्तेन । तत्र कृतवेधनान्तानां विच्छेदपाठे वमनप्रयोगप्रयोज्यत्वम्, श्यामादीनां विरेचनप्रयोगप्रयोज्यत्वं दर्शयति । अत्रैव वमने विरेचने चैकैकेषां तु पुनर्वस्तूनां मदनफलादीनां श्यामादीनां च बहवः प्रयोगा अभिधीयन्ते, न पुनरेकैकमेव द्रव्यं वमनकारकं विरेचनकारकम् । स्वल्पसंख्याप्रयोगेण ग्रहणसुखता वमनविरेचनयोगस्य भवति, कार्यं च सिध्यतीत्याशङ्क्याह,—नानाविध इत्यादि यावद्रोगावस्थादिनानात्वप्रभा-

ववलाञ्चेति । अस्यार्थः—यस्मान्नानाविधदेशकालसंभवाः, नानाविधास्वादाः, नानाविधवीर्याः, नानाविधविपाकाः, नानाविधप्रभावाश्च मदनफलादिका ओषध्यः, तथा तत्संस्कारकाः कोविदारादिका ओषध्य उपलभ्यन्ते, पुरुषाश्च देहदोषप्रकृतिवयोवलाग्निभक्तिसात्म्यरोगावस्थाभिन्ना नानाविधा दृश्यन्ते, तेन नैकद्रव्यं सर्वस्मिन् देहदोषादौ यौगिकं सर्वत्र काले वा प्राप्यते सर्वत्र देशे वा । तस्माद्देहदोषादिना भेदवति पुरुषे वहून्येव द्रव्याणि वहुभिश्च प्रयोगैरुपकल्पितानि यथायोग्यतया यथाप्राप्ति च प्रयोक्तुं शक्यन्ते । अतो वहूनामेव मदनादिद्रव्याणां वहुप्रकारप्रयोगाणामुपन्यासो युक्त इति भावः । ग्रहणादुपलम्भनात् । देहो नाना स्थूलकृशादिभेदेन । भक्तिरिच्छा । 'अवस्था' शब्देनेह रोगावस्थैव ग्राह्या । 'आदि'शब्देनेह सत्वाहारयोर्ग्रहणम् । भूरिविरेचनप्रयोगोपदर्शनप्रयोजनान्तरमप्याह,—विचित्रेत्यादि ।—नानाविधगन्धवर्णरसतयाऽनुपयोगे तत्कालमुत्तरकालं च सुखानुवादार्थं चेत्यर्थः । अथ प्रभेदान्मदनफलादीनां षट्प्रयोगशतानि भवन्ति । येन नाधिक्यं प्रयोगाणामभिधीयत इति शङ्काह,—असंख्येयेत्यादि ।—विकल्पमार्गोपदर्शनार्थमिति अधिकप्रयोगकल्पनार्थमभिधीयते, एतत् षट्प्रयोगशतोपदर्शनं कर्त्तव्याधिकप्रयोगकल्पनामार्गोपदर्शकम् । तेनाऽपरेप्यत्र प्रयोगाः कल्पनीयाः, ग्रन्थे निःशेषप्रयोगानभिधानं प्रयोगाणामसंख्येयत्वेनाशक्यत्वादेव । अनतिविस्तरषट्प्रयोगशताभिधानं मन्दवुद्धिसंव्यवहारार्थमितिभावः । उक्तं ह्यन्यत्र—"एतावन्तो ह्यल्पवुद्धीनां व्यवहाराय वुद्धिमतां च स्वाक्षलण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानाय" इति ॥ ६ ॥

तानि तु द्रव्याणि देशकालगुणभाजनसंपद्वीर्यवलाधानात् क्रियासमर्थतमानि भवन्ति ॥ ७ ॥

त्रिविधः खलु देशो जङ्गलोऽनूपः साधारणश्चेति । तत्र जाङ्गलः पर्याकाशभूयिष्ठः। तरुभिरपि कदरखदिराशनाश्वकर्णधवतिनिशशल्लकीसालसोमवल्कवदरीतिन्दुकाश्वत्थवटामलकीवनगहनः, अनेकशमीककुभशिंशपाप्रायः स्थिरशुष्कपवनवलविधूयमानप्रनृत्यत्तरुणविटपः, प्रततमृगतृष्णाकूपोपगूढस्तनुखरपरुषसिकताशर्करावहुलः लावतित्तिरिचकोरानुप्रचितभूमिभागो वातपित्तवहुलस्थिरकठिनमनुष्यप्रायो जाङ्गलो ज्ञेयः ॥ ८ ॥

अथानूपो हिन्तालतमालनारिकेलकदलीवनगहनः, सरित्समुद्रपर्यन्तप्रायः, शिशिरपवनवहुलो वंजुलवानीरोपशोभिततीराभिः सरिद्भिरुपगतभूमिभागः क्षितिधरनिकुंजोपशोभितो मन्दपवनोनुवीजितक्षितिरुहगहनोऽनेकवनराजीपुष्पितवनगहनभूमिभागः, स्निग्धतरुप्रतानोपगूढोहंसचक्रवाकवलाकानन्दीमुखपुण्डरीककादम्वमद्गुभृङ्गराजशतपत्रमत्तकोकिलमुदिततरुणविटपः; सुकुमारपुरुषः पवनकफप्रायो ज्ञेयः ॥ ९ ॥

अनयोरेव द्वयोर्देशयोर्वीरुद्वनस्पतिवानस्पत्यशकुनिमृगगणयुतः स्थिरसुकुमारवर्णसंहननोपपन्नसाधारणगुणयुक्तपुरुषः साधारणो ज्ञेयः ॥१०॥

तत्र देशे जाङ्गले साधारणे वा यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणे श्मशानचैत्यदेवयजनागारश्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्धकृष्णसुवर्णवर्णमधुरमृत्तिके मृदावफालकृष्टेऽनुपहतेऽन्यैर्वलवत्तरैर्द्रुमैरौषधयो जाताः प्रशस्यन्ते ॥ ११ ॥

सम्प्रति वमनविरेचनद्रव्याणां देशादिसम्पत्त्या गुणोत्कर्षं दर्शयन्नाह,—तानीत्यादि ।—देशादिभिश्चतुर्भिः 'सम्पत्' शब्दः प्रत्येकमभिसंवध्यते । भाजनं भेषजस्य स्थानम् । वीर्यस्य वलं वीर्याधिकत्वमेव । देशादि सम्यक् व्याकुर्वन्नाह तत्र त्रिविध इत्यादि ।—तत्र केचिज्जाङ्गलादिदेशलक्षणग्रन्थं न पठन्ति, तत्तु जनपदोध्वंसनीये पठितमिति कृत्वेहानार्षं वदन्ति । यैस्तु जनपदोध्वंसनीयजाङ्गलादिलक्षणं न पठ्यते तैरत्र पठनीय एवायं ग्रन्थः । यथाकालमिति, यथाकालं शिशिरादिभिः सेविते देशे । श्मशानादिभिः प्रत्येकं 'विरहित' शब्दः संवध्यते । सभा जनमेलकस्थानम् । न फालेन कृष्ट इत्यफालकृष्टे ॥ ७—११ ॥

तत्र यानि कालजातानि उपगतसंपूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्निसलिलपवनजन्तुभिः अनुपहतगन्धवर्णरसस्पर्शप्रभावाणि प्रत्यग्राणि उदीच्यां दिशि स्थितानि तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यं ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानां शरदि त्वक्कन्दक्षीराणि हेमन्ते साराणि पुष्पफलमिति मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः संपूज्य देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् ॥ १२ ॥

तत्र यानि कालजातानीत्यनेनैव कालसम्पदुच्यते, कालजातानीति स्वकालभूतानि । 'उपागतसम्पूर्ण' इत्यादिना 'प्रत्यग्राणि' इत्यन्तेन गुणसम्पदुच्यते । प्रत्यग्राणीति सम्पूर्णगुणतया निष्पन्नानि । तेषां शाखापलाशमित्यादिना कालसम्पदमुक्तां प्रपञ्चयति । शाखाग्रहणेनैव त्वगादीनामपि ग्रहणम् । शीर्णप्ररूढपर्णानामितिच्छेदः । ग्रीष्मे मूलानि शिशिरे चेति कथनेन याम्याग्नेयानि तेषां मूलानि ग्रीष्मे,

यानि सौम्यानि तेषां मूलानि शिशिरे ग्राह्याणीति व्यवस्थां सूचयति, उक्तं ह्यन्यत्र—"सौम्यान्यौषधानि सौम्येषु आददीत, आग्नेयान्याग्नेयेषु" इति । भेषजग्रहणविधानमाह—मङ्गलेत्यादि ।—भाजनसम्पदमाह—अनुरूपेत्यादि ।—अनुरूपगुणवद्भाजनस्थमिति अनुरूपगुणवत्ता च भाजनस्य भेषजसमानगुणतयैव । स्ववच्छन्नादानीति सम्यक्पिहितानि ॥ १२ ॥

**गृहीत्वा चानुरूपगुणवद्भाजने संस्थाप्यागारेषु प्रागुदग्द्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्मवत्सु अग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पादामनभिगमनीयानि स्ववच्छन्नानि शिक्ये चासज्य स्थापयेत् । तत्तानि च यथादोषं प्रयुञ्जीत ॥**

**सुरासौवीरकतुषोदक-मैरेयमेदकधान्याम्लफलाम्लदध्यम्लादिभिर्वाते ॥**

**मृद्वीकामलकमधुकपरूषकफलफाणितक्षीरादिभिश्च पित्ते ॥**

**श्लेष्मणि तु मधुमूत्रकषायादिभिर्भावितानि आलोडितानि च इति उद्देशः ॥**

**तं विस्तरेण द्रव्यदेहदोषसात्म्यादीनि प्रविभज्य व्याख्यास्यामः ॥ १३ ॥**

संक्षेपेण मदनफलादीनां वातादिभेदेन भावनालोडनद्रव्याण्याह—तानि च यथादोषं प्रयुञ्जीतेत्यादि ।—धान्याम्लं काञ्जिकम् । फलाम्लं दाडिमरसादि । श्लेष्मणीत्यादौ 'कषाय'शब्देन श्लेष्महरद्रव्यक्वाथोऽभिप्रेतः । उद्देश इति संक्षेपाभिधानमिति । द्रव्यदेहदोषसात्म्यादीनीत्यत्र 'आदि'शब्देन प्रकृतिबलादीनां ग्रहणम् ॥ १३ ॥

**वमनद्रव्याणां मदनफलानि श्रेष्ठतमानि आचक्षते अनपायित्वात्, तानि वसन्तग्रीष्मयोरन्तरे पुष्याश्वयुग्भ्यां मृगशिरसा वा गृह्णीयात् मैत्रे मुहूर्तकरणे च । यानि पक्वानि हरितानि पाण्डूनि अक्रिमीणि अकुशानि अह्रस्वाणि अजग्धानि तानि प्रमृज्य कुशपुटे बद्ध्वा गोमयेनालिप्य यवतुषमाषशालिकुलत्थमुद्गपर्णीनामन्यतमे निदध्यादष्टरात्रम् । अत ऊर्ध्वं मृदुभूतानि तानि मध्विष्टगन्धानि उद्धृत्य शोषयेत् । सुशुष्काणां फलानां पिप्पलीरुद्धरेत् । तासां घृतदधिमधुपललविमृदितानां पुनः शुष्काणां तासां नवकलशे सुप्रमृष्टवालुकमरजस्कमाकण्ठं पूरयित्वा स्ववच्छन्नं स्वनुगुप्तं शिक्ये आसज्य स्थापयेत् ॥**

**अथ च्छर्दनीयमातुरं द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नं च च्छर्दयेदिति ॥ १४ ॥**

वमनद्रव्याणामित्यादिना मदनफलस्य प्राधान्योपदर्शनपूर्वकं प्रयोगविधिमाह । अनपायित्वादिति वमनद्रव्यान्तरापेक्षयाऽल्पव्यापत्तिकत्वात् । अन्तर इति मध्ये, स च ग्रीष्मवसन्तयोरन्तर्वर्तिकतिपयदिनान्येव मध्यो ज्ञेयः । अश्वयुक् अश्विनी । मैत्रे मुहूर्ते इति शिवभुजगमित्रादीनां मध्ये मित्रदेवताक एवं मैत्रे मुहूर्ते फलानामिति राशीनाम् । मधुवदिष्टगन्धो येषां तानि, यानि मध्विष्टगन्धानि भवन्ति, तानि ग्राह्याणीति दर्शयति । फलपिप्पलीरिति मदनफलमध्यगतानि पिप्पलीसंस्थानि बीजानि । पूर्णं तासामिति 'पूरण'शब्दयोगात्करणे षष्ठी । स्वनुगुप्तमिति कृतरक्षाविधानम् ॥ १४ ॥

**ग्राम्यानूपौदकमांसरसक्षीरदधिमाषतिलशाकादिभिः समुत्क्लेशितश्लेष्माणं व्युषितं जीर्णाहारं पूर्वाह्णे कृतबलिहोममङ्गलप्रायश्चित्तं निरन्नमनतिस्निग्धं यवाग्वा घृतमात्रां च पीतवन्तम्, तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद्वा साधु मन्येत जर्जरीकृत्य यष्टिमधुकषायेण कोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्पीकषायाणामन्यतमेन वा रात्रिमुषितं विमृद्य पूतं मधुसैन्धवयुक्तं सुखोष्णं कृत्वा पूर्णं शरावं मन्त्रेणानेनाभिमन्त्रयेत् ॥ १५ ॥**

द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नमित्यनेन, अभ्यङ्गे क्रियमाणे स्नेहसहचरितस्वेदोपपादनं द्व्यहं त्र्यहं वा विधीयते, "त्र्यहावरं सप्तदिनं परंतु स्निग्धो नरः स्वेदयितव्य इष्टः" इत्यनेन तथाप्रयुज्यमानस्नेहस्य सप्तरात्रं त्रिरात्रं वा प्रकर्ष उच्यते इति न विरोधः । एतच्चाभ्यङ्गस्वेदसहितस्नेहस्वेदकरणं पानस्नेहान्तदिवसमारभ्य क्रियते । तेन, स्नेहपानविश्रामदिनेन समं तदन्तपूरणमभ्यङ्गस्नेहसहितस्वेदप्रयोगस्य भवति । स्नेहपानाच्च यद्विश्रामदिनम्, "एकाहात् परतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत्" इत्यनेनोक्तम्, तथैवेहापि । कफोत्क्लेशकारिभोजनमाह—छर्दयितव्यमित्यादिना । श्व इति परस्मिन्नह्नि । व्युषितमिति रात्रिमतिक्रान्तम् । निरन्नमिति पक्षच्छेदः । अनतिस्निग्धमित्यादिना वमनदिन एव घृतमात्रायुक्तयवागूपानपूर्वकं वमनमनतिस्निग्धपुरुषविषयं ब्रूते अन्ये तु पूर्वदिन एवानतिस्निग्धस्य घृतमात्रां पीतवत एव यवाग्वाः पानमाहुः,—"स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्तते । अथापरेद्युः पूर्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य" इत्यादि सुश्रुतोक्तेः अन्तर्नखमुष्टिमिति अन्तरीकृतनखमुष्टिपरिमाणम्, यावद्वा साधु मन्येत इत्यनेन, मात्रायाः बलदोषादिभेदेनास्थिरत्वमित्याह; यष्टीमधुकस्य कोविदारादिषु विच्छेदपाठ उत्तरप्रयोगेषु कोविदारादेर्यष्टीमधुविरहितस्य ग्रहणार्थः । कोविदारः स्वनामख्यातः, स शरदि पुष्पति कर्बुदारस्तु काञ्चनारः स वसन्ते पुष्पति । नीपः कदम्बः । विदुलो

वेतसः। शणपुष्पी घण्टारवा । सदापुष्पी अर्कपुष्पिका। प्रत्यक्पुष्पी अपामार्गः । रात्रिमुषितं पर्युषितमिति शृत-कषायात् कषायान्तरोपदर्शनं पक्षान्तरम्, किंवा, कषायपान एव शीतकषायविधानमिहोच्यते। चूर्णं शरावमिति मङ्गलार्थं पूर्णकुम्भवत्। पुनः पुनरिति यावत् पित्तागमनं न भवति, तावत् पुनःपुनः कषायं पिबेदित्यर्थः । अन्यत्राप्युक्तम्—"पित्तान्तमिष्टं वमनं विरेकादर्द्धम्" इत्यादि ॥ १५ ॥

ॐब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥१६॥

इत्येवमभिमन्त्र्योदङ्मुखमातुरं पाययेत्। श्लेष्मज्वरगुल्मप्रतिश्यायवन्तं विशेषेण पुनरापित्तागमनात् तेन साधु वमति ॥

हीनवेगं तु पिप्पल्यामलकसर्षपकल्कलवणोष्णोदकैः पुनः पुनः प्रवर्तयेत्, आपित्तदर्शनात् इत्ययं सर्वच्छर्दनयोगविधिः ॥ १७ ॥

वमनाऽयोगकारकहीनवेगप्रवृत्तिप्रतिकारार्थमाह,—हीनवेगमित्यादि।—यद्यपि चोष्णत्वाद्वमनयोगेषु मधुसैन्धवयोगो न भवति, तथापि 'सर्वेषु' इति पदं बाहुल्यार्थं वमनार्थकषाये उष्णे मधुप्रक्षेपविरोधित्वान्न युज्यते, उक्तं हि "मधूष्णमुष्णार्तमथवा" इत्यादि, एवमाशङ्क्य समाधानमाह—न चोष्णविरोधो मधुन इत्यादि।—अविपक्वप्रत्यागमनादित्यनेन, पच्यमानं मधूष्णयुक्तं विरुध्येतेति दर्शयति। दोषाभिहरणाच्चेत्यादि, मधूष्णविरुद्धमपि वमनयोग उष्णे इष्यते, तस्य दोषनिर्हरणादेव न विरोधो भवतीति दर्शयति। एवं वस्तियोगेऽपि मधुन उष्णाविरोधो वर्णनीयः। एतेन, यष्टीमध्वादिनवद्रव्यकृतैर्नवभिः कषायैर्नवयोगाः ॥

फलपिप्पलीनां द्वौ भागावित्यादौ फलपिप्पलीनां भागत्रयं कर्तव्यम्, तत्र भागद्वयं षड्गुणेन कोविदारादिकषायेण क्षारपरिस्रावणविधिवदेकविंशतिवारान् परिस्रावणीयम्। कोविदारादीनां चाष्टानामष्टौ कषायाः पृथक्परिस्रावणे प्रयोक्तव्याः। येन कषायेण च परिस्राव्य फलपिप्पलीभागद्वयं हरीतक्यादिमात्रा तृतीयभागफलपिप्पलीकल्कस्य क्रियते, तेनैव कषायेण मात्रायोगाः, एवमष्टौ हरीतक्यादिमात्रया निर्दिष्टः फलपिप्पलीयोगा भवन्ति । मात्राविकल्पश्च दोषबलादिविकल्पकृतो ज्ञेयः। समानं पूर्वेणेति पूर्वयोगवदिह स्नेहस्वेदाभिमन्त्रणादिविधानं कर्तव्यमित्यर्थः। एवमन्यत्रापि पूर्ववच्छब्दार्थो ज्ञेयः ॥

फलपिप्पल्या क्षीरपाकविधिना साधितं क्षीरं फलपिप्पलीक्षीरम्।—अयमेको योगः। तेनेति फलपिप्पलीसाधितक्षीरेण । तज्जस्येति फलपिप्पलीक्षीरजातस्य दध्नः। उत्तरकमिति सरम्। सन्तानिका क्षीरोपरिस्थस्त्यानो भागः ॥ ॥ १६ ॥ १७ ॥

सर्वेषु तु मधुसैन्धवं कफविलायनच्छेदार्थं वमनेषु विदध्यात्। न चोष्णाविरोधो मधुनश्छर्दनयोगयुक्तस्याविपक्वप्रत्यागमनाद्दोषहरणाच्च ॥ १८ ॥

फलादीनि फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनानि षट्। एते क्षीरयोगचतुष्टयेन घृतयोगेन च समं पञ्च योगा-अध्यायसंग्रहे वक्तव्याः ॥ १८ ॥

फलपिप्पलीनां द्वौ द्वौ भागौ कोविदारादिकषायेण त्रिःसप्तकृत्वः भावयेत् तेन रसेन तृतीयं भागं पिष्ट्वा हरीतकीभिर्बिभीतकैरामलकैर्वा तुल्यं वर्तयेत्। तासामेकां द्वे वा पूर्वोक्तानां कषायाणामन्यतमस्याञ्जलिमात्रेण विमृद्य बलवच्छ्लेष्मप्रसेकग्रन्थिज्वरोदरारुचिषु पाययेदिति समानं पूर्वेण ॥

फलपिप्पलीक्षीरं तेन वा क्षीरयवागूमधोभागे रक्तपित्ते हृद्दाहे च तृषितस्य वा दध्न उत्तरकं कफच्छर्दिस्तमकप्रसेकेषु तस्यैव पयसः शीतस्य सन्तानिकाञ्जलिं पित्ते प्रकुपिते उरःकण्ठहृदये च तनुकफोपदिग्धे इति समानं पूर्वेण ॥

फलपिप्पलीशृतक्षीरान्नवनीतमुत्पन्नं फलादिककल्ककषायसिद्धं कफाभिभूताग्निं विशुष्कदेहं च मात्रया पाययेदिति समानं पूर्वेण ॥

फलपिप्पलीनां फलादिकषायेण त्रिःसप्तकृत्वः परिभावितेन पुष्परजःप्रकाशेन चूर्णेन सरसि बृहत्सरोरुहं सायाह्नेऽवचूर्णयेत्। तद्रात्र्युषितं प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्राकृसरक्षीरयवागूनामन्यतमं सैन्धवगुडफाणितयुक्तमाकण्ठं पीतवन्तमाघ्रापयेत् सुकुमारमुत्क्लिष्टपित्तकफं औषधद्वेषिणमिति समानं पूर्वेण ॥

फलपिप्पलीनां भल्लातकविधिपरिस्रुतं स्वरसं पक्त्वा फाणितेनातन्तुलीभावाल्लेहयेत् ॥ तापशुष्कं वा चूर्णीकृतं जीमूतादिकषायेण पित्ते कफस्थानगते पाययेदिति समानं पूर्वेण ॥ १९ ॥

फलपिप्पलीनां फलादिकषायेणेत्यादिना एकं प्रयोगमाह।—पुष्परजःप्रकाशमिति पुष्पधूलिसदृशम्। हरिद्राभिधानकृशरः हरिद्राकृशरः। भल्लातकविधिस्रुतमिति रसायनोक्तभल्लातकस्नेहग्रहणविधानेन परिस्रुतं स्वरसं पेयम्। फाणितयोगोयमेकः । तदातपशुष्कं चेत्यादिना चूर्णयोगोप्येकः ॥ १९ ॥

फलपिप्पलीचूर्णानि पूर्ववत्कोविदारादीनां पण्णामन्यतमकपायस्तुतानि वर्तिक्रियाः कोविदारादिकपायोपसर्जनाः पेया इति समानं पूर्वेण ॥ २० ॥ २१ ॥

फलपिप्पलीचूर्णानीत्यादौ फलादिपट्कपायभेदेन कृतत्वात् पड्वर्तिप्रयोगा ज्ञेयाः । वर्तिक्रियायां चतुर्गुणेन क्वाथेन शलाकाकारवर्तिः कर्तव्या । अत्रापि च तथा लेहादौ च सामान्योक्तेन मधुप्रक्षेपो युक्तः। तत्रैके मधुनः पाकविरोधान्नानुमन्यन्ते । फलपिप्पलीनामारग्वधेत्यादिना, आरग्वधादिविंशतिद्रव्यक्वाथभेदेन कृतत्वाद्विंशतिर्लेहा ज्ञेयाः । वृक्षकः कुटजः । स्वादुकण्टको विकङ्कतः । शार्ङ्गेष्टा गुञ्जा । सुपवी कारवेल्लकम् । द्वीपिका हिंस्रा, कण्टकारीत्यन्ये ॥ ॥ २० ॥ २१ ॥

फलपिप्पलीपु आरग्वधकुटजस्वादुकण्टकपाठापाटलिशार्ङ्गेष्टामूर्वासप्तपर्णनक्तमालपिचुमर्दपटोल-सुपवी-गुडूचीसोमवल्कदीपिकानां पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेराणां च अन्यतमकपायेण सिद्धो लेह इति समानं पूर्वेण ॥

फलपिप्पलीपु एलाहरेणुकाशतपुष्पाकुस्तुम्बुरुतगरकुष्ठत्वक्चोरकमरुवकगुग्गलु-वालुकश्रीवेष्टकपरिपेलवमांसीशैलेयकस्थौणेयकसरलपारावतपद्यशोकरोहिणीनां विंशतेरन्यतमस्य कपायेण साधितोत्कारिकाकल्पेन यथा मोदको वा मोदककल्पेन यथादोपरोगविभक्तिप्रयोज्या इति समानं पूर्वेण ॥ २२ ॥

फलपिप्पलीष्वित्यादिनोत्कारिका मोदकाश्च प्रत्येकं विंशतिः । चोरको गन्धद्रव्यं स्वनामख्यातम् । परिपेलवं कैवर्तमुस्तकम् । स्थौणेयको ग्रन्थिपर्णकम् । पारावतपदी ज्योतिष्मती । अशोकरोहिणी अशोकसदृशपलाशलता, कटुरोहिणीत्यन्ये । केचिदत्र स्थौणेयकं परित्यज्याऽपाकोपाद्या विंशतिं पूरयन्ति, अपाकीपादी स्वनामख्याता । उत्कारिका कल्पेनेति सूदशास्त्रोक्तोत्कारिकाविधानेन ॥ २२ ॥

फलपिप्पलीस्वरसकषायपरिभावितानि तिलशालितण्डुलपिष्टानि तत्कषायोपसर्जनानि शष्कुलीकल्पेन वापूपा इति समानं पूर्वेण ॥ २३ ॥

एतेनैव च कल्पेन सुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासकक्षवकफणिज्जकशृङ्गवेरभूस्तृणककासमर्दभृङ्गराजानामिक्षुवालिकेक्षुकाण्डेक्षूणां चान्यतमस्य कषायेण कारयेत् ॥ २४ ॥

फलपिप्पलीस्वरसेनेत्यादिना, एतेनैव च कल्पेनेत्यादिना च सुमुखादिपञ्चदशद्रव्यकषायेण पृथक् शष्कुल्यपूपयोः कारणात् पञ्चदश योगा भवन्ति । एवं मिलित्वा शष्कुलीपूपयोः पृथक् पोडशयोगा भवन्ति । पोटा इक्षुगन्धा- दाण्डेरका गुन्द्राख्यगुल्मः, नलो वा ॥ २३ ॥ २४ ॥

यथा वदरखाण्डवरागलेहमोदकोत्कारिकातर्पणपानक-मांसरसयूप-मद्यानि मदनफलकषायैस्तानि तैनोपसंसृज्य यथादोपरोगविभक्तिदद्यात्तैः साधु वमतीति ॥ २५ ॥"

तत्र श्लोकाः ।

मदनः करहाटश्च राठः पिण्डीतकः फलम् ।
श्वसनश्चेति पर्यायैरुच्यते तस्य कल्पना ॥
नव योगाः कषायेषु वर्तिष्वष्टौ पयोमुखे ।
पञ्च फाणितचूर्णे द्वौ ज्ञेये वर्तिक्रियासु पट् ॥२६॥
विंशतिर्विंशतिर्लेहमोदकोत्कारिकासु च ।
शष्कुलीपूपयोश्चोक्ता योगाः पोडश पोडश ॥
दशान्ये खाण्डवाद्येषु त्रयस्त्रिंशदिदं शतम् ।
योगानां विधिवद्दृष्टं फलकल्पे महर्षिणा ॥ २७ ॥

इति चरकसंहितायां कल्पस्थाने प्रथमोऽध्यायः ॥ १ ॥

तथा वदरपाडवेत्यादिना दशयोगाः वदरकृतपाडवो वदरपाडवः । मदनस्य व्यवहारार्थं पर्यायानाह—मदनः करहाट इत्यादि ।–तस्य कल्पनेति य एवंभूतैः पर्यायैर्व्याख्यातः तस्येयं कल्पना । अस्य च पर्यायाभिधानं भूरिप्रयोगेषु विहितत्वेनाभ्यर्हितत्वाज्ज्ञेयम् । एवमन्यत्रापि पर्यायाभिधाने प्रयोजनं वर्णनीयम् । मदनयोगस्य नवादिसंख्योत्कर्पनिरासार्थं सुखस्मरणार्थं च संग्रहेणाह—नवयोगा इत्यादि । अस्य चार्थो यथास्थाने व्याहृतः ॥ २५—२७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां कल्पस्थानव्याख्यायां मदनकल्पव्याख्या ।

---

## द्वितीयोऽध्यायः ।

### जीमूतकल्पः ।

कल्पं जीमूतकस्येमं फलपुष्पाश्रयं शृणु ।
गरागरी च वेणी च तथा स्याद्देवताडकः ॥ १ ॥

मदनकल्पानन्तरमनपायित्वादेवेक्ष्वाक्वादिद्रव्यप्राधान्याज्जीमूतकस्य, जीमूतकल्पोऽभिधीयते । एवं यथायथमनपायित्वप्रकर्पः, तथा पूर्वनिवेशनं ज्ञेयम् । ततोऽवसरन्यायेनाध्यायसंबन्धोऽत्रैवोक्तो ज्ञेयः । मदनफलस्य स्नेहस्वेदादिपूर्वकत्ववदिहापि क्रमोऽतिदेशादुन्नेतव्यः । फलपुष्पाणामिति वचनेन जीमूतस्य पत्रनालादिषु वमनप्रयोगं निषेधति । गरागरी चेत्यादि पर्यायकथनम् । जीमूतः पीतघोषकः ॥ १ ॥

जीमूतकं त्रिदोषघ्नं यथास्वौषधकल्पितम् ।
प्रयोक्तव्यं ज्वरश्वासहिक्काकोठामयेषु च ॥ २ ॥
यथोक्तगुणयुक्तानां देशजानां यथाविधि ।
पयःपुष्पेषु निर्वृत्ते फले पेया शृतं पयः ॥ ३ ॥
लोमने क्षीरसन्तानं दध्युत्तरमलोमने ।
शृते पयसि दध्यम्लं जातं हरितपाण्डुके ॥ ४ ॥
जीर्णानां च सुशुष्काणां न्यस्तानां भाजने शुचौ ।
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ॥ ५॥

त्रिदोषघ्नमिति यथास्वं वातहरादिद्रव्ययुक्तम्, तथा वातादिहरद्रव्यकल्पितं च सत् त्रिदोषघ्नं भवति । हिक्कादिष्विति 'आद्य'शब्देन कासादीनामामयानां हिक्कारोगगतदोषजन्यानां ग्रहणम् । यथोक्तविधानग्रहणगृहीतानां पयःपुष्प इत्येको योगः । निर्वृत्त इत्यादि द्वितीयो योगः । निर्वृत्त इत्युत्पन्नमात्रे फले, तत्र क्षीरं साधयित्वा तेन क्षीरेण पेया साधनीया । रोमश इत्यादि तृतीयः । रोमश इति उपगतरोम्णि फले, अत्रापि रोमशफलसाधितक्षीरात् सन्तानिका ज्ञेया । दध्युत्तरमित्यादिकश्चतुर्थो योगः, अत्राप्युपगतरोमावस्थफलसाधितक्षीरसम्भूतदधिसरं ज्ञेयम् । शृते पयसीत्यादि पञ्चमः । मध्यम्लमित्यम्लावस्थं दधि जातम् । हरितपाण्डुक इति हरितपाण्डवस्थाप्राप्ते जीमूतकफले । जीर्णानामित्यादिकः षष्ठक्षीरयोगः । एते योगाः क्षीरसंबन्धेन विधीयमानत्वादक्षीराकारा अपि क्षीरप्रयोगत्वेनैव संग्रहे 'षट्क्षीरे' इत्यनेन संग्रहीतव्याः ॥ २—५ ॥

आसुत्य च सुरामण्डे मृदित्वा प्रसुतं पिबेत् ।
कफजेऽरोचके कासे पाण्डुरोगे सयक्ष्मणि ॥ ६ ॥
द्वे चापोथ्याथवा त्रीणि गुडूच्यामलकस्य वा ।
कोविदारादिकानां वा निम्बस्य कुटजस्य वा ।
कषायेष्वासुतं पूत्वा तेनैव विधिना पिबेत् ॥ ७ ॥

आसुत्येत्यादि मदिरायोग एक उच्यते । आसुत्येति निशापर्युषितं कृत्वा । योगे पक्वजीमूतकफलमेवाधिकृतम् । तथा, उत्तरयोगेष्वपि पक्वमेव फलमधिकृतम् ज्ञेयम् । "फलं पर्यागतं ग्राह्यम्" इत्यौत्सर्गिकवचनात् । द्वे चेत्यादिना द्वादशकषायभेदात् द्वादशयोगा उच्यन्ते । तेनैव विधिनेति मदनकल्पोक्तेन साधनविधिना ॥ ६—७ ॥

अथवारग्वधादीनां सप्तानां पूर्ववत्पिबेत् ।
एकैकशः कषायेण पित्तश्लेष्मज्वरार्दितः ॥ ८ ॥
वर्तयः फलवत्योऽष्टौ कोलमात्रास्तु ता मताः ।
जीमूतकस्य वा कल्कं चूर्णं वा शिशिराम्बुना ।
ज्वरे पित्तभवे वातदुष्टे श्लेष्मणि चानुगे ॥ ९ ॥

अथवेत्यादौ आरग्वधादिसप्तद्रव्यकषायभेदात् सप्तयोगा भवन्ति । आरग्वधादयः,—आरग्वधवृक्षकस्वादुकण्टककटुकाल्पाठापाटलिसार्ङ्गष्टमूर्वान्ताः पूर्वाध्यायोक्ताः । "मात्राः स्युः" इत्यादिना अष्टौ मात्रायोगानाह । फलवदिति, मदनफले यथा अष्टौ मात्रायोगा उक्ताः, तथा इहापि कर्तव्याः विशेषतस्तु एताः कोलमात्राः कर्तव्याः, न तु फलवद्धरीतक्यादिप्रमाणा कर्तव्या इत्यर्थः ॥ ८—९ ॥

जीवकर्षभकेक्षूणां शतावर्या रसेन वा ।
पित्तश्लेष्मज्वरे दद्याद्वातपित्तज्वरेऽथवा ॥ १० ॥
तथा जीमूतकक्षीरात्समुत्पन्नं पचेद्घृतम् ।
फलादीनां कषायेण श्रेष्ठं तद्वमनं मतम् ॥ ११ ॥

तत्र श्लोकौ ।

षट् क्षीरे मदिरामण्डे एको द्वादश चापरे ।
सप्त चारग्वधादीनां कषायेऽष्टौ च वर्तिषु ॥ १२ ॥
जीवकादिषु चत्वारो घृतं चैकं प्रकीर्तितम् ।
कल्पे जीमूतकानां च योगास्त्रिंशच्चवाधिकाः॥१३॥

इति चरकसंहितायां कल्पस्थाने द्वितीयोऽध्यायः ॥ २ ॥

जीवकेत्यादिना चतुरो योगाः पानसाधनकषायभेदात् । तथेत्यादिना घृतयोगमेकमाह । षट्क्षीर इत्यादिना संग्रहार्थो व्याकृत एव यथास्थानम् ॥ १०—१३ ॥

इति चरकचतुराननमहामहोपाध्यायश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां कल्पस्थानव्याख्यायां जीमूतककल्पव्याख्या ।

---

## तृतीयोऽध्यायः ।

### इक्ष्वाकुकल्पः ।

सिद्धं वक्ष्याम्यथेक्ष्वाकुकल्पं येषां प्रशस्यते ।
पञ्चचत्वारिंशदुक्ता योगा अस्मिन्महर्षिणा ॥ १ ॥
"लम्बाथ कटुकालाबू तुम्बी बिम्बफला तथा ।
इक्ष्वाकुः फलिनी चैव प्रोच्यते तस्य कल्पना ॥ २॥
कासश्वासविषच्छर्दिज्वरार्ते कफकर्शिते ।
प्रताम्यति नरे चैव वमनार्थं तदिष्यते ॥ ३ ॥

उक्ताध्यायसंबन्धादिक्ष्वाकुकल्पोऽभिधीयते । तेषां च शस्यते इक्ष्वाकुकल्पः, यान् वक्ष्यामीति योज्यम् । लम्बेत्यादि पर्यायकथनम् । तदिष्यते इति इक्ष्वाकुकल्पनमिष्यते ॥ १—३ ॥

अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसंमिताम् ।
क्षीरप्रस्थे शृतं दद्यात्पित्तोद्रिक्ते कफज्वरे ॥ ४ ॥

अपुष्पस्येत्यादिना एकः क्षीरयोगः । अपुष्पस्येत्यनुत्पन्नपुष्पस्य मुष्टिं प्रादेशसंमितामिति, प्रदेशिन्यामूलपर्यन्तकृतमुष्टिपरिमाणाम् । एवं च नात्रमुष्टिः 'पल'वचनः क्षीरप्रस्थे

यथोक्तमानमिक्ष्वाकुमवाप्य चतुर्गुणपानीयं दत्त्वा क्षीरं साधनीयम् ॥ ४ ॥

**पुष्पादिषु च चत्वारः क्षीरे जीमूतके यथा ।**
**योगा हरितपाण्डूनां सुरामण्डेन पञ्चमः ॥ ५ ॥**
**फलस्वरसभागं च त्रिगुणक्षीरसाधितम् ।**
**उरःस्थिते कफे दद्यात्स्वरभेदे सपीनसे ॥ ६ ॥**
**हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।**
**जातं स्यात्कफजे कासे श्वासे वम्यां च तां पिबेत्॥**
**मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ।**
**तेन तक्रं विपक्वं वा सक्षौद्रलवणं पिबेत् ॥ ८ ॥**
**अजाक्षीरेण बीजानि भावयेत्पाययेत च ।**
**विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ९ ॥**

पुष्पादिष्वित्यादिना चतुरक्षीरयोगानाह । जीमूतके यथा— "पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता । रोमशे क्षीरसन्तानं दध्युत्तरमरोमशे" इत्यनेनोक्तम् । तथेहापि योगचतुष्टयं कारणीयम् । हरितेत्यादिना सुरायोगमाह—हरितपाण्डूनामिक्ष्वाकुफलानां सुरामण्डे जीमूतकवद्योगः कर्तव्यः । जीमूतकविधानातिदेशेन "आसुत्य वा सुरामण्डे मृदित्वा प्रस्रुतां पिबेत्" इति ग्रन्थोक्तविधानमिहापि भवति । फलस्वरसेत्यादिना षष्ठः क्षीरयोगोऽभिधीयते । त्रिगुणक्षीरसाधितमिति, त्रिगुणेन क्षीरेण साधितम् । तच्च चतुर्गुणेन तोयेन साधनीयम् । 'फल'शब्देन इक्ष्वाकुफलमुच्यते । जीर्ण इत्यादिना सप्तमः क्षीरयोगः । मध्योद्धृते इत्युद्धृतमध्ये । अजाक्षीरेणेत्यादिनाऽष्टमः क्षीरयोगः । तेन तक्रमित्यादिना तक्रयोगः । तेनेति तुम्बीफलमध्येन ॥ ५—९ ॥

**तुम्ब्या फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ।**
**छर्दयेन्माल्यमाघ्राय गन्धसंपत्सुखोचितः ॥ १० ॥**
**भक्षयेत्फलमध्यं वा गुडेन पललेन च ।**
**इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्ववद्घृतम् ॥ ११ ॥**

तुम्ब्या इत्यादिना घ्रेययोगमाह । गन्धसम्पत्सुखोचित इति गन्धसम्पत् सौगन्धवत्त्वम् । तया गन्धसम्पदा सुखमुचितमभ्यस्तं येन सः अवचूर्णितमिक्ष्वाकुफलरसभावितं माल्यं चाघ्रायैव वमत्यनभ्यस्तदुर्गन्ध इति भावः । भक्षयेदित्यादिना वमनयोगमेकमाह । फलमध्यमिक्ष्वाकुफलमध्यम् । इक्ष्वाकुफलकल्कसाधितं तैलमिक्ष्वाकुफलतैलम् । अयमेक एव तैलयोगः । पूर्ववदिति जीमूतकवत्, तेन "तथा जीमूतकक्षीरात्" इत्यादिनोक्तविधानेन जीमूतकस्थाने इक्ष्वाकुफलं दत्त्वेह घृतं साधनीयम् ॥ १० ॥ ११ ॥

**पञ्चाशद्दशवृद्धानि फलादीनां यथोत्तरम् ।**
**पिबेद्विमृद्य बीजानि कषायेष्वासुतं पृथक् ॥ १२ ॥**

पञ्चाशदित्यादिना षड्वर्द्धमानकयोगानाह—पञ्चाशदारभ्य दशकेन वृद्धानीक्ष्वाकुबीजानि शतं पूर्यम् । तेन षड्योगा भवन्ति तेन यथासंख्यमदनफलादीनां षण्णां कषाये आसुताः सन्तो विमृदिताः पातव्याः अन्ये तु दशबीजादारभ्य पञ्चाशद्बीजपर्यन्तं दोषाद्यपेक्षया पातव्यम् । तत्र मदनादिकषायभेदादेव योगभेद इत्याहुः ॥ १२ ॥

**यष्ट्याह्वकोविदाराद्यैर्मुष्टिमन्तर्नखं पिबेत् ।**
**कषायैः कोविदाराद्यैर्मात्राश्च फलवत्स्मृताः ॥१३॥**
**बिल्वमूलकषायेण तुम्बीबीजाञ्जलिं पिबेत् ।**
**पूतस्यास्य त्रयो भागाश्चतुर्थः फाणितस्य तु ॥१४॥**
**सघृतं बीजभागं च पिष्टमर्धांशिकांस्तथा ।**
**महाजालिनिजीमूतकृतवेधनवत्सकान् ॥ १५ ॥**
**तं लेहं साधयेद्दर्व्या घट्टयेन्मृदुनाग्निना ।**
**यावत्स्यात्तन्तुमत्तोये पतितं च न शीर्यते ।**
**तं लिह्यान्मात्रया लेहं मन्थं चापि पिबेदनु ॥ १६ ॥**
**कल्प एषोऽग्निमन्थादौ चतुष्के पृथगुच्यते ।**

यष्ट्याह्वेत्यादिना नवकषाययोगानाह—तत्र यष्ट्याह्वमेकम् । कोविदारादयो मदनकल्पोक्ता अष्टौ कषायैरित्यादिना मदनफलसदृशविधा अष्टौ मात्रा लक्षिताः प्रयोगा उच्यन्ते । बिल्वेत्यादिना एको लेहः, तथा कल्प इत्यादिना चत्वारो लेहा अन्ते द्रष्टव्याः, एवं पञ्च लेहाः अञ्जलिः पलचतुष्टयः । अत्र च "ततश्च कुडवं यावत् तोयमष्टगुणं भवेत्" इति वचनात् । बिल्वमूलकषायस्याष्टावञ्जलयो देयाः ततश्चतुर्भागाविशेषेण कुडवद्वयम् । फाणितमर्द्धश्रृत इक्षुरसः । 'चतुर्थः फाणितस्य च' एतस्य स्थाने 'त्र्यस्त्रिकटुकस्य च' इति पठन्ति सघृतो घृतसंको भागः अर्द्धांशिकानिति एकभागार्द्धमानान् प्रत्येकं महाजालिन्यादीन् । महाजालिनी पीतकोषातकी कृतवेधनो घोषकभेदः । ज्योत्स्निकेति ख्यातः । यावत् स्यात्तन्तुमदित्यादिना लेहपाकलक्षणमाह एतच्च लक्षणं लेहान्तरेष्वपि योजनीयं ज्ञेयम् । न शीर्यते न विस्तीर्यते प्रमथ्यां च पिबेदन्विति अतीसारचिकित्सिते "पिप्पलीनागरं धान्यम्" इत्यादिनोक्तप्रमथ्यानां मध्ये अन्यतमप्रमथ्याकृतं कषायं पिबेदित्यर्थः । 'प्रमथ्यां च' स्थाने केचित् 'मन्थं चापि' पठन्ति । अग्निमन्थादाविति प्रत्येकमग्निमन्थस्योनाकपाटलागाम्भारीमूलचतुष्कं पञ्चमूलकथनप्रस्तावे रसायने कथितम्॥१३–१६॥

**शकुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः**
**कफजेऽथ ज्वरे कासे कण्ठरोगेष्वरोचके ॥ १७ ॥**
**गुल्मे मेहे प्रसेके च कल्पं मांसरसैः पिबेत् ।**
**नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥ १८ ॥"**

तत्र श्लोकाः ।

**पयस्यष्टौ सुरामण्डमस्तुतक्रेषु च त्रयः ।**
**घ्रेयं सपललं तैलं वर्धमानास्तेषु षट् ॥ १९ ॥**
**घृतमेकं कषायेषु नवान्ये मधुकादिषु ।**
**अष्टौ वर्तिक्रिया लेहाः पञ्च मन्थो रसस्तथा ॥**

योगा इक्ष्वाकुकल्पे ते चत्वारिंशच्च पञ्च च ।
उक्ता महर्षिणा सम्यक् प्रजानां हितकाम्यया ॥२०॥
इति चरकसंहितायां कल्पस्थाने तृतीयोऽध्यायः ॥ ३ ॥

शङ्खिनीत्यादिनैको मन्थयोगः । गुल्मे ज्वर इत्यादिना रसैकयोगमाह—कल्कमिक्ष्वाकुबीजकल्कम् । पयस्यष्टाविंत्यादिसंग्रहार्थो व्याकृत एव अत्र फलेष्विति मदनफलादिष्विति घृतं यद्यपि वर्द्धमानपूर्वपठितम् । तथापि छन्दोनुरोधादिह पश्चात् पठितम् ॥ १७—२० ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां इक्ष्वाकुकल्पव्याख्या ।

---

## चतुर्थोऽध्यायः ।

### धामार्गवकल्पः ।

कर्कोटकी कटुफला महाजालिनिरेव च ।
धामार्गवस्य पर्याया राजकोशातकी तथा ॥ १ ॥
गरे गुल्मोदरे कासे वातश्लेष्मामये स्थिते ।
कफे च कण्ठवक्त्रस्थे कफसंचयजेषु च ।
रोगेष्वेषु प्रयोज्याः स्युः स्थिराश्च गुरवश्च ये ॥ २ ॥

उक्तसंबद्धधामार्गवकल्पोऽभिधीयते । तत्र कर्कोटकीत्यादिना पर्यायकथनम् । धामार्गवः पीतघोषकः । स्थिराश्च गुरवश्च य इत्यत्र गदा इति शेषः । विधिनेति भेषजग्रहणोक्तेन विधिना ॥ १ ॥ २ ॥

फलं पुष्पं प्रवालं च विधिना तस्य संहरेत् ।
प्रवालस्वरसं शुष्कं कृताश्च गुलिकाः पृथक् ।
कोविदारादिभिः पेयाः कषायैर्मधुकस्य च ॥ ३ ॥
पुष्पादिषु पयोयोगाश्चत्वारः पञ्चमी सुरा ।
पूर्ववज्जीर्णशुष्काणामतः कल्पः प्रवक्ष्यते ॥ ४ ॥
मधुकस्य कषायेण बीजं कण्टोद्धृतं फलम् ।
सगुडं व्युषितं रात्रिं कोविदारादिभिस्तथा ॥ ५ ॥

प्रवालेत्यादिना नवयोगानाह—प्रवालस्य स्वरसः अत्र केचिदाहुः—कषायैर्गुडिकाकरणं पानश्च ज्ञेयमिति । पुष्पादिष्वित्यादिना जीमूतककल्पविधानेन निर्दिष्टाश्चत्वारः क्षीरप्रयोगाः पञ्चमश्च सुरायोगोऽतिदिश्यते ते च 'पयः पुष्पेऽस्य' इत्यादिनोक्ता ज्ञेयाः । पूर्ववदिति पूर्वेण सम्बध्यते । जीर्णशुष्काणामित्यादिना नवकषाययोगानाह—तथा जात्या इत्यादिना एकादश कषाययोगान् वक्ष्यति । एवं विंशतिकषाययोगाः संग्रहे वक्ष्यमाणा पूर्यन्ते बीजकण्ठोद्धृतं फलमित्यत्र च पूर्वनिपातानियम आहिताग्न्यादिपूर्वनिपातवद्बोध्यः एवंभूतं च फलं कषायेण सगुडेन व्युषितं रात्रौ व्युषितं कर्तव्यम् । उक्तं हि जतूकर्णे धामार्गवकल्पे "धामार्गवजीर्णशुष्कफलमध्येषु सगुडोपिताः । कोविदारादिकषाया नव" इति । गुल्मिनां चावस्थायां वमनं हितमेव तेनेह गुल्मविषयतया वमनोपदर्शनं न विरोधि ॥ ३—५ ॥

दद्याद्गुल्मोदरार्तेभ्यो ये चाप्यन्ये कफामयाः ।
दद्याद्रुक्षेन वा युक्तं छर्दिहृद्रोगशान्तये ॥ ६ ॥
चूर्णैर्वाप्युत्पलादीनि भावितानि प्रभूतशः ।
रसक्षीरयवाग्वादितृप्तो घ्रात्वा वमेत्सुखम् ॥ ७ ॥

दद्यादित्यादिना एकोऽन्नयोग उच्यते । अन्ने च धामार्गवस्य संयोगेन क्षीरेण योगः । चूर्णैरित्यादिना घ्रेये एकयोगमाह—उत्पलादीनां चात्र भेदोऽविवक्षितः । उत्पलस्यैक एव घ्रेययोगः अत्र 'आदि'शब्देन सौगन्धिकपद्मादीनां ग्रहणम् । प्रभूतशश्चूर्णैर्भावितानीति ज्ञेयम् ॥ ६ ॥ ७ ॥

चूर्णीकृतस्य वर्तिं वा कृत्वा बदरसंमिताम् ।
विनीयाञ्जलिमात्रे तु पिबेद्गोशकृतो रसे ॥ ८ ॥
पृषतर्क्षकुरङ्गाश्वगजोष्ट्राश्वतरस्य च ।
श्वदंष्ट्रखरखड्गानां चैव पेयां शकृद्रसे ॥ ९ ॥
जीवकर्षभकौ वीरामात्मगुप्तां शतावरीम् ।
काकोलीं श्रावणीं मेदां महामेदां मधूलिकाम् ॥१०॥
एकैकशोऽभिसंचूर्ण्य सह धामार्गवेण तु ।
शर्करा मधुसंयुक्ता लेहा ह्युद्दाहकासिनाम् ॥ ११ ॥
सुखोदकानुपानाः स्युः पित्तोष्मसहिते कफे ।
धान्यतुम्बुरुयूषेण कल्कस्तस्य विषापहः ॥ १२ ॥

चूर्णीकृतस्येत्यादिना गोऽश्वशकृद्रस इति द्वौ योगौ तथा पृषतेत्यादिदशयोगा इति द्वादशशकृद्रसयोगसंबन्धाद्द्वादशशकृद्योगा उच्यन्ते पृषतो बिन्दुचित्रितहरिणः ऋक्ष्यो नीलाण्डः कुरङ्गश्चञ्चलगतिः । अश्वतरो वेगसरः । श्वदंष्ट्रश्चतुर्दंष्ट्रो मृगविशेषः । जीवकेत्यादिना दश लेहानाह—मधूलिका मर्कट इति ख्याता । अत्र लेहेषु धामार्गवादितरद्रव्यचूर्णस्य समानत्वम् । मधुशर्करयोश्च तावती मात्रा यावत्या लेहत्वापत्तिर्भवति । पित्तोष्मसहिते कफे इति उद्यतोष्मगुणेन पित्तेन युक्ते कफे । अन्ये तु 'पित्तोष्म'शब्देन पित्तोष्मणा कृतं ज्वरमाहुः ॥ ८—१२ ॥

जात्याः सौमनसायिन्या रजन्याश्चोरकस्य वा ।
वृश्चिकस्य महाक्षुद्रसहाहैमवतस्य च ।
बिम्ब्याः पुनर्नवाया वा कासमर्दस्य वा पृथक् ॥
एकं धामार्गवं द्वे वा कषाये परिमृद्य तु ।
तच्छृतं क्षीरजं सर्पिः साधितं वा फलादिभिः ।
घृतं मनोविकारेषु पिबेद्वमनमुत्तमम् ॥ १४ ॥"

तत्र श्लोकौ ।

पल्लवेन च चत्वारः क्षीर एकः सुरासवे ।
कषायैर्विंशतिः कल्कैर्दश द्वौ च शकृद्रसे ॥ १५ ॥

अत्र एकस्तथा श्रेये दश लेहास्तथा घृते ।
कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा ॥१६॥

इति चरकसंहितायां कल्पस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

धान्येत्यादिना एककल्कयोगमाह—धान्यतुम्बरुक्काथ एव धान्यतुम्बुरुयूषः । उक्तं हि जतूकर्णे "धान्यतुम्बुरुरसेन कल्को विपनूत्" इति जात्या इत्यादिना एकादशकषाययोगानाह—जाती चम्पकजाती अन्ये यूथिका सौमनस्यायिनीति वदन्ति वृश्चिरः श्वेतपुनर्नवा महासहा क्षुद्रसहा मुद्गमाषपर्ण्यौ हैमवती वचा तच्छृतमित्यादिना एकं घृतयोगमाह । पल्लवे नवेत्यादिसंग्रहेण व्युत्क्रमसंग्रहाभिधानं छन्दोऽनुरोधात् । दश द्वाविति द्वादशेत्यर्थः ॥१३—१६ ॥

इति चरकचतुराननमहामहोपाध्यायश्रीमच्चक्रपाणिदत्त-
विरचितायामायुर्वेददीपिकायां चरकतात्पर्य-
टीकायां कल्पस्थानव्याख्यायां धामार्ग-
वकल्पव्याख्या ।

## पञ्चमोऽध्यायः ।

### वत्सककल्पः ।

अथ वत्सकनामानि भेदं स्त्रीपुंसयोस्तथा ।
कल्पं चास्य प्रवक्ष्यामि विस्तरेण यथातथम् ॥ १ ॥
"वत्सकः कुटजः शक्रो वृक्षको गिरिमल्लिका ।
बीजानीन्द्रयवास्तस्य तथोच्यन्ते कलिङ्गकाः ॥ २ ॥
बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान्भवेत् ।
श्यामा चारुणपुष्पी स्त्री फलवृन्तैस्तथाणुभिः ॥३॥
रक्तपित्तकफघ्नस्तु सुकुमारेष्वनत्ययः ।
हृद्रोगज्वरवातासृग्वीसर्पादिषु शस्यते ॥ ४ ॥
काले फलानि संगृह्य तयोः शुष्काणि संक्षिपेत् ।
तेषामन्तर्नखं मुष्टिं जर्जरीकृत्य तापयेत् ।
मधुकस्य कषायेण कोविदारादिभिस्तथा ॥ ५ ॥
निशि स्थितं विमृद्यैतल्लवणक्षौद्रसंयुतम् ।
पित्ते तद्वमनं श्रेष्ठं पित्तश्लेष्मनिबर्हणम् ॥ ६ ॥

यथोक्तसंबन्धाद्वत्सककल्पाभिधानम् । वत्सकनामानि व्यवहारार्थं स्त्रीपुरुषभेदंचाह,—अथ वत्सकेत्यादि ।—अत्र वत्सकस्त्रीपुरुषभेदेन गुणभेदः प्रयोगभेदो वा न प्रतिपादितः, तथापि स्त्रीरूपवत्सकेऽरुणपुष्पाऽणुफलत्वादिविशिष्टलक्षणयुक्तेऽप्यविशेषेणोभाभ्यामेवामयनिवृत्तिः स्यादित्येतदर्थमुभयोरपि समानगुणता ज्ञातव्या । काल इति उचिते काले फलानीति पक्वशुष्काणि तेषामन्तर्नखमित्यादिना कषायैर्नवयोगानाह—क्षौद्रसैन्धवयोगो यद्यपि सर्ववमनेष्वेव सामान्येन विहितः, तथापीह 'लवणक्षौद्रसंयुतम्' इति वचनादुत्कर्षो लवणसैन्धवयोरभिधीयते ॥ १—६ ॥

अष्टाहं पयसार्केण तेषां चूर्णानि भावयेत् ।
जीवकस्य कषायेण ततः पाणितलं पिबेत् ॥ ७ ॥
फलजीमूतकेक्ष्वाकुजीवन्तीनां पृथक् तथा ।
सर्षपाणां मधूकानां लवणस्याथवाम्बुना ।
कृशरेणाथवा युक्तं विदध्याद्वमनं भिषक् ॥ ८ ॥"

तत्र श्लोकः ।

कषायैर्नवचूर्णैश्च पञ्चोक्ताः सलिलैस्त्रियः ।
एकश्च कृशरायां स्याद्योगास्तेऽष्टादश स्मृताः ॥९॥

इति चरकसंहितायां कल्पस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

अष्टाहमित्यादिना पञ्च चूर्णयोगानाह—कृशरेणेत्यादिना कृशरयोग उच्यते, अत्र च इन्द्रयवचूर्णमधिकृतत्वादेवोच्यते । कषायैरित्यादिसंग्रहश्लोको व्याख्यातार्थ एव ॥ ७—९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्त-
विरचितायामायुर्वेददीपिकायां चरकतात्पर्यटी-
कायां कल्पस्थानव्याख्यायां वत्सक-
कल्पव्याख्या ।

## षष्ठोऽध्यायः ।

### कृतवेधनकल्पः ।

कृतवेधननामानि कल्पं चास्य निबोधत ।
"क्ष्वेडः कोशातकी चोक्तं मृदङ्गफलमेव च ॥ १ ॥
अत्यन्तकटुतीक्ष्णोष्णं गाढेष्विष्टं गदेषु च ।
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ २ ॥

वमनकल्पपारिशेष्यात् कृतवेधनकल्पोऽभिधीयते । गाढेष्वित्यत्यर्थगाढेषु कुष्ठादिषु । क्षीरादीत्यादिना क्षीरयोगा उच्यन्ते । क्षीरयोगचतुष्टयं मदिरायोगं च जीमूतककल्पविधानातिदेशेनाह—'क्षीरादि'शब्देन क्षीरकृतपेयाक्षीरसन्तानिकादध्युत्तराणां ग्रहणम् । एते च संग्रहेऽक्षीररूपा आक्षीरविकारतया 'क्षीर'शब्देनैव गृहीताः क्षीरे द्वौ द्वौ इति वचनेन । कुसुमादीनामिति कृतवेधनस्य पुष्पादीनां "पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता । लोमशे क्षीरसंतानं दध्युत्तरमलोमशे" इति जीमूतकविधानोक्तानाम् । सुरा चैतेषु पूर्ववदिति, यथा जीमूतककल्पविधानेन क्षीरादयः कर्तव्याः, तथा क्षीरादयः सुरा च कर्तव्याः ॥ १—२ ॥

क्षीरादिकुसुमादीनि सुरा चैतेषु पूर्ववत् ।
सुशुष्काणां तु बीजानामेकं द्वौ वा यथाबलम् ।
कषायैर्मधुकादीनां नवभिः फलवत्पिबेत् ॥ ३ ॥
क्काथयित्वा फलं तस्य पूत्वा लेहं निधापयेत् ।
कृतवेधनकल्कांशं फलाद्यर्धांशसंयुतम् ॥ ४ ॥

सुशुष्काणामित्यादिना नव कषाययोगानाह—फलव

मदनफलं यथा यष्टीमधुकादिभिः पीयते; तथा एतदपि पातव्यमित्यर्थः । एतन्नवकषायप्रयोगेषु शेषविधिप्रत्ययकं लेहं पठन्ति,—"क्वाथयित्वा रसं तस्य पूत्वा लेहं विधापयेत्" इत्यादि तच्च सङ्गतार्थम् । उक्तं च जतूकर्णे—अत्र जीर्ण-बीजानां मदनफलवत् कषायैर्लेहा भवन्ति नव" इति ॥

पृथगित्यादिना त्रयोदश कषाययोगानाह—एवं द्वाविंशति कषाययोगा भवन्ति, आरग्वधादयस्त्रयोदश मदनकल्पे "आरग्वधवृक्षकेत्यादिना गुडूच्यन्तेनोक्ता ज्ञेयाः ॥ ३ ॥ ४ ॥

**पृथक् चारग्वधादीनां त्रयोदशभिरासुतम् ।**
**शाल्मलीमूलवृन्तानां पिच्छाभिर्दशभिस्तथा ।**
**वर्तयः फलवत्षट्सु फलादीनां घृतं तथा ॥ ५ ॥**

शाल्मलीत्यादिना दश पिच्छायोगानाह—शाल्मली मूलमादि येषांते शाल्मलीमूलाः शाल्मल्यादयो विमानपठिता दश,—"शाल्मलीशाल्मलकाभद्रपर्ण्येलापर्ण्यूपोदिकोद्दालधन्वनराजादनोपचित्रागोप्यन्ताः, एतैर्योगाः पूर्यन्ते । एषां चूर्णानां पिच्छाभिर्युक्त्या कृतत्वेनैव योगा दश ज्ञेयाः । शाल्मलकः श्वाल्मलीभेदः, रोहितको वा, भद्रपर्णी भादाली, एलापर्णी नागवला अहिंस्रेत्यन्ये राजादनक्षीरिका उपचित्रा दन्ती । गोपीशारिवा ॥

वर्तिक्रियाः षट् फलवदिति "फलपिप्पलीनां चूर्णानि पूर्ववत्" इत्यनेन ग्रन्थेन या वर्तिक्रिया उक्ता मदनकल्पे तद्वदिहापि कृतवेधनचूर्णानां षट्वर्तिक्रियाः कर्तव्याः । फलादीनां घृतं तथा इत्यनेन कृतवेधनसाधितक्षीरादुत्थितं नवनीतं फलादिकषायेण साधनीयं मदनफलघृतवदित्यर्थः ॥ ५ ॥

**कोशातकानि पञ्चाशत्कोविदाररसैः पचेत् ।**
**तं कषायं फलादीनां कल्कैर्लेहं पुनः पचेत् ॥ ६ ॥**

कोशातकानीत्यादि—अत्रैव क्वाथपादिककल्के कर्तव्ये क्ष्वेडस्य पूर्णो भागो देयः । फलादीनां च प्रत्येकं क्ष्वेडादर्द्धभागिकत्वम् । कषायेष्वित्यदिना सप्त मांसयोगानाह—समिति कोषातकीतुल्यं मांसम् । अत्र पिबेदित्यन्तेन षण्मांसरसाः, फलादीत्यनेन चैकः । "फलादिपिप्पलीतुल्यं तद्वत्" इत्यनेन फलादिभिः समं मांसम् । तद्वदिति वचनात् कोशातक्याः कषायेण साधनीयम् ॥ ६ ॥

**क्ष्वेडस्य तत्र भागः स्याच्छेषाण्यर्धांशिकानि च ।**
**कषायैः कोविदाराद्यैरेवं पक्त्वा पचेत्पृथक् ॥ ७ ॥**
**कषायेषु फलादीनामानूपं पिशितं पृथक् ।**
**कोशातकीफलं पक्त्वा तद्रसं लवणैः पिबेत् ॥८॥**
**फलादिपिप्पलीतुल्यं तद्वत्क्ष्वेडरसं पिबेत् ।**
**क्ष्वेडं क्वाथे पिबेत्सिद्धं मिश्रमिक्षुरसेन च ॥ ९ ॥"**

**तत्र श्लोकौ ।**

**क्षीरे द्वौ द्वौ सुरा चैका क्वाथा द्वाविंशतिस्तथा ।**
**दश पिच्छाघृतं चैकं षट् च वर्तिक्रियाः शुभाः ॥**
**लेहेऽष्टौ सप्त मांसे च योग इक्षुरसेऽपरः ।**
**कृतवेधनकल्पेऽस्मिन्षष्टिर्योगाः प्रकीर्तिताः ॥ ११ ॥**

इति चरकसंहितायां कल्पस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

क्ष्वेडकसीमाह—क्ष्वेडेत्यादि ।—सिद्धमिति इक्षुरसेन मिश्रितं शृतसाधितं पिबेदित्यर्थः ॥ ७ ॥ ११ ॥

इति चरकतात्पर्यटीकायां कृतवेधन कल्पव्याख्या ।

## सप्तमोऽध्यायः ।

### श्यामात्रिवृत्कल्पः ।

**"विरेचने त्रिवृन्मूलं श्रेष्ठमाहुर्मनीषिणः ।**
**तस्याः संज्ञागुणाः कर्म भेदः कल्पश्च वक्ष्यते ॥ १ ॥**
**त्रिभण्डी त्रिवृता चैव श्यामाकूटरणा तथा ।**
**सर्वानुभूतिः सुवहा शब्दैः पर्यायवाचकैः ॥ २ ॥**

वमनार्थकल्पानानन्तरं विरेचनकल्पेषु वक्तव्येषु त्रिवृताया विरेचनद्रव्येषु सुखविरेचनतया प्रधानत्वात् । त्रिवृत्कल्प एवाभिधीयते । त्रिवृतो भेद एव च श्यामा । तेन श्यामायास्त्रिवृतायाश्च कल्पः । यद्यपि चारुणमूलैव त्रिवृदत्रोत्कृष्टा वक्तव्या तथाप्यध्यायसंज्ञायां श्यामाया आदौ पाठेनाशुदोषहन्तृतया श्यामायां प्रकर्षं दर्शयति । ये चात्र योगा वक्तव्याः तेऽरुणया वा श्यामया वा उभाभ्यां वा दोषशरीरादिबलाबलमपेक्ष्य कर्तव्याः ॥ १—२ ॥

**कषाया मधुरा रूक्षा विपाके कटुका च सा ।**
**कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ ३ ॥**
**सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।**
**कल्पे वैशिष्यमासाद्य सर्वरोगहरा भवेत् ॥ ४ ॥**

विरेचन इत्यादौ त्रिवृन्मूलशब्देन श्याममूलाया अरुणमूलायाश्च सामान्येन मूलं गृह्यते । पर्यायत्वेन वाचकैः पर्यायवाचकैः । सेदानीमित्यादि । वातकफापहौषधप्रयोगेण वातहन्तृत्वमविद्यमानं भवति । कफपित्तहन्तृत्वविद्यमानमधिकं भवतीति ज्ञेयम् । कल्पे वैशेष्यमिति कल्पनाविशेषम् । सर्वरोगहरेति व्यस्तसमस्तसर्वदोषारब्धरोगहरायाः ॥३—४॥

**मूलं तु द्विविधं तस्याः श्यामं चारुणमेव च ।**
**तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभम् ।**
**सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तच्छुभम् ॥ ५ ॥**
**मोहयेदाशुकारित्वाच्छ्यामा कण्ठं क्षिणोत्यपि ।**
**तैक्ष्ण्यात्कर्षति हृत्कण्ठमाशु दोषं हरत्यपि ।**
**शस्यते बहुदोषाणां क्रूरकोष्ठाश्च ये नराः ॥ ६ ॥**

त्रिवृतयोर्भेदमाह—मूलं तु द्विविधमित्यादि । मुख्यतरमिति विरेचनक्रियायामेवाव्यापत्तिकत्वात् श्रेष्ठतरम् । सुकु-

माराः शिशवश्च यद्यपि अविरेचनीया उक्ताः—तथापि तेषां विधीयमानं विरेचनं हितमिति ज्ञेयम् । मोहयेदित्यादिना श्याममूलाया गुणकर्मणी ब्रूते—क्षिण्वीतेति धातुक्षयं कुर्यात् ॥ ५ ॥ ६ ॥

**गुणवत्यां तयोर्भूमौ जातं मूलं समुद्धरेत् ।**
**उपोष्य प्रयतः शुक्ले शुक्लवासाः समाहितः ॥ ७ ॥**
**गम्भीरानुगतं श्लक्ष्णं न तिर्यग्विसृतं च यत् ।**
**गृहीत्वा विसृजेत्काष्ठं त्वचं शुष्कां निधापयेत् ॥८॥**

यद्यपि मदनकल्प एव गुणवद्भूमिजातत्वादिसामान्येन भेषजानामुक्तमेव तथापि गम्भीरानुगतत्वादिविशेषस्य तत्रानुक्तस्येहाभिधाने सति तत्प्रसंगात् तत्किंचिदुच्यते—गुणवत्येत्यादि । शुक्ल इति शुक्लपक्षे । गम्भीरानुगतमिति दूरात्प्रविष्टम् । उद्धरेद्व्रमिति मूलस्यास्थि उद्धरेत् । निधापयेदिति यथोक्तभैषज्यस्थापनविधानेन स्थापयेत् ॥ ७ ॥ ८ ॥

**स्निग्धस्विन्नो विरेच्यस्तु पेयामात्रोपितः सुखम् ।**
**अक्षमात्रं तयोः पिण्डं विनीयाम्लेन ना पिबेत् ॥९॥**
**गोऽव्यजामहिषीमूत्रसौवीरकतुषोदकैः ।**
**प्रसन्नया त्रिफलया शृतया च पृथक् पिबेत् ॥१०॥**
**एकैकं सैन्धवादीनां द्वादशानां सनागरम् ।**
**त्रिवृत्त्रिगुणसंयुक्तं चूर्णमुष्णाम्बुना पिबेत् ॥ ११ ॥**

पेयामात्रोपित इति पूर्वदिने पेयामात्राहारतया उषितः । यद्यपि चान्यत्र विरेचनपूर्वदिनेषु तथैवाहारो नियमितः—'स्नेहवद्द्रवमुष्णं च त्र्यहं मांसरसौदनम्' इत्यनेन, तथापि त्रिवृद्विरेचनप्रयोगे पूर्वदिने विशेषविधानात् पेयादानं ज्ञेयम् । किंचेयमेव तद्वचनात् स्निग्धोष्णमांसरससाधिता च क्रियमाणा पूर्वोक्तस्नेहवद्द्रवौष्णमांसरसौदनविरुद्धा भवति ॥ अक्षमात्रमित्यादिना नवभिरम्लादिभिर्द्रव्यैर्नवयोगानाह—तयोरिति श्यामात्रिवृदरुणत्रिवृतयोः । एतयोश्च मिलितयोः प्रत्येकं प्रयोगादि प्रागेव प्रतिपादितम् । अम्लेनेति काञ्जिकेन । एकैकमित्यादिना सैंधवादिभिर्द्वादशयोगानाह । सैंधवादयश्च द्वादश रोगभिषग्जितीये लवणस्कन्धोक्ता ज्ञेयाः । सनागरमिति नागरसहितं सत् प्रत्येकं सैंधवादीनां चूर्णं द्विगुणत्रिवृताचूर्णयुक्तं पातव्यम् ॥ ९–११ ॥

**पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली ।**
**सरलः किलिमं हिङ्गु भार्गी तेजोवती तथा ॥ १२ ॥**
**मुस्तं हैमवती पथ्या चित्रको रजनी वचा ।**
**स्वर्णक्षीर्यजमोदा च शृङ्गवेरं च तैः पृथक् ।**
**एकैकार्धांशसंयुक्तं पिबेद्गोमूत्रसंयुतम् ॥ १३ ॥**
**मधूकार्धांशसंयुक्तं शर्कराम्बुयुतं पिबेत् ।**
**जीवकर्षभकौ मेदां श्रावणीं कर्कटाह्वयम् ॥ १४ ॥**
**मुद्गमाषाख्यपर्ण्यौ च महतीं श्रावणीं तथा ।**
**काकोलीं क्षीरकाकोलीं क्षुद्रां छिन्नरुहां तथा ॥१५॥**

**क्षीरशुक्लां पयस्यां च यष्ट्याह्वं विधिना पिबेत् ।**
**वातपित्तहितान्येतान्यन्यानि तु कफानिले ॥ १६ ॥**
**क्षीरमांसेक्षुकाश्मर्यद्राक्षापीलुरसैः पृथक् ।**
**सर्पिषा वा तयोश्चूर्णमभयार्धांशिकं पिबेत् ॥ १७ ॥**

पिप्पलीत्यादिना पिप्पल्यादिद्रव्यभेदेन सूत्रेऽष्टादशयोगानाह—मधुकेत्यादिनैकः प्रयोगः । अयं च संग्रहोक्तयोः यष्ट्या द्वौ इत्यनयोरेकतरः । जीवकेत्यादिना चतुर्दशयोगान् तथा यष्ट्याहमित्येकं चाह । अयं च संग्रहोक्तयोः यष्ट्या द्वौ इति द्वयोरन्यतरः । क्षुद्रा कोकिलाक्षः । क्षीरशुक्ला क्षीरविदारी । पयस्याऽर्कपुष्पी । क्षीरेत्यादिना क्षीरादौ सप्तयोगानाह । पीलु औत्तरपथिकं फलम् ॥ १२–१७ ॥

**लिह्याद्वा मधुसर्पिर्भ्यां संयुक्तं ससितोपलम् ।**
**अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत् ॥१८॥**
**चूर्णितं क्षौद्रसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।**
**सन्निपातज्वरस्तम्भदाहतृष्णार्दितो नरः ॥ १९ ॥**
**श्यामात्रिवृत्कषायेण कल्केन च सशर्करम् ।**
**साधयेद्विधिवल्लेहं लिह्यात्पाणितलं ततः ॥ २० ॥**

लिह्याद्वा मध्वित्यादिना अष्टौ लेहानाह—लिह्याद्वेत्यादिना प्रथमो लेहः । अजगन्धा इत्यादिना द्वितीयः । अजगन्धा अजामोदा । श्यामात्रिवृदित्यादिना तृतीयो लेहः । अत्र शर्करात्रिवृच्चूर्णाभ्यां समाभ्यां क्वाथपादिकाभ्यां लेहाः कर्तव्याः ॥ १८–२० ॥

**सक्षौद्रां शर्करां पक्त्वा कुर्यान्मृद्भाजने नवे ।**
**क्षिपेच्छीते त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह ।**
**मात्रया लेहयेदेतदीश्वराणां विरेचनम् ॥ २१ ॥**
**कुडवांशान्रसानिक्षुद्राक्षापीलुपरूपकान् ।**
**सितोपलात्पलं क्षौद्रात्कुडवार्धं च साधयेत् ॥ २२ ॥**
**तं लेहं योजयेच्छीतं त्रिवृच्चूर्णेन शास्त्रवित् ।**
**एतदुत्सन्नपित्तानामीश्वराणां विरेचनम् ॥ २३ ॥**

सक्षौद्रमित्यादिना चतुर्थः । अत्र क्षौद्रपाकयोगमहिम्ना त्रिवृच्चूर्णमात्रापादिकं त्वक्पत्रादीनां सौगन्ध्यमात्रप्रयोजनत्वात् । अत्र तु 'ईश्वराणां विरेचनं' इति वचनेन सुकुमारत्वादस्निग्धविषयतामस्य दर्शयति । 'ईश्वरा हि प्रायेण सुकुमाराः स्निग्धाश्च भवन्ति' । कौडविकानित्यादिः पञ्चमः । अत्र त्रिवृच्चूर्णमनिर्दिष्टमानं च प्रक्षेपन्यायात् लेहात्पादिकं कर्तव्यम् । उत्सन्नपित्तानामुद्धूतपित्तानाम् ॥ २१–२३ ॥

**शर्करामोदकान्वर्तिगुलिकामांसपूपकान् ।**
**अनेन विधिना कुर्यात्पैत्तिकानां विरेचनम् ॥ २४ ॥**
**पिप्पलीं नागरं क्षारं श्यामात्रिवृतया सह ।**
**लेहयेन्मधुना सार्धं श्लेष्मलानां विरेचनम् ॥ २५ ॥**
**मातुलुङ्गाभयाधात्रीश्रीपर्णीकोलदाडिमात् ।**
**सुमृष्टान्स्वरसांस्तैले साधयेत्तत्र चावपेत् ॥ २६ ॥**

सहकारात्कपित्थाच्च मध्यमम्लं च यत्फलम् ।
पूर्ववद्वहलीभूते त्रिवृच्चूर्णं च साधयेत् ॥ २७ ॥
त्वक्पत्रकेशरैलानां चूर्णं च मधुमात्रया ।
लेहोऽयं कफपूर्णानामीश्वराणां विरेचनम् ॥ २८ ॥

शर्करा इत्यादिना सितायोगांश्चतुरोऽतिदेशानुगुण्यात् लेहानां मध्य एवाह—अत्र वर्ल्यादयोपि शर्कराकृता एव ज्ञेयाः । अनेन विधिनेति इक्ष्वादिरससंस्कारेण त्रिवृच्चूर्णयोगेन च । पिप्पलीं नागरमित्यादिना षष्ठो लेहः । मध्यमित्यम्लकपित्थस्य मध्यं भागम् । अम्लं च यत् मातुलुङ्गादि । पूर्ववदिति कौडविकान् (कौडविकांशान्) मातुलुङ्गादिरसानां दर्शयति ॥ २४–२८ ॥

पानकानि रसान्यूषान्मोदकान्रागखाण्डवान् ।
अनेन विधिना कुर्याद्विरेकार्थे कफाधिके ॥ २९ ॥
भृङ्गैलाभ्यां समं नीलं तैस्त्रिवृच्चैश्च शर्करा ।
चूर्णं फलरसक्षौद्रशक्तुभिस्तर्पणं पिबेत् ॥ ३० ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ ३१ ॥

पानकानीत्यादिनातिदेशानुगुण्यात् पानकादिप्रयोगानाह । रागप्रधानः षाडवो रागषाडवः । अनेन विधिनेति पूर्वलेहोक्तविधिना । भृङ्गैलाभ्यामित्यादिना तर्पणयोगं प्रथममेवाह । द्वितीयस्तु तर्पणयोगो भविष्यति इति । भृङ्गं गुडत्वक् । तैश्च शर्करेति भृङ्गैलानीलीत्रिवृद्भिः । फलरसो दाडिमरसः ॥ २९–३१ ॥

शर्करा त्रिफला श्यामा त्रिवृन्मागधिका मधु ।
मोदकः सन्निपातोर्ध्वरक्तपित्तज्वरापहः ॥ ३२ ॥
त्रिवृच्छ्यामामतास्तिस्रस्तिस्रश्च त्रिफलात्वचः ।
विडङ्गपिप्पलीक्षारं समास्तिस्रश्च चूर्णिताः ॥ ३३ ॥
लिह्यात्सर्पिर्मधुभ्यां च मोदकं वा गुडेन च ।
भक्षयेन्निष्परीहारमेतच्छोधनमुत्तमम् ॥ ३४ ॥
गुल्मं प्लीहोदरं श्वासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान्व्याधीनेतद्व्यपोहति ॥ ३५ ॥

शर्करेत्यादिमोदकः प्रथमः । तत्र च 'मोदके द्विगुणो गुडः' इति वचनात् गुडशर्करां चूर्णाद्विगुणामिच्छन्ति । त्रिवृच्छ्यामा इत्यादिकेनेह मोदकवचनाच्च यद्यपि पठ्यते योगः तथाप्यस्य लेहेनैव ग्रहणादयमष्टमो लेहो भवति ॥ ३२–३५ ॥

विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान् ।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ ३६ ॥
लवणान्यजमोदां च चूर्णितं कार्षिकं पृथक् ।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ ३७ ॥
धात्रीफलरसप्रस्थांस्त्रीन्गुडार्धतुलां तथा ।
पक्त्वा मृद्वग्निना खादेद्बदरोदुम्बरोपमान् ॥ ३८ ॥
गुडान्कृत्वा न चास्य स्याद्विहाराहारयन्त्रणा ।
मन्दाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकम् ।
अस्वप्नं गात्रशूलं च कासं श्वासं भ्रमं क्षयम् ॥ ३९ ॥
कुष्ठार्शःकामलामेहगुल्मोदरभगन्दरम् ॥ ४० ॥
ग्रहणीपाण्डुरोगांश्च हन्युः पुंसवनाश्च ते ।
कल्याणका इति ख्याताः सर्वेष्वृतुषु यौगिकाः ४१

इति कल्याणकगुडः ।

विडङ्गमित्यादिना द्वितीयो मोदकः ॥ ३६–४१ ॥

व्योषत्वक्पत्रमुस्तैलाविडङ्गामलकाभयाः ।
समभागा भिषग्दद्याद्द्विगुणं च मकूलकम् ॥ ४२ ॥
त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम् ।
चूर्णितं गुडिकाः कृत्वा क्षौद्रेण पलसंमिताः ॥४३॥
भक्षयेत्कल्यमुत्थाय शीतं चानुपिबेज्जलम् ।
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये ॥४४॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता निर्यन्त्रिताशिनः ।
योगः सर्वविषाणां च मतः श्रेष्ठो विरेचने ॥ ४५ ॥
मूत्रजाणां च रोगाणां विधिज्ञेनावचारितः ।
नाशयेन्मूत्रजान्रोगान् कृष्णात्रेयेण भाषितः ॥४६॥
त्रिवृत्पलं द्विप्रसृतं पथ्या धान्योरुबूकयोः ।
दशैतान्मोदकान्कुर्यादीश्वराणां विरेचनम् ॥ ४७ ॥
त्रिवृद्धैमवती श्यामा नीलिनी हस्तिपिप्पली ।
समूला पिप्पली मुस्तमजमोदा दुरालभा ॥ ४८ ॥
कार्षिकं नागरपलं गुडस्य पलविंशतिम् ।
चूर्णितं मोदकान्कुर्यादुदुम्बरफलोपमान् ॥ ४९ ॥
हिङ्गुसौवर्चलव्योषयमानीविडजीरकैः ।
वचाजगन्धात्रिफलाचव्यचित्रकधान्यकैः ॥ ५० ॥
मोदकान्वेष्टयेच्चूर्णैस्तान्सतुम्बुरुदाडिमैः ।
त्रिकवंक्षणहृद्बस्तिकोष्ठार्शःप्लीहशूलिनाम् ।
हिक्काकासारुचिश्वासकफोदावर्तिनां शुभाः ॥५१॥

व्योषेत्यादिना तृतीयो मोदकः । अयं मोदकस्तन्त्रांतरेऽभयाद्य इति ख्यातः । मकूलकं दन्ती । अत्र मकूलादीनामेका द्रव्यापेक्षया द्वैगुण्यं भवति । मधु च तावन्मात्रं यावता मोदको भवति । केचिदत्र व्योषादिमिलितचूर्णात् दन्त्यादीनां द्वैगुण्यं शब्दान्मन्यन्ते । द्राक्षेत्यादिना चतुर्थः । त्रिवृद्धैमवतीत्यादिना पञ्चममोदकः पूर्यते । वेष्टयेदित्यवचूर्णयेत् ॥ ४२—५१ ॥

त्रिवृतां कौटजं बीजं पिप्पलीं विश्वभेषजम् ।
क्षौद्रद्राक्षारसोपेतं वर्षास्वेतद्विरेचनम् ॥ ५२ ॥
त्रिवृद्दुरालभा मुस्ताशर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये ॥ ५३ ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ।
स्वर्णदुग्धीं च हेमन्ते पिष्ट्वा तूष्णाम्बुना पिबेत् ५४
शर्करा त्रिवृता तुल्या ग्रीष्मकाले विरेचनम् ।
त्रिवृत्त्रायन्तिहपुषां सातलां कटुरोहिणीम् ॥ ५५ ॥

स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्र्यहम् ।
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥ ५६ ॥
दुरालभा त्रिवृच्छयामा वत्सकं हस्तिपिप्पली ।
नीलिनी त्रिफला मुस्तं कटुका च सुचूर्णिता ॥५७॥
सर्पिर्मांसरसोष्णाम्बुयुक्तं पाणितलं ततः ।
पिबेत्सुखतमं ह्येतद्रूक्षाणामपि शस्यते ॥ ५८ ॥
त्र्यूषणत्रिफलाहिङ्गुकार्षिकं त्रिवृतापलम् ।
सौवर्चलार्धकर्षं च पलार्धं चाम्लवेतसात् ॥ ५९ ॥
तच्चूर्णं शर्करातुल्यं मद्येनाम्लेन वा पिबेत् ।
गुल्मपार्श्वार्तिनुत्सिद्धं जीर्णे चाद्याद्रसौदनम् ॥६०॥

त्रिवृतां कौटजमित्यादिना षड्तुविहितान्योगान् "रूक्षाणामपि शस्यते" इत्यन्तेनाह । सातला चर्मकशा । जलदात्यये शरदि हेमन्ते यद्यपि प्रवलशीतवाते विरेचनं निषिद्धं तथापि विधेयविहितं विरेचनमेव ज्ञेयम् । सर्वर्तुयोगौ वसंते वसंतादौ च ज्ञेयौ । त्रिवृत्श्यामामित्यादिकोपि सर्वर्तुको योगः । त्र्यूषणमित्यादिचूर्णयोगो द्वितीयः ॥ ५२-६० ॥

सप्तलां त्रिफलां दन्तीं त्रिवृतां व्योषसैन्धवम् ।
कृत्वा चूर्णं तु सप्ताहं भाव्यमामलकीरसे ।
तद्योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु ॥ ६१ ॥

त्रिवृतां त्रिफलामित्यादिकस्तर्पणयोगः । एवं सर्वर्तुकयोगेन समं द्वौ तर्पणयोगौभवतः ॥ ६१ ॥

तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम् ।
मूलं श्यामात्रिवृतयोः पचेदामलकैः सह ।
जले तेन कषायेण पक्त्वा सर्पिः पिबेन्नरः ॥ ६२ ॥
निर्यूहेण तयोर्युक्त्या सिद्धसर्पिः पिबेत्तथा ।
साधितं वा पयस्ताभ्यां सुखं तेन विरिच्यते ॥६३॥

तुल्याम्लमित्येकं घृतं, श्यामेत्यादि द्वितीयं, श्यामात्रिवृत् कषायेणेत्यादि तृतीयं । साधितं चेत्यादि क्षीरयोगमेकमाह । घृतेन क्षीरेण च घृतेन क्षीरेण वैकेन मिलित्वा चत्वारि घृतक्षीराणि भवंति ॥ ६२-६३ ॥

त्रिवृन्मुर्वीस्तु सनखानष्टौ द्रोणे जले पचेत् ।
पादशेषं कषायं तं शीतं गुडतुलायुतम् ॥ ६४ ॥
स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ।
प्रलिप्ते विधिना मासं जातं तन्मात्रया पिबेत् ॥६५॥
ग्रहणीपाण्डुरोगघ्नं गुल्मश्वयथुनाशनम् ।
सुरां वा त्रिवृतापादकल्कां तत्काथसंयुताम् ॥६६॥

जले द्रोण इत्यादिना प्रथमा सुरा सुराम्वेत्यादिना द्वितीया एवं द्वौ सुरायोगौ भवतः । त्रिवृद्योगयुक्तं किण्वं यस्यां सा तथा ॥ ६४-६६ ॥

यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा ।
आसुतं षडहं षण्णे जातं सौवीरकं पिबेत् ॥ ६७ ॥
भृष्टान्मासतुषान्शुद्धान्यवांस्तच्चूर्णसंयुतान् ।
आसुतानम्भसा तद्वत्पिबेज्जातं तुषोदकम् ॥ ६८ ॥

यवैरित्यादिना सौवीरकतुषोदके प्राह । एतौ द्वौ कांजिकयोगौ । कुल्माष उत्स्विन्नयवपिष्टकम् । पल इति धान्यादिराशौ । तच्चूर्णसंयुतानिति त्रिवृच्चूर्णसंयुतान् । तद्वदिति षडहपल्ले स्थितान् ॥ ६७ ॥ ६८ ॥

तथा मदनकल्पोक्तान्खाण्डवादीन्पृथग्दश ।
त्रिवृच्चूर्णेन संयोज्य विरेकार्थं प्रयोजयेत् ॥ ६९ ॥

तथेत्यादिना षाडवादियोगान् दशाह । दश षाडवादयो वदरषाडवलेहं मोदकोत्कारिका तर्पणं शाकमांसरसयूषमद्यानां इति ग्रंथेन मदनकल्पोक्ताः ॥ ६९ ॥

त्वक्केशराम्रातकदाडिमैला
सितोपलामाक्षिकमातुलुङ्गैः ।
मद्यैस्तथान्यैश्च मनोनुकूलै-
र्युक्तानि देयानि विरेचनानि ॥ ७० ॥
शीताम्बुना पीतवतश्च तस्य
सिञ्चेन्मुखच्छर्दिविघातहेतोः ।
हृद्यांश्च मृत्पुष्पफलप्रवाला-
नम्लं च दद्यादुपजिघ्रणार्थम् ॥ ७१ ॥"

संप्रति दशोत्तरं योगशतमभिधाय वांतिनिरासार्थं कृत्यत्रयेण समं विरेचनप्रयोगानाह—त्वक्केशरेत्यादि ॥ ७० ॥ ७१ ॥

तत्र श्लोकाः ।

एकोऽम्लादिभिरष्टौ च दश द्वौ सैन्धवादिभिः ।
मूत्रेऽष्टादश यष्ट्यौ द्वौ जीरकादौ चतुर्दश ॥७२॥
क्षीरादौ सप्तलेहेऽष्टौ चत्वारः सितयापि च ।
पानकादिषु पञ्चैव षड्तौ पञ्चमोदकाः ॥ ७३ ॥
चत्वारश्च घृतक्षीरे द्वौ चूर्णे तर्पणे तथा ।
द्वौ मद्ये काञ्चिके द्वौ च दशान्ये खांडवादिषु ७४
श्यामायास्त्रिवृतायाश्च कल्पेऽस्मिन्समुदाहृतम् ।
शतं दशोत्तरं सिद्धं योगानां परमर्षिणा ॥ ७५ ॥

इति चरकसंहितायां कल्पस्थाने सप्तमोऽध्यायः ॥ ७ ॥

एकोम्लादिभिरित्यादिसंग्रहो व्यक्तार्थः । यष्ट्याह्वाविति द्वयोर्यष्ट्याह्वं विधिनेति जीवकादावेको मधुकेत्यादिना चापरः ॥ ७२-७५ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्ते विरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां श्यामात्रिवृत्कल्पव्याख्यायां सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ।

### चतुरङ्गुलकल्पः ।

"आरग्वधो राजवृक्षः शम्याकश्चतुरङ्गुलः ।
प्रग्रहः कृतमालश्च कर्णिकारोऽवघातकः ॥ १ ॥
ज्वरहृद्रोगवातासृगुदावर्तादिरोगिषु ।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ २ ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्योमृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ ३ ॥
फलकाले फलं तस्य ग्राह्यं परिणतं च यत् ।
तेषां गुणवतां भारं सिकतासु निधापयेत् ॥ ४ ॥
सप्तरात्रात्समुद्धृत्य शोषयेदातपे भिषक् ।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत् ॥ ५ ॥

श्यामात्रिवृत्कल्पानंतरं मृदुविरेचनत्वसामान्यात् चतुरंगुलकल्पो अभिधीयते । व्यवहारार्थं पर्यायानाह—आरग्वध इत्यादि । अधिकं पथ्य इति ज्वरादिषु विशेषेण विरेचनप्रयोगो हितः । फलकाल इति उचितफलकाले । तेषामिति मज्ज्ञां । जातमिति भूरिद्रव्योपलक्षणम् । मज्जानमिति फलमज्जानम् ॥१–५॥

द्राक्षारसयुतो देयो दाहोदावर्तपीडिते ।
चतुर्वर्षमुखे बाले यावद्द्वादशवार्षिके ॥ ६ ॥

द्राक्षेत्यादि प्रथमो योगः । चतुर्वर्षमुखे बाले यावद्द्वादशवार्षिक इत्यनेनास्य प्रयोगस्य चतुर्वर्षादर्वाक् यावदूर्ध्वं च द्वादशवर्षादवश्यं विरेचनतयोपयौगिकतां बालस्य निषेधयति ॥ ६ ॥

चतुरङ्गुलमज्ज्ञस्तु प्रसृतं वाथवाञ्जलिम् ।
सुरामण्डेन संयुक्तमथवा कोलसीधुना ॥ ७ ॥
दधिमण्डेन वा युक्तं रसेनामलकस्य वा ।
कृत्वा शीतकषायं तं पिबेत्सौवीरकेण वा ॥ ८ ॥

सुरामंडेनेति द्वितीयः अथवा कोलसीधुना सौवीरकेण वेत्यंतेन योगत्रयमपरं व्यक्तम् ॥ ७ ॥ ८ ॥

त्रिवृतो वा कषायेण मज्जकल्कं तथा पिबेत् ।
तथा बिल्वकषायेण लवणक्षौद्रसंयुतम् ॥ ९ ॥

त्रिवृतो वा कषायेण मज्ज्ञकल्कं तथा पिबेदिति सप्तमः । तथेत्यादिनाष्टमः । कषाययोगद्वयं जतूकर्णेप्युक्तमेव । त्रिवृद्बिल्वकषायाभ्यां सक्षौद्रलवणौ द्वौ इति । तेन पाठांतरं न प्रमाणम् संग्रहे च करिष्यति—कषाये च त्रिवृतो बिल्वकस्य च इति ॥ ९ ॥

कषायेणाथवा तस्य त्रिवृच्चूर्णं गुडान्वितम् ।
साधयित्वा शनैर्लेहं लेहयेन्मात्रया नरम् ॥ १० ॥
चतुरङ्गुलसिद्धाद्वा क्षीराद्दुदियाद्धृतम् ।
मज्ज्ञः कल्केन धात्रीणां रसे तत्साधितं पिबेत् ११

कषायेणेत्यादिको लेहो नवमः । चतुरंगुलेत्यादिना प्रथमं घृतं मज्ज्ञ इति चतुरंगुलमज्ज्ञः ॥ १० ॥ ११ ॥

तदेव दशमूलस्य कुलत्थानां यवस्य च ।
कषाये साधितं कल्कैः सर्पिः श्यामादिभिः पिबेत्

तदेवेत्यादिना च द्वितीयं घृतम् । श्यामादिभिरिति मदनकल्पपठितैर्नवभिः श्यामात्रिवृद्दंती इत्यादिना ॥ १२ ॥

दन्तीक्वाथेऽञ्जलिं मज्ज्ञः शम्पाकस्य गुडस्य च ।
दत्त्वामासार्धमासस्थमरिष्टं पाययेत च ॥ १३ ॥
यस्य यत्पानमन्नं च हृद्यं स्याद्दपि वा कटु ।
लवणं वा भवेत्तेन युक्तं दद्याद्विरेचनम् ॥ १४ ॥"

दंतीत्यादिना अरिष्टयोगमाह । गुडस्य चांजलिमिति संबंधः । मासार्धमासस्थमिति सार्धमासस्थम् । यस्य यदित्यादिनाऽनुक्तमपरापरसाधनं विधत्ते । हृद्येन हि विरेचनयोगस्य प्रियता स्यात् । पानमन्नं चेति हृद्यमित्यादिभिः प्रत्येकं संबध्यते ॥ १३ ॥ १४ ॥

### तत्र श्लोकाः ।

द्राक्षारसे सुरासीध्वोर्दधि चामलकीरसे ।
सौवीरककषायाभ्यां बिल्वशम्पाकयोस्तथा ॥ १५ ॥
लेहोऽरिष्टो घृते द्वे च योगा द्वादश कीर्तिताः ।
चतुरङ्गुलकल्पेऽस्मिन्सुकुमाराः प्रकीर्तिताः ॥ १६ ॥

इति चरकसंहितायां कल्पस्थाने अष्टमोऽध्यायः ॥ ८ ॥

द्राक्षेत्यादि संग्रहो व्यक्तः ॥ १५ ॥ १६ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां कल्पस्थानव्याख्यायां चतुरंगुलकल्पव्याख्यायामष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः ।

### तिल्वककल्पः ।

तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।
तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्जिताम् ॥ १ ॥
चूर्णयेत्तु त्रिधा कृत्वा द्वौ भागौ क्वाथयेत्ततः ।
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ २ ॥
भागं तं दशमूलस्य पुनः क्वाथेन भावयेत् ॥ ३ ॥
शुष्कं चूर्णं पुनः कृत्वा तत ऊर्ध्वं प्रयोजयेत् ॥

चतुरंगुलवत् तिल्वकस्यानपायित्वाच्चतुरंगकल्पानंतरं तिल्वककल्पोभिधीयते अंतर्वल्कलवर्जितमिति तिल्वकस्यांतर्वल्कलं कठिनं भवति तदर्थं तद्वर्जनम् । श्चोतयेदिति वचनेन षड्गुणद्रवेणैकविंशतिवारान् स्रावयेदिति ज्ञेयम् । मदनफले एवंभूतस्यैव स्रावणस्य दृष्टत्वात् । भावनाविधिश्च निरंतरं कृत एव ॥१–३॥

दधितक्रसुरामण्डमूत्रैर्बदरसीधुना ।
रसेनामलकानां वा ततः पाणितलं पिबेत् ॥ ४ ॥

दधिमंडेत्यादिना पिबेदित्यंतेन पंचयोगाः । मेषशृंगीत्यादिना विशिष्टसौवीरकेण योग एकः ॥ ४ ॥

सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ।
सेपशृङ्ग्यभयाकृष्णाचित्रकैः सलिले शृते ॥ ५ ॥
तत्तुलां सुनुयात्तच्च जातं सौवीरकं यदा
भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत्तदा ॥ ६ ॥
दन्तीचित्रकयोर्द्रोणे सलिलस्याढकं पृथक् ।
संक्वाथ्य च गुडस्यैकां तुलां लोध्रस्य चाञ्जलिम् ॥७॥
आवपेत्तत्परं पक्षान्मद्यपानाद्विरेचनम् ।
तिल्वकस्य कषायेण दशकृत्वः सुभावितम् ॥ ८ ॥
मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ।

सुरामित्यादिना सुरायोगावाह । कंपिल्लकस्येत्यादिना कंपिल्लकयोगमाह । कंपिल्लको गुंडारोचनिका । मात्रामिति तिल्वकचूर्णमात्रा ॥ ५–८ ॥

चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य एव च ॥ ९ ॥
त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः ।
लोध्रचूर्णयुतः सिद्धो लेहः श्रेष्ठो विरेचने ॥ १० ॥
तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठो विरेचने ॥ ११ ॥

चतुरंगुलेत्यादिना प्रथमो लेहः । चतुरंगुलकल्पेनेति कषायेणाथवा तस्य इत्यादिनोक्तविधानेन । तेन अत्र तिल्वकक्काथेन गुडान्वितत्रिवृच्चूर्णं पक्त्वा लेहः कर्तव्यः । त्रिफलाया इत्यादिना द्वितीयो लेहः । तिल्वकस्येत्यादिना तृतीयः ॥ ९–११ ॥

अष्टाष्टौ त्रिवृतादीनां मुष्टींश्च सनखान्पृथक् ।
द्रोणेऽपां साधयेत्पादशेषे प्रस्थं घृतात्पचेत् ॥१२॥
पिष्टैस्तैरेव बिल्वांशैः समूत्रलवणैरथ ।
ततो मात्रां पिबेत्काले श्रेष्ठमेतद्विरेचनम् ॥ १३ ॥

अष्टाष्टावित्यादिना प्रथमं घृतम् । सनखानिति विद्यमाननखान् । अत्र त्रिवृदादिगृहीतलोध्रस्य प्रधानत्वात् द्विगुणो भागो भवति । उक्तं हि जतूकर्णे—त्रिवृदादिर्द्विगुणः क्वाथ इति । समभागत्वे लोध्रस्य प्रयोगस्य केन विशेषः स्यात् । तस्मात् यथाव्याख्यातमेव साधु । लवणमप्यत्र पलांशमेव ॥ १२ ॥ १३ ॥

लोध्रकल्केन मूत्राम्ललवणैश्च पचेद्घृतम् ।
चतुरङ्गुलकल्पेन सर्पिषी द्वे च साधयेदिति ॥१४॥

तत्र श्लोकौ ।

पञ्च दध्यादिभिस्त्वेकः सुरासौवीरकेण च ।
एकोऽरिष्टस्तथा योग एकः कम्पिल्लकेन च ॥ १५ ॥
लेहास्त्रयो घृतेनापि चत्वारः संप्रदर्शिताः ।
योगास्ते लोध्रमूलानां कल्पे षोडश दर्शिताः ॥१६॥

इति चरकसंहितायां कल्पस्थाने नवमोऽध्यायः ॥ ९ ॥

लोध्रेत्यादि द्वितीयं घृतम् । चतुरंगुलेत्यादिना घृतद्वयमतिदिश्यते । एवं घृतेन च चत्वारो योगा भवंति । चतुरंगुलघृते, च चतुरंगुलसिद्धात् इत्यादिना तथा तदेव दशमूलस्य इत्यादिना प्रोक्ते ज्ञेये । तथा च चतुरंगुलकल्पेन लोध्रादीनां लोध्रघृते भवतः ॥ पंच दध्यादिभिरित्यादि संग्रहो व्यक्तः ॥१४–१६॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां तिल्वककल्पव्याख्या नाम नवमोऽध्यायः ॥

---

## दशमोऽध्यायः ।

### सुधाकल्पः ।

"विरेचनानां सर्वेषां सुधा तीक्ष्णतमा मता ।
सङ्घातं तु भिनत्त्याशु दोषाणां कष्टविभ्रमात् ॥ १ ॥
तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन ।
न दोषनिचये चाल्पे सति वान्यपरिक्रमे ॥ २ ॥

षोडशसंख्यामभिधायकतिल्वककल्पानंतरं यथाक्रममधिकसंख्याप्रयोगाभिधानक्रमात् विंशतियोगाभिधायकसुधाकल्पोऽभिधीयते । इतश्चानंतरमतिरिक्तसंख्याभिधानक्रमेणैव नवत्रिंशत्प्रयोगाभिधायकसुधाकल्पोऽभिधास्यते ॥

विरेचनानामिति विरेचनद्रव्याणां ॥ कष्टविभ्रमादिति दुःखसाध्यविभ्रमजनिका । तस्मादिति अतितीक्ष्णत्वात् कष्टविभ्रमत्वाच्च । सति मार्गक्रम इति । उपक्रममार्गांतरे सति न सुधा प्रयोक्तव्या, तेन गत्यंतरासंभव एव सुधा प्रयोक्तव्या इत्यर्थः ॥ १ ॥ २ ॥

पाण्डुरोगोदरे गुल्मे कुष्ठे दूषीविषार्दिते ।
श्वयथौ मधुमेहे च दोषविभ्रान्तचेतसि ॥ ३ ॥
रोगैरेवंविधैर्ग्रस्तं ज्ञात्वा सप्राणमातुरम् ।
प्रयोजयेन्महावृक्षं सम्यक् स ह्यवचारितः ॥ ४ ॥

पांडुरोग इत्यादौ मधुशब्देन प्रमेहा एवोच्यंते विशिष्टस्तु वातिकमधुमेहश्चासाध्य एव । तेन तं प्रति विरेचनोपदेशोऽनर्थक एव स्यात् । मधुमेहशब्दश्च यथा प्रमेहमात्र एव वर्तते तत् प्रतिपादितमेव प्रमेहचिकित्सिते । दोषव्याप्त्या विभ्रांतं चेतो यस्मिन् तस्मिन् विभ्रांतचेतसि उन्मादे । सप्राणमिति बलवंतम् । प्रवरो बहुकंटक इति अनतितीक्ष्णतयाल्पकंटकः महावृक्षतः श्रेष्ठ इत्यर्थः ॥ ३ ॥ ४ ॥

सद्यो हरति दोषाणां महान्तमपि संचयम् ।
द्विविधः स मतो यैश्च बहुभिश्चैव कण्टकैः ॥ ५ ॥
सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः ।
स नाम्ना तु गुडानन्दी सुधा निस्त्रिंशपत्रकः ॥ ६ ॥
तं विपाट्याहरेत्क्षीरं शस्त्रेण मतिमान्भिषक् ।
द्विवर्षं वा त्रिवर्षं वा शिशिरान्ते विशेषतः ॥ ७ ॥

ताविति स्वल्पकंटकबहुकंटकौ महावृक्षौ । यद्यपि मदनकल्पे शरदि त्वक्कंदक्षीराणि इत्युक्तं तथापि सुधानामत्र शिशिरांते क्षीरग्रहणमपवादरूपं ज्ञेयम् । शिशिरस्य शेषा दिवसाः शिशिरांताः ॥ ५–७ ॥

बिल्वादीनां बृहत्या वा कण्टकार्यापि चैकशः ।
कषायं तं समांशेन कृत्वाङ्गारेषु शोषयेत् ॥ ८ ॥
ततः कोलसमां मात्रां पिबेत्सौवीरकेण वा ।
तुषोदकेन कोलानां रसेनामलकस्य वा ॥ ९ ॥
सुरया दधिमण्डेन मातुलुङ्गरसेन वा ॥ १० ॥

बिल्वादीनामिति बिल्वादिपंचमूलस्य । अंगारेषु शोषयेदिति अंगारोपरिस्थितपात्रस्थं तत् सुधाक्षीरं बिल्वादीनामन्यतमस्य कषायेण समानं शोषणेन कठिनं कुर्यात् ततः कोलमात्रगुटिका ततः सौवीरकादीनामन्यतमेन पातव्या । एवं सौवीरकादिभेदात् सप्त योगा भवंति । तथात्र बिल्वादिकषायस्य भेदेन भेदो विवक्षितः ॥ ८–१० ॥

सातलां काञ्चनक्षीरीं श्यामादीनि कटुत्रिकम् ।
यथोपपत्ति सप्ताहं सुधाक्षीरेण भावयेत् ॥ ११ ॥
कोलमात्रं घृतेनातः पिबेन्मांसरसेन वा ।
न्यूपणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा ॥ १२ ॥

सातलामित्यादिना वातसाधनघृतमांसरसभेदात् योगद्वयमाह—सातला चर्मकशा श्यामादिग्रहणेनैव सातलायामपि लब्धायां पृथक्सातलाभिधानमेकयापि सातलया कृतसुधायोगस्य प्राधान्यख्यापनार्थम् ॥ ११ ॥ १२ ॥

स्नुक्क्षीरभावितं सम्यग्विदध्याद्गुडपानकम् ।
त्रिवृतारग्वधं दन्तीं शङ्खिनीं सप्तलां समाम् ॥१३॥

न्यूपणमित्यादिना पानयोगमाह । गुडपानकमिति गुडसंस्कृतपानकम् ॥ १३ ॥

निशिस्थितं गवां मूत्रे शोषयेदातपे ततः ।
सप्ताहं भावयित्वैवं स्नुक्क्षीरेणापरं पुनः ॥ १४ ॥
सप्ताहं भावयेच्छुष्कं ततस्तेनापि भावितम् ।
गन्धमाल्यं तदाघ्राय प्रावृत्य पटमेव च ॥ १५ ॥
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः ॥ १६ ॥

त्रिवृदित्यादिना घ्रेययोगमाह । गोमूत्रे रजनीं कृत्वेति रजनीं व्याप्य गोमूत्रे स्थापयित्वा । पटमेवेति यथोक्तविधिभावितं पटमावृत्येत्यर्थः ॥ १४–१६ ॥

श्यामात्रिवृत्कषायेण स्नुक्क्षीरघृतफाणितैः ।
लेहं पक्त्वा विरेकार्थं लेहयेन्मात्रया नरम् ॥ १७ ॥

श्यामेत्यादिना लेहयोगमाह । मात्रयेत्यनपायिमात्रया ॥ १७ ॥

पाययेत सुधाक्षीरं यूषैर्मांसरसैर्घृतैः ।
भावितान् शुष्कमत्स्यान् वा मांसं वा भक्षयेन्नरः ॥
क्षीरेणामलकैः सर्पिश्चतुरङ्गुलवत्पचेत् ।
सुरां वा कारयेत्क्षीरं घृतं वा पूर्ववत्पचेदिति ॥ १९ ॥

पाययेदित्यादिना पृथक् यूषमांसरसघृतैर्योगत्रयमाह । भावितानित्यादिना शुष्कमत्स्यमांसयोगावाह । क्षीरेणेत्यादिना एकम् । घृतं चेत्यादिना एकं वक्ष्यति । आमलकैश्चतुरंगुलवदिति वचनात् आमलकरसयुक्तं यच्चतुरंगुलं चतुरंगुलकल्पे चतुरंगुलम् इत्यादिनोक्तं तस्य विधानमतिदिशति । सुरां वा कारयेत् क्षीर इति स्नुक्क्षीरभावितं इत्यादिविधिभिः सुरां कुर्यात् । घृतं वा पूर्ववत् पचेदित्यत्र पूर्ववदित्यनेन तिल्वककल्पेतिदेशविहितघृतद्वयं पूर्ववत् लोध्रकल्केन इत्यादिग्रंथविहितम् । तद्विधिरेव प्रत्यासन्नत्वादतिदिश्यते ॥ १८ ॥ १९ ॥

तत्र श्लोकौ ।

सौवीरकादिभिः सप्त सर्पिषा च रसेन च ।
पानकं त्रयलेहौ च योगा यूषादिभिस्त्रयः ॥ २० ॥
द्वौ शुष्कमत्स्यमांसाभ्यां सुरका द्वे च सर्पिषी ।
सुधाकल्पस्य योगास्ते विंशतिः समुदाहृताः ॥२१॥

इति चरकसंहितायां कल्पस्थाने दशमोऽध्यायः ॥ १० ॥

सौवीरकेत्यादिभिः संग्रहो व्याकृत एव ॥ २० ॥ २१ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां सुधाकल्पव्याख्या इति दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ।

### सप्तलाशङ्खिनीकल्पः ।

"सप्तला चर्मसाह्वा च बहुफेनरसा च सा ।
शङ्खिनी तिक्तला चैव यवतिक्ताक्षिपीडकः ॥ १ ॥

पूर्वाध्यायोक्तसंबंधादेव सप्तलाशंखिनीकल्पोभिधीयते इह चाध्याये ये योगा अभिधीयंते ते सप्तलया वा शंखिन्या वा उभाभ्यां वा संपाद्यंते श्यामात्रिवृद्योगवत् ॥ १ ॥

ते गुल्मगरहृद्रोगकुष्ठशोफोदरादिषु ।
विकासितीक्ष्णरूक्षत्वाद्योज्ये श्लेष्माधिकेषु तु ॥२॥
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ।
सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत् ॥ ३ ॥

ते गुल्मेत्यादि । ते सप्तलाशंखिन्यौ ॥ २ ॥ ३ ॥

अक्षमात्रं तयोः पिण्डं प्रसन्नालवणायुतम् ।
हृद्रोगे कफवातार्ते गुल्मे चैव प्रयोजयेत् ॥ ४ ॥
पियालपीलुकर्कन्धुकोलाम्रातकदाडिमैः ।
द्राक्षापनसखर्जूरबदराम्लपरूषकैः ॥ ५ ॥
मैरेयदधिमण्डेऽम्ले सौवीरकतुषोदके ।
शीधौ चाप्येष कल्पः स्यात्सुखं शिघ्रविरेचनः ॥६॥

अक्षमात्रमित्यादिना कल्कस्य प्रसन्नालवणयुक्तस्य पियालादिकषायेषु षोडशयोगा भवंति । अत्र यद्यपि मैरेयैक्षवौ न कषायौ तथापि बहुकषायांतर्गतत्वात् कषायावेव वक्तव्यौ । संग्रहे कषाया दशषडित्यनेन व्यपदिष्टा माषराशिन्यायात् । कषायशब्देन कल्ककषायोऽभिप्रेतः । कर्कंधूकोलबदरशब्देन त्रिप्रकारबदरग्रहणम् ॥ ४–६ ॥

तैलं विदारिगन्धाद्यैः पयसि क्वथिते पचेत् ।
सप्तलाशङ्खिनीकल्के त्रिवृच्छ्यामार्धभागिके ॥ ७ ॥
दधिमण्डेन सन्धाय सिद्धं तत्पाययेत च ।
शङ्खिनीचूर्णभागौ द्वौ नीलीचूर्णस्य चापरः ॥ ८ ॥
हरीतकीकषायेण तैलं तत्पीडितं पिबेत् ।
अतसीसर्षपैरण्डकरञ्जेष्वेष संविधिः ॥ ९ ॥

तैलमित्यादिना प्रथमतैलयोगः । त्रिवृत्श्यामार्धभागिक इति सप्तलाशंखिनीकल्कयोरर्धभागेन त्रिवृत्श्यामाकल्को देयः ॥ शंखिनीत्यादिना पंच तैलयोगानाह एवं षट्तैलयोगा भवंति । तैलं तत् पीडितमिति शंखिनीचूर्णं तिलचूर्णं हरीतकीकषायेण संधाय पीडितं तत् तैलं पिबेदिति । अतस्यादिष्वेष संविधिरिति वचनेन तैलस्थानेऽतस्यादीनां प्रयोगं विधत्ते ॥ ७-९ ॥

शङ्खिनीसप्तलासिद्धात्क्षीराद्युदियाद्घृतम् ।
कल्कभागं तयोरेव त्रिवृच्छ्यामार्धसंयुतम् ॥१०॥
क्षीरेणालोड्य संपक्वं पिबेत्तच्च विरेचनम् ।
तथा दन्तीद्रवन्त्योः स्यादजश्रृङ्ग्यजगन्धयोः ॥११॥
क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः ।
मसूरविदलायाश्च प्रत्यक्श्रेण्यास्तथैव च ॥ १२ ॥
विडङ्गार्द्धांशकल्केन तद्वत्साध्यं घृतं पुनः ।
शङ्खिनीसप्तलाधात्रीकषाये साधयेद्घृतम् ॥ १३ ॥
त्रिवृत्कल्पेन सर्पिश्च त्रयो लेहाश्च पूर्ववत् ।
सुराकम्पिल्लयोर्योगः कार्यो लोध्रवदेव च ॥ १४ ॥

शंखिनीसप्तलेत्यादि प्रथमं घृतम् । दंतीद्रवंतीत्यादिना द्विद्विद्रव्यकल्केन सप्तला शंखिनी कल्कार्धेन । अपिच पंचघृतयोगा दंतीद्रवंत्यादियोगात् । द्रवंती दंतीभेदः । अजशृंगी विषाणी । क्षीरिणी दुग्धिका मसूरविदला श्यामलता । प्रत्यक्पर्णी मूषिकपर्णी विडङ्गार्द्धांशकल्केनेति दंत्यादिद्विवर्गार्धभागिकेन कल्केन । शंखिनीत्यादिना सप्तमं घृतं । अत्र लघिकृतत्वात् सप्तलाशंखिन्योश्च द्विगुणैकः कषायोमिधीयते । लोध्रवदिति लोध्रकल्पवदिति लोध्रकल्पे यथा त्रयो लेहाः चतुरंगुलकल्पेन इत्यादिनोक्ताः । तेन लोध्रस्थाने सप्तलाशंखिनीयोगः कर्तव्यः । तथा सुरायोगः कंपिल्लयोगश्च लोध्रवदिति अत्रापि लोध्रस्थाने सप्तलाशंखिनीप्रक्षेपः कर्तव्यः ॥१०-१४॥

दन्तीद्रवन्त्योः कल्पेन सौवीरकतुषोदके ।
अजगन्धाजश्रृङ्ग्योश्च तद्वत्स्यातां विरेचने ॥ १५ ॥"

दंतीद्रवंत्योरित्यादिना साधनचतुष्टयमाह एतत् साधनचतुष्टयं पूर्वसुरायोगेन समं पंचमद्ये इति वचनेन संग्रहगृहीतं सौवीरकादीनां च मद्यशब्देनाभिधानमिहासूतत्वसामान्याज्ज्ञेयम् । दंतीद्रवंत्योः कल्पेनेति अनागतावेक्षणेन दंतीद्रवंतीकल्पे सौवीरकतुषोदके ये वक्तव्ये तद्विधानमिहाप्यतिदिशति । तत्र अजगंधाकषायेण सौवीरकतुषोदके इति वक्तव्यं तेनेहाप्यजगंधाकषाययुक्तसप्तलाशंखिन्योः सौवीरकतुषोदके कर्तव्ये । अत्र तथा दंतीद्रवंत्योश्च कषायेणाजगंधायाः । गौडः कार्योजश्रृंग्या वा स वै सुखविरेचनः इत्यनेनोक्तस्य गौडारिष्टस्य दंतीद्रवंतीकल्पोक्तस्य विधानमतिदिशति ॥ १५ ॥

तत्र श्लोकौ

कषाया दश षट् चैव षट् तैलेऽष्टौ च सर्पिषि ।
पञ्च मद्ये त्रयो लेहा योगाः काम्पिल्लके तथा ॥१६॥
सप्तलाशङ्खिनीभ्यां ते त्रिंशदुक्ता नवाधिकाः ।
योगाः सिद्धाः समस्ताभ्यामेकशोऽपि च ते हिताः॥

इति चरकसंहितायां कल्पस्थाने एकादशोऽध्यायः ॥ ११ ॥

कषाया इत्यादि संग्रहो व्याकृतः ॥ १६ ॥ १७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां सप्तलाशंखिनीकल्पव्याख्या इति एकादशोध्यायः ॥

## द्वादशोऽध्यायः ।

### दन्तीद्रवन्तीकल्पः ।

"दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मकूलकः ।
द्रवन्तीनामतश्चित्रा न्यग्रोधी मूषिकाह्वया ॥ १ ॥
तयोर्मूलानि संगृह्य स्थिराणि बहलानि च ।
हस्तिदन्तप्रकाराणि श्यावताम्राणि बुद्धिमान् ॥ २ ॥

पारिशेष्यात् दंतीद्रवंतीकल्पोभिधीयते । दंतीद्रवंत्योरपि तयोः पर्यायानाह । स्थिराणीति सारभूतानि । बहलानीति घनलक्ष्मानि हस्तिदंतप्रकाराणीतीत्यंतपूर्वोपचितानि । श्यावताम्राणीति यथाक्रमेण दंत्याः श्यावानि द्रवंत्यास्ताम्राणि ॥१॥२॥

पिप्पलीमधुलिप्तानि स्वेदयेन्मृत्कुशान्तरे ।
शोषयेदातपेऽर्काग्नी हतो ह्येषां विकाशिताम् ॥३॥

मृत्कुशांतर इति पिप्पलीमधुककल्काभ्यां परिलिप्य कुशैः परिवेष्ट्य ततो मृदावलिप्तानि स्वेदयेत् । अग्निस्वेदातपशोषणफलमाह—अग्न्यर्कौ हतो ह्येषां विकाशितामिति । दंतीद्रवंतीमूलानां विकाशितालक्षणं गुणं स्वेदोपशोषणाभ्यामग्न्यर्कौहतः । तेन नातिदोषाणि दंतीद्रवंतीमूलानि स्युरिति भावः ॥ ३ ॥

तीक्ष्णोष्णान्याशुकारीणि विकाशीनि गुरूणि च ।
विलापयन्ति दोषौ द्वौ मारुतं कोपयन्ति च ॥ ४ ॥

तीक्ष्णोष्णानीत्यादिना तेषां गुणकथनम् दोषौ द्वाविति पित्तश्लेष्माणौ ॥ ४ ॥

दधितक्रसुरामण्डैः पिण्डमक्षसमं तयोः ।
पियालकोलबदरपीलुशीधुभिरेव च ॥ ५ ॥
पिबेद्गुल्मोदरी दोषैरभिखिन्नश्च यो नरः ।
गोमृगाजरसैः पाण्डुः कृमिकुष्ठी भगंदरी ॥ ६ ॥

दधीत्यादिना सप्तभिर्द्रव्यैः सप्तप्रयोगानाह । शीधुशब्दः पियालादिभिश्चतुर्भिः पृथक् संबध्यते । अभिखिन्न इत्याक्रांततः । गोमृगाजरसैरित्यत्रापि पिंडमक्षसमं तयोरित्यनुवर्तते । अत्रापि गवादिरसैस्त्रिभिस्त्रयः प्रयोगा भवंति ॥ ५ ॥ ६ ॥

तयोः कल्के कषाये च दशमूलरसैर्युते ।
कक्ष्यालजीविसर्पेषु दाहे च विपचेद्धृतम् ॥ ७ ॥
तैलं मेहे च गुल्मे च सोदावर्ते कफानिले ।
चतुःस्नेहं शकृच्छुक्रवातसङ्गानिलार्तिषु ॥ ८ ॥

तयोरित्यादिना त्रीन् स्नेहयोगानाह । अनयोः कल्ककषाये च दशमूलरसतुल्यभागेन घृतं पचेत् विसर्पादिषु । तैलं पूर्ववन्मेहादिषु । चतुःस्नेहस्तु वातसंगादिषु ॥ ७ ॥ ८ ॥

रसे दन्त्यजशृङ्ग्योश्च गुडक्षौद्रघृतान्वितः ।
लेहः सिद्धो विरेकार्थे दाहसन्तापमेहनुत् ॥ ९ ॥
वाततर्षे ज्वरे पैत्ते स्यात्स एवाजगन्धया ।
मूलं दन्तीद्रवन्त्योश्च पचेदामलकीरसे ॥ १० ॥
त्रींस्तु तस्य कषायस्य भागौ द्वौ फाणितस्य च ।
तप्ते सर्पिषि तैले वा भर्जयेत्तत्र चावपेत् ॥ ११ ॥
कल्कं दन्तीद्रवन्त्योश्च श्यामादीनां च भागशः ।
तत्सिद्धं प्राशयेल्लेहं सुखं तेन विरिच्यते ॥ १२ ॥

रस इत्यादिना एको लेहः । वाततर्ष इत्यादिना द्वितीयः । स एवाजगंधयेत्यनेन पूर्वोक्तो लेह एवाजशृंगीस्थानेऽजगंधादानं विशिष्टं ख्यापयति । मूलं दंतीत्यादिना—तृतीयो लेहः । भागश इति प्रत्येकभागग्रहणेन । एवमेतदंतैः प्रयोगैराद्यषोडशको भवेत् ॥ ९–१२ ॥

रसे च दशमूलस्य तथा वैभीतके रसे ।
हरीतकीरसे चैव लेहानेवं पचेत्पृथक् ॥ १३ ॥
तयोर्बिल्वसमं चूर्णं तद्रसेनैव भावितम् ।
असृष्टविषि वातोत्थे गुल्मे चाम्लयुतं शुभम् ॥१४॥

रसे चेत्यादौ एवम् इत्यनेन पूर्वोक्तलेहत्रयमतिदिशति । तयोरित्यादिकश्चतुर्थः तयोरिति दंतीद्रवंतीमूलयोः । असृष्ट इति विवद्धे ॥ १३॥१४ ॥

पाटयित्वेक्षुकाण्डं वा कल्केनालिप्य चान्तरा ।
स्वेदयित्वा ततः खादेत्सुखं तेन विरिच्यते ॥१५॥

पाटयित्वेत्यादिपंचमः । कल्केनालिप्य चांतरेति दंतीद्रवंतीकल्केन पाटितेक्षुकांडमध्ये आलिप्य ॥ १५ ॥

मूलं दन्तीद्रवन्त्योश्च सह मुद्गैर्विपाचयेत् ।
लावतित्तिरिकाणां च ते रसाः स्युर्विरेचने ॥ १६ ॥
तयोर्वापि कषायेण यवागूं जाङ्गलं रसम् ।
माषयूषांश्च संस्कृत्य दद्यात्तेन विरिच्यते ॥ १७ ॥

मूलं दंतीत्यादिनाष्टौ कृताकृतरसानाह । अत्र लाववर्तीरकादयः—लाववर्तीरकश्चैव वाणीकः सकपिंजलः । चकोरश्चोपचक्रश्च कुकुभो रक्तवर्मकः इति अष्टावुक्ताः । तेषां प्रत्येकयोगादष्टौ रसा भवंति । तयोर्वापीत्यादिना यवागूजांगलरसयोगं मांसयूषयोगं चाह । एवमेते द्रवपूर्वयोगैर्मिलिला द्वितीयः षोडशको भवेत् ॥ १६॥१७ ॥

तत्कषायात्त्रयो भागा द्वौ सितायास्तथैव च ।
एको गोधूमचूर्णानां कार्या चोत्कारिका शुभा ॥ १८ ॥
मोदको वास्य कल्केन कार्यस्तत्र विरेचने ।
तयोर्वापि कषायेण मद्यमस्योपकल्पयेत् ॥ १९ ॥
दन्तीक्वाथेन चालोड्य दन्तीतैलेन साधितम् ।
गुडलावणिकान्भक्ष्यान्विविधान्भक्षयेन्नरः ॥ २० ॥
द्रवन्तीं मरिचं दन्तीं यमानीमुपकुंचिकाम् ।
नागरं हेमदुग्धीं च चित्रकं चेति चूर्णितम् ॥२१॥
सप्ताहं भावयेन्मूत्रे गवां पाणितलं ततः ।
पिबेद्धृतेन चूर्णं तु विरिक्तश्चापि तर्पणम् ॥ २२ ॥
सर्वरोगहरं मुख्यं सर्वेष्वृतुषु शोभनम् ।
चूर्णं तदनपायित्वाद्बालवृद्धेषु पूजितम् ॥ २३ ॥
दुर्भक्ताजीर्णपार्श्वार्तिगुल्मप्लीहोदरेषु च ।
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥ २४ ॥
पलं चित्रकदन्त्योश्च हरीतक्याश्च विंशतिः ।
त्रिवृत्पिप्पलीकर्षौ द्वौ गुडस्याष्टपलेन तत् ॥ २५ ॥
विनीय मोदकान्कुर्याद्दशैकं भक्षयेत्ततः ।
उष्णाम्बु च पिबेच्चानु दशमे दशमेऽहि च ॥ २६ ॥
एते निष्परिहाराः स्युः सर्वरोगनिवर्हणाः ।
ग्रहणीपाण्डुरोगार्शःकण्डूकोठानिलापहाः ॥ २७ ॥
दन्तीद्विपलनिर्यूहो द्राक्षार्धप्रस्थसाधितः ।
शोधनं पित्तकासे च पाण्डुरोगे च शस्यते ॥ २८ ॥
दन्तीकल्कं समगुडं शीतवारियुतं पिबेत् ।
विरेचनं मुख्यतमं कामलाहरमुत्तमम् ॥ २९ ॥
श्यामादन्तीरसे गौडः पिप्पलीफलचित्रकैः ।
लिप्तेऽरिष्टोऽनिलकफप्लीहपाण्ड्वदरापहः ॥ ३० ॥
तथा दन्तीद्रवन्त्योश्च कषायेणाजगन्धयोः ।
गौडः कार्योऽजशृङ्ग्या वा रसैः सुखविरेचनः ३१

तत्कषायादित्यादिना कषाययोगं मोदकयोगं चाह । कषायादिति दंतीद्रवंतीकषायात् मोदककरणेपि तत्कषाया त्रयोभागा इत्यादिविधानमनुवर्तते । तयोश्चापि कषायेण मद्यानीति तृतीयः । दंतीत्यादिना भक्ष्ययोगश्चतुर्थः । दंतीद्रवंतीमरिचमित्यादिकः पंचमः । हेमदुग्धा स्वर्णक्षीरी । चूर्णम् त्वित्यंतं पिबेदिति संबंधः । चित्रकमित्यादिकः षष्ठः ॥ ॥ हरीतक्याश्च विंशतिरित्याकृतिमानेन । अयं योगस्तत्रांतरेऽगस्त्यमोदक इति ख्यातः । दंतीद्विपलैरित्यादिकः सप्तमः । अत्र दंतीद्विपलद्राक्षार्धप्रस्थे क्वाथः कर्तव्यः । दंतीकल्कमित्यादिकोष्टमः । श्यामेत्यादिको नवमः गौड इति गुडप्रकृतिकः । लिप्त इत्यत्र घट इति शेषः । तथा दंतीद्रवंत्योश्चेत्यादिको दशमः । तयेत्यनेन पूर्वयोगोक्तपिप्पल्यादिघटावलेप अतिदिश्यते । अजशृंग्या वेत्यादिक एकादशः । तथा अजशृंग्या वा दंतीद्रवंत्योः कषाये गौडोरिष्टः कार्य इति संबंधः ॥ १८–३१ ॥

**तच्चूर्णक्वाथमापाम्बुकिण्वतोयसमुद्भवा ।**
**मदिरा कफगुल्माल्पवह्निपार्श्वकटिग्रहे ॥ ३२ ॥**
**अजगन्धाकषायेण सौवीरकतुषोदके ।**
**सुराकम्पिल्लके योगा लोध्रवच्च तयोः स्मृताः" ३३**

तच्चूर्णेत्यादिको द्वादशः । अत्र तयोर्दंतीद्रवंत्योश्चूर्णक्वाथाभ्यां तथा माषांबुना किण्वकरणपूर्वकं या सुरा कृता तत्सुरोद्भवा मदिरा कर्तव्येति वाक्यार्थः । अजगंधेत्यादिना अपरंयोगद्वयमाह लोध्रवच्च तयोरिति । यथा लोध्रकल्पेपुं सुरालोध्रकषायेण इत्यादिना सुरा प्रोक्ता तथा कंपिल्लककषायेण इत्यादिना कंपिल्लकयोग उक्तः । तथा तयोरपि दंतीद्रवंत्योर्लोध्रस्य स्थाने प्रक्षेपात् सुरायोगः सौवीरकतुषोदकविधानेनैव कर्तव्य इति तृतीयः षोडशकः ॥ ३२॥३३ ॥

भवन्ति चात्र ।

**दध्यादिषु त्रयः पञ्च प्रियालाद्यैस्त्रयो रसे ।**
**स्नेहेषु वै त्रयो लेहाः षट् चूर्णे त्वेक एव च ॥३४॥**
**इक्ष्वावेकस्तथा मुद्गमांसानां च रसास्त्रयः ।**
**यवाग्वादौ त्रयश्चैक उक्ता उत्कारिकाविधौ ॥ ३५॥**
**एकश्च मोदके मद्ये चैकं तत्क्वाथतैलके ।**
**चूर्णमेकं पुनश्चैको मोदकः पञ्च चासवे ॥ ३६ ॥**
**एकः सौवीरकेऽथैकयोगः स्याच्च तुषोदके ।**
**एका सुरा कम्पिल्लके चैकः पञ्च घृते स्मृताः॥३७॥**
**दन्तीद्रवन्तीकल्पेऽस्मिन्प्रोक्ताः षोडशकास्त्रयः ।**
**नानाविधानां योगानां भुक्तिदोषामयान्प्रति ॥३८॥**

दध्यीत्यध्यायार्थसंग्रहो व्यक्त एव । भक्तिदोषामयान् प्रति उक्तानां नानाविधानां योगानां त्रयः षोडकाः प्रोक्ता इति योजना । भक्तिरिच्छा ॥ ३४-३८ ॥

**त्रिशतं पञ्चपञ्चाशद्योगानां वमने स्मृतम् ।**
**द्वे शते नवकाः पञ्च योगानां तु विरेचने ॥ ३९ ॥**
**ऊर्ध्वानुलोमभागानामित्युक्तानि शतानि षट् ।**
**प्राधान्यतः समाश्रित्य द्रव्याणि दश पञ्च च ॥४०॥**

संप्रति स्थानार्थसंग्रहमाह—त्रिशतमित्यादिना । पंचपंचाशदिति पंचपंचाशद्योगाधिकं त्रिशतम् । प्राधान्यतः समाश्रित्येति प्राधान्येन मदनफलादीनि द्रवंतीपर्यतानि पंचदशद्रव्याणि योगव्यपदेशतयाश्रित्य ॥ ३९ ॥ ४० ॥

**यद्धि येन प्रधानेन द्रव्यं समुपसृज्यते ।**
**तत्संज्ञकः स संयोगो भवतीति विनिश्चितम् ॥४१॥**
**फलादीनां प्रधानानां गुणभूताः सुरादयः ।**
**ते हितान्यनुवर्तन्ते मनुजेन्द्रमिवेतरे ॥ ४२ ॥**

अथात्र वमनादियोगेषु द्रव्यांतराणां सुरादीनामपि विद्यमानत्वात् कथं मदनफलादीनामवयवत्वेनैवामी योगा व्यपदिश्यंत इत्याह—यद्धीत्यादि ।—यद्यपि मदनादिभिः सुरादिभिश्च मिलित्वैव योगाः क्रियंते तथापि फलादीनां प्राधान्यात् फलादीनां योगा एत इति व्यपदेशो भवति न सुरादियोग इति। गुणभूता इत्यप्रधानभूताः । सुरादीनामप्राधान्य एव हेतुमाह—ते हितानुवर्तंत इति सुरादयो हि मदनादीन् वमनविरेचनप्रकारकार्यानुगुणतया प्रतीघातेन चानुवर्तंते ॥ ४१ ॥ ४२ ॥

**"विरुद्धवीर्यमप्येषां प्रधानानामबाधकम् ।**
**समानवीर्यं त्वधिकं क्रियासामान्यमिष्यते ॥ ४३ ॥**

ननु ये तावदनुगुणा मदनादीनां ते गुणभूता भवंतु विपरीता ये दंत्यादय उग्रतया तथा मांसरसादयो हृद्यतया वमनप्रतिकूला मदनादी ते कथं गुणभूता इत्याह—विरुद्धवीर्यमप्येषां प्रधानानामबाधकमिति । विरुद्धवीर्यं गुणभूतं न स्यात् तद्मदनादीनां कार्यं प्रतिहन्यात् । विरुद्धस्यापि च कार्याप्रतीघातो अवश्यं बाधकत्वमेवेति भावः । विपरीतस्य कार्याबाधानरूपं महार्थत्वमभिधाय तुल्यवीर्यस्य कार्यमाह—अधिकमित्यादि । तुल्यवीर्ये संयुक्ते सति क्रियासामर्थ्यं अधिकं भवतीत्यर्थः ॥ ४३ ॥

**इष्टवर्णरसस्पर्शगन्धार्थं प्रति चामयम् ।**
**अतो विरुद्धवीर्याणां प्रयोग इति निश्चितम् ॥४४॥**

अथ तुल्यवीर्यं तावत् क्रियासामर्थ्याधिक्यकारकम् तेन तत् संयोगास्तु विरुद्धवीर्यसंयोगास्तु किमर्थं क्रियंत इत्याह—इष्टेत्यादि । इष्टवर्णत्वादि संपत्त्यर्थम् अतो मदनफलादेः विरुद्धवीर्याणां प्रयोगः तथा विरुद्धामयं च प्रति विरुद्धवीर्याणां प्रयोगो वमनविरेचनकर्तव्यामयविशेषयौगिक इत्यर्थः ॥४४॥

**भूयश्चैषां बलाधानं कार्यं स्वरसभावनैः ।**
**सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्मकृत् ।**
**स्वरसैस्तुल्यवीर्यैर्वा तस्माद्द्रव्याणि भावयेत् ॥४५॥**

अथ मदनफलादीनां वीर्योत्कर्षादिके विधिमाह—भूयश्चैषामित्यादि ।—तुल्यवीर्यैवेति तुल्यवीर्यैः स्वरसैः क्वाथैर्वा ॥४५॥

**अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।**
**कुर्यात्संयोगविश्लेषकालसंस्कारयुक्तिभिः ॥ ४६ ॥**

तुल्यातुल्यवीर्यसंयोगादिकार्यमाह—अल्पस्यापीत्यादि।—तत्राल्पमात्रस्य समानवीर्यसंयोगान् महार्थत्वं भवति तथा विरुद्धवीर्यसंयोगात् प्रभूतमात्रस्याल्पकर्मता कर्तव्या । इयं चाल्पकर्मकता प्रभूतभेषजस्य दीप्तिकारणकोष्ठ्याद्याद्यादिप्रयोजनात् क्रियते तेन निष्प्रयोजना। विश्लेषादप्याल्पस्य महार्थत्वं विरुद्धवीर्यविश्लेषात् बोद्धव्यम् । समाधिकविश्लेषात्तु प्रभूतस्याल्पकर्मता ज्ञेया एवं संस्कारादपि समानासमानगुणान् महार्थत्वमल्पकर्मता वायुक्ता । तत्रास्याल्प कर्मताऽनुदाहरणीया ४६

**प्रदेशमात्रमेतावद्द्रष्टव्यमिह षट्शतम् ।**
**स्वबुद्ध्यैवं सहस्राणि कोटीर्वापि प्रकल्पयेत् ॥ ४७ ॥**

संप्रति उक्तप्रयोगे षट्शतबीजेनानुक्तप्रयोगकल्पनं दर्शयन्नाह—प्रदेशेत्यादि । प्रदेश एकदेशः ॥ ४७ ॥

**बहुद्रव्यविकल्पत्वाद्योगसंख्या न विद्यते।**
**तीक्ष्णमध्यमृदूनां तु तेषां शृणुत लक्षणम्॥ ४८॥**

अथ कस्मान्निःशेषेण नैव योगाऽभिधीयते इत्याह—बहुद्रव्येत्यादि।—असंख्यत्वान्निःशेषानभिधानमिति भावः॥ ४८॥

**सुखं क्षिप्रं महावेगमसक्तं यत्प्रवर्तते।**
**नातिग्लानिकरं पायौ हृदये न च रुक्करम्॥ ४९॥**
**अन्तराशयमक्षिण्वन्कृत्स्नं दोषं निरस्यति।**
**विरेचनं निरूहो वा तत्तीक्ष्णमिति निर्दिशेत्॥ ५०**

अथ वमनविरेचनानां तदुपोद्घाताच्च निरूहाणां तीक्ष्णमध्यमृदुताया लक्षणं कारणं चाह—तीक्ष्णेत्यादि।—सुखमिति दुःखमकुर्वत्। असक्तमित्यप्रतिबद्धम्। नातिग्लानिकरं पायाविति विरेचनस्य निरूहस्य च हृदये न च रुक्करमिति तु वमनस्य लक्षणं ज्ञेयम्। अक्षिण्वदित्यपीडयत्। विरेचनं च उक्तं हि उभयं हि शरीरदोषमलविरेचनात् विरेचनशब्दं लभते इति॥ ४९–५०॥

**जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम्।**
**ईषन्मात्राधिकैर्युक्तं तुल्यवीर्यैः सुभावितम्।**
**स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम्॥ ५१॥**
**किंचिदेभिर्गुणैर्हीनं पूर्वोक्तैर्मात्रया तथा।**
**स्निग्धस्विन्नस्य वा सम्यङ्मध्यं भवति भेषजम् ५२**
**मन्दवीर्यं विरूक्षस्य हीनमात्रं तु भेषजम्।**
**अतुल्यवीर्यैः संयुक्तं मृदु स्यान्मन्दवेगवत्॥ ५३॥**

जलाग्नीत्यादिना तीक्ष्णत्वे कारणमाह। देशकालगुणान्वितमिति अनुगुणदेशकालप्राप्तस्योत्कृष्टगुणवत्वम्। स्नेहस्वेदोपपन्नस्येति सुस्निग्धस्विन्नस्य किंचिदित्यादिना मध्यस्य वमनादेः कारणलक्षणे आह। एभिरित्यनेन क्षिप्रत्वादि जलाग्निकीटस्पृष्टत्वादि प्रत्यवमृष्यते। मन्दवीर्यमित्यादिना मृदूनां लक्षणं कारणं चाह। मन्दवेगवदिति लक्षणं शेषं कारणम्॥५१–५३॥

**अकृत्स्नदोषहरणादशुद्धौ तद्बलीयसाम्।**
**मध्यावरबलानां तु प्रयोज्यं सिद्धिमिच्छता॥ ५४॥**

तीक्ष्णादिशुद्धविषयावचारणार्थमाह—अकृत्स्नेत्यादि। ते मध्याल्पशुद्धी बलीयसां पुरुषाणां कृत्स्नदोषं यस्मान्न निर्हरतः तस्मादशुद्धी। अकृत्स्नदोषहरणादिति हेतुवर्णनेन यदा बलीयसोऽल्पदोषतया कृत्स्नदोषहरणकारिके मध्याल्पशुद्धी भवतः तदा सम्यक्शुद्धी एव ते सूचयति। मध्येत्यादि मध्यबले मध्या अवरबले तु मृद्वी शुद्धिः प्रयोज्येति वाक्यार्थः। अत्र प्रयोज्यभाषया असम्यक्शुद्धी अपि बलापेक्षया कर्तव्ये मध्यावरौ प्रति तयोः सम्यक्शुद्धिकर्तव्यत्वं भवतीति दर्शयति॥ ५४॥

**तीक्ष्णो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः।**
**तीक्ष्णादीनि बलापेक्षी भेषजान्येषु योजयेत्॥ ५५**

व्याधितीक्ष्णत्वादिविभागेन विशुद्धौ तीक्ष्णत्वादिविधानमाह। तीक्ष्णो मध्य इत्यादि—सर्वमध्याल्पलक्षण इति यथासंख्यं तीक्ष्णादिव्याधिलक्षणम्। सर्वलक्षणस्तीक्ष्णः मध्यलक्षणो मध्यः अल्पलक्षणो मृदुर्व्याधिः। बलापेक्षीत्यनेन व्याधेस्तीक्ष्णत्वे यदि बलं महद्भवति तदैव तीक्ष्णशोधनं कर्तव्यमिति दर्शयति॥ ५५॥

**देयं त्वनिर्हृते पूर्वं पीते पश्चात्पुनः पुनः।**
**भेषजं वमनार्थाय प्राय आपित्तदर्शनात्॥ ५६॥**

वमने क्रियमाणेऽवस्थाविशेषकर्तव्यमाह—देयमित्यादि। एवं पीते वमने सति अनिर्हृते दोषे सति पश्चात् पुनःपुनर्वमनार्थदं भेषजं देयम्। आपित्तदर्शनादिति यावत् पित्तं न दृश्यते तावत् पुनःपुनर्वमनं देयम्। वमनं हि पित्तांततया सम्यग्युक्तं भवति। उक्तंहि—'पित्तांतमिष्टं वमनं विरेकादर्धं' इति॥ ५६॥

**बलत्रैविध्यमालक्ष्य दोषाणामातुरस्य च।**
**पुनः प्रदद्याद्भैषज्यं सर्वशो वा विवर्जयेत्॥ ५७॥**

पुनःपुनर्भैषज्यप्रयोगस्यापवादविषयमुचितविषयं च दर्शयन्नाह—बलेत्यादि। बलवति दोषे पुरुषेपि पुनः प्रयोज्यं भैषज्यं हीनबले दोषे पुरुषे च सर्वशो वा भेषजं शोधनार्थं विवर्जयेत् शोधनार्थं न कुर्यादित्यर्थः। वाशब्देन च मध्यमबले पुरुषे दोषे च न सर्वथात्मविवर्जनम्। एकवारप्रयोगं शोधनस्य दर्शयति॥ ५७॥

**निर्हृते वापि जीर्णे वा दोषनिर्हरणे बुधः।**
**भेषजेऽन्यत्प्रयुञ्जीत प्रार्थयन्सिद्धिमुत्तमाम्॥ ५८॥**

निर्हृत इत्यादी। दोषनिर्हरण इति दोषनिर्हरणकप्रयोजने भेषजे निर्हृत इति दोषमनिर्हृत्यैव निर्गते। जीर्णे चेति जीर्णे इति येन वमनमधिकृत्यैतदुच्यते तेन। वमनस्य पाकापेक्षयैवेति॥ ५८॥

**अपक्वं वमनं दोषान्पच्यमानं विरेचनम्।**
**निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत्॥ ५९॥**

अपक्वं वमनमित्यादिना वक्तव्ये। जीर्णसदृशता च वमनस्य क्षोभाकर्तृतया पाकोन्मुखतयात्र ज्ञेया। अन्यत प्रयुंजीतेति वमनार्थभेषजपानानंतरं तदहरेव दद्यात्। वमनप्रयोगेषु अयोगप्रतीकारार्थं भेषजान्तरप्रयोगे कर्तव्ये पाककालप्रतीक्षणं कर्तव्यं किमित्यत आह—पाकं न प्रतिपालयेदिति॥ ५९॥

**पीते प्रस्रंसने दोषान्न निर्हृत्य जरांगते।**
**वमिते चौषधे धीरः पाययेदातुरं पुनः॥ ६०॥**

वमने आवश्यकं कर्तव्यमभिधाय विरेचनेप्याह—पीते प्रस्कंदनः इत्यादि—वमिते चौषध इति विरेचनौषधमात्रे वमिते। पुनरिति तदहरेव॥ ६०॥

दीप्ताग्निं बहुदोषं च दृढस्नेहगुणं नरम् ।
दुःशुध्यं तदहर्भुक्तं श्वो भूयः पाययेत्पुनः ॥ ६१ ॥
दुर्बलो बहुदोषश्च दोषपाकेण यो नरः ।
विरिच्यते रसैर्भोज्यैर्भूयस्तमनुसारयेत् ॥ ६२ ॥

विरेचनस्तोकहरणे इतिकर्तव्यतामाह—दीप्ताग्निमित्यादि । दृढस्नेहलक्षणो गुणो देहे यदा नास्ति तदास्य भेषजं न दातव्यं किंतु स्नेह एव तावत्कर्तव्यः । असम्यक्स्निग्धो हि पुनरपि क्रियमाणं विरेचनमसम्यग्योगायैव भवति । दुःशुद्धमित्ययोगेनाविशुद्धम् । श्वोभूते किंवा श्वोभूयः इति पाठः । दोषपाकेनेति पक्वदोषेपि वद्धत्वात् बहुदोषश्च विरिच्यते । रसैर्भोज्यैरित्यनुलोमनैः । अत्रच प्रवृद्धदोषेपितियोगभयाच्च पुनर्विरेचनप्रयोगमनुजानीते ॥ ६१ ॥ ६२ ॥

वमनैश्च विरेकैश्च विशुद्धस्याप्रमाणतः ।
भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥ ६३ ॥

वमनविरेचनाभ्यां किंचित् शेषीकृतदोषप्रतीकारार्थमाह—वमनैश्चेत्यादि । अत्र बहुवचनं वेगबहुवचनं वेगबहुलापेक्षया । अप्रमाणत इति न निःशेषेण । तत्र भोजनं पाचनं यवाग्वादिभोजनम् । अंतरपानं कषायपानम् । ये तु प्रमाणत इति पठंति ते सम्यक् शुद्धावपि कोष्ठोपलेपकदोषप्रशमनार्थं भोजनांतरपानं व्याख्यानयंति ॥ ६३ ॥

दुर्बलं शोधितं पूर्वमल्पदोषं च मानवम् ।
अपरिज्ञातकोष्ठं च पाययेदौषधं मृदु ॥ ६४ ॥

मृदुशोधनोपपादनीयमाह—दुर्बलमिति । शोधितं पूर्वशोधितस्य दुर्बलतया मृदुभेषजं देयम् । तीक्ष्णेन हि बलभ्रंशोऽतियोगश्च स्यात् ॥ ६४ ॥

श्रेयो मृद्वसकृत्पीतमल्पबाधं निरत्ययम् ।
न चातितीक्ष्णं यत्क्षिप्रं जनयेत्प्राणसंशयम् ॥ ६५ ॥

मृदुप्रयोगोपपत्तिमाह—श्रेय इत्यादि । असकृत्पीतमित्यसकृत्पीतमल्पबाधं भवतीत्यर्थः । श्रेय इति व्यापत्तिकरतीक्ष्णापेक्षया ज्ञेयम् । नचातितीक्ष्णमिति नचातितीक्ष्णं दुर्बलानां देयं यस्मादतितीक्ष्णं दुर्बलानां क्षिप्रं प्राणसंशयं जनयेत् ॥ ६५ ॥

दुर्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः ।
मृदुभिर्भेषजैर्दोषा हन्युर्ह्येनमनिर्हृताः ॥ ६६ ॥

दुर्बले बहुदोषे कर्तव्यमाह—दुर्बलोपीत्यादि—बहुशोल्पश इति पुनःपुनः स्तोकमात्रया । एवंभूतमहादोषनिर्हरणे हेतुमाह—दोषा हन्युर्ह्येनमनिर्हृता इति ॥ ६६ ॥

यस्योर्ध्वं कफसंसृष्टं पीतं यात्यनुलोमिकम् ।
वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥ ६७ ॥
विबन्धेऽल्पे चिरादोषे स्रवत्युष्णं पिबेज्जलम् ।
तेनाध्मानं सतृट्छर्दिर्विबन्धश्चैव शाम्यति ॥६८॥
भेषजं दोषरुद्धं चेन्नोर्ध्वं नाधः प्रवर्तते ।
सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥ ६९ ॥

यस्येत्यादावानुलोमिकं विरेचनमौषधमूर्ध्वं याति यस्य तं पाययेत् । विरेचनमौषधमिति शेषः । कवलैः शुद्धमिति कवलैः शोधितमुखकंठम् । तेनेति जलेन पीतेन ॥ ६७–६९ ॥

सुविरिक्तस्तु सोद्गारमाश्वेवौषधमुल्लिखेत् ।
अतिप्रवर्तनं जीर्णे सुशीतैः स्तम्भयेद्भिषक् ॥ ७० ॥

अतियोगस्य कार्यकर्तव्यमाह—सुविरिक्तस्त्वित्यादि । सुविरिक्त इति सम्यक्प्रमाणेन निर्हृत इत्यर्थः । सोद्गारमिति उद्गारेणापच्यमानावस्थामिहिता । एतेन सम्यक्विरेचने भूतेपि यदौषधं तिष्ठति तत्तद्दिन एवोल्लिखेत् । तस्याप्यौषधैकदेशस्यापच्यमानतायां विरेचनातियोगः स्यादिति दर्शयति ॥ ७० ॥

कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत्प्रवर्तते ॥७१॥

कदाचिदित्यादिना विरेचनस्याविरिक्तत्वे हेतुमाह—अत्राप्युल्लेखनं कर्तव्यं तथापि श्लेष्मणा विरोधं भेषजस्य गौरवादिभिरुपलभ्य रात्रिपर्यंतं भेषजस्यायोगप्रवृत्तिरूपेक्षणीयेति कर्तव्यमूहनीयम् । प्रवर्तत इति दोषसहितं भेषजं प्रवर्तते ॥७१॥

विरूक्षानाह्योर्जीर्णे विष्टभ्योर्ध्वं गतेऽपि वा ।
वायुना भेषजे त्वन्यत्सस्नेहलवणं पिबेत् ॥ ७२ ॥

विरूक्षेत्यादावयोगात् विष्टभ्य ऊर्द्धं गते वा भेषजे अन्यद्विरेचनं सस्नेहलवणं दातव्यम् ॥ ७२ ॥

तृण्मोहभ्रममूर्च्छाद्याः स्युश्चेज्जीर्यति भेषजे ।
पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते ॥ ७३ ॥

तृण्मोहेत्यादिना पित्तावृतभेषजस्य लक्षणं चिकित्सितं चाह । जीर्यतीति जीर्यति भेषजे तृडादयो भवंतीत्यर्थः ॥ ७३ ॥

लालाहृल्लासविष्टम्भलोमहर्षाः कफावृते ।
भेषजं तत्र तीक्ष्णोष्णं कट्वादिकफनुद्धितम् ॥ ७४ ॥

लालेत्यादिना कफावृतभेषजस्य लक्षणं चिकित्सितं चाह॥७४॥

सुस्निग्धं क्रूरकोष्ठं च लङ्घयेदविरेचितम् ।
तेनास्य स्नेहजः श्लेष्मा सङ्गश्चैवोपशाम्यति ॥७५॥

सुस्निग्धमित्यादावविरेचितमिति ईषद्विरेचितम् । स्नेहज इति स्नेहप्रयोगजनितः श्लेष्मा । संगो दोषसंगः । तेन लंघनेन दोषपाकादेव प्रवलश्लेष्मोपशयः दोषसंगोपशमश्च क्रियत इत्यर्थः ७५

रूक्षबह्वनिलक्रूरकोष्ठव्यायामशालिनाम् ।
दीप्ताग्नीनां च भैषज्यमविरिच्यैव जीर्यति ॥ ७६ ॥
तेभ्यो वस्तिं पुरा दत्त्वा पश्चाद्दद्याद्विरेचनम् ।
वस्तिप्रवर्तितं दोषं हरेच्छीघ्रं विरेचनम् ॥ ७७ ॥

रूक्षादीनां विरेचनोपयोगे क्रमविशेषं सोपपत्तिकमाह—रूक्षेत्यादि । वस्तिं पुरा दत्त्वेत्यत्र वस्तिशब्देन स्नेहवस्तिमि-

च्छंति। निरूहस्तु वातकोपकतया तथा निरूहानंतरं विरेचनस्य निषिद्धत्वादिह नेष्यते उक्तंहि—'निरूहदानात्पवनात्ययस्ततो नरो विरिक्तस्तु निरूहदानात्। विवर्जयेत्सप्तदिनान्यवश्यं शुद्धो निरूहेणापि विरेचनं तु' इति। किंतु बस्तिशब्देन निरूहश्च गृह्यते। निरूहस्य यद्वातकर्तृत्वमुक्तं तदेकस्यैव स्नेहबस्तिरहितस्याभ्यासात्। उत्सर्गतस्तु वातहंतृत्वं—'बस्तिर्वातहराणां' इत्यनेनैवोक्तम्। निरूहानंतरं विरेचननिषेधस्त्वौत्सर्गिकः। तेन विशेषविधिना तस्यापवादो युज्यत एव। किंवा इह वस्त्यनंतरं यद्विरेचनं विधीयते तच्च बस्तिदानादूर्ध्वं सप्ताहानंतरमेव भविष्यतीति न कश्चिद्विरोधः। प्रवर्तितमिति पूर्वं निर्गत्युन्मुखीकृतम्॥ ७६॥७७॥

**रूक्षाशनाः कर्मनित्या ये नरा दीप्तपावकाः।**
**तेषां दोषाः क्षयं यान्ति कर्मवातातपाग्निभिः॥ ७८**
**विरुद्धाध्यशनाजीर्णान् दोषानपि जयन्ति ते।**
**स्नेह्यास्ते मारुताद्रक्ष्या नाव्याधौ तान्विशोधयेत्॥७९**
**नातिस्निग्धशरीराय दद्यात्स्नेहविरेचनम्।**
**स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम्॥ ८०॥**

रूक्षाशना इत्यातिना स्नेह्या अपि न व्याधिव्यतिरेकेण शोधनीया इत्याह। कर्मनित्या इति नित्यं व्यायामादिकर्मकराः। विरुद्धाध्यशनाजीर्णान्दोषान्हरंतीति विरुद्धाशनादयो-दोषरूपा न तेषां विकारं जनयंतीत्यर्थः। विरुद्धादशनादयश्च दोषजनकतया दोषशब्देनोच्यंते। नाव्याधाविति अविद्यमानसंशोधनैकसाध्यव्याधौ नतु तान् विशोधयेदिति अन्यत्राप्युक्तोऽयमर्थः—'अनीरितानां दोषाणामीरणं न प्रशस्यते। उपर्युपरि दृष्टानामश्मनामिव ताडनम्॥ ७८-८०॥

**एवं ज्ञात्वा विधिं धीरो देशकालप्रमाणवित्।**
**विरेचनं विरेच्येभ्यः प्रयच्छन्नापराध्यति॥ ८१॥**
**विभ्रंशो विषवद्यस्य सम्यग्योगो यथामृतम्।**
**कालेष्ववश्यं पेयं च तस्माद्यत्नात्प्रयोजयेत्॥ ८२**

उक्तं विधिमुपसंहरन्नाह—एवं ज्ञात्वेत्यादि विरेच्येभ्य इति। विरेचनार्हेभ्यः। विभ्रंश इत्यादौ यस्येति संशोधनस्य। ननु यद्येवमेतच्छोधनं तत्किमनेनाचरितेनेत्याह—कालेष्ववश्यं प्रयोजयेदिति संशोधनसाध्यव्याधाववश्यं पेयम्। तेन अवस्थाविशेषेणावश्यकर्तव्यतया न शोधनानि परिहर्तुं पार्यंत इति भावः॥ ८१॥८२॥

**द्रव्यप्रमाणं तु यदुक्तमस्मि-**
**न्मध्येषु तत्कोष्ठवयोबलेषु।**
**तन्मूलमालम्ब्य भवेद्विकल्प्यं**
**तेषां विकल्प्योऽभ्यधिकोऽऽनभावः॥ ८३॥**

संप्रति यदेतच्छोधनस्य क्वचित्कर्षादिमानमुक्तं न तत्सर्वपुरुषविषयम्। किंतु मध्येषु कोष्ठवयोबलेषु तन्मानं ज्ञेयमिति दर्शयन्नाह—द्रव्येत्यादि। तन्मूलमालंब्येति उक्तप्रमाणमनुक्तप्रमाणानुमानबीजं कृत्वार्थविकल्पार्थमाह। तेषां विकल्प्योऽभ्यधिको न भाव इति। भेषजप्रमाणस्याधिकभाव ऊनभावश्च विकल्प्य इत्यर्थः॥ ८३॥

**षड्वंश्यस्तु मरीचिः स्यात्षण्मरीच्यस्तु सर्षपः।**
**अष्टौ ते सर्षपा रक्तिस्तण्डुलश्चापि तद्द्वयम्॥८४॥**
**धान्यमाषो भवेदेको धान्यमाषद्वयं यवः।**
**अण्डकास्ते तु चत्वारस्ताश्चतस्रस्तु माषकः॥८५॥**
**हेमश्च धानकश्चोक्तो भवेच्छाणं तु ते त्रयः।**
**शाणौ द्वौ द्रङ्क्षणं विद्यात्कोलं बदरमेव च॥ ८६॥**
**विद्याद्द्वौ द्रङ्क्षणौ कर्षं सुवर्णं चाक्षमेव च।**
**बिडालपदकं तच्च पिचुं पाणितलं तथा॥ ८७॥**
**तिन्दुकं च विजानीयात्कवलग्रहमेव च।**
**द्वे सुवर्णे पलार्धं स्याच्छुक्तिरष्टमिका तथा॥८८॥**
**द्वे पलार्धे पलं मुष्टिः प्रकुञ्चोऽथ चतुर्थिका।**
**बिल्वं षोडशिकं चाम्रं द्वे पले प्रसृतं विदुः॥ ८९॥**
**अष्टमानं तु विज्ञेयं कुडवौ द्वौ तु मानिका।**
**पलं चतुर्गुणं विद्यादञ्जलिं कुडवं तथा॥ ९०॥**
**चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्।**
**पात्रं तदेव विज्ञेयं कंसः प्रस्थाष्टकं तथा॥ ९१॥**
**कंसश्चतुर्गुणो द्रोणश्चार्मणं नल्वनं च तत्।**
**स एव कलशः ख्यातो घटमुन्मानमेव च॥ ९२॥**
**घटं तु द्विगुणं शूर्पो विज्ञेयः कुम्भ एव च।**
**गोणीं शूर्पद्वयं विद्यात्खारीं भारीं तथैव च॥९३॥**
**द्वात्रिंशच्चैव जानीयाद्वाहं शूर्पाणि बुद्धिमान्।**
**तुलां शतपलं विद्यात्परिमाणविशारदः॥ ९४॥**

प्रमाणोपोद्घातात्सर्वशास्त्रव्यवहारप्रमाणं नियमयन्नाह—षड्वंश्य इत्यादि। वंशी त्रसरेणुकं वदंति अन्ये तु वंशी धूलिमाहुः। अष्टौ ते सर्षपारक्तास्तंडुला इत्यत्र रक्ता इति सर्षपाणां—विशेषणम्। तद्द्वयं धान्यमाष इति तंडुलद्वयं धान्यमाषो भवेत्। तेतु चत्वार इति यवचत्वारः। अन्येतु माषाश्चत्वारश्च अंडिका इति वदंति। त्रयो माषकाः शाणः। अत्र माने अष्टचत्वारिंशन्माषकमानं पलं भवति। तदेव दशरक्तिमानेन च चतुःषष्टिमाषकपलेन तुल्यं भवति। यतश्चतुर्विंशशतिधान्यमाषैर्दशरक्तिका कल्प्या भवति। ततश्च दशरक्तिमाषाचतुःषष्टिमाषकाश्चतुर्विंशतिधान्यमाषैर्गुणताः षट्त्रिंशदधिकपंचदशशतधान्यमाषा एव भवंति तेन तुल्यता। सुश्रुतेपि तत्र द्वादशधान्यमाषाः स्वर्णमाषकः तेच चतुःषष्टिःपलमिति व्यवस्थापितं तेन चतुःषष्टिमाषका द्वादशधान्यमाषैर्गुणिताः संतः अष्टषष्ट्यधिकसप्तशतधान्यमाषा भवंति एवं दृढबलोक्तमानादर्धेन सुश्रुतपलादिमानं भवति। एवं सुश्रुतेपि पंचरक्तिकमाषो भवति। दृढबलमानं मागधं सुश्रुतमानं कालिंगमिति ब्रुवता जतूकर्णेन षड्गुंजको माषकउक्तः॥ ८४-९४॥

**शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्तितम् ।**
**द्विगुणं तद्रवेष्विष्टं तथा सद्योद्धृतेषु च ॥ ९५ ॥**
**यद्धि मानं तुला प्रोक्ता पलं वा तत्प्रयोजयेत् ।**
**अनुक्ते परिमाणे तु तुल्यं मानं प्रकीर्तितम् ॥ ९६ ॥**
**द्रवकार्येऽपि चानुक्ते सर्वत्र सलिलं स्मृतम् ।**
**यतश्च पादनिर्देशश्चतुर्भागस्ततश्च सः ॥ ९७ ॥**

द्विगुणं तद्रवेष्विष्टमित्यादि । अत्र यद्यपि सामान्येनैव द्रवस्य द्वैगुण्यमुक्तं तथापि तंत्रांतरदर्शनात् कुडवादावेव द्रवस्य द्वैगुण्यम् । उक्तंहि—'रक्तिकादिषु मानेषु यावन्न कुडवो भवेत् । शुष्के द्रवार्द्रयोश्चैव तुल्यं मानं प्रकीर्तितम् । जतूकर्णेप्युक्तं—'द्विगुणाः कुडवादयो द्रवाणां' इति । इहापि 'सुनिषण्णकचांगेरी घृते त्रिंशत्पलानि तु । ······प्रस्थो विज्ञेयो द्विपलाधिकः' इति वचनेन द्रवद्वैगुण्यं पारिभाषिकप्रस्थे दृढबलाचार्येण रक्तिकादौ द्वैगुण्यपरिभाषाव्यभिचारादुच्यत इत्युपपादितमेव प्राक् । आर्द्रद्वैगुण्यं च तस्यैव भवति यस्य यस्य द्रव्यस्य शुष्कस्य चार्द्रस्य चोपयोगः संभवति । यच्च नित्यमार्द्रमेवोपयुज्यते उपयुज्यते चात्र तत्र द्वैगुण्यम् । उक्तंहि अन्यत्र—'वासाकुटजकूष्मांडशतपत्रीसहामृता । प्रसारण्यश्वगंधा च शतपुष्पासहाचराः । नित्यमार्द्राः प्रयोक्तव्या न तेषां द्विगुणं भवेत्' इति । एतेषां च द्वैगुण्यं कृत्वा मानस्य वारद्वयग्रहणं कर्तव्यमित्यर्थः ॥ ९५–९७ ॥

**जलस्नेहौषधानां तु प्रमाणं यत्र नेरितम् ।**
**तत्र स्यादौषधात्स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥ ९८ ॥**

"यतश्च पादनिर्देशश्चतुर्भागस्ततश्च स" इत्यस्यार्थो लोकत एव सिद्धः । तथापि स्पष्टार्थं पुनरभिधीयते । 'जलस्नेहौषधानामि'त्यादौ 'औषधात्स्नेहश्चतुर्गुण' इति कल्कात्स्नेहश्चतुर्गुणः । 'स्नेहात्तोयं चतुर्गुणमिति ।' तोयशब्दस्य द्रवोपलक्षणत्वाद्रवं च चतुर्गुणमित्यर्थः । यत्र तु विशिष्टं मानं जलादीनामुक्तं तत्र तथैव कर्तव्यं 'निर्दिष्टं यत्तदेव तत्' इतिवचनात् ॥ ९८ ॥

**स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा ।**
**तुल्ये कल्केन निर्यासे भेषजानां मृदुः स्मृतः ॥ ९९ ॥**
**संयाव इव निर्यासे मध्यो दर्वीं विमुञ्चति ।**
**शीर्यमाणे तु निर्यासे वर्तमाने खरस्तथा ॥ १०० ॥**

स्नेहपाकत्रैविध्यमाह—स्नेहपाक इत्यादि । तुल्ये कल्केन निर्यास इति प्रक्षिप्तकल्कतुल्यतां गते पाकेन संजाते निर्यासे सति । संयाव इवेत्यत्र संयावः समघृतगुडगोधूमकृतपिंड उच्यते । शीर्यमाण इत्यादि खरपाकलक्षणं शीर्यमाण इति । अवसीदति अंगुलिपीडनाद्रतितां गच्छति ॥ ९९ ॥ १०० ॥

**खरोऽभ्यङ्गे स्मृतः पाको मृदुर्नस्तः क्रियासु च ।**
**मध्यपाकं तु पानार्थे वस्तौ च विनियोजयेत् ॥ १०१ ॥**

खरपाकादिविषयमाह—खर इत्यादि ॥ १०१ ॥

**मानं च द्विविधं प्राहुः कालिङ्गं मागधं तथा ।**
**कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥ १०२ ॥'**

कालिंगमित्यादिकं केचिदत्र मानप्रतिपादिकं ग्रंथं मानार्थं वर्णयंति ॥ १०२ ॥

**तत्र श्लोकौ ।**

**कल्पार्थः शोधनं संज्ञा पृथग्घेतुः प्रवर्तते ।**
**देशादीनां फलादीनां गुणा योगाः शतानि षट् १०३**
**विकल्पहेतुर्नामानि तीक्ष्णमध्याल्पलक्षणम् ।**
**विधिश्चावस्थिको मानं स्नेहपाकश्च दर्शितः ॥ १०४ ॥**

इति चरकसंहितायां कल्पस्थाने द्वादशोऽध्यायः ॥ १२ ॥
इति सप्तमं कल्पस्थानं समाप्तम् ।

कल्पार्थ इत्यादि स्थानार्थसंग्रहः । कल्पार्थः कल्पार्थ मेदार्थ इत्यादिनोक्तः । शोधनसंज्ञा—"उभयं वा शरीरमलविरेचनादी"त्यादिनोक्ता । फलादीनां गुणा मदनफलादिकल्प एवोक्ताः । योगशतानि षडिति । 'त्रिशतं पंचपंचाशत्' इत्यादिनोक्तम् । विकल्पहेतुः—'सुखोपभोगानाम् इत्यादिना ग्रंथेनात्रैवाध्याये प्रोक्तः । नामानि मदनफलादीनामेव तानि च प्रत्यध्यायमुक्तानि । तीक्ष्णमध्याल्पलक्षणमिति सुखं क्षिप्रं महावेगं इत्यादिनोक्तम् । विधिश्चावस्थिकः देयंह्यनिर्गते पूर्वम् इत्यादिनोक्तः । शेषं सुगमम् ॥ १०३ ॥ १०४ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां दन्तीद्रवन्तीकल्पव्याख्या समाप्ता ।

समाप्ता च कल्पस्थानव्याख्या ॥

# सिद्धिस्थानम् ।

## प्रथमोऽध्यायः ।

### कल्पनासिद्धिः ।

अथातः कल्पनासिद्धिं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

कल्पस्थानानंतरं पारिशेष्यादेव सिद्धिस्थानमभिधीयते । सिद्धेरभिधायकं स्थानं सिद्धिस्थानम् । सिद्धिशब्देन चेह वमनादीनां वमनाद्यसम्यक्प्रयोगजन्यानां व्यापदां भेषजस्य साध्यतारूपा सिद्धिरुच्यते एवंभूतसिद्धिकारणाऽभिधायकतया चैतत्सिद्धिस्थानमुच्यते । किंवा कार्यकारणयोरभेदोपचारात् सिद्धिशब्देनेहसिद्धिकारणान्येव वमनादीन्युच्यंते । उक्तंहि— सम्यक्प्रयोगं चैव कर्मणां व्यापन्नानां च साधनानि सिद्धिषूपदेक्ष्याम इति । नचैवं सिद्धिस्थानसंज्ञाव्युत्पत्त्या चिकित्सास्थानादीनामपि सिद्धिस्थानसंज्ञाप्रसक्तिरुद्भावनीया यतः इयं संज्ञाऽत्रैव योगरूढ्या वर्तते नान्यत्र ॥ सिद्धिस्थानाभिधानेऽपि सकलसिद्धिस्थानापेक्षणीयपंचकर्मकल्पनाद्यभिधायकतया प्राधान्यादादौ कल्पनासिद्धिरेवोच्यते ॥ १ ॥

का कल्पना पञ्चसु कर्मसूक्ता<br>
क्रमश्च कः किं च कृताकृतेषु ।<br>
लिङ्गं तथैवातिकृतेषु सङ्ख्या<br>
का किं गुणाः केषु च का च वस्तिः ॥ २ ॥<br>
किं वर्जनीयं प्रतिकर्मकाले<br>
कृते कियान्वा परिहारकालः ।<br>
प्रणीयमानश्च न याति वस्तिः<br>
केनैति शीघ्रं सुचिराच्च केन ॥ ३ ॥<br>
साध्या गदाः स्वैः शमनैश्च केचि-<br>
त्कस्मात्प्रयुक्तैर्न शमं व्रजन्ति ।<br>
प्रचोदितः शिष्यवरेण सम्य-<br>
गित्यग्निवेशेन भिषग्वरिष्ठः ॥ ४ ॥

अत्र का कल्पना इत्यादीन् शिष्यस्य द्वादशप्रश्नानभिनिवेश्य तान्यथाक्रमं व्याचष्टे प्रश्नानुगुणगुरुबुद्धिप्रकाशार्थम् । यदुक्तं भरद्वाजे—"अप्रदुष्टेन भावेन प्रसन्नेनांतरात्मना । शिष्येण सम्यक्पृष्टस्य गुरोर्बुद्धिः प्रकाशते इति" । अत्र का कल्पना कर्मसु पंचसूक्ता इति प्रथमः प्रश्नः । क्रमश्च क इति द्वितीयः । किंच कृताकृतेषु लिंगं तथैवातिकृतेषु इति तृतीयः । संख्या का इति चतुर्थः । किं गुणो वस्तिरितिपंचमः । केषु च कश्च वस्तिरिति षष्ठः । कि वर्जनीयं प्रतिकर्मकाले इति सप्तमः । कृते कियान् वा परिहारकाल इत्यष्टमः । प्रणीयमानश्च नयाति केन वस्तिरिति नवमः । केनैति शीघ्रमितिदशमः । सुचिराच्च केनैतीत्येकादशः । साध्या इत्यादिको द्वादशः । साध्या इत्यादि प्रश्नस्य यद्यप्यवकाशो नास्ति यतो हिनासाध्यागदाः प्रोक्तेन यथार्थं क्रियमाणेन भेषजेन प्रशाम्यंति तथाप्यसम्यक् भेषज एव यथार्थं भेषजाभिधानादयं प्रश्नो बोद्धव्यः ॥ २–४ ॥

पुनर्वसुस्तन्त्रविदाह तस्मै<br>
सर्वप्रजानां हितकाम्ययेदम् ।<br>
त्र्यहावरं सप्तदिनं परंतु<br>
स्निग्धो नरः स्वेदयितव्य इष्टः ॥ ५ ॥

कल्पनाशब्देनेह पंचकर्मांगकल्पनोच्यते तेन पंचकर्मांगस्नेहस्वेदप्रयोगमेवाह—त्र्यहावरमित्यादिप्रथमप्रश्नस्योत्तरम् । त्र्यहावरमिति त्र्यहेण त्र्यहं वा व्याप्य क्रियमाणस्नेहनेन अवरं यथाभवतीतित्र्यहावरं स्निग्धः । सप्तदिनमिति सप्तदिनं व्याप्य स्निग्धः । परमिति स्नेहप्रकर्षकालावधिना सप्तदिनं व्याप्य स्निग्धः । ततश्च कालोत्कर्षात् क्रियमाणशोधनांगस्नेहनपक्षे सप्तदिनं यावत्स्निग्धः । कालाप्रकर्षपक्षे तु त्र्यहेस्निग्धः संस्वेदयितव्य इत्यर्थः ॥ ५ ॥

नातःपरं स्नेहनमादिशन्ति<br>
सात्म्यी भवेत्सप्तदिनात्परं तु ।<br>
स्नेहोऽनिलं हन्ति मृदुं करोति<br>
देहं मलानां विनिहन्ति सङ्गम् ।<br>
स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं<br>
स्वेदस्तु दोषं नयति द्रवत्वम् ॥ ६ ॥

उक्तसप्तदिनस्नेहनकालानतिक्रमं सोपपत्तिकमाह—नातःपरमित्यादि—अतःपरमिति सप्तदिनात्परम् । कुतो नादिशंतीत्याह—सात्म्यीभवेदित्यादि । सप्तदिनात्परेण क्रियमाणस्नेहः सप्तरात्रप्रयोगेण सात्म्यीभूतत्वान्न स्नेहनमधिकं शरीरे करोतीत्यर्थः । तेन यावन्मात्रस्नेहप्रयोगेण सप्तदिनोपयुक्तेन स्नेहनं न वृत्तं सा मात्रा सात्म्यीभूतैव । अधिकमात्रा या सात्म्यतामागता सा सप्तरात्रात्परेणापि कर्तव्यैव । वैद्यास्तु सप्तरात्रादस्निग्धे पुरुषे किंचिद्विश्रामं कृत्वा पुनरधिकमात्रया स्नेहं प्रयुज्यंते । एतच्च त्र्यहस्नेहनं सप्तरात्रस्नेहनं च मृदुक्रूरकोष्ठविषयभेदेन । यदुक्तं—"मृदुकोष्ठास्त्रिरात्रेण स्निह्यत्यच्छोपसेवया । स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः इति" । ननु यदि क्रूरकोष्ठस्तु सप्तरात्रेण स्निह्यतीति व्यवस्था तत्कथमिह "नातःपरं स्नेहनमादिशंती"त्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यते । ब्रूमः–सत्यं क्रूरकोष्ठः सप्तरात्रेणैव स्निह्यति परं क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति यदा तु हीनमात्रा प्रयुज्यते तदा सप्तरात्रेणापि न स्निह्यति । यदुक्तं तंत्रांतरे—"त्रिपञ्चवरात्रेण स्नेहपानंविधीयते" इत्यनेन सप्तरात्रादूर्द्धमपि स्नेहनं विहितं तदाचार्यानभिमतमेव ।

किंवा सप्तरात्राद्दूर्द्धमसात्म्यभूताधिकमात्राप्रयोगाभिप्रायेण तद्वर्णनीयम् । अत्र च सप्तरात्राद्दूर्द्ध स्नेहप्रयोगस्य निषेधात् त्र्यहादर्वाक् प्रयोगस्य वा निषेधात् सद्यस्नेहप्रयोगेणैकदिनेनापि स्नेहनमनुजानीत इति ब्रुवते । मध्यकोष्ठांतरं प्रति स्नेहनप्रकर्षकालो यद्यपि नोक्तस्तथापि मध्यविधया पंचदिदिनेन मध्यकोष्ठस्य स्नेहनं ज्ञेयम् । यत्तु कैश्चिन्मृदुकोष्ठं प्रति त्र्यहादूर्द्धं न स्नेहनं कर्तव्यं सात्म्यीभावादिति चार्थो लभ्यते इति व्याख्यायते तन्न नः प्रीणाति । यतः सात्म्यीभावः सप्तदिनानि व्याप्य निवर्त्यतयैवाचार्येणोक्तः । तेन अत्यल्पमात्राप्रयुक्तेन स्नेहेन त्र्यहाद्यदिने स्निह्यति मृदुकोष्ठस्तदाधिकदिनान्यपि तत्र स्नेहः कर्तव्यः ॥ एवं संशोधनांगस्नेहफलमाह—स्नेहोऽनिलं हंतीत्यादि—स्नेहपूर्वकस्वेदफलमाह—स्निग्धस्येत्यादि—सूक्ष्मेष्विति सूक्ष्मेष्वपि ॥ ६ ॥

**ग्राम्यौदकानूपरसैः समांसै-**
**रुत्क्लेशनीयः पयसा च रम्यः ।**
**रसैस्तथा जाङ्गलजैः सयूपैः**
**स्निग्धः कफावृद्धिकरैर्विरेच्यः ॥ ७ ॥**

संप्रति स्निग्धस्य वामनीयस्य वमनानुगुणं विरेचनीयस्य च विरेचनानुगुणं भोजनं पृथगाह—ग्राम्यौदकेत्यादि—रसैस्तथेत्यादिना विरेचनीयस्याहारविधानम् । अत्र च उत्क्लेशनीय इति यदा संबंधो भवेत्तदा उत्क्लेशनं पित्तस्यैव ज्ञेयम् । किंवा उत्क्लेशनीय इति नानुवर्तत एव तेन कफावृद्धिकरैरसैर्यूपैश्च भोजनीय इति शेषः । एतद्विरेचनार्थं प्रतिभोजनं त्र्यहं ज्ञेयं वमनार्थं तु प्रतिभोजनमेकाहमेव । उक्तं हि—"स्नेहात्प्रस्कंदनं जन्तू रात्रावुपरतः पिबेत् । स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम् । एकाहोपरतस्तद्वद्भुक्त्वाप्रच्छर्दनं पिबेदिति ॥ ७ ॥

**श्लेष्मोत्तरश्छर्दयति ह्यदुःखं**
**विरिच्यते मन्दकफस्तु सम्यक् ।**
**अधः कफेऽल्पे वमनं हि गच्छे-**
**द्विरेचनं वृद्धकफे तथोर्ध्वम् ॥ ८ ॥**

वामनीयस्य श्लेष्मोत्तरत्वे कर्तव्ये विरेचनीयस्य चाल्पकफत्वे संपाद्ये उपपत्तिमाह—श्लेष्मोत्तर इत्यादि—उक्तविपर्यये हेतुमाह—अध इत्यादि—कफेऽल्पे सति वमनं पीतं वमनमकृत्वैवाधो याति वृद्धे कफे तु विरेचनं प्रयुक्तमूर्द्ध याति वमनाय संपद्यत इत्यर्थः ॥ ८ ॥

**स्निग्धाय देयं वमनं यथोक्तं**
**वान्तस्य पेयादिरनुक्रमश्च ।**
**स्निग्धस्य सुस्विन्नतनोर्यथाव-**
**द्विरेचनं योग्यतमं प्रयोज्यम् ॥ ९ ॥**

"स्निग्धाय देयं वमनमिति" वमनपानदिनेऽभ्यंगेन स्निग्धाय वमनं देयमित्यर्थः । पानजनितस्नेहस्तु पूर्वमेवोक्तत्वान्न पुनरभिधानमर्हति । अन्ये तु उपशांतस्नेहगुणाय इति वदंति । यथोक्तमिति मदनकल्पोक्तविधिना देयम् । वमनानंतरं कर्तव्यमाह—वांतस्येत्यादि—पेयादिः पेयां विलेपीं इत्यादिना वक्ष्यमाणः । वमनक्रममभिधाय विरेचनक्रममाह—स्निग्धस्येत्यादि—सुस्विन्नतनोरिति सम्यक्स्विन्नदेहस्य । अयं च विरेचनांगस्नेहस्वेदक्रमो वमनानंतरं भाविनि विरेचनेपि पेयादिक्रमोत्तरकालं कर्तव्यः । यदुक्तं—"विलेप्याः क्रमागतंचैनंपुनरेवस्नेहस्वेदाभ्यामुपपाद्य विरेचयेत् इति" । स्नेहानंतरं च यन्नाहं विरेचनार्थं प्रतिभोजनं तदुपक्रमाभिधानानुषंगप्रतिपादितमेवेति नपुनरिह प्रतिपाद्यते । यथावदिति कल्पस्थानोक्तविधिना । योग्यतममिति शरीरदोषाद्यपेक्षया यद्विरेचनं यौगिकं भवति तद्देयम् ॥ ९ ॥

**पेयां विलेपीमकृतं कृतं च**
**यूपं रसं त्रिर्द्विरथैकशश्च ।**
**क्रमेण सेवेत विशुद्धकायः**
**प्रधानमध्यावरशुद्धिशुद्धः ॥ १० ॥**

संप्रति क्रमश्च क इति प्रश्नस्योत्तरमाह । वमनविरेचनोत्तरभावि तं पेयाक्रममाह—पेयां विलेपीमित्यादि—यवागुर्बहुसिक्था विलेपी विरलद्रवा । उक्तं हि—"सिक्थकैरहितो मंडो पेया सिक्थसमन्विता । यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा इति । अत्र अकृतयूषः स्नेहलवणाद्यसंस्कृतः कृतयूपः स्नेहलवणादिसंस्कृतः । एवं रसेपि कृताकृतव्यवस्था । यदुक्तं सूदशास्त्रे—"अस्नेहलवणं सर्वमकृतंकटुकैर्विना । विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतमिति" । त्रिरित्यन्नकालत्रयं व्याप्य द्विरित्यन्नकालद्वयं एकश इत्येकान्नकालम् । एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः संबध्यते । एतच्च त्रिरित्यादि पक्षत्रयं प्रधानशुद्धिशुद्धाद्यपेक्षया यथाक्रमं ज्ञेयम् । तेन प्रधानशुद्धिशुद्धे प्रत्येकं त्रिः पेयादि कर्तव्यम् । तेनान्नकालत्रये पेया ततः परेणान्नकालत्रये विलेपी ततः परेणान्नकालत्रये कृताकृतयूपसहितमन्नं ततोपि च परेण कृताकृतरसेनान्नं कालत्रये देयम् । एवं द्वादशभिरन्नकालैवमनदिनसायाह्नात् प्रभृति सप्तरात्रेण पेयाक्रमः । अयमेव क्रम उपकल्पनीयेऽपि—ततः सायाह्ने लोहितशालितंडुलानां इत्यादिना यावद्द्वादशे चान्नकाले इत्यनेनोक्तः । अत्र तु यूपरसयोस्तु यद्यपि कालविभागो न प्रतिपादितः तथापि यूपकालत्रये रसकालत्रये च प्रथमं अकृतस्य उत्तरकाले च कृतस्य यूपस्य एवं रसस्यापि काल इति विभागः कथनीय इति । एवं द्विःपेयाक्रमे तथा एकशश्च पेयाक्रमे विभागो वर्णनीय इति । एककाले तु पेयादिक्रमे यद्यपि कृताकृतयूपरसयोः कालविभागो न प्राप्यते तथाप्येकस्मिन्नेव काले स्तोकसंस्कारेण यूपरसयोस्तत्रकृताकृतत्वं ज्ञेयम् । प्रधानशुद्धौ भूरिदोषागमनक्षोभादग्निमांद्यं संभवति तेन तत्र पेयादिक्रमधिकं क्रियत इति ज्ञेयम् । प्रधानशुध्यादिलक्षणं चाग्रे वक्ष्यमाणम् ॥ १० ॥

यथाणुरग्निस्तृणगोमयाद्यैः
सन्धुक्ष्यमाणो भवति क्रमेण।
महान्स्थिरः सर्वसहस्तथैव
शुद्धस्य पेयादिभिरन्तरग्निः॥ ११॥

पेयादिक्रमस्य विशोधनेन मंदीकृताग्नेर्दीपकत्वं दृष्टांतेन दर्शयन्नाह्—यथेत्यादि॥ ११॥

जघन्यमध्यप्रवरेषु वेगा-
श्चत्वार इष्टा वमने षडष्टौ।
दशैव ते द्वित्रिगुणा विरेके
प्रस्थस्तथा द्वित्रिचतुर्गुणश्च॥ १२॥
पित्तान्तमिष्टं वमनं तथोर्ध्व-
मर्धं कफान्तं च विरेकमाहुः।
द्वित्रीन् सविट्कानपनीय वेगा-
न्मेयं विरेके वमने तु पीतम्॥ १३॥

प्रधानशुध्यादिलक्षणं प्राह्—जघन्येत्यादि चतुर्भिर्वेगैर्यत् शोधनं वमनं तज्जघन्यं यत्तु षड्भिस्तन्मध्यमं यत्त्वष्टाभिस्तत्प्रवरम्। विरेके जघन्ये दश मध्ये तु विरेचने दशद्विगुणा विंशतिरित्यर्थः। प्रवरे तु विरेचने त्रिगुणादश त्रिंशदित्यर्थः। वेगसंख्याविभेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरतां यथाक्रममाह—प्रस्थस्तथेत्यादि। द्विगुणः प्रस्थो जघन्ये विरेचने त्रिगुणश्च मध्यमे चतुर्गणस्तु प्रवरे। अत्र च प्रस्थशब्देन सार्धत्रयोदशपलान्युच्यन्ते। उक्तं हि तन्त्रान्तरे—"वमने च विरेके च तथा शोणितमीक्षणे। सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण इति॥" पित्तांतमिष्टं वमनं विरेकादर्धमिति विरेके यन्मानं जघन्यमध्यप्रवरविभागे प्रोक्तं यथाक्रमं तथा वमनेऽपि जघन्यमध्यप्रवरविभागे तदर्धं ज्ञेयम्। परंतु यत् पित्तांतत्वं वमनस्य कफांतत्वं विरेकस्य तत् त्रिविधशुद्धावप्यर्थागतं ज्ञेयम्। यदा चतुर्विभागैः प्रस्थमाने दोषे गते पित्तांतत्वं सम्यग्वमनशुद्धिजलक्षणमुपलभ्यते तदा जघन्याशुद्धिः। यदाच विरेके दशभिर्वेगैर्द्विप्रस्थमानदोषगमनेन कफांतत्वं विरेचनं सम्यग्योगलक्षणमुपलभ्यते तदा विरेचनस्य जघन्याशुद्धिर्भवति। एवं मध्यप्रवरशुद्धावपि वमने पित्तांतत्वं विरेचने च कफांतत्वं सम्यग्योगलक्षणं ज्ञेयम्। वेगसंख्या "पित्ते कफस्यानुसुखं प्रवृत्ते शुद्धेषु हृत्कंठ शिरःसु चापि। लघौ च देहे कफसंस्रवेच स्थिते सुवान्तं पुरुषं व्यवस्येत्" इति वृंदोक्तसुवांतलक्षणव्याख्यायां श्रीकंठदत्तेनोक्तं—सवांतलक्षणमाह—पित्ते कफस्यानुसुखमित्यादि। अथ श्रीकंठपंडितस्त्वेवमाशंकां विधाय व्याचष्टे अत्र कैश्चित् चतुर्विधा शुद्धिरुक्ता लैङ्गिकी मानिकी वैगिकी आंतिकी चेति तासां मध्ये लैंगिकीमेव शुद्धिमाह पित्ते कफस्यानुसुखमित्यादि—कफस्यानुपश्चाच्छुद्धेषु गौरवादिलक्षणयुक्तेषु व्यवस्येज्जानीयादिति। सम्यग्वांतलक्षणं कार्यत्वेन दुर्वांतातिवांतलक्षणं परिहार्यत्वेन व्यापत्परिहारार्थमुक्तम्। ननु वमने सुश्रुतेन कुतो लैंगिकी परमेयं शुद्धिरुक्ता नापरास्तिस्रः उच्यते चतुर्विधा हि शुद्धिश्चरके वमने विरेचने चोक्ता—यथा—वैगिकी मानिक्यांतिकी लैंगिकी तथाहि जघन्यमध्यप्रवरेत्यादिना सम्यग्विरिक्तस्य भवेत् क्रमेण इत्यंतेन। विरेकेपि सुश्रुतेन चतुर्विधैव शुद्धिर्दर्शिता। तथाहि "गतेषु दोषेषु कफांतेषु" इत्यनेनांतिकी "ताभ्यां लघुत्वे मनस श्चतुष्टौ" इत्यादिना लैंगिकी वैगिकी च कुष्ठे सूचिता यथा—"प्रातः प्रातश्च सेवेत योगान् वैरेचनान् शुभान्। यैरुत्थानानि जायंते षडष्टौ पंच सप्त वा इति"। मानिकीतूरोपद्रवे दर्शिता—"त्रीणि चात्र प्रमाणानि प्रस्थोर्धाटकमाढकं। तत्रावरं प्रस्थमात्रं शेषे द्वे मध्यमोत्तमे" इति। उच्यते तिसृणामनैकांतिकत्वप्रतिपादनार्थं वमने न विधानं अत्र वैगिकी तावद्व्यभिचरति हीनयोगे यथोक्तै रपि वेगैः शुद्धेरदर्शनात्। वमनमित्यन्यस्य कस्यचित्तैरन्यैरपि शुद्धेश्चमानिक्यपि व्यभिचरति यतः दोषवृद्धेरुत्कर्षापकर्षतारतम्यादधिकन्यूनेनापि शुद्धिः संभवत्येव। नहि निदानानुरूपकोपभाजां दोषाणां प्रति नियतं प्रमाणमस्ति। अतएव सुश्रुते विरेके धारप्रस्थो मध्ये प्रस्थद्वयं दर्शितम्। चरके त्वधारप्रस्थद्वयं मध्ये प्रस्थत्रयमुक्तम्। आंतिक्यपि नैकांतिकी कफाशयगते पित्ते कदाचिद्द्वित्रिवेगैरेव वमने पित्तांतत्वे जातेपि न शुद्धेरुदयः। लैंगिकी तु न सर्वथा व्यभिचरति। तेन सैव सश्रुते वमने दर्शिता। यथैवं परास्तिस्रः सुश्रुतेन विरेके चरकेण तु वमने कुतोभिहिताः। उच्यते वैगिकीमानिक्योर्जघन्यादिभेदस्य पेयादिक्रमभेदस्य प्रतिपादनार्थमित्यभिधानम्। आंतिकी च प्रायोभावित्वेनोक्तेति समाधेयम्। सुश्रुते निबंधकारो डल्हनाचार्य एवंव्याख्याति।—तत्र कैश्चित् त्रिविधा शुद्धिरभिहिता यथा—लैंगिकी वैगिकी मानकी चेति। लिंगैर्वान्त-विरिक्तसम्यक्चिन्हैर्ज्ञायत इति लैंगिकी। हीनमध्योत्तमैर्वमनवेगैश्चतुःषडष्टभिर्दश विंशतित्रिंशद्भिर्विरेचनवेगैर्ज्ञायत इति वैगिकी। मानेन च श्लेष्मपित्तयोः प्रस्थार्धाढकाढकप्रमाणेन हीनमध्योत्तमेन ज्ञायत इति मानिकी। तत्र तावन्मानिकी शुद्धिः दीर्घन्हस्वस्थूलकृशदेहसंहतिप्रकृतिसारादिभिर्विविधलक्षणशरीराणां प्राणिनां दोषधातुमलानां परिमाणाभावात्। नापि वैगिकी यतः बहुभिर्वेगैः कदाचित् कस्यचित् शुद्धिः प्रकृतिवयोबलशरीरदोषव्यपेक्षया कस्यचित् कति पयैरेव वेगैः शुद्धिरिति। अतः तृतीयं कफप्रसेकं इत्यादिलिंगैर्लैंगिकीं शुद्धिमत्रोक्तवान् सुश्रुताचार्य इतीति वृध्दीः। पित्तप्रवृत्तिरंते यस्मिन् तत्पित्तांतं एवं कफांतमपि व्याख्येयं तेन क्रमात् कफपित्तमथानिलश्च इत्यनेन यत् सम्यक्शुद्धिलक्षणं वक्तव्यं तथा प्राप्तिश्च विट्पित्तकफानिलानां इत्यनेन च सम्यक्विरेचनलक्षणं यद्वक्तव्यं तदनेन सहाविरुद्धं भवति तत्र च यदा निलागमनमंते वक्तव्यं तत्पित्तांतस्य कफांतस्य सूचकतया

ज्ञेयं निःशेषकृते ह्याशयगते पित्ते कफे च वायुः केवलः सरति। तेन च केवलवायुसरणेन पित्तांतता कफांतता च जायते। ननु यदि क्रमात्कफइत्यादिनैव ग्रंथेनायमर्थोऽभिहितः तत् कथमिह पित्तांतं च वमनं कफांतं च विरेकमाहुरिति कृतम्। ब्रूमः—वेगसंख्यादिनमानमेदप्रतिपाद्यमानजघन्यादिशुद्धित्रये पित्तांतत्वाद्यनुगतिप्रतिपादनार्थमिहाभिधानम्। एवं तद्वमनविरेचेन सम्यग्योगलक्षणाभिधाने शिष्यस्य प्रवलदोषेपि पुरुषे अयोग्यशुद्धावेव जघन्यशुद्धिगतवेगमानोदये सति अथ पित्तांतत्वाद्यनुदये जघन्यशुद्धिभ्रमः स्यात्। एवमन्यदप्युदाहार्यम्। वमने च विरेके च यथादोषमापन्नं कर्तव्यं तदाह—द्वित्रीनित्यादि द्वित्रानित्यव्यवस्थितभाषणेन मलभागस्यामेयतां दर्शयति वमने च पीतमिति वमने पीतमौषधं वर्जयित्वा शेषो मेयः ॥ १३ ॥

**क्रमात्कफः पित्तमथानिलश्च**
**यस्येति सम्यग्वमितः स इष्टः।**
**हृत्पार्श्वमूर्धेन्द्रियमार्गशुद्धौ**
**तथा लघुत्वेऽपि च लक्ष्यमाणे ॥ १४ ॥**

संप्रति किंच कृताकृतेषु इत्यादिप्रश्नस्योत्तरं यथाक्रममाह—क्रमादित्यादि क्रमादित्यनेन वचनेन यथोक्तक्रमलंघनेन कफाद्यागमनं न सम्यग्योगलक्षणमिति दर्शयति यतः कफादूर्ध्वं गतं यदा पित्तं भवति तदा तु पित्तागमनेपि सति न शुद्धिः किंतु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः तत् पित्तानयनं च कफानयनानंतरमेव भवति। एवं सम्यक् कृतविरेचनलक्षणेपि क्रमादितिपदस्यार्थोऽत्र व्याख्येयः ॥१४॥

**दुश्छर्दिते स्फोटककोठकण्डू**
**हृत्खाविशुद्धिर्गुरुगात्रता च।**
**तृण्मोहमूर्च्छानिलकोपनिद्रा-**
**बलातिहानिर्वमनेऽति च स्यात् ॥ १५ ॥**

दुश्छर्दित इत्याद्ययोगकृतवमनलक्षणम्। तृण्मोहेत्याद्यतिकृतवमनलिंगम्। अत्र आदिशब्देन वर्णस्वरादिग्रहणम्। निद्रातिहानिश्चात्रानिलकोपकृतैव ॥ १५ ॥

**स्रोतोविशुद्धीन्द्रियसंप्रसादो**
**लघुत्वमूर्जोऽग्निरनामयत्वम्।**
**प्राप्तिश्च विट्पित्तकफानिलानां**
**सम्यग्विरिक्तस्य भवेत्क्रमेण ॥ १६ ॥**

स्रोतोविशुद्धीत्यादि सम्यग्विरेचनलक्षणम्। ऊर्जोऽग्निरिति पटुरग्निः। अनामयत्वमिति विरेचनत्वे जव्यदोषजनितविकारव्यपगमः। प्राप्तिश्चेत्यादिग्रंथार्थः स्थानांतरे व्याख्यात एव १६

**स्याच्छ्लेष्मपित्तानिलसंप्रकोपः**
**सादस्तथाग्नेर्गुरुता प्रतिश्या।**
**तन्द्रा तथा छर्दिररोचकश्च**
**वातानुलोम्यं न च दुर्विरिक्ते ॥ १७ ॥**

स्यादित्याद्ययोगकृतविरेकलक्षणम्। नच वातानुलोम्यमित्यर्थः ॥ १७ ॥

**कफास्रपित्तक्षयजानिलोत्थाः**
**सुप्त्यङ्गमर्दक्लमवेपनाद्याः।**
**निद्राबलाभावतमःप्रवेशः**
**सोन्मादहिक्काश्च विरेचितेऽति ॥ १८ ॥**

कफास्रेत्यादि विरेकातियोगलक्षणम्। क्षयशब्दः कफादिभिः प्रत्येकं संबध्यते ॥ १८ ॥

**संसृष्टभक्तं नवमेऽह्नि सर्पि-**
**स्तं पाययेताप्यनुवासयेद्वा।**
**दद्यात्त्र्यहात्त्रीणि बुभुक्षिताय**
**तैलाक्तगात्राय ततो निरूहम् ॥ १९ ॥**
**प्रत्यागते मांसरसेन भोज्यः**
**समीक्ष्य वा दोषबलं यथार्हम्।**
**नरस्ततो निश्यनुवासनार्हो**
**नित्याशितः स्यादनुवासनीयः ॥ २० ॥**

वमनविरेचनकल्पनाप्रस्तावागतसम्यग्योगादिलक्षणं चाभिधाय वस्तिकल्पनामाह—संसृष्टभक्तमित्यादि सप्तभिर्दिनैः कृतसंसर्जनक्रमस्याष्टमे भुक्तमुपयुक्तस्य नवमे सर्पिःपानमनुवासनं वा देयम्। अत्र विकल्पद्वये यदि वमनानंतरं विरेचनं कर्तव्यं तदा नवमेह्नि सर्पिःपानम् अथ विरेचनानंतरं वस्तिर्देयः तदानुवासनं नवमेह्नि देयमिति व्यवस्था वमनानंतरं नवमदिवसे सर्पिःपानं पूर्वेणोक्तम्। तेनेदानीं विरेचनानंतरं कर्तव्यं निरूहांगमनुवासनसमानकालतया सर्पिःपानमपि दर्शितं तेन न निरूहांगता सर्पिःपानस्य कल्पनीया। नवमश्च दिवसोऽत्र शोधनदिनमारभ्यैव ज्ञेयः। उक्तं च जतूकर्णे—"शोधनानंतरं नवमेह्नि स्नेहपानमनुवासनं वा" तथा सुश्रुतेप्युक्तम्—"विरेचनात्सप्तरात्रे गते जातबलाय च। कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनम्" इति। उपकल्पनीयेपि यः पेयादिक्रमानंतरं रससंसर्जनक्रम उक्तः स सर्वकर्मावसाने प्रकृतिभोजनगमनार्थं कर्तव्यः न वमनविरेचनकर्मपरिसमाप्तावेव तेनेह कृतरससंसर्गस्यैव नवमे दिने सर्पिःपानमनुवासनं चोपपन्नम्। यत्तु भद्रशौनके—"संसृष्टभक्तः सुमनाः स्नेहपीतो दृढानलः। संशुद्धः परतो मासादनुवास्यस्ततो नरः इत्युक्तं" तत्प्रागनुवासनविषयं रोगविशेषविषयं वेति नैतद्विरुद्धं भवति। बहूनि चात्र व्याख्यानानि टीकाकृतामंगिरिसैंधवजेज्जटेश्वरसेनादीनां संति। अन्यैस्तु तद्व्याख्यानानि दोषोद्धारादेव निरस्तानि। तैलाक्तगात्रायेति वचनमभ्यंगेनापि स्नेहप्रयोगदर्शनार्थम्। स्वेदस्त्वत्र पंचकर्मपूर्वतया विहितोऽनुक्तोप्यायात्येव। यदुक्तं—"अनु-

पस्थितदोषाणां स्नेहस्वेदोपपादनैः। पंचकर्माणि कुर्वीत इति"। दद्यात्र्यहादित्यनुवासनदिनादूर्ध्वं त्र्यहात् तेन यथावक्ष्यमाणक्रमेण एकाहात्र्यहादधिकाद्वा स्नेहात्तदहाद्वा निरूहो देयः। नातिबुभुक्षितायेत्यनेन अतिबुभुक्षितस्य निरूहोतियोगायोर्ध्वगमनाय च भवतीति सूचयति। तत्र धन्वरसेन भोजनं विरेचनवदग्निमांद्याभावाद्बलापहारकत्वाच्च यदुक्तं भोजे—"आमस्तकाद्विशुद्धस्य निरूहेण रसादिकं। किमर्थं विहितं भोज्यं संसर्गश्च विरिक्तवत्। विरेकः पावकं हंति तदधिष्ठानसंक्षवात्। ननु स्वस्थिस्तथा तस्मादुन्नयति पावकमिति"। निरूह एव दोषाग्निबलापेक्षैरसादिना पेयादिना भोजनं दर्शयन्नाह समीक्ष्य दोषबलं यथार्हमिति। बलमित्यग्निबलम्। नरस्तत इत्यादिना निरूह्यानुवासनमाह। निशि इत्यनेन निरूहानंतरं तद्दिने क्रियमाणमनुवासनं निश्येव कर्तव्यमिति दर्शयति न शीते वसंतेपि सद्यो निरूहस्य रात्रावेवानुवासनं देयम्। अन्ये तु निशीत्यनेन तदहरेव निरूढाय सायमनुवासनं देयमिति दर्शयंति यथा वक्ष्यमाणविभागेन रात्रौ दिवा वा देयमित्याहुः। अनुवासनार्ह इति वचनेन यदि सामता मंदो वा पावको भवति। तदा तदहरनुवासनं न देयमिति सूचयति। अतएव जतूकर्णे द्वितीयदिवस एवानुवासनमुक्तं ततस्त्र्यहान्निरूहे व्योषिते भुक्तवंतोनुवासनं इति। हारीतेपि—"व्युष्टं रजन्यां प्रसमीक्ष्य तस्माद्बलाबलं वाप्यनुवासनीय"इत्युक्तम्। सद्यो निरूढोनुवास्यः स्यादितिवचनं निरूहजनितवातक्षीणपुरुषविषयम् ॥१९-२०॥

शीते वसन्ते च दिवानुवास्यो
रात्रौ शरद्ग्रीष्मघनागमेषु।
तानेव दोषान्परिरक्षता ये
स्नेहस्य पाने परिकीर्तिताः प्राक्॥ २१॥

निशीत्यनेन यन्निशासमीपेनुवासनं विहितं तदेव कालभेदेन भिन्नकालं दर्शयन्नाह—शीत इत्यादि। शीतशब्देन शिशिरहेमंतयोरपि ग्रहणम्। दिवेति निशासमीपे दिवाभागे रात्रावपि च दिनसमीपायां रात्रौ। दोषान् परिक्षितान् दृष्ट्वा अनंतरं च दोषवर्जनेन परिरक्षिताय स्नेहस्य पानं परिकीर्तितं स्नेहाध्याये—श्लेष्माधिको दिवा शीते इत्यादिना ग्रंथेन अतएवाकालपीतस्नेहदोषा भवंति अतएव यथोक्तकालविपर्ययकृतानुवासनेपि समानन्यायाच्चैकदेशाभिधानेनापरैकदेशानुमानं च ज्ञेयम्॥२१॥

प्रत्यागते चाप्यनुवासनीये
दिवा प्रदेयं व्युषिताय भोज्यम्।
सायं च भोज्यं परतस्त्र्यहे वा
त्र्यहेऽनुवास्योऽहनि पञ्चमे वा॥ २२॥

प्रत्यागते चेत्यादौ अनुवासनीय इत्यनुवासनस्नेहे। व्युषितायेति निर्विकारं च रात्रिव्युषिताय दिवाभोज्यं देयं तथा सायं च भोज्यं देयम्॥ २२॥

त्र्यहे द्व्यहे वाप्यथ पञ्चमे वा
दद्यान्निरूहादनुवासनं च।
एकं तथा त्रीन्कफजे विकारे
पित्तात्मके पञ्च तु सप्त वापि॥ २३॥

अनुवासनानंतरं पुनरनुवासनकालमाह—त्र्यहेत्यादि अत्रापि त्र्यहपंचाहव्यवस्था पूर्ववत्। अयं चानुवासनकालो निरूहदिन एव दातव्यानुवासने परिज्ञेयः अन्ये तु पठंति—यत् परतो द्व्यहे वा त्र्यहे वा अनुवास्योऽहनि पंचमे वा इति व्याख्यानयंति च—परतो द्व्यहे वा त्र्यहे अनुवास्योहनि पंचमे वेति अत्र तु द्व्यहेनुवासनमतिप्रबलस्य वातस्य अनतिवृद्धवातस्य त्र्यहे पंचमे तु वृद्धस्य कफपित्तस्येति व्यवस्था। द्वितीयदिनानुवासनं हारीतेप्युक्तम्—वचनं हि—"दृष्ट्वातिवृद्धं पवनस्य रूपं दिनेदिने वस्तिमुदाहरंति" सुश्रुतेप्युक्तं—"रूक्षस्य बहुवातस्य स्नेहवस्तिं दिनेदिने। दद्याद्वैद्यस्ततोन्येषामग्न्याबाधभयात् त्र्यहादिति" इहापि रूक्षनित्यस्तु इत्यादिना उदानावृते वाताग्र्यादौ दिनेदिने इत्यनेन द्व्यहे दानं विधास्यति तेन द्व्यहे वा त्र्यहे वा इति पाठः साधुः। द्व्यहशब्देन चात्र दिनद्वयसंबंधमात्रमुपचर्यते न द्व्यहपूरणम्। तेन प्रथमदिवसदत्तानुवासनात्प्रभृति पूरणेन तृतीये दिवसे अनुवासनम्। प्राप्नोतीति यदुच्यते तन्निरस्तम्। एवं त्र्यहेपि तृतीयाहसंबंध एव विवक्षितो ज्ञेय इति॥संप्रति दोषभेदेनानुवासननियममाह—एकं तथा त्रीनित्यादि। एतच्च संख्याः कतीत्यस्य प्रश्नस्योत्तरम् अपरं संख्याप्रश्नस्योत्तरं त्रिंशन्मता कर्मसु इत्यादिना भविष्यति। कफपित्तयोश्च यद्यप्यनुवासनं न विहितं तथापि वातानुगतकफपित्तविषये एतद्बोद्धव्यम्। पुनर्वेत्यनेन वाते नव एकादश वा कुर्यात्। अयुग्मानित्यनेन द्विचतुःषडादिसंख्यया युग्मदानं च निषेधयति अयुग्मदानं प्रभावादेवात्रोपकारीति महर्षिवचनाद्बोध्यम्। यथा—"युग्मेष्वहःसु पुत्रकामौ संवसेतां" इति। उपपत्तिश्चात्रातिप्रसंगभीत्या न कथिता आचार्येण। यत्तु त्रीन् पंच वा तु चतुरोथ षड् वा इत्यादिना युग्मवस्तिदानं वक्ष्यति तन्निरूहांगतया स्नेहनार्थं क्रियमाणानुवासनविषययुग्मवस्तिदानमिति न विरोधः। एतेन यदुक्तमाषाढवर्मणा—"निरूहकार्यकारणायुग्मदानमेतस्मिन्नोक्तं निषिद्धं पूर्वं च रोगस्यांते क्रमादेकं तथा त्रीनित्यादीन् स्नेहान् प्राह इति तन्निरस्तं ज्ञेयम्। किंच अयुग्मान् इत्यनेन पुनर्वा इत्यनेन च यत्रानुवृत्त्यानुवासनं देयं तत्रायुग्मकं निरूहांतरितं कर्तव्यमित्यर्थः। तेन यथोक्तसंख्यया निरूहं दत्वा यथोक्तसंख्यया स्नेहो देयः। विषमसंख्योपादानं तु मध्यविधयापि द्व्यहचतुरहादिग्राहकं भवति। तेन उत्तरत्र वक्ष्यमाणसमसंख्यानुवासनं न विरोधि ब्रुवते। जतूकर्णेप्युक्तं—"निरूहे व्युषिते भुक्तवतोनुवासनं परं द्वितीयेहनि पंचमे वा तथैकादशाहेप्यर्पतो द्वित्रिचतुरादिवातादिषूच्यते इति"॥ २३॥

वातेन चैकादश वा पुनर्वा
वस्तीनयुग्मान्कुशलो विदध्यात्।
नरो विरिक्तस्तु निरूहदानं
विवर्जयेत्सप्तदिनान्यवश्यम्॥ २४॥
शुद्धो विरेकेण निरूहदानं
तद्व्यस्य शून्यं विकृपेच्छरीरम्।
वस्तिर्वयःस्थापयिता सुखायु-
र्बलाग्निमेधास्वरवर्णकृच्च॥ २५॥
सर्वार्थकारी शिशुवृद्धयूनां
निरत्ययः सर्वगदापहश्च।
विट्श्लेष्ममूत्रानिलपित्तकर्षी
स्थिरत्वकृच्छुक्रबलप्रदश्च॥ २६॥
विष्वक्स्थितं दोषचयं निरस्य
सर्वान्विकारान् शमयेन्निरूहः।
देहे निरूहेण विशुद्धमार्गे
संस्नेहनं वर्णबलप्रदं च॥ २७॥
न तैलदानात्परमस्ति किञ्चि-
द्द्रव्यं विशेषेण समीरणार्ते।
स्नेहाद्धि रौक्ष्यं लघुतां गुरुत्वा-
दौष्ण्याच्च शैत्यं पवनस्य हत्वा॥ २८॥
तैलं दधत्याशु मनःप्रसादं
वीर्यं बलं वर्णमथाग्निपुष्टिम्।
मूले निषिक्ते हि यथा द्रुमस्य-
नीलच्छदः कोमलपल्लवाग्रः॥ २९॥
काले महान्पुष्पफलप्रदश्च
तथा नरः स्यादनुवासनेन।
अपत्यसन्तानविवृद्धकारी
काले यशस्वी बहुकीर्तिमांश्च॥ ३०॥

संप्रति निरूहविरेचनयोरवश्यपरिहर्तव्यकालमाह—नरो विरिक्तस्त्वित्यादि अवश्यमिति वचनादेकाहसाध्येपि व्याधौ त्ववश्यं सप्तदिनच्छेदः कर्तव्य इति दर्शयति। यद्यपि विरेचनानंतरं निषिद्ध एव निरूहः पंचकर्मीयायां सिद्धौ तथा निरूढस्य विरेचनं निषिद्धं तथापि तत्कालमेव च निषेधः। तेन त्रिचतुरादिदिनेपि प्रसक्तिनिरासार्थमिदं वचनम्। यत्तु विरेचनानंतरं नवमेह्नि अनुवासकालादुत्तरकालमेव निरूहविधानं तेन अर्वाग्वस्तेरपि न प्रसक्तिस्स्यादित्युच्यते तन्न। यदनुवासनशुद्ध्यपेक्षसंसर्जनक्रमस्येयंविधा। यदावरशुध्या त्र्यहेणैव पेयादिक्रमः समाप्यते तदा चतुर्थदिने अनुवासनदानात् पंचमे षष्ठे दिने निरूहः प्रसज्जेत अतस्तन्निरासार्थमेतद्वचनम्। निरूहानंतरं तु संसर्जनक्रमो नास्त्येव तेन त्र्यहं त्र्यहं दत्त्वा विरेचनप्रसक्तिरस्त्येव। सप्ताहादर्वाक्। सप्ताहं यावत् निरूहविरेचनवर्जने हेतुमाह—शुद्धेत्यादि विकृपेदिति हिंस्यात्। शून्यमिति पूर्वशोधनशून्यशरीरं पुनः शोधनात् हिंस्यादिति भावः। "आसप्ताहात् विरेको वा ततश्चापि निरूहणं" इति तंत्रांतरे प्रोक्तं तच्च संसर्गविधया क्रियमाणसंशोधनक्रमे ज्ञेयम्। अत्रापि च सप्ताहपूरणं संसर्जनस्नेहादीनामनुन्निकल्पपरिहारात् व्याख्येयम्। किंगुणो वस्तिरितिप्रश्नस्योत्तरं वस्तिर्वयस्थापयितेत्यादि अयं चास्थापनगुणः अनुवासनस्य तु देहे निरूहेणेत्यादिना ग्रंथेन गुणं वक्ष्यति वयस्थापयतीति वयस्थापिता। वयस्थापनं चास्य स्रोतःशुद्धिकरत्वात्। सर्वार्थकारीति स्थिरत्वापकर्षादिविरुद्धार्थस्यापि भेषजविशेषयोगात्। शिशुवृद्धयूनां निरत्यय इत्यनेन वमनविरेचनाभ्यामुत्कर्ष उच्यते ते हि शिशुवृद्धयोर्निषिद्धे। सर्वगदापहत्वं शमनेन ज्ञेयम्। सर्वान् विकारान् शमयेदित्यनेन दोषसंशोधनद्वारा सर्वगदापहत्वमुच्यते इति न पौनरुक्त्यम्। किंवा सर्वान् विकारानिति सर्वावस्थान् विकारानिति विशेषः। देह इत्यादिनानुवासनगुणमाह। निरूहेण विशुद्धमार्गे इति वचनान्निरूहशोधित एव मार्गे संसर्जनानुवासनं यथोक्तगुणकर्तृ भवतीति दर्शयति। न तैलदानादित्यत्र तैलशब्देन स्नेहोपलक्षणेन केचिद्घृतमपि ग्राहयंति। किंतु तैलमेवात्र वातहरप्रधानतया ब्रूते युक्तं पश्यामः तथा ह्यत्र औष्ण्याच्छैत्यमिति औष्ण्यं च न सर्पिषि इति। स्नेहौ तु मज्जवर्जितौ अनुवासनाधिभूतावप्यप्रधानत्वान्नात्र घृतमनुमन्यते। परमस्तीत्यादौ द्रव्यमेव कारणं तच्च कारणमनिलप्रशमनेन ज्ञेयम्। नानुवासनात्। किंचिदिहास्ति कर्म इति केचित् पठंति। तैलकृत्यमेव सकारणं व्याकरोति—स्नेहेनेत्यादि तैलं च स्नेहानुवसने पक्वमेव अपक्वस्य तु—"न चामं प्रणयेत् स्नेहं यदभिष्यंदयेद्गुदं" इत्यनेन निषिद्धत्वात्। अत्र तैलानिलयोर्मेलके द्रव्यप्रभावात्तैलमेव वातं हंति न वातस्तैलम्। अणुत्वं च यद्यपि तैले वाते चास्ति तथापीह प्रवाच्यवातसूक्ष्मावयवसंबंधकारकं तैलं स्नेहादिना वातं जयति। तेन समानमप्यणुत्वमिह विरुद्धार्थकार्येवेति तैलस्य यथोक्तकार्यकर्तृत्वे दृष्टांतमाह—मूलेत्यादि। मूलदृष्टांतेन चानुवासनेन साक्षात्तर्पणीयस्य गुदस्य देहमूलत्वं दर्शयति। उक्तं हि पराशरे—"मूलं गुदं शरीरस्य शिरास्तत्र प्रतिष्ठिताः। सर्वं शरीरं पृष्ठं च मूर्धानं पादमाश्रिताः"इति। तथानुवासनादपि नरो बलवीर्याद्युपेतोऽपत्यवांश्च स्यादित्यर्थः॥ २४–३०॥

स्तब्धाश्च ये संकुचिताश्च येऽपि
ये पङ्गवो येऽपि च रुग्णभग्नाः।
येषां च शाखासु चरन्ति वाताः
शस्तो विशेषेण हि तेषु वस्तिः॥ ३१॥
आध्मापने विग्रथिते पुरीषे
शूले च भक्तानभिनन्दने च।
एवं प्रकाराश्च भवन्ति कुक्षौ
चामयास्तेषु च वस्तिरिष्टः॥ ३२॥
याश्च स्त्रियो वातकृतोपसर्गा-
द्गर्भं न गृह्णन्ति नृभिः समेताः।

क्षीणेन्द्रिया ये च नराः कृशाश्च
तेषां च वस्तिः परमः प्रदिष्टः ॥ ३३ ॥

सामान्येन निरूहानुवासनयोर्गुणमाह—स्तब्धाश्च य इत्यादि-भग्ना इति भृष्टकायाः। रुग्णा इति संधिमुक्ताः भक्तानभिनंदनेन न रोचके। वातकृतोपसर्गा इति वातकृतोपद्रवाः। क्षीणेंद्रिया इति अतिक्षीणशुक्राः अत्र शुद्धवातादिष्वनुवासनं भक्तानभिनंदनप्रकारेषु च निरूह इत्याद्यर्थोऽनुसरणीयः ॥३१–३३॥

उष्णाभिभूतेषु वदन्ति शीतान्
शीताभिभूतेषु तथा सुखोष्णान्।
तत्प्रत्यनीकौषधसंप्रयुक्ता-
न्सर्वत्र वस्तीन् प्रविभज्य युञ्ज्यात्॥ ३४ ॥

संप्रति केषु च कथं वस्तिरिति प्रश्नस्योत्तरं—उष्णाभिभूतेष्वित्यादि उष्णाभिभूते तथा शीताभिभूत इति वक्तव्ये येन सर्वत्र इति करोति तेन स्निग्धरूक्षगुरुलघ्वभिभूतेपि तद्विपरीतौषधसंपादितो वस्तिर्ज्ञेय इति दर्शयति ॥ ३४ ॥

न बृंहणीयान्विदधीत वस्ती-
न्विशोधनीयेषु गदेषु वैद्यः।
कुष्ठप्रमेहादिषु मेदुरेषु
नरेषु ये चापि विशोधनीयाः ॥ ३५ ॥

नित्यविशोधनीयगदानाह—कुष्ठप्रमेहादिष्वित्यादि—अत्र आदिशब्देन अरोचकतंद्राश्लीपदादीनां ग्रहणम्। मेदुरेष्विति मेदस्विषु ॥ ३५ ॥

क्षीणक्षतानां न विशोधनीया-
न्न शोषिणां नो भृशदुर्बलानाम्।
न मूर्च्छितानां च न शोधितानां
येषां च दोषेषु निबद्धवायुः ॥ ३६ ॥

क्षीणक्षतानां नेति राजयक्ष्मिप्रभृतयो ज्ञेयाः। विशोधनीया-नित्यपकर्षणकारकान्। येषां च दोषेषु निबद्धमायुरिति ये संशोधनहरणमात्रेणैव प्राणान् जहति ॥ ३६ ॥

शाखागताः कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च।
ये सन्ति तेषां न तु कश्चिदन्यो
वायोः परं जन्मनि हेतुरस्ति ॥ ३७ ॥

वस्तेर्बहुविषयां स्तुतिमाचक्षाणः किंगुणो वस्तिरिति प्रश्नस्यैवोत्तरं पुनराह—शाखागता इत्यादि शाखा कोष्ठमर्मगता इत्यनेन त्रिविधशाखादिरोगमार्गो गृहीतः मर्मजशब्देन हि मध्यमरोगमार्गाश्रयिणां संधिजानामपि साहचर्याद्ग्रहणम्। इह मर्मास्थिसंधयो हि मध्यमरोगमार्ग उक्तः। ऊर्ध्वं सर्वशब्देन च ऊर्ध्वाधस्तिर्यग्भेदादप्युक्तरोगमार्गत्रयग्रहणम्। अवयवांगजशब्देन च प्रादेशिकसर्वांगभेदादप्युक्तग्रहणं वायोः परमिति वायोः परेण कश्चित् श्रेष्ठ इति यावत्। एतेन यद्यपि कफपित्ते अपि रोगेषु कारणे भवतः तथापि वायुरेव श्रेष्ठ इत्युच्यते ३७

विण्मूत्रपित्तादिमलाशयानां
विक्षेपसंहारकरः स यस्मात्।
तस्यातिवृद्धस्य शमाय नान्य-
द्वस्तेर्विना भेषजमस्ति किंचित् ॥ ३८ ॥

वायोः श्रेष्ठत्वे हेतुमाह—विण्मूत्रेत्यादि—पित्तादीत्यत्र आदिशब्देन कफस्य ग्रहणम्। नच मलशब्देन कफस्य ग्रहणम्। मलशब्देन चेतरधातुमलानां स्वमलादीनां च ग्रहणम्। आशयशब्देन मलव्यतिरिक्तप्रसादाख्यानामाशयानां धातूनां च ग्रहणम्। विक्षेपसंहारकर इति वियोगमेलककरः। एतेन यस्माद्वायुरेव दोषमलधातूनां संयोगविभागौ करोति तेन दोषदूष्यविण्मलमेलकरूपनिखिलव्याधिकरणे वायुरेव प्रधानं भवतीति भावः। किंवा आशयशब्दः प्रत्येकं विडादिभिः संबध्यते। स्थानेन च स्थानिनो लभ्यंते। विडादिसंयोगविभागेनैव च सर्वव्याधिकरणपरिग्रहो भवति। भवत्येवं वस्तिर्वातहराणां वस्त्वावर्धचिकित्सारूपता तथा सर्वचिकित्सारूपता ॥ ३८ ॥

तस्माच्चिकित्सार्धमिति ब्रुवन्ति
सर्वां चिकित्सामपि वस्तिमेके।
नाभिप्रदेशं च कटिं च गत्वा
कुक्षिं समालोड्य पुनश्च पार्श्वम् ॥ ३९ ॥
संस्नेह्य कायं शिथिलांश्च कृत्वा
दोषान्पुरीषं ग्रथितं विमथ्य।
संसक्तवेगः सपुरीषदोषः
प्रत्यागतो वस्तिरिति प्रशस्तः ॥ ४० ॥

तत्र वस्तेः कृताकृतलक्षणानि क्रमेणाह—नाभीत्यादि विलोड्येति संक्षोभ्य। संस्नेह्य कायमिति वीर्यरूपेण सारेण कायं व्याप्य। उक्तं हि "वीर्येण वस्तिरादत्ते दोषानापादमस्तकात्" इति। स्नेहशब्देन च सारोभिधीयते। यथा देहः स्नेहपरिक्षयात् इति। सम्यगिति निरवशेषेण। सुखेनेति विकारमकृत्वा ॥३९–४०॥

प्रसृष्टविण्मूत्रसमीरणत्वं
रुच्यग्निवृद्ध्याशयलाघवानि।
रोगोपशान्तिः प्रकृतिस्थता च
बलं च तत्स्यात्सुनिरूढलिङ्गम् ॥ ४१ ॥

तादात्मिकवस्तिसम्यग्योगलक्षणमभिधाय उत्तरकालभावमाह—प्रसृष्टेत्यादि आशयलाघवानीत्यत्र आमयलाघवादीति पाठे रोगोपशांतिरित्यनंतरं वाशब्दो ज्ञेयः। तेन रोगोपशांतिरिह निरूहसाध्यविकाराणामुपशांतिः ॥ ४१ ॥

स्याद्रुक्शिरोहृद्गुदकुक्षिलिङ्गे
शोफः प्रतिश्यायविकर्तिके च।
हृल्लासिका मारुतमूत्रसङ्गः
श्वासो न सम्यक् च निरूहिते स्यात् ॥ ४२ ॥

स्यादित्यादि वस्त्ययोगलक्षणम्। न सम्यङ्निरूहिते इत्ययोगेन निरूहिते ॥ ४२ ॥

लिङ्गं यदेवातिविरेचितस्य
भवेत्तदेवातिनिरूहितस्य।
प्रत्येत्यसक्तं सशकृच्च तैलं
रक्तादिबुद्धीन्द्रियसंप्रसादः ॥ ४३॥
स्वप्नानुवृत्तिर्लघुता बलं च
सृष्टाश्च वेगाः स्वनुवासिते स्युः।
अधःशरीरोदरबाहुपृष्ठ-
पार्श्वेषु रुग्रूक्षखरं च गात्रम् ॥ ४४॥
ग्रहश्च विण्मूत्रसमीरणाना-
मसम्यगेतान्यनुवासिते स्युः।
हृल्लासमोहक्लमसादमूर्च्छा
विकर्तिका चात्यनुवासिते स्युः॥ ४५॥

वस्त्यतियोगलक्षणमतिदेशेनाह—लिंगमित्यादि। अनुवासनसम्यग्योगलक्षणमाह—प्रत्येतीत्यादि असक्तमिति संगं विना। रक्तादयो धातवः। स्वप्नानुवृत्तिर्निद्रानुवृत्तिः। सृष्टाः इत्यवद्धाः। अथ इत्याद्यनुवासनायोगलक्षणम्। रूक्षखरता चात्र शरीरस्यास्नेहनादेव। हृल्लासादि असम्यग्योगलक्षणम् ॥ ४३-४५॥

यस्येह यामाननुवर्तते त्री-
न्स्नेहान्नरः स्यात्स विशुद्धदेहः।
आश्वागतेऽन्यस्तु पुनर्विधेयः
स्नेहो न संस्नेहयति ह्यतिष्ठन् ॥ ४६॥

उचितस्नेहप्रत्यागमनकालमाह—यस्येत्यादि। यामानिति प्रहरान्। सुविशुद्धदेह इति सः अनुवासनयोगप्रयोगसम्यग्योगादनुवासनव्यापत्तिरहित इत्यर्थः। आश्वागते इति शीघ्रं प्रत्यागते। अन्यस्तु विधेय इति तदैवान्यः स्नेहो देयः। पुनः स्नेहदानोपपत्तिमाह—स्नेहो न स्नेहयति ह्यतिष्ठन्निति ॥ ४६॥

त्रिंशत्स्मृताः कर्मसु वस्तयो हि
कालस्ततोऽर्धेन ततश्च योगः।
सान्वासना द्वादश वै निरूहाः
प्राक्स्नेह एकः परतश्च पञ्च ॥ ४७॥
काले त्रयोऽन्तः पुरतस्तथैकः
स्नेहा निरूहान्तरिताश्च षट्स्युः।
योगे निरूहास्त्रय एव देयाः
स्नेहाश्च पञ्चैव परादिमध्याः ॥ ४८॥

संप्रति संख्याप्रश्नस्योत्तरविशेषमाह—त्रिंशदित्यादि कर्मकालयोगसंज्ञा यथाक्रमं त्रिंशत्षोडशाष्टवस्तिसमुदायेषु ज्ञेया। कालस्ततोऽर्धेनेत्यत्र अर्धशब्दो न समप्रतिवचनः तेन त्रिंशदर्धः षोडशभागा भवंति। सान्वासना इत्यादिना कर्मादीनां निरूहानुवासनविभागमाह। एकमनुवासनं दत्वा दीयंत इति सान्वासनाः एवमनुवासनेन प्रत्येकं योगा द्वादश निरूहाश्चतुर्विंशतिर्वस्तयो भवंति। प्रागित्यारंभे। परत इति द्वादशनिरूहोत्तरकाले। निरूहांतरिताश्च षट् स्युरिति निरूहेणांतरीकृताः एवं च द्वादश वस्तयः पूरणीयाः। पंचैव परादिमध्या इति पंचस्नेहा अंते मध्ये आदौ च येषां विभक्तास्ते तथा। अत्र आदौ स्नेहद्वयं अंते च स्नेहद्वयं निरूहत्रयमध्ये चैकमनुवासनं एवं पंच स्नेहा भवंति। ये तु निरूहदिन एवानुवासनं वदंति तन्मते आदावेक एव अंतेपि दिनांतरे एकः एवं पंच भवंति। एवं कर्मकालयोरपि निरूहदिन एव दिनांतरे अनुवासनं व्याख्येयम्। अत्र चैकस्नेहांतरितानां निरूहदाने वातक्षोभो नाशंकनीयः। कर्मादिषु निरूहा यापना वस्तिरूपा दीयंते ये स्निग्धा एवेति कृत्वा न वातक्षोभका भवंति। एते च कर्मादयो यद्यपि शास्त्रप्रदेशेषु न व्यवह्रियंते तथापि तद्विषयव्यवहारार्थमेवेयं कर्मादिसंज्ञा। यथा यमकमहायमकतैलादिसंज्ञा। तेन कर्मादिसंज्ञा शास्त्रे व्यवहारादर्शनात् कर्मादिप्रतिपादको ग्रंथो नार्ष इति यदुच्यते तन्निरस्तम्। कर्मादिसंज्ञा च तंत्रांतरेप्यस्ति। तथाहि जतूकर्णः—वस्त्यास्त्रिंशत् षोडशाष्टौ च कर्मकालयोगा निरूहा स्नेहांतरिता द्वादश षट् त्रयः एकस्नेहारंभा पंच एकांताः इति। हारितेपि—"त्रिंशकं कर्म बुधा वदंति इत्याद्युक्तं"। कर्मादीनां प्रयोगं केचिद्वातादिषु वदंति ॥४७-४८॥

त्रीन्पञ्च वाहुश्चतुरोऽथ षड्वा
वाताधिकेभ्यस्त्वनुवासनीयान्।
स्नेहान्प्रदायाशु भिषग्विदध्या-
त्स्रोतोविशुद्ध्यर्थमतो निरूहान् ॥ ४९॥

त्रीन् पंचेत्यादिना स्नेहनार्थमनुवासनमाह—अत्र ये वातादिकानामिति पठंति तेषां आदिशब्देन पित्तकफयोरपि ग्रहणम्। बहुवचनं तद्गुणसंविज्ञानबहुव्रीहीणां वातस्य ग्रहणात् बहुलसंख्यायोगादुपपन्नम्। यथोक्तं कुष्ठनिदाने "वातादिषु प्रदुष्टेषु इति" तथा वेगाश्रितेपि वातादीनां रसादीनां इति बहुत्वं निर्दिष्टम्। अन्ये तु वाताधिकानां इति पठंति। अत्र चतुर्णां षण्णां स्नेहानां युग्मरूपाणामपि दानमविरुद्धमेव। एतदनुवासनस्य निरूहांगतया स्नेहनार्थं क्रियमाणत्वात्। अयुग्मदानं तु वस्तीनयुग्मान् इत्यनेन स्वप्रधानतयां अनुवासनस्य विहितमिति भिन्नविषयतया न विरोधः। यतः स्नेहनप्रयोजनमनुवासनम्। एतेन स्नेहे भूतं एवायुग्मदानेन निवर्तनीयम्। किंवा अयुग्मातंत्रतो व्याख्यानेन संख्यैवोच्यंते तथाहि "त्रीन् पंच त्रीन् चतुर इति सप्त पंच चतुर इति नव पंच षडित्येकादश इति पंच विकल्पा इह विधीयंते। तंत्रांतरे स्नेहस्य युग्मदानमुक्तं यथा "रूक्षस्य बहुवातस्य द्वौ त्रीन् वाप्यनुवासनान्। दद्यात् स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेदिति"। स्रोतःशब्देन विवद्धशिराभिहिता ॥ ४९॥

विशुद्धकायस्य ततः क्रमेण
स्निग्धं तु तैः स्वेदितमुत्तमाङ्गात् ।
विरेचयेत्रिर्द्विरथैकशो वा
बलं समीक्ष्य त्रिविधं मलानाम् ॥ ५० ॥
उरःशिरोलाघवमिन्द्रियाणाम्
स्रोतोविशुद्धिश्च भवेद्विशुद्धे ।
गलोपलेपः शिरसो गुरुत्वम्
निष्ठीवनं चाप्यथ दुर्विरिक्ते ॥ ५१ ॥

संप्रति क्रमागतशिरोविरेचनस्य कल्पनामसम्यग्योगातियोगलक्षणं चाह । विशुद्धेत्यादि विशुद्धकायस्येति । एतच्च पंचकर्मसंपादनीयकर्तृविषयत्वं शुद्धिपूर्वकत्वं च शिरोविरेचनस्येहोच्यते । अनेन वमनादिना शुद्धस्यापि शिरोविरेचनैकसंपाद्यो पुरुषेऽयं क्रमो ज्ञेयः । स्निग्धमित्यंगशिरोवस्तिपाण्यादि । तलस्वेदितमिति हस्ततलस्वेदितम् । त्रिर्द्विरथैकश इति तद्दिन एव दोषाणामुत्कृष्टत्वादिवलत्रैविध्यमपेक्ष्य यथायोग्यतया योज्यम् । लाघवमिंद्रियाणामिति चक्षुरादीनां स्वविषये पाटवम् । तिमिरं च पश्येदिति तमोव्याप्तं सर्वं पश्येदिति ॥ ५०-५१ ॥

शिरोऽक्षिशङ्खश्रवणार्तितोद-
श्चात्यर्थशुद्धेस्तिमिरं च पश्येत् ।
स्यात्तर्पणं तत्र मृदु द्रवं च
स्निग्धस्य तीक्ष्णं तु पुनर्न योगे ॥ ५२ ॥

तस्यातियोगायोगयोश्चिकित्सानुवक्तव्यतयानुपंगतामाह—स्यात्तर्पणमित्यादि । मृदुद्रवं चेत्यनेनातियोगचिकित्सितम् । तीक्ष्णं तु पुनर्नयोग इति अयोगशिरोविरेचनस्यैव पुनस्तीक्ष्णशिरोविरेचनं देयम् ॥ ५२ ॥

इत्यातुरस्वस्थसुखः प्रयोगो
बलायुषोर्वृद्धिकृदामयघ्नः ।
कालस्तु वस्त्यादिषु याति यावां-
स्तावान्भवेद्विः परिहारकालः ॥ ५३ ॥

उक्तं च कर्मप्रयोगमुपसंहरंति—इत्यातुरेत्यादि आतुरस्वस्थसुखः इति वचनेन आतुरे आमयस्यापहंतृतया स्वस्थे च बलायुर्वृद्धिकर्तृतया यथोक्तपंचकर्मप्रयोगः सुखहेतुर्भवतीति ज्ञेयम् । स्वस्थे च पंचकर्मप्रवृत्तिः माधवप्रथमेमासि इत्यादिना सूत्रस्थाने प्रोक्तैव ज्ञेया ॥ ॥ कृते कियान् वा परिहारकाल इत्यस्योत्तरमाह—कालस्त्वित्यादि तावान् भवेद्विःपरिहारकाल इति वस्त्यादिप्रयोगे यावान् कालो व्याप्यते तत्कालद्विगुणकालः यावत् परिहार्यत्वेनोक्तः परिहर्तव्यः । अत्र आदिशब्देन वमनविरेचनशिरोविरेचनानां ग्रहणम् । वस्तेरस्त्रादौ व्युत्पादनेन प्राधान्यं दर्शयति ॥ ५३ ॥

अत्याशनस्थानवचांसि यानम्
स्वप्नं दिवा मैथुनवेगरोधान् ।
शीतोपचारातपशोकरोषां-
स्त्यजेदकालाहितभोजनं च ॥ ५४ ॥

किं वर्जनीयं इति प्रश्नस्योत्तरं—अत्याशनेत्यादि आसनमुपविष्टावस्थानम् । स्थानमूर्ध्वतया स्थानम् । यानं रथाश्वादिना ... । एत आविष्कृततया इहोक्ताः तेन क्रोधातिचिंतनादयो येप्युपकल्पनीयादौ वमनादिप्रयोगे निषिद्धाः तेपि न सेव्या एव ॥ ५४ ॥

वद्धे प्रणीते विषमे च नेत्रे
मार्गे तथार्शःकफविड्विबन्धे ।
न याति वस्तिर्न सुखं निरेति
दोषावृतोऽल्पो यदि वाल्पवीर्यः ॥ ५५ ॥

प्रणीयमान इत्यादि प्रश्नस्योत्तरं-वद्धेत्यादि नेत्रे वद्धे विषमं प्रणीते गुदावयववद्धत्वान्न याति । तथा न सुखं निरेतीत्यादिना सुचिराच्च केन प्रश्नस्योत्तरम् । न सुखं निरेतीति चिरेण दुःखं कृत्वाऽऽगच्छतीत्यर्थः । दोषावृत इति दोषेण वलीयसावरुद्धः । अल्प इति अल्पमानः । अल्पवीर्य इति उष्णत्वणाद्यभावान्मृदुवीर्यः ॥ ५५ ॥

प्राप्ते तु वर्चोऽनिलमूत्रवेगे
वाते विवृद्धेऽल्पवले गुदे वा ।
अत्युष्णतीक्ष्णश्च मृदौ प्रकोष्ठे
प्रणीतमात्रः पुनरेति वस्तिः ॥ ५६ ॥

प्राप्ते चेत्यनेन शीघ्रागमनहेतुमाह-वातेतिवृद्धे स्नेहो गुदे वातेन प्रतिहतत्वान्न यात्याशयं ततः शीघ्रमागच्छति । अल्पवले गुदे स्नेहं धारयितुं न शक्नोति पुरुषः । अल्पवलत्वं च गुदस्य स्फिक्विवलीदौर्वल्यात् ॥ ५६ ॥

मेदःकफाभ्यामनिलो निरुद्धः
शूलाङ्गसुप्तिश्वयथून् करोति ।
स्नेहं तु युञ्जन्नबुधस्तु तस्मै
संवर्धयत्येव हि तान्विकारान् ॥ ५७ ॥
रोगास्तस्थान्येऽप्यवितर्क्यमाणाः
परस्परेणावगृहीतमार्गाः ।
सन्दूषिता धातुभिरेव चान्यैः
स्वैर्भेषजैर्नोपशमं व्रजन्ति ॥ ५८ ॥

साध्या इत्यादि प्रश्नस्योत्तरं मेदःकफाभ्यामित्यादि मेदसा कफेन वेति मेदःकफाभ्याम् । अत्र शूलादीन्निरीक्ष्य शुद्धवातभ्रांत्या स्नेहं प्रयुंक्ते नावर्णं जानाति अतएव अबुधः इति कृतम् । अन्यत्राप्युक्तं "कुपितोमार्गसंरोधान्मेदसा वा कफस्य वा । अतिवृद्धानिलेनादौ शस्तं स्नेहेन वृंहणमिति" । अवितर्क्यमाणा इति असम्यग्ज्ञायमानाः । असम्यग्ज्ञायमानत्वे हेतुमाह—परस्परेणेत्यादि । रोगशब्देनात्र दोषोभिप्रेतः । परस्परेण प्रतिबद्धे मार्गे अतो दुर्ग्रहा भवंति । तथा धातुभिश्च रक्तादिभिः संदूषिताः संमूर्छिताः संतो दुर्ज्ञेया भवंति । अभिज्ञाताश्च स्वै-

भेषजैर्न प्रशमं व्रजंति । सर्वभेषजैरिति मार्गावरोधादिकरणे दोषघात्वंतर्निरपेक्षैरेकदोषभेषजैः । तद्धि तथाभूतानां भेषजं यौगिकं न भवत्येव अतो अनुशमो युक्त एव । एवं च दोषाणां परस्परावरोधान् तथा धातुसंमूर्छनविशेषान् अवगम्यैव व्याधौ प्रपंचो अनुसरणीयः ॥ ५७–५८ ॥

सर्वं च रोगप्रशमाय कर्म
हीनातिमात्रं विपरीतकालम् ।
मिथ्योपचाराच्च न तं विकारम्
शान्तिं नयेत्पथ्यमपि प्रयुक्तम् ॥ ५९ ॥

अथ विज्ञातेपि व्याधौ भिषजा असम्यक्प्रयोगादिभिर्वर्धमाने असिद्धिमाह—सर्वं चेत्यादि । विपरीतकालमिति अनुचितकालकृतम् । मिथ्योपचाराच्चेति भेषजानां तथा अकरणात् यथा भेषजस्य सम्यक्परिणामे सति भोक्तव्यम् । ययौगिकं भेषजं तत्सम्यक् प्रयुक्तं सिध्यतीति सिद्धांतः ॥५९॥

तत्र श्लोकः ।

प्रश्नानिमान्द्वादश पञ्चकर्मा-
ण्युद्दिश्य सिद्धाविह कल्पनायाम् ।
प्रजाहितार्थं भगवान्महार्था-
न्सम्यग् जगादर्षिवरोऽत्रिपुत्रः ॥ ६० ॥

इति चरकसंहितायां सिद्धिस्थाने प्रथमोऽध्यायः ।

प्रश्नानित्यादिना अध्यायार्थं संगृह्णाति । संग्रहश्च व्यक्तः ६०

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां आयुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थानव्याख्यायां कल्पनासिद्धिव्याख्या समाप्ता ॥

---

## द्वितीयोऽध्यायः ।

### पञ्चकर्मीयसिद्धिः ।

येषां यस्माच्च कर्माण्यग्निवेश ! न कारयेत् ।
येषां च कारयेद्यानि तत्सर्वं संप्रवक्ष्यते ॥ १ ॥

कल्पनासिद्धौ ज्ञातकर्मोपयोगस्य कर्मप्रवृत्तिनिवृत्तिविषयकजिज्ञासा भवति अतस्तदुपदर्शनार्थं पंचकर्मीया सिद्धिरुच्यते । पंचकर्मप्रवृत्तिनिवृत्तिविषयज्ञानार्थमधिकृत्य कृता सिद्धिः पंचकर्मीया सिद्धिः । एषामित्यादिना अध्यायार्थं संकल्प्य प्रतिजानीते । पंचकर्माणि एषां न कार्याणीत्यनेन व्यस्तानि समस्तानि च एषां न कार्याणि तानि पृथग् वक्ष्यंते ॥ १ ॥

"चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च ।
सद्वैद्यनृपतिद्वेष्टा तद्विष्टः शोकपीडितः ॥ २ ॥
यादृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः ।
वैरी वैद्याभिमानी च श्रद्धाहीनः सशङ्कितः ॥३॥
भिषजामविधेयश्च नोपक्रम्यो भिषग्विदा ।
एतानुपचरन्वैद्यो बहून्दोषानवाप्नुयात् ॥ ४ ॥

एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः ।
अवस्थां प्रविभज्यैषां वर्ज्यं कार्यं च वक्ष्यते ॥ ५ ॥

अतः चंड इत्यादिना सकलपंचकर्मविषयमाह यद्यपि च विमाने जनपदोद्ध्वंसनीये रोगभिषग्जितीये वा अनपवादप्रतीकारादयोपि अनुपक्रमणीयत्वेनोक्ता एवं तथापीह प्रकरणागतत्वात् पुनरुच्यंते । चंडादिषु प्रवृत्तिर्भेषजस्याशक्यत्वान्निषिध्यते । कृतघ्नादिषु चाधर्मवशादेव भेषजं न सिध्यति प्रत्युत अधार्मिकप्रतिक्रियया अधर्म एव भवतीति निवृत्तिर्विधीयते । सतो राजानं भिषजं च द्वेष्टीति सद्राजभिषजांद्वेष्टा किंवा सद् इति राज्ञो भिषजश्च विशेषणम् । तद्विष्ट इति सदादिद्वेष्यः । यादृच्छिको नास्तिकः । विहीनः करणैरित्यकरणः । वैरी वैद्यापकारकः वैद्यद्वेष्टा नापकारक इति तु विशेषः । वैद्याविदग्धो वैद्याभिमानी । भिषजामविधेय इति भिषजामनायत्तः । सर्वैरिति वमनादिभिरन्यैश्च संशमनादिभिः । एषामिति चंडादिव्यतिरिक्तानाम् ॥ २–५ ॥

अच्छर्दनीयास्तावत्क्षतक्षीणाति-स्थूलकृश-बालवृद्धदुर्बलश्रान्त-पिपासित-क्षुधितकर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्त-क्षामगर्भिणी-सुकुमार-संवृतकोष्ठ-दुश्छर्दनोर्ध्वरक्त-पित्तप्रसक्तच्छर्द्यूर्ध्ववातास्थापितानुवासित-हृद्रोगोदावर्तमूत्राघातप्लीहगुल्मोदराष्ठीलास्वरोपघाततिमिरशिरःशङ्खकर्णाक्षिपार्श्वशूलार्ताः ॥ ६ ॥

संप्रत्युपक्रमणीयानामेव रोगादियोगकृतावस्थाभेदेनाकर्तव्यपंचकर्म दर्शयन्नाह—अवम्यास्तावदित्यादि । अवम्यादौ तावत् इति पदं प्राक् प्रस्तुतोपदर्शनार्थम् । प्रसक्तशब्दो मैथुनादिभिः प्रत्येकं संबध्यते । संवृतकोष्ठो वायुनाल्पीकृतकोष्ठः वायुव्याप्तकोष्ठ इत्येके ॥ ६ ॥

तत्र क्षतस्य च भूयः क्षणनाद्रक्तातिप्रवृत्तिः स्यात् । क्षीणातिस्थूल-कृशबालवृद्धदुर्बलानामौषधबलासहत्वात्प्राणोपरोधः । श्रान्तपिपासितक्षुधितानां च तद्वत् । कर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्तक्षामाणां रौक्ष्याद्वातरक्तच्छेदक्षतभयं स्यात् । गर्भिण्या गर्भव्यापदामादामगर्भभ्रंशाच्च दारुणा रोगप्राप्तिः । सुकुमारस्य हृदयस्य विकर्षणादूर्ध्वमधो वा रुधिरातिप्रवृत्तिः । संवृतकोष्ठदुश्छर्दनयोरतिमात्रप्रवाहणाद्दोषाः समुत्क्लिष्टा ह्यन्तःकोष्ठे जनयन्त्यन्तर्विसर्पं स्तम्भं जाड्यं वैचित्यं मरणं वा । ऊर्ध्वरक्तपित्तस्य उदानं उत्क्षिप्य प्राणान् हरेद्रक्तं चातिप्रवर्तयेत् । प्रसक्तच्छर्देस्तु तद्वदूर्ध्ववातास्थापितानुवासितानामूर्ध्वं वातातिप्रवृत्तिः । हृद्रोगिणो हृदयोपरोधः । उदावर्तिनो घोरतर उदावर्तः स्यात् शीघ्रतरहन्ता ।

मूत्राघातादिभिरार्तानां तीव्रतरः शूलप्रादुर्भावः । तिमिराणां तिमिरातिवृद्धिः । शिरःशूलादिषु शूलातिवृद्धिः । तस्मादेते न वाम्याः ॥ ७ ॥

तत्र क्षतस्येत्यादिना यथोक्तवमनादाने हेतुमाह । प्राणोपरोधो मरणं बलक्षय इत्यन्ये । श्रांतादीनां विच्छेदपाठेन प्राणोपरोधस्य पूर्वापेक्षया हीनमात्रत्वं दर्शयति । वातरक्तच्छेदक्षतभयमित्यत्र रक्तच्छेदो रक्तमोक्षः । सुकुमारस्येति मृदुशरीरस्य । हृदयापकर्षणादिति हृदयहिंसनादिति । तद्वदिति ऊर्द्धरक्तपित्तिनामित्यत्रोक्तो दोषः ॥ ७ ॥

सर्वेष्वपि खलु एतेष्वपि विषगविरुद्धाभ्यवहारामक्ततेषु अप्रतिषिद्धं शीघ्रकारित्वाद् दोषाणामिति ॥ ८ ॥

अवम्यानामवस्थायां वमनमाह—सर्वेष्वपीत्यादि ।—यद्यपि चात्राध्यायांते सर्वेष्वेव निर्दिष्टेष्ववस्थायां निषिद्धमपि वक्ष्यति तथापीह विधानेनात्रावश्यकर्तव्यता वमन इति बोध्यम् ॥ ८ ॥

शेषास्तु वम्याः । पीनसकुष्ठनवज्वरराजयक्ष्मकासश्वासगलग्रहगलगण्डश्लीपद-मेह-मन्दाग्निविरुद्धाजीर्णान्नविसूचिकालसकविषगरपीतदष्टदिग्धविद्धाधःशोणितपित्तकफप्रसेकदुर्नामहृल्लासारोचकाविपाकापच्यपस्मारोन्मादातिसारशोषपाण्डुरोगमुखपाकदुष्टस्तन्यादयः श्लेष्मव्याधयो विशेषेण रोगाध्यायोक्ताश्च । तेषु हि वमनं प्रधानतममित्युक्तं केदारसेतुभेदे शाल्यादिशोषदोषविनाशवत् ॥ ९ ॥

शेषास्तु वम्या इत्यभिधायापि पीनसादीन् पुनर्वमनविषयतया दर्शयिष्यन् तेषु विशेषेण वमनस्य यौगिकतां दर्शयति । एवमुत्तरत्रापि पुनर्विरेचनादिविषयोपदर्शने व्याख्येयम् । प्रधानतममिति महारोगाध्यायेनोक्तम् । केदारसेतुभेदे इत्यादिनैकदेशेन महारोगाध्यायोक्तं प्राधान्यख्यापकं ग्रंथं ग्राहयति । तेन यदुक्तं तत्र "वमनं खलु सर्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यंते भिषजः तद्ध्यादितएवामाशयमनुप्रविश्य सकलं वैकारिकश्लेष्ममूलमपकर्षति तत्रावर्जिते श्लेष्मण्यपि शरीरांतर्गताः श्लेष्मविकाराः प्रशांतिमापद्यंते यथा भिन्ने केदारसेतौ शालिषष्टिकादीन्यनभिष्यंदमानान्यंभसा प्रशोषमापद्यंते" तद्वत् इति ग्रंथखंडकं तदिह संबध्यते । एवं विरेचनप्राधान्ये तथा वस्तिप्राधान्ये यदिहैकदेशं महारोगाध्यायोक्तप्राधान्यख्यापकग्रंथखंडकं वक्ष्यति तत्र तद्ग्रंथाध्याहारेण योजनीयम् ॥ ९ ॥

अविरेच्यास्तु सुभगक्षतगुदमुक्तनालाधोभागरक्तपित्तविलङ्घितदुर्वलेन्द्रियाल्पाग्नि-निरूढ-कामादि-व्यग्राजीर्ण-नवज्वर-मदात्ययिताध्मातशल्यार्दिताभिहतातिस्निग्धरूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः ॥ १० ॥

विरेचनाविषयमाह—अविरेच्यास्त्वित्यादि—सुभगक्षतगुद इति सुभगगुदः क्षतगुदश्च । अन्ये तु सुभगं मुखसंबंधिनमाहुः । मुक्तवातो संवृतगुदः । क्षतादयश्च गर्भिण्यंता इति वमनाविषयमध्यपठिताः ॥ १० ॥

तत्र सुभगस्य सुकुमारोक्तो वमनदोषः स्यात् । क्षतगुदस्य क्षते गुदे वायुः प्राणोपरोधकरीं वरां रुजां जनयेत् । मुक्तनालमतिप्रवृत्त्या हन्यात् । अधोभागरक्तपित्तिनां च तद्वदेव । विलङ्घितदुर्वलेन्द्रियाल्पाग्निनिरूढा औषधवेगं न ते सहेरन् । कामादिव्यग्रमनसो न प्रवर्तते कृच्छ्रेण वा प्रवर्तमानमयोगदोषान् कुर्यात् । अजीर्णिन आमदोषः स्यात् । नवज्वरस्य अविपक्वान् दोषान् न निर्हरेत् वातमेव च कोपयेत् । मदात्ययितस्य मद्यक्षीणे देहे वायुः प्राणोपरोधं कुर्यात् । आध्मातस्य आध्मायमानस्य वा पुरीषकोष्ठनिचितो वायुर्विसर्पन् सहसा आनाहं तीव्रतरं मरणं वा जनयेत् । शल्यार्दिताभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात् । अतिस्निग्धस्य अतियोगभयं भवेत् । रूक्षस्य वायुरङ्गग्रहं कुर्यात् । दारुणकोष्ठस्य विरेचनोद्धता दोषा हृच्छूलपर्वभेदानाहाङ्गमर्दच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः । क्षतादीनां गर्भिण्यन्तानां छर्दनोक्तो दोषः स्यात् । तस्मादेते न विरेच्याः ॥ ११ ॥

रुजां जनयेद्विरेचनमिति शेषः । अधोभागरक्तपित्तिनं तद्वदिति अतिप्रवृत्त्या हन्यादित्यर्थः । कामादीत्यादौ आदिशब्देन शोकक्रोधादीनां ग्रहणम् । अत्रचाप्रवृत्तिः स्तोकप्रवृत्तिश्चायोग एव । उक्तं हि "अयोगप्रातिलोम्येन न चाल्पं वा प्रवर्तनं" इति । अयोगदोषाश्च विभ्रंशहिक्कास्तंभादयो वक्ष्यमाणाः । आमदोष इति आमदोषनिमित्तविसूचिकादिः । पुरीषकोष्ठनिचित इति पुरीषाशयोदरनिचितः । छर्दनोक्त इति प्राग्वमनोक्तदोषः ॥ ११ ॥

शेषास्तु विरेच्याः । कुष्ठज्वरमेहोर्ध्वरक्तपित्तभगंदरोदरार्शोब्रध्नप्लीहगुल्मार्वुदगलगण्डग्रन्थिविसूचिकालसकमूत्राघातक्रिमिकोष्ठविसर्पपाण्डुरोगशिरःपार्श्वशूलोदावर्तनेत्रास्यदाहहृद्रोगव्यङ्गनीलीकनेत्रनासिकास्यश्रवणरोगहलीमकश्वास-कासकामलापस्मारोन्माद-वातरक्त-योनि-रेतो-दोषतैमिर्यारोचकाविपाकच्छर्दिश्वयथूदरविस्फोटकादयः पित्तव्याधयो विशेषेण रोगाध्यायोक्ताश्च । एतेषु हि विरेचनं प्रधानतममित्युक्तमग्न्युपशमेऽग्निगृहवत् ॥ १२ ॥

विशेषेण विरेच्यानाह—कुष्ठेत्यादि विसूचिकायां उत्तरकालं विरेचनं विशेषदोषहरणार्थं ज्ञेयम् ॥ १२ ॥

**अनास्थाप्यास्तु अजीर्ण्यतिस्निग्धपीतस्नेहोत्क्लिष्टदोषाल्पाग्नियानक्लान्तातिदुर्बलक्षुत्तृष्णाश्रमार्तातिकृशभुक्तभक्तपीतोदकवमितविरिक्तक्षतकृतनस्तःकर्मक्रुद्धभीतमत्तमूर्च्छितप्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्काबद्धच्छिद्रोदकोदराध्मातालसकविसूचिकामप्रजातामातिसारमधुमेहकुष्ठार्ताः॥१३**

अनास्थाप्यानाह—अनास्थाप्यास्त्वित्यादि मधुमेहशब्देन सर्वप्रमेहग्रहणम् ॥ १३ ॥

**तत्र अजीर्ण्यतिस्निग्धपीतस्नेहानां दूष्योदरं मूर्च्छा श्वयथुर्वा स्यात् । उत्क्लिष्टदोषमन्दाग्न्योररोचकस्तीव्रः । यानक्लान्तस्य क्षोभव्यापन्नो वस्तिराशु देहं शोषयेत् । अतिदुर्बलक्षुत्तृष्णाश्रमार्तानां पूर्वोक्तो दोषः स्यात् । अतिकृशस्य कार्श्यं पुनर्जनयेत् । पीतोदकभुक्तभक्तयोरुत्क्लिश्योर्ध्वमधो वा वायुर्वस्तिमुत्क्षिप्य क्षिप्रं वस्तौ घोरान् विकारान् जनयेत् । वमितविरिक्तयोस्तु रूक्षशरीरं निरूहः क्षतं क्षार इव दहेत् । कृतनस्तः कर्मणो विभ्रंशं भृशसंरुद्धस्रोतसः कुर्यात् । क्रुद्धभीतयोर्वस्तिरूर्ध्वमुपप्लवेत् । मत्तमूर्च्छितयोर्भृशं विचलितायां संज्ञायां चित्तोपघातव्यापत्स्यात् । प्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्कार्तानामूर्ध्वीभूतो वायुरूर्ध्वं वस्तिं नयेत् । बद्धच्छिद्रोदकोदराध्मातानां भृशतरमाध्माप्य वस्तिः प्राणान् हिंस्यात् । अलसकविसूचिकामप्रजातामातिसारिणामकृतदोषः स्यात् । मधुमेहकुष्ठिनोर्व्याधेः पुनर्वृद्धिस्तस्मादेते नास्थाप्याः ॥ १४ ॥**

दूष्योदरमिति सन्निपातोदरम् । यानं रथ्यादियानम् । विभ्रंशमित्यनेन इंद्रियाणामिति शेषः । ऊर्ध्वं उपप्लवेदिति मुखादितिर्यगुत्प्लवनं स्यात् । व्यापत्स्यादिति मूर्छारूपा व्यापत्स्यात् । बद्धोदरादि आध्मानांतं वस्तिर्निषिध्यते । तेन "खिन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितं । सतैललवणं दद्यान्निरूहं सानुवासमिति" वाक्येन निरूहविधानं अविरुद्धं भवति । अन्ये तु उदराध्यायैव बद्धोदरिण इत्यनेन खिन्नबद्धोदरविषयं निरूहं वर्णयंति । तेन सामान्येन बद्धोदरे निरूहनिषेधो न विरुद्धः ॥ १४ ॥

**शेषास्त्वास्थाप्याः । सर्वाङ्गैकाङ्गकुक्षिरोगवातवर्चोमूत्रशुक्रसङ्गबलवर्ण-मांस-रेतःक्षय-दोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावार्तातिसारपर्वाभितापप्लीहगुल्महृद्रोग-भगन्दरोन्मादज्वर-ब्रध्नशिरःकर्णशूल-हृदयपार्श्व-पृष्ठ-कटीग्रहवेपनाक्षेपक-गौरवातिलाघव-रजःक्षयार्ता विषमाग्निस्फिग्जानुजङ्घोरुगुल्फपार्ष्णिप्रपद-योनिबाह्वाङ्गुलिस्तनाङ्ग-दन्तनखपर्वास्थि-शूलशोषस्तम्भान्त्रकूजनपरिकर्तिकादयः । वातव्याधयो विशेषेण रोगाध्यायोक्ताश्च एतेषु आस्थापनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदवत् ॥ १५ ॥**



विशेषेण आस्थाप्यानाह—सर्वांगेत्यादि स्फिगादिभिः शूलशोषस्तंभेत्यादि संबध्यते ॥ १५ ॥

**य एवानास्थाप्याः त एव अननुवास्याः स्युः । विशेषतस्त्वभुक्तभक्त-नवज्वरपाण्डुरोगकामलाप्रमेहार्शःप्रतिश्यायारोचक-मन्दाग्निदुर्बलप्लीहकफोदरोरुस्तम्भवर्चोभेद-विषगरपीतकफाभिष्यन्दगुरुकोष्ठश्लीपदगलगण्डापचीक्रिमिकोष्ठिनः ॥ १६ ॥**

**तत्राभुक्तभक्तस्यानावृतमार्गत्वादूर्ध्वमतिवर्तते स्नेहः । नवज्वरपाण्डुरोगकामलाप्रमेहिणां दोषानुत्क्लेश्योदरं जनयेदर्शसस्य अर्शांस्यभिष्यन्द्याध्मानं कुर्यात् । अरोचकार्तस्य अन्नगृद्धिं पुनः हन्यात् । मन्दाग्निदुर्बलयोर्मन्दतरमग्निं कुर्यात् । प्रतिश्यायप्लीहादिमतां भृशं चोत्क्लिष्टदोषाणां भूय एव दोषं वर्धयेत्, तस्मादेते नानुवास्याः ॥ १७ ॥**

**य एवास्थाप्यास्त एवानुवास्याः । विशेषतस्तु रूक्षतीक्ष्णाग्नयः केवलवातरोगार्ताश्च । एतेषु ह्यनुवासनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदनवत्, मूले द्रुमसेकवच्च ॥ १८ ॥**

अनुवासनविषयोपदर्शनार्थं अनास्थाप्येषु भुक्तभक्त इति पाठः पठितः । अनुवासनं तु भुक्तस्य दीयते । तद्व्युदासार्थं अभुक्तभक्तोपादानम् । अनुवासनं लभुक्तस्य ऊर्ध्वं याति न तु निरूह इति विशेषः । अनुवासनं तु स्नेहस्य सूक्ष्मतया विसर्पणशीलं तथा सायं च दीयते तेन तावत्कालमभोजनात् शून्यशरीरस्य ऊर्ध्वं याति । अनुवासनं च "शूले च भक्तानभिनंदने च" इत्यनेन यद्यपि विहितं तथापीह भक्तानभिनंदनहेत्वंतरभूतायां अरुचौ तन्निषेधो न विरुद्धः । अनभिनंदनं हि अश्रद्धामात्रवातकृतं । अरुचिस्तु सर्वदा अनिच्छा । केवलं वातरोगाश्च अर्हाः । शुद्धवातजरोगयुक्ताः अनुवासनार्हाः । अनुवासनप्राधान्यख्यापने वनस्पतिमूलच्छेदनवदित्यनेन महारोगाध्यायोक्तवस्तिप्राधान्यख्यापकग्रंथोपदर्शनम् । यथा वनस्पतेर्मूले छिन्ने स्कंधशाखावरोहकुसुमफलपलाशादीनां नियतो विनाशस्तद्वदिति । मूले द्रुमसेकवच्चेत्यनेन कल्पनासिद्ध्युक्त "मूले निषिक्ते हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवाग्रः । काले महान् पुष्पफलप्रदश्च तथा नरः स्यादनुवासनेन" इत्यादि ग्रंथोक्तानुवासनप्राधान्यख्यापकग्रंथग्रहणं करोति॥१६—१८॥

अशिरोविरेचनार्हा अजीर्णिभुक्तभक्तपीतस्नेहमद्यतोयपातुकामास्नातशिराः स्नातुकामः क्षुत्तृष्णाश्रमार्तमत्तमूर्च्छितशस्त्रदण्डाहतव्यवायव्यायामपानक्लान्तनवज्वरशोकाभितप्तविरिक्तानुवासितगर्भिणीनवप्रतिश्यायार्ता अनृतुदुर्दिने चेति ॥१९॥

तत्राजीर्णिभुक्तभक्तयोर्दोष ऊर्ध्ववहानि स्रोतांस्यावृत्य कासश्वासच्छर्दिप्रतिश्यायान् जनयेत् । पीतस्नेहमद्यतोयपातुकामानां कृते च पिवतां मुखनासास्रावाक्ष्युपदेहतिमिरशिरोरोगान् जनयेत् । स्नातशिरसः कृते च स्नाने शिरसः प्रतिश्यायं क्षुधार्तस्य वातप्रकोपं तृष्णार्तस्य पुनस्तृष्णाभिवृद्धिं मुखशोषं च । श्रमार्तमत्तमूर्च्छितानामास्थापनोक्तो दोषः स्यात् । शस्त्रदण्डहतयोस्तीव्रतरां रुजं जनयेत् । व्यवायव्यायामक्लान्तानां शिरःस्कन्धनेत्रोरःपीडनम् । नवज्वरशोकाभितप्तयोरूष्मा नेत्रनाडीभिरनुसृत्य तिमिरं ज्वरवृद्धिं च कुर्यात् । विरिक्तस्य वायुरिन्द्रियोपघातं कुर्यात् । अनुवासितस्य कफः शिरोगुरुत्वं च कण्डूक्रिमिदोषान् जनयेत् । अन्तर्वत्न्या गर्भं स्तम्भयेत् । स काणः कुणिः पक्षहतः पीठसर्पी वा स्यात् । नवप्रतिश्यायार्तस्य स्रोतांसि व्यापादयेत् । अनृतुदुर्दिने शीतं पूतिनासिका शिरोरोगश्च स्यात् । तस्मादेते न शिरोविरेचनार्हाः ॥ २० ॥

अशिरोविरेचनार्हानाह—अशिरोविरेचनार्हा इति । पातुकाम इति । स्नेहादिं पातुकामः । अनृतौ शीतग्रीष्मवर्षासु । दुर्दिनेति मेघाच्छादितेहि । कृते च पिवतामिति शिरोविरेचने कृते स्नेहादीन् पिवताम् । पीठसर्पी: पंगुः । अनृतुदुर्दिनेत्यादौ शिरोरोगश्चेत्यनेन शीतकाले दीयमानस्य । दुर्दिन इति अवार्षिकम् दुर्दिनमाहुः ॥ १९—२० ॥

शेषा अर्हाः । शिरोदन्तमन्याहनुग्रहपीनसगलगण्डशुण्डिकाशालूक-शुक्र-तिमिर-वर्त्मरोग-व्यङ्गोपजिह्विका-र्धावभेदकग्रीवास्कन्धास्यनासिकाकर्णाक्षिमूर्धकपालशिरोरोगार्दितापतन्त्रकापतानक-गलगण्डदन्तशूलहर्षचालाक्षिरागार्बुदस्वरपरिपक्काश्चैतेषु शिरोविरेचनं प्रधानतममित्युक्तम् । तद्ध्युत्तमाङ्गमनुप्रविश्य मज्जपेशीकासक्तं दोषं विकारकरमपकर्षति ॥ २१ ॥

शिरोदंतेत्यादिना विशेषेण शिरोविरेचनार्हानाह—शिरोदंतमन्यादिभिः स्तंभ इति संवध्यते । पीनसोऽत्र पक्कः प्रतिशायः । तरुणे च प्रतिश्याये विरेकनिषेधइति न विरोधः । अपतंत्रकः आपतानकभेद एव । उक्तं हि "निःसंज्ञः सोपतंत्रक" इति । शूलहर्षचालाः दंतेन संवध्यंते । रागो नेत्ररागो रोगविशेषः । वातविकारेपि अत्र विरेचनं स्थानागतश्लेष्महंतृत्वादेवोपपन्नम् । मज्जपेशीकासक्तमिति मज्जपेशीषु उपघातेन शिरसि पक्को दोषो जायत इत्यर्थः ॥ २१ ॥

प्रावृट्शरद्वसन्तेष्वितरेषु आत्ययिकेषु रोगेषु नावनं कुर्याद्ग्रीष्मे पूर्वाह्णे शीते मध्याह्ने वर्षास्वदुर्दिने चेति ॥ २२ ॥"

अनृतौ शिरोविरेचनं निषिद्धमप्युपचारवशात्तद्विधानमाह—प्रावृडित्यादि इतरेष्विति हेमंतग्रीष्मवर्षासु आत्ययिकेष्विति वचनादनात्ययिकगदनिषेधोक्तः । आत्ययिकेपि शीतादिप्रतिकारार्थमाह—ग्रीष्मेत्यादि ॥ २२ ॥

तत्र श्लोकाः ।

इति पञ्चविधं कर्म विस्तरेण निदर्शितम् ।
येभ्यो यत्त्वहितं यस्मात्कर्म येभ्यश्च यद्धितम् २३
न चैकान्तेन निर्दिष्टे तत्राभिनिविशेद्बुधः ।
स्वयमप्यत्र वैद्येन तर्क्यं बुद्धिमता भवेत् ॥ २४ ॥
उत्पद्येत हि सावस्था देशकालबलं प्रति ।
यस्यां कार्यमकार्यं स्यात्कर्म कार्यं च वर्जयेत् २५
छर्दिहृद्रोगगुल्मार्ते वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च २६

इतीत्यादिनाऽध्यायार्थसंग्रहमभिधाय वमनाद्यविषयत्वेन तथा वमनादिविषयित्वेन प्रतिपादिते वमनादिनिवृत्तिप्रवृत्तिनिश्चयं निषेधयन्नाह—न चैकांतेनेत्यादि अभिनिविशेदिति निश्चयं कुर्यात् । तर्क्यमिति अनुक्तमप्यूहनीयम् । ऊहापोहे कृते बुद्धेस्तु यथोक्ताचरणमेव श्रेय इति । अथ किमर्थं यथोक्ताचरणं श्रेय इति तथा किमर्थं एकांतावधारणं न कर्तव्यमिति चाह—उत्पद्यत इति देशकालबलं प्रतीति देशादिभेदं कृत्वेत्यर्थः । कार्यमकार्यं स्यादिति कर्तव्यतयोक्तमकरणीयं स्यात् । तथा वर्जितं च यत्कर्म तत्कार्यं स्यात् । विशेषेण तु निषिद्धस्यैवावस्थाविशेषे क्रियमाणस्य वमनादेरुदाहरणं स्वे चिकित्सितं इति छर्दिचिकित्सिताध्याये । अवस्थां प्राप्य निर्दिष्टमित्यनेन अवस्थाविशेष एव निषेधो विद्यात् । उत्सर्गादपवाद इति अविरोधं दर्शयति । एवमन्यत्रापि अपवादविषये वमनादिविधानं अवस्थाविशेषेण समाधेयम् ॥ २३—२६ ॥

तस्मात्सत्यपि निर्दिष्टे कुर्यादूह्यं स्वयं धिया ।
विना तर्केण या सिद्धिर्यदृच्छासिद्धिरेव सा ॥२७॥

इति चरकसंहितायां सिद्धिस्थाने द्वितीयोऽध्यायः ॥ २ ॥

उपसंहरन्नाह—तस्मादित्यादिशास्त्रोपदेशे सत्यपि स्वबुद्ध्या अनुक्तमपि कर्तव्यं यदुक्तं प्रायो वमनमिव कर्षकस्य अन्यज्ञानाय भवतीति ॥ २७ ॥

इति श्रीमच्चरकचतुराननचक्रपाणिदत्तकृतायां चरकतात्पर्यटीकायां सिद्धिस्थाने पंचकर्मसिद्धिर्नाम द्वितीयोध्यायः समाप्तः ॥

## तृतीयोऽध्यायः ।

### वस्तिसूत्रीयसिद्धिः ।

"कृतक्षणं शैलवरस्य रम्ये
स्थितं धनेशायतनस्य पार्श्वे ।
महर्षिसंघैर्वृतमग्निवेशः
पुनर्वसुं प्राञ्जलिरन्वपृच्छत् ॥ १ ॥

पूर्वाध्याये वमनादिविषयमभिधाय कल्पनासिद्ध्युक्तवस्तिकल्पनां प्रपंचेनाभिधानार्थं वस्तिसूत्रीया सिद्धिरुच्यते—धनेशायतने इति हिमालये ॥ १ ॥

वस्तिर्नरेभ्यः किमपेक्ष्य दत्तः
स्यात्सिद्धिमान् किम्मयमस्य नेत्रम् ।
कीदृक्प्रमाणाकृति किं गुणश्च
केषां च किं योनिगुणश्च वस्तिः ॥ २ ॥
निरूहकल्पः प्रणिधानमात्राः
स्नेहस्य वा काः शमने विधिः कः ।
के वस्तयः केषु मता इतीदं
श्रुत्वोत्तरं प्राह वचो महर्षिः ॥ ३ ॥

वस्तिर्नरेभ्य इति दशप्रश्नाः । नेत्रं नलिका । किं योनिगुणस्य वस्तिरित्यत्र योनिः प्रभवस्थानं । स्नेहस्य वा का इति अनुवासनस्य काः प्रणिधानमात्राः । अत्र प्रपंचेन अभिधातव्यम् । तेन अनुवासनस्य कल्पमात्रे प्रश्नोत्तरे बोद्धव्ये । यदा तु स्नेहस्य निरूहकल्पः कस्तदा स्नेहस्य निरूहे दीयमानस्य को विधिरित्यर्थः ॥ २ ॥ ३ ॥

समीक्ष्य दोषौषधदेशकाल-
सात्म्याग्निसत्त्वादिवयोबलानि ।
वस्तिः प्रयुक्तो नियतं गुणाय
स्युः सर्वकर्माणि च सिद्धिमन्ति ॥ ४ ॥

अस्योत्तरं उत्तरग्रंथेन संगतार्थमेव समीक्ष्येत्यादि—अत्र दोषादयो ये देशपरीक्षणीयाः प्रोक्ताः तेष्वेव उपकल्पनीयोक्तस्य दोषमेषजाद्येकादशकस्य तथा रोगभिषग्जितीयोक्तदशपरीक्ष्यस्यावरोधो व्याख्येयः । अनुक्तावबोधश्चायं योनिव्यापत्तिक एव अस्माभिरुक्तो अनुसरणीयः । समीक्ष्येति ज्ञानपूर्वकमवेक्ष्य । सर्वकर्माणीति वमनादीनि दोषादीनपेक्ष्य प्रयुक्तानि गुणकराणि भवंति ॥ ४ ॥

सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यास्थिशस्त्रद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिश्च तैस्तैः
कार्याणि नेत्राणि त्रिकर्णिकानि ॥ ५ ॥

किम्मयमस्य नेत्रमित्यस्योत्तरं—सुवर्णेत्यादि त्रपु पित्तलम् । विषाणैः शृंगैः । सुकर्णकानीति सुसमाहितकर्णकानि । त्रिकर्णकानीति केचित् पठंति ॥ ५ ॥

षड्द्वादशाष्टाङ्गुलसंमितानि
षड्विंशतिर्द्वादशवर्षजानाम् ।
स्युर्मुद्गकर्कन्धुसतीनवाहि
छिद्राणि वर्त्या पिहितानि चापि ॥ ६ ॥

कीदृक्प्रमाणाकृति इति तृतीयप्रश्नस्योत्तरं षडित्यादि—तत्र षडंगुलं एकवर्षात्प्रभृति यावत् षड्वर्षं । द्वादशवर्षस्य अष्टांगुलं नेत्रं भवति । विंशतिवर्षस्य द्वादशांगुलं नेत्रं भवति । अत्र व्युत्क्रमाभिधानेन षड्वर्षादर्वाक् विंशतिवर्षादूर्ध्वं नेत्रमानविकल्पो नास्ति । षड्वर्षादूर्ध्वं नेत्रमानविकल्पो दर्शयति तेन षड्वर्षादूर्ध्वं प्रत्यब्दमंगुलभूता भागवृद्धिर्भवति । द्वादशादूर्ध्वं तु प्रत्यब्दमर्धांगुलवृद्धिः । एवमुक्तमानपूरणं भवति । सुश्रुते नेत्रप्रमाणभेद उक्तः स नातिविरुद्धत्वादुपेक्षणीय एव । उक्तं हि तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशांगुलप्रमाणानि पंचविंशतेरूर्ध्वं द्वादशांगुल इति । मुद्गादिवाहि छिद्रं षडष्टद्वादशांगुले नेत्रे यथासंख्यं ज्ञेयम् । कर्कंधुशब्देन कोलास्थि गृह्यते । उक्तं हि सुश्रुते—"कोलास्थिमात्रच्छिद्रमिति । कर्कंधुशब्देन च शृगालबदरी स्वल्पा गृह्यते । बृहद्बदरास्थिग्रहणे कनिष्ठिकाग्रप्रमाणवदनं न याति । केचित् एवमेवोपदिशंति बदरास्थिमज्जानं इह कर्कंधुशब्देन ग्राहयंति । वर्त्या पिहितानीति द्रव्यांतरप्रवेशनिरासार्थं वर्त्या पिहितमुखानि कर्तव्यानि ॥ ६ ॥

यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां
मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि
श्लक्ष्णानि च स्युर्गुलिकामुखानि ॥ ७ ॥
स्यात्कर्णिकैकाग्रचतुर्थभागे
मूलाश्रिते वस्तिनिबन्धने द्वे ।
जरद्गवो माहिषहारिणो वा
स्याच्छौकरो वस्तिरजस्य वापि ॥ ८ ॥
दृढस्तनुर्नष्टशिरोविगन्धः
कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथानुरूपं
नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ९ ॥

यथावय इति यस्मिन् वयसि यद्विहितं तत् स्वस्यैवांगुष्ठकनिष्ठिकाभ्यां मूले अग्रे च तुल्यपरिणाहं नेत्रं कर्तव्यम् । ऋजुनीत्यादिना नेत्रगुणमाह श्लक्ष्णानीति अकर्कशानि । गुडिकामुखानीत्यनेन वर्तुलमुखतया अतीक्ष्णमुखतां दर्शयति । एका कर्णिका अग्रे कर्तव्या नेत्रस्यातिप्रवेशनिरासार्थं वस्तिनिबंधने द्वे इति वस्तिनिबंधनप्रयोजनके द्वे । किंयोनिगुणोवस्तिरित्यस्योत्तरं—जरद्गवो वृद्धगोभवः । वस्तिरिति मूत्राशयः नष्टशिर इति अनुच्छूनशिरः । विगतो गंधो यस्य स विगंधिः । कषायरक्त इति कषायभावनया रक्तीकृतः । वयो वीक्ष्य यथानुरूपमिति वयोभेदेन यथोक्तेन यो वस्तिर्यस्योचितप्रमाणो भवति स तस्य नेत्रे निबंधनीयः ॥ ७–९ ॥

वस्तेरभावे प्लवजो गलो वा
स्यादङ्कपादः सुघनः पटो वा ।
नेत्रस्य चालाभत एव नाडी
हितास्थिजा वंशभवा नलो वा ॥ १० ॥

वस्तेरभाव इत्यादि प्लवजो पक्षिविशेषस्य गलः । अंगपादः चर्मचटकः । तस्य चर्म ग्राह्यम् ॥ १० ॥

आस्थापनार्हं पुरुषं विधिज्ञः
समीक्ष्य पुण्येऽहनि शुक्लपक्षे ।
प्रशस्तनक्षत्रमुहूर्तयोगे
जीर्णान्नमेकाग्रमुपक्रमेत ॥ ११ ॥

निरूहकल्पेत्यादिप्रश्नस्योत्तरं आस्थापनार्ह इत्यादि शुक्लपक्षस्य सर्वकर्मारंभेषु प्रशस्तत्वात् । हारितेन तु कृष्णपक्षोत्र विहितः । उक्तं हि "कृष्णपक्षे सर्वरोगाणां जन्म अभिहितं शुक्ले देवा जाताः कृष्णे उदुंबराश्च सर्वरोगाश्च इति वदंति शास्त्रज्ञाः"। तस्मात् रोगचिकित्सा कृष्णे सदैव कर्तव्या इति । एकाग्रमिति वस्तिप्रयोगः ॥ ११ ॥

बलां गुडूचीं त्रिफलां सरास्नां
द्वे पञ्चमूले च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात्पचेदप्सु चतुर्थशेषम् ॥ १२ ॥
पूतं यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतैः सतैलै-
र्युतं सुखोष्णैस्तु पिचुप्रमाणैः ॥ १३ ॥
गुडात्पलं द्विप्रसृतां तु मात्रां
स्नेहस्य युक्त्या मधुसैन्धवादि ।
स्नेहं सुनिर्मथ्य ततोऽनुकल्पं
प्रक्षिप्य वस्तौ मथितं खजेन ॥ १४ ॥
वस्तिं ततः सव्यकरे निधाय
सुबद्धमुच्छ्वास्य च निर्वलीकम् ।
अङ्गुष्ठमध्येन मुखं पिधाय
नेत्राग्रसंस्थामपनीय वर्तिम् ॥ १५ ॥
तैलाक्तगात्रं कृतमूत्रविट्कं
नातिक्षुधार्तं शयने मनुष्यम्
समेऽथवेषन्नतशीरसे वा
नात्युच्छ्रिते स्वास्तरणोपपन्ने ॥ १६ ॥
सव्येन पार्श्वेन सुखं शयानं
कृत्वर्जुदेहं स्वभुजोपधानम् ।
निकुञ्च्य सव्येतरदस्य सक्थि
वामं प्रसार्य प्रणयेत्ततस्तम् ॥ १७ ॥
स्निग्धे गुदे नेत्रचतुर्थभागं
स्निग्धं शनैर्ऋज्वनुपृष्ठवंशम् ।
अकम्पनावेपनलाघवादी-
न्पाण्योर्गुणांश्चापि हि दर्शयंस्तम् ॥ १८ ॥
प्रपीड्य चैकग्रहणेन दत्तं
नेत्रं शनैरेव ततोपकर्षयेत् ।
तिर्यक्प्रणीते तु न याति धारा
गुदे व्रणः स्याच्चलिते च नेत्रे ॥ १९ ॥
दत्तः शनैर्नाशयमेति वस्तिः
कण्ठं प्रधावत्यतिपीडितश्च ।
शीतस्त्वतिस्तम्भकरो विदाहं
मूर्च्छां च कुर्यादतिमात्रमुष्णः ॥ २० ॥
स्निग्धोऽतिजाड्यं पवनं च रूक्ष-
स्तन्वल्पमात्रा लवणस्त्वयोगम् ।
करोति मात्राभ्यधिकोऽतियोगं
क्षामं तु सान्द्रः सुचिरेण चैति ॥ २१ ॥

वस्तिविधानमाह भागोदाहरणार्थं बलादिकं वस्तिमाह— बलामित्यादि पलोन्मितत्वमिह त्रिफलापंचमूल्यादीनां प्रतिद्रव्यम् । फलानि इति मदनफलानि । अत्र बलादीनां औषधानां संसर्गक्काथविधिना मदनफलाधिकपदषष्टिपलत्वम् । "क्काथ्यात् क्काथः समो मत" इति वचनात् बहुक्काथो भवति वस्तौ च पुटकत्रयदाने प्रतिपुटके दशपलक्काथदाननियमात् त्रिंशत्पलानि परमुपयुज्यते शेषं तु यद्यपि निष्प्रयोजनं तथापि महर्षिवचनात् यावत् प्रमाणमुक्तम् । तथैव क्रियमाणे गुणाधिक्यं भवतीति तेन न मीमांस्यमेतत् उक्तं हि— "यथा कुर्वंति सोपायः" । किंवा उपयुक्तस्य क्काथस्य द्रव्यमानविभागोदाहरणार्थं एतत् उक्तं तेन तदनुसारेण उपयुक्तक्काथसाधनयोग्यमानमेव क्काथं कुर्यात् । यवान्यादीनां प्रत्येकं प्रतिनिरूहं पिचुमानं मंतव्यम् । पिचुः कर्षः स्नेहस्येति घृततैलस्य पूर्वमुक्तत्वात् । एतच्च स्नेहमानं प्रकृतिस्थे पुरुषे वक्ष्यमाणस्नेहव्यवस्थया ज्ञेयम् । युक्त्या मधुसैंधवादीनित्यनेन मधुसैंधवयोः प्रकृत्याद्यपेक्षया अन्यतमं मानं दर्शयति । मांसरसक्षीरादीनां नियतं मानं दर्शयति । एषां च मानं च व्यवस्थां अग्रे कषायमानप्रस्तावे दर्शयामः । उच्छ्वास्येति उच्छ्वासनेन द्रवाभिघातजनितवातनिर्गममिच्छति । निर्व्यलीकमिति क्रियाविशेषणम् । नेत्रसंग्रहस्थानमिति प्रथमं द्रवनिर्गमादिप्रतिषेधार्थं नलिकाग्रमुखदत्तां वर्तिम् । तैलाक्तगात्रमिति अभ्यंगेन साहचर्यात् स्वेदोपि दीयते तेन अभ्यक्तस्विन्नमित्यर्थः । उक्तं ह्यन्यत्र "अनुवासितं आस्थापयता अभ्यक्तस्विन्नशरीरमिति" । प्रस्तावागतं शयनविधिमाह–समेथवेत्यादि समशीर्षकादि विकल्पद्वयं आतुरेच्छया कर्तव्यं किंवा उन्नतकटिप्रदेशस्य पुरुषस्य समं तुच्छकटीकस्य उच्छीर्षं शयनं कर्तव्यम् । एवं हि तयोः सम्यग्वस्तिर्देहानुसारी भवति । सव्येनेति वामेन वामपार्श्वशयनप्रयोजनं वामाश्रयोऽग्निरित्यादिना वक्ष्यमाणम् ।

यथोक्तं सर्वगुणं मनुष्यं कृत्वा तं प्रणयेदिति संबंधः । स्वभुजोपधानं यथा भवति तथा शयनम् । उपधानं कंदुकः । सव्येतरदिति दक्षिणसक्थी नेत्रचतुर्थभागमिति अग्रकर्णिकावस्थं सर्वं चतुर्थभागम् । अनुवंशगृष्ठमिति पृष्ठवंशं अनुगतं कृत्वा । अकंपनेत्यादौ कंपनं चलनं वेपनं वेपथुः लाघवं शीघ्रक्रियता आदिशब्देन पीडनादि गृह्यते । दर्शयन्निति संपादयन् । प्रपीड्य चैकग्रहणेन दत्तमित्यनेन विश्रम्य पुनःपीडनं वायुजनकं निषेधयति । तिर्यक् प्रणिधानादिदोषमाह—तिर्यगित्यादि तिर्यक् प्रणिधाने सति गुदवलीरोधो भवति । शीतस्त्वतिस्तंभकर इति वस्तिर्देहस्य स्तंभकरः । तन्वल्पमात्रालवण इति तनुर्वा अल्पमात्रो वा अलवणो वा सांद्रः तनुविपरीतः क्षामं पुरुषं कुर्यात् लवणेति अतिमात्रलवणः । तस्मादिति अयथोक्तविधानेषु दोषनिदर्शना । प्रयुक्त इति तिर्यक्प्रणिधानादिरहितं शीतत्वादिरहितं च ॥ १२–२१ ॥

दाहातिसारौ लवणोऽतिकुर्या-
त्तस्मात्प्रयुक्तं सममेव दद्यात् ।
पूर्वं हि योज्यं मधुसैन्धवाभ्यां
स्नेहं विनिर्मथ्य ततोऽनुकल्कम् ॥ २२ ॥

पूर्वं हीत्यादिग्रंथं केचित् अनार्षमाहुः । तत्रांतरेषु तु अस्यार्थस्य स्पष्टत्वात् युक्तैवायं पाठः । उच्यते हि सुश्रुते "दत्वादौ सैंधवस्याक्षं मधुनस्पलद्वय"मित्यादि । "पुनर्द्रवैस्तदित्यत्र क्वाथस्य ग्रहणम्" ॥ २२ ॥

विमथ्य संयोज्य पुनर्द्रवैस्त-
द्वस्तौ निदध्यान्मथितं खजेन ।
वामाश्रयोऽग्निर्ग्रहणीगुदं च
तत्पार्श्वसंस्थस्य सुखोपलब्धिः ॥ २३ ॥

वामपार्श्वशयनं यदुक्तं तस्य प्रयोजनमाह वामाश्रयेत्यादि—वामाश्रय इत्यादि वामाश्रयो यस्मात् अग्निः ग्रहणीगुदं च तेन वामपार्श्वे सुप्तस्य ग्रहणीगुदे सुव्यवस्थिते भवतः गुदास्ये वस्तिः सम्यक् प्रविष्टो भवति तथा द्रवमपि सुप्रसृतं भवति तेन सुखो वस्तिर्याति ॥ २३ ॥

लीयन्त एवं वलयश्च तस्मा-
त्सव्यं शयानोऽर्हति वस्तिदानम् ।
विड्वातवेगो यदि चार्धदत्ते
निष्कृष्य मुक्ते प्रणयेदशेषम् ॥ २४ ॥
उत्तानदेहश्च कृतोपधानः
स्याद्वीर्यमाप्नोति तथास्य देहम् ।
एकोऽपकर्षत्यनिलं स्वमार्गा-
त्पित्तं द्वितीयस्तु कफं तृतीयः ॥ २५ ॥
प्रत्यागते कोष्णजलावसिक्तः
शाल्यन्नमद्यात्तनुना रसेन ।
जीर्णे तु सायं लघु चाल्पमात्रं
भुक्तेऽनुवास्यः परिबृंहणार्थम् ॥ २६ ॥

विड्वातेत्यादौ निष्कृष्य मुक्ते इति नलिकामाकृष्य विड्वातमुक्ते । उत्तानदेहश्च कृतोपधानश्च दत्ते तु वस्तौ स्यात् एतत् करणप्रयोजनमाह वीर्यमाप्नोतीत्यादि । एकोपकर्षतीत्यादि एतत् भेदेन एकादिवस्तिदानविधानं न तु त्रिदोषे प्रथमो वातं जयति द्वितीयः पित्तं जयति तृतीयः कफमिति व्याख्येयम् । यतः स्निग्धोष्ण एकः पवने इत्यादिना पवनादिभेदेनैव संख्यानियमं करिष्यति एवं च एको वस्तिश्चलमपकर्षति द्वितीयस्तु स्वमार्गात् पित्तं इत्यादि ज्ञेयम् । स्वमार्गादिति स्वस्थानात् यद्यपि वस्तिना पक्वाशयगत एव दोषो ह्रियते तथापि पित्तादिस्थाने विशेषवस्तिविधिसामर्थ्यात् दोषहरणमुच्यते तेन उत्सर्गतस्तस्मिन् दोषहरणविधानेन अवस्थांतर्गतदोषहरणं विशिष्टं भवति । अयमर्थो जतूकर्णेप्युच्यते—वस्तिः कार्यः सकृत् वस्तिस्थानशक्त्यानिलादिष्विति" । अत्र द्वितीयः पित्तमपकर्षति तृतीयः कफमपकर्षति इत्युच्यते तथापि प्रथमद्वितीययोः क्रमात् पित्तकफापहत्वमस्त्येव परं पित्तहरणं सामस्त्यान्न जायत इति कृत्वा द्वितीयः पित्तं हरति तृतीयः कफमिति चोक्तं । पित्तकफयोश्च यद्यपि सुखं चिकित्सितं वस्तिर्न भवति तथापि वातानुबंधे पित्तकफे चैतद्वस्तिदानं ज्ञेयम् । उक्तं च सुश्रुते "वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते । संसर्गे सन्निपाते च वस्तिरेव हितः सदेति" । शाल्यन्नमित्यादौ जीर्णे कोष्ठस्थे जीर्णे सति तनुमांसरसादिभोजनं चेह निरूहेण मनागुपहतस्य वह्नेरुत्पादनार्थम् । पेयादिक्रमस्त्वत्र न क्रियते अतएव सुश्रुते अन्नपेयादिक्रमं त्यक्त्वा रसादिकः क्रम उक्तः । परिबृंहणार्थमित्यनेन क्रियमाणे निरूहे तदहरत एव उपकल्पनीयेपि तदहरनुवासनस्य सार्वत्रिकत्वं उक्तम् । जतूकर्णे सायं कृतान्नं च पुष्ट्यर्थमनुवासयेत् ॥ २४–२६ ॥

निरूहपादांशसमेन तैले-
नाम्लानि लघ्वौषधसाधितेन ।
दत्त्वा स्फिचौ पाणितलेन हन्या-
त्स्नेहस्य शीघ्रागमरक्षणार्थम् ॥ २७ ॥

निरूहपादांशसमेन तैलेनेति निरूहप्रमाणेन चतुर्विंशतिपले निरूहे षट्पलेन स्नेहेनेत्यर्थः । इयं च उत्तमा मात्रा अनुवासनस्य उक्तं ह्यन्यत्र "उत्तमा षट्पली प्रोक्ता मध्यमा त्रिपली भवेत् । कनीयस्यध्यर्धपला त्रिधा मात्रानुवासने" इति । सुश्रुते एतावन्मानमेव स्नेहवस्त्यनुवासनवस्तिविभागेन उक्तं "यथावयो निरूहाणां या मात्राः परिकीर्तिताः । पादावकृष्टास्ताः कार्याः स्नेहवस्तिषु देहिनाम्" ॥ २७ ॥

ईषत्पदाङ्गुष्ठयुगं च कर्षे-
दुत्तानदेहस्य तनौ प्रमृज्यात् ।
स्नेहेन पार्ष्ण्यङ्गुलिपिण्डिकाश्च
ये चास्य गात्रावयवा रुगार्ताः ॥ २८ ॥

तांश्चावमृज्यात्सुखं ततश्च
निद्रामुपासीत कृतोपधानः ।
भागाः कषायस्य तु पञ्च पित्ते
स्नेहस्य षष्ठः प्रकृतौ स्थिते च ॥ २९ ॥
वाते विवृद्धे तु चतुर्थभागो
मात्रा निरूहेषु कफेऽष्टभागः ।
निरूहमात्रा प्रसृतार्धमाद्ये
वर्षे ततोऽर्धप्रसृताभिवृद्धिः ॥ ३० ॥
आ द्वादशात्स्यात्प्रसृताभिवृद्धि-
रष्टादशाद्द्वादशतः परं स्युः ।
आ सप्ततेरुक्तमिदं प्रमाण-
मतःपरं षोडशवद्विधेयम् ॥ ३१ ॥

स्नेहशीघ्रागमनारक्षणार्थं विधानमाह—ईषदित्यादि एतच्च पादांगुल्या उत्तानदेहस्य मात्राशतं स्थापयित्वा कर्तव्यम् । निरूहे तु त्रिंशन्मात्राकालं उत्तानस्य स्थापनं मन्यंते । संप्रति द्वादशप्रसृतो निरूहः तस्य कषायस्नेहमात्रां नियमयति भागा इत्यादि भागाः कषायस्य तु पंचेत्यनेन सर्वत्र दोषप्रसृते च पुरुषे द्वादशप्रसृतभागरूपे निरूहे पंचभागाः कषायस्य भवंति । तेन पंचप्रसृताः कषायस्य स्नेहस्य च दोषभेदेन मानभेदमाह–पित्त इत्यादि पित्ते स्नेहस्य षष्ठस्तथा प्रकृतौ स्थिते पुरुषे षष्ठ इत्यर्थः । तथा षण्णां पूरणः षष्ठः तेन द्वादशप्रसृतस्य वस्तेः षष्ठो भागो द्विप्रसृतं भवति । स्नेहशब्देन तैलग्रहणम् । वाते तु वृद्धे चतुर्थो भागः स्नेहस्य चतुर्थो भागः प्रसृतद्वयम् । अष्टभाग इति सार्धप्रसृतः । अस्मिन् अर्थे हारीतः "क्वाथस्य पंचप्रसृता विभागाः स्नेहस्य षष्ठः अधिके पित्ते स्वस्थे च तत्पवने चतुर्थः कफेष्टम" इति । एषा स्नेहमात्रा हीनमात्रेपि निरूहे क्वाथः स्नेहयोरुक्तमात्रानुसारेण योजनीया । शेषाणां तु मधुकल्कसैंधवानां इह मात्रानियमो नोक्तः तेन मध्वादीनां प्रकृत्याद्यनुसारेण प्रकृतमानेन द्वादशप्रसृतत्वं पूरणीयम् । तत्र जतूकर्णप्रत्ययात् सर्वत्र कल्कस्य पलद्वयं भवति उक्तं हि "तत्र चतुर्विंशतिके पुटके पेष्याणां द्विपलं किंचिच्च मधुसैंधवात् स्नेहाः वक्ष्यमाणाः शेषं कषायस्य वाते तैलं षट्पलं चत्वारि पलानि स्वस्थे पित्ते च घृतस्य कफे त्रीणि तैलस्येति" । सैंधवं तु कर्षप्रमाणं यथा सुश्रुतः 'दत्वा द्वौ सैंधवस्याक्षं मधुनः प्रसृतद्वयम्' इत्याद्युक्तं हारीते–"क्षौद्रं तु देयं प्रसृतप्रमाणं द्वितीयमाहुर्लवणस्य चाक्षं" । तेन अनया दिशा सैंधवमधुनोः कल्पनोक्ता भवति । यथोक्तकषायस्नेहकल्कमधुसैंधवापूरितांशपूरणं आवापेनैव कर्तव्यं आवापश्चात्र उत्तरत्र वक्ष्यमाणो वातादिभेदेन मांसरसक्षीरगोमूत्रादीनां ज्ञेयः । वक्ष्यति हि– "स्निग्धोष्ण एकः पवने निरूहो द्वौ स्वादुशीतौ पयसा च पित्ते । त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः" इति । हारीतेप्युक्तं–"स्नेहं गुडं मांसरसं पयश्च अम्लानि मूत्राणि च सैंधवं च । एतानि सर्वाण्यपि योजयीत निरूहयोगे मदनात्फलं च" । यत्तु तंत्रांतरे द्वादशप्रसृतपूरणं प्रतिद्रव्यविभागेनोक्तं यथा "दत्वादौ सैंधवस्याक्षं मधुनः प्रसृतं तथा । संमूर्छितकषायं चेत्यादि" तत्तु तंत्रांतरमेव यत्तु अन्ये पठंति "मधुस्नेहनकल्काक्षकषाया वाततः क्रमात् । त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिणे । पित्ते चत्वारि द्वे च चतुष्टयपलानि हि । षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्" इति । तदसत्तंत्रानुगतत्वादनुमतमेव । इदानीं वयोभेदेन निरूहप्रमाणं दर्शयति—"बालस्यार्धप्रसृतो निरूहः अर्धप्रसृताभिवृद्धिः ततः प्रतिवर्षं भवति तेन द्वादशे वर्षे षट्प्रसृतो वस्तिर्भवति द्वादशादूर्ध्वं अष्टादशवर्षपर्यंतं प्रतिवर्षं प्रसृतवृद्धौ द्वादशप्रसृतो भवति । द्वादशतः परं स्युः इत्यनेन अधिकप्रमाणवस्तिमानं कैश्चिदनुमतं तन्निषेधयति । सुश्रुतेपि "द्वादशप्रसृतं केचित् त्रिंशत् पलमथापरे" इति वस्तिमानमुपदर्शितं द्वादशप्रसृतमानं आसप्तति यावद्भवति । अतःपरं षोडशवदिति दशप्रसृतमानं ज्ञेयम् ॥ २८–३१ ॥

निरूहमात्रा प्रसृतप्रमाणा
बाले च वृद्धे च मृदुर्विशेषः ।
नात्युच्छ्रितं नाप्यतिनीचपादं
सपादपीठं शयनं प्रशस्तम् ॥ ३२ ॥
प्रधानमृद्वास्तरणोपपन्नं
प्राक्शीर्षकं शुक्लपटोत्तरीयम् ।
भोज्यं पुनर्व्याधिमवेक्ष्य सम्यक्
प्रकल्पयेद्यूषपयोरसाद्यैः ॥ ३३ ॥
सर्वेषु विद्याद्विधिमेतदाद्यं
वक्ष्यामि वस्तीनत उत्तरीयान् ।
सम्यक् प्रणीताः खलु वस्तयो ये
वातामयघ्नाश्च बलप्रदाश्च ॥ ३४ ॥

एवमन्यं विशेषमाह—निरूहमात्रेत्यादि बालवृद्धयोर्यथोक्ता निरूहमात्रा प्रसृतप्रमाणा कार्या विशेषेण तयोर्वस्तिर्मृदुः कर्तव्य इति वाक्यार्थः । तीक्ष्णत्वमार्दवकरं च विधानं वक्ष्यति यत् "तीक्ष्णत्वं मूत्रविल्वादिलवणक्षारसर्षपैः । प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथेति" । संप्रति शयनविधिमाह—नात्युच्छ्रितमित्यादि पूर्वं यः शयनविधिरुक्तः स तात्कालिकः अयं तु उत्तरकालिक इति विशेषः । प्रधानं मृदु आस्तरणं मृद्वास्तरणेनोपपन्नम् प्राक्शीर्षकं प्राच्यां दिशि स्थित्वा देवपूजार्थं च प्राक्शिरा इति वचनात् । यूषादीनां विधानं वाते पित्ते कफे यथायोग्यतया व्याख्येयम् । यथोक्तविधानं वक्ष्यमाणविधिषु कर्तव्यतया दर्शयन्नाह–सर्वेष्वित्यादि एतदाद्यमिति प्रधानमिति यावत् ॥ ३२–३४ ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वशेषः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ३५ ॥

द्विपंचमूलेत्यादि अत्र मांसं दशमूलसमं रसः क्वाथः अम्लं कांजिकादि स पूर्वकल्क इति वलाकल्कयुक्तः त्रिःस्नेहयुक्त इति मज्जपरित्यागं सर्वबस्तिषु स्मारयति उक्तं ह्यन्यत्र—"विज्ञेयः त्रिविधः स्नेहो वस्त्यर्थं मज्जवर्जित" इति ॥ ३५ ॥

स्थिरादिवर्गस्य वलापटोल-
त्रायन्तिकैरण्डयवैर्युतस्य।
प्रस्थोरसश्छागरसार्धयुक्तः
साध्यः परः प्रस्थरसश्च यावत् ॥ ३६ ॥
प्रियङ्गुकृष्णो घनकल्कयुक्तः
सतैलसर्पिर्मधुसैन्धवश्च।
स्याद्दीपनो मांसवलप्रदश्च
चक्षुर्वलं चापि ददाति सद्यः ॥ ३७ ॥

स्थिरादिवर्गस्येत्यादौ मधुसैंधवश्चेति यद्यपि सामान्योक्तवस्तिविधानं तथापि प्रकर्षार्थं पुनस्तयोरभिधानं एमन्यत्रापि सामान्यविधिप्राप्तस्य पुनरभिधाने व्याख्येयम् ॥ ३६ ॥ ३७ ॥

एरण्डमूलात्त्रिपलं पलानि
ह्रस्वानि मूलानि च यानि पञ्च।
रास्नाश्वगन्धातिवलागुडूची
पुनर्नवारग्वधदेवदारु ॥ ३८ ॥
भागाः पलांशा मदनाष्टयुक्ता
जलद्विकंसे क्वथितेऽष्टशेषे।
पेष्याः शताह्वाहपुषाप्रियङ्गु
सपिप्पलीकं मधुकं वचा च ॥ ३९ ॥
रसाञ्जनं वत्सकवीजमुस्तं
भागाक्षमात्रं लवणांशयुक्तम्।
समाक्षिकस्तैलयुतः समूत्रो
वस्तिर्नृणां दीपनलेखनीयः ॥ ४० ॥
जङ्घोरुपादत्रिकपृष्ठशूलं
कफावृतं मारुतनिग्रहं च।
विण्मूत्रवातग्रहणं सशूल-
माध्मानतामश्मरिशर्करां च ॥ ४१ ॥
आनाहमर्शोग्रहणीप्रदोषा-
नेरण्डवस्तिः शमयेत्प्रयुक्तः।
वैद्येन सम्यक् कुशलेन चैष
पुनर्वसूक्तः कृपया नराणाम् ॥ ४२ ॥
चतुष्पले तैलघृतस्य भृष्ट-
श्छागाच्छतार्धाद्दधिदाडिमाम्लः।
रसः सपेष्यो वलवर्णमांस-
रेतोऽग्निदश्चान्ध्यशिरोरुजाघ्नः ॥ ४३ ॥
जलद्विकंसेऽष्टपलं पलाशा-
त्पक्त्वा रसोऽर्धाढकमात्रशेषः।
कल्कैर्वलामागधिकापलाभ्यां
युक्तः शताह्वाद्विपलेन चापि ॥ ४४ ॥
ससैन्धवः क्षौद्रयुतः सतैलो
देयो निरूहो वलवर्णकारी।
आनाहपार्श्वामययोनिदोषा-
न्गुल्मानुदावर्तरुजं च हन्यात् ॥ ४५ ॥

एरंडमूल इत्यादौ ह्रस्वानि मूलानि इति स्थिरादिपंचमूलानि एषां पंचपलकं भवति संपेष्य इति वलादिवत्सकल्कयुक्तः ॥ ३८-४५ ॥

यष्ट्याह्वमूलाष्टपलेन सिद्धं
पयः शताह्वाफलपिप्पलीभिः।
युक्तं ससर्पिर्मधु वातरक्त-
वैस्वर्यवीसर्पहितो निरूहः ॥ ४६ ॥

यष्ट्याह्वेत्यादि चत्वारि पित्ते पूर्वोक्ताः पंच वाते अत्र पयःसाधनं क्षीरपरिभाषया कर्तव्यम् ॥ ४६ ॥

यष्ट्याह्वलोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च।
सशर्करं क्षौद्रयुतं सुशीतं
पित्तामयान्हन्ति सजीवनीयान् ॥ ४७ ॥

यष्ट्याह्वलोध्रेत्यादि—जीवनीयमिलितेन योगः जीवनीयान्यत्र कल्कः सुशीतत्वं पित्तहंतृत्वात् अनया च दिशा अपरपित्तवस्तावपि शीतत्वं ज्ञेयम् ॥ ४७ ॥

द्विकार्षिकांश्चन्दनपद्मकर्द्धि-
यष्ट्याह्वरास्नावृषशारिवाश्च।
सलोध्रमञ्जिष्ठमथाप्यनन्ता-
वलास्थिराद्यं तृणपञ्चमूलम् ॥ ४८ ॥
निःक्वाथ्य तोयेन रसेन तेन
शृतं पयोऽर्धाढकमम्बुहीनम्।
जीवन्तिमेदर्द्धिशतावरीभि-
र्वीराद्विकाकोलिकशेरुकाभिः ॥ ४९ ॥
सितोपलाजीवकपद्मरेणु-
प्रपौण्डरीकैः कमलोत्पलैश्च।
लोध्रात्मगुप्तामधुकैर्विदारी-
मुञ्जातकैः केशरचन्दनैश्च ॥ ५० ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं
ससैन्धवं शीतलमेव दद्यात्।
प्रत्यागते धन्वरसेन शाली-
न्क्षीरेण वाद्यात्परिषिक्तगात्रः ॥ ५१ ॥
दाहातिसारौ प्रदरास्रपित्त-
हृत्पाण्डुरोगान्विषमज्वरांश्च।
स गुल्ममूत्रग्रहकामलादी-
न्सर्वामयान्पित्तकृतान्निहन्ति ॥ ५२ ॥
द्राक्षादिकाश्मर्यमधूकसेव्यैः
सशारिवाचन्दनशीतपाक्यैः।

पयः शृतं श्रावणिमुद्गपर्णी-
तुगात्मगुप्तामधुयष्टिकल्कैः ॥ ५३ ॥
गोधूमचूर्णैश्च तथाक्षमात्रैः
सक्षौद्रसर्पिर्मधुयष्टितैलैः ।
पथ्याविदारीक्षुरसैर्गुडेन
वस्तिं युतं पित्तहरं विदध्यात् ॥ ५४ ॥
हृन्नाभिपार्श्वोदरदेहदाहे
दाहेऽन्तरस्थे च सकृच्छ्रमूत्रे ।
क्षीणे क्षते रेतसि चापि नष्टे
पैत्तेऽतिसारे च नृणां प्रशस्तः ॥ ५५ ॥

द्विकार्षिकानित्यादौ अनंता उत्पलशारिवा तृणपंचमूलं शरेक्षुदर्भकाशानां शालीनां मूलमेव च इत्यादिनोक्तम् । अंबुहीनमिति क्षीरावशेषपर्यंतं कशेरु राजकशेरु ससैंधवमिति ईषत्सैंधवं सशारिवेत्यादौ शीतपाकी शीतली मधुयष्टिसाधितं तैलं देहोपकारकम् ॥ ४८–५५ ॥

कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान्बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ ५६ ॥
तां सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
फलाह्वतैलस्य समाक्षिकस्य
क्षारस्य तैलस्य च सार्षपस्य ॥ ५७ ॥
दद्यान्निरूहं कफरोगिणे ज्ञो
मन्दाग्नये चाप्यशनद्विषे च ।
पटोलपथ्यामरदारुभिर्वा
सपिप्पलीकैः क्वथितैर्जलाख्यैः ॥ ५८ ॥
द्विपञ्चमूले त्रिफलां सबिल्वां
फलानि गोमूत्रयुतः कषायः ।
कलिङ्गपाठाफलमुस्तकल्कः
ससैन्धवः क्षारयुतः सतैलः ॥ ५९ ॥
निरूहमुख्यः कफजान्विकारा-
न्सपाण्डुरोगालसकामदोषान् ।
हन्यात्तथा मारुतमूत्रसङ्गं
वस्तेस्तथाटोपमथापि घोरम् ॥ ६० ॥
रास्नामृतैरण्डविडङ्गदारु-
सप्तच्छदोशीरखुराह्वनिम्बैः ।
श्यामाकभूनिम्बपटोलपाठा-
तिक्ताखुपर्णीदशमूलमुस्तैः ॥ ६१ ॥
त्रायन्तिकाशिग्रुफलत्रिकैश्च
क्वाथः सपिण्डीतकतोयमूत्रः ।
यष्ट्याह्वकृष्णाफलिनीशताह्वा-
रसाञ्जनश्वेतवचाविडङ्गैः ॥ ६२ ॥
कलिङ्गपाठाम्बुदसैन्धवैश्च
कल्कैः ससर्पिर्मधुतैलमिश्रः ।
अयं निरूहः क्रिमिकुष्ठमेह-
ब्रध्नोदराजीर्णकफातुरेभ्यः ॥ ६३ ॥
रूक्षौषधैरत्यपतर्पितेभ्य
एतेषु रोगेष्वपि सत्सु दत्तः ।
निहत्य वातं ज्वलनं प्रदीप्य
विजित्य रोगांश्च बलं करोति ॥ ६४ ॥

कोशातकीत्यादिकाः चत्वारः कफे वस्तयः अत्र क्वाथमदनप्रसृतेन तथा कल्केन क्षौद्रादिना च यद्यपि मानं अधिकं भवति तथापि एवमेव द्रव्यसंयोगं कृत्वा द्वादशप्रसृत एव वस्तिर्देयः । तदधिकमानस्य निषिद्धत्वात् । पटोलेत्यादौ– पिप्पल्यंतात्तोयं साधयित्वा द्वितीयः पंचमूल्यादिस्तृतीयः कर्तव्यः क्षारो यवक्षारः । रास्नेत्यादौ शम्याकश्चतुरंगुलः । तिक्ता कटुरोहिणी ॥ ५६–६४ ॥

पुनर्नवैरण्डवृषाश्मभेद-
वृश्चीरभूतीकबलापलाशाः ।
द्विपञ्चमूलानि पलांशिकानि
क्षुण्णानि धौतानि पलानि चाष्टौ ॥ ६५ ॥
बिल्वं यवान्कोलकुलत्थधान्य-
फलानि चैकप्रसृतोन्मितानि ।
पयोजलार्धाढकयोः शृतं त-
त्क्षीरावशेषं सितवस्त्रपूतम् ॥ ६६ ॥
वचाशताह्वामरदारुकुष्ठ-
यष्ट्याह्वसिद्धार्थकपिप्पलीनाम् ।
कल्कैर्यवान्या मदनैश्च युक्तं
नात्युष्णशीतं गुडसैन्धवाक्तम् ॥ ६७ ॥
क्षौद्रस्य तैलस्य च सर्पिषश्च
तथैव युक्तं प्रसृतत्रयेण ।
दद्यान्निरूहं विधिना विधिज्ञ-
स्तं सर्वसंसर्गकृतामयघ्नम् ॥ ६८ ॥
स्निग्धोष्ण एकः पवने निरूहो
द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः
कफे निरूहा न परं विधेयाः ॥ ६९ ॥

पुनर्नवेत्यादिकः सर्ववातादिसंसर्गविषयः वृश्चीरः श्वेतपुनर्नवा धान्यानि फलानि चेति धान्यफलानि पयोजलार्धाढकवदिति समजलक्षीरद्विप्रस्थप्रयुक्तयुक्तानां वातादिहरवस्तीनां कल्पनां दर्शयन्नाह–स्निग्धोष्णेत्यादि–एक इति एक एव पयसेति पयोयुक्तः कटुकोष्णत्तीक्ष्णत्वं कफहरद्रव्ययोगादेव ज्ञेयम् । न परंविधेय इत्यनेन तंत्रांतरविहितं चतुर्थवस्तिदानमत्यर्थं शरीरहिंसकं निषेधयति । तेन सुश्रुते "अनेन विधिना वास्तिं दद्याद्वस्तिविशारदः । द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः । सम्यद्-

निरूढलिंगे तु प्राप्ते वस्तिं निवारयेत्" इति, चतुर्थवस्तिदानविकल्प एव ध्वनितः ॥ ६४-६९ ॥

**रसेन वाते प्रतिभोजनं स्या-**
**त्क्षीरेण पित्ते तु कफे च यूषैः।**
**तथानुवास्येषु च विल्वतैलं**
**स्याज्जीवनीयं फलसाधितं च ॥ ७० ॥"**

संप्रति वातादिभेदेन तथा अनुवासनविशिष्टं भोजनमाह—रसेन इत्यादिना प्रतिभोजनं निरूहानंतरं भोजनं वाते विल्वतैलं अनुवासनं पित्ते जीवनीयसाधितं कफे मदनसाधितं। अत्र विल्वतैलादीनि वक्ष्यमाणानि तेन स्नेहव्यापत्सिद्धौ दशमूलीत्यादिना विल्वतैलं वक्ष्यति। जीवनीयं च जीवंतीमदनमित्यादिना वक्ष्यमाणम्। तथा मदनैर्वाम्लसंयुक्तैरित्यादिना वक्ष्यमाणं मदनतैलं ज्ञेयम् ॥ ७० ॥

**इतीदमुक्तं निखिलं यथाव-**
**द्वस्तिप्रदानस्य विधानमग्र्यम्।**
**योऽधीत्य विद्वानिह वस्तिकर्म**
**करोति लोके लभते स सिद्धिम् ॥ ७१ ॥**

इति चरकसंहितायां सिद्धिस्थाने तृतीयोध्यायः ॥ ३ ॥

इतीदमित्यादिना संग्रहः ॥ ७१ ॥

इति चरकसंहितायां सिद्धिस्थाने वस्तिसूत्रीया सिद्धिर्नाम तृतीयोध्यायः समाप्तः ॥

## चतुर्थोऽध्यायः।

### स्नेहव्यापादिका सिद्धिः।

**"स्नेहवस्तीन्निबोधेमान्वातपित्तकफापहान्।**
**मिथ्याप्रणिहितानां च व्यापदः सचिकित्सिताः॥१॥**

पूर्वसिद्धौ विल्वादितैलान्येव अनुवासनार्थं निर्दिष्टानि तदभिधायिका चेयं सिद्धिरिति तदनंतरं स्नेहव्यापत्सिद्धिरुच्यते। स्नेहानामिति अनुवासनिकानां तथा तद्यापदां च भेषजानां अभिधायका सिद्धिरस्मिन्नध्याये वक्तव्या। स्नेहवस्तीन् इति स्नेहवस्तिप्रयोज्यान् स्नेहान् एतच्छ्लोकाभिहितार्थः प्रपंचेन अभिधेयः स्नेहवस्तिं निरूहं चेत्यादिना वक्तव्यः तेन इह न प्रपंचितः ॥ १ ॥

**दशमूलं वलां रास्नामश्वगन्धां पुनर्नवाम्।**
**गुडूच्येरण्डभूतीकभार्गीवृषकरोहिषाम् ॥ २**
**शतावरीं सहचरं काकनासां पलांशिकाम्।**
**यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ॥ ३ ॥**
**चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च।**
**तैलाढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥ ४**
**अनुवासनमेतद्धि सर्ववातविकारनुत्।**
**आनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ५ ॥**
**शताह्वा यवविल्वाम्लैः सिद्धं तैलं समीरणे।**
**सैन्धवेनाग्निवर्णेन तप्तं चानिलनुद्धृतम् ॥ ६ ॥**

दशमूलीत्यादौ भूतीकं कतृणं काकनासा नासाफलं एतत् दशमूलादिस्थितं विल्वतैलमिति वदंति। आनूपानामित्यादौ तद्वदिति योगांतरम्। शताह्वेत्यादिना योगांतरं सैंधवेत्यादिना योगांतरम् ॥ २—६ ॥

**जीवन्तीं मदनं मेदां श्रावणीं मधुकं वलाम्।**
**शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ७ ॥**
**स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम्।**
**पिष्ट्वा तैलं घृतं क्षीरे साधयेत्तच्चतुर्गुणे ॥ ८ ॥**
**बृंहणं वातपित्तघ्नं वलशुक्राग्निवर्धनम्।**
**मूत्ररेतोरजोदोषान्हरेत्तदनुवासनात् ॥ ९ ॥**

जीवंतीत्यादि यमकमनुवासनं एतत् यमकं पूर्वाध्याये जीवनीयसंज्ञया व्यपदिष्टम् ॥ ७-९ ॥

**लाभतश्चन्दनाद्यैश्च पिष्टैः क्षीरचतुर्गुणम्।**
**तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ १० ॥**
**सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वलाम्।**
**ह्रीवेरं मधुकं भार्गीं देवदारु सकट्फलम् ॥ ११ ॥**
**नागरं पुष्करं मेदां चविकां चित्रकं शटीम्।**
**विडङ्गातिविषे श्यामां हरेणुं नीलिनीं स्थिराम्॥१२॥**
**विल्वाजमोदे कृष्णां च दन्तीं रास्नां च पेषयेत्।**
**साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ १३ ॥**
**व्रध्नोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान्।**
**आनाहमश्मरीं चैव हन्यात्तदनुवासनात् ॥ १४ ॥**

लाभत इति यथालाभम्। चंदनाद्यैरिति ज्वरचिकित्सितोक्तैः तैलं पादं यस्मिन्निति तैलपादम् ॥ १०—१४ ॥

**मदनैर्वाम्लसंयुक्तैर्विल्वाद्येन गणेन वा।**
**तैलं कफहरैर्वापि कफघ्नं कल्पयेद्भिषक् ॥ १५ ॥**
**विडङ्गैरण्डरजनीपटोलत्रिफलामृताः।**
**जातिप्रवालनिर्गुण्डीदशमूलाखुपर्णिकाः ॥ १६ ॥**
**निम्बपाठासहचरशम्पाककरवीरकम्।**
**एषां क्वाथेन विपचेत्तैलमेभिश्च कल्कितैः ॥ १७ ॥**
**फलविल्वत्रिवृत्कृष्णारास्नाभूनिम्बदारुभिः।**
**सप्तपर्णवचोशीरदार्वीकुष्ठकलिङ्गकैः ॥ १८ ॥**
**लतायष्टिशताह्वाग्निशटीचोरकपौष्करैः।**
**तत्कुष्ठानि क्रिमीन्मेहानर्शांसि ग्रहणीगदम् ॥ १९॥**
**क्लीवत्वं विषमाग्नित्वं मलं दोषत्रयं तथा।**
**प्रयुक्तं प्रणुदत्याशु पानाभ्यङ्गानुवासनैः ॥ २० ॥**
**व्याधिव्यायामकर्माध्वक्षीणावलनिरोजसाम्।**
**क्षीणशुक्रस्य चातीव स्नेहवस्तिर्वलप्रदः ॥ २१ ॥**
**पादजङ्घोरुपृष्ठस्य कट्याश्च स्थिरतां पराम्।**
**जनयेदप्रजानां च प्रजां स्त्रीणां तथा नृणाम् ॥ २२॥**

मदनैर्वाम्लसंयुक्तैरित्यत्र मदनस्य कल्कत्वं कांजिकादीनां द्रवत्वं एतच्च मदनतैलमिति ख्यातम् । बिल्वाद्यो गणः दशमूलं । अत्र क्वाथकल्कानां अनुक्तानामपि प्रयोगः कर्तव्यः । उक्तं हि—"क्वाथकल्कानिर्देशे गणात्तस्मात्समाददे"दिति । कफहरैरिति पूर्वाध्यायोक्तकफहरभेपजैः किंवा कटुकपंचकोलादिभिः । विडंगैरित्यादौ एभिश्च कल्कितैरिति वक्ष्यमाणैः लता मंजिष्ठा गौरहरिद्रा स्नेहवस्तिर्बलप्रद इति एतैस्तैलैः कृतः स्नेहवस्तिरित्यर्थः ॥ १५—२२ ॥

**वातपित्तकफात्यन्नपुरीषैरावृतस्य च ।**
**अभुक्ते च प्रणीतस्य स्नेहवस्तेः षडापदः ॥ २३ ॥**
**शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।**
**अतिभुक्ते गुरुर्वर्चः संचयेऽल्पबलस्तथा ॥ २४ ॥**
**दत्तस्तैरावृतः स्नेहो न यात्यभिभवादधः ।**
**अभुक्तेनावृतत्वाच्च यात्यूर्ध्वं तस्य लक्षणम् ॥ २५ ॥**
**अङ्गमर्दज्वराध्मानशीतस्तम्भोरुपीडनैः ।**
**पार्श्वरुग्वेष्टनैर्विद्यात्स्नेहं वातावृतं भिषक् ॥ २६ ॥**
**स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलकैः ।**
**सौवीरकसुराकोलकुलत्थरससाधितैः ॥ २७ ॥**
**निरूहैर्निर्हरेत्सम्यक् समूत्रैः पञ्चमूलिकैः ।**
**ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥२८॥**
**दाहरागतृषामोहतमकज्वरदूषणैः ।**
**विद्यात्पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ॥ २९ ॥**
**तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ।**
**संमूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ॥३०**
**कषायकटुतीक्ष्णोष्णैः सुरामूत्रोपसाधितैः ।**
**फलतैलयुतैः साम्लैर्वस्तिभिस्तं विनिर्हरेत् ॥ ३१ ॥**

वातपित्तेत्यादिना स्नेहवस्तेर्व्यापदः प्राह—एताश्च व्यापदो मिथ्यायोगेन स्नेहस्य भवंति । प्रतिज्ञातं हि—"मिथ्याप्रणिहितानां व्यापद" इति । तेन स्नेहायोगातियोगजन्यव्यापदां इह अनवसर एव । अनुवासनयोगातियोगाच्च व्यापदः कल्पनासिद्धावेवोक्ताः तद्भेषजं च अतिस्नेहिते स्नेहवस्तिदानं ज्ञेयं एतच्च "तस्मान्निरूढः संस्नेह्यो निरूढश्चानुवासित" इत्यादिनोक्तत्वात् प्रपंचेन नेहोक्तम् । यथाक्रमं षड्व्यापदां हेतुमाह—शीत इत्यादि । गुरुरिति गौरवयुक्तः । वर्चःसंचये अल्पबल इति संचिते मले सति अल्पबल इत्यर्थः । तैरावृत इत्यादि प्रत्येकं वातादिपंचसु योजनीयम् । अभिभवादिति वातादीनां आवृतमार्गत्वात्र याति तथा तेन वातादिना अभिभूतगुणत्वाच्च न याति । तस्य लक्षणमिति यथाक्रमं वाताद्यावृतस्य लक्षणं वक्ष्यमाणं ऊरुपीडनैः इति । एतेन स्तंभादयो वातावृतस्नेहमहिम्न इव जायंते तेन स्नेहप्रयोगात्पूर्वं न भवंत्येव रास्नातैलं रास्नासहस्रदंत्यादिना विहितं इह अनुसर्तव्यं वातव्याध्युक्तं पीतद्रुतैलं च पीतद्रुसौवीरकादिद्रवेण साधितम् ताभ्यामेव च तैलाभ्यामिति रास्नापीतद्रुतैलाभ्यां फलतैलं पूर्वव्याहृतमेव ज्ञेयम् ॥ २३–३१ ॥

**छर्दिमूर्च्छारुचिग्लानिज्वरशूलाङ्गमर्दनैः ।**
**आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥ ३२ ॥**
**कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ।**
**विरेको मृदुरत्रामविहिता च क्रिया हिता ॥ ३३ ॥**

आमलिंगैरिति आमलक्षणैः आमविहिता क्रिया इति आमं प्रदुष्टमनसां भूतमुल्लिखेदित्यादिना हिता अत्र अनुसर्तव्या ॥ ३२—३३ ॥

**विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ।**
**स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः ॥ ३४ ॥**
**श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ।**
**निर्हरेद्विधिना सम्यगुदावर्तहरेण च ॥ ३५ ॥**

स्नेहं विडावृतमित्यादौ वर्तिभिरिति फलवर्तिभिः केचित्तु वस्तिभिरिति पठंति श्यामा च बिल्वादीनि दशमूलानि च श्यामाबिल्वादीनि किंवा श्यामादीनि अपि अत्र पृथक् क्वचिद् गृह्यंते तैः निरूहस्य तथा अनुवासनस्य च साधनमिह ज्ञेयम् । उदावर्तहरेणेति त्रिमर्मीयोक्तोदावर्तचिकित्सितेन ॥३४–३५॥

**अभुक्ते शून्यपायौ वा वेगात्स्नेहोऽतिपीडितः ।**
**धावत्यूर्ध्वं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥३६॥**

अभुक्त इत्यादौ हेतुत्रयं स्नेहवस्तेरूर्ध्वगमनकारणं ज्ञेयं पूर्वं तु यद्यपि भोजनादानमेव कारणं प्रतिश्रुतं तथापि एककार्यतया चिकित्सितसामान्याच्च शून्यपायित्वस्य च अधोनिरोधकर्तृतया स्नेहोर्ध्वं न याति ऊर्ध्वेभ्यः खेभ्य इति नासादिभ्यः एतीति निर्गच्छति ॥ ३६ ॥

**मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।**
**तत्सिद्धतैल इष्टोऽत्र निरूहः सानुवासनः ॥ ३७ ॥**

तत्सिद्धतैल इति श्यामादिसाधिततैलेन युक्तः सानुवासन इति सिद्धेन तैलेनैव अनुवासनं ज्ञेयम् ॥ ३७ ॥

**कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः ।**
**छर्दिघ्नीभिः क्रियाभिश्च तस्य कार्यं निवर्तनम् ॥ ३८ ॥**

आगच्छत इति आगमनसमय एव स्तंभादिकं कर्तव्यम् । स्तंभोऽत्र शीतजलसेकादिना कंठग्रहणं ऊर्ध्वगमनप्रतिषेधार्थम् छर्दिघ्ना क्रिया सुगंधिमालाधारणादिका इहाप्युक्ता ज्ञेया ॥३८

**यस्य नोपद्रवं कुर्यात्स्नेहवस्तिरनिःसृतः ।**
**सर्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानता ३९**
**मुक्तस्नेहं द्रवोष्णं च लघुपथ्योपसेवनम् ।**
**भुक्तवान्मात्रया योज्यमनुवास्य त्र्यहात्त्र्यहात् ॥४०॥**

वाताद्यावृतस्नेहाप्रवर्तनमभिधाय अप्रवर्तनीयं स्नेहमाह—यस्य नोपद्रवं कुर्यादिति अनिःसृतोपि स्तंभरुगादीन् न कुर्यात् अल्पो वावृत इति स्तोको निःसृतस्तोकश्चावृतः आवृतस्य स्तंभाद्यकरणे हेतुमाह—रौक्ष्यादिति । रूक्षतया शरीरस्य

तिष्ठन्नपि स्नेहो न व्यापद आवहतीत्यर्थः । उपेक्ष्य इति न तत्र आवृतस्नेहचिकित्सा कर्तव्या इत्यर्थः । अन्यत्राप्युक्तं "अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति । कुर्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पो भवे"दिति । उत्पन्नव्यापत्प्रतीकारमभिधाय अव्यापन्नं अनुवासनस्य गुणमाह—मुक्तस्नेहमित्यादि मुक्तस्नेहमिति आगतस्नेहम् । उपस्नेनन व्यजनम् । त्र्यहाद्विधानं प्राविकम् ॥ ३९–४० ॥

**धान्यनागरसिद्धं हि तोयं दद्याद्विचक्षणः ।**
**व्युषिताय निशां कल्यमुष्णं वा केवलं जलम् ॥ ४१ ॥**
**स्नेहाजीर्णं जरयति श्लेष्माणं तद्भिनत्ति च ।**
**मारुतस्यानुलोम्यं च कुर्यादुष्णोदकं नृणाम् ॥४२॥**
**वमने वा विरेके च निरूहे सानुवासने ।**
**तस्मादुष्णोदकं देयं वातश्लेष्मप्रशान्तये ॥ ४३ ॥**

धान्येत्यादौ षडङ्गविधिपानीयम् । कल्यमिति प्रभाते । स्नेहाजीर्णमिति स्नेहस्य अजीर्णम् ॥ ४१–४३ ॥

**रूक्षनित्यस्तु दीप्ताग्निर्व्यायामी मारुताशयी ।**
**वङ्क्षणश्रोण्युदावर्तवातार्ताश्च दिने दिने ॥ ४४ ॥**
**एषां चाशु जरां स्नेहो यात्यस्तु सिकतास्विव ।**
**अतोऽन्येषां त्र्यहात्प्रायः स्नेहं पचति पावकः ॥४५॥**

सम्प्रति प्रत्यहमनुवासनीयान् आह—रूक्षनित्यस्त्वित्यादि । वंक्षणश्रोणीगतश्च तथा उदावृत्तश्च वात. एषा ते वक्षणश्रोण्युदावर्तवाता. । अर्हा इति अनुवासनार्हाः । उक्तं चान्यत्र "रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने । दद्याद्वैद्यस्ततोऽन्येषां अग्न्याबाधभयात्त्र्यहात्" । प्रत्यहदानत्र्यहदानोपपत्तिमाह—एषामित्यादि । त्र्यहात्स्नेह पचति इति पक्वाशयो ह्युपलेपकत्वे - मेदनि·स्तेनोष्मणा पचति । यद्यपि अत्र अग्निना दूरस्थितेन तादृश· संबंध स्नेहस्य नास्ति तथापि ज[ठरे]ण प्रविसृतैरन-यर्नस्तत्पाको वक्तव्यः । प्राय शब्देन एव त्र्यहादपाकमपि दर्शयति न पचाहदानमप्यनुवासने इहापि मेदाग्निस्य अपाको वक्तव्य. प्राय शब्देन पंचाहं प्रति प्रागुक्तं ज्ञेयं परमे[ण] [त्र्यह]ेन अनुवास्याहि पचमेति ॥ ४४–४५ ॥

**नत्वामं प्रणयेत्स्नेहं स ह्यभिष्यन्दयेद्गुदम् ।**
**सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ ४६ ॥**
**न चैव गुदकण्ठाभ्यां दद्यात्स्नेहमनन्तरम् ।**
**उभयस्मात्स[मा]गच्छन्वाय्वग्नीन्दूपयेत्समम् ॥ ४७ ॥**
**स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।**
**उत्क्लेशाग्निवधौ स्नेहान्निरूहात्पवनाद्भयम् ॥ ४८ ॥**
**तस्मान्निरूढः स्नेह्यः स्यान्निरूढश्चानुवासितः ।**
**स्नेहशोधनयुक्त्यैव वस्तिकर्म त्रिदोषनुत् ॥ ४९ ॥**

आममित्यपक्व प्रणयेदिति अनुवासनं न दद्यात् । सावशेषं च कुर्वीतेति न नि·शेषं दद्यात् अनंतरमिति अनेककालं वातमग्निं च रक्षयेदित्यत्र वातरूक्षणं अजीर्णजनकतया नावरणाच्च ज्ञेयम् । निरूहान्वासनयो· परस्पराव्यवधानदाने दोषमाह—स्नेहवस्तिमित्यादिनैकमेवेति परस्परानंतरितम् । उत्क्लेशः पित्तकफोत्क्लेशः । निरूहात्पवनात् भयमिति निरूहेण शरीरस्य अशेषस्य शोषात् अतियोगात् वातभयं भवति निरस्नेहस्यादिति निरूहेण स्रोत·सु शोधितेषु कफविजये च कृते स्नेहवस्तिरभ्यस्यः । तथा अनुवासितश्च यः सम्यगनुवासित· स निरूह्यः । एवं प्रयुज्यमानं स्नेहनिरूहदानं त्रिदोषहंतृ भवति स्नेहेन वातजयो निरुहेण कफपित्तजयो भवति इत्याह—स्नेहशोधन इत्यादि । शोधनमिह निरूहोऽभिप्रेत ॥ ४६–४९ ॥

**कर्मव्यायामभाराध्वपानस्त्रीकर्षितेषु च ।**
**[दुर्ब]ले वातभग्ने च मात्राव[स्तिः] सदा मतः ॥ ५० ॥**
**ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत् ।**
**यथेष्टाहारचेष्टस्य सर्वकालं निरत्ययः ॥ ५१ ॥**
**बल्यं सुखोपचर्यं च सुखं सृष्टपुरीषकृत् ।**
**स्नेहमात्राविधानं हि बृंहणं वातरोगनुत् ॥ ५२ ॥"**

अनुवासनविशेषस्य मात्रावस्तेर्विषयं प्रमाणगुणश्च यथाक्रममाह कर्मेत्यादि । व्यायामो धनुराकर्षणादि । वातभग्ने इति वातेन पीडिते । सदेति प्रत्यहं ह्रस्वाया इति अर्धाह·परिणमनीयायाः उक्तं हि—"अहोरात्रयतः कृत्स्नदिनार्धं च प्रतीक्षते । उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति" । तंत्रांतरे स्नेहमात्रात्रयं प्रमाणमेवोक्तं यथा "पट्पली तु भवेज्ज्येष्ठा मध्यमा त्रिपली भवेत् । कनीयसी सार्धपला त्रिधा मात्रा [नुवा]सने" इति । सुश्रुतेनापि वस्तिप्रमा [ण]मुक्तं यथा "तस्यापि विकल्पे अर्धार्धमात्रावकृष्टो जपरिहार्यो मात्रावस्ति"रिति अनेन सार्धपलमानो मात्रावस्तिरुक्तो भवति । तत्र हि पट्पलस्नेहवस्तिरुक्तः । अनुवासनं तु त्रिपलं सार्धपलो मात्रावस्तिः । सुखोपचर्यमिति नियमाभ[ा]वेन ॥ ५०–५२ ॥

## तत्र श्लोकौ ।

**वातादीनां शमायोक्ताः प्रवराः स्नेहवस्तयः ।**
**तेषां चाक्षप्रयुक्तानां व्यापदः सचिकित्सिताः ॥ ५३ ॥**
**प्राग्भोज्यं स्नेहवस्तेर्यदूर्ध्वं येऽर्हास्त्र्यहाच्च ये ।**
**स्नेहवस्तिविधिश्चोक्तो मात्रावस्तिविधिस्तथा ॥ ५४ ॥**

इति चरकसंहितायां सिद्धिस्थाने चतुर्थोऽ[ध्याय]ः ॥ ४ ॥

संग्रहे भोज्यग्रहणेन धान्यनागरजलादपि संग्राह्यं । प्रागुक्तं ये अर्हा इति प्रत्यहमनुवासनीयाः । विधिश्चोक्त इति नत्वामं प्र[णये]दित्यादिर्ग्रंथोक्तोऽर्थः ॥ ५३–५४ ॥

इति श्रीमच्चरकचतुराननश्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायां आयुर्वेददीपिकायां चरकसंहितायां सिद्धिस्थाने स्नेहव्यापत्सिद्धिर्नाम चतुर्थोऽध्यायः समाप्तः ॥

## पञ्चमोऽध्यायः।

### नेत्रबस्तिव्यापादिकासिद्धिः।

**"अथ नेत्राणि बस्तींश्च शृणु वर्ज्यानि कर्मसु। नेत्रस्याज्ञप्रणीतस्य व्यापदः सचिकित्सिताः॥ १॥**
**ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम्। पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत्॥ २॥**
**अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः। गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम्॥ ३॥**

स्नेहव्यापत्सिद्ध्यभिधानप्रसंगात् स्नेहदानसाधननलिकादिव्यापत्प्रतिकारार्थं नेत्रबस्तिव्यापत्सिद्धिरुच्यते। नेत्रगता तथा बस्तिगता च तथा नेत्रासम्यक्प्रणिधानजन्या च या व्यापत् तस्याः सिद्धिः सा नेत्रबस्तिव्यापत्सिद्धिः। दुष्टनेत्रबस्तिपुटकयोश्चेयमेव सिद्धिः तयोः सदोषत्वेन ज्ञात्वा परिवर्जनम्। तदेवाह ह्रस्वमित्यादि। नेत्रदोषकथने अष्टाविति यदुक्तं तत्र अनुक्तकर्कशत्वादि दोषाणा तत्रैव अतर्भावोपि दर्शनार्थं यः कर्कशत्वस्य दीर्घेणक तुल्यसाम्यग्रहणं एवमन्यत्रापि संख्यावचने प्रयोग इह न नीयम्। अप्राप्त्यादियथाक्रमं ह्रस्वनेत्रादिषु ज्ञेयम्। अतिगतिर्दूरेप्रवेशः क्षोभो गुदप्रविष्टस्य इतस्ततो गमनं गुदपीडा पार्श्वादिगतेन बस्तिद्रवेण योगात् गुदपीडा। जिह्मेति कुटिला॥ १-३॥

**मांसलच्छिद्रविषमस्थूलजालकवातलाः। छिन्नः क्लिन्नश्च तानष्टौ बस्तीन्कर्मसु वर्जयेत्॥ ४॥**
**गतिवैषम्यविस्रत्वस्रावदौर्गन्ध्यविड्स्रवाः। फेनिलच्युतधार्यत्वं बस्तेः स्याद्बस्तिदोषतः॥ ५॥**

विषमो विषमसंस्थानः स्थूलो अतिगुणः जालिकः सूक्ष्मानेकच्छिद्रः। वातलो वातदुष्टः। स च तत्र अभिहितस्नेहादेः फेनिलत्वादिना उन्नीयते। स्निग्धो अतिस्निग्धः। क्लिन्नः शीर्ण वयवः। गतिवैषम्यादयो यथाक्रमं अष्टौ दोषाः बस्तिदोषतो भवंति। विस्रत्वं आमगंधित्वं। धार्यत्वं बस्तेरतिक्लिन्नत्वात् विधारणायोग्यत्वं बस्तिपुटकस्य॥ ४-५॥

**सवातातिद्रुतोत्क्षिप्ततिर्यगुल्लिप्तकम्पिताः। अतिवाह्यगमन्दातिवेगदोषाः प्रणेतृतः॥ ६॥**

सवातेत्यादिप्रणेतृदोषा उच्यंते तत्र सवातता बस्तौ दुष्टे भवति। तथा अतिद्रुतत्वमपि प्रणयने निर्गमने। उत्क्षिप्तं ऊर्ध्वक्षिप्तं तिर्यगुत्क्षिप्तं तिर्यक्प्रणिधानं कंपितो दोषो यः पीडने विच्छेदं कृत्वा पुनः पीड्यते स ज्ञेयः नेत्रस्य अतिप्रणयनं अतिवाह्यं गुदाप्रविष्टं औषधं मंदवेगं दूरप्रवेशात् अतिपीडनं तत् अतिवेगम्॥ ६॥

**अनुच्छ्वासानुबन्धे वा दत्ते निःशेष एव वा। प्रविश्य कुपितो वायुः शूलतोदकरो भवेत्॥ ७॥**
**तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च। द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा॥ ८॥**
**स्यात्कटीगुदजङ्घार्तिर्बस्तिस्तम्भोरुभेदनम्। भोजनं तत्र वातघ्नं स्नेहाः स्वेदाः सबस्तयः॥ ९॥**

एतद्यापदां चिकित्सितानि प्रत्येकमाह—अनुच्छ्वासेत्यादि। एते च अनुच्छ्वासादयो यद्यपि पूर्वमेव निषिद्धास्तथापि प्रमादात्तथा प्रयोगे सति यान्व्याधिचिकित्सामिधानार्थं एतत् प्रकरणम्। द्रुतेत्यादिना उत्क्षिप्तमपि, समानव्यापत्तिकतया एकग्रंथेनैव पठ्यते। निष्कृष्टे सहसेति च्छेदः। उत्क्षेपस्तु असहसापि व्यापत्कर एव। बस्तेर्मूत्राशयस्य स्तंभो बस्तिस्तंभः सबस्तय इति वातबस्तियुक्ताः॥ ७-९॥

**तिर्यग्बन्धावृतद्वारे वद्धे वापि न गच्छति। नेत्रं तदूर्ध्वं निष्कृष्य संशोध्य च पुनर्नयेत्॥ १०॥**

तिर्यक्प्रणिधानदोषे अभिधातव्ये तिर्यक्प्रणिहिते नेत्रे बस्त्यावृतद्वारे सति तथा बस्तिद्रव्यगतमूत्रद्रव्यादिना विबद्धे नेत्रे बस्तिद्रव्यं न याति। तन्नेत्रं तिर्यक् प्रणिहितं निष्कृष्य ऋजु प्रवेशयेत्। संशोध्य प्रवेशयेदिति योज्यम्॥ १०॥

**पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः। उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली॥ ११॥**
**बस्तिः स्यात्तत्र बिल्वादिफलश्यामादिमूत्रवान्। स्याद्दाहो दवथुः शोफः कम्पनाभिहते गुदे॥ १२॥**
**कषायमधुराः शीताः सेकास्तत्र सबस्तयः। अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः॥ १३॥**
**स्याच्छर्दिदाहनिस्तोदगुदवर्चःप्रवर्तनम्। तत्र सर्पिः पिचुः क्षीरं पिच्छाबस्तिश्च शस्यते॥ १४॥**
**न वा वहति मन्दस्तु बस्तिस्त्वाशु निवर्तते। स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता॥ १५॥**
**अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम्। तत्र बस्तिर्विरेकश्च गलपीडादि च॥ १६॥**

अंतरामुक्ते मध्ये विच्छेदे कृते प्रतिहतो वायुः गुदात् प्रत्याहतः। बिल्व दिदशमूलं श्यामादि श्यामात्रिवृतादि विरेचनद्रव्यं अतिमात्रप्रणीतेनेति पुनःपुनः प्रणीतेन। अन्ये तु दूरप्रवेशनं अतिमात्रप्रणयनमाहुः। यद्यपि प्रणयनं ग्रंथितकर्णिकाया उपरि न भवति तथापि कर्णिकापीडनात् अतिमात्रप्रवेशो ज्ञेयः। पिच्छाबस्तिर्वक्ष्यमाणः। अतिपीडने कोष्ठे वा तिष्ठतीति इयं च व्यापत् पूर्वाध्याये आहारं विना दत्तानुवासनविषयतया उक्ता इह तु निरूहस्य अनुवासनस्य अतिपीडनजन्यतया बोध्यत इति शेषः। तत्र तु बस्तिर्विरेको वा कोष्ठस्थे अप्रवर्तमाने गलपीडादि कर्म ज्ञेयम्॥ ११-१६॥

### तत्र श्लोकः।

**नेत्रबस्तिप्रणेतॄणां दोषानेतान्सभेषजान्। विद्वांस्तत्त्वेन मतिमान्बस्तिकर्माणि कारयेत्॥ १७॥**

इति चरकसंहितायां सिद्धिस्थाने पञ्चमोऽध्यायः॥ ५॥

सग्रहे नेत्रेत्यादिस्पष्टार्थः॥ १७॥

इति चरकसंहिताया श्रीमच्चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकाया आयुर्वेददीपिकाया सिद्धिस्थाने नेत्रबस्तिव्यापत्सिद्धिर्नाम पंचमोध्यायः॥

## षष्ठोऽध्यायः ।

### वमनविरेचनव्यापत्सिद्धिः ।

अथ शोधनयोः सम्यग्विधिमूर्ध्वानुलोमयोः ।
असम्यक्कृतयोश्चैव दोषान्वक्ष्यामि सोपधान् ॥ १ ॥
"अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ।
तदन्तरे प्रावृडाद्यास्तेषां साधारणास्त्रयः ॥ २ ॥

नेत्रवस्तिव्यापत्सिद्धिविधानप्रसङ्गात् वमनविरेचनयोरपि व्यापत्सिद्धिरुच्यते । वमनविरेचनव्यापत्सिद्धिस्तु वस्तिव्यापत्सिद्धेः पश्चादपि अभिधीयते । पूर्वं नेत्रवस्तिव्यापत्सिद्धिविधानेन वस्तेरिह प्राधान्य अभिद्योतितम् । वस्तिप्राधान्य "तस्माच्चिकित्सार्धमिति ब्रुवति । सर्वं चिकित्सामपि वस्तिमेके" इत्यनेन उक्तमेव । वमनविरेचनयोश्च विधिर्यद्यपि कल्पनासिद्ध्युपकल्पनीयादौ तत्र तत्राभिहितस्तथाप्यनुक्तविशेषप्रतिपादनार्थं तत्राप्युक्तोऽर्थः पुनरुच्यते । सर्वथा अनुक्ताभिधान च नातिस्निग्धान्विरेचयेदिति ज्ञेयम् । उत्सर्गतः संशोधनयोग्यं कालं दर्शयन्नाह—अत्युष्णेत्यादि । ग्रीष्मादीना मध्ये प्रावृडाद्या इति प्रावृट्शरद्वसन्तास्तेषां साधारणा इति उष्णवर्षशीतानि यावत् । ज्ञेयाः साधारणा इति केचित् पठंति ॥ १ ॥ २ ॥

प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्जसहौ पुनः ।
तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति ॥ ३ ॥
एतानृतून्विचिन्त्यैव दद्यात्संशोधनं नृणाम् ।
स्वस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु ।

प्रावृडादीन् मासविभागेन दर्शयन्नाह—प्रावृट्शुचिनभा-वित्यादि । शुचिनभौ आषाढश्रावणौ । ऊर्जसहौ कार्तिकमार्गशीर्षौ । तपस्यः फाल्गुनः । मधुः चैत्रः । शोधनं प्रतीत्यनेन शोधने कर्तव्ये अयं यथोक्तप्रावृड्ऋतुविभागो भवति । स्वस्थवृत्तौ तु तस्याशीतीयोक्तएव वर्षाशरद्धेमन्तशिशिरवसन्त ग्रीष्मरूपो ऋतुक्रमो भवति । एतान् ऋतूनि प्रावृडादीन् ऋतून् । विचिन्त्यैवेति यथोक्तमासविभागेन व्यवस्थाप्य संशोधन दद्यात् । संशोधनक्रमादि न वेगान्धारणीये । "माधवप्रथमे मासि नभस्यप्रथमे पुनः । सहस्यप्रथमे चैव हारयेद्दोषसञ्चयम्" इत्यनेन ग्रंथेन चैत्रे श्रावणे आग्रहायणे वमनादि संशोधनं उक्तम् । तथा रोगभिषग्जितीये शिशिर परित्यज्य प्रावृडादिक्रमः संशोधनागतया उक्तः तेन रसबलोत्पत्तौ स्वस्थवृत्तानुष्ठाने च शिशिरादिक्रमो भवति । संशोधनव्यवस्थाया तु प्रावृडादिक्रमोऽय शोधनानुकूलतया आचार्येण कल्पितो न पारमार्थिकः । ये तु प्रावृडादिक्रमं गंगायाः दक्षिणे कूले उत्तरे च शिशिरादिक्रमं वदति तन्मते शोधनं प्रतीति ग्रंथोऽनुपपन्नः । ………… गंगाया दक्षिणेतले । ………ऋतू तेषां प्रकीर्तितौ" इत्यादि ग्रथेन देशभेदेनापि ऋतुक्रमः पारमार्थिको विधीयते । यथायमाचार्यस्य नाभिमतः । प्रपंचितश्चायम् ः सूत्रस्थान एव । अयं संशोधनकालोपदेशः अनात्ययिके व्याधौ ज्ञेयः । आत्ययिके तु उष्णेपि काले संशोधनप्रवृत्तिर्भवत्येव । उक्तोयमर्थो रोगभिषग्जितीये—आत्ययिके पुनः कर्मणि काम ऋतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन भैषज्यं संयोगसंस्कारप्रमाणविकल्पेन उपपाद्य प्रमाणवीर्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेन अवहितः" इत्यनेन ग्रंथेन ॥ ३ ॥

कर्मणां वमनादीनामन्तरेष्वन्तरेषु च ॥ ४ ॥
स्नेहस्वेदौ प्रयुञ्जीत स्नेहाद्यन्ते प्रयोजयेत् ।
विसर्पपीडकाशोफकामलापाण्डुरोगिणः ।
अभिघातविषार्तांश्च नातिस्निग्धान्विरेचयेत् ॥ ५ ॥
नातिस्निग्धशरीराय दद्यात्स्नेहविरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम् ॥ ६ ॥

कर्मणामित्यादो अंतरेषु इति वमनानंतर विरेचनानंतरं वस्तौ च कर्तव्ये स्नेहस्वेदौ यथोक्तविधानेन पुनः कर्तव्यौ न सकृत् प्रयुक्तेन स्नेहेन स्वेदेन पंचकर्माणि कर्तव्यानीत्यर्थः । स्नेहं चान्ते प्रयोजयेदिति संशोधनकर्मपरिसमाप्तौ संशोधनजनितग्लानिपरिहारार्थं संशमनीयं स्नेह प्रयोजयेदित्यर्थः । नातिस्निग्धानिति स्निग्धाना अवश्यकर्तव्ये विरेचने सति अनतिस्निग्धातिस्निग्धयोः असम्यग्योगकारकं विरेचनं न दद्यादित्यर्थं । अनतिस्निग्धविरेचनातिस्निग्धविरेचनयोगप्रतिषेधार्थं नातिस्निग्धे स्नेहविरेचनं स्नेहोत्क्लिष्टशरीरे रूक्षं विरेचनं देयम् ॥ ४—६ ॥

स्नेहस्वेदोपपन्नेन जीर्णे मात्रावदौषधम् ।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥ ७ ॥
स्निग्धात्पात्राद्यथा तोयमयत्नेन प्रणुद्यते ।
कफाद्यः प्रणुद्यन्ते स्निग्धाद्देहात्तथौषधैः ॥ ८ ॥
आर्द्रं काष्ठं यथा वह्निर्विष्यन्दयति सर्वतः ।
तथा स्निग्धस्य वै दोषान्स्वेदो विष्यन्दयेत्स्थिरान् ९
क्लिष्टं वासो यथोत्क्लेश्य मलैः संशोध्यतेऽम्भसा ।
स्नेहस्वेदैस्तथोत्क्लेश्य शोध्यते शोधनैर्मलः ॥ १० ॥

सम्यग्योगकारिका संशोधनसामग्रिं आह—स्नेहस्वेदोपपन्नेनेत्यादि । मात्रावदित्यल्पमात्रम् । महावेगमित्यादिना वक्ष्यमाणमात्रावत्वं नेयम् । एकाग्रमनसेति संशोधनैकचित्तेन । व्यग्रमनसा हि अयोगस्स्यात् । स्निग्धात् पात्रादिति दृष्टान्तेन स्नेहस्वेदयोरवश्यकर्तव्यता सूचयति । अयत्नेन इति अप्रयासेन । प्रणुद्यत इति नि ति । सर्वत इति सर्वतः स्थित द्रवं आकर्षति । अभिदृष्टान्तेन सम्यग्दोषस्य आ णमुच्यते । तृतीयेन दृष्टान्तेन स्नेहस्वेदयोर्मिलित ोः फलमुच्यते । क्लिष्टमिति मलि म् । उत्क्लेश्येति क्षीराग्निसंबंधात् समुत्क्लेश्य ॥७–१०॥

अजीर्णे वर्धते ग्लानिर्विबन्धश्चैव जायते ।
पीतं संशोधनं चैव विपरीतं प्रवर्तते ॥ ११ ॥

शोधनसम्यग्योगसामग्र्याभिधाने प्रोक्तस्नेहस्वेदयोः फलमभिधाय क्रमप्राप्तस्य जीर्णे पीतमित्यस्य विपर्यये दोषमाह—

अजीर्णे वर्धते ग्लानिरिति। अजीर्णावस्थाया पीते शोधने महती ग्लानिर्भवति। विपरीतं प्रवर्तेत इति वमनमधो याति विरेचनं चोर्ध्वं याति ॥ ११ ॥

**अल्पमात्रं महावेगं बहुदोषहरं सुखम्।**
**लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम् ॥१२॥**
**अविकाराविपन्नं च नातिग्लानिकरं च तत्।**
**गन्धवर्णरसोपेतं विद्यान्मात्रावदौषधम् ॥ १३ ॥**
**विधूय मानसान्दोषान्कामक्रोधभयादिकान्।**
**एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥ १४ ॥**

मात्रावदिति यदुक्तं तद्विवृणोति। अल्पमात्रमित्यादि। अल्पमात्रं महावेगं अल्पमात्रत्वे सत्यपि हावेग अविकाराविपन्नमिति ईषद्विकारकारी मात्रावदिति प्रशस्तमात्रा। मात्रायाः प्राशस्त्यं द्रव्यादिसंस्कारविशेषाधीनम्। एवं शोधने मात्रावत्त्वं परिभाषितं ज्ञेयम्। एकाग्रमनसेति यदुक्तं तद्विवृणोति विधूयेत्यादि ॥ १२-१४ ॥

**नरः श्वो वमनं पाता भुञ्जीत कफवर्धनम्।**
**सुजरं द्रवभूयिष्ठं लघु शीतं विरेचनम् ॥ १५ ॥**

वमनविरेचनयोः पूर्वदिने यथा भोक्तव्यस्तदाह नर इत्यादि। एतत् प्रागुक्तमपि प्रकरणवशात् विशेषाभिधित्सया पुनरभिधानं पाता पातुकामो द्रवभूयिष्ठं इति च्छेदः। विरेचनं यतो लघु शीतं चातो भुंजीतेति संबंधः ॥ १५ ॥

**उत्क्लिष्टाल्पकफत्वेन क्षिप्रं दोषाः स्रवन्ति हि।**
**पीतौषधस्य तु भिषक् शुद्धिलिङ्गानि लक्षयेत्।**
**ऊर्ध्वं कफानुगे पित्ते विट्पित्तेऽनुकफे त्वधः ॥१६॥**
**हृतदोषं वदेत्कार्श्यदौर्बल्ये चेत्सलाघवम्।**
**वामयेत्तु ततः शेषमौषधं न त्वलाघवे ॥ १७ ॥**
**स्तैमित्येऽनिलसङ्गे च निरुद्गारेऽपि वामयेत्।**
**आलाघवादणुत्वाच्च कफस्याग्निकरं भवेत् ॥ १८ ॥**
**वमिते वर्धते वह्निः शमं दोषा व्रजन्ति हि।**
**वमितं लङ्घयेत्सम्यग्जीर्णलिङ्गान्यलक्षयन्।**
**तानि दृष्ट्वा तु पेयादिक्रमं कुर्यान्न लङ्घनम् ॥ १९ ॥**

एवंभूतभोजनोपपत्तिमाह—उत्क्लिष्टेत्यादि। उत्क्लिष्टाल्पकफत्वेनेति। वमनं प्रति तु उत्क्लिष्टकफत्वेन विरेचनं प्रति तु अल्पकफत्वेन। वमनविरेचनयोः शुद्धिलिंगानि यद्यपि प्रागुक्तानि तथापि इह शेषौषधदानादिविशेषात्पुनरभिधानम्। पीतौषधस्येत्यादिना कफानुगे पित्ते ऊर्ध्वं हृतदोषं वदेत्। विट्पित्ते अनुकफे दृश्यमाने अधो हृतदोषं वदेदिति नियोजना एतत् कफानुगत्वं विरेचनस्य वमनस्य च पित्तान्तत्वं पूर्वमेव व्याहृतम्। एतत् पित्तान्तत्वं कफान्तत्वं वा सकृत् शुद्धेपि दोषस्य अनानुपूर्व्या अवस्थानाद्भवतीति कृत्वा एतयोः साहचर्येण कार्श्यदौर्बल्यं चेत् सलाघवमिति विरेचनप्रयोगे सावशेषे सति कर्तव्यमाह वामयेत्तु ततः शेषमौषधमिति। शुद्धिलक्षणे जाते शेषमौषधं रेचनातियोगप्रतिषेधार्थं वामयेदित्यर्थः। न तु अलाघवे त्वनेन। लाघवव्यतिरिक्तशेषशुद्धिलक्षणदर्शने सत्यपि न विरेचनशेषौषधवमिः कर्तव्या। वमनौषधकर्तव्यमाह स्तैमित्यमित्यादि। वमनौषधप्रयोगे यावत् स्तैमित्ये अनिलसंगे निरुद्गारे भेषजे सति वमनं कारयितव्यम्। एतद्वमनावधिमाह—आलाघवादणुत्वाच्च कफस्येति अतःपर क्रियमाणस्य वमनस्य दोषमाह अग्निकरं भवेदिति। इदमतियोगलक्षणम्। अन्ये तु स्तैमित्यमित्यादिनापि विरेचनौषधस्यैव आवस्थिकं वमनमित्याहुः। यथोक्तवमनफलमाह—वमिते वर्धतेत्यादिना ॥ १६—१९ ॥

**संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः।**
**यात्यग्निर्मन्दतां तस्मात्क्रमं पेयादिमाचरेत् ॥ २० ॥**

सम्यग्जीर्णलिंगानि लक्षयन्निति संशोधनभेषजस्य वक्ष्यमाणसम्यग्जीर्णलिंगानि लक्षयन्। तानीति जीर्णौषधलिंगानि। शुद्धस्य पेयादिक्रमोपपत्तिमाह—संशोधनाभ्यामिति। यद्यपि निरूढस्याप्यग्निमान्द्यं भवति। तथापि निरूढस्य तादृगग्निमान्द्यं न भवति। येन तत्र पेयादिक्रमो न क्रियते। तस्मान्निरूढव्युदासार्थं संशोधनाभ्यामिति द्विवचनं कृतम्। या तु सम्यगविरिक्तलक्षणे अग्निवृद्धिरुक्ता सा च विरेचनौषधक्षोभातिसंगादग्निवृद्धिर्जायते। तेन तस्य यात्यग्निमांद्यतामिति वचनेन समं न विरोधः ॥ २० ॥

**कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके।**
**तर्पणादिक्रमं कुर्यात्पेयाभिष्यन्दयेद्धि तान् ॥ २१ ॥**

तर्पणादिविषयमाह—कफपित्तेत्यादि अल्पमविशुद्धेइति असम्यग्विशुद्धे तर्पणादिक्रमेण पेयास्थाने लाजसक्तु विलेपीस्थाने च मासरसोदकं देयम् ॥ २१ ॥

**अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णोर्जो मनस्विता।**
**लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ २२ ॥**
**क्लमो दाहोऽङ्गसदश्च भ्रममूर्च्छाशिरोरुजा।**
**अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ २३ ॥**
**अकालेऽल्पातिमात्रं च पुराणं न च भावितम्।**
**असम्यक् संस्कृतं चैव व्यापद्येतौषधं ध्रुवम् ॥२४॥**

जीर्णौषधा ह अनुलोम इत्यादि। ऊर्जो बलं इंद्रियशुद्धिरिंद्रियपाटवम्। उद्गारस्य चौषधगंधादिरहितत्वमपि शुद्धिः। भेषजातियोगमाह—अकाल इत्यादि। अल्पातिमात्रं अल्पं चातिमात्रं च। नच भावितमिति अभावितम् ॥२२॥२४॥

**आध्मानं परिकर्तिश्च स्रावो हृद्गात्रयोर्ग्रहः।**
**जीवादानं सविभ्रंशः स्तम्भः सोपद्रवः क्लमः॥२५॥**
**अयोगादतियोगाच्च दशैता व्यापदो मताः।**
**प्रेष्यभैषज्यवैद्यानां वैगुण्यादातुरस्य च।**
**शुद्धोत्क्लिष्टेन दुर्गन्धमहृद्यमतिबाध्यते ॥ २६ ॥**
**योगः सम्यक्प्रवृत्तिः स्यादतियोगोऽतिवर्तनम्।**
**अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्तनम् ॥२७॥**

श्लेष्मोत्क्लिष्टेन दुर्गन्धमहृद्यं नाति वा बहु ।
विरेचनमजीर्णे च पीतमूर्ध्वं प्रवर्तते ॥ २८ ॥
क्षुधार्तमृदुकोष्ठाभ्यां स्वल्पोत्क्लिष्टकफेन वा ।
तीक्ष्णं पीतं स्थितं क्षुब्धं वमनं स्याद्विरेचनम् ।
अयोगे तत्र कर्तव्यं समालेनासि ... ॥ २९ ॥
प्रातिलोम्येन दोषाणां हरणात्तेष्वकृत्स्नतः ।
अयोगसंज्ञे कृच्छ्रेण न चागच्छति चाल्पशः ॥३० ॥

संशोधनायोगातियोगजन्या व्यापद आह—आध्मानमित्यादि । आध्मानादयश्चामी अवश्यमयोगातियोगाभ्यां भवंति । ततोपद्रवभूतत्वात्पृथगुक्ताः । एताश्च व्यापदः प्रेष्यादिवैगुण्यात् तत्पनयोगातियोगान्न भवंतीति वाक्यार्थः । तत्राध्मानमयोगाद्भवति । परीकर्तिश्चातियोगात् त्वावत्तु अयोगात् हृद्ग्रहोऽप्ययोगादेव । जीवादानमतियोगाद्भवेत् । विभ्रंशस्तु त्रिविधो वक्तव्यः । तत्र गुदभ्रंशस्तनभ्रंशौ अतियोगजन्यौ । शेषस्तु विभ्रंशो अयोगजन्यः । स्तंभ क्रमश्चायोगजन्याः । एतेषां वा अयोगातियोगजन्यत्वविभाग उत्तरग्रन्थे स्फुटो भविष्यति । यद्यपि चायोगातियोगमिथ्यायोगा रोगकारणत्वेनोक्तास्तथापीह वमनविरेचनयोर्मिथ्यायोगं नेच्छंति । यतो दोषाणां चतुर्विधा गतिर्भवति । अतिप्रवृत्तिरसम्यक्प्रवृत्तिरप्रवृत्तिरल्पप्रवृत्तिर्वा । तत्राल्पप्रवृत्तिरयोगे गृहीत इव प्रातिलोम्येन । प्रवृत्तिस्तु दोषस्यापेक्षितस्याप्रवर्तकत्वादयोगगृहीत इव । वक्ष्यति हि अयोग. प्रातिलोम्येन नचाल्पं वा प्रवर्तनम् । योगस्वरूपमाह—योगइत्यादि । अतिवर्तनमिति तत्संशोध्यापेक्षया अतिशयेन प्रवर्तनम् । प्रातिलोम्येनेति वमनस्य विरेचनेन विरेचनस्य वमनेन प्रवर्तनम् । एतच्च प्रातिलोम्यप्रवर्तने अकृत्स्नदोषहरणादयोगइति सन्नितम् । प्रतिलोमहरणे अकृत्स्नदोषहरणमेव दर्शयन्नाह—कृत्स्नेनेत्यादि । प्रतिलोमहरणे दोषाः कृत्स्नशो याति । अयोगादल्पशो यातीति भावः । तेन अकृत्स्नदोषहरणं प्रतिलोमहरणे नोपपन्नमितिभावः । कृच्छ्रेण यदागच्छति चाल्पश इति वा पाठः ॥ २४—३० ॥

पीतौषधो न शुद्धश्चेज्जीर्णे तस्मिन्पुनः पिबेत् ।
औषधं न त्वजीर्णेऽन्यद्भयं स्यादतियोगतः ॥ ३१ ॥
कोष्ठस्य गुरुतां ज्ञात्वा लघुत्वं बलमेव च ।
अयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव वा ॥ ३२ ॥
वमनं न तु दुश्छर्द्यां मृदुकोष्ठे विरेचनम् ।
पाययेतौषधं भूयो हन्यात्पीतं पुनर्हि तौ ॥ ३३ ॥
अस्निग्धास्विन्नदेहस्य रूक्षस्यानवमौषधम् ।
दोषानुत्क्लिश्य निर्हर्तुमशक्तं जनयेद्गदान् ॥ ३४ ॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं भृशम् ।
पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ॥३५॥

चिकित्सामाह—पीतौषधेत्यादि । जीर्णेति औषधे जीर्णे पुनःपिबेदिति तदहरेव । भयं स्यादतियोगत इति पूर्वाजीर्णौषधाभ्यामतियोगः स्यात् । मृदु दद्यादिति व्यवस्था ॥ वमनविरेचनादानविषय आह—वमनेत्यादि । पुनःपीतौ भूयो हन्यादित्यस्यार्थः हन्यादित्यर्थः ॥ स्नेहप्रवृत्तिरूपायोगं कारणभेदेनाह—अस्निग्धेत्या । अस्निग्धस्येति असम्यक् स्निग्धस्य । रूक्षस्येति मनागप्यस्निग्धस्य ॥ ३१–३५ ॥

स्निग्धस्विन्नस्य चात्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ।
शीतैर्वा स्तम्भयेत्सामे दोषानुत्क्लिश्य नाहरेत् ३६
तानेव जनयेद्रोगानयोगः स एव सः ।
विज्ञाय मतिमांस्तत्र यथोक्तां कारयेत्क्रियाम् ॥३७॥
तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।
पाययेत पुनर्जीर्णे समूत्रैर्वा निरूहयेत् ॥ ३८ ॥
निरूढं च रसैर्धन्वैर्भोजयित्वाऽनुवासयेत् ।
फलमागधिकादारुसिद्धतैलेन मात्रया ॥ ३९ ॥

स्निग्धस्विन्नस्य अत्यल्पमपि दीप्ताग्नित्वाज्जीर्णं । आमेति अपक्वे दोषान् पीतमिति शेषः । एते त्रयः प्रतिपादिताः तानेव व्यापत्प्रस्तावे पठितानयोगजन्यरोगान् जनयेयुः । एवमयोगलक्षणतया वक्ष्यमाणगदेष्वपि वाच्यम् । यथोक्तामिति "पीतौषधो न शुद्धश्चे"त्यादिनोक्ताम् । किंवा अग्रे तं तैलेइत्यादिग्रन्थोक्ताम् । पाययेदिति संशोधनं पाययेत् । धन्वैरिति धन्वमृगपक्षिमांसैः ॥ ३६–३९ ॥

स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।
नचातितीक्ष्णेन ततो ह्यतियोगस्तु जायते ।
अतितीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ॥ ४०॥
हत्वाशु विट्पित्तकफान्धातून्विस्रावयेद्द्रवान् ।
बलस्वरक्षयं दाहं कण्ठशोषं क्लमं तृषाम् ।
कुर्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥ ४१ ॥
वमने तु विरेकः स्याद्विरेके वमनं मृदु ।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥४२॥
कषायमधुरैः शीतैरन्नपानौषधैस्तथा ।
रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥ ४३ ॥
अञ्जनं चन्दनोशीरं मज्जासृक्शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ ४४ ॥

अतियोगस्य हेत्वादिमाह—इयं च सामग्री विरेचनातियोगस्यैव । यन्मृदुकोष्ठे बुभुक्षिते च विट्पित्तकफहरणक्रमेण विरेचनस्य अतिसेवनं युज्यते । तेन वमनातियोगसामग्री नातमेदोहरणेनोन्नीया । किंवा अतितीक्ष्णमिति पदेनैव वमनस्यापि तीक्ष्णत्वं अतियोगस्य कारणमुक्तम् । विट्पित्तकफहरणं यथायोग्यतया क्रमेण वमने बोद्धव्यम् । शेषमौषधमुल्लिखेदिति मृद्विति पदं वमनेन विरेचनेन सवध्यते ॥ ४०–४४ ॥

शुङ्गाभिर्वा वटादीनां सिद्धां पेयां समाक्षिकाम् ।
वर्चःसंग्राहिकैः सिद्धं क्षीरं भोज्यं च दापयेत् ॥४५॥
जाङ्गलैर्वा रसैर्भोज्यं पिच्छावस्तिं च दापयेत् ।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा ॥ ४६ ॥

वमनस्यातियोगे तु शीताम्बुपरिषेचितम् ।
पिबेत्फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥ ४७ ॥
सोद्गारायां भृशं वम्यां मूर्च्छायां धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ ४८ ॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणैर्हृद्यैर्यूषक्षीररसैर्हिताः ॥ ४९ ॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ।
निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥५०॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ।
यवागूं तनुकां दद्यात्स्नेहस्वेदौ च बुद्धिमान् ॥५१॥
वमितश्च विरिक्तश्च मन्दाग्निश्च विलङ्घितः ।
अग्निप्राणविवृद्ध्यर्थं क्रमं पेयादिकं भजेत् ॥ ५२ ॥
बहुदोषस्य रूक्षस्य हीनाग्नेरल्पमौषधम् ।
सोदावर्तस्य चोत्क्लिश्य दोषान्मार्गान्निरुध्य च॥५३॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजाम् ।
श्वासविण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम् ॥५४॥
अभ्यङ्गं स्वेदवर्त्यादि सनिरूहानुवासनम् ।
उदावर्तहरं सर्वं कर्माध्मातस्य शस्यते ॥ ५५ ॥
स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम् ।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन वा ॥ ५६ ॥
पीतं गत्वा गुदं साममाशु दोषं निरस्य च ।
तीव्रशूलां सपिच्छास्रां करोति परिकर्तिकाम् ॥५७॥
लङ्घनं पाचनं सामे रूक्षोष्णं लघुभोजनम् ।
बृंहणीयो विधिः सर्वः क्षामस्य मधुरस्तथा ॥५८॥
आमे जीर्णे तु बन्धश्चेत्क्षाराम्लं लघु शस्यते ।
पुष्पकासीसमिश्रं वा क्षारेण लवणेन च ॥ ५९ ॥
सदाडिमरसं सर्पिः पिबेद्वातेऽधिके सति ।
दध्यम्लं भोजने पाने संयुक्तं दाडिमत्वचा ॥ ६० ॥
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिबेत् ।
अश्वत्थोदुम्बरप्लक्षकदम्बैर्वा शृतं पयः ॥ ६१ ॥
कषायमधुरं बस्तिं पिच्छाबस्तिमथापि वा ।
यष्टीमधुकसिद्धं वा स्नेहबस्तिं प्रदापयेत् ॥ ६२ ॥

वटादीनामिति न्यग्रोधोदुंबराश्वत्थप्लक्षकपीतनानाम् । वर्चःसंग्राहकैरिति षड्विरेचनशताश्रितीयोक्तैः । प्रियंग्वनंताम्रास्थिकट्वंगलोध्रमोचरससमंगाधातकीपुष्पपद्मापद्मकेशराणीत्युक्तैः । अम्लफलखादनं तु अंतःप्रविष्टजिह्वास्तम्भलहंतृ । निःसृतामिति जिह्वाविशेषणम् । अतियोगेपि यथा पेयादिक्रमो भवति तदाह—वमितश्चेत्यादि । अयोगातियोगौ । आध्मानादिव्यापदां यथाक्रमं हेतुलिंगचिकित्सानिर्देशमाह—बहुदोषस्येत्यादि । एताश्च व्यापदो अतियोगातियोगयोरेव भवंति । अतएवोपकल्पनीये तत्र अतियोगायोगनिमित्तानिमानुपद्रवान् विद्यात् "आध्मानं परिकर्तिका परिस्रावो हृदयोपरोधनं अंगग्रहो जीवादानं विभ्रंशः स्तंभः क्लम उपद्रव" इति ग्रंथेन एता दशव्यापदः पीतंगत्वा गुदमित्यादिना विरेचनातियोगजन्यपरिकर्तिका उक्ता । वमनातियोगजन्यपरिकर्तिका तु उपकल्पनीये एव वमनातियोगजन्यतया, एव उक्ता । तेन अनुक्तापि वमनव्यापत्तौ परिकर्तिः निजोदाहरणमेव कल्पनीया । तंत्रांतरेप्युक्तं या परिकर्तिका विरेचने तद्वद्वमने योऽधः परिस्रावो विरेचने स वमने कफसेकः तदानया दिशा आध्मानादीनि वमनविरेचनयोरयोगातियोगजन्यतया व्याख्यातव्यानीत्येके । आशुदोषं निरस्येति वमनातियोगजन्येयं व्यापत् । अत्र लंघनादिक्रिया अतियोगे सत्यपि आमपाचनार्था । क्षामेण मृदुकोष्ठेनेत्यादि संप्राप्तिजनितस्य क्षामपुरीषप्रभवस्य लंघनाद्युपक्रमः । अतएव कर्तव्यमाह—आमे जीर्णे इत्यादि । क्षाराम्लं लघु शस्यत इति । अतिसारे यदुक्तं—"चांगेरी कोलदध्यम्लनागरक्षारसंयुतम् । घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम्" इति ज्ञेयम् । पुष्पकासीसमित्यत्र पुष्पशब्देन केचित् सांग्राहिकाणि धातकीकुसुमादीनि ग्राहयंति ॥ ४५—६२ ॥

अल्पं तु बहुदोषस्य दोषमुत्क्लिश्य भेषजम् ।
अल्पाल्पं स्रावयेत्कण्डूं शोफकुष्ठानि गौरवम् ॥६३॥
कुर्याच्चाग्निवधोत्क्लेशस्तैमित्यारुचिपाण्डुताम् ।
परिस्रावगतं दोषं शमयेद्वामयेदपि ॥ ६४ ॥
स्नेहितं वा पुनस्तीक्ष्णं पाययेच्च विरेचनम् ।
शुद्धे चूर्णासवारिष्टान्संस्कृतांश्च प्रदापयेत् ॥६५॥

अल्पेत्यादिना परिस्रावमाह शमयेद्वामयेदित्यादौ अल्पदोषे शमनम् । बहुदोषे ऊर्ध्वगतदोषे तु विरेचनं इति व्यवस्था । वामयेदपीत्यत्रापि स्नेहितं पुनरिति संबध्यते । चूर्णासवारिष्टग्रहणमर्शश्चिकित्सासु ज्ञेयम् ॥ ६३—६५ ॥

पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥ ६६ ॥
सहिक्काश्वासपार्श्वार्तिदैन्यलालाक्षिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दन्तान्किटिकिटापयन् ॥६७॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।
मधुरैः पित्तमूर्च्छार्तं कटुभिः कफमूर्च्छितम् ॥६८॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।
कायाग्निं च बलं चास्य क्रमेणाभिविवर्धयेत् ॥६९॥

पीतौषधस्येत्यादिना हृद्ग्रहमाह न गच्छेद्विभ्रमं तत्रेति । हृद्ग्रहपीडितोयं म्रियमाणो वायमिति भ्रांतिं न गच्छेदित्यर्थः । वमतश्चात्र मूर्छिते दुःशकः प्रयोगः तेन मूर्छारंभे एव वमनं कारयितव्यम् । किंवा मूर्छायामपि अंगुलिप्रक्षेपणादिना वमनं कारयितव्यम् । पित्तमूर्छार्तमिति प्रबलपित्तदोषजनितमूर्छार्तम् ॥ ६६—६९ ॥

पवनेनातिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ॥७०॥

पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति च विगुणः गृह्णात्यङ्गानि मारुतः ॥७१॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्तिमूर्च्छितः ।
तत्र वातहरं सर्वं स्नेहस्वेदादि कारयेत् ॥ ७२ ॥

पवनेनातिवर्ति तैलादि-अनियमत. अनियमन कुर्वीत । पित्तकफेन्यवेति पित्ते कफे वा हृदयपीडाकरे स्निग्धाम्ललवण-विपरीतं स्नेहनिवर्तनादिकम कुर्यात्। पीतौषधस्येत्यादिना अयोगजमङ्गग्रहणमाह—वेगाना निग्रहेण रुद्धो वा कफेन मारुत अतिगुरुत्व वा अगानि स्तम्भादिभि निगृह्णाति ॥ ७०–७२ ॥

अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम् ।
दोषान्हत्वा विनिर्मथ्य जीवं हरति शोणितम् ॥७३॥
तेनान्नं मिश्रितं दद्याद्वायसाय शुनेऽपि वा ।
भुंक्ते तच्चेद्वदेज्जीवं न भुंक्ते पित्तमादिशेत् ॥ ७४ ॥
शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा ।
प्रक्षालितं निवर्णं चेत्पित्तं शुद्धं तु शोणितम् ॥७५॥
तृषामूर्च्छामदार्तस्य कुर्यादामरणात्क्रियाम ।
तस्य पित्तहरीं सर्वामति ोने च या हिता ॥७६ ॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक् ।
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति ॥७७॥
तदेव दर्भमृदितं रक्तं वस्ति प्रदापयेत ।
श्यामाकाश्मर्यबदरीदूर्वावीरैः शृतं जलम् ॥ ७८ ॥
घृतमण्डाञ्जनयुतं वस्तिं शीतं प्रदापयेत् ।
पिच्छावस्तिं सुपीतं वा घृतमण्डानुवासनम् ॥७९॥
गुदभ्रंशं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।
सामगन्धर्वशब्दांश्च सज्ञानाशेऽस्य कारयेत् ॥८०॥
यदा विरेचनं पीतं विबन्तरवतिष्ठते ।
वमनं भेषजान्तं वा दोषानुत्क्लेश्य नावहेत् ॥८१॥
तदा कुर्वन्ति कण्ड्वादीन्दोषा. प्रकुपिता गदान् ।
स विभ्रंशो मतस्तत्र स्याद्यथाव्याधि भेषजम् ॥८२॥
पीतं स्निग्धेन सस्नेहं तद्दोषैर्मार्दवाद्वृतम् ।
न वाहयति दोषांस्तु स्वस्थानात्स्तम्भयेच्च तान् ८३
वातसङ्गगुदस्तम्भशूलैः क्षरति चाल्पशः ।
तीक्ष्णं वस्तिं विरेकं वा दद्याल्लङ्घनपाचनम् ॥ ८४ ॥

अतितीक्ष्णमित्यादिना जीवादानमाह—लघुदोषस्येति स्वल्पदोषस्य । विनिर्मथ्य इति शोणितमेव क्षोदयित्वा । जीवमिति जीवनहेतु धातुरूपशोणितम् । किञ्चित् रक्तपित्तक्षोदो भवति किञ्चिच्च जीवशोणितक्षोदो भवति । तद्विशेषपरीक्षामाह—तेनान्नमित्यादि । पित्तमादिशेदिति शोणितागतं पित्तमादिशेत् । रक्तपित्तमिति यावत् । शुद्ध पित्तमिति रक्तपित्तम् । क्षालितं वस्त्र निवर्ण भवति । जीवशोणिते तु सति शुद्धं वस्त्रं भवतीति परीक्षा चिकित्साभेदार्थमेव रक्तपित्तहरी क्रिया कर्तव्या । जीवशोणितं तु दृष्ट्वा तृषामूर्छामदार्तस्येत्यादिनोक्ता कर्तव्या । अतियोगे च या हितेति अत्रेवपूर्वमित्यादिनोक्ता ज्ञेया । जीवं तद्ध्याशु गच्छतीति तदसृक् प्रभावादेव जीवरूपता याति । श्यामेत्यादौ-गुदभ्रंशमित्यादिना विभ्रंशमा" कषायैरिति । कषायरसे । सामेत्यादिना सञ्ज्ञारूपविभ्रम चिकित्सा चाह—साम सान्त्वनम् । गंधर्वशब्दो गीतम् । एतौ च विभ्रंशौ अयोगजन्यौ । यदेत्यादिना तृतीयमयोगजन्य विभ्रंशमाह—विडन्तरवतिष्ठत इति मूत्रऽमपहृत्यावतिष्ठते । भेषजान्तमिति भेषजमात्र वमनं नावतिष्ठते । नावहेदिति नापहरति अस्या. व्यापदो विभ्रंशसञ्ज्ञा पारिभाषिकी ज्ञेया. । स्याद्यथा व्याधिभेषजमिति कण्ड्वादि विपरीत भेषजम् ॥ पीत स्निग्धेत्यादिना स्तम्भमाह—मार्दवावृतमिति भेषजस्य मृदुतया दोषैर्वृतं स्वस्थानात् च्युतान् स्तंभयेदिति योजनीयम् । लघनपाचनानन्तर तीक्ष्ण वस्तिं विरेकं वा तीक्ष्णमेवेत्यर्थ ॥ ७३–८४ ॥

रूक्षं विरेचनं पीतं रूक्षेणाल्पबलेन वा ।
मारुतं कोपयित्वाशु कुर्याद्घोरानुपद्रवान ॥ ८५ ॥
स्तम्भशूलानि घोराणि सर्वगात्रेषु मारुतः ।
स्नेहस्वेदादिकस्तत्र कार्यो वातहरो विधिः ॥ ८६॥

रूक्षमित्यादिना उपद्रवमाह—यद्यप्याध्मानादयोपि उपद्रवा एव तथापि तेषा सञ्ज्ञान्तरेण गृहीतत्वात् शूलादय एवोपद्रवशब्देनोच्यन्ते । तथा शूलादयश्चामी प्रधानादुत्तरकालभावित्वादुपद्रवशब्देनोच्यते । यथाधूम· कुर्यादुपद्रवानिति । किंवा अयोगात्यस्य व्याधेरमी उपद्रवा इति ज्ञेयम् ॥८५–८६॥

स्निग्धस्य गुरुकोष्ठस्य मृदूत्क्लेश्यौषधं कफम् ।
पित्तं वातं च संरुध्य सतन्द्रागौरवं क्लमम् ॥८७॥
दौर्बल्यं चाङ्गसादं च कुर्यादाशु तदुल्लिखेत् ।
लङ्घनं पाचनं चात्र स्निग्धे तीक्ष्णं च शोधनम् ॥८८"

स्निग्धस्येत्यादिना क्लममाह—कफ पित्त चोत्क्लेश्य वात च संरुध्य भेषज क्लम तन्द्रादियुत करोति । तदुल्लिखेदिति तद्भेषजं पीतं चेदुल्लिखेदित्यर्थ. ॥ ८७–८८ ॥

तत्र श्लोकौ ।

इत्येता व्यापदः प्रोक्ताः सर्वा हि सचिकित्सिताः ।
वमनस्य विरेकस्य कृतस्याकुशलैर्नृणाम् ॥ ८९ ॥
एतान्विज्ञाय मतिमानवस्थाश्चैव तत्त्वतः ।
कुर्यात्संशोधनं सम्यगारोग्यार्थी नृणां सदा ॥९०॥

इति चरकसंहितायां सिद्धिस्थाने षष्ठोऽध्यायः ॥ ६ ॥

संग्रहे त्वेता व्यापद इत्यादौ कुर्यात्संशोधनं सम्यगिति संशोधनं दद्यादयथा व्यापदो नोपतिष्ठेयुरित्यर्थ ॥ ८९–९० ॥

इति श्रीचरकसंहितायां श्रीमच्चरकचतुराननश्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायां आयुर्वेददीपिकायां सिद्धिस्थाने वमनविरेचनव्यापत्सिद्धिर्नाम षष्ठोऽध्यायः समाप्त· ॥

## सप्तमोऽध्यायः।

### वस्तिव्यापत्सिद्धिः।

धीधैर्यौदार्यगाम्भीर्यक्षमादमतपोनिधिम्।
पुनर्वसुं शिष्यगणः पप्रच्छ विनयान्वितः॥ १॥
काः कति व्यापदो वस्तेः किं समुत्थानलक्षणाः।
काश्चिकित्सा इति प्रश्नाञ्छ्रुत्वा तानब्रवीद्गुरुः॥२॥
"नातियोगौ क्लमाध्मानौ हिक्का हृत्प्राप्तिरूर्ध्वता।
प्रवाहिका शिरोऽङ्गार्तिः परिकर्तः परिस्रवः॥ ३॥

वमनविरेचनव्यापत्सिद्ध्यनंतरं वस्तिव्यापत्सिद्धिरुच्यते। तत्र वस्तिशब्दो निरूहे एव वर्त्तते। तद्व्यापदामेवात्र वक्तव्यत्वात्। काः कतीत्यादि पंच प्रश्नाः॥ १-२॥ नातियोग इत्यादिना आद्यप्रश्नत्रयस्योत्तरम्। नातियोग इति। एतत् द्वादशव्यापदां विवरणे एव स्फुटार्थो भविष्यति। असम्यग्योगसंभवा इति निरूहस्य अयोगातियोगमिथ्यायोगरूपासम्यग्योगसंभवाः अनेन च समुत्थानप्रश्नस्य सामान्यकारणाभिधानेनोत्तरं दत्तं भवति। अत्र वस्तिप्रयोगस्य सम्यग् योगेन निरूहकार्यदोषहरणस्य अतियोगायोगौ व्यापत्तिरूपौ जन्येते। क्लमादयोपि अतियोगायोगजाता एव विशिष्टहेतुलक्षणचिकित्सिततया इहापि पृथगुच्यंते। यथा संशोधनातियोगायोगगताः आध्मानादयोपि पृथगुक्ताः। केचिन्नातियोगात्क्लमाध्मानेत्यादि तथा द्वौता व्यापदो वस्तेरित्यादि पठंति तत्र पूर्वोक्तायोक्ताव्याख्यानार्थो ज्ञेयः। किंतु पूर्वं एव पाठो निर्व्यूढः॥ ३॥

द्वादश व्यापदो वस्तेरसम्यग्योगसंभवाः।
आसामेकैकशो रूपं चिकित्सां च निबोधत॥ ४॥
गुरुकोष्ठेऽनिलप्राये रूक्षे वातोल्बणेऽपि वा।
शीतोऽल्पलवणस्नेहद्रवमात्रो घनोऽपि वा॥ ५॥
वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन्।
करोति गुरुकोष्ठत्वं वातमूत्रशकृद्ग्रहम्॥ ६॥
नाभिवस्तिरुजं दाहं हृल्लेपं श्वयथुं गुदे।
कण्डूगण्डानि वैवर्ण्यमरुचिं वह्निमार्दवम्॥ ७॥

आसामित्यादौ रूपशब्देनैव वक्ष्यमाणहेतुविशेषो अवरुद्धो ज्ञेयः। येन हेतुरपि व्याधिगमकतया रूपमेव। गुरुकोष्ठ इति, मलपूर्णकोष्ठे। अल्पशब्दो मात्रांतैः प्रत्येकं सबध्यते॥ ४-७॥

तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः।
फलवर्त्योऽथ वा कालं ज्ञात्वा शस्तं विरेचनम्॥८॥
बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्।
सुरादिमूत्रवान्वस्तिः स प्राक् प्रेषितमानयेत्॥९॥

इत्ययोगव्यापच्चिकित्सा।

तत्रेत्यादि उष्णायाः प्रमथ्याया इति अतीसारचिकित्सोक्तप्रमथ्यानां मध्ये उष्णायाः प्रमथ्यायाः प्रयोगः। प्रमथ्येति पाचनकषायस्य आयुर्वेदसमयसिद्धा संज्ञेति प्रतिपादितमेवातीसारचिकित्सायाम्। कालं ज्ञात्वेति विरेचनयोग्यामवस्थां ज्ञात्वा। सुरादिमूत्रवानित्यादिशब्देन सौवीरकादीनां ग्रहणम्। सप्राक् प्रेषित इति वस्तिसूत्रीयोक्तो बलादिर्वस्त्युक्तकल्कयुक्तः। आनयेदित्ययोगकारकं वस्तिमपहरेत्॥ ८-९॥

स्निग्धस्विन्नेऽतितीक्ष्णोष्णो मृदुकोष्ठेऽतियुज्यते।
तस्य लिङ्गं चिकित्सां च शोधनाभ्यां समाचरेत्॥१०॥
पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकं बलाम्।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने॥ ११॥
द्राक्षायाः पक्वलोष्ट्रस्य प्रसादो मधुकस्य च।
विनीय सघृतं वस्तिं दद्याद्दाहेऽतियोगजे॥ १२॥

इत्यतियोगव्यापच्चिकित्सा।

अयोगमभिधाय अतियोगमाह—स्निग्धस्विन्न इत्यादि अतियुज्यत इति अतियोगकारको भवति। शोधनाभ्यां समाचरेदिति वमनविरेचनातियोगोक्तचिकित्सायां समाचरेत्। वक्ष्यतियोगजे दाहे विशिष्टां चिकित्सामाह—पृश्निपर्णामित्यादि। अत्र क्षीरादिषु पंचद्रवेषु कल्कस्य विलयनं द्राक्षादिप्रसादः शीतकषायवत् कृतो ज्ञेयः॥ १०-१२॥

आमदोषे निरूहेण मृदुना दोष ईरितः।
रुणद्धि मार्गं वातस्य हन्त्यग्निं मूर्च्छयत्यपि॥१३॥
क्लमं विदाहं हृच्छूलं मोहवेष्टनगौरवम्।
कुर्यात्स्वेदैर्विरूक्षैस्तं पाचनैश्चाप्युपाचरेत्॥ १४॥
पिप्पलीकत्तृणोशीरदारुमूर्वाशृतं जलम्।
पिबेत्सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम्॥ १५॥
वचानागरसर्जेला दधिमण्डेन मूर्च्छिताः।
पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा॥ १६॥
दारु त्रिकटुकं पथ्यां पलाशं चित्रकं शटीम्।
पिष्ट्वा कुष्ठं च मूत्रेण पिबेत्क्षारांश्च दीपनान्॥१७॥
वस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम्।
समूत्रमथवा व्यक्तलवणं मधुतैलिकम्॥ १८॥

इति क्लमव्यापच्चिकित्सा।

आमदोष इत्यादिना क्लममाह—आमदोषे सति दत्तेन निरूहेण ईरितो दोष इति योज्यम्। दोषशब्देन चात्र पित्तकफौ आमसहितौ मार्गावरकौ ज्ञेयौ। मूर्च्छयतीति मार्गरोधात् कोपयति। मार्गं रुणद्धीति देहे स्रोतांसि रुणद्धि। ये तु दोषशब्देनेह कफं ग्राहयंति तन्मते क्लमस्य सविदाहत्वमनुपपन्नम्। वचेत्यादौ मूर्छिता इति आलोडिताः। क्षारांश्च दीपनानिति ग्रहणीचिकित्सितायुक्तान्। दशमूलिकमिति द्विपंचमूलेत्यादिनोक्तम्। किंवा दशमूलक्वाथकृतम्। मधुतैलिकं वक्ष्यमाणम्॥ १३-१८॥

अल्पवीर्यो महादोषे रूक्षे क्रूराशये कृतः।
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात्समीरणम्॥१९॥

स विमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम् ।
विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥ २० ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ।
फलश्यामादिभिः कुष्ठकृष्णालवणसर्षपैः ॥ २१ ॥
धूममापवचाग्निवक्षारचूर्णैर्गुडैः कृताम् ।
कराङ्गुष्ठनिभां वर्तिं यवमध्यां निधापयेत् ॥ २२ ॥
स्वभ्यक्तस्विन्नगात्रस्य तैलाक्तां तेऽपि ते गुदे ।
अथ वा लवणागारधूमसिद्धार्थकैः कृताम् ॥ २३ ॥
बिल्वादिना निरूहः स्यात्पीलुसर्षपमूत्रवान् ।
सरलामरदारुभ्यां सिद्धं चैवानुवासनम् ॥ २४ ॥
इत्याध्मानव्यापच्चिकित्सा ।

स्वल्पवीर्य इत्यादिना आध्मानमाह—रुद्धमार्ग इति निवारिताधोमार्गः। स चानिलं रुणद्धि। अथ पथ रुद्धमार्गतया आध्मानं करोति। मर्मपीडनमित्याध्मानविशेषणम्। रुणद्धि हृदयमिति हृदयं व्याप्नोति। श्यामाफलादिभिरिति श्यामादिभिर्नवभिः फलादिभिश्च कल्पस्थानोक्तैः। धूमशब्देनेह गृहधूमग्रहणम्। गुडस्यात्र तावन्मानं भवति यावता वर्तिं कर्तुं युज्यते। भिन्नमानं च तत्र तत्र गुडस्य पृथक्पलम्। कराङ्गुष्ठनिभामित्यत्र कराङ्गुष्ठः पादाङ्गुष्ठनिषेधार्थम्। अथ वेत्यादिनोक्ता द्वितीयवर्तिमाह—तत्र वर्तित्वनिश्चयार्थं गुड योज्यः। बिल्वादिना च निरूह इति निरवमूल त्रिवृद्दारु यवकोलकुलत्थवानित्यादिनोक्तः। सरलेत्यादौ सिद्धमित्यत्र तैलमिति शेषः ॥ १९–२४ ॥

मृदुकोष्ठेऽबले वस्तिरतितीक्ष्णोऽतिनिर्हरन् ।
कुर्याद्धिक्कादिकं तत्र हिक्काघ्नं बृंहणं च यत् ॥२५॥
बलास्थिरादिकाश्मर्यत्रिफलागुडसैन्धवैः ।
सप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत् ॥२६॥
कृष्णालवणयोरक्षं पिबेदुष्णाम्बुना युतम् ।
धूमलेहरसक्षीरस्वेदाश्चान्नं च वातनुत् ॥ २७ ॥
इति हिक्काव्यापच्चिकित्सा ।

मृद्वित्यादिना—हिक्कामाह—अतिनिर्हरन्नित्यतियोगेन दोषान् निर्हरन्। हिक्काघ्नमिति—हिक्काचिकित्सितोक्तं भेषजम्। हिक्काया च यद्यपि प्रसक्तछर्दिनिष्ठीविकाश्च सहिक्कातीनामूर्ध्वीभूतो वायुरूर्ध्वं वस्तिं नयेदित्यनेन वस्तिर्निषिद्धः। तथापि विनिश्चया हिक्कायामनुवासनस्य हितत्वात् बलास्थिरादीत्यादिना अनुवासनमवचम्। वातनुदितिविभक्तिविपरिणामेन धूमादिभिर्योजनीयम्। तेन वाते हितानामेव धूमादीनामत्र प्रयोगः ॥ २५—२७ ॥

अतितीक्ष्णः सवातो वा न वा सम्यक् प्रपीडितः ।
वस्तिर्हृदयं वस्तिस्तत्र कालक्षणोत्कटैः ॥ २८ ॥
स्यात्साम्ललवणस्कन्धकरीरबदरीफलैः ।
शृतैर्वस्तिर्हितः सिद्धं वातघ्नं चानुवासनम् ॥२९॥
इति हृद्गतव्यापच्चिकित्सा ।

अतितीक्ष्ण इत्यादिना हृद्गतमाह—सवातत्व वस्तेर्निःनेपरानादिना ज्ञेयम्। असम्यक्पीडितमेव अतिप्राप्तिजनकतया ज्ञेयम्। लवणस्कन्धो रोगमिषग्जातीयोक्तः। वातघ्नैरिति दशमूलादिभिः ॥ २८—२९ ॥

वातमूत्रपुरीषाणां दत्तवेगान्निगृह्णतः ।
अति वा पीडितो वस्तिर्मुखेनायाति वेगवान् ॥३०॥
मूर्च्छाविकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम् ।
सिञ्चेत्पार्श्वोदरं चाधः प्रमृज्याद्वीजयेच्च तम् ॥३१॥
केशेष्वालम्ब्य चाकाशे धनुषा त्रासयेच्च तम् ।
खराश्वगजसिंहैः राजप्रेष्यैस्तथोरगैः ॥ ३२ ॥
उल्काभिरेवमन्यैश्च वस्तिमस्य न्यसेदधः ।
वस्त्रपाणिग्रहैः कण्ठो रुध्यान्न म्रियते यथा ॥३३॥
प्राणोदाननिरोधाद्धि प्रसिद्धतरमार्गगः ।
अपानः पवनो वस्तिं तमाश्वेवापकर्षति ॥ ३४ ॥
ततः क्रमुककल्काक्षं पाययेताम्लसंयुतम् ।
औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च वस्तिं चास्यानुलोमयेत् ॥३५॥
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥ ३६ ॥
बिल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।
शिरःस्थे नावनं धूमः प्रच्छायं सर्षपैः शिरः ॥३७॥
इत्यूर्ध्वव्यापच्चिकित्सा ।

वातमूत्रेत्यादिना ऊर्ध्वगमाह—दत्ते इति वस्तौ दत्ते ऊर्ध्वं गच्छतो वस्तेर्मूर्छारूपविकारं दृष्ट्वा शीताम्बुसेचनादि कर्तव्यम्। त्रासयेत्खरादिभिरिति ज्ञेयम्। एवमन्यैरिति अनुक्तैरपि त्रासनप्रकारैः। कण्ठावरोधो यथाकर्तव्यस्तद् ह—न म्रियते यथेति। कण्ठरोधप्रयोजनमाह—प्राणोदाननिरोधाद्धि प्रसिद्धेतरमार्गग इत्यादि कण्ठग्रहेण प्राणोदाननिरोधात् प्रसिद्धेतरमार्गगोऽपानपानो भवति। गुदप्रवर्तनस्वरूपो भवतीत्यर्थः। ततश्च वस्तिमूर्ध्वं प्रमथो नयति। प्राणोदाननिरोधेन तु प्राणोदानाभ्यां पीडितो अपानः गुदमार्गगामी भवतीति विज्ञेयम्। केचित्तु यावत्प्राणोपरोधाद्धेति पठति। तत्र प्राणोपरोधो यावत् तावत् कण्ठपीडनं कर्तव्यमित्यर्थः। क्रमुकं पूगफलं शिरस्थेति वस्तेःकरदेशे शिरसि स्थिते सति। प्रच्छायमित्यालेपनीयम् ॥ ३०—३७ ॥

स्निग्धस्विन्ने महादोषे वस्तिर्मृद्वल्पभेषजः ।
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ॥ ३८ ॥
स वस्तिः पायुशोफाय जङ्घोरुसदनाय च ।
निरुद्धमारुतो जन्तुरभीक्ष्णं संप्रवाहते ॥ ३९ ॥
स्वेदाभ्यङ्गान्निरूहांश्च शोधनीयानुलोमिकान् ।
विदध्याल्लङ्घयित्वा तु वृत्तिं कुर्याद्विरिक्तवत् ॥४०॥
इति प्रवाहिकाव्यापच्चिकित्सा ।

स्निग्धस्विन्नेत्यादिना प्रवाहिकामाह—प्रवाहिकामतीसारोक्तलक्षणयुक्तां प्रवाहिका जनयति। शोधनीयानुलोमिका-

नित्यत्र शोधनीयानि त्रिवृतादिशोधनद्रव्ययुक्तानि आनुलोमिकानित्यानुलोमनक्षीरेक्षुरसयुक्तान्। वृत्तिमिति पेयादिक्रमम्॥ ३८—४०॥

दुर्बले तीव्रदोषे च दुष्कोष्ठे च तनुर्मृदुः।
शीतोऽल्पश्चावृतो दोषैर्वस्तिस्तद्विहतोऽनिलः॥४१॥
मार्गैर्गात्राणि सन्धावन्नूर्ध्वं मूर्धन्युपाहितः।
ग्रीवां मन्ये च गृह्णाति शिरः कण्ठं भिनत्ति च।
वाधिर्यं कर्णनादं च पीनसं नेत्रविभ्रमम्॥ ४२॥
कुर्यादभ्यञ्जनं तैलल्वणेन यथाविधि।
युञ्ज्यात्प्रधमनैर्नस्यैर्धूमैरास्यं विरेचयेत्।
तीक्ष्णानुलोमिकेनाथ स्विन्नं भुक्तेऽनुवासयेत्॥४३॥
स्नेहस्वेदैरनापाद्य गुरुतीक्ष्णातिमात्रया।
यस्य वस्तिः प्रयुज्येत नातिमात्रं प्रयुज्यते॥ ४४॥
स्तब्धोदावृत्तकोष्ठस्य रुद्धः स्रोतःसु मारुतः।
प्रपन्नोऽङ्गरुजं कुर्यात्तं तैललवणान्वितम्।
उष्णाम्बुप्रस्तरक्वाथैः स्वेदैस्तमुपपादयेत्॥ ४५॥
सविल्वतैललवणो निरूहस्तस्य शस्यते।
तैलावगाहस्विन्नस्य कारयेदनुवासनम्॥ ४६॥
अभ्यज्य विधिना सम्यक् स्निग्धं कायं ततः परम्।
विरेचनैर्निरूहैश्च वस्तिभिश्चानुलोमिकैः॥ ४७॥
इति शिरःशूलव्यापच्चिकित्सा।

दुर्बलेत्यादिना शिरोर्तिमाह—तद्विहत इति निरूढवस्तिप्रकोपितः। ऊर्ध्वं मूर्धन्युपाहितमिति ऊर्ध्वमनुसरन् मूर्ध्नि विहन्यते। केचिद् नं विधाविति पठंति। तेनोपर्युपरि धावतीत्यर्थः। विरेचयेदिति वा शेषः। अमुं विरेचयेदिति वा पाठः। तीक्ष्णानुलोमिके अते अनुभुक्ते सति अनुवासयेदिति योज्यम्। किंवा तीक्ष्णानुलोमिकेनैवानुवासनसाध्यमित्यर्थः। स्नेहस्वेदैरनापाद्येति स्नेहस्वेदै॰ शरीर नोपपाद्यम्॥ ४१—४७॥

सुस्विन्नस्निग्धदेहस्य यस्य वस्तिर्विधीयते।
अतितीक्ष्णो गुरुश्चैव सोऽतिमात्रं प्रवर्तयेत्॥४८॥
स्रुतेषु तस्य दोषेषु निरूढस्यातिमात्रशः।
स्तब्धोदावृत्तकोष्ठस्य वायुः संप्रति हन्यते॥ ४९॥
विलोमनसमुद्धतो रुजत्यङ्गानि देहिनः।
गात्रवेष्टननिस्तोदभेदस्फुरणजृम्भणैः॥ ५०॥
तं तैललवणाभ्यक्तं सेचयेदुष्णवारिणा।
एरण्डपत्रनिष्क्वाथैः प्रस्तरैश्चोपपादयेत्॥ ५१॥
यवान्कुलत्थान्कोलानि पञ्चमूले तथोभये।
जलाढकद्वये पक्त्वा पादशेषेण तेन च।
कुर्यात्सविल्वतैलोष्णलवणेन निरुहणम्॥ ५२॥
निरुहणसमाश्वस्तं द्रोण्यां समवगाहयेत्।
ततो भुक्तवतस्तस्य कारयेदनुवासनम्।
यष्टीमधुकतैलेन विल्वतैलेन वा भिषक्॥ ५३॥
इत्यङ्गशूलव्यापच्चिकित्सा।

सुस्विन्नस्निग्धदेहस्येत्यादिनाङ्गग्रहमाह—सोतिमात्रं प्रवर्तयेत्। दोषानिति शेषः। ततस्तब्धोदावृत्तकोष्ठस्य स्रोतःसु रुद्धो मारुतोंगरुजा करोति। भुक्तवतो यद्यपि अनुवासनं सर्वत्र भवति तथापि भुक्तवत इति वचनेन भोजनानतरमेवानुवासनं दर्शयति॥ ४८—५३॥

मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णोऽतिमात्रवान्।
वस्तिर्दोषान्निरस्याशु जनयेत्परिकर्तिकाम्॥ ५४॥
त्रिकवङ्क्षणवस्तीनां तोदं नाभेरधो रुजम्।
विवन्धाल्पाल्पमुत्थानं गदनिर्लेखनं भवेत्॥ ५५॥
स्वादुशीतौषधैस्तत्र पय इक्ष्वादिभिः शृतम्।
यष्ट्याह्वतिलकल्काभ्यां वस्तिः स्यात्क्षीरभोजिनः॥५६
ससर्जरसयष्ट्याह्वजिङ्गिनीकर्दमाञ्जनम्।
विनीय दुग्धे वस्तिःस्यात्तिक्ताम्लमृदुभोजिनः॥५७॥
इति परिकर्तव्यापच्चिकित्सा।

मृद्वित्यादिना परिकर्तिकामाह—रूक्षतीक्ष्णोतिमात्रवानिति रूक्षेण तीक्ष्णेनातिमात्रेण वस्तिनाकर्षणात्। तिक्ताम्ल इति वस्तिविशेषणम्॥ ५४—५७॥

पित्तरक्तेऽम्ल उष्णो वा तीक्ष्णो वा लवणोऽथ वा।
वस्तिर्लिखति पायुं त तीक्ष्णोऽति विदहत्यपि॥५८॥
स विदग्धः स्रवत्यस्रं पित्तं चानेकवर्णवत्।
सार्यते वहुवेगेन मोहं गच्छति चासकृत्॥ ५९॥
आर्द्रशाल्मलिवृन्तैस्तु क्षुण्णैराजं पयः शृतम्।
सर्पिषा योजितं शीतं वस्तिमस्मै प्रदापयेत्॥६०॥
वटादिपल्लवेष्वेष कल्पो यवतिलेषु च।
सुवर्चलोपोदिकयोः कर्बुदारे च शस्यते॥ ६१॥
गुदे सेकाः प्रदेहाश्च शीताः स्युर्मधुराश्च ये।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते॥ ६२॥
इति परिस्रवव्यापच्चिकित्सा।

पित्तरक्तेत्यादिना परिस्रवमाह—तीक्ष्णोतिविदहत्यपि अतिविदाहं करोति। आर्द्रशाल्मलीवृंतः कल्पोक्त संस्कारः। सुवर्चलमिति सुनिषण्णकमाह। कर्बुदारः काचनारः॥५८-६२॥

तत्र श्लोकाः।

इत्येता व्यापदः प्रोक्ता वस्तेः साकृतिभेषजाः।
बुद्ध्वा कार्त्स्न्येन तान्वस्तींन्नियुञ्जन्नापराध्यति॥६३॥
तीक्ष्णत्वं मूत्रविल्वादिलवणक्षारसर्षपैः।
प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथा॥ ६४॥
आपादतलमूर्धस्थान्दोषान्पक्वाशये स्थितः।
वीर्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव॥ ६५॥
यद्वत्कुसुम्भसंमिश्रात्तोयाद्रागं हरेत्पटः।
तद्वद्द्रवीकृतात्कायान्निरूहो निर्हरेन्मलान्॥ ६६॥

इति चरकसंहितायां सिद्धिस्थाने सप्तमोऽध्यायः।

इत्येता इत्यादिसंग्रहः—यस्मादेता व्यापदो वस्तिदुष्प्रयोगजन्या भवंति तस्मात्कार्त्स्न्येन वस्तीन् बुद्ध्वा नियुंजन्नापरा-

प्यति। वस्तिव्यापदं नानाप्रदर्शनीयत्वं। सपनि वस्तीनां मृदुत्वं तीक्ष्णत्वं तत्र तत्र विहितं। दर्शनार्थं मार्दवतीक्ष्णत्वकारकद्रव्यगणमाह—पीलु श्रोत्रापर्णी कफलम्। पीलुस्थाने केचिद्बिल्वं पठन्ति। प्राप्तकालमिति दत्तावस्थं कार्यमाह—पक्वाशये स्थित इति पक्वाशयगत एवादत्ते। वीर्येणेति शक्त्या एवंभूतं वीर्यं ... तेन पाचनादिप्रयोगाणां वस्तिवत्तदन्तरेव सकलदेहगतदोषविजेतृत्वं भवति। सत्त्वेति आकाशगतः। सुश्रुतेऽप्युक्तं—"वीर्येण वस्तिरादत्ते दोषानापादमस्तकात्। पक्वाशयस्थो भूमिष्ठं रविरम्बरस्थानिव।" वस्ते शरीरे मलप्रमादसहितेऽपि यथा मलाशमाद्रहारकत्वं भवति। तदृष्टान्तेन दर्शयन्नाह—यद्वदित्यादि—द्रवीकृतादिनिस्नेहस्वेदार्द्रीकृतान्॥ ६६–६६॥

इति श्रीमच्चरकचतुराननश्रीचक्रपाणिदत्तविरचितायां आयुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने वस्तिव्यापत्सिद्धिर्नाम सप्तमोऽध्यायः समाप्तः॥ ७॥

---

## अष्टमोऽध्यायः।

### प्रसृतयोगिका सिद्धिः।

**"अथेमान्सुकुमाराणां निरूहान्स्नेहनान्मृदून्।**
**कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक्॥१॥**
**क्षीराद्द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः।**
**खजेन मथितो वस्तिर्वातघ्नो बलवर्णकृत्॥ २॥**
**एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषः।**
**बिल्वादिमूलक्वाथाद्द्वौ कौलत्थाद्द्वौ स वातनुत्॥३॥**
**पञ्चमूलरसात्पञ्च द्वौ तैलात्क्षौद्रसर्पिषोः।**
**एकैकः प्रसृतो वस्तिः स्नेहनीयोऽनिलापहः॥ ४॥**

सम्प्रति वस्तिव्यापत्प्रशमकनिरूहकथनप्रसङ्गागता प्रसृतयोगिका सिद्धिरुच्यते—प्रसृतोपलक्ष्यतायोगास्तानधिकृत्य कृता सिद्धिः। अथेमानित्यग्रे वक्ष्यमाणान्। तेनाध्याये शेषवक्तव्यान् सुकुमार इति तन्त्रादिगुणसवद्धं भवति। प्रसृतं पलद्वयम्। मधुतैलघृतात्त्रय इति विलीनात्। अत्र च यथोक्तैरेव द्रव्यैर्वस्तिर्देयः। तेनेतरवस्तिन्यायेनानुक्तकल्कादिकल्पनात्रानुमता। तेन यत्र मानद्रव्यविभागेन वस्त्यभिधानं तत्र सामान्यवस्तिद्रव्यमानानवकाशः। यत्र त्वेकदेशकथनं तत्र निरूहयोगोक्तद्रव्यमानाविकार इति। बिल्वादिमूलं दशमूलम्। सवातनुदिति स वस्तिर्वातनुत्॥१—४॥

**सैन्धवार्धाक्ष एकैकः क्षौद्रतैलपयोघृतात्।**
**प्रसृतौ हपुषाख्याच्च निरूहः शुक्रकृत्परः॥ ५॥**
**पटोलनिम्बभूनिम्बरास्नासप्तच्छदाम्भसः।**
**चत्वारः प्रसृता एको घृतात्सर्षपकल्कितः॥ ६॥**
**निरूहः पञ्चतिक्तोऽयं मेहाभिष्यन्दकुष्ठनुत्।**
**विडङ्गत्रिफलाशिग्रुफलमुस्ताखुपर्णितः॥ ७॥**

हपुषाक्वाथात्। पटोलेत्यादौ अम्भस इति क्वाथात्। सर्षपकल्कितेत्यत्र यद्यपि कल्कमानं नोक्तं तथापि द्वादशप्रसृते निरूहे द्विपलकल्कस्य विहितत्वादिह पञ्चप्रसृतानुसारेण पञ्चभागोऽन पलं भवति। एवमन्यत्राप्युक्तमाने कल्कव्यवस्था॥ ५—७॥

**कषायात्प्रसृताः पञ्च तैलादेको विमथ्य तान्।**
**विडङ्गपिप्पलीकल्कान्निरूहः क्रिमिनाशनः॥ ८॥**

विडङ्गेत्यादौ फलं मदनफलम्। आखुपर्णी दंती॥ ८॥

**पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषः।**
**एकैकः प्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत्॥९॥**
**चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात्।**
**प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनाः॥ १०॥**

पयस्येत्यादौ यद्यपि पयस्यादीनां क्वाथो न श्रूयते तथापि ग्रन्थान्तरेण एकैकप्रसृतविधानात् प्रत्येकं पयस्यादिक्वाथस्य प्रसृतमानत्वम्। वृषत्वकृदिति शुक्रवृद्धिकृत्॥ ९—१०॥

**श्वदंष्ट्राश्वभिदेरण्डरसात्तैलात्सुरासवात्।**
**प्रसृताः पञ्चयष्ट्याह्वात्कौन्ती मागधिका सिता॥११॥**
**कल्को वस्तिस्तु सानाहे मूत्रकृच्छ्रे परो मतः।**
**एते सलवणाः कोष्णा निरूहाः प्रसृता नव॥१२॥**

श्वदंष्ट्रेत्यादौ श्वदंष्ट्रादिद्रव्यत्रयक्वाथस्य प्रत्येकं प्रसृतमानत्वम्। एवं तैलसुरासवप्रसृताभ्यां सह पंचप्रसृताः पूरणीयाः। सुराकृतासवः सुरासवः॥ ११—१२॥

**मृदुवस्तौ जडीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते।**
**तीक्ष्णैर्विकर्षितैः स्वादु प्रत्यास्थापनमिष्यते॥ १३॥**

एतदुक्तमृदुवस्तिप्रयोगाणामन्ते कर्तव्यमाह—मृदुवस्तीत्यादि। स्वादु प्रत्यास्थापनमिष्यते इत्यत्र स्वादुद्राक्षादिद्रव्यकृतम्। केचित्तदहरेव प्रत्यास्थापनमिच्छन्ति। आस्थापन लक्षीकृत्य दीयत इति प्रत्यास्थापनम्॥ १३॥

**वातोपसृष्टस्योष्णैः स्युर्गुददाहादयो यदि।**
**द्राक्षाम्बुना त्रिवृत्कल्कं दद्याद्दोषानुलोमनम्॥१४॥**
**तद्धि पित्तशकृद्वातान्हत्वा दाहादिकाञ्जयेत्।**
**शुद्धश्चापि पिबेच्छीतां यवागूं शर्करायुताम्॥१५॥**
**अथवातिविरिक्तः स्यात्क्षीणविट्कः स भक्षयेत्।**
**माषयूषेण कुल्माषान्पिबेद्ध्यथवा सुराम्॥ १६॥**

वातोपसृष्टस्येत्यादौ उष्णैरिति वस्तिविशेषणम्। दाहादयो दाहमोहादयो वातपित्तजन्याः। द्राक्षाम्बुना त्रिवृत्पानस्य दाहादिकारके पित्ते वाते च विहितत्वं दर्शयन्नाह—तद्धीत्यादि॥ १४–१६॥

**सामं चेदतिसार्येत शूलारोचकवान्नरः।**
**स तदा हपुषाकुष्ठनतदारुवचाः पिबेत्॥ १७॥**

बस्तिमिथ्याप्रयोगोदीरितानतीसारभेदान् सचिकित्सितानाह-सामं चेत्यादि सामं यथा सरति तथानुपविशेदिति । पलादि-व्यतिरिक्तामसात्रोपवेशरूपो य आमातिसारः केवलाम शकृद्वातरक्तपित्तकफजन्यानामिह षण्णामतीसाराणां वक्तव्याना प्रथम उक्तो भवति । कुणपमिति शवगंधि । शूलैर्युक्त इति शेषः । घनं मुस्तम् ॥ १७ ॥

**शकृद्वातमसृक् पित्तं कफं वा योऽतिसार्यते ।**
**पक्वस्तत्र स्ववर्गीयैर्बस्तिः श्रेष्ठं भिषग्जितम् ॥ १८ ॥**

केवलं शकृतादिजन्यानतीसारानाह—शकृद्वातमित्यादि पक्व-मिति निरामम् । आमशब्देन चेहाग्निदौर्बल्यादपाचिताहाररस एव कोष्ठे तिष्ठति स आमो गृह्यते । यदुक्तमन्यत्र । "आमा-शयस्थः कायाग्नेर्दौर्बल्यादपाचित । आद्य आहार-धातुर्यः स आम इति सञ्ज्ञित" इ ॥ स्ववर्गीयैरिति पुरीषसंग्र-हणवातशोणितास्थापनपित्तकफहरभेषजैस्स्ववर्गीयैः किंवा तत्र तत्र प्रत्येकं शकृद वक्ष्यमाणभेषजै ॥ १८ ॥

**षण्णामेषां द्विसंसर्गास्त्रिशङ्भेदा भवन्ति ते ।**
**केवलैः सह चैर्बह्मशद्वियात्सोपद्रवानपि ॥ १९ ॥**

अतीसारभेदानाह—षण्णामेषामित्यादि । एषामित्यभिधा-नादन्ये बस्तिविभ्रंशादिजन्या अतीसारा भवंतीति वदंति । पूर्वव्याख्यानमेवात्र साधु ॥ १९ ॥

**शूलप्रवाहिकाध्मानपरिकर्तारुचिज्वरान् ।**
**सतृष्णादाहमूर्च्छोत्तांश्चैषां विद्यादुपद्रवान् ॥२०॥**

उपद्रवांश्चैषामाह—शूलेत्यादि ॥ २० ॥

**तत्रामे वमनं कार्यं व्योषाम्ललवणैर्युतम् ।**
**पाचनं शस्यते बस्तिरामे न प्रतिषिध्यते ॥ २१ ॥**

यथोक्तातीसारेषु चिकित्सामाह—तत्रामेत्यादि पाचनमि-त्यनेन पूर्व सघनातिविषेत्याद्युक्त पाचनं गृह्यते । व्योषाम्ल-लवणैर्युतमिति व्योषलवणयोगेन कृतम् ॥ २१ ॥

**वातघ्नग्राहिवर्गीयैर्बस्तिः शकृति शस्यते ।**
**स्वाद्वम्ललवणैः शस्तः स्नेहबस्तिः समीरणे ॥२२॥**

वातघ्नेत्यादौ वातघ्न दशमूलम् । ग्राहिवर्गाश्च षड्विरेचन-शत श्रितीयोक्ता एव । तत्र जतूकर्णः कृतातिशोफघ्नग्राहि-भिर्बस्तिमिरिति शोफघ्नं च दशमूलमेव । स्वाद्वम्ललवणैस्स्ने-हबस्तिः स्वादुद्रव्यसाधितस्नेहकृतमन्वासनमित्यर्थः । समीरण इति । केवले वातातीसारे ॥ २२ ॥

**रक्ते रक्तेन पित्तं तु कषायस्वादुतिक्तकैः ।**
**सार्यमाणे कफे बस्तिः कषायकटुतिक्तकैः ॥ २३ ॥**

रक्ते रक्तेन वेति सरक्ते अतीसार्यमाणे रक्तेन बस्तिर्देयः । पित्तेनातिसार्यमाणे कषायादिकृतो बस्तिरेव ॥ २३ ॥

**शकृता वायुना चामे तेन वर्चस्यथानिले ।**
**संसृष्टेऽन्तरपानं स्याद्व्योषाम्ललवणैर्युतम् ॥ २४ ॥**

**पित्तेनामेऽसृजा वापि तयोरामेन वा पुनः ।**
**संसृष्टयोर्भवेत्पानं सव्योषकटुतिक्तकम् ॥ २५ ॥**
**तथामे कफसंसृष्टे कषायव्योषतिक्तकम् ।**
**आमे तनुकफे व्योषकषायलवणैर्युतम् ।**
**वातेन विषि पित्ते वा विट्पित्ते च तथानिले ॥२६॥**
**मधुराम्लकषायः स्यात्संसृष्टे बस्तिरुत्तमः ।**
**शकृच्छोणितयोः पित्तशकृतो रक्तपित्तयोः ॥ २७ ॥**
**बस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः ।**
**कफेन विषि पित्ते वा कफे विट्पित्तशोणितैः॥२८॥**
**व्योषतिक्तकषायः स्यात्संसृष्टे बस्तिरुत्तमः ॥२९ ॥**
**स्याद्बस्तिर्व्योषतिक्ताम्लः संसृष्टे वायुना कफे ।**
**मधुरव्योषतिक्तस्तु रक्ते कफविमिश्रिते ॥ ३० ॥**
**मारुते कफसंसृष्टे व्योषाम्ललवणो भवेत् ।**
**बस्तिर्वातेन रक्ते तु कार्यः स्वाद्वम्लतिक्तकः ॥३१॥**

संसर्गे चिकित्सामाह—शकृतेत्यादि । शकृता प्रधानेन संसृष्टे तथा वायुना चामे संसृष्टे तेनेत्यामेन अप्रधानेन वर्चसि अनिलेन पृथक् संसृष्टे तेनेति पूर्ववद्व्याख्येयम् । अत्र संसर्गेषु तृतीयया निर्दिश्यमानतया अप्रधानं सप्तमीनिर्दिष्टं प्रधानबहुमानत्वात्प्रधानं नेयम् । तयोरिति पित्तासृजोः । संसृष्टयोरिति प्रत्येकमामेन युक्तयोः । व्योषलवणकषायैर्युत-मित्यत्र यावदंतरपानमितीत्यनुवर्तते । वातेन विषीत्यादौ कषायमधुरो बस्तिरिति कषायादिद्रव्यक्वाथादिकृतो बस्तिर्देय इत्यर्थः । शकृच्छोणितयोरित्यादौ अन्योन्यसंसर्गे सति शकृता शोणिते शोणितेन शकृति संसृष्टे सति । एवं पित्तशकृतो रक्तपित्तयोश्च द्विविधः संसर्गो व्याख्येयः । विट्पित्तशोणि-तैरिति प्रत्येकं विडादिभिः कफे संसृष्टे कफविमूर्छित इति कफेन अप्रधानेन संसर्गः ॥ २८–३१ ॥

**त्रिचतुःपञ्चषड्योगानेवमेव विकल्पयेत् ।**
**युक्तिश्चैषातिसारोक्ता सर्वरोगेष्वपि स्मृता ॥३२॥**

संसर्गचिकित्सा सूत्रयन्नाह—त्रिचतुरित्यादि त्रिचतुःपंच-संसर्गानित्यामादीनामेकद्वित्रिचतुःपंचषड्रूपान् संसर्गानेवमेव विकल्पयेदिति प्रधानादिमेलकेन कल्पयेत् । तथा भेष-जमपि तेषां यथोक्तभेषजानुसारेण कल्पयेदित्यर्थः । एते च भेदा लिख्यमाना बहुप्रभेदतया गौरवमापादयंति स्वयं च बुद्धिमता भिषजा ऊहनीया इति न लिख्यंते । एवं संसर्ग-कृतरोगानन्यत्रापि बुद्ध्या तर्कनीया इत्याह—सर्वरोगेष्वपि स्मृतेतीयं व्यवस्था सर्वरोगेष्वेव यथासंभवं कार्या । तत्र ग्रहणीगदे यत्र संभवंति तत्रैव संसर्गाः प्रकल्प्यंते । यत्र यत्र च त्रयो दोषाः संभवंति तत्रैव संसर्गाः प्रकल्प्यंते । शोणि-तेन समं चत्वारस्तत्र तेषामेव परस्परसंसर्गो भेषजोपयोगार्थं भिषजा कल्पनीयः ॥ ३२ ॥

**युगपत्षड्रसं षण्णां संसर्गे पाचनं भवेत् ।**
**निरामाणां च पक्वानां बस्तिः षाड्रसिको मतः ३३**

आमादिषट्कसमुदाय प्रसङ्गे कार्यमाह—युगपदिति ए-कदैव मिलितानां षण्णामिति। षड्रसमिलितमिति षड्रस-कृतं निरामाणामेव शकृदादीनां पंचानां पार्ष्णिक इति षड्-रसमेलकेन कृतः॥ ३३॥

उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः।
शङ्खं सर्जरसं ब्राह्मीं कर्दमं च पलांशिकम्॥ ३४॥
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत्।
अतीसारेषु सर्वेषु पेयमेतद्यथाबलम्॥ ३५॥
कच्छुराधातकीबिल्वसमङ्गारक्तशालिभिः।
मसूराश्वत्थशुङ्गैश्च यवागूः स्याज्जले शृतैः॥ ३६॥
बालोदुम्बरकट्वङ्गसमङ्गाप्लक्षपल्लवैः।
मसूरधातकीपुष्पबलाभिश्च तथा भवेत्॥ ३७॥
स्थिरादीनां बलादीनामिक्ष्वादीनामथापि वा।
क्वाथेषु समसूराणां नवारिष्टाः पृथक् पृथक्॥३८॥
कच्छुरामूलशाल्यादितण्डुलैश्चापि साधिताः।
दधितक्रारनालाम्लक्षारेष्विक्षुरसेऽपि वा॥ ३९॥
शीताः सशर्कराः क्षौद्राः सर्वातीसारनाशनाः।
ससर्पिर्मरिचाजाजीमधुरा लवणाः शिवाः॥४०॥

सर्वातिसारसाधारणं भेषजमाह—उदुम्बरेत्यादि। कच्छुरा-मित्यपरे। जले शृतैरिति षडङ्गविधानेन जले शृतैः। बालो-दुम्बरकट्वङ्गैर्यवागूर्भवेत्। स्थिरादीनामिति तृण-पञ्चमूलप्रभृतीनां शरवर्जितानां। इक्ष्वादीनां कुशकाशमूला-नाम्। शाल्यादितण्डुलैरिति रक्तशालिकलमादितण्डुलैः। दध्या-दिभिरत्र जलस्थानीयैर्यवागूः साधनीया॥ ३४–४०॥

भवन्ति चात्र।

स्निग्धाम्ललवणमधुरं पानं बस्तिश्च मारुते कोष्णः।
शीतं तिक्तकषायं मधुरं पित्ते च रक्ते च॥ ४१॥
तिक्तोष्णकषायकटु श्लेष्मणि संग्राहि वातनुच्छकृति।
पाचनमा[म]पानं पिच्छासृग्बस्तयो रक्ते॥ ४२॥
अतिसारं प्रत्युक्तं मिश्रं द्वन्द्वामयोगजेष्वपि च।
तत्रोद्रेक[वि]शेषाद्दोषेषूपक्रमः कार्यः॥ ४३॥"
प्रावृतिकाः सव्यापत्क्रियानिरू[ह]ास्तथातिसारहिता
रसकल्पघृतयवाग्वश्चोक्ता गुरुणा प्रसृतसिद्धौ॥ ४४

इति चरकसंहितायां सिद्धिस्थानेऽष्टमोऽध्यायः॥ ८॥

प्रपंचनोक्तं भेषजं संग्रहेणाभिधास्यन्नाह—भवन्ति चात्रेति। पानमिति यवाग्वादिपानम्। बस्तिश्चेति स्निग्धाम्ललवणमधुर एव बस्तिः। मारुते इति मारुतातिसारे एवमन्यत्रापि पित्तेत्यादौ पित्तजातिसारे इति ज्ञेयम्। संग्राहि वातनुदिति भेषजमिति शेषः। तच्च भेषजं यथोक्तवस्त्वादिरूपमेव। पाच-नमामे पानमिति घनातिविषादिद्रव्यकृतं पानमित्यर्थः। पिच्छा-बस्तयोऽसृग्बस्तयश्चेति पिच्छासृग्बस्तयः। मिश्रमिति। एत-देव प्रत्येकं मिश्रीकृतम्। द्वंद्वादियोगज इति त्रिचतुष्कादि-संसर्गजे अतीसारे। उक्तमिति साक्षादतिदेशेनैव त्रिकादि-संसर्गे प्रक्रमम्। तत्रोद्रेकादिविशेषादिति। संसर्गबलाबलविशे-षादुपक्रमे ऽपि विशेषो भवति एतदेव बलापेक्षया देयम्। दुर्बलाय स्तोकमेषजमिति शेषः। प्रावृतिका इत्याद्यध्याया-संग्रहः। सव्यापत्क्रिया इति व्यापदश्च मृदुबस्तिकृतजा उक्ताः। तथा क्रिया च तासामेव व्यापदि उक्ताश्चातिसारे चिकि-त्सिते प्रोक्ता। रसकल्पश्चातिसारेषु रसोद्देशोपि चिकित्सया कृतः। घृतं चोदुंबरेत्यादिनोक्तम्॥ ४१–४४॥

इति श्रीमच्चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायां आयुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने प्रसृतयोगिकासिद्धिर्नामाष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

### त्रिमर्मीया सिद्धिः।

"सप्तोत्तरं मर्मशतमस्मिन् शरीरे स्कन्धशा-खाश्रितमग्निवेश! तेषामन्यतमपीडायां सम-धिका पीडा भवति चेतनानिबद्धवैशेष्यात्॥ १॥
तत्र शाखाश्रितेभ्यो मर्मभ्यः स्कन्धाश्रितानि गरीयांसि शाखानां तदाश्रितत्वात्। स्कन्धाश्रि-तेभ्योऽपि हृद्बस्तिशिरांसि तन्मूलत्वाच्छरीरस्य २

प्रसृतयोगिकानिध्यनन्तरं त्रिमर्मीया सिद्धिरुच्यते। त्रिम-र्मीये त्रिमर्मजरोगा[प]रथी व्यापद्बस्तिरूपचिकित्सितोपदर्शना-र्थम्। व्यापत्प्रतीकारश्च बस्तिप्रयोगाधिकारश्च पूर्वा[द]-नुवर्तते। किंवा बस्तिव्यापच्चिकित्सा पूर्वाध्यायाधिकृता। बस्तिव्यापदि त्रिमर्मजाश्चापि रोगा भवंति। तेन तेषां ज्ञानपूर्वं चिकित्सितोपदर्शनार्थं त्रिमर्मीया सिद्धिरुच्यते। एतदध्याय-वक्तव्याश्च गदाः त्रिमर्मीयचिकित्सिते अध्यायविस्तरभयान्नो-क्तास्ते इह प्रतिपाद्यन्ते। अत्रापि मर्मशब्देन तदन्तर्गता रोगा उच्यंते। तानधिकृत्य सिद्धिस्त्रिमर्मीयसिद्धिः। सप्तोत्तरं मर्म-शतमिति शरीरसध्यमिहितम्। तच्च मांससिरास्नाय्वस्थिस-न्धिषु निविष्टम्। स्कंधशब्देन अन्तराधिरुच्यते। शाखाशब्देन चेह—शाखेव शाखेति कृत्वा बाहुद्वयजंघाद्वययोर्ग्रहणम्। न रक्तादिधातूनां ग्रहणम्। रक्तादिधातूनां स्कंधे विद्यमान-त्वात्। तत्र शाखाश्रितानि चत्वारिंशन्मर्माणि १ शेषाणि स्कंधाश्रितानि। यदुक्तं सुश्रुते—"तेषां एकादशैकस्मिन् सक्थ्नि भवंति"। एतेनेतरसक्थिबाहू व्याख्यातौ। उदरोरसोर्द्वा-दश चतुर्दश पृष्ठे ग्रीवामत्यूर्ध्वं सप्तत्रिंशत्। एतन्म-र्मणां च प्रत्येकं विभागः सुश्रुते "हृदयेत्यादिना प्रपंचेनोक्तो-त्रानुसरणीयः। सप्तोत्तरशतमर्मणां मर्मशरीरदेशविलक्षणं धर्ममाह तेषामित्यादि—चेतनानिर्वंधवैशेष्यादिति तस्मान्म-र्मसु चेतनाधातुर्विशेषेण निबद्ध इत्यर्थः। चेतनादिबंधश्च मर्मसु दृष्ट एव मर्मपीडनया विशेषपीडादर्शनादुन्नीयते।

शाखाना तदाश्रितत्वादिति यस्माच्छाखापि स्कंधाश्रितास्तेन स्कंधाश्रितशाखाश्रिते यः साक्षात् स्कंधाश्रितं मर्म शरीराया-सजनकं भवतील्य"। शाखानां च स्कंधाश्रयत्वात् स्कंधनि-ष्पन्नेनैव रसनादिना तत्पोषणात्। किंच स्कंधाश्रितान्येव मर्माणि सद्यः प्राणहराणि न शाखाश्रयाणि तेन च स्कंधस्य प्राधान्य-मुक्तं यदुक्त-सुश्रुते "शृंगाटकान्यधिपतिः शङ्खौ कण्ठ शिरो गुदम्। हृदयं वस्तिनाभीच घ्नन्ति सद्योहतानि वै"। इति कृत्वा वस्तिशिरांसि गरीयांसीति संबंधः ॥ १-२ ॥

**तत्र हृदि दश च धमन्यः प्राणोदानमनोबुद्धि-चेतनामहाभूतानि च नाभ्यामरा इव प्रतिष्ठि-तानि॥ ३॥**

एतद्गरीयस्त्वे हेतुमाह—तन्मूलत्वाच्छरीरस्येति तन्मूल-त्वादिति तदाश्रितत्वात्। तथा च हृदयाश्रितत्वं शरीरस्य तत्र हृदये दश धमन्य इत्यादिना नाभ्यामारा इत्यनेन दर्शयि-ष्यति। यद्यपि च मर्माणि विशेषेण प्राणाश्रयाण्युक्तानि। तथा "दशैवायत न्याहः प्राणो येषु प्रतिष्ठितः। शङ्ख-मर्मत्रयं कंठो रक्तं शुक्रौजसी गुदमिति"। तथापि शिरादी-नि न शरीराश्रयभूतानि यथा हृदयादीनि। तेन प्राणायत-नत्वे समाने शरीराश्रयत्वविशेषाद्धृदयादीनामेव प्राधान्य-म्। किंच प्राणाश्रयत्वमपि हृदयादीना तथा शिरआदी-नाम्। उक्तं हि "सप्तोत्तर मर्मशतं यदुक्तं शरीरसंख्याम-धिकृत्य तेभ्यः। मर्माणि वस्तिहृदयं शिरश्च प्रधानतो यत्प्रयो वदंति। प्राणाश्रयान्तानपि पीडयन्तो वातादयोऽसूनपि पीड-यंति इति। अन्ये तु प्राण श्रयाणा हृदयादिष्वेव सामी यात्त-त्तानदर्शयति। तदुपलक्ष्यता दशधमन्य इति ओजोवहा दश-धमन्यो अर्थे दशमहामूलीये। समासत इत्यादिना अर्थे दश-महामूलीये प्रतिपादिताः। प्राणापानावित्युच्छ्वासनिःश्वासौ। केचित्तु प्राणपानौ यथोक्तावेव वा तौ प्राहुः। तत्रापानो यद्यपि मेढ्रश्रोण्याद्याश्रय एव आहुः तथापि हृदर्थव्यतिरिक्ता-त्रविधायकत्वात् हृदयाश्रित इत्युच्यते। मनोऽन्तःकरणं बुद्धिरिहेच्छा मनसो वृत्तिभेदः। महाभूतानीति आत्मसंबद्धानि सूक्ष्ममहाभूतानि। एतत्सर्वं सांख्यदर्शने व्यवस्थापितमनुसर-णीयम्। प्रदेशांतरे चोक्तं "षडंगमंगविज्ञानं इंद्रियाण्यर्थपंचकं। आत्मा च सगुणश्चेतः चिन्त्यं च हृदि संस्थितम्"। एतच्छ्लोको-क्तार्थाना च प्रोक्तेर्थे अविरोधो व्याख्येयः। किंवा इह शास्त्र-द्वारेणाभिधानम्। यथा हृदये दशधमन्याद्याश्रितानि तद्दृष्टा-न्तेन दर्शयति। नाभ्यामारा इव प्रतिष्ठितानि। नाभि-श्चक्रनाभिः। आराश्चक्रगा यथा नाभ्या संबद्धाः। आरास्त-दुपघातादुपहन्यंते मूलेन वा तत्संबद्धा भवंति। एवं धमन्या-दयो ह्यर्थः। नाभ्यामपरा इति पाठस्तेन गर्भषण्मासादारा इवापरेति व्याख्यानयंति। एतेन प्रदेशांतरवर्तिष्वपि धम-न्यादीना हृदयाश्रितत्वं सिद्धमिति भावः॥ ३॥

**शिरसि इन्द्रियाणि इन्द्रियप्राणवहानि च स्रोतांसि सूर्यमिव गभस्तयः संश्रितानि॥ ४॥**

शिरोऽश्रयत्वमाह—शिरसीत्यादि इंद्रियप्राणवहानि स्रोतांसि यद्यपि प्रदेशांतरेपि भ्रमंति तथापि शिरसि विशेषेण प्रब-द्धानि सूर्यमिव गभस्तय इति दृष्टान्तेन दर्शयति। शिरआश्र-यत्व च यथोक्तस्रोतसां तदुपघातेन विशिष्टोपघातदर्शनादु-न्नीयं॥ ४॥

**वस्तिस्तु स्थूलगुदमुष्कसेवनीशुक्रमूत्रवाहिनी-नां नाडीनां मध्ये मूत्राधारोऽम्बुवहानां सर्वस्रो-तसामुदधिरिवापगानां प्रतिष्ठितो भवति। बहु-भिश्च तन्मूलैर्मर्मसंज्ञकैः स्रोतोभिर्गगनमिव दिन-करकरैर्व्याप्तमिदं शरीरम्॥ ५॥**

वस्तेः शरीराश्रयत्वमाह—वस्तिरित्यादि स्थूलगुदादिम-ध्यस्थितत्वप्रतिपादनेनास्य स्थूलगुदादीना वस्त्याश्रयत्वं दर्श-यति। अंबुवहाना स्रोतसां प्रतिष्ठेति स्थानमित्यर्थः। उद-धिर्यथा अपां पूरणस्थानं तथा वस्तिरप्यंबुवहानां विश्रा-मस्थानम्। तन्मूलैरिति तत्संबद्धैर्मर्मसंज्ञकैः। नहि स्रोतसां मर्मत्वमस्ति। किंवा स्रोतोमर्मशब्देन शिरोमर्मणा ग्रहणं किंवा मर्मसंबद्धानि स्रोतांसि मर्मसंज्ञकानि स्रोतांसि॥ ५॥

**तेषां त्रयाणामन्यतमस्यापि भेदादाश्वेव शरी-रभेदः स्यादाश्रयनाशादाश्रितस्य नाशः। तदु-पघातात्तु घोरव्याधिप्रादुर्भावः। तस्मादेतानि विशेषेण रक्ष्याणि। बाह्याभिघाताद्वातादिदो-षेभ्यश्च॥ ६॥**

आश्रयनाशादाश्रितस्य नाश इति आश्रयनाशादाश्रित-नाशो यस्माद्भवति तस्माद्धृदयादीनामन्यतरनाशाच्छरीरनाशो भवतीति युक्तं शरीरस्यहृदयाद्याश्रितत्वम्। शरीर हृदय-प्रधानदशधमन्याद्याश्रयत्वेनैव ज्ञेयम्। तदुपघातादिति तद्वैकृतात्॥ ६॥

**तत्र हृदयेऽभिहते कासश्वासबलक्षयकण्ठ-शोषक्लोमापकर्षणजिह्वानिर्गम-मुख-तालुशोषाप-स्मारोन्मादप्रलाप-चित्तनाशादयः स्युः॥ ७॥**

हृदयाद्यभिघातभवान् व्याधीन् क्रमेणाह—तत्रेत्यादि। क्लो-मापकर्षणं क्लोमापकर्षणाकारा वेदना॥ ७॥

**शिरस्यभिहते मन्यास्तम्भार्दितचक्षुर्विभ्रममो-हवेष्टनचेष्टानाश-कास-श्वास-हनुग्रह-मूकगद्गद-त्वाक्षिनिमीलनगण्डस्पन्दनजृम्भणलाला-स्रावस्व-रहानिवदनजिह्मत्वादीनि॥ ८॥**

शिरसि वेष्टन वेष्टनाकारा वेदना॥ ८॥

**वस्तौ तु वातमूत्रवर्चोनिग्रहवङ्क्षणमेहन स्ति-शूलकुण्डलोदावर्त-गुल्म-त्रष्ठानिलाष्ठीलोपस्तम्भ-नाभिकुक्षि-गुदश्रोणिग्रहादयः॥ ९॥**

कुंडलं वस्तौ कुंडलाकारा वेदना। उपस्तंभो वस्तेरेव॥ ९॥

वातायुपसृष्टानां त्वेषां लिङ्गानि चिकित्सिते सक्रियादिविधीन्युक्तानि । किंत्वेतानि विशेषतोऽनिलाद्रक्ष्याणि. अनिलो हि पित्तकफसमुदीरणे हेतुः । प्राणमूलं च मर्म तच्च बस्तिकर्मसाध्यतमम् । तस्मान्न बस्तिसमं किंचित् कर्म मर्मपरिपालनमस्ति ॥ १० ॥

चिकित्सित इति—त्रिमर्मीयचिकित्सिते । सक्रियाविधीन्युक्तानीति चिकित्सितविधानानि । मर्मपरिपाले बस्तेः प्राधान्यं सोपपत्तिकमाह—किंत्वेतानीत्यादि—यस्मात्पित्तकफयोः ... रणे अनिल एव हेतुः । तेन पित्तकफजे विकारे वायुनिमित्ते ... तत्रजविकारेपि वायुः स्वतन्त्र एव कारणम् । अतः सर्वविकारेषु मर्माणि रक्षता तत्र कारणादनिलादेव मर्माणि रक्षणीयानि । प्राणमूलं जीवितहेतुत्वाविकृतो वायुः विकृतश्च प्राणोपघातकः । तेन मर्माश्रयिप्राणो रक्षणीयः. स बस्तिना साध्यतमः । इतरचिकित्सापेक्षया बस्तिना साध्यतमः । उक्तं हि बस्तिर्वातहराणामिति ॥ १० ॥

तत्र षड्विरेचनशताश्रितीये विमाने द्वौ चानुवासनस्कन्धौ दृष्ट च विहितान् बस्तीन् बुद्ध्या विचार्य महामर्मपरिपालनार्थं प्रयोजयेद्वातव्याधिचिकित्सां च ॥ ११ ॥

द्वौ चानुवासनस्कधाविति रोगभिषग्जितीये । स्नेहः स द्विविधः स्थावरो जङ्गमश्चेत्यनेनोक्तौ द्वावनुवासनस्कन्धौ ज्ञेयौ । दृष्ट चेति सिद्धिस्थाने । विचार्येति दोषोपपयादीनि दश बुद्ध्या विचार्य वातव्याधिचिकित्सा च बुद्ध्या विचार्य प्रयोजयेदित्यर्थः ॥ ११ ॥

भूयश्च हृद्युपसृष्टे वातेन हिङ्गुचूर्णलवणानामन्यतमचूर्णसंयुक्तां पेयां मातुलुङ्गस्य रसेन वान्येन वाम्लेन हृद्येन वा पाययेत । स्थिरादिपञ्चमूलीरसः सशर्करः पानार्थे बिल्वादिपञ्चमूलरससिद्धा च यवागूः हृद्रोगविहितं च कर्म ॥ १२ ॥

विशेषमर्मभेदानाह—भूय इत्यादि—हृद्युपसृष्टे वातेनेति शेषः । लवणानामिति निर्धारणे षष्ठी । अन्य एव अन्यतमः । यथा श्रेष्ठतम इति । हृद्येनेति मनोनुकूलेन । हृद्रोगविहितं च कर्मेति त्रिमर्मीये चिकित्सित उक्तम् ॥ १२ ॥

मूर्ध्नि तु वातोपसृष्टे अभ्यङ्गस्वेदनोपनाहनस्नेहपाननस्तःकर्मावपीडनधूमादीनि ॥ १३ ॥

धूमादीत्यादिशब्देन परिषेकोपनाहादिग्रहणम् ॥ १३ ॥

बस्तौ तु कुम्भीस्वेदो वर्तयश्च । श्यामादिभिर्गोमूत्रसिद्धो निरूहः । बिल्वादिस्वरससिद्धः शरकाशेक्षुदर्भगोक्षुरकमूलश्वतक्षीरैश्च । त्रपुषैर्वारुखराश्वाबीजयवक्षारभकल्कितो निरूहः । क्षारयवतिल्वकभृष्टकल्कितो वा निरूहः । पीतदारुकसिद्धतैलानुवासनं तैल्वकं च सर्पिर्विरेकार्थम् ॥ १४ ॥

बस्तौ त्विति प्रदुष्टे वातेनेति प्रकरणाज्ज्ञेयम् । पित्तकफदुष्टो वायुरेव प्रधानमिति प्रागेव प्रतिपादितम् । तेन कफपित्तदुष्टि परिलभ्यते । वर्तय इति 'फलवर्तयः' । श्यामादिरिति "श्यामा च त्रिवृता चैव स्थिरा दंती द्रवंतपी" त्यादिकः प्रागुक्तः श्यामादि । 'बिल्वादिरिति बृहत्पंचमूलं' किंवा "बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवानि" त्यनेनोक्त बिल्वादि ज्ञेयम् । शरादिषु श्वतक्षीरैः । त्रपुसादिकल्को अपरः । खराश्वा अजमोदा । पीतदारुसाधिततैलेन सिद्धमनुवासनं यस्मिन्निरूहे स तथा । केचित्त्वशीतसाराकृष्टतैलं पीतदारुमाह । तैल्वकं सर्पिस्तैल्वककल्पोक्तम् ॥ १४ ॥

शतावरी-गोक्षुरक-बृहती-कण्टकारिकागुडूची-पुनर्नवोशीरमधुकद्विसारिवालोध्र-श्रेयसी-कुशकाशमूल-कषायक्षीरचतुर्गुणं बलावृषर्षभकखराह्वोपकुञ्चिका-वत्सकत्रपुषैर्वारुबीज-शितिमारक-मधुकवचाशतपुष्पाश्मभेदवर्षाभूमदनफलकल्कसिद्धं तैलम् । उत्तरबस्तिर्निरूहः शुद्धस्निग्धस्विन्नस्य बस्तिशूलमूत्रविकारहर इति ॥ १५ ॥

शतावरीत्यादौ द्विसारिवा अनतमूलम् । उत्पलशारिवा । श्रेयसी रास्ना । उपकुञ्चिका कृष्णजीरकम् । शितिमारकः शालिचः । अश्मभेदकः पाषाणभेदः । उत्तरबस्तिरिति वक्ष्यमाणोत्तरविधानादेय इत्यर्थः । निरुहो निरुहस्थाने देय इत्यर्थः ॥ १५ ॥

भवन्ति चात्र ।

हृदि मूर्ध्नि च बस्तौ च नृणां प्राणाः प्रतिष्ठिताः ।
तस्मात्तेषां सदा यत्नात्कुर्वीत परिपालनम् ॥ १६ ॥
आघातवर्जनं नित्यं स्वस्थवृत्तानुवर्तनम् ।
उत्पन्नार्तिविघातश्च मर्मणां परिपालनम् ॥ १७ ॥

सद्योपक्रमार्थं श्लोकेन दर्शयन्नाह—भवन्तीत्यादि—हृदीत्यादि आघातवर्जनमिति मर्मोपघातकहेतुवर्जनम् । स्वस्थवृत्तानुवर्तनं च हृदयादिपोषकत्वेन आवश्यकं भवति । उत्पन्नार्तिविघातः उत्पन्नमर्मरोगप्रतीकारः ॥ १६–१७ ॥

अत ऊर्ध्वं विकारा ये त्रिमर्मीये चिकित्सिते ।
न प्रोक्ता मर्मजास्तेषां कांश्चिद्वक्ष्यामि सौषधान् ॥ १८ ॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ।
पीडयन्हृदयं गत्वा शिरःशङ्खौ च पीडयन् ॥ १९ ॥
धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तथा ।
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलिकः ॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ।
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ॥ २१ ॥

हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः।
वायुना दारुणं प्राहुरेके तदपतानकम् ॥ २२ ॥
श्वसनं कफवाताभ्यां रुद्धं तस्य विमोचयेत्।
तीक्ष्णैः प्रधमनैः संज्ञां तासु मुक्तासु विन्दति॥२३॥
मरिचं शिग्रुबीजानि विडङ्गं च फणिज्झकम्।
एतानि सूक्ष्मचूर्णानि दद्याच्छीर्षविरेचनम् ॥ २४ ॥
हिङ्गु तुम्बुरु पथ्या च पौष्करं लवणत्रयम्।
यवक्वाथाम्बुना पेयं हृत्पार्श्वार्त्यपतन्त्रके ॥ २५ ॥
हिङ्ग्वम्लवेतसं शुण्ठीं ससौवर्चलदाडिमाम्।
पिबेद्वातकफघ्नं च कर्म हृद्रोगनुद्धितम् ॥ २६ ॥

मर्मपरिपालकवस्तिकथनानुप्रसंगादनुक्तमर्मगतरोगचिकित्सितं दर्शयन्नाह—अत ऊर्ध्वमित्यादिना हृद्रोगानाह—स्थानादूर्ध्वमिति वातस्थानादूर्ध्वम्। वातस्थानापेक्षया यदूर्ध्वं। तत्त्वाक्षो निःसंज्ञो भवति। मोहावृते पुनरि हृदयावृते पुनर्वायुना मोहं याति। वायुनेति कफयुक्तेन। एके तदपतानकमित्यपतंत्रकमाहुः। अत्र जतूकर्णः—"वातकफाभ्यां हृच्छिरः शर इव प्रमोहादिस्तंभनकृच्छ्रोच्छ्वसनकूजनान्यपतंत्रके इति। किंवा अपतंत्रक द्विविधं वर्णयंति वाताद्वातकफाच्चेति। तत्र निःसनः सोपतंत्रक इत्यनेन वातिक उच्यते॥ वायुना दारुणं प्राहुरिति वायुना जनितमपतंत्रकमेवापतानकमाहुः। दारुणत्वं दारुणाद्वातादिति व्याख्येयम्। अत एव सुश्रुते वातव्याधौ चायं तत्र पठितः॥ तीक्ष्णैः प्रधमनैरित्यादिना सज्ञावहा धमन्यः। यवक्वाथाम्बुनेति यवैः पटंगविधानकृतपानीयेन। हृद्रोगे वातकफघ्नं यत्कर्म त[द्धि]तमपतंत्रके॥ १८-२६॥

शोधना वस्तयस्तीक्ष्णा हितास्तस्य च कृत्स्नशः।
सौवर्चलाभयाव्योषैः सिद्धं तु स्याद्धृतं हितम्॥२७॥

शोधना इत्यादौ कृत्स्नशोधिताः इति वचनेन स्रोतःशोधनार्थं स्तोकनिरूहदानं भूरिशोधननिरूहदाने तु वात[क्षो]भः स्यादिति भावः॥ २७॥

मधुरस्निग्धगु[रू]म्लसेवनाच्चिन्तनाद्भयात्।
शोकाद्व्याध्यनुषङ्गाच्च वायुनोदीरितः कफः॥२८॥
यदासौ समवस्कन्द्य हृदयं हृदयाश्रयान्।
समावृणोति ज्ञानादींस्तदा तन्द्रोपजायते॥ २९॥
हृदये व्याकुली[भा]वो वाक्चेष्टेन्द्रियगौरवम्।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं मतम्॥ ३०॥
कफघ्नं तत्र कर्तव्यं शोधनं शमनानि च।
व्यायामो रक्तमोक्षश्च भोज्यं च कटुतिक्तकम्॥३१॥

मधुरस्निग्धेत्यादिना तंद्रील[क्ष]णं चिकित्सितं च केचि[दा]हुरिति॥ २८-३१॥

मूत्रौकसादं जठरं कृच्छ्रं सोत्सङ्गसङ्क्षयौ।
मूत्रातीतोऽनिलाष्ठीला वातवस्त्युष्णमारुतौ॥३२॥
वातकुण्डलिकाग्रन्थिविड्घातो वस्तिकुण्डलम्।
त्रयोदशैते मूत्रस्य दोषास्ताँल्लिङ्गतः शृणु॥ ३३॥

हृद्रोगमभिधाय वस्तिरोगानाह—मूत्रौकसादमित्यादि—एते च मूत्रदोषा मूत्रकृच्छ्रादिभिन्ना एवेति त्रिमर्मीय एव प्रतिपादिताः॥ ३२-३३॥

पित्तं कफो द्वयं वापि वस्तौ संहन्यते यदा।
मारुतेन तदा मूत्रं रक्तपीतं घनं सृजेत्॥ ३४॥
सदाहं श्वेतसान्द्रं वा सर्वैर्वा ल[क्ष]णैर्युतम्।
मूत्रौकसादं तं विद्यात्पित्तश्लेष्महरैर्जयेत्॥ ३५॥
विधारणात्प्रतिहतं वातोदावर्तितं यदा।
पूरयत्युदरं मूत्रं तदा तदनिमित्तरुक्॥ ३६॥
अपक्तिमूत्रविट्सङ्गैस्तन्मूत्रजठरं वदेत्।
मूत्रवैरेचनीं तत्र चिकित्सां संप्रयोजयेत्॥ ३७॥

पित्तं कफ इत्यादिना मूत्रौकसादमाह—अयं च वातकफपित्तैरिति त्रिदोषैर्भवति। संहन्यत इति सहन्यात्। रक्तपीतमिति पित्तेन श्वेतसान्द्रता। कफपित्तलक्षणता कफपित्ताभ्याम्। वायुस्तु सर्वानुगत एव। अत्र च वायोरावरणेन कृत एव कोपः। तेन पित्तकफयोरेव चिकित्सोक्ता पित्तश्लेष्महरैरित्यादिना। यद्वेत्यनेन वायोरावरणजयादेव जयो भवतीति भाव.। अनिमित्तरुगिति अलक्ष्यमाणनिमित्तरुक्। मूत्रवैरेचिनीयं चिकित्सितं कुर्यात्॥ ३४-३७॥

हिङ्गुद्विरुत्तरं चूर्णं त्रिमर्मीये प्रकीर्तितम्।
हन्यान्मूत्रादिसंघातं व्याधिं च गुदमेढ्योः॥ ३८॥
मूत्रितस्य व्यवायाद्वा रेतो वातोद्धतं च्युतम्।
पूर्वं मूत्रस्य पश्चाद्वा स्रवेत्तत्कृच्छ्रमुच्यते॥ ३९॥
स्ववैगुण्यानिलाक्षेपैः किञ्चिन्मूत्रं च तिष्ठति।
मणिसन्धौ स्रवेत्पश्चात्तदरुग्वाथ वाऽतिरुक्।
मूत्रोत्सङ्गः स विच्छिन्नस्तच्छेषो गुरुशेफसः॥४०॥
वाताङ्गतिर्भवेद्वातान्मूत्रे [क्षी]यति संक्षयः।
चिरं धारयतो मूत्रं त्वरया न प्रवर्तते।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते॥ ४१॥
आध्मापयन्वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम्।
कुर्यात्तीव्रार्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम्॥४२॥
मूत्रं धारयतो वस्तौ वायुः क्रुद्धो विधारयेत्।
मूत्र[रो]धार्तिकण्डूभिर्वातवस्तिः स उच्यते॥ ४३॥

हिङ्गुद्विरुत्तरं हिङ्गुवचेत्यादिनोक्तं—द्विरुत्तरं यस्मिन्तद्विरुत्तरम्। मूत्रितस्येति मूत्रवेगितस्य मूत्रवेगयुक्तस्य। 'च्युतमिति' स्वस्थानाच्च्युतं। वातोद्धतमिति वातविक्षिप्तम्। एतल्लक्षणोत्तरमुक्तमेव तन्मूत्रकृच्छ्रम्। मूत्रशुक्रमितोन्यदेव भिन्नलक्षणत्वात्। किंचिदिति स्तोकम्। विच्छिन्नस्तच्छेषो गुरुशेफस इति प्रबद्ध-

मूत्रावरोधेन विच्छिन्नेन मुत्रेण । वाताष्ठीलादि लक्षण-लक्षणम् । वाताकृतिरिति वातलक्षणयुक्त ॥ ३८-४३ ॥

ऊष्मणा सोष्मकं मूत्रं शोषयन्रक्तपीतकम् ।
उष्णवातः सृजेत्कृच्छ्राद्वस्त्युपस्थार्तिदाहवान् ।

ऊष्मणेति पित्तोष्मणा सोष्मकमित्युष्णसहितवात एव मूत्रं शोषयति ॥ ४४ ॥

गतिसङ्गादुदावृत्तः स मूत्रस्थानमार्गयोः ॥ ४४ ॥
मूत्रस्य विगुणो वायुर्भग्नव्याविद्धकुण्डली ।
मूत्रं विहन्ति संस्तम्भभङ्गगौरववेष्टनैः ।
तीव्ररुङ्मूत्रविट्सङ्गैर्वातकुण्डलिकेति सा ॥ ४५ ॥
रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् ।
ग्रन्थिं कुर्यात्स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ।
अश्मरीसमशूलं तं मूत्रग्रन्थिं प्रचक्षते ॥ ४६ ॥
रूक्षदुर्बलयोर्वातेनोदावृत्तं शकृद्यदा ।
मूत्रस्रोतः प्रपद्येत विट्संसृष्टं तदा नरः ।
विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥ ४७ ॥

गतिसङ्गादित्यादिना—वातकुण्डलिकामाह—मूत्रस्य गति-सङ्गादुदावृत्तो वायुर्मूत्रस्थानमार्गयोर्भग्नव्याविद्धः कुंडलीभूतं मूत्रं वदंति तत्र प्रतिहत व्याविद्धो वक्री कुंडलीत्वावर्तमानतया स्थितः । ईदृशश्च वायोरवस्थाने मूत्रमार्गो वा भवति । वात-कुंडललक्षणान्याह—संस्तंभेत्यादि भगं भंगाकारा वेदना । रक्तं ग्रंथिं कुर्याद्वातकफाभ्या दुष्टमिति योज्यम् । विगो विघातो विड्विघात. ॥ ४५-४७ ॥

द्रुताध्वलङ्घनायासादभिघातात्प्रपीडनात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ ४८ ॥
शूलस्पन्दनदाहार्तो विन्दुं विन्दुं स्रवत्यपि ।
पीडितस्तु स्रवेद्धारां स्तम्भनोद्वेष्टनार्तिमान् ॥ ४९ ॥
वस्तिकुण्डलमाहुस्तं घोरशस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥ ५० ॥
तस्मिन्पित्तान्विते दाहः शूलमूत्रविवर्णता ।
श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ॥ ५१ ॥
श्लेष्मरुद्धबिलो वस्तिः पित्तोदीर्णो न सिध्यति ।
अविभ्रान्तबिलः साध्यो न तु यः कुण्डलीकृतः ।
स्याद्वस्तौ कुण्डलीभूते तृण्मोहोच्छ्वास एव च ॥ ५२ ॥

द्रुताध्वेत्यादिना वस्तिकुंडलिकामाह—उद्वृत्त. परावृत्त. । पीडित इति हस्तादिपीडित । श्लेष्मरुद्धबिलो 'वस्ति'र्न सि-ध्यति । तथा पित्तोदीर्णश्च न सिध्यति । अविभ्रांतबिल 'इति' रुद्धद्वार. 'कुंडलीकृत' इति वर्तुलीकृतः । वर्तुलीकृतस्य लक्ष-णान्याह—स्याद्वस्तावित्यादि ॥ ४८-५२ ॥

दोषाविक्रयमवेक्ष्यैतान्मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिं च सर्वेषामेव योजयेत् ॥ ५३ ॥

एषु चिकित्सामाह—दोषाविक्रयमित्यादि मूत्रकृच्छ्रहरैः प्रयोगै । दोषाविक्रयमवेक्ष्य 'प्रयुक्तै'र्जयेदित्यर्थ ॥ ५३ ॥

पुष्पनेत्रं च हैमं स्यात्सूक्ष्ममौत्तरवस्तिकम् ।
जातीपुष्पस्य वृन्तेन समं गोपुच्छसंस्थितम् ।
रौप्यं वा सर्षपच्छिद्रं द्विकर्णं द्वादशाङ्गुलम् ॥ ५४ ॥
तेनाजवस्तियुक्तेन स्नेहस्यार्धपलं नयेत् ।
यथा वयोविशेषेण स्नेहमात्रां विकल्प्य वा ॥ ५५ ॥
स्नातस्य भुक्तभक्तस्य रसेन पयसापि वा ।
सृष्टविण्मूत्रवेगेन पीठे जानुसमे मृदौ ॥ ५६ ॥
ऋजोः सुखोपविष्टस्य हृष्टे मेढ्रे घृतान्विते ।
शलाकयान्विष्य गतिं यद्यप्रतिहता व्रजेत् ॥ ५७ ॥
ततः शेफप्रमाणेन पुष्पनेत्रं प्रवेशयेत् ।
गुदवन्मूत्रमार्गेण प्रणयेदनु सेवनीम् ॥ ५८ ॥
हिंस्याद्वस्तिगतं वस्तिं मूर्ध्नि स्नेहो न गच्छति ।
सुखं प्रपीड्य निष्कम्पं निष्कर्षेन्नेत्रमेव च ॥ ५९ ॥
प्रत्यागते द्वितीयं तु तृतीयं च प्रदापयेत् ।
अनागच्छन्नुपेक्ष्यस्तु रजनीव्युषितस्य च ॥ ६० ॥

उत्तरवस्तिं वा दापयेदित्युक्त तत उत्तरवस्तिविधिमाह—पुष्पनेत्रं चेत्यादि—पुष्पनेत्रमित्युत्तरवस्तिनेत्रस्य 'संज्ञा' । उत्तरमार्गे दीयमानतया किंवा श्रेष्ठगुणतया पुष्पसमम् । जात्याश्च 'पुष्पयो' वृन्तेन 'सम'मुक्तं हि हारीते—"कुंदस्य वृंतप्रतिमं तथाग्रे इति" । सर्षपच्छिद्रमिति सर्षपनाहि च्छिद्रम् । द्विकर्णक वस्तेर्निबंधनार्थमेकत कर्णिका अपरा लघ्वी । प्रमाणपडंगुलाद्विकर्णिका 'कर्तव्या' । त्रिकर्णिक इति वा पाठः । यथा वयोविशेषेण स्नेहमात्रा विकल्प्य वेति यथा । स्नेह पंचविंशतिवर्षस्य तिस एवमेव वयोभेदविकल्पेनापकर्षः । उक्तं हि सुश्रुते—"स्नेहप्रमाणं परमं प्रयुक्तं चात्र कीर्तितं । पंचविंशतिवर्षाणामर्वाग्वृद्धिविकल्पितम्" । हृष्टे इति प्रहृष्टे य-द्यप्रतिहता व्रजेत् शलाका तत्र पुष्पनेत्रं शेफप्रमाणसमं प्रणनीयम् । शलाकया प्रथममन्वेषणं मार्गविज्ञानार्थम् । गुदवदिति यथा नेत्रस्थानादि गुणयुक्तं प्रवेशिते तथा मेढ्रेप्य-भिमतलिंगमानान्तरेण प्रविष्टं नेत्र हिंस्यादिति लिंगस्तोक-प्रविष्टम् ॥ ५४-६० ॥

पिप्पलीलवणागारधूमापामार्गसर्षपैः ।
वार्ताकुरसनिर्गुण्डीशम्याकैः ससहाचरैः ॥ ६१ ॥
मूत्राम्लपिष्टैः सगुडैर्वर्तिं कृत्वा प्रवेशयेत् ।
अग्रे त सर्षपाकारां पश्चाद्वै माषसंमिताम् ॥ ६२ ॥
नेत्रदीर्घां घृताभ्यक्तां सुकुमारामभङ्गुराम् ।
नेत्रवन्मूत्रनाड्यां तु पायौ वाङ्गुष्ठसंमिताम् ॥ ६३ ॥

स्नेहे प्रत्यागते ताभ्यां सानुवासनिको विधिः ।
परिहारस्य सव्यापत्सम्यग्दत्तस्य लक्षणम् ॥ ६४ ॥
स्त्रीणां च तवकाले तु प्रतिकर्म तदाचरेत् ।
गर्भासना सुखं स्नेहं तदादत्ते ह्यपावृता ॥ ६५ ॥
गर्भं योनिस्तदा शीघ्रं जिते गृह्णाति मारुते ।
वस्तिजेषु विकारेषु योनिविभ्रंशजेषु च ।
योनिशूलेषु तीव्रेषु योनिव्यापत्स्वसृग्दरे ॥ ६६ ॥
अप्रस्रवति मूत्रे च विन्दुं विन्दुं स्रवत्यपि ।
विदध्यादुत्तरं वस्तिं यथास्वौषधसंस्कृतम् ॥ ६७ ॥
पुष्पनेत्रप्रमाणं तु प्रमदानां दशाङ्गुलम् ।
मूत्रस्रोतःपरीणाहं मूत्रस्रोतोऽनुवाहि च ॥ ६८ ॥
गर्भमार्गे तु नारीणां विधेयं चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु बालायास्त्वेकमङ्गुलम् ॥ ६९ ॥
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी।
अथास्याः प्रणयेन्नेत्रमनुवंशगतं सुखम् ॥ ७० ॥
द्विस्त्रिश्चतुर्वा तां स्नेहानहोरात्रेण योजयेत् ।
वर्तिं वस्तौ प्रणीते च वस्तिश्चानन्तरो भवेत् ॥७१
त्रिरात्रं कर्म कुर्वीत स्नेहमात्रां विवर्धयन् ।
अनेनैव विधानेन कर्म कुर्यात्पुनस्त्र्यहात् ॥ ७२ ॥

पिप्पलीत्यादिनाप्युषिते मनागगच्छतः स्नेहस्य प्रवर्तिका वर्तिमाह—इयं च वर्तिर्गुदपाकेन विना कर्तव्या यथा स्वच्छा भ ति । पश्चाद्वावितिः मूले चाङ्गुष्ठसन्निभामिति पायौ स्नेहप्रवृत्त्यर्थं दीयमानांगुष्ठसमाना कार्या । ताभ्यामिति मेढ्रपायुभ्यां दत्तवर्तिभ्याम् । उत्तरवस्तेस्त्वनुवासनवस्तेश्च व्यापत्परिहारव्याख्याय सम्यग्दत्तलक्षणान्यतिदिशन्नाह—सानुवासनिको विधिरित्यादि—आर्तवकाले द्वावुत्सर्गिकेनोक्तम् । स्त्रीणामुत्तरवस्तिदानमार्तवकाले विधत्ते । आर्तवदाने हेतुमाह—गर्भासनेत्यादि—गर्भासना गर्भशय्येत्यर्थः । अन्ये तु योनिमाहुः । आदत्त इति सम्यग्गृह्णाति । अपावृता संचितरजोरूपावरणा । पुष्पनेत्रं त्वित्यादि—मूत्रस्रोतोऽनुवाहीति मूत्रवाहि छिद्रम् । गर्भमार्ग इत्यपत्यमार्गे । विधेयं चतु सिति अपत्यमार्गे स्नेहयितव्ये चतुरंगुलप्रवेशं ततः कर्तव्यम् । मूत्रमार्गे स्नेहयितव्ये द्व्यंगुलं प्रवेशयेत् । प्राप्तयौवनानां न रीणामेव कर्तव्यम् । बालायाः स्वल्पप्रमाणतयैकाङ्गुलप्रवेशमेव । मूत्रमार्गप्रयोगार्थं बालाना त्वपत्यमार्गे न दीयत एव । तासामपत्यमार्गस्यावृतत्वात् । वर्तिरपि न संवेशयेदिति स्नेहप्रत्यागमनार्था वर्तिरपि न कर्तव्या । स्नेहमात्रा चात्र "स्नेहस्य प्रसृतिं चात्र स्वाङ्गुलीमूलसंमिते"त्यनेन सुश्रुतोक्ता नेया ॥ ६१–७२ ॥

अतः शिरोविकाराणां कश्चिद्भेदः प्रवक्ष्यते ।
रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम् ॥ ७३ ॥
स शिरो विषवद्वेगी निरुध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ॥ ७४ ॥
त्र्यहं जीवति चेद्वैद्यः प्रत्याख्यायास्य कारयेत् ।
शिरोविरेकसेकादि सर्वं वीसर्पनुच्च यत् ॥ ७५ ॥

क्रमागतान्त्रिमर्मीयान् शिरोविरेकान्वक्तुमाह—अत इत्यादि—दारुणमित्याशुकारि । परं त्र्यहाज्जीवतीत्यादिकप्रभावोऽयं शङ्खकस्य । प्रत्याख्यायाचरेत्क्रियामित्यनेनोत्पन्नमात्र एव प्रत्याख्यानपूर्विका चिकित्सा कर्तव्या ॥ ७३–७५ ॥

रूक्षात्यध्यशनात्पूर्ववातावश्यायमैथुनैः ।
वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥७६॥
केवलः सकफो वार्धं गृहीत्वा शिरसोऽनिलः ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धे च वेदनाम् ।
शस्त्रारणिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः ॥७७॥
नयनं वाथ वा श्रोत्रमतिवृद्धो विनाशयेत् ।
चतुःस्नेहोत्तमां मात्रां शिरःकायविरेचनम् ।
नाडीस्वेदो घृतं जीर्णं वस्तिकर्मानुवासनम् ॥ ७८ ॥
उपनाहः शिरोवस्तिर्दहनं चात्र शस्यते ।
प्रतिश्याये शिरोरोगे यच्चोद्दिष्टं चिकित्सितम् ॥७९॥
संधारणादजीर्णाद्यैर्मस्तिष्कं रक्तमारुतौ ।
दुष्टौ दूषयतस्तच्च दुष्टं ताभ्यां विमूर्च्छितम् ॥८०॥
सूर्योदयांशुसंतापाद्दुःखं विष्यन्दते शनैः ।
ततो दिने शिरःशूलं दिनवृद्ध्या च वर्धते ॥ ८१ ॥
दिनक्षये ततः स्त्याने मस्तिष्के संप्रशाम्यति ।
सूर्यावर्तः स एव स्यात्सर्पिरौत्तरभक्तिकम् ॥ ८२ ॥
शिरःकायविरेकौ च मूर्ध्नि च स्नेहधारणम् ।
जाङ्गलैरुपनाहश्च घृतक्षीरैश्च सेचनम् ॥ ८३ ॥
वर्हितित्तिरिलावादिशृतं क्षीरोत्थितं घृतम् ।
नावनं जीवनीयाष्टगुणक्षीरोपसाधितम् ॥ ८४ ॥
उपवासातिशोकातिरूक्षशीताल्पभोजनैः ।
दुष्टा दोषास्त्रयो मन्यां पश्चाद्घाटे तु वेदनाम् ॥८५॥
तीव्रां कुर्वन्ति नासाक्षिभ्रूशङ्खेष्ववतिष्ठते ।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम् ॥ ८६ ॥
सोऽनन्तवातस्तं हन्याच्छिरोऽर्कावर्तनाशनैः ।
वातो रूक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत् ॥८७॥
तत्रामृतावलारास्नामहाश्वेताश्वगन्धकैः ।
स्नेहस्वेदादि वातघ्नं शस्तं नस्यं च तर्पणम् ॥ ८८ ॥
नस्तःकर्म च कुर्वीत शिरोरोगेषु सूक्ष्मवित् ।
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति ताम् ८९

रूक्षेत्यादिना अर्धावभेदकमाह—अवश्यायः हिमम् । शस्त्रारणिनिभामिति शस्त्रच्छेदकनिभमत्र लक्ष्यते । चतुःस्नेहोत्तमा मात्रामुक्तमात्रपरिमाणाम् । जीर्णं दशवर्षस्थितं घृतम् । उपनाहः केचिच्छिरोवस्तिभेदमाहुः । यो मस्तिष्के उच्यते ।

तंत्रांते हि मस्तिष्कोपनाहः शिरोबस्तिप्रकार उक्तः । मस्तिष्केऽष्टाङ्गुलं पट्टम् वस्तौ तु द्वादशाङ्गुलमित्यादिना । शिरोबस्तिविधानं शालाक्ये ज्ञेयम् । यथा "द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमं । आकर्णबन्धनं स्थाने ललाटे वस्त्रवेष्टिते ॥ चेलवेणिकया बद्ध्वा माषकल्केन लेपयेत् । ततो यथा व्याधिशृतं स्नेहं कोष्णं निषेचयेत् । ऊर्ध्वं केशभुवो यावदङ्गुलं धारयेच्च तं । आवक्त्रनासिकाक्लेदाद्दशाष्टौ षट्शतादिपु । मात्रासहस्राण्यरुजे द्वेके स्कन्धादिमर्दयेत् । मुक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम्" । तथा "आशिरोव्यायतं चर्म कृत्वाष्टाङ्गुलमुच्छ्रितम् । तेन वेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् । निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत् । धारयेदारुजः शान्तेर्यामं यामार्धमेव च । शिरोबस्तिर्जयत्येष शिरोरोगं मरुद्भव" इत्यादि । दहन चात्र शस्यते इति तन्त्रांतरप्रत्ययात् भ्रूस्थाने ललाटयोः सप्रदिष्ट शलाकादिना दहन ज्ञेयम् । यथादिष्टं चिकित्सितं तच्च वात इति योज्यम् । मस्तिष्कः शिरोमज्जा । निष्पद्यते च्यवते । एतच्च सूर्यावर्तस्य रूपं दोषदूष्ययोः विकृतिविषमसमवायाद्भवति । तेनान्येपि प्रकारा एवंभूता भवन्ति । तथा सूर्यातपे एव वर्द्धमानातितापे इत्यनेन—तदपि प्रभावकृतं ज्ञेयम् । स्नेहधारणमिति पाठात् तैलघृतावधारणं वदंति । लावादयो विष्किरा अनुपानोक्ताः बिले निवसन्तीति बिलेशायीति बिलेशयानां सेवनमिति सर्वत्र । घाटा ग्रीवा । मन्यापश्चाद्धमन्या । नासाक्षिभ्रूशङ्खेषु वेदना तीव्रा च स्थिरा भवति तमनंतवातमाहुः । शिरोऽर्धावर्तनाशनैरिति । सूर्यावर्तनाशनैश्च भेषजैः । कर्म चेति सर्वशिरोरोगसाधारणम् । चिकित्सासाधारणं शिरोरोगेषु नस्तः कर्मकरणे हेतुनाह—द्वारं हीत्यादिना ॥ तत्रासारूप्येण मार्गेण तदिति नस्ते दत्तमौषधं व्याप्नोति । शिरो व्याप्य शिरोगदान्प्रत्यागलाशु निरा- [illegible] ॥ ७६–८९ ॥

**नावनं चावपीडश्च ध्मापनं धूम एव च ।**
**प्रतिमर्शश्च विज्ञेयं नस्तःकर्म तु पञ्चधा ॥ ९० ॥**
**स्नेहनं शोधनं चैव द्विविधं नावनं स्मृतम् ।**
**शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः ॥९१॥**
**चूर्णं स्याद् ध्मापनं नाम देहस्रोतोविशोधनम् ।**
**विज्ञेयस्त्रिविधो धूमः प्रागुक्तः शमनादिकः ॥९२॥**

नस्तव्यनस्तःकर्मभेदानाह—नावनमित्यादि । अत्र सुश्रुते धूमं वर्जयित्वा पंचविधं नस्तःकर्मोक्तं नस्यं तत् पंचविधं विकल्प्यम् । तद्यथा नस्यं शिरोविरेचनं प्रतिमर्शोऽवपीडः प्रधमनं चेति । तुल्यत्वेन शब्देनैव शिरोविरेचनं याति तदपि गृहीतम् । यदुक्तं "स्नेहनं शोधनं चैव नावनं द्विविधं स्मृतमित्यनेन" सुश्रुतोक्तोप्यर्थो गृहीत एव । शोधनस्तंभनश्च स्यादवपीड इत्यत्र सशमनमथावपीडस्य कर्मेच्छंति तत् स्तंभेएवांतर्भावयंति । अवपीडस्य यत्र कर्णादीनि दीयंत—इत्यवपीडः । अनेन शिरोविरेचनार्थं दीयमानस्यैवपिप्पल्यादिकल्क ध्मापनं नाम देहस्रोतोविरेचनमिति वचनेन ध्मापनं ५ चनस्य जनकमेवेति दर्शयति । शमनादिक इत्यत्र शब्देन प्रायोगिक गृह्णाति । तेन प्रायोगिकस्नैहिकवैरेचनिका नासा दीयमानाना ग्रहणम् । सुश्रुते यत्तु 'निर्दोष उभयार्थकृदिति" स्नेहविरेचनार्थं प्रतिमर्शः "नस्तःस्नेहाङ्गुलिं दद्यादित्यादिना" वक्ष्यमाणम् ॥ ९०–९

**प्रतिमर्शो भवेत्स्नेहो निर्दोष उभया[illegible] ।**
**एवं तद्रेचनं कर्म तर्पणं शमनं त्रिधा ॥ ९३ ॥**

पञ्चविधनस्यकर्मणस्त्रैविध्यमाह—एवमित्यादि कर्मेति कर्मस्तंभनस्यापि ग्रहणम् । तर्पणे स्नेहस्यावरोधः । केचित् प्रभेदा स्तन्त्रांतरे प्रतिपादितास्तेप्यत्रैवांतर्भवंति ॥९३

**स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिका ये शिरोगदाः ।**
**शिरसो रेचनं तेषु नस्तःकर्म प्रशस्यते ॥ ९४ ॥**
**ये च वातात्मका रोगाः शिरःकम्पार्दितादयः ।**
**शिरसस्तर्पणं तेषु नस्तःकर्म प्रवक्ष्यते ॥ ९५ ॥**
**रक्तपित्तादिरोगेषु शमनं नस्यमिष्यते ।**
**ध्मापनं धूमपानं च यथायोग्येषु शस्यते ।**
**दोषादिकं समीक्ष्यैव भिषक् सम्यक् च कारयेत् ९६**

विरेचनादिकर्मत्रयस्य [illegible]पयमाह स्तंभेत्यादि । तर्पणमितिस्नेहनम् । तर्पणं तथा योगेषु शस्यत इति "ध्मापनधूमयोग्येषु"—शस्यते । तत्र धूमयोगास्तत्रस्थाने प्रतिपादिताः । ध्मापनयोगस्तु ध्मापनगुणकथनेन देहस्रोतोविशोधनमिति पदेनोक्तः ॥ ९४–९६ ॥

**फलादि भेषजं प्रोक्तं शिरसो यद्विरेचनम् ।**
**तच्चूर्णं कल्पयेत्तेन पचेत्स्नेहं विरेचनम् ॥ ९७ ॥**
**यदुक्तं मधुरस्कन्धे भेषजं तेन तर्पणम् ।**
**साधयित्वा भिषक् स्नेहं नस्तः कुर्याद्विधानवित् ९८**

शिरोविरेचनचूर्णविधिमाह—फलादीत्यादिना रोगभिषग्जीतीय एवोक्तम् । फलमत्र मूलकदादिभेदात्सप्तविधमुक्तम् । शिरोविरेचने द्रव्यं चूर्णं कल्पयेदिति । प्रधमनार्थमवपीडार्थं च चूर्णं कल्पयेत् । सधूमस्कन्धोपि रोगभिषग्जीतीय एवोक्तः ॥ ९७–९८ ॥

**प्राक्सूर्ये मध्यसूर्ये वा कुर्यात्तर्पणमेव च ।**
**उत्तानस्य शयानस्य शयने स्वास्तृते सुखम् ॥९९॥**
**प्रलम्बशिरसः किंचित्किंचित्पादोन्नतस्य च ।**
**दद्यान्नासापुटे स्नेहं तर्पणं बुद्धिमान्भिषक् ॥१००॥**
**अनवाक्शिरसो नस्यं न शिरः प्रतिपद्यते ।**
**अत्यवाक्शिरसो नस्यं मस्तुलुङ्गे च तिष्ठते ॥१०१॥**

नस्तःकर्मविधिमाह—प्राक्सूर्य इत्यादिग्रीष्मे प्राक्सूर्ये शी[illegible] तु मध्ये सूर्ये इति व्यवस्था । कृतान इयतः कृतानश्यकरणं यमलनिसर्गादिकः ॥ ९९–१०

अत एव शयान शुद्धयर्थं स्वेदयेच्छिरः ।
संस्वेद्य नासामुन्नाम्य वामेनाङ्गुष्ठप णा ॥ १०२ ॥
हस्तेन दक्षिणेनाथ दद्यादुभयतः समम् ।
प्रणाड्या पिचुना वापि नस्तः स्नेहं यथाविधि १०३
कृते च स्वेदयेद्भूय आकर्षेच्च पुनःपुनः ।
तत्स्नेहं श्लेष्मणा सार्धं तथा स्नेहो न तिष्ठति १०४

एवं शयानस्येति किञ्चिदेव नम्रशिरस्तया कुर्यादुभयतः सममिति उभयनासापुटेनापि तुल्यं दद्यात् । प्रणाड्या नस्यदाननलिकया । यथाविधि दोषरहितम् ॥ १०२–१०४ ॥

स्वेदेनोत्क्लेशितः श्लेष्मा नस्तःकर्मण्युपस्थितः ।
भूयः स्नेहस्य शैत्येन शिरसि स्त्यायते ततः॥१०५॥
श्रोत्रमन्यागलाद्येषु विकाराय स कल्पते ।
ततो नस्तःकृते धूमं पिबेत् कफविनाशनम् ।
हितान्नभुङ्निवातोष्णसेवी स्यान्नियतेन्द्रियः॥१०६॥

कृतस्य धूमपानस्योपपत्तिवर्णनपूर्वकं धूमपानमाह—स्वेदेनेत्यादि ॥ १०५–१०६ ॥

विधिरेषोऽवपीडस्य कार्यः प्रधमापनस्य च ।
षडङ्गुल्याथवा नाड्या धमेच्चूर्णं मुखेन वा ॥ १०७ ॥
विरिक्तशिरसं तूर्णं पाययित्वाम्बु भोजयेत् ।
लघु त्रिष्वविरुद्धं च निवातस्थमतन्द्रितः ॥ १०८ ॥
विरेकशुद्धौ दोषस्य कोपनं यस्य सेवते ।
स दोषो विचरंस्तत्र करोति स्वान्गदान्बहून् ।
यथास्वं विहितं तेषु क्रियां कुर्याद्विचक्षणः ॥१०९॥

प्रधमापनस्यानुक्तो विधिस्तथा वक्ष्यमाणस्य च षडंगुल्येत्यादिना विरिक्तशिरसमित्यादि सर्वशिरोविरेचनसाधारणम् । त्रिष्विति वातादिषु । विरेकशुद्धाविति शिरोविरेकशुद्धे दोषस्य कोपनं सेवत इति योज्यम् ॥ १०७–१०९ ॥

अकालकृतजातानां रोगाणामनुरूपतः ।
अजीर्णे भोजने भुक्ते तोयपीतेऽथ दुर्दिने ॥ ११० ॥
प्रतिश्याये नवे स्नाने स्नेहपानेऽनुवासने ।
नावनं स्नेहनं रोगान्करोति श्लैष्मिकान्बहून् ॥१११॥
तत्र श्लेष्महरः सर्वस्तीक्ष्णोष्णादिर्विधिर्हितः ।
क्षामे विरेचने गर्भे व्यायामाभिहतेष्वपि ॥११२॥
वातो रू नस्येन कुद्धस्याज्जनयेद्गदान् ।
तत्र वातहरः सर्वो विधिः स्नेहनबृंहणः ॥ ११३ ॥

अकालकृतजातानां च रोगाणामनुरूपत इति अकालकृतशिरोविरेचनजातानां रोगाणां अनुरूपतश्चिकित्सा कुर्यादित्यर्थः । नावनं स्नेहनमिति स्नेहनार्थं नस्यम् ॥११०–११३॥

स्वेदादिः स्यादृतं क्षीरं गर्भिण्यास्तु विशेषतः ।
ज्वरशोकाभितप्तानां तिमिरं मद्यपस्य च ॥ ११४ ॥
रूक्षैः सेकाञ्जनैर्लेपैः पुटपाकैश्च शोधयेत् ।
तेन ज्वरादयस्तत्र प्रशमं यान्ति तस्य तु ॥ ११५ ॥

स्वेदादि स्यादिति च्छेदः । घृतं क्षीरमिति गर्भिण्या वातजायाः गर्भपुष्टये । ज्वरेत्यादि ज्वरादितप्तानां स्नेहनं नावनं तिमिरं कुर्यात् । तथा मद्यपस्य तिमिरं कुर्यात् । अत्र चिकित्सामाह—रूक्षैरित्यादि । किन्नातिक्तद्रव्यकृतमंजनं शीताजनं । यदुक्तं शालाक्ये "एपणं रोपणं चैव प्रसादनमथापि च । तिमिरे रोपणं कार्यं प्रक रेण प्रसादनम् । कट्वम्लल्वणाद्यैश्च लेखनं कारयेद्बुध । श्रेला(?)निर्वापयेत्युक्तं रूक्षा रोपयति द्रुतम्" रूक्षैरित्यंजनादिभिः संबध्य । लेपो वदनालेपः । पुटपाकोक्तिरपैकैरिह लेखनः शमनो वा नेयः । पुटपाको हि शालाक्ये स्नेहनलेखनप्रसादनभेदात्त्रिविध उक्तः । तद्विधिश्चेह चकारात्तुप्रपंचितः ॥ ११४–११५ ॥

स्नेहनं शोधनं चैव द्विविधं नस्यमुच्यते ।
प्रतिमर्शश्च नस्यार्थं करोति न च दोषवान् ॥११६॥
नस्तः स्नेहाङ्गुलिं दद्यात्प्रातर्निशि च सर्वदा ।
न चोच्छिङ्घेदरोगाणां प्रतिम ः स दार्ढ्यकृत् ॥११७

प्रतिमर्शस्य नस्यादेः कर्मभयदर्शनार्थं नावनकर्म प्रागुक्तमनूद्यते स्नेहनमित्यादि । अन्ये तु सर्वं स्तःकर्मणामेवैतत् कर्मक्षयमनूद्यते । तत्र च स्नेहनशमनस्य प्रागुक्तस्यावरोध इति वदंति नस्यार्थमिति । स्नेहनं शोधनम् । न च दोषवानिति तद्यापत्तिमान् । प्रतिमर्शविधिमाह—नस्त इत्यादि । स्नेहाङ्गुलिमिति स्नेहपूरितमङ्गुलिम् । सर्वदेति सर्वर्तुषु । दार्ढ्यकृदिति शिरःकप ।दिदार्ढ्यकृत् । अयं प्रतिमर्शः शून्यस्नेहाना च सार्वकालिको ज्ञेयः । यस्तु भूरिस्नेहमात्रो नासौ सार्वकालिकः । यदुक्तं "ईषदुत्स्नेहनात्स्नेहपानात्तर्क प्रपद्य । ........प्रतिमर्श प्रमाणतः । तथा प्रतिमर्शं तु न पिबेत्... यन्त्रयांतरः । यावत्स्नेहो व्रजेदास्यं तत्प्रमाणं च तस्य च ॥ ११६–११७ ॥

तत्र श्लोकौ ।

त्रीणि यस्मात्प्रधानानि मर्माण्यभिहतेषु च ।
तेषु लिङ्गं चिकित्सां च रोगभेदाश्च सौषधाः ॥११८
विधिरुत्तरबस्तेश्च नस्तःकर्मविधिस्तथा ।
षड्व्यापच्छेषजं सिद्धौ मर्माध्याये प्रकीर्तितम् ॥११९॥

इति चरकसंहितायां सिद्धिस्थाने नवमोऽध्यायः ॥ ९ ॥

त्रीणि यस्मादित्यादि—संग्रहो व्यक्तार्थः ॥११८–११९॥

॥ इति श्रीमच्चरकचतुराननश्रीचक्रपाणिदत्तविरचितायां
आयुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने
त्रिमर्मीयासिद्धिर्नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

### वस्तिसिद्धिः ।

सिद्धानां वस्तीनां तेषु तेषु रोगेषु सर्वदा ।
शृण्वग्निवेश गदतः सिद्धिं सिद्धिप्रदां भिषजाम् ॥१॥

त्रिमर्मीयायां बहुरोगप्रतिपादनाद्बहुरोगहितवस्तिप्रतिपादनार्थं वस्तिसिद्धिरुच्यते—अत्रैव वस्तिशब्देन सिद्धवस्तयो वक्ष्यमाणा अभिप्रेताः । सिद्धानामिति प्रसिद्धफलानाम् । तेषुतेष्विति वक्ष्यमाणवातगदादिषु । सिद्धिमिति वस्तिनिष्पादकाम् । किंवा वस्त्यभिधायकं ग्रंथम् ॥ १ ॥

बलदोषकालरोगप्रकृतीः प्रविभज्य योजितः ।
सम्यक् स्वैः स्वैरौषधवर्गैः स्वान्स्वान्रोगा-
न्नियच्छति ॥ २ ॥

कर्मान्यद्वस्तिसमं न विद्यते शीघ्रसुखविशोधित्वात् ।
आश्वपतर्पणतर्पणयोगाच्च निरत्ययत्वाच्च ॥ ३ ॥

वस्तेरितिकर्तव्यतां तद्गुणांश्च प्रतिपादनीयवस्त्यंगभूतानाह बलदोषेत्यादि । अत्र च बलादौ यथाविधानमिह गृहीतम् तथा सर्वपरीक्षावरोधो व्याख्येयः । परीक्षां दोषौषधेत्यादिनाप्युक्तोप्ययमर्थः पुनः प्रकरणवशादुच्यते । स्वैरौषधवर्गैरिति प्रतिपादितैरौषधैः । स्वान्स्वानिति तद्वस्तिविधेयौषधस्य प्रशमनीयता । आश्वपतर्पणयोगादिति अपतर्पणार्थं प्रयुक्तो वस्तिः । अपतर्पणभेषजेभ्यः शीघ्रमपतर्पणं करोति । एवं तर्पकद्रव्ययुक्तोपि वस्तिः शीघ्रमेव तर्पणापेक्षया अपतर्पणं करोति ॥ २–३ ॥

सत्यपि दोषहरत्वे कटुतीक्ष्णोष्णादि भेषजादानात् ।
दुःखोद्गारोत्क्लेशाहृद्यत्वकोष्ठाबाधा विरेकेस्युः ॥४॥

वस्त्यपेक्षया शोधनांतरेण दोषहरणे दोषमाह—सत्यपीत्यादि । कट्वादिभेषजदानाद्दुःखं चोद्गारश्चाहृद्यत्वं च कोष्ठाबाधश्चैते सर्वे भवंति । तत्र दुःखं कटुकादिना रसेनोद्वेगादेव भवति । एते च दोषा वस्तौ न संभवंतीति भावः । विरेकशब्देन वमनविरेकावपि ग्राह्यौ । किंवा वमनमिह वस्तिना साकमत्यंतभिन्नविषयत्वादेव नोदाहृतम् । विरेकस्तु पक्वाशयस्थेपि दोषे वस्तिविषयो भवतीति कृत्वा विरेकादेव वस्तेः प्राधान्यमुच्यते ॥ ४ ॥

अविरेच्यौ शिशुवृद्धौ तावदप्राप्तहीनधातुबलौ ।
आस्थापनमेव तयोः सर्वार्थकृदुत्तमं कर्म ॥ ५ ॥

वस्तेर्यौगिकतया प्राधान्यमाह—अविरेच्याविति यथासंख्यं व्याख्येयम् । अप्राप्तहीनधातुबलौ । अप्राप्तधातुबलश्च बालः हीनधातुबलो वृद्धः । एवंभूतत्वादविरेच्यौ । सर्वार्थकृदिति—सर्वदोषहरणम् ॥ ५ ॥

बलवर्णहर्षमार्दवगात्रस्नेहान्नृणां ददत्याशु ।
अनुवासनं निरूहश्चोत्तरवस्तिश्च स त्रिविधः
शाखावातार्तानां सङ्कुचितस्तब्धभग्नसन्ध
विट्सङ्गाध्मानारुचिपरिकर्तिरुगादिषु च श
उष्णार्तानां शीताञ्छीतार्तानां तथा सुखो
तद्योगौषधयुक्तान्वस्तीन्सर्वत्र विनियुञ्ज्यात् ॥
वस्तीन् बृंहणीयान्दद्याद्व्याधिषु विशोधनीयेषु
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कदेहानाम् ।
युञ्ज्याद्विशोधनीयान्दोषनिबद्धायुषो ये च ॥ १०

वस्तेर्भेदानाह—अनुवासनमित्यादितद्योगौषधयुक्तानि उष्णार्तिहरेण शीतार्तिहरेण चौषधेन कल्पितान् विशोधनव्याधियुक्तानुदाहरति मेदस्विन इत्यादि—विशोध्या ये चेति भूरिदोषत्वेन ये शोधनार्हा इत्यर्थः । दोषनिबद्धायुष इति दोषे मलादिरूपे देहस्थे निबद्धमायुर्येषां दुर्बलप्रवृत्तीनां ते तथा । उक्तं हि "शोषी मुंचति गात्राणि पुरीषभ्रंशनादपि । आबलापेक्षणी मात्रा किं पुनर्यो विरिच्यते" इति ॥ ६–१० ॥

वाजीकरणेऽसृक्पित्तयोश्च मधुघृतपयोयुताः सर्वे
शस्ताः सतैलमूत्रारनाललवणाश्च कफवाते ॥११॥
युञ्ज्याद्द्रव्याणि वस्तिष्वम्लं मूत्रं पयःसुराक्वाथान् ।
अविरोधाद्धातूनां रसयोनित्वाच्च जलमुष्णम् ॥१२॥

कार्यविशेषापेक्षया वस्तीनां संस्कारविशेषानाह—वाजीकरणेत्यादि—मधुप्रक्षेपो वस्तिपूर्वोक्तसामान्यविधानादप्यधिकमात्रया प्रक्षेपार्थं चेहोच्यते । अविरोधाद्धातूनामिति पूर्वेण संबध्यते तेन विरोधि न भवति तद्देयम् । यत्तु धातुविरोधि न भवति तद्देयम् । व्याधिप्रकृतिविरुद्धं यदस्य भवति न तस्य देयमित्यर्थः । रसयोनित्वाच्च जलमुष्णं यस्माद्रसयोनित्वात्तदुष्णं सत् सर्ववस्तिगतरसस्य च पोषणार्थं सर्ववस्तिषु देयम् । एतज्जलं वस्तिषु साक्षात्प्रक्षेपादर्शनात्कल्कादिपेषणे विनियोज्यम् । किंवा अत्र तद्वचनप्रामाण्यादेव ज्ञेयम् । किंवा जलशब्दोयं इहोपलक्षणार्थम् । तदम्लादिद्रवदानस्यैवेयमुपपत्तिः । रसयोनित्वं द्रवसंबंधादेवाम्लादीनामुपपन्नम् । अन्यैश्च जलमुष्णं प्रति नियतमेव । चूर्णवस्तिश्च यः केवलद्रवेण दीयते । तंत्रांतरेप्युक्तं यथा "रास्ना वचा बिल्वशताह्वैला पूतीककृष्णा फलदारुकृष्णैः । ससैन्धवाम्लोष्णसजलः सतैलः शूलघ्न इष्टः खलु चूर्णवस्ति"रिति ॥ ११—१२ ॥

सुरदारुशताह्वैलाकुष्ठमधुकपिप्पलीमधुस्नेहाः ।
ऊर्ध्वानुलोमभागाः सर्षपाः शर्करा लवणम् ॥१३॥
आवापो वस्तीनामतः प्रयोज्यानि येषु यानि
[illegible] ानि सह कषायै

चिरजातकठिनबलिषु व्याधिषु तीक्ष्णा विपर्यये च मृदवः।
सम्प्रतिवापकषायैर्योऽस्यास्त्वनुवासननिरूहाः ॥१५॥
अर्धश्लोकैरतः सिद्धान्नानाव्याधिषु वर्गशः।
वस्तीन्वीर्यसमैर्भागैर्यथार्हानिह ताञ्छृणु ॥ १६ ॥
बिल्वाग्निमन्थस्योनाकाः काश्मर्यः पाटलिस्तथा।
शालिपर्णी पृश्निपर्णी बृहत्यौ वर्धमानकः ॥ १७ ॥
यवाः कुलत्थाः कोलास्थिस्थिरा चेति त्रयोऽनिले।
शस्यन्ते सचतुःस्नेहा पिशितस्य रसान्विताः ॥१८॥
नलवञ्जुलवानीरशतपत्राणि शैवलम्।
मञ्जिष्ठाशारिवानन्ता पयस्या मधुयष्टिका ॥ १९ ॥
चन्दनं पद्मकोशीरं तुङ्गं च पैत्तिके त्रयः।
सशर्कराघृतक्षौद्राः सक्षीरा वस्तयो हिताः ॥२०॥
अर्कस्तथैव चालर्क एकाष्ठीला पुनर्नवा।
हरिद्रा त्रिफला मुस्तं पीतदारु कुटन्नटम् ॥ २१ ॥
पिप्पल्यश्चित्रकश्चेति त्रयस्ते श्लेष्मरोगिणाम्।
सक्षारक्षौद्रगोमूत्रा नातिस्नेहान्विता हिताः ॥२२॥
फलजीमूतकेक्ष्वाकुधामार्गवकवत्सकाः।
श्यामा च त्रिफला चैव स्थिरा दन्ती द्रवन्त्यपि२३
प्रकीर्या चोदकीर्या च नीलिनी क्षीरिणी तथा।
सप्तला शङ्खिनी लोध्रं फलं काम्पिल्लकस्य च ॥२४॥
चत्वारो मूत्रसिद्धास्ते पक्वाशयविशोधनाः।
व्यस्तैरपि समस्तैश्च चतुर्योगा उदाहृताः ॥२५॥
काकोली क्षीरकाकोली मुद्गपर्णी शतावरी।
विदारी मधुयष्ट्याह्वा शृङ्गाटककशेरुके ॥ २६ ॥
आत्मगुप्ताफलं माषाः सगोधूमा यवास्तथा।
जाङ्गलानूपजं मांसमित्येते शुक्रवर्धनाः ॥ २७ ॥
जीवन्ती चाग्निमन्थश्च धातकीपुष्पवत्सकौ।
प्रग्रहः खदिरः कुष्ठं शमी पिण्डीतको यवाः ॥२८॥
प्रियङ्गु रक्तमूली च तरुणी स्वर्णयूथिका।
वटाद्याः किंशुकं लोध्रमिति सांग्राहिका मताः २९
परिस्रवे शृतं क्षीरं सवृश्चीरपुनर्नवम्।
आखुपर्णिकया वापि तण्डुलीयकयुक्तया ॥ ३० ॥
कोलकतककाण्डेक्षुदर्भकाशेक्षुशालिभिः।
दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः ॥ ३१ ॥
फर्बुदाराढकीनीपविदुलैः क्षीरसाधितैः।
वस्तिः प्रदेयो भिषजा शीतः समधुशर्करः ॥ ३२ ॥
परिकर्तैस्तथा वृन्तैः श्रीपर्णीकोविदारजैः।
देयो वस्तिः सुवैद्यैस्तु यथावद्विदितक्रियैः ॥ ३३ ॥
मुष्टिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः।
हितः प्रवाहणे तद्वद्वृन्तैः शाल्मलिकस्य च ॥ ३४ ॥
अश्वावरोहिकाः काकनासाराजकशेरुकैः।
सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृताः ३५
न्यग्रोधाद्यैश्चतस्रश्च तेनैव विधिनापरः।
वस्तिः प्रवाहणे देयो भिषजा कल्पितो धिया ॥३६
बृहती क्षीरकाकोली पृश्निपर्णी शतावरी।
काश्मरी बदरी दूर्वा तथोशीरप्रियङ्गवः ॥ ३७ ॥
जीवनीयैः शृतौ क्षीरा द्वौ घृताञ्जनसंयुतौ।
वस्तौ प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥ ३८ ॥
गोऽव्यजामहिषीक्षीरैर्जीवनीययुतैस्तथा।
तेनैव विधिना वस्तिर्देयः सक्षौद्रशर्करः ॥ ३९ ॥
शशैणदक्षमार्जारमहिषाव्यजशोणितैः।
सद्यस्कैर्मृदुभिर्वस्तिर्जीवादाने प्रशस्यते ॥ ४० ॥
मधूकमधुकद्राक्षादूर्वाकाश्मर्यचन्दनैः।
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः ॥ ४१ ॥
रक्तपित्तप्रमेहे तु कषायः सोमवल्कजः।
वस्तिर्देयो विधिज्ञेन भिषजा युक्तिकल्पितः ॥ ४२ ॥
त्रिकास्त्रयोऽनिलादीनां चतुष्काश्चापरे त्रयः।
पक्वाशयविशुद्ध्यर्थं वृष्याः सांग्राहिकास्तथा ॥४३॥
परिस्रावे तथा दाहे परिकर्ते प्रवाहणे।
अतियोगे मताः पञ्च जीवादाने तथा त्रयः ॥४४॥
रक्तपित्ते द्वयं मेह एकत्रिंशच्च पञ्च च।
सुलभाश्चौषधक्लेशा वस्तयो गणवत्तमाः ॥ ४५ ॥
गुल्मातिसारोदावर्तस्तम्भसङ्कुचितादिषु।
सर्वाङ्गैकाङ्गरोगेषु रोगेष्वेवंविधेषु च ॥ ४६ ॥
यथास्वमौषधैः सिद्धान्वस्तीन्दद्याद्विचक्षणः।
पूर्वोक्तेन विधानेन कुर्याद्रोगान्पृथग्विधान् ॥४७॥"

इति चरकसंहितायां सिद्धिस्थाने दशमोऽध्यायः ॥ १० ॥

सुरदार्वित्यादिना वस्तिदोषापेक्षया व्यस्तसमस्तविधया प्रक्षेप्यानाह—आवापो वस्तीनामिति वस्तिष्वावाप इत्यर्थः। यानिति कषायान्, चिरजातकठिनवर्तिषु तीक्ष्णा इति। अत्रोक्ततीक्ष्णद्रव्ययोगेन तीक्ष्णविपर्यये अचिरजाते अकठिनबले। अनुवासननीरुहा इत्यनुवासनेन कषाययोगः स्नेहसाधनार्थमेव। आवापस्त्वनुवासनेपि शताह्वादिना कर्तव्य एव। यदुक्तमन्यत्र "पिप्पली मदनं कुष्ठं शताह्वा मधुकं वचा। प्रयोज्या मात्रया चात्र आवापा अनुवासने" इति। पूर्वं सिद्धाना वस्तीनामित्यादिना प्रतिज्ञातान्वस्तीनाह—अर्धश्लोकैरित्यादि। व्याधिष्वित्यत्र व्याधिशब्दे दोषेपि वर्तनीयः। बहुश इत्येकैकस्मिन्व्याधौ दोषे च बहु इत्यर्थः। वीर्यसमैर्भागैरित्यन्योन्यानुसाधर्म्यैर्भागैः। वर्धमानक एरंडः। रसान्विता इति प्रक्षिप्तमांसरसाः। वंजुलो वेतसः। वानीरस्तद्भेदः। पुंगः पुंनागः। अलर्को मंदारः। प्रकीर्या करञ्जः। नीलिनी नीलवृंता नीलाजलिकेत्यन्ये। एते शुक्रमासदा इति।

अत्रैक इति चलार. पूर्वोक्ताः। पिंडीतको मदनम्। रक्तमूली समंगा। तरुणी रामतरुणी। नवमालिका एडलीयकमित्यंतेन परिसाणोक्ता। कामेक्षुर्बृहदिक्षु। पोट्गुले होगुल। उत्पलं नलिनम्। सौगंधिकादयो जलजाः पुष्पविशेषाः। क : काचनार। विंदुलो वेतस. । कोविदारजैरित्यनेन द्वितीयः। शाल्मलक. मूलकचूर्णातश्च तृतीय। प्रवाणे अश्वावरोहको अश्वकर्ण. इक्षुको वा जतुकर्णदर्शनादश्वावरोहकोश्वः। न्यग्रोधाद्याश्चत्वारः न्यग्रोधोदुंबराश्वत्थप्लक्षा.। तेनैव विधिनेति पूर्वयोगविधिना। जीवदाने प्र स्त इति। जीवशोणितवृद्धौ। जीवनीयैरित्यादिना जीवदाने प्रशस्त इत्यंतेन तृतीयो वस्तिरुच्यते। अयं च यद्यपि श्लोकविहितो वस्तिस्तथापि श्लोकार्धैरिति प्रतिज्ञा परप्रयोगाणा श्लोकार्धविहितत्वेन ज्ञेया। किंवा शशैणेत्यादिना अर्धश्लोकविहित एवावस्तितः। पूर्वार्धेन तस्य कर्तव्यतोच । इतिकर्तव्यताभिधानं च श्लोकार्द्धादतिरेकेणापि भवतीति नियोगांतरेष्वपि दृष्टम्। रक्तपित्ते प्रमेहे इतिच्छेद। सोमवल्को विट्खदिर। एतौ द्वौ मिलित्वा सग्रहे प ितौ। रक्तपित्ते प्रमेहे चेत्यनेन सग्रहे व्यक्त एव। औषध शा इति अन्योपधाश्च। अनुक्तवस्तिकल्पनार्थमाह—गुल्मातिसारेत्यादि। यथास्वमौपधैरिति यथास्वव्याधिप्रत्यनीकैर्भेषजै. । कुर्याद्रोगान्पृथक्कृविधानिति यथोक्तविधिना योगान्यथोचितान् गुल्मादिषु कल्पनया वस्तिषु कुर्यात् ॥ १३–४७ ॥

इति श्रीमच्चरक राननश्रीमच्चक्रपाणिदत्तविरचिताया आयुर्वेददीपिकाया चरकतात्पर्यटीकाया सिद्धिस्थाने वस्तिसिद्धिर्नाम दशमोऽध्याय. ॥ १० ॥

---

## एकादशोऽध्यायः।

### फलमात्रासिद्धिः।

भगवन्तमुदारसत्त्वधी-
श्रुतिविज्ञानसमृद्धमत्रिजम्।
फलवस्तिवरत्वनिश्चये
सविवादा मुनयोऽभ्युपागमन् ॥ १ ॥
भृगुकौशिककाप्यशौनकाः
सपुलस्त्यासितगौतमादयः।
कतमत्प्रवर फलादिषु
स्मृतमास्थापनयोजनास्विति ॥ २ ॥
कफपित्तहरं परं फले-
ष्वथ जीमूतकमाह शौनकः।
मृदुवीर्यतया भिनत्ति त-
दिति चोवाच नृपोऽथ वामकः ॥ ३ ॥

पूर्वसिद्धिषु फलानि आचार्येण प्रयोगेण विहितानि तेन तेषा फलादीना गुणादीनामवधारणार्थं तथा अनुक्तवस्तुप्रदर्शनार्थं फलमात्रासिद्धिरुच्यते। वस्तिविधानकथनं यद्यपि अप्रस्तुत तथापि यौगिकतया वस्तेरेव मात्रा प्रतिपाद्यते न फलादे तथा गुणादौ वस्तिमात्राया प्रतिपादिका सिद्धिः फलमात्रासिद्धि। फलादीना वस्तियोगेषु गुणान्प्रतिपादयितुं पूर्ववृत्तमितिहासमाह—भगवंतमित्यादि—इतिहासश्च संहिताया धर्म्यतया ग्रंथे पूज्यतोपदर्शनार्थम्। फलादीना वस्तौ वरत्व फलवस्तिवरत्वं तस्मिन्निश्चये अवधारणे फलादिष्विति मदनजीमूतकादिषु। कल्पे जी यद्यपि पित्तदोषहरत्वमुक्तं तथापि इह—वचनात्कफपित्तहरत्वमस्य प्र धान्यादुच्यते। मृदुवीर्यतया भिनत्तीत्यादिना अ र्थ भिनत्ति ॥ ३ ॥

कटुतुम्बीफलमुत्तमं मतं
वमने दोषसमीरणं च तत्।
तदयोग्यमशैत्यतीक्ष्णता-
कटुरौक्ष्यादिति गौतमोऽब्रवीत् ॥ ४ ॥
कफपित्तनिवर्हणं परं
स च धामार्गवमित्यमन्यत।
तदमन्यत वातलं पुन-
र्वडिशो ग्लानिकरं बलापहम् ॥ ५ ॥
कुटजं प्रशशंस चोत्तमं
न बलघ्नं कफपित्तहारि च।
अतिविज्जलमूर्ध्वभागिकं
पवनक्षोभि च काप्य आह तत् ॥ ६ ॥

दोषसमीरणमिति वस्तिना दोषहारकम् ॥ ४–६ ॥

कृतवेधनमाह वातलं
कफपित्तं प्रबलं हरेदिति।
तदसाध्विति भद्रशौनकः
कटुकं चापि बलघ्नमित्यपि ॥ ७ ॥
इति तद्वचनानि हेतुभिः
सुविचित्राणि निशम्य बुद्धिमान्।
"प्रशशंस फलेषु निश्चयं
परमं चात्रिसुतोऽब्रवीदिदम् ॥ ८ ॥
फलदोषगुणान्सरस्वती
प्रति सर्वैरपि सम्यगीरिता।
न तु किंचिद्दोषनिर्गुणं
गुणभूयस्त्वमतो विचिन्त्यते ॥ ९ ॥
इह कुष्टहिता गराागरी
हितमिक्ष्वाकु तु मेहिने मतम्।
कुटजस्य फलं हृदामये
प्रवरं कोठफलं च पाण्डुषु ॥ १० ॥

कृतवेधनमित्यादौ आशु कफपित्त हरेदिति योज्यम्। इहवस्तिविवादक इत्यनेन जीमूतकादीना गुणदोषाश्च कथिता भवंतीति तात्पर्यं ज्ञेयम्। प्रशशंसेति फलेषु जीमूतकादिषु

फलदोषान् लक्ष्यीकृत्य । सरस्वतीति वाक् । अदोषनिर्गुणमिति दोषवदेव गुणवदेव वा न किंचिदित्यर्थः । तेन सत्यपि लोके दोषसंबंधे यद्गुणभूयिष्ठं तदिह रोगप्रशमप्रयोगेषु विज्ञेयम् ॥ ७-१० ॥

उदरे कृतवेधनं हितं
मदनं सर्वगदाविरोधि त ।
मधुकं सकषायतिक्तकं
तदरूक्षं कटुकं च विज्जलम् ॥ ११ ॥
कफपित्तहृदाशुकारि चा-
प्यनपायं पवनानुलोमि च ।
फलनामविशेषतस्त्वतो
लभतेऽन्येषु फलेषु सत्स्वपि ॥ १२ ॥

सर्वगदाविरोधीति पदेन मदनस्य सार्वयौगिकत्वं ब्रूते । आशुकारीत्याशुदोषनिर्हरणकारि अतो लघुतेति फलेषु प्रकर्षेणाढेन मदनफलं फलमित्युच्यते न जीमूतकादिफलम् ॥ ११ ॥ १२ ॥

गुरुणा च वचस्युदाहृते
मुनिसङ्घैरिति पूजिते ततः ।
प्रणिपत्य मुदा समन्वितः
सहितः शिष्यगणोऽनुपृष्टवान् ॥ १३ ॥
स ॅ ॅ णकृद्गुरुणोक्तो
वस्तिरूर्ध्वमतमर्थवेदिना ।
नाभ्यधो गुदगतश्च शरीरा-
त्सर्वतः कथमपोहति दोषान् ॥ १४ ॥
तद्गुरुरब्रवीदिदं शरीरं
तन्त्रयतेऽनिलः सङ्गविघातात् ।
केवल एव दोषसहितः
स हि वायुः प्रकोपमुपयाति ॥ १५ ॥
तं पवनं सपित्तकफविट्कं
शुद्धिकरोऽनुलोमयति वस्तिः ।
सर्वशरीरगश्च गदसंघात-
प्रकाशनात्प्रशान्तिमुपयाति ॥ १६ ॥
अथाभिगम्यार्थमखण्डितं धिया
गजोष्ट्रगोऽश्वाव्यजवस्तिकर्म ।
अपृच्छदेनं स च वस्तिमब्रवी-
द्विधिं च तस्याह पुनः प्रचोदितः ॥१७॥
अजाविके सौम्यगजोष्ट्रयोर्वा
गवाश्वयोर्वस्तिमुशन्ति माहिषम् ।
अजाविकादुन्तसुवस्तिमुत्तरं
वदन्ति वस्तिं विपरीतरूपम् ॥ १८ ॥
सुवस्तिमष्टादशषोडशाङ्गुलं
तथैव नेत्रं च दशाङ्गुलं क्रमात् ।
गजोष्ट्रगोऽश्वाव्यजवस्तिसंधौ
चतुर्थभागे, च सकर्णिकं वदेत् ॥१९॥
प्रस्थस्त्वजाव्योर्हि निरूहमात्रा
गवादिषु द्वित्रिगुणो यथाबलम् ।
निरूह उष्ट्रस्य तथाढकद्वयं
गजस्य वृद्धिस्त्वनुवासनेऽष्टमः ॥२०॥

सर्वकर्मगुणकृदिति सर्वकर्मणां वमनादीना गुणं दोषहरणादिकं करोतीति सर्वकर्मगुणकृत् । किंवा सर्वकर्माणि लंघनबृंहणादीनि गुणांश्च बलाग्न्यादीन् करोति । नाभ्यधोगुदमिति अधोगुदं व्रजति । तंत्रयते धारयते विघातादिति प्रकोपकहेतुसंबंधात् । वात एव प्रायः प्रकोपं व्रजति । यत्तु प्रदेशांतरे वातप्रकोपस्तन्मूलेनेति भावः । तत्प्रशांतिमुपशांतिम् । पक्वाशयस्थवातमूलप्रशमाद्वस्तिना कृतात्तन्मूलानुबंधाः शेषस्थानगतविकाराः प्रशाम्यंति । एतच्च वनस्पतिमूलच्छेदादिदृष्टांतेन प्राक् प्रतिपादितमेव । एतेन वस्तिना मूलविजयाद्देशांतरगततन्मूलविकारजयो यः क्रियते स उक्तः । यत्तु वस्तेर्वीर्यमापादमस्तकं प्रसरति तच्च वातं हंतीति प्रागुक्तमेव ज्ञेयम् । यत्तु वीर्यवदिति कर्मविशेषणं तेन कर्म रोगनुदिति रोगहरणे श्रेष्ठं चिकित्सितमित्यर्थः । वस्तिमब्रवीदिति गजादीनां रोगहरणे श्रेष्ठं वस्तिमेवाब्रवीत् । तदनंतरं तस्य वस्तेर्विधिः पुनः शिष्येण पृष्टः प्राह—अजाविकेत्यादि । जरद्गवो वृद्धवृषः । तदुपायचिंतका इति गजादिवस्तिसाधने दत्तचित्ताः । क्रमादिति—यथाक्रमम् । गजादिषु नेत्रप्रमाणं चतुर्थ भागोपनयमिति नेत्रचतुर्थभागप्रवेशकम् । गवादिष्विति गोप्रकारेषु गोमहिषाश्वाना ग्रहणाद्बहुवचनं साधु । गजस्य वृद्धिरिति ह्याढकद्वैगुण्येन द्रोण इत्यर्थः । अनुवासनेऽष्टम इति यथोक्ताजादिनिरूहमानादजादीनामनुवासनेऽष्टमः स्नेहभागो देयः ॥ १३—२० ॥

कलिङ्गकुष्ठे मधुकं सपिप्पली
वचा शताह्वा मदनं रसाञ्जनम् ।
हितानि सर्वेषु गुडः ससैन्धवो
द्विपञ्चमूलं सविकल्पना त्वियम् ॥२१॥
गजेऽधिकोऽश्वत्थवटाश्वकर्णजाः
सखादिराः प्रग्रहशालतालजाः ।
तथा च उष्ट्रे धवशिग्रुपाटली-
मधूकसाराः सनिकुम्भचित्रकाः ॥२२॥
पलाशभूतीकसुराह्वरोहिणी
कषाय उक्तस्त्वधिको गवां हितः ।
पलाशदन्तीसुरदारुकचूर्ण-
द्रवन्त्य उक्तास्तुरगस्य चाधिकाः ॥२३॥

खरोष्ट्रयोः पीलुकरीरखादिराः
शम्याकबिल्वादिगणस्य च च्छदाः।
अजाविकानां त्रिफलापरूषकं
कपित्थकर्कन्धु सबिल्वकोलजम् ॥२४॥

कल्पनान्वितमिति विशेषकल्पना गजेऽधिका वक्ष्यमाणा। तालजा. तालफलम्। तथैवेत्यादिना गणा हितमुच्यते ॥ २१-२४ ॥

अथाग्निवेशः सततोऽन्तरान्तरा
हितं च पप्रच्छ गुरुस्तदाह च।
सदातुराः श्रोत्रियराजसेवका-
स्तथैव वेश्याः सह पण्यजीविभिः॥२५॥

बस्तिविषयाणि मतान्तराणि दर्शयन्नाह—अथाग्निवेशेत्यादि—हितं चेति सदातुराणां हितम्। पण्यजीविनो वणिजः॥ २५ ॥

द्विजो हि शिष्याध्ययनव्रताह्निक-
क्रियादिभिर्देहहितं न चेष्टते।
नृपोपसेवी नृपचित्तरक्षणा-
त्परानुरोधाद्बहुचिन्तनाद्भयात् ॥२६॥
नृचित्तवर्तिन्युपचारतत्परा
मृजाभिभूषानिरतापराङ्गना।
सदासनादत्यनुबद्धविक्रय-
क्रयादिलोभादपि पण्यजीविनः ॥२७॥
सदैव ते ह्यागतवेगनिग्रहं
समाचरन्ते न च कालभोजनम्।
अकालनिर्हारविहारसेविनो
भवन्ति येऽन्येऽपि सदातुराश्च ते ॥२८

यथोक्तानां सदातुरत्वे हेतुमाह—द्विजो हीत्यादि—देहहितं न चेष्टतेइत्यादि पण्यजीविन इत्यंते यावदनुवर्तनीयम्। परानुरोधादिति नृपानुजीविपुरुषान्तरानुरोधात्। उपचारतत्परा इति पुरुषोपकारतत्पराः। मृजा शरीरमार्जनम्। पण्यंगता वेश्या इत्यर्थः। अत्यर्थबहुविक्रियादिलोभादिति निरन्तरानुबद्धक्रयविक्रयादेर्लोभात्। अन्यानपि सदातुरानाह अकालेत्यादि—निर्हारो मलादिनिर्गमः॥ २६-२८ ॥

समीरणं वेगविधारणोद्धतं
विबद्धसर्वाङ्गरुजाकरं भिषक्।
समीक्ष्य तेषां फलवर्तिमादितः
सुकल्पितां स्नेहवतीं प्रयोजयेत् ॥२९॥
निरूहितं धन्वरसेन भोजितं
निकुम्भतैलेन ततोऽनुवासयेत्।
बलाश्वगन्धासहबिल्वचित्रका-
न्द्विपञ्चमूले कृतमालकोत्पले ॥ ३० ॥
यवान्कुलत्थांश्च पचेज्जलाढके
रसः स पेष्यस्तु कलिङ्गकादिभिः।
सतैलसर्पिर्गुडसैन्धवो हितः
सदा नराणां बलवर्धनः परः ॥ ३१ ॥
पुनर्नवैरण्डनिकुम्भचित्रका-
न्सदेवदारुत्रिवृतानिदिग्धिकान्।
महान्ति मूलानि च पञ्च तद्भवा-
न्विपाच्य मूत्रे दधिमस्तुसंयुते ॥ ३२ ॥
सतैलसर्पिर्लवणैश्च पञ्चभि-
र्विमूर्च्छितं बस्तिमथ प्रयोजयेत्।
तथैव शस्तं मधुकेन साधितं
फलेन बिल्वेन शताह्वयाथ वा ॥ ३३ ॥
सजीवनीयस्तु रसेऽनुवासने
निरूहणे चालवणे शिशोर्हितः।
न चान्यदाश्वङ्गबलाग्निवर्धनं
निरूहबस्तेः शिशुवृद्धयोः परम् ॥ ३४ ॥

पुनर्नवेत्यादि नीरूहः। त्रिवृता दती। महान्ति मूलानि पंचेति बिल्वादिपंचमूलानि। निकुंभतैलेनेति—निकुंभक्वाथकल्कसिद्धेन तैलेन। बलामित्यादौ कालिंगकादिभिरिति कलिंगकुष्ठमधुकबिल्वादीनामिहोक्तेः। फलेन बिल्वेन शताह्वया पिबेदिति तैलत्रयमानुवासनिकम्। सजीवनीयस्तु रसोनुवासन इति जीवनीयकषायसाधितः स्नेहोनुवासने कर्तव्यः। तथा निरूहणे जीवनीयरस अलवणः शिशोर्हितः। अनुवासनमपि जीवनीयसाधितं शिशोरेव हितं। अनेन बालवृद्धयौगिकत्वं बस्तेरुक्तं परं कर्मेति श्रेष्ठं कर्म ॥ २९-३४ ॥

तत्र श्लोकः।

फलकर्मबस्तिपुवरत्वनिश्चयो बस्तयोगवादीनाम्।
सततातुराश्च दृष्टाः फलमात्रायां हितं चैषाम्॥३५॥

इति चरकसंहितायां सिद्धिस्थाने एकादशोऽध्यायः॥ ११ ॥

संग्रहो व्यक्तः॥ ३५ ॥

इति श्रीमच्चरकचतुराननश्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने फलमात्रासिद्धिर्नामैकादशोध्यायः॥ ११ ॥

---

## द्वादशोऽध्यायः।

### उत्तरबस्तिसिद्धिः।

अथ खल्वातुरं वैद्यः संशुद्धं वमनादिभिः।
दुर्बलं कृशमल्पाग्नि मुक्तसंधानबन्धनम् ॥ १ ॥
निर्हृतानिलविण्मूत्रकफपित्तं कृशाशयम्।
शून्यदेहं प्रतीकारासहिष्णुं परिपालयेत् ॥ २ ॥

**यथैव तरुणं पूर्णं तैलपात्रं तथैव च।**
**गोपाल इव दण्डी गाः सर्वस्मादपचारतः ॥ ३ ॥**

पारिशेष्यादेवोत्तरबस्तिसिद्धिरभिधीयते—उत्तराणां श्रेष्ठानां वस्तीनां सिद्धिरुत्तरवस्तिसिद्धिः। वक्ष्यमाणवस्तीनां विषयं मिथ्योपचारजव्याधिप्रशमं दर्शयितुं सम्यगुपचारमेव तावदाह—अथ खल्विति वमनादिभिरिति वमनविरेचनयोः वक्ष्यमाणं संबंधं संबध्यते तेन योयं क्रमः एतयोर्न भवति। मुक्तसंधानबंधनमिति मुक्तसंधिबंधनम्। कृशाशयमिति दोषशून्याशयम्। प्रतीकारासहिष्णुमित्युच्चैर्भाष्यादिक्रियाक्षमं किंवा वमनादिप्रयोगासहिष्णुम्। परिपालयेत् सर्वस्मादपचारत इति संबंधः। तरुणादिदृष्टांततयाभिधानं कस्यचित् किंचित् प्रसिद्धं भविष्यतीति साभिप्रायेण ॥ १–३ ॥

**अग्निसंधुक्षणार्थं तु पूर्वं पेयादिभिर्भिषक्।**
**रसोत्तरेणैव चरेत्क्रमेण क्रमकोविदः ॥ ४ ॥**
**स्निग्धाम्लस्वादुहृद्यानि ततोऽम्ललवणौ रसौ।**
**स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥ ५ ॥**

रसोत्तरेणेति व्यवस्था भवति रसोत्तरेण पृथगंतरं यस्मिन्स्नेहोपायादिना रसोत्तरेण किंवा वमनविरेचनयोरंतरे पेयादिना क्रमेणोपचरेदिति व्यवस्था। तत्र च निरूहस्यापेक्षया रसादिरेव क्रमो भवतीति प्रतिपादितमेव प्राक्। किंवा रसाभ्यासक्रमोत्तरकाले यस्मिन् तत्पेयादिक्रमस्य रसांतरेणाभ्यासक्रममेवाह—स्निग्धांबुस्वादुहृद्यानीत्यादि पेयाक्रमोत्तरकालं यदा विरेचनादिकर्मान्तरं कर्तव्यं तदा संशोधनमूलशरीरस्य प्रकृतिभोजनार्थं बलाप्ययनार्थं वार्यं रसाभ्यासक्रमो ज्ञेयः। अन्ये तु पेयादिक्रमे एव रससंस्कारार्थं स्निग्धांबुसिद्धादिक्रमं वर्णयंति अत्र चाम्लस्वादुप्रथमं पक्वाशयस्थितवातसंशमनायोपयुज्यते। तथाम्ललवणौ तदूर्ध्वस्थिताग्निसंधुक्षणार्थम्। ततः पित्तप्रशमनार्थं स्वादुतिक्तौ। ततः पित्तोर्ध्वस्थितकफप्रशमनार्थं रसयुग्मानामुपयोगो पेयादिक्रमे एव। एवं द्वादशान्नकाले सर्वरसभोजनप्राप्तिर्विधिवज्ज्ञेया ॥ ४–५ ॥

**अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः।**
**व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक् ॥ ६ ॥**
**सर्वक्षमो निरासङ्गो रतियुक्तः स्थिरेन्द्रियः।**
**बलवान्सत्त्वसंपन्नो विज्ञेयः प्रकृतिं गतः ॥ ७ ॥**

अन्योन्येत्यादि अन्योन्यप्रत्यनीकानामिति परस्परमभिभावकानां व्यत्यासादुपयोजयेदिति एकयुग्ममुपयुज्यापरस्य युग्मस्योपयोगात्प्रकृतिं गमयेदिति भोजनं गमयेत्। प्रकारांतररसाभ्यासमाह—स्निग्धरूक्षयोरिति स्निग्धरसमुपयुज्य रूक्षो योज्यः। रूक्षं वोपयुज्य स्निग्ध इत्यनेन क्रमेण प्रकृतिभोजनं गम्यादित्यर्थः। स्निग्धरूक्षौ रसावुदाहरणार्थमुपपन्नौ तेन गुरुलघ्वादियुग्मरसव्यत्यासाभ्यासोप्यत्र बोद्धव्यः। किंवा कषायकटुकौ ततः इत्यनेन युग्मरसाभ्यासनमुपदर्शितम्। अन्योन्यप्रत्यनीकानामित्यादिना तं प्रत्येकं प्रत्यनीकानामित्यन्योन्यव्यत्यासो युज्यते। पेयादिक्रमाभ्यासमुपभुंजानस्य स्वस्थस्य पुंसो लक्षणमाह—बलवानित्यादि सर्वसमो सर्वाभ्याससमः। निरासंग इति प्रतिनियतविषयपराहतः ॥ ६ ॥ ७ ॥

**एतां प्रकृतिमप्राप्तः सर्ववर्ज्यानि वर्जयेत्।**
**महादोषकराण्यष्टाविमानि तु विशेषतः ॥ ८ ॥**
**उच्चैर्भाष्यं रथक्षोभमतिचङ्क्रमणासने।**
**अजीर्णाहितभोज्ये च दिवास्वप्नं समैथुनम् ॥ ९ ॥**
**तज्जा देहोर्ध्वसर्वाधोमध्यपीडामदोषजाः।**
**श्लेष्मजाः क्षयजाश्चैव व्याधयः स्युर्यथाक्रमम् १०**

एतामिति उच्चैर्भाष्यादयो देहपीडाकरा ज्ञेयाः। उच्चैर्भाष्यादूर्ध्वं देहपीडा रथक्षोभात्सर्वदेहपीडा अतिचंक्रमणादधःपीडा। आसनाद्देहमध्यपीडा। अजीर्णभोजनेनामजाऽहितभोजनेन दोषजा दिवास्वप्नेन श्लेष्मजा मैथुनेन क्षयजा८-१०

**तेषां विस्तरतो लिङ्गमेकैकस्य समेषजम्।**
**यथावत्संप्रवक्ष्यामि सिद्धान्वस्तींश्च यापनान् ११**

**तत्रोच्चैर्भाष्यातिभाष्याभ्यां शिरस्तापकर्णशङ्खनिस्तोदस्रोतोऽवरोधमुखतालुकण्ठशोषतैमिर्यपिपासाज्वरतमकहनुमन्यग्रहनिष्ठीवनोरःपार्श्वशूलस्वरभेदहिक्काश्वासादयः स्युः ॥ १२ ॥**

**रथक्षोभात् संधिपर्वशैथिल्यहनुनासाकर्णशिरःशूलतोदवह्निविक्षोभाटोपान्त्रकूजनाध्मापनहृदयेन्द्रियोपरोधस्फिक्पार्श्ववंक्षण-वृषणकटीपृष्ठवेदनासंधिस्कन्धग्रीवादौर्बल्याङ्गाभितापपादशोफप्रस्वापहर्षणादयः ॥ १३ ॥**

तत्रोच्चैर्भाष्यादिग्रंथः प्रायो व्यक्त एव। अतिभाषितस्योच्चैर्भाष्येण समानत्वादुदाहरणम् ॥ ११–१३ ॥

**अतिचङ्क्रमणात् पादजङ्घोरुजानुवंक्षणश्रोणीपृष्ठशूलसक्थिसादनिस्तोदपिण्डिकोद्वेष्टनाङ्गमर्दांसाभितापशिराधमनी-हर्षश्वासकासादयः स्युः १४**

पिंडिकोद्वेष्टनं जंघापिंडिकायामुद्वेष्टनकारा वेदना। शिराधमनीहर्षः शिराधमन्योरवलत्वम् ॥ १४ ॥

**अत्यासनात् रथक्षोभजाः स्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनादयः स्युः ॥ १५ ॥**

रथक्षोभजा इत्युक्ते संधिशैथिल्यादीनामभिसंधिः स्यादतस्तन्निरासार्थमाह—स्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनादयः स्युः ॥ १५ ॥

**अजीर्णाध्यशनाभ्यां तु मुखशोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्यतीसारमूर्च्छाज्वरप्रवाहणामविषादयः स्युः ॥ १६ ॥**

विषमाहिताशनाभ्याम् अनन्नाभिलापदौर्वल्यवैवर्ण्यकण्डूपामागात्रावसादवातादिप्रकोपजाश्च ग्रहण्यर्शोविकारादयः ॥ १७ ॥

दिवास्वप्नात् अरोचकाविपाकाग्निनाशस्तैमित्यपाण्डुकण्डूपामादाहच्छर्द्यङ्गमर्दहृत्स्तम्भजाड्यतन्द्रा-निद्रा-प्रसङ्गग्रन्थिजन्म-दौर्वल्यरक्तमूत्राक्षिताताालुलेपाः पिपासा च ॥ १८ ॥

व्यवायात् आशुवलसादोरुसादवस्ति-शिरोगुदमेढ्र-वंक्षणोरुजानुजङ्घा-पाद-शूल-हृदय-स्पन्दननेत्रपीडाङ्गशैथिल्यशुक्रमार्गशोणितागमन-कासश्वासशोणितष्ठीवितस्वरावसादकटी-दौर्वल्यैकाङ्ग-सर्वाङ्ग-रोगमुष्क-श्वयथु-वातवर्चोमूत्रसङ्गशुक्रविसर्गजाड्यवेपथुवाधिर्यविपादादयः स्युः । उत्पाट्यत इव गुदस्ताड्यत इव मेढ्रम् अवसीदतीव मनो वेपते हृदयं पीड्यन्ते सन्धयस्तमः प्रविशतीव च ॥१९॥ इत्येवमेभिरष्टभिरभिचारैरेते प्रादुर्भवन्त्युपद्रवाः॥

अजीर्णाध्यशनाभ्यामित्यत्र अजीर्णाशनस्यामजविकारकर्तृत्वादध्यशनस्यासूत्रितस्योपादानम् । एवं विषमाहिताशनजविकारसमानविकारकारिविषमाशनस्याप्यसूत्रितस्योपादानम् । अवकुप्यत इव छिद्यत इव ॥ १६-२० ॥

तेषां सिद्धिः उच्चैर्भाष्यातिभाष्यजानामभ्यङ्गस्वेदोपनाहधूमनस्योपरिभक्तस्नेहपानरसक्षीरादिभिर्वातहरः सर्वो विधिर्मौनं च ॥ २१ ॥

रथक्षोभातिचङ्क्रमणत्यासनजानां स्नेहस्वेदादि वातहरं कर्म सर्वं निदानवर्जम् ॥ २२ ॥

तेषां सिद्धिरिति तेषामुक्तविकाराणां साधनं भेषजमित्यर्थः ॥ २१ ॥ २२ ॥

अजीर्णाध्यशनजानां निरवशेषतश्छर्दनं रूक्षस्वेदधूमपानलङ्घनीयपाचनीयदीपनीयौषावचारणं च विषमाहिताशनजानां यथास्वं दोषक्रियाः ॥ २४ ॥

दिवास्वप्नजानां धूमपानलङ्घनवमनशिरोविरेचनव्यायामरूक्षाशनादिदीपनीयौषधोपयोगः। प्रकर्षणोन्मर्दनपरिषेचनादिश्च श्लेष्महरःसर्वो विधिः २५

निरवशेषतश्छर्दनमिति—अजीर्णान्नस्य निरवशेषतः छर्दनम् ॥ २३—२५ ॥

मैथुनजानां जीवनीयसिद्धयोः क्षीरसर्पिषोरुपयोगः । तथा वातहराः स्वेदाभ्यङ्गोपनाहा वृष्याश्चाहाराः स्नेहा स्नेहविधयो यापना वस्तयोऽनुवासनं च मूत्रवैकृतवस्तिशूलेषु च उत्तरवस्तिः । विदारीगन्धादिगणजीवनीयगणक्षीरसंसिद्धं तैलं स्याद्यापनाश्च वस्तयःसर्वकालं देयास्तानुपदेक्ष्यामः

मूत्रवैकृतेत्यादि मैथुनान्मूत्रवैकृतादि भवति तदा विदारिगंधादिजीवनीयगणाभ्यां क्वाथकल्कीकृताभ्यां सक्षीरं तैलं साधयित्वोत्तरवस्तिर्देयः । यापनाश्च वस्तयः सर्वकालं देया इत्यनेन पूर्वनिरूहाणामसार्वकालिकत्वं दर्शयति । एतेषां च सर्वस्मिन्काले दानमविरुद्धम् । आयुषोपायनं दीर्घकालानुवर्तनं कुर्वन्निति यापना वस्तयः ॥ २६ ॥

मुस्तोशीर-वलारग्वधरास्नामञ्जिष्ठाकटुरोहिणीत्रायमाणापुनर्नवाविभीतक-गुडूचीस्थिरादि-पञ्चमूलानि पलिकानि खण्डशः क्लृप्तानि अष्टौ च मदनफलानि प्रक्षाल्य जलाढके परिक्वाथ्य पादशेषे रसः क्षीरद्विप्रस्थसंयुक्तः पुनःपुनः शृतः क्षीरावशेषस्तुल्यो जाङ्गलरसमधुघृतः शतकुसुममधुककुटजफलरसाञ्जनप्रियङ्गुकल्कीकृतः ससैन्धवः सुखोष्णवस्तिः शुक्रमांसवलजननः क्षतक्षीणकासगुल्मशूलविषमज्वरब्रध्नकुण्डलोदावर्तकुक्षिशूलमूत्रकृच्छ्रासृग्रजो-विसर्प-प्रवाहिकाशिरोरुजाजानूरुजङ्घावस्तिग्रहाश्मर्युन्मादार्शःप्रमेहाध्मानरक्तपित्तश्लेष्मव्याधिहरः सद्यो वलजननो रसायनश्चेति ॥ २७ ॥

मुस्तेत्यादौ—खंडशः क्लृप्तानीति खंडं क्लृप्तानि—जांगलरसमधुघृतः यथोक्तक्षीरकृतक्वाथ इत्यादिकजांगलरस इत्यर्थः । तुल्यं मधुना घृतं यस्मिन्स तुल्यमधुघृतः । एतेन पूर्वं वस्तौ यथा नियमितस्नेहमानेन यावद् घृतं देयं भवति तावन्मानं मध्वप्यत्र देयम् । अस्मिन्पूर्वोक्तवस्तिमानविभागेनैव वस्तिः कल्पयितव्यः । अत्र क्षीरं कषायस्थाने भवति । शतकुसुमा शतपुष्पा ससैंधवमितीपत्सैंधवम् ॥ २७ ॥

एरण्डमूलपलाशात् षट्पलं शालिपर्णी पृश्निपर्णी वृहती कण्टकारिका गोक्षुरकरास्नाश्वगन्धा गुडूची वर्षाभूरारग्वधदेवदार्विति पलिकानि खण्डशः क्लृप्तानि फलानि चाष्टौ प्रक्षाल्य जलाढके क्षीरपादे पचेत् । पाददेषं कषायं पूतं शतकुसुमादि कुष्ठ-मुस्त-पिप्पलीहपुषाविल्ववचा-वत्सकफलरसाञ्जन-प्रियङ्गु-यमानि-संक्षेपं कल्कितं मधुघृत-तैलसैन्धवयुक्तं सुखोष्णं निरूहमेकं द्वौ त्रीन्वाद्यात् । सर्वेषां प्रशस्तो विशेषतो ललित-सुकुमारक्षतक्षीणस्थविरचिरार्शसामपत्यकामानां च ॥ २८ ॥

सहचरवलामूर्वामूलशारिवासिद्धेन पयसा तथा वृहतीकण्टकारीशतावरीच्छिन्नरुहाशृतेन पयसा मधुकमदनपिप्पलीकल्ककृतेन पूर्ववद्वस्तिः ॥ २९ ॥

तथा वलातिवलाविदारीशालिपर्णीपृश्निपर्णीवृहतीकण्टकारिकादर्भमूलयवकाश्मर्यविल्वफलयवसिद्धेन पयसा मधूकमदनकल्कीकृतेन मधुघृत-

सौवर्चलयुक्तेन कासज्वरगुल्मप्लीहार्दितस्त्रीमद्यक्लिष्टानां सद्योबलजननो रसायनश्च ॥ ३० ॥

तथा बलातिबलारास्नारग्वधमदनबिल्वगुडूचीपुनर्नवैरण्डाश्वगन्धासहचरपलाशदेवदारुद्विपञ्चमूलानि पलिकानि यवकोलकुलत्थद्विप्रसृतं शुष्कमूलकानां च जलद्रोणसिद्धं निरूहप्रमाणं शेषं कषायं पूतं मधुकमदनशतपुष्पाकुष्ठपिप्पलीवचावत्सकफलरसाञ्जनप्रियङ्गुयमानीकल्कीकृतं गुडघृततैलक्षौद्रक्षीरमांसरसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णं वस्तिं दद्यात् । शुक्रमूत्रवर्चःसङ्गेऽनिलजे गुल्महृद्रोगाध्मानव्रध्नपार्श्वपृष्ठकटीग्रहसंज्ञानाशबलक्षयेषु च ॥ ३१ ॥

शालिपर्णिकादिर्द्वितीयस्तद्वत् सहचरेत्यादिकस्तृतीयः तद्वदिति—पूर्ववद्वस्तिविधानेन तथा बृहतीत्यादिकश्चतुर्थः । अत्र च वस्तौ फलश्रुतिसामान्येन इत्येते वस्तयः स्नेहाश्चोक्ता इत्यादिना वक्ष्यमाणा फलश्रुतिर्ज्ञेया । तथा बलातिबलाविदारीत्यादिकः पंचमः । बलारास्नेत्यादिकः षष्ठः । शुष्कमूलकाणां चेत्यत्र प्रसृतमित्यनुवर्तते । निरूहप्रमाणशेषं कषायमिति निरूहपुटकत्रययोग्यप्रमाणं कषायं एवं पुटकत्रयादयः पंचकषायाः प्रसृतास्याप्या भविष्यंति क्वाथपरिभाषयैव कर्तव्याः । अत्र च क्वाथनिरूहप्रमाणशेषं कषायं मधुकमदनादिनोक्तं सिद्धं वस्तिं दद्यात् ॥ २८–३१ ॥

हपुषार्धकुडवद्विगुणार्द्धक्षुण्णयवः क्षीरोदकसिद्धः क्षीरशेषो मधुघृततैललवणयुक्तः सर्वाङ्ग-विसृत-वातरक्त-सक्तविण्मूत्र-स्त्रीखेदितहितो वातहरो बुद्धिमेधाग्निबलजननश्च ॥ ३२ ॥

हपुषेत्यादिकः सप्तमः । क्षुण्णाः शुष्काः पुनः क्वथिता अपक्षीणपरानुच्यंते इत्यादि अधिकं अत्र प्रदेशे काश्मीराः पठंति ॥ ३२ ॥

ह्रस्वपञ्चमूलकषायः क्षीरोदकसिद्धः पिप्पलीमधूकमदनकल्कीकृतः सगुडघृततैललवणः क्षीणविषमज्वरकर्षितस्य वस्तिः ॥ ३३ ॥

बलाति-बलापामार्गात्मगुप्ताष्टपलार्द्धक्षुण्ण-यवाञ्जलि-कषायः पूर्ववद्वस्तिः स्थविरदुर्बलक्षीणशुक्राणां पथ्यतमः ॥ ३४ ॥

बलामधूकविदारीदर्भमूलमृद्वीकायवैः कषायमाजेन पयसा पक्त्वा मधुकल्कितं समधुघृतसैन्धवं ज्वरार्तेभ्यो वस्तिं दद्यात् ॥ ३५ ॥

शालिपर्णीपृश्निपर्णीगोक्षुरकमूलकाश्मर्यपरूपकखर्जूरफलमधूकपुष्पैरजाक्षीरजलप्रस्थाभ्यां सिद्धः कषायः पिप्पलीमधुकोत्पलकल्कितः सघृतसैन्धवः क्षीणेन्द्रियविषमज्वरकर्षितस्य वस्तिः शस्तः ॥ ३६ ॥

स्थिरादिपञ्चमूलीपञ्चपलेन शालिषष्टिकयवगोधूममाषकषायपञ्चप्रसृतेन छागपयश्शृतं पादशेषं कुक्कुटाण्डरससममधुघृतशर्करासैन्धवसौवर्चलयुक्तो वस्तिर्वृष्यतमो बलवर्णजननश्च । यापना वस्तयो द्वादश ॥ ३७ ॥

अल्पश्चैषां शिखिगोनर्दहंसाण्डरसे स्यात् ॥ ३८ ॥

ह्रस्वपंचमूलीत्यादिकोष्टमः बलातिबलापामार्गेत्यादिको नवमः । बलामधूकेत्यादिको दशमः । अत्र बलादिकषायस्य क्षीरशेषः पाकः कर्तव्यः । शालिपर्णीत्यादिक एकादशः । स्थिरेत्यादिको द्वादशः । अल्पश्चेत्यादिना अतिदेशात्स्वल्पोऽभिधीयते ॥ ३३–३८ ॥

सतित्तिरिः समयूरः राजहंसपञ्चमूलीपयःसिद्धः शतकुसुममधुकरास्नाकुटजफलपिप्पलीकल्कोः घृततैलगुडसैन्धवयुक्तो वस्तिर्बलवर्णशुक्रजननोरसायनश्च ॥ ३९ ॥

द्विपञ्चमूलीकुक्कुटरससिद्धं पयः पादशेषं पिप्पलीमधूकरास्नामदनमधुकल्कं शर्करामधुघृतयुक्तं स्त्रीष्वतिकामानां बलजननो वस्तिः ॥ ४० ॥

मयूरमपित्तपक्षपादास्यान्त्रं त्यक्त्वा स्थिरादिभिः पलिकैः सह जले पयसि पक्त्वा क्षीरशेषं मदनविदारीशतकुसुममधूककल्कीकृतं मधुघृतसैन्धवयुक्तं वस्तिं दद्यात् स्त्रीष्वतिप्रसक्तक्षीणेन्द्रियेभ्यो हितो बलवर्णकरः ॥ ४१ ॥

कल्पश्चैष विष्किरप्रतुदप्रसहाम्बुचरेषु स्यात्क्षीरो रोहितादिषु च मत्स्येषु च ॥ ४२ ॥

गोधानकुलमार्जारमूषिकशल्लकमांसानां दशपलान्भागान् सपञ्चमूलान्पयसि पक्त्वा तत्पयः पिप्पलीफलकल्कसैन्धवसौवर्चलशर्करामधुघृततैलयुक्तो वस्तिर्बल्यो, रसायनः क्षीणक्षतस्य सन्धानकरो मथितोरस्करथगजहयभग्नवातबलासकप्रवृत्युदावर्तवातसक्तमूत्रवर्चश्शुक्राणां हिततमश्च ४३

कूर्मादीनामन्यतमपिशितसिद्धं पयो गोवृषनागहयनक्रहंस-कुक्कुटाण्डरस-मधु-घृतशर्करासैन्धवेक्षुरकात्मगुप्तफलकल्कसंसृष्टो वस्तिर्वृद्धानामपि बलजननः ॥ ४४ ॥

सतित्तिरीत्यादिकैकयोगेन वक्ष्यमाणानामेकोनत्रिंशद्वस्तीनां मध्ये त्रयोदशः । द्विपंचमूलीत्यादिकश्चतुर्दशः । मयूरपित्तपक्षमित्यादिकः पंचदशः । कल्पश्चैषेत्यादिनातिदेशेन पंचदशाधिकंशतमाह—तत्र विष्किरैर्लाववर्तीत्यादिनोक्तैस्त्वथावर्तकोवर्तिकेत्यादिनोक्तैर्विंशतिर्योगा भवंति । मयूरश्चात्र विष्किरपठितोपि पूर्वोक्तत्वान्नेह गण्यते । प्रतुदादीनां त्रिंशद्भवंति । तथा प्रसहाश्च गोवराहाश्चेत्यादिनोक्तैरेकोनत्रिंशत् । अंबुचराश्च हंसादयः सप्तविंशतिरुक्ताएते सप्तविंशतिः भवंति । रोहितादिभिर्मत्स्यै

नैव एवं पंचदशशतोत्तरं भवति । अक्षीर इति रोहितादिषु संवध्यते। गोधानकुलेत्यादिभिः षोडश । कूर्मादीनामन्यतमेत्यादिकः सप्तदश । अत्र कूर्मकर्कटादय एकादश पठिताः । तत्र प्राक्कूर्मेण क्रियते प्रत्येकं गणितायां प्रति विंशतिः । कर्कटादिनिर्देश वस्तयो भवंति । आतिदेशिका ज्ञेयाः ॥ ४४ ॥

गोवृषवस्तवराहवृषणकर्कटचटकसिद्धं क्षीरमुच्चटकेक्षुरसात्मगुप्तामधुघृतयुतं किंचिल्लवणितं वस्तिः ॥ ४५ ॥

गोवृषवस्तादिरश्वादयः । गोवृषः पुंवृषः ॥ ४५ ॥

कर्कटकरसश्चटकाण्डरसयुक्तः समधुघृतशर्करो वस्तिरित्येते वस्तयः परमवृष्याः ॥ ४६ ॥

कर्कटादिरेकोनविंशतितमः । इत्येते वस्तय इत्यनेन कूर्मादीनां अन्यतमा इत्यादिनोक्ता वस्तयः ॥ ४६ ॥

उच्चटकेक्षुरकात्मगुप्ताशृतक्षीरप्रतिभोजनानुपानात्स्त्रीशतगामिनं नरं कुर्युः ॥ ४७ ॥

उचाटकेत्यादि इक्षुरकः कोकिलाक्षः ॥ ४७ ॥

दशमूलमयूरहंसकुक्कुटकाथात्पञ्चप्रसृतं तैलघृतवसामज्जचतुष्प्रसृतयुक्तं शतपुष्पामुस्तहपुषाकल्कीकृतः सलवणो वस्तिः पादगुल्फोरुजानुजङ्घात्रिकवंक्षणवस्तिवृषणानिलहरः ॥ ४८ ॥

दशमूलीत्यादिको विंशतितमः ॥ ४८ ॥

मृगविष्किरानूपविलेशयानामेतेनैव कल्पेन वस्तयो देयाः ॥ ४९ ॥

मृगविष्किरेत्यादिना आदशकादिना षष्टिर्योगाः । तत्र मृगो वृषेत्यादिनोक्तैः सप्तदशः । सप्तदश विष्किरैश्च । लावादिभिश्च मयूरकुक्कुटवर्जितेन विंशतिः । आनूपैश्चमरादिभिर्नव । विलेशयैः श्वेतश्यामादिभिश्चतुर्दश ॥ ४९ ॥

मधुघृतद्विप्रसृतं तुल्योष्णोदकं शतपुष्पार्धपलं सैन्धवार्धाक्षयुक्तो वस्तिर्दीपनो बृंहणो बलवर्णकरो निरुपद्रवो वृष्यतमो रसायनः । क्रिमिकुष्ठोदावर्तगुल्मार्शोब्रध्नप्लीहमेहहरः ॥ ५० ॥

तद्वत्समधुघृताभ्यां पयस्तुल्यो वस्तिः पूर्वकल्केन बलवर्णकरो वृष्यतमो निरुपद्रवो वस्तिमेढ्रपाकपरिकर्तिकामूत्रकृच्छ्रपित्तव्याधिहरो रसायनश्च ॥ ५१ ॥

मधुघृताभ्यां मांसरसतुल्यो मुस्ताक्षयुक्तः पूर्ववद्वस्तिर्बलासपादहर्षगुल्मजानूरुनिकुञ्चनवस्तिवृषणमेढ्रपृष्ठशूलहरः ॥ ५२ ॥

सुरासौवीरककुलत्थमांसरसमधुघृततैलसप्तप्रसृतं मुस्तशताह्वाकल्कितं सलवणो वस्तिः सर्ववातरोगहरः ॥ ५३ ॥

मधुघृतमित्यादिक एकविंशतितमः । घृततैलेत्यादिको द्वाविंशतितमः । तद्वन्मधुघृताभ्यामित्यादिकश्चतुर्विंशतितमः । एतदंताः षट्त्रिंशतितमाः प्रयोगा उक्ताः । मधुतैलप्रधानत्वान्मधुतैलिका ज्ञेयाः ॥ ५०–५३ ॥

तथा द्विपञ्चमूलत्रिफलाविल्वमदनफलकषायो गोमूत्रसिद्धः कुटजमदनफलमुस्तपाठाकल्कितः सैन्धववचाशूकक्षौद्रतैलयुक्तो वस्तिः श्लेष्मव्याधिवस्त्याटोपवातशुक्रसङ्गपाण्डुरोगाजीर्णविसूचिकालसकेषु देयइति ॥ ५४ ॥

द्विपंचमूलीत्यादिकस्त्रिंशः । त्रिंशत्संख्या वस्तिसूत्रीयसिद्धिपठितत्वाच्चेह पठनीयाः ॥ ५४ ॥

अत ऊर्ध्वं वृष्यतमान्स्नेहान्वक्ष्यामः ॥ ५५ ॥

शतावरीगुडूचीक्षुविदार्यामलकद्राक्षाखर्जूराणां यन्त्रपीडितानां रसप्रस्थमेकैकं तद्वद्घृततैलगोमहिष्यजाक्षीराणां द्वौ द्वौ दद्यात् । जीवकर्षभकमेदामहामेदात्वक्क्षीरीशृङ्गाटकमधूलिका-मधुकोच्चटकपिप्पलीपुष्करवीजनीलोत्पलकदम्वपुष्पपुण्डरीककेशरकल्कान् पृषततरक्षुमांसकुक्कुटचटकचकोरमत्ताक्षवर्हिजीवकुलिङ्गहंसानां रसं वसामज्जादेश्च प्रस्थं दत्वा साधयेत्। ब्रह्मघोषशङ्खपटहभेरीनिनादैः सिद्धं सितच्छत्रकृतच्छायं गजस्कन्धमारोपयेद्धगवन्तं वृषध्वजमभिपूज्य तं स्नेहं त्रिभागमाक्षिकं मङ्गलाशीः स्तुतिदेवतार्चनैर्वस्तिं गमयेत् । नृणां स्त्रीविहारिणां नष्टरेतसां क्षतक्षीणविषमज्वरार्तानां व्यापन्नयोनीनां वन्ध्यानां रक्तगुल्मिनीनां मृतापत्यानामनार्तवानां च स्त्रीणां क्षीणमांसरुधिराणां पथ्यतमरसायनमुत्तमं वलीपलितनाशनं विद्यात् ॥ ५६ ॥

स्नेहवस्तिप्रसंगाद्दर्शयन्स्नेहानाह—अत ऊर्ध्वमित्यादि मताक्षः कोकिला जीवंजीवो विषदर्शनमृत्युः । ब्रह्मघोषो वेदध्वनिः । ब्रह्मघोषादयः अदृष्टद्वारा उपकारकाः ॥ ५५–५६ ॥

वलागोक्षुरकरास्नाश्वगन्धाशतावरीसहचराणां शतं शतमायोज्य जलद्रोणशते प्रसाध्य तस्मिन् जलद्रोणावशेषे रसे वस्त्रपूते विदार्यामलकस्वरसयोर्वस्तमहिषवराहवृषकुक्कुटवर्हिहंसकारण्डव-सारसानां घृततैलयोश्चैकं पृथक् प्रस्थमष्टौ प्रस्थान् क्षीरस्य दत्वा चन्दनमधुकमधूलिकात्वक्क्षीरीविसमृणालोत्पलपटोलफलात्मगुप्तातपाकिताालमज्जक-खर्जूर-मृद्वीका-तामलकीकण्टकारीजीवकर्षभक्षुद्रसहामहासहाशतावरीमेदापिप्पलीह्रीबेरत्वक्पत्रकल्कांश्च दत्वा साधयेत् । ब्रह्मघोषादिना विधिना तत्सिद्धं वस्तिमादद्यात् । तेन

क्षीराशी गच्छेन्न चात्रास्ते विहाराहारयन्त्रणा क्वचित् । एष वृष्यो वर्ण्यो बृंहण आयुष्यो वलीपलितनुत् । क्षतक्षीणनष्टशुक्रविषमज्वरार्तानां व्यापन्नयोनीनां च पथ्यतमः ॥ ५७ ॥

बालेत्यादिकं द्वितीयं तैलम् ॥ ५७ ॥

सहचरपलशतमुदकद्रोणचतुष्टये पक्त्वा द्रोणशेषे रसे सुपूते विदारीक्षुरसप्रस्थाभ्यामष्टगुणक्षीरं घृततैलप्रस्थं बलामधुकमधूकचन्दन-मधूलिका-शारिवा मेदामहामेदाकाकोलीक्षीरकाकोलीपयस्यागुरुमञ्जिष्ठाव्याघ्रनखशटी-सहचर-सहस्रवीर्यावराङ्ग-लोध्राणामक्षमात्रैर्द्विगुणशर्करैः कल्कैः साधयेन्न्यग्रोधादिना विधिना । तत्सिद्धं बस्तिं दद्यात्, एष सर्वरोगहरो रसायनो ललितानां श्रेष्ठोऽन्तःपुरचारिणीनां क्षतक्षयवातपित्तवेदनाश्वासकासहरस्त्रिभागमाक्षिको वलीपलितनुत् वर्णरूपबलमांसशुक्रवर्धनः ॥ ५८ ॥

इत्येते रसायनः स्नेहवस्तयः सति विभवे शतपाका सहस्रपाका वा कार्या वीर्यबलाधानार्थमिति ॥ ५९ ॥

भवन्ति चात्र ।

इत्येते बस्तयः स्नेहाश्चोक्ता प्राणिषु सद्धिताः ।
सुस्थानामातुराणां च वृद्धानां चाविरोधिनः ॥६०॥
अतिव्यवायशीलानां शुक्रमांसबलप्रदाः ।
सर्वरोगप्रशमनाः सर्वेष्वृतुषु यौगिकाः ॥ ६१ ॥
नारीणामप्रजातानां नराणां चाप्यपत्यदाः ।
उभयार्थकरा दृष्टाः स्नेहबस्तिनिरूहयोः ॥ ६२ ॥

सहचरपलशतमित्यादिकः स्नेहस्तृतीयः । सहस्रवीर्या दूर्वा वराङ्गं अमरुलक् । शतपाकाश्चेत्यत्र स्नेहापेक्षया शतगुणेन वा द्रवेण एकदैव पाकं सन्चते । ये केचिदुभयार्थकरा दृष्टा इति स्नेहबस्तिनिरूहयोरपि साध्यमर्थं स्नेहनं शोधनं च कुर्वीत इति भावः ॥ ५८—६२ ॥

तत्र श्लोकाः ।

व्यायामो मैथुनं मद्यं मधूनि शिशिराम्बु च ।
संभोजनं रथक्षोभो बस्तिष्वेतेषु गर्हितम् ॥ ६३ ॥
शिखिगोनर्दहंसाण्डैर्दक्षवद्बस्तयस्त्रयः ।
विंशतिर्विष्किरैस्त्रिंशत्प्रतुदैः प्रसहैर्नव ॥ ६४ ॥
विंशतिश्च तथा सप्तविंशतिश्चाम्बुचारिभिः ।
नव मत्स्यादिभिश्चैव शिखिकल्पेन बस्तयः ॥ ६५ ॥
दश कर्कटकाद्यैश्च कूर्मकल्पेन बस्तयः ।
सृतैः सप्तदशैकोनविंशतिर्विष्किरैर्दश ॥ ६६ ॥
आनूपैर्दक्षशिखिवद्भूशयैश्च चतुर्दश ।
एकोनविंशादित्येते सहस्नेहैः समासतः ॥ ६७ ॥

प्रोक्ता विस्तरशो भिन्ना द्वे शते षोडशोत्तरे ।
एते माक्षिकसंयुक्ताः कुर्वन्त्यतिवृषं नरम् ।
नातियोगं न वाऽयोगं स्तम्भितास्ते च कुर्वते ६८

यापनाबस्तिषु वर्जनीयमाह—व्यायाम इत्यादि—शिखिगोनर्दइत्यादिना उक्तबस्तिसंग्रहं करोति । संग्रहार्थश्च एकोनविंशदित्येते इति प्रत्येकं निर्दिष्टा बस्तयः । स्नेहैः समं एकोनविंशतिर्भवंतीत्यर्थः । समाहारसंख्यामाह—द्वे शते षोडशोत्तरे इति । तत्र यथास्माभिर्व्याख्यानं तथा तत्प्रोक्तमेव पूर्यते ॥ अतिवृषमिति शुक्रोपचयवंतम् । स्तंभिताश्चेति मधुना स्तंभिताः ॥ ६३—६८ ॥

मृदुत्वान्न निवर्तेरन्बस्तयश्चेन्निरूहणे ।
समूत्रैर्बस्तिभिस्तीक्ष्णैरास्थाप्यः क्षिप्रमेव च ॥ ६९ ॥

यापनाबस्त्यप्रवृत्तौ कर्तव्यमाह—मृदुत्वादि ॥ ६९ ॥

शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्तिकाः ।
स्युर्ज्वरश्चातिसारश्च यापनात्यर्थसेवया ॥ ७० ॥

मृदुत्वादियापनाबस्त्यनुप्रयोगे दोषमाह—शोफेत्यादि ७०

अरिष्टक्षीरशीध्वाद्या तत्रेष्टा दीपनी क्रिया ।
युक्त्या तस्मान्निषेवेत यापनान्न प्रसङ्गतः ॥ ७१ ॥
इत्युच्चैर्भाष्यपूर्वाणां व्यापदः सचिकित्सिताः ।
विस्तरेण पृथक् प्रोक्तास्तेभ्यो रक्षेन्नरं सदा ॥७२॥

एतच्छोफादिषु चिकित्सामाह—अरिष्टेत्यादि तस्मादिति यापनान्यथाप्रयोगे शोथादिदर्शनात् । न प्रसंगत इति अनभ्यासतः । तेभ्यो रक्षेदिति उच्चैर्भाष्यादिजन्यव्यापद्भ्यो रक्षेत् ॥ ७२ ॥

कर्मणां वमनादीनां असम्यक्करणापदाम् ।
यत्रोक्तं साधनं स्थाने सिद्धिस्थानं तदुच्यते ॥७३॥

सिद्धिस्थानशब्दस्य निरुक्तिं दर्शयन् सिद्धिस्थानाभिधेयं वाक्यार्थं संग्रहणमाह—कर्मणामित्यादि—असम्यक्करणापदामिति वमनादीनामसम्यक्प्रयोगे जनितानामापदां वमनादिव्यापत्प्रतिकारश्च सिद्धिस्थानार्थः प्रधानोपदर्शितः तेन वमनादिषु कल्पनाद्यभिधानमपि अनागतवमनादिव्यापन्निषेधप्रयोजनकं सिद्धिस्थाने युक्तमेव ॥ ७३ ॥

इत्यध्यायशतं विंशमात्रेयमुनिवाङ्मयम् ।
हितार्थं प्राणिनां प्रोक्तमग्निवेशेन धीमता ॥ ७४ ॥

सिद्धिस्थानं समाप्य कृत्स्नं तंत्रमुपसंहरति इत्यध्यायेत्य आत्रेयश्रुतिवाङ्मयमिति—अनुकृतात्रेयवचनमयम् ॥ ७४

दीर्घमायुर्यशः प्रज्ञामारोग्यं चापि पुष्कलम् ।
सिद्धिं चानुत्तमां लोके प्राप्नोति विधिना पठन् ७५

एतत्तंत्राध्ययने फलमाह—दीर्घमायुरित्यादि—त्रिवर्गमिति धर्मार्थकामं पुष्कलमिति मोक्षम् । किंवा पुष्कलमिति त्रिवर्गविशेषणम् । सिद्धिमिति चिकित्साप्रयोगसाध्यनैष्पादक-

त्वम् । विधिना पठन्निति—रोगभिषग्जीतीयोक्तेन पाठविधिना । एतत्सविंशमध्यायशतं पठन्दीर्घायुर्लभादेवंभूतपाठजनितधर्मवशादेव पाठजनितशास्त्रावबोधपूर्वकशास्त्रानुष्ठानाच्च ॥ ७५ ॥

**विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम् ।**
**संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम् ॥ ७६ ॥**
**अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना ।**
**संस्कृतं तत्तु संसृष्टं विभागेनोपलक्ष्यते ॥ ७७ ॥**
**इदमन्यूनशब्दार्थं तन्त्रं दोषविवर्जितम् ।**
**अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे ॥ ७८ ॥**
**कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाच्च वलोच्चयम् ।**
**सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् ॥ ७९ ॥**

एतच्छास्त्रसंस्कारोपपत्त्युपदर्शनपूर्वकं शास्त्रस्य संस्कारकौ चरकदृढबलौ दर्शयन्नाह—दृढबलः संक्षिप्तानि विस्तारयतीत्यादि यस्माच्छास्त्रे प्रथममतिविस्तारतया प्रतिपादितेषु न सम्यगर्थावगमः । तेन तद्दोषनिरासार्थं संस्कर्ता युज्यते । अतः तन्त्रोत्तममिदं चरकेण संस्कृतम् । पूर्वग्रंथस्यातीव विस्तरत्वादिना तंत्राभिधानं पूर्वश्रोतृजनाभिप्रायादेव बोद्धव्यम् । इदानींतनश्रोतृपुरुषाभिप्रायेण तु संस्कर्तुः संस्कारो ज्ञेयः । उक्तं च संक्षेपोक्तं प्रतिहंति । विस्तरोक्तं तु गृह्यते । "संक्षेपविस्तरौ कृत्वा संस्कुर्यात्तंत्रमादित" इति । पुराणं च पुनर्नवमिति विस्तारसंक्षेपादिना पुनर्नवं कुरुते । चरकसंस्कारापूर्णतां दर्शयन् दृढबलमाह—तत्तत्त्विसदूरांतरोक्त्या तेन दृढबलप्रतिपादितैकचत्वारिंशदध्यायानां विंशाध्यायशतत्रिभागता युज्यते इति नोद्भावनीयम् । आत्मनः पंचनदपुरभवत्वेन श्रेष्ठप्रदेशभवत्वं दर्शयति । आत्मनः संस्कारे तंत्रांतरादिनार्पेण संस्कारं दर्शयन्नाह—कृत्वा बहुभ्य इत्यादि । तंत्रेभ्यः सुश्रुतविदेहादितंत्रेभ्यश्च विशेषस्य चरकोक्तार्थादतिरिक्तरूपस्य उच्चयः विशेषाच्च वलोच्चयः अन्यतंत्रेभ्यः कृत्वा सप्तदशौषधाध्यायसिद्धिकल्पैरिदमनन्यशब्दार्थं तंत्रं दोषविवर्जितं पंचत्रिंशत्तंत्रयुक्तिभूषितमपूरयद्दृढबल इति योजना । तत्र भूमिपतितानामणूनां धान्यादिबीजानां शोधन्या संहरणं युक्तम् । एतेन तंत्रेषु यत्सारभूतं तच्चरकाचार्यैः संगृहीतम् । यथानुपूरितमिति दर्शयति अन्यूनशब्दार्थमिति तंत्रदोषाश्चतुर्दश पुनरुक्तं दुःप्रणीतसूत्रसंग्रहाक्षममित्यादिना रोगभिषग्जीतीयोक्तास्तैर्वर्जितम् । तन्त्रयुक्तिभिरिति वक्ष्यमाणतंत्रयुक्तिभिः । विचित्राभिर्न्यायरूपैर्भिः ॥ ७९ ॥

**पञ्चत्रिंशद्भिचित्राभिर्भूषितं तन्त्रयुक्तिभिः ।**
**तंत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ॥ ८० ॥**
**प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ।**
**उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ॥ ८१ ॥**
**प्रसङ्गैकान्तनैकान्तः सापवर्गो विपर्ययः ।**
**पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥ ८२ ॥**
**अतीतानागतापेक्षास्वसंज्ञोह्यसमुच्चयाः ।**
**निदर्शनं निर्वचनं संनियोगो विकल्पनम् ॥ ८३ ॥**
**प्रत्युच्चारस्तथोद्धारः संभवस्तन्त्रयुक्तयः ।**
**तन्त्रे व्याससमासाभ्यां भवन्त्येतानि कृत्स्नशः ॥ ८४ ॥**

तंत्रयुक्तिरेवाह तंत्राधिकरणं यत्र तंत्रमधिकृत्य प्रवर्तते अत्र कस्मादधिकृत्यायुर्वेदो महर्षिभिः रोगमित्यधिकरणम् । योगो नाम योजना व्यस्तानां पदानामेकीकरणम् । नवलक्षणं यथा प्रतिज्ञा—हेतूदाहरणोपनयनिगमनानि तत्र प्रतिज्ञा—मातृजश्चायं गर्भः । हेतुः—मातरमंतरेण गर्भानुपपत्तेः । दृष्टांतोपनयौ यथा—नानाद्रव्यसमुदायाः......गर्भनिर्गमनम् । तस्मान्मातृजश्चायमित्येष प्रतिज्ञायोगः । एवमन्येपि योगार्था व्याख्येयाः । हेत्वर्थो नाम येष्वन्यप्रभावहितमन्यत्रोपपद्यते यथा समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति वातमधिकृत्योक्तं तत्र वातस्येति वक्तव्ये यदयं समानशब्देन यथा वायोस्तथा रसादीनामपि समानगुणाभ्यासो वृद्धिकारणमिति गम्यते । पदार्थो नाम पदस्य पदयोः पदानां वार्थः । तत्र द्रव्यमितिपदेन खादयश्चेतनाः षष्ठा इति । पदयोरर्थो यथा आयुषो वेद इति पदयोरायुर्वेद इत्यर्थः । एवं पदानामप्यर्थ उदाहार्यः । प्रदेशो यथा यद्बहुत्वादर्थस्य कार्त्स्न्येनाभिधातुमशक्यत्वादतिदेशेनाभिधीयते । अर्थानुपात्यैकदेशोयमुक्तः । प्रायोगिक इत्यादि । निर्देशो नाम संक्षयोक्तस्य विवरणं यथा हेतुलिंगौषधस्य पुनः प्रपंचनम् । वाक्यशेषो नाम यस्यार्थेन वाक्येषु यदगम्यमानतया पूर्त्यै पूरणम् । यथा प्रवृत्तिर्हेतुभावानामित्यत्रास्तीति पदं पूर्यते । तथा जांगलजै रसैरित्यत्र मांसशब्दः पूर्यते । वाक्यवत्पदाः शेषाश्च क्रियंते येऽनिवेशिता अपि प्रतीयंते । प्रयोजनं नाम यदर्थं कामयमाना प्रवृत्तिर्यथा "धातुसाम्यक्रिया चोक्ता तंत्रस्यास्य प्रयोजनम्" । उपदेशो नामाप्तानुशासनं "स्नेहमग्रे प्रयुंजीत ततः स्वेदमनंतर"मित्यादि । अपदेशो नाम यत्प्रतिज्ञातार्थसाधनाय हेतुवचनं यथा "वाताज्जलं जलाद्देशं देशात्कालं स्वभावतः । विद्यादि-त्यादि" । तत्प्रतिज्ञातार्थस्य हेतुवचनं दुःपरिहरत्वादिति । अतिदेशो नाम यत्किंचित्प्रकाश्यार्थमनुक्तार्थसाधनायैवमन्यदपि प्रत्येतव्यमिति परिभाष्यते—यथा"यच्चान्यदपि किंचित्स्यादनुक्तमिह पूजितम् । पूर्णं तदपि वात्रेयः सदैवमनुमन्यते" । अर्थापत्तिर्नाम यदकीर्तितमिति मत्वा आपाद्यते सार्थापत्तिः यथा—नक्तं दधिभोजननिषेधोस्त्यर्थाद्दिवाभुंजीतेत्यापाद्यते । निर्णयो नाम विचारितस्यार्थस्य व्यवस्थापनं यथा चतुःपदभेषजत्वादि विचारं कृत्वाभिधीयते । यदुक्तं षोडशकलं पूर्वाध्याये भेषजमुक्तं तद्युक्तियुक्तमारोग्यायेति । प्रसंगो नाम पूर्वाभिहितस्यार्थस्य प्रकरणागतत्वात्पुनरभिधानम् । यथा—तत्रातिप्रभाववता-

दृशातिमातृदर्शनमभियोगः। एवमाद्यभिधानम्। पुनरत्युग्रशब्दात्सर्वेगो न चेदित्यादिनान्यतरपक्षावधारणं यथा ये ह्यातुराः केवलाद्भेषजादृते म्रियंते न ते सर्व एव भेषजोपपन्नाः। अपवर्गो नाम साकल्येनोद्दिष्टस्यैकदेशापकर्षणं यथा न पर्युषितान्नमाददीतान्यत्र मांसहरितशुष्कभक्षेभ्य इति।तत्र हि सामान्येन पर्युषितभोजननिषेधं कृत्वा मांसादेः पर्युषितस्य ग्रहणमपकृष्य विधीयते।विपर्ययो नाम निदानोक्तान्यस्योपशेते न विपरीतानि चोपशेते इति।पूर्वपक्षो नाम प्रतिज्ञातार्थवाक्यार्थसंदूषकं वाक्यं यथा मत्स्यान्नपयसाऽभ्यवहरेदिति प्रतिज्ञातार्थस्य सर्वानेवमत्स्यान्न पयसाऽभ्यवहरेदन्यत्र चिलिचिमादित्यत्र। वृद्धिशब्देन मलानां हीनत्वमधिकत्वमाचार्यैर्गृहीतम् आचार्यो वर्णयति "मलवृद्धिं गुरुतया लाघवान्मलसंक्षयं मलायनानां बुध्येत कल्पयेदिति।" केचित्तु प्रकरणानुपूर्व्यार्थाभिधानं विधानमाहुः यथा रसरुधिरमांसमेदोस्थिमज्जशुक्राणामुत्पादः क्रमानुरोधेनाभिधानम्। अनुमतं नाम सह एकीयमतस्यानिवारणेनानुमननं यथा गर्भशल्यं जरायुःप्रपातनं कर्म समानमित्याद्येकीयमतं प्रतिपाद्याप्रतिषेधादनुमन्यते। व्याख्यानं नाम यत्सर्वबुद्धिविषयं व्याक्रियते यथा "प्रथमे मासि संमूर्छितस्सर्वथा कलुषीकृतः।स्वेदीभूतो भवत्यव्यक्तविग्रहेत्या"दिनास्यवाक्यस्य विदितार्थस्य व्याकरणम्। संशयो नाम विशेषाकांक्षावारितोभयविपयज्ञानं यथा "मातरं पितरं चैके मन्यन्ते जन्मकारणम्। स्वभावं परनिर्माणमदृष्टं चापरे जना" इत्यादिनोक्तः संशयः। अतीतावेक्षणं नाम यदतीतानां पुनरवेक्षणं यथा "सा कुटी तच्च शयनं ज्वरं संशमयत्यपी"त्यत्र स्वेदाध्यायविहितकुट्याद्यतीतकर्मावेक्ष्यते। अनागतावेक्षणं नाम यदनागतं विधिं प्रमाणीकृत्यार्थसाधनं यथा वा तिक्तसर्पिष इत्याद्यनागतावेक्षणेनोच्यते। संज्ञा नाम या तंत्रकारैर्व्यवहारार्थं संज्ञा क्रियते यथा वृंताकस्योनाकादिका संज्ञा। ऊहो नाम पदनिबंधग्रंथे प्रज्ञया तर्क्यत्वेनोपदेश्यते यथा "यदुक्तमप्यनुक्तं सत्तदेत्यत्रापकर्षयेदित्यादि"। समुच्चयो नाम, यदादि तदंते च कृत्वा विधीयते यथा वर्णश्च स्वरसश्चेत्यादि। निदर्शनं नाम मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टांतः यथा विज्ञातमौषधममृतं यथेत्यादि। निर्वचनं नाम पंडितबुद्धिगम्यो दृष्टांतः यथा "ज्ञायते नित्यगस्यैव कालस्यात्ययकारणम्"। निदर्शननिर्वचनयोरयं विशेषः यन्निदर्शनं मूर्खविदुषां बुद्धिसामान्यविषयम्। निर्वचनं तु पंडितबुद्धिवेद्यमेव। किंवा निर्वचनं निरुक्तिर्यथा "विविधं सर्पति यतो विसर्पस्तेन संज्ञित" इत्यादि। सन्नियोगो नाम अवश्यानुष्ठेयतया विधानं यथा नन्वेषा स्वेदमूर्छापरीतानामित्यादि। विकल्पः पाक्षिकाभिधानं यथोदकं वा कुशोदकमित्यादि। प्रत्युच्चारो नाम परनिवारणं यथा वायोर्विदः प्राह रजस्तमनिस्तानि...। रजसा व्याधयः स्मृता इत्यादि हिरण्याक्षो निषेधयति न ह्यात्मा रजसः स्मृत इत्यादि। उद्धारो नाम परपक्षदूषणं दत्वा स्वपक्षोद्धरणं यथा "तेषामेव हि भावानां संपत्संजनयेन्नरं। तेषामेव हि भावानां विपद्व्याधीनुदीरये" दित्यादिना स्वपक्षोद्धरणम्। संभवो नाम यद्यस्मिन्नुपपद्यते स तस्य संभवः यथा मुखे व्यंगनीलिकादयः संभवंतीत्यादि। इत्येताः षट्त्रिंशत्तंत्रयुक्तयो व्याहृताः। भट्टारहरिश्चंद्रेण चेतस्तंत्रयुक्तयः प्रश्नव्याकरणव्युत्क्रांताभिधानहेत्वाख्या व्याहृताः ताश्च तंत्रे अपठितत्वादेतास्वेवांतर्भावनीयाः। तत्र परिप्रश्नोद्देशेंतर्भवति व्याकरणं तु व्याख्याने। व्युत्क्रान्ताभिधानं निर्देशभेदः। हेतुशब्देन यानि प्रत्यक्षादीनि प्रमाणान्युक्तानि तानि हेतावंतर्भवंति। चतुर्दश तंत्रदोषा भवंति तदुत्तरतंत्रे प्रतिपादितत्वान्नेह विलिखिताः॥ ८०-८४॥

**तन्त्रे समासव्यासोक्ता भवन्त्येता हि कृत्स्नशः।**
**एकदेशेन दृश्यन्ते समासाभिहितास्तु ताः॥८५॥**

संप्रति तंत्रयुक्तीरुद्दिश्य अनुसरणमाह तंत्रे समासव्यासोक्ता इत्यादि समासाभिहिता इत्यनेन अतिसंक्षिप्ते तंत्रे सर्वास्तंत्रयुक्तयो भवंतीति दर्शयति किंवा समासाभिहिता एकदेशेन दृश्यंत इति संबंधः॥ ८५॥

**यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा।**
**प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः॥ ८६॥**

तंत्रयुक्तीनां कार्यं दृष्टांतेन दर्शयन्नाह—यथेत्यादि। यथांबुजवनस्य संकुचितस्य विस्तारकोर्कस्तथा संकुचितस्यार्थस्य विस्तारकास्तंत्रयुक्तयः प्रबोधनाद्भवंति। दीपदृष्टांतेन तु यथा दीपस्तमसा पिहितं प्रकाशयति तथा हेत्वादिकास्तंत्रयुक्तयः संतमर्थं गूढं प्रकाशयंतीति दर्शयति। तदेवार्थद्वयं तंत्रयुक्तीनां संपाद्यमभिप्रेत्योक्तं प्रबोधनप्रकाशार्था इति॥ ८६॥

**एकस्मिन्नपि यस्येह शास्त्रे लब्धास्पदा मतिः।**
**स शास्त्रमन्यदप्याशु युक्तिज्ञत्वात्प्रबुध्यते॥ ८७॥**
**अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्या विचक्षणः।**
**नाधिगच्छति शास्त्रार्थानर्थान्भाग्यक्षये यथा॥८८॥**
**दुर्गृहीतं क्षिणोत्येव शास्त्रं शस्त्रमिवाबुधम्।**
**सुगृहीतं तदेव ज्ञं शास्त्रं शस्त्रं च रक्षति॥ ८९॥**

सम्यक्शास्त्राभ्यासफलमाह—एकस्मिन्नपीत्यादि। शास्त्रे दुर्ज्ञानसम्यक्ज्ञानयोर्दोषगुणानाह–दुर्गृहीतमित्यादि। दुर्गृहीतं शस्त्रं यथात्मन एव पदच्छेदादिकमापादयति तथा दुर्गृहीतं शास्त्रं मिथ्याभेषजप्रयोगादात्मनोपि व्यापदमावहति। यथा वा शस्त्रं गृहीतं तस्करादिभ्यो रक्षां करोति तथा सुगृहीतं शास्त्रमातुरस्य रक्षामापादयतीति॥ ८७-८९॥

**तस्मादेताः प्रवक्ष्यन्ते विस्तरेणोत्तरे पुनः।**
**तत्त्वज्ञानार्थमस्यैव तन्त्रस्य गुणदोषतः॥ ९०॥**

तस्मादेता इत्यादिकं श्लोकमुत्तरे तंत्रे तंत्रयुक्तिव्याकरणे प्रतिपादितं पठंति॥ ९०॥

इदमखिलमधीत्य सम्यगर्थान्
विमृशति यो विमलः प्रयोगनित्यः ।
स मनुजसुखजीवितप्रदानाद्
भवति धृतिस्मृतिबुद्धिधर्मवृद्धः ॥९१॥

अग्निवेशतंत्रस्योत्तरतंत्रस्यैवानार्षत्वात्तंत्राध्ययनफलमाह—इदमखिलमित्यादि—अविमल इति तंत्रार्थानविचलितमनाः । प्रयोगनित्य इति नित्यं चिकित्सा कर्तव्या । सुखस्य प्रदाता किंवा सुखरूपस्य जीवितस्य प्रदाता सुखजीवितप्रदाता । उपचितधृतिस्मृतिबुद्धिसिद्धिर्यस्य सधर्मवृद्धः ॥ ९१ ॥

यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता ।
सोऽर्थज्ञः स विचारज्ञश्चिकित्साकुशलश्च सः ।
रोगांस्तेषां चिकित्सां च स किमर्थं न बुध्यते ॥९२॥

चिकित्सा वह्निवेशस्य सुस्थातुरहितं प्रति ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥९३॥
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
सिद्धिस्थानेऽष्टमे प्राप्ते तस्मिन्दृढबलेन तु ।
सिद्धिस्थानं स्वसिद्ध्यर्थं समासेन समापितम् ॥
समाप्तमिदं चरकतन्त्रम् ।

यस्य द्वादशसाहस्रीत्यादिश्लोकत्रयं केचित्पठंति तदप्रस्तुतमिति ॥ ९२–९५ ॥

गौडाधिनाथरसवत्यधिकारिपात्रनारायणस्य तनयः सुनयोऽन्तरंगात् । भानोरनुप्रथितलोध्रवलीकुलीनः श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥ इति श्रीमच्चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने उत्तरबस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥